# साहित्यदर्पणम्

विवृतिः विवृतिपूर्तिः
विज्ञप्रिया लोचनम्
कुसुमप्रतिमा विमला
लक्ष्मी रुचिरा

प्रो० योगेश्वरदत्त शर्मा पाराशरः

NP
NAG PUBLISHERS

नाग पब्लिशर्स

व्याकरणशास्त्रे यथाऽष्टाध्याय्याः [illegible]तमं रूपं विद्यते लघुसिद्धान्त-कौमुदी[illegible] साहित्यशास्त्रे वेविद्यते स्थानं विश्वनाथरचितसाहित्यदर्पणस्य। ग्रन्थ एषोऽधीतः स्याद् यैः साहित्य-शास्त्रच्छात्रैः तैः खलु साहित्यशास्त्रस्य सर्वेषां विभागानामेवाध्ययनं कृतं स्यात्। एतस्य ग्रन्थस्योपरि यद्यपि बह्व्यः टीकाः कृता व्याख्याकारैः, परं समुपलभ्यन्ते अष्टावेव टीकाः। एतासां सर्वासां टीकानां समवेतेनैकत्र समीकरणं स्यादिति बहु-विमृष्टं मया बहुकालात्। यथैव प्राप्ताः सर्वास्तथैवैकत्रीकृताः सर्वाः। एतासु टीकासु विवृतिनाम्नी टीका छात्राणां शोधकानां च कृते बहुविचारावहा। किञ्च कुसुमप्रतिमाऽपि स्वविशिष्टं स्थान-माधत्ते। वस्तुतः सर्वा एव व्याख्या वि-शेषतो विवृतिमनुकुर्वते।

अस्मिन् ग्रन्थे प्रथमं मूलपाठः पृष्ठोपरि प्रदत्तः ततश्च क्रमेण विवृति-विवृतिपूर्त्ति-विज्ञप्रिया-लोचन- कुसुमप्रतिमा-विमला-लक्ष्मी-रुचिरा नाम्नीटीकानां पाठाः प्रदत्ताः। कालक्रमेणापि परिपाटी एषैव दरीदृश्यते। एतासां सर्वासां टीकानां तुलनात्मकमध्ययनं कुर्वतां समालोच-कानां कृते ग्रन्थ एष मार्गप्रदर्शकः स्यया-दित्या स्ते सम्पादकस्य मनीषा मनसि।

# साहित्यदर्पणम्

## (द्वितीयखण्डः)

| | |
|---|---|
| विवृतिः | विवृतिपूर्तिः |
| विज्ञप्रिया | लोचनम् |
| कुसुमप्रतिमा | विमला |
| लक्ष्मी | रुचिरा |

सम्पादकः

**प्रो० योगेश्वरदत्त शर्मा पाराशरः**

हिन्दू कालेज, दिल्ली विश्वविद्यालय,

दिल्ली-११०००७

NAG PUBLISHERS

**नाग पब्लिशर्स**

**११ ए-यू० ए०, जवाहर नगर, दिल्ली-११०००७**

**भारत**

# विषयानुक्रमणिका

## चतुर्थपरिच्छेदः



## पंचमपरिच्छेदः



## षष्ठपरिच्छेदः

# चतुर्थः परिच्छेदः

अथ काव्यभेदमाह—

**काव्यं ध्वनिर्गुणीभूतव्यंङ्ग्यं चेति द्विधा मतम्।**

तत्र—

**वाच्यातिशयिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमम्॥ १॥**

वाच्यादधिकचमत्कारिणि व्यङ्ग्यार्थे ध्वन्यतेऽस्मिन्निति व्युत्पत्त्या ध्वनिर्नामोत्तमं काव्यम्।

---

## विवृतिः

काव्यस्वरूपं निरूप्य विभागमाह—**काव्यमिति। व्यङ्ग्य** इति सतीत्यर्थः। ध्वन्यते व्यज्यतेऽस्मिन्वा-क्यार्थसमुदाये। गुणीभूतव्यङ्ग्येऽप्युक्तव्युत्पत्तिसंभवेऽपि ध्वनिपदस्य निरुक्तरूढिसापेक्षत्वान्न तत्र व्यवहारः। वस्तुतस्तु ध्वन्यत इति ध्वनी रसादिः। ध्वनतीति ध्वनिः शब्दादिगता शक्तिः। ध्वननं ध्वनी रसादिप्रतीतिः।

इति व्युत्पत्तिभेदाद् ध्वनिपदार्थभेदो बोध्यः। काव्यात्मभूतस्य ध्वनेर्भेदेनैव ध्वनिकाव्यप्रभेदानाह—**भेदाविति**। इह यद्यपि वस्त्वलंकारध्वनीनां काव्यात्मत्वं नाङ्गीकृतं तथापि रसादिप्रकर्षकत्वेनैव तेषां काव्यात्मत्व-मित्यभिप्रायेण तत्साधारणं ध्वनिप्रभेदनिरूपणं प्रक्रमत इति भावः।

## विवृतिपूर्तिः

**वाच्येति**। वाच्याद् अभिधावृत्तिप्रतिपाद्याद् अर्थाद् व्यङ्ग्ये व्यञ्जनावृत्तिप्रतिपाद्येऽर्थे अतिशयिनि अधि-कचमत्कारजनके सति उत्तमं काव्यम्। तद् ध्वनिः। 'उच्यते' इति शेषः। तदुक्तं **राजानकानन्दवर्धनाचार्यैः**—'प्रथमे हि विद्वांसो वैयाकरणाः। व्याकरणमूलत्वात्सर्वविद्यानाम्। ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति' इति। 'श्रोत्रशष्कुलीं संतानेनागता अन्त्याः शब्दाः श्रूयन्त' इति प्रक्रियायां शब्दाः श्रूयमाणा इत्युक्तम्। तेषां घण्टानुरणनरूपत्वं तावदस्ति। ते च ध्वनिशब्देनोक्ताः। यदाह भगवान्भर्तृहरिः—'यः संयोगवियोगाभ्यां करणै-रुपजायते। स स्फोटः शब्दजः शब्दो ध्वनिरित्युच्यते बुधैः॥' एवं घण्टादिनिर्ह्रादस्थानीयोऽनुरणनात्मोपलक्षितो व्यङ्ग्योऽप्यर्थो ध्वनिरिति व्यवहृतः। इत्येष प्रकारोऽव्यक्तशब्दानामेव वर्तते। व्यक्तशब्दानां तथा श्रूयमाणा ये वर्णा नादशब्दवाच्या अन्त्यबुद्धिनिर्ग्राह्याः स्फोटाभिव्यञ्जकास्ते ध्वनिशब्देनोक्ताः। यदाह भगवान्स एव—'प्रत्य-यैरनुपाख्येयैर्ग्रहणानुग्रहैस्तथा। ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते॥' इति। तेन व्यञ्जकौ शब्दार्थावपीह ध्वनिशब्देनोक्तौ। किं च वर्णेषु तावन्मात्रपरिमाणेष्वपि सत्सु। यथोक्तम्—'अल्पीयसापि यत्नेन शब्दमुच्चारितं

मतिः । यदि या नैव गृह्णाति वर्णं वा सकलं स्फुटम् ॥' इति । तेषु तावत्स्वेषु श्रूयमाणेषु वक्तुर्योऽन्यो द्रुतविलम्बितादिवृत्तिभेदात्मा प्रसिद्धादुच्चारणादिव्यापारादभिव्यक्तः स ध्वनिरुक्तः । यदाह स एव—'शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदास्तु वैकृताः । ध्वनयः समुपोहन्ते स्फोटात्मा नैव भिद्यते' ॥ इति व्याचख्युराचार्या**भिनवगुप्त**पादा अयं निष्कर्षः—पटादिभिर्वर्णसमुदायरूपैः क्षणिकैः पदैः स्फोटरूपो नित्यः शब्दो व्यज्यते, तेन चाभिव्यक्तेनार्थः प्रतीयत इति तादृशस्य प्रधानीभूतस्फोटव्यञ्जकस्य वर्णसमुदायरूपस्य पटादिशब्दस्य ध्वनिरिति संज्ञेति वैयाकरणानां सिद्धान्तसरणिः । ततस्तन्मतानुसारिभिरन्यैः प्रधानीभूतव्यङ्ग्यव्यञ्जकत्वसाधर्म्याद्गुणीभूतवाच्यं यद्व्यङ्ग्यं तद्व्यञ्जनक्षमस्य शब्दार्थयुगलरूपस्योत्तमकाव्यस्य ध्वनिरिति संज्ञा विहिता । तदुक्तं ध्वनिकारैः—'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ । व्यङ्ग्यः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥' इति ॥

## विज्ञप्रिया

काव्यलक्षणे कृते तदेव काव्यं कतिविधमित्याकाङ्क्षायामाह—**काव्यं ध्वनिरित्यादि । ध्वन्यतेऽस्मिन्निति**—ध्वन्यते व्यज्यते व्यङ्ग्यार्थः शब्दादिना अस्मिन् काव्ये इत्यर्थः ।

## लोचन

एवं काव्यस्य स्वरूपमुक्त्वा विशेषं निरूपयितुभवतारयतिअथेति—भिद्यते अनेनेति भेदः ।

**वाच्येति**—वाच्यादतिशयस्तात्पर्यविषयत्वात् ।

## कुसुमप्रतिमा

अथेति । अथ काव्यलक्षणघटकसानुषङ्गिकवाक्यरसनिरूपणानन्तरम् । तत् काव्यं कतिविधमित्याकाङ्क्षायां प्रसङ्गसङ्गत्या तत्काव्यस्य भेदमाह मूलकार इत्यर्थः ।

काव्यमिति । काव्यं द्विधा द्विप्रकारं मतम् । तत्राद्यः प्रकारो ध्वनिः, द्वितीयः प्रकारस्तु गुणीभूतव्यङ्ग्यमिति । तत्र कलत्रं दारा इत्यादिवदुभयोरप्यजहल्लिङ्गतया काव्यमिति क्लीवेन ध्वनिरिति च पुंसा निर्देशः । गुणीभूतं वाच्यार्थादप्रधानीभूतं व्यङ्ग्यं व्यङ्ग्यार्थो यस्मिन्निति गुणीभूतव्यङ्ग्यं काव्यम् । अस्य विशेषो वक्ष्यते ।

तत्रेति । तयोर्ध्वनिःगुणीभूतव्यङ्ग्ययोर्मध्ये इत्यर्थः ।

ध्वनिलक्षणमाह वाच्येति । व्यङ्ग्ये व्यङ्ग्यार्थे, वाच्यात्, वाच्यार्थात् अतिशयश्चमत्कारातिशयः अस्यास्तीति स तथोक्तस्तस्मिन् सति ध्वनिः । तथा च वाच्यार्थादधिकचमत्कारजनकव्यङ्ग्यार्थवत् काव्यत्वं ध्वनित्वमित्यर्थः । तच्च ध्वनिरूपं काव्यम् उत्तमं गुणीभूतव्यङ्ग्य-निर्व्यङ्ग्यात्मकभेदद्वयापेक्षया उत्कृष्टम्, वाच्यार्थादधिकचमत्कार्यर्थप्रकाशकत्वादेवेति भावः । एतेन यथाकथञ्चिद्व्यङ्ग्यार्थसत्त्वात् गुणीभूतव्यङ्ग्यं काव्यं मध्यमम्, सर्वथा व्यङ्ग्यार्थसत्त्वाच्च अव्यङ्ग्यं काव्यमधममिति प्राचीनवदेव प्रतिपादितम् ।

वाच्यातिशयिनीतिशब्दस्यार्थप्रदर्शनपूर्वकं ध्वनिशब्दस्य योगरूढत्वं प्रदर्शयति वाच्येति । व्यङ्ग्यार्थे सतीत्यर्थः । ध्वन्यते व्यञ्जनया बोध्यते वाच्यार्थादधिकचमत्कारी अर्थः अस्मिन् काव्ये इत्यर्थः । तथा च ध्वनधातोरधिकरणवाच्ये औणादिक इक्प्रत्ययः पुंसि । उक्तविधकाव्ये ध्वनिशब्दस्य योगरूढत्वान्न गुणीभूतव्यङ्ग्यबोधकत्वमिति बोध्यम् ।

## विमला

अधुना काव्यस्वरूपं निरूप्य काव्यभेदं निदर्शयितुं प्रतिजानीते, अथेति। अथ—काव्यघटकरसादिनिरूपणानन्तरमित्यर्थः, काव्यस्य—"वाक्यं रसात्मकं काव्यम्"इत्युक्तलक्षणस्य वाक्यविशेषस्य, भेदः—प्रकारस्तम्, आह।

ध्वनिमाह, वाच्येति।—व्यङ्ग्ये—व्यञ्जनया बोध्ये अर्थे, वाच्यातिशायिनि—वाच्यार्थात अधिकचमत्कारिणि सति, तत् काव्यमुत्तमं, ध्वनिः कथ्यते इति शेषः। ध्वन्यते—व्यज्यते, अस्मिन्—वाक्यार्थसमुदाये इति विग्रहः। गुणीभूतव्यङ्ग्ये उक्तव्युत्पत्तिसम्भवेऽपि ध्वनिपदस्य निरुक्तरूढिसापेक्षत्वान्न तत्र व्यवहारः। वस्तुतस्तु "ध्वन्यते" इति ध्वनिः, रसादिः; ध्वनतीति ध्वनिः, शब्दादिगता शक्तिः; ध्वननं ध्वनिः, रसादिप्रतीतिः इति व्युत्पत्तिभेदात् ध्वनिपदार्थभेदो बोध्यः। ततश्चाधिकचमत्कारिव्यङ्ग्यं काव्यं ध्वनिरिति फलितम्। अयं भावः;—यत्र अभिधया वृत्त्या प्रतिपाद्यस्य वाच्याभिधेयस्यार्थस्यापेक्षया व्यञ्जनया वृत्त्या प्रतिपाद्यस्य व्यङ्ग्याभिधेयस्यार्थस्य चमत्कारातिशायित्वं स्यात्, तद् ध्वनिरिति व्यपदेश्यं काव्यम्; तच्च वाच्यापेक्षयाऽधिक चमत्कारशालित्वात् उत्तममिति व्यपदिश्यते, यद्वा,—वाच्येतिपदं लक्ष्यस्याप्युपलक्षणात्तेन वाच्यापेक्षया लक्ष्यापेक्षया चेत्यर्थः, अथवा,—वाच्येतिपदं लक्ष्यस्येव यत्र व्यङ्ग्य व्यङ्ग्यान्तरस्यापि व्यङ्ग्यत्वं, तत्र व्यङ्ग्यान्तरव्यञ्जकस्य पूर्वव्यङ्ग्यस्याप्युलक्षकं, वाच्यापेक्षया, लक्ष्यापेक्षया, पूर्वव्यङ्ग्यापेक्षया च यत्र व्यङ्ग्यस्य चमत्कारादि तदुक्तमं काव्यम्। अत्राहुर्ध्वनिकाराः,—"प्रथमे हि विद्वांसो वैयाकरणाः, मूलत्वात् सर्वविद्यानां, ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति अभिनवगुप्ता अप्याहुः, श्रौत्रशुष्कुलीं सन्तानेनागता प्रक्रियायां शब्दाः, श्रूयमाणा इत्युक्तं, तेषां घण्टाऽनुसरणनरूपत्वं तावदास्ति ते च ध्वनिशब्देनोक्ताः। यदाह भगवान् भर्तृहरिः—"यः संयोगवियोगाभ्यां करणैरुपजायते। स स्फोटः शब्दजः शब्दो ध्वनिरित्युच्यते बुधैः॥" इति। एवं घण्टाऽऽदिनिर्ह्लादस्थानीयोऽनुरणनात्मोपलक्षितो व्यङ्ग्योऽप्यर्थो ध्वनिरिति व्यवहृतः। इत्येवर प्रकारोऽव्यक्तशब्दानामेव वर्त्तते। व्यक्तशब्दानां तथा श्रूयमाणा ये वर्णा नादशब्दवाच्या अन्त्यबुद्धिनिर्ग्रह्या: स्फोटाभिव्यञ्जकास्ते ध्वनिशब्देनोक्ताः। यदाह भगवान् स एव—"प्रत्ययैरनुपाख्येयैर्ग्रहणानुग्रहैस्तथा। ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्य्यते॥"इति। तेन व्यञ्जकौ शब्दार्थावपीह ध्वनिशब्देनौक्तौ। किञ्च वर्णेषु तावन्मात्रपरिमाणेष्वपि सत्सु। यथोक्तम्,—"अल्पीयसाऽपि यत्नेन शब्दमुच्चारितं मतिः। यदि या नैव गृह्णाति वर्णं वा सकलं स्फुटम्॥"इति। तेषुतावत्स्वेषु श्रूयमाणेषु वक्तुर्योऽन्यो द्रुतविलम्बितादिवृत्तिभेदात्मा प्रसिद्धादुच्चारणादिव्यापारादभिव्यक्तः, स ध्वनिरुक्तः। यदाह स एव—"शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदास्तु वैकृताः। ध्वनयः समुपोहन्ते स्फोटात्मा नैव भिद्यते॥"इति। इदमभिहितम्;—घटः पटः इत्यादि—समुदितस्वरूपैः क्षणावस्थानैः पदैर्नित्यः स्फोटात्मा शब्दः प्रतिपद्यते, एतेन प्रतिपन्नेन च अर्थः प्रतिपद्यते इति तथाभूतस्य प्रधानतयाऽवस्थितस्फोटव्यञ्जकस्य वर्णसमुदयात्मकस्य घटादिशब्दस्य ध्वनिरिति व्यपदेशो वैयाकरणानां सिद्धान्ते। अत एतदनुयायिभिरितरैरपि प्रधानतयाऽवस्थितव्यङ्ग्यव्यञ्जकत्वसाम्याद‌प्रधानीभूताभिधेयं, यद् व्यञ्जनयाऽप्रतिपाद्यं, तत् अव्यञ्जनसहस्य शब्दार्थद्वन्द्वरूपस्योत्तमस्य काव्यस्य ध्वनिरिति व्यपदेश आम्नातः। अत एवाहुर्ध्वनिकाराः,—"यत्रार्थः यु शब्दो वा तमर्थ सर्जनीकृतस्वार्थौ। व्यङ्ग्यः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥" इति।

## लक्ष्मी

एवं सपरिकरं काव्यस्वरूपमुक्त्वा विशेषं निरूपयितुमवतारयति—अथेति । अथ काव्यस्वरूपघटक-सानुषङ्गिकरसप्रतिपादनानन्तरम्, तत्काव्यं कतिविधमिति जिज्ञासायाम् उपोद्घातादिभिन्नत्वे सति स्मरणप्रयोजक-सम्बन्धत्वं प्रसङ्गत्वम्' इति प्रसङ्गसङ्गत्या तत्काव्य (क) भेदमाह ग्रन्थकार इत्यर्थः ।

**काव्यमिति** । द्विधा द्विविधं मतम् । तत्राद्यो ध्वनिः, द्वितीयस्तु गुणीभूतव्यङ्ग्यम् । गुणीभूतं वाच्यार्था-दुत्कर्षानाधायकत्वादप्रधानीभूतं व्यङ्ग्यं प्रतीयमानोऽर्थो यस्मिन्निति गुणीभूतं काव्यम्, अत्र विशेषः प्रतिपादयि-ष्यते । ननु काव्यमिति नपुंसकं ध्वनिरिति पुंस्त्वं कथमिति चेत्? द्वयोरप्यजहल्लिङ्गतया 'कलत्रं दारा' इत्यादिवन्निर्द्देशेन दोषाभावात् ।

तत्रेति । तयोर्ध्वनिगुणीभूतव्यङ्ग्ययोर्मध्ये इत्यर्थः ।

ध्वनिलक्षणं निरूपयति—वाच्यादतिशायिनीति । व्यङ्ग्ये व्यङ्ग्यार्थे सति वाच्यात् अभिधावृत्तिप्रति-पाद्यात् अर्थाद् अतिशयश्चमत्कारातिशयः अस्यास्तीति स तादृशस्तस्मिन् सति ध्वनिः । तच्च ध्वनिरूपं काव्यम् उत्तमम् गुणीभूतव्यङ्ग्यनिर्व्यङ्ग्यात्मकद्विविधभेदापेक्षया उत्कृष्टम् 'उच्यत' इति शेषः । एतद्धि वाच्यार्थादधिकच-मत्कार्यर्थद्योतकत्वादेवेति विभावनीयम् । अनेन येन केनापि हेतुना व्यङ्ग्यार्थविद्यमानत्वात् गुणीभूतव्यङ्ग्यं काव्यं मध्यमम्, सर्वथा व्यङ्ग्यार्थाविद्यमानत्वान्निर्व्यङ्ग्यं काव्यमधममिति ग्रन्थकृतामाशयोऽवधेयः ।

वाच्यादतिशयिनीत्यस्यार्थं स्फुटीकुर्वन् ध्वनिशब्दस्य योगरूढत्वं स्पष्टयति—वाच्यादिति । वाच्याद-तिशयश्च तात्पर्यविषयत्वाद्बोध्यः । व्यङ्ग्यार्थे सतीत्यर्थः । ध्वन्यते व्यञ्जनया व्यज्यतेऽस्मिन् (क)वाच्यार्थसमुदाये काव्ये इति ध्वनिः, ध्वनतेः 'खनिकस्य ज्यसिवसिवनिसनिध्वनिग्रन्थिचलिभ्यश्च' इत्यौणादिकादिप्रत्ययः । ध्वनि-शब्दो ह्यनेकार्थः, तथाहि ध्वन्यत इति ध्वनी रसादिरर्थः । ध्वनतीति ध्वनिः शब्दवाच्यादिरर्थो वा । ध्वन्यतेऽस्मिन्निति ध्वनिः, शब्दादिगता शक्तिः । ध्वननं ध्वनिः रसादिप्रतीतिः, ध्वन्यतेऽस्मिन्निति ध्वनिः काव्य-मिति । वस्तुतस्तु—ध्वनति व्यञ्जनया रसादीन् प्रत्ययातीति ध्वनिः शब्दार्थसमुदाय इत्यर्थः । वस्त्वलङ्कारध्वन्योः काव्यघटकत्वाभावेऽपि काव्योत्कर्षकतया तद्व्यञ्जकशब्दार्थयोर्ध्वनित्वमवगन्तव्यम्, अन्यथा वक्ष्यमाणध्वनिका-व्यप्रकारसंख्यानुपपत्तेः । यद्यपि गुणीभूतव्यङ्ग्येऽप्युक्तव्युत्पत्तिसम्भवेऽपि ध्वनिपदस्य निरुक्तरूढिसापेक्षत्वान्न तत्र व्यवहारः ।

परे तु—वाक्यविशिष्टवाक्यत्वं ध्वनित्वम् । वैशिष्ट्यञ्च स्वतादाम्य—स्वविशिष्टार्थविषयकज्ञानज-न्यत्व—चमत्काराधिकचमत्कारजनकव्यङ्ग्यार्थप्रतिपादकत्वोभयसम्बन्धेन स्ववैशिष्ट्यञ्च स्वशक्तिलक्षणान्य-तरसम्बन्धेनेति सर्वं सुस्थमिति सुधीभिरालोचनीयम् ।

## रुचिरा

**निधानं भूतीनां, रमणमुदयानां, स्थितिपदं मिहम्नां भव्यानां, निगमशिरसां रत्नमुकुटम् ।**

**गुणानामासेव्यं, जनिरतिलयास्था त्रिजगतां, शरण्यं सिद्धीनां किमपि कमनीयं विजयते ॥**

एवं काव्यस्वरूपं निरूप्य तद्विभागनिरूपणमनुगतं मन्वान आह-**अथेत्यादि** ।

**अथ** काव्यस्वरूपनिरूपणानन्तरम्। **काव्यभेदं** काव्यानां भेदस्तम्। **आह**। स्वरूपज्ञानानन्तरं विशेष-जिज्ञासामपनेतुं काव्यं स्वरूपतो निरूप्य विभागतो, निरुपयितुमाह-२८१ काव्यमित्यादि।

अत्रेदं बोद्धव्यम्—भेदः सजातीयो विजातीयः स्वगतश्चेति त्रिप्रकारः। घटाद् घटस्य भेदः सजातीयः, पटाद् घटस्य पुनर्विजातीयः, एकस्यैव पुनर्घटस्य कपालैकदेशादिभ्यः स्वगतः। तत्र वक्ष्यमाणः काव्यविभेदः किं सजातीयो विजातीयः स्वर्गतो वा। न स्वगतः। चमत्कारापरपर्यास्य रसपादवाच्यस्य काव्यत्वस्याखण्डैकरसत्वे सावयवित्वासम्भवात्। न वा विजातीयः। काव्यंसारे काव्यत्वमन्तरेण भानाभावात्, नाप्येवं सजातीयः काव्यत्वस्य निरवच्छिन्नत्वात्। 'तमेव भान्तमनुभाति सर्वम्, तद्विष्णोः परमं पदठं-सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्, सर्वं खल्विदं ब्रह्म नेह नानाऽस्ति किऽचन, एकमेवाद्वितीयं ब्रह्म, रसो वै सः, रसं ह्येवायं लब्धाऽऽनन्दीभवती' त्यादिश्रुतिस्वारस्यात् काव्यसंसारे काव्यत्वात्मकस्य चमत्कारापरपर्यायस्य रसस्यैव भासा सर्वं वाच्यत्वादिरूपमिदं जगद्भासते तद्भावे सर्वस्यैवामुष्य भासमानत्वासम्भवात्। भासमानत्वमपि तेषाम् 'यथाऽग्नेर्विस्फुलिङ्गा व्युच्चरन्ति एवमेवात्मन' इत्यादिश्रुतिप्रामाण्यान्न तदतिरिक्तमवसेयम्। 'विकारो नामधेयं मृत्तिकेत्येव सत्य' मित्यादि-भ्यश्च श्रुतिभ्यस्तेषां रसव्यतिरिक्तानां मृषात्वेनाभिधानमपि तत एव सङ्गच्छते। भासमानस्य च सूर्यस्योलूकानुमत्या तत्त्वाभावो यथाऽकिञ्चित्करस्तथा सहृदयेतरस्य दृशा रसस्यापि। श्रीमद्भगवताऽपि 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी' त्युक्तम्। सहृदयदृशा रसमन्तरेण काव्यसंसार एव न भासते इति निरवच्छिन्नत्वमेकत्वमद्वितीयमनतिरिक्तत्वं च तस्य निर्बाधम्। 'विज्ञानमानन्दं ब्रह्मे' त्यादिभिः श्रुतिभिरुद्घोष्यमाणं ब्रह्मणो विज्ञानात्मकत्वमानन्दात्मकत्वं च रसरूपस्यैव सङ्घटते। रसस्य विज्ञानापरपर्यायानुभवात्मकताया आनन्दापरपर्यायास्वादात्मकतायाश्च सहृदयहृदयसाक्षिकत्वात्। 'तच्छुक्लमकायमव्रणमस्नाविरठं-' इत्यादिभिश्च श्रुतिभिस्तस्यैवामुष्य निरवयत्वाद्युद्घोष्यते इत्यत्र न विप्रतिपत्तिः। सहृदयानां काचित्। ऐकमत्येन तैरेव रसस्य निरवयवत्वादीनामुद्घोष्यमाणत्वात्। इत्येवं, कथं पुनस्तस्य भेदजिज्ञासा। काव्यसंसारे रसमन्तरेण भानाभावान्न विजातीयत्वसमर्पितस्तस्य भेदः, निरवयवत्वादिना च न तस्य भेदान्तरावतारोऽपि। इति चेत्! सत्यम्। न वास्तविकं भेदं तस्य वक्ष्यामः, किन्त्वौपाधिकम्। उपाधिः कः पुनरसौ पिशाच इति चेत्! रक्तिमनीलिमाद्यसम पृक्तस्य स्फटिकस्य रक्तिमनीलिमत्वादिप्रत्यायकं जपाकुसुमेन्दीवरादिसन्निधानमिव, जातिव्यक्तयादिः शरीरस्येव, शरीरादि च चेतनस्य शरीरिण इव देश काल वक्तृ तात्पर्य संयोग विप्रयोगदिः शब्दार्थयोः, तत्समर्पितः पुना रसस्येति दिक्। १ **ध्वनिस्तदाख्यमित्यर्थः**। ध्वन्यतेऽभिव्यज्यते चमत्कारालिङ्गितो भावोऽस्मिन्निति ध्वनिः। 'खनिकस्य ज्यसिवसिवनिसनिध्वनिग्रन्थिचलिभ्यश्च (उ०) ४/१४१॥' इत्यौणादिकादिः। **च** तथा। **गुणीभूत-व्यङ्ग्यं** गुणीभूतोऽप्रधानीभूतो वाच्यलक्ष्यपूर्वव्यङ्ग्यचमत्कारापेक्षया गौणत्वं प्राप्तो व्यङ्ग्यो व्यञ्जनयोन्नेयश्चमत्कारो यत्र तत्। व्यङ्ग्यश्चमत्कारोऽपि द्विधा पौर्वोऽन्त्यश्च। क्वापि पौर्वस्य क्वापि पुनरन्त्यस्य चमत्कारवैलक्षण्यमभिप्रेतं यथा भवति तथा पुरस्ताद् दर्शयिष्यते। तदाख्यं तत्स्वरूपं वेति भावः **इतीत्येवम्**। **काव्यम्**। **द्विधा**। **मतमङ्गीकृतम्**। 'विवेकिभि' रिति शेषः। तत्र-स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेध-निपातचूर्णिताः। बलीषु तस्याः स्खलितं प्रपेदिरे चिरेण नाभिं प्रथमोदविन्दवः॥' इतीदं ध्वन्युदाहरणम्। पद्यं चेदं कुमारसम्भवस्य चित्रमीमांसायां चोदाहृतम्। अत्र हि भागवतो महेश्वरस्य स्वात्मनि कमप्यनुग्रहमाकाङ्क्षमाणाया भगवत्याः समाध्यवस्थावर्णनम्। अस्य च वाक्यार्थो दशमे परिच्छेदे स्फुटीभविष्यति। मूलकृता तत्रैव प्रसङ्गान्त-रेणोदाहृतत्वात्। चमत्कारः पुनरप्ययदीक्षितपादैरेव यथा स्फुटीकृत स्तथा प्रदश्र्यते, तस्य निरद्यत्वात्। तथा च तत्रत्यो ग्रन्थः 'अत्र तपस्यन्त्या देव्या देहोपरि निपततां प्रथमवृष्टिबिन्दूनां क्रियास्वभाववर्णनेन देव्याः समाध्युचि-

तावस्थाऽभिव्यक्तिद्वारा चिरनिदाघतप्तदेहोपरि निपतनेन मुखपारवश्यसम्भ्रमहेतावपि अभिहिता समाध्यवस्था व्यज्यते। तथा हि—'नासाऽग्रन्यस्तनयनः संवृतास्यः सुनिश्चल'। ध्यायीत मनसा देवमुरी विष्टभ्य चाग्रतः।'

इति समाधिमतामवस्थानमाहुः। तत्र 'पक्ष्मसु स्थिति' इत्यनेन नासाऽग्रन्यस्तनयनतारुपमर्धनिमीलनं व्यज्यते। सर्वथोनमीलने पक्ष्मणामूर्ध्वाग्रत्वेन, सर्वथा निमीलनेन च तेषामधोऽग्रत्वेन जलविन्दूनां स्थित्यसम्भवात् पक्ष्मभ्यश्च्युतानां तेषामास्यप्रवेशेनाधरोष्ठे निपत्य ततश्च्युतिकथनेन संवृतास्यत्वं व्यज्यते। ततश्च्युतानां तेषां स्तनोत्सेधनिपतनादिवर्णनेन तूरोविष्टम्भः। अलसवदनावस्थाने हि स्तनयोरन्तः सङ्कुचिताकारतया तदुत्सेधयोस्तेषां पतरं न स्यात्। कथञ्चितयोः पतित्वा वलित्रयं प्राप्तानामपि तिर्यगेव गमनं स्यात्। न नाभिदेशप्राप्तिः। नाभौ च संवृतायां प्रवेशो न स्यात्। पक्ष्माधरादिपतनक्रमकथनेन च निश्चलत्वं व्यज्यते। मुखादिचलने सति पक्ष्मपतितानां तेषामधरपयोधरादिक्रमेण पतनासम्भवात्। किञ्चैभिरेव विशेषणैर्देव्या लोकोत्तरं सौन्दर्यमभिव्यज्यते। [तथाहि] 'स्थिता' इत्यनेन पक्ष्मणामविरलतायाः 'क्षण' मित्यनेन तेषा मसृणतायाः शिथिलवेगानां तेषां स्तनोत्सेधे चूर्णाभाववर्णनेन तयोरतिकाठिन्यस्य, उरोविष्टम्भेऽपि वलीषु तेषां स्खलनोक्तया वलीनां विस्पष्टतायाः सर्वबिन्दूनां नाभावेव प्रवेशकथनेन नाभेरतिगभीरतायाश्चाभिव्यञ्जनात्।' इति यत्तु पण्डितराजैरूतमौततमं काव्यमुदाहरद्भिः- 'शयिता सविधेऽप्यनीश्वरा सफलीकर्त्तुमहो मनोरथान्। दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते॥' अत्रालम्बनस्य नायकस्य सविधशयनाक्षिप्तस्य रहःस्थानादेरुद्दीपनविभावस्य तादृशनिरीक्षणादेरनुभावस्य त्रपौत्सौक्यादेश्च व्यभिचारिणः संयोगाद्रतिरभिव्यज्यते।' इत्युक्तम्। तत्र 'अहो पूर्वं सरो यत्र लुठन्तः स्नान्ति मानवाः' इत्यत्रेवाहो इत्यस्य विरुद्धार्थप्रत्या यकत्वेन'अहो अनीश्वरा विधवाऽपि मनोरथान् सफलीकर्त्तुं सविधे शयिता दयिता सती दयितानाऽऽनाम्बुजं दरेण न कश्चिन्मम जुगुप्सितं कर्म जानीयादिति भयेन निमीलन्नयना निरीक्षते' इत्यर्थस्य निर्बाधितत्वेन परकीयायाः कस्या अपि विधवायाः परप्रसङ्गगर्हणपरत्वेन काव्यत्वाभाव एवेति तु दूरमास्तां तत्सद्भावविचारः। अथ कथमपि ध्वनिस्वीकारेऽपि 'शयिता सविधे' इति प्रयुक्ता ग्राम्यता दुर्निवारा। गुणीभूतव्यङ्ग्यं यथा— 'प्रहरविरतौ मध्ये वाऽह्नस्ततोऽपि परेण वा किमुत सकले याते वाऽह्नि प्रिय! त्वमिहैष्यसि। इति दिनशतप्राप्यं देशं प्रियस्य यियासतो हरति गमनं वालाऽऽलापैः सवाष्पगलज्जलैः॥' इति। पद्यमिदममरुशतकस्य प्रवत्स्यन्नायिकायाः कस्याश्चिदधैर्यवर्णनपरम्। अस्य च 'हे प्रिय प्रेमनिकेत! प्रहरविरतौ एकस्य प्रहस्य विरामे सति किमिह मत्सन्निधौ एष्यसि पुनरागमिष्यमि किं वाऽह्नो दिवसस्य मध्ये प्रहरद्वयावसाने इह समागमिष्यसि किं वा ततोऽपि परेण प्रहरत्रयापगमे पुनरुपैष्यसि किमुत सकलेऽह्नि दिने याते व्यतीते एव पुनरागमिष्यसि। इत्येवं वाला काचिदधीरा दिनशतप्राप्यं देशं यियासतो गन्तुमभिलषतः प्रियस्य गमनं गमनोद्योगं सवाष्पगलज्जलैरालापैर्हरति निरुणद्धि॥' इत्यर्थः। तात्पर्यं पुनः-'हे प्रिय! यत्र क्वापि गन्तुमिच्छसि तत्र याहि, किन्तु पुनः प्रहरस्यैकस्यावसाने एव प्रथमं त्वयेहागन्तव्यं, यदि पुनर्विलम्बः स्यात् तर्हि द्वितीये प्रहरेऽवश्यं पुनरागन्तव्यम्, अथ कथमपि किञ्चिद्विलम्बो भवेत्तदा तृतीये प्रहरे समागन्तव्यम्, इतः परमशेषेऽस्मिन्दिवसे व्यतीते पुनरागमनं कथमपि युज्यते किन्तु पुनरपि अनागते त्वयि न क्षणमपि मम जीवितं भविष्यतीति दृढं निश्चयीयताम्। इत्येवं ब्रुवन्ती वाला नेत्रेभ्योऽश्रूणि मुञ्चति विह्वलतया च तस्या गद्गदाक्षरा आलापाः, प्रियश्च यत्र गन्तुमभिलषति स देश एव प्रथममनेकशतदिवसप्राप्यः, तत्र कार्यसम्पादनं पुनः कियता कालेन सम्पाद्यमिति तु तादृशगमनोद्योगेनैव विज्ञेयं, पुनः प्रत्यागमाशा कदाचित् सम्भवति। अतः प्रियं निवर्त्तयत्येव तथोद्योगविचारादिति। अत्र 'च ततः परं प्राणान्धारयितुं न शक्ष्यामी' ति व्यङ्ग्यस्य 'हरति गमन' मित्यस्य वाच्यस्य सिद्धावङ्गतया गुणीभावः। न च। ननु तथाऽस्तु गुणीभूतत्वं, किन्तु नायकादेर्विभावस्य, वाष्पादेरनुभावस्य, चिन्ताऽऽवेगादेव सञ्चारिणः संयोगादभिव्यज्यमानेन

विप्रलम्भेन ध्वनित्वं को निगारयेदिति शङ्क्यम्। कवितापरिपाकस्य वाच्यसिद्ध्यङ्गभूते तादृशे व्यङ्ग्य एव विश्रान्तेः। तथा कथमपि ध्वनिरिति पृच्छन्तं प्रत्याह-तत्रेत्यादि। ननु को नाम काव्यत्वोत्कर्षसमर्पको ध्वनिरिति पृच्छन्तं प्रत्याह-**तत्रे**त्यादि।'

**तत्र** तयोर्मध्ये इत्यर्थः। ध्वनिगुणीभूतव्यङ्ग्ययोर्मध्ये इति भावः।

२८२ **वाच्यातिशायिनि**। वाच्यपदं लक्ष्यव्यङ्ग्ययोरप्युपग्राहकम्। व्यङ्ग्यशब्देनापि पौर्व एव व्यङ्ग्यो बोध्यः। तथा च-वाच्यमतिशयितुं शीलमस्यास्तीति तस्मिन्। वाच्यलक्ष्यपूर्वव्यङ्ग्यार्थापेक्षया सातिशयं चमत्कारशालिनीत्यर्थः। क्वचिद्वाच्यापेक्षया क्वापि लक्ष्यापेक्षया क्वापि पुनः पूर्वव्यङ्ग्यापेक्षया स्फुटं सातिशयं चमत्कारसम्भारभाजनभूत इति भावः। अत्र 'स्फुट' मिति 'अतिप्रकट' मित्यर्थकमरं नावगन्तव्यम्, किन्तु 'असंशय' मित्यर्थपरम्। अतिप्रस्फुटत्वे चमत्कारस्यैव निवृत्तिप्रसङ्गात्। 'सुप्यजातौ णिनिस्ताच्छील्ये। ३/२/७८' इति णिनिः। यत्र तु 'वाच्याति शयिनी'ति पाठः। तत्र, वाच्यादतिशायीति समासः पुनर्योगविभागात्। **व्यङ्ग्ये** व्यञ्जनया बोध्येऽर्थे चमत्कारे वा। सतीति शेषः। **ध्वनिः**। 'ध्वनि' रिति व्यपदेशः। **तत्तस्मात्कारणादित्यर्थः**। **काव्यम्**। पूर्वोक्तलक्षणाक्रान्तं सदिति शेषः। पूर्वोक्तं च लक्षणं 'वाक्यं रसात्मकं काव्य' मित्येव। तथा च—रसात्मकवाक्यस्वरूपं काव्यं ध्वनिविशिष्टत्वेन ध्वनिरिति व्यपदिश्यमानमित्यर्थः। 'तत्काव्य' मिति समस्ते पाठे तु 'तस्य ध्वनेः काव्य' मित्यर्थः। **उत्तमम्**। श्रेष्ठमित्यर्थः। वस्तुतया सहृदयहृदयदयितमिति भावः। एवं च-गुणीभूतवाचकादिशब्दवाच्याद्यर्थसत्त्वे सति कस्मिन्नमि सहृदयवास्तविकदयिते कस्मिन्नपि चमत्कारभूमावर्थे च परिस्फुरति रसात्मकवाक्यस्वरूपं काव्यं ध्वनिप्राधान्येन 'ध्वनि' रित्येव व्यपदिश्यमानमुत्तममिति निष्कर्षः। कस्मिन्नपि सहृदयहृदयेतरभाग्यविषये। तथोक्तं भगवता-'कश्चिन्मां वेत्ति तत्त्वतः।' इति। यद्वा-'रस्यते इति रसः' इति पूर्वोक्तनिर्वचनवशाच्चमत्कारापरपर्य्याय एव रसः। तस्य च सहृदयदयितत्वे स्वाभाविकेऽपि वाच्याद्यतिशायित्वे सुतरामिति ध्वनिरेव काव्यं, तच्चोत्तममिति बोध्यम्। अस्मिन् पक्षे व्यङ्ग्यस्य वाच्याद्यतिशायित्वे स्वतः सम्भवति रसात्मकत्वोत्कर्षः, न तदर्थं पूर्वोक्तलक्षणशबलताभ्युपगमप्रयास इति लाघवम्। एवमुभयथैव प्रहेलिकादिषु यथा कथञ्चिद् ध्वनिमतीष्वपि चमत्कारानुदयान्न काव्यत्वं, ध्वनिकाराणा मपि मते ध्वनीनां चमत्कारशालिनामेव काव्यात्मकत्वाङ्गीकारस्य स्फुटं तत्रत्यग्रन्थपर्यालोचनया प्रतीतेः। चमत्कार मन्तरा काव्यत्वमपि नोदयत इति हि निर्विवादम्। अथैवं 'शयिता सविधे' इति निरुक्तपण्डितराजोदाहरणे तथा कथमपि ध्वनिप्रसङ्गावतारेऽपि ग्राम्यताप्राधान्यवशाच्चमत्कारविशेषस्य स्थगनान्नोत्तमोत्तमत्वम्। किन्तु काव्यत्वमात्रम्। ननु 'वाक्य रसात्मकं काव्य' मित्यत्र रसपदं शृङ्गारादीनामेव ग्राहकमवगन्तव्यम्, 'रसस्वरूपं निरूपयिष्यामः' इति पुरस्तादेव तत्र तत्रभवता ग्रन्थकृता प्रतिज्ञातत्वात्। इति चेन्न। तदनन्तरं पुनस्तेनैव 'रस्यते इति रसः। इति व्युत्पत्तियोगाद् भावतदाभासादयोऽपि गृह्यन्ते' इत्यस्याप्यभिहितत्वात्। न च तावता 'रसभावरसाभासदिभांवाभासादीनामेवं ग्रहणमुपपद्यते न पुनर्वस्तुध्वन्यादीनामपी' ति वाच्यम्। तस्या व्युत्पत्तेरादिपदार्थस्य च विपुलोदरत्वेन प्रतिहतत्वासम्भवेन च तत्र तत्र सर्वत्र चमत्कारशालिनि वाक्ये सुङ्कुचितप्रसारत्वाभावात्। अत एव तृतीये परिच्छेदे रसस्वरूपनिरूपणान्तरं 'चमत्कारप्राण' इति विवरणावसरे 'चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्यायः। तत्प्राणत्वं च. तदाह..'रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते। तच्चमत्कासारत्वे सर्वत्राप्यद्भुतो रसः॥...' इत्युक्तं तत्रभवता तेनैव। रसानां तथा निरूपणं तु तत्र स्फुटं चमत्कारप्रतीत्यनुबन्धीति बोध्यम्। तत एव रसस्याद्भुतत्वोद्घोषणमपि सङ्गच्छते। एतेन 'काव्यात्मभूतस्य ध्वनेर्भेदैनैव ध्वनिकाव्यप्रभेदानाह-**भेदा**विति। इह यद्यपि वस्त्वलङ्कारध्वनीनां काव्यात्मत्वं

नाङ्गीकृतं तथाऽपि रसादिप्रकर्षकत्वेनैव तेषां काव्यात्मत्वमित्यभिप्रायेण तत्साधारणं ध्वनिप्रभेदनिरूपणं प्रकमते इति भावः ।' इति तर्कवागीशपादानां समाधानं नातिरुचिरमित्यभिप्रायेण तत्साधारणं ॥ १ ॥

अथ कारिकाया निर्गलितमर्थं समासेनाह-**वाच्या**दित्यादिना ।

**वाच्यात्** । अत्रापि वाच्यपदं लक्ष्यपूर्वव्यङ्ग्यार्थयोरप्युपग्राहकम् । तथा च वाच्यार्थलक्ष्यार्थपूर्वव्यङ्ग्यार्थपेक्षयेत्यर्थः । **अधिकचमत्कारिणि** । अधिकं स्फुटं सातिशयं वा चमत्कारीति तस्मिन् । यद्यपि गुणीभूताभ्यां शब्दार्थाभ्यामभिव्यज्यमानस्यार्थस्य प्रायः सर्वत्रैव चारुत्वमवगम्यते तथाऽपि तत् क्वचित् प्रहेलिकादौ व्यभिचरति, क्वचिच्च तत्साधारण्यम्, न ततस्तत्तथात्वमात्रे काव्यत्वोत्तमत्वं सङ्गच्छते । इत्येव 'अधिकचमत्कारिणी' त्युक्तम् । **व्यङ्ग्यार्थे** व्यङ्ग्योऽसावर्थस्तस्मिन् । व्यङ्ग्यो व्यञ्जनया बोध्यः । पूर्वव्यङ्ग्यार्थापेक्षया यत्राधिकचमत्कारी चरमो व्यङ्ग्यार्थस्तत्र । **ध्वन्यते** स्फुटं सातिशयमभिव्यज्यते । **अस्मिन्** । 'भावोऽर्थो वे'ति शेषः ।' **इति** । **व्युत्पत्त्या** । 'हेतौ' २/३/२३ ॥ इति तृतीयाः । तथा च-इत्याकारव्युत्पत्तिहेतोरित्यर्थः । **ध्वनिः । नाम** प्रसिद्धाम् । **उत्तमम्** । निरवद्यत्वात् कवितापरिपाकनिकषभूतत्वाच्च सहृदयानां नितरां दयितमित्यर्थः । वाच्यार्थपेक्ष्या लक्ष्यार्थपेक्षया वा पूर्वव्यङ्ग्यार्थपेक्षया वाऽतिशयितचमत्कारे व्यङ्ग्यार्थे समुदीयमाने ध्वनिरिति व्यपदेशार्हमुत्तमं काव्यमिति भावः । यत्तूक्तं ध्वन्याचार्यैः-यत्रार्थः शब्दो वा, तमुपसर्जनीकृतस्वार्थौ । व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥' इति । तत्र 'त'मिति 'चमत्कार' मिति, 'व्यङ्क्तः' इति च 'स्फुटं ध्वनतः' इति 'काव्यविशेषः' इति च 'उत्तमसञ्ज्ञः काव्यभेदः' इति । यद्यप्येवं 'काव्यस्यात्मा ध्वनि' रिति ध्वनिमात्रस्य काव्यात्मत्वमङ्गीकुर्वतां तेषां नये 'काव्यविशेष' इत्यभिधानं विरुध्यते । तथाऽपि-चमत्कारसाधारण्येन ध्वनिमात्रस्य काव्यात्मत्वाङ्गीकारेऽपि तदतिशायितत्वेन तस्यैवास्योत्तमत्वमनवद्यम् । अत एव-ध्वनिप्राधान्येन काव्यस्य 'ध्वनि' रित्येव व्यपदेशः स्वीकृतः । अन्यथा 'ध्वनिम' दित्येवाभिहितं स्यात् । एतेन ध्वनेश्चमत्कारातिशयशालित्वे काव्योत्तमत्वाङ्गीकारेण चमत्कारसाधारण्ये काव्यस्यापि साधारण्यं, चमत्कारस्य कथञ्चित्सम्भवे कथञ्चिद् वा काव्यत्वचमत्काराभासे काव्याभासः, चमत्कारस्य सर्वथा सम्भवाभावे काव्यस्यापि सर्वथा सम्भवाभाव एवेति स्फुटं सूचितं भवति । शब्दार्थयोश्चमत्कारतारतम्येन काव्यस्यानि तारतम्यमिति स एव जीवातुः काव्यत्वस्येति सिद्धान्तवादे सर्वेषां प्राचामर्वाचां च मतानि तानि लक्षणानि च भवन्त्योतप्रोतत्वेनावस्थितानीति । 'काव्यस्ये' ति 'राहोः शिरः' इतिवदौपचारिका षष्ठी । नन्वेवं भवतु नाम वाक्यचमत्कारतारतम्यभेदेन काव्यत्वस्यापि तारतम्यव्यवस्था, किन्तु ग्रन्थकृतां का गतिः । उत्तममध्यमसञ्ज्ञौ द्वौ भेदाविति तैर्निरूपितत्वात् । इति चेत् ! उच्यते । प्रथमतस्तु उत्तममध्यमत्वप्रयुक्तकाव्यद्वैविध्याभिधानमेव. अथ यत् काव्यस्यावरत्वं तदप्युत्तमत्वादप्युत्तमत्वं च न निवर्त्तयितुमीशः । प्रत्युत तस्य तथा समर्थयितुं विहितावष्टम्भत्वम् । यत्प्रत्यभिधातुं किञ्चित् प्रयतेवहि, पुनस्तत्केवलं रसस्य स्फुटं प्रतीत्यनुवन्धि । यावदुत्तमत्वं मध्यमत्वमपि वा तावदेव स्फुटं रसस्य प्रतीतिरित्यभिप्रायमूलमिति गृहाण । कथमन्यथा विभिन्नरूपचमत्कारावस्थिकध्वनिप्रपञ्चस्य काव्यात्मत्वाङ्गीकारः, कथं वा 'रस्यते इति रसः ।' इति... भावतदाभासादयोऽपि..., इत्यभिहितं सङ्गच्छेत ।

अत एवोक्तं रसगङ्गाधरकारैः—'तच्चोत्तमोत्तमोत्तममध्यमाधमभेदाच्चतुर्धा । शब्दार्थौ यत्र गुणीभावितात्मानौ कमप्यर्थमभिव्यङ्क्तस्तदाद्यम् ।... तारतम्यस्य स्फुटमुपलब्धेः । कोह्येवं सहृदयः सन् विनिर्गतं मानदमात्ममन्दिरात् ! 'सच्छिन्नमूलः क्षतजेन रेणुः' इत्यादिभिः काव्यैः 'स्वच्छन्दोच्छलद...' इत्यादीनां पामरश्लाध्यानामविशेषं ब्रूयात् । सत्यपि तारतम्ये यद्येकत्वं कस्तर्हि ध्वनिगुणीभूतयोरीषदन्तरयोर्विभिन्नभेदत्वे दुराग्रहः । यत्र च शब्दार्थचमत्कृत्योरैकाधिकरण्यं तत्र तयोर्गुणप्रधानभावं पर्यालोच्य यथालक्षणं व्यवहर्त्तव्यम् । समप्राधान्ये तु मध्यम-

तैवे'ति । यतूक्तं ध्वन्याचार्यैः-'यत्रार्थः शब्दो वा... यत्रार्थो वाच्यविशेषः, वाचकविशेषः शब्दो वा..' इति तत्र वाचकवाच्यरूपशब्दार्थाभिधानं तत्प्राधान्याभिप्रायेणैव, न तु लाक्षणिकव्यञ्जकलक्ष्यव्यङ्ग्यव्यावृत्तिपरकत्वेन। कथमन्यथा-अविवक्षितवाच्यत्वे ध्वन्यवतारः सम्भवेत्। वाचकवाच्ययोस्तदानीं स्थगितप्रायत्वात्। उदाहरणं च तत्र 'सुर्वणपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः। शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥' इत्याद्येव। कथं पुनर्वा 'उअ णिश्चलणिप्पंदा भिसिणीपत्तम्मि रेहइ वलाआ। णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्तिव्वे॥ इत्याद्युहारणान्यगतिकानि न स्युः। अत्र हि व्यङ्ग्यावतारस्य स्फुटं रमणीयत्वम्। तथाहि-'निश्चला निष्पन्दा च वलाक ('वलाका वकपङ्क्तिः स्याद्वलाका विषकण्टिका। वलाका कामुकी प्रोक्ता'इत्युक्तेर्वकानां पङ्क्तिः) विसिन्याः(पद्मिन्याः) पत्रे निर्मले मारकते भाजने (पात्रे) परिस्थिता शङ्खस्य शुक्तिरिव राजते इति पश्येति वाच्यार्थावतारो निर्जनोऽयं देश' इति व्यनक्ति। स च 'स्वच्छन्दमिह चिरं विहर, पत्रे वकाकेव वलाका (कामुकी) भवन्ती त्वयि (त्वदक्ते) निर्भयमवस्थास्ये। आवयोः परिष्वङ्गश्च मरकतस्य शुक्तयाश्च कामपि कमनीयतामाकलयिष्यतीति व्यङ्ग्यान्तरावतारायेति। अभिनवगुप्तपादा अप्यत एवाहुः 'व्यङ्क्त इति द्विवचनेनेहमाह-यद्यप्यविवक्षितवाच्ये शब्द एव व्यञ्जकः, तथाऽपि-अर्थस्य सहकारिता न त्रुट्यति। अन्यथा ज्ञातोऽपि शब्दस्तद्व्यञ्जकः स्यात्। विवक्षितान्यपरवाच्ये च शब्दस्यापि सहकारित्वं भवत्येव।....तेन यद्भट्टनायकेन द्विवचनं दूषितं, तद्गजनिमीलिकयैव। अर्थः शब्दो वेति तु विकल्पामिधानं प्राधान्याभि प्रायेण। काव्यं च तद्विशेषश्चासौ, काव्यस्य वा विशेषः। काव्यग्रहणाद्गुणालङ्कारोपस्कृतशब्दार्थपृष्ठपाती ध्वनिलक्षण आत्मेत्युक्तम्। तेनैतन्निरवकाशं 'श्रुतार्थापत्तावपि('जीवी गृहे न तिष्ठती' त्यादावपि) ध्वनिव्यवहारः स्यादिति। यच्चोक्तं (भट्टनायकेन) 'चारुत्वप्रतीतिस्तर्हि काव्यस्यात्मा स्या' दिति तदङ्गीकुर्म एवे'ति।

उत्तमकाव्यमपि चमत्कारवैलक्षण्येन विभिद्यते इति दिदर्शयिपुराह-२८३ **भेदावित्यादि**।

**भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाभिधामूलौ।**

**अविवक्षितवाच्योऽन्यो विवक्षितान्यपरवाच्यश्च ॥ २ ॥**

तत्राविवक्षितवाच्यो नाम लक्षणामूलो ध्वनिः। लक्षणामूलत्वादेवात्र वाच्यमविवक्षितं बाधितस्वरूपम्। विवक्षितान्यपरवाच्यस्त्वभिधामूलः। अत एवात्र वाच्यं विवक्षितम्। अन्यपरं व्यङ्ग्यनिष्ठम्।

अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः। यथा—प्रदीपो घटस्य। अभिधामूलस्य बहुविषयतया पश्चान्निर्देशः।

---

## विवृतिः

**लक्षणाभिधामूलाविति**। लक्षणामूलोऽभिधामूलश्चेत्यर्थः। तयोः परिचायकावाह—**अविवक्षितेति**। 'आद्यः' इति शेषः। अन्योऽभिधामूलः। अभिधामूल इति ध्वनिरित्यनुषज्यते। अत एव अभिधामूलत्वादेव। वाच्यार्थस्य व्यङ्ग्यपरत्वमुपपादयति—**अत्र हीति**। वाच्यार्थस्य स्वोपस्थितिद्वारा शाब्दबोधं प्रति कारणत्वमित्यभिप्रायेणेदम्। **पश्चान्निर्देश इति**। तथा च लक्षणामूलध्वनेरल्पविषयत्वात्सूचीकटाहन्यायेन प्रथमं निर्देश इति भावः।

अविवक्षितवाच्यस्येतिं ध्वनेरिति शेषः। **तत्रेति**। 'प्रकृतान्वये' इति शेषः। स्वयं मुख्यतावच्छेदकरूपेण स्वविशेषरूपे स्वकीयमुख्यतावच्छेदकव्याप्यधर्मे परिणमति विशेष्यतया भासते। अर्थान्तरे संक्रमितत्वाद् विशेष्यतया भासमानत्वात्।

## विवृतिपूर्तिः

**अविवक्षितेति**। अविवक्षितमनुपयुक्तमन्वयायोग्यं वा वाच्यं वाच्योऽर्थो यस्मिन् सः॥

**विवक्षितेति**। विवक्षितं वाच्यतावच्छेदकरूपेणान्वयबोधविषयः। अन्यपरं व्यङ्ग्योपसर्जनीभूतं च वाच्यं वाच्योऽर्थो यत्र तादृशः॥

## विज्ञप्रिया

लक्षणामूलाभिधामूलयोर्यथासंख्यं स्वरूपमाह—**अविवक्षितेति**—व्याचष्टे—**तत्रेति**। **अविवक्षितमिति**—वाच्याविवक्षायां बीजमाह—**बाधितस्वरूपमिति**—वाच्यतावच्छेदकरूपेण विवक्षाभावात् तेन रूपेण बाधो विशिष्टाभावरूपः। तेन अजहत्स्वार्थात्मिकायाम् उपादानलक्षणायां वाच्यस्याबाधेऽपि वाच्यतावच्छेदकरूपेण तद्बाधः, जहत्स्वार्थायां तु अर्थयोरेव बाधः। **वाच्यं विवक्षितमिति**—वाच्यतावच्छेदकरूपेण बोध्यम्। **व्यङ्ग्यनिष्ठमिति**—व्यङ्ग्यनिष्ठा तात्पर्यपर्याप्तिर्यस्य तादृशम्।

## लोचन

लक्षणाऽभिधा च मूले कारणेऽर्थाद् व्यङ्ग्यात् व्यञ्जने ययोः। यस्य ध्वनेः व्यङ्ग्यार्थरूपोपाधिलक्षणाभिधामूलत्वेन द्वैविध्यप्रतिपादनात् तदुपाधिकस्य काव्यस्य द्वैविध्यम्। ध्वनिशब्दो ह्यनेकार्थः, तथा हि ध्वन्यत इति ध्वनिः, रसादिरर्थः ध्वनतीति ध्वनिः शब्दवाच्यादिरर्थो वा। ध्वन्यतेऽस्मिन्निति ध्वनिः शब्दादिगता शक्तिः। ध्वननं ध्वनिः रसादिप्रतीतिः। ध्वन्यते अस्मिन् इति ध्वनिः काव्यम्।

अन्यपरमिति कारिकापदार्थो व्यङ्ग्यनिष्ठमिति भावः, व्यङ्ग्ये निष्ठा तात्पर्यं यस्य वाच्यार्थस्य, एतेन गुणीभूतव्यङ्ग्यव्यवच्छेदः। **अत्र हीति**—अयमाशयः, अविवक्षितवाच्ये लक्ष्योऽर्थः स्वरूपं प्रकाशयन् व्यङ्ग्यार्थं प्रकाशयति, तत्र लक्षणामूला व्यञ्जना। इह तु वाच्योऽर्थः तथा इत्यभिधामूला।

## कुसुमप्रतिमा

भेदाविति। लक्षणाभिधे मूले ययोस्तौ, लक्षणामूलः अभिधामूलश्चेत्यर्थः द्वौ ध्वनेरपि भेदो प्रकारौ उदीरितौ कथितौ। तयोर्मध्ये अन्य एकः लक्षणमूल इत्यर्थः अविवक्षितवाच्यस्तदाख्यः। तथा च लक्षणामूलत्वादेव न विवक्षितं वाच्यं वाच्यार्थो यस्मिन् सः। द्वितीयोऽभिधामूलस्तु विवक्षितान्यपरवाच्यस्तदाख्यः, तथा च अभिधामूलत्वादेव विवक्षितम् अन्यपरं व्यङ्ग्यार्थबोधकमपि वाच्यं वाच्यार्थो यस्मिन् सः।

तत्रेति। तत्र तयोरविवक्षितवाच्य-विवक्षितान्यपरवाच्ययोर्मध्ये। अत्र अविवक्षितवाच्ये वाच्यं मुख्योऽर्थः। अविवक्षितत्वे हेतुमाह बाधितस्वरूपमिति। केनापि कारणेन अनुपपन्नावस्थमित्यर्थः। तथा च अविवक्षितवाच्ये ध्वनौ मुख्यार्थस्य केनापि कारणेन बाधितत्वादेव तस्य न विवक्षितत्वमिति भावः।

विवक्षितेति। अत एव अभिधामूलत्वादेव। अत्र विवक्षितान्यपरवाच्ये ध्वनौ। वाच्यं मुख्योऽर्थः। विवक्षितान्यपरवाच्यशब्दान्तर्गतम्। अन्यपरशब्दं व्याचष्टे अन्यपरमिति। व्यङ्ग्यनिष्ठं व्यङ्ग्यार्थतया पर्यवसितम्। प्रकाशयन्नेव अभिधाद्वारा बुद्धौ उपस्थापयन्नेव अभिधामूलव्यञ्जनाद्वारा व्यङ्ग्यार्थस्यापि प्रकाशक उपस्थापकः स्यादित्यर्थः। यथा—प्रदीपः स्वरूपं प्रकाशयन्नेव घटस्य प्रकाशकः, तथेत्यर्थः।

नन्वभिधामूलत्वेन प्रधानत्वात् प्रथमं बुद्धिविषयत्वाच्च विवक्षितान्यपरवाच्यस्यैव ध्वनेः प्रथमं निर्द्देशौचित्ये कारिकायां कथं तस्य पश्चान्निर्द्देश इत्याह अभिधेति। तथा च सूचीकटाहन्यायेन अल्पविषयतया लक्षणामूलस्य अविवक्षितवाच्यस्य प्राङ्निर्द्देशः, अभिधामूलस्य तु बहुविषयतया पश्चान्निर्द्देश इति भावः।

## विमला

काव्यात्मभूतस्य ध्वनेर्भेदेनैव ध्वनिकाव्यप्रभेदमाह, भेदाविति—इह वस्त्वलङ्कारध्वनीनां काव्यात्मत्वं नाङ्गीकृतं, तथाऽपि रसादिप्रकर्षकत्वेनैव आत्मत्वमित्यभिप्रायेण तत्साधारणं ध्वनिप्रभेदनिरूपणं प्रक्रमते इति बोध्यम्। लक्षणाऽभिधामूलौ—लक्षणामूलोऽभिधामूलश्चेत्यर्थः, द्वौ भेदौ उदीरितौ आद्यः लक्षणमूलो ध्वनिः; अविवक्षितवाच्यः,—न विवक्षितम्—उपयुक्तम्, अन्वयार्हं वा, वाच्यं—वाच्योऽर्थः यत्र तथोक्तः, अन्यः—द्वितीयः, अभिधामूलो ध्वनिरिति यावत्, विवक्षितान्यपरवाच्यः,—विवक्षितं—वाच्यताऽवच्छेदकरूपेणान्वयबोधकः, तस्मात् अन्यपरं—व्यङ्ग्यपरं, व्यङ्ग्योपसर्जनीभूतं वा, वाच्यं - वाच्योऽर्थो यत्र तथाविध इति भावः।

अविवक्षितवाच्यत्वे हेतुमाह, लक्षणेति।—लक्षणामूलत्वात्—लक्षणामूलं यस्य तस्य भावः तत्त्वं, तस्मात्तथोक्तात्, मुख्यार्थबाधविषयिणी वृत्तिर्हि लक्षणा तन्मूलत्वात्; अत्र वाच्यस्य बाधितत्वम् (अविवक्षितत्वम्) इति भावः। अभिधामूलः—अभिधामाश्रित्याविर्भूतः, ध्वनिरित्यनुषज्यते। अत एव अभिधामूलत्वादेव इत्यर्थः। वाच्यार्थस्य व्यङ्ग्यपरत्वमुपपादयति, अत्र हीति।—अत्र—विवक्षितान्यपरवाच्ये ध्वनौ, हि—यतः, स्वरूपं प्रकाशयन्—स्वरूपेण अवस्थितः सन्, प्रकाशकः—प्रत्यायकः। (वाच्यार्थस्य स्वोपस्थितिद्वारा शाब्दबोधं प्रति कारणत्वमित्यभिप्रायेणेदम्)। निदर्शनमाह, ह्यथेति।—यथा प्रदीपः, घटस्य, एतदुपलक्षणं, तेन घटपटादेरित्यर्थः, स्वरूपेण स्वयं प्रदीप्यमानः सन् अन्यमपि स्वरूपेण सन्तं प्रदीपयति, तथेति भावः। लक्षणामूलध्वनेः अल्पविषयत्वात् सूचीकटाहन्यायेन प्रथमनिर्द्देशः, तदन्यस्य पश्चादित्यवधेयम्। अन्यत् स्पष्टम्।

## लक्ष्मी

काव्यात्मभूतस्य ध्वनेर्भेदप्रदर्शनेनैव ध्वनिकाव्यप्रभेदान् दर्शयति—भेदाविति। द्वौ ध्वनेरपि भेदौ प्रकारौ उदीरितौ कथितौ। द्विवचननिर्द्देशादेव द्वित्वप्रतीतिसिद्धौ द्वाविति नियमार्थं बोध्यम्। अत्र यद्यपि वस्त्वलङ्कारध्वनीनां काव्यात्मत्वं न स्वीकृतं तथापि रसादिप्रकर्षकत्वेनैव तेषां काव्यात्मत्वमित्याशयेन तत्साधारणं ध्वनिप्रभेदनिरूपणमारभत इत्यभिप्रायो बोध्यः। लक्षणाभिधामूलाविति। लक्षणामूलोऽभिधामूलश्चेत्यर्थः। तयोर्मध्ये आद्यो लक्षणामूल अविवक्षितम् अनुपयुक्तमन्वयायोग्यं वा वाच्यं वाच्योऽर्थः यत्र स ध्वनिः अविवक्षितवाच्यः। अन्योऽभिधामूलो ध्वनिरित्यनुषङ्गः पूर्वतो विधेयः, (वाच्यं) विवक्षितम् अन्वययोग्यमपि अन्यपरं व्यङ्ग्योपसर्जनीभूतं वाच्यं वाच्योऽर्थो यत्र स विवक्षितान्यपरवाच्यः।

अथ कारिकायाः पूर्वभागस्य सुगमत्वात्तदुपेक्ष्य तदुत्तरभागमेव व्याचष्टे—तत्रेति। तत्र तयोर्द्वैविध्ये। 'आद्य' इति शेषः। अविवक्षितमिति। वाच्यं मुख्योऽर्थ इत्यर्थः। सामान्येनात्र नपुंसकत्वमवगन्तव्यम्। वाच्याविवक्षायां बीजं दर्शयति—बाधितस्वरूपमिति। केनापि कारणेन अनुपपन्नावस्थमित्यर्थः।

अत्रेदम्बोध्यम्—अविवक्षितवाच्ये ध्वनौ प्रधानार्थस्य केनापि कारणेन बाधितत्वादेव तस्य न विवक्षितत्वमित्याशयः। वाच्यतावच्छेदकरूपेण विवक्षाभावात् तेन रूपेण बाधो विशिष्टाभावरूपः। तेन अजहत्स्वार्थात्मिकायाम् उपादानलक्षणायां वाच्यस्याऽबाधेऽपि वाच्यतावच्छेदकरूपेण तद्बाधः, जहत्स्वार्थायां तु अर्थयोरेव बाध इति।

**विवक्षितान्येति**। विवक्षितम् अबाधितस्वरूपम्। अत एव अभिधामूलत्वादेव। अत्र विवक्षितान्यपरवाच्ये ध्वनौ। वाच्यं विवक्षितमिति। वाच्यं मुख्योऽर्थः। विवक्षितं वाच्यतावच्छेदकरूपेणेति बोध्यम्। विवक्षितान्यपरवाच्यशब्दान्तर्गतम् अन्यपरशब्दं विवृणोति—अन्यपरमिति। व्यङ्ग्यनिष्ठं व्यङ्ग्ये निष्ठा तात्पर्यें वाच्यार्थस्य तादृशं व्यङ्ग्यार्थतया पर्यवसितमिति यावत्, एतेन गुणीभूतव्यङ्ग्यव्यवच्छेदः। वाच्यार्थस्य व्यङ्ग्यपरत्वमुपपादयति—अत्र हीति। वाच्यार्थस्य स्वोपस्थितिद्वारा शब्दबोधं प्रति हेतुत्वमित्याशयेनेति। अयमाशयः—अविवक्षितवाच्ये लक्ष्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थं प्रकाशयति तत्र लक्षणामूला व्यञ्जना, इह तु वाच्योऽर्थः तथा इत्यभिधामूला यथा प्रदीपः स्वरूपं प्रकाशयन्नेव घटस्य प्रकाशकः।

ननु कारिकायां विवक्षितान्यपरवाच्यस्य अभिधामूलत्वात् प्रथमं बुद्धिविषयत्वाच्च तस्यैव प्रथमोपादानमुचितमिति कथं पश्चात्तदुपादानमित्यत आह—अभिधामूलस्येति। तथा च अभिधामूलस्य ध्वनेः बहुविषयत्वात्, लक्षणामूलध्वनेरल्पविषयत्वात् सूचीकटाहन्यायेन प्रथमं निर्द्देश इति भावः।

## रुचिरा

२८३ **ध्वनेः** पूर्वोक्तस्वरूपस्य काव्योत्तमत्वप्रयोजकस्य। **अपि। लक्षणाऽभिधामूलौ**। लक्षणामूलोऽभिधामूलश्चेतिः। यद्यप्यभिधापदस्य परत्वं नैव युज्यते। तथाऽपि तथा विवक्षावलाद् 'अभ्यर्हितं च।' इति परत्वम्। **द्वौ**। 'द्वा' विति नियमार्थम्, द्विवचननिर्देशादेव द्वित्वप्रतीतिसिद्धेः। **भेदौ। उदीरितौ** कथितौ। तत्रैकः- **अविवक्षितवाच्यः** न विवक्षितमित्यविवक्षित, तथाभूतं वाच्यमभिधया प्रतिपाद्यं यत्र सः। अत्र सामान्यभिप्रायेण क्लीवत्वम्। अन्यथा तु अविवक्षितो बाधितस्वरूपो वाच्योऽभिधया प्रतिपाद्योऽर्थो यत्र स इति। **च पुनः। अन्यो** द्वितीयो भेद इत्यर्थः। **विवक्षितान्यपरवाच्यः** विवक्षितं वक्तुमीप्सितमन्यपरं वाच्यं यत्र सः। अन्यद् व्यञ्जनया यत् प्रतिपाद्यते तत्, तत्र परं निष्ठम्। अत्रापि सामान्याभिधायेन क्लीवत्वमन्यथा तु पुंस्त्वमेव सङ्गच्छते। इति॥ १९९॥

अत्रायम्भावः—लक्षणा तावद् द्विविधा रूढिः प्रयोजनवती च तत्र रुढिमूलस्तु ध्वनिर्न सम्भवति तत्र व्यञ्ज नीयत्वस्य सर्वथाऽभावात्। अथ प्रयोजनवत्येव ध्वनेर्मूलं भवितुमर्हतीति नातिरोहितम्। यद्यपि लक्षणातः प्राथमिक्यभिधावृत्तिस्ततस्तन्मूल एव ध्वनिः प्रथमं निर्देश्यस्सम्भवति, तदपि तस्य बहुविषयतया, लक्षणामूलस्याल्पविषयतया सूचीकटाहन्यायेन प्रथमं लक्षणामूल एव निर्दिष्टः। वक्ष्यन्त्यत एव वृत्तिकारा अपि 'अभिधामूलस्य बहुविषयतया पश्चान्निर्देशः।' इति। लक्षणा च मुख्यार्थबाधाऽनन्तरभाविनीति तन्मूलेऽति ध्वनौ मुख्यार्थो बाधितस्वरूप एवावस्थास्यते। मुख्यार्थश्च वाच्यार्थ एवेत्यसावविवक्षितवाच्यः। अभिधया तु वाच्य एवोद्भाव्यते इति कथंस्वित् स्यात्तन्मूलस्य तथात्वम्। किन्तु प्रयोजनवत्या लक्षणायाः प्रयोजनं व्यञ्जनैकगम्यमिति स्वत एव तन्मूलस्य व्यङ्ग्यपरत्वं, न पुनस्तथासमर्थनोपयोगित्वम्, अथामिधाया न व्यञ्जनोपकृतत्वं किञ्चिदिति तत्प्रतिपाद्यस्य (वाच्यस्य) व्यङ्ग्यापरत्वमन्तरा ध्वनित्वं न सङ्घटत इत्यभिधामूलस्य तस्य विवक्षितान्यपरवाच्यस्वरूपत्वं निर्बाधम्। नन्वेवं व्यञ्जनामूलोऽपि ध्वनिः प्रतिपादनीयः। व्यञ्जनाया अपि वृत्तित्वात्। त्वयाऽपि पूर्वं पूर्वव्यङ्ग्यस्य चरमव्यङ्ग्यं प्रति हेतुत्वं प्रदर्श्यं तत्सातिशयत्वे चरमव्यङ्ग्यस्य ध्वनित्वाभिहितत्वात्। कथङ्कारं ग्रन्थकारैर्ध्वनेर्द्वैविध्यमेव पुनरभिहितम्। इति चेत्! उच्यते। अभिधा तावत्स्वतन्त्रा वृत्तिः, तयैव शब्दस्यार्थः प्रथममुद्भाव्यते। किन्त्वसौ यदि सङ्केतितः। अतः सङ्केतितार्थोद्भावनानन्तरं तस्यां विरतायां तन्मात्रावष्टम्भा तद्बाधस्थले लक्षणा समुदयते। चन्द्रस्य सूर्यप्रकाशमात्रावष्टम्भत्वेऽपि सूर्यस्यैव प्रकाशबाधे यथा सम्भवस्तथातस्या अपीति। ताभ्यामप्येवं प्रत्येकं शब्दार्थ उद्भावते, न पुनर्वाक्यार्थतात्पर्य्यमिति तात्पर्याऽऽख्याया वृत्तेरवतारः। अथ व्यञ्जना तासु विरतासु तासां पुनर्व्यापाराभावेऽपि यः कश्चित्सचमत्कारोऽर्थः सहृदयहृदयमात्रमाक्षिकोऽक्तारोन्मुखोऽवतिष्ठते तन्मात्रोपजीत्वा, पामरैः प्रत्याख्याताऽपि सहृदयैरभिनन्दितोन्मोदते। असौ च न केवलं शब्दशक्तिरर्थशक्तिरेव वा किन्तु प्रकृतिप्रत्ययादीनामपि शक्तिः। किन्त्वसौ क्वचिदभिधेया प्रतिपाद्यस्य वाच्यस्य स्वप्रतिपाद्यत्वे क्वचित् पुनस्तस्य बाधितस्य प्रयोजनोद्भावकत्वे इति नातिरिच्यते ताभ्याम्। पूर्वत्र ह्यभिधामूलस्य ध्वनेः सञ्चारः, उत्तरत्र च लक्षणामूलस्येति विदितचरं विदुषाम्। अत एव ध्वनेर्द्वैविध्यम्। ध्वनिः पुनः शब्दार्थातिशयिनि सति व्यङ्ग्ये सम्भवतीति क्वचित्तत्त्वानुदये प्रथमं व्यङ्ग्यमात्रम्। अथ यदि तस्माद्भवेत्सातिशयं व्यङ्ग्यान्तरं ध्वनिरपि सति तदा स्यात्, किन्त्वत्र वाच्यस्य विवक्षितत्वेनाभिधामूलत्वमेवेति न तस्य तृतीयत्वम्। इदमभिहितम्-व्यङ्ग्याद् व्यङ्ग्यान्तरस्य ध्वनित्वेन व्यञ्जनामूलः पृथक् सम्भवन्नपि ध्वनिरभिधामूलेऽन्तर्भवति विवक्षितान्यपरवाच्याख्ये ध्वनाविति द्विविध एव ध्वनिरिति॥ १९९॥

अथ कारिकायाः पूर्वं भागमदुर्बोध इत्युपेक्ष्योत्तरमेव भागं विवृणोति-**तत्र** तयोर्द्वैविध्ये। "आद्य" इति शेषः। लक्षणामूलाभिधामूलध्वनिद्वयान्तराद्यो लक्षणामूल इति भावः। **अविवक्षितवाच्यः। नाम** प्रसिद्धः **लक्षणा-**

**मूलो** लक्षणा मूलं यस्य सः। **ध्वनिः**। कुतोऽत्र वाच्यस्य विवक्षितत्वाभाव इत्याह—**लक्षणामूलत्वात्**। **एव** केवलम् **वाच्यं मुख्यार्थ** इत्यर्थः। क्लीबत्वं तु सामान्याभिप्रायेण। **बाधितस्वरूपं** बाधितं स्वरूपं यत्र तत्। **तु** पुनः। **विवक्षितान्यपरवाच्यः**। "ध्वनि" रिति शेषः। **अभिधामूलः**। **अतो**ऽभिधामूलत्वादिति भावः। **एव**। **अत्रास्मिन्नित्यर्थः**। **वाच्यं** वाच्योऽर्थ इति भावः। **विवक्षितम**बाधितस्वरूपम्। **अन्यपर**मन्यद् व्यङ्ग्यं तत्र परं निष्ठम्। **व्यङ्ग्यनिष्ठम्**। कथं वाच्यस्य व्यङ्ग्यपरत्वमित्याह-**हि** यतः। **अत्रास्मिन्** ध्वनौ। **वाच्यः**। **अर्थः**। **स्वरूपम्**। **प्रकाशयन्**। **एव**। **व्यङ्ग्यार्थस्य**। **प्रकाशकः**। इति। तत्र सादृश्यं निदर्शयति-**यथा**। **प्रदीपः**। स्वरूपं प्रकाशयन्निति पूर्वेणान्वयः। **घटस्य**। अपीति शेषः। प्रकाशक इति पूर्वेणान्वयः। अत्रायम्भावः—यथा प्रदीपः। स्वय मपि प्रकाशते, घटमपि प्रकाशयति, न पुनः केवलं स्वं, न वा घटमेव; तथा ध्वन्यवतारावसरे वाच्यो भवतु गुणीभूतः किन्तु तथासन्नपि स्वयं प्रकाशते, व्यङ्ग्यार्थं च प्रकाशयते। तस्य हि स्वोपस्थितिद्वाराऽन्यावबोधं प्रति कारणत्वम्। अत्र तत्पदेन प्रदीपो वाच्यार्थो वा बोध्यः। उक्तं च विवृतिकारैः-'अत्र हीति। वाच्यार्थस्य स्वोपस्थि-तिद्वारा शाब्दबोधं प्रति कारणत्वमित्यभिप्रायेणेदमिति। यद्यपि घटाभावस्थले प्रदीपः स्वयमेव प्रकाशते न पुनर्घटं प्रकाशयते, तत्स्थितेरेव तदानीमभावात्। तथाऽपीदं तत्सत्त्वमुद्दिश्यैवोक्तम्। यद्वा-घटपदेनोपस्थितं प्रकाश्यजातं वस्तु। अत एव 'न किञ्चिदवेदिष' मित्यत्राबोधावबोधकत्वं परस्वरूपस्ये'ति। अथामिधामूलस्य ध्वनेः पुनर्निर्दे-शाभिप्रायं स्वयं प्रकटयति-**अभिधामूलस्य**। ध्वनेरिति शेषः। **बहुविषयतया** बहवो विषयाः प्रतिपाद्या अर्था यत्र तस्य भावस्तत्ता तथा **प्रश्चा**लक्षणामूलानन्तरम्। **निर्देशः**। 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र 'रात्रौ' इतिवत् 'लक्षणामूलस्याल्पविषयतया प्रथमं निर्देश' इत्यपि स्फुटम्।

अविवक्षितवाच्यस्य भेदावाह—

**अर्थान्तरं संक्रमिते वाच्येऽत्यन्तं तिरस्कृते।**

**अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति ॥ ३ ॥**

अविवक्षितवाच्यो नाम ध्वनिरर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः। यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपेऽर्थान्तरे परिणमति, तत्र मुख्यार्थस्य स्वविशेषरूपार्थान्तरसंक्रमितत्वादर्थान्तरसंक्रमितवाच्यत्वम्।

यथा—

**'कदली कदली, करभः करभः, करिराजकरः करिराजकरः।**

**भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरुयुगं न चमूरुदृशः ॥'**

अत्र द्वितीयकदल्यादिशब्दाः पौनरुक्त्यभिया सामान्यकदल्यादिरूपे मुख्यार्थे बाधिता जाड्यादिगुणविशिष्टकदल्यादिरूपमर्थं बोधयन्ति। जाड्याद्यतिशयश्च व्यङ्ग्यः।

---

## विवृतिः

एतेन मुख्यार्थस्य मुख्यतावच्छेदकरूपेण प्रकृतान्वयानुपयोगित्वं बाधस्तस्यैव विशेषणान्तररूपेण बोध इतीयमुपादानलक्षणेति सूचितम्। **कदलीति**। 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः। चमूरुर्मृगविशेषः। **जाड्यादिति**। जाड्यं शैत्यम्। यद्यपि शैत्यं पयस्येव तथापि तस्य परम्परया कदलीवृत्तित्वमवगन्तव्यम्। आदिना ह्रस्वत्वकर्कशत्वयोर्ग्रहणम्। नच शैत्यादीनामन्यत्रापि सत्त्वात्कथं कदलीत्यादिव्याप्यत्वमिति वाच्यम्। शैत्यादिविशेषस्यैवात्र विवक्षितत्वात्। **जाड्याद्यतिशयश्चेति**। व्यङ्ग्यो लक्षणप्रयोजनबोधविषयः सर्वत्रैव मुख्यार्थस्याभेदः संबन्धः। एवं च कदल्यतिशीता करभोऽतिह्रस्वः करिराजकरोऽतिकर्कश इति हेतोश्चमूरुदृश इदमीदृशमूरुयुगं भुवनत्रितयेऽपि तुलां सादृश्यं न बिभर्तीत्यर्थः। यत्र तु कदल्यादौ सादृश्यं संभाव्यते तदतिशैत्यादिनापकृष्टत्वमिति सुतरां भुवनत्रितये तुला नास्तीति भावः। अत्र व्यतिरेकालंकारो व्यङ्ग्यः। यत्रपुनरिति शब्द इति शेषः।

## विवृतिपूर्तिः

**अर्थान्तरेति**। अर्थान्तरे उपयोगिनि लक्ष्यतावच्छेदके संक्रमितमाश्रयत्वेन परिणतं वाच्यं यत्र तादृशः ॥

**अत्यन्तेति**। अत्यन्ततिरस्कृतं न केनापि रूपेणान्वयप्रविष्टं वाच्यं यत्र तादृशः ॥

## विज्ञप्रिया

**भेदावाहेति**—वाच्येऽर्थेऽर्थान्तरमवच्छेदकान्तरं संक्रमिते प्रापिते अर्थाद्बोद्धुर्ज्ञाने इत्यर्थः। **अत्यन्तं तिरस्कृत** इति—वाच्यार्थस्यावच्छेदकान्तरेणापि अविवक्षणात् अत्यन्तं तिरस्कारः, तत्रार्थान्तरसंक्रमितवाच्यं व्याचष्टे—**मुख्यार्थस्येति**।

**कदली कदलीत्यादि**। चमूरुदृशः हरिणेक्षणायाः ऊरुयुगं भुवनत्रितयेऽपि कस्यापि तुलां सादृश्यं न बिभर्त्तीत्यर्थः। तथा च तेन कस्यापि सादृश्याऽधारणात् कोऽपि तदुपमानं न अस्तीत्यत्राह—**कदलीति**। कदली रम्भा करभः ऊर्वाकारः पाणिपार्श्वभागः "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इति कोषात्। करिराजस्य हस्तिश्रेष्ठस्य करः, शुण्डा, एषु उद्देश्येषु द्वितीयकदल्यादिपदानां पौनरुक्त्यात् तदर्थानां विधेयत्वाऽसम्भवात् तानि पदानि जाड्यादिविशिष्टकदल्यादिपराणि। तदाह—जाड्यादिविशिष्टकदल्यादिरूपमर्थं बोधयन्तीति तथा च प्राथमिककदल्यादिपदेभ्यः कदल्याद्यंशप्राप्तौ जाड्यादिवैशिष्ट्यमात्रे द्वितीयकदल्यादिशब्दानां लक्षणा। ततः कदली जाड्या करभोऽशोभनः करिराजकरः कर्कश इत्यर्थः।

## लोचन

**संक्रमित इति**—योगकाक्वादिसाहायसूचनं वाच्ये इति काकाक्षिन्यायेनोभयत्र सम्बध्यते। अनुपयुज्यमानत्वमर्थात् स्वरूपमात्रेण संक्रमिते इति कारिकापदार्थः। **परिणमतीति**—परिणामश्च तत्त्वादपरिच्युतस्य धर्मिणोऽवस्थान्तरगमनम्। जाड्याद्यतिशयः स्वशब्दाभिधानाऽलभ्यः।

## कुसुमप्रतिमा

अर्थेति। वाच्ये मुख्यार्थे अर्थान्तरं संक्रमितं उपादानलक्षणया स्वविशेषार्थतां प्राप्ते अत्यन्तं तिरस्कृते लक्षणलक्षणया सर्वथैव प्रतीत्यविषये च सति अविवक्षितवाच्योऽपि ध्वनिः द्वैविध्यं द्विप्रकारत्वं ऋच्छति प्राप्नोति। तथा च उपादानलक्षणया यस्य कस्यापि सामान्यरूपमुख्यार्थस्य स्वविशेषार्थरूपत्वेन पर्यवसाने सति, अर्थान्तरसंक्रमितवाच्यो नाम ध्वनिः, तथा लक्षणलक्षणया मुख्यार्थस्य इतरार्थरूपतया पर्यवसानेन सर्वथैवाप्रतीतिविषयत्वात् अत्यन्ततिरस्कृतवाच्यो नाम ध्वनिरिति सरलार्थः।

अर्थान्तरसंक्रमितवाच्यशब्दस्य व्युत्पत्त्यर्थमाह यत्रेति। अनुपयुज्यमानः कथञ्चिद्बुधिः। स्वान्वयबोधं जनयितुमशक्नुवन्नित्यर्थः। परिणमति उपादानलक्षया पर्यवस्यति। स्वविशेषरूपे अर्थान्तरं संक्रमितत्वात् उपादानलक्षणया सञ्चारित्वात्। अर्थान्तरे संक्रमितं वाच्यं यत्र सः अर्थान्तरसंक्रमितवाच्यः।

कदलीति। काञ्चित्। सुन्दरीमवलोक्य कस्यापि रसिकस्योक्तिरियम्। कदली रम्भातरुः, कदली नितान्तशीतलताविशिष्टो रम्भातरुरेव। अतः सा नातिशीतोणरूपस्य अस्योरुयुगस्य तुलां न विभर्त्तीति भावः। करभो हस्तस्य मणिबन्धदेशात् कनिष्ठाङ्गुलीपर्यन्तो देशः, करभः अत्यन्तखर्वस्तादृशदेश एव। सुतरां स यथासम्भवदीर्घस्य अस्योरुयुगस्य तुलां न विभर्त्रीत्याशयः। करिराजस्य हस्तिश्रेष्ठस्य करः शुण्डा, करिराजकरः अत्यन्तकठिना हस्तिश्रेष्ठशुण्डैव। अतएव सोऽपि नितान्तकोमलस्य तुलां न विभर्त्तीत्यभिप्रायः। अतएव चमूरोर्हरिणविशेषस्येव व दृशौ चक्षुषी यस्यास्तस्या अस्या नायिकाया इदम् ऊरुयुगं कर्त्तृ, भवमत्रितयेऽपि तुलां कस्यापि

सादृश्यं न विभर्त्ति न धारयति; नायिकीरुयुगलस्य त्रिभुवनेऽपि कदली करभकरिराजकरभिन्नानामुपमानपदार्थानामभावात् तेषाञ्च तादवस्थ्यादिति भावः।

लक्ष्ये लक्षणं सङ्गमयितुमाह अत्रेति। आदिशब्देन करभ-करिराजकरशब्दयोर्ग्रहणं पौनरुक्त्यभिया एकार्थे प्रयुक्तयोर्द्वयोः शब्दयोराद्येनैव तदर्थप्रतीत्युपपत्तौ द्वितीयस्य वैयर्थ्यभयेन। अयन्तु मुख्यार्थबाधं प्रति हेतुरुक्तः। सामान्यः शीतोष्णादिसाधारणः। आदिशब्देन करभ करिराजकररूपार्थयोः परिग्रहः वाधिता अनुपपन्ना इति लक्षणां प्रति हेतुरुक्तः। जाड्यं शैल्यम्। आदिपदेन स्ववर्तत्वकठिनत्वयोर्ग्रहणम्। एवमन्वयोरप्यादिशब्दयोरुद्व्यम्। बोधयन्ति "श्वेतो धावति" इत्यादाविव उपादान लक्षणयेति शेषः।

लक्षणायाः प्रयोजनम् अत्रत्द्यध्वनिप्रयोजकन्वाद्य जावति आदिपदेन धवलकादनन्दडमार्ग्रहणम्। व्यङ्ग्यो लक्षणामूलव्यञ्जना प्रतिपाद्यः। द्वितीयकदल्यादिशब्देष्विति शेषः।

अत्यन्ततिरस्कृतवाच्यरव्यं ध्वनिमुदाहर्त्तुं तदर्थं परिष्करोति यत्रेति। तुशब्दार्थे पुनः शब्दः। स्वार्थं मुख्यार्थम्। सर्वथा विशेष्यत्वेन विशेषणत्वेन च। परिणमति लक्षणलक्षणया पर्यवस्यति। शब्द इति शेषः। अत्यन्ततिरस्कृतत्वात् प्रतीतेरत्यन्ताविषयीकृतत्वात्।

## विमला

अर्थान्तरमिति।—अविवक्षितवाच्योऽपि—लक्षणश्रमूलोऽपि, ध्वनिः, वाच्ये—मुख्येऽर्थे, अर्थान्तरम्—उपयोगिलक्ष्यताऽवच्छेदकं, सङ्क्रमिते—आश्रितत्वेन प्रस्थिते, अथवाऽत्यन्तं—सर्वथा, तिरस्कृते—न केनापि रूपेण अन्वयं प्रविष्टे सति, द्वैविध्यम्, ऋच्छति—प्राप्नोति।

अविवक्षितवाच्य इति।—यत्र—प्रकृतान्वये, मुख्यः—वाच्यः, अर्थः, स्वयं—साक्षात, मुख्यताऽवच्छेदकरूपेणेति यावत्, अनुपयुज्यमानः—उपयुक्तताम्प्राप्नुवन् सन्, स्वविशेषरूपे—स्वप्रकारभूते, अर्थान्तरे—स्वकीयमुख्यताऽवच्छेदकव्याप्यधर्मे, परिणमति—विशेष्यतया भासते, तत्र—निरुक्तस्वरूपे वाक्ये, मुख्यार्थस्य—वाच्यार्थस्य, स्वस्वरूपेण प्रकृतान्वयेऽनुपयुज्यमानस्याभिधया प्रतिपाद्यस्य अर्थस्येति यावत्, स्वविशेषरूपार्थान्तरसंक्रमितत्वात्,—स्वविशेषरूपं यदर्थान्तरं तत्र सङ्क्रमितत्वात्—विशेष्यतया भासमानत्वात्, [एतेन मुख्यार्थस्य मुख्यताऽवच्छेदकरूपेण प्रकृतान्वयानुपयोगित्वं बाधः, तस्यैव विशेषणान्तररूपेण बोधः इति इयमुपादानलक्षणा इति सूचितम्]।

उदाहरति, कदलीति!—कदली—रम्भाकाण्डः, कदली—अतिशीतेति भावः, करभः—आमणिबन्धात् कनिष्ठाऽन्तो हस्तस्य बाह्यभागः, ("मणिबन्धादाकनिष्टं करस्य करभो वहिः" इत्यमरः) करभः—अतिह्रस्व इति भावः, करिरालकरः,—हस्तिशुण्डादण्डः, करिराजकरः—अतिकर्कश इति भावः, अस्मात् कारणात्, चमूरुः—मृगविशेषः, तस्येव दृशौ यस्यास्तथाभूतायाः, चमूरु (मृग) नयनसदृशनयनायाः, कान्तायाः इति शेषः, इदम ऊरुयुगम,—ऊर्वीः—जानूपरिभागयोः, युगं द्वयं, भुवनत्रितये—त्रिषु लोकेषु, अपि किं पुनरेकस्मिन् द्वयोर्वा भुवनयोरिति भावः, तुलां—सादृश्य, न विभर्त्त। अयं भावः—ऊर्वीः घटादौ सादृश्यं सर्वथा न सम्भवत्येव, यत्र तु कदल्यादौ सादृश्यं सम्भाव्यते, तदतिशैत्यादिनाऽपकृष्टमिति स्पष्टं तस्या ऊर्वीः सादृश्य न कुत्रापि। एवञ्च अत्र व्यतिरेकालङ्कारः। प्रसन्नराघवस्येदं पद्यम्। तोटकं वृत्तम्;—"वद तोटकमब्धिसकारयुतम्"ति तल्लक्षणात्।

ननु कदल्यादिपदानामतिशीताद्यर्थः कुतः प्रतिपद्यते, तस्य केनाप्यसङ्केतितत्वात्, इति चेत्? तत्राह, अत्रेति ।—उदाहृते पद्ये इत्यर्थः, द्वितीय कदल्यादिशब्दाः,—द्वितीयाः—द्वितीयवारं पठिताः, येषामतिशीताद्यर्थाः प्रतिपाद्याः तादृशा इति भावः, ये कदल्यादयः शब्दाः, जाड्यादिः,—जाड्यं—शैल्यं, तदादिः, शैल्यह्रस्वत्वकर्कशत्वरूप इति भावः, यो गुणः, तेन विशिष्टः—विशेषितः, तादृशं, कदल्यादिरूपम् अर्थम्, बोधयन्ति—उपचारात् लक्षयन्ति। यद्यपि शैल्यादिः जलादावेव, तथाऽपि तस्य परम्परया कदल्यादिवृत्तित्वमवगतन्तव्यम्। न च शैत्यादीनामन्यत्रापि सत्त्वात् कथं कदल्यादिव्याप्यत्वम्? इति वाच्यं, शैत्यादिविशेषस्यैवाव विवक्षिततत्वात्। जाड्याद्यतिशयः—शैत्याद्यतिशयः, व्यङ्ग्यः—प्रयोजनमूलायाः लक्षणायाः बोधविषयः। सर्वत्रैव मुख्यार्थस्याभेदः सम्बन्धः। एवञ्च कदल्यतिशीता, करभोऽतिह्रस्वः, करिराजकरः अतिकर्कशः, इति चमूरुदृशः इदमूरुयुगम असदृशमित्याशयः। एवमर्थान्तरसंक्रमितवाच्यध्वनिभेदमभिधाय अत्यन्ततिरस्कृतवाच्यरूपं ध्वनिभेदमाह, तत्रेति ।—यत्र पुनः, शब्द इति शेषः, स्वार्थं—स्वस्मिन् सङ्केतितमर्थमित्यर्थः, सर्वथा परित्यजन्—गौणरूपेणापि अप्रतिपादयन्नित्यर्थः, अर्थान्तरे—मुख्यार्थभिन्ने, परिणमति—लक्षणया, वर्त्तते, तत्र मुख्यार्थस्य, अत्यन्ततिरस्कृतत्वात्—सर्वथा बाध्यत्वात्, अत्यन्ततिरस्कृतवाच्यत्वम्,—अत्यन्तं तिरस्कृतः—अगृहीतसम्पर्कः, वाच्यः—मुख्यार्थो यत्र तस्य भावः तत्त्वम् इत्यर्थः।

## लक्ष्मी

अत्रेदमवगन्तव्यम्—यद्यप्यविवक्षितवाच्ये शब्द एव व्यञ्जकस्तथापि अर्थस्यापि सहकारिता न त्रुटयति, अन्यथा अज्ञातार्थोऽपि शब्दस्तद्व्यञ्जकः स्यात्। विवक्षितान्यपरवाच्ये च शब्दस्यापि सहकारित्वं भवत्येव विशिष्टशब्दाभिधेयतया विना तस्यार्थस्याव्यञ्जकत्वादिति सर्वत्र शब्दार्थयोरुभयोरपि ध्वननं व्यापारः। विशिष्टशब्दार्थश्चाप्यत्र गुणालङ्कारोपस्कृत इति बोध्यम्।

अथोक्तमेव क्रममादाय लक्षणामूलस्याविवक्षितवाच्यस्य भेदद्वयवत्तायां हेतुमुपपादयन् तदन्वयव्यतिरेकानुविधायिनीं काव्यद्वयोपपत्तिञ्च प्रतिपादयन् भेदद्वयोपपादनं करोति—अविवक्षितवाच्यस्येति। अविवक्षितो वाच्यो मुख्यार्थो यत्र तस्य अत एव लक्षणामूलस्येति भावः, ध्वनेरिति शेषः।

अर्थान्तरमिति। वाच्ये मुख्यार्थे अर्थान्तरमवच्छेदकान्तरं संक्रमिते प्रापिते उपादानलक्षणया स्वविशेषार्थतां गमिते इत्यर्थः। अत्यन्तं तिरस्कृत इति। वाच्यार्थस्यावच्छेदकान्तरेणापि अविवक्षणात् अत्यन्तं तिरस्कारः। तथा च अत्यन्तं तिरस्कृते वाच्ये लक्षणलक्षणया सर्वथैव प्रतीत्यविषये च सति अविवक्षितवाच्योऽपि ध्वनिः द्वैविध्यं द्विप्रकारत्वम् ऋच्छति प्रतिपद्यते। काकाक्षिगोलकन्यायेन 'वाच्य' इत्युभयत्र सम्बध्यते। रूपत्वेन पर्यवसितेन सर्वथैव प्रतीतिविषयत्वाभावात् अत्यन्ततिरस्कृतवाच्यो नाम ध्वनिरिति सारार्थो बोध्यः।

कारिकार्थे बोधयितुमाद्यप्रभेदतात्पर्य स्पष्टयति—अविवक्षितवाच्य इति। नामेति प्रसिद्धे। नाम कामेऽ(कोपे) भ्युपगमे विस्मये स्मरणेऽपि च। सम्भाव्यकुत्साप्राकाश्यविकल्पेष्वपि दृश्यते ॥'इति मेदिन्युक्तेः।

अर्थान्तरसंक्रमितवाच्यशब्दस्य व्युत्पत्तिपूर्वकमर्थमाह—यत्रेति। प्रकृतान्वय इति शेषः, अनुपयुज्यमानः केनचित्कारणेन स्वान्वयबोधमुत्पादयितुमशक्नुवन्नित्यर्थः, अर्थान्तरे वाच्यलक्ष्यसाधारणेऽर्थे परिणमति उपादानलक्षणया पर्यवस्यतीत्यर्थः। स्वविशेषरूपे अर्थान्तरे संक्रमितत्वात् उपादानलक्षणया सञ्चारितत्वादित्यर्थः। अर्थान्तरे (स्वस्यैव विशेषरूपे) संक्रमितं वाच्यं यत्र स अर्थान्तरसंक्रमितवाच्यः।

अत्रायमाशयः—यथा 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र वाच्योऽपि काको दध्युपघातकरूपेण लक्ष्योऽर्थस्तथा यत्र यद्रूपेण प्रकृतान्वयानुपयोगी तदितरप्रकारेण स्वयं परिणमन्निव लक्ष्यः सोऽर्थान्तरसंङ्क्रमितवाच्यो ध्वनिरिति। अत्र वागीशास्तु—'स्वयं मुख्यतावच्छेदकरूपेण स्वविशेषरूपे स्वकीयमुख्यतावच्छेदकव्याप्यधर्मे परिणमंति विशेष्यतया भासते अर्थान्तरे संक्रमितत्वाद् विशेष्यतया भासमानत्वात्। एतेन मुख्यार्थस्य मुख्यतावच्छेदकरूपेण प्रकृतान्वयानुपयोगित्वं बाधस्तस्यैव विशेषान्तररूपेण बोध इतीयमुपादानलक्षणा इति सूचितम्' इत्याहुः।

उदाहरति—कदलीकदलीत्यादि। प्रसन्नराघवे काञ्चिद्रमणीं दृष्ट्वा कस्यचिद्रसिकजनस्योक्तिरियम्। कदली रम्भा तरुः कदली अत्यन्तशैत्यविशिष्टो रम्भातरुरेव अतः सा नानुष्णाशीतरूपस्य अस्योरुयुगस्य तुलां बिभर्तीति भावः। करभ ऊर्वाकार 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इति कोषात् पाणिपार्श्वभागः करस्य मणिबन्धदेशात् कनिषठाङ्गुलिपर्यन्तो भाग इत्यर्थः। करभः अत्यन्तह्रस्वस्तादृशभाग एव, एवञ्च स यथासम्भवविस्तृतस्य अस्योरुयुगलस्य तुलां न बिभर्त्तीत्यभिप्रायः। करिराजस्य गजश्रेष्ठस्य करः शुण्डा करिराजकरः अत्यन्तकठिना करिश्रेष्ठशुण्डैव। 'करो वर्षोपले रश्मौ पाणौ प्रत्याशुण्डयोः' इति मेदिनी, अतश्च सोऽपि अतिमृदुलस्य तुलां न बिभर्त्तीत्याशयः। अत एव चमूरोः अजिनयोनिमृगविशेषस्येव दृशौ लोचने यस्यास्तस्या अस्या नायिकाया मृगलोचनाया इति यावत्। इदम् ऊरुयुगलं भुवनत्रितयेऽपि त्रैलोक्ये कस्यापि तुलां सादृश्यं न बिभर्त्त न धारयति। रमण्या ऊरुयुगलस्योपमेयस्य त्रैलोक्येऽपि कदली—करभ—करिराजकरेतराणामुपमानपदार्थानां मध्ये कस्यापि सादृश्याभावात् निरुपमेयमिति भावः। तोटकंछन्दस्तल्लक्षणन्तु—'वदतोटकमब्धिसकारयुतम्' इति।

लक्ष्ये लक्षणं सङ्घटयति—अत्रेत्यादिना। आदिपदेन करभकरिराजपदयोः परिग्रहः। पौनरुक्त्यभिया एकत्रार्थं उक्तयोरुभयोः पदयोः प्रथमेनैव तदर्थबोधोपपत्तौ द्वितीयस्य वैयर्थ्यभीत्या मुख्यार्थबाधं प्रति हेतुरयं प्रतिपादितः। सामान्यकदल्यादिरूपे शीतोष्णादिसाधारणकदलीकरभादिरूपे बाधिता अनुपपन्ना प्रकृतान्वयानुपयोगित्वं गतेत्यर्थः लक्षणायामयं हेतुः। एवञ्चेषु उद्देशेषु द्वितीयकदल्यादिपदानां पौनरुक्त्यात् तदर्थानां विधेयत्वासम्भवात् तानि पदानि जाड्यादिविशिष्टकदल्यादिपराणि। तदेवाह—जाड्यादिगुण विशिष्टकदल्यादिरूपमर्थं बोधयन्तीति। तथाच प्राथमिककदल्यादिपदेभ्यः कदल्याद्यंशप्राप्तौ जाड्यादिवैशिष्ट्यमात्रे द्वितीयकदल्यादिशब्दानां 'श्वेतो धावति' इत्यादाविवोपादानलक्षणा, ततः कदली जाड्या करभोऽशोभनखर्वः करिराजकरः कर्कश इत्यर्थः। तत्र जाड्यं शैत्यम्। न च शैत्यं पयस्येव कथं कदल्यादाविति वाच्यम्, परम्परया कदलीवृत्तित्वाभ्युपगमात्। नच शैत्यादीनामन्यत्रापि सत्त्वात् कथं कदलीत्यादिव्याप्यत्वमिति वाच्यम्, शैत्यादिविशेषस्यैवात्र विवक्षितत्वात्।

अत्रत्यध्वनित्वप्रयोजकं लक्षणायां प्रयोजनमाह—जाड्येति। आदिशब्देन खर्वत्वकठिनत्वयोः परिग्रहः, व्यङ्ग्यो लक्षणप्रयोजनबोधविषयः सर्वत्रैव मुख्यार्थस्याभेदः सम्बन्धः। एवञ्च कदल्यतिशीता करभोऽतिखर्वः करिराजकरोऽतिकर्कशः इति हेतोश्चमूरुदृशः इदमीदृशमूरुयुगं तुलां न बिभर्त्तीत्यर्थः। यत्र तु कदल्यादौ सादृश्यं सम्भाव्यते तदतिशैत्यादि नापकृष्टमिति सुतरां भुवनत्रितये तुलनानास्तीति भावः। अत्रहि व्यतिरेकालङ्कारो व्यङ्ग्यः।

## रुचिरा

अथ निर्दिष्टमेव क्रममाश्रित्य लक्षणामूलस्याविवक्षितवाच्यस्य भेदद्वयवत्तायां कारणं प्रदर्शयंस्तदन्वय-व्यतिरेकानुविधायिनीं काव्यद्वयोपपत्तिं च निदर्शयन्भेदद्वयप्रदर्शनं प्रतिजानीते-**अविवक्षितवाच्यस्य** अविवक्षितो वाच्यी मुख्यार्थो यत्र तस्य, अत एव लक्षणामूलस्येति भावः। ध्वनेरिति शेषः। **भेदौ** प्रकारौ। **आह**-२८४ **अर्थान्तरे** ऽन्योऽर्थ इत्यर्थान्तरं तत्र, अन्यस्मिन्नर्थे इत्यर्थः। अन्यो भिन्नः, सच वाच्यादेव, तथा च वाच्यापेक्षया भिन्नेऽर्थे इति भावः। **सङ्क्रमिते** सङ्क्रमो जातो यस्य तस्मिंस्तथाभूते, प्रविष्ट इत्यर्थः। **अत्यन्तं** सर्वथैवेति भावः। **तिरस्कृते**-त्यक्ते। सतीति शेषः। "चातितिरस्कृते" इत्येव पाठो वा। **वाच्ये** वाच्यार्थे। **अविवक्षितवाच्यः। अपि। ध्वनिः। द्वैविध्यं** द्विविधस्य भाव इति तत्। **ऋच्छति** प्रतिपद्यते। अत्रायम्भावः-ध्वनिस्तावद् द्विविधः, लक्षणामूलो, ऽभिधा-मूलश्च; तत्र लक्षणामूल एवाविवक्षितवाच्यः। तत्त्वे हि बाच्यार्थस्याविवक्षितत्वं प्राधान्येनानभिमतत्वमन्यथाऽनुप-योगित्वं वा सङ्गच्छते। लक्षणा चोपादानाख्या, लक्षणाख्या; च। उपादानमजहत्स्वार्थेति, लक्षणं च जहत्स्वार्थेत्युच्यते। तत्रोपादानेन वाच्यार्थस्य लक्ष्याताऽवच्छेदके उपयोगिन्यर्थे आश्रयरूपेणैव सङ्क्रमितत्वं परिणमितत्वमुपस्थितत्वं वा, लक्षणेन तु न तत्, किन्तु तत्र वाच्यार्थस्य सर्वथैवानुपस्थितत्वं लक्ष्याऽवच्छेदकस्यै-वार्थस्यावस्थानं न च वाच्यार्थस्य योगाऽभिमतः। तदेवं लक्षणाद्वैविध्ये तदन्वव्यतिरेकानुविधायिनो ध्वनेरपि द्वैविध्यं निर्विवादम्। अत्रैतावानेव विशेषः, पूर्वत्राविवक्षितवाच्यत्वं वाच्यार्थानुपयोगित्वात, उत्तरत्रतु स्फुटमेवेति। ध्वनिस्वरूपं च निदर्शितं प्रागिति व्यङ्ग्यस्यास्फुटत्वे सन्दिग्धप्राधान्ये तुल्यप्राधन्येऽसौन्दर्ये काक्वाक्षिप्ते च नितान्तं गूढत्वेऽगूढत्वे चापराङ्गत्वे च न ध्वनिरुपत्वम्। इति बोध्यम्॥ २००॥

तत्र तावत् कारिकाऽर्थं सुगमयितुमाद्यप्रभेदतात्पर्थं विवृणोति **अविवक्षितवाच्यः। नाम** प्रसिद्धः। 'नाम कामे (कोपे) ऽभ्युपगमे विस्मये स्मरणेऽपि च। सम्भाव्यकुंत्साप्राकाश्यविकल्पेष्वपि दृश्यते॥' इति मेदिन्युक्तेः। **ध्वनिः। अर्थान्तरसङ्क्रमितवाच्यः**। तथा-**अत्यन्ततिरस्कृतवाच्यः। इतीत्यस्मात** कारणात्। **द्विविधः। यत्र** यस्मिन् प्रकृतान्वये इति शेषः। **मुख्यः**। मुखे आदौ भव इति सङ्केतितार्थस्यैव प्राथमिकत्वात्तत्र चाभिधाया नियामकत्वादभिधया प्रतिपाद्यमान एव **मुख्यः**, आद्य इति भावः। **अर्थः। स्वयम्**। मुख्यताऽवच्छेदकरूपेणोप-स्थित इत्यर्थः। **अनुपयुज्यमानो** नोपयुज्यमानः। प्रकृतोगितामनुपपद्यमान इति भावः। **स्वविशेषरूपे** स्वस्य विशेषः प्रकारस्तद्रूप इत्यर्थः। **अर्थान्तरे** प्रकारान्तरभूतेऽर्थे इत्यर्थः, येन रूपेण मुख्यार्थः प्रकृतान्वयानुपयोगी तद्भिन्नप्र-कारभूतेऽर्थे इति भावः। **परिणमति** परिणामं गच्छन्निवेति भावः। यत्र मुख्योऽप्यर्थः प्रकारान्तरेण लक्ष्यार्थत्वमुप-पद्यत इति तु समुदायतात्पर्यम्। **तत्र। मुख्यार्थस्य। स्वविशेषरूपार्थन्तरसङ्क्रमितत्वात्। अर्थान्तरसङ्क्रमितवाच्यत्वम्**। अत्रायम्भाः- यथा "काकेभ्यो दधि रक्ष्यता" मित्यत्र वाच्योऽपि काको दध्युपधात-करूपेण लक्ष्योऽर्थ स्तथा यत्र यद्रूषेण प्रकृतान्वयानुपयोगी तदितरप्रकारेण स्वयं परिणमन्निव लक्ष्यः सोऽर्थान्तर-सङ्क्रमितवाच्यो ना ध्वनिः। अत्र च मुख्यार्थस्य साक्षाद्रूपेण प्रकृतानुप योगित्वं बाधः। अस्यैव पुनः प्रकारान्तरेणोपयोग इतीयमुपादानलक्षणेति। अत्र तर्कवागीशाः "यत्रेति। 'प्रकृतान्वये' इति शेषः। स्वय मुख्यताऽवच्छेदकरूपेण स्वविशेषरूपे स्वकीयमुख्य ताऽवच्छेदकरूपेण स्वविशेषरूपे स्वकीयमुख्यताऽवच्छेद-कव्याप्यधर्मे परिण्मति विशेष्यतया भासते अर्थान्तरे सङ्क्रमितत्वाद् विशेष्यतया भासमानत्वात्। एतेन मुख्या-र्थस्य मुख्याताऽवच्छेदकरूपेण प्रकृतान्वयानुयोगित्वं भावस्तस्यैव विशेषणान्तररूपेण बोध इतीयमुपादानलक्षणेति सूचितम्।" इत्याहुः।

उदाहरति-**यथा। कदली** रम्भा नाम वृक्षविशेषो न तु तन्नामामृगविशेषः। तस्योरुसादृश्यासम्भवात्। 'रम्भा वृक्षेऽथ कदली पताकामृगभेदयोः।' इति मेदिनी। 'मणिवन्धादाकनिष्ठं करस्य करभो वहिः।' इत्यमरश्च। **करभः। करिराजकरः**। करिराजस्य गजेन्द्रस्य करों हस्तः शुण्डादण्ड इति यावत्। करः शुण्डादण्डोऽस्यातीति करी गजस्तेषां राजेति करिराजः। 'करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः।' इति मेदिनी। **करिराजकरः**। किन्तु-**चमूरुदृश**श्चमूरुरजिनयोनिर्मृगविशेषस्तस्येव दृशौ यस्यास्तस्याः। मृगनयनाया इति यावत्। 'कदली कन्दली चीनश्चमूरुप्रियकावुभौ। चमूरुश्चेति हरिणा अमी अजिनयोजयः॥' इत्यमरः। **इदम्। ऊरुयुगमूर्वोर्जा-नूपरिभाग्योर्युगं** द्वन्द्वम्। **भुवनत्रितये। अपि**। किं पुनरेकस्मिन् भुवनद्वयोर्वा भुवनयोरिति भावः। **तुलां** सादृश्य-मानयोः। 'गृहाणां दारुबन्धाय पीठकायामपीष्यते। राशौ पलशते भाण्डे' इति विश्वो हेमचन्द्रो मेदिनी च। **न। विभर्ति** दधाति।' इदं पद्यं प्रसन्नराघवस्य। तोटकं चास्य च्छन्दः, तल्लक्षणं तु 'इह (ननु) तोटकमम्बुधिसैः प्रथितम्।' इति॥ १७२॥

अत्रास्मिन्निस्यर्थः। उदाहृते पद्यइति भावः। **द्वितीयकदल्यादिशब्दा** द्वितीया द्वितीयवारं पठिताः कदल्या-दिशब्दा इत्यर्थः। **पौनरुक्त्यभिया** पुनरुक्तत्व दोषभयेनोपरारात् पुनरुक्तत्वाभिधेयेन दोषेण दूषिता न स्यामेति भयेनेवेति भावः। **सामान्यकदल्यादिरूपे** सामान्यः स्वभावसिद्धोऽसौ कदल्यादिरूप इति तस्मिन्। **मुख्यार्थे। बाधिताः** प्रकृतान्वयानुयोगित्वं गता इत्यर्थः। **जाड्यादिगुणविशिष्टकदल्यादिरूपं** जाड्यादिगुणैः शीतलत्वह्रस्व-त्वरूपैर्गुणैर्विशिष्टाः कदल्यादयस्तद्रूपम्। **अर्थम्। बोधयन्ति। च** तथा। **जाड्याद्यतिशयः**। शीतलत्वाद्यति-शयः। व्यङ्ग्यो व्यञ्जनयाऽवगम्य इत्यर्थः। तथोक्तं तर्कवागीशैः। जाड्यं शैत्यम्। यद्यपि शैत्यं पयस्येव, तथाऽपि तस्य परम्परया कदलीवृत्तित्वमनगन्तव्यम्। आदिना ह्रस्वत्वकर्कशत्वयोग्रहणम्। न च शैत्यादीनामन्यत्रापि सत्त्वात् कथं कदल्यादिव्याप्यत्वमिति वाच्यम्। शैत्यादिविशेषस्यैवात्र विवक्षितत्वात्। जाड्याद्यतिशयश्चेति। व्ययो लक्षणप्रयोजनबोधविषयः। सर्वत्रैव मुख्यार्थस्याभेदः सम्बन्धः। एवं च-कदल्यतिशीता, करभोऽतिह्रस्वः करिराजकरोऽतिकर्कश इति हेतोश्चमूरुदृश इदमीदृशमूरुयुगं भुवनत्रितयेऽपि तुलां सादृश्यं न बिभर्त्ति इत्यर्थः। घटादौ सर्वथा सादृश्यं न सम्भवति, यत्र कदल्यादौ सादृश्यं सम्भाव्यते तदतिशैत्यादिनाऽपकृष्टत्वमिति सुतरां भुवनत्रितये तुला नास्तीति भावः। अत्र व्यतिरेकालङ्कारो व्यङ्ग्यः।' इति। अत्रायं निर्गलितोऽर्थः-कदली सुतरां भुवनत्रितये तुला नास्तीति भावः। कदल्य तिशीतला, करभो मणिबन्धमारभ्य कनिष्ठापर्यन्तो हस्तस्य बाह्यो भागः करभोऽतिह्रस्वः, करिराजकरः शुण्डादण्डः पुनः करिराजकरोऽतिकर्कश इति चमूरुदृशो मृगनायनाया इदमीदृशं तत्तदपेक्षयाऽप्यतिरां शीतलत्वादिशाल्यूरुयुगं न भुवनत्रयेऽपि तुलां विभर्त्ति इति व्यतिरेकालङ्कारो व्यज्यते। इति। वस्तुतस्तु-या कदली सा कदली नितान्तं जडेति कथमप्येषा श्रिया सादृश्यमधिरोहन्त्यपि ततोऽपकृष्टा, तथा यः करभः सोऽपि करभो नितान्तं ह्रस्वो दुर्विध इति यावत् इत्येषोऽपि तथैव, यः पुनः करिराजकरः सोऽप्येवं करिराजकरो भृशं कर्कश इदं तु चमूरुदृशो मृगनयनाया ऊरुयुगं तेभ्यः सर्वेभ्यो व्यतिरेकीति भुवनत्रयेऽपि नान्यसदृशं किन्तु स्वमिव स्वमिति न केनापि समं तुलां बिभत्त्रि इत्यत्र व्यतिरेकोऽनन्वयश्चालङ्कारौ व्यज्येते इति। अस्मिन् भुवने या कदली रम्भा सा कदली नितान्तं विशिष्टा, अथ यः करभः करे भातीति तथोक्तश्चूडाकारो भुजगेशशिरोमणिः स करभो नितान्तं मध्ये मध्ये निम्नोन्वतत्वशाली, यः पुनरुपरिष्टात् करिराजकर ऐरावतशुण्डादण्डः सोऽपि करिराज-करो नितान्तं कर्कश इति स्फुटं भुवनत्रथेऽपि चमूरुदृश इदमूरुयुगं न तुलां बिभर्ति। इति वा कवेस्तात्पर्य्यम्।

कवेस्तात्पर्यम्।

अथात्यन्ततिरस्कृताच्यपदार्थं विवृणोति-**यत्रे**त्यादिना।

यत्र पुनः स्वार्थं सर्वथा परित्यजन्नर्थान्तरे परिणमति, तत्र मुख्यार्थस्यात्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वम्।

यथा—

**निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते।**

अत्रान्धशब्दो मुख्यार्थे बाधितेऽप्रकाशरूपमर्थं बोधयति। अप्रकाशातिशयश्च व्यङ्ग्यः। अन्धत्वाप्रकाशत्वयोः सामान्यविशेषभावाभावान्नार्थान्तरसंक्रमितवाच्यत्वम्।

---

## विवृतिः

**सर्वथेति।** मुख्यतावच्छेदकस्यैव त्यागो नतु मुख्यस्य, अत्र तूभयोरिति भावः। **अर्थान्तरे** मुख्यार्थभिन्ने परिणमति लक्षणया वर्तते। **अत्यन्ततिरस्कृतत्वात्** सर्वथा बाध्यत्वात्॥ **निःश्वासान्ध इति।** निःश्वासेनान्धोऽप्रकाश आदर्शो दर्पण इवेत्यर्थः। मुख्यार्थे दृष्टिहीनरूपे प्रकाशश्चाकचक्यं तद्रहितः। अत्र चाक्षुषज्ञानाजनकत्वरूपैकधर्मवत्त्वं मुख्यलक्ष्ययोः संबन्धः। **सामान्यविशेषाभावाभावादिति।** मुख्यार्थतावच्छेदकलक्ष्यतावच्छेदकयोः सामान्यविशेषभाव एवार्थान्तरसंक्रमितवाच्यत्वं भवति। यथा—'त्वामस्मि वच्मि'—इत्यादौ। नच 'यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा। अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति॥' इत्यादौ **काव्यप्रकाश**कारदत्तोदाहरणे मित्रत्वादीनां मुख्यतावच्छेदकानां लक्ष्यतावच्छेदकैराश्वस्तत्वनियन्त्रणीयत्वस्नेहपात्रत्वैः सह सामान्यविशेषभावाभावात्कथमुक्तनियम इति वाच्यम्। आश्वस्तत्वादि विशेषस्यैवात्र विवक्षितत्वात्।

## विवृतिपूर्तिः

**निःश्वासेति।** हेमन्तवर्णने पञ्चवट्यां रामस्योक्तिरियम्। एतत्पूर्वार्थस्तु—'रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः।' इति॥

## विज्ञप्रिया

**निःश्वासान्ध** इति निःश्वासेन अन्धः आदर्श इव चन्द्रमा न प्रकाशते न दीप्यते। अत्राऽचेतनस्य आदर्शस्याऽन्धत्वबाधात् लक्ष्यार्थमाह—**अत्रेति**। तथा च निःश्वासेन अप्रकाश आदर्श इवेत्यर्थः।

ननु शक्यतावच्छेदकभिन्नेन अप्रकाशत्वेन रूपेण बोधनात् कथं नेयमर्थान्तरसंक्रमितवाच्यलक्षणा इत्यत आह—**अन्धत्वाऽप्रकाशत्वयोरिति**—शक्यतावच्छेदकं सामान्यं लक्ष्यतावच्छेदकं यदि तद्विशेषो भवेत् तदा एव अर्थान्तरसंक्रमितवाच्यलक्षणा। यथा घटपदस्य नीलघटपदत्वे अत्र तु लक्ष्यतावच्छेदकमप्रकाशत्वमेव सामान्यम्। अन्धत्वमेव तद्विशेष इति अतो न तथा इति भावः। इदं तु प्रायिकमेव न सार्वत्रिकं "रामोऽस्मि सर्वं सहे" इत्यत्र दुःखसहिष्णुत्वरामत्वयोः करभः करभः इत्यत्र शोभाराहित्यकरभत्वयोश्च तथात्वाभावात्। किन्तु अत्रान्धत्वरूपस्वार्थपरित्यागादेव न तथात्वमिति बोध्यम्।

## लोचन

अत्यन्ततिरस्कृत इति कारिकापदार्थं विवृणोति—**यत्र पुनरिति**-अत्र परिणमतीत्युपचारपदप्रयोगः तेन प्रवर्तते इत्यर्थः।

**अन्धत्वेति**—अयमाशयः, न ह्यत्रार्थस्याप्रकाशत्वं विशेषः, किन्तु सामान्यं ततश्च सामान्ये सर्वविषयाणामन्तर्भावात् विशेष एवार्थान्तरं भवितुमर्हतीति, न पुनर्विशेषस्य सामान्यमिति।

## कुसुमप्रतिमा

निश्वासेति। निश्वासेन निश्वासवाष्पातेन अन्धः अप्रकाश आविलीभूत इत्यर्थः, आदर्शो दर्पण इव चन्द्रमाः कुज्झटिकायां चन्द्रो न प्रकाशते।

उदाहृते लक्षणं योजयितुमाह अत्रेति। बाधित इति। अन्धत्वं नाम दृष्टिशक्तिराहित्यम्; तस्य तु दर्पणे असम्भवात् प्राप्तस्यैव राहित्यसम्भवादिति भावः। अप्रकाशरूपम् आविलतास्वरूपम्। बोधयति लक्षणलक्षणयेति शेषः। अप्रकाशेत्याद्युक्तेरर्थोऽपि पूर्ववद्बोध्यः।

नन्वत्रापि अन्धशब्दार्थस्य अप्रकाशरूपार्थे संक्रमितत्वात् कथं नार्थान्तरसंक्रमितवाच्यरूपध्वनित्वमित्याह अन्धत्वेति। अन्धत्वस्य दृष्टिराहित्यरूपत्वात् अप्रकाशत्वस्य च आविलत्वरूपत्वात् व्यापकत्वम्याप्यत्वाभावेन अन्धत्वाप्रकाशत्वयोः सामान्यत्वतद्विशेषत्वाभावादित्यर्थः। एतेन सामान्वार्थस्य तद्विशेषार्थपर्यवसायित्वे अर्थान्तरसंक्रमितवाच्यत्वम्, मुख्यार्थस्य सर्वथा परित्यागे तु अत्यन्ततिरस्कृतवाच्यत्वमित्यन्योर्भेद इति प्रतिपादितम्।

## विमला

निश्वासान्ध इति।—निश्वासेन—मुखनासाभ्यां निर्गतेन वायुना, अन्धः,—नष्टविकाश इति तादृशः, आदर्शः—दर्पणः, ("आदर्शो दर्पणे टीकाप्रतिपुस्तकयोरपि" इति मेदिनी) इव चन्द्रमाः न प्रकाशते। अस्य च पूर्वार्द्धम्—"रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः" इति। एतञ्च वाल्मीकीयस्य रामायणस्य पद्यम्।

अत्रेति—अन्धशब्दः, मुख्यार्थे—चक्षुन्मत्ताविहीनरूपेऽर्थे, बाधितः—स्वरूपेणानुपतिष्ठन्, अप्रकाशरूपं—बिम्बोपादानशक्तिशून्यरूपम्, अर्थं, बोधयति—प्रतिपादयति। ननु तर्हि अप्रकाशशब्द एव कथं नोपात्तः? इत्याह, अप्रकाशेति—अप्रकाशस्यातिशयः इत्यर्थः, च व्यङ्ग्यः—प्रयोजनमूलायाः लक्षणायाः प्रयोजनरूपोऽर्थः, अन्धत्वाप्रकाशत्वयोः,—अश्वत्वं—चक्षुष्मत्ताराहित्यम्, अप्रकाशत्वं—चाकचक्यरहितत्वम्, अनुज्ज्वलत्वमित्यर्थः; (अत्र चाक्षुषज्ञानाऽजनकत्वरूपैकधर्मवत्त्वं मुख्यलक्ष्ययोः सम्बनधः) तयोः, सामान्यविशेषभावाभावात्—व्यापकव्याप्यत्वभावाभावादित्यर्थः। तथाहि—मुख्यार्थताऽवच्छेदकलक्ष्यार्थावच्छेदकयोः सामान्यविशेषभावाभावे एवार्थान्तरसंक्रमितवाच्यत्वं भवति। यथा—"त्वाभस्मि वच्मि—"इत्यादौ। न च "यस्य मित्राणि मित्राणि शत्रवः शचवस्तथा। अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति॥" इत्यादौ काव्यप्रकाशकारदत्तोदाहरणे मित्रत्वादीनां मुख्यताऽवच्छेदकानां लक्ष्यताऽवच्छेदकैराश्वस्तत्वनियन्त्रणीयत्वस्नेहपात्रत्वैः सह सामान्यविशेषभावाभावात् कथमुक्तनियमः? इति वाच्यम्, आश्वस्तत्वादिविशेषस्यैवात्र विवक्षितत्वात्।

## लक्ष्मी

अत्यन्ततिरस्कृतवाच्यं ध्वनिमुदाहर्तुं तदर्थपरिष्कारं दर्शयति—यत्रेति । पुनः शब्दो तुशब्दार्थे । स्वार्थे मुख्यम् । सर्वथा विशेष्यविशेषणेनोभयथापि । अर्थान्तरे मुख्यार्थभिन्ने परिणमति लक्षणलक्षणया वर्त्तते । अत्र परिणमतीत्युपचारप्रयोगस्तेन प्रवर्तते इत्यर्थः । अत्यन्ततिरस्कृतत्वात् सर्वथाबाधत्वात् ।

तदेवोदाहरति—निःश्वासान्ध इति । वाल्मीकीयरामायणे आरण्यकाण्डषोडशसर्गे शूर्पणखाया भाविनः कामोद्दीपनस्य द्योतताय लक्ष्मणमुखेन हेमन्तवर्णनप्रस्तावे पञ्चवट्यां रामस्योक्तिरियम् । एतत्पूर्वार्द्धस्तु—'रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः' इति । निश्वासेन निश्वासवाष्पवातेन अन्ध अप्रकाशः आविलीभूत इति यावत् आदर्शो दर्पण इव चन्द्रमा कुज्झटिकायां चन्द्रो न प्रकाशते न दीप्यते ।

अत्राचेतनस्यादर्शस्यान्धत्वबाधात् लक्ष्यार्थमाह—अत्रेति । अन्धो दृष्टिशक्तिरहितः मुख्यार्थे दृष्टिहीनरूपे । बाधित इति । दृष्टिशक्तिरहितत्वस्याचेतने दर्पणेऽसम्भवत्वेन बाधितत्वं ज्ञेयम् । अप्रकाशरूपम् आविलतास्वरूपम् । बोधयति प्रत्याययति लक्षणलक्षणयेति शेषः । अत्र चाक्षुषज्ञानाजनकत्वरूपैकधर्मवत्वं मुख्यलक्ष्ययोः सम्बन्धो बोध्यः । यद्यपि 'अन्धं स्यात्तिमिरे क्लीबे चक्षुर्हीनेऽभिधेयवत्' इति मेदिनीकारोक्त्या 'अन्धं तमस्यपि'इत्यमरोक्त्या चान्धशब्दः प्रकाशाभावरूपे तिमिरार्थेऽपि निर्दिष्टोऽवगम्यते, तथापि तदर्थकस्य तस्यान्धशब्दस्य केवलनपुंसकलिङ्गत्वस्वीकारान्न प्रकृतान्वयोपयोग्यर्थकत्वम्, अन्धमस्यास्तीत्यन्ध इत्युपपादयितुमशक्यः अवश्यक्लृप्तद्रव्यविशेषस्य तेजसोऽभावरूपेणैव तिमिरस्याङ्गीकाराद् गुणवचनत्वाभावेन 'गुणवचनेभ्यो मतुपो लुगिष्ट 'इति वार्त्तिकाप्रवृत्तेः ।

नन्वत्रापि अन्धशब्दार्थस्य शक्यतावच्छेदकभिन्नेन अप्रकाशत्वेन रूपेण बोधनादर्थान्तरसंक्रमितत्वेन कथं नार्थान्तरसंक्रमितवाच्यरूपध्वनित्वमित्यत आह—अन्धत्वाऽप्रकाशत्वयोरिति । शक्यतावच्छेदकलक्ष्यतावच्छेदकयोः सामान्यविशेषाभाव एवार्थान्तरसंक्रमितवाच्यत्वं भवति यथा घटपदस्य नीलघटपदत्वे यथा वा 'त्वामस्मि वच्मि' इत्यादौ । अत्र तु लक्ष्यतावच्छेदकप्रकाशत्वमेव सामान्यम्, अन्धत्वमेव तद्विशेष इति अतो न तथेति भावः । अत एवाहुः—न ह्यत्रार्थस्याप्रकाशत्वं विशेषः, किन्तु सामान्यं ततश्च सामान्ये सर्वविषयाणामन्तर्भावात् विशेष एवार्थान्तरं भवितुमर्हतीति न पुनर्विशेषस्य सामान्यमिति । न च—

'यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥ इत्यादौ काव्यप्रकाशकारदत्तोदाहरणे मित्रत्वादीनां मुख्यतावच्छेदकानां लक्ष्यतावच्छेदकैराश्वस्तत्वनियन्त्रणीयत्वस्नेहपात्रत्वैः सह सामान्यविशेषभावाभावात् कथमुक्तनियम इति वाच्यम्, आश्वस्तादिविशेषस्यैवात्र विवक्षितत्वात् । इदन्तु प्राथमिकमेव न सार्वत्रिकम्, 'रामोऽस्मि सर्वं सहे' इत्यत्र दुःखसहिष्णुत्वरामत्वयोः 'करभः करभ' इत्यत्र शोभाराहित्यकरभत्वयोश्च तथात्वाभावात्, किन्तु अत्रान्धत्वरूपस्वार्थपरित्यागादेव न तथात्वमिति बोध्यम् । एवञ्च यत्र सामान्यार्थे तद्विशेषार्थस्य प्रतीतिस्तत्र अर्थान्तरसंक्रमितवाच्यत्वम्, मुख्यार्थस्य सर्वथापरित्यागे तु अत्यन्ततिरस्कृतवाच्यत्वमित्यनयोर्भेद इति प्रतिपादितं भवति ।

## रुचिरा

**यत्र** यस्मिन्नित्यर्थः । पद्ये वाक्ये वेति शेषः । **पुनस्त्वि**त्यर्थः । 'स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः ।' इत्यमरः । एतेन सोऽस्त्येवार्थान्तरसङ्क्रमितवाच्य इति निदर्शितं प्राक् । शब्द इति शेषः । **स्वार्थं** स्वस्य (शब्दस्य)

अर्थस्तम्। अर्थः पुनः स्वभावसिद्धो मुख्य एवेति बोध्यम्। **सर्वथा** सर्वप्रकारेण। न तु येन केनैव प्रकारेणेति भावः। **परित्यजन्** समन्तात् त्यजन्। **अर्थान्तरे** अन्योऽर्थ इति तत्र। अन्योऽन्यप्रकारः। तत्त्वं च मुख्यार्थभिन्नत्वे सत्येवेति बोध्यम्। **परिणमति** परिणतो भवति। **तत्र**। यत्र शब्दस्य सर्वथैव न मुख्योऽर्थ उपयुक्तस्तत्रेत्यर्थः। **मुख्यार्थस्य। अत्यन्ततिरस्कृतत्वाद**त्यन्तं तिरस्कृतो बाधितः प्रकृतानुपयोगित्वादिति तत्त्वाद्धेतोरित्यर्थः। **अत्यन्ततिरस्कृतवाच्यत्व**मत्यन्तं सर्वथा तिरस्कृतो वाच्यो मुख्यार्थो यत्र तत्त्वमित्यर्थः।

तदेवोदाहरति-**यथे**त्यादिना।

**यथा** यद्वत्तत् सम्भवति तथा **'निःश्वासान्धः...'** इति।

**'निःश्वासान्धो** निःश्वासेन मुखनासिकाभ्यां निर्गतेन वायुनाऽन्धोदृष्टिहीनसस्तत्रप्रकाशानर्ह इति भावः। **आदर्शो** दर्पणः। इव तद्वत्। **चन्द्रमा** रविसङ्क्रान्तसौभाग्यः अथ तुषारावृतमण्डल इति शेषः। **न प्रकाशते**।' अत्रेदं तावद् बोध्यम्-यदिदं पद्यार्द्धं तद् भगवतो वाल्मीकिमुने रामायणे आरण्यकाण्डे षोडशे सर्गे शूर्पणखाया भाविनो मदनोद्दीपनस्य सूचनाय लक्ष्मणमुखेन हेमन्तवर्णनप्रस्तावे। अस्य च 'रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः।' इति पूर्वार्द्धम्। तथा च रविसङ्क्रान्तसौभाग्यो रविणा सङ्क्रान्त कृताक्रमणं सौभाग्यं सुभगत्वं सुन्दरत्वमिति यावत् यस्य सः। जायमानस्यसूर्यप्रकाशस्य पुरस्तादस्तमितमिव सुभगत्वं यस्य तादश इति। सूर्ये ह्यभ्युदयमाने चन्द्रः कियन्तं समयं दृश्यमानश्चित्रित इवावति ष्टते इति स्वाभाव्यात्। यतेन प्रातः काले गोदावर्यामवगाह्य पुनरावर्त्तमानस्य (लक्ष्मणस्य) उक्तिरिति सङ्गच्छते। तुषारावृतमण्डलस्तुषारेण हिमेनावृतं व्याप्तम्मण्डलं यस्य सः। हेमन्ततौं हि चन्द्रमसो मण्डलं हिमकणिका (नीहार) संवृतं प्रभाते सम्भवतीति सिद्धम्। चन्द्रमाः। निःश्वासान्धः। आदर्शः। इव। न। प्रकाशते इति निष्पन्नोऽर्थः।

अथात्र तात्पर्यं निर्दिशति-**अत्रे**त्यादिना।

**अत्रा**स्मिन्नुदाहृतस्थल इति यावत् **अन्धशब्दः। मुख्यार्थे** मुख्यश्चासावर्थस्तस्मिन्नित्यर्थः। स च दृष्टिहीन इति। **बाधितः**। तस्यार्थस्य प्रकृतानुपयोगित्वेन तिरस्कृतः सन्नित्यर्थः। अन्धशब्दस्य मुख्यार्थश्च 'अन्धयती' त्यन्ध इति व्युत्पत्त्या दृष्ट्युपघातरूपः। 'अन्ध दृष्ट्युपघाते' इत्यस्माच्चौरादिकादच्। अन्धोऽदृगि' त्यमरः। **अप्रकाशरूपम्**। न प्रकाशो यत्रेति तं रूपयति निरूपयतीति यावत् तं तथोक्तम्। यद्यपि 'अन्धंतमस्यपी' त्यमरोक्त्या 'अन्धं स्यात्तिमिरे क्लीबे चक्षुर्हीनेऽभिधेयव' दिति मेदिनीकारोक्त्या चान्धशब्दः प्रकाशाभावरूपे तिमिरार्थेऽपि निर्दिष्टः प्रतिभाति, तथाऽपि तदर्थकस्य तस्यान्धशब्दस्य क्लीबलिङ्गमात्रत्वस्याभ्युपगमात्र प्रकृतान्वयोपयोग्यर्थकत्वम्। न च 'अन्धमस्यास्ती' त्यन्ध इति वाच्यम्। 'गुणवचनेभ्यो लुगिष्ट' इति वात्तिकस्याप्रवृत्तेः। न हि तिमिरं नाम गुणः। द्रव्यविशेषस्य तेजसोऽभावरूपेणैव तस्य स्वीकृतत्वात्। इति दिक्। **अर्थम्। बोधयति** न त्वभिधत्ते। **च** तथा। **अप्रकाशातिशय** आदर्शस्येति शेषः। **व्यङ्ग्यो** व्यञ्जनयाऽवगम्यो ध्वन्य इति यावत्। अस्तीति शेषः। तथा च ध्वन्यत इति निष्पन्नोऽर्थः। अत्र च चाक्षुषज्ञानाजनकत्वरूपैकधर्मवत्त्वं मुख्यलक्ष्ययोः सम्बन्ध इति बोध्यम्।

ननु अत्रापि कथं नार्थान्तरसङ्क्रमितवाच्यत्वम्। मुख्यार्थस्यैव तत्र परिणतत्वादिति चेन्नेत्याह-**अन्धत्वाप्रकाशत्वयोरित्यादिना**।

**अन्धत्वाप्रकाशत्वयोः**। सामान्यविशेषभावाभावात् सामान्यविशेषयोभौवस्तदभावादित्यर्थः। अन्धत्वस्याप्रकाशत्वेन समं न सामान्यविशेषभावः सङ्घटते इत्यस्माद्धेतोरिति भावः। स च व्यापकत्वव्याप्यत्वात्मकः। मुख्यार्थताऽवच्छेदकलक्ष्यार्थताऽवच्छेदकयोः सत्येव व्यापकव्यापयभावेऽर्थान्तरसङ्क्रमितवाच्यत्वमुदेति नान्य-

थेति। यथा—'त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति। आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥' अत्र हि 'अहं कथयामी' ति मुख्यार्थताऽवच्छेदकस्य 'आप्तोऽहमुपदिशामी' ति लक्ष्यार्थावच्छेदकस्य च सामान्य-विशेष (व्यापकव्याप्य) भाव इत्यर्थान्तरसङ्क्रमितवाच्य:। ननु-'यस्य मित्राणि मित्राणि शत्रव: शत्रवस्तथा। अनुकम्प्योऽनुकम्प्यश्चस जात: सच जीवति ॥' इत्यादौ मित्रत्वशत्रुत्वानुकम्प्यत्वादीनां मुख्यार्थताऽवच्छेदकानां लक्ष्यार्थतावच्छेदकैराश्चस्तत्वनियन्त्रणीयत्वस्नेहपात्रत्वरूपै: सह सामान्यविशेष (व्यापकव्याप्य) भावाभावेऽपि कथमर्थान्तग्सङ्क्रमितवाच्यत्वं तर्हीति चेत्? अत्रापि आश्वस्तत्वादिविशेष (व्याप्य) स्यैव विवक्षितत्वात्। अत एव 'कदली कदली' त्युदाहृतेऽपि पद्ये 'कदलीत्वा' दिरूपस्य मुख्यार्थतावच्छेदकस्य शीतलत्वादिप्तपस्य लक्ष्या-र्थताऽवच्छेदक़स्य च सामान्यविशेष (व्यापकव्याप्य) भावसद्भावादर्थान्तरसङ्क्रमितवाच्यत्वम्। **न**। तथेति शेष:।. **अर्थान्तरसङ्क्रमितवाच्यत्वम्**। किन्तु अत्यन्ततिरस्कृतवाच्यत्वमेवेति भाव:।

यथा—

**भम धम्मिअ वीसत्थो, सो सुणओ अज्ज मारिओ देण।**

**गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण॥**

अत्र 'भ्रम धार्मिक—' इत्यतो भ्रमणस्य विधिः प्रकृतेऽनुपयुज्यमानतया भ्रमणनिषेधे पर्यवस्यतीति विपरीतलक्षणाशङ्का न कार्या। यत्र खलु विधिनिषेधावुत्पत्स्यमानावेव निषेधविध्योः पर्यवस्यतस्तत्रैव तदवसरः। यत्र पुनः प्रकरणादिपर्यालोचनेन विधिनिषेधयोर्निषेधविधी अवगम्येते तत्र ध्वनित्वमेव।

तदुक्तम्—

**'क्वचिद्बाध्यतया ख्यातिः क्वचित्ख्यातस्य बाधनम्।**

**पूर्वत्र लक्षणैव स्यादुत्तरत्राभिधैव तु॥'**

अत्राद्ये मुख्यार्थस्यार्थान्तरे संक्रमणं प्रवेशः, न तु तिरोभावः। अत एवात्राजहत्स्वार्था लक्षणा। द्वितीये तु स्वार्थस्यात्यन्तं तिरस्कृतत्वाज्जहत्स्वार्था।

---

## विवृतिः

ननु 'भम धम्मिअ—' इत्यादौ विपरीतलक्षणासंत्त्वेनात्यन्ततिरस्कृतवाच्यध्वनेरिदमुदाहरणं भवितुमर्हतीति विप्रतिपद्यमानं प्रत्याह—**भम धम्मिअ इति**। 'भ्रम धार्मिक विश्वस्तः स श्वाद्य मारितस्तेन। गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेन॥' इति संस्कृतम्। आश्रमस्थायाः कुलटाया गोदावरीकुञ्जरूपे संकेतस्थाने प्रत्यहं पुष्पावचयेन कृतसंकेतभङ्गं स्वप्रेरितकुक्कुरोपद्रवेणाप्यनिवृत्तं धार्मिकं प्रति तस्या एव दिनान्तरे उक्तिरियम्। गोदा गोदावरी। यो दिनान्तरे त्वामुद्वेजयति स श्वा गोदावरीतीरनिकुञ्जवासिना दृप्तसिंहेन मारित इत्यन्वयः **प्रकृते** तात्पर्यविषयीभूतस्वैरविहारे। **उत्पत्स्यमानौ** उत्पत्स्यमानावन्वयबोधौ। अन्वयबोधात्प्रागित्यर्थः। **तदवसरो** विपरीतलक्षणावसरः। एवं चात्र लक्षणामूलध्वनेरवसरो नास्तीत्यर्थः। **ध्वनित्वमभिधामूलध्वनित्वम्॥ बाध्यतया** विपरीतार्थपर्यवसन्नतया ख्यातिरन्वयबोधः। ख्यातस्यान्वयबोधविषयीभूतस्य बाधनं बाधोदयाद्विपरीतार्थपर्यवसानम्। **लक्षणा** लक्षणामूलो ध्वनिः। **अभिधा** अभिधामूलो ध्वनिः।

**अत्र** लक्षणामूलध्वनौ। आद्येऽर्थान्तरसंक्रमितवाच्ये। **द्वितीये**ऽत्यन्ततिरस्कृतवाच्ये जहत्स्वार्था लक्षणेत्यनुषज्यते॥

## विवृतिपूर्तिः

अत्र दारुणतरानितरान् दक्षप्रभृतीन् प्रसिद्धतद्व्यपारानपास्य यदेतत् करिकलभकुम्भनिर्भेदैकहेवाकिनः केसरिणः कौलेयकवधाभिधानमौचित्यैकनिकेतनस्य कवेस्तत्र चिरं चिन्तयन्तोऽप्यभिप्रायं न विद्मः। नहि दृप्ततया यत्किंचनकारिणोऽन्यस्यापि स्वजातिसमुचितं चरितमपहायाप्रसिद्धमेव किमपि रसभङ्गभीरवः कवयो वर्णयितुमा-

द्रियन्ते, किमुत जगद्विदितव्यापारस्य केसरिणः। अनौचित्यनिबन्धो हहि परं रसभङ्गकारणं कवयो वदन्ति। तस्मात् 'दरिअरिक्खेण' इत्यत्र पाठः श्रेयान्। इत्याचार्य**महिमभट्टः।**

## विज्ञप्रिया

भम धम्मिअ इत्यत्रापि विपरीतलक्षणाभ्रमं केषाञ्चित् निरसयितुमाह—**भमेति।**

**भ्रम धार्मिक विश्वस्तः स श्वाऽद्य मारितस्तेन।**
**गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन॥ इति संस्कृतम्।**

गोदावरी नदी तत्तीरे कुञ्जे कृतसंकेतायाः तत्रैव प्रतिदिनं पुष्पावचयनेन तत्संकेतभञ्जकं स्वपोषितकुक्कुरोपद्रवेणाऽपि अनिवृत्तं धार्मिकं प्रति उक्तिरियम्। स श्वा तव उपद्रावकः कुक्कुरः।

**भ्रमणविधिः प्रकृते अनुपपद्यमानतया** इति—सिंहवत्त्वेन कथिते स्वसंकेतस्थले भ्रमणोपदेशस्य बाधितार्थकत्वात् निवृत्तीच्छया उक्तवाक्यस्य प्रवर्त्तकत्वानुपपत्तेश्च निषेधे पर्यवस्यतीति विपरीतलक्षणयेति शेषः। **उत्पद्यमानावेवेति**—वाक्यार्थबोधोत्पत्तिदशायाम् एव इत्यर्थः। तद्दशायां क्वचित् विधिः निषेधे क्वचित् निषेधो विधौ पर्यवस्यतीत्यर्थः। तत्र तद्दशायां विधेः निषेधे पर्यवसानं यथा—

**औन्निद्रयं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम्।**
**मम मन्दभागिन्याः कृते सखि त्वमपि परिभवति॥**

इत्यत्र नायिकायाः सोल्लुण्ठवाक्ये मम कृते इति विधेः न मम कृते इति लक्षणया पर्यवसानम्। निषेधस्य विधौ पर्यवसानं यथा—"मा पथिक रात्र्यन्ध शय्यायामावयोर्निमङ्क्षसि" इति स्वयं दूतिकाया उक्तौ स्वशय्यायां गमननिषेधस्य स्वशय्यायामागमनविधौ लक्षणया पर्यवसानम्। यत्तु निःशेषच्युतचन्दनमित्यादावपि तदन्तिकगमननिषेधस्य तदन्तिकगमनविधौ लक्षणया पर्यवसानमिति ग्रन्थकृता पूर्वमुक्तं तन्न रुचिरम्, तत्र भ्रम धार्मिक इत्यादाविव प्रथमं वाच्यनिषेधस्यैव बोधात् उत्तरकालमेवाधमत्वोक्तेश्च्युतनिर्मृष्टपदग्रीष्मकालपुलककथनात् तात्पर्यपर्यालोचनया एव तदन्तिकगमनविधेः व्यञ्जनयैव प्रतीयमानत्वात्। अत एव काव्यप्रकाशकृता तत्र तदन्तिकगमनविधेः व्यङ्ग्यत्वमेवोक्तम्।

**तत्र ध्वनित्वमेवेति**—व्यङ्ग्यत्वमेवेत्यर्थः, न तु लक्ष्यत्वमेवेत्यर्थः। ध्वनिकाव्यं तु गमनलक्षणायामपि रमणव्यञ्जनया अविहितमेव। तद्वत् इहापि प्रथमं भ्रमणविधिः शक्तयैव प्रतीयते। पश्चादेव तस्याः कुलटात्वस्य प्रकरणादिना प्रतीतौ भ्रमणनिषेधो व्यञ्जनयैव प्रतीयते, इत्यतोऽत्र विपरीतलक्षणाशङ्का न कार्या इत्यर्थः।

**क्वचित् बाध्यतयेति**—ख्यातिः प्रतीतिः। यथा गङ्गायां घोष इत्यादौ घोषनिवासस्य यथा वा "उपकृतं बहु तत्र किमुच्यते" इत्यपकारिणं प्रत्युक्त्वा उपकारस्य च प्रथममेव बाध्यतया ख्यातिः। **क्वचित् ख्यातस्येति**—प्रथमं प्रतीतस्य इत्यर्थः। यथाऽत्रैव श्लोके, निःशेषेत्यादौ च। उत्तरत्र अभिधैव तु इत्युक्त्वा निषेधविध्योस्तु व्यङ्ग्यत्वमेवेति दर्शितम्।

इत्थमविवक्षितवाच्यध्वनेरर्थान्तरसंक्रमितवाच्यत्वात्यन्ततिरस्कृतवाच्यत्वेन द्वैविध्यमुक्त्वा तदुदाहृतस्य च आद्यस्यार्थान्तरसंक्रमितवाच्यस्य तादृशपरिभाषाया बीजमाह—**अत्राद्ये इति।** अर्थान्तरे। शक्यतावच्छेदकार्थान्तरेऽवच्छेदकान्तरे शक्यतावच्छेदकरूपेण बोधनमित्यर्थः, न तु तिरोभावः नतु अबोधनमित्यर्थः। अत एवेति

स्वार्थं स्वाश्रयशब्दस्य मुख्यार्थमजहती उपस्थापयन्ती अजहत्स्वार्था (राजदन्तादिसमाससिद्धा) नच कदली कंदली-त्यादौ प्रथमकदलीपदेनैव कदल्या उपस्थितौ तत्र लक्ष्यार्थस्य जडताया अभेदान्वयसम्भवे किमर्थं कदल्यंशे लक्षणेति वाच्यम्, लक्ष्यतावच्छेदकजडत्वाश्रयत्वेन तेन रूपेण तदुपस्थापनस्य अनिवार्यत्वात्। **द्वितीये त्विति**— अत्यन्ततिरस्कृतवाच्ये इत्यर्थः। अत्यन्ततिरस्कृतत्वात् केनापि रूपेणाऽबोधितत्वात् जहत्स्वार्था, उक्तरूपं स्वार्थं जहती अनुपस्थापयन्ती।

## लोचन

**उत्पत्स्यमानावेवेति**—अनन्तरमनुपपद्यमानान्वयसिद्ध्यर्थमिति शेषः। तदवसरस्तस्या विपरीतलक्ष-णाया अवसरः।

विधिनिषेधयोरित्यत्र पूर्वमन्वयानुपपत्त्या पर्यवसितयोरिति पूरणीयम्।

**क्वचिदिति**—अत्रोत्तरम् अभिधैव त्वितिवचनम्। यत्परः शब्दः स शब्दार्थ इति व्यङ्ग्यार्थस्याप्यभिधाने यत्परत्वेन ख्यातस्य बाधनेऽप्यभिधाव्यापारस्वीकारात्। एतत्त्वग्रे निराकरिष्यते।

## कुसुमप्रतिमा

कश्चिद्विप्रतिपत्रं प्रतिबोधयितुं विवादास्पदमुदाहरणमाह मम इति। "भ्रम धार्मिक! विश्वस्तः स श्वा अद्य मारितस्तेन। गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेन॥" इति संस्कृतानुवादः। आवासन्निहितोद्याने परपुरुषेण सह स्वैरविहारसमये प्रतिदिनमेव पुष्पचयनायागच्छन्तं स्वप्रेरितकुर्कुरोत्पातेनाप्यनिवर्त्तमानं क्वचित् ब्राह्मणं प्रति कुलटाया उक्तिरियम्। हे धार्मिक! अद्य विश्वस्तः कुर्कुरीत्पाताभावेन आश्वस्तांवत्तः सन् भम पुण्यचयनाश्च पर्यट। येन हि अद्य गोदावर्या नद्या यः कच्छी अलप्रायदेशस्तव यत् कृत लतादिविहितस्यान तत्र वासिना तेन प्रसिद्धेन दृप्तसिद्धेन स तवोत्पातकारो श्वा कुर्कुरा मारित। एतावतो दिवमान् यावत्तव कुर्कुरोत्पात एवासीत्, अद्य तु साक्षाद्दृप्तः सिंह एवागतः; सुतरामद्यापि तत्र भ्रमणेतव मरणमेव मावीति कथमपि तत्र न भ्रमेत्यभिप्रायः।

अतएवात्र भ्रम इत्यस्य न भ्रम इत्यर्थे पर्यवसानात् लक्षणलक्षणात्मकविपरीतलक्षणया अत्यन्ततिर-स्कृतवाच्यरूपो ध्वनिरिति कश्चित्। तन्मतं निरसितुमाह अत्रेति। प्रकृते कुलटाया अभिप्रेते स्वैरविहारे, अनुपयु-ज्यमानतया अनुपकारितया प्रत्युत प्रतिबन्धकतयेत्यर्थः। विपरीतलक्षणयातन्मूलकात्यन्ततिरस्कृतवाच्यध्वनेरा-शङ्का न कार्येति शिष्यान् प्रत्युपदेशः।

कथं तदाशङ्का न कार्येत्याह यत्रति। यत्र विधिश्रवणममकालमेव निषेधप्रतीतिः, भव वा निषेधश्रवणम-मकालमेव च विधिप्रतीतिरित्यर्थः। तदवसरः विपरीतलक्षणामूलकात्यन्ततिरस्कृतबाधाध्वने सम्भवः। यथा—

**"गच्छ गच्छसि चेत् कान्त! पन्थानः सन्त ते शिवाः।"**

**ममापि जन्म तत्रैव भूयादयत्र गतो भवान्॥**

अत्र गच्छति विधिप्रतीतिसमकालमेव न गच्छेति निषेधप्रतीतेर्विपरीतलक्षणामूलकात्यन्ततिरस्कृतवाच्य-रूपो ध्वनिः। एवं निषेधस्य विधिपर्यवसायित्वे उदाहरणमूह्यम्।

यत्र पुनरपि। विधिश्रवणात्। परं प्रकरणादिपर्यालोचनेन निषेधोऽवगम्यते, निषेधश्रवणाश्च परं तथैव विधिरवगम्यते इत्यर्थः। ध्वनित्वमेव अभिधामूलकवस्तुध्वनित्वमेव, एवञ्च "भम धम्मिअ!" इत्यादौ भमेति

विधिरवगम्यते इत्यर्थः। ध्वनित्वमेव अभिधामूलकवस्तुध्वनित्वमेव, एवञ्च "भम धम्मिअ !" इत्यादौ भ्रमेति विधिश्रवणात् परं प्रकरणादिपर्यालोचनेन न भ्रमेति व्यङ्ग्यार्थप्रतीतेरभिधामूलकवस्तुध्वनिरेव, भ्रमेति वाच्यविध्यर्थस्य न भ्रमेति व्यङ्ग्यार्थनिष्ठत्वात्।

क्वचिदिति। क्वचित् प्रयोगे बाध्यतया शब्दानां श्रवणमात्रमेव अनुपपन्नान्वयतवा ख्यातिः प्रतीतिः; क्वचित् प्रयोगे च ख्यातस्य उपपन्नान्वयतयैव प्राक् प्रतीतस्य, शब्दस्य बाधनं प्रकरणादिपर्यालोचनया पश्चाद्बाधज्ञानम्। तयोर्मध्ये पूर्वत्र शब्दश्रवणसमकालीनान्वयबोधबाधज्ञानस्थले लक्षणैव लक्षणामूलकध्वनिरेव स्यात्, लक्षणामन्तरेकान्वयबोधासम्भवेन लक्षणामूलकस्यङ्गनाप्रतिपाद्यध्वनेरेव युक्तत्वा दिति भावः। उत्तरत्र उपपन्नान्वयबोधपरकालीनबाधज्ञानस्थले तु अभिधैव अभिधामूलकध्वनिरेव, अभिधयैवान्वयबोधसम्भवे लक्षणावयस्यान्वायत्वेन अभिधामूलकव्यञ्जनाप्रतिपाद्यध्वनेरेवौचित्यादित्वाशवः। एवञ्च प्राचीनमतेऽपि "गच्छ गच्छसि चेत कान्तः !" इत्यादौ सर्वथैव प्रियतमविच्छेदमलहिणोर्नायिकायान्तद्वियोगघटकगमनानुमतेरत्यन्तसम्भवेन गच्छेतिश्रवणसमकालमेव बाधज्ञानाद्विपरीतलक्षणया न गच्छेति प्रतीत्या लक्षणामूलकव्यञ्जनाप्रतिपाद्यत्यन्ततिरस्कृतकवाच्यडवो ध्वनिरेव। एव एव आक्षेपनानालङ्कारी वक्ष्यते। भम धम्मिअ!" इत्यादौ तु भ्रमेतिश्रवणकालीनबाधज्ञानाभावात् तद्रुनचे स्वकीयस्वैरविहारव्याधात इति प्रकृतपर्यालोचनयैव परं बाधज्ञानोदयात् भ्रमेतिवाच्यभ्रमणविधिरूपार्थस्य भ्रमेति भ्रमणनिषेधरूपव्यङ्ग्यार्थपरत्वेन विवक्षितान्वयपरवाच्येति व्युत्पत्तेरपि सङ्गतेरभिधामूलध्वनित्वमेवोचितमिति सर्वं समञ्जसम्।

नन्वनयोर्लक्षणामूलध्वयोः कुत्र कीदृशी लक्षणेत्याह अत्रेति। अत्र अनयोर्लक्षणामूलध्वन्योर्मध्य, आद्ये अर्थान्तरसंक्रमितवाच्याकारे। मुख्यार्थस्य कदली कदली" इत्यादौ द्वितीयकदल्यादिशब्दानां भामान्वकदल्यादिरूपवाच्यार्थस्य, अर्थान्तरे शैत्यादिगुणविशिष्टकदल्यादिरूपे। द्वितीये अत्यन्ततिरस्कृतवाच्य प्रकारे। स्वार्थस्य "निश्वासान्ध" इत्यादौ दृष्टिशक्तिराहित्यरूपान्धशब्दावाच्यार्थस्य।

## विमला

ननु "भम धम्मिअ"—इत्यादौ विपरीतलक्षणाऽसत्त्वे नात्यन्ततिरस्कृतवाच्यध्वनेरिदमुदाहरण भवितुमर्हीति इति विप्रतिपद्यमानं प्रत्याह,—भम इति।—["भ्रम धार्मिक ! विश्वस्तः स श्वाऽद्य मारितस्तेन। गोदावरीकच्छकुञ्जवासिनादृप्तसिंहेन" ॥ इति संस्कृतम्]। आश्रमवर्त्तिन्याः कस्याश्चित् व्यभिचारिण्या गोदावरीकुञ्जरूपे सङ्केतस्थाने प्रत्यहं पुष्पचयनेन क्रियमाणे सङ्केतभङ्गे स्वमनोरथभङ्गकारिणीस्वप्रेरितकुक्कुरोपद्रवेण अपि अनिवृत्तं कमपि धार्मिकं प्रति तस्या एव दिनान्तरे उक्तिरियम्। हे धार्मिक ! विश्वस्तः—निःशङ्कः सन्, भ्रम—पुष्पचयनार्थं पर्य्यट, अद्य सश्वा—कुक्कुरः, यस्त्वां प्रति प्रत्यहमुपद्रवतीति भावः, गोदवर्याः कच्छः—तीरं, ("परिधानाञ्चले कच्छी जलप्रान्ते त्रिलिङ्के" इत्यमरः) तत्र यः कुञ्जः—लताऽऽदिपिहितं स्थानं, तत्र वासिना, तेन—प्रसिद्धेन, दृप्तसिंहेन—प्रचण्डकेशरिणा, मारितः—निहतः। गाथासप्तशत्याः पद्यमिदम्। अत्र आर्याऽपरपर्याया गाथा नाम छन्दः।

अत्रेति।—धार्मिक भ्रम, इत्यतः—इत्यनेन कथनेन, भ्रमणस्य—पर्यटनस्य, विधिः—विधानं, तदर्थाभ्यनुज्ञानमित्यर्थः, प्रकृते—कुलटायाः तात्पर्यविषयीभूते स्वैरविहारे इत्यर्थः, न उपयुज्यत इति, तत्तया—तद्रूपेण हेतुना, भ्रमणनिषेधे भ्रमणं न कार्यमित्यभिधाने, पर्यवस्यति—परिणमति, इति—अस्मात् हेतोः, विपरीत लक्षणाऽऽशङ्का,—विपरीता—विरुद्धार्थप्रतिपादिका, या लक्षणा तस्याः आशङ्का—सम्भावनं, न कार्या। ननु तर्हि कस्तस्या विषयः ? इत्याशङ्क्याह, यत्रेति।—यत्र—यस्मिन् वाक्ये, खलु उत्पद्यमानौ—उत्पत्तिं गच्छन्तौ, एव

विधिनिषेधौ निषेधविध्योः पर्यवस्यतः—परिणमतः, विधिवाक्यं श्रूयमाणमेव निषेधं, निषेधवाक्यं श्रूयमाणमेव पुनः विधिं बोधयतीत्यर्थः, ["उत्पद्यमानौ" इत्यत्र "उत्पत्स्यमानौ" इति पाठे—अन्वयबोधात्प्राक् उत्पख्यमानान्वयबोधौ इत्यर्थः] तत्रैव—तथाविधे एव स्थले इत्यर्थः, तद्वसरः—विपरीतलक्षणायाः अवसरः । यत्र—"मम धार्मिक" इत्यादौ पुनः, प्रकरणादीनां पर्यालोचनेन विधौ निषेधे च क्रमात् निषेधो विधिश्च अवगम्येते—प्रतीयेते, तत्र, ध्वनित्वम्—अभिधामूलध्वनित्वमित्यर्थः, एवं चात्र लक्षणामूलध्वनेरवसरो नास्त्येवेति भावः ।

क्वचिदिति ।—क्वचित् बाध्यतया—अनुपपन्नतया, विपरीतार्थे पर्यवसन्नतया इत्यर्थः, ख्यातिः—आपातमात्रेण अन्वयबोधः, क्वचित् ख्यातस्य—उपपन्नतया प्रतीतस्य, अन्वयबोधविषयीभूतस्येति यावत्, बाधनं—बाधोदयादि्वपरीतार्थपर्यवसानमित्यर्थः, पूर्वत्र—यत्र बाध्यतया ख्यातिस्तत्र, लक्षमा—लक्षणमूली ध्वनिः, एव, उत्तरत्र—ख्यातस्य वाधनस्थले इत्यर्थः, अभिधैव—अभिधामूलध्वनिरेव इत्यर्थः, स्यात् ।

अत्रेति—अत्र—अनयोर्मध्ये, आद्ये—अर्थान्तरसंक्रमितवाच्ये लक्षणामूलध्वनौ इति यावत्, द्वितीये—अत्यन्ततिरस्कृतवाच्ये, जहत्स्वार्था, लक्षणेत्यनुषज्यते ।

## लक्ष्मी

ननु 'भम धम्मिअ' इत्यादौ विपरीतलक्षणासत्त्वेन तन्मूलकात्यन्ततिरस्कृतवाच्यध्वनेरिदमुदाहरणं भवितुमर्हतीति सन्दिहानं प्रत्याह—भम धम्मिअ इति ।

**'भ्रम धार्मिक ! विश्वस्तः स श्वाऽद्य मारितस्तेन ।**

**गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन ॥ इति संस्कृतम् ।**

हालककविकृतगाथासप्तसत्यां द्वितीये शतके गोदावरीनदीतत्तीरे कुञ्जे कृतसङ्केतायाः कुलटायाः तत्रैव प्रतिदिनपुष्पावचयनेन तत् संकेतभञ्जकं स्वपोषितकुक्कुरोपद्रवेणापि अनिवृत्तं धार्मिकं प्रति तस्या एव दिनान्तरे उक्तिरियम् । हे धार्मिक ! धर्मं चरतीति धार्मिकः 'धर्मपथ्यर्थन्यायादनपेते' इति ठक् तत्संबुद्धाविदम्, अद्य विश्वस्तः कुर्कुरोत्पाताभावेन आश्वस्तहृदयः सन् भ्रम पुष्पावचयनाय पर्यट । येन गोदावर्या नद्या यः कच्छो जलप्रायदेशस्तटस्तत्र यत्कुञ्जं लतावृतस्थानं तत्र वासिना 'कच्छो द्रुभेदे नौकाऽङ्गेऽनूपप्राये तटेऽपि च' इति हैमः । निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः । तेन विख्यातेन दृप्तसिंहेन यो दिनान्तरे त्वामुद्वेजयति स श्वा तव उपद्रावकः कुक्कुर इत्यर्थः, मारितः । एतावद्दिनपर्यन्तं तव कुर्कुरोपद्रव एवासीत्, अद्य तु साक्षाद् दृप्तः सिंह एवोपस्थितः, एवं स्थितौ यद्यद्यापि तत्र भ्रमणं करिष्यसि तदा मरणमेव भावीति कथमपि तत्र मा भ्रमेत्याशयः । अत्र जघनविपुलाच्छन्दस्तल्लक्षणन्तु—

**'संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः ।**

**यस्या (आर्याया) स्तां पिङ्गलनागो विपुलामिति समाख्याति ॥' इति ।**

उक्तोदाहरणे हि 'भ्रम' इत्यस्य 'मा भ्रम' इत्यर्थे तात्पर्यात् लक्षणलक्षणात्मकविपरीतलक्षणया अत्यन्ततिरस्कृतवाच्यरूपो ध्वनिरित्याशङ्कितुराशयस्तं दूषयितुमाह—अत्रेति । भ्रमणस्य विधिः प्रकृते अनुपयुज्यमानतया इति—सिंहवत्वेन कथिते तात्पर्यविषयीभूतस्वैरविहारेस्वसंकेतस्थले भ्रमणोपदेशस्य बाधितार्थत्वात् तन्निवृत्तीच्छया उक्तवाक्यस्य प्रवर्त्तकत्वानुपपत्तेश्च निषेधे पर्यवस्यति 'विपरीतलक्षणया' इति शेषः । विपरीतलक्षणायास्तन्मूलकात्यन्ततिरस्कृतवाच्यध्वनेराशङ्का न कार्या इति छात्रान् प्रत्युपदेशः ।

कथं तदाशङ्का न विधेयेत्यत आह—यत्रेति । उत्पद्यमानावेवेति—वाक्यार्थबोधोत्पत्तिदशायामेवेत्यर्थः । तद्दशायां क्वचिद् विधिः निषेधे निषेधौ विधौ पर्यवस्यतीत्यर्थः । तदवसरः तस्य विपरीतलक्षामूलकात्यन्ततिरस्कृतवाच्यध्वनेः अवसरः सम्भवः एवञ्चात्र लक्षणामूलध्वनेरवसरो नास्तीत्यर्थः । अथ वाक्यार्थबोधोत्पत्तिदशायामन्वयबोधात्प्राक् विधेः निषेधपर्यवसानं यथा—

**'गच्छ गच्छसि चेत् कान्त ! पन्थानः सन्तु ते शिवाः ।**

**ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान् ॥'**

अत्र गच्छेति विधिज्ञानकाल एव न गच्छेति निषेधप्रतीतेर्विपरीतलक्षणामूलकात्यन्ततिरस्कृतवाच्यरूपो ध्वनिः । यथा च—

**'औन्निद्रयं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम् ।**

**मम मन्दभागिन्याः कृते सखि ! त्वामपि परिभवति ॥'**

इत्यत्र नायिकायाः सोल्लुण्ठवाक्ये मम कृते इति विधेः न मम कृते इति लक्षणयापर्यवसानम् । एवं निषेधस्य विधौ पर्यवसानं यथा—

**'श्वश्रूरत्र निमज्जति अत्राहं दिवस एव प्रलोकय ।**

**मा पथिक ! रात्र्यन्धक ! शय्यायामावयोर्निमङ्क्ष्यसि' ॥**

अत्र स्वयंदूतिकाया उक्तौ गमननिषेधस्य स्वशय्यायामागमनविधौ लक्षणयापर्यवसानम् ।

यत्र पुनरिति । विधिश्रवणानन्तरं प्रकरणादिपर्यालोचनेन निषेधः प्रतीयते निषेधश्रवणानन्तरञ्च तथैव विधिः प्रतीयते इत्यर्थः । तत्र ध्वनित्वमेव । अभिधामूलकवस्तुव्यङ्ग्यत्वमेवेत्यर्थः, न तु लक्ष्यत्वमेवेत्यर्थः । एवञ्च 'भम धम्मिअ' इत्यादौ प्रथमं भ्रमणविधिः शक्त्यैव प्रतीयते पश्चादेव तस्याः कुलटात्वस्य प्रकरणादिना प्रतीतौ न भ्रमेति भ्रमणनिषेधो व्यञ्जनयैव प्रतीयते इत्यतोऽभिधामूलकवस्तुध्वनिरेव, तस्मात् 'उपकृतं बहु तत्र' इत्यादाविव विपरीतलक्षणामूलकार्थान्तरसंक्रमितवाच्यत्वं नाऽभ्युपेयमिति भावः ।

उक्तार्थे प्राचां सम्मतिमुपपादयति—क्वचिद्बाध्यतयेति । क्वचित् प्रयोगे बाध्यतया विपरीतार्थपर्यवसन्नतया ख्यातिरन्वयबोधः, यथा 'गङ्गायां घोषः' इत्यादौ घोषनिवासस्य यथा वा 'उपकृतं बहु तत्र किमुच्यते' इत्यपकारिणं प्रत्युक्त्वा उपकारस्य च प्रथममेव बोध्यतया ख्यातिः क्वचित् प्रयोगे ख्यातस्य अन्वयबोधविषयीभूतस्य बाधनं बाधोदयाद्विपरीतार्थपर्यवसानम्, यथाऽत्रैव श्लोके निःशेषच्युतचन्दनमित्यादौ च । तयोर्मध्ये पूर्वत्र पूर्वस्मिन् स्थले लक्षणैव लक्षणामूलध्वनिरेव स्यात् तत्र लक्षणां विनान्वयबोधासम्भवेन लक्षणामूलकव्यञ्जनाप्रतिपाद्यध्वनेरेवोचितत्वादिति भावः । उत्तरत्र अभिधैव अभिधामूलध्वनिरेव अभिधयैवान्वयबोधोपपत्तौ लक्षणाश्रयणस्यायुक्तत्वेन अभिधामूलकव्यञ्जनाप्रतिपाद्यध्वनेरेव न्यायत्वादिति भावः । एवञ्चैतेन निषेधविध्योस्तु व्यङ्ग्यत्वमेवेति दर्शितम् । तथा च प्राचीनमतेऽपि 'गच्छ गच्छसि चेत् कान्त !' इत्यादौ सर्वथैव प्रियतमविश्लेषमसहिष्णोर्नायिकायास्तद्वियोगघटकगमनानुमतेरत्यन्तासम्भवेन गच्छेति विधिप्रतीतिसमये एव बाधज्ञानाद्विपरीलक्षणया न गच्छेति निषेधप्रतीत्यालक्षणामूलकव्यञ्जनाप्रतिपाद्यत्यन्तितिरस्कृतवाच्यध्वनिरेव । 'भम धम्मिअ' इत्यादौ तु भ्रमेति विधिश्रवणसमये बाधज्ञानाभावेन तद्भ्रमणे स्वीयस्वच्छन्दविहारबाध इति प्रकरणपर्यालोचनयै-

वानन्तरं बाधज्ञानोत्पत्तेः भ्रमेति वाच्यभ्रमणविधिरूपार्थस्य न भ्रमेति निषेधरूपव्यङ्ग्यार्थपरत्वेन विवक्षितान्यपरवाच्येति व्युत्पत्तेरपि सत्त्वेनाभिधामूलध्वनित्वमेव न्याय्यमिति पूर्वापरग्रन्थसन्दर्भाशयः।

इत्थमविवक्षितवाच्यध्वनेरर्थान्तरसंक्रमितवाच्यत्वात्यन्ततिरस्कृतवाच्यत्वेन द्वैविध्यमुक्त्वा तदुदाहृतस्य च आद्यस्यार्थान्तरसंक्रमितवाच्यस्य तादृशपरिभाषायां बीजमाह—अत्राद्ये इति। अत्र अनयोर्लक्षणामूलध्वन्योर्मध्ये, आद्ये अर्थान्तरसंक्रमितवाच्ये। मुख्यार्थस्य 'कदली कदली' इत्यादौ द्वितीयकदल्यादिपदानां सामान्यकदल्यादिरूपाभिधेयार्थस्य। अर्थान्तरे शैत्यादिगुणविशिष्टकदल्यादिरूपे। तिरोभावः। 'मुख्यार्थस्ये'ति। शेषः। अत एवेति। स्वार्थं स्वाश्रयशब्दस्य मुख्यार्थमजहती उपस्थापयन्ती अजहत्स्वार्था। न च 'कदली कदली'त्यादौ प्रथमकदलीपदेनैव कदल्या उपस्थितौ तत्र लक्ष्यार्थस्य अभेदान्वयसम्भवे किमर्थं कदल्यंशे लक्षणा इति वाच्यम्, लक्ष्यतावच्छेदकजडत्वाश्रयत्वेन तेन रूपेण तदुपस्थापनस्यानिवार्यत्वात्। द्वितीये त्विति। अत्यन्ततिरिस्कृतवाच्य इत्यर्थः। स्वार्थस्य 'निश्वासान्ध' इत्यादौ दृष्टिशक्तिराहित्यरूपान्धपदवाच्यार्थस्य अत्यन्तं तिरस्कृतत्वात् केनाऽपि रूपेणाऽबोधितत्वात्, स्वार्थं जहती अनुपस्थापयन्ती अजहत्स्वार्था।

## रुचिरा

ननु 'भम अम्मिअ..' 'इत्यादौ विपरीतलक्षणया स्यादत्यन्ततिसरस्कृतवाच्यो ध्वनिरित्याशङ्क्याह-**'भम..'** त्यादि।

**'धम्मिअ** धार्मिक! **गोलाणइकच्छकुडङ्गवासिणा** गोदानदीकच्छकुञ्जवासिना गोदानद्या गोदावर्याख्याया नद्याः कच्छस्तटं तत्र कुञ्जः समन्ताल्लताऽऽदिभिराच्छन्नो देशविशेषस्तत्र वासिनेत्यर्थः। 'कच्छो द्रुभेदे नौकाङ्गेऽनूपप्राये तटेऽपि च।' इति हैमः। 'निकुञ्जकुञ्जौ वो क्लीवे लताऽऽदिपिहितोदरे।' इत्यमरः। **देण** तेन प्रसिद्धेनेति यावत्। क्वचित् 'तेणे' ति पाठः। तस्याप्ययमेवार्थः। **दरिअसीहेण** दृप्तसिंहेन। दृप्तेन सिंहेनेत्यर्थः। **सो** स दुष्टः तवोपद्रवकर्त्तृत्वेनानुभवविषयीभूत इति यावत्। **सुणओ** शुनकः कुक्कुर इति यावत्। ।'शुनको भषकः श्वा स्या' दित्यमरः। **अज्ज** अद्य। **मारिओ** मारितो मृत्युं प्रापित इति यावत्। अत इति शेषः। **बीसत्थो** विश्वस्तः। सन्निति शेषः। क्वचित् 'वीसद्धो' इति पाठः। तस्य 'विश्रब्धः' इत्यर्थः। **भम** भ्रम भ्रमणं कुरु। पद्यमिदं हालकविकृताया गाथासप्तशत्या द्वितीये शतके पञ्चसप्ततिसङ्ख्याकम्। अत्र च जघनविपुला छन्दः। तल्लक्षणं च यथा-'संलङ्घ्य गणत्रयमादिमं शकलद्वयोर्भवति पादः। यस्या (आर्यायाः) स्तां पिङ्गलनागो विपुलामिति समाख्याति॥' इति। 'इयं विपुला चपलावन्मुखजघजनभेदभिन्ना भवति, प्रथमेऽर्द्धे मुखचपला, उत्तरार्धे जघनचपले'ति च बोध्यम्॥ १७३॥

अत्र पुनरिदमवगन्तव्यम्-कस्याश्चित् कुलटाया गोदावर्यास्तीरे कुञ्जस्थलमेव सङ्केतस्थलं, तत्र च पवित्राणां पुष्पाणामवचयायावगाहनाय च प्रत्यहं गमनं च कस्यचिद्धार्मिकस्य तदेवं कृतसङ्केतभङ्गं स्वप्रेरितदुष्टकुक्कुरभयेनापि अपिरित्यक्तसञ्चारं तं प्रति तस्या एव दिनान्तरे प्रभाते समये नित्यमिवोद्यन्तमुक्तिरियम्। एवं च यस्त्वां दिनान्तरे स्मोद्वेजयति सोऽद्य शुनकस्तत्रत्येन दृप्तेन मांसभक्षणेन नितान्तं लोलुपेन सिंहेन मारितो मृत्युमुपनीतः। अतो विश्वस्तः सन् यथेष्टं भ्रमेति न विरुध्यतेऽन्वयः। न च ततो विपरीत (विरुद्ध) लक्षणा। यतः स्यादधार्मिकेति बोधावतारः। तत् कथङ्कारम् 'उपकृतं बहु तत्र किमुच्यते' इत्यत्रेवात्रापि भवेद् विपरीतलक्षणासत्त्वेनात्यन्ततिरस्कृतवाच्यत्वम्। इति।

एतत्सर्वं निर्दिशन्नाह-**अत्रे**त्यादि।

**अत्रा**स्मिन्नुदाहृते पद्य इति यावत्। **'भ्रम। धार्मिक'। इत्यत** इत्यस्मात् कथनात्। **भ्रमणस्य। विधिः।** तदुपदेश इति यावत्। **प्रकृते** तात्पर्यविषयीभूतस्वैरविहारे। **अनुपयुज्यमानतया** नोपयुज्यमानता तथा। उपयुज्यत इत्युपयुज्यमानस्तत्ता। भ्रमणनिषेधे भ्रमणस्य निषेधस्तस्मिन्। **पर्यवस्यति** पर्यवसितो भवति। **इति। विपरीतलक्षणाशङ्का** विपरीतलक्षणाया विरुद्धार्थप्रतिपादिकाया लक्षणाया आशङ्का। **न। कार्या**। कुत इत्याह-**यत्र** यस्मिन् स्थले। **खलु** वाक्यालङ्कारः। 'खलु स्याद्वाक्यभूषायां जिज्ञासायां च सान्त्वने। वीप्सामाननिषेधेषु पूरणे पादवाक्ययो' रिति मेदिनीकारोक्तेः। **विधिनिषेधौ। उत्पत्स्यमाना**वुत्पत्स्यमानान्वयबोधाविति यावत्। अन्वयबोधात् प्रागिति शेषः। **एव। निषेधविध्योः। पर्यवस्यतः। तत्र। एव। तदवसर**स्तस्यां विपरीतलक्षणाया अवसरः। **पुनः। यत्र। प्रकरणादिपर्यालोचनेन**। आदिपदेन देशकालाद्युपग्रहः। **विधिनिषेधयोः**। विषये इति शेषः। **निषेधविधी। अवगम्येते** न तु पर्यवस्यत एव। **तत्र ध्वनित्वम्**। अभिधामूलध्वनित्वमित्यर्थः। **एव** निर्बाधम्। अत्रेदमभिहितं भवति- 'उपकृतं बहु तत्र किमुच्यते' इत्यादौ अपकारिणं प्रत्युक्तिरित्यस्त्येव तदवसरः। अत्र तु न तथात्वम् धार्मिकं प्रत्येक तथोक्तिसत्त्वात्। कुलटायाः सङ्केतभङ्गोद्विग्नाया न भ्रमणानुज्ञा युज्यते तत एव तस्यास्तथात्वात्। इत्येवं प्रकरणादिपर्यालोचनमात्रेण भ्रमणविध्यनुज्ञा तन्निषेधरूपेणावगम्यते न तु पर्यवस्यतीत्यस्त्येवात्र ध्वनित्वं विपरीतलक्षणाऽभाव श्चेति। अत्र चाभिनवगुप्तपादाः-'स्वतः सिद्धमपि भ्रमणं श्वभयेनापोहितमिति प्रतिप्रसवात्मको निषेधाभावरूपः, न तु वियोगप्रैषादिरूपोऽत्र विधिः। अतिसर्गप्राप्तकालयोर्ह्ययं लोट्। तत्र भावतदभावयोर्विरोधाद् द्वयोस्तावन्न युगपद् वाच्यता, न क्रमेण। विरम्य व्यापारद्वयाभावत्। 'विशेष्यं नाभिधा गच्छे' दित्यादिनाऽभिधाया विरम्य व्यापारासम्भवाभिधानात्। ननु तात्पर्यश्याक्तिरपर्यवसिता विवक्षया हप्तधार्मिकतदादिपदार्थान्वयरूपमुख्यार्थबाधकवलेन विरोधनिमित्तया विपरीतलक्षणया च वाक्यार्थीभूतनिषेधप्रतीतिमभिहितान्वयदृशा करोतीति शब्दशक्तिमूल एव सोऽर्थः। एवमनेनोक्तमिति हि व्यवहारस्तत्र वाच्यातिरिक्तोऽन्योऽर्थः। इति नैतत्। त्रयो ह्यत्र व्यापाराः। संवेद्यन्ते-पदार्थेषु सामान्यात्मस्वभिधाव्यापारः, समायापेक्षाऽर्थावगमनशक्तिः, अभिधासमयश्च। तावत्येव न विशेषांशे, आनन्त्याद् व्यभिचाराच्च। एकस्य ततो विशेषरूपे वाक्यार्थे तात्पर्यशक्तिः परस्परान्विते। 'सामान्यस्यान्यथासिद्धेर्विशेषं गमयन्ति हि।' इति न्यायात्। तत्र च द्वितीयकक्ष्याया भ्रमेति विध्यतिरिक्तं न किञ्चतित् प्रतीयते, अन्वयमात्रस्यैव प्रतिपन्नत्वात्। नहि 'गङ्गायां घोषः।' 'सिंहो वटुः' इत्यत्र च यथाऽन्वय एव बुभूषन् प्रतिहन्यते योग्यताविरहात्। तथा तव भ्रमणनिषेद्धा स श्वा सिंहेन हतः। तदिदानी भ्रमणनिषेधककारणवैकल्याद्भ्रमणं तवोचितमित्यन्वयस्य न काचित् क्षतिः। अत एव मुख्यार्थबाधा नात्र शङ्क्येति। न विपरीतलक्षणाया अवसरः। भवतु वाऽसौ। तथाऽपि द्वितीयस्थानसङ्क्रान्तत्वाभावादसौ न भवति। तथा हि मुख्यार्थबाधायां लक्षणाप्रकृतिः सा च विरोधप्रतीतिरेव। न चात्र पदार्थानां स्वात्मनि विरोधः। परस्तपरं विरोध इति चेत्, सोऽयं तर्ह्यन्वये विरोधः प्रत्येयः। न च प्रतिपन्नेऽन्वये विरोधप्रतीतिः। विप्रतिपत्तिश्चान्वयस्य नाभिधाशक्त्या तस्याः पदार्थप्रतिपत्त्युपक्षीणायाविरम्यव्यापाराभावादिति तात्पर्यश्याक्त्यैवान्वयप्रतिपत्ति।' इत्याहुः।

उक्तार्थे प्राचां सम्मतिं दर्शयितुमाह-तत्। यदस्माभिरुदीरितमिति शेषः। **उक्तं** पूज्यपादैरिति शेषः। इति। तद्वाक्यं निर्दिशति-**'क्वचि...'** इत्यादिना।

**'क्वचित्। बाध्यतया** विपरीतार्थे पर्यवसन्नतया। **ख्यातिः** कथनम्। अन्वयबोधावतारस्येति शेषः। **क्वचित्। ख्यातस्या**न्वयबोधावतारकथनविषयीभूतस्य। **बाधनं** बाधोबाधोदयाद्विपरीतार्थपर्यवसानमिति

यावत् । **पूर्वत्र** यत्र क्वचिद्बाध्यतया ख्यातिस्तत्रेत्यर्थः । **लक्षणा** तन्मूलध्वनिः । **एव** । **स्यात्** । **तु** पुनः । **उत्तरत्र** यत्र क्वचित् ख्यातस्य बाधनं तत्रेत्यर्थः । **अभिधा** तन्मूलध्वनिः । **एव** । स्यादिति पूर्वेणान्वयः ॥' अत्रेदमभिहितं भवति यत्र विधेर्निषेधरूपे निषेधस्य च विधिरूपे विपरीतार्थे पर्यवसन्नतयाऽन्वयबोधः स लक्षणामूलो ध्वनिः । यत्र पुनरन्वयबोधविषयीभूतस्य बाधे विधेर्निषेधरूपेण निषेधस्य च विधिरूपेणार्थेन पर्यवसानं सोऽभिधामूलो ध्वनिः स्यादिति ।

एवं प्राचां संवादं निर्दिश्य प्रकृतार्थं प्रस्तावयति-**अत्रे**त्यादिना ।

**अत्रा**स्मिन् । **आद्ये** पूर्वमुदाहृते 'कदली कदली-' त्यादिरूपे पद्ये इति यावत् । **मुख्यार्थस्य** कदल्यादि-रूपस्य । **अर्थान्तरे** जाड्यादिरूपे सामान्यकदल्यादिरूपार्थतोभिन्ने । **सङ्क्रमणं** नामेति शेषः । **प्रवेशः** । **तु** पुनः । **तिरोभावः** । मुख्यार्थस्येति शेषः । न । नहि प्रवेशस्तिरोभावमाहेति भावः । किं तत इत्याह-**अतः** । **एव** । **अत्रास्मिन्** निर्दिष्टस्थले । **अजहत्स्वार्था**ेपादानापरपर्याया । **लक्षणा** । **द्वितीये** 'निश्वासान्धः–' इत्युदाहृते । **तु** पुनः । **स्वार्थस्य** दृष्टिहीनादिरूपस्य । **अत्यन्तं** सर्वथैव । **तिरस्कृतत्वाद्** बाधितत्वाद्बाधितस्वरूपत्वादिति यावत् । **जहत्सवार्था** लक्षणलक्षणा । ज्ञेयेति शेषः ।

एवं लक्षणामूलस्य ध्वनेर्निरूपणानन्तरमभिधामूलस्य ध्वनेर्निरूपणमुपक्रमते-२८५ **विवक्षिताभिधेय** इत्यादिना ।

**विवक्षिताभिधेयोऽपि द्विभेदः प्रथमं मतः।**

**असंलक्ष्यक्रमो यत्र व्यङ्ग्यो लक्ष्यक्रमस्तथा॥ ४॥**

विवक्षितान्यपरवाच्योऽपि ध्वनिरसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विविधः।

**तत्राद्यो रसभावादिरेक एवात्र गण्यते।**

**एकोऽपि भेदोऽनन्तत्वात्संख्येयस्तस्य नैव यत्॥ ५॥**

उक्तस्वरूपो भावादिरसंलक्ष्यक्रमव्यङ्ग्यः। अत्र व्यङ्ग्यप्रतीतेर्विभावादिप्रतीतिकारणकत्वात्क्रमोऽवश्यमस्ति किंतूत्पलपत्रशतव्यतिभेदवल्लाघवान्न संलक्ष्यते। एषु रसादिषु च एकस्यापि भेदस्यानन्तत्वात्संख्यातुमशक्यत्वादसंलक्ष्यक्रमंव्यङ्ग्यध्वनिर्नाम काव्यमेकभेदमोवोक्तम्। तथाहि—एकस्यैव 'शृङ्गारस्यैकोऽपि संभोगरूपो भेदः परस्परालिङ्गनाधरपानचुम्बनादिभेदात्प्रत्येकं च विभावादिवैचित्र्यात्संख्यातुमशक्यः, का गणना सर्वेषाम्।'

---

## विवृतिः

**प्रथममिति।** पश्चादस्यापरे भेदा वक्तव्या इति भावः। **यत्र** ध्वनौ। **लक्ष्यक्रम इति।** व्यङ्ग्य इत्यन्वयः॥ **आद्यो**ऽसंलक्ष्यक्रमव्यङ्ग्यः। आदिना रसाभासादिग्रहणम्। एकप्रकारत्वे हेतुमाह—**एकोऽपीति।** अनन्तत्वादतिबहुलत्वात् संख्येयः संख्यातुं शक्यः। **तस्य** रसभावादेर्मेलनेन। भेदनं **व्यतिभेदः।**

**लाघवाच्छी**घ्रोत्पन्नत्वात् 'स' इति शेषः। एषु च रसभावादिषु च। **अनन्तत्वादिति।** संख्यातुमशक्यत्वादित्यत्र हेतुः। उक्तमर्थं विशेषाख्यानेन द्रढयति—**तथाहीति।** विभावादीनां वैचित्र्याद् वैलक्षण्याच्चेत्यन्वयः॥

## विवृतिपूर्तिः

**असंलक्ष्येति।** सम्यङ् न लक्षयितुं शक्यः क्रमः पौर्वापर्यं यस्य तादृशो व्यङ्ग्यो यस्मिन्सः स्फुटे प्रकरणे झटिति प्रतीतेषु विभावानुभावव्यभिचारिषु सहृदयधुरीणेन प्रमात्रा सूक्ष्मेणैव कालेन प्रतीयत इति हेतुहेतुमतोः पौर्वापर्यक्रमस्यासंलक्षणादसंलक्ष्यक्रमो व्यपदिश्यते। यत्र तु विचारवेद्यं प्रकरणम्, उन्नेया वा विभावादयस्तत्र सामग्रीविलम्बाधीनं चमत्कृतेर्मान्थर्यमिति संलक्ष्यक्रमोऽप्येष भवति॥

## विज्ञप्रिया

विवक्षितान्यपरवाच्यस्यापि प्रथमं भेदद्वयमाह—**विवक्षिताभिधेयोपीति**—विवक्षितवाच्य इत्यर्थः। प्रथममिति पश्चात्तूभयोरपि प्रभेदबाहुल्यस्य वक्ष्यमाणत्वात्। तद्द्वैविध्यमाह। **असंलक्ष्येति**—व्यङ्ग्यो यत्र असंलक्ष्यक्रमः अपरिचेयज्ञानोत्पत्तिक्रमः, वाच्यज्ञानान्तरं व्यङ्ग्यज्ञानं जायते इति क्रमो यत्र अपरिचेय इति भावः। रसभावादीनाम्, अत्यन्तास्वाद्यतया शीघ्रबोध्यत्वेन उत्पलपत्रशतभेदनस्येव क्रमापरिचयात्। अपरो वस्त्वलङ्काररूपो व्यङ्ग्यस्तु लक्ष्यक्रमः। तद्ज्ञानोत्पत्तिक्रमस्य लक्षणीयत्वात्।

आद्यः असंलक्ष्यक्रमः। **विभावादिप्रतीतिकारणकत्वादिति**। प्रत्येकं तत् प्रतीतिकारणकत्वादित्यर्थः। "प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते" इत्युक्तत्वात्। "तत् समूहालम्बनप्रतीतिस्तु रस एव" इत्युक्तत्वाच्च। लाघवात् शीघ्रप्रतीतिकत्वात्।

एकोऽपि भेद इत्यादिकं व्याचष्टे—**एषु** चेति। **एकभेदमेवे**तिअसंलक्ष्यक्रमत्वमेकमुपाधिमाश्रित्य इति शेषः। विभावानुभावभेदाभेदगणने अनन्तत्वम्, तद्दर्शयति—**तथा**हीति। विभावादिवैचित्र्यं कन्यामध्याप्रगल्भत्वादिभेदेन उत्तममध्यमाधमत्वभेदेन वैचित्र्यं बोध्यम्।

## लोचन

विवक्षिताभिधेय इत्यस्यार्थः विवक्षितान्यपरवाच्यो ध्वनिरिति। तत्र च रसवति काव्ये झटित्यास्वादपर्यन्तगमनाद्वस्त्वलङ्काररूपव्यङ्ग्ययोरपि प्रतीतिर्न विलम्बिता, नीरसे तु प्रतीतिविलम्बात्तत्साजात्येन संलक्ष्यक्रमव्यङ्ग्यव्यवहारः।

## कुसुमप्रतिमा

लक्षणामूलध्वनिं निरुप्ये दानीमभिधामूलध्वनिं निरूपयितुं प्रक्रमते विवक्षितेति। विवक्षितं व्यङ्ग्यार्थपरतया वक्तुमिष्टम् अभिधेयं वाच्यार्थो यस्य स विवक्षितान्वपरवाच्यानामापि ध्वनिः प्रथमं द्विभेदो द्विविधो मतः। प्रथममित्यनेन परन्तु बहुभेदा अपि दर्शयिष्यन्त इति सूचितम्। यत्र विवक्षिताभिधेये ध्वनौ, न संलक्ष्यः यस्य स विवक्षितान्वपरवाच्यानामापि हवनिः प्रथमं द्वेभेदी द्विविधो मतः। प्रथममित्यनेन परन्तु बहुभेदा सम्यगनुभवनीयः क्रमः कार्यकारणादीनां पौर्वापर्यं यत्र सः। काव्यात्मतया प्रधानानां रसादीनां लक्ष्यत्वादस्य प्रथमं निर्द्देश इति बोध्यम्। लक्ष्योऽनुभवनीयः क्रमः कार्यकारणादीनां पौर्वापर्यं यत्र स तादृशश्च ध्वनिवर्त्तते।

उक्तव्युत्पत्त्या विवक्षिताभिधेय विवक्षितान्धपरवाच्ययोरभेदाह्याचष्टे विवक्षितेति।

तत्रेति। तत्र तयोर्मध्ये आद्यः असंलक्ष्यक्रमो व्यङ्ग्यः रसभावादिः एक एकप्रकार एव। अत्र शास्त्रे गण्यते। आदिपदेन रसाभास-भावाभास सन्धि शबलतानां ग्रहणम्। ननु कथमेकप्रकारमात्रम्, यावन्त एव रसभावादयस्तावन्त एव प्रकारा भवन्तित्याह एकोऽपीति। यद्यस्मात् तस्य रसभावादेर्मध्ये एकशङ्काररमस्य एकोऽपि सम्भोगरूपो भेदः प्रकार अनन्तत्वात् चुम्बनादिभेदेनासीमत्वात् नैव संख्येयः संख्यात् शक्यः। किमत-सर्वेषामिति भावः।

रसभावादेरसंलक्ष्यक्रमरूपव्यङ्ग्यत्वाङ्गीकारे असंलक्ष्यक्रमशब्दस्य व्युत्पत्तेरसङ्गतिमाशङ्क्य समाधत्ते अत्रेति। व्याङ्ग्यानां रसभावादीनां प्रतीतेर्ज्ञनस्य, विभावादीनां प्रतीतिरेय कारणं यस्याः सा तथोक्ता तस्य भावस्तस्मात्। तथा च विभावादिज्ञांनेनैव रसज्ञानं जन्यते। तेन च कारणस्य पूर्ववर्तितायाः कार्यस्य च परवर्त्तिताया नियमात् क्रमोऽवश्यमेवास्तीति तस्य च सर्वैरेव लक्ष्यत्वात् असंलक्ष्यक्रमशब्दस्य व्युत्पत्तेरसङ्गतिरिति भावः। लाघवादतिद्रुतत्वात् न संलक्ष्यते तादृशकार्यकारणयोः क्रमः संलक्षयितुं न शक्यते। तथा च यथा दृढसंयुक्तानां बहुतरोत्पलपत्राणाम् एकसूचिद्वारा विदारणे कस्य पूर्वं कस्य वा परं विदारणं जातमिति विदारयित्रापि न संलक्षयितुं शक्यते यौगपद्यात्, तथा कारणकार्यभूतयोरपि विभावादिप्रतीतिरसभावादिप्रतीत्योर्यौगपद्यप्रायेण जायमानत्वात् सहृदयैरपि पौर्वापर्यं लक्षयितुं न शक्यत इति समाधाने सरलार्थः। ईदृशपौर्वापर्यस्य लक्षयितुमशक्यत्वादेव "यस्मादेव विभावादिसमूहालम्बनात्मकः तस्मान्न कार्यः" इति पूर्वोक्तेन सह न विरोधः।

कारिकोक्तैकभेदत्वं व्यवस्थापयति एषु चेति । रसादिषु मत । एकभेदमेवोक्तमिति । गत्यन्तराभावादिति भावः । एकत्वन्तु काव्यात्मत्वरूपेणेति बाध्यम् ।

उक्तमेवार्थं विवृत्य दर्शयति तथाहीति । विभावादीनां वैचित्र्यात्रानाविधत्वात् ।

संलक्ष्यक्रमध्वने निरूप्य विभजते शब्देति । व्यङ्ग्ये अर्थे अनुस्वानसन्निभे प्रतिशब्द तुल्ये शब्दार्थोभयशक्त्युत्ये सति लक्ष्यक्रमव्यङ्ग्यो नाम ध्वनिर्भवति । तथा च यथा प्रासादादिमध्ये कस्यचित् शब्दस्य उत्पत्त्यन्तरमेव तत्प्रतिशब्दो जायते तथा यत्र शब्दप्रतीत्यनन्तरमेव व्यङ्ग्यार्थप्रतीतिर्जायते स शब्दशक्तिमूलो ध्वनिः; यत्र अर्थप्रतीत्यनन्तरमेव व्यङ्ग्यार्थ प्रतीतिः सः अर्थशक्तिमूलो ध्वनिः; यत्र च शब्दार्थोभयप्रतीत्यन्तरमेव व्यङ्ग्यार्थप्रतीतिः स शब्दार्थोभयशक्तिमूलो ध्वनिरित्यर्थः । अतएव वधेरयुंलक्ष्यक्रमध्वनिस्त्रिविधः कथितः ।

## विमला

विवक्षितेति ।—विवक्षितं—वक्तुमिष्टम, अबाधितस्वरूपमित्यर्थः, अभिधेयं—वाच्यं, यत्र तादृशः ध्वनिरिति शेषः, अपि प्रथमं द्विभेदः—द्विप्रकारः, मतः, पश्चादस्यापरे भेदाः वक्तव्या इति भावः । तावेव निर्दिशति, असंलक्ष्येति ।—यत्र—यस्मिन् ध्वनौ, व्यङ्ग्यः—व्यञ्जनाबोध्योऽर्थः, असंलक्ष्यक्रमः,—न सं—सम्यक्, लक्ष्यः,—लक्षयितुं शक्यः, इत्यसंलक्ष्यः, क्रमः—पौर्वापर्य, यस्य तादृशः, सः असंलक्ष्यक्रमव्यङ्ग्यः इत्यर्थः, तथा यत्र व्यङ्ग्यः लक्ष्यक्रमः, स संलक्ष्यक्रमव्यङ्ग्य इत्यर्थः । व्यक्ते हि तावत् प्रस्तावे झटिति ज्ञातेषु विभावादिषु काव्यार्थभावनास्वतन्त्रेण प्रमात्रा अल्पीयसा समयेन सोऽर्थः ज्ञायते, तत्र हेतुहेतुमद्भावयोः पूर्वपरभावक्रमस्य असंलक्षणाद्धेतोः असंलक्ष्यक्रमव्यङ्ग्यः कथ्यते । यत्र हि विचारबोध्यः प्रस्तावः, विचारणीया वा विभावादयः, तत्र चमत्कारस्य साधनसामग्रीप्रतीक्षणोन्मुखकालायत्ततया मन्थरा प्रवृत्तिः, इति तथाविधस्य चमत्कारस्य संलक्ष्यक्रमव्यङ्ग्य इति व्यपदेशो बोध्यः ।

तत्रेति ।—तत्र—तयोर्मध्ये, आद्यः—असंलक्ष्यक्रमंव्यङ्ग्य इत्यर्थः, रसभावादिः [आदिना रसाभासादिग्रहणम्] एक एव—एकविध एव, अत्र—काव्यप्रभेदगणनाऽवसरे, गण्यते; एकप्रकारत्वे हेतुमाह, एक इति ।—यत् यस्मात्, तस्य—व्यङ्ग्यस्य, एकोऽपि भेदः—विशेषः, अनन्तत्वात्—अतिबाहुल्यात्, नैव, सङ्ख्येयः—सङ्ख्यातुं शक्य इत्यर्थः । एतदीयस्यैकस्य प्रभेदस्यापि अवान्तरभेदप्रभेदावतारानन्ततया बालानां बोधसौकर्याय सर्वभेदप्रभेदमूलभूत एक एवाद्यः प्रभेदोऽभिमत्यते इति भावः ।

अत्र तावद्व्यङग्यस्यासंलक्ष्यक्रमत्वं समर्थयते, अत्रेति ।—व्यङ्ग्यस्य असंलक्ष्यक्रमत्वेनाभिमतस्य व्यङ्ग्यार्थस्य, या प्रतीतिः—स्वरूपेण सत्त्वं, तस्याः, विभावादीनां प्रतीतिः—बोधः, कारणं यस्य तत्त्वात्, विभावादिप्रतीतिमात्रवष्टम्भनत्वादिति यावत्, विभावादिप्रतीतेश्च क्रमेणः (विभावप्रतीत्यनन्तरमनुभावप्रतीतिरनुभावप्रतीत्यनन्तरञ्च सञ्चारिप्रतीतिरित्येवं पौर्वापर्येण) सम्पद्यमानत्वादिति भावः । क्रमः—पौर्वापर्यम्, अवश्यम् अस्ति, किन्तु, उत्पलपत्रशतस्य—कमलपत्रशतकस्य, व्यतिभेदः—झटिति भेदनं, तद्वत् लाघवात्—रसभावादेः अतिशीघ्रजन्यत्वादित्यर्थः, न संलक्ष्यते । अयं भावः—कमलस्य शतपत्राणि यदि कश्चिद्भिन्द्यात्, तर्हि नैकेन कालेन, किन्तु अनेकैः कालैः, अतस्तत्र क्रमोऽवश्यमस्ति, तथाऽपि स क्रमो यथा न लक्ष्यते, तत्रा विभावानुभावसञ्चारिणामानुपूर्व्येण प्रतीयमानत्वेऽपि क्रमस्तत्र प्रतीयते, तेषामति झटिति सम्मिलिततयैव प्रतीतेः, इति विभावादिप्रतीतिरसंलक्ष्यक्रम-

व्यङ्ग्यव्यपदेश्येति स्थितम्। इति। एषु—रसभावादिषु इत्यर्थः, अनन्तत्वात्, अत एव सङ्ख्यातुमशक्यत्वात् इति सारः। उक्तमर्थं विशेषाख्यानेन द्रढ़यति, तथाहीति—विभावादीनां वैचित्र्यात्—वैलक्षण्यात्। स्पष्टमन्यत्।

## लक्ष्मी

अथ लक्षणामूलध्वनिं प्रतिपाद्य विक्षितान्यपरवाच्यध्वनिं प्रतिपादयितुं प्रक्रमते—विवक्षिताऽभिधेयोऽपीति। विवक्षितं व्यङ्ग्यार्थपरतया वक्तुमिष्टम् अभिधेयं मुख्यार्थो यस्य स विवक्षितान्यपरवाच्यमपि ध्वनिः प्रथमं द्विभेदः द्विप्रकारको मतः। प्रथममित्युक्त्या तु पश्चात्तूभयोरपि प्रभेदबाहुल्यं प्रतिपादयिष्यन्त इति दर्शितम्। यत्र विवक्षिताभिधेयध्वनौ। व्यङ्ग्यः सम्यङ् न लक्षयितुं शक्यः क्रमो विभावानुभावाद्यर्थेन सहपौर्वापर्य यत्र सः, वाच्यज्ञानान्तरं व्यङ्ग्यज्ञानं जायत इति क्रमो यत्राज्ञेय इति भावः। रसभावादीनाम् अत्यन्तास्वाद्यतया शीघ्रबोध्यत्वेन उत्पलपत्रशतव्यतिभेदनस्येव क्रमोऽज्ञेयो ज्ञेयः। काव्यात्मतया प्रधानानां रसादीनां लक्ष्यत्वादस्य भेदस्य प्राथमिको निर्द्देशः। लक्षयितुं शक्य अनुभवनीय इति यावत् क्रमो विभावादीनां पौर्यापर्यं यत्र सः, एवञ्च वस्त्वलङ्कार रूपे व्यङ्ग्ये हि तज्ज्ञानोत्पत्तिक्रमस्य लक्षणीयत्वाल्लक्ष्क्रम इति भावः।

विवक्षिताभिधेय इत्यस्यार्थं दर्शयति—विवक्षितान्यपरवाच्य इति। असंलक्ष्यक्रमः संलक्ष्यक्रम इति। अत्र च रसवति काव्ये झटित्यास्वादपर्यन्तगमनाद्रसादीनां प्रतीतिर्न विलम्बिता, नीरसे तु प्रतीतिविलम्बात्तत्साजात्येन संलक्ष्यक्रमव्यवहार इति विभावनीयम्। ननु सर्वत्र भावनिरूपणानन्तरमेवाभावनिरूपणम्भवतीति प्रकृतेऽपि संलक्ष्यक्रमव्यङ्ग्यध्वनेर्निरूपणानन्तरमेवासंलक्ष्यक्रमंव्यङ्ग्यस्यापि निरूपणमुचितमिति कथमसंलक्ष्यक्रमव्यङ्ग्यनिरूपणानन्तरं संलक्ष्यक्रमव्यङ्ग्यनिरूपणं सङ्गच्छते इति चेत्? सत्यम्, असंलक्ष्यक्रमव्यङ्ग्यो ह्येकप्रकार एव तदितरस्तु पञ्चदशेति सूचीकटाहन्यायेनासंलक्ष्यक्रमंव्यङ्ग्यस्यैव प्रथममुपादानमित्येके। अपरे तु समानविषय एवोक्तन्यायप्रवृत्तिमङ्गीकृत्य प्रकृते भावाभावयोः पौर्वापौर्यनियमात् संलक्ष्यक्रमंव्यङ्ग्यध्वनेरेवानन्दत्वात् सहृदयहृदयप्रियत्वाच्च प्राधान्यादित्यतस्ततः प्राङ्निरूपणमेतस्येत्यवधेयम्।

अभिधामूलस्य ध्वनेर्द्वैविध्यं निरूप्य तत्राद्यस्वरूपं सहेतुप्रदर्शनपुरस्सरं निरूपयति—तत्राद्य इति। तत्र तयोर्मध्ये आद्योऽसंलक्ष्यक्रमंव्यङ्ग्यः रसभावादिः एक एकप्रकार एव अत्रालङ्कारशास्त्रे गण्यते। आदिशब्देन रसाभासादिग्रहणम्। ननु यावन्तो रसभावादयः सन्ति तावन्त एव प्रकाराः सन्तु कथं केवलमेकप्रकारमेवोच्यत अत आह—एकोऽपीति। यद् यस्मात् तस्य रसभावादेर्मध्ये केवलं शृङ्गाररसस्य एकोऽपि सम्भोगरूपो भेदः प्रकार अनन्तत्वात् अधरपानचुम्बनादिभेदेनातिबहुलत्वात् नैव संख्येयः संख्यातुं शक्यः, किं पुनर्वक्तव्यं सर्वेषामित्याशयः। अत एव रसभावादिर्नामासंलक्ष्यक्रमंव्यङ्ग्यो ध्वनिरेकप्रभेद एवेति भावः।

रसभावादेरसंलक्ष्यक्रमव्यङ्ग्यत्वाऽभ्युगमे असंलक्ष्यक्रमशब्दस्य व्युत्पत्तिरसङ्गता स्यादिति पूर्वपक्षीकृत्य समाधत्ते—अत्रेति। व्यङ्ग्यानां रसादीनां प्रतीतेर्बोधस्य। विभावादिप्रतीति कारणकत्वादिति। 'प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते' इत्युक्तत्वात् 'तत्समूहालम्बनप्रतीतिस्तु रस एव' इत्युक्तत्वाच्च प्रत्येकं तत्प्रतीतिकारकत्वादित्यर्थः। एवञ्च विभावादिज्ञानैनेव रसोत्पत्तिर्भवति, तथा कार्याव्यवहितपूर्ववर्त्तित्वेन कारणत्वस्यावश्यकत्वात् क्रमोऽवश्यमस्तीति तस्य सर्वैरेव लक्ष्यक्रमत्वात् स्फुटमेवासंलक्ष्यक्रमशब्दस्य व्युत्पत्तिरसङ्गता भवतीति पूर्वपक्षिणामाशयः। समाधत्ते—किन्त्विति। उत्पलपन्नशतानां व्यतिभेदो युगपद्विदारणं तद्वत्। लाघवात् शीघ्रप्रतीतिकत्वात् स इति शेषः। न संलक्ष्यते तादृशकार्यकारणयोः पौर्पापर्यं सम्यग्ज्ञातुं न शक्यते इत्यर्थः। तथा च बहूनामुत्पलपत्राणाम् एकसूचिद्वारा एककालावच्छेदेन कस्य पूर्वं कस्य वा स पश्चाद् भेदनं सञ्जातमिति भेदयित्रापि

न ज्ञातुं शक्यते यौगपद्यात्, तथा कारणकार्यभूतयोरपि विभावादिप्रतीत्योरेककालेनैव जायमानत्वात् सभ्यैः सहृदयैरपि सममवबोद्धुं न शक्यते इति समाधातुराशयः।

एकोऽपि भेद इत्यादिकं व्याचष्टे—एषु चेति। रसादिषु मध्ये। एकभेदमेवेति। एकमेव भेदः प्रकारो यस्य तत्, असंलक्ष्यक्रमत्वमेकमुपाधिमाश्रित्य इति शेषः। उपायान्तराभावादिति भावः। एकत्वं तु काव्यात्मत्वरूपेणेति ज्ञेयम्।

उक्तमेवार्थं विशेषाख्यानेन द्रढयति—तथा हीति। विभावादिवैचित्र्यादिति। कन्यामध्याप्रगल्भात्वादिभेदेन उत्तममध्यमाधमत्वभेदेन वैचित्र्यमत्र बोध्यम्।

## रुचिरा

२८५ **विवक्षिताभिधेयो** विवक्षितोऽभिधेयोवाच्यार्थोऽ'न्यपर' इति शेषो यत्र सः। तदभिधेयोऽभिधामूलो ध्वनिरिति यावत्। **अपि** तत्र तावद् यथा ध्वनिरविवक्षितवाच्योविवक्षितान्यपरवाच्यश्चेति लक्षणाऽभिधामूलत्वेन द्विप्रभेदः, तत्पुनरविवक्षितवाच्याख्यो लक्षणामूलो ध्वनिरर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति यथाऽजहत्स्वार्थमूलत्वेन जहत्स्वार्थमूलत्वेन च द्विप्रभेदस्तथैवाभिधामूलोऽप्ययमित्यर्थः। **प्रथमं** पूर्वम्। **मतः**। पश्चादस्यापरे भेदा वक्तव्या इति भावः। कौ तौ तस्य द्वौ प्रभेदावित्याह-**यत्र** यस्मिन्। ध्वनाविति शेषः। **असंलक्ष्यक्रमो** न सम्यग् लक्ष्यो लक्षयितुं शक्यः क्रमः पौवापर्यं यत्र सः। व्यङ्ग्यो व्यञ्जनया बोध्योऽर्थ इत्यर्थः। स एक इति शेषः। **तथा**। यत्रलक्ष्यक्रमो लक्ष्यो लक्षयितुं शक्य इति यावत् क्रमो यस्य सः। व्यङ्ग इति पूर्वेणान्वयः। स द्वितीयो भेदः। विवक्षितान्यपरवाच्यस्य ध्वनेरसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्वौ प्रभेदाविति भावः॥ २०१॥

एतदेवाह-**विविक्षतान्यपरवाच्य** इत्यादिना।

**विवक्षितान्यपरवाच्यो** विवक्षितो वक्तुमभिलषितोऽन्यपरो व्यङ्ग्यनिष्ठो वाच्यो यत्र सः। अभिधामूल इति शेषः। **ध्वनिः**। **अपि**। **असंलक्ष्यक्रमव्यङ्ग्यो** न सम्यग् लक्ष्यो लशयितुं शक्यः क्रमः पौर्वापर्यं व्यञ्जकेन वाच्येन (विभावाद्यर्थेन समम्) यस्य तादृशो व्यङ्ग्यो यत्र स इत्यर्थः। रसस्तावद्व्यङ्ग्यः, व्यञ्जकश्च तस्य विभावादिरित्यस्ति तयोः पौवापर्यं क्रमः किन्तु न स सग्यग्लक्ष्यते। अनाविले हि प्रस्तावे सपदि प्रतीतिमुपगतेषु विभावानुभावव्यभिचारिषु सहृदयमहनीयेन प्रमात्रा नितान्तं सूक्ष्मेणैव कालेन सोऽनुभाव्यत इति तदानीं चेतस आस्वादावलेहपरवशत्वात्तस्य चोत्पलपत्रशतभेदन्यायेन रसस्य झटिति सूक्ष्मेणैव कालेन प्रतीतत्वान्नसंलक्ष्यक्रमत्वम्। इति भावः। **संलक्ष्यक्रमव्यङ्ग्यः** संलक्ष्यः क्रमो यस्य, स व्यङ्ग्योयत्र सः। **च** पुनः। **इति**। **द्विविधः**। यत्र वाच्य (विभावादि) व्यङ्ग्य (रसादि) यो रतिसूक्ष्मत्वेन न संलक्ष्यं पौर्वापर्यं सोऽसंलक्ष्यक्रमव्यङ्ग्यः। यत्र तु विचारावगम्यः प्रस्तावः, उद्भाव्या वा विभावादयः, तत्र सामग्रीविलम्बाधीनः चमत्कारस्योद्भाव इति संलक्ष्यते क्रमो व्यङ्ग्यस्येति स संलक्ष्यक्रमव्यङ्ग्यः। निर्बाधं चैवं भेदद्वितयम्।

नन्वभावनिरूपणस्य भावनिरूपणपूर्वकत्वात् संलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेर्निरूपणानन्तरसेवासंलक्ष्यक्रमव्यङ्ग्यस्यापि निरूपणौचित्यं सिद्धम्, अथ कथमत्रासंलक्ष्यक्रमव्यङ्ग्यनिरूपणानन्तरं संलक्ष्यक्रमव्यंङ्गनिरूपणं सङ्गच्छेतेति चेत्! सूचीकटाहन्यायात्। असंलक्ष्यक्रमव्यङ्ग्यो ह्येकप्रभेदः, तदितरः पुनः पञ्चदशप्रभेद इत्येके। अपरे त्वाहुः-उभयोः समानकक्षत्व एवायं प्रवर्त्तते न्यायः। प्रकृते पुनर्भावाभावयोः पौर्वापर्यानियमात् संलक्ष्यक्रम-

व्यङ्ग्यस्यैव ध्वनेर्निरूपणौचित्ये प्राप्तेऽपि असंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः रसादिस्वरूपत्वात्तस्य च निरतिशयानन्दत्वात् सहृदयहृदयदयिततत्वाच्च प्राधान्यमित्येव तस्यैतस्य ततः प्राङ्निरूपणमवसेयम् । इति ।

अभिधामूलस्य ध्वनेर्द्वैविध्यमेवमुदीर्य तत्राद्यस्वरूपं सहेतुप्रदर्शनपुरः सरमुदीरयति-२८६ **तत्रे**त्यादिना ।

२८६ **तत्र** संल्लक्ष्यक्रमव्यङ्ग्यसंलक्ष्यक्रमव्यङ्ग्योर्मध्ये इत्यर्थः । **आद्यो** ध्वनिरिति शेषः । **रसभावादिः** । आदिपदेन तदाभासादीनां ग्रहणम् । नामेति शेषः । एक एकप्रभेदः । एव न तु तदधिकप्रभेदोऽपीति भावः । अत्र । साहित्यसंसारे इत्यर्थः । **गण्यते** कीर्त्यते । ननु रसभावादीनामनेकत्वे कथं तदेकत्वमेवेत्याह-**तस्य** रसभावादिरूपस्यैकत्वेनैवाभिमतस्य ध्वनिप्रभेदस्येति यावत् । **एकः** सम्भोगाद्यन्यतम इति शेषः । **अपि** । **भेदः** । **अनन्तत्वादमि**तप्रकार कत्वात् । **यत्** । **न** । **एव** । **सङ्ख्येयः** सङ्ख्यातुं शक्यः । तत एव रसभावादिर्नामासंलक्ष्यक्रमव्यङ्ग्योध्वनिरेकप्रभेद इत्यभिधीयते । इति भावः ॥ २०२ ॥

अथ कारिकाऽर्थमेवमेव विवृण्वन्नाह-**उक्तस्वरूप** इत्यादि ।

**रसभावादिः** । आदिपदं च तदाभासादिग्राहकम् । भावश्च स्थायिव्यभिचारिरूपतया द्विविधः । आदिपदेन वा व्यभिचारिभावग्रहणम् । भावपदेन तु स्थायिभावग्रहणम् रसपदसाहचर्यात् स्थायिभावग्रहणस्यैवोपपत्तेः । क्वचिद् भावादिरित्येव पाठः । तत्र भावपदेन स्थायिभावग्रहणम् । आदिपदेन पुना रसादिग्रहणमवसेयम् । **उक्तस्वरूपो**ऽसंलक्ष्यक्रमो यत्र व्यङ्ग्य इत्युक्त स्वरूपं यस्य सः । **असंलक्ष्यक्रमव्यङ्ग्यस्तदाव्यो** ध्वनिरित्यर्थः । **अत्रा**स्मिन् ध्वनाविति शेषः । **व्यङ्ग्यप्रतीतेः** व्यङ्ग्यो रसादिस्तस्य प्रतीतिस्तस्याः । **विभावादिप्रतीतिकारणकत्वाद्** विभावादिप्रतीतिरेव कारणं यस्य तत्त्वात् । रसादेर्हि व्यङ्ग्यस्य विभावादिव्यञ्जक इत्येतत्प्रतीतिस्तत्प्रतीतेः कारणमित्यूह्यम् । **क्रमः** पौर्वापर्यम् । कार्यं हि कारणपूर्वकम् । कार्या पुना रसादिव्यङ्ग्यप्रतीतिस्तत्कारणभूता च विभावादिप्रतीतिरिति पूर्वं विभावादिप्रतीतिस्तत्पुना रसादिप्रतीतिरिति । **अवश्यं** निश्चितः । **अस्ति** विद्यते । **किन्तु** । **उत्पलपत्रशतव्यतिभेद**वदुत्पलस्य कंमलस्य पत्रणां शतं शतकं तस्य व्यतिभेदो विशेषेणात्यत्यन्तं भेदो भेदनं तद्वत् । **लाघवा**न्नितान्तमेव शीघ्रोत्पन्नत्वादिति भावः । **न** नैव । **संलक्ष्यते** । इत्येव रसभावादिरूपोऽसंलक्ष्यक्रमव्यङ्ग्यो नाम ध्वनिरिति सङ्गच्छते इति बोध्यम् । इत्येवं ध्वनेस्तथाभूतव्यपदेशबीजं निर्दिश्य तदेकत्वहेतुबीजमपि निर्दिशति एषु । रसादिषु रसभावतदाभासादिषु मध्ये । निर्धारणेऽत्र सप्तमी । **च** । **एकस्य** । **अपि** किं पुनः सर्वेषाम् । **भेदस्य** । **अनन्तत्वात्** । **सङ्ख्यातुम्** । **अशक्यत्वात्** । **असंलक्ष्यक्रमव्यङ्ग्यध्वनिः** । **नाम** । **काव्यम्** । **एकभेद**मेको भेदो यस्य तत् । **एव** । **उक्त**मेतेनैव निर्देशेन निर्दिष्टमवसेयमिति । अभिहितमर्थं विशेषाख्यानेन द्रढयति-**तथा हि** यथा हि एकस्यापि तेषां भेदस्यानन्तत्वमिति यावत् । एकस्य । एव । शृङ्गारस्य तदाख्यस्य रसस्य । एकः । अपि । सम्भोगरूपः । शृङ्गारस्य सम्भोगविप्रलम्भरूपद्विप्रभेदत्वात् । **भेदः** । **परस्परालिङ्गनाधरपानचुम्बनादिभेदात्** । **च** पुनः । **प्रत्येकं** परस्परालिङ्गनाद्येकैकम् । **विभावादिवैचित्रयात्** । **सङ्ख्यातुम्** । **अशक्यः** । **का** । पुनारिति शेषः । **सर्वेषां** तत्तत्प्रभेदानाम् । इति ।

**शब्दार्थोभयशक्त्युत्थे व्यङ्ग्येऽनुस्वानसंनिभे ।**
**ध्वनिर्लक्ष्यक्रमव्यङ्ग्यस्त्रिविधः कथितो बुधैः ॥ ६ ॥**

क्रमस्य लक्ष्यत्वादेवानुरणनरूपो यो व्यङ्ग्यस्तस्य शब्दशक्त्युद्भवत्वेन, अर्थशक्त्युद्भवत्वेन शब्दार्थशक्त्युद्भवत्वेन च त्रैविध्यात्संलक्ष्यक्रमव्यङ्ग्यनाम्नो ध्वनेः काव्यस्यापि त्रैविध्यम् ।

---

## विवृतिः

लक्ष्यक्रमव्यङ्ग्यध्वनिमाह—**शब्देति** । शब्दस्यार्थस्य तदुभयस्य च शक्तेरुतिष्ठति आविर्भवति यत्तस्मिन् । **अनुस्वानः** प्रति ध्वनिः ।

तस्य खलु जनकीभूतशब्दोत्तरजायमानत्वरूपक्रामो लक्ष्यते तत्संनिभे तत्तुल्ये व्यङ्ग्ये सतीत्यर्थः । **क्रमस्य** व्यङ्ग्यप्रतीतिपौर्वापर्यस्य **लक्ष्यत्वात्** स्फुटप्रतीयमानत्वात् । अनुरणनरूपः प्रतिध्वनितुल्यः ।

## विवृतिपूर्तिः

**शब्देति** । ननु शब्दशक्त्या यत्रार्थान्तरं प्रकाशते स यदि ध्वनेः प्रकारस्तर्हि श्लेषस्य विषय एवापहृतः स्यादित्यत्राह ध्वनिकारः—'आक्षिप्त एवालंकारः शब्दशक्त्या प्रकाशते । यस्मिनुक्तः शब्देन शब्दसंक्तयुद्भवो हि सः ॥' यस्मादलंकारो न वस्तुमात्रं यस्मिन्काव्ये प्रकाशते स एव शब्दशक्त्युद्भवो ध्वनिः । वस्तुद्वये च शब्दशक्त्या प्रकाश्यमाने श्लेषः । यथा—'येन ध्वस्तमनोभवेन—' (४८९ पृ.) इत्यादौ । नन्वलंकारान्तरप्रतिभायामपि श्लेषव्यपदेशो भवतीति दर्शितं **भट्टोद्भटेन** तत्पुनरपि शब्दशक्तिमूलो ध्वनिर्निरवकाश इत्याशङ्क्य 'आक्षिप्तः' इत्युक्तम् । शब्दशक्त्या साक्षांदलंकारान्तरप्रतिभा यथा—'तस्या विनापि हारेण निसर्गादेव हारिणौ । जनयामासतुः कस्य विस्मयं न पयोधरौ ॥' अत्र शृङ्गारव्यभिचारी विस्मयाख्यो भावः साक्षाद्विरोधालंकारश्च प्रतिभासत इति विरोधच्छायानुग्राहिणः श्लेषस्यायं विषयः । न त्वनुस्वानोपव्यङ्ग्यस्य ध्वनेः यत्र तु सामर्थ्याक्षिप्तं सदलंकारान्तरं शब्दशक्त्या प्रकाशते स सर्व एव ध्वनेर्विषयः । यथा **हर्षचरिते**—'कदाचित्कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः संफुल्लमल्लिकाधवलाट्टहासो महाकालः ।'अत्र ऋतुवर्णनप्रस्तावनियन्त्रिता अभिधाशक्त्यः । अतएव एकमेवार्थमभिधाय कृतकृत्याः । तदन्तरमर्थावगतिः शब्दशक्तिमूलाद् ध्वननव्यापारादेव । तत्र केचिन्मन्यन्ते—यत् एतेषां शब्दानां पूर्वमर्थान्तरेऽभिधान्तरं दृष्टं ततस्तथाविधेष्वर्थान्तरे दृष्टतदभिधाशक्तेरेव प्रतिपत्तिर्नियन्त्रिताभिधाशक्तिकेभ्य एतेभ्यः प्रतिपत्तिर्ध्वननव्यापारादेवेति शब्दशक्तिमूलत्वं व्यङ्ग्यात्मत्वं चेत्यविरुद्धम् । अन्ये तु—साभिधैव द्वितीयार्थसाम्ग्रयं ग्रीष्मस्य भीषणदेवताविशेषसादृश्यात्मकं सहकारित्वेन यतोऽवलम्बते ततो ध्वननव्यापाररूपोच्यते इति । एके तु—शब्दश्लेषे तावद्भेदे सति शब्दार्थश्लेषेऽपि शक्तिभेदाच्छब्दभेद इति दर्शने द्वितीयः शब्दस्तत्रानीयते । स च कदाचिदभिधाव्यापाराद् यथोभयोत्तरदानाय 'श्वेतो धावति—अलम्बुसानां याता' इति प्रश्नोत्तरादौ । वा तत्र शब्दान्तरबलादपि तदर्थान्तरं प्रतिपन्नं प्रतीयमानमूलत्वात्प्रतीयमानमेव युक्तमिति । इतरे तु—संफुल्लमल्लिका एव धवलाट्टहासोऽस्येति व्याख्यानाश्रयणे तदर्थसामर्थ्यं तेन द्वितीयाभिधैव प्रतिप्रसूयते । ततश्च द्वितीयोऽर्थोऽभिधीयत एव न ध्वन्यते । तदनन्तरं तु तस्य द्वितीयार्थश्च प्रतिपन्नस्य प्रथमार्थेन प्राकरणिकेन साकं या रूपणा तावद्भात्येव न चान्यतः शब्दादिति सा ध्वननव्यापारात् ।

तत्राभिधाशक्तेः कस्याश्चिदप्यनाशङ्कनीयत्वात्। तस्यां च द्वितीया शब्दशक्तिर्मूलम्। तया विना तस्या रूपणाया अनुत्थानात्। अत एवालंकारध्वनिरयमिति युक्तम्। इत्यादिस्थलेषु शब्दशक्त्या प्रकाशमाने सत्यप्राकरणिकेऽर्थान्तरे वाक्यस्यासंबद्धार्थाभिधायित्वं मा प्रसाङ्क्षीदित्यप्राकरणिकप्राकरमिकार्थयोरुपमानोपमेयभावः कल्पयितव्यः सामर्थ्यादित्याक्षिप्तोऽयं श्लेषो न शब्दोपारूढ इति भिन्न एव श्लेषादनुस्वानोपमव्यङ्ग्यस्य ध्वनेर्विषय इत्याहुः ॥

## विज्ञप्रिया

लक्ष्यक्रमव्यङ्ग्यध्वनिं विभजति—**शब्दार्थोभयेति**—तत्र अनुस्वानसन्निभ इति यदुक्तं तद् व्याचष्टे—**क्रमलक्ष्यत्वादेवानुरणनरूप** इति। अनुरणनं प्रतिध्वनिः। स हि प्रथमध्वनेरनन्तरं जायते तदुत्पत्तिक्रमश्च लक्ष्यते तत् तुल्यो यो व्यङ्ग्यस्तस्य त्रैविध्यं व्याचष्टे—**तस्य शब्दशक्त्युद्भवत्वेन** इति। शब्दस्य अर्थस्य च शक्तिः सामर्थ्यम्। न तु अभिधारूपा वृत्तिः तया व्यङ्ग्याबोधनात् अर्थस्य तदभावाच्च। तेन सामर्थ्येन उद्भव उत्पन्नविषयता यस्य तादृशव्यङ्ग्यस्येत्यर्थः। तत् त्रैविध्यात् तत्सम्बन्धेन संलक्ष्यक्रमव्यङ्ग्यनाम्नो ध्वनिकाव्यस्य त्रैविध्यमित्यर्थः।

## लोचन

संलक्ष्यक्रमव्यङ्ग्यभेदानाह—**शब्दार्थेति**। अनुस्वानेति कारिकापदस्यार्थं विवृणोति—**अनुरणनमिति**।

अनलङ्करणं वैचित्र्यमात्ररहितम्।

## कुसुमप्रतिमा

क्रमेति। क्रमस्य कारणकार्ययोः पौर्वापर्यम् लक्ष्यत्वादनभवयोग्यत्व देवेति अनुरणनरूपस्यं प्रति देतः शब्दप्रतिशब्दयोरपि क्रमस्य लक्ष्यत्वात्। आनरणरूप प्रतिशब्दतुल्यः।

तत्रेति। तत्र तेषु उक्तेषु त्रिविधेषु संलक्ष्य क्रम व्यङ्ग्येषु मध्ये।

वस्त्विति। व्यङ्ग्यं वस्तुरूपत्वात् अलङ्काररूपत्वाक्ष शब्दशक्त्युद्भवः संलक्ष्यक्रमो ध्वनिर्द्विधा भवति। शब्दशक्तिमूलो वस्तुध्वनिः शब्दशक्तिमूलः अलङ्कारध्वनिश्चेति नाम।

ननु वस्तुशब्दस्य पदार्थमात्रवाचितया अलङ्कारस्यापि तदन्तर्गतत्वात् कथमलङ्कारशब्दस्य पृथगुपादानमित्याह अलङ्कारेत्यादि। सामान्यविशेषन्यायादलङ्कारभिन्नं समस्तमेव वस्तु गृह्यत इत्यर्थः। वस्तुध्वनिमध्ये अलङ्काररूपवस्तुध्वनैव चित्रयविशेषात् प्राधान्यज्ञापनार्थं पृथगुपादानं गोवृषन्यायादित्याशयः। तत्र अलङ्करणमित्यलङ्कारो भावे घञ् तथा च न विद्यते अलङ्कार उपमादिकृतशोभा यस्मिन्निति बहुव्रीहिस्यैवालङ्कारभिन्नमित्यर्थे लभ्यः। तत्पुरुषे त् "नञ्तत्पुरुषस्योत्तरपदवत्" इत्यनेन पुंस्त्वप्रसङ्गात्। तर्कवागीशोऽप्येवम्।

## विमला

लक्ष्यक्रमव्यङ्ग्यध्वनिमाह, शब्देति।—अनुस्वानः—अनुरणनं, इतिध्वनिरिति यावत्, (तस्य खलु जनकीभूतशब्दोत्तरजायमानत्वरूपक्रमो लक्ष्यते। तत्सन्निभे—तदनुरूपे, व्यङ्ग्ये, शब्दार्थोभयशक्त्युत्थे,—शब्दस्यार्थस्य तदुभयस्य च शक्तेरुत्तिष्ठति—आविर्भवति, यत् तस्मिन्, शब्दशक्त्या उत्थिते, अर्थशक्त्या उत्थिते,

शब्दार्थोभयशक्त्या च उत्थिते सति इत्यर्थः, लक्ष्यक्रमव्यङ्ग्यः ध्वनिः, बुधैः—विद्वद्भिः, त्रिविधः— शब्दशक्त्युत्थः अर्थशक्त्यत्थः शब्दार्थोभयशक्त्युत्थश्चेति त्रिप्रकारः, कथितः । (इदमत्रावधेयम्;—ननु यदि शब्दनिष्ठया शक्त्या प्रतीयमानो यत्रेतरोऽर्तो ध्वनेः विशेषोऽभि मन्येत, तर्हि शब्दनिष्ठया शक्त्याऽर्थान्तररूपः श्लेषो विलुप्तस्वरूप एव भवेत्, ति चेत् एषा व्यवस्था,—यत्र शब्दनिष्ठया शक्त्या साक्षादनुत्यापितः, किन्तु आक्षिप्तः सन् प्रतीयेत, स सर्वो ध्वनेर्विषयः, यस्तु तया साक्षादृत्थापितात्मा, स सर्वः श्लेषस्य विषय इति । तथाऽऽहुर्ध्वनिकाराः,— "आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते । यस्मिन्नुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥" अलङ्कारो वस्तु चेत्युभयं यत्र प्रकाशते, स शब्दशक्त्युत्यो ध्वनिः, यत्र तु द्वे वस्तुनी प्रकाशेते स श्लेषः, यथोदाहृते "येन ध्वस्तमनोभवेन" इत्यादौ । अत्र हि माधवोमाधवस्वरूपवर्णनरूपे हे वस्तुनी प्रकरणादेरनियन्त्रिततया तद्वैशिष्ट्येन प्रतिभावतां प्रतिभापथं गाहेते, यद्यपि भट्टाद्भटेन अलङ्कारान्तरप्रतीतावपि श्लेषोऽङ्गीकृतः, यथा,—"तस्या विनाऽपि द्वारेण निसर्गादेव हारिणौ । जनयामासतुः कस्य विस्मयं न पयोधरौ ? ॥" इत्यादी अलङ्कारो विरोधः, तदन्यश्च शृङ्गारसञ्चारी विस्मयः प्रकाशते इति अलङ्कारान्तरस्य विस्मयस्य प्रतीतेः विरोधानुगतः श्लेषः; न तु अत्र लक्ष्यक्रमव्यङ्ग्यो ध्वनिः; अथापि यत्र आक्षिप्ता नालङ्कारान्तरप्रतीतिः तत्रैव स्यात्, किन्तु यत्र सामर्थ्यादाक्षिप्तं सत् शब्दशक्त्या अलङ्कारान्तरं प्रतिभासते, स सर्व एव ध्वनिर्विषयः ।

तथा हि—"कदाचित् कुसुमसमयमुपसंहरन्नजृम्भत ग्रीष्माभिधानः सम्फुल्लमल्लिका धवलाट्टहासो महाकालः" इत्यादौ हर्षचरिते ऋतुवर्णनप्रकरणवैशिष्ट्येन अभिधायां नियन्त्रितायाम् "अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी" इति नयमुत्मृजत्सु महाकालादिषु शब्देषु स्वस्वार्थं बोधयित्वा च विरतेषु अपि सहृदयहृदये भासते यः कोऽप्यर्थः, स शब्दशक्त्याऽऽक्षिप्त इति शब्दशक्त्युत्थति स्वीकार्यम् । इति । अत्रैके—"अनेकार्थानां शब्दानां प्रकरणादिवैशिष्ट्येन अर्थान्तरेषु नियन्त्रितेषु एक एवार्थोऽभिधया प्रतिपादयितुं शक्यते, तदनन्तरं भासमानः कोऽप्यर्थः शब्दशक्त्युत्थः, एवं मति शब्दशक्तिमूलत्वव्यङ्ग्यत्वयोरविरोधः" इत्याहु; अपरे त्वाहुः—"ग्रीष्मादि पदानां नानाऽर्थतामवलम्ब्याभिधा कमपि नियन्त्रणान्तरमपि भासमानमर्थमुपकरोतीति शब्दशक्त्युत्थत्वं दुर्वारम्" इति । केचित् पुनः प्राहुः—"शब्दभेदे शाब्दः श्लेषः, शब्दार्थश्लेषे च शक्तिभेदेन शब्दभेदेन शब्दभेदोऽप्यङ्गीकर्त्तव्यः, यत्र तु शब्दार्थशक्तेर्नियन्त्रितत्वेऽपि अर्थान्तरप्रतीयमानत्वेन च शब्दभेदाङ्गीकारानौचित्यं, तत्र प्रतीयमानार्थरूपत्वम्" इति । "सम्फल्लमल्लिकाधवलाट्टहासः" इत्यादौ सम्फुल्लमल्लिका एव धवलाट्टहासो यस्य तादृशः इत्यादिव्युत्पत्त्यनुसारेण व्याख्यानान्तरप्रतिपादनेऽभिधाऽन्तरमेवोदेति, एवं सति अर्थान्तरमभिधयैव न तु व्यञ्जनया बोध्यम्; अथ तयोः प्राकरणिकाप्राकरणिकयोर्द्वयोरर्थयोर्या रूपणा सा प्रतीयमाना, तत्र अभिधाया असम्भवात् । अतः तथाविधायां रूपणायां शब्दशक्तिमूला व्यञ्जनैव शरणं, व्यञ्जनया विना तथाविधायाः रूपणायाः प्रतीतेरसम्भवात् । अत एवायमलङ्कारध्वनिरिति वक्तुं युक्तम् । एवंविधोदाहरणस्थलेषु अभिधाया प्राकरणिके प्रथमार्थे नियन्त्रिते शब्दशक्त्या द्वितीयार्थे प्रकाशमाने सति वाक्यार्थस्यासङ्गतेः प्राकरणिकाप्राकरणिकाथेयोरुपमानोपमेयभावः अवश्यमङ्गीकार्यः, श्लेषस्तु "अर्थभेदे शब्दभेदः" इति शब्दद्वयमूलः, अयं पुनर्ध्वनिः नियन्त्रितानेकाप्राकरणिकार्थानां शब्दानां सामर्थ्यादाक्षिप्तस्तावत् इति भिन्न एवायं श्लेषादिति दिक् ।

क्रमेति ।—क्रमस्य—व्यङ्ग्यप्रतीतिपौर्वापर्यस्य, लक्ष्यत्वात्—स्फुटं प्रतीयमानत्वात्, एव अनुरणनरूपः, प्रतिध्वनितुल्यः इत्यर्थः । अन्यत् स्पष्टम् ।

## लक्ष्मी

इत्थमसंलक्ष्यक्रमव्यङ्ग्यं निरूप्य संलक्ष्यक्रमव्यङ्ग्यं ध्वनिं विभजते—शब्दार्थोभयेति। शब्दश्चार्थश्चोभयं च तेषां याः शक्त्यो व्यञ्जनाः तत उत्तिष्ठति प्रादुर्भवति यः स तदुत्थस्तदुद्भवस्तस्मिन् अनुस्वानः प्रतिध्वन्यादिपदाभिधेयः शब्दविशेषः प्रतीयते तत्सन्निभस्तत्सदृशस्तस्मिन् प्रतिशब्दसदृश इत्यर्थः व्यङ्ग्ये अर्थे सति लक्ष्यक्रमो नाम ध्वनिर्भवति। तथा च घण्टायां वाद्यमानायां प्रधानशब्दप्रतीत्यनन्तरं यथा क्षोदीयानपरस्तत्रतिशब्दो जायते तथा यत्र शब्दप्रतीत्यनन्तरमेव व्यङ्ग्यार्थप्रतीतिर्जायते स शब्दशक्तिमूलो ध्वनिः, यत्रार्थप्रतीत्यनन्तरमेव व्यङ्ग्यार्थप्रतीतिः स शब्दार्थोभयशक्तिमूलो ध्वनिरिति भावः। अत एवायं लक्ष्यक्रमध्वनिः बुधैरालङ्कारिकैस्त्रिविधः कथितः। एवञ्च यथा ध्वनिप्रतिध्वन्योः क्रमो लक्ष्यते तथा यत्र वाच्यप्रतीयमायोरर्थयोः प्रतीतिक्रमो लक्ष्यते स संलक्ष्यक्रम इति फलितम्। यद्यप्यविवक्षितवाच्येऽपि क्रमो लक्ष्यते तथापि व्यङ्ग्यव्यञ्जकयोः बाधप्रतिसन्धानेन विच्छेदात्ततोऽस्य भेदः, अत्र हि क्रममात्रं लक्ष्यते न विच्छेदोऽपीति।

अत्रेदमप्यनुसन्धेयम्—शब्दपरिवृत्त्यसहत्वेन शब्दशक्तिमूलत्वम्, शब्दपरिवृत्तिसहत्वेनार्थशक्तिमूलत्वम्, अवच्छेदकभेदेन (अंशभेदेन) तदसहत्वसहत्वाभ्यां तूभयशक्तिमूलत्वमिति। तदुक्तं प्रदीपादौ—शब्दशक्तिमूलत्वं च एतदेव यत्तेनैव शब्देन तदर्थप्रतीतिर्न तु पर्यायान्तरेणापि। एतद्वैपरीत्यं चार्थशक्तिमूलत्वं न त्वभिधया तत्प्रतीतिरिति, अवच्छेदकभेदेनोभयान्वयव्यतिरेकानुविधाने तूभयशक्तिमूलत्वमिति च॥

तत्र 'अनुस्वानसन्निभ' इति यदुक्तं तद्व्याचष्टे—क्रमलक्ष्यत्वादेवानुरणनरूप इति। क्रमस्य व्यङ्ग्यप्रतीतिपौर्वापर्यस्य लक्ष्यत्वात् स्फुटं प्रतीयमानत्वात् अनुरणनरूपः प्रतिध्वनिः स हि प्रथमध्वनेरनन्तरं जायते तदुत्पत्तिक्रमश्च लक्ष्यते ततुल्यो यो व्यङ्ग्यस्तस्य त्रैविध्यं व्याचष्टे—तस्य शब्दशक्त्युद्भवत्वेन इति। शब्दस्य अर्थस्य च शक्तिः व्यञ्जनसामर्थ्यं न तु अभिधारूपावृत्तिः तया व्यङ्ग्याबोधनात् अर्थस्य तदभावाच्च तेन सामर्थ्येन उद्भव उत्पन्नः विषयता यत्र तस्य भावस्तेन। तत्रैविध्यात् तत्सम्बन्धेन संलक्ष्यक्रमव्यङ्ग्यनाम्नो ध्वनिकाव्यस्य त्रैविध्यमित्यर्थः।

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यस्य द्वैविध्यं दर्शयितुमुपक्रमते—तत्रेति। तत्र तेषु उक्तेषु त्रिविधेषु संलक्ष्यक्रमव्यङ्ग्यमध्य इत्यर्थः।

## रुचिरा

अथ क्रमप्राप्तं संलक्ष्यक्रमाख्यं ध्वनिं निरूपयति-८२७ **शब्दार्थोभयशक्त्युत्थे** इत्यादिना।

२८७ **शब्दार्थोभयशत्क्युत्थे** शब्दश्चार्थरर्थशक्तेः चेति तेषां शब्दार्थोभयशक्तेश्च य आविर्भवति तस्मिन्निति यावत् यस्तस्मिंस्तथोक्ते। शब्दशक्तेरर्थशक्तेः शब्दार्थोभयशक्तेश्च य आविर्भवति तस्मिन्निति यावत्। अनुस्वानसन्निभेऽनुस्वानः प्रतिध्वनिस्तथोक्ते। शब्दशक्तेरर्थशक्तेः शब्दार्थोभयशक्तेश्च य आविर्भवति तस्मिन्निति यावत्। अनुस्वानसन्निभेऽनुस्वानः प्रतिध्वनिस्तत्सन्निभे तत्सदृशे इति यावत्। अन्वनुकृत्य स्वानं प्रथमध्वनिं वर्त्तत इति **व्यङ्ग्ये** व्यञ्जनया बोध्ये। तस्मिन्नर्थ इति यावत्। सतीति शेषः। **लक्ष्यक्रमव्यङ्ग्यः**। लक्ष्यः क्रमो यस्य तादृशो व्यङ्ग्यो यत्र स तत्स्वरूप इति यावत्। **ध्वनिः**। **त्रिविधः** शब्दशक्त्युत्थार्थशक्त्युत्थशब्दार्थशक्त्युत्थशब्दार्थशक्त्युत्थत्वेनेति शेषः। **बुधैः** पौर्वापर्यज्ञैः। **कथितः** प्रतिपादितः॥ २८७॥

अत्रेदमुक्तम्-अनुस्वानोऽनुरणनप्रतिश्रुत्प्रतिध्वन्याद्यपरपर्यायः स च स्वकारणीभूतशब्दोत्तरजायमानत्व-रूपक्रमतत्स्वरूपः सन् लक्ष्यते, तत्सन्निभः पुनर्यो व्यङ्ग्यार्थः स कथं न स्याल्लक्ष्यक्रमः। अथैवं शब्दशक्त्यु-द्भुवोऽर्य शक्त्युद्भवः शब्दार्थशक्युद्भवश्चेति ध्वनिरसौ त्रिप्रकारो निरुपितः। इति।

अत्राहुर्ध्वनिकाराः—ननु शक्त्या यत्रार्थान्तरं प्रकाशते स यदि ध्वनेः प्रकार उच्यते तदिदानी श्लेषस्य विषय एवापहृतःस्यात्। नापहृत इत्याह-'आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते। यस्मिन्ननुक्तः शब्देन शब्दशक्त-युद्भवो हि सः॥' यस्मादलङ्कारो न वस्तुमात्रं (सत्) यस्मिन् काव्ये शब्दशक्त्या प्रकाशते। स एव शब्दशक्त्यु-द्भवो ध्वनि रित्यस्माकं विवक्षितः। वस्तुद्वये च शब्दशक्त्या प्रकाश्यमाने श्लेषः। यथा-'येन ध्वस्तमनोभवेन बलिजित् कायः पुरास्त्रीकृतौ... ॥' नन्वलङ्कारान्तरप्रतिभायामपि श्लेषस्य व्यपदेशी भवतीति दर्शितं भट्टोद्भेवेन तत्पुनरपि शब्दशक्तिमूलो ध्वनिर्निरवकाश इत्याशङ्क्येदमुक्तम् 'ाक्षिप्त' इति। तदयमर्थः—यत्र शब्दशक्त्या साक्षादलङ्कारं वाच्यं सत् प्रतिभासते स सर्वः श्लेषस्य विषयः। यत्र तु शब्दशक्त्या सामर्थ्याक्षिप्तं वाच्यव्यतिरिक्तं व्यङ्ग्यमेवालङ्कारान्तरं प्रकाशते स ध्वनेर्विषयः। शब्दशक्त्या साक्षादसङ्कारान्तरप्रतिभा यथा- 'तस्या विनाऽपि हारेण निसर्गादेव हारिणौ। जनयामासतुः कस्य विस्मयं न पयोधरौ॥' अत्र शृङ्गारव्यभिचारी विस्मयाख्योभावः साक्षाद्विरोधालङ्कारश्च प्रतिभासेते इति विरोधच्छायाऽनुग्राहिणश्लेषस्यायं विषयः, न त्वनुस्वानोपमव्यङ्ग्यस्य ध्वनेः।' इति।

अथ कारिकोक्तमेवार्थं निर्दिशति-**क्रमलक्ष्यत्वादि**त्यादिना।

**क्रमलक्ष्यत्वात्** क्रमस्य व्यङ्ग्यप्रतीतिपौर्वापर्यस्य लक्ष्यत्वं स्फुटं प्रतीयमानत्वं तस्मात्। **एव**। **अनुरणन रूपो**ऽनुरणनं प्रतिध्वनिस्तद्रूपः **यः**। **व्यङ्ग्यो** व्यङ्ग्यार्थः। **तस्य**। **शब्दशक्त्युद्भवत्वेन** शब्दशक्तेरुद्भवतीति, तत्त्वेन। पुनः-**अर्थशक्त्युद्भवत्वेन**। **च** तथा। अव्ययानामनेकार्थत्वात्। **शब्दार्थशक्त्यु**द्भवत्वेन। साधनेनेति शेषः। **त्रैविध्यात्**। हेतोरीति शेषः। **संलक्ष्यक्रमव्यङ्ग्यनाम्नः** संलक्ष्यक्रमव्यङ्ग्य इति नाम यस्य तस्य। **ध्वनेस्त-त्प्रधानस्य**। **काव्यस्य** रसा (चमत्कारा) त्मकवाक्यस्य। अपि। **त्रैविध्यम्**। यद्वा-संलक्ष्यक्रमव्यङ्ग्यनम्नः। ध्वनेः। त्रैविध्यात्। **काव्यस्य**। अपि। त्रैविध्यम्। इति।

ननु 'नित्यः शब्दार्थसम्बन्धः' इति शब्दार्थयोर्व्यभिचारित्वासम्भवात् कथं ध्वनेस्त्रैविध्यं सङ्गच्छते इति चेत सत्यम्। अत्र प्राधान्यं विवक्षितम्। एवं च-शब्दपरिवृत्त्यसहत्वेनार्थपारिवृत्यसहत्वेन शब्दार्थपरिवृत्त्यसहत्वेन च तस्य तथात्वमिति निर्वाधम्। उक्तं च प्रदीपकारैः-"शब्दशक्तिमूलत्वं च एतदेव, यत्तेनैव शब्देन तदर्थप्रतीतिर्नतु पर्यायान्तरेणापि, एतद्वैपरीत्यं चार्थशक्तिमूलत्वं, न त्वभिंधया तत्प्रतीतिरिति। एतेन-"अभिधाया यत्र न नियमनं तत्रैष भेदो द्रष्टव्यः, तन्नियमने तु नाभिधामूलत्वं, किन्तु व्यञ्जनामूलत्वमेव। 'भद्रात्मनो दुरधिरोहतनोर्विशालवंशो-न्नतेः कृतशिलीमुखसङ्ग्रहस्य। यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत्॥' इतिवद्भ-वेत्।" इति यत् केनचिदुक्तं तन्नादेयम्, 'भद्रात्मनः—' इत्यादेरप्येतद्भेदत्वेनेष्टत्वात्। अन्यथा तस्य सर्वभेदबहिर्भावापत्तेः। इति। अत्रेदं बोध्यम्-'क्रमेण प्रतिभात्यात्मा योऽस्यानुवानसन्निभः। शब्दार्थशक्तिमूल-त्वात् सोऽपि द्वेधा व्यवस्थितः॥' इत्युक्तदिशा अथापि अवच्छेदकभेदेन शब्दार्थ- परिवृत्तिसहत्वासहत्वाभ्याम-नुभवसिद्धस्य तत्तृतीयप्रभेदस्य दुरपह्नव एवेति। अत एवोक्तं प्रकाशकारैः—'अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्य-स्थितिस्तु यः। शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः॥' इति। रसगङ्गाधरकारैरप्युक्तम् 'इत्थमभिधामू-लस्त्रिविधोऽपि सङ्क्षेपेण निरूपितो ध्वनिः।' इति।

अथ शब्दशक्तिमूलस्य ध्वनेरपि द्वैविध्यमित्याह-**तत्रै**त्यादिना।

**तत्र** तेषु त्रिषु संलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः प्रभेदेष्विति यावत्।

२८८ **वस्त्वलङ्काररूपत्वाद्**वस्त्वलङ्कारौ रूपं स्वरूपं यस्य तक्य भावस्तत्त्वं तस्मात्। वस्तु रुपत्वादलङ्काररूपत्वाच्चेत्यर्थः। शब्दशक्तिमूलः। ध्वनिः। **द्विधा** प्रकारद्वयेनावस्थितः। स्यादिति शेषः। वस्तुमात्ररूपोऽलङ्कारमात्ररूपश्चेति स द्विप्रभेद इति भावः॥ २०४॥

नन्वलङ्कारोऽपि वस्त्वे तत्कथं तस्य पृथगुपादानमित्याशङ्क्य तत्सार्थकतां दर्शयति-**अलङ्कारशब्दस्ये**त्यादिना।

**अलङ्कारशब्दस्य** 'वस्त्वलङ्काररूपत्वा' दित्यत्रेति शेषः। **पृथग्** वस्तुशब्दादिति शेषः। **उपादानात्**। हेतोरिति शेषः। **अनलङ्कारं** नालङ्कारो यत्र तत्, नालङ्कार इति स यथा भवेत्तथेति क्रियाविशेषणं वा। **वस्तुमात्रं** वस्त्वेवेत्यर्थः। **गृह्यते** उपादीयते। अनयोर्भेदस्तु 'गोबलीवर्द' न्यायेनोह्यः।

तत्र—

**वस्त्वलंकाररूपत्वाच्छब्दशक्त्युद्भवो द्विधा ।**

अलंकारशब्दस्य पृथगुपादानादनलंकारं वस्तुमात्रं गृह्यते । तत्र वस्तुरूपशब्दशक्त्युद्भवो व्यङ्ग्यो यथा—

**पन्थिअ !ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।**

**उण्णअ पओहरं पेक्खिऊण जइ वससि ता वससु ॥**

अत्र सत्थरादिशब्दशक्त्या यद्युभोगक्षमोऽसि तदास्वेति वस्तु व्यज्यते ।

---

## विवृतिः

**वस्त्वलंकाररूपत्वादिति** । 'व्यङ्ग्यस्य' इति शेषः । **अनलंकारमिति** । अलंकारशब्दोऽत्र धर्मपरः । तेन न विद्यते अलंकारो यत्रेति बहुब्रीहिः । तत्पुरुषसमासे क्लीबत्वं न स्यात् । 'शेषतत्पुरुषद्वन्द्वावन्त्यस्थपदलिङ्गकौ' इत्यनुशासनेन पुंस्त्वप्रसक्तेः ॥ **पन्थिअ इति** । 'पथिक नात्र स्रस्तरमस्ति मनाक्प्रस्तरस्थले ग्रामे । उन्नतपयोधरं प्रेक्ष्य यदि वसंसि तद्वस ॥' इति संस्कृतम् । निवासार्थिनं पथिकं प्रति स्वयं दूत्या उक्तिरियम् ।

**अत्रेति** । सत्थरादीत्यादिना पत्थरत्थलपओहरशब्दयोर्ग्रहणम् । परदारगमनिषेधकशास्त्रार्थकं सत्थपदं प्राकृतश्लिष्टम् । प्रस्तरे स्त्रीजनं संभोगार्थं गृह्णातीत्येवमर्थकं प्रस्तरस्थलपदं संस्कृतश्लिटम् । स्तनार्थकमपि पओहरपदमुभयोः श्लिष्टम् । एषां **शक्त्या** सामर्थ्येन परम्परयापि । शब्दशक्त्युद्भवो यथा—'शनिरशनिश्च तमुच्चैर्निहन्ति, कुप्यसि नरेन्द्र यस्मै त्वम् । यत्र प्रसीदसि पुनः, स भात्युदारोऽनुदारश्च ॥' शनिर्ग्रहोऽशनिर्वज्रं च तमुच्चैर्निहन्ति । अनुदारोऽनुमतदारः । तत्राशनिशब्दशक्त्या शनिविरुद्धे व्यञ्जिते तद्वारा विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति वस्तु व्यज्यते । उत्तरार्धे तु विरोधाभास एव । यद्वा सोऽनुदारोऽपि त्वदनुवृत्त्या उदारो भवतीत्यर्थः ॥

## विवृतिपूर्तिः

**अत्रेति** । प्रस्तराणां तत्त्वेनाध्यवसितानां मूर्खाणां स्थले तन्मयेऽत्र ग्रामे सत्वरं शास्त्रं कामशास्त्रमित्यर्थः । यद्वा सत्थरं शास्त्रं मनाक् किंचिदपि नास्ति, किं पुनः साहित्यम् । तस्मादिङ्गिताभिज्ञविरहान्निः शङ्कमुन्नतमनुपभुक्तं पयोधरं स्तनं तादृशोद्दीपकं मेघं च प्रेक्ष्यायद्युपभोगक्षमोऽसि तदा आस्वेति । प्रस्तरस्थल इत्यनेन शयापेक्षापि नास्तीति ध्वन्यते । अत्र शब्दशक्तिमूलत्वं परिवृत्त्यसहनानार्थशब्दप्रयोगादवसेयमिति व्यङ्ग्यार्थः ॥

## विज्ञप्रिया

तत्र काव्यस्य शक्त्युत्थत्वप्रयोजकं शब्दशक्त्युद्भवं व्यङ्ग्यं द्विधा विभजति—**तत्र वस्त्वलङ्काररूपत्वादिति** । पृथक् उपादानादिति वस्तुत्वस्य केवलान्वयित्वेन अलङ्कारस्यापि वस्तुत्वात् । तथा च गोवृषन्यायात्

वस्तुपदस्यालङ्कारभिन्नवस्तुपरतां व्याचष्टे—**अलङ्करणमिति**। अलङ्करणमलङ्कारः तद्भिन्नमित्यर्थः। अनलङ्कार इति बहुपुस्तकेषु पाठः तल्लेखकप्रमादादेव। अलङ्कारशब्दस्य पुंलिङ्गत्वेन तस्य नञ् तत्पुरुषे लिङ्गत्यागाभवात्।

**पन्थिअ ण एत्थेति—**

**"पथिक नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे।**

**उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस"॥ इति संस्कृतम्।**

निवासार्थिनं पथिकं प्रति स्वयं-दूत्या उक्तिरियम्। हे पथिक! प्रस्तरस्थलेऽत्र ग्रामे मनाक् स्वल्पमपि स्रस्तरं शयनीयास्तरणं नास्ति। प्रस्तर एव वयं स्वपिम इति भावः। मनागित्यत्रापि अर्थोऽध्याहार्यः। उन्नतमुद्भूतं पयोधरं मेघं प्रेक्ष्य गमनप्रतिबन्धात् यदि वस्तुमिच्छसि तदा वस इति आपाततो भावार्थः। अत शब्दशक्त्युत्थं गूढं व्यङ्ग्यार्थं दर्शयति—**अत्रेति**। प्राकृतश्लिष्टस्य स्त्रत्थरशब्दस्य शास्त्रमप्यर्थः। प्रकरणनियन्त्रणवशात् सोऽर्थो व्यङ्ग्यस्तथा च "परदारान्न गच्छेदि"ति स्मृत्यादिशास्त्रं नास्ति इत्यर्थः। इति आदिपदात् प्रस्तरस्थलपयोधरपदयोरपि परिग्रहः। तथा हि शय्याविरहात् प्रस्तरस्थं स्त्रीजनं पुरुषो लातिरत्यर्थं गृह्णाति इति प्रस्तरस्थलः तत्र इत्यर्थेन उत्तुङ्गस्तनदर्शनेन च "यद्युपभोगक्षमेत्यादि" व्यञ्जनात् परम्परया शब्दशक्तिमूलता।

## लोचन

स्रस्तरं-तृणादिशय्या। प्रस्तराः पाषाणाः। पयोधरः मेघः। व्यङ्ग्यपक्षे स्रस्तरं शास्त्रं रत्यनुशासकम्। उन्नतपयोधरां मामित्यर्थः। न चेह स्रस्तरशब्दस्य शास्त्रार्थत्वेन उपमाध्वनिः; सादृश्यस्याऽविवक्षितत्वात्। रहस्यसंगोपनार्थमेव हि ह्यर्थप्रयोगः।

## कुसुमप्रतिमा

पन्थिअ इति। पथिक! नात्र संस्तरोऽस्ति मनाक् प्रस्तरस्थले ग्रामे। उन्नतपयोधरं प्रेक्ष्य पुनर्यदि वससि तद्वस॥" इति संस्कृतानुवादः। रात्राववस्थानाय प्रार्थयन्तं पान्थं प्रति स्वैरविहारिण्या उक्तिरियम्। हे पथिक! प्रस्तराणां स्थलं यत्र तादृशे पाषाणमये इत्यर्थः अत्र ग्रामे मनाक् अल्पोऽपि सस्तर आस्तरणीयकटो नास्ति प्राकृते तु "बहुल"मिति सत्थरमित्यत्र क्लीवत्वम्। उन्नत आकाशे उत्थितश्वासौ पयोधरो मेघश्चेति तं प्रेक्ष्य दृष्ट्वा यदि पुनर्वससि शयनकष्टमङ्गीकृत्याप्यवस्थातुमिच्छसि तत्तदा वस तिष्ठ। अयन्तु प्रकरणनियन्त्रितोऽभिधाप्रतिपाद्योऽर्थः।

## विमला

वस्त्विति।—शब्दशक्त्युद्भवः, व्यङ्ग्य इति शेषः, वस्तुरूपत्वात्, अलङ्काररूपत्वाच्च द्विधा भवति, ततश्च शब्दशक्त्युत्थो वस्तुध्वनिः, अलङ्कारध्वनिश्चेति फलितम्। अत्रेदं बोध्यं,—यत्र यत् किमपि प्रतीयमानमलङ्कारशून्यं सत् चमत्कुरुते, तत्रतद्वस्तु ध्वनिव्यपदेश्यम्; यथोदाहरिष्यमाणे "पंथिअ" इत्यादौ। यत्र पुनर्यच्चमत्कारकारणमलङअकारप्रतीयमानत्वं भवेत्, तत्र तदलङ्कारध्वनिव्यपदेश्यम्, इति प्राचामाशयः, उक्तञ्च रसगङ्गाधरकारैः,—"अलङ्कारप्रतीतिश्चेत् स्वयं यत्र चमत्कृते। अलङ्कारध्वनिस्तत्र स्याच्चमत्कारकारणम्॥ यत्र तु स्यादलङ्कारशून्यमेव चमत्कृते। तत्र वस्तुध्वनिर्ज्ञेयो भेदस्तु पिककाकवत्॥" इति। वयन्तु उभयोश्चमत्कारकार-

णत्वे वस्त्वलङ्कारोभयध्वनिमपि अङ्गीकुर्म्मः; काव्यस्य रसमात्रजीविततया रसस्य च "रसे सारश्चमत्कारः" इति नारायणोक्त्या "चमत्कारैकमूलं स्यात् काव्यम्" इति भरतोक्त्या च काव्याङ्गानामपि चमत्कारमात्रप्राणत्वादिति।

अलङ्कारेति।—अनलङ्कारम्—अलङ्कारशून्यम् [अलङ्कारशब्दोऽत्र धर्मपरः, तेन न विद्यते अलङ्कारः—अलङ्कारत्वं यत्र इति बहुव्रीहिः, तत्पुरुषसमासे क्लीवत्वं न स्यात्। "शेषतत्पुरुषद्वन्द्वावन्त्यस्थपदलिङ्गकौ" इति अनुशासनेन पुंस्त्व प्रसक्तेः]।

पंथिअ इति।—["पथिक ! नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे। उन्नतपयोधरं प्रेक्ष्य पुनर्यदि वससि तद् वस॥" इति संस्कृतम्]। वासार्थिनं पथिकं प्रति कस्याश्चित् स्वयंदूत्या उक्तिरियम्। हे पथिक ! अत्र प्रस्तरस्थले—पाषाणबहुले, ग्रामे, मनाक्—अल्पम्, अपीति शेषः, स्रस्तरम्—आसनं, शयनीयकट इति यावत्, न अस्ति, प्रस्तरेष्वेव वयं स्वपिमः, नात्र अन्यः शयाविधाननियम इति भावः। उन्नतपयोधरम्—उन्नतमेघ, दृष्ट्वा—अविलम्बमेव वर्षिष्यतीत्यालोच्य, यदि वससि—वासमिच्छसि, तत्—तदा, वस, नात्र पुनः कश्चिदिवावरोध इति भावः। अत्र निवासीपयुक्त शयनीयकटादिकमत्र नास्त्येव मेघप्रतिरुद्धगतिकतया यदि वससि, तद्वस इत्यर्थः आपाततः प्रतीयते। आर्या छन्दः।

व्यङ्ग्यमवगमयति, अत्रेति।—सत्थरादिशब्दशक्त्या,—अत्र आदिपदेन पत्थरपओहरशब्दयोर्ग्रहणम्। यदि असि [इदमव्ययम्] त्वं, (सम्बोध्यः) देशदेशान्तरसञ्चारितयोपार्जितसकलेङ्गिताादिविज्ञान इति यावत्, उपभोगक्षमः,—परदारोपगमनरहस्यविज्ञतया पर्यटनश्रमानातुरतया वा प्रियतमारहितत्वेन मदनार्दितत्वेन वा रमणीलामेच्छुकतया कामिन्या आमोदं वर्द्धयितुं शक्तो भवसि, तदा—तर्हि, आस्स्व—क्षणसुपविश, इति—एवंविधं, वस्तु व्यज्यते। अयं भावः,—सत्थरशब्दः प्राकृतभाषायां शयनीयार्थः, परदारगमननिषेधपरशास्त्रार्थकश्चेति श्लिष्टः, पओहर-(पयोधर) शब्दश्चैवं प्राकृतसंस्कृतभाषयोः स्तनमेघार्थकतया श्लिष्टः, इंत्येतेषां सत्थर-(स्रस्तर) पत्थर-(प्रस्तर)-पओहर-(पयोधर)-शब्दानां प्राकतसंस्कृततदुभयभाषणेषु स्रस्तराद्यनेकार्थकतया अत्र शयनीयं, परदारगमनदोषविचारश्च नास्ति, प्रस्तरप्रायोऽयं मूर्ख प्रायोऽयश्च देशोऽस्ति, अतो यदि पयोधरं मेघामेघोपस्थितिं सम्भाव्य पुरी गन्तुं नेच्छसि, यदि वा स्तनमण्डलमुच्चैः स्फुरदवलोक्य तावता तयोः सौन्दर्याद्यनुमाय रिरंसुरसि, तत् यावत् सायंसमयः यावच्च तिमिरं न प्रसरेत्, तावत् प्रमदाविरहेण प्रमदाऽन्तरविषयिणीं पर्युत्सुकतां निरुन्धेति स्वप्रार्थनीयं वस्तु स्वयंदूत्या कयाऽपि नायिकया कस्यचित् पान्थस्य पुरस्तात् प्रकटयते इति। परम्परयाऽपि शब्दशक्त्युद्भवो ध्वनिः सम्भवति, यथा—"शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम्। यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च॥" शनिः,—ग्रहविशेषः इत्यर्थः, अशनिः,—वज्र, तमुच्चैः, निहन्ति, स उदारः,—स्वयं सम्पत्तिं प्राप्य परेभ्यः सम्प्रदानपरः, अनुदारः—अनुमतदार इत्यर्थः; स्पष्टमन्यत्। अत्र यः शनिर्नसोऽशनिरित्येवं विरोधाभासमाह चर्येण शनिरशनिश्चेत्येतौ, उदारोऽनुदारश्चेत्येतौ च विरुद्धावपि त्वदनुवर्त्तनार्थमेकं कार्यं कुरुत इति वस्तु प्रतीयते। स्पष्टञ्चैतत् काव्यप्रकाशे इति।

## लक्ष्मी

वस्त्वलङ्काररूपत्वादिति। व्यङ्ग्यस्य वस्तुरूपत्वात् अलङ्काररूपत्वाच्च शब्दशक्त्युत्थः संलक्ष्यक्रमो ध्वनिर्द्विधा द्विप्रकारो भवति। तथा च शब्दशक्तिमूलो वस्तुध्वनिः, शब्दशक्तिमूलोऽलङ्कारध्वनिश्च संज्ञा।

ननु वस्तुत्वस्य केवलान्वयित्वेन पदार्थमात्रत्वात् अलङ्कारोऽपि वस्तु तत्कथं भेद इत्यत आह—अलङ्काशब्दस्येति। सामान्यविशेषन्यायात् वस्तुपदेनालङ्कारभिन्नं समस्तं वस्तु गृह्यते। वस्तुध्वनिमध्ये अलङ्काररूपव-

स्तुध्वनेर्वैचित्र्यविशेषात् मुख्यत्वद्योतनार्थं पृथगुपादानं गोवलीवर्दन्यायेनेति भावः । अलङ्करणमलङ्कारः भावे घञ् स च धर्मपरो ग्राह्यः, तेन न विद्यते अलङ्कार उपमादिकृतशोभा यत्रेति बहुब्रीहिणैव अलङ्कारभिन्नमित्यर्थः । नञ् तत्पुरुषसमासे तु अलङ्कारशब्दस्य पुंल्लिङ्गत्वेन लिङ्गत्यागाभावात्, क्लीबत्वं न स्यात् किन्तु 'शेषततपुरुषद्वन्द्वाद्वन्द्वावन्त्यपदलिङ्कौ'इत्यनुशासनेन पुंस्त्वप्रसङ्गात् ।

वस्त्वलङ्कारध्वनी क्रमादुदाहर्त्तुमिच्छुराह—तत्रेति । तयोर्वस्त्वलङ्कारध्वन्योर्मध्य इति यावत् वस्तुरूपशब्दशक्त्युद्भवः शब्दशक्तिमूलो वस्तुध्वनिरित्याशयः ।

पन्थिअ इति । 'पथिक ! नात्र स्त्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।

उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस ॥'इति संस्कृतम् ।

रात्रौ निवासाय प्रार्थयन्तं पथिकं प्रति स्वैरविहारिण्याः स्वयंदूत्या उक्तिरियम् । स्वयंदूतीहि—'द्वयर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति कामशास्त्रमनुसृत्य पथिकं प्रति द्वयर्थपदैराच्छाद्य रहस्यं कथयति । तथाहि हे पथिक ! प्रस्तराणां पाषाणानां 'पाषाणप्रस्तरग्रावोपलाश्मानः शिलादृषत्' इत्यमरः । स्थले, अत्रास्मिन् ग्रामे ।

**'विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि ।**

**स तु ग्राम इति प्रोक्तः शूद्राणां वास एव वा ॥**

तथा शूद्रजनप्रायाः सुसमृद्धकृषीवलाः । क्षेत्रोपयोगभूमध्ये वसतिर्ग्रामसंज्ञिका ॥'

इत्युक्तलक्षणायां वसताविति यावत् । मनाक् अल्पमपि स्त्रस्तरं शयनीयकटाद्यास्तरणं नासि प्रस्तर एवाहं स्वपिमीति भावः । पाषाणबाहुल्येन तृणदुर्लभता सूच्यते, तस्माच्छ यनसामग्रयभावेऽपि उन्नतम् उद्भूतं पयोधरं मेघं प्रेक्ष्य दृष्ट्वा यदि (गमनप्रतिबन्धात्) वससि तदा वस न तु विश्रामार्होऽयं ग्राम इत्यापाततो यथाश्रुतवक्त्रभिप्रायः ।

व्यङ्ग्यार्थस्तु—पाषाणानां तत्त्वेनाध्यवसितानां मूर्खाणां स्थले तन्मये अत्र ग्रामे सत्थरं 'परदारान्न गच्छेत्' इत्यादि धर्मशास्त्रं यद्वा सत्थरं शास्त्रं कामशास्त्रमित्यर्थः, मनाक् अल्पमपि नास्ति किं वक्तव्यं पुनः साहित्यम् तस्मादाकारेङ्गिताद्यभिज्ञविरहान्निःशङ्कतया उन्नतम् अनुपभुक्तं पयोधरं स्तनं तथाविधोद्दीपकं मेघं च यदि वससि उपभोगक्षमोऽसि तदा बस आस्स्व रमस्वेति यावत् । 'प्रस्तरस्थल' इत्युक्त्या शयापेक्षाऽपि नास्तीति व्यज्यते ।

अभिधामूलव्यञ्जनाप्रतिपाद्यं वस्तुरूपं व्यङ्ग्यं दर्शयति—अत्रेति । सत्थरादीत्यादिना 'पत्थरत्थल पओहर' शब्दयोर्ग्रहणम् । सत्थरादिशब्दशक्त्या अभिधामूलव्यञ्जनया प्राकृतः सत्थरशब्दः संस्तरस्य शास्त्रस्य च बोधकः, स्तनार्थकं मेघार्थकं च पओहरशब्दः ।

## रुचिरा

वस्त्वलङ्कारध्वनी क्रमादुदाजिहीर्षुराह-**तत्र** तयोर्वस्त्वलङ्कारध्वन्योर्मध्ये इति यावत् । **वस्तुरूपशब्दशक्त्युद्भुवः** । शब्दशक्तिमूलो वस्तुध्वनिरिति भावः । **यथा-'पंथिअ-'** इत्यत्र ।

**'पंथिअ** हे पथिक ! मार्गगमनश्रान्तेति यावत् । **एत्थ** अत्रास्मिन्निति यावत् । **पत्थरत्थले** प्रस्तराणां पाषाणानामिति यावत् स्थलं तत्प्रधानः प्रदेशस्तत्र । प्रस्तराः स्थले यस्य तत्रेति वा । 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृष' दित्यमरः । **ग्गामे** ग्रामे । 'विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि । स तु ग्राम इति प्रोक्तः, शूद्राणां

वास एव वा ॥' 'तथा शूद्भजनप्रायाः सुसमृद्धकृषीवलाः । क्षेत्रोपयोगभूमध्ये वसतिग्रामसञ्ज्ञिका ॥' इत्युक्तलक्षणायां वसताविति यावत् । **सत्थरं** स्रस्तरं शयनीयकटः शास्त्रं वा । **ण** न नैवेति यावत् । **मणं** मनाक् किञ्चिदिति यावत् । अपीति शेषः । **अत्थि** अस्ति विद्यते इति यावत् । **उण्णअपओहरं** उन्नतपयोधरम् । उन्नतो वार्षुकः पयोधरो मेघो यत्र तद्, उन्नतोऽसौ पयोधर इति तमिति वा । उन्नतौउच्चौ पयोधरौ स्तनौ यत्र तत् तथोक्तमिति वा । **पेक्खिऊण** प्रेक्ष्य पुनः । **जइ** यदि । **वससि** वासं करोषि चिकीर्षसीति यावत् । न तु विश्रामार्होऽथं ग्राम इति भावः । **ता** तत् । **वससु** वस वासं कुर्विति यावत् । अत्र जघनविपुला छन्दः । तल्लक्षणं चोक्तं प्राक् ॥ १७४ ॥'

अत्र व्यङ्ग्यामाह-**अत्रेत्यादिना** ।

**अत्रास्मिन्नुदाहृते** पद्ये इति यावत् । **सत्थरादिशब्दशक्त्या** स्रस्तरादिशब्दशक्त्या । आदिशब्देन पयोधरादिशब्दानामप्युपादानम् । **'यदि** । त्वमिति शेषः । **उपभोगक्षमः । असि । तत्** **तर्हि । आःस्वोपविश । इति'** **वस्तु** । एवेति शेषः । **व्यज्यते** ध्वन्यते ।

अत्रेदं बोध्यम्-कमपि पथिकं निवासार्थिनं युवानं प्रतिं कस्या अपि स्वयंदूत्याः 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु इति कामशास्त्रानुसृतोक्तिरियम् । सा यथा-हे पथिक मार्गश्रमार्त्त ! त्वयाऽत्र कियन्तं समयं स्थातव्यं, यद्यपिप्रस्तराणां तत्त्वेनाध्यवसितानां मूढानां स्थलं तत्प्रधानो देश इति तथाभूते, प्रस्तरास्तत्त्वेनाध्यवसिता मूढाः स्थले प्रदेशे यस्य तादृशो वाऽत्र ग्रामे न तु नगरेऽत एव न स्रस्तरं शयनायोपयोगाय वा कटादीनि, शास्त्रं वा, क्व पुनस्तदन्तरेणेङ्गितज्ञत्वादीति नात्र खलु वस्तव्यमिति, अथापि उन्नतपयोधरं प्रेक्ष्य न पुरः प्रस्थातुं कामार्त्तः सन् रन्तुमेव वा कामयसे तत्र क्षमश्च चेत्तर्हि त्वमाःस्व यथेष्टं च रमस्व प्रतिबन्धकत्य नाममात्रेणाप्यनुपलम्भात् । इति । एवं च-स्रस्त राभावकथनान्नावयोः सङ्केताभिज्ञत्वशङ्का त्वया कार्येति ध्वन्यते । नितान्तं मूढप्रधानोऽयं इति न 'अत्र कृतेऽपि त्वया निवासेऽन्यथा निरीक्षिष्यन्ते एते' इति भ्रमितव्यमिति द्योत्यते । मेघोऽयमुन्नत इति नानेन पुरःप्रस्थानं कृतमित्येवैते ज्ञास्यंन्ति न पुनर्मदीयपयोधरौन्नत्यनिरीक्षणं प्रतिबन्धकरूपेणेति, पथिकस्य तव प्रिया तु नास्त्येव यन्मम सपत्नीशङ्का स्यात्, अथ ततः श्रान्तो मेघोदयं वा कुचौन्नत्यं वा वीक्ष्य मदनार्त्तश्चेत्तर्हि यथेष्टमत्र न्युष्य मया रमस्व, अहं च त्वां प्रमोदयिष्ये इति च द्योत्यते । स्रस्तरपयोधरशब्दमूलश्चैवं वस्तुध्वनिरिति दिक् ।

अलंकाररूपो यथा—'दुर्गालङ्घितविग्रहः—' इत्यादौ (६२ पृ.)। अत्र प्राकरणिकस्योमानाम-महादेवीवल्लभभानुदेवनामनृपतेर्वर्णने द्वितीयार्थसूचितमप्राकरणिकस्य पार्वतीवल्लभस्य वर्णनम-संबद्धं मा प्रसाङ्क्षीदितीश्वरभानुदेवयोरुपमानोपमेयभावः कल्प्यते। तदत्र 'उमावल्लभ उमावल्लभ इव' इत्युपमालंकारो व्यङ्ग्यः।

---

## विवृतिः

**स्रस्तरं** शयनीयकटः मनागल्पमपि तन्नास्ति। प्रस्तर एव वयं स्वपिम इति दर्शयति—**प्रस्तरस्थल इति।** पयोधरं मेधम्। मेधम्। तत्तदा निवासोपयुक्तं शयनीकटादिकमत्र नास्त्येव। मेघप्रतिरुद्धगतिकतया यदि वससि तद्वसेत्यापाततः प्रतीयते। तस्य व्यङ्ग्यमाह—

**अलंकाररूप इति।** 'शब्दशक्तयुद्भवो व्यङ्ग्यः' इत्यनुषज्यते। मा प्रसाङ्क्षीदिति। प्रसक्तं मा भूदित्यर्थः॥

## विज्ञप्रिया

शब्दशक्त्युद्भवोपमालङ्कारव्यञ्जनामाह—**दुर्गालङ्घितेति।** व्याख्यातमिदम्। द्वितीयार्थः पार्वत्यादिः तेन सूचितं पार्वतीवल्लभस्य वर्ण्णनमित्यर्थः। **मा प्रसाङ्क्षीदिति**—प्रसक्तं माभूदित्यर्थः। तत्प्रसक्तौ कवेरुन्मत्तता-पत्तेः। अतः कवेरीश्वरभानुदेवयोरुपमानोपमेयभावे तात्पर्यात् उपमानोपमेयभावः कल्प्यते संव्यज्यते इत्यर्थः। स एव च उपमालङ्कारः। तं व्यङ्ग्यं विशदयित्वा दर्शयतितदत्रेति।

## कुसुमप्रतिमा

अभिधामूलव्यञ्जनाप्रतिपाद्यमर्थ माह अत्रेति। सत्थरस्य आदिशब्दात् पत्तहरशब्दस्य च शक्त्या अभि-धामूलव्यञ्जनया। तथा च प्राकृतः सत्थरशब्दः संस्तरस्य शास्त्रस्य च बोधकः, तथा पओहरशब्दस्य स्त्रीस्तनस्य मेघस्य च वाचकः। तेनायं त्यङ्ग्याथः—अत्र प्रस्तरस्थले पार्वत्यदेशीये ग्रामे मनाक् अल्पमपि शास्त्रं परस्त्रीस-ङ्गमनिषेधकं स्मृतिशास्त्रं नास्ति; तथा च मम उन्नतपयोधरं तुद्भस्तनं प्रेक्ष्य उपभोगाय यदि पुनर्वससि वस्तुमर्हसि तत्तदा वस। आस्स्व वस। आस्धातोः प्रयोगोऽयम्।

अलङ्कारस्य व्यङ्ग्यत्वं प्रतिपादयितुमाह अत्रेति। प्राकरणिकस्य राजस्तुतिप्रस्तावसंसृष्टस्य। अप्राकर-णिकस्य प्रस्तावासंसृष्टम्। मा प्रसङ्घीत् प्रसक्तं न भवतु इत्यर्थः। इति हेतोः। प्रथम उमावल्लभो भानुदेवः, द्वितीय उमावल्लभो महादेवः।

ननु "दुर्गालङ्घितविग्रहः" इत्यादावपि वक्ष्यमाण—"हिममुक्तचन्द्ररुचिरः" इत्यादिवत् शब्दार्थोभयश-क्तिमूल एवोपमालङ्कारध्वनिः सम्भवति उभयोरेवोदाहरणयोस्तुल्यत्वादित्याह यथा वेति।

## विमला

अलङ्कारेति ।—अलङ्काररूपः, शब्दशक्त्युत्थव्यङ्ग्य इति अनुषङ्गः । मा प्रसाङ्क्षीत्—प्रसक्तं मा भूदित्यर्थः । स्पष्टमन्यत् ।

## लक्ष्मी

उक्तोदाहरणे कथमुपमालङ्कारो व्यङ्ग्य इत्युपपादयति—अत्रेति । प्राकरणिकस्य राजस्तुतिप्रस्तावसंसृष्टस्य द्वितीयार्थसूचितं द्वितीयार्थः पार्वत्यादिः तेन सूचितं पार्वतीवल्लभस्य वर्णनमित्यर्थः । अप्राकरणिकस्य प्रस्तावासंसृष्टस्य । मा प्रसाङ्क्षीदिति । प्रसक्तो मा भूदित्यर्थः, तत्प्रसक्तौ कवेरुन्मत्ततापत्तेः, 'अतः कवेरीश्वरभानुदेवयोरुपमानोपमेयभावे तात्पर्यात् उपमानोपमेयभावः कल्प्यते संव्यज्यते । स एव चोपमालङ्कारः तं व्यङ्ग्यं विशदचित्वा दर्शयति तदत्रेति । उपमालङ्कार उपमानामलङ्कारः ।व्यङ्ग्यः प्रतीयमानः 'अस्ती'ति शेषः ।

ननूक्तोदाहरणेऽपि वक्ष्यमाण—'हिममुक्तचन्द्ररुचिरः'इत्यादिवत् शब्दार्थोभयशक्तिमूल एवोपमालङ्कारध्वनिर्भवितुमर्हति उभयोरेवोदाहरणयः समत्वादित्याशयेनोदाहरणान्तरं दर्शयति—यथा वेति ।

## रुचिरा

अलङ्कारध्वनिमुदाहर्तुमाह-**अलङ्काररूपः** शब्दशक्त्युद्भवो ध्वनिरिति शेषः । **यथा-'दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयंस्तेजसाः इत्यादौ** उदाहृते प्रबन्ध इति शेषः । अत्रेदमवधेयम्-इदं तावत् पद्यमभिधामूलाया व्यञ्जनाया उदाहरणप्रस्तावे उपन्यस्तम्, दर्शितश्च तत्रैवार्थः । अत्र प्रकृतम्-'उमा' नाम्या राज्ञयावल्लभस्य वर्णनमिति नियमनमप्यभिधायास्तत्रैव, अप्रकृतं पुनः पार्वत्या वल्लभस्य, तत्कथमिदं सङ्गच्छेत मा भृदसम्बद्धं चेति तयोरुपमानोपमेयभावः परिकल्प्यते । तथा सति चोपमाऽलङ्कारः शब्दशक्तिमूलः प्रतीयमानोऽवतिष्ठते निर्बाधम् । इति ।

अथ स्वयमप्येतदेवाह-**अत्रेत्यादि** ।

**हि** यतः । **अत्रास्मिन्** उदाहृते पद्ये इति यावत् । **प्राकरिणकस्य** प्रकरणे भव इति तस्य । **'उमा-नामदेवी-वल्लभभानुदेवनामनृपतेः** । 'देवी कृताभिषेकाया' मित्यमरः । **वर्णने** । उपक्रान्त इति शेषः । **अप्राकरणिकस्य** न प्राकरणिक इति तस्य । प्रकरणोपक्रान्तविरुद्धस्येति यावत् । **पार्वतीवल्लभस्य** पार्वत्या उमायाः वल्लभः स्वामी पतिरिति यावत् यस्य महेश्वरस्येति यावत् । 'वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरङ्गमे ।' इति-मेदिनी । **वर्णनम्** । **द्वितीयार्थसूचितं** द्वितीयार्थेन प्रतीतिमात्रनिष्पद्यमानेनार्थेन सूचितं न त्वभिहितम् । अभिधायाः प्रकृतार्थमुपस्थास्य विरतव्यापारत्वात् । इति-**असम्बद्धं** सम्बन्धविपरीतम् । यद्वा-'वर्णन' मिति विशेष्यम्, 'द्वितीयार्थसूचित' मितिविशेषणम् । इति । अस्मिन् पक्षे 'असम्बद्ध' मित्यत्र 'इती' त्यादिना हेतुनिर्देशी न नितान्तं सापेक्षः । **मा** नैव । **प्रसाङ्क्षीत्** । प्रसक्तं भवतु । 'माङि लुङ् ।' ३/३/१७५ । इति लुङ् । न माङ्योगे ।' ६/४/७४ । इत्यटः प्रतिषेधः । **इति** । हेतोरिति शेष । **'ईश्वर-भानुदेव' योः** । ईश्वरो महेशो भानुदेवस्तदाख्यो राजा तयोः । 'ईश्वरः शम्भुरीशानः ।' इत्यमरः । **उपमानोपमेयभावः** । क्रमादिति शेषः । उपमानं सादृश्यप्रतियोगि तद्व्यतिरिक्तं तूपमेयम् । तयोरेवोपमाशरीरघटकत्वं चेति बोध्यम् । **कल्प्यते** न तु वस्तुतयाऽस्त्येव । **तत्तस्मात्** कारणादिति शेषः । **अत्रास्मिन्**, एवम्भूते प्रकृताप्रकृतार्थयोरवस्थाने इति यावत् । **'उमावल्लभ** उमायास्तन्नाम्या महाराज्ञया

वल्लभः पतिर्भानुदेवो नाम नृपतिः । **उमावल्लभ** उमायाः पार्वत्या वल्लभः पतिर्महेश्वर इत्यर्थः । **इव** 'राजते' इति शेषः । **इतीत्येवम्** । **उपमाऽलङ्कार** उपमा नामालङ्कारः । **व्यङ्ग्यो** ध्वन्यः । अस्तीतिशेषः ।'

ननु समासोक्तिवदुपमाया अपि प्रकृतोपस्कारकत्वेनापराङ्गत्वरूपगुणीभूतव्यङ्ग्यत्वं स्यादिति चेन्न । तत्राप्रकृतवृत्तान्तस्य व्यङ्ग्यस्य प्रधानतया प्रतीतौ चमत्कृत्यभावेन गुणीभूतत्वेऽप्यत्रोपमायाः प्राधान्यसम्भवेन गुणीभूतत्वानङ्गीकरणात् ।

अत्रायं विवेकः-अलङ्काराणां सर्वेषामुद्दीपनविधया रसाद्युपयोगितयाऽऽलम्बनापेक्षयोद्दीपनेऽतिशयचमत्कृतिमत्त्वस्य सर्वानुभवसिद्धत्वेन 'दुर्गालङ्घिते' त्यादिपदवाच्यालम्बनविभावापेक्षयाऽतिशयितत्वान्निर्बाधमेव ध्वनित्वम् । रसाद्यपेक्षया गुणीभृतव्यङ्ग्यत्वं पुनरभिमतम् । अथ समासोक्तौ अप्रकृतवृत्तान्ताध्यारोपमन्तरेण समारोक्तेरेवानुपपत्तेर्गुणीभूतव्यङ्ग्यत्वं स्पष्टमेव । यत्र पुनरप्रकृतवृत्तानताध्यारोपस्यापि रसाद्युपस्कारकत्वेन वाच्यादतिशायित्वं प्रागभिहितदिशा भवतु नाम तत्र ध्वनित्वं तस्याः समासोक्तेः । न चैवं सत्यप्युपमाकृतातिशयमुपादाय भवतु नाम ध्वनित्वम्, अलङ्कारध्वनिरिति पुनः कथङ्कारमिति शङ्क्यम् । अलङ्कारकृतातिशयध्वनावेवालङ्कारध्वनिरिति व्यवहारात् ।

अलङ्कारान्तरध्वनिरप्येवमवसेय इति ध्वनयन्नाह-**यथा वेति** ।

**वा**ऽथवा । अलङ्कारध्वनिरिति शेषः । **यथा-'अमितः-'** इत्यादौ ।

**'हर्षदप्रभो** हर्षं ददातीति द्यतीति वा तेषां प्रभुरिति तत्सम्बुद्धौ तथोक्त ! तथा च-हर्षप्रदानामपि यः प्रभुः स एव हर्षहर्त्तृणामिति विरोधः । तत्परिहारः पुनर्मित्रामित्रार्थमित्यध्याहारेण । **समितः** सङ्ग्रामात् । 'समित्याजिसमिद्युधः ।' इत्यमरः । **प्राप्तैः** । **उत्कर्षै**रतिशयैर्विजयौरिति यावत् । 'उत्कर्षोऽतिशये' इत्यमरः । **अमितोऽपरि**च्छिन्नोऽपर्याप्त इति यावत् । **असतां** खलानाम् । **अहितः** शत्रुः । 'द्विड्विपक्षाहितामित्रस्युशात्रवशत्रवः ।' इत्यमरः । **साधुयशोभिः** । साधूनि महनीयनि यानि यशांसि इति तैः । **सहितः** सम्पन्नः । **असि** त्वं विद्यसे इति वा ॥१७५ ॥'

यथा वा—

**अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद !प्रभो ! ।**

**अहितः सहितः साधुयशोभिरसतामसि ॥**

अत्रामित इत्यादावपिशब्दाभावाद्विरोधाभासो व्यङ्ग्यः । व्यङ्ग्यस्यालंकार्यत्वेऽपि ब्राह्मण-श्रमणन्यायादलंकारत्वमुपचर्यते ।

---

## विवृतिः

शब्दशक्तिमूलमलंकारान्तरमाह—**यथा वेति । अमित इति ।** हे प्रभो, त्वमसतामहितः । समिद्युद्धं ततः प्राप्तैरुत्कर्षैरमितोऽपर्याप्तः । साधुयशोभिः सहितः । व्यङ्ग्यमाह—**अमित इति ।** अमितो मितशून्यः समितो मितयुक्तश्चेति विरोधः । विरोधाभासस्य वाच्यत्वे पदयोः समानविभक्तिकत्वमपिशब्दसत्त्वं चापेक्षितं तदभावा-देवात्र व्यङ्ग्यत्वमित्याह—**अपिशब्दाभावादिति ।** एतदुपलक्षणम् । समानविभक्तिकत्वाभावाच्चेत्यपि द्रष्ट-व्यम् । ननु रसस्य प्रकर्षतयोपमादेर्यदा गौणत्वं तदैवालंकारत्वं वक्ष्यते । व्यङ्ग्यत्वेनास्वाद्यतया मुख्यत्वाकथमलंकारत्वमित्याह—**व्यङ्ग्यस्यालंकार्यत्वेऽपीति ।** श्रमणः संन्यासी तस्य तद्दशायां ब्राह्मणत्वा-भावेऽपि यथा दशान्तरीयं ब्राह्मणत्वमादाय तथा व्यपदेशस्तथात्रापि वाच्यतादृशीमलंकारत्वमादाय तथा व्यपदेश इति भावः ।

## विवृतिपूर्तिः

**हर्षदेति ।** शत्रुमित्रयोर्हर्षं द्यति ददाति चेति हर्षद, शत्रुहर्षखण्डक मित्रहर्षदायकेत्यर्थः । अत्र पदाभङ्गेऽपि विरोधः । अमितः परिमाणवर्जितः, अथ च समितः परिमाणसहितः । यद्वा अमितः मितं मानं तद्रहितः, अथ च मानसहितः । अहितः हितरहितः, अथ च सहितः हितसहित इति ॥

## विज्ञप्रिया

शब्दशक्त्या व्यङ्ग्यविरोधभासालङ्कारमाह—**यथा वा—अमित** इति । हे हर्षद प्रभो ! समितः युद्धात् प्राप्तैरुत्कर्षैरमितः अपरिच्छिन्नोसि, उत्कर्षबाहुल्यात् त्वं कीदृशः असतामहितः शत्रुः साधुयशोभिः सहितः । अत्र अमितः परिमामरहितः समितः परिमाणयुक्तश्चेति । अहितो हितशून्यः सहितो हितयुक्तश्चेति विरोधः । विरोधस्य वाचकाभावात् व्यङ्ग्यतामाह—**अत्रेति ।**

ननु व्यङ्ग्यार्थ एव आस्वाद्यः तस्य शोभको यः स एवालङ्कारः । तथा च उपमादेर्व्यङ्ग्यत्वे परेण शोभ्यमान एव सः न शोभकः । तत्कथमत्र व्यङ्ग्योपमादेरलङ्कारत्वमित्यत आह—**व्यङ्ग्यस्येति**—अलङ्कार्यत्वे वाच्यालङ्कारान्तरेणैव शोभ्यत्वेऽपि इत्यर्थः । श्रमणः सन्यासी तद्दशायां तस्य ब्राह्मण्याभावेऽपि यथा तस्य दशान्त-रीयं ब्राह्मण्यमादाय ब्राह्मण्यमादाय ब्राह्मण्यमादाय ब्राह्मणत्वमुपचर्यते तथा वाच्यतादशायामलङ्कारत्वमादाय व्यङ्ग्योपमादेरलङ्कारत्वमुपचर्यते इत्यर्थः ।

## लोचन

**अमित** इति। समितः संग्रामात् प्राप्तैकर्षैरपरिमितः, असतामहितः शत्रुः। मानं मितं तेन सहितः। हितेन रहितः कथं तेन युक्त इति विरोधः। अपिशब्दाभावादिति। अपिशब्दसद्भावे "कूपतिमपि कलत्रवल्लभमित्यादौ अपिशब्दबलात् झटिति विरुद्धार्थ एवाभासते। अन्यथा अपिशब्दस्य निरर्थकतापत्तेः। अमित इत्यादौ तु अपेरभावात् प्राकरणिकतया प्रथमम् अविरुद्धार्थ एव प्रतिभासते। अनन्तरम् अमितः सन्कथं समित इति विरोधप्रतिभासनाद् विरोधाभासो व्यङ्ग्य इति। अपिशब्दाभावादित्युपलक्षणम्; अन्येषामपि विरोधाभिधायि शब्दानामभावेऽपि विरोधाभासस्य व्यङ्ग्यत्वं बोद्धव्यम्।

## कुसुमप्रतिमा

अमित इति। न विद्यते मित परिमाणभास्येत्यमितः, मितेन परिणामेन सहति समितः, इत्यभयोर्विरोधः, तथा न विद्यते हितमस्येत्यहितः, समाधानन्तु—हे प्रभो! राजन्! असतां दुर्जनानाम् अहितः शत्रुभूतत्वम्, समितो युद्धात् प्राप्तैः उत्कर्षैर्विजयेन श्रेष्ठत्वैर्हतुभिः। अमितः अन्वीरैननुमपमितः; अतएव माधुर्यशोभिः सत्प्रशंसाभिः सहितो युक्तः; मूतराञ्च स्वपक्षानां हर्षद आह्लादकारी असि।

अत्रेति। अपिशब्दाभावादित्युपलक्षणम्, चकारस्याप्यभावादिति बोध्यम्, द्वयोरेवापिशब्दचकारयोः साक्षाद्विरोधाभासालङ्कारप्रतिपादकत्वात्। अत्र तु अमितः अनुपमितः समितो युद्धादित्यादोः पर्यवसितयोरर्थयोरन्वये विरोधाभावेन व्यङ्ग्यस्य विरोधस्यार्थमूलकत्वाभावात् शब्दश्रवणानन्तरमेव च विरोधप्रतीतेः केवलशब्दशक्तिमूलक एवायमलङ्कारध्वनिरित्याशयः।

नन्वत्र विरोधाभासस्य रसादेरिव व्यङ्ग्यत्वे नास्वाद्यतया अलङ्कार्यत्वमेव स्यात् न पुनरलङ्कारत्वम् अलङ्कारशब्दस्य करणसाधनत्वात् तत् कथमलङ्कारध्वनिरित्युक्ष्यत इत्याह व्यङ्ग्यस्येति। ब्राह्मणश्वासौ भ्रमणः सशासी चेति ब्राह्मणश्रमण। यथा कश्चिद्ब्राह्मण्यधस्यं परिहाय सन्यासाश्रमप्राक्टोऽपि स्वीकृर्भूत पूर्वं ब्राह्मण्यमाश्रित्य ब्राह्मणश्रमण इति व्यपदिश्यते; तथात्रापि अपिशब्दादिमत्ताकालीनालङ्कारत्वामाश्रित्य अलङ्कार्यदशायासपि अलङ्कार इति व्यपदिश्यते इति सरलार्थ।

## विमला

शब्दशक्तिमूलमलङ्कारान्तरमाह, अमित इति।—हे प्रभो! हे हर्षद!—हर्षं ददाति मित्रेभ्य इति तथोक्त; हर्षं द्यति—छिनत्ति, नाशयतीति यावत्, शत्रुणामिति तथोक्त! च, मित्रहर्षदायक! शत्रुहर्षखण्डक! इत्यर्थः, एवं पदाभङ्गेऽपि विरोधः ["हर्षदः" इति पाठान्तरे तु तथाभूतस्वमित्यर्थः] समितः,—सङ्ग्रामात्, प्राप्तैः,—लब्धैः, उत्कर्षैस्त्वम्, अमितः,—अपरिमितः, असि। साधुयशोभिः,—पवित्रकीर्त्तिभिः, सहितः,—युक्तस्त्वम्, असतां—दुष्टानाम्, अहितः,—शत्रुः, असि। अत्रामितस्य समितत्वमिति, अहितस्य सहितत्वमिति च आपाततो विरोधः, इति तात्पर्यम्।

विरोधाभासस्य वाच्यत्वे पदयोः समानविभक्तिकत्वमपचककारसत्त्वक्षापेक्षितं, तदभावादेवात्र व्यङ्ग्यत्वमित्याह, अपिशब्दाभावादिति।—अपिशब्दस्य प्रयोगाकरणादित्यर्थः, (एतदुपलक्षणं, तेन समानविभक्तिकत्वाभावात्, तेन समानविभक्तिकत्वाभावात्, चेतिनिवेशाभावाच्च इत्यपि द्रष्टव्यम्)। ननु रसस्य प्रकर्षतया

उपमाऽऽदेः यदा गौणत्वं, तदैवालङ्कारत्वमिति उत्तरत्र निरूपयिष्यते, अत्र तु व्यङ्ग्यत्वेनास्वाद्यतया मुख्यत्वं, तत् कथमलङ्कारत्वम् ? इत्याशङ्क्याह, व्यङ्ग्यस्येति ।—ब्राह्मणोऽसौ श्रमणतः,—बौद्धसन्न्यासौ, इति ब्राह्मणश्रमणः तस्य न्यायः,—युक्तिः, निदर्शनमिति यावत्, तस्मात्, सन्न्यासिदशायां तस्य ब्राह्मणत्वाभावेऽपि यथा दशाऽन्तरीयं ब्राह्मणत्वमादाय असौ ब्राह्मण इति व्यपदिश्यते, तथा अलङ्कारस्यात्र व्यङ्ग्यत्वेऽपि वाच्यतादशीयमलङ्कारत्वमादाय इति भावः, अलङ्कारत्वम्, उपचर्यते—व्यपदिश्यते ।

## लक्ष्मी

शब्दशक्त्या व्यङ्ग्यविरोधाभासालङ्कारमुदाहरति—अमित इति । शत्रुमित्रयोर्हर्षं द्यति खण्डयति ददाति चेति तत्सम्बुद्धौ हे हर्षद शत्रुहर्षखण्डक मित्रहर्षदायक ! प्रभो ! स्वामिन् ! त्वं समितो युद्धात् 'समित्याजिसमिद्युधः' इत्यमरः, प्राप्तैरुत्कर्षैरतिशयैर्विजयैरिति यावत् 'उत्कर्षोऽतिशये' इत्यमरः, अमित अपरिमितः परिच्छिन्नत्वरहित इति यावत्, असतां खलानाम् अहितः दण्डविधायकत्वेन शत्रुः 'द्विड्विपक्षाहितामित्रदस्युशात्रवशशात्रः' इत्यमरः, अत एव साधुभिः उत्कृष्टैः यशोभिः सहितो युक्त इति प्रस्तुतपक्षेऽर्थः । अत्र पदाऽभङ्गेऽपि विरोधः तथाहि—अमितः परिमाणशून्यः, अथ च समितः परिमाणसहितः, यद्वा—अमितः मितं मानं तेन रहितः, अथ च समितः मानसहितः, अहितः हितरहितः सहितः हितसहित इति । एवञ्चास्य पदाभङ्गत्वमेव । पदभङ्गे तु—

**'तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो ! मधुरलीलः ।**

**मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणी विभाति भवान् ॥'**

इत्युदाहरणान्तरमुक्तं केनचित् । तदापातरमणीयम्, उक्तदिशाऽत्रापि पदभङ्गस्य स्फुटमुपलम्भात् ।

अत्र हि प्रकरणादिना प्रथमार्थेऽभिधायाः नियमनेनाप्राकृतत्वात् द्वितीयार्थस्य विरोधो व्यङ्ग्य एवेत्यलङ्कारध्वनित्वमिति दर्शयति—अत्रेति । विरोधाभासस्य वाच्यत्वे पदयोः समानविभक्तिकत्वमपि शब्दसत्त्वादिकञ्चापेक्षितं तदभावादेवात्र व्यङ्ग्यत्वमित्याशयेनाह—अपिशब्दाभावादिति । एतच्चोपलक्षणम्, समानविभक्तिकत्वाभावाच्चेत्यपि बोध्यम् । तथा चादीचादीनामन्येषामपि विरोधाभिधायिशब्दानामभावेऽपि विरोधाभासस्य व्यङ्ग्यत्वं ज्ञातव्यम् ।

अत्र प्रथमार्थे पर्यवसितार्थस्य विरोधाभावेन व्यङ्ग्यस्य विरोधस्यार्थमूलकत्वाभावात् शब्दश्रवणानन्तरमेव च विरोधप्रतीतेः केवलशब्दशक्तिमूलक एवायमलङ्कारध्वनिरित्यभिप्रायः ।

वाच्यविरोधालङ्कारादस्य भेदस्तु यत्र विरोधपदार्थानां समन्वये शब्दश्रवणादेव विरोधः प्रतिभासते तत्र वाच्ये विरोधः, यथा—'अजस्य गृह्णतो जन्म' इत्यादौ । यत्र तु शब्दश्रवणाऽविरुद्ध एव प्रकृतार्थः प्रतीयते पश्चात्तस्यैव शब्दस्य पुनरनुसन्धानेन विरोधस्तत्र ध्वनिरेवेति विभावनीयम् ।

अत्र प्रदीपकारोऽपि—ननु विरोधस्य किं सर्वत्र व्यङ्ग्यत्वमेव ? नेत्युच्यते तत्कियती सीमा, अपिशब्दादेर्विरोधव्यञ्जकस्य भावे वाच्यत्वम्, तदभावे व्यङ्ग्यत्वमित्याह ।

ननु व्यङ्ग्यार्थ एवास्वाद्यः तस्य शोभाधायको यः स एवालङ्कारः तथा च उपमादेर्व्यङ्ग्यत्वे परेण शोभ्यमान एवासौ न शोभाधायकः तत्कथमत्र व्यङ्ग्योपमादेरलङ्कारत्वमित्याशयेनाह—व्यङ्ग्यस्येति । 'उपमादे'रिति शेषः । अलङ्कारान्तरेणैव शोभ्यत्वेऽपि अलङ्कारत्वम् अलङ्कारणक्रियाकर्तृविषयत्वम् उपचर्यते उपचाराद्व्यवह्रियते, वाच्यतासामयिकमलङ्कारत्वमाश्रित्यैव व्यङ्ग्यतादशायामपि तथा व्यवहार इति । अत्रार्थे न्यायं

सञ्चारयति—ब्राह्मणश्रमणेति । ब्राह्मणश्चासौ श्रमणो बौद्धसंन्यासी यथा तस्याशास्त्रीयविधिना त्यक्तशिखासूत्रादेस्त्यक्तनित्यादिकर्मणश्च तदानीं ब्राह्मणत्वाभावेऽपि पूर्वकालिकब्राह्मणत्वमादाय ब्राह्मणत्वव्यवहारः, तथालङ्कार्यस्याऽपि व्यङ्ग्यतादशायामलङ्कारत्वाभावेऽपि वाच्यतादशायां विद्यमानलङ्कारत्वमाश्रित्यालङ्कारत्वव्यपदेश इति भावः ।

## रुचिरा

अत्र व्यङ्ग्यं दर्शयति-**अत्रे**त्यादिना ।

**अत्रा**स्मिन्नुदाहृते पद्ये इति यावत् । **'अमितः' इत्यादौ** पदन्यासे इति शेषः । **'अपि' शब्दाभावात्।** विरोधाभिधायको ह्यपि शब्दस्तदभावस्तन्निवेशाभावस्तस्मात् । **विरोधाभासः** । अलङ्कार इति शेषः । **व्यङ्ग्यो ध्वन्यः** । लेषा **'ममिता'** दिशब्दानां परिवृत्त्यसहत्वाच्छब्दशक्तिमूलश्चेति शेषः । अत्रायम्भावः-योऽमितः स एव समितः, योऽहितः स एव सहितः, यः पुनर्हर्षप्रदानां प्रभुः स एव हर्षहर्तृणां प्रभुरिति विरोधः । असौ पुनः— 'योऽमितोऽपि स एव समितः योऽहितोपि स एव सहितः, यः पुनर्हर्षप्रदानां प्रभुदानां प्रभुरपि स एव हर्षहर्तृणां प्रभुरित्येव 'मपि' शब्दस्य निवेशे वाच्यः स्यात् । प्रकृते पुन 'रपे' रभावाद् व्यङ्गत्वमेवैतस्य न तु वाच्यत्वम् । विरोधश्चायमाभासमात्रेणेति ।'

अत्रायं पदाभङ्गे पदभङ्गे पुनर्यथा-'तिग्मरुचिरप्रतापोविधुरनिशाकृद्विभो ! मधुरलीलः । मतिमानतत्वृत्तिः प्रति पदपक्षाग्रणीर्विभाति भवान् ॥' इत्यत्र । अस्यायमर्थः-'हे विभो ! तिग्मरुचिरप्रतामः तिग्मस्तीक्ष्णो रुचिरो मनोहर इति ताहशः प्रतापो यस्य सः, शत्रूणामुत्तापनार्थं तिग्मप्रतापः, मित्राणां पुनराह्लादनार्थं रुचिरप्रताप इति भावः । विधुरनिशाकृत्, विधुराणां स्वप्रतापोत्तप्तानां निशा मरणं तत्कृत्, निशेव निशेति, 'वैकल्पेऽपि च विश्लेषे विधुरं विकले त्रिषु ।' इति त्रिकाण्डशेषः । मधुरलीलः, मधुराऽऽस्वादनीया लीला यस्य तादृशः । मतिमानतत्ववृत्तिः, मतिमानयोस्तत्त्वेन याथायर्थेन वृत्तिर्वर्तनं यस्य सः, मतिः शास्त्रादिनिर्णायिका वस्तुतत्त्वावधारणक्षमा वा बुद्धिः । प्रतिपदपक्षाग्रणीः, प्रतिपदं पक्षः सहायस्तेषां पक्षो बलं येषां तेषां वाऽग्रणीः । 'पक्षस्तु मासार्धे गृहसाध्ययोः ॥ चुल्लीरन्ध्रे बले पार्श्वे वर्गे केशात् परश्च ये ॥ पिच्ये विरोधे देहाङ्गे सहाये राजकुञ्जरें ।' इति हैमः । भवान् । विभाति ॥' इति अत्र पदभङ्गे विरोधः, स च यथा तिग्मरुचिर्यः स एव रुचिरप्रतापः, यो विधुः, स न निशाकृदिति, यो मधुः (वसन्तः) सोऽलीलः (केलिशून्यः), यो मतिमान्, सोऽतत्त्ववृत्तिः, प्रतिपत् पक्षस्यादिमा तिथिः पुनरपक्षाग्रणीरिति । अस्य चापि नानोक्तत्वादनित्यत्वमेवेति । यत्तु केनापि 'विभो निष्प्रभो विभातीति विरोध इति व्याख्यातं, तन्न सत्, तस्य पदाभङ्गसम्बन्धित्वेनारमणीयत्वात् । पदानां चैषां परिवृत्त्यसहत्वेन शब्दशक्तिमूलोऽयं विरोधाभासः । पद्यमिदं च कस्यापि राज्ञः प्रतापवर्णनपरम् ।

वस्त्वलङ्कारयोरेकत्रापि ध्वनिः सम्भवति, यथा-'शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र ! यस्मै त्वम् । यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥' इत्यत्र । अस्यायमर्थः-'हे नरेन्द्र ! यस्मै यं विनाशयितुम् । कुप्यसि क्रुद्धोभवसि । तमन्तिकान्तकम् । शनिः शनैश्वरः । च पुनः । अशनिर्वज्रम् । 'दम्भोलिरशनिर्द्वयोः ।' इत्यमरः । उच्चैरत्यन्तमुद्यम्य । निहन्ति । यत्र यदुपरि । पुनः । प्रसीदसि प्रसन्नतां प्रकटयसि । सः । उदारो महान्, 'उदारो दातृमहतोः' इत्यमरः । च पुनः । अनुदारोनोद्गगता दारा यस्य सः, अप्रवासी, नोदारो दातृर्वीरो वा यस्मात सः । भाति ॥' इति । अत्र च विरोधो यथा—शनिस्तद्विरुद्धोऽशनिः, नञ्: 'असुन्दराक्षा' दाविव 'तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता । अप्राशस्त्यमभावश्च नञर्थाः षट् प्रकीर्तिताः ॥' इत्युक्तदिशा विरोध्यर्थकत्वात् । तथा-उदा-

रस्तद्विरुद्धोऽनुदारः, नोदार इति पूर्ववत्। अथैवं विरुद्धार्थकत्वेन प्रतीयमानयोरपि शन्यशन्योर्हननक्रियाकृत्त्वान्वया 'द्विरुद्धौ द्वावपि शन्यशनी त्वदर्थं हननरूपमेकमेवाविरुद्धं कार्यं कुरुत' इति वस्तु शब्दशक्तिमूलं ध्वन्यते पूर्वभागे, उदारानुदारयोः पुनर्भानकर्तृतत्पदार्थ विशेषणयोस्तत्प्रकारविर्शेषणयोर्वा साक्षाद्भानकर्तृत्वान्वयाभावादेककार्यकारित्वासम्भव इति विरोध एव स्फुटमाभासते, विरुद्धार्थकत्वेन तयोः प्रतीतेः शब्दशक्तिमूलत्वाच्छब्दशक्तिमूलत्वं विरोधाभासस्योत्तरभागे। इति।

अत्राहु रसगङ्गाधरनिर्मातारः-'काव्यप्रकाशे तु-'शनिरशनिश्च तमुच्चै।' इत्यादिकमुदाहृत्य 'अत्र विरुद्धौ द्वावपि त्वदनुवर्त्तनार्थमेकं कार्यं कुरुतः। इति ध्वन्यते' इत्युक्तम्। तच्च-'द्वौ शन्यशनी उदारानुदारौ चैकं कार्यं हननं भानं च' इति व्याख्यातम्। तत्र शन्यशन्योर्हननक्रियाकर्तृत्वान्वयेऽप्युदारानुदारयोर्भानकर्त्तृतत्पदार्थविशेषणयोस्तत्प्रकारविशेषणयोर्वा साक्षाद्भानकर्तृत्वान्वयाभावात् कथमेककीर्यकारित्वं सङ्गतं स्यात्। अतो विरुद्धौ द्वावित्यादिप्रथमार्धविषयम्। द्वितीयार्धे तु विरोधाभास एव। कर्त्तर्य्यभेदेनान्वयमात्रेण कुरुत इत्यस्योपपत्तिश्चेत्! अस्तु द्वितीयार्धेऽपि विरुद्धो द्वावित्यादि वस्तु व्यङ्ग्यम्। परन्त्वर्थद्वयेऽपि विरोधाभासालङ्कारशबलितमेव। शत्रुविरुद्धस्य शत्रुत्वासम्भवादेकस्य शन्यशनिकर्तृकहननकर्मत्वायोगेनाद्यार्धे उदारत्वानुदारत्वयोरेकाधिकरणवृत्तित्वायोगाद् द्वितीयार्धे च विरोधस्य स्फुटत्वात्।' इति।

शब्दशक्तिमूलो विरोधासालिङ्गितस्य व्यतिरेकस्य ध्वनिर्यथा-'खं येऽत्युज्ज्वलयन्ति लूनतमसो ये वा नखोद्भसिनो ये पुष्णन्ति सरोरुहश्रियमपि क्षिप्ताब्जभासाश्च ये। ये मूर्धस्ववनासिनः क्षितिभृतां ये चामराणां शिरांस्याकामन्त्युभयेऽपि ते दिनपतेः पादाः श्रियै सन्तु वः॥' इत्यादौ। अस्यार्थः-ये। लूनतमसो लूनं छिन्नं विनाशितमिति यावत्तमीन्धकारो यैस्ते। खमाकाशम्। उत्युज्ज्वलयन्ति। वाऽथवा। ये। नखोद्भासिनो नखैरुद्भासन्त इति तथाभूताः। ये। सरोरुहहश्रियम्। अपि। पुष्णन्ति। च। ये! क्षिप्ताब्जभासाः क्षिप्ताअब्जभासा चन्द्रस्य कान्तयो यैस्ते, 'अब्जोऽस्त्री शङ्खे ना निचुले धन्वन्तरौ च हिमकिरणे। क्लीब पद्मे' इति विश्वः। ये। क्षितिभृतां पर्वतानाम्। मूर्धसु शिखरेषु। अव भासिनः। च। ये। अमराणां देवानाम्। शिरांसि। आक्रामन्ति, तैरेतेषां वन्द्यमानत्वात्। ते तथाभूताः। दिनपते सूर्यस्य। उभये। अपि। पादाश्चरणानि किरणा वा, 'पादो बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते। चरणे च मयूखे चे' ति मेदिनी। बो युष्माकम्। श्रियै। सन्तु॥' इति। अत्र च-ये खमत्युज्ज्वलयन्ति ते खोद्भासिनो न। ये च खोद्भासिनो न ते लूनतमसः। यच्च न वृक्षाङ्कुराद्ययितं तस्यैव लवनक्रियाकर्मत्वेनाभिधानविषयत्वम्। ये सरोजलक्ष्मीं वर्धयन्ती ते एव क्षिप्ताब्जभासाः सरोजलक्ष्म्या अवमातारः। ये क्षितिभृतां राज्ञां मूर्धस्ववभासन्ते ते पुनरमाराणां शिरस्तु स्थायिनः। यो दिनपतिः स एवादिनपतिः तस्य ये दक्षिणाः पादाः श्रियै तस्यैव वामास्ते। इति विरोधः। अपि नाचानुक्तत्वाद् व्यङ्ग्यः। अथ-ये यदत्युज्जवलयन्ति तत् किमपि वस्तु नयनविषयताभाजनम्, न तु शून्यम्, अत एतादृशस्यापि खस्यात्युज्ज्वलकर्त्तृत्वेन प्रसिद्धोपमानेभ्य एषां व्यतिरेकः, तथा-ये च ग्रहाः खमुज्ज्वलयन्ति ते स्वधाम्ना न तु नखैरित्यप्येतेषां तेभ्यो व्यतिरेकः, येषां च कमलोल्लासकर्त्तृत्वं न तेषां तदभाव इत्यपि द्वादशादित्येभ्य उपमानेभ्य एतेषां सुधारकरत्वस्यापि सम्भूत्या व्यतिरेकः, भूयिष्ठानामपि भूभृतां ये शिरोमणयः ते भूभिमस्पृशतामेव देवानां शिरांस्याक्रमन्तीत्याक्रमणकृद्भयः प्रसिद्धेभ्य उपमानेभ्य एतेषां व्यतिरेक इत्येवमस्य तत्तच्छब्दशक्तिमूलं ध्वनित्वमसेयम्। नन्वस्य कविगतदिनकरचरणविषयकरतिभावोत्कर्षकतया गुणीभूतस्य कथं ध्वनिव्यपदेशहेतुत्वं? प्रधानस्यैव व्यङ्ग्यस्य ध्वनिव्यपदेशहेतुत्वादिति चेत्त, वाच्यापेक्षया प्राधान्यमात्रेण तद्ध्वनित्वानतिरोहितत्वात्। इति।

ननु उपमादेरेतस्य व्यङ्ग्यस्य प्रधानतयाऽलङ्कार्याणां कथं सम्भवत्यलङ्कारत्वमित्यत आह **व्यङ्ग्यस्ये-त्यादि** ।

**'ब्राह्मणश्रमणन्यायाद्ब्राह्मणोऽसौ'** श्रमणो बौद्धसंन्यासीति तस्य' न्यायो नीतिः परिपाटीति यावत् **तस्मात्** । यथा- कश्चिद् ब्राह्मणो बौद्धमतमवलम्ब्यावैधं गृहीतसंन्यासः, तस्य पुनस्तदानी ब्राह्मणत्वाभावेऽपि तमुद्दिश्य लोकैब्राह्मणोऽयं श्रमण इति, श्रमणोऽयं ब्राह्मण इत्येक्वा तत्पौर्वकालिकं ब्राह्मणत्वमनुस्मृत्य व्यवह्रियते तथेति भावः । **व्यङ्ग्यस्योपमादेरिति** शेषः । **अलङ्कार्यत्वे**ऽलङ्कर्तुमुचितत्वे । अपि । **अलङ्कारत्वमलङ्करणक्रियाक-र्तृविषयत्वम्** । **उपचर्यते** उपचाराद् व्यवह्रियते, वाच्यताकालिकमलङ्कारत्वमादायैव व्यङ्ग्यतादशायामपि तस्य तथा व्यवहारः । इति ।

**वस्तु वालंकृतिर्वापि द्विधार्थः संभवी स्वतः ॥ ७ ॥**
**कवेः प्रौढोक्तिसिद्धो वा तन्निबद्धस्य चेति षट्।**
**षड्भिस्तैर्व्यज्यमानस्तु वस्त्वलंकाररूपकः ॥ ८ ॥**
**अर्थशक्त्युद्भवो व्यङ्ग्यो याति द्वादशभेदताम्।**

---

## विवृतिः

अर्थशक्त्युद्भवं व्यङ्ग्यमाह—**वस्तु इति**। द्विविधोऽर्थः पुनस्त्रैविध्येन षट्प्रकारो भवतीत्याह—**संभवीति**। स्वतः संभवतीत्यन्वयः।

तन्निबद्धश्य कविवर्णितस्य वक्तुः। 'प्रौढोक्तिसिद्धः' इत्यनुषज्यते। षट् षट्प्रकारः।

## विवृतिपूर्तिः

**संभवतीति**। य औचित्येन बहिरपि संभाव्यमानसद्भावः, न केवलं भणितिवशेनैवाभिनिष्पन्नशरीरः ॥

**प्रौढोक्तीति**। प्रौढोक्तिसिद्धः, बहिरसन्नपि वक्तृप्रतिभामात्रेण तथा कल्पितः। 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति न्यायादिति भावः। अयमर्थः—व्यञ्जकोऽर्थस्त्रिविधः। स्वतः संभवी, कविप्रौढोक्तिसिद्धः, कविनिबद्धनायकादिवक्तृप्रौढोक्तिसिद्धश्च। स त्रिविधोऽपि वस्तुमात्रमलंकृतिर्वेति षड्विधः। षण्णां व्यङ्ग्यमपि प्रत्येकं वस्तु वा अलंकृतिर्वेति द्वादश भेदाः ॥

## विज्ञप्रिया

अर्थशक्त्युद्भवं दर्शयितुं व्यञ्जकार्थस्य वस्त्वलङ्काररूपद्विविधस्य स्वतः सम्भवित्वादित्रैविध्येन षड्विधत्वमाह—**वस्तु वाऽलङ्कृतिर्वेति**। षड्विधव्यङ्ग्यानां द्वादशविधत्वमाह—**षड्भिस्तैरिति**। **बहिरपीति**। शब्दप्रमाणात् बहिः। प्रमाणेनापि सिद्धत्वात् उचितसम्भावन इत्यर्थः। **प्रौढोक्त्येति**—कवितन्निबद्धयोः प्रतिभामात्राधीनोक्त्या इत्यर्थः। **नतु औचित्येनेति**—तस्याऽर्थस्याऽलीकत्वेनौचित्याभावात्।

## लोचन

**वस्तु वेति**—स्वतः सम्भविकविप्रौढोक्तिन्निबद्धवस्तुप्रौढोक्तिसिद्धाभिः वस्त्वलङ्काररूपाभिः षड्विधाभिः व्यञ्जनाभिः व्यङ्ग्ययोर्वस्त्वलङ्कारयोः द्वादश विधत्वेन द्वादशप्रकारमर्थशक्त्युद्भवव्यङ्ग्यध्वनिकाव्यमिति।

## कुसुमप्रतिमा

इदानीमर्थशक्त्युद्भवं ध्वनिं विभजते वस्त्विति। वस्तु अलङ्कारभिन्नः पदार्थो वा अलङ्कृतरलङ्कारो वापि इति द्विधा द्विविधाऽर्थः स्वतः सम्भवी स्वभावसिद्धः, कवेर्वर्णयितुः प्रौढोक्त्या निरङ्कुशकल्पनाबलात् कथनेन सिद्धो वा, तथा तन्निबद्धस्य कविकल्पितस्य जनस्य प्रौढोक्तिसिद्धश्चेति षट् षड्विधो भवति; द्वयो स्त्रीभिर्गुणने

षट् सम्भवादिति भावः । तैः षड्भिर्व्यज्यमानः वस्त्वलङ्काररूपकः वस्तुस्वरूपअलङ्कारस्वरूपश्च अर्थशक्त्युद्भवो व्यङ्ग्योऽर्थः द्वादशभेदतां द्वादशप्रकारतां याति प्राप्नोति । यथा—

(१) स्वतः सम्भविना वस्तुना वस्तुध्वनिः ।

(२) स्वतः सम्भविना वस्तुना अलङ्कारध्वनिः ।

(३) स्वतः सम्भविना अलङ्कारेण वस्तुध्वनिः ।

(४) स्वतः सम्भविना अलङ्कारेण अलङ्कारध्वनिः ।

(५) कविप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः ।

(६) कविप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारध्वनि ।

(७) कविप्रौढिक्तसिद्धेनालङ्कारेण वस्तुध्वनिः ।

(८) कविप्रौढोक्तिसिद्धेनालङ्कारेण अलङ्कारध्वनिः ।

(९) कविनिबद्धजनप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः ।

(१०) कविनिबद्धजनप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिः ।

(११) कविनिबद्धजनप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिः ।

(१२) कविनिबद्धजनप्रौढोक्तिसिद्धेनालङ्कारेण अलङ्कारध्वनिः ।

## विमला

अर्थशक्त्युद्भवं व्यङ्ग्यमाह, वस्त्विति ।—वस्तु वा, अलङ्कृतिः वा इत्येष द्विधा—द्विप्रकारः, अर्थः, स्वतः सम्भवी—समुचिततया बहिरपि सम्भाव्यमानसत्स्वरूपः न हि केवलं वाग्विन्यासेन निष्पन्नात्मा, किन्तु स्वभावसिद्ध इत्यर्थः, कवेः प्रौढोक्त्या सिद्धः—बहिरवर्त्तमानोऽपिकवयितृप्रतिभायोगेन तथा निरूपितः ["अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" ति नयादिति बोध्यम्] तथा सन्निबद्धस्य—कविनिबद्धस्य जनस्य, कविवर्णितस्य वक्तुः इत्यर्थः, च प्रौढोक्तिसिद्धः, इति षट्प्रकारी भवति । तैः षड्भिः व्यज्यमानः—-प्रतीयमानः, अर्थशक्त्या उद्भवः व्यङ्ग्यः, तु—पुनः, वस्त्वलङ्कार रूपकः,—वस्तुरूपो वा अलङ्काररूपो वा इत्यर्थः, द्वादशभेदतां, याति—प्राप्नोति । तथा हि, स्वतः सम्भवी, कविप्रौढोक्तिसिद्धः, कविवर्णितनायकादि (कथयितृ) प्रौढोक्तिसिद्धः, इति भेदेन त्रिप्रकारः; पुनः वस्तुमात्रालङ्कृतिरूपाभ्यां द्विधा भिन्नः षट्प्रकारः, षट्प्रकाराणां प्रत्येकं वस्तुव्यङ्ग्यालङ्कृतिव्यङ्ग्यभेदाभ्यां भिन्नत्वे द्वादशभेदाः इति सारः । ततश्च स्वतः सम्भविना वस्तुना व्यज्यमानो वस्तुरूपव्यङ्ग्य इत्येकः, स्वतः सम्भविना वस्तुना व्यज्यमानो अलङ्काररूपव्यङ्ग्य इति द्वितीयः, स्वतः सम्भविना अलङ्कारेण व्यंज्यमानो वस्तुरूपव्यङ्ग्यः इति तृतीयः, स्वतः सम्भविना अलङ्कारेण व्यज्यमानोऽलङ्काररूपव्यङ्ग्य इति चतुर्थः, कविप्रौढोक्तिसिद्धेन वस्तुना व्यज्यमानो वस्तुरूपव्यङ्ग्य इति पञ्चमः, कविप्रौढोक्तिसिद्धेन वस्तुना व्यज्यमानः अलङ्काररूपव्यङ्ग्य इति षष्ठः, कविप्रौढोक्तिसिद्धेन अलङ्कारेण व्यज्यमानो वस्तुरूपव्यङ्ग्य इति सप्तमः, कविप्रौढोक्तिसिद्धेन अलङ्कारेण अलङ्काररूपव्यङ्ग्य इति अष्टमः, कविनिबद्धव्यक्तिप्रौढोक्तिसिद्धेन वस्तुना व्यज्यमानो वस्तुरूपव्यङ्ग्य इति नवमः, कविनिबद्धव्यक्तिप्रौढोक्तिसिद्धेन वस्तुना व्यज्यमानोऽलङ्काररूपव्यङ्ग्य इति

दशमः, कविनिबद्धव्यक्तिप्रौढोक्तिसिद्धेन अलङ्कारेण व्यज्यमानो वस्तुरूपव्यङ्ग्य इति एकादशः, कविनिबद्धव्यक्तिप्रौढ़ोक्तिसिद्धेन अलङ्कारेण व्यज्यमानोऽलङ्काररूपव्यङ्ग्यः द्वादश इति फलितम्।

## लक्ष्मी

इत्थं शब्दशक्तिमूलं द्विविधं ध्वनिं प्रदर्श्य सम्प्रति अर्थशक्त्युद्भवं दर्शयितुं व्यङ्ग्यार्थस्य वस्त्वलङ्काररूपद्विविधस्य स्वतः सम्भवत्वादित्रैविध्येन षड्विधत्वं दर्शयति—वस्तु वाऽलङ्कृतिर्वेति। वस्तु अलङ्कारभिन्नः पदार्थो वा अलङ्कृतिः अलङ्कारो वापि द्विधा द्विविधोऽर्थः 'व्यञ्जक' इति शेषः। स्वतः सम्भवी स्वभावसिद्धः कवेः काव्यरचयितुः......कविर्वाल्मीकिकाव्ययोः। सूरौ काव्यकरे पुंसि स्यात् खलीने तु योषिति॥' इति मेदिनी प्रोढोक्त्या चमत्कारानुगुणकथनेन सिद्धो वा लोकेऽदृष्टोऽपि कविप्रतिभामात्रेण कल्पित इत्यर्थः (यथा कीर्त्त्यादेर्धावल्यादिः) 'अत्यन्तासत्यपि ह्यर्थं ज्ञानं शब्दः करोति हि' इति न्यायादिति भावः। तथा तन्निबद्धस्य कविकल्पितस्य वक्तुः प्रौढोक्तिसिद्धिश्चेति 'षट्' षट्प्रकारो भवति, उभयोस्त्रिभिर्गुणने षट्त्वमिति भावः।

तैः षड्विधैः व्यज्यमानः व्यञ्जनया प्रतीतिविषयीक्रियमाणः वस्त्वलङ्काररूपकः वस्तुस्वरूपः अलङ्कारस्वरूपश्च अर्थशक्त्युद्भवो व्यङ्ग्योऽर्थः द्वादशभेदतां द्वादशप्रकारत्वं याति प्रतिपद्यते। स्वतःसम्भविककविप्रौढोक्तितन्निबद्धवस्तुप्रौढोक्तिसिद्धाभिः वस्त्वलङ्काररूपाभिः षड्विधाभिः व्यञ्जनाभिर्व्यङ्ग्ययोर्वस्त्वलङ्कारयोः द्वादशविधत्वेन द्वादशप्रकारमर्थशक्त्युद्भवव्यङ्ग्यध्वनिकाव्यमिति बोध्यम्। तथा च—

(१) स्वतः सम्भविना वस्तुना वस्तुध्वनिः।

(२) स्वतः सम्भविना अलङ्कारेणा वस्तुध्वनिः।

(३) स्वतः सम्भविना वस्तुना अलङ्कारध्वनिः।

(४) स्वतः सम्भविना अलङ्कारेण अलङ्कारध्वनिः।

(५) कविप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः।

(६) कविप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिः।

(७) कविप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिः।

(८) कविप्रौढोक्तिसिद्धेनालङ्कारेण अलङ्कारध्वनिः।

(९) कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः।

(१०) कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिः।

(११) कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिः।

(१२) कविनिबद्धवक्तप्रौढोक्तिसिद्धेनालङ्कारेण अलङ्कारध्वनिः।

## रुचिरा

प्रपञ्च्यैवं शब्दशक्तिमूलमर्थशक्तिमूलमपि ध्वनिप्रपञ्चं प्रदर्शयितुमुपक्रमते-२८९ वस्तिस्वत्यादिना।

२८९ **वस्तु** तद्रूष इति यावत्। **वाऽ**थवा। **अलङ्कृति**रलङ्कारस्तद्रूप इति यावत्। वा ॥ इत्यत्र 'वे'ति समुच्चयमाह। **इति**। अस्माद्धेतोदित्यर्थः। **द्विधा** द्विविधः सन्। **अर्थः**। व्यञ्जक इति शेषः। अर्थशक्तिमूलध्वना-वर्थस्यैव व्यञ्जकत्वं स्वतःसिद्धत्वात्। **स्वतः** स्वाभात्वात्। **सम्भवी** सम्भवतीत्येवंशीलः। **वा** तथा। **कवेः** काव्यनिर्मातुः। 'कविर्वाल्मीकिकाव्ययोः। सूरौ काव्यकरे पुंसि स्यात्खलीने तु योषिति ॥' इति मेदिनी। **प्रौढो-क्तिसिद्धः**। प्रौढोक्तिश्चमत्कारानुगुणोक्तिस्तया सिद्धः। **वा**। **तन्निबद्धस्य** तेन कविना निबद्ध उत्तम्भितः प्रदर्शि-तस्वरूप इति यावत् तस्य। प्रौढोक्तिसिद्ध इति पूर्वेणान्वयः। यद्वा—ः। वा। तन्निबद्धस्य। प्रौढोक्तिसिद्धः। इत्यन्वयः। **इत्येवम्**। त्रिधा पुनर्भवन्निति शेषः। **षट्** षड्विधः। **तु** पुनः। **तैः**। **षड्भिः** षड्विधैः। व्यञ्जकेरर्थेरिति शेषः। **व्यज्यमानो** व्यञ्जनयाऽवबोधविषयीक्रियमाणः। **वस्त्वलङ्काररूपको** वस्त्वलङ्कारौ रुपयति निरूपयतीति रुपं यस्येति वा सः। **अर्थशक्त्युद्भवः** अर्थशक्तेरुद्भवतीति तथोक्तः। **व्यङ्ग्यः**। ध्वनिरिति शेषः। **द्वादशभेदतां** द्वादश भेदा यस्य तस्यभावस्तत्ताम्। **याति**। प्रतिपद्यते ॥ २८५ ॥ २८६ ॥

स्वतः संभवी, औचित्याद्बहिरपि संभाव्यमानः। प्रौढोक्त्या सिद्धः, न त्वौचित्येन।

तत्र क्रमेण यथा—

**दृष्टिं हे प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे दास्यसि**

**प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति।**

**एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं**

**नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः॥**

अनेन स्वतः संभाविना वस्तुना मात्रेवै तत्प्रतिपादिकाया भाविपरपुरुषोपभोगजनखक्षतादि-गोपनरूपं वस्तुमात्रं व्यज्यते।

---

## विवृतिः

स्वतः संभविपदार्थं व्याचष्टे—**स्वत इति**। **औचित्याद्** याथार्थ्याद् **बहिरपि** तादृशशब्दातिरिक्तप्रमाणेनापि।

**संभाव्यमानः** प्रतीयमानः। रूपकालंकारे रूप्यरूपकयोरभेदस्यालीकत्वेपि तयोः सादृश्यस्यापि लोकप्रसिद्धत्वे स्वतः संभवित्वम्। अतएव 'अधरोम्लानकमलदलम्' इति रूपकं स्वतः संभवितया कव्यप्रकाशे उक्तम्। धमिल्ले नवमल्लिकासमुदय इति सादृश्याप्रसिद्ध्या प्रौढोक्तिसिद्धं रूपकमुदाहरिष्यति। **प्रौढोक्त्या** वर्णनमात्रेण सिद्धो निष्पन्नवत्प्रतीयमानः। अत्र स्वतः संभविवस्तुव्यङ्ग्यवस्त्वाह—**दृष्टिमिति**। कस्याश्चित्कुलटाया उक्तिरियम्। इह अस्मद्गृहेऽपीत्यपेरन्वयः। स्वगृहे चेति तदर्थः। **कौपीः** कूपभवाः। अत उक्तकारणात्। **नीरन्ध्रा** निरवकाशाः। घना इत्यर्थः। **तनुं** मम शरीरमालिखन्तु खण्डयन्तु। **जरठः** कठिनः **छेदो**ऽग्रभागो येषां ते। नलस्य ग्रन्थयः पर्वाणि॥ व्यङ्ग्यमाह—**अनेनेति**। वाक्यार्थेनेत्यर्थः। **तत्प्रतिपादिकाया**स्तस्य वाक्यार्थस्य वक्त्रयाः। अयं वाक्यार्थो लोकप्रसिद्ध एव॥

## विवृतिपूर्तिः

**पितेति**। अस्य शिशोः पिता। मत्स्वामीत्यर्थः॥

**स्रोत इति**। तमालाकुलं तमालवनवेष्टितं स्रोतः स्वतोऽम्बुसरणम्। एतेन कूपसलिलापेक्षया स्रोतः सलिलस्योत्कृष्टता प्रतिपाद्यते॥

## विज्ञप्रिया

स्वतः सम्भविवस्तुव्यङ्ग्यं वस्त्वाह—दृष्टिं हे इति। नदीजलानयनवर्त्मनि वने कृतसंकेतायाः कुलटायाः तज्जलानयनच्छलेन जिगमिषोर्भाविनखक्षतसम्वरणोक्तिरियम्। **इहापीति**—स्वगृह इव अस्मद्गृहेऽपीत्यर्थः। अस्य मदीयस्य शिशोः पिता कुलटात्वात् स्वपतित्वेनाऽनुक्तिः। विरसाः स्वादरहिताः कौपीः कूपसम्बन्धिनीः अपः

जलाभिप्रायेण इत्यनेन मम बाध्यादिना अशक्तिदिने पिबतीत्युक्तम्। आलिखन्तु इति, तदा लेखनसम्भावना-सत्त्वेऽपि यास्यामीत्यर्थः। जरठच्छेदाः कठिनच्छिन्नभागाः नीरन्ध्रा अविरलाः। नलग्रन्थयः नलाख्यतृणपर्वदेशाः।

**स्वतः सम्भविनेति**—अस्य श्लोकार्थस्याऽनलीकत्वेन प्रमाणान्तरेणापि गम्यत्वसम्भवात्।

## कुसुमप्रतिमा

मूलस्थस्य स्वतः सम्भवीतिशब्दस्यार्थं विवृणोति स्वत इति। औचित्याद्योग्यत्वात्, वहिरपीत्यपिशब्दात् अन्तरपि, सम्भाव्यमानः सम्भवपरत्वेन ज्ञायमानः। तथा च वाच्यतया स्पष्टभावेन च प्रकाशितो योऽर्थः सर्वैः सम्भवपरत्वेनावबुध्यते स स्वतः सम्भवीत्यर्थः।

प्रौढ़ोक्तिसिद्ध इत्यस्य नियमार्थत्वमाहः प्रौढ़ोक्त्येति। प्रौढ़ोक्त्या कवेर्तिरङ्कुशकल्पनाक्षत्वात् कथनेनैव सिद्धो निष्पन्नः, न तु औचित्येन वास्विकत्वेन। प्रतिवेशिनि! क्षणं मत्रत्यावत्तनकालं यावत् इह अस्मद्गृहेऽपि त्वं दृष्टिं दास्यसि। यथा कुर्कुरादयः प्रविश्य क्षतिं न कुर्वन्तीति भावः। त्वं कुत्र यासीत्याह—अस्यदृश्यमानस्य शिशोर्मत्पुत्रस्य पिता मम पतिः प्रायेण बाहुल्येन विरसाः कुस्वादाः कौपीः कुपसम्भवाः अपो जलानि न पास्यति। इतः कारणात् एकाकिन्वपि अर्हसत्वरं तमालाकुलं तमालतरुपरिवृतं स्रोतो नदीं यामि। तत्र च नीरन्ध्रा अत्यन्तघनाः जठरच्छेदाः कठिनाग्राः नलग्रन्थयो नलाख्यतृणपर्वदेशाः तनु मम देहम् आलिखन्तु क्षतविक्षतं कुर्वन्तु। तथाप्यगत्वा का गतिरिति भावः।एतेन पत्यनुवृत्तिरपि दर्शिता।

व्यङ्ग्यार्थं दश यति अनेनेति। स्वतः सम्भविना योग्यत्वाद्बहिरपि सम्भवपरेण, वस्तुमात्रेण नलवनप्रवेशे तद्ग्रन्थिकत्तृकाङ्क्षतविक्षतीकरमरूपेण। एतत्प्रतिपादिकाया अस्यार्थस्य प्रकाशकायाः कुलटायाः।

## विमला

स्वतः सम्भविपदार्तं व्याचष्टे, स्वत इति।—औचित्यात्—याथार्थ्यात्, बहिरपि, सम्भाव्यमानः,—तादृशशब्दातिरिक्तप्रमाणेनाऽपि प्रतीयमानः, रूपकाऽलङ्कारे रूप्यरूपकयोरभेदस्यालौकत्वेऽपि तयोः सादृश्यस्यापि लोकप्रसिद्धत्वे स्वतः सम्भवित्वम्; अत एव "अधरम्लानकमलदलम्" इति रूपकं स्वतः सम्भवितया काव्यप्रकाशे उक्तम्। "धम्मिल्ले नकमल्लिकासमुदयः" इति सादृश्याप्रसिद्ध्या प्रौढ़ोक्तिसिद्धं रूपकमुदाहरिष्यति। प्रौढ़ोक्तिपदार्थमाह, प्रौढ़ोक्त्येति।—प्रौढ़ोक्त्या—वर्णनमात्रेण, सिद्धः,—निष्पन्नवत्प्रतीयमान इत्यर्थः।

तत्र स्वतः सम्भविवस्तुव्यङ्ग्यवस्त्वाह, दृष्टिमित्यादि।—कस्याश्चित्कुलटानायिकायाः कामपि प्रतिवेशिनीं प्रत्युक्तिरियम्। हे प्रतिवेशिनि!—मम गृहान्तिकनिवासिनि! क्षणम्, इह, अस्मद्गृहे, अपि [एतेन स्वगृहे च इति बोध्यते] दृष्टिं दास्यसि, अस्य शिशोः,—बालकस्य, पिता—मद्भर्त्ता इत्यर्थः, विरसाः,—विस्वादाः, कौपीः,—कूपभवाः, अपः,—जलानि, प्रायेण—प्रायः, न तु सर्वदेति भावः, न पास्यति, (अतः) एकाकिनी अपि इतः,—अस्मात् प्रदेशात्, सत्वरं, तमालाकुलं—तमालवनवेष्टितं स्रोतः,—नदीमित्यर्थः, यामि—गच्छामि, नीरन्ध्राः,—निविड़ाः, निरवकाशा इत्यर्थः, जठरच्छेदाः,—जठरः,—कठिनः, छेदः—अग्रभागो येषां ते, नलग्रन्थयः,—नलानां—तृणविशेषाणां, ग्रन्थयः,—पर्वाणि, तत्तुं—शरीरम्, आलिखन्तु—अद्ध्यन्तु, खण्डयन्तु इति यावत्; न ततो मे काऽपि क्षतिरिति भावः। विज्जकायाः पद्यमिदम्। शार्दूलविक्रीड़ितं वृत्तम्।

व्यङ्ग्यमाह, अनेनेति।—अनेन—वाक्यार्थेन, वाक्यर्थद्वारेति भावः, स्वतः सम्भविना—स्वभावसिद्धेन, लोकप्रसिद्धेन इतियावत्, वस्तुमात्रेण—अनलङ्कारेण वस्तुना, तद्द्वारेति यावत्, एतत्प्रतिपादिकायाः,—एतस्य वाक्यार्थस्य वक्त्याः, भाविपरपुरुषोपभोगजनखक्षतादिगोपनरूपं—भावो यः परपुरुषकर्तृक उपभोगः,—अधरपानादिस्तस्माज्जायते यत्तथाभूतं नखक्षतादि तस्य यद्गोपनम्—आच्छादनं तद्रूपं, वस्तुमात्रम्, [मात्रपदेनालङ्कारसम्भवव्यवच्छेदः सूच्यते] अस्या नायिकाया वैशिष्ट्यादिति शेषः, व्यज्यते—ध्वन्यते।

## लक्ष्मी

मूलस्थस्वतः सम्भवि-प्रौढोक्तिसिद्धपदयोः क्रमात्तात्पर्यं प्रदर्शयति—स्वतः सम्भवीति। औचित्याद् याथार्थ्याद् बहिरपि तादृशशब्दातिरिक्तप्रमाणेनापि अपिना अन्तरपि सम्भाव्यमानः प्रतीयमानः 'अर्थ' इति शेषः। तथा च वाच्यतया स्फुटभावेन च प्रकाशितो योऽर्थः सर्वैः प्रतीयमानत्वेन ज्ञायते सः स्वतः सम्भवीत्यर्थः। प्रौढोक्त्या कवेः चमत्कारानुगुणकथनेनैव वर्णनमात्रेणेति यावत्, सिद्धो निष्पन्नवत्प्रतीयमानः न त्वौचित्येन वास्तविकत्वेन।

स्वतः सम्भविना वस्तुना वस्तुध्वनिं दर्शयति—दृष्टिं हे इति। नदीजलानयनवर्त्मनि वने कृतसङ्केतायाः परपुरुषेण सह रमणाय तज्जलानयनच्छलेन अभिसरममभिलषन्त्याः कस्याश्चित् कुलटायाः गृहसमीपस्थायिनीं काञ्चित् स्त्रियं प्रति भाविनखक्षतसंवरणोक्तिरियम्। हे प्रतिवेशिनि! सन्निहितगृवासिनि! क्षणं मत्प्रत्यावर्त्तनसमयं यावत्, इहापि स्वगृह इव अस्मद्गृहेऽपीत्यर्थः, 'गृहं गेहोदवसितं वेश्मसद्मनिकेतनम्' इत्यमरः। दृष्टिं दास्यसि यथा विडालादयः प्रविश्योपद्रवं न कुर्युरित्यर्थः। ननु त्वं क्वं व्रजसीत्यत आह—अस्येति। अस्य मदीयस्य शिशोः पिता कुलटात्वात् स्वपतित्वेनानुक्तिः, प्रायेण बाहुल्येन 'प्रायो मरणाशने ज्ञेये मृत्यौ बाहुल्यतुल्ययोः' इति मेदिनी। विरसाः स्वादरहिता अपेया इति यावत् कौपीः कूपभवा अपः सलिलानि न पास्यति। 'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्' इत्यमरः। 'कौपीरप' इत्युक्त्या मम व्याध्यादिना अशक्तिदिने पास्यतीति व्यञ्जितम्। इतः कारणात् एकाकिन्यपि अहं सत्वरं तमालाकुलं तमालैः स्वनामप्रसिद्धैः श्यामरूपैर्वृक्षविशेषैः आकुलमितस्ततो व्याप्तमिति तं तथोक्तम्, 'कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि' इत्यमरः। स्रोतः स्वतोजलनिःस्सरणस्थानम्, 'स्रोतोऽम्बुसरणं स्वतः' इत्यमरः। यामि गच्छामि। तत्र हि नीरन्ध्राः निरवकाशा अत्यन्तघना इत्यर्थः, जठरः कठिनः छेदोऽग्रभागो येषां ते तादृशा नलग्रन्थयः नलाख्यतृणपर्वदेशाः तनुं मम शरीरम् आलिखन्तु खण्डयन्तु। लेखनसम्भावनासत्त्वेऽप्यगत्वा का गतिरित्यतो यामीति भावः। शार्दूलविक्रीडितंच्छन्दस्तल्लक्षणन्तूक्तं प्राक्।

अत्र व्यङ्ग्यार्थं स्पष्टयति—अत्रेति। अनेन वाक्यार्थेन स्वतः सम्भविना लोकप्रसिद्धेन, भर्त्तुः प्रियया कथमपि कदापि वैमनस्यावहं कार्यं न विधेयं सततं तथा विधातव्यं यथा भर्त्ताप्रसीदेदिति तनूलेखनक्लेशं बोधयन्त्यपि तत्र यत इति लोकव्यवहारदृष्टेनेत्याशयः। वस्तुना तद्रूपेण व्यञ्जकेनार्थेनेत्यर्थः। अस्यार्थस्यालङ्कारभिन्नत्वात् वस्तुत्वमवगन्तव्यम्। एतत्प्रतिपादिकायाः एतत्पद्यरूपवाक्यार्थसमर्थयित्र्याः 'कुलटाया' भावि भविष्यद् यः परपुरुषस्य उपभोगः सम्भोगस्तज्जं नखक्षतादि तस्य गोपनरूपं परपुरुषविधीयमानोपभोगस्तदुत्पत्स्यमाननखक्षतादिकेनाऽपि माऽवगम्यतामित्यात्मकमित्याशयः। व्यज्यते प्रतीयते।

## रुचिरा

अथ कारिकास्थयोः स्वतःसम्भवि,-प्रौढोक्तिसिद्ध,-पदयोः क्रमात्तात्पर्यं निर्दिशति-**स्वतः सम्भवी**त्यादिना।

**औचित्याद** याथार्थ्यात्। **बहिरनन्तर्देशे** लोके इति यावत्। **अपि**। न केवलं प्रौढोक्त्येति भावः। **सम्भाव्यामनः** सम्भाव्यते सम्भवं प्रतिनीयते इति तथाभूतः। 'अर्थ' इति शेषः। **स्वतःसम्भवी** तत्प्रदवाच्य इति यावत्। अथ-**प्रौढोक्तिसिद्धः** प्रौढोक्त्या सिद्धो निष्पन्नशरीरः। **न। तु। औचित्येन** याथार्थ्यात्स्वतः सम्भविवद् बहिरपि सम्भाव्यमानोऽर्थ इति यावत्। 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि।' इति न्यायात् प्रौढोक्तिमात्रेण सम्भवं नीत इति भावः।

अत्रायं पर्यालोकः-अर्थशक्त्युद्भवो नाम ध्वनिः, तत्र तावदर्थो व्यञ्जकः, वस्त्वात्माऽलङ्कारात्मा चेति द्विविधः। द्विविधोऽसौ पुनः स्वतः सम्भवी, कविजनप्रौढोक्तिसिद्धः, कविजनोत्तम्भितनायकादिप्रौढोक्तिसिद्धश्चेति त्रिगुणितः षोढा भवति। तथा च-वस्त्वात्माऽर्थः स्वतःसम्भवी, कविप्रौढोक्तिसिद्धः, कविनिबद्धनायकादिप्रौढोक्ति-सिद्धश्चेति त्रिविधः, अलङ्कारात्माऽप्येवं स्वतः सम्भवी, कविप्रौढोक्तिसिद्धः, कविनिबद्धनायकादिप्रौढोक्तिसिद्ध-श्चेति त्रिविध इति षट्प्रकारोऽर्थः। इति। षद्भिश्चार्थस्यः प्रकारैर्व्यज्यमानो वस्त्वात्माऽलङ्कारात्मा च व्यङ्ग्यो द्वादशप्रकारः सम्पद्यते निर्बाधम्। ,ननु कवि-तन्निबद्धवक्तृप्रौढोक्तिनिष्पन्नयोरर्थयोः पार्थक्येनाभिधानं न न्याय्यम्। कविनिबद्धतन्निबद्धादेरपिभेदान्तरप्रयोजकत्वापत्तेः। न च तस्यापि कविनिबद्धत्वानपायात् तत्प्रयोज्य-प्रभेदान्तर्गतत्वमेव युक्तमिति वाच्यम्। प्राङ्निवद्धप्रौढोक्तिविद्धस्यापि रमणीयवर्णननिणपुत्वलक्षणविप्रौढोक्ति-सिद्धत्वानपायात् कविनिबद्धप्रौढोक्तिसिद्धस्याप्यर्थस्य कविप्रौढोक्तिसिद्धप्रकारत्वस्यैवापातादिति चेत्? वृद्धोक्तिविषयादर्भकोक्तिविषय इव कविजनाभिधानविषयात् कविनिबद्धाभिधानविषये चमत्कृत्यतिशयत्वानु-भविकत्वात् तयोः पार्थक्यमेव न्याय्यम्। अथ प्रणिधानसाध्यप्रतीतिकतया चमत्कृतेः स्थगनान्न कविनिबद्धतन्नि-बद्धादिप्रौढोक्तिसिद्धस्य पार्थक्येनाभिधानम्। इति।

अथैतान् क्रमादुदाहरन्नाह-**तत्रे**त्यादि।

**तत्र** तेषु तथाविधेषु द्वादशस्वर्थक्त्युद्भवस्य ध्वनेः प्रभेदेषु सत्स्विति यावत्। **क्रमेण** क्रमवशादुदाहृत्त-व्यत्वेन प्राप्तेनेत्यर्थः स्वतः सम्भविना वस्त्वात्मना व्यञ्जकेनार्थेन वस्तुनो ध्वनिरिति शेषः। **यथा-'दृष्टिं-'** इत्यादौ।

'हे **प्रतिवेशिनि** सन्निहित-गृहवासिनीत्यर्थः। प्रतिवेश आसन्नगृहमधिष्ठितत्वेनास्या अस्तीति तत्स-म्बुद्धौ तथोक्ते! **त्वम्। इहास्मिन्। अस्मद्ग्रहे**ऽस्माकं गृहमिति तत्र। 'गृहं गेहोदवसितं वेश्म सद्म निकेतनम्।' इत्यमरः। **अपि**। स्वगृहे तु निश्चितमेव। **दास्यसि** प्रदास्यसि निधास्यसीति यावत्। किमित्यत् आह-**अस्य। शिशोरर्भकस्या पिता**। अर्थात् मत्स्वामी। **प्रायेण** बाहुल्येन। 'प्रायो मरणानशने मृत्यौ बाहुल्यतुल्ययोः।' इति मेदिनीकरः। **विरसा** विगतो रसो यासां ताः, नीरसा इत्यर्थः अपेया इति भावः। **कौपीः** कूपे भवा इति ताः। कूपसम्बन्धिनीरित्यर्थः। **अपो** जलानि। 'आप स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्।' इत्यमरः। **पास्यति**। अतः-**एकाकिन्यै**कैवेति तथोक्ति। 'एकादाकिनिञ्चासहाये।' ५/३/५२। इत्याकिनित्। **अपि**। अहमिति शेषः। **सत्त्वरं** शीघ्रम् **इतो**ऽस्मात्। गृहादिति शेषः। **तमालाकुलं** तमालैः स्वनामख्यातैः श्यामर्णैर्वृक्षविशेषैराकुलमित-स्ततौ व्याप्तमिति तत्। 'कालस्कन्धस्तमालः स्यात्तापिच्छोऽपी' त्यमरः। **स्रोतः** स्वतो जलनिः सरणस्थानम्। 'स्रोतोऽम्बुसरणं स्वतः।' इत्यमरः। **यामि** गच्छामि। **नीरन्ध्रा** निर्गतच्छिद्रा निबिडा इति यावत्। **जरठच्छेदाः**। 'जरठः कठिनश्छेदोऽग्रभागो येषां ते' इति विवृतिकाराः। **नलग्रन्थयो** नलानां ग्रन्थयः पर्वाणीत्यर्थः। **तनुं** शरीरम्। **आलिखन्तु** खण्डयन्तु।' पद्यमिदं कस्याश्चन कुलटायाः कामपि स्ववेश्मसमीवेश्मवासिनीं प्रति प्रतारणोक्तिप-रम्। अत्र च च्छन्दःशार्दूलबिक्रीडितं नामः। उक्तं च तल्लक्षणं प्राक्। अत्रायम्भावः-यत्र वहन्ति सरमानि जलानि तत्र निबिडास्तमाला मेद्रुरितस्तत्रत्यश्च प्रदेशः, प्रसृतं च नयनपिधायकं तिमिरम्, अथं तत्र गात्रविदारकानलास्तेषां

पत्राणि पर्वाणि च स्पृश्यमाणान्यतीव दुःसहानि तानि मम सर्वं शरीरं विदीर्णमपि करिष्यन्ति, कुर्वन्तु नाम, भाव्येवैवम्भूतम्, अहं चैकैव सरसपेयजलसम्भृतं स्रोतश्च कृष्णपक्षीयनिशीथायमानम्, अथापि गच्छापि किमत्रा-न्यत् कुर्याम्, न हि शिशोरेतस्य पिता मम प्राणनाथो नीरसानि कूपजलानि पिबति, शिशुमेवं च तत्र कथं नयेयं, भयेनैवायं व्यापद्येत, इति तावदत्रैव क्रीडतु स्वपतु वाऽयं यथासाध्यं सत्त्वरमेव प्रत्यागमिष्यामि, गमनमप्येवं तत्रावश्यं मया कार्यमेव, किन्त्वेतद्गृहं शून्यं, प्राणनाथश्च नात्र यद्यागच्छेदसौ निवर्तनीयस्तस्य दुर्विचारः शिशुरयं चैकाकीति निरीक्षणं यावत्प्रत्यागमनं कृपया कार्यमिति पिधित्सतीहितस्य भाविदृश्यं काऽपि कुलटा निजवेश्मोप-वासिनी प्रति प्रतारणात्मिकयोक्त्येति ।'

अत्र व्यङ्ग्यमाह- **अत्रे**त्यादिना ।

**अत्रास्मिन्**नुदाहृते पद्ये इति यावत् । **स्वतःसम्भविना** लोकप्रसिद्धेन । पत्युः प्रियया कथमपि न वैमनस्या-वहं कदाऽपि कार्यं शश्वदेव तथा तथा यतितव्यं यथा पतिः प्रसीदेदिति शरीरविदरणीभावक्लेशं जानन्त्यपि तत्र यते इति लोकव्यवहारदृष्टेनेति भावः । **वस्तुना** । तद्रूपेण व्यञ्जकेनार्थेनेत्यर्थः । वस्तुत्वं पुनरेतस्यार्थस्यानलङ्कार-त्वात् । **एतत्प्रतिपादिकाया** एतस्यैतत्पद्यरूपवाक्यतदर्थस्येति यावत्, प्रतिपादिका समर्थयित्री तस्याः । **भाविपर-पुरुषोपभोगजनखक्षतादिगोपनरूपं** भावि भविष्यद् यत् परपुरुषस्य य उपयोगस्तज्जं नखक्षतादि तस्य गोपनं विधानं तद्रूपम् । परपुरुषकारिष्यमाणोपभोगतज्जनिष्यमाणनखक्षतादि, केनापि मा ज्ञायतामित्यात्मकमिति भावः । **वस्तु । व्यज्यते** ध्वन्यते ।

**दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि।**

**तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥**

अत्र स्वतः संभविना वस्तुना रवितेजसो रघुप्रतापोऽधिक इति व्यतिरेकालंकारो व्यज्यते।

---

## विवृतिः

स्वतः संभविवस्तुव्यङ्ग्यालंकारमाह—**दिशीति**। मन्दायते मृदूभवति। एवकारोऽप्यर्थे। उपमानादुपमेयस्याधिक्यं न्यूनत्वं वा व्यतिरेकस्तस्य व्यङ्ग्यत्वम्। प्रकृतोपयोगिप्रकर्षयोरन्यतरस्य बोधाभिप्रायेण प्रयुक्तधर्मस्य तत्प्रकारत्वासंभवेन तद्बोधानुपपत्त्या निरुक्तधर्मव्यङ्ग्यकारणमुखेन तद्बोधपपत्तौ भवति। दिशीत्यादौ रवितेजसो मार्दवयुक्तो यो निकर्षस्तस्यासह्यत्वप्रयुक्तरघुप्रतापगतप्रकर्षनिरूपकत्वाभावात्प्रकृतानुपयोगितया मार्दवव्यङ्ग्यसह्यत्वेन प्रकृतोपयोगिनिकर्षप्रत्यायनाद् व्यतिरेकस्य व्यङ्ग्यत्वम्॥

## विज्ञप्रिया

स्वतः सम्भविवस्तुव्यङ्ग्यमलङ्कारमाह—**दिशीति**। पाण्डयाः पाण्यडयदेशीयाः राजानः। व्यतिरेकालङ्कार इति उपमानात् रवितेजसो रघुप्रतापस्याधिकरूपः। सच व्यङ्ग्य एव असहनेनैव तत्प्राप्तेः।

## कुसुमप्रतिमा

२—स्वतःसम्भविना वस्तुना अलङ्कारध्वनिमुदाहरति दिशीति। रघुवंशे रघोर्दिग्विजयवणनमिदम्। दक्षिणस्यां दिशि रवेः सूर्यस्यापि तेजो मन्दायते मन्दं भवति। दक्षिणायनस्वभावादिति भावः। किन्तु तस्यामेव दिशि पाण्ड्याः पाण्डुदेशीया राजानः रघोः प्रतापं न विषेद्विरे सोढुं न समर्था बभूवुः। सूर्यविजयिनामपि विजयी रघुरिति भावः।

व्यङ्ग्यं प्रतिपादयति अनेनेति। स्वतःसम्भविना दक्षिणायने सम्भवपरेण, वस्तुना रवितेजसो मन्दत्वरूपेण। अथवा रघोरद्वितीयवीरत्वयोग्यत्वात् सम्भवपरेण तत्प्रतापस्य पाण्डयैरसह्यत्वरूपेण।

## विमला

स्वतः सम्भविवस्तुव्यङ्ग्यलङ्कारमाह, दिशीति।—दक्षिणस्यां दिशि, रवेः,—सूर्यस्य, अपि तेजः, मन्दायते—मन्दीभवति, मृदूभवतीत्यर्थः, पाण्ड्याः,—तदाख्यक्षत्रियभेदाः, तस्यामेव—दक्षिणस्यामपि (अत्र एवकारः अप्यर्थे) दिशि रघोः प्रतापं—दण्डजः तेजः, ("स प्रतापः प्रभावश्च यत्तेजः ाशदण्डजम्" इत्यमरः) न विषेद्विर—न सोढुं शक्ता आसन् इत्यर्थः। रघुवंशस्येदं पद्यम्।

अनेनेति।—अनेन—निरुक्तवाक्यार्थद्वारकेण, स्वतः सम्भविना—दक्षिणायनेऽपि प्रभावाधिक्यवर्णनावष्टम्भेन अवश्यम्भाविनेत्यर्थः, वस्तुना—रवितेजसो मन्दीभावेनेत्यर्थः, व्यतिरेकः,—उपमानादुपमेयस्याधिक्यं, न्यूनत्वं वा, व्यज्यते—ध्वन्यते, तस्य व्यङ्ग्यत्वञ्च प्रकृतीपयोगिप्रकर्षनिकर्षयोरन्यतरस्य बोधाभिप्रायेण प्रयुक्तधर्मस्य तत्प्रकारत्वाऽसम्भवेन तद्बोधानुपपत्त्या निरुक्तधर्मव्यङ्ग्यकारणमुखेन तद्बोधोपपत्तौ भवति, दिशीत्यादी

पुनः रवितेजसो मार्दवयुक्तो यो निकर्षः तस्यासह्यत्वप्रयुक्तरघुप्रतापगतप्रकर्षनिरूपकत्वाभावात् प्रकृतानुपयोगितया मार्दव्यङ्ग्यसह्यत्वेन प्रकृतोपयोगिनिकर्षप्रत्यायनात् व्यतिरेकस्य व्यङ्ग्यत्वं सम्पन्नमिति भावः ।

## लक्ष्मी

स्वतः सम्भविना वस्तुना अलङ्कारध्वनिं दर्शयति—दिशीति । चतुर्थसर्गे रघुवंशे रघोर्दिग्विजयवर्णनेयम् । दक्षिणस्यां याम्यां दिशि रवेः सूर्यस्यापि तेजो मन्दायते मृदूभवति याम्यायनेहि सूर्यस्य शैत्यप्रवृत्तिस्वभावादिति भावः । परन्तु तस्यामेव दिशि एवकारोऽप्यर्थे, पाण्डयाः पाण्ड्यदेशीयाः राजानः 'पाण्ड्योड्र्यण् वक्तव्यः' इति ड्यण्, रघोः प्रतापं न विषेहिरे क्षन्तुं समर्था न बभूवुः सूर्यजेतसामपि जेता रघुरित्याभिप्रायः ।

व्यङ्ग्यं दर्शयति—अत्रेति । वाक्यार्थेनेत्यर्थः । स्वतः सम्भविना याम्यायने सम्भवपरेण, वस्तुना रवितेजसो मृदुत्वरूपेण व्यञ्जकेनार्थेनेत्यर्थः । व्यतिरेकालङ्कार इति ।

'आधिक्यमुपमेयस्योपमानान्यूनताऽथवा । व्यतिरेकः'

इति वक्ष्यमाणस्वरूपोऽर्थालङ्कारविशेषो व्यतिरेकः प्रकृते च उपमानात् । रवितेजस उपमेयस्य रघुप्रतापस्याधिक्यं व्यतिरेकः स च व्यङ्ग्य एव असहनेनैव तत्प्राप्तेः ।

## रुचिरा

अथानेनालङ्कारध्वनिमुदाहरति-'दिशी—' त्यादिना ।

'**रवेः** सूर्यस्य प्रचण्डतेजोनिधानस्येति यावत् । **आपि** । किं पुनरन्यस्य । **तेजः** प्रतापः । **दक्षिणस्याम्** । यस्यामिति शेषः । **दिशि** दिशायाम् । **मन्दायते** । अमन्दमपि मन्दमिव जायते । दक्षिणायने हि सूर्यस्य शैत्यप्रवृत्तेः । 'कर्तुः क्यङ् सलोपक्ष्य ।' ३/१/११ इति क्यङ् । 'मन्दं भवती' त्यर्थे तु 'लोहितादडाज्भ्यः क्यष् ।' ३/१/१३ । इति क्यष् । **तस्याम्** । **एव** न त्वन्यस्यां दिशीति भावः । **रघोः** स्वाभिधानधन्यस्य महाराज्य । **प्रतापं** तेजः । **पाण्ड्याः** पाण्डूनां तदाख्यानां जनपदानां राजान इति तथोक्ताः । 'पाण्डोडर्यण् वक्तव्यः ।' इति ड्यण् । **न** नैव । **विषेहिरे** नितान्तं सोढवन्तोऽभुवन् । इदं पद्यं रघुवंशे चतुर्थे सर्गे रघोर्दक्षिणदिगविजयवर्णनम् ।' अनुष्टुप् च छन्दः ॥ १७७ ॥'

अत्र व्यङ्ग्यमाह-**अत्रे**त्यादिना ।

**अत्रा**स्मिन्नुदाहृते पद्ये इति यावत् । **स्वतःसम्भविना** लोकदृष्टेन । सूर्यस्य तेजो दक्षिणायने म्रदिमानम्प्रतिपद्यते, दक्षिणायनं दक्षिणां दिशं प्रत्ययनमिति, तत्रैव पुना रघोस्तेजोऽसह्यमासीत्तत्रत्यानाम्, न हि निर्बलाः प्रबलस्यौजः सोढुं प्रभवन्ति, निर्बलाश्च तत्रत्याः इति लोकस्थित्यनुकूलेनेति भावः । **वस्तुना** । तद्रूपेण व्यञ्जकेनार्थेनेत्यर्थः । **रवितेजसो** रवेः सूर्यस्य तेजस्तस्मात्तदपेक्षयेत्यर्थः । **रघुप्रतापो** रघोः प्रतापस्तेजः प्रतापस्तापनेजसीः ।' इति मेदिनी । **अधिकः** प्रकृष्टः । **इत्येवम्** । **व्यतिरेकालङ्कारः** । 'आधिक्यमुपमेयस्योपमानान्यूनताऽथवा ॥ व्यतिरेकः-' इति वक्ष्यमाणस्वरूपोऽर्थालङ्कारविशेषः । **व्यज्यते** ध्वन्यते । तेजसोत्कृष्टो हि लोके सूर्येणोपमीयते इति लोकप्रतिद्धया सूर्यस्योपमानत्वम्, अन्यस्य पुनरुपमेयत्वं सिद्धम्, अथात्र दक्षिणस्यां सूर्यतेजसः सोढव्यत्वोक्त्या रघोश्चासोढव्यत्वोक्त्या सुसिद्धमुपमानादुपमेयस्याधिक्यमित्युपमानादुपमेयाधिक्यं नाम व्यतिरेकः । सोऽपि 'रवेस्तेजजो रघोस्तेजोऽधिक' मित्येवमवर्णितत्वात् प्रतीयत एवेति ।

**आपतन्तममुं दूरादूरीकृतपराक्रमः ।**

**बलोऽवलोकयामास मातङ्गमिव केसरी ॥**

**अत्रोपमालंकारेण स्वतः संभविना व्यञ्जकार्थेन बलदेवः क्षणेनैव वेणुदारिणः क्षयं करिष्यतीति वस्तु व्यज्यते ।**

---

## विवृतिः

स्वतः संभव्यलंकारव्यङ्ग्यं वस्त्वाह—**आपतन्तमिति** । अभिमुखमायान्तमित्यर्थः । **अमुं** वेणुदारिणम् । **ऊरीकृतपराक्रमः** स्वीकृतविक्रमः । कृतयुद्धप्रतिज्ञ इति यावत् । **बलो** बलदेवः । विपुलविक्रमत्वेन बलस्य केसरिसादृश्यं मदान्धत्वेन वेणुदारिणो मातङ्गसादृश्यं लोकप्रसिद्धमेव ॥

## विवृतिपूर्तिः

**वेणुदारिण इति** । वेणुदारिसंज्ञको बाणासुरतनयः ॥

## विज्ञप्रिया

स्वतः सम्भव्यलङ्कारव्यङ्ग्यं वस्त्वाह—**आपतन्तममुमिति** । आपतन्तम् आगच्छन्तम् अमुं वेणुदारिनामासुरं रामो बलरामः । वेणुदारिणः क्षयमिति बलोपमानस्य सिंहस्य वेणुदार्युपमानमात्रसंक्षयकारित्वेन तदुपमानोपमेययोरपि तद्धर्मलाभात् ।

## कुसुमप्रतिमा

३—स्वतः सम्भविना अलङ्कारेण वस्तुध्वनिमाह—आपतन्तमिति । शिशुपालवधकाव्यस्योनविंशसर्गेयुद्धवर्णनमिदम् । ऊरीकृतपराक्रमश्चिरमवलम्बितविक्रमः, बलो बलरामः, केशरी सिंहो मातङ्ग हस्तिनमिव दूरात् आपतन्तम् आत्माभिमुखमागच्छन्तम् अमुं वेणुदारिनामानं बाणराजपुत्रम् अवलोकयामास ।

अत्रेति । स्वतःसम्भविना इवशब्दस्य योग्यत्वात् सम्भवपरेण, व्यञ्जकार्थेन व्यङ्ग्यप्रतिपादकेन अर्थेन । वेणुदारिणस्तदाख्यस्य बाणासुरपुत्रस्य । अर्थ विनाशम् ।

## विमला

स्वतःसम्भव्यलङ्कारव्यङ्ग्यवस्त्वाह, आपतन्तमिति ।—ऊरीकृतः,—स्वीकृतः, पराक्रमो येन तथोक्तः, पराक्रमितुमुद्यतः, इत्यर्थः, कृतयुद्धप्रतिज्ञ इति यावत्; बलः,—हलधरः, केशरी—सिंहः, मातङ्गं—गजमिव, (विपुलविक्रमत्वेन बलस्य केशरिसादृश्यं, मदान्धत्वेन वेणुदारिणः मातङ्गसादृश्यं लोकप्रसिद्धमेव) दूरात् आपतन्तम्—अभिमुखमागच्छन्तमित्यर्थः, अमुं—वेणुदारिणं बाणात्मजम्, अवलोकयामास । शिसुपालवधस्येदं पद्यम् ।

अत्रेति ।—स्वतः सम्भविना—लोकप्रसिद्धेन ।

## लक्ष्मी

स्वतः सम्भविना अलङ्कारेण वस्तुध्वनिं दर्शयति—आपतन्तममुमिति । माघकाव्ये एकोनविंशतिसर्गे युद्धवर्णनियम् । ऊरीकृतपराक्रम अङ्गीकृतविक्रमः कृतयुद्धप्रतिज्ञ इति यावत् बलो बलदेवः केशरी सिंहः 'सिहो मृगेन्द्रः पञ्चास्यः हर्यक्षः केशरी हरिः' इत्यमरः । मातङ्गं गजमिव दूरात् आपतन्तं स्वाभिमुखमायान्तम् अमुं वेणुदारिसंज्ञकं वीणासुरतनयम् अवलोकयामास पश्यतिस्म विपुलविक्रमत्वेन बलस्य केशरितुल्यत्वं मदान्धत्वेन वेणुदारिणः मातङ्गतुल्यत्वं सर्वजनवेद्यमेव । अनुष्टुप् छन्दः ।

व्यङ्ग्यमुपपादयति—अत्रेति । स्वतः सम्भविना इवपदस्ययोग्यत्वात् सम्भवपरेण व्यञ्जकार्थेन व्यङ्ग्य-बोथकेनार्थेन तद्द्वारेति यावत् ।

## रुचिरा

अथ स्वतः सम्भविनैवालङ्कारेण वस्तुध्वनिमुदाहरति-**'आपतन्तम्-'** इत्यादिना ।

**'बलो** बलदेवः **ऊरीकृतपराक्रम** ऊरीकृतः स्वीकृतः पराक्रमो योद्धुमुत्साहो येन स सन्नद्ध इति यावत् । 'सन्निति शेषः । **आपतन्तम**भिमुखामागच्छन्तम् । योद्धुमिति शेषः । **अमुं** वेणुदारिनामानम् । **केशरी** सिंहः । **मातङ्गं** हस्तिनम् । **इव । दूरात् । अवलोकयामास** ददर्श । पद्यमिदं शिशुपालवधस्यः । अनुष्टुप् चात्र छन्दः ॥ १७८ ॥'

अत्र व्यङ्ग्यमाह-**अत्रे**त्यादिना ।

**अत्रा**स्मिन्नुदाहृते पद्ये । **स्वतःसम्भविना** लोकप्रसिद्धेन । **उपमाऽलङ्कारेण** । 'मातङ्गमिव केशरी' इत्यत्रे-त्यनेनेति शेषः । तद्रूपेणेति भावः । **व्यञ्जकेन । अर्थेन** । तद्द्वारेति यावत् । **'बलदेवः । क्षणेन** क्षणात् । **एव** न तु द्वित्रक्षणानन्तरम् । **वेणुदारिण**स्तदाख्यस्य बाणासुरपुत्रस्य । क्षयं । विनाशम् । **करिष्यति ।' इति वस्तु । व्यज्यते** ध्वन्यते । विपुलपराक्रमशालितया मदोन्मादसम्भृतता च बलदेववेणुदारिदैत्यपुत्रयोः सिंहमातङ्गाभ्यां सादृश्येनोप-मात्वं लोकप्रसिद्धमेव, उपमानोपमेयसाधारणधर्माणामेवोपमाशरीरघटकत्वात्, अथैवम्भूतेन व्यञ्जकेनार्थेन गजस्य केशरीव बाणतमजस्य बलः क्षणाज्जीवितं स हरिष्यतीति तादृशनिरीक्षणाधाने स्वतोऽवतिष्ठते ध्वन्यमानं वस्तु । इति ।

**गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः ।**

**ओष्ठविद्रुमदलान्यमोचयन्निदर्शन्युधि रुषा निजाधरम् ॥**

अत्र स्वतः संभाविना विरोधालंकारेणाधरो निर्दष्टः शत्रवो व्यापादिताश्चेति समुच्चयालंकारो व्यङ्ग्यः ।

---

## विवृतिः

स्वतःसंभव्यलंकारव्यङ्ग्यमलंकारमाह—**गाढेति**। गाढाकान्तदशनक्षतजन्यव्यथैवं संकटो विपत् तस्मात्। ओष्ठा एव विद्रुमस्य प्रवालस्य दलानि खण्डानि। क्रोधेन निजाधरं निर्दश्य निहते शत्रौ तद्वधूनां कान्तकर्तव्यो रतिकालीनोऽधरदंशो निवर्तत इत्यर्थः। अधरस्य निर्दशनेन व्यथाया उत्पत्तिरेव नं तु मोचनमित्यापाततो विरोधः। आश्रयभेदे त्वविरोध एव। **व्यापादिता** मारिताः। 'धुनोति चासिं तनुते च कीर्तिम्' इत्यादावेकाधिकरणे चैष दृश्यत इति वक्ष्यमाणवदत्र कार्यकारणकालनियमविपर्ययरूपातिशयोक्तिमूलं क्रियायौगपद्यं समुच्चयः। **निर्दशन्निति** वर्तमाननिर्देशात्तत्कालीनमोचनेन तद्धेतुशत्रुव्यापादनस्यापि तत्कालीनत्वलाभः। कार्यकारणयोः शत्रुव्यापादनाधरदंशनयोः समकालत्वं तु बाधितमप्याहार्यप्रतीतिविषय एव शीघ्रकारितांव्यञ्जनमित्यवधेयम्। अत्र समुच्चयार्थकचकाराद्यभावेन शत्रुव्यापादनक्रियया व्यङ्ग्यत्वेन समुच्चयस्य व्यङ्ग्यत्वम् ॥

## विज्ञप्रिया

स्वतः सम्भव्यलङ्कारव्यङ्ग्यमलङ्कारमाह—**गाढकान्तेति**। यो राजा युधि निजाधरं निर्दशन् अरिवधूजनस्य ओष्ठरूपाणि विद्रुमस्य प्रवालस्य दलानि रतकालीनगाढकान्तदशनक्षतव्यथारूपात् संकटादापदोऽमोचयत्। युधि क्रोधेन स्वाधरं निर्दश्य तत्पतिं हत्वा तथा चकारेत्यर्थः। **अत्रेति**—अधरदंशकत्वाधरदंशमोचकत्वयोः वस्तुगत्या अविरोधेऽपि आपततो विरोधस्य आभासमानत्वात् विरोधाभासालङ्कारेण इत्यर्थः। **समुच्चयालङ्कार इति**—द्वयोरेककालोत्पत्तिरूप इत्यर्थः। चकारद्वयस्य समं शब्दस्य वाऽभावात् व्यङ्ग्यएव इत्यर्थः।

## लोचन

**विरोधालङ्कारेणेति**—विरोधमूलेन कार्यकारणपौर्वापर्यविपर्ययरूपेणैवातिशयोक्त्यलङ्कारेणेत्यर्थः। तथा ह्यत्र स्वाधरनिदर्शनं कारणभूतं वैरिस्त्रीणाम् ओष्ठानां च कान्तदन्तक्षतमोचनं कार्यभूतं समकालतया निर्दिष्टम्। किञ्चात्र निर्दंशनरूपक्रूरपिशाचो ममाधरं वलिरूपं प्राप्यान्यानधरान् सुखिनः करोत्विति बुद्ध्वैव निजाधरं दष्टवानिति तस्य राज्ञः बुद्धिमपेक्ष्य उत्प्रेक्षा च। ततश्चात्र समुच्चयोत्प्रेक्षयोरेकाश्रयानुप्रवेशः सङ्करश्च।

## कुसुमप्रतिमा

४—स्वतः सम्भविना अलङ्कारेण अलङ्कारध्वनिमुदाहरति—गाढ़ेति। यो युधि युद्धे रुषा क्रोधेन निजाधरं स्वकीयमोष्ठं निर्द्देशन्, गाढ़ं तीव्रं यत् कान्तस्य भर्तुः दशनक्षतं दशनेन क्षतं तस्मात् व्यथा वेदनैव सङ्कटो

विपत्तिस्तस्मात्, अरिवधूजनस्य शत्रुस्त्रीलोकस्य ओष्ठ एव विद्रुमदलानि रक्ततासाम्यात् प्रवालखण्डानि तानि अभोक्षयत् परित्रापितवान्। शत्रूणां बधेन पुनस्तद्‌र्दशनासम्भवादिति भावः।

अत्रेति। ओष्ठस्य निर्द्दशनेन व्यथाया उत्पत्तिरेव स्यान्न तु मोचनमिति विरोधः, आश्रयभेदात्तु तत्समाधानम्। इत्थञ्च योग्यत्वात् स्वतः सम्भविना सम्भवपरेण। समुच्चयालङ्कारो व्यङ्ग्य इति। कार्य्यकारणयोः पौर्वापर्यविपर्यरूपातिशयोक्तिमूलकक्रियासमुच्चयालङ्कारध्वनिरित्यर्थः।

## विमला

स्वतः सम्भव्यलङ्कारव्यङ्ग्यमलङ्कारमाह, गाढ़ेति।—यः युधि—युद्धे, रुषा—क्रोधेन, निजाधरं निदर्शन् सन्, अरीणां—शत्रूणां, बधूजनस्य ओष्ठः एव विद्रुमः,—प्रवालं, तस्य दलानि—खण्डानि—खण्डानि तानि, गाढ़ं यत् कान्तानां दशनक्षतं—दन्तदंशनक्षतं, तेन या व्यथा सैव सङ्कटः,—विपत्, तस्मात् अमोचयत्—मुक्तानि अकरोत्। क्रोधेन निजाधरं निर्दश्य निहते शत्रौ तद्वधूनां कान्तकर्त्तव्यः रतिकालिकः अधरदंशः निवर्त्तते इत्यर्थः। अधरदंशनेन व्यथा एव जायते, न तु तन्मोचनमित्यापाततो विरोधः, आश्रयभेदे त्वविरोधे एवेति बोध्यम्। रथोद्भता वृत्तं,—"रात् परैर्नरलगै रथोद्वता" इति तल्लक्षणात्।

अत्रेति।—व्यापादिताः,—मारिता इत्यर्थः। "धुनोति चासिं तनुते च कीर्त्तिम्" इत्यादौ पक्षाधिकरणे चैव दृश्यते इति वक्ष्यमाणवदत्र कार्यकारणकालनियमविपर्यरूपातिशयोक्तिमूलं क्रियायौगपद्यं समुच्चयः। निर्दशन्निति वर्त्तमाननिर्देशात् तत्कालिकमोचनेन तद्धेतुशत्रुव्यापादनस्यापि तत्कालिकत्वलाभः। कार्यकारणयोः शत्रुव्यापादनाऽधरदंशनयोः समकालिकत्वं बाधितमपि आहार्यप्रतीतिविषय एव शीघ्रकारिताव्यञ्जनमित्यवधेयम्। अत्र समुच्चयार्थकक्षकाराद्यभावेन शत्रुव्यापादनक्रियया "अधरनिर्देशनसमकाले एव शत्रवो मारिताः" इत्यर्थस्य व्यङ्ग्यत्वेन एकत्र युगपत् निर्दसनव्यापादनक्रिययोः समावेशरूपः समुच्चयस्य व्यङ्ग्यत्वं सिद्दम्।

## लक्ष्मी

स्वतः सम्भविना अलङ्कारेण अलङ्कारध्वनिमुदाहरति—गाढकान्तेति। कस्यापि राज्ञः प्रभावोत्कर्षवर्णनमिदम्। यो राजा युधि सङ्ग्रामे रुषा क्रोधेन निजस्य स्वस्य अधरमोष्ठम्, 'ओष्ठाधरौ तु रदनच्छदौ रदनवाससी' इत्यमरः। निंदर्शन् दन्तैः खण्डयन् सन् अरीणां शत्रूणां बधूजदस्य स्त्री समाजस्य 'जनः समाजे लोके च लोकभेदे च पामरे' इति कोषः। ओष्ठरूपाणि विद्रुमस्य प्रवालस्य दलानि खण्डानि गाढस्य सोढुमसमर्थस्य कान्तदशनक्षतस्य भर्तृदन्तब्रणस्य व्यथा पीडा तद्रूपः सङ्कटो विपत्तिस्तस्मात्, यद्वा—गाढा तीव्रा या कान्तदशनक्षतव्यथा वल्लभभदन्तव्रणार्त्तः सैव सङ्कटोऽसह्योपद्रवः तस्मात् तथोक्तात्, अमोचयत् मोचितवान्। क्रोधाच्छत्रूणां वधेन रतिक्रीडाविरहात् पुनस्तद्‌र्दशनभाव इति भावः। रथोद्धताच्छन्दः, 'रात्परैर्नलगैः रथोद्धता' इति च तल्लक्षणम्।

व्यङ्ग्य दर्शयति—अत्रेति। अधरदंशकत्वाधरमोचकत्वयोः वस्तुगत्या अविरोधेऽपि आपाततो विरोधस्याभासमानत्वात् विरोधामासालङ्कारः। तथाहि—यो निजधरं दशति स कथं परेषामधरान् मोचयतीति विरोधः, ओष्ठत्वेन सामानाधिकरण्यस्य विवक्षितत्वात् आश्रयभेदात्तु विरोधाभाव एव। एवञ्च विरोधालङ्कारेणेत्यस्य विरोधाभासालङ्कारेणेत्यर्थः। समुच्चयालङ्कारो व्यङ्ग्य इति। ओष्ठदशनेन ओष्ठव्यथामोचनं विरुद्धम्, विरुद्धञ्च ओष्ठदशनव्यथामोचनक्रिययोः कार्यकारणयोरपि समकालिकत्वम्, तेन च स्वाधरदशनशत्रुव्यापादनयोरेककालिकत्वरूपधर्मसम्बन्धात् समुच्चयालङ्कारः। निदर्शन्निति। वर्त्तमाननिद्देशात्तत्समयमोचनेन तद्धेतुशत्रुव्यापादन-

स्यापि तत्समयत्वलाभः। यद्यपि—शत्रुव्यापादनाधरदंशनयोः कार्यकारणयोःसमकालत्वं तु बाधितं तथाप्याहार्यप्रतीतिविषय एव शीघ्रकारिताव्यञ्जनमिति बोध्यम्। अत्र समुच्चयार्थकचकाराद्यभावेन शत्रुव्यापादनक्रियया व्यङ्ग्यत्वेन समुच्चयस्य व्यङ्ग्यत्वम्। अपि चात्र निदर्शनरूपक्रूरपिशाचो ममाधरं बलिरूपं प्राप्यान्यानधरान् सुखिनः करोत्विति बुद्ध्वैव निजाधरं दष्टवानिति तस्य राज्ञो बुद्धिमपेक्ष्य उत्प्रेक्षा च ततश्च समुच्चयोत्प्रेक्षयोरेकाश्रयानुप्रवेशः सङ्करालङ्कारो ज्ञेयः। केचित्तु—विरोधालङ्कारेण इत्यस्य वास्तविकविरोधमूलं सङ्गत्यलङ्कारेणेत्यर्थः, स्वाधरनिदर्शनवैरिवधूजनोष्ठव्यथामोचनयोः कारणकार्ययोः वैयधिकरण्येन निर्द्देशाद्विरोदाभासस्य स्फुटत्वादिति वदन्ति, तच्चिन्त्यम्—मुख्यस्य विरोधाभासस्य निर्बाधत्वेन पूर्वं प्रतिपादितत्वात्।

## रुचिरा

अथानेनैव वस्तुध्वनिमाह-'**गाढकान्तदशनक्षतव्यथासङ्कटात्**-' इत्यादिना।

'**यः**। पूर्वप्रक्रान्तवीर्यः। राजेति शेषः। **युधि** सङ्ग्रामे। **रुषा** रोषेण क्रोधेनेति यावत्। **निजाधरं** निजस्य स्वस्याधर ओष्टस्तम्। 'ओष्ठाधरौ तु रदन-च्छदौ रदनवाससी।' इत्यमरः। **निर्दशन्** दन्तैः खण्डयन् सन्। **अरिवधूजनस्यारीणां** शत्रूणां प्रतिद्वन्द्वित्वेनोपलक्षितानां वधूजनस्तस्य। वधूनां जनः समाजः। 'जनःसमाजे लोके च लोकभेदे च पामरे।' इति शिवशर्मा। **ओष्ठविद्रुमदलान्योष्ठा** एव विद्रुमदलानि प्रवालपत्राणीति तानि। **गाढकान्तदशनतव्यथासङ्कटाद्** गाढं गाढा वा कान्तदशनक्षतं तद्व्यथा वेति, तद्व्यथैव सङ्कटः सैव सङ्कट इति वा तस्मात्। 'अप दाने पञ्चमी।' २/३/२८। इति पञ्चमी **अमोचयत्** मोचितवान्। रुषा निजाधरं निर्दश्य निहते षु वैरिषु तत्तद्वधूां कान्तकर्त्तव्यो रतिकालिकोऽधरदंशो निर्वर्त्तित इति भावः।' पद्यमिदं कस्यापि राज्ञः प्रभावोत्कर्षवर्णनपरम्। रथोद्धता चात्र च्छन्दः। लक्षणं तु प्रागुक्तम्॥ १७९॥

अत्र व्यङ्ग्यमाह-**अत्रे**त्यादिना।

**अत्रा**स्मिन्नुदाहृते पद्ये इति यावत्। **स्वतःसम्भविना** लोकसाक्ष्येण। **विरोधालङ्कारेण** विरोधाभासालङ्कारेण। यो हि स्वाधरमपि दशति स कथं परेषामधरान् सङ्कटान्मोचयतीति, उत्पद्यते वा व्यथा निर्दशनेन तत्कथं तन्निवृत्तिः स्यादिति आपाततो विरोधः, प्रतियोगिभेदेन च तदाभासमात्रत्वमिति तत्स्वरूपत्वात्। **अधरः** ओष्ठः। निजस्येति शेषः। **निर्दष्टो** निरदंशि। **च** तथा। **शत्रवः** प्रतिद्वन्द्विनः। **व्यापादिता** मारिताः। इत्येवम् **समुच्चयालङ्कारो** युगपत्पदार्थानामन्वयरूपोऽलङ्कारः। **व्यङ्ग्यो** ध्वन्यः। अस्तीति शेषः।

अत्रेदमाकृतम्-योधनं तावत् कार्यं तेन जयसाधनं वा कार्यम्, 'युधी' ति निर्देशात्तथैव प्रतीतेः, तत्र च निर्दष्टव्यापादितक्रिययोर्यौगपद्येनान्वयाभिव्यक्तेः समुच्चयो ध्वन्यते इति ग्रन्थकारपादाः। अत एव 'समुच्चयोऽयमे कस्मिन् सति कार्यस्य साधके। 'खले कपोतिकान्याया' दिति वक्ष्यमाणं लक्षणमपि सङ्गच्छते। विरोधालङ्कारेण निर्दशन्नित्युक्त्या चाधरनिर्दशनसमकालमेव शत्रवो व्यापादिता इति वीरानुभावत्वेन प्रकृतयोः स्वाधरदशन-शत्रुव्यापादनयोरेककालैकधर्मसम्बन्धेन तुल्ययोगिता, मम क्षतेरपि निर्वर्ततां नाम परेषां क्षतिरिति तद्बुद्धेरुत्प्रेक्षणाञ्चोत्प्रेक्षेति प्रकाशकाराः। विरोधालङ्कारेणेत्यस्य विरोधाभासालङ्कारेणेत्यर्थस्तु न, विरोधस्यासम्भवात्, किन्तु विरोधगर्भितोऽलङ्कारस्तेनेत्यर्थः कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्त्यलङ्कारेणेति यावत्, स्वाधरदशनस्य कारणस्य वैरिवधूजनोष्ठदशनव्यथामोचनस्य च कार्यस्य च समकालतया निर्दिष्टत्वात्। तुल्ययोगितेति पदस्यापि तुल्ययोगिताऽलङ्कारं इत्यर्थस्तु न 'नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता।' इति सूत्रेण लक्षितायाः प्रकृतानाप्रकृतानां वा एकधर्मसम्बन्धरूपतुल्योगितायाः प्रकृते सम्भवाभावात्, तुल्ययोगितायां पुनर्धर्मस्य

गुणक्रियाऽन्यतररूपस्यैवोपादानम् । अथ तुल्ययोगितापदस्याधरो निर्दष्टश्च शत्रवो व्यापादिताश्चेति तुल्यकालं (एककालं) योगो (सम्बन्धः) ययोस्ताविति, तयोभार्वस्तुल्ययोगिता चेति व्युत्पत्तेः समुच्चयालङ्कार इत्यर्थः, अधरनिर्दशनवैरिव्यापादनक्रिययोर्यौगपद्येन प्रत्ययात् । इति प्रदीपकाराः । विरोधालङ्कारेणेत्यस्य वास्तविकविरोधमूलासङ्गत्यलङ्कारेणेत्यर्थः, स्वाधरदशनरिपुवनिताजनाधरव्यथामोचनयोः कारणकार्ययोर्वैयधिकरण्येन निर्देशाद्विरोधस्य स्फुटत्वात् । इत्यपि केचित् । ओष्ठविषयकयोर्दशनमोचनयो विरोधः, ओष्ठत्वेन सामानाधिकरण्यस्य विवक्षितत्वात्; प्रतियोगिभेदेनाभास इति विरोधालङ्कारेण विरोधाभासालङ्कारेणेत्यर्थ एव, वीरानुभावत्वेन प्रकृतयोरात्माधरनिर्दशनवैरिजनव्यापादनयोरेककालरूपैकधर्मसम्बन्धस्यं सद्भावात्तुल्ययोगिता तुल्ययोगिताऽलङ्कार इत्यर्थ एवेति, प्रदीपकाराभिहितातिशयोक्तेश्च प्रोढोक्तिसिद्धत्वेन स्वतस्सम्भवि-व्यञ्जकोदाहणत्वायोग इति, तुल्ययोगितायां धर्मो गुणक्रियाऽन्यतर एवेत्यत्र मानाभावात्, कालोपाधेरपिं सूर्यक्रियारूपत्वमिति च प्रकाशकारोतक्तमेव तदवस्थम् । इत्युद्योतकाराः प्राहुः । वयं तु ब्रूमः-विरोधालङ्कारेणेत्यस्य विरोधाभासालङ्कार इत्यर्थ एव, तुल्ययोगितेत्यस्य च तुल्ययोगिताऽलङ्कार इत्यर्थ एवाप्यस्तु प्रदीपकाराद्युक्तदिशा क्लिष्टकल्पनाया अन्याय्यत्वात् । किन्तु नात्र समुच्चय इति कथङ्कारं सङ्घटेत ? निर्दशनव्यापादनरूपक्रिययोरेककालं सम्बन्धसद्भावस्याक्षतेस्तस्याप्यक्षततत्वेनावस्थिततत्वात् । इति । वस्तुतस्तु-नात्र तुल्ययोगिता, न चोत्प्रेक्षा प्रतीयेते; किन्तु समुच्चय एवेतिं । 'निर्दशन्नमोचय' दित्युत्तया रोषेण वैरिव्यापादने वैरिवधूनां रामणनन्दस्यापि मोषणे दन्तक्षतार्त्यनुभवो निवर्त्तित इति प्रत्यायिकयाऽधरो निर्दष्टो वैरिणश्च व्यापदिता इति समुच्चयस्यैव प्रतीतेः गम्यमानतुल्यतायाः प्रकृतेऽसम्भवात्तुल्ययोगिताया अप्रतीतेश्च । स्वाधरदशनवौरिव्यापादनयोर्यौगपद्येनान्वयस्य च समुच्चयस्यैव प्रत्यायकत्वेन तयोरेककालरूपैकधर्मसम्बन्धकल्पनया तुल्ययोगिताया अपि क्लृप्तत्वस्यैव च तादवस्थ्यात् प्रकाशकारोक्तेश्चान्यथाऽपि समर्थनाच्च इति बोध्यम् ।

**'सज्जेहि' सुरहिमासो ण दाव अप्पेइ जुअइजणलक्खमुहे।**

**अहिणवसहआरमुहे णवपल्लवपत्तले अणङ्गस्स सरे ॥'**

अत्र वसन्तः शरकारः, कामो धन्वी, युवतयो लक्ष्यम्, पुष्पाणि शरा इति कविप्रौढोक्तिसिद्धं वस्तु प्रकाशीभवन्मदनविजृम्भणरूपं वस्तु व्यनक्ति।

---

## विवृतिः

कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यं वस्त्वाह—**सज्जेहीति**। 'सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यमुखान्। अभिनवसहकारमुखान्नवपल्लवपलानननङ्गस्य शरान् ॥' इति संस्कृतम्। **सुरभिमासश्चैत्रः**। **अभिनवो** नवमुकुलितः **सहकारो**ऽतिसौरभाम्रो मुखमादिर्येषां तान्। नवपल्लव एव पत्रं पक्षस्तल्लान्ति गृह्णन्ति तान् ॥ **प्रकाशीभवत्** सिद्धवद्भासमानम्। **विजृम्भणं** विशेषेण वर्धनम्। अत्र वसन्तादीनां शरकारत्वादिकमलीकम् ॥

## विवृतिपूर्तिः

**सज्जेहीति**। अत्र वसन्तोऽचेतनोऽनङ्गस्य सखा सज्जयति न केवलं तावदर्पयतीत्येवंविधया समर्पयितव्यवस्त्वर्पणकुशलयोक्त्या सहकारोद्भेदिनी वसन्तदशा यत उक्ता अतो ध्वन्यमानं मन्मथोन्माथस्यारम्भं क्रमेण गाढगाढीभविष्यन्तं व्यनक्ति। अन्यथा वसन्ते सपल्लवसहकारोद्गम इति वस्तुमात्रं न व्यञ्जकं स्यात् ॥

## विज्ञप्रिया

कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यं वस्तु आह—**सज्जेइ** इति।

**"सज्जयति सुरभिमासो न चार्पयति युवतिजनलक्ष्यशते।**

**अभिनवसहकारमुखान् नवपल्लवपत्तलान् अनङ्गस्य शरान् ॥" इति संस्कृतम्।**

प्रथमप्रवृत्तवसन्तवर्णनमिदम्। सुरभिमासोऽभिनवसहकारमुखान् अभिनवानि सहकाराणि मुखम् आदिर्येषां, तादृशान् अनङ्गस्य शरान् सज्जयति। युवतिजनरूपे लक्ष्यशते शरव्यशते न चार्पयति। शरसज्जनस्य वर्त्तमानत्वात् अनिष्पन्नत्वेन तन्निष्पत्त्यानन्तरमेव तादृशलक्ष्यशतेऽर्पयितुं प्रेरयिष्यति इति भावः। शतपदात् द्वित्रियुवत्यां त्वर्पयितुं प्रेरयतीति लभ्यते। न चार्पयतीति हेतुकारितान्तम्। अनङ्गशरान् कीदृशान्-नवपल्लवपत्तलान् नवपल्लवैः पत्तला पत्ररचना येषां तादृशान्। "शराणां पत्ररचना पत्तला परिकीर्त्त्यते" इति कोषः। **वस्तुप्रकाशीभवदिति**—न च सुरभिमासादौ शरकारादिरूपकालङ्कार एव प्रकाशीभवति इत्यतोऽलङ्कारस्यैव व्यञ्जकत्वमात्रेति वाच्यम्। सुरभिमासादौ शरकाराद्यभेदाऽप्रकाशात् किन्तु सुरभिमासादौ शरसज्जनादेरेव प्रकाशात्।

## लोचन

**सज्जेति**—"सज्जयति सुरभिमासो न चार्पयति युवतिजनलक्ष्यसहान्। अभिनवसहकारमुखान् नवपल्लवपत्तलान् अनङ्गस्य शरान्॥" इति संस्कृतम्।

**महिलासहस्रभरिते तव हृदये सुभग साऽमान्ती।**

अनुदिनमनन्यमना अङ्गं तनुकमपि तनूकरोति।

## कुसुमप्रतिमा

५—कविप्रौढ़ोक्तिसिद्धेन वस्तुना वस्तुध्वनिमाह सज्जेइ इति। "सज्जयति सुरभिमासः न चापनयति युवतिजनलक्ष्यसहान्। अभिनवसहकारमुखान् नवपल्लवपत्रलान् अनङ्गस्य शरान्॥" इति संस्कृतानुवादः। सुरभिमासो वसन्तकालः युवतिजना एव लक्ष्यं तत् सहन्ते भेत्तुं शक्नुवन्तीति तान्, अनभिनवाः सहकारा आम्रकुसुमानि मुखानि आदयो येषां तान्, नवानि पल्लवानि पत्राणि चलन्ति गृह्णन्तीति तान् अनङ्गस्य शरान् मदनस्य बाणान् सज्जयति निर्मिमीते; किन्तु न च अपनयतिः शीतकालवत् तानपसारयति।

व्यङ्ग्यमुपपादयति अत्रेति। वसन्तः कालः शरकारस्तद्वत् शरसज्जजनकर्त्तृत्वात्। कामो धन्वी अनङ्गस्य शरानिति सम्बन्धनिर्द्देशात्। युवतयो लक्ष्यम्, तस्य स्पष्टाभिधानात्। पुष्पाणि शराः सहकारमुखान् अनङ्गशरानिति समानविभक्तिनिर्द्देशादिति च भावः। कवेः प्रौढोक्त्या निरङ्कुशकल्पनाबलात् कथने नैव सिद्धम्, न तु यथार्थम्, वसन्तादिषु शरकारत्वादीनां सर्व्वथैवासम्भवादिति भावः। प्रकाशीभवत् अभिधेयार्थतात्पर्येण ज्ञानविषयीभावत्, मदनविज्रृम्भणरूपं युवजनानां कामाविर्भावात्मकम्।

## विमला

कविप्रौढ़ौक्तिसिद्धवस्तुव्यङ्ग्यं वस्त्वाह, सज्जेइ इति।—["सज्जयति सुरभिमासो न चार्पयति युवतिजनलक्ष्यसहान्। अभिनवसहकारमुखान् नवपल्लवपत्रलाननङ्गशरान्॥" इति संस्कृतम्]। सुरभिमासः,—वसन्तमासः, युवतिजना एव लक्ष्याणि तत्सहान्—तदुपयुक्तान् ["मुहे" इति पाठे—"मुखान्" इति सं. तत्र तन्मुखान्—तदभिमुखान्, तत्संलक्ष्य प्रेरितान् इत्यर्थः) अभिनवः,—नवमुकुलितः, सहकारः,—अतिसौरभासः ("सहकारोऽतिसौरभः" इत्यमरः) मुखम् आदिर्येषां तान्, नवपल्लव एव पत्रं—पक्षः, तत् लान्ति—गृह्णन्तीति तथोक्तान्, अनङ्गशरान् सज्जयति—प्रस्तुतान् करोति, न च—नैव, अर्पयति अनङ्गायेति शेषः। एतच्च सर्वमलीकमित्यस्य कविप्रौढ़ोक्तिसिद्धत्वं बोध्यम्। गाथासप्तशत्याः पद्यमिदम्। अत्र गाथा छन्दः।

अत्रेति।—प्रकाशीभवत्—सिद्धवद्भासमानं, मदनविजृम्भणरूपं—कामस्य विशेषेण वर्द्धनरूपं, व्यनक्ति—प्रकटयति। अत्र वसन्तादीनां शरकारत्वादिकमलीकमिति सङ्क्षेपः।

## लक्ष्मी

**'सज्जयति सुरभिमासो न चार्पयति युवतिजनलक्ष्यसहान्।**

**अभिनवसहकारमुखान् नव(पल्लव) पत्रलान् अनङ्गस्य शरान्॥'**

इति संस्कृतम्। प्रथमप्रवृत्तवसन्तवर्णनमिदम्। सुरभिमासश्चैत्रः वसन्तकाल इति यावत्, अभिनवानि नवमुकुलितानि सहकाराणि आम्रकुसुमानि मुखम् आदिर्येषां तादृशान् युवतिजनास्तरुणीसमुदाया एव लक्ष्यं शरव्यं तत्सहन्ते भेत्तुं शक्नुवन्तीति तांस्तथोक्तान् 'तरुणी युवतिः समे' इत्यमरः, लक्ष्यं स्यादपदेशेऽपि शरव्येऽपि नपुंसकम्' इति मेदिनी, नवानि नूतनानि पल्लवान्येव पत्राणि पक्षानि तांल्लान्ति गृह्णन्तीति तांस्तादृशान् अनङ्गस्य कामदेवस्य शरान् बाणान् सज्जयति रचयति न च अर्पयति समर्पयति। शरसज्जनस्य वर्त्तमानत्वात् अनिष्पन्नत्वेन तन्निष्पत्त्यानन्तरमेव तादृशलक्ष्यशतेऽर्पयितुं प्रेरयिष्यतीति भावः। शतपदात् द्वित्रियुवत्यां त्वर्पयितुं प्रेरयतीति प्रतीयते। आर्याच्छन्दः।

व्यङ्ग्यं दर्शयति—अत्रेति। उक्तोदाहरणे वसन्तश्च वैशाखोपलक्षितऋतुविशेषः, शरकारः शरान् करोति रचयतीति शरकारः कर्मण्यण्, तद्वत् शरसज्जनकर्तृत्वात्। कामो मदनः धन्वी धनुर्धरः अनङ्गस्य शरानिति सम्बन्धनिर्द्देशात्, युवतयो लक्ष्यम्, तस्य स्फुटमुक्तत्वात्। पुष्पाणि सहकारादीनामिति शेषः, शरा बाणाः सहकारमुखान् अनङ्गस्य शरानिति तुल्यविभक्तिनिर्द्देशादिति चाशयः।

अत्र वसन्तस्तावदचेतनः, कामः पुनरनङ्गः, युवतयश्चावीराः कुसुमानि च मृदुलानीति यथाक्रममेतेषां शरकारत्वादिकमलीकमेव, तदेव स्पष्टयति—कविप्रौढोक्तिसिद्धमिति। कवेः प्रौडोक्त्या प्रतिभाबलात् प्रतिपादनेनैव सिद्धं न तु वास्तवम्, प्रकाशीभवत् सिद्धवद्भासमानं मदनविजृम्भणरूपं युवजनानां मदनविशेषाविर्भावात्मकम्। न च सुरभिमासादौ शरकारादिरूपकालङ्कार एव प्रकाशो भवति इत्यतोऽलङ्कारस्यैव व्यञ्जकत्वमितं वाच्यम्, सुरभिमासादौ शरकाराद्यभेदाऽप्रकाशनाद् किन्तु सुरभिमासादौ शरसज्जनादेरेव प्रकाशनाद् वस्तु व्यङ्ग्यमेव।

## रुचिरा

एवं स्वतःसम्भविभ्यां वस्त्वलङ्काराभ्यां वस्त्वलङ्कारयोर्ध्वनिमुदाहत्य कविप्रौढोक्तिसिद्धाभ्यां ताभ्यां तयोर्ध्वनिमुदाहर्त्तुं प्रवृत्तस्तावद्वस्तुना वस्तुध्वनिमुदाहरति—'**सज्जेहि-**' इत्यादिना।

'**सुरहिमासो** सुरभिमासः। सुरभेर्वसन्तस्य मासः पक्षद्वयात्मकः कालः। 'वसन्ते पुष्पसमयः सुरभिः'-इत्यमरः। चैत्रो वैशाखश्चेति मासद्वयं वसन्तः, तत्रात्र मासशब्देनाद्यः, तस्यैव प्रथमं निर्देशात्प्रकृतत्वाच्च 'सुरभिमासश्चैत्र' इति विवृतिकारैरुक्तं चेतिबोध्यम्। **सज्जेहि** सज्जयति सज्जितो भवति। यावदिति शेषः। **दाव** तावत्। **जुअइतणलक्खमुहं** युवतिजनलक्ष्यमुखान् युवतिजनो यौवनाक्रान्तानां वनिताना समूह एव लक्ष्यं शरव्यं येषां तानि तादृशानि मुखान्यग्रभागा येषां तान्। 'तरुणी युवतिः समे।' इत्यमरः। 'लक्ष्यं स्यादपदेशेऽपि शरव्येऽपि नपुंसकम्।' इति मेदिनी। 'मुखं श्रेष्ठे च वक्रे चोपाथेऽग्रे निःसृतौ तथा। प्रारम्भे च प्रधाने चे' ति शिवशर्मा। **अहिणवसहअरमुहे** अभिनवसहकारमुखान्। अभिनवा नवमुकुलिता ये सहकारा। नितान्तं सुरभिता आम्रा मुखमादिर्मुखानि प्रधानानि वा येषां तान्। 'असौ सहकारोऽतिसौरभः।' इत्यमरः। अत्र मुखशब्दस्यार्थान्तरे उपादानान्न पुनरुक्तत्वम्। **णवपल्लवपत्तले** नवपल्लवपत्रलान्। नवा महितानि पल्लवत्राणीति ताँल्लान्ति गृह्णन्तीति तांस्तथोक्तान्। नूयते स्तूयते इति, नवनं स्तवनमिति वा नवः। 'ऋदोरप्। ३/३५७। इत्यप्। पल्लवैरुपलक्षितानि पत्राणीति पल्लवत्राणि। 'पल्लवोऽस्त्री किसलयम्' इत्यमरः। यद्वा-नवं यशो पद्यन्ते प्रतिपद्यन्ते इति तथाभूतानि लव (सूक्ष्म) पत्राणीति ताँल्लान्तीति तान्। पद् गतौ। क्विप्। 'लवः कालभिदि च्छिदि। विलासे रामजे लेशे' इति हैमशिवशर्माणौ। **अणंगस्स** अनङ्गस्य कामस्येति यावत्। **सरे** शरान् बाणान्। **ण** न नैवेति यावत्।

**अप्पेइ** अर्पयति समर्पयति। यद्वा-यावदर्पयति तावन्न परं सज्जयतीति भावः। पद्यमिदं वसन्तमुद्दिश्य केनापि सहृदयेनोक्तम्। अत्र चार्याछन्दस्तल्लःक्षणं तूक्तं प्राक् ॥ १८० ॥'

व्यङ्ग्यमाह-**अत्रे**त्यादिना।

**अत्रा**स्मिन् प्रागुदाहृते पद्ये। '**वसन्त** श्चैत्रवैशाखोपलक्षित ऋतुविशेषः। **शरकारः** शरान् करोति निर्मातीति तथोक्तः। 'कर्मण्यण्।' ३/२/१। इत्यण्। **कामो** मदनः। धन्वी धनुर्धरः। धनुरस्यास्तीति। व्रीह्यादित्वादिनिः। **युवतयस्तरुण्यः** स्त्रियः। **लक्ष्यम्। पुष्पाणि** सहकारादीनामिति शेषः। **शरा** बाणाः। '**इत्येवम्। कविप्रौढो** क्तिसिद्ध कवेः प्रौढोक्त्या केवलं निबद्धस्वरूपमिति भावः। **वस्तु। प्रकाशीभवत्**। क्रमेणेति शेषः। **मदनविजृम्भणरूपं** मदनस्य कामदेवस्य विजृम्भणं विशेषेण जृम्भणं सन्नद्धभवनं वर्धनमिति यावत्तद्रूपम्। **वस्तु। व्यनक्ति** द्योतयति। अत्रायम्भावः-वसन्तस्तावदचेतनः, कामः पुनरनङ्गः, युवतयश्चावीराः कुसुमानि च मृदुलानीति क्रमेणैतेषां शरकारत्वादिकमलीकमित्येतत्सर्वं कवेः प्रौढोक्तिमात्रेण सिद्धं वस्तु, तच्चेदं वसन्तदशामभिनयत् क्रमेण मन्मथोन्माथस्यारम्भं गाढं गाढीभविष्यन्तं ध्वनयतीत्युक्तं ग्रन्थकारैः 'वसन्तः शरकारः,-' इत्यादि।

**'रजनीषु विमलभानोः करजालेन प्रकाशितं वीर ! ।**
**धवलयति भुवनमण्डलमखिलं तव कीर्त्तिसंततिः सततम् ॥'**

अत्र कविप्रौढोक्तिसिद्धेन वस्तुना कीर्तिसंततेश्चन्द्रकरजालादधिककालप्रकाशकत्वेन व्यतिरेकालंकारो व्यङ्ग्यः ।

---

## विवृतिः

कविप्रौढोक्तिसिद्धवस्तु व्यङ्ग्यमलंकारमाह—**रजनीष्विति**। **विमलभानोः** शुभ्रकिरणस्यचन्द्रस्येत्यर्थः। **सततं** रात्रिंदिवम् । अत्र यशसा निखिलभवनधवलीकरणमलीकमपि कविप्रौढोक्तिसिद्धम् । अखिलमित्यनेनाधिकदेशप्रकाशत्वं च बोध्यम्। रात्रिंदिवप्रकाशस्यापि रात्रिप्रकाशकत्वमस्तीति तस्य निकर्षकारणत्वासंभवात्तद्व्यङ्ग्येन रात्रिमात्रप्रकाशकत्वेन निकर्षप्रत्यायनाद् व्यतिरेकस्य व्यङ्ग्यत्वम् ॥

## विज्ञप्रिया

कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यमलङ्कारमाह—**रजनीष्विति**। हे वीरविमलभानोः निर्मलकिरणस्य चन्द्रस्य करजालेन भुवनमण्डलं धवलयतीत्यर्थः। **व्यतिरेकालङ्कार** इति—अधिककालं व्याप्य प्रकाशनात् उपमानात् चन्द्रकरात् आधिक्यरूप इत्यर्थः ।

## कुसुमप्रतिमा

६—कविप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिमुदाहरति रजनीष्विति । राजस्तुतिरियम् । हे वीर ! तव कीर्त्तीनां सन्ततिः परम्पराः, विमलभानोर्निर्मलकिरणस्य चन्द्रस्य करजालेन रजनीषु केवलरात्रिष्वेव प्रकाशितम् अखिलं भुवनमण्डलं सततं धवलयति धवलं करोति। चन्द्रः केवलं रात्रौ प्रकाशयति, तव कीर्त्तिधारा तु सर्वदैवेत्यर्थः ।

अत्रेति । कवेः प्रौढ़ाक्तमात्रसिद्धेन न तु यर्थार्थेनेत्यर्थः, कीर्त्तिसन्ततेः प्रशंसामात्ररूपत्वेन प्रकाशकत्वासम्भवादिति भावः । अधिककालप्रकाशकत्वेन तद्रूपेण वस्तुनेत्यन्वयः । उपमानभूतान् केवलं रात्रावेव जगत्प्रकाशकाश्चन्द्रकरजालात् उपमेयभूतायाः कीर्त्तिसन्ततेरहोरात्रमेव जगत्प्रकाशकत्वेन आधिक्यवर्णनात् व्यतिरेकालङ्कारः, स च साक्षात्प्रतिपादकशब्दाभावाद्व्यङ्ग्य इत्याशयः ।

## विमला

कविप्रौढ़ोक्तिसिद्धवस्तुव्यङ्ग्यमलङ्कारमाह, रजनीष्विति ।—हे वीर। रजनीषु—रात्रिषु, विमलभानोः—उज्जवलकिरणस्य, चन्द्रस्येत्यर्थः, करजालेन—किरणसमूहेन, प्रकाशितम् अखिलं—समग्रं, भुवनमण्डलं, तव कीर्त्तिसन्ततिः—यशोराशिः, सततं—रात्रिन्दिवमित्यर्थः, धवलयति—प्रकाशयति। अत्र यशसा निखिलभुवनधवलीकरणमलीकमपि कविप्रौढ़ोक्तिसिद्धम्, अखिलमित्यनेनाधिकदेशप्रकाशकत्वञ्च बोध्यम्। रात्रिन्दिवप्रकाशकस्यापि रात्रिप्रकाशकत्वमस्तीति तस्यनिकर्षकारणत्वासम्भवात् तद्वयङ्ग्येन रात्रिमात्रप्रकाशक-

त्वेन निकर्षप्रत्यायनात् व्यातिरेकस्य व्यङ्ग्यत्वम् इति ज्ञेयम् । गीतिच्छन्दः;—"आर्या प्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः । दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः । ।"इति तल्लक्षणात् ।

## लक्ष्मी

कविप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिं दर्शयति—रजजनीष्विति । राज्ञः प्रशंसेयम् । हे वीर ! तव कीर्त्तिसन्ततिः यशः परम्परा विमलाः शुभ्राः भानवः किरणा यस्य तस्य शुभ्रांशोश्चन्द्रस्येत्यर्थः, 'भानुर्ना किरणे सूर्ये' इति मेदिनी, करजालेन किरणसमूहेन रजनीषु रात्रिष्वेव प्रकाशितम् अखिलं समग्रं भुवनमण्डलं सततं रात्रिन्दिवं धवलयति शुभ्रकान्तिकं विधत्ते । चन्द्रः केवलं रजनीषु प्रकाशयति तव कीर्त्तिसन्ततिस्तु अहर्निशमेवेत्यर्थः । अखिलमित्यनेनाधिकदेशप्रकाशकत्वमवगन्तव्यम् ।

व्यङ्ग्यमुपपादयति—अत्रेति । कविप्रौढोक्तिसिद्धेन न तु वास्विकेत्यर्थः, कीर्त्तिसन्ततेः प्रशंसामात्रपरत्वेन निखिलभुवनधवलीकरणत्वासम्भवादिति भावः । अधिककालप्रकाशकत्वेन तद्रूपेण 'वस्तूना' इत्यध्याहृत्यान्वयः । उपमानभूताच्चन्द्रकरजालात् उपमेयभूतायाः कीर्त्तिसन्ततेः अधिककालं व्याप्य प्रकाशकत्वेनाधिक्यवर्णनात् व्यतिरेकालङ्कारः, स च साक्षाद्वाच्व कपदाभावाद् व्यङ्ग्य इत्यभिप्रायः ।

## रुचिरा

अथ वस्तुनाऽलङ्कारध्वनिमुदाहरति-'रजनीषु-' इत्यादिना ।

'हे वीर ! **तव** त्वदीया । **कीर्तिसन्ततिः** कीर्तिप्रसारः । **रजनीषु** रात्रिषु । 'रजनी यामिनी तमी' इत्यमरः । **विमलभानोर्विमलाः** शुद्धाः शुभ्रा इति यावद् भानवः किरणा यस्य तस्य शुभ्रांशीश्चन्द्रस्येति यावत् । 'भानुर्ना किरणे सूर्ये' इति मेदिनी । **करजालेन** किरणपुञ्जेन । 'भानुः करो मरीचि' रित्यमरः । प्रकाशितं प्रकाशमानितम् । **अखिलं** समस्तम् । **भुवनमण्डलं** भुवनं लोकस्तदेव मण्डलमिति तत्तथाभूतम् । **सततं** निरन्तरं रार्त्रिदिवं न तु रजनीष्वेवेति यावत् । **धवलयति** शुभ्रकान्तिकं विधत्ते ॥' पद्यमिदं कमपि वीरमूर्धन्यं प्रति गीतम् । अत्र ह्यार्याछन्दः तल्लक्षणं चोक्तं प्राक् ॥ १८१ ॥

व्यङ्गमाह-**अत्रेत्यादेना** ।

**अत्रास्मिन्नुक्तमद्ये** । **कविप्रौढोक्तिसिद्धेन** कवेः प्रतिभामात्रनिष्पन्नेन । **वस्तुना** कीर्तिसन्तत्या निखिलभुवनधवलीकरणरूपेणेति शेषः । **कीर्तिसन्ततेः** । कीर्तिप्रसारस्य । **चन्द्रकरजालात्तरपेक्षयेति** यावत् । **अधिककालप्रकाशत्वेनाधिकः** कालस्तं तदवधिप्रकाशकत्वं तेन । 'अत्यन्तसंयोगे च ।' २/१/२१ इति समासः । हेत्वर्थ चात्र तृतीया । **व्यतिरेकालङ्कारः** । **व्यङ्ग्यो** ध्वन्यः । अस्तीति शेषः । अत्रेदं तात्पर्यम्-विमलस्य शुभ्रत्वं, कीर्त्याश्च प्रकाशकत्वं तेन पुनर्भुवनस्य समग्रस्य धवलीकरणमित्यलीकमपि कविना स्वप्रौढोक्तित एव निबद्धम् । चन्द्रोरात्रावेव पुनः प्रकाशते कीर्तिस्तु रात्रिन्दिवम्, न तेन तत औपम्यमिति चन्द्रादधिकाशकत्वेन कीर्त्या व्यतिरेकोऽपि सम्पन्नमूर्तिः । यथा वा-'केसेसु बला मोटि अ, तेण अ समरस्मि जअसिरी गहिआ । जह कंदराहि विहुरा, तस्स दढं कंठ अस्मि संठविआ ॥' इति अस्यायमर्थः-'तेण तेन प्रभूतपराक्रमतया प्रकृततया वा प्रसिद्धेनेति यावत् । राज्ञेति शेषः । अ चापीति यावत् । 'वी' ति पाठे त्व 'पीत्येवार्थः केशेषु केशपाशेष्विति यावत् । 'षष्ठी चानादरे ।' २/३/३८ इत्यनादरेऽर्थे चात्सप्तमी । मोडिअ मुटित्वाऽऽकृव्येति यावत् । तथेति शेषः । समरम्मि समरे सङ्ग्रामाङ्गणे इति यावत् । 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः । जअसिरी जयश्रीर्जयलक्ष्मीरिति यावत् ।

गृहिता गृहीता स्वायत्तीकृता 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः । जअसिरी जयश्रीर्जयलक्ष्मीरिति यावत् । गहिआ गृहीता स्यायत्तीकृता सम्पादिता वेति यावत् जह यथा । कंदराहि कन्दराभिर्दरीभिरिति यावत् । 'दरी तु कन्दरो वा स्त्री' त्यमरः । तस्स तस्य प्रकृतस्य राज्ञ इत्यर्थः । विहुरा विधुराः । शत्रव इति यावदिति प्राञ्चः, 'शत्रव इति शेषा' इति त्वाहुर्नव्याः । 'विधुरं विकले त्रिषु ।' इति मेदिनी । दढं दृढं गाढमिति यावत् । क्रियाविशेषणमिदम् । कंठअम्मि कण्ठसमीपे 'समीपगतशब्देषु त्रिषु कण्ठं विदुर्बुधाः ।' इति शाश्वतः । संठविआ संस्थापिताः ॥' अत्र गीतिश्छन्दः । लक्षणं तूक्तं प्राक् ।

अत्राहुः प्रकाशकाराः—'केशग्रहणावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे गृह्णन्तीत्युत्प्रेक्षा, एकत्र सङ्ग्रामे (सर्वथा) विजयदर्शनात्तस्यारयः पलाय्य गुहासु (दरीषु) तिष्ठन्तीति काव्यहेतुरलङ्कारः, न पलाय्य गतास्तद्वैरिणः, अपि तु ततः पराभवं सम्भाव्य; तान् कन्दरा न त्यजन्तीत्यपन्हुतिश्चे' ति । विवृण्वन्त्येतद्विवृत्तिकाराः- 'अत्र कन्दराभिः कण्ठे स्थापिता इति कविप्रौढोक्तिसिद्धेन वस्तुना नायककर्तृकनायिकाकेशाकर्षणदर्शनादपरस्याः कामोद्रेकस्य लोकेदर्शनात् तद्वत्य इव कन्दरास्तद्विधुरान् प्रकृतराजशत्रून् कण्ठे गृह्णन्तीत्युत्प्रेक्षाऽलङ्कारो व्यज्यते, एकत्रैव सङ्ग्रामे विजयदर्शनिन हेतुना तस्य राज्ञोऽरयः शत्रवः पलाय्य धावित्वा दरीषु गत्वा तिष्ठन्तीति काव्यहेतुः काव्यलिङ्गमलङ्कारो व्यज्यते, न पलाय्य धावित्वाऽपि तु किन्तु ततो राज्ञः पराभवं सम्भाव्य तांस्तस्य राज्ञः शत्रून् कन्दरा न त्यजन्तीति पलायनस्यापह्नवनादपन्हुतिश्चालङ्कारः ।' इति ।

सुधासागरकाराः पुनराहुः—'यदाहुः प्रदीपकाराः 'यतु केशग्रहणावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे गृह्णतीति उत्प्रेक्षा व्यज्यते' इति तद्भवेदेवम्, यदि पूर्वं कन्दरादीनां नायिकात्वाद्यारोपः स्यात् अन्यथा केशग्रहणस्य मदनोद्दीपकत्वायोगात्, तदभ्युपगमे (नायिकात्वारोपस्वीकारे, प्रकृतेऽप्रकृतसमारोपस्य समासोक्तिघटकत्वात्), न च वस्तुमात्रस्य व्यञ्जकत्वं, किन्तु समासोक्तेः (तच्छबलितवस्तुन इति यावत्) अलङ्कारस्ये'ति । तत्र ब्रूमः—यथेति यच्छब्देनोत्तरवाक्यगतेन तच्छब्द आक्षिप्यते, तेन च-पूर्ववाक्यार्थमनूद्य वाक्यान्तरावष्टम्भाद्वाक्यैकवाक्यमिदम्, तत्र-तेनेति कन्दराभिरिति च पदद्वयं विशेष्यसमर्पकं श्लिष्टं चेति, तथा च-न तावत् समासोक्तिः, विशेष्यमात्रस्यसाश्लिष्टत्वे समासोक्तिस्वीकारात्, न वा श्लेषः, जयश्रीपदस्याश्लिष्टत्वात्, विशेष्यविशेषणवाचिनां सर्वेषां (सर्वेषामेव) श्लिष्टत्वे तत् (श्लेष) स्वीकारात्, किञ्च-यत्रोभयतात्पर्यवशादभिधयैव अर्थद्वयोपस्थितिस्तत्रैव श्लेषः, प्रकृते तु व्यञ्जनया द्वितीयार्थस्य प्रतिभामात्रम् ।' इति । वयन्त्वेवं ब्रूमः-उत्प्रेक्षा नाम तद्भिन्नत्वेन तदभाववत्त्वेन वा प्रमितस्य पदार्थस्य चमत्कृततद्वृत्तितत्समानाधिकरणान्यतरतद्धर्मसम्बन्धनिमित्तकं तत्त्वेन तद्वत्त्वेन वा सम्भावनम् । तञ्च 'इव खलु नूनं मन्ये शङ्के' इत्यादिभिः पदैः । 'यथा तथे' ति तु उपमाया एव द्योतकम् । अत एव 'उद्ययौ वापिकादर्भान्मुकुलं मेचकोत्पलम् ॥ नारीलोचनचातुर्यशङ्कासङ्कुचितं यथा ॥' इत्यादौ यथाशब्दरयोत्प्रेक्षाऽवाचकत्वेनावाचकत्वं नाम दोषः सङ्गच्छते । समासोक्तिः पुनः 'साधारणविशेषणमात्रोपन्यस्ताप्रकृतधर्मिकव्यवहाराभेदेन प्रकृतधर्मिकस्य व्यवहारस्य भासनाम् । तत्र च विशेष्यमात्रमश्लिष्टम् । अत एव श्लेषादिभिन्नत्वम् उपमा च- उपमानोपमेयसाधारणधर्मसमर्पितं चमत्काराधायकं वाक्यार्थो पस्कारकं सादृश्यम् । तञ्च 'इव यथा तथे' त्यादिभिर्द्योत्यते । इति । तत्र तावत्-पद्यतात्पर्यम्-'यथा कन्दराभिस्तस्य शत्रवः कण्ठे संस्थापिता तथा तेनात्मनाऽपि केशेष्वाकृष्य समरे जयश्रीरङ्गीकृते'ति । अतः स्यादुपमोपमानोपमेयसाधारणधर्माणामुपादानात् । उपमानं कन्दरा, उपमेयं तत्पदार्थः, साधारणधर्मश्च यथातथेति द्योत्यः । नात्रोपमा, तत्रैकस्या एव क्रियाया उपादेयत्वात्, अत्र पुनः 'संस्थापिताः गृहीताः' इति द्वयोः क्रिययोरुपादानम्, उपमानोपमेये च प्रसिद्धे तत्र, अत्र पुनरप्रसिद्धे । इति भेदात् । तत् स्यादुत्प्रेक्षा । मा भृद् यथेत्यस्य तद्वाचकत्वं तद्द्योतकत्वं वा ध्वन्यमानायां तस्यां तदपेक्षाविरहात् । नायिका-

नायकत्वभेदेऽपि कन्दराततपदवाच्ययोस्तथा सम्भावनस्यास्त्येवोत्प्रेक्षात्वं च। नास्त्युत्प्रेक्षा। तथेति न्यासात्। नाभविष्यद् यदि यथेति तदभविष्यद्ध्वनिस्तस्याः। यदि वाऽभविष्यद् 'इव नून' मित्यादि, अभविष्यद्वाच्याऽसौ। तद्भवेत् समासोक्तिः। तत्पदवाच्यकन्दरापदवाच्योः पुंल्लिङ्गस्त्रीलिङ्गत्वाभ्यां नायकत्वस्य नायिकात्वस्य चाभेदेनास्त्येव भासनम्। न च विशेष्ययोस्तयोः श्लिष्टत्वम्। तत्पदवाच्यार्थस्य कन्दरापदवाच्यार्थस्य च भिन्नत्वेनासम्भवात्। भवतु वा तच्छब्दस्य नायकवाचकत्वमपि, कथं पुनः कन्दराशब्दस्य नायिकावाचकत्वम् वस्तुतस्तु तच्छब्दस्यापि नास्त्येव नायकवाचकत्वं, तस्य प्रकृतत्वाभावात् 'समरे जयश्री' रित्यादिना चान्वयस्य चानुपपत्तेः। न स्यात् समासोक्तिः। तच्छब्देन नायकपदवाच्यस्य, समरशब्देन सुरतसमरपदवाच्यस्य जयश्रीकन्दराशब्दाभ्यां च नायिकाविशेषवाच्यस्यैवार्थस्य विवक्षितत्वात्। तन्न ध्वन्यतेऽलङ्कारः। ध्वन्यते समासोक्तिः। राज्ञो नायकत्वेन समरस्य सुरतत्वेन जयश्रियाः कन्दराणां च नायिकासञ्ज्ञाविशेषत्वेनावभासनात्। न च तथा विवक्षितम्, प्रकृतपिधानापत्तेः। न ज्ञायते तत्कन्दराशब्दयोर्विशेष्यसमर्पकयोः श्लिष्टत्वम्। तयोर्वाचकान्तरत्वानुपलम्भात्। ध्वन्यते पुनरुत्प्रेक्षा। तेन राज्ञा नायकेन च तथा समरे सुरतणे च केशेष्वाकृष्य जयश्रीर्गृहीता तथा 'कन्दराभि (दरीभि) र्वा नायिकाभिस्तस्यारयः कण्ठे संस्थापिताः।' इत्येवं नायककर्तृकनायिकाकेशाकर्षणाभिधाने तद्दर्शनजातकामोद्रेका इव कन्दरा नायिकास्तत्प्रतिभटनायकात् कण्ठे गृह्णन्तीत्यपि प्रतीतेः। अत्रायं प्रश्नः। स्यादेवम्! यदि भवेत् 'जह (यथा)' इत्यत्र 'तह (तथा)' इति। न च यच्छब्दस्य पूर्वपरामर्षकत्वम्, तच्छब्दस्यैव तद्वत्त्वात्। 'जह (यथा)' शब्दस्य पूर्वत्रान्वये, उत्तरत्र च 'तह (तथा)' शब्दस्याध्याहृत्यान्वये तु स्यादर्धान्तरैकवाचकत्वं नाम दोषः।' इति।

**'दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः ।**

**मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः ॥'**

अत्र कविप्रौढोक्तिसिद्धेनापह्नुत्यलंकारेण भविष्यद्राक्षसश्रीविनाशरूपं वस्तु व्यज्यते ।

---

## विवृतिः

कविप्रौढोक्तिसिद्धलंकारव्यङ्ग्यं वस्त्वाह—**दशाननेति**। यस्मिन् क्षणे श्रीरामः पृथिव्यामवतीर्णस्तत्क्षणं व्याप्येत्यर्थः। **पर्यस्ताः** पतिताः। प्रकृतानां मणीनां प्रतिषेधेनाप्रकृतानामश्रुबिन्दूनां स्थापनमपह्नुतिः। अत्र राक्षसश्रियोऽश्रुबिन्दूनामलीकत्वेन कविप्रौढोक्तिमात्रसिद्धम् ॥

## विज्ञप्रिया

कविप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यं वस्त्वाह—**दशाननेति**। दशाननस्य किरीटेभ्यः मणिव्याजेन मणिपतनच्छलेन राक्षसश्रियः अश्रुबिन्दवः पृथिव्यां पर्यस्ताः पतिताः। **अपह्नुत्यलङ्कारेणेति**—मणिपाताऽपह्नुत्या व्याजपदेन अश्रुबिन्दुसाधनात् ।

## कुसुमप्रतिमा

७—कविप्रौढ़ोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिं दर्शयति दशाननेति। रघुवंशदशमसर्गे रामजन्मवर्णनमिदम्। तत्क्षणं रामोत्पत्तिसमये दशाननकिरीटेभ्यो रावणस्यदशसंख्यकमुकुटेभ्यः मणिव्याजेन रत्नपतनच्छलेन साक्षसश्रियः अश्रुविन्दवः पृथिव्यां भूमौ पर्यस्ताः पतिताः।

अत्रेति। कवेः प्रौढ़ोक्तिमात्रसिद्धेन न तु वास्तविंकेनेत्यर्थः, सम्पन्मात्ररूपाया राक्षसश्रियः अश्रुबिन्दूनामसम्भवादित्याशयः। अपह्नुत्यलङ्कारेणेति। प्रकृतमणिपतनं प्रतिषिध्य अप्रकृताश्रुबिन्दुपतन स्थापनादित्याशयः।

## विमला

कविप्रौढ़ोक्तिसिद्धालङ्कारव्यङ्ग्यं वस्त्वाह, दशाननेति।—तत्क्षणं—रामजन्मक्षणे इत्यर्थः, यस्मिन् क्षणे श्रीरामः पृथिव्यामवतीर्णः, तत्क्षणं व्याप्येति भावः, राक्षसानां श्रियः,—लक्ष्म्याः, अश्रुबिन्दवः, दशाननस्य—रावणस्य, किरीटेभ्यः,—मुकुटेभ्यः, मणिव्याजेन—रत्नपतनमिषेण, पृथिव्यां पर्यस्ताः,—पतिताः, रावणमुकुटेभ्यः रत्नानि पेतुरित्यर्थः। [प्रकृतानां मणीनां प्रतिषेधेन अप्रकृतानामश्रुबिन्दूनां स्थापनमपह्नुति] । वृत्तमनुष्टुप्। रघुवंशस्येदं पद्यम्।

अत्रेति।—अत्र राक्षसश्रियः अश्रुबिन्दूनामलीकत्वात् अपह्नुत्यलङ्कारस्य अवास्तवत्वेन कविप्रौढ़ोक्तिमात्रसिद्धत्वमिति भावः; तेन च भविष्यद्राक्षसलक्ष्मीविनाशरूपं वस्तु व्यज्यते।

## लक्ष्मी

कविप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिमुदाहरति—दशाननेति। रघुवंशदशमसर्गे श्रीरामभद्रस्य जन्मवर्णनमिदम्। तत्क्षणं यस्मिन् क्षणे श्रीरामः पृथिव्यामवतीर्णस्ततसमये दशाननस्य रावणस्य किरीटेभ्यो

दशसंख्यकमुकुटेभ्यो मणिव्याजेन मणिपतनच्छलेन (प्रकृत्यादिभ्य उपसंख्यानम्) इति तृतीया। राक्षसश्रियः राक्षसानां रावणपालितानां दुष्टप्रकृतीनां क्रव्यादानां श्रीः सम्पत् तस्यास्तथोक्तायाः।

'श्रीर्वेशरचना शोभा भारती सरलद्रुमे। लक्ष्म्यां त्रिवर्गसम्पत्तिविद्योपचरणेषु च॥' इति मेदिनी। अश्रुबिन्दव अश्रुकणिकाः पृथिव्यां पर्यस्ताः पतिताः। अनुष्टुप् छन्दः।

अत्रेति। कविप्रौढोक्तिसिद्धेन न तु यथार्थेनेत्यर्थः। सम्पन्मात्रस्वरूपाया राक्षसश्रियः अश्रुबिन्दूनामसम्भवादित्यभिप्रायः। अपह्नुत्यलङ्कारेणेति। प्रकृतानां मणीनां प्रतिषेधेनाप्रकृतानामश्रुबिन्दूनां स्थापनादपह्नुतिरलङ्कारः।

## रुचिरा

अथालङ्कारेण वस्तुध्वनिमुदाहरति-**'दशाननकिरीटेभ्यः—'** इत्यादिना।

**'दशाननकिरीटेभ्यो** दशाननस्य रावणस्य किरीटानि मूर्धसु विराजमानानि मुकुटानि तेभ्यः। 'अपादाने पञ्चमी। २/३/२८।' इत्यपादाने पञ्चमी। **मणिव्याजेन** मणीनां रत्नानां व्याजस्तेन। 'प्रकृत्यादिभ्य उपसङ्ख्यानम्।' इति तृतीया। **तत्क्षणं** तं क्षणं व्याप्येत्यर्थः। 'कालाध्वनोरत्यन्तसंयोगे।' २/३/५। इति द्वितीया। यस्मिन् क्षणे श्रीराम भद्रोऽवतीर्णस्तं कालमारभ्येति भावः। **पृथिव्यां** भूमिप्टष्ठे। **राक्षसश्रियो** राक्षसानां रावणपालितानां दुष्टप्रकृतीनां क्रव्यादानां श्रीः सम्पत् तस्याः। 'श्रीर्वेशरचनाशोभाभारतीसरलद्रुमे। लक्ष्म्यां त्रिवर्णसम्पत्तिविधोपकरणेषु च॥' इति मेदिनी। **अश्रुबिन्दवो**ऽश्रूणां विन्दवः कणिकाः **पर्यस्ताः** पतिताः॥' पद्यमिदं रघुवंशस्य दशमसर्गस्य। अनुष्टुप्छन्दश्च। लक्षणं च प्रागुक्तम्॥ १८२॥

अत्र व्यङ्ग्यामाह-**अत्रे**त्यादिना।

**अत्रा**स्मिन्नुदाहृते पद्येइति यावत्। **कविप्रौढोक्तिसिद्धेन** कवेः प्रौढोक्तिरलीकस्याप्यनलीकत्वेनाभिधानं तया सिद्धस्तेन। राक्षसंसम्पदो नायिकात्वाभावेन तदश्रुपातासम्भवात्तथात्वेऽपि कविप्रौढोक्तिमात्रसिद्धत्वम्। **अपन्हुत्यलङ्कारेण** प्रकृतानां मणीनामपह्नवनेनाप्रकृतानां पुनर्नेत्रजलकणानामुपन्यासस्तद्रूपेणालङ्कारेण। **भविष्यद्राक्षस्तश्रीविनाशरूपं** भविष्यतीति भविष्यन् पुरस्ताद्भावी यो राक्षसश्रीविनाशो राक्षसश्रियो विनाशोऽदर्शनं तिरोधानं तद्रूपम्। **वस्तु**। व्यज्यते **ध्वन्यते**। यदाऽवतीर्णो रामभद्रस्तदानीं रावणकिरीटेभ्यो मणीनां निपतन यज्जातं तत्र वास्तविकं, किन्तु तदानीमेव रावणप्रभृतीनां राक्षसानां विनाशो जात इति तदारभ्य यथा स्वामिना विनाशे कुलाङ्गनाः सदैव रुदन्ति, तथैव तत्तदीयाः सम्पदोऽपि नायिकात्वेनाध्यस्ता रुदन्तीति प्रकृतापह्नवेनाप्रकृतोपन्यास इत्यपह्नुत्या तद्रूपेण व्यञ्जकेनार्थेन 'भविष्यति राक्षसविनाशः' इति सूचनात्मकं वस्तु ध्वन्यतें। अपह्नुतेश्च कविप्रौढोक्तिमात्रसिद्धत्वं राक्षसश्रियामचेतनायामपि चेतनात्वेन तस्या अभिधानात्। इति भावः।

**'धम्मिल्ले नवमल्लिकासमुदयो हस्ते सिताम्भोरुहं**
**हारः कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घनः ।**
**एकोऽपि त्रिकलिङ्गभूमितिलक ! त्वत्कीर्तिराशिर्ययौ**
**नानामण्डनतां पुरदरपुरीवामभ्रुवां विग्रहे ॥'**

अत्र कविप्रौढोक्तिसिद्धेन रूपकालंकारेण भूमिष्ठोऽपि स्वर्गस्थानामुपकारं करोषीति विभावनालंकारो व्यज्यते ।

---

## विवृतिः

कविप्रौढोक्तिसिद्धालंकारव्यङ्ग्यमलंकारमाह—**धमिल्ल इति** । 'धमिल्लः संयाताः कचाः' इत्यमरः । **समुदयः** समूहः । **श्रीखण्डलेप**श्चन्दनप्रलेपः । **विग्रहे** देहे । अत्र कीर्तिराशेर्धावल्यरूपसादृश्यप्रसिद्धमपि कविप्रतिभामात्रसिद्धमिति तन्मूलकरूपकस्यापि तथात्वमिति भावः । स्वर्गस्थानामुपकारे स्वर्गस्थितिरेव कारणं तां विनापि भवतीति विभावना । **उपकारश्च** यज्ञादिद्वारेण ॥

## विवृतिपूर्तिः

**त्रिकेति** । तैलङ्गदेशभूषणम् ॥

## विज्ञप्रिया

कविप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यमलङ्कारमाह—**धम्मिल्ल** इति । हे त्रिकलिङ्गभूमितिलक ! कलिङ्गदेशभूत्रयतिलक ! एकोऽपि तव कीर्त्तिराशिः पुरन्दरपुरीवामभ्रुवां सुराङ्गनानां विग्रहे शरीरे नानामण्डनतां ययौ । तदेव दर्शयति-धम्मिल्ल इति । **धमिल्लः** संयताः कचाः । **विभावनेति**—स्वर्गस्थितिरेव स्वर्गस्थानामुपकारकारणम् । तदभावेऽपि स्वर्गस्थोपकारकरणरूपकफलव्यक्तिरूपा विभावना, सा च स्वर्गस्थित्यभाववाचकशब्दाभावात् व्यङ्ग्या ।

## लोचन

**अत्रेति**—रूपणादयः कवेर्व्यापाराः कवेश्च प्राधान्यव्यङ्ग्यबोधनार्था रूपणादयो व्यापारा यथात्र चमत्कुर्वन्ति न तथा वाच्येषु । रूपकाद्यलङ्कारेषु हि वाच्यानां रूप्याणां मुखादीनामेव रूपणादिव्यापाराद् रूपकादिभ्यश्चन्द्रादिभ्यश्च प्राधान्यमित्यर्थः ।

## कुसुमप्रतिमा

८—कविप्रौढोक्तिसिद्धेनालङ्कारेण अलङ्कारध्वनिमाह धम्मिल्ल इति । राजस्तुतिरियम् । हे त्रिकलिङ्गभूमितिलक ! त्रिकलिङ्गदेशाधिपते ! एकोऽपि तव कीर्त्तिराशिः, पुरन्दरपुरीवामभ्रुवाम् अमरावतीस्य रमणीनां विग्रहे शरीरे नानामण्डनतां बहुविधभूषणत्वं ययौ प्राप्तवान् । यथा च तासां धम्मिल्ले बद्धकेशपाशे नवमल्लिकानां शुभ्रकुसुमविशेषाणां समुदयः समूहो जातः, तद्वत् प्रकाशादिति भावः । एवमन्वत्रापि हस्ते सिताम्भोरुहं श्व तपद्मम्,

कण्ठतटे हारो मुक्तामाला, तथा पयोधरयुगे स्तनद्वये च धनो गाढः श्रीखण्डलेपः श्वेतचन्दनलेपनम्, तत्तत्स्वरूप इत्यर्थः।

अत्रेति। कवेः प्रौढोक्तिमात्रसिद्धेन न तु वास्तविकेनेत्यर्थः, कीर्त्तिरशिरत्यन्तप्रशंसामात्ररूपतया नवमल्लिकादितुल्यताया अलीकत्वेन तन्मूलकरूपकालङ्कारस्याप्यलीकत्वादिति भावः। रूपकालङ्कारेणेति। कीर्त्तिराशौ नवमल्लिकासमुदयत्वाद्यारोपादित्याशयः। विभावनालङ्कार इति। कार्यकारणयोः सामानाधिकरण्यनियमात् स्वर्गीयोपकार प्रतिभूमिष्ठस्य कारणत्वासम्भवेनासत्कल्पतया हेतु विनापि स्वर्गस्थानामुपकाररूपकार्येत्पत्तेर्विभावनालङ्कारः, स च कारणान्वयिनत्राद्यभावेन, व्यङ्ग्यं इति ग्रन्थकर्त्तुभिप्रायः। वस्तुतस्तु अत्र कार्यकारणयोभिन्नदेशत्वादसङ्ग्रतिर्नामालङ्का एव न्याय इति सुधीभिर्भाव्यम्।

## विमला

कविप्रौढ़ोक्तिसिद्धालङ्कारव्यङ्ग्यमलङ्कारमाह, धम्मिल्ले इति।—हे त्रिकलिङ्गभूमितिलक!—तैलङ्गदेशाभरण! एकोऽपि तव कीर्त्तिराशिः,—यशः—स्तोमः, पुरन्दरपुरी—अमरावती, तत्र स्थिताः याः वामभ्रुवः,—सुन्दर्यः, तासां विग्रहे—शरीरे, नानामण्डनतां—विविधालङ्कारत्वं, ययौ—प्राप। तथा हि, धमिल्ले—संयतकेशे, ("धमिल्लः संयताः कक्षाः" इत्यमरः) नवमल्लिकानां समुदयः,—समूहः, हस्तेसितं—शुभ्रम्, अम्भोरुहं—पद्म, कण्ठतटे, हारः, पयोधरयुगे—स्तनद्वये, घनः,—सान्द्रः, श्रीखण्डलेपः,—चन्दनविलेपनं, सञ्जातः इति शेषः। [अत्र कीर्त्तिराशेर्धावल्यरूपसादृश्यमप्रसिद्धमपि कविप्रतिभामात्रसिद्धमिति तन्मूलकरूपणस्यापि तथात्वाङ्गीकारात् तद्धावल्यस्यनवमल्लिकादितादात्मेयनाध्यवसायात् रूपकालङ्कारः। स्वर्गस्थितिरूपकारणं विनाऽपि कीर्त्तेः तत्रत्यानामुपकाररूपकार्यवर्णनात् विभावना च तदुत्थापितेति अनयोः अङ्गङ्गिभावेन सङ्करः]। शार्दूलविक्रीड़ितं वृत्तम्।

## लक्ष्मी

कविप्रौढोक्तिसिद्धेनालङ्कारेण अलङ्कारध्वनिमुदाहरति—धर्मिल्ल इति। कस्यचिद्राज्ञः प्रशंसेयम्। हे त्रिकलिङ्गभूमितिलक! तैलङ्गदेशभूत्रयतिलक! एकोऽपि तव कीर्त्तिराशिः यशस्समूहः पुरन्दरपुरीवामभ्रुवाम् अमरावतीस्थाङ्गनानाम्।

'वामं धने पुंसि हरे कामदेवे पयोधरे। वल्गुप्रतीपसव्येषु त्रिषु नार्यो स्त्रियां तथा॥'

इति मेदिनी, विग्रहे शरीरे नानामण्डनताम् अनेकविधभूषणत्वं ययौ लब्धवान्। तथाहि तासां धम्मिल्ले संयते केशपाशे 'धम्मिल्लः संयताः कचाः' इत्यमरः, नवमल्लिकानां स्वच्छ 'वेल्ली'ति पुष्पविशेषाणां समुदायः समूहो जातः तद्वत् द्योतनादिति भावः।

'मल्लिका शतभीरुश्च गवाक्षी भद्रमल्लिका। शतभीरुर्मदायन्ती भूपदीतृणशून्यकम्॥'

इति वाचस्पतिः। हस्ते सिताम्भोरुहं पुण्डरीकं 'पुण्डरीकं सिताम्भोजम्' इत्यमरः। कण्ठतटे ग्रीवाप्रदेशे हारो मुक्तामाला तथा पयोधरयुगे कुचद्वये च।

'युगो रथे हलाद्यङ्गे न द्वयोस्तु कृतादिषु। युग्मे हस्तचतुष्केऽपि वृद्धिनामौषधेऽपि च॥'

इति मेदिनी, घनः सान्द्रः 'घनं स्यात्कांस्यतालादिवाद्यमध्यमनृत्ययोः। ना मुस्ताब्दौघदाढ्र्येषु विस्तारे लोहमुद्गरे॥ त्रिषु सान्द्रे दृढे च स्यात्'-इति मेदिनी॥ श्रीखण्डलेपः श्वेतचन्दनलेपः तत्तत्स्वरूप इति भावः। शार्द्दूलविक्रीडितंच्छन्दः, तल्लक्षणं ९ पृष्ठे।

अत्रेति। कविप्रौढोक्तिसिद्धेन न तु यथार्थेनेत्यर्थः। कीर्त्तिरासेरतिशयप्रशंसामात्ररूपतया नवमल्लिकादिसादृश्यस्य अययार्थत्वेन तन्मूलकरूपकालङ्कारस्याप्ययथार्थत्वादिति भावः। रूपकालङ्कारेणेति। कीर्त्तिराशौ नवमल्लिकासमुदयत्वाद्यारोपादित्यभिप्रायः। विभावनालङ्कार इति। स्वर्गस्थितिरेव स्वर्गस्थानामुपकारकारणम्, कार्यकारणयोः सामानाधिकरण्यनियमात्। तदभावेपि स्वर्गस्थोपकारकरणरूपफलव्यक्तिरूपा विभावनालङ्कारः स च स्वर्गस्थित्यभाववाचकशब्दाभावाद् व्यङ्ग्यः। सिद्धान्तिनस्तु कार्यकारणयोर्भिन्नदेशत्वादसङ्गतिरलङ्कारोऽत्र व्यङ्ग्य इति वदन्ति।

## रुचिरा

अर्थालङ्कारेणालङ्कारध्वनिमुदाहरति-'**धम्मिले-**' इत्यादिना।

'हे **त्रिकलिङ्गभूमितिलक** त्रिकलिङ्गभूमे 'स्तैलिङ्गे'ति प्रसिद्धस्य देशस्य तिलकस्तिलकसदृशालङ्कार इति तत्सम्बुद्धौ तथोक्त ! 'क्षितिपालभालतिलक' इति पाठान्तरे क्षितिपालानां राज्ञां भालस्य तिलकायमान ! इत्यर्थः। **पुरन्दरपुरीवामभ्रुवां** पुरन्दरः स्वर्गस्थानां देवानामिन्द्रस्तस्य पुरी नगरी अमरावतीति भावत्, तस्या या वामभ्रुवः (कामोद्दीपकत्वेन कुटिलतां मनोहरतां वा दधत्यो भ्रुवो यासां ताः) इति तासाम्। 'वामं धने, पुंसि हरे कामदेवे पयोधरे। वल्गुप्रतीपसव्येषु त्रिषु, नार्यां स्त्रियाम्' इति मेदिनी। देवेन्द्रभुजपरिपालितायाममरावत्यां नगर्यां वसतीनां सुन्दरीणामित्यर्थः **धम्मिल्ले** तदुपलक्षिते देशे। 'धम्मिल्लाः संयताः कचाः।' इत्यमरः। **नवमल्लिकासमुदयो** नवीना आविर्भवद्विकाशा इति भावः या मल्लिकाः 'वेल्ली'ति ख्याताः सुरभितश्वेतपुष्पविशेषा इति तासां समुदयः सम्यगुदय उल्लासः पुञ्जो वेति। 'मल्लिकाः शतभीरुश्च गवाक्षी भद्रमल्लिका। शीतभीरुर्मदायन्ती भूपदी तृणशून्यकम्॥' इति वाचस्पतिः। **हस्ते** पाणौ। **सिताम्भोरुहं** सितं शुक्लं यदम्भोरुहं कमलं तत्, पुण्डरीकमिति भावः। 'पुण्डरीकं' सिताम्भोज' मित्यमरः। **कण्ठतटे** कण्ठस्य तटं तीरदेशस्तत्र। **हारो** मुक्ताऽऽभूषणम्। 'हारो मुक्तावली' त्यमरः। **पयोधरयुगे** युयोधरयोः स्तयोर्युगं द्वयं तत्र। 'युगो रथे हलाद्यङ्गे, न द्वयोस्तु कृतादिषु। युग्मे हस्त वतुष्केऽपि वृद्धिनामौषधेऽपि च॥' इति मेदिनी। **धनः** सान्द्रः। 'धनं स्यात् कांस्यतालादिवाद्यमनृत्ययोः। ना मुस्ताब्दौघदाढ्र्येषु विस्तारे लोहमुद्रगरे। 'मालयस्तु स्याच्छ्रीखण्डी रौहिणश्च सः।' इति त्रिकाण्डशेषः। इत्येवम्-**एको**ऽनन्योऽसहाय इति यावत्। **त्वकीर्तिराशिस्तव** कीर्तिर्यशस्तस्या राशिः पुञ्ज इति तथोक्तः। **विग्रहे** कलेवरे। पुरन्दरपुरीवामभ्रुवामिति शेषः। **नानामण्डनतां** विविधाभूषणस्वरूपताम्। **ययौ** गतवान्।' पद्यमिदं केनापि तैलङ्गेश्वरस्यानुग्रहभाजनेन तत्प्रीत्यै भणितम्। शार्दूलविक्रीडितं छन्दः। लक्षणं च प्रागुक्तम्॥ १८३॥'

व्यङ्ग्यमाह-**अत्रेत्यादिना**।

**अत्रास्मिन्** पद्ये। **कविप्रौढोक्तिसिद्धेन**। साक्षान्नयनगोचरतामप्रतिपद्यमानाया अमूर्त्ताया अपि कीर्त्तेः पुञ्जाभिधानं धवलत्वेनाभिधानं च कवेः प्रौढोक्तिस्तत्सिद्धेनेत्यर्थः। **रूपकालङ्कारेणो**पमानोमेययोर्निरपह्नवेनाभेदारोपणं रूपकं तदाख्येन तत्स्वरूपेण वाऽलङ्कारेणेत्यर्थः। तद्रूपेण व्यञ्जकेनार्थेनेति शेषः। **भूमिष्ठो** भूमेः स्वर्गपेक्षयाऽधस्तनत्वं तस्थोऽधःस्थ इति यावत्। **अपि**। त्वमिति शेषः। **स्वर्गस्थानां** स्वर्गस्य भूम्यपेक्षयोर्ध्वत्वं तत स्थानामूर्ध्वस्थानाम्। देवसुन्दरीणामिति यावत्। परम्परया देवानामपीति भावः। **उपकारं** हिताधानम्। **करोषि**।' **इति विभावनालङ्कार** इत्येवं कारणमन्तरेणं कारणसापेक्षस्यापि कार्योदयस्याभिधानं विभावना तन्नामालङ्कार इत्यर्थः। **व्यज्यते** ध्वन्यते।

**'शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः ।**
**सुमुखि ! येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः ॥'**

अत्रानेन कविनिबद्धस्य कस्यचित्कामिनः प्रौढोक्तिसिद्धेन वस्तुना तवाधरः पुण्यातिशयलभ्य इति वस्तु प्रतीयते ।

---

## विवृतिः

कविनिबद्धप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यं वस्त्वाह—**शिखरिणीति** । अधरवत्पाटलं रक्तं शुकशावकस्य तपश्चरणं प्रौढोक्तिमात्रसिद्धम् । यत्सादृश्येनोत्कृष्टं वस्तु पुण्यं विना न लभ्यते तस्य सुतरामेव पुण्यातिशयलभ्यत्वमिति भावः ॥

## विवृतिपूर्तिः

**दशतीति** । दशति आस्वाद्यते । अनवच्छिन्नप्रबन्धतया न त्वौदरिकवत्परं भुङ्क्ते । अपि तु रसज्ञोऽत्र तत्प्राप्तिवदेव रसज्ञताप्यस्य तपः प्रभावादेवेति । शुकशावक इति तारुण्यादुचितकाललाभोपि फलं तपस एवेति सहृदयाः ॥

## विज्ञप्रिया

कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यं वस्त्वाह—**शिखरिणि** इति । असौ शुकशावकः क्व नु शिखरिणि कस्मिन् पर्वते कियच्चिरं किमभिधानं किं नामकं तपः अकरोत् । येन हेतुना तव अधरवत् पाटलं बिम्बफलं दशति । तव अधरतुल्यवस्तुदंशनमपि तपः फलमिति श्लोकस्य भावार्थः ।

## कुसुमप्रतिमा

९—कविनिबद्धजनप्रौढ़ोक्तिसिद्धेन वस्तुना वस्तुध्वनिमुदाहरति शिखरिणीति । चञ्चुपुटेन बिम्बफलदंशिनं शुकशावकं विलोकय काञ्चित् सुन्दरीं प्रति कस्यचित् कविनिबद्धजनस्योक्तिरियम् । हे सुमुखि ! असौ शुकशावको नाम क्व नु शिखरिणि कस्मिन् ननु पर्वते, कियच्चिरं कियद्दीर्घकालं यावत्, किमभिधानं किन्नामकं तपः अकरोत् । येन हेतुना तव अधरवत् पाटलं श्वेतरक्तं बिम्बफलं दशति ।

अत्रेति । अनेन पूर्वार्द्धार्थरूपेण । प्रौढ़ोक्तिमात्रसिद्धेन न तु सम्भवपरेणेत्यर्थः, शुकशावकस्य तपःकरणासम्भवादिति भावः । प्रतीयते व्यञ्जनयेति शेषः ।

## विमला

कविनिबद्धप्रौढ़ोक्तिसिद्धवस्तुव्यङ्ग्यं वस्त्वाह, शिखरिणीति ।—हे सुमुखि ! असौ शुकशावकः [शैशवेऽपि युवजनोचिताधारावाप्तिः तपोयोगादेव इति सरसमतयः] क्व नु—कस्मिन्नपि, शिखरिणि—पर्वते, कियत् चिरं—कियत्मयं व्याप्य,किमभिधानं—किमप्याख्यायुक्तम्, अज्ञातनामकमित्यर्थः, तपः अकरोत्—अनु-

ष्ठित्वान्, नाम—(इदं सम्भावनायाम्) सम्भाव्यते दं मयेति भावः; येन—तपः फलेनेत्यर्थः, तव अधरवत् पाटलं—रक्तं, पाटलशब्दस्य श्वेतरक्तार्थकत्वेऽपि अत्र उपचारात् रक्तवर्णत्वं बोध्यम्; बिम्बफलं दशति—निरवच्छिन्न-सम्बन्धेन आस्वादयते, न केवलं बुभुक्षितवद्भुनक्ति इत्यर्थः। रसज्ञताऽऽदयः तपोबलमन्तरा न सम्भवन्ति इति सारः। द्रुतविलम्बितवृत्तं,—"दुतविलम्बितमाह नभौ भरो" इति लक्षणात्।

## लक्ष्मी

कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुध्वनिं दर्शयति—शिखरिणीति। चञ्चुपुटेन बिम्बफलदंशिनं शुकशावकं दृष्ट्वा कस्यचित् कविनिबद्धवक्तुः काञ्चित् सुन्दरीं प्रत्युक्तिरियम्। हे सुमुखि ? असौ शुकशावकः क्व नु शिखरिणि कस्मिन् पर्वते कियच्चिरं कियद्दीर्घकालं यावत् किमभिधानं किं नामकं तपः अकरोत्, येन हेतुना तव अधरवत् पाटलं श्वेतरक्तं 'श्वेतरक्तस्तु पाटलः' इत्यमरः, बिम्बफलं दशति अविच्छिन्नप्रबन्धतया आस्वाद-यति निरवशेषेणोपभोगे सति हि प्रबन्धविच्छेदो भवेत्तथा नेति भावः। अत्रौदरिकवन्नोपभोगः स हि रसास्वादवा-र्त्तानभिज्ञो निरवशेषमेव भोज्यद्रव्यं भुङ्क्ते, किन्तु रसज्ञो रसास्वादनक्रियायाः तथाविधबिम्बफलप्राप्तिवदेव, रसज्ञताप्यस्य तपः प्रभावादेवेति बोध्यम्। तव अधरतुल्यवस्तुदंशनमपि तपः फलमिति श्लोकस्य भावार्थः। अत्र नामेत्यन्तेन हि नहि निर्विघ्नोत्तमसिद्धयोऽपि श्रीपर्वतादयः इमां तरुण्यधरपाटलिमलाभसुभगाम्भावुकबिम्बफलद-शनात्मिकां सिद्धिं विदध्युरिति ध्वन्यते। कियच्चिरमित्यनेन दृश्याः सिद्धेः प्राप्तौ दिव्यकल्पसहस्रादिश्च परिमितः काल इति व्यज्यते। किमभिधानमित्यनेन च यथोक्तबिम्बफलदशनात्मकोत्तमफलजनकत्वेन पञ्चाग्निप्रभृत्यपि तपःश्रुतमिति प्रतीयते।

पद्येऽस्मिन् तवेति भिन्नमेव पदं ग्राह्यम्, यतो हि अधरपदार्थे त्वत्पदार्थसम्बोध्यमाननायिकासम्बन्धः प्राधान्येन विधेयतया जिज्ञापयिषितः। तादृशनायिकासम्बन्धितया व्यज्यमानस्याधरस्यास्वादनेनैव शुकशावके धन्यधन्यतायाः सिद्धिः। समासे सति अधरपदार्थविशेषणतया विद्यमानस्य युष्मच्छब्दार्थस्य प्राधान्येन विधेयतया बोधो न स्यात् समासोपसर्ज्जनीभूतत्वेन तादृशसामर्थ्यविरहात्, समस्तस्वीकारे हि विधेयविमर्शदोषोद्धारस्य विधातुमशक्यत्त्वाच्च तवेत्यस्य दर्शनक्रिययापि अन्वयाभिप्रायेण भिन्नमेव तवेति पदं स्वीकार्यम्, तथाहि यथा—'अरुण्या पिङ्गाक्ष्या गवा सोमं क्रीणाति' इत्यादिश्रुतौ गवाद्यन्वितारुण्यादेः साध्यतादिसम्बन्धेन क्रयणादावन्वयः, यथा वा 'धनवान् सुखी' इत्यादिलौकिकवाक्ये मतुवाद्यर्थान्वितस्य धनादेः प्रयोज्यत्वादिसम्बन्धेन सुखादौ चान्वयः तथात्राधरान्वितस्य त्वत्सम्बन्धित्वस्य प्रयोज्यत्वसम्बन्धेन बिम्बफलकर्मकदंशनेऽप्यन्वयः, यतः शुकशावकोऽयं त्वदधरारुण्यलाभसुभगं भावुकं बिम्बफलं त्वत्सम्बन्धितया दशति त्वामेव प्रधानतयोद्दिश्य दशतीत्यर्थस्य विव-क्षितत्वात्।

अत्रेति। अनेन पूर्वार्द्धार्थरूपेण। प्रौढोक्तिसिद्धेन न तु वास्तविकेनेत्यर्थः, शुकशावकस्य तपोविधाना-सम्भवादिति भावः। वस्तु अनलङ्कारम्। व्यज्यते प्रतीते, यत्सादृश्येनोत्कृष्टं वस्तु पुण्यातिशयं विना न प्राप्यते तस्य सुतरामेव पुण्यातिशयप्राप्यत्वमित्याशयः।

## रुचिरा

इत्येवं कविप्रौढोक्तिसिद्धाभ्यां वस्त्वलङ्काभ्यां वस्त्वलङ्कारयोर्ध्वनिमुदाहृत्य कविनिबद्धप्रौढोक्तिसिद्धाभ्यां वस्त्वलङ्काराभ्यां वस्त्वलङ्कारयोर्ध्वनिमुदाहर्तुकामस्तत्र तावद्वस्तुना वस्तुध्वनिमुदाहरति-**'शिखरिणि'** इत्यादिना।

'हे **सुमुखि** मनोहरवदने ! यद्वा-सुष्ठु 'दृष्टमात्रं कमप्यामोदमाधत्ते' इति पुण्यातिशयलभ्यं मुखमाननं यस्यास्तत्सम्बुद्धौ तथोक्ते ! लोके ह्येषा प्रसिद्धिः-दृष्टमात्रं यन्मुखं कमपि विदध्यादामोदं स सुमुखस्तन्मुखमपि दर्शनीयत्वेन सुष्ठ्विति। **नामाश्चर्यम्** आश्चर्येण पृच्छयते इति यावत्। 'नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च।' इति मेदिनी। **असौ। शुकशावकः** शुकस्य कीरस्य शावकः पोतो बालपुत्र इति यावत्। 'पोतः पाकोऽर्थको डिम्भः पृथुकः शावकः शिशुः।' इत्यमरः। **क्व** कस्मिन्। **नु** ननु। **शिखरिणि** शैले। **कियच्चिरं** कियत्समयावधि। **किमभिधानं** किन्नामकम्। **तपो**ऽनेकानेकजन्मार्जितपापपुञ्जप्रायश्चित्ताचरणम्। **अकरोत्** कृतवान्। प्रश्नाभिप्रायमाहयेन हेतुना तपोमहिम्ना। **तव** नितान्तपुण्योपचयेन दर्शनीययाः। यद्दर्शनमामोदातिशयहेतुस्तद्दर्शनं तावन्नितान्तं कृतैः पुण्यैरिति प्रसिद्धेः। **अधरपाटलम**धरवदूर्ध्वाधस्तनौष्ठवत् पाटलं श्वेतरक्तवत्त्वमात्रेण रमणीयं न तु सर्वतोभावेन। अधरसस्मितमित्यनुक्त्वाऽ'धरपाटल' मित्युक्त्याऽधरयोरनौपम्यमेवेति सूचितम्। 'आशुव्रीहौ पाटलो ना श्वेतरक्तेऽन्यलिङ्गवान्।' इति रुद्रः। **बिम्बफलम्। दशत्यास्वादते** न त्वनच्छिन्नप्रबन्धतयौदरिकवत् केवलं भुङ्क्ते इति यावत्। द्रुतविलम्बितमत्र वृत्तम्। उक्तं च तल्लक्षणं प्राक्॥ १८४॥

अत्रेदमभिहितम्—अयि सुन्दरि ! तव मुखदर्शनमतीव दुर्लभं जातं, यदिदमामोदमावहति, तत्र पुण्योपचय एव कारणम्, मम पुनस्तज्जातमिति ममाप्यतीव कश्चित् पुण्योपचयो जन्मान्तरीणोऽवश्यम्। अहो शुकशावकोऽयं मदपेक्षयाऽपि नितान्तं कृतपुण्यः प्रतीयंते। तवाधरो निरतिशाय्यसदृशसौभाग्यसर्वस्वम्, तस्य यत् किञ्चिदेव यत्रोपमेयत्वमप्युपलभ्येत तदपि वरम्, विम्बफलं च सर्वतोभावेन तदुपमितं स्यादिदिति तु क्व ? किन्तु श्वेरक्तिमशालितया यदा रोहते तस्सादृश्यं तञ्चास्वादते शुकशावक एष इत्यत्य पुण्योपचयातिशयं कथं वर्णयितुं शक्तः स्याम्। अहमपि तत्सदृशो भविष्यामीति नाशासे, जिज्ञास्यते, यत्रैनेन तप्तः स किमभिधेयः शैलः, शैलषु हि महान्तस्तपन्तीति प्रसिद्धेः। यद वधि च तप्तं, सं कियान् समयः, तपांसि पुनर्बहुविधानि, तत् तपश्च किम् ? इति।

अत्र व्यङ्ग्यमाह—**अत्रे**त्यादिना।

**अत्रा**स्मिन्नुदाहृते पद्ये इति यावत्। **अनेनाली**कस्य शुकशावकत पश्चरणस्ड वास्तविकतया प्रतिपादनरूपेणेति यावत्। **कविनिबद्धस्य। कस्यचित्** कस्यापि। **कामिनः** सुन्दरीदर्शनमात्रेण मदनाशुगैर्विध्यमानस्य वक्तु रिति यावत्। **प्रौढोक्तिसिद्धेन** प्रौढोक्त्या सिद्धेन। **वस्तुना** तद्रूपेणार्थेनेति यावत्। **'तव। अधर** ओष्ठः। **पुण्यातिशयलभ्यः** पुण्यातिशयः पुण्योत्कर्षस्तेन लभ्यो लब्धुं शक्यः।' **इति। वस्तु**। अनलङ्कारमुक्तिसौन्दर्यमिति यावत्। **व्यज्यते** ध्वन्यते। यत्सादृश्येनोत्कृष्टं वस्तु पुण्यातिशयमन्तरेण न लभ्यते तस्य सुतरामेव पुण्यातिशयलभ्यत्वमिति भावः।

**'सुभगे कोटिसंख्यत्वमुपेत्य मदनाशुगैः ।**
**वसन्ते पञ्चता त्यक्ता पञ्चतासीद्वियोगिनाम् ॥'**

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन कामशराणां कोटिसंख्यत्वप्राप्त्या निखिलवियोगिमरणेन वस्तुना शराणां पञ्चता शरान्विमुच्य वियोगिनः श्रितेवेत्युत्प्रेक्षालंकारो व्यज्यते ।

---

## विवृतिः

कविनिबद्धवस्तुव्यङ्ग्यमलंकारमाह—**सुभगे इति**। **पञ्चता** पञ्चसंख्योपयोगित्वं मरणं च ॥

## विज्ञप्रिया

कविनिबद्धवस्तुप्रौढोक्तिसिद्धवस्तु व्यङ्ग्यमलङ्कारमाह—**सुभग** इति । वसन्ते मदनाशुगैः कोटिसंख्यत्वम् उपेत्य लब्ध्वा, पञ्चता पञ्चसंख्यता त्यक्ता, वियोगिनां पञ्चता मरणकालीनपञ्चभूतविश्लेषः आसीत् । अत्रेति—**सुभगे** इति । सम्बोधनात् कामुक एवात्र वक्ता नतु कविः तत्प्रौढोक्तिसिद्धेन वियोगिनां मरणेन इत्यन्वयः **उत्प्रेक्षा व्यज्यत** इति—तद्वाचकेवकाराद्यभावाद् व्यञ्जना ।

## कुसुमप्रतिमा

१०—कविनिबद्धजनप्रौढोक्तिसिद्धेन वस्तुना अलङ्काराध्वनिं दर्शयति सुभगे इति । प्रवासादागत्य प्रियां प्रति कस्यचित् प्रवासकालीनावस्थावर्णनमिदम् । हे सुभगे ! वसन्ते काले मदनाशुगैः कामबाणैः कोटिसंख्त्वम उपेत्य कामदेवप्रभावादेव लब्ध्वा । पञ्चता आत्मनः प्राक्तनपञ्चसंख्यकता त्यक्ता; किन्तु वियोगिनां जनानां सा पञ्चता पक्षत्वं मृत्यरित्यर्थः आसीत् ।

अत्रेति । कविनिबद्धस्य वक्तुर्जनस्य ईदृशप्रौढोक्तिमात्रसिद्धेन न तु यथार्थेनेत्यर्थः कामबाणेन निखिलवियोगिमरणस्यालीकत्वादित्याशयः । कोटिसंख्यकत्वप्राप्तेति निखिलवियोगिमरणं प्रति हेतुः । निखिलवियोगिमरणेन तद्रूपेण वस्तुना ।

## विमला

कविनिबद्धप्रौढ़ोक्तिसिद्धवस्तुव्यङ्ग्यमलङ्कारमाह, सुभगे इति ।—हे सुभगे ! वसन्ते मदनाशुगैः;—कामशरैः, कोटिसङ्ख्यत्वम्—असङ्ख्यत्वमित्यर्थः, उपेत्य—प्राप्य, पञ्चता—पञ्चसङ्ख्यकत्वमित्यर्थः, त्यक्ता, परन्तु पञ्चता—मरणं, वियोगिनां—विरहिणाम्, आसीत्; विरहिणः कामशरात्तां मृता इति भावः ।

## लक्ष्मी

कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिमुदाहरति—सुभगे इति । हे सुभगे ! वसन्ते वसन्तसमये मदनाशुगैः आशु शीघ्रं गच्छन्तीति आशुगाः आशूपपदाद्गमेर्डः, मदनस्य कामस्य आशुगाः बाणास्तैस्तथोक्तैः कोटिसंख्यत्वम् उपेत्य कामदेवप्रभावादेव शतलक्षसंख्यत्वं प्राप्य, पञ्चता स्वस्य पञ्चसंख्योपयोगित्वं त्यक्ता, किन्तु वियोगिनां विरहिणां सा पञ्चता मरणकालीनपञ्चभूतविश्लेषः मृत्युरिति यावत् 'पञ्चता पञ्चभावे स्यान्मरणेऽपि च योषिति' इति मेदिनी, आसीत् । अनुष्टुप्छन्दः ।

अत्रेति । सुभगे इति सम्बोधनात् कामुक एवात्र वक्ता न तु कविः तन्निबद्धवक्तृप्रौढोक्तिसिद्धेन न तु वास्तविकेनेत्यर्थः, मदनबाणेनाखिलविरहिमरणस्यासम्भवादिति भावः । निखिलवियोगिमरणं प्रति कोटिसंख्यत्व-प्राप्ततेति हेतुः । उत्प्रेक्षा व्यज्यत इति । तद्वाचकेवकाराद्यभावाद् व्यञ्जना ।

## रुचिरा

अथ वस्तुनाऽलाङ्कारध्वनिमुदाहरति-**'सुभगे'** इत्यादिना ।

'हे **सुभगे** सुन्दरि ! **मदनाशुगैर्मदनस्य** कामदेवस्याशुगा बाणास्तैः । वसन्ते वसन्तसमये । **कोटिसङ्ख्यत्वं** कोटिस्तन्मिता सङ्ख्या येषां तत्त्वम् । **उपेत्य** प्रतिपद्य कामस्य कुसुमेषुत्वात् कुसुमानां च वसन्ते आनन्त्यस्य स्वतःसिद्धत्वात् । **पञ्चता** पञ्चसङ्ख्याकत्वम् । 'कामः पञ्चशरः स्मरः ।' इत्यमरोक्त्या मदनाशुगानां पञ्चसङ्ख्या-कत्वम् । **त्यक्ता** विमुक्ता । ननु पञ्चता पुनः केषामाश्रिताऽऽसीदित्याह-**वियोगिना**मध्वगानामस्मा दृशानामिति यावत् । **पञ्चता** पञ्चत्वं मरणमिति यावत् । 'पञ्चता पञ्चभावे स्या-न्मरणेऽपिच योषिति' इति मेदिनी । **आसीत्** । अत्रानुष्टुब्छन्दः लक्षणं, तूक्तं प्राक् ॥ १८५ ॥

अत्र व्यङ्ग्यमाह-**अत्रे**त्यादिना ।

**अत्रा**स्मिन्नुदाहृते स्थले इति यावत् । **कविनिबद्धप्रौढोक्तिसिद्धेन** । वसन्ते इति शेषः । **कामशराणां** कुसुमेषुबाणानाम् । **कोटिसङ्ख्यत्वप्राप्त्या**ऽनन्तत्वसम्भवात् । **निखिलवियोगिमरणेन** निखिला (न त्वहमेक एव) वियोगिनः पान्थास्तेषां मरणं प्राणत्यागोपस्थानं तेन तद्रूपेणेति यावत् । **वस्तुना** तदात्मकेन व्यञ्जकेनार्थेन । **'शराण** कुसुमेषोरिति शेषः । **पञ्चता** पञ्चसङ्ख्याकत्वमात्रम् । **शरान्** । कुसुमेषोरिति शेषः । **विमुच्य** परित्यज्य **वियोगिनः** पथिकान् । **श्रिता**ऽऽश्रिता । **इव** । वस्तुतः पञ्चत्वयोः पार्थक्यात् ।' **इत्येवम्** । **उत्प्रेक्षाऽलङ्कारः** । **व्यज्यते** । प्रती-यते । इति ।

यथा वा मम—'अयि सुभगं तव वदनं पश्यति सुभगे यदा यदा चन्द्रः । ग्लायति हन्त पिधत्ते सपदि तदैवात्मनो वदन्तम् ॥' इति । अस्यायमर्थः-'अयि सुभगे सौभाग्यसम्पन्ने ! चन्द्रश्चन्द्रमा यदायदा सुभगं दर्शनी-यम्, अपि तव वदनं मुखं (कर्म) पश्यति तदैव हन्त ग्लायति ग्लानिमापद्यते, तथाभूतश्चात्मनो वदनं स्वरुपं सपदि पिधत्ते तिरोहिते कुरुते ॥' इति । अत्र कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेन 'अयि तव सुभगायाः सुभगमपि मुखं चन्द्रो यदायदा निरीक्षते । तदैव न तु कालान्तरे सपदि स्वमुखं पिधत्ते स्वयं तिरोहितो भवति । यदि भवेदसुभगाया असुभगं वा मुखं तदा कश्विद्विषीदेत् पिदधीत वा स्वमुखं, किन्तु कथमन्यथा भानेऽपी' त्याश्चर्यगर्भिताभिधाना-त्मना वस्तुना व्यञ्जकेनार्थेन विरोधाभासशब्दलितो व्यतिरेकालङ्कारो व्यज्यते । यथा वा मम-'अवमनुते तव वदनं धाम सुधायाः श्रियं च पद्मानाम् । सम्मनुते मम जीवनमित्यसि दयिता मता त्वं मे ॥' इति । अस्यायमर्थः-'अयि तव वदनं मुखं (कर्त्तृ) सुधाया अमृतस्य धाम स्थानभूतं चन्द्रमसं पद्मानां श्रियं चावमनुतेऽवमानास्पदभूततां नयति, मम जीवनं जीवितमन्तरात्मानमिति यावत्, सम्मनुते सम्मानास्पदं कुरुते इत्यतो हेतोस्त्वं मे मम दयिता प्रिया मताऽसि ॥' इति । अत्र कविप्रौढोक्तिमात्रसिद्धेन वदनकर्तृकेणावमानेन सम्मानेन च वस्तुना 'अवमानकर्त्तुरपि सम्मानकर्तृत्व' मिति विरोधाभासः, वदनं चोपमेयं चन्द्रः पद्मं वा तदुपमानमपि तस्य वदनस्य ताभ्यां चन्द्रपद्माभ्यां तत्कर्तृकावना-नविषयीभूतत्वेन व्यतिरेकः । चन्द्रविरोधिनः पुनः पद्मविरोधित्वं, तस्य च जीवन (जल) सम्मातृत्वमिति विरोधशृ-ङ्खलिताभासः, दयितात्वोत्प्रेक्षणादुतप्रेक्षा, न वदनेन सदृशं सुधाधाम, न वा पद्मादिनिधीनां वैभवमापि केवलं पुनर्जीवनमित्यलौकिकास्वादसम्पतसर्वस्वत्वेन प्राणसदृशत्वमित्येवं दयितात्वस्यानुमानादनुमानुं चेत्यलङ्कारा ध्वन्यन्ते ।

**'मल्लिकामुकुले चण्डि भाति गुञ्जन्मधुव्रतः।**

**प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव ॥'**

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनोत्प्रेक्षालंकारेण कामस्यायमुन्मादकः कालः प्राप्तस्तत्कथं मानिनि मानं न मुञ्चसीति वस्तु व्यज्यते।

---

## विवृतिः

कविनिबद्धप्रौढोक्तिसिद्धालंकारव्यङ्ग्यं वस्त्वाह—**मल्लिकेति। चण्डि** अत्यन्तकोपने। कामस्येति सहाय इति शेषः। **उन्मादकः** प्रोषितपीडातिशयजनकश्च। 'मानस्य' इति पाठे यथाश्रुत एवार्थः। उत्प्रेक्षणीयस्य कामप्रयाणकालीनशङ्खापूरणस्यासंभवित्वात्प्रौढोक्तिसिद्धत्वम् ॥

## विज्ञप्रिया

कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यं वस्त्वाह—**मल्लिकेति। शङ्खमापूरयन्निवेति**। मल्लिकामुकुलस्य शङ्खाकारत्वात् भृङ्गगुञ्जनस्य शङ्खशब्दतुल्यत्वात्। मानिनीं प्रतीयमुक्तिरित्यभिप्रायेण कविनिबद्धवक्तृप्रौढोक्तिसिद्धमुदाहरणमिदम्। अत एव कथं मानं न मुञ्चति इति व्याख्या।

## कुसुमप्रतिमा

११—कविनिबद्धजनप्रौढ़ोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिमाह मल्लिकेति। मानभञ्जनाय मानिनीं प्रति प्रत्युक्तिरियम्। हे चण्डि! अत्यन्तकोपशीले! मल्लिकामुकुले नवमल्लिकाकुसुमकोरके गुञ्जन् रुवन् मधुव्रतो भ्रमरः पञ्चबाणस्य मदनस्य प्रयाणे युद्धयात्रायां शङ्कम् आपूरनयन् वादयन्निव भाति वर्त्तते।

अत्रेति। कविनिबद्धस्य वक्तुः प्रौढ़ोक्तिमात्रसिद्धेन न तु पारमार्थिकेनेत्यर्थः पञ्चबाणस्य शङ्खाभावेनैव तत्पूरणसम्भावनाया अप्यसम्भवादित्यभिप्रायः। यूनामुन्मादकः अयं कामस्य कालो वसन्तः प्राप्त उपस्थित इत्यर्थः।

## विमला

कविनिबद्धप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यं वस्त्वाह, मल्लिकेति।—हे चण्डि!—अत्यन्तकोपने! मल्लिकामुकुले, गुञ्जन्—झङ्कारं कुर्वन्, मधुव्रतः,—भ्रमरः, पञ्चबाणस्य—कामस्य, प्रयाणे—विजययात्रायां, शङ्खम् आपूरयन्निव—आस्मापयन्निव, भाति—राजते। ["मल्लिकामुकुले भाति गुञ्जन्मत्तमधुव्रतः" इति पाठं केचिदाहुः। तन्मते—मधुव्रतस्य मत्तेति विशेषणस्य अयमभिप्रायः यत्,—शङ्खाऽऽपूरणे कर्त्तव्ये शङ्खस्य मार्गदेश एव मुखेन पूर्यते, अनेन तु सम्मुखभागः, इति स्थिते मधुकरस्य तद्विपर्ययादिति]।

अत्रेति ।—कामस्येत्यत्र सहाय इति शेषः । ["कामस्य" इत्यत्र "मानस्य" इति पाठे—यथाश्रुत एवार्थो ज्ञेयः] । उन्मादकः—प्रोषितपीड़ाऽतिशय जनक इत्यर्थः ।

## लक्ष्मी

कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिमुदाहरति—मल्लिकामुकुल इति । मानवतीं प्रति मानभङ्गाय पत्युरुक्तिरियम् । हे चण्डि अत्यन्तकोपने ! मल्लिकामुकुले नवमल्लिकापुष्पकोरके गुञ्जन् शब्दं कुर्वन् मधुव्रतो भ्रमरः पञ्चबाणस्य कामस्य प्रयाणे युद्धयात्रायां शङ्खं विजयशङ्खम् आपूरयन्निव मल्लिकामुकुलस्य शङ्खाकारत्वात् भृङ्गगुञ्जनस्य शङ्खशब्दतुल्यत्वात् भाति शोभते । अनुष्टुप् छन्दः ।

अत्रेति । कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन न तु यथार्थेनेत्यर्थः, पञ्चबाणस्य शङ्खासत्त्वेनैव तत्पूरणसम्भावनाया अप्यसम्भवादित्याशयः । यूनामुन्मादकः प्रोषितपीडातिशयजनकश्चायं कामस्य कालो वसन्तः प्राप्तः विद्यमान इत्यर्थः । मानिनीं प्रत्युक्त्यैव कविनिबद्धवक्तृप्रौढोक्तिसिद्धमुदाहरणमिदम्, अत एव 'कथं मानं न मुञ्च' इति व्याख्या विहिता ।

## रुचिरा

अथालङ्कारेण वस्तुध्वनिमुदाहरति-'**मल्लिकामुकुले**' इत्यादिना ।

'हे **चण्डि** अत्यन्तकोपनशीले ! **पञ्चबाणस्य** कामदेवस्य सार्वभौमस्येति शेषः । 'कामः पञ्चशरः स्मरः ।' इत्यमरः । **प्रयाणे** दिग्विजययात्रायाम् । **शङ्खं** विजयशङ्खमित्यर्थः । **आपूरयन् । इव । मतः** । सर्वं तुच्छमाकलय्य हन्तुं पीतमदिर इव त्यक्तकर्त्तव्याकर्त्तव्यविचार इति भावः । **षट्पदो** भ्रमरः । ज्वरस्य त्रिपान्मात्रतया 'वेल्ली' ति प्रसिद्धाया लताया मुकुलो विकाशोन्मुखी कलिकेति यावत् तत्र तत्सविधे इति भावः । **गुञ्जति** रौति ।' अत्रानुष्टुब्छन्दः । लक्षणं च प्रागुक्तम् ॥ १८६ ॥

अत्र व्यङ्ग्यमाह-**अत्रेत्यादिना** ।

**अत्रास्मिन्नुदाहृते** पद्ये इति यावत् । **कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन** कविना निबद्धस्य कामिनः प्रौढोक्त्या सिद्धेन प्रौढोक्तिश्चालीकस्यापि भ्रमरध्वनेः कामस्य च दिग्विजयार्थं प्रयाणस्यावसरे शङ्खध्मानत्वेनोत्प्रेक्षणरूपा । **उत्प्रेक्षाऽलङ्कारेण** तदात्मकेन व्यञ्जकेनार्थेनेति यावत् । '**कामस्य** मदनस्य । उन्मादकः प्रभावोत्कर्षाधायकत्वेन प्रमत्ततााया विधाता । **अयम् । कालो** वसन्ताख्य इति यावत् । **प्राप्तः । तत्तर्हि** । हे **मानिनि** दुराग्रहशीले ! **मानमाग्रहमप्रणमनस्वभावमिति** यावत् । **कथं** केन हेतुना । **न** नैव । **मुञ्चसि** परित्यजसि ।' **इति वस्तु** तद्रूपमभिधानमिति भावः । **व्यज्यते** व्यञ्जनया बोधविषयीक्रियते । इति ।

यथा वा, मम-'मुमुखि ! मुखं तव रुचिरं स्वमिव न केनापि तुल्यमन्येन । इति तत् पश्यन् ह्रसति प्रवर्धमानोऽपि हन्त शशी ॥' इति । अस्यायमर्थः-'अयि मुमुखि ! । तव सुखं रुचिरं मनोरमम् तत्, किमिवेति चेत् स्वमिव स्वेनैव तुल्यम्, अन्येन केनापि तुल्यं न तदुपमानभूततताया अन्यत्रालब्धेः । इत्यस्माद्धेतोस्तदलौकिकसौन्दर्यसर्वस्वभूतं त्वदीयं मुखं पश्यन् निरीक्षमाणः शशी चन्द्रः प्रवर्धमानः पुनःपुनर्भयनैव शनैःशनैर्वृद्धिं प्रतिपद्यमानोऽपि ह्रसति ततो भ्रश्यती'ति । अत्र कविनिबद्धस्य कामिनो वक्तुः प्रौढोक्तिमात्रसिद्धेभ्योऽन्वयव्यतिरेकविरोधाभासेभ्यः 'न त्वया बहिर्गन्तव्यम्, बहिर्गतायां च त्वयि परेषां मानभङ्गजनितोऽन्तः सन्ताप उपपद्यते, त्वया तु

कारणान्तरतोऽपि जातस्य सन्तापस्य निवृत्ति विंधातव्ये' ति निजरमणविरहासहिष्णुत्वापह्नवनं वस्तु व्यज्यते । यथा वा, मम-'अयि सुन्दरि ! तव सदृशी सुषमा लवतोऽपि कुत्रचिन्नैव। असदृशनिरतिशयरुरुचिरतया सर्वतो विदिता ॥' इति।' अस्यायमर्थः—अयि सुन्दरि ! असदृशनिरतिशयरुचिरतया यत्त्वमेकाऽद्वितीया सर्वतो विदिताऽसि तत्तव त्वया सदृशी सुषुमा परमा रमणीयता कुत्रचित् कुत्रापि नैवास्ती'ति । अत्र कविनिबद्धप्रोढोक्ति-मात्रमिद्धेन व्यतिरेकेण 'विदितसौभाग्याया अद्वितीयायास्तवासदृशनिरतिशययाह्लादहेतुत्वमुचितमेवे'ति वस्तु व्यज्यते ।

**'महिलासहस्सभरिए तुह हिअए सुहअ सा आमाअन्ती।**

**अणुदिणमणण्णकम्मा अङ्गं तणुअं पि तणुएइ॥'**

अत्रामाअन्तीति कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन काव्यलिङ्गलंकारेण तनोस्तनूकरणेऽपि तव हृदये न वर्तत इति विशेषोक्त्यलंकारो व्यज्यते। न खलु कवेः कविनिबद्धस्येव रागाद्याविष्टता अतः कविनिबद्धवक्तृप्रौढोक्तिः कविप्रौढोक्तेरधिकं सहृदयचमत्कारकारिणीति पृथक्प्रतिपादिता। एषु चालंकृतिव्यञ्जनस्थले रूपणोत्प्रेक्षणव्यतिरेचनादिमात्रस्य प्राधान्यं सहृदयसंवेद्यम्, न तु रूप्यादीनामित्यलंकृतेरेव मुख्यत्वम्।

---

## विवृतिः

कविनिबद्धप्रौढोक्तिसिद्धालंकारव्यङ्ग्यमलंकारमाह—**महिलेति**। 'महिलासहस्रभरिते तव हृदये सुभग सा **अमान्ती**। अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति॥' इति संस्कृतम्। नायकं प्रति सख्या उक्तिरियम्। अमान्ती मानमवकाशमप्राप्नुवती। दिवसं प्राप्य तनयति कृशीकरोति। 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते' इति काव्यलिङ्गलक्षणम्। अत्र पदार्थतया हेतुर्निर्दिष्ट इत्याहुः—**अत्रामान्तीति**। मनसोऽणुत्वादनुपलभ्यत्वाच्च तत्र मानमेव न संभवति कुतस्तल्लाभ इति भावः। तनुतनूकरणरूपकारणस्य सत्त्वेऽपि त्वद्धृदयवृत्तित्वरूपफलं नास्तीति विशेषोक्तिः। ननु कविनिबद्धप्रौढोक्तिसिद्धस्य कविप्रौढोक्तिसिद्धत्वमस्त्येवेति कथं तस्य पृथगुपादानमित्यत आह—**न खल्विति**। रागादीत्यादिना उत्साहादिपरिग्रहः। प्रौढोक्त्या हि वक्तू रागाद्याविष्टचित्तत्वं प्रतीयते। तत्र कव्यपेक्षया कविनिबद्धस्य वक्तुरधिकरागाद्याविष्टचित्तत्वमिति तद्व्यञ्जिकायाः प्रौढोक्तेरधिकचमत्कारकारित्वमिति भावः। ननु यत्रालंकारस्य व्यञ्जकत्वमुक्तं तत्रालंकार्यस्य वस्तुनोऽपि व्यञ्जकत्वमस्त्येवेति कथमलंकारस्य पृथगुपादनमत आह—**एषु चेति**। प्रागुक्तद्वादशसु भेदेषु मध्ये इत्यर्थः। **अलंकृतिव्यञ्जनस्थले** अलंकारव्यञ्जनस्थले। रूप्यादीनामित्यादिना उत्प्रेक्षणीयव्यतिरेचनीयादीनां ग्रहणम्। **मुख्यत्वमिति**। अतएव तेनैव व्यवहार इत्यर्थः॥

## विवृतिपूर्तिः

**शब्दार्थेति**। यद्यपि शब्दशक्तिमूलकत्वमर्थशक्तिमूलकत्वं चेत्युभयमपि सकलव्यङ्ग्यसाधारणम्, शब्दार्थयोरनुसंधानं विना व्यङ्ग्यस्यैकानुल्लासात्, तथापि परिवृत्त्यसहिष्णूनां शब्दानां प्राचुर्ये तत्प्रयुक्तात्प्राधान्यात्सत्या अप्यर्थशक्तेरप्राधान्याच्च व्यङ्ग्यस्य शब्दशक्तिमूलकत्वेनैव व्यपदेशः। परिवृत्तिसहिष्णूनां तु प्राचुर्येऽर्थशक्तेरेव प्राधान्यात्सत्या अपि शब्दशक्तेः प्रधानानुगुण्यार्थतया मल्लग्रामादिवत्प्रधानेनैव व्यपदेशः। यत्र तु काव्ये परिवृत्तिं सहमानानामसहमानानां च शब्दानां नैकजातीयप्राचुर्यम्, अपि तु साम्यमेव, तत्र शब्दार्थोभयशक्तिमूलकस्य व्यङ्ग्यस्य स्थितिरिति द्व्युत्थो ध्वनिः। न चायमन्यतरशक्तिमूलकतयैव व्यपदेष्टुं शक्यः। विनिगमकाभावात्॥

## विज्ञप्रिया

कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यमलङ्कारमाह—**महिलासहस्रेति**।

**"महिलासहस्रभरिते तव हृदये सुभग! साऽमान्ती।**

**अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति॥" इति संस्कृतम्।**

नायकस्य बहुनायिकाभावनादुःखेन कृशाया नायिकाया अवस्थां नायके कथयन्त्यास्तत्सख्या उक्तिरियम्। महिला स्त्री तासां सहस्रेण भरिते तव हृदये अमान्ती अवकाशमलभमाना सा अनुदिनं दिवसं व्याप्य अनन्यकर्मा त्यक्तान्यकार्या सती तनु स्वतः कृशं अङ्गं तनयति तनूकरोति कृशतरं करोति। नामकारितान्तस्य तनुशब्दस्य रूपमिदम्। **काव्यलिङ्गेति**—काव्यलिङ्गं हेत्वलङ्कारः। हृदये स्थानालाभस्य अङ्गतनूकरणहेतुत्वात्। **हृदये न वर्त्तते** इति—तनयतीति वर्त्तमाननिर्द्देशात् अद्यापि हृदये वृत्त्यलाभः। विशेषोक्तिरिति अङ्गतनूकरणरूपकारणसत्वेऽपि हृदये स्थानलाभरूपकार्यस्याभावरूपा विशेषोक्तिः।

ननु—प्रौढोक्तिसिद्धत्वेनैव उभयसंग्रहसम्भवे किमर्थं कविनिबद्धवक्तृकत्वेन पृथगुपादानमित्यत आह—**न खल्विति**। कव्यपेक्षया कविनिबद्धस्य रागातिशयात् पृथगुपादानमित्यर्थः।

**एवं वाच्यार्थस्येति**—इदमत्रावधेयम्। गाढकान्तरदशनेत्यादौ दर्शितस्य विरोधालङ्कारस्य व्यञ्जकस्य वाचकाऽपिकाराभावाद् व्यङ्ग्यत्वमेव, एवं सज्जयति सुरभिमास इत्यादौ वसन्तादेः शरकरणादिरूपवस्तुनो व्यञ्जकस्य व्यङ्ग्यत्वमेव इत्यतोऽत्र प्रायश इति पूरणीयम्। काव्यप्रकाशकृन्मते तु व्यञ्जकवस्त्वलङ्कारयोः वाच्यत्वाद्यनियम एव। अत एव लक्ष्यव्यङ्ग्ययोरपि व्यञ्जकत्वमुदाहार्यमिति तेनोक्तम्। ननु रूपणमेव रूपकालङ्कारः उत्प्रेक्षणमेव उत्प्रेक्षालङ्कारः, व्यतिरेचनमेव व्यतिरेकालङ्कारः तथा च यत्र रूपकालङ्कारस्य व्यङ्ग्यत्वम् तत्र किं रूप्यमानवस्तूदाहरणं न स्यात्। कारः। एवमुत्प्रेक्ष्यमाणव्यतिरिच्यमानवस्तुनोरित्यत आह—**एषु चेति**—तत्तद् वस्त्वपेक्षया तदलङ्कार एव अधिकचमत्कारीति तत्तदुदाहरणमेव तत्तद् इति भावः। यद्यपि सुभगे कोटिसंख्यात्वम् इत्यत्र उत्प्रेक्षालङ्कारः, दिशि मन्दायते इत्यत्र व्यतिरेकालङ्कारश्च व्यङ्ग्य उक्तः। रूपकालङ्कार व्यङ्ग्यत्वं तु नोक्तं तथापि—

**चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं**

**रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।**

**करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं**

**वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलु कृती॥**

इत्यत्र मधुकरे कामुकरूपणं व्यङ्ग्य बोध्यम्।

**लक्ष्यार्थस्य यथेत्यादि**-इदमत्रावधेयम्—"भम्म धम्मिअ" इत्यादावप्यभ्रमणं व्यङ्ग्यमुक्तम्। तत्तुल्ययुक्तिके निःशेषेत्यादौ तदन्तिकगमनं लक्ष्यमित्युक्तमितीदं स्वोक्तिविरुद्धम्। "क्वचिद् बाध्यतया ख्याति" रित्याद्युक्तयुक्तेरुभयत्र समानत्वात्।

## कुसुमप्रतिमा

१२—कविनिबद्धजनप्रौढोक्तिसिद्धेनालङ्कारेण अलङ्कारध्वनिमुदाहरति महिलेति। "महिलासहस्रभरिते तव हृदये सुभग! सा अमान्ती। अनुदिनमनन्वकर्मा अङ्गं तनुकमपि तनयति॥" इति संस्कृतानुवादः। बहुस्त्रीवल्लभं भिन्नदेशस्थं तन्नायिकावृत्तान्तजिज्ञासुं नायकं प्रति तन्नायिकादूत्या उक्तिरियम्। हे सुभग! स्त्रीवल्लभ! महिलानां रमणीनां सहस्रेण तदनुरागेणेत्यर्थः भरिते परिपुरिते तव हृदये अमान्ती स्थातुमवकाशमप्राप्नुवती सा नायिका, अनुदिनं सर्वदां अनन्वकर्मा सती, तन्वपि स्वभावकृशमपि अङ्गं तनयति तनु कृशं करोति। तव हृदये अवकाशलाभायेति भावः। अत्र तनयतीति तनुशब्दात् करोत्यर्थेणिप्रत्ययः।

अत्रेति। कविनिबद्धस्य वक्तुर्दूतीजनस्य प्रौढोक्तिमात्रसिद्धेन न तु यथार्थेनित्यर्थः सकलस्त्रीवल्लभस्य तस्या अपि वल्लभत्वेन स्थानप्राप्ते रिति भावः। "अमाअन्ती" इति पदस्य अवकाशप्राप्तिरूपोऽर्थः तनोस्तनूकरणे हेतुरिति पदार्थहेतुकेन काव्यलिङ्गालङ्कारेणेत्यर्थः। अल्पावकाशे हृदये स्थानलाभाय तनोस्तनूकरणेरूपे हेतौ सत्यपि तत्र स्थानलाभरूपफलाभावात् विशेषोक्त्यलङ्कार, स च साक्षात् प्रतिपादकाभावाद्व्यज्यत इत्यर्थः। प्रतीयमानोत्प्रेक्षालङ्कारध्वनिश्चात्र अलङ्कारपरिच्छेदे वक्ष्यते।

ननु कविनिबद्धजनस्य प्रौढोक्तिरपि कवेः प्रौढोक्तिरेव, कविनैव कञ्चित् कल्पयित्वा तेन अनेन तथा तथा वाचितत्वात्; अतः कारिकायां कविप्रौढोक्तिसद्भात् कविनिबद्धजनप्रौढोक्तिसिद्धस्य कथ पृथक् प्रतिपादनमित्याह न खल्विति। कविनिबद्धस्येव कविनिबद्धजनस्येव, रागद्याविष्टता अनुरागोत्साहादिभिरधिष्ठितता, कवेवर्णयितृमात्ररूपत्वादिति भावः।

अर्थालङ्काराणां व्यञ्जकन्वस्थलेषु तैरलङ्कार्याणामपि वस्तूनां व्यञ्जकत्वस्य स्वभावसिद्धत्वात् वस्तूनां व्यञ्जकत्वामात्राङ्गीकारेणैवोपपत्तौ कथमलङ्काराणां व्यञ्जकत्वस्य पृथगङ्गीकार इत्याह एषु चेति। किञ्चेति चार्थः। एषु पूर्वोक्तेषु द्वादशसु अर्थ-शक्त्युद्भव व्यङ्ग्येषु मध्ये, अलङ्कृतिव्यञ्जनस्थले अलङ्कारकर्तृकवस्तुव्यङ्ग्यत्वस्थले। रूपम्—"धम्मिल्ले नवमल्लिकासमुदयः" इत्यादौ रूपकालङ्कारघटकं कीर्त्तिरात्रौ नवमल्लिकासमुदयत्वादीनामारोपकरणम्। उत्प्रेक्षणम्— "मल्लिकामुकुले चण्डि"! इत्यादौ उत्प्रेक्षालङ्कारघटकं भ्रमरगुञ्जने शङ्खवादनत्वसम्भावनाकरणम्। व्यतिरेचनम्—उपमानादुपमेयस्य आधिक्येन न्यूनत्वेन वा पृथक्करणम्। तत्तृह्यम्। आदिशब्दात् "आपतन्तममुं दूरात्" इत्यादौ उपमालङ्कारादि घटकानां सदृशीकरणादीनां ग्रहणम्। सहृदयसंवेद्यं तत्प्रतीतिमात्रसाक्षिकत्वादिति भावः। मात्रशब्दव्यवच्छेद्यं स्वयमेवाह न त्विति। कस्यादीनाम् आरोप्यमाणानां नवमल्लिकासमुदयत्वादीनाम्। आदिशब्देन उत्प्रेक्ष्यव्यतिरेच्यादीनां परिग्रहः। इति हेतोः अलङ्कृतेरलङ्कारस्यैव मुख्यत्वं प्राधान्यम्। अतः प्रधानानां पृथङ्गीकारौचित्यादलङ्काराणामपि व्यञ्जकत्वस्य पृथगेवाङ्गीकार इति भावः।

## विमला

महिलेति।—["महिलासहस्रभरिते तव हृदये सुभग! सा अमान्ती। अनुदिनमनन्यकर्मा अङ्गं तनुकमपि तनयति॥" इति संस्कृतम्]। दूजाः कस्याश्चित् नायकं प्रत्युक्तिरियम्। हे सुभग! सा—तव कान्ता, महिलानां—नारीणां, सहस्रेण, भरिते—पूरिते [एतेन स्थानाभावः सूचितः। भरो जातोऽस्य तत् भरितम् "तदस्य सञ्जातं तारकादिभ्य इतच्" (५/२/२६ पा.) इति इतश्चूप्रत्ययः] तव हृदये, अमान्ती—अवकाशमलभमाना, इत्यर्थः,

अनुदिनं—प्रतिदिनं, लक्षणया निरन्तरमित्यर्थः, अनन्यकर्मा—नान्यत् कर्म यस्याः सेति तथोक्ता, त्यक्तकार्यान्तरा सती इति यावत्, तनुकम्—अत्यन्तकृशमपि, अङ्गं तनयति—तनूकरोति, कृशीकरोतीत्यर्थः; तनोः कार्श्यातिशये जाते यदि स्थानं प्राप्नुयादित्याशया इति भावः । तव विरहे सा नितरां कृशा जाता, तदेनामनुगृह्णेति भावः । आर्या वृत्तम् ।

अत्रेति ।—अत्र "अमान्ती" इति—मनसोऽणुत्वात् अनुपलभ्यत्वाच्च तत्र मानमेव न सम्भवति, कुतः तल्लाभः ? पदार्थतया हेतुः निर्दिष्ट इति "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते" इति काव्यलिङअगमलङ्कारः, स च पदार्थस्य कविनिबद्धवक्तृप्रौढोक्तिसिद्धतया तथाविधो व्यङ्ग्यः इति भावः, तेन; तनोः—शरीरस्य, तनूकरणेऽपि—कृशीकरणेऽपीत्यर्थः । "तनुतनुकरणरूपकारमस्य सत्त्वेऽपि त्वद्धृदयवृत्तित्वरूपफलं नास्ति" इति "सति हेतौ फलाभावे विशेषोक्तिः" इति निर्दिष्टा विशेषोक्तिः । ननु कविनिबद्धप्रौढोक्तिसिद्धस्य कविप्रौढोक्तिसिद्धत्वमस्त्येवेति कथं तस्य पृथगुपादानम् ? इत्यत्र आह, न खल्विति ।—रागाद्याविष्टता—प्रणयिता इत्यर्थः । [आदिशब्देन उत्साहादिपरिग्रहः शेषः] । प्रौढोक्त्या हि वक्तृरागाद्याविष्टचित्तत्वं प्रतीयते । तत्र कव्यपेक्षया कविनिबद्धस्य वक्तुरधिकरागाद्यविष्टचित्तत्वमिति तद्व्यञ्जिकायाः प्रौढोक्तैरधिकचमत्कारकारित्वमिति भावः । प्रतिपादिता—गृहीता । ननु यत्रालङ्कारस्य व्यञ्जकत्वमुक्तं, तत्रालङ्कार्यस्य वस्तुनोऽपि व्यञ्जकत्वमस्त्येव, इति कथमलङ्कारस्य पृथगुपादानम् ? अत आह, एषु चेति ।—एषु—प्रागुक्तेषु द्वादशभेदेषु मध्ये, अलङ्कृतिव्यञ्जनस्थले—यत्रालङ्कारो व्यञ्जकस्तत्रेत्यर्थः । सहृदयसंवेद्यं—सामाजिकगम्यम् । रूप्यदीनाम्—आरोप्यमाणानां, नवमल्लिकासमुदयप्रभृतीनामित्यर्थः । [आदिपदेन उत्प्रेक्षणीयव्यतिरेचनीयादीनां ग्रहणम्] । मुख्यत्वं—प्राधान्यम् । अत एव प्राधान्येन व्यवहारः इति सारः ।

## लक्ष्मी

कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनालङ्कारेण अलङ्कारध्वनिं दर्शयति—महिलासहस्सेति ।

**'महिलासहस्रभरिते तव हृदये सुभग ! सा आमान्ती ।**

**अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनूकरोति' ॥**

इति संस्कृतम् । हालककविकृतायां शालिवाहनसप्तशत्यां (गाथा सप्तशत्यां) चतुर्थशतके नायकस्य बहुनायिकाभावनादुःखेन कृशाया नायिकाया अवस्थां नायके कथयन्त्यास्तत्सख्या उक्तिरियम् ! हे सुभग सौभाग्ययुक्त ! सा अकृत्रिमस्नेहा नायिका महिला रमणी तासां सहस्रेण भरिते व्याप्ते तव हृदये अमान्ती स्थातुमवकाशमलभमाना अनुदिनं दिवसं व्याप्य प्रतिदिनं च अनन्यकर्मा त्यक्तान्यकार्या सती यद्वा न अन्यत् तनु तासंपादकातिरिक्तं कर्म कर्त्तव्यं यस्याः सा तथोक्ता तनु स्वतःकृशमपि अङ्गं शरीरं तनूकरोति तनयति क्रशयति कथञ्चिदपि प्रवेशनाय कृशतरं करोतीत्यर्थः, अत एव सुभगेति सम्बोधनम् । अत्र सुभगेत्यनेन नायिकाया एवानुरागविषयत्वं न तुसा तवेति ध्वन्यते । एवं महिलासहस्रेत्यादिना त्वदनुरागविषया एव ता न तु त्वं तासामिति व्यज्यते । तनयतीति वर्त्तमाननिर्द्देशात् अद्यापि वृत्त्यभावं प्रतीयते । गाथाच्छन्दः ।

अत्रेति । कविनिबद्धवक्तृदूत्याः प्रौढोक्तिमात्रसिद्धेन न तु पारमार्थिकेनेत्यर्थः, सकलस्त्रीप्रियतमस्य तस्या अपि प्रियतमत्वेन स्थितिप्राप्तेरिति भावः । 'अमान्ती'त्यत्र महिलासहस्रबरितत्वं हेतुः, तनूकरणे चामान्तीत्वं हेतुरिति द्वाभ्यां हेत्वलङ्कारभ्यां 'तनोस्तनूकरणेऽपि तव हृदये न वर्त्तते' इति विशेषोक्तिः काव्यलिङ्गालङ्कारेणेत्यस्य

हेत्वलङ्कारेणेत्यर्थः हेतुगर्भत्वादेवैतादृशोऽर्थः। अत्रैकवचनं जात्यभिप्रायेण। विशेषोक्त्यलङ्कार इति। स्वल्पावकाशे हृदये स्थानप्राप्त्ये अङ्गतनूकरणरूपकारणसत्त्वेऽपि स्थानप्राप्तिरूपकार्याभावात् विशेषोक्त्यलङ्कार इत्यर्थः। स च साक्षात्प्रतिपादकाभावाद् व्यज्यत इत्यर्थः। दशमपरिच्छेदे—प्रतीयमानोत्प्रेक्षालङ्कारध्वनिरत्रेति वक्ष्यति मूलकारः स्वयमेव।

ननु कविनिबद्धवक्तुः प्रौढोक्तिरपि कवेः प्रौढोक्तिरेव, कविनैव कञ्चिद्विषयं कल्पयित्वा तेन वक्त्रा तथा तथा पठितत्वात्, अतः कविप्रौढोक्तिसिद्धत्वेनैव उभयसंग्रहसम्भवे कारिकायां किमर्थं कविनिबद्धवक्तृत्वेन पृथगुपादानमित्यत आह—न खल्विति। कविनिबद्धस्येव कविनिबद्धवक्तुरिव। रागादीत्यादिना उत्साहादिपरिग्रहः। प्रौढोक्त्या हि वक्तू रागाद्याविष्टचित्तत्वं प्रतीयते। तत्र कव्यपेक्षया कविनिबद्धस्य वक्तुरधिकरागाद्याविष्टचित्तत्वमिति तद् व्यञ्जिकायाः प्रौढेक्तेरधिकचमत्कारित्वमिति पृथगुपादानमिति भावः।

ननु रूपणमेव रूपकालङ्कारः, उत्प्रेक्षणमेवोत्प्रेक्षालङ्कारः, व्यतिरेचनमेव व्यतिरेकालङ्कारः, तथा च यत्र रूपकालङ्कारस्य व्यङ्ग्यत्वं तत्र किं रूप्यमाणवस्तूदाहरणं स्यात्? एवमुत्प्रेक्ष्यमाणव्यतिरिच्यमानवस्तुनोरपि। एवं हि वस्तूनां व्यञ्जकत्वमात्राभ्युपगमेनैवोपपत्तौ कथमलङ्काराणां व्यञ्जकत्वस्य पृथगुपादानमत आह—एषु चेति। किञ्चेति चार्थः। एषु प्रागुक्तद्वादशसु अर्थशक्त्युद्भवभेदेषु मध्ये इत्यर्थः अलङ्कृतिव्यञ्जनस्थले अलङ्काराव्यञ्जनस्थले। रूपणम्—'धम्मिल्ले नवमल्लिकासमुदयः' इत्यादौ रूपकालङ्कारघटकं कीर्त्तिराशौ नवमल्लिकासमुदयत्वादीनामारोपविधानम्। उत्प्रेक्षणम्—"सुभगे कोटिसंख्यत्वम्" इत्यत्र उत्प्रेक्षालङ्कारघटकं पञ्चबाणे पञ्चत्वत्यागेन वियोगिपञ्चत्वसम्भावनाकरणम्, एवं 'मल्लिकामुकुले चण्डि' इत्यादावप्यूह्यम्। व्यतिरेचनम्—उपमानादुपमेयस्य आधिक्येन न्यूनत्वेन वा पृथक्करणम् यथा 'दिशि मन्दायते तेजः' इत्यादौ। आदिपदात् उपमालङ्कारादिघटकानां सदृशीकरणादीनाम् 'आपतन्तममुं दूरात्'इत्यादौ ग्रहणम्। सहृदयसंवेद्यं तत्प्रतीतिमात्रसाक्षिकत्वादित्याशयः। मात्रशब्दव्यवच्छेद्यं दर्शयति—न त्विति। रूप्यादीनामित्यादिना उत्प्रेक्षणीयव्यतिरेचनीयादीनां ग्रहणम्। इति हेतोः अलङ्कृतेरलङ्कारस्यैव मुख्यत्वं प्रधानत्वम् अतो मुख्यानां पृथक्स्वीकारौचित्यादलङ्कारमामपि व्यञ्जकत्वस्य पार्थक्येनैवाभ्युपगम इति भावः।

## रुचिरा

अथालङ्कारेणालङ्कारध्वनिमुदाहरति-'**महिलासहस्सभरिए**'इत्यादिना।

'**सुहअ** हे सुभग! परमैश्वर्यशालिन्निति यावत्। **महिलासहस्सभरिए** महिलानां वधूनां सहस्रं तस्य भरितं सङ्ग्युक्तं तत्र। भरो जातो यस्य तत्। 'तदस्य सञ्जातं तारकादिभ्य इतच्।' ५/२/३६। इतीतच्। 'वनिता महिला तथा' इत्यमरः। **तुह** तव धूर्त्तसुभगस्येति यावत्। मनोहारित्वेन वञ्चकत्वेन च तस्य तत्त्वात्। **हिअए** हृदये तदुपलक्षितान्तःप्रदेशविशेषस्य मध्ये इति यावत्। **अमाअंती** अमान्ती स्थानमविन्दन्तीति यावत्। अत एव **अणण्णकम्मा** अनन्यकर्माऽनन्यकर्तव्या त्यक्तसमस्तकर्त्तव्यान्तरवादिति यावत्। नान्यद् वक्ष्यमाणाङ्गतनूकरणातिरिक्तं कर्म यस्याःसा। **सा** प्रकृता साध्वीत्वेन सत्खभावत्वेन स्वभावतः कृशोदरीत्वेनैव वा प्रसिद्धेत्यर्थः। **अणुदिणम्** अनुदिनं प्रतिदिनमिति यावत्। **तणुअं** तनुकं सूक्ष्ममिवेति यावत्। तन्विव सनुकम्। 'इवे प्रतिकृतौ।' ५/३/९६। इति कन्। 'तनुः काये त्वचि स्त्री स्यात् त्रिष्वल्पे विरले कृशे' इति विश्वमेदित्यो। **पि** अपि न तु स्थूलम्। **अंग** अङ्गम्। **तणुएइ** तनयति तनूकरोतीति यावत्। तत्र प्रवेशलाभायेति शेषः। पद्यमिदं गाथासप्तशत्याम्। गाथा चात्र च्छन्दः। लक्षणं तु प्रागुक्तम्॥ १८७॥

अत्र व्यङ्ग्यमाह-**अत्रे**त्यादिना ।

**अत्रा**स्मिन्नुदाहृते पद्य इति यावत् । '**अमाअंती**' अमान्ती । हृदयस्य स्वतः सूक्ष्मत्वेऽपि महिलासहस्त्रभरितत्वेन सुतरां निरवकाशत्वे सूक्ष्मत्वमिति तत्रावकाशमानाऽवकाशलाभायाङ्गं तनूकरोतीति यावत् । **इत्येवं** 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्ग' मित्युक्तदिशेति यावत् । **कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन** कविना निबद्ध उत्तम्भितस्वरूपोऽसौ वक्ता नायकाय नायिकाया विरहदशामावेदयन् यः सखीजनस्तद्रूपस्तस्य प्रौढोक्तिसिद्धेन । **काव्यलिङ्गालङ्कारेण** अत्र जात्यभिप्रायेणैकवचनमिति काव्यलिङ्गाराभ्यामित्यर्थः । 'अमाअंती' इत्यत्र 'महिलामसहस्सभरिए' इति सूक्ष्यमानोहेतुः 'तणएइ' इत्यत्र पुनः 'अमाअंती' इति सूच्यमानः, तदेवं काव्यलिङ्गद्वितयत्वम् । **तनोः** सूक्ष्मस्य शरीस्येति **वा** । 'तनुर्वपुस्त्वचोः । विरलेऽल्पे कृशे' इति हेमः । **तनूकरणे** सूक्ष्मकरणे । **अपि । तव** महिलासहस्त्रभरितहृदयस्येत्यर्थः । **हृदये । न** नैव । **वर्त्तते** स्थानाभावादप्रविष्टैव तावद्विद्यते इत्यर्थः । **इत्येवं** 'कारणसत्त्वेऽपि कार्यानुत्पत्ते' रित्यर्थः **विशेषोक्त्यलङ्कारः** 'सति हेतौ फलाभावो विशेषोक्ति' रित्युक्तस्वरूपोऽलङ्कारः । **व्यज्यते** ध्वन्यते ।

यथा वा, मम-'जपदिव तपदिव सलिले केवलमुद्यन्तमीक्षते सूर्यम् । तदपि न जातं कमलं सुभगे ! वदनेन ते सदृशम् ॥' इति । अस्यायमर्थः-'हे सुभगे ! सलिले जलमध्ये तिष्ठज्जपज्जपं कुर्वदिव तपत्तपः कुर्वदिव कमलम् (कर्त्तृ) उद्यन्तमुदयमानं सूर्यं भगवन्तं गायत्र्युपास्यं सवितारमीक्षते तन्मात्रमनस्कतया तदेकलग्नदृष्टिभूत्वाऽद्य यावद्वर्त्तते । तदपि एव मजहज्जपादिकुर्वाणमपि तदेतदवधि ते तव वदवेन मुखेन सदृशं न जातं किं पुनस्तदुपमानभूत' मिति । अव कविनि बद्धप्रौढोक्तिसिद्धेनोत्प्रेक्षाऽलङ्कारेण व्याजस्तुत्याख्येन वाऽलङ्कारेण व्यतिरेको व्यज्यते ।

यथा वा, मम-'अमृतनिधानं रुचिरं सन्तापनिवर्त्तने सदा मुदितम् । चन्द्रमुखं तव सुन्दरि ! सुस्मितभासा विकाशते । परितः ॥' इति । अस्यायमर्थः-हे सुन्दरि ! अमृतस्य पीयूषस्य तथाभूतस्यास्वादस्य निधानमाधारभृतं रुचिरं मनोज्ञं रुचिं कान्तिं राति ददातीति तथाभूतं सन्तप्तानां पुनः सन्तापनिवर्त्तने सदा न तु कदाचिदेव मुदितमुल्लासभाक् न तूदासीनं न वाऽहृष्टम् । तव चन्द्रमुखं चन्द्र एवं मुखं न तु मुखमेव चन्द्रः, सुस्मितभासा मन्दमन्दरुचिरहासः सम्बन्धिन्या कान्त्या परितः समन्ताद्विकाशते ॥' इति । अत्र कविनिबद्धप्रौढोक्तिसिद्धेन रूपकेण 'प्रसिद्धश्चन्द्रो नक्तमेव गृहिणामेव च सन्तापं निवत्रयति, इदं पुनर्नक्तंदिनं, गृहिणां पथिकानां चेत्युभयेषामपि सन्तापनिवर्त्तक' मिति व्यतिरेकः, 'चन्द्रो यथा भासा विकाशते तथा पुनरिदं सुस्मितेने' ति श्लिष्टं रूपकं, न तु शिलष्टोपमा, तत्र प्रसिद्धस्यैवोपमानोपमेभावस्य तादवस्थ्येनाङ्गीकारात्, अत्र पुनः 'चन्द्रमुख' मित्युक्त्या 'मुखचन्द्र' इत्यनुक्त्या च प्रतिद्धस्येपमानस्य चन्द्रस्योपमेयभावेनारोपस्यैव न तु सादृश्यस्य सद्भाव इति तयोः संसृष्टिर्व्यज्यते ।

नन्वस्त्येव कवेः प्रौढोक्तिसिद्धत्वं तन्निवद्धस्यापि वक्तृविशेषस्य, किं पुनस्तयोः पृथक्त्वमित्याह-

नेत्यादि ।

**कविनिबद्धस्य** कविना निबद्ध उत्तम्भितस्वरूपस्तस्य तादृशस्य वक्तुः । **रागाद्याविष्टता** रागोऽनुरागस्तदाद्ययाविष्टत्वम् । आदिपदं चात्रात्साहाद्यनुग्राहकम् । **इव** यथातथा । **कवेः** तन्निबद्धः । रागाद्याविष्टेति शेषः । **न । खलु** नूनम् । **अतो**ऽस्मात् कारणात् । प्रौढोक्ते रागाद्याविष्टत्वप्रत्यायिकत्वेऽपि कवेरपेक्षया तन्निबरूद्धय वक्तुरधिकारागाद्याविष्टताप्रत्ययायनादिति भावः । **कविप्रौढोक्तेः** कविप्रौढेक्त्यपेक्षया । **कविनिबद्धवक्तृप्रौ-**

**ढोक्तिः । अधिकं** सातिशयम् । **सहृदयचमत्कारकारिणी** सहृदयानां चमत्कारो लोकोत्तराह्लादस्तत्कारिणी तद्धिधात्री । इत्येवं मीमांसयित्वेत्यर्थः । **पृथक्** कविप्रौढोक्तेरिति शेषः । **प्रतिपादिता** । कविनिबद्धवक्तृप्रौढोक्तिरिति शेषः ।

अत्रेदमभिहितम्-'न हि कविना परदारा एष्टव्या नापि चोपदेष्टव्याः । कर्त्तव्यतयाऽन्येषां न च तदुपायोऽभिधातव्यः ॥ किन्तु तदीयं वृत्तं काव्याङ्गतया स केवलं वक्ति । आराधयितुं विदुषस्तेन न दोषः कवेरत्र ॥' इति रुद्रटोक्तनयेन, वाल्मीकिप्रभृतीनामपि कवित्वेन तन्निवद्धानामिव रागाद्याविष्टताया अन्याय्यकल्पनायाश्च न खलु कुत्रापि कवेस्तन्निबद्धस्येव तंत्रतत्र रागाद्याविष्टत्वं, किन्त्वौ दासीन्यमेवेति कविप्रौढोक्तेः कविनिबद्धप्रौढोक्तावस्त्येवाधिकचमत्कारकारित्त्वम् । इति ।

ननु यत्रालङ्कारस्य व्यञ्जकत्वमुक्तं, तत्रास्त्येवालङ्कार्य्यस्य वस्तुनोऽपि व्यञ्जत्वं कथं तयोर्भेद इत्याहपष्वित्यादि ।

एषु प्रागुक्तेषु द्वादशस्वर्थशक्त्यनुराणनस्स ध्वनेर्भेदेषु मध्ये इत्यर्थः । **च । अलङ्कृतिव्यञ्जनस्थले**ऽलङ्कृतिरलङ्कारस्तस्य व्यञ्जनं ध्वनिस्तत्स्थलं तद्वति शब्दे इति यावत् । **रूपणोत्प्रेक्षणव्यतिरेचनादिमात्रस्य** । अन्यस्मिन्नन्यारोपो रोपणम्, कञ्चिदंशमादायावास्तविकस्यापि वास्तविकत्वेन सम्भावनमुत्प्रेक्षणम्, परस्परं वैलक्ष्याभिधानं व्यतिरेचनम्' आदिना चापह्नवनादि, मात्रपदेन पुना रूप्यादिव्यवच्छेदः । **प्राधान्यं** ध्वन्यमानत्वं, न गुणीभूतत्वम् । **सहृदयसंवेद्यं** सहृदयसाक्षिकम् । तत एवाह-**रूप्यादीनां** रूप्योत्प्रेक्ष्याव्यतिरेच्यापह्नव्यादीनामित्यर्थः । **तु** । प्राधान्यमिति शेषः । **न** । तस्यावास्तविकत्वेन सहृदयसम्वेद्यत्वाभावादिति **शेषः । इत्यतः** कारणात् । अलङ्कृतेरलङ्कारस्य । **एव** निर्बाधरम् । **मुख्यत्वं** प्राधान्यम् । तदेवं तस्य सहृदयसक्षिकत्वेन ध्वनिरिति व्यपदेशार्हत्वमिति भावः ।

एवं द्वादशभेदात्मकार्थशक्त्यनुरणनमुदाहृत्य शब्दार्थोभयशक्त्युनुरणनध्वनिमाह-२९० **एक** इत्यादिना ।

**एकः शब्दार्थशक्त्युत्थे—**

उभयशक्त्युद्भवे व्यङ्ग्ये एको ध्वनेर्भेदः।

यथा—

**'हिममुक्तचन्द्ररुचिरः सपद्मको मदयन्द्विजाञ्जनितमीनकेतनः।**

**अभवत्प्रसादितसुरो महोत्सवः प्रमदाजनस्य स चिराय माधवः॥'**

अत्र माधवः कृष्णो माधवो वसन्त इवेत्युपमालंकारो व्यङ्ग्यः।

---

## विवृतिः

**हिममुक्तेति**। हिममुक्तो निर्मलो यश्चन्द्रः स इव रुचिरोऽभिलषणीयः। वसन्तपक्षे—हिममुक्तेन चन्द्रेण रुचिरो दीप्यमानः। पद्मा लक्ष्मीस्तत्सहितः। पक्षे—पद्मयुक्तः। द्विजान् विप्रान्, कोकिलांश्च। जनितप्रद्युम्नः। पक्षे—जनितसुरताभिलाषः। प्रसादिताः प्रसन्नचित्तीकृताः सुरा देवा येन। पक्षे—प्रसादिता विमलीकृता सुरा मद्यं येन। माधवः श्रीकृष्णः वसन्तश्च। अत्रोभयशक्तिव्यङ्ग्यस्य वसन्तस्योपरमा उभयशक्तिव्यङ्ग्या। तथाहि—प्रमदाजनस्य महोत्सवजनने वसन्तस्यैव सामर्थ्यमित्यर्थप्रतिसंधानसहकृतेन माधवपदेन वसन्त एव व्यज्यते न त्वर्थान्तरम्। तस्य तत्र सामर्थ्याभावात्। न चात्र शब्दार्थोभयश्लेषसत्त्वेनोभयशक्तिव्यङ्ग्योपमेति वाच्यम्।

## विवृतिपूर्तिः

उपमेति। अत्रोपमालंकारश्चन्द्रपद्मादिशब्दानां परिवृत्त्यसहिष्णुतया हिममुक्तादिकानां तत्सहिष्णुतया उभयस्यापि प्राधान्येन व्यञ्जकत्वादुभयशक्तिमूलकः। यथा वा मम—'राजकोटिमनोहारी वृषस्थितिपरायणः। स हि सेव्यो महादेवो विकसत्सर्वमङ्गलः॥'इत्युदाहार्यम्॥

## विज्ञप्रिया

उभयशक्त्युत्थमुदाहरणमाह—**एकेति**। एकः प्रभेद इत्यर्थः। शब्दशक्त्युत्थे व्यञ्जने तत्प्रपञ्चस्य अर्थशक्त्युत्थे व्यञ्जने तत्प्रपञ्चस्य दर्शितत्वात्। उभयशक्त्युत्थप्रपञ्चस्य तावतैव गतार्थत्वात् एक इत्युक्तम्। न तु दर्शयिष्यमाणोदाहरणेऽलङ्कारस्य व्यङ्ग्यत्वात् अलङ्काररूपतया एक इत्युक्त इति केनचिदुक्तं युक्तम्।

**"क्षणदासावक्षणदावनमवनं व्यसनमव्यसनम्।**

**बत वीर! तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम्॥"**

इत्यत्राऽर्थान्तरन्यासघटकशब्दशक्त्याऽर्थान्तरन्यासरूपाऽर्थशक्त्या च विधिरपि त्वामनुवर्त्तते इति वस्तुव्यञ्जनाया अपि सम्भवात् स्वतः सम्भव्याद्यर्थव्यङ्ग्यत्वेन भेदान्तरप्रसक्तेर्दुर्वारत्वाच्च।

**"हिममुक्तेति**—माधवः कृष्णः प्रमदाजनस्य महोत्सवो महोत्सवे हेतुश्चिराय अभवत्। अत्र शुद्धसारोपा लक्षणा। कीदृशः हिममुक्तचन्द्र इव रुचिरः। सपद्मकः पद्म्या लक्ष्म्या हस्तपादस्थरेखारूपपद्मेन वा सहितः।

द्विजान् ब्राह्मणान् मदयन् आनन्दयन् । जनितो मीनकेतनः प्रद्युम्नः येन तादृशः । प्रसादिताः प्रीणिताः सुरा देवा येन तादृशश्च । अत्र माधवो वसन्तोऽपि शब्दशक्त्या अर्थशक्त्या च व्यज्यते । तथा हि माधवशब्दस्य वसन्तेऽपि शक्त्या सपद्मक इत्यत्र सपद्मकशब्दरूपस्य पद्मसहितेऽपि शक्त्या, द्विजान् इत्यत्र द्विजशब्दस्य पक्षिष्वपि शक्त्या, जनितमीनकेतन इत्यत्र सुराप्रसादनेऽप्यस्य शब्दस्य शक्त्या च वसन्तप्रत्यायने शब्दशक्तिः । हिममुक्तेत्यत्र प्रमदाजनस्येत्यत्र श्लिष्टशब्दाभावात् अर्थशक्तिः । ततश्च वसन्तस्याऽप्राकरणिकत्वेन तत्प्रत्यायनस्य प्रकृतेऽनुपयोगाद् वसन्त इव कृष्ण इत्युपमाप्रतीतिः । तदाह—**उपमालङ्कार** इति ।

## लोचन

**हिमेति**—हिममुक्तचन्द्र इव पक्षे हिममुक्तचन्द्रेण रुचिरः । पद्मा लक्ष्मीः पद्मं कमलं च । मीनकेतनः प्रद्युम्नावतारः, सामान्यमदनश्च, सुराः त्रिदशाः, सुरा मद्यम् । माधवो हरिर्वसन्तश्च । अत्र माधवशब्दप्रतिपाद्यतया हरिवसन्तयोः औपम्यप्रतिपादकस्य हिममुक्त इत्यादिशब्दस्य शब्दपरिवृत्तिसहत्वादर्थशक्तेर्दार्ढ्यम् ।

## कुसुमप्रतिमा

इदानीं शब्दार्थोभयशक्तिमूलध्वनिभेदमाह एक इति । शब्दार्तयोरुभयोः शक्त्या उत्थे उत्पन्ने व्यङ्ग्ये एको ध्वनेर्भेदः स्यात् । वस्तुरूपयोः शब्दार्थयोरुभयोरेवात्र व्यञ्जकत्वात् वस्तुभिन्नतया प्राक्प्रतिपादितस्य केवलालङ्कारस्यैव पारिशेष्येण व्यङ्ग्यत्वात् तस्य च सामान्येनैकत्वात् शब्दार्थोभयशक्तिमूलो ध्वनिरलङ्कारमात्ररूप एक एवेति बोध्यम् ।

हिमेति । शिशुपालवधस्य त्रयोदशसर्गे हरेरिन्द्रप्रस्थोपस्थितौ वृत्तान्तवर्णनमिदम् । हिमेन हिमावरणेन मुक्तो यश्चन्द्रस्तद्वते रुचिरः सुन्दरः, अन्यत्र तु हिमात् शीतकालात्, मुक्तेन उत्तीर्णेन चन्द्रेण रुचिरः । पद्मया भार्यया श्रिया सहेति सपद्मकः, अन्वत्र प्रस्फुटितपद्मपुष्पान्वितः । द्विजान् ब्राह्मण क्षत्रियवैश्वान् कोकिलादीन् पक्षिकञ्च, मदयन् विनयसम्भाषणादिना आनन्दयन् स्वभावेनैव उन्मतीकुर्वश्च । जनितमीकेतन उत्पादितप्रद्यु म्नाख्यपुत्रः, विहितकामावेगगश्च । प्रसादिता दैत्यवधादिना सन्तोषिताः सुरा देवगणायेन सः, अन्वत्र प्रसादिता निर्मलीकृता सुरा मद्यं येन सः । "माधवः श्रीकृष्णः वसन्तकालश्च प्रमदाजनस्य पौराङ्गनागणस्य चिराय महोत्सवो दर्शनदानेनैव महानन्दजनकः अभवत् ।

अत्रेति । उपमालङ्कारो व्यङ्ग्य इति । अन्यथा "दुर्गलङ्घितविग्रहः" इत्यादिवत् अप्राकरणिकस्य वसन्तरूपद्वितीयार्थस्य वर्णनमसम्बद्धं स्यादिति भावः ।

## विमला

एक इति ।—शब्दार्थशक्त्युत्थे—शब्दार्थयोः, शक्त्या—सामर्थ्येन, उत्थे—उत्पन्ने, व्यङ्ग्येय इति शेषः, एकः, भेद इति शेषः; शब्दार्थोभयशक्त्युत्यः संलक्ष्यक्रमव्यङ्ग्य एकभेद एवेत्यर्थः । अयं भावः,—शब्दशक्तिकारणकत्वमर्थशक्तिकारणकत्वञ्च इत्युभयस्यापि सर्वव्यङ्ग्यसाधारण्यं सिद्धम्; तयोः परामर्शाभावे व्यङ्ग्यस्यास्फुरणात्, तथाऽपि विनिमयमसहमानानां शब्दानामाधिक्ये तत्प्रतिपादितात् मुख्यत्वात् वर्त्तमानाया अत्यर्थशक्तेरमुख्यत्वाच्च शब्दशक्तिकारणकत्वेन एव निर्देशः; विनिमयं सहमानानां चाधिक्ये अर्थनिष्ठायाः शक्तेरेव मुख्यत्वात् वर्त्तमानाया अपि शब्दनिष्ठायाः शक्तेः मुख्यानुसार्यर्थतया भट्टपल्लीग्रामादिवत् मुख्येनैव

निर्देशः ज्ञेयः। यत्र विनिमयसय सहिष्णूनामसहिष्णुनाञ्च शब्दानां न ह्येकजातीयं प्राचुर्यं, किन्तु सादृश्यमेव, तत्रोभयशक्तिकारणकस्य व्यङ्ग्यस्यावस्थानमिति शब्दार्थोभयोत्थः ध्वनिः; न चासौ एकशक्तिकारणकतया कथयितुमर्हः, प्रमाणाभावात्; इति सारः।

हिमेति।—हिममुक्तः,—हिमावरणशून्यः, निर्मल इत्यर्थः, यश्चन्द्रः तद्वत् रुचिरः,—मनोहरः, अन्यत्र,—तेन रुचिरः,—दीप्यमानः, पद्मया—लक्ष्म्या सह वर्त्तमानः सपद्मकः, अन्यत्र—पद्मयुक्तः, द्विजान्—ब्राह्मणान्, अन्यत्र—पक्षिणः, कोकिलादीन् इत्यर्थः, मदयन्—हर्षयन्, जनितः,—उत्पादितः,मीनकेतनः,—कामः, प्रद्युम्नः इत्यर्थः, येन तथोक्तः, अन्यत्र—जनितसुरताभिलाष इत्यर्थः, प्रसादिताः,—प्रसङ्गतां प्रापिताः, सूराः,—देवाः, येन सः, दैत्यविध्वंसनादिनेति भावः, अन्यत्र—प्रसारिताः,—विमलीकृताः, सुराः,—मद्यानि, येन तथाविधः, स माधवः—कृष्णः, अन्यत्र—वसन्तः, चिराय प्रमदाजनस्य—नारीजनस्य, महोत्सवः,—महाऽऽनन्दस्वरूपः अभवत्। अत्र चन्द्रपद्मादिशब्दार्थोभयशक्तिव्यङ्ग्यस्य वसन्तस्योपमा शब्दार्थोभयशक्तिव्यङ्ग्या, विनिमयाक्षमत्वेन चन्द्रादीनां, विनिमयक्षमत्वेन च हिममुक्तादीनाम्; शब्दार्थयोरेव मुख्यत्वेन व्यञ्जकत्वमिति शब्दार्थोभयशक्तिनिमित्तकत्वं तस्याः सिद्धम्। तथाहि—प्रमदाजनस्य महोत्सवजनने वसन्तस्यैव सामर्थ्यमित्यर्थः, (यदर्थे यस्य प्रसिद्धिः तत्रैव तदर्थस्य सामर्थ्यम्; एवमेव काव्यप्रकाशकारः) प्रतिसन्धानसहकृतेन माधवपदेन वसन्तपदार्थ एव व्यज्यते, न त्वर्थान्तरम्; तस्य तत्र सामर्थ्याभावात्। न चात्र शब्दार्थोभयश्लेषसत्त्वेन उभयशक्तिव्यङ्ग्यत्वं स्यात्। "गृहीतगरिमा—" इत्यर्थश्लेषस्यापि तत्र सत्त्वादिति सङ्क्षेपः। मञ्जुभाषिणी वृत्तम्;—"सजसा जगौ च यदि मञ्जुभाषिणी" इति तल्लक्षणात्।

## लक्ष्मी

एवं द्विविधं शब्दशक्तिमूलं द्वादशविधमर्थशक्तिमूलं च संलक्ष्यक्रमव्यङ्ग्यं ध्वनिं प्रदर्श्येदानीमेकविधमुभयशक्तिमूलं तं प्रदर्शयति—एक इति। शब्दश्चार्थश्चेति शब्दार्थौ तद्रूपमुभयोः शक्त्या उत्थे उत्पन्ने व्यङ्ग्ये एकः ध्वनेर्भेदः स्यात्। वस्तुरूपयोः वस्तुरूपयोः शब्दार्थयोरुभयोरेवात्र व्यञ्जकत्वात् वस्तुभिन्नतया पूर्वप्रदर्शितस्य केवलालङ्कारस्यैवावशिष्टत्वेन व्यङ्ग्यत्वात् तस्य च सामान्येनैकविधत्वात् शब्दार्थोभयशक्तिमूलो ध्वनिरलङ्काररूप एक एवेति ध्येयम्। यद्यपि शब्दशक्तिमूलेऽप्यर्थस्य अर्थशक्तिमूलेऽपि शब्दस्य व्यञ्जकत्वमस्तीति उभयशक्तिमूलत्वं सर्वत्रैवास्ति तथापि तत्र गुणप्रधानभावेनेति न काव्यनुपपत्तिः, अत्र तु द्वयोरेव प्राधान्येन व्यञ्जकत्वमित्युभयशक्तिमूलत्वम्—तथाहि परिवृत्त्यसहिष्णूनां शब्दानां प्राचुर्ये तत्प्रयुक्तात्प्राधान्यात् विद्यमानाया अप्यर्थशक्तेरप्राधान्याच्च व्यङ्ग्यस्य शब्दशक्तिमूलकत्वेनैव व्यवहारः, परिवृत्तिसहिष्णूनां तु प्राचुर्येऽर्थशक्तेरेव प्राधान्यात् विद्यमानाया अपि शब्दशक्तेः प्रधानानुगुण्यार्थतया मल्लग्रामादिवत् प्रधानेनैव व्यवहारः, यत्र तु परिवृत्तिसहमानानामसहमानानां च नैकजातीयप्राचुर्यम्, किन्तु साम्यमेव तत्रोभयोरेव प्राधान्येन व्यङ्ग्यार्थोपस्थापकपदानामविशेषे शब्दार्थोभयशक्तिमूलत्वं ज्ञेयम्। न चायमन्यतरशक्तिमूलकंतयैव व्यपदिश्यतामिति वाच्यम्, तत्र प्रमाणाभावात्।

विवृणोति—उभयशक्त्युद्भव इति। उभयशक्तिः शब्दार्थोभयशक्तिः सैव उद्भव उत्पत्तिस्थानं यस्यतस्मिंस्तथोक्ते। ध्वनेः शब्दार्थशक्तिमूलस्य संलक्ष्यक्रमव्यङ्ग्यस्येति शेषः। भेदः प्रभेदः।

उभयशक्तिमूलं ध्वनिमुदाहरति—हिममुक्तेति। माघकाव्यस्य त्रयोदशसर्गे श्रीकृष्णस्येन्द्रप्रस्थोपस्थितौ स्थितिवर्णनमिदम्। हिमेन प्रालेयावरणेन मुक्तः निर्मल इत्यर्थः यश्चन्द्रः स इव रुचिरो मनोज्ञः, वसन्तपक्षे—

हिमात् शीतकालात् मुक्तेन त्यक्तेन चन्द्रेण रुचिरो दीप्यमानः । पद्मा लक्ष्मीः तया सहितः सपद्मकः, पक्षे—विकसितपद्मपुष्पयुक्तः । द्वभ्यां संस्काराभ्यां जाता द्विजाः ब्राह्मणक्षत्रियवैश्यास्तान्, पक्षे—कोकिलादीन् पक्षिणश्च 'दन्ता विप्राण्डजा द्विजाः' इत्यमरः, मदयन् विनयसम्भाषणादिना हर्षयन्, पक्षे—स्वभावेनैव विक्षेपादिकं कुर्वंश्च । जनित उत्पादितः मीनकेतनः प्रद्युम्नाख्यपुत्रश्च येन तादृशः, पक्ष—जनितसुरताभिलाषः । प्रसादिता असुरवधादिना प्रसन्नचित्तीकृताः सुरा देवा येन तादृशः, पक्षं—प्रसादिताविमलीकृता सुरा मद्यं येन सः । स माधवः श्रीकृष्णः वसन्तश्च प्रमदाजनस्य नगररमणीगणस्य चिराय महोत्सवः दर्शनप्रदानेनैव महानान्दोत्पादकः अभवत् । माधवपदस्यं शक्त्या वसन्तप्रत्यायने शब्दशक्तिः, प्रमदाजनस्येत्यत्र च श्लिष्टशब्दाभावात् अर्थशक्तिरित्युभयशक्तिमूलो ध्वनिः । अत्रोभयशक्तिव्यङ्ग्यस्य वसन्तस्योपमा उभयशक्तिव्यङ्ग्या तथाहि—प्रमदाजनस्य महोत्सवजनने वसन्तस्यैव सामर्थ्यम् 'यदर्थे यस्य प्रसिद्धिस्तत्रैव तदर्थस्य सामर्थ्यमि'ति नियमेनार्थप्रतिसंधानसहकृतेन माधवपदेन वसन्त एव ध्वन्यते न त्वर्थान्तरम्, तत्र तस्य सामर्थ्यविरहात् । नचात्र शब्दार्थोभयश्लेषसत्त्वेनोभयशक्तिव्यङ्ग्योपमेति वाच्यम्, तथा सति 'दुर्गालङ्घितविग्रहः'इत्यत्राप्युभयश्लेषसत्त्वेनोभयशक्तिव्यङ्ग्यमुपाद्येत गृहीतगरिमेत्यर्थश्लेषस्यापि तत्र विद्यमानत्वात् ।

व्यङ्ग्यमुपपादयति—अत्रेति । उपमालङ्कारो व्यङ्ग्य इति । दुर्गालङ्घितविग्रहः' इत्यादाविव वसन्तस्याऽप्राकरणिकत्वेन तत्प्रत्यायनस्य प्रकृतेऽनुपयोगात् वसन्त इव कृष्ण इत्युपमालङ्कारश्चन्द्रपद्मादिशब्दानां परिवृत्त्यसहिष्णुतया हि मुक्तादिकानां तत्सहिष्णुतया द्वयोरपि प्राधान्येन व्यञ्जकत्वादुभयशक्तिमूलकः, स च वाचकपदाभावात् व्यङ्ग्य एव ।

## रुचिरा

२९० **शब्दार्थशक्त्युत्थे** शब्दार्थयोः शक्तिस्तस्या उत्तिष्ठतीति तत्र । व्यङ्ग्ये इति शेषः । **एक** एकः प्रभेदः । शब्दार्थोभयशक्तिमूलः संलक्ष्यक्रमव्यङ्ग्यो नाम ध्वनिरेकप्रभेद एव, तत्र व्यङ्ग्यस्य शब्दार्थोभयशक्त्यनुरणनत्वमात्रेण भेदान्तरानुत्पत्तेरिति भावः ।एवमेव विवृणोत्युभयशक्युद्भव इत्यादिना ।

**उभयशक्त्युद्भवे** उभयशक्तिः शब्दार्थोभयशक्तिः, सैवोद्भव उत्पत्तिस्थानं यस्य तस्मिन्निति, तस्या उद्भवतीति तस्मिन्निति वा तथोक्ते । **व्यङ्ग्ये** सतीति शेषः । **एकः** । **ध्वनेः** । शब्दार्थशक्तिमूलस्य संलक्ष्यक्रमव्यङ्ग्यस्येति शेषः । **भेदः प्रभेदः** ।

उदाहरति-**यथेति** ।

**'हिममुक्तचन्द्ररुचिरो** हिममुक्तो हिमावरणशून्यत्वेन निर्मलो यश्चन्द्रस्य इव रुचिरोऽभिलषणीयः, हिममुक्तश्चन्द्रो यत्र तादृशोऽसौ रुचिर इति वा । विवृतिकारास्तु 'हिममुक्तेन चन्द्रेण रुचिरो दीप्यमानः' इत्याहुः । **सपद्मकः** पद्मया लक्ष्म्या पद्मैः कमलैर्वा सहित इति । **द्विजान्** विप्रान् कोकिलादीन् पक्षिणो वा । **मदयन्** हर्ष यन् स्थित इति शेषः । **जनितमीनकेतनो** जनितः पुत्रत्वेनोत्पादितः सुरतोत्सववर्धकत्वेन समुल्लासितो वा मीनकेतनः प्रद्युम्नो मदनो वा येन सः । **प्रसादितसुरः** प्रसादिताः प्रसादं प्रसन्नतामानीता गता वा सुरा येन यत्र वेति । विवृतिकास्तु-'प्रसादिता विमलीकृता सुरा मधं येने'त्याहुः । **स** प्रकृत प्रसिद्धो वा । **माधवो** यदुनन्दनो वसन्तो वा **प्रमदाजनस्य** वधूजनस्य । **महोत्सवः** । **चिराय** चिरकालपर्यन्तम् । **अभवदभूत्** । । १८८ ॥' इति ।

अत्र व्यङ्ग्यमाह-**अत्रैत्यादिना** ।

अत्रास्मिन्नुदाहृते पद्ये । '**माधवस्तत्पदाच्यः** । **कृष्णः** । **माधवस्तत्पदवाच्यः** । **वसन्त** ऋतुराजः । **इव** ।' **इत्येवम् उपमालङ्कारः** । शब्दार्थोभयशक्तिमूल इति शेषः । **व्यङ्ग्यो** ध्वन्यः । अत्रेदं तात्पर्यम्-सपद्मकद्विजमाधव-शब्दानां परिवृत्त्यसहिष्णुत्वं, हिममुक्तादिशब्दानां पुनः परिवृत्तिसहिष्णुत्वमिति शब्दार्थोभयस्य प्राधान्येन व्यङ्ग्यो-पमेति ग्रन्थकाराणां, विवृतिकाराणां पुनः प्रमदाजनस्य महोत्सवजनने 'यदर्थे यस्य प्रसिद्धिस्तत्रैव तस्य सामर्थ्यम्' इति वसन्तस्यैव सामर्थ्यम् । प्रतिसन्धानसहकृतेन माधवपदेन वसन्त एव व्यज्यते न त्वर्थान्तरम् । तस्य (माधवप-दस्य) तत्र (अर्थान्तरे) सामर्थ्याभावात् । न चात्र शब्दार्थोभयश्लेषसत्त्वेन शब्दार्थोभयशक्तिव्यङ्ग्योपमेति वाच्यम् । तथा सति 'दुर्गालङ्घित-' इत्यत्राप्युभयश्लेषसत्त्वेनोभयशक्तिव्यङ्ग्यत्वं स्यात् । 'गृहीतगरिमे' त्यर्थश्लेषस्यापि तत्र सत्त्वात् । इति, अथान्येषाम्-'दुर्गालङ्घितविग्रहः' इत्यत्र परिवृत्तिसहिष्णूनां वल्लभादिशब्दानामर्थान्तरव्यञ्जकताया अभावात् परिवृत्त्यसहिष्णूनामेवोमादिशब्दानामर्थान्तरव्यञ्जकतायाश्च सद्भावान्न शब्दार्थोभयशक्तिमूलत्वं, प्रकृते पुनः 'हिममुक्तचन्द्रादिशब्दानां परिवृत्तिसहिष्णूनां सपद्मकादिशब्दानां पुनः परिवृत्त्यसहिष्णूनामिम्युभयेषा-मप्यर्थान्तरव्यञ्जकत्वमिति शब्दार्थो भयव्यङ्ग्यत्वं निर्बाधमिति ।

यथा वा, मम-'विलसन्त्स्पृहणीयरुचिर्मित्रप्रेम्णा विमुक्तचन्द्रमनाः । जीवनदिव्यविभूतिः पद्मिनि ! मान-समुपेताऽसि ॥' इति । अस्यायमर्थः-'हे पद्मिनि सुन्दरीणां मुख्ये ! कमलिनि ! इति वा त्वं विलसत्स्पृहणीयरुचि-विंलसतो विलासं कुर्वतो नायकस्य स्पृहणीरुचिः, विलसन्ती स्पृहणीयाः रुचिर्यस्याः सेति वा मित्रप्रेम्णा मित्रस्य दयितस्य नायकप्रवरस्य, सूर्यस्य वा प्रेम्णा । तद्वियोगासहिष्णुत्वरूपेण तदवियोगमात्रकास्वनिकाशित्वोत्प्रिक्षितेन वाऽऽन्तरिकेण भावेन, विमुक्तचन्द्रमाना विमुक्तं चन्द्रमनश्चन्द्रमसि तदाख्यालङ्कारे वा मनो मया स जीवनदिव्य-विभूतिजीवनस्य जीवितस्य दिव्या विभूतिः जीवनं जलं दिव्यविभूतिर्दिव्यावतारकारणां वा यस्याः सा, मानसं चित्तं सरोवरं वोपेता गता स्थिता वाऽसि ॥' इति । अत्र विलसन्मित्रचन्द्रजीविताविभूतिमानसशब्दानां परिवृत्त्यसहिष्णु-तया परिवृत्तौ चापरार्थबोधजनकताऽसमभवात् स्पृहणीयरुचिप्रेमादीनां शब्दानां पुनः परिवृत्तिसहिष्णुतया पद्मिनी-तदभिधेयानां यिकास्त्ररूपात्वं पद्मिनी कमलिनी वसी, ति तयोरुपमानोपमेयभावेनोपमा व्यज्यते ।

यथा वा, मम-'भाति विलास्युपरिष्टाद्रुचिमादधदिष्टमस्य लोकस्य । वदनमिदं रमणीयं सुभगं तमसो भयान्मुक्तम् ॥' इति । अस्यायमर्थः—'अयि सुन्दरि ! विलास्युपरिष्टाद्विलासिजनस्योपरि रुचिं प्रीतिसादधदाहितं (निहितं) कुर्वाणमस्य (मम) लोकस्य प्राणिन इष्टममीप्सतं सुभगं सुन्दरं तमसो मालिन्यस्येति यावद्भयान्मुक्तं रमणीयं रमण्या- स्तवेदमिति तथाभूतमिदं वदनं मुखं भाति ॥' इति । यद्वा-'अयि सुन्दरि ! उपरिष्टाद्गगनमण्डले रूचि कान्तिमादधद् विलासिलोकस्य विश्वस्यास्य चेष्टमाराधनीयं रमणीयं सुन्दरं सुभगं सुभं सुष्ठुभं नक्षत्रं रोहिण्याख्यमिति यावत्तद्रच्छतीति तथोक्तम्, तमसो राहोर्भयान्मुक्तभिदं वदनम् ॥' इति अत्र 'विलास्युपरिष्टाद-धरादिशब्दानां परिवृत्तिसाहिष्णुतय 'रुच्या' दिशब्दानां च परिवृत्त्यसहिष्णुतया चन्द्रबिम्बेन समं वदनस्योपमानो-पसंयस्य व्यङ्ग्यत्वेनोपमोल्लासेऽपि वदनपदार्थस्याश्लिष्टतया चन्द्रबिम्बेन तस्याभेदाध्यवसाया 'द्वदनं चन्द्रबिम्ब' मिति रूपकं व्यज्यते । न च 'वदनचन्द्रबिम्ब' योर्भेदेऽपि तदभावेनाभिधानादतिशयोक्तिरिति वाच्यम् । तत्र विषयिणा विषयस्याभेदमात्रावश्यकत्वेन निगरणस्यात्र पुनरन्यथात्वस्य सम्भवात् ।

एवं च व्यङ्ग्यभेदादेव व्यञ्जकानां काव्यानां भेदः ।

**तदष्टादशधा ध्वनिः ॥ ९ ॥**

अविवक्षितवाच्योऽर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः । विवक्षितान्यपरवाच्यस्तु असंलक्ष्यक्रमव्यङ्ग्यत्वेनैकः । संलक्ष्यक्रमव्यङ्ग्यत्वेन च शब्दार्थोभयशक्तिमूलतया पञ्चदशेत्यष्टादशभेदो ध्वनिः ।

---

## विवृतिः

तथा सति 'दुर्गालङ्घित—' (६२ पृ०) इत्यत्राप्युभयश्लेषसत्त्वेनोभयशक्तिव्यङ्ग्यत्वं स्यात् । गृहीतगमित्यर्थश्लेषस्यापि तत्र सत्त्वात् । ननूक्तभेदेषु व्यङ्ग्यस्यैव भेदो दर्शितः । तच्च प्रकृतानुपयुक्तमत आह—**एवं चेति** । **तदिति** । उक्तक्रमादित्यर्थः ॥ अष्टादशत्वमुपपादयति—**अविवक्षितेति** । ।

## विवृतिपूर्तिः

**पञ्चदशेति** । वस्त्वलंकाररूपत्वाच्छब्दशक्तिमूलो द्विविधः, अर्थशक्तिमूलो द्वादशविधः, शब्दार्थोभयशक्तिमूल एकः, इति पञ्चदशभेदाः अर्थान्तरसंक्रमितवाच्यादिभेदत्रयेण सहाष्टादशेति ॥

## विज्ञप्रिया

अष्टादशत्वं दर्शयति—**अविवक्षितेति** । **पञ्चदशेति**—शब्दशक्त्युत्थौ द्वौ, अर्थशक्त्युत्थश्च द्वादश, उभयशक्त्युत्थे एक इति पञ्चदश ।

## लोचन

शब्दपरिवृत्तिसहत्वासहत्वाभ्यामेव हि सर्वत्र शब्दार्थशक्तिमूलत्वस्य व्यवस्थापनम् । अत एव चास्य भेदस्य बहुपदानेष्ठत्वेनैव सम्भवाभिप्रायेण ग्रन्थकृत्पदनिष्ठत्वं नास्तीति वक्ष्यति । तथैव च प्राचीनैरुक्तम् । "पथिअ ण एत्थ" इत्यादौ परिवृत्त्यसह एव स्रस्तरपयोधरशब्दयोरेव व्यञ्जकत्वमिति शब्दशक्तिमूलत्वम् । व्यञ्जकत्वस्य बहुनिष्ठत्वेऽपि पदसमुदयनिष्ठत्वाभिप्रायेण वाक्यनिष्ठत्वम् ।

## कुसुमप्रतिमा

ननु "काव्यभेदमाह" इति प्रतिज्ञाय एतावता व्यङ्ग्यभेदवर्णनात् तत्प्रतिज्ञाङ्गः अप्रासङ्गिकप्रलापदोषश्चापतित इत्याहुएवञ्चेति । एवञ्च एतावत् प्रकाराणां व्यङ्ग्यानां

सम्भवे च काव्यानां भेद इति । वाच्यभेदाहाचकभेदवदिति भावः ॥

इदानीं गणितानां व्यङ्ग्यानां सङ्कलनमाह तदिति ।

तत्तस्मात् एतावत्पर्यन्तगमनादित्यर्थः, ध्वनिः अष्टादशधा अष्टादशप्रकारः ।

ध्वनेरेतावद्ष्टादशप्रकारत्वं दर्शयति अविवक्षितेति । शब्दार्थेति । शब्दशक्तिमूलतया, अर्थशक्तिमूल-तया तदुभयशक्तिमूलतयाचेत्यर्थः । तथा च—

लक्षणामूलोऽविवक्षितवाच्यो ध्वनिर्द्विविधः...अर्थान्तरसंक्रमितवाच्यः

अत्यन्ततिरस्कृतवाच्यः

अभिधामूलो विवक्षितान्वपरवाच्यो ध्वनिः षोड़शविधः

असंलक्ष्यक्रमव्यङ्ग्यः

संलक्ष्यक्रमव्यङ्ग्यः

शब्दशक्तिमूलो द्विविधः

अर्थशक्तिमूलो द्वादशविधः

शब्दार्थोभयशक्तिमूल एकविधः

एषामिदानी सम्भाव्यमानां व्यवस्थामाह एष्विति । एषु च अष्टादशप्रकारेषु ध्वनिषु मध्ये इत्यर्थः ।

## विमला

ननूक्तभेदेषु व्यङ्गस्यैव भेदो दर्शितः, तच्च प्रकृतानुपयुक्तम्, अत आह, एवेञ्चेति ।—उक्तरीत्या इत्यर्थः । व्यङ्गभेदात्—व्यङ्गस्य—व्यञ्जनाजन्यबोधविषयस्य अर्थस्य, भेदात्—पार्थक्यात्, व्यञ्जकानां—व्यञ्जयन्तीति व्यञ्जकानि तेषाम् ।

तदिति ।—उक्तकमादित्यर्थः ।

अष्टादशत्वमुपपादयति, अविवक्षितेति ।—लक्षणामूलो ध्वनिरित्यर्थः । विवक्षितान्यपरवाच्य,—अभि-धामूल इत्यर्थः । शब्दार्थोभयशक्तिमूलतया पञ्चदशेति—तथाहि,—वस्त्वलङ्कारमूलत्वात् शब्दशक्तिमूलौ द्वौ, अर्थशक्तिमूला अनन्तरोक्ता द्वादश, उभयशक्तिमूल एक इति पञ्चदशधेति भावः, पुनश्चोक्तभेदत्रयेण साकं मेलने अष्टादशधा इति दिक् ।

एषु—अष्टादशषु भेदेषु मध्ये इत्यर्थः ।

## लक्ष्मी

ननूक्तभेदेषु व्यङ्ग्यस्यैव भेदो दर्शितः तच्चासङ्गतम् 'काव्यभेदमाह' इति पूर्वं प्रतिज्ञातत्वात् अप्रासङ्गिकप्रलापदोषश्चाप्यायातीत्याशयेनाह— एवं चेति । एवञ्च प्रदर्शितानां व्यङ्ग्यप्रकाराणां सम्भवे च । काव्यानां भेद इति । वाच्यभेदाद्यथा वाचकभेदस्तद्वदिति भावः ।

नन्वेवं कियन्तः काव्यभेदाः सञ्जाता इत्याकाङ्क्षायामाह—तदिति । तस्मादुक्तक्रमादित्यर्थः । ध्वनिरगुणीभूतो व्यङ्ग्य अष्टादशप्रकारः, प्रकारे धा प्रत्ययः । यावन्तो व्यङ्ग्यार्थस्तावन्ति पुनः काव्यान्यपीति सिद्धान्ताद् ध्वनेरष्टादशप्रकारत्वे काव्यस्यापि स्यादेवाष्टादशप्रकारत्वमिति निर्गलितोऽर्थः ।

अष्टादशत्वमेवोपपादयति—अविवक्षितेति। शब्दार्थोभयेति। शब्दशक्तिमूलतया, अर्थशक्तिमूलतया, तदुभयशक्तिमूलतया चेत्यर्थः। पञ्चदशेति वस्त्वलङ्काररूपत्वाच्छब्दशक्त्युत्थौ द्वौ, अर्थशक्त्युत्थश्च द्वादशविधः, उभयशक्त्युत्थे एक इति पञ्चदशभेदाः, अर्थान्तरसंक्रमितवाच्यादिभेदत्रयेण साकमष्टादशेति। स्पष्टतया त्वित्थं कोष्ठक्रमेण ज्ञातव्यम्।—

लक्षणामूलोऽविवक्षितवाच्यो ध्वनिर्द्विविधः—अर्थान्तरसंक्रमितवाच्यः(१)

अत्यन्ततिरस्कृतवाच्यः(२)

अभिधामूलो विवक्षितान्यपरवाच्यो ध्वनिः षोडशविधः—

असंलक्ष्यक्रमव्यङ्ग्यः(१)

संलक्ष्यक्रमव्यङ्ग्यः—शब्दशक्तिमूलो द्विविधः—(२)

अर्थशक्तिमूलो द्वादशविधः—(१२)

उभयशक्तिमूल एकविधः—(१)

एषु चेति। उक्तेषु अष्टादशविधेषु ध्वनिषु मध्य इत्यर्थः।

एवं ध्वनेरष्टादशभेदान् प्रदर्श्य तेषां मध्ये उभयशक्तिमूलातिरिक्तानां सप्तदशभेदानां पदवाक्यगतत्वेन द्वैविध्यं वक्तुमुभयशक्तिमूलस्य वाक्यमात्रगतत्वेनैकविधत्वमेवेत्यत आह—वाक्य इति। शब्दार्थशक्त्युत्थः शब्दार्थोभयभक्तिमूलो ध्वनिः वाक्ये केवलवाक्य एवसम्भवति तस्योपमालङ्कारमात्ररूपत्वेन पर्यवसितवाक्यार्थसापेक्षत्वादित्यभिप्रायः। वाक्यञ्चात्र पदसमुदायः, तेन नानार्थपदघटितसमासगतत्वेऽपि न क्षतिः वाक्य एवेत्यर्थकरणेन चासमस्तैकपदव्युदासः एकपदेऽस्यासम्भवात्। एकस्यैव पदस्य परिवृत्तिसहत्वतदसहत्वयोर्वक्तुमशक्यत्वात्।

ननूभयशक्तिमूलो ध्वनिर्वाक्य एवेति नायं नियमः शिशुपालवधे षोडशसर्गे तदूतोक्तौ (शिशुपालदूतस्य श्रीकृष्णं प्रति वचने) प्रबन्धेऽपि दर्शनात्। तथाहि 'दमघोषसुतेन कश्चन प्रतिशिष्टः प्रतिभानवानथ' इत्यारभ्य 'उभयं युगपन्मथोदितं त्वरया सान्त्वमथेतरञ्च ते' इत्यन्तेन प्रबन्धेन सन्धेर्वाच्यतया विग्रहस्य च व्यञ्जनया प्रतिपादनादुभयशक्तिमूलत्वसम्भव इति। न च प्रबन्धस्य पदसमुदायरूपवाक्यत्वाक्षतिरिति वाच्यम्, क्रियाकारकभावापन्नस्यैव पदसमुदायस्य वाक्यशब्देन विवक्षितत्वात्। 'तिङ्सुवन्तचयो वाक्यै क्रिया वा (क) कारकान्विता' इत्यमरोक्तेरिति चेन्मैवम्, तत्रोभयशक्तिमूलत्वेऽपि ध्वनित्वाभावात् वाच्यार्थेन तुल्यप्राधान्यात्। वक्ष्यमाणे 'ब्राह्मणातिक्रमत्यागः' इत्युदाहरणे 'क्षत्रियाणामिव रक्षसां क्षयः क्षणेन करिष्यति' इति व्यङ्ग्यमिव भूत्युपदेशो मित्रत्वाभिधानरूपञ्च सामोपायात्मकवाच्यमपि प्रधानमेव 'दुर्मनायते' इति गम्भीरोक्त्या वाच्यस्यापि चमत्कारित्वात्। एवं च व्यङ्ग्यं यथा वाच्यतुल्यचमत्कारं करोति तथात्रापीति विभावनीयम्।

मूले—**तदन्य** इति। तदन्ये उभयशक्त्युत्थादन्ये अर्थान्तरसंक्रमितवाच्यादयः सप्तदश भेदाः **पदवाक्ययोः** क्वचित्पदे क्वचिद्वाक्ये च सम्भवन्ति नियामकाभावादित्यर्थः।

अत्रेदं बोध्यम्—यत्रैकस्यैव पदस्य प्राधान्येन व्यङ्ग्यार्थोपस्थितावानुगुण्यम् अन्येषां तु सहकारिमात्रं तत्रैव पदगतत्वम्। नानापदानां तथारूपत्वे तु वाक्यगतत्वमिति। **यदाहुः**—'यत्रैकस्य पदस्य शक्तेः प्राधान्यमन्ये-

षामानुगुम्यमात्रं तत्र पदाश्रयता यत्र तु नानापदानां क्रियाकारकरूपाणां शक्तेस्तुल्यता तत्र वाक्याश्रयतेति भावः' इति।

तत्रेति। **तत्र** पदगतवाक्यगतसप्तदशभेदेषु अविवक्षितवाच्यस्य ध्वनेर्भेदयोर्मध्ये। **अर्थान्तरसंक्रमित-वाच्यः** आद्य इत्यर्थः। ध्वनिपदं व्यङ्ग्यपरम्। पदगतः पदमात्रव्यङ्ग्यः।

## रुचिरा

ननु किमेवं व्यङ्ग्यभेदप्रपञ्चनेन प्रकृते समायातमित्याशङ्क्याह-**एवं** चेत्यादि।

**एवम्। च** पुनः। **व्यङ्ग्यभेदाद्** व्यङ्ग्यानां भेदस्तस्मात्। **एव** नत्वन्यतः। **व्यञ्जकानाम्। काव्यानां** कवित्वानां रसात्मकवाक्यानाम्। **भेदः**। एवं च यावन्तो व्यङ्ग्यभेदास्तावन्त एव काव्यस्यापि प्रभेदा इति सिद्धम्।

नन्वेवं कियन्तः काव्यभेदा जाता इत्याह-२९१ **तदि**त्यादि।

२९१ **तत्** तस्माद्धेतोरित्यर्थः। **ध्वनि**रगुणीभूतो व्यङ्ग्योऽर्थः। **अष्टादशधाऽष्टौ** दश चेति सङ्ख्याकभे-दात्मनाऽवस्थित इत्यर्थः। तदेवं ध्वनिकाव्यमष्टादशप्रकारमिति निष्पन्नम्। यावन्तो व्यङ्ग्यार्थास्तावन्ति पुनः। काव्यान्यपीति सिद्धान्ताद्ध्वनेरष्टादशत्वे काव्यस्यापि स्यादेवाष्टादशत्वमिति स्पष्टोऽर्थः॥ २८७॥

तदेव विवृणोति—**अविवक्षितवाच्य** इत्यादिना।

**अविवक्षितवाच्यो**ऽविवक्षितो विवक्षाया अविषयभूतोऽन्वयायोग्यत्वेनुपयुक्त इति यावद्वाच्योऽभिधा-विषयभूतोऽर्थो यत्र स तदभिधेय इत्यर्थः। यत्र वाच्यताऽवच्छेदकरूपणान्वयबोधविषयसो न भवति शक्योऽर्थः, भवति पुनस्तंत्सम्बन्धी स ध्वनिरविवक्षितवाच्य इति व्यपदिश्यते, अत एव ध्वनिरप्ययं लक्षणामूल इति भावः। **अर्थान्तरसङ्क्रमितवाच्यो**ऽर्थान्तरे स्वमिन्ने विवक्षोपयोगिनि लक्ष्यताऽवच्छेदकेऽर्थे इति यावत् सङ्क्रमित आश्रय-त्वेन परिणतो वाच्यो वाच्यार्थो यस्मिन् स इत्यर्थः। **च** तथा। **अत्यन्ततिरस्कृतवाच्यो**ऽत्यन्तं सर्वथा तिर-स्कृतोऽनादृतोऽन्वयगप्रविष्ट इति यावद् वाच्यो वाच्यार्थो यत्र स तादृश इति यावत्। **इत्येवम्। द्विविधो** द्विप्रभेदो द्विरुपात्मेति यावत्। अर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति अजहत्स्वार्थामूलो जहत्स्वार्थामूल-श्चेत्येवमाविवक्षितवाच्यो नाम ध्वनिर्द्वि रुपः, लक्षणाया अजहत्स्वार्थत्वेन जहत्स्वार्थत्वेन च तन्मूलोऽप्ययं ध्वनि-र्द्विप्रभेदः, तत्राजहत्स्वार्थान्तरङ्क्रमितवाच्यत्वं जहत्स्वार्थामूलस्य पुनरत्यन्ततिरस्कृतवाच्यत्वमिति तात्पर्यम्। अथ-**विवक्षितान्यपरवाच्यो** विवक्षितो वाच्यताऽवच्छेदकरुपेणान्वयबोधविषयभूतः सन्नेवान्यपरो व्यङ्ग्योपसर्ज-नीभूतो व्यङ्ग्यरूपेणावस्थित इति यावद् वाच्यो वाच्यार्थो यत्र स इत्यर्थः। स्वरूपेण विवक्षितः सन् यो हि यत्र वा वाच्यार्थो व्यङ्ग्यावगमको भवति स विवक्षितान्यपरवाच्यो नामाभिधामूलो ध्वनिरिति भावः। अत्र हि वाच्यार्थः स्वरूपेणान्वयबोधविषयीभवन् व्यङ्ग्यरूपतामापद्यते इति बोध्यम्। **तु**। असँल्लक्ष्यक्रमव्यङ्ग्यत्वेन न सम्यग् लक्ष्यो लक्षयितुं शक्यः पौर्वापर्यं यस्य तादृशो व्यङ्ग्यो व्यङ्ग्यार्थो यत्र तत्त्वेनेत्यर्थः। यत्र हि प्रकरणमहिम्ना झटिति युगपदिव विभावादयः प्रतीयमाना जायन्ते, तत्र सूक्ष्मेणैव कालेन व्यङ्ग्यप्रतीतिरुदयते इत्येवंविधे प्रकरणे हेतुहतुमतोः कथं स्यात् सँल्लक्षितं पौवापर्यम्। इति बोध्यम्। **एको** रसभावाद्यात्मेति शेषः। **च** पुनः। **सँल्लक्ष्यक्रमव्यङ्ग्यत्वेग** सम्यग् लक्ष्यः क्रमो यस्य तादृशो व्यङ्ग्यो यत्र तत्त्वेत्यर्थः। यत्र हि प्रकरणमहिम्ना न झटिति किन्तु विलम्बेन विभावादयः प्रतीयन्ते तत्र प्रकरणस्य विचारवेद्यत्वाञ्चमत्कारस्य च व्यङ्ग्यात्मकस्य प्रकारणावगमाधीनत्वेन मान्थ-र्यमि शनैः शनैर्व्यङ्ग्यप्रतीयमानत्वे स्फुटं भवति सँल्लक्षितं पौबापर्यम्। इति बोध्यम्। द्वितीयप्रभेदः सन्निति शेषः।

**शब्दार्थोभयशक्तिमूलतया** शब्दश्चार्थश्चोभयं चेति, तच्छक्तिर्मूलं यस्य तत्तयेत्यर्थः। शब्दशक्तिमूलतयाऽर्थशक्तिमूलतया शब्दार्थशक्तिमूलतया चेति भावः। **पञ्चदश** तत्सङ्ख्याकः। अत्रेयं व्यवस्था-विवक्षितान्यपरवाच्यो नाम ध्वनिः सँल्लक्ष्यक्रमव्यङ्ग्यः सन् पञ्चदशात्मतामापद्यते, तत्रासौ शब्दशक्तिमूलो वस्त्वात्माऽलङ्कारात्मा चेति द्विविधः, अर्थशक्तिमूलोऽप्येवं वस्तुरूपोऽलङ्काररुपश्चेति द्विविधः, अथ वस्तुरूपः स्वतःसम्भवी कविप्रौढोक्तिसिद्धः कविनिबद्धप्रौढोक्तिसिद्धश्चेति, अलङ्काररूपः पुनरसावेव स्वतः सम्भवी कविप्रौढोक्तिसिद्धश्च कविनिबद्धप्रौढोक्तिसिद्धश्चेति षड्विधः, स्वतः सम्भविना कविप्रौढोक्तिसिद्धेन कविनिबद्धप्रौढोक्तिसिद्धेन च वस्तुरूपेणालङ्काररूपेण च सँल्लक्षितक्रमव्यङ्ग्येनार्थशक्तिमूलेन विवक्षितान्यपरवाच्येन वस्तुध्वनावलङ्कारध्वनौ च द्वादशात्मकत्वं तस्येति। शब्दार्थोभयमूलः पुनरसावर्थान्तरसङ्क्रमितवाच्यो नाम सँल्लक्षितक्रमव्यङ्ग्यात्मा ध्वनिरेकप्रभेदः, स च वाक्य एव सम्भवति। **इत्येवम्। अष्टादशभेदः**स्त्रयाणां पञ्चदशानां च सम्मेलनादिति शेषः। **ध्वनिः**। ध्वनेश्चाष्टादशत्वे काव्यस्यापि तत्प्रधानस्याष्टादशत्वम्। इति भावः।

एषु च—

**वाक्ये शब्दार्थशक्त्युत्थस्तदन्ये पदवाक्ययोः**

तत्रार्थान्तरसंक्रमितवाच्यो ध्वनिः पदगतो यथा—

**'धन्यः स एव तरुणो नयने तस्यैव नयने च।**

**युवजनमोहनविद्या भवितेयं यस्य संमुखे सुमुखी ॥'**

अत्र द्वितीयनयनशब्दो भाग्यवत्तादिगुणविशिष्टनयनपरः।

---

## विवृतिः

वाक्ये वाक्य एव। **तदन्ये** उभयशक्त्युत्थादन्ये ॥ **धन्य इति**। युवजनमोहनविद्या। विद्येव युवजनमेहिनीत्यर्थः। यद्यपि 'कदली कदली'—(२०८ पृ०) इत्यादौ पदगतोऽर्थान्तरसंक्रमितवाच्यध्वनिरुदाहृत एव तथाप्युदाहरणान्तरदर्शनमेतद्दृढप्रतिपत्तये ॥

## विवृतिपूर्तिः

**तदन्ये इति**। अर्थान्तरसंक्रमितवाच्यादयः सप्तदशभेदाः पदे वाक्ये च भवन्तीत्यर्थः। अत्रेदं बोध्यम्—यत्रैकस्यैव पदस्य प्राधान्येन व्यङ्ग्यार्थोपस्थितावानुगुण्यं परेषां तु सहकारिमात्रं तत्रैव पदगतत्वम्। नानापदानां तथारूपत्वे तु वाक्यगतत्वमिति ॥

## विज्ञप्रिया

**वाक्य** इति—उभयशक्त्युत्थो व्यङ्ग्यो वाक्यमात्रव्यङ्ग्य इत्यर्थः। व्यञ्जकार्थवाचकश्लिष्टशब्दानां च एकव्यङ्ग्यव्यञ्जने वाक्यत्वनियमात्। **तदन्ये** इति—तदन्ये व्यङ्ग्याः पदेन वाक्येन च व्यङ्ग्या इत्यर्थः। **तत्रेति**—तत्र ध्वनिपदं व्यङ्ग्यपरम्। पदगतः पदमात्रव्यङ्ग्यः।

**द्वितीयनयनशब्द** इति—अत्र लक्ष्यार्थस्य अतिशयो व्यङ्ग्य इति वक्ष्यति।

## कुसुमप्रतिमा

वाक्य इति। शब्दार्थशक्त्युत्थः शब्दार्थोभयशक्तिमूलो ध्वनिः, वाक्ये केवलवाक्य एव सम्भवति, तस्योपमालङ्कारमात्ररूपत्वेन। तदन्ये तद्भिन्नाः सप्तदशप्रकाराः, पदवाक्ययोः क्वचित् पदे क्वचिद्वाक्ये च सम्भवन्तीत्यर्थः, नियामकाभावादिति भावः।

धन्य इति। काञ्चित् परमसुन्दरीं कन्यां विलोक्य कस्यचित् सामिलाषोक्तिरियम्। स एव तरुणो धन्यः पुण्यशाली, तस्यैव च तरुणस्य नयने चक्षुषो नयने सार्थके चक्षुषी। द्वयं युवजनानां मोहनविद्या सम्मोहनकारिविद्यारूपा सुमुखी कन्या यस्य सम्मुखे भविता स्थास्यति।

अत्रेति। आदिपदेन सार्थकत्वादेर्ग्रहणम्। एकमात्रनयनपदगतत्वादस्य पदगत्वम्। नेत्रमात्ररूपस्य वाच्यार्थस्य भाग्यवत्तादिगुणविशिष्टनेत्ररूपार्थेसंक्रमणाच्चास्य अर्थान्तरसंक्रमितवाच्यध्वनित्वम्।

## विमला

वाक्ये इति। शब्दार्थशक्त्युत्थः;—शब्दार्थोभयशक्त्युत्थो ध्वनिः, वाक्ये—केवलं वाक्यं एव, भवतीति शेषः, तदन्ये—तस्मादन्ये, उभयशक्त्युत्थादन्ये, अर्थान्तरसङ्क्रमितवाच्यादयः सप्तदश भेदाः इत्यर्थः, पदवाक्ययोः—पदगताः वाक्यगताश्च भवन्तीति शेषः। [अत्रेदमवधेयं—यत्र मुख्यवादेकस्यैव पदस्य व्यङ्ग्यार्थावबोधे कृतित्वं, साहचर्यमात्रत्वं पुनरन्येषाम; तत्र पदगतत्वं सिद्धम्; अनेकपदानां तथात्वे वाक्यगतत्वमिति सारः] ततश्च उभयशक्तिजो भेद एक एव, अन्ये सप्ददश पदवाक्य गतत्वेन द्विविधत्वात् चतुस्त्रिंशत्, मिलित्वा पञ्चत्रिंशद् भेदाः, इति बोध्यम्।

धन्य इति।—स तवं तरुणः;—युवा, धन्यः;—पुण्यवानित्यर्थः, तस्यैव—तरुणस्यैवेत्यर्थ, नयने—नेत्रे, नयने—धन्ये इत्यर्थः, च यस्य सम्मुखे युवजनमोहनविद्या—युवजनमोहनकारिणी या विद्या तद्रूपेत्यर्थ, इयं—लोकोत्तरसौभाग्या, सुमुखी—महनीयतया दर्शनीयेति भावः, भविता—स्थास्यतीत्यर्थः। यद्यपि "कदली कदली—" इत्यादौ पदगतोऽर्थान्तरसङ्क्रमितवाच्यार्थध्वनिरुदाहृत एव, तथाऽप्युदाहरणान्तरदर्शनमेतदृढप्रतिपत्तये इति बोध्यम्। उद्गीतिश्छन्दः।

## लक्ष्मी

धन्य इति। काञ्चित् परमसुन्दरीं कुमारिकामवलोक्य कस्यचित् सस्पृहोक्तिरियम्। स एव तरुणो युवा धन्यः पुण्यकर्मा, तस्यैव च तरुणस्य नयने लोचने सार्थके लोचने, इयं युवजनानां मोहनविद्या विद्येव युवजनमोहिनीत्यर्थः। सुमुखी कुमारिका यस्य सम्मुखे भविता स्थास्यति। यद्यपि 'कदली कदली' इत्यादौ पदगतोऽर्थान्तरसंक्रमितवाच्यध्वनिरुदाहृत एव **तथाप्यु**दाहरणान्तरप्रदर्शनमेतद् दृढस्थितये। अनुष्टुप्छन्दः।

अस्य ध्वनेर्लक्षणामूलकत्वेन लक्ष्यमर्थं दर्शयति—अत्रेत्यादिना। अत्र द्वितीयनयनशब्देअनुपयुक्तत्वादविवक्षितवाच्यः सन् भाग्यवत्तादिगुणविशिष्टनयनत्वं लक्षयति तेन नायकस्योचितत्वव्यवहारित्वादिकं व्यङ्ग्यमुपादानलक्षणायाः फलमिति भावः। अत्र लक्षणायां सामान्यविशेषभावः सम्बन्धो ज्ञेयः। अत्र हि वाक्यार्थानां प्रत्येक विश्रान्तित्वेन नैकवाक्यता। तेन तद्वाक्यगतनयनैकपदस्यैव व्यञ्जकता न तु वाक्यस्येति पदगतो ध्वनिरयम्। 'त्वामस्मि वच्मि' इत्यत्र तु व्यङ्ग्यार्थोपस्थितिः एकवाक्यस्थैः सर्वैरेव पदैरिति वाक्यगतत्वमिति भेदः।

## रुचिरा

एवं ध्वनेरष्टादशभेदा इति काव्यस्यापि तत्प्रधानस्याष्टादशभेदाः स्नतीति निर्दिश्य, तत्र शब्दाथोभयशक्तिमूलातिरिक्तानां सप्तदशभेदानां पदवाक्यगतत्वेन द्वैविध्यमिति वक्तुमुपक्रमते-**एषु** चेत्यादिना।

**एष्व**भिहितेषु ध्वनेरष्टादशसु भेदेषु मध्ये इति यावत्। **च** पुनः—

२९२ **शब्दार्थशक्त्युत्थः** शब्दार्थयोःशक्तिरिति तस्या उत्तिष्ठतीति तथोक्तः। शब्दार्थोभयशक्तिमूलोऽर्थोन्तरसङ्क्रमितवाच्यो नाम सँल्लक्षितक्रमव्यङ्ग्यात्मा ध्वनिरित्यर्थः। 'उदःस्थास्तम्भोः पूर्वस्य।' ८/४/६१। इत्युत्पूर्वस्य तिष्ठतेः सत्य पूर्वसवर्णत्वम्। 'आतश्चोपसर्गे।' ३/१/१३६ इति कः। **वाक्ये**

पदसमुदायविशेषे । सम्भवतीति शेषः । तत् तस्माद्ध्वनेरित्यर्थः । **अन्ये** भिन्ना व्यतिरिक्ता इति यावत् । **पदवाक्ययोः** पदं च वाक्यं चेति, तयोः । पदे वाक्ये येत्युभयत्रैव सम्भवन्तीति शेषः । अत्रेदं निष्कृष्टम्-शब्दश्चार्थश्चेत्येतयोः परिवृत्तिसहत्वासहत्वाभ्यां तच्छक्तिमूलो ध्वनिस्तदुभयशक्तिमूल इत्युच्यते इति निर्विवादम्, यद्यपि शब्दशक्तिमूलेऽर्थस्य, अर्थशक्तिमूले च ध्वनौ शब्दस्यापि व्यञ्जकत्वं सम्भवतीत्यास्तां सर्वत्रैवोभयशक्तिमूलत्वमिति वक्तुं शक्यते । तथाऽपि 'प्राधान्येन व्यपदेशा भवन्ती'ति गुणप्रधानभावेन तेषां पार्थक्यमेवेति न तादवस्थ्यम् । 'अथ एकस्यैव पदस्य परिवृत्तिसहत्वं परिवृत्त्यसहत्वं' चेति वक्तुयमुक्तम्, तदन्तरेण च शब्दार्थोभयशक्तिमूलत्वस्यैवासम्भव इति शब्दार्थोभयशक्तिमूलस्य ध्वनेर्वाक्य एव सम्भवित्वम् । असौ च वस्तुनाऽलङ्काररूप इत्येकविध एवेति । शब्दपरिवृत्त्यसहः पुनः शब्दशक्तिमूलोऽर्थपरिवृत्त्यसहोऽर्थशक्तिमूलश्च ध्वनिरिति सम्भवत्येव तयोः पदवाक्योभयसम्भवित्वम् । यत्रैकस्यैव पदस्य शक्तेः प्राधान्यम्, अन्येषां पुनरानुगुण्यम्, तत्रध्वनेः पदसम्भवित्वम्, यत्र तु नानापदानां क्रियाकारकरुपाणां शक्तेस्तुल्यत्वम्, न विषमत्वम्; तत्र तस्य वाक्यसम्भवित्वमेव, न पदसम्भवित्वमपीति ।

उभयशक्तिमूलस्य पुनर्ध्वनेरुदाहरणं "हिममुक्तचन्द्ररुचिरः-" इत्यादि । तच्च निर्दिष्टमेव पूर्वम् । अथ पदवाक्योमयसम्भविनोऽर्थान्तरसङ्क्रमितवाच्यस्य ध्वनेःक्रमेण पदसम्भवं वाक्यसंभवं चोदाहर्त्तुमाह-**तत्रे**त्यादि ।

**तत्र** पदसम्भविवाक्यसम्भविनोर्मध्ये इत्यर्थः । **पदगतः** पदसम्भवी । **अर्थान्तरसङ्क्रमितवाच्यस्तन्नामेति** यावत् । **ध्वनिः । यथा** यद्वत्सम्भवति तथोदाह्रियते-"**धन्यः-**" इत्यादिना ।

'**यस्य** निर्देक्ष्यमाणभाग्यवैभवस्य कस्यापि यूनः । **सम्मुखे** पुरोभागे । **इयम्** । **सुमुखी** सुन्दरवदना वामेति यावत् । **युवजनमोहनविद्या** युवानो जना इति, तेषां मोहनविद्या मोहविधात्री विद्या, तद्वद्विद्यमानेति यावत् । **भविता** भविष्यति । **सः । एव** । न पुनरन्यविधोऽपीति शेषः । **तरुणः । धन्यो** भाग्यशाली । **च** तथा । **तस्य** तरुणस्येति शेषः । **एव । नयने** नेत्रे । **नयने** धन्ये इति यावत् ॥' इति । अत्रायम्भावः-मोहविद्यैवेयं यूनां मोहविधात्री अस्याश्च सुमुख्याः सौन्दर्यातिशायिन्या दर्शनादि परमेण भाग्येनैव नान्यथाऽपि, अथ यस्य नयनपथिकेयं, स पर धन्यः, तस्य नयने अपि परं धन्ये, अन्यथाऽस्यादर्शनाद्युपलब्धिप्रसङ्गासम्भावात् । इति ॥ १८९ ॥

अत्र ध्वनेःपदसम्भवित्वं दर्शयितुमाह-**अत्रे**त्यादि ।

**अत्रो**दाहृतेऽस्मिन् पद्ये इति भावः । **द्वितीयनयनशब्दो** द्वितीयो द्वितीयवारं पठितो नयनशब्दो 'नयने चे' त्यत्र 'नयने' इति शब्द इति भावः । **भाग्यवत्ताऽऽदिगुणविशिष्टनयनपरो** भाग्यवत्ताऽऽदयोये गुणास्तैर्विशिष्टं सम्पन्नं यन्नयनं तत्परस्तदर्थबोधनाभिमुख इत्यर्थः । आदिपदेन च धन्यत्वमनोहरत्वाऽलौकिकत्वादयो ग्राह्याः । अत्रेदं बोध्यम् 'कदली कदली-' त्यादाविव प्रकृतेऽप्युदाहृतेऽस्मिन् पद्ये द्वितीयशब्दो न वाचकः, किन्तु लक्षकः । अत्र लक्ष्यश्चात्र भाग्यवत्तादिः । यद्यपि पूर्वत्र कदल्यादिशब्द इव लक्षको, ऽसावपि लक्ष्यस्यातिशयमवगमयति । लक्ष्यश्चात्र भाग्यवत्तादिः । यद्यपि 'कदली कदली'ति पदगतध्वनेरुदाहरणं दर्शितपूर्वम्, पुनरिदं प्रकृतमलङ्कर्तुमिति ।

वाक्यगतो यथा—

**'त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।**

**आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत्॥'**

अत्र प्रतिपाद्यस्य संमुखीनत्वादेव लब्धे प्रतिपाद्यत्वे त्वामिति पुनर्वचनमन्यव्यावृत्तिविशिष्टं त्वदर्थं लक्षयति। एवं वच्मीत्यनेनैव कर्तरि लब्धेऽस्मीति पुनर्वचनम्। तथा विदुणां समवाय इत्यनेनैव वक्तुः प्रतिपादने सिद्धे पुनर्वच्मीति वचनमुपदिशामीति वचनविशेषरूपमर्थं लक्षयति। एतानि च स्वातिशयं व्यञ्जयन्ति। एतेन मम वचनं तवात्यन्तं हितं तदवश्यमेव कर्तव्यमित्यभिप्रायः। तदेवमयं वाक्यगतोऽर्थान्तरसंक्रमितवाच्यो ध्वनिः।

---

## विवृतिः

**त्वामस्मीति। अस्मि** अहम्। **समवायः** संघः। **आत्मीयां** आत्मनो हिताम्। तत्तस्मात्। लक्षणाबीजमन्वयानुपपत्तियोगित्वं प्रदर्श्य लक्ष्यार्थं व्यङ्ग्यार्थं च दर्शयति—**अत्रेति। अस्मीति। पुनर्वचनमिति।** 'हितकारिमदर्थं लक्षयति' इति शेषः। सर्वत्र मुख्यार्थस्याभेदः संबन्धः। **एतानि** अन्यव्यावृत्तिविशिष्टत्वादिवस्तूनि। **स्वातिशयमिति।** त्वत्पदार्थस्य वादजल्पादिक्षमत्वम्। मत्पदार्थस्यात्यन्तहितैषित्वम्। उपदेशस्यानुपेक्षणीयत्वमतिशयः। प्रत्येकपदव्यङ्ग्यत्वं प्रदर्श्य वाक्यव्यङ्ग्यं दर्शयति—**एतेनेति।** उक्तवाक्येनेत्यर्थः। 'अभिप्रायः प्रतीयते' इति शेषः।

## विवृतिपूर्तिः

**तन्मूलक इति।** काव्यानां शरीरिणामिव संस्थानविशेषावच्छिन्नसमुदायसाध्यापि चारुत्वप्रतीतिरन्वयव्यतिरेकाभ्यां भागेषु कल्प्यत इति पदानामपि व्यञ्जकत्वमुखेन व्यवस्थितो ध्वनिव्यवहार इति व्यक्तं **ध्वन्या**लोके। **प्रदीपकृताप्युक्तम्**—ननु पदस्य व्यञ्जकत्वे किमायातम्। वाक्यरूपस्य काव्यस्य ध्वनित्वम्। प्रदीपकृताप्युक्तम्—ननु पदस्य व्यञ्जकत्वे किमायातम्। वाक्यरूपस्य काव्यस्य ध्वनित्वम्। कथं वा पदमात्रस्य व्यञ्जकत्वे, वाक्यस्यैव समस्तस्य चारुतेति चेत्, उच्यते—पदप्रकाश्यत्वं न पदमात्रस्य व्यञ्जकतया, किं तु तस्य प्राधान्येन। अविवक्षितवाच्ये पदमात्रस्य व्यञ्जकत्वेऽपि यद्वाक्यवर्तिशब्दस्यार्थस्य वा कस्याप्यतिशयितार्थव्यञ्जकत्वं तद्वाक्यस्यैव ध्वनित्वमित्युपगमान्न कश्चिद्दोषः। एकदेशस्थितेन च तादृशपदेन समस्तमेव वाक्यं चारुतामुपगच्छतीति कामिनीवैकावयवस्थैन भूषणेन॥

## विज्ञप्रिया

त्वामसमीत्यत्र त्वदाद्यनेकलाक्षणिकपदानां लाक्षणिकत्वं दर्शयति—**अत्रेति। अन्यव्यावृत्तिविशिष्टमिति**—तथा च त्वामेव अहमेव इत्यर्थः। **एतानि चेति**—एतानि लक्ष्यार्थे रूपाणि वस्तूनीत्यर्थः। **स्वातिशयमिति**—स्वापेक्षयाऽधिकार्थ एव स्वातिशयः। तमधिकमर्थमाह—**एतेनेति।** अभिप्रायो अभिप्रायस्थव्यङ्ग्यार्थः।

## कुसुमप्रतिमा

त्वामिति। पण्डितपरिषदि दुर्व्यवहृत्य यियासुं प्रति कस्यचित् सावष्टम्भोक्तिरियम्। अस्मीत्यहमर्थे अव्ययम्। रे दुर्व्यवहारपरायण! अहं त्वां वच्मि ब्रवीमि उपदिशामि, अत्र सभायां विदुषां समुदायः समूहस्तिष्ठति; तत्तस्मात् आत्मीयाम् आत्मने हितां मतिं बुद्धिम् आदाय अवलम्ब्य अत्र समायां स्थितिमवस्थानं विधेहि कुरु। अन्यथा तव महाननर्थो भविष्यतीति भावः।

अत्र त्वामित्यस्य वैयर्थ्यापत्या मुख्यार्थबाधेन व्यञ्जकं लक्ष्यार्थं दर्शयितुमाह प्रतीति। प्रतिपाद्यस्य बोद्धव्यस्य दुर्व्यवहारिणी जनस्य, सम्मुखीनत्वादेव वक्तुः सम्मुखे विद्यमानत्वादेव, प्रतिपाद्यत्वे बोद्धव्यत्वे। पुनर्वचनमिति लक्षयतीत्यस्य कतृपदम्। एवमन्यत्रापि बोध्यम्।

अस्मीत्यस्य वैयर्थ्यापत्त्या मुख्यार्थबाधेन व्यञ्जकं लक्ष्यार्थं दर्शयितुमाह एवमिति। कर्त्तरि थुलब्धे "अस्मद्युत्तमः" इत्यनेनास्मत्कर्त्तयेव वधे मोत्तमपुरुषविधानादिति भावः।

वच्मीत्यस्य च वैयर्थ्यापत्त्या मुख्यार्थबाधेन व्यञ्जकं लक्ष्यार्थं दर्शयितुमाह तथेति। विदुषा मित्यादिवाक्यद्वयमात्रोच्चारणेनैवेत्यर्थः। वक्तुरेतत्पद्यस्य कथयितुः। प्रतिपादने बोद्धव्यस्य जनस्यबोधनीयार्थबोधने। वचनं कथनम्।

इदानीं व्यङ्ग्यार्थं दर्शयितुमाह एतानीति। एतानि—"त्वाम्-अस्मि वच्मि" इति त्रीणि पदानि, लक्षितानि लक्षणानिरूपकानि सन्ति, स्वेषां स्वस्वार्थानाम् अतिशयं किञ्चित् किञ्चित् वैषम्यम्। तथा च त्वमित्यत्र त्वद्गतविवेचकत्वम्, अस्मीत्यत्र आत्मनो हितैषित्वम्, वच्मीत्यत्र च वचनस्थालङ्घनीयत्वम् इत्येतानर्थान् व्यञ्जयन्ति व्यञ्जनया प्रतिपादयन्ति।

श्लोकसमुदायव्यङ्ग्यमाह एतेनेति। एतेन श्लोकसमुदायेन। इत्यभिप्रायो व्यज्यत इति शेषः।

इदानीं पर्यवसितमाह तदिति। तत्तस्मात् व्यङ्ग्यार्थस्थानेकपदगतत्वादित्यर्थः। तत्र व्यङ्ग्यार्थस्वैकपदगतत्वे ध्वनेः पदगतत्वम् तु वाक्यगतत्वमिति दोषादिवद्व्यवस्थोन्नेया।

## विमला

त्वामिति।—अस्मीत्यत्रयम्, अहमित्यर्थः, त्वाम्—उपदेशार्हं भवन्तं, वच्मि—ब्रवीमि, उपदिशामीति यावत्, अत्र विदुषां समवायः—सङ्घः, समूह इत्यर्थः, [समुदाय इति पाठे—समुदायः—समूहः] तिष्ठति,तत्—तस्मात्, आत्मीयाम्—आत्मने हितां, मतिम् आस्थाय—आश्रित्य, अत्र—विदुषां समवाये, स्थितिं—कर्त्तव्यनिश्चयं, विधेहि—करु, इतीति शेषः।

लक्षणाबीजमन्वयानुपपत्तियोगित्वं प्रदर्श्यं लक्ष्यार्थं व्यङ्ग्यार्थञ्च दर्शयति, अत्रेति।—"अस्मि" इति पुनर्वचनं हितकारिमदर्थं लक्षयति। सर्वत्र मुख्यार्थस्य अभेदः सम्बन्धः। एतानि—अन्यव्यावृत्तिविशिष्टत्वादिवस्तूनि। तथाहि,—अन्यव्यावृत्तिविशिष्टमिति त्वामेव, न त्वन्यमिति भावः। अन्यत्रावृत्तिविशिष्टमिति अहमेव, नान्यः इति लक्षयति इत्याशयः। स्वातिशयमिति।—त्वत्पदार्थस्य वादजल्पादिक्षमत्वं मत्पदार्थस्यात्यन्तहितैषित्वम्, उपदेशस्यानुपेक्षणीयत्वमतिशयः इत्यर्थः। प्रत्येकपदव्यङ्ग्यत्वं प्रदर्श्य वाक्यव्यङ्ग्यत्वं दर्शयति, एतेनेति।—उक्तवाक्येनेत्यर्थः। अभिप्रायः, प्रतीयते इति शेषः।

## लक्ष्मी

**त्वामस्मीति**। विद्वत्सभागच्छन्तं प्रति कस्यचिदाप्तस्योक्तिरियम्। अस्मीत्यहमर्थेऽव्ययम्। 'यत्' इत्यध्याहार्यम्। यतोऽत्र विदुषाम् असाधारणज्ञानवतां समवायः एकवाक्यता पन्नः समुदायस्तिष्ठति तत् तस्मादात्मीयामात्मनो हितां मतिम् आस्थाय आश्रित्य अत्र स्थितिं सावधानस्थितिं विधेहि कुरु इति त्वाम् उपदेशार्हमहमाप्तः वच्मि उपदिशामीत्यर्थः। यदहं वच्मि तदवश्यं विधेहि अन्यथा तव महाननर्थो भविष्यतीति भावः।

लक्ष्यार्थं व्यङ्ग्यार्थं च दर्शयति—**अत्रेत्यादिना**। **प्रतिपाद्यस्य** बोद्धव्यस्य उपदेशार्हस्येति यावत्, सम्मुखीनत्वादेव प्रतिपादयितुः सम्मुखे सत्त्वादेव प्रतिपाद्यत्वे बोद्धव्यत्वे। **पुनर्वचनमि**ति लक्षयतीत्यस्य कर्तृपदम्। पुनः **पुनर्वचनमि**ति हितकारिमदर्थं लक्षयतीति शेषः।

एवमिति। वच्मीत्यत्रोत्तमपुरुषस्य 'अस्मद्युत्तम' इत्यनेन कर्त्तरि विधानात्तेनैव कर्तृत्वे लब्धे अस्मीत्यहमर्थकाव्ययस्य वैयर्थ्यापत्त्या मुख्यार्थबाधेन अहमेवेत्यर्थे लक्षणा। तेनात्यन्तहितसाधकत्वं व्यङ्ग्यम्। सर्वत्र मुख्यार्थस्याभेदः सम्बन्धः।

वच्मीत्यस्य च निरर्थकत्वापत्त्या मुख्यार्थबाधेन व्यञ्जकं लक्ष्यार्थं प्रकटयितुमाह—तथेति। वक्तुः अस्य श्लोकस्य प्रतिपादयितुः प्रतिपादने बोधद्धव्यस्य बोधनीयायार्थज्ञापने।

अधुना व्यङ्ग्यार्थं स्पष्टीकर्त्तुमाह—**एतानीति**। **एतानि** त्वामित्यादित्रीणि पदानि, लक्षणाप्रतिपादकानि सन्ति तेषां स्वातिशयं त्वत्पदार्थस्य वादजल्पादिक्षमत्वम्। मत्पदार्थस्यात्यन्तहितसाधनम्। वच्मीत्यत्र च वचनस्यालङ्घनीयत्वम् इत्येतानर्थान् व्यञ्जयन्ति व्यञ्जनया बोधयन्ति। स्वातिशयपदार्थस्तु स्वापेक्षयाऽधिकार्थ एव ज्ञेयः। एवं विद्वत्पक्षेऽपि 'विदुषाम्' इति आत्ममतेः सार्वकालिकत्वेऽपि 'आत्मीयाम्' इति च यथाथमं सर्वशास्त्रविशारदरूपेण प्रमाणपरतन्त्रपरतया च परिणतम्। तेन च अन्यथाचरणे उपहसनीयत्वं व्यङ्ग्यत्वं।

प्रत्येकपदव्यङ्ग्यत्वं प्रदर्श्य वाक्यव्यङ्ग्यं दर्शयति—**एतेनेति**। पद्यसमूहेनेत्यर्थः। अभिप्रायः 'अवगम्यते' इति शेषः।

अधुना फलितार्थं प्रतिपादयति—तदिति। तत्तस्मात् व्यङ्ग्यार्थस्यानेकपदनिष्ठत्वादित्यर्थः। पदवाक्यगतध्वनेर्व्यवस्था तु व्यङ्ग्यार्थस्यैकपदानेकपदगतत्वे बोध्या।

## रुचिरा

अथ वाक्यनिष्ठममुमेवोदाहर्त्तुमाह-**वाक्यगत** इत्यादि।

**वाक्यगतो** वाक्यं पदसन्दर्भविशेषनिष्ठ इति भावः। "अर्थान्तरसङ्क्रमितवाच्य" इति शेषः। **यथा'त्वा'** मित्यादौ।

'**अत्रास्मिन्** स्थाने। यदिति शेषः। तथा च-अस्मिन् स्थाने यस्मात्कारणादिति भावः। **विदुषां** विदन्ति जानन्तीति यावत् इति तेषाम्। पण्डितानामित्यर्थः। 'लटः शतृ..। ३/२/१२४' इति शतुः 'विदेःशतुर्वसुः। ७/१/३६ इति वसुः। **समवायः** समूहः समाज इति यावत्। 'समवायश्चयो गणः।' इतिकोशः **तिष्ठति** सावधानमास्ते। **तत्तस्मादित्यर्थः**। **आत्मीयां** स्वकीयामात्मसम्बन्धिनीमिति यावत्। 'गहादिभ्यश्च।' ४/२/२३८ इति छः 'आत्मने हिता' मिति व्याख्यानं तु न सत्। 'तस्मै हितम्।' ५/१/५ इति वाधित्वा 'आत्माध्वानौ खे।'

३/४/१६४ इति प्रवृत्तौ 'आत्मनीना' मिति सुवचस्त्वात्। **मतिं** बुद्धिम्। **आस्थायावलम्ब्य**। अत्रास्मिन् विदुषां (पण्डितानां) समवाये इति यावत्। **स्थितिं** सावधानमासनमित्यर्थः। **विधेहि** कुरु। इतीति शेषः। **अस्म्यहम्** आप्तोऽहमिति यावत्। अव्ययमिदम् '**त्वां** नेत्रगोचरतां प्राप्तम्। उपदेशार्हमिति यावत्। **वच्मि** ब्रवीम्युपदिशामीति यावत्। विद्वत्समाजे प्रविशन्तं कमपि युवानं बालं प्रत्येव वा कस्यापि वृद्धस्याप्तस्योक्तिरियम्॥ १९०॥

अथात्र लक्ष्यं व्यङ्ग्यञ्च निर्दिशन् वाक्यनिष्ठमर्थान्तरसङ्क्रमितवाच्यं ध्वनिं दर्शयति-**अत्रे**त्यादिना।

**अत्रौ**स्मिन्नुदाहृतेऽस्मिन् पद्ये इति यावत्। **प्रतिपाद्यस्य** बोधनीयस्योपदेशार्हस्येति यावत्। प्रतिपादयितुं बोधयितुमर्ह इति तस्य। 'अचो यत्।' ३/१/९७ इति यत्। **सम्मुखीनत्वात्** सम्मुखत्य दर्शनो द्रष्टेति तत्त्वात्। प्रत्यक्षं दर्शनादिति भावः। 'यथामुखसम्मुखस्य दर्शनः खः।' ५/२/६ इति खः। समं सर्वं मुखमिति सम्मुखम्। समशब्दस्या न्तलोपश्च निपातात्। **एव** केवलाद्धेतोः। **प्रतिपाद्यत्वे** बोधनीयत्वे बोधनं इति यावत्। **लब्धे** सतीति शेषः। तल्ला भे सतीति भावः। '**त्वाम्**'। **इतीत्येवम्**। **पुनर्वचनं** पुनरुक्तिः (कर्त्तृ)। अन्यव्यावृत्तिविशिष्टमन्येभ्यो बोधनीयव्यतिरिक्तेभ्योऽन्तिकस्थितेभ्यो व्यावृत्तिर्निवृत्तिस्तद्विशिष्टमित्यर्थः। **त्वदर्थं** त्वत्पदार्थम्। **लक्षयति।** लक्षितं करोति। **एवमनेन** प्रकारेणैवेति भावः। '**वच्मि**' कथयामि। **इत्यनेने**त्यभिधानेन। **एव**। कर्त्तरि कर्तृपदार्थे। **लब्धे** सतीति शेषः। '**अस्मि**' अहम्। **इति पुनर्वचनम्।** अन्यव्यावृत्तिविशिष्टं मदर्थं लक्षयतीति शेषः। **तथा। विदुषाम्। समवायः। इत्यनेने**त्येतेनाभिधानेनेत्यर्थः। **एव**। वक्तुः। वक्तृजनस्य। **प्रतिपादने** बोधने बोधव्यविषय इति यावत्। **विद्धे**। **पुनः** पश्चात्। '**वच्मि**' ब्रवीमि। **इति वचन**मित्यभिधानम्। **उपदिशाम्यु**पदेशं करोमि। **च** तथा। **एतानि** लक्षितानि पदानीति शेषः। **स्वातिशयं** स्वस्य स्वकीयास्यार्थस्य लक्ष्यस्येति यावदतिशयस्तम्। **व्यञ्जयन्ति। एतेन** लक्ष्यार्थाभिव्यञ्जनेन। '**ममाप्तस्यै**तस्योपदेशकस्येत्यर्थः। **वचनं** कथनम्। **तव। अत्यन्तम्। हितं** हितकरम्। **तत्तस्माद्धेतोः। अवश्यम्।** निश्चितम्। **एव**। कर्त्तव्यमनुष्ठेयम्। **इत्यभिप्रायो** निष्कृष्ट इति शेषः। **तत्तस्मात्कारणात्। एवमनेन** प्रकारेण। **वाक्यगतो** वाक्यनिष्ठः। **अर्थान्तरसङ्क्रमिवाच्यः**। तदाख्य इति यावत्। **अयं** निर्देश्यमानः। **ध्वनिः**। बोध्य इति शेषः। अत्रेदमभिहितम्-विदुषां सभायां प्रविशन्तमभिमुखीकृत्य कस्यचिदाप्तस्येयमुक्तिरि 'त्येवं विधेही' ति सम्बोध्यमुद्दिश्याभिधानम्, अथैतेनैव वक्तव्यविषयाभिधानेन गतार्थं 'त्वमस्मि वच्मी' त्यभिधानमिति माभूदनुपयुक्तमिति 'त्वा' मि 'त्युपदेशार्हं त्वा 'मि, त्यस्मी' त्याप्तोऽह 'मिति, 'वच्मी' ति 'चो पदिशामी' ति लक्षयत्यर्थम्। लक्ष्यातिशयश्च व्यङ्ग्यः। एवं च- 'विद्वत्प्रत्यक्षेऽपि 'विदुषा' मिति, आत्ममतेश्च सार्वकालिकत्वेऽपि 'आत्मीया' मित्यभिधानं च यथाक्रमं 'सर्वशास्त्रविशारदानां विदुषा' मिति 'प्रमाणपरतन्त्रात्ममति' मिति च निर्दिशन् अन्यथाऽऽचरणे भविष्यसीत्युपहासातपदमित्यभिव्यञ्जयति तदेवं 'त्वां' मित्यादिपदार्थाना 'मन्यव्यावृत्तिविशिष्टमुपदेशार्हं त्वां' मित्यादिष्वर्थान्तरेषु सङ्क्रमितत्वात्प्रकृतोऽयं ध्वनिरर्थान्तरसङ्क्रमितवाच्यः।' इति। अतएवैवं व्याख्यातं तर्कवागीशैः— 'अस्मीति पुनर्वचनमिति। 'हितकारि मदर्थं लक्षयति' इति शेषः। सर्वत्र मुख्यार्थस्याभेदः सम्बन्धः। एतान्यन्य 'अस्मीति पुनर्वचनमिति। 'हितकारि मदर्थं लक्षयति' इति शेषः। सर्वत्र मुख्यार्थस्याभेदः सम्बन्धः। एतान्यन्यव्यावृत्तिविशिष्टत्वादिवस्तूनि। स्वातिशयमिति। त्वत्प्रदार्थस्य वादजल्पादिक्षमत्वम्। मत्पदार्थस्यान्तहितौषित्वम् उपदेशस्यानुपेक्षणीयत्वमतिशयः।' इति।

अथात्यन्ततिरस्कृतवाच्यस्य द्वितीयप्रभेदस्य लक्षणामूलस्य ध्वनेः पदनिष्ठत्वं निदर्शयन्नाह-**अत्यन्ततिरस्कृतवाच्य** इत्यादि।

अत्यन्ततिरस्कृतवाच्यः पदगतो यथा—'निःश्वासान्धः'—इत्यादि (२०९ पृ.)। वाक्यगतो यथा—'उपकृतं बहु तत्र—' इत्यादि (४४ पृ.)। अन्येषां वाक्यगतत्वे उदाहृतम्।

---

## विवृतिः

**उपकृतमिति**। व्याख्यातमिदं प्राक्। अत्र लाक्षणिकपदानामेकवाक्यस्थत्वाद्वाक्यत्वेनैव व्यञ्जकत्वम्। यद्यप्युकृतादिलाक्षणिकपदानां प्रत्येकवाक्यस्थत्वं तथापि महावाक्यगतत्वेनैकवाक्यस्थत्वं वेद्यम्। **अन्येषामसं**-लक्ष्यक्रमव्यङ्ग्यादीनाम्। **उदाहृतमिति**। निरुक्तरसाद्युदाहरणमेव तदुदाहरणमित्यर्थः॥

## विवृतिपूर्तिः

**एकेति**। ध्वनिग्रन्थे तु 'विच्छित्तिशोभिनैकेन' इति पाठो दृश्यते॥

## कुसुमप्रतिमा

अत्यन्तेति। अत्र केवलान्वयादनिष्ठत्वात् पदगतत्वमित्यवधेयम्।

वाक्येति। वाक्यगतः अत्यन्ततिरस्कृतवाच्यो ध्वनिर्यथेत्यर्थः। अत्र "उपकृतम्"—"सुजनता"—"सुखितम्" इति बहुपदनिष्ठत्वाद्वाक्यगतत्वम्। उपकृतमित्यादिपद्ये वाक्यचतुष्टयसत्त्वेऽपि तत्त्व महावाक्यरूपैकवाक्यतामङ्गीकृत्येदमुदाहृतमिति बोध्यम्।

अन्वेषामति। असंलक्ष्यक्रमव्यङ्ग्य संलक्ष्यक्रमव्यङ्ग्यभेदानामित्यर्थः। उदाहृतं "शून्यं वासगृहम्" इत्यादिकमसंलक्ष्यक्रमव्यङ्ग्यस्य, "पन्थिअ ! णएत्थ" इत्यादिकञ्च संलक्ष्यक्रमव्यङ्ग्यस्य उदाहरणं दर्शितमित्यर्थः।

## विमला

"निश्वासान्धः—" इत्यादिवत् "उपकृतम्" इत्यपि पूर्वमेव व्याख्यातम्। अत्र तु लाक्षणिकपदानामेकवाक्यस्थत्वाद्वाक्यत्वेनैव व्यञ्जकत्वम्; यद्यपि उपकृतादिलाक्षणिकपदानां प्रत्येकवाक्यस्थत्वं, तथाऽपि महावाक्यगतत्वेनैकवाक्यस्थत्वं वेद्यम्। अन्येषाम्—असंलक्ष्यक्रमव्यङ्ग्यादीनानि इत्यर्थः। उदाहृतम् इति।—अत्र निरुक्तरसाद्युदाहरणमेव तदूदाहरणमित्यर्थोऽवगन्तव्यः।

## लक्ष्मी

इत्थमर्थान्तरसंक्रमितवाच्यप्रथमप्रभेदस्य लक्षणामूलस्य ध्वनेः पदनिष्ठत्वमुपपाद्य सम्प्रति अत्यन्ततिरस्कृतवाच्यस्य द्वितीयप्रभेदस्यपदनिष्ठत्वमुपपादयति—**अत्यन्ततिरस्कृतवाच्य** इति। अत्र केवलान्धपदगतत्वात् पदगतत्वमवगन्तव्यम्। **वाक्यगत** इति। अत्यन्ततिरस्कृतवाच्यो ध्वनिर्यथेत्यर्थः। 'उपकृतम्' 'सुजनता सुखितम्' इत्यनेकपदगतत्वाद **वक्यगतत्वमवगन्तव्यम्**। अत्र लाक्षणिकपदानां प्रत्येकवाक्यस्थत्वं **तथापि** महावाक्यगतत्वेन एकवाक्यस्थत्वं ज्ञेयम्। यद्यप्येतेषां लाक्षणिकपदानां प्रत्येकवाक्यस्थत्वं तथापि महावाक्यगतत्वेन एक वाक्यस्थत्वं ज्ञेयम्।

अन्येषामिति। असंक्ष्यसंलक्ष्यक्रमव्यङ्ग्यभेदानामित्यर्थः। **उदाहृतम्** 'शून्यं वासगृहंमित्यादिकमाद्यस्य 'पन्थिअ ण एत्थ' इत्यादिकञ्च द्वितीयस्य उदाहरणं निरूपितमित्यर्थः।

## रुचिरा

**अत्यन्ततिरस्कृतवाच्यो**ऽत्यन्तं तिरस्कृतो न केनापि स्वरूपेणान्वयं प्रविष्टो वाच्यो यत्र स सादृश इति यावत्। सहत्स्वार्थामूलत्वादिति। **पदगतः** पदनिष्ठो ध्वनिरिति शेषः। **यथा- 'निःश्वासान्धः-इत्यादि**। 'निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते॥' इत्यस्य पूर्वार्धं 'रविङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः।' इति। पद्यमिदं श्व व्याख्यातपूर्वम्। दर्शितश्चातात्यन्ततिरस्कृतवाच्यो ध्वनिः। पदनिष्ठ इति।

**यथा वा**-'मुनिरस्मि निरागसः कुतो मे भयमित्येव न भूतयेऽभिमानः। परवृद्धिषु बद्धमत्सराणां किमिव ह्यस्ति दुरातमनामलङ्घ्यम्॥' इति। अस्यायं पुनरर्थः—'अहमर्जुनो मुनिरस्मि, निरागसो निरपराधस्य मम भयं कुतो भवेत, इत्येवाभिमानो भूतये सम्पदे सुखायेति यावन्न। हि यतः-परवद्धिषु परकीयासून्नतिषु बद्धमत्सरणां जातमात्सर्योद्रेकाणां दुरात्मनामलङ्घ्यं न लङ्घ्यं किमिव किंनामास्ति, अस्ति किमपि नालङ्ध्यमकार्यमिति॥' अत्र हि-मत्सरस्य 'मत्सरोऽन्यशुभद्वेषे' इत्यमरोक्तयाऽन्यशुभद्वेषरुपस्य चित्तवृत्तिविशेषस्य बन्धनासम्भवाद्बद्ध इति नितान्तं सद्भावं लक्षयति, लक्षितेन पुनरेतेन मत्सरय (परवृद्धयो माभूवन्निति द्वेषरूपस्य चित्तवृत्तिविशेषस्य) नितान्तसद्भावे बद्धसाधर्म्यमुद्रेकविशेषं व्यजयतीति वाच्यस्यात्यन्तं तिरस्कृतत्वादत्यन्ततिरस्कृताच्याभिधेयो ध्वनिः।

अधास्य वाक्यनिष्ठत्वं निदर्शयति-**वाक्यगत** इत्यादिना।

**वाक्यगतो** वाक्यनिष्ठोऽ'त्यन्ततिरस्कृतवाच्य इति शेषः। **यथा-उपकृतं बहु तत्र** इत्यादि। 'उपकृतं बहु तत्र विमुच्यते सुजनता प्रथिता भवता परम्। विदधरीदृशमेव सदा सखे! सुखितमाःस्व ततः शरदां शतम्॥' इति। पद्यमिदं च व्याख्यातपूर्वम्। अत्र हि जहत्स्वार्थापरपर्य्यायाया लक्षणाभिधेयाया लक्षणायाः सद्भावस्य दर्शितरीत्या वाच्यस्यात्यन्ततिरस्कृतत्वं निर्बाधम्।'

यथा वा मम-'ललनारमणं प्रियजनसङ्गो भोगश्च सम्पदामासाम्। न मनो! महसि महीयसि तत्ते न रती रतीप्सुनः स्थाने॥' इति। अस्यायमर्थः-हे मनः महीयसि परमे महति तेजसि 'तमेव भान्तमनुभाति सर्व' मित्यादिश्रुतिभिः प्रतिपाद्ये सच्चिदानन्दस्वरूपे परस्मिन् ब्रह्मणि विषये ललनारमणं ललनाभिः साकं रमणं, प्रियजनैः साकं च सङ्गः, आसां वर्त्तमानानां सम्पदानां च भोगो न विद्यते तदिति हेतो रतीप्सुनस्तव न तत्र रतिरिति स्थाने युज्यते॥' इति। अत्र हि-विपरीतलक्षणया वास्तविक्या रतेरिप्सुनो महीयसि महसि रतिः स्थाने ललनारमणादि तु सर्वं न वास्तविकमिति प्रतिपाद्यते।

एवमत्यन्ततिरस्कृतवाच्यध्वनि पदवाक्यगतमुदाहत्यासँल्लक्ष्यक्रमव्यङ्ग्यादीनुदाहर्तुकाम आह-**अन्येषामित्यादि**।

**अन्येषां** परेषामर्थान्तरसङ्क्रमवाच्यादिभ्यो व्यतिरिच्यमानानामसंलक्ष्यक्रव्यङ्ग्यादीनांध्वनीनामित्यर्थः। आदिपदेन संलक्ष्यक्रमव्यङ्ग्यत्रभेदादिग्रहमणम्। **वाक्यगतत्वं** वाक्यनिष्ठत्वम्। **उदाहृतम्**। तत्तदुदाहरणप्रसङ्गे इतिशेषः। इति तत एवावगन्तव्यमिति भावः।

यथा वा मम-'ललने ! पश्यसि यंयं, सोऽनिमिषत्वं प्रपद्यते त्वरितम्। हन्त करेण गृहीतः कथमिव सुकृतिनि स जायेत ॥' इति।' अस्यायं पुनरर्थः-'हे ललने ! ययं पश्यति, स सर्वोऽपि युवजनसमाजस्त्वारंतमनिमिषत्वमाश्चर्योद्रेकजननद्वारा सम्मोहोत्पादनमुखेन वा निमिषनिमीलनोन्मीलनस्तब्धत्वं जडानुरूपावस्थानं देवस्वरूपत्वं प्रतिपद्यते इत्येवं स्थितौ हे सुकृतिनि ! धर्मशीले त्वया करेण गृहीतः स (युवजनः) कथमिव हन्त जायेत ॥' इति। अत्र हि-कामपि सुन्दरी स्तुवंतः कस्यापि कामुकस्योक्तिरिति रहसि तस्सौन्दर्य्यनिरीक्षणमुद्दीपनं, नायिकाऽलम्बनं च, तदानीन्तनेंन मदनोद्रेकेण तदालिङ्गनगाढौत्कण्ठयमनुभावः काम्यादिकारणीभूतव्याध्यादिर्व्यभिचारीभावश्चेत्वेतेषां युगपत् प्रतीतिपथमवतरतां संयोगात्सम्भोगशृङ्गारस्य स्याथिभावभूता रतिः स एव वाऽभिव्यज्यते इत्यसंलक्ष्यक्रमव्यङ्ग्यत्वं वाक्यगतम्। वाक्यगतः पुनः संलक्ष्यक्रमव्यङ्ग्यो यथा मम-'सुमुखि ! तवैष विकासः कस्य न रुचये भवेत् सुधामधुरः। यद्दर्शनमनुभवतां तापशमो योगिनामचिरात् ॥' इति। अस्यायमर्थः-'हे मुमुखि ! तवैष सुधया सुधावद्वा मधुरो विकाशः कस्य रुचये न भवेत्। यत्-दर्शनं विकासनिरीक्षणाह्लादमिति यावदनुभवतां योगिनां समाहितमनसां गृहिण तापशमोऽचिराद्भवति ॥ इति। अत्र हि-सुमुख्या विकासेन साकं सुधानिधेर्विकाससाधर्म्यमभिव्यज्यते इत्युपमाऽलङ्काररूपः संलक्ष्यक्रमव्यङ्ग्यो नाम ध्वनिर्वाक्यगतः। यथा वा मम-'साक्षादमृतनिधानं, मुखमिदमिति निश्चितं प्रिये ! सुहृदाम्। अथ कथमिति तव शरणं गत्वाऽपि मुमूर्षुरेवास्मि ॥' इति। अस्यायं पुनारर्थः-'हे प्रिये ! सुखमिदं साक्षान्न तु साधर्म्येणामृतनिधानमिति सुहृदां सहृदयानां त्वंत्प्रीतिभाजनानां वा निश्चितम्। अथास्यामृतनिधानत्वे निश्चितेऽपि तवामृतनिधानवदनायाः शरणं गत्वाऽपि कथमिति मुमूर्षुरेवास्मि ॥' इति। अत्र हि-रुपकेण 'एष स्वाधरामृतपानदानेन कृतार्थनीय' इति वस्तु व्यज्यते।

पदगतत्वं यथा—

**'लावण्यं तदसौ कान्तिस्तद्रूपं स वचः क्रमः ।**

**तदा सुधास्पदमभूदधुना तु ज्वरो महान् ॥'**

अत्र लावण्यादीनां तादृगनुभवैकगोचरताव्यञ्जकानां तदादिशब्दानामेव प्राधान्यम्, अन्येषां तु तदुपकारित्वमेवेति तन्मूलक एव ध्वनिव्यपदेशः ।

तदुक्तं ध्वनिकृता—

**'एकावयवसंस्थेन भूषणेनेव कामिनी ।**

**पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ॥'**

एवं भावादिष्वप्यूह्यम् ।

---

## विवृतिः

असंलक्ष्यक्रमंव्यङ्ग्यं पदप्रकाश्यमाह—लावण्यमिति । कस्यचिद्विप्रलम्भवर्णनमिदम् । सर्वावयवगतो विदग्धघनयनोत्सवहेतुः कोऽप्यतिशयो **लावण्यम्** । प्रत्येकमवयवानां संस्थानसौभाग्यं **कान्तिरिति चण्डीदासः** । **रूपं** सौन्दर्यम् । **तदा** नायिकासंनिधानसमये । सुधास्यन्दं सुखातिशयजनकम् । **अधुना** नायिकाविच्छेददशायां **ज्वरः** संतापजनकः । विभावादिव्यङ्ग्ये रसे तदादिपदानां व्यञ्जकत्वमुपपादयति—**अत्रेति** । अनुभवैकगोचरता-व्यञ्जकानामिनिर्वचनीयत्वव्यञ्जकानामत्युत्कृष्टविप्रलम्भव्यञ्जने प्राधान्यम् । अन्येषां विभावादीनां लावण्यादीनां वा **तदुपकारित्वं**, तदादिपदसहकारित्वमिति हेतो**स्तन्मूलक** एकपदमूलक एव । न तु वाक्यमूलकः । 'प्रधाने हि व्यपदेशा भवन्ति' इति न्यायादित्यर्थः । अत्यन्तसंतोषसंपादकवस्तुस्मरणाद् विरहिणां दुःखातिशयो भवतीति विप्रलम्भातिशयो व्यज्यत इत्येतत्पदगतासंलक्ष्यक्रमव्यङ्ग्यध्वनेरुदाहरणमुपपन्नम् । ननु तदादिपदानामनुभवगो-चरेऽभिधैव कथं व्यञ्जनेति चेत् । न । अनुभवैकगोचरतेत्यनेनानिर्वचनीयत्वस्य विवक्षणात् । अत एव **चण्डी-दासः**—'अनुभवैकगोचरास्तत्कालचमत्कारिणो निर्वक्तुमशक्याः सर्वस्वव्ययप्राणपणादिभिरपि प्रार्थनीयाः' इति व्याचकार । नन्वितरसाचिव्यं विना पदस्य व्यञ्जकत्वं तावन्न संभवति तत्र प्राधान्याप्राधान्यविवेचनमकिंचित्करम् । तथा सति सर्वत्र वाक्यस्यैव व्यञ्जकत्वमुपपन्नं पदगतध्वनिप्रभेदाङ्गीकारस्तु प्राचीनमतानुसारेणैवेत्यभिप्रायेण प्राचीनमतमुपन्यस्यति—**तदुक्तमिति** । **एकावयवेति** । नासिकास्थगजमुक्तादिनेत्यर्थः । पदद्योत्येन पदव्यङ्ग्येन ध्वनिना अर्थेन ॥ **भावादिष्वपीति** ।

## विवृतिपूर्तिः

**भारतीति** । श्रोत्रग्राह्यवाक्यव्यङ्ग्या स्फोटरूपा भारतीत्यर्थः । यदन्तर्गतेन पदेन द्योत्योऽतिश-यितोऽर्थश्चारुतया व्यज्यते तस्यैव ध्वनित्वमिति फलितार्थः ॥

## विज्ञप्रिया

असंलक्ष्यक्रमं पदगतं व्यङ्ग्यमुदाहरति—**लावण्यमिति**।

**अत्रेति**—लावण्यादीनां यदनुभवैकगोचरत्वं तत्तद् व्यञ्जकानामित्यर्थः। व्यञ्जकानामित्यत्र ज्ञापकानामित्यर्थः। तेन अनुभवैकगोचरत्वं तदादिपदानां वाच्यमेव बोध्यं, न तु व्यङ्ग्यम् किन्तु विप्रलम्भ एव व्यङ्ग्यः। तदाद्यनेकपदानां चात्र न वाक्यत्वं विभिन्नवाक्यस्थत्वेन परस्परानन्वयात्। न च तदा सुधास्पदमभूदित्यत्र सर्वेषां तदादिपदार्थानामन्वयात् वाक्यतमेवेति वाच्यम्। तल्लावण्यमित्यनेनैव विप्रलम्भव्यञ्जनेन तदा सुधास्पदमित्यन्वयापेक्षां विनैव व्यञ्जकत्वेन पदत्वेनैव व्यञ्जकत्वात्। महावाक्यव्यङ्ग्यत्वेऽपि पदगतव्यङ्ग्यमूलो व्यवहारः।

तन्मुखेनैव काव्यशोभाप्रतीतिरित्यत्र संवादं दर्शयति—**तदुक्तमिति**। ध्वनिना व्यङ्ग्येन भारती वाक्यरूपा। पदव्यङ्ग्येरसादिरूपेऽसंलक्ष्यक्रमे उदाहृते भावादिरूपाऽसंलङ्यक्रमस्यापि पदव्यङ्ग्यत्वमूह्यमित्याह।

## लोचन

**लावण्यमिति**—सर्वावयवगतः कोऽप्यतिशयः लावण्यम्। कान्तिरुज्ज्वलता च पृथक् पृथगवयवाश्रिता। ज्वरः पीडादायकः। लावण्यादगीनाम् इत्यतः पूर्वं प्रतीतेर्विभावादिसामग्रीसाध्यत्वेऽपि पूरणीयम्।

## कुसुमप्रतिमा

पदगतविप्रलम्भशृङ्गाररूपमसंलक्ष्यक्रमव्यङ्ग्यमुदाहरति लावण्यमिति। प्रियतमां संद्युत्व कस्यचित् प्रवासिन उक्तिरियम्। "मुक्ताफलस्य च्छायायां तरलत्वनिवान्तरौ। प्रतिभाति व्यङ्ग्येषु तल्लावस्य "महोक्षते॥" इति रसमञ्जरी। कान्तायास्तत अलौकिकं लावण्यम्, असौ अनिर्वचनीया कान्तिः शोभा, तत् असाधारणं रूपं सौन्दर्यम्, स च अश्रुतपूर्वी तचःक्रमो वाक्परिपाटी, एतत् सर्वं तदा सम्मेलनकाले सुधाकश्चन अश्वतवत् सुखकरानुभवस्थानम् अभूत्, तु किन्तु अधुना तत् सर्वं श्रुतं सत् महान् ज्वरः सन्तापको भवतीत्यर्थः।

नन्वत्रापि लावण्यादिपदसहकारेणैव तदादिपदानां व्यञ्जकत्वेन ध्वनेर्वाक्यगतत्वमेव स्यात् तत् कथं "पदगतत्वे यथा" इत्युक्तमित्याह अत्रेति। लावण्यादीनां यस्तादृगनुभवः अलौकिकत्वादिरूपेण ज्ञानं तस्यैकगोक्षरताया तन्मात्रविषयताया व्यञ्जकानां लावण्यदीनामलौकिकत्वादिजन्यविप्रलम्भशृङ्गारव्यञ्जकानामित्यर्थः। प्राधान्यमिति तेषामेव साक्षादलौकिकत्वादिप्रतिपादनद्वारा। विप्रलम्भशृङ्गारव्यञ्जकत्वाद्विति भावः। अन्येषां लावण्या देशब्दानाम्, तेषां तदादिशब्दानाम् उपकारित्वमेव व्यञ्जकत्वं सहकारित्वमात्रम्। तन्मूल एव तदादिपदमूल एव ध्वनेव्यपदेशः संज्ञा। अतोऽस्य पदगतत्वसिद्धिरिति भावः। वस्तुतस्तु "उपकृतं बहु तत्र" इत्यादिवत् बहुपदगतत्वेनैवाक्य वाक्यगतत्वात् "गतोऽस्तमर्थः" इत्युदाहरणं द्रष्टव्यम्। अत्र हि अक्षशब्दशक्त्या "इदातीमभिसर" इति सामान्येन शृङ्गाररसो व्यज्यते।

ननु केवलतदादिशब्दानां ध्वनिप्रतिपादकत्वं कथं वाक्यसमुदायस्य सौन्दर्यमुषपद्यत इत्यपेक्षायां प्राप्तेवसंवादमुपन्वंस्य तत्प्रतिपादयितुमाह तदुक्तमिति।

एकेति। एकावयवसम्बन्धेन हस्ताद्येकाङ्क्षासात्रस्थितेन भूषणेन कङ्कणाद्यलङ्कारेण कामिनीव, पदद्योत्येन केवलपदप्रकाश्येन ध्वनिनाः सकवेर्वारती वाक्यं भाति शोभते।

एवमिति । आदिपदात् रसामासदीनां ग्रहणम् । यथा रसे असंलक्ष्यक्रमव्यङ्ग्यभेदं पदगतत्वं उदाहृतम्, एवं भावादिष्वपि ऊह्यमुदाहरणमित्यर्थः । तत्र पदगतः असंलक्ष्यक्रमव्यङ्ग्यरूपो सावध्वनिर्यथा—"एवंवदति देवर्षौ" इत्यादि । अत्र गणयामेसेत पदेन पार्वत्या अवहित्था व्यज्यते । मृग्यमन्यत् ।

## विमला

असंलक्ष्यक्रमव्यङ्ग्यं पदप्रकाश्यमाह, लावण्यमिति ।—कस्यचिद् वियोगिव उक्तिरियम् । तत् लावण्यम्—अङ्गप्रभाविशेषः, सर्वावयवगतो विदग्धनयनोत्भवहेतुः कोऽप्यतिशय इत्यर्थः, असौ कान्तिः,—ओज्ज्वल्यं, (प्रत्येकमवयवानां संस्थानसौभाग्यं कान्तिरिति चण्डीदासः) तत् रूप—सौन्दर्य, स वचसा क्रमः,—परिघाटी, भङ्गीत्यर्थः, तदा—तस्मिन् काले, नायिकासन्निधानसमये इति यावत्, सम्भोगावसरे इति भावः, सुधाऽऽस्पदम्—अमृतपात्रम्, अभूत्; अधुना—नायिकाविच्छेददशायां, तद्विरहे इत्यर्थः, तु महान्, ज्वरः,—व्याधिः, सन्तापजनक इति यावत्, तत्तत्स्मरणस्य अतीवसन्तापकत्वादिति भावः ।

विभावादिव्यङ्ग्ये रसे तदादिपदानां व्यञ्जकत्वमुपपादयति, अत्रेति ।—अनुभवैकगोचरताव्यञ्जकानाम्—अनिर्वचनीयत्वव्यञ्जकानाम्, प्राधान्यम्, अत्युत्कृष्टविप्रलम्भव्यञ्जने इति शेषः; अन्येषां—विभावादीनां, लावण्यादीनां वा, तदुपकारित्वं—तदादिपदसहकारित्वमेव, इति हेतोः, तन्मूलक एव—पदमूलम्भ एव, न तु वाक्यमूलकः इति भावः; "प्रधाने हि व्यपदेशाः भवन्ति" इति च्छायादित्यर्थः । अत्यन्तसन्तोषसम्पादकवस्तुस्मरणात् विरहिणां दुःखातिशयो भवति इति विप्रलम्भातिशयो व्यज्यते, इत्येतत्पदगतासंलक्ष्यक्रमव्यङ्ग्यध्वनेरुदाहरणमुपपन्नम् । ननु तदादिपदानाम् अनुभवगोचरेऽभिधैव, कथं पुनः व्यञ्जना ? इति चेत्, न, अनुभवैकगोचरतेत्यनेनानिर्वचनीयत्वस्य विवक्षणात् । (अत एव चण्डीदासः,—"अनुभवैकगोचराः,—तत्कालचमत्कारिणो निर्वक्तुमशक्याः, सर्वस्वव्ययप्राणपणादिभिरपि प्रार्थनीयाः" इति व्याचकार) । इदञ्च बोध्यम्;—देहिनामिव काव्यानां सङ्घटनाविशेषसाध्यः मनोरमत्वप्रत्ययः अन्वयव्यतिरेकाभ्यां सङ्घटनाभागेषु समर्थ्यते, तस्मात् पदानाम् अपि, न केवल वाक्यानां व्यञ्जकत्वद्वारा ध्वनिप्रसङ्गः सिद्धः इति ध्वन्यालोके विशदीकृतम् । प्रदीपकृताऽपि व्याख्यातम्;—"ननु पदस्य व्यञ्जकत्वे किमुपलब्धम् ? न च वाक्यात्मतां काव्यानां ध्वनित्वमिति, न वा केवलपदस्य व्यञ्जकत्वे सकलस्य वाक्यस्य मनोरमत्वं सङ्घटेत इति वक्तुं युक्तम्, इति चेत् ?—केवलपदव्यञ्जकत्वेन न पदप्रकाश्यता, अपि तु तन्मुख्यत्वेन, केवलपदस्य व्यञ्जकतायामपि अविवक्षितवाच्यध्वनौ यद्वाक्यानिष्ठस्य शब्दस्य अर्थस्य वा या अतिशयितार्थव्यञ्जकता, सा वाक्यस्यैव इति न दोषलेशः ।

नन्वितरसाचिव्यं विना पदस्य व्यञ्जकत्वं तावन्न सम्भवति, तत्र प्राधान्याप्राधान्यविवेचनमकिञ्चित्करम्; तथा सति सर्वत्र वाक्यस्यैव व्यञ्जकत्वम् उपपन्नम् । पदगतध्वनिप्रभेदाङ्गीकास्तु प्राचीनमतानुसारेणैवेत्यप्रायेण प्राचीनमतमुपन्यस्यति,—तदुक्तमिति । एकेति ।—एकावयवसंस्थेन—एकाङ्गस्थितेन, भूषणेन—अलङ्कारेण, नासिकास्थगजमुक्तादिना इत्यर्थः, कामिनीव—सुन्दरीवत्, पदद्योत्येन—एकदेशस्थितेन तादृशपदप्रकाश्येन, ध्वनिना—व्यङ्ग्येन, सुकवेः,—साधुकवेः, भारती—वाणी, समस्तमेव वाक्यमित्यर्थः, भाति—राजते, रम्यतामुपपद्यते इति भावः ।

एवं भावादिष्वपीति ।—पदप्रकाश्यभावादिष्वपीत्यर्थः । तेषामपि असंलक्ष्यक्रमव्यङ्ग्यध्वनित्वेनोदाहर्तुमुचितत्वात्; यथा रसरूपासंलक्ष्यक्रमव्यङ्ग्नि काव्यानि उदाहृतानि, तथा भावरूपासंलक्ष्यक्रमव्यङ्ग्यानामपि उदाहरणानि मृग्याणीति भावः ।

## लक्ष्मी

असंलक्ष्यक्रमं पदगतं व्यङ्ग्यमुदाहरति—**लावण्यमिति**। कस्यचिद्वियोगिनः परामर्शोऽयम्। कान्तायास्तत् अनुभवैकगोचरं लावण्यम् सर्वावयवगतः कोऽप्यतिशय एव लावण्यमित्युच्यते। तदुक्तम्—

'मुक्ताफलेषु छायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमुदाहृतम्॥' इति।

असौ अनुभवैकगोचरा अनिर्वचनीया इति यावत् कान्तिः प्रत्येकमवयवानां संस्थानसौभाग्यम्, तत् अनुभवैकगोचरम् असाधारणमिति यावत् रूपं संस्थानसौन्दर्यम्। **प्रदीपकारस्तु** 'अवयवस्य संस्थानसौष्ठवं रूपम् अवयिनस्तदेव लावण्यम्' इत्थं व्याख्यातवान्। स अनुभवैकगोचरः वचः क्रमः वाक्परिपाटी। एतत्सकलं तदा नायिकासन्निधानकाले अनुभवदशायां सुधास्पदम् अमृतस्थानम्। सुधावत्सुखकरानुभवस्थानमिति यावत् अभूत् सर्वाङ्गीणसौष्ठवसम्पादकत्वादिति भावः। तु किन्तु अधुना तद्वियोगात्स्मृतिदशायां महान् ज्वर इव ज्वर अतिशयसन्तापजनको भवति सर्वाङ्गीणतापहेतुत्वादिति भावः।

नन्वत्रापि विभावादिव्यङ्ग्ये विप्रलम्भे लावण्यादिपदसहायेनैव तदादिपदानां व्यञ्जकत्वेन ध्वनेर्वाक्यगतत्वमेव स्यात्तथा कथं पदगतत्वेनोदाह्रियन्त अत आह—अत्रेति लावण्यादीनां यस्ताहृगनुभव अनुभवगोचरत्वादिरूपेण ज्ञानं तस्यैकगोचरताया निर्वक्तुमशक्यायास्तन्मात्रविषयताया इति यावत्, व्यञ्जकानां लावण्यादीनामनुभवगोचरत्वादिजन्यविप्रलम्भश्रृङ्गारद्योतकानामित्यर्थः। **प्राधान्यमिति**। लावण्यादीरनुभवैकगोचत्वादिना स्मरणस्य विप्रलम्भपोषकत्वादिति भावः। अन्येषां विभावादीनां लावण्यादीनां वा तेषां तदादिपदानाम् उपकारित्वमेव व्यञ्जकत्वे सहकारित्वमात्रम्, तन्मूलक एव एकपदमूलक एव न तु वाक्यमूलकः 'प्रधानेन व्यपदेशा भवन्ति' इति न्यादिति भावः। **ध्वनिव्यपदेशः** ध्वनेः संज्ञा। अत्यन्तसन्तोषविधायकवस्तुस्मृत्या वियोगिनां क्लेशातिशयो भवतीति विप्रलम्भातिशयो व्यज्यत इत्येतस्य पदगतत्वसिद्धिरुपपन्ना। ननु तदादिपदानामनुभवगाचरे वाच्यत्वमेव, कथं व्यञ्जनेति चेत्? मैवम्, अनुभवगोचरतेत्यनेनानर्वचनीयत्वादिविवक्षणेनादोषात्। उक्तं च **चण्डीदासेन**—'अनुभवैकगोचरास्त्कालचमत्कारिणो निर्वक्तुमशक्याः सर्वस्वव्ययप्राणपणादिभिरपि प्रार्थनीयाः' इति व्याख्यातम्। उद्योत्कृताऽप्युक्तम्—अत्र तदादेर्बुद्धिविषयतावच्छेदकवति शक्त्या तत्पदानामनुभवैकगोचरत्वेन लावण्यादिबोधकता द्रष्टव्या' इति।

अत्र हि विप्रलम्भप्रतीतेर्विभावादिसामग्रीसत्त्वेऽपि तदादिपदानां प्राधान्यमिति पदव्यञ्जकता। तदाद्यनेकपदानां चात्र न वाक्यत्वं विभिन्नवाक्यस्थत्वेन परस्परानन्वयात्। न च 'तदा सुधास्पदमभूत्' इत्यत्र सर्वेषां तदादिपदानामन्वयात् वाक्यत्वमेवेति वाच्यम्, तल्लावण्यमित्यनेनैव विप्रलम्भव्यञ्जनेन 'तदा सुधास्पद'मित्यन्वयापेक्षां विनैव, व्यञ्जकत्वेन पदत्वेनैव व्यञ्जकत्वात्। (महावाक्यव्यङ्ग्यत्वेऽपि पदगतव्यङ्ग्यमूलो ध्वनिरिति व्यवहारः) ध्वन्यालोककारा अपि 'काव्यानां शरीरिणामिव संस्थानविशेषावच्छिन्नसमुदायसाध्यापि चारुत्वप्रतीतिरन्वयव्यतिरेकाभ्यां भागेषु कल्प्यत इति पदानमपि व्यञ्जकत्वमुखेन व्यवस्थितो ध्वनिव्यवहारः' इति वदन्ति।

प्रदीपकाराश्चापि—'ननु पदस्य व्यञ्जकत्वे किमायातं वाक्यरूपस्य काव्यस्य ध्वनित्वम्, कथं वा पदमात्रस्य व्यञ्जकत्वे किन्तु तस्य प्राधान्येन। अविवक्षितवाच्ये पदमात्रस्य व्यंञ्जकत्वेऽपि तद्वाक्यवर्तिशब्दस्यार्थस्य वा कस्याऽप्यतिशयितार्थव्यञ्जकत्वं तद्वाक्यस्यैव ध्वनित्वमित्यभ्युपगमान्न कश्चिद्दोषः एकदेशस्थितेन च तादृशपदेन समस्तमेव वाक्यं चारुता मुपगच्छतीति कामिनीव 'एकावयवस्थेन भूषणेन' इत्याहुः। एवं सति

पदगतस्य नेदमुदाहरणमिति वस्तुतस्त्वित्यादिना वदतां सिद्धान्तवागीशानां मतमयुक्तमिवाभातीति विभावनीयम्।

नन्वितरसाहाय्यमन्तरा पदस्य व्यञ्जकत्वं तावन्न सम्भवति। न च प्राधान्याप्राधान्येन निर्वाहः तद्विवेचनस्याकिञ्चित्करत्वात्, तथा सति वाक्यस्यैव व्यञ्जकत्वं सर्वत्रोपपन्नम्, पदगतध्वनिप्रभेदाभ्युपगमस्तु प्राचीनमतानुसारेणैवेत्याशयेन प्राचीनमतं दर्शयति—तदुक्तमिति। यद्यपि वाक्यव्यङ्ग्यं एव सर्वा ध्वनिस्तथाप्यन्वयव्यतिरेकाभ्यां यत्र पदे वाक्ये वा चारुत्वमधिकमुपलभ्यते तस्यैव व्यञ्जकत्वं व्यवस्थाप्यते। एकावयवसंस्थेन नासिकादावेकाङ्गे विद्यमानेन भूषणेन अलङ्कारेण पदद्योत्येन पदव्यङ्ग्येन ध्वनिना अर्थेन सुकवेः भारती श्रोत्र ग्राह्यवाक्यद्योत्या स्फोटरूपा, भाति शोभते। यदन्तः पातिना पदेन व्यङ्ग्योऽतिशयितोऽर्थश्चारुतया प्रकाश्यते तस्यैव ध्वनित्वमिति सारार्थः। न केवलं सर्वनामादिपदानामेव रसादिव्यञ्जकता किन्त्वन्येषामापि सम्भोगादौ बोध्या। यथा—

**मुग्धे! मुग्धतयैव नेतुमखिलः कालः किमारभ्यते**

**मानं धत्स्व धृतिं वधान ऋजुतां दूरे कुरु प्रेयसि॥**

**सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना**

नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरःश्रोष्यति॥

अत्र भयप्रतिपाद्यकृत्रिमानुरागेण च सम्भोगः प्रकृष्यते इति तस्य प्राधान्येन भीताननपदप्रकाश्यता। शून्यं वासगृहमित्यादौ तु न तादृशं किमपि पदमिति तत्र वाक्यप्रकाशतैवेति भेदोऽवगन्तव्यः।

एवमिति। भावादिष्वपि पदद्योत्यभावादिष्वपीत्यर्थः। पदव्यङ्ग्ये रसादिरूपेऽसंलक्ष्यक्रमे उदाहृते भावादिरूपाऽसंलक्ष्यक्रमस्यापि पदव्यङ्ग्यत्वम् ऊहनीयमित्यर्थः, भावादीत्यादिना रसाभासादीनां परिग्रहः। इदमत्रानुसन्धेयम्—भावादीनां तु वाक्येऽपि न रससदृशं चारुत्वं पदप्रकाश्यत्वे सुतराम्, अतस्तत्प्रभेदा नोदाहृतं ग्रन्थकृता। दिङ्मात्रं तु मयोदाह्रियते यथा—

**'तन्मञ्जुमन्मदहसितं श्वसितानि तानि सा वै कलङ्कविधुरा मधुराननश्रीः।**

**अद्यापि मे हृदयमुन्मदयन्ति हन्त! सायन्तनाम्बुजसहोदरलोचनायाः॥'**

अत्र तत्पदमात्रप्रकाश्यः स्मृतिभावध्वनिः।

## रुचिरा

अथासंलक्ष्यक्रमव्यङ्ग्यं पदगतमुदाहरन्नाह-**पदगतत्वमित्यादि**।

**पदगतत्वं** पदनिष्ठत्वमसंलक्ष्यक्रमव्यङ्ग्यस्येति शेषः। **यथा-'लावण्य...'** इत्यादौ।

**'तत्**। यत्पूर्वं सम्भोगावस्थायामासीदिति शेषः। **लावण्यं** सौदर्यविशेषः। अलौकिकाह्लादजनकत्वे सति जितेन्द्रियत्वाभिमानिनामपि मनसि मदनोद्रेकस्योल्लासाधायकत्वे सति च मनोहरत्वकारणीभूतमक्यवगतं सौन्दर्य्यं लावण्यमित्यर्थः। अत एवोक्तम्-'मुक्तापलेषु च्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥' इति। रामचरणास्त्वाहुः 'सर्वावयवगतो विदग्धनयनोत्सवदेतुः कोऽप्यतिशयो लावण्यम्-'प्रत्येकमवयवानां संस्थानसौभाग्यं कान्तिरिति चण्डीदासः।' इति। **असौ न त्वेषा**। सन्निकृष्टत्वाभावात्। पूर्वं

साक्षात्कृतत्वेन स्मृतिमात्रमारुढा तद्विषयत्वेन वा जाता। **कान्तिश्शेभा** लावण्यनिष्ठेति यावत्। इच्छेति वा। 'कान्तिश्शेभेच्छयोः स्त्रियाम्।' इति विश्वः। **तत्।** **रूपमाकारः**। यद्वतं कान्तिंसवलितमिच्छाविषयं वा लावण्यं तदित्यर्थः। **सः**। स्मृतिमात्रमारुढः। **वचःक्रमो** वचमामुक्तीनां क्रमोऽवस्थापनशैली, किन्तु-**तदा** यदा तया तादृशलावण्यशालिन्या सह समागमो जात इति शेषः। **सुधास्यन्दं** सुधां स्यन्दयन्तीति तथोक्तम्। स्यन्दू प्रस्रवणे। सुखातिशयजनकमित्यर्थः। एतत्सर्वमिति शेषः। **अभूत्।** **अधुना।** **तु** पुनः। **महान्** भयङ्करः। **ज्वरः** सन्तापः। अभूदिति पूर्वतोऽन्वेति। कस्यापि कयाऽपि कदापि विहितसङ्गमया नायिकया समं जाते पुनर्विरहे सङ्गमकालिकामोदानुभवं स्मरतः कामुकस्योक्तिरियम्। अत्र हि स्मृत्यारूढानायिकाऽऽलम्बनं, कथमपि तत्स्मृतिरेव कोऽपि वा तत्स्मृतिहेतुरुद्दीपनं, ज्वरेणेवार्द्यमानत्वंमनुभावश्चित्तो त्रासादिर्व्यभिचारीभावश्चेत्येतेषां संयोगाद्विप्रलम्भो नाम शृङ्गारो रतिरेव वा तत्स्थायिभावभूता व्यज्यते इति बोध्यम्॥ १९१॥'

अथ तदादिपदानां व्यञ्जकत्वमुपपादयति-**अत्रे**त्यादिना।

**अत्रो**दाहृते पद्ये। **लावण्यादीनाम्**। आदिपदेन कान्तिरूपवचः-चङ्क्रमाणनामपि ग्रहणम्। **तादृगनुभवैकगोचरताव्यञ्जकानां**। तादृग् यादृशो लावण्यादयः, योऽनुभवोऽनिर्वचनीयो मूकास्वादितास्वादनीयास्वादसदृशो वक्तुमशक्यो लावण्याद्यवगमोद्गार इति, तस्यैकगोचरता तेनैकगोचरतेति वा मुख्यविषय (प्रतिपाद्य) त्वं तस्या व्यञ्जकानीति तेषां तथोक्तानाम्। एका मुख्याऽसौ गोचरतेति। सम्बन्धसामान्ये षष्ठी, अभेदे वा तृतीया। **तदादिशब्दानाम्**। आदिपदमदःशब्दस्यापि ग्राहकम्। **एव** नतु लावण्यादीनामपि। **प्राधान्यम्।** अत्युत्कृष्टविप्रलम्भव्यञ्जने इति शेषः। **अन्येषां** लावण्यादीनाम्। **तु** पुनः। **तदुपकारित्वं** तदादिपदसहकारित्वम्। तददस्तत्तच्छब्दैरभिव्यज्यमानस्यैवानिर्वचनीयत्वस्य सहकारित्वमात्रेणोपकारित्वं न तु स्वातन्त्र्येणेति भावः। **एव** न तु प्राधान्यम्। इतीत्यस्माद्धेतोः। **तन्मूलक**स्तदादिशब्दमूलकः। **एव** न तु वाक्यमूलकः। **ध्वनिव्यपदेशः।** 'प्राधान्येन हि व्यपदेशा भवन्ती'ति न्यायात्। प्रमोदामोदावहवस्तूनां स्मरणात्तत्द्विरहदशायां कामुकस्य भवत्येव सन्तापातिशय इत्येव प्रकृतेऽपि विप्रलम्भस्य शृङ्गारस्य सातिशयमभिव्यक्तौ तदादिपदानामेव प्राधान्यात्पदमूलक एवासंलक्ष्यक्रमव्यङ्ग्यो नाम ध्वनिरिति भावः। अत्राहुस्तर्कवागीशाः- 'ननु तदादिपदानामनुभवगोचरेऽभिधैव, कथं व्यञ्जनेति चेत्, न अनुभवैकगोचरतेत्यनेनानिर्वचनीयत्वस्यैव विवक्षणात्। अत एव चण्डीदासः-'अनुभवैकगोचरास्तत्कालचमत्कारिणो निर्वक्तुमशक्याः सर्वस्वव्यप्राणपणादिभिरपि प्रार्थनीयाः।' इति व्याचकार।' इति।

ननु वाक्यध्वनावपि परस्परं साचिव्येनैव वाक्यतामापन्नानां पदानां व्यञ्जकत्वं, पदान्तरसाचिव्यमन्तरेण पदस्यैकस्य व्यञ्जकत्वासम्भवादिति प्राधान्याप्राधान्यविचेचनस्य चाकिञ्चित्करत्वम्। एवं सति च 'सर्वत्रैवास्तां वाक्यस्य व्यञ्जकत्वम्। इति चेन्नेत्याचार्थमतमुपन्यस्यति-**तदि**त्यादिना।

**तत्।** यदुपजीव्यात्र पदध्वनित्वमेवं स्वीकुर्म इति शेषः। **ध्वनिकृता** ध्वन्याचार्येण। **उक्तम्।** **'एकावयवसंस्थेनेत्यादिना।'**

**'एकावयवसंस्थेन** यस्मिन् कस्मिन्नपि कर्णाद्यन्यतमेऽङ्गे स्थितेनेत्यर्थः। 'विच्छित्तिशोभिनैकेने' ति पाठान्तरम्। विच्छित्तिः'स्तोकाऽप्याकल्परचना विच्छित्तिः कान्तिपोषकृत।' इत्युक्तलक्षणः स्त्रीणां स्वभावसिद्धोऽलङ्कारविशेषस्तया शोभीति तेन। अभेदे तृतीया। विच्छित्त्यभिन्नशोभाशालिना। एकेनाद्वितीयेनेत्यर्थः। **भूषणेन** भूषणद्वारा! **कामिनी।** न तु विरक्ता सुन्दरी। **इव।** **पदद्योत्येन** पदेन पदद्वारा द्योत्यो व्यङ्ग्य इति, तेन

तथोक्तेन। **ध्वनिना। सुकवेः** सहृदयस्य कवेः। **भारती**। श्रोत्रग्राह्यवाक्यव्यङ्ग्यास्फोटरूपा वागित्यर्थः। **भाति**। प्रकाशते॥' इति।

अत्रायं पर्यालोकः—काव्यानां चारुत्वप्रतीतिः क्वचिद् वाक्यगता, क्वचिच्च पदगता, अन्वयव्यतिरेकाभ्यां पुनस्तस्याः संस्थानम्। वाव्यानि हि शरीरीणीव, तेषां च चारुत्वप्रतीतिरन्वयव्यतिरेकाभ्यां वाक्येष्वपि कल्प्यते, इति पदानामपि व्यञ्जकत्वमुखेन व्यवस्थितो ध्वनिव्यवहार इति ध्वन्याचार्याणामाशयः। अत्राहुः प्रदीपकाराः-'ननु पदस्य व्यञ्जकत्वे किमायातम्, वाक्यरूपस्य काव्यस्य ध्वनित्वम्! कथं वा पदमात्रस्य व्यञ्जकत्वे वाक्यस्यैव समस्तस्य चारुतेति चेत्? उच्यते, पदप्रकाश्यत्वं न पदमात्रस्य व्यञ्जकतया, किन्तु तस्य प्राधान्येन। अविवक्षितवाच्ये पदमात्रस्य व्यञ्जकत्वेऽपि यद्वाक्यवर्तिशब्दस्यार्थस्य वाक्यस्याप्यतिशयितार्थव्यञ्जकत्वं तद्वाक्यस्यैव ध्वनित्वमित्युपगमान्न कश्चिद्दोषः। एकदेशस्थितेन च तादृशपदेन समस्तमेव वाक्यं चारुतामुपगच्छतीति। कामिनीवैकावयवस्थेन भूषणेने'ति। युक्तं चैतत् सर्वेषामपि निर्णयोऽन्वयव्यतिरेकाभ्याम्। पदवाक्यसत्त्वासत्त्वाभ्यां ध्वनेः सत्त्वेऽसत्त्वे चैतस्यापि पदनिष्ठत्वं वाक्यनिष्ठत्वं चाप्रतिहतम्। एवं च-पदमात्रद्योत्यो ध्वनिः पदध्वनिः, वाक्यमात्रद्योत्यः पुनर्वाक्यनिष्ठः। यद् द्योत्योऽतिशयितोऽर्थश्चारुतया व्यज्यते तस्यैव ध्वनिव्यपदेशात्। अतएवाभिनवगुप्तपादाः प्राहुः-'रसप्रतीतिर्विभाचादेरेव। तेन विभावदयो यदा विशिष्टेन केनापि पदेनार्प्यमाणा रसचमत्कारविधायिनो भवन्ति तदा पदस्यैवासौ महिमा समर्प्यते। इति भाव।' इति

यथा वा मम—'को ननु धन्यः स युवा तरलायतलोचने प्रिये जगति। तेन दृगन्तेन तव प्रहतोऽपिनयः पुनः प्रहतः॥' इति। अस्यायमर्थः—हे तरलायतलोचने! तेन तव दृगन्तेन प्रहतोऽपि यः पुनर्न प्रहतो मृतो जातो जीवतीत्यर्थः। स कोननु युवा जगति धन्यः॥ इति। अत्र हि-स्मृत्यारुढा साक्षादिव प्रत्यक्षपथमवतरन्ती नायिकाऽऽलम्बनं' तद्रङ्गन्तस्मृतिश्चोद्दीपनं, दृगन्तस्य चासह्यामोघास्त्रत्वेन सम्भावनमनुभावो, विस्मयोद्वेगादिर्व्यभिचारीभावश्चेत्येतेषां संयोगादभिव्यज्यते विप्रलम्भः। तस्याभिव्यक्तिश्च 'तेने' ति पदेनैकेनैवेति पदगतोऽसावसंलक्ष्यक्रमव्यङ्ग्यो नाम ध्वनिः।

यथा वा मम-'यद्यसि ज़ीवितनाथे! त्वं मयि दीने सुनिश्चितं दयिता। प्रहरसि किं मां वितथं, हन्त दृगन्तेन तिग्मेन॥' अस्यायमर्थः-'हे जीवितनाथे जीविताधीश्वरि! यदि मयि दीने (विषये) सुनिश्चितं दयितां जातदयात्वमसि। तर्हि-किं तिग्मेन दृगन्तेन (साधनेन हन्त! मां प्रहरसि प्रहारेण व्याकुलतां नयसि॥' इति। अत्र कि—काऽपि मृगाक्ष्यालम्बनमुद्दीपनं पुनस्तया सह रहसि समागमः, 'जीवितनाथे' इति सम्बुद्धिपदाक्षिप्तं मदनार्दितत्वमनुभावो, व्याभिचारी पुनर्भङ्ग्यन्तरेणौत्सुक्यं व्यज्यमानमित्येषां संयोगाद्रतेरभिव्यक्तिः। सा च-'दयिते'ति पदप्रकाश्या।

यथा वा-'मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते मानं धत्स्व, धृति वधान, ऋजुतां दूरे कुरु प्रेयसि। सख्यैयं प्रतिबोधिता प्रतिवचस्तामाह भीतानना, नीचैः शंस, हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति॥' इति। अस्यायमर्थः- 'हे मुग्धे! सदुपदेशग्रहणशीलत्वाभावादप्रौढबुद्धे कौमारयौवनान्तरालावस्थाके इति वा मुग्धतयाऽविदग्ध तयैवाखिलोऽतीतो वर्त्तमान आगमिष्यंश्च कालः समयो नेतुं यापयितुं किमारभ्यते अतः-मानं धत्स्व बलाद्धारय, धृति धैर्यं बधान, प्रेयस्यत्यन्तं प्रिये (विषये) ऋतुतां सरलतां दूरे कुरु। एवमित्येवं सख्या प्रतिबोधिता भीतानना सती तां सखीं प्रति वच उत्तरमाह-किमिति-नीचैः शंस कथय, हि यतो मे मम ननु हृदि स्थितः प्राणेश्वरः श्रोष्यति। 'ऋत्यकः।' ३/१/१२८ इति संहिताया अभावः। अतिशयेन प्रियः प्रेयान्, तस्मिन्। 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारद्विवचनविभज्योपपदे तरबीयसुनौ।' ५/३/५७ इति ई। यसुन। 

काणां प्रस्थस्फवर्वहिगर्वर्षित्रपदाघिवृन्दाः ।'३/४/१५७ इति प्रादेशः । इति । अत्र हि-प्राणप्रिय आलम्बनं तेन विना संस्थानं रहसि सखीभिः संवादो बोद्दीपनं भीताननत्वेनोत्प्रेक्षितं चकितयननिरीक्षणाद्यनुभावः भयकम्पादिपुनर्व्यभिचारी भाव इत्येतेषां च संयोगादभिव्यज्यते सम्भोगः शृङ्गारः । स च 'भीतानने' ति पदमात्रद्योत्यः, भयप्रतिपाद्याकृत्रिमानुरागेण च तस्य प्रकर्षौत् ।

अथोक्तन्यायभितरत्राप्यतिदिशति-**एवमित्यादिना** ।

**एवं** यथोक्तस्थले शृङ्गारे तथा। **भावादिषु** भावतदाभासादिषु । अपि । **ऊह्यमसंलक्ष्यक्रमव्यङ्ग्यस्य** पदप्रका श्यत्वमिति शेषः । तत्र-भावध्यवनिर्यथा- 'तन्मञ्जुमन्दहसितं श्वसितानि तानि, सा वै कलङ्कविधुरा मधुराननश्रीः । अद्यापि हृदयमुन्मदयन्ति हन्त सायन्तनाम्बुजसहोदरलोचनायाः ॥' इति । अस्यायमर्थः—'सायन्तनाम्बुजसहोदरलोचनाया अर्धविकसितकमलमुकुलसदृशनेत्रायास्तन्मुञ्जु मनोहरं मन्दहसितं स्मितं, तानि श्वसितानि सौरभसम्पन्नामुखश्वासाः, सा वै कलङ्कविधुरा निष्कलङ्का मधुरास्वाद्याऽऽननश्रीर्मुखच्छटा अद्यापि मे मम हृदयं हन्तोन्मदयन्ति ॥' इति। अत्र च तत्पदमात्रप्रकाश्यः स्मृतिभावध्वनिः । यथा वा मम-'विकसत् कमलं समुदितमिन्दुं पीयूषसागरं वाऽपि । सुमुखि ! यदैव विलोके तदा तदेव प्रमोदेऽहम् ॥' इति । अस्यायमर्थः-'हे सुमुखि ! कमलवदनत्वाच्चन्द्रवदनत्वाद्वा यदैव विकसद्विकाशोन्मुखं कमलं, पीयूषस्य सागरभूतमिन्दुं चन्द्रसमं वा विलोके पश्यामि तदा तदेव प्रमादेऽहम् ॥' इति । अत्र हि 'प्रमोदे' इत्यस्य हेतुर्विकसतः कमलस्य समुदितस्य वा सुधानिधेर्विलोकनं, तदपि सुमुख्याः सादृदश्येन तत्स्मारकत्वात् । स्मृतिर्न पुनर्वाच्या, तद्वाचकानुपलम्भात् । 'तदेवे'ति च तदागमकालिकमनिर्वचनीयमलौकिकप्रमोदानुभवमुपन्यस्यति, न त्वभिधत्ते, अनुभवपदार्थस्यैव वचनागोचरत्वात् । 'तदे' त्यस्य तन्निदिस्थ (त्व) धर्मप्रकारकस्य बोधस्य जनकत्वेऽपि वचनागोचरत्वप्रकारबोधजनकत्वे शक्त्यभाव एवेति तन्मात्रप्रकाश्यः स्मृतिध्वनिः । इति दिक् ।

अथ संलक्ष्यक्रमव्यङ्ग्यो वाक्यगतो यथा मम-'न दिवा सुधानिधानं विकसति नक्तं न हन्त वा कमलम् । एकं पुनस्त्वदीयं सुभगे वदनं दिवानिशं विकसत् ॥' इति । अस्यायमर्थः-हे सुभगे ! सुधानिधानं तत्त्वेन केवलं प्रसिद्धश्चन्द्रो न दिवा दिवसे कदापि विकसति, न वा हन्त ! कमलं नक्तं निशि विकसति । एकं पुनस्त्वदीयं वदनं दिवानिशं विकसद्विकसति ॥' इति । अत्र हि-चन्द्रापेक्षया कमलापेक्षया च सुभगाया वदनमतिशयितचमत्कारशालीति व्यतिरेकेण 'यदीन्दुर्दिवाऽपि कमलं वा ननक्तमपि विकसेत्तदा स्यात्सुभगावदनं तत्सदृशमि' त्युत्प्रेक्षा 'विरुद्धधर्मिणोरपि सर्वस्वायतनं सुभगावदन' मिति वा वस्तु व्यज्यते । इति दिक् ।'

**'भुक्तिमुक्ति कृदेकान्तसमादेशनतत्परः ।**
**कस्य नानन्दनिस्यन्दं विदधाति सदागमः ॥'**

अत्र सदागमशब्दः संनिहितमुपनायकं प्रति सच्छास्त्रार्थमभिधाय सतः पुरुषस्यागम इति वस्तु व्यनक्ति । ननु सदागमः सदागम इवेति न कथमुपमाध्वनिः । सदागमशब्दयोरुपमानोपमेयभावाविवक्षणात् । रहस्यस्य संगोपनार्थमेव हि द्व्यर्थपदप्रतिपादनम् । प्ररकरणादिपर्यालोचनेन च सच्छास्त्राभिधानस्यासंबन्धत्वात् ।

---

## विवृतिः

पदप्रकाश्यभावादेष्वणीत्यर्थः । तेषामप्यसंलक्ष्यक्रमव्यङ्ग्यध्वनित्वेनोदाहर्तुमुचितत्वात् । शब्दशक्तिमूलं पदप्रकाश्यं वस्त्वाह—**भुक्तीति** । जनान्तरसंनिधावुपनायके उपस्थिते पुराणाद्यागमप्रशंसाव्याजेन हर्षं सूचयन्त्या नायिकाया उक्तिरियम् ।

**सदागमः** सच्छास्त्रं पुराणादिकं कस्यानन्दनिस्यन्दं न **विदधाति**, अपि तु सर्वस्यैव । कीदृशः । भुक्तिमुक्त्योः स्वर्गापवर्गयोः कर्ता । **एकान्तसमादेशनं** तत्त्वोपदेशः **तत्परः** तत्कारी । व्यङ्ग्यार्थस्तु—सत्पुरुषस्य भवादृशस्यागमनं कस्य मद्विधजनस्य आनन्दनिस्यन्दं न विदधाति । कीदृशः । भुक्तिमुक्तयोः सुरतोपभोगगृहकर्मत्यागयोः कर्ता । **एकान्तसमादेशनस्यं** बहुलीलोपदेशस्य कारकः । ईदृशार्थस्य काव्यव्यङ्ग्यत्वेऽपि तत्र सदागमपदस्य प्रधानत्वादन्येषां सहकारित्वात्पदव्यङ्ग्यव्यपदेश इत्याह—**अत्रेति** । संनिहितं जनान्तरसंनिधावुपस्थितं सच्छास्त्रर्थमभिधाय अभिधया बोधयित्वा । **सदागमशब्दयोरिति** । सदागम इति शब्दः प्रतिपादको ययोस्तयोः । सच्छास्त्रसत्पुरुषागमनयोरित्यर्थः । अविवक्षणे हेतुमाह—**रहस्येति** । उपनायकानुरागस्य गोपनार्थमेव । न तूपमानोपमेयभावबोधनार्थम् । हि यस्माद् द्व्यर्थशब्दानां प्रतिपादनं प्रयोगः । ननु 'तदर्थं कृतमेतदर्थं भवति' इति न्यायादुपमानोपमेयत्वबोधकः कथं न स्यादित्यत आह—**प्रकरणादीति** । आदिना वयोवस्थादिसंग्रहः । सच्छास्त्राभिधानस्यासंबन्धाच्चेत्यन्वयः । **असंबन्धत्वा**त्प्रकृतानुपयोगित्वात् । तथा च यत्र वाच्यार्थः प्रकृतोपयुक्तो व्यङ्ग्यार्थस्त्वसंबद्धस्तत्रैवागत्या तयोरुपमानोपमेयभावः कल्प्यते । अत्र तु व्यङ्ग्यार्थस्यैव प्रकृतोपयोगित्वं वाच्यार्थस्य तदङ्गत्वमिति न तदवसर इति भावः ॥

## विवृतिपूर्तिः

**आनन्देति** । आनन्दनिस्यन्दं प्रमोदप्रस्रवणम् । इह 'अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु,' इति सूत्रेण वैकल्पिकषत्वविधानात्पक्षे तदभावः ॥

## विज्ञप्रिया

शब्दशक्त्युद्भवं वस्तुपदव्यङ्ग्यमाह—**भुक्तिमुक्तिकृदिति**—उपनायकागमनं दृष्ट्वा सन्तोषं व्यञ्जयन्त्या उक्तिरियम् । वाच्यार्थे सदागमः । सच्छास्त्रम् । भुक्तिमुक्ती स्वर्गभोगमोक्षौ एकान्तं सम्यगादेशनं तत्त्वज्ञानपेदेशः । व्यङ्ग्यार्थे तु सदागमः सत्पुरुषोपनायकागमः । भुक्तिमुक्ती सुरतोपभोगगृहकर्मत्यागौ । एकान्तस्य समादेशनं रसस्योपदेशः ।

अत्र श्लिष्टसदागमपदशक्तिमूलकव्यञ्जकत्वमेव अन्यव्यञ्जकपदानामिति तत्पदस्यैव व्यञ्जकत्वं तदाह—**अत्रेति**—सच्छास्त्रमापाततः प्रकरणगम्यं सामान्यतोऽभिधाय उपनायकं प्रति सत्पुरुषागमं व्यनक्ति इत्यर्थः।

सत्पुरुषागमसच्छास्त्रयोरुपमाध्वनित्वमाशङ्कते—**नन्विति**। समाधत्ते—**नेति**। उपमाऽविवक्षाबीज-माह—**रहस्येति**। ननु रलस्य संगोपनमुपमा चास्त्वित्यत्र आह—**प्रकरणादी**ति। आदिपदात् तात्पर्यपरिग्रहः। सच्छास्त्रमापातत एव प्राकरणिकम्। सत्पुरुषागम एव प्रतिसन्धानेन प्राकरणिकः। प्रतिसन्धानेन सत्पुरुषागमस्यैव आस्वाद्यत्वेन अप्राकरणिकसच्छास्त्रस्य प्रकृतासम्बन्धत्वात्; तस्या आस्वाद्यत्वाभावात् तदुपमाया अपि अनास्वा-द्यत्वेन तावता सम्बन्धीकरमस्यापि अनुपयोगात्।

## लोचन

**भुक्तीति**। भुक्तिर्भोगः, सम्भोगश्च। मुक्तिः निःश्रेयसम् इतरव्यापारव्यासङ्गपरित्यागसुखं च। एकान्तः परमार्थस्वरूपं संकेतस्थानं च। सदागमः सच्छास्त्रं सतः पुरुषस्यागमनं च।

## कुसुमप्रतिमा

शब्दशक्तिमूलं पदगतं वस्तुध्वनिमुदाहरति भुक्तीति। उपपतिमुपस्थितमयलीक्य सुखीजनमध्यव-र्त्तिन्वाः कस्याश्चित् वेदाद्युत्तमशास्त्रप्रशंसाच्छलेनानन्दसूचिकोक्तिरियम्। भुक्तिं यागाद्यनुष्ठानप्रवृत्तिजननेन स्वर्गादिभोगं मुक्तिं ब्रह्मज्ञानजननेन मोक्षश्च करोतीति भुक्तिमुक्तिकृत्, एकान्तसमादेशने दृढादेशे अहरहः सन्ध्यामुपासीत" इत्याद्यलङ्घनीयनित्यकर्मविधाने तत्परश्च सदागमो वेदादिक सत् शास्त्रम्, कस्य आस्तिजनस्य आनन्दनिश्चन्टं प्रीतिप्रवाहं न विदधाति, अपि तु सर्वस्वेव विदधातीत्यर्थः। उपपतिपक्षे तु—भुक्तिं सुरतसम्मोमम्, मुक्तिं विरहवेदनात्यगञ्च करोति जनयतीति सः, तथा एकान्ते निर्जनप्रदेशे यत् समादेशनं गमनायानुमतिस्तस्मिन् तत्परस्तदर्थ प्रवृत्तः सत उत्तमस्य भवादृशस्य पुरुषस्य आगम आगमनम्, कस्य मादृशजनस्य आनन्दनिष्यन्दम् आमोदधारा न विदधाति, अपि तु सर्वस्यैव विदधातीत्यर्थः।

## विमला

शब्दशक्तिमूलं पदप्रकाश्यं वस्त्वाह, भुक्तीति।—जनानन्तरसन्निधावुपनायके आगते शास्त्रप्रशंसा-व्याजेन हर्षं सूचयन्त्याः कस्याश्चिदुक्तिरियम्। भुक्तिः,—भीमः, स्वर्गादिसुखमित्यर्थः, मुक्तिः,—अपवर्गः, तयोः कृत्—प्रदर्शक इत्यर्थः, अन्यत्र,— भुक्तिः,—सुरतसुखसम्भोगः, मुक्तिः,—गृहकर्मत्यागः, तयोः कर्त्ता, एकान्ते—निर्जने, समादेशने—तत्त्वोपदेशे, तत्परः,—निरतः, निर्जनोपासनाया एव शास्त्रीयत्वादिति भावः, अन्यत्र,—एकान्ते—जनशून्यसङ्केतस्थाने, समादेशने—स्थित्यनुमतौ, तत्परः; यद्वा,—एकान्तसमाशनस्य—बहुलीलोपदेशस्य कारकः, सदागमः,—मृच्छास्त्रं, पुराणादिकम् इत्यर्थः, अन्यत्र,—व्यङ्ग्यार्थस्य सतः,—सत्पुरुषस्य भवादृशस्य, आगमः,—उपस्थितिः, कस्य—मद्विधस्य जनस्य, आनन्दनिस्यन्दम्—आमोदप्रस्रवणम्, आनन्दातिशयमित्यर्थः, न विदधाति—न उत्पादयति ? न करोतीत्यर्थः; अपि तु सर्वस्यैवेति।

ईदृशार्थस्य काव्यव्यङ्ग्यत्वेऽपि तत्र सदागमपदस्य प्रधानत्वादन्येषां सहकारित्वात् पदव्यङ्ग्यव्यपदेश इत्याह, अत्रेति—सन्निहितं—जनान्तरसन्निधौ उपस्थितमित्यर्थः। सच्छास्त्रार्थमभिधाय—अभिधया बोधयित्वा।

सदागगमशब्दार्थयोः—सत्पदार्थस्यागमपदार्थस्य चेत्यर्थः, सच्छास्त्रसत्पुरुषागमनयोरिति भावः। उपमानोपमेय-भावस्य, अविवक्षणात्—वक्तुमनभिलाषात्। अविवक्षायां हेतुमाह, रहस्येति।—हि—यस्मात्, द्व्यर्थपदानां प्रति-पादनं—प्रयोगः। ननु "तदर्थं कृतमेतदर्थं भवति" इति न्यायादुपमानोपमेयत्वबोधकः कथं न स्यात्? इत्यत आह, प्रकरणादीति।—[आदिना वयोऽवस्थादिसङ्ग्रहः]। सच्छास्त्राभिधानस्यासम्बन्धत्वाचेत्यन्वयः। असम्बन्ध-त्वात्—प्रकृतानुपयोगित्वात्। तथा च यत्र वाच्यार्थः प्रकृतोपयुक्तः, व्यङ्ग्यार्थस्त्वसम्बद्धः, तत्रैवागत्या तयोरुप-मानोपमेयभावः कल्प्यते। अत्र तु व्यङ्ग्यार्थस्यैव प्रकृतोपयोगित्वं, वाच्यार्थस्य तदङ्गत्वमिति न तदवसरः। उपनायकानुरागस्य गोपनार्थताया एव विवक्षितत्वात्, न तु उपमानोपमेयभावबोधनार्थम् इति भावः।

## लक्ष्मी

शब्दशक्त्युद्भवं पदगतं वस्तुना वस्तुध्वनिमुदाहरति—भुक्तिमुक्तिकृदिति। सखीजनसन्निधावुपना-यकमुपस्थितमवलोक्याप्रस्तुतवेदादिप्रशंसाच्छलेन तदागमनाधीनं हर्षं द्योतयन्त्याः कस्याश्चिदुक्तिरियम्। भुक्तिः स्वर्गादिभोगः मुक्तिः कैवल्यं च करोतीति भुक्तिमुक्तिकृत् कर्मकाण्डवेदान्ताभ्यामुभयोपायज्ञापनादिति भावः। तथा एकान्तेन नियमेन (स्वर्गकामो यजेत इत्यादिविध्यादिभिः करणैः) सम्यगादेशने हितोपदेशने तत्परः सदागमः वेदादिकम् कस्य आस्तिकजनस्य विज्ञस्य आनन्दनिस्यन्दम् आनन्दप्रवाहम् न विदधाति न करोति अपि तु सर्वस्य करोत्येव निस्यन्देत्यत्र षतवाभावस्तु 'अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु' इत्यनेन वैकल्पिकत्वाद्बोध्य इति वाच्यार्थः। व्यङ्ग्यार्थस्तु—भुक्तिः सुरतादिभोगः मुक्तिः विरहादिदुःखत्यागः ते करोतीति तादृशः। एकान्तस्य सङ्केतस्थानस्य समादेशने उपदेशने तत्परः। सतो भवादृशस्य बल्लभस्य आगमः आगमनं कस्य मत्सदृशजनस्य आनन्दनिष्यन्दं प्रमोदप्रस्रवणं न विदधति अपि तु सर्वस्य विदधात्येव।

अत्र श्लिष्टसदागमपदस्य प्राधान्याद् व्यञ्जकत्वम् अन्येषां सहकारित्वात्पदव्यङ्ग्यवहार इत्याशये-नाह—अत्रेति। संनिहितं सखीजनादिसन्निधावुपस्थितम्। **अभिधाय** अभिधावृत्त्या बोधयित्वा। अत्र वक्तृबो-धव्यवैशिष्ट्यबलात् सदागमपदेन प्राधान्येनोपपतिस्तुतिरूपं वस्तु व्यज्यते। **अत एवाहुः प्रदीपकाराः**—'काचित्सङ्केतदायिनमेवं मुख्यया वृत्त्या शंसति तत्र सदागमपदेन स्तुतिर्व्यज्यते' इति। यद्यपि भुक्तिमुक्त्येकान्तपदानामपि व्यञ्जकत्वमस्ति तथापि तदभावेऽपि सदागमपदमात्रं व्यङ्ग्यबोधने प्रभवति न त्वेतद्रहिता तानीति सदागमपदस्य प्राधान्यमिति पदव्यञ्जकता। 'पन्थिअ ण'इत्यादौ तु अनेकपदप्रतिपाद्यं वस्तु व्यङ्ग्यमपि वाक्यव्यञ्जकतैवेति ततोऽस्य भेदः। सदागमपदस्य परिवृत्त्यसहत्वाच्छब्दशक्तिमूलत्वमवगन्तव्यम्।

सत्पुरुषागमसच्छास्त्रयोरुपमाध्वनित्वमाशङ्कते—नन्विति। सदागमो वेदादिकमुत्तमं शास्त्रं सदागमः सतः पुरुषस्यागमनमिवेत्यर्थः। उपमाध्वनिरिति। 'दुर्गालङ्घितविग्रहः' इति वदिति भावः। समाधत्ते—**सदागमश-ब्दयोरिति**। सदागम इतिशब्दः प्रतिपादको ययोस्तयोः सच्छास्त्रोपपत्यागमनयोरित्यर्थः। उपमानोपमेयभावाविव-क्षणात् उपमानत्वोपमेयत्वयोर्विवक्षाभावादित्यर्थः। 'नोपमाध्वनि'रिति शेषः। ननु तदविवक्षणे को हेतुरित्यत आह—रहस्येति। हि यतः रहस्यसंगोपनार्थमेव उपनायकानुरागस्य गोपनार्थमेव न तूपमोपमेयभावबोधनार्थमिति भावः। 'रहस्यया स्त्री नदी भेदे गोपनीयेऽभिधेयवत्' इति मेदिनी। द्व्यर्थशब्दानां प्रतिपादनं प्रयोगः। ननु रहस्यसंगोपनार्थमुपमा चास्त्वित्यत आह—प्रकरणादिति। आदिना तात्पर्यवयोऽवस्थादीनां परिग्रहः। पर्य्यालो-चनेन अनुसन्धानेन। सच्छास्त्राभिधानस्यासम्बद्धत्वाच्चेत्यन्वयः। असम्बद्धात् प्रकृतानुपयोगित्वात्। तथा च सच्छास्त्रमापातत एव प्राकरमिकम्, सत्पुरुषागम एवानुसन्धानेन प्राकरणिकः। अनुसन्धानेन सत्पुरुषागमस्यैव

आस्वाद्यत्वेन अप्राकरणिकसच्छास्त्रस्य प्रकृतासम्बद्धत्वात् तस्या आस्वाद्यत्वाभावात् तदुपमाया मपि अनास्वाद्यत्वेन तावता सम्बन्धीकरणस्याप्यनुपयोगात्। एवञ्च यत्र हि शब्दशक्तिमहिम्नोपस्थापितो द्वितीयोऽर्थोऽप्रकृततयाऽनुपपद्यमानः प्रकृतस्योपमानत्वेन स्वात्मानं व्यवस्थापयति तत्रैवोपमाध्वनेर्विषयः। अत्र तु व्यङ्ग्यार्थस्य विवक्षिततया प्रकृत्वम्। न च तर्हि प्रकृततया वाच्यः स एवास्तु द्वितीयोऽर्थ इति वाच्यम्, रहस्योपनार्थमप्रकृतस्यैव मुख्यतः प्रतिपाद्यमानत्वात्। उक्तं च 'द्वयर्थैः पदैः पिशुनयेच्च रहस्य वस्तु' इति। अत्र श्लिष्टस्य सदागमपदस्यैव व्यञ्जकत्वे प्राधान्यम्—अन्यपदानां तत्सहायेन व्यञ्जकत्वात्।

## रुचिरा

अथ संलक्ष्यक्रमव्यङ्ग्यस्यैतस्यैव पदप्रकाश्यत्वमुदाहर्त्तुं प्रवृत्तस्तत्र तावद् वस्तुना वस्तुध्वनिमुदाहरति-**'भुक्तिमुक्तिकृत्'** इत्यादिना।

**'भुक्तिमुक्तिकृद्** भुक्तिः स्वर्गादिभोगः सम्भोगश्च मुक्तिरपवर्गः सुरतप्रवृत्तौ वा विरहजनिततापत्रयस्य निवृत्तेः स्वतः सिद्धत्वात्तदामोदोद्रेके समस्तकर्त्तव्यान्तरत्यागस्तत्कृत्। **एकान्तसमादेशनतत्पर** एकान्तः परमात्मस्वरूप विविक्तदेशो वा तत्समादेशनं तस्य सम्यक्तयोपदेशस्तत्परः। **सदागमः** सन् श्रेष्ठ सतो वाऽऽगमः शास्त्र प्राप्तिः। **कस्य** सुखेप्सुनो युवतीजनस्य वा मद्विधस्येति यावत्। **आनन्दनिस्यन्द**मानन्दस्य निस्यन्दः क्षरणमिति तम्। न नैव। **विदधाति** समुत्पादयति, अपि तु सर्वस्यैवः।' अत्र हि समागतमुपसन्नमुपनायकं कमपि युवानं प्रति जनान्तरसन्निधौ रहस्यभिधाने स्वारस्यभङ्गभियाऽप्रस्तुतवेदादिशास्त्रप्रशंसामिषेण रयवकींयं तदनींतनं हर्षमपारयन्त्या अतएवैतं सूचयन्त्याः कस्याश्चनोपनायिकाया उक्तिरियम्॥ १९२॥

अथात्र पदकाश्यं ध्वनिं निर्दिशति-**अत्रे**त्यादिना।

**अत्रो**दाहृते पद्ये इति यावत्। **सदागमशब्दः** 'सदागम' इति पदमित्यर्थः। **सन्निहितं** समीपे सियतम्। आगत्य समीप एव कृतस्थानमिति यावत्। **उपनायकं** साक्षान्नायक (पति) तो भिन्नमुपपतिमित्यर्थः। **प्रति**। **सच्छास्त्रार्थं** सच्छास्त्रमेवार्थ इति तम्। साधुस्त्रमित्यर्थमित्यर्थः। **अभिधायोक्ता** सुखयया (अभिधया) वृत्त्या प्रतिपाद्येति यावत्। अप्रस्तुतस्याप्येतस्यार्थस्य प्रस्तुतत्वेन कल्पितत्वात्। **'सतः** श्रेष्ठस्य सुरतोपयुक्तत्वेन नायकत्वेन कल्पितत्वात्। **पुरुषस्य** पौरुषमुन्नयतः। **आगमः** प्राप्तिः सङ्ग इति यावत्।' **इति वस्त्वि**त्यभिधानरूपं वस्तुं। **व्यनक्ति** ध्वनयति।

अथात्राशङ्कते-नन्वित्यादिना।

**ननु। सदागमः** सत आगमः। **सदागमः** सतामागमः शास्त्रमिति। **इव** यथातथा। **इतीत्यतः**। **उपमाध्वनिरुप** मालङ्कारस्य ध्वनिर्ध्वन्यमानत्वेनावस्थानम्। **कथम्। न**। इति चेदुच्यते-**सदागमशब्दयोः** सदागमश्च सदागमश्चेति तौ शब्दाविति तयोस्तथोक्तयोः सदागमशब्दप्रतिपाद्यस्य सदागमशब्दप्रतिपाद्यस्य चेति यावत्। **उपमानोपमेयभावाविवक्षणा**दुपमानत्वोपमेयत्वयोर्विवक्षाऽभावादित्यर्थः। नोपमाध्वनिरिति शेषः। **हि** यतः। अत्रायं हेतुरिति भावः। **रहस्यस्य** रहसि संवेदनीयस्य गोपनीयस्यार्थस्येति यावत्। रहस्येकान्ते भवमिति रहस्यम्। 'दिगादिभ्यो यत्।' ४/३/५४ इति यत्। 'रहस्या स्त्री नदीभेदे गोपनीयेऽभिधेयवत्।' इति मेदिनी। **सङ्गोपनार्थ** सम्यग्गोपनं रक्षणमप्रकाशन मिति यावत्तदेवार्थो यत्र तद् यथा भवेत्तथा। **एव। द्वयर्थपदप्रतिपादनं** द्वयर्थपदानां प्रतिपादनम्। 'द्वयर्थैः पदैः पिशुनयेच्च रहस्यवस्तु।' इति नियमात्। न चैवं सच्छास्त्राभिधानमपि प्रकृतं स्यात्,

विवक्षाया उभयत्र साम्यात् इति वाच्यमित्याह-च पुनः। **प्रकरणादिपर्यालोचनेन** तद्द्वारेति शेषः। आदिपदेन वक्तृबोद्धव्ययोरभिधानम्। **सच्छास्त्राभिधानस्य। असम्बन्धात्** सम्बन्धाभावत्। न सदागमशब्दने सच्छास्त्राभिधानं प्रसज्येत। 'वक्तृबोद्धव्याधीनत्वादभिधायाः' इति शेषः। अत्रेदमभिहितं भवति-प्रस्तुतोऽर्थोऽत्रोपपतेः प्रशंसनं, वेदादिसच्छास्त्रप्रशंसनं न पुनः प्रस्तुतार्थविषयं, वक्तृबोद्धव्यवैशिष्ट्येनाभिधायास्तत्रैव नियमनात्। अथापि प्रस्तुतार्थस्य तस्य सकलजनसंवेदने रहस्यभङ्गः सारस्यभङ्गश्चेति भियाऽप्रस्तुतस्याप्यर्थस्य प्रस्तुतार्थत्वेन कल्पनम्। **अत एवास्याभिधानं प्रथमम्।** तत्र चाभिधया दर्शिते व्यापारे 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति नयेन तस्या एव पुनर्व्यापारान्तरं दर्शयितुमशक्तौ प्रस्तुतोऽपि 'सत आगमः कस्यानन्दहेतुको न स्या' दित्यर्थो व्यञ्जनयाऽवगम्यते। न चैवमनयोरुपमा, प्रधानभूते व्यङ्ग्यार्थे एव प्रतीतिविश्रान्तावुपमाकल्पनाभावात्, सङ्क्षेपनार्थमेवाप्रस्तुस्याप्यर्थस्य प्रथममुपस्थानात्, शक्यस्य प्रस्तुतस्यार्थस्यापि अप्रस्तुतत्वेन कल्पनात्पुनरुपस्थानाच्च। यद्यपि भुकतिमुक्त्येकान्तादीनामपि व्यञ्जकत्वं, तथाऽपि तेषां न सदागममन्तरेणेति परिवृत्त्यसहत्वात्सदागमपदप्रकाश्य एव वस्तुध्वनिः। इति।

**'अनन्यसाधारणधीर्धृताखिलवसुंधरः ।**
**राजते कोऽपि जगति स राजा पुरुषोत्तमः ॥'**

अत्र पुरुषोत्तमः पुरुषोत्तम इवेत्युपमाध्वनिः । अनयोः शब्दशक्तिमूलौ संलक्ष्यक्रमभेदौ ।

---

## विवृतिः

शब्दशक्तिमूलं पदप्रकाश्यमलंकारमाह—**अनन्येति** । अनन्यसाधारणा अनन्यतुल्या धीर्यस्य सः । धृता पालिता धारिता च वसुंधरा येन । पुरुषोत्तम इव विष्णुरिव । नन्वत्र पूर्वार्धेऽपि श्लेषसंभवेन 'दुर्गालङ्घितविग्रह'—(६२ पृ०) इतिवद्वाक्यव्यङ्ग्यमेवोपमानोपमेयत्वमिति चेत्, सत्यम् । अनेकार्थस्य पुरुषोत्तमपदस्य सार्थकत्वाय एकार्थकानामप्यनन्येतिपदानां ह्यर्थकत्वं कल्प्यत इति पुरुषोत्तमपदस्यैव प्रधानत्वम् । 'दुर्गालङ्घित'—इत्यादौ तु बहूनामेव पदानां स्वभावत एवानेकार्थकत्वमिति ततोऽस्य भेदः । ननु संज्ञायामेव समासशासनात्कथं पुरुषोत्तमपदस्यानेकार्थत्वम्, न च सप्तमीसमासस्यैव संज्ञायां विधानात्षष्ठीसमासेन पुरुषश्रेष्ठवाचकत्वमिति वाच्यम् । निर्धारणे विहितायाः षष्ठ्याः समासनिषेधात् । उच्यते—पुरुषोत्तमयति संसर्गेण उत्कृष्टं करोतीति व्युत्पत्त्या तस्य पुरुषश्रेष्ठवाचकत्वात् ॥

## विज्ञप्रिया

शब्दशक्तिमूलमलङ्कारं पदद्योत्यमाह—**अनन्येति** । धृता पालिता, पक्षे कूर्माऽनन्तमूर्त्या ऊढा । अस्य पदस्यापि शक्त्या व्यङ्ग्यत्वेऽपि न वाक्यव्यङ्ग्यत्वं पुरुषोत्तमपदश्लेषाधीनप्रतीतिकत्वादस्य शिलष्टार्थस्य । **उपमाध्वनिरिति**—अस्य पुरुषोत्तमपदस्य सङ्गोपनादिप्रयोजनकत्वाऽभावेन उपमायामेव तात्पर्यात्संलक्ष्यक्रमभेदौ वस्त्वलङ्कारौ ।

## कुसुमप्रतिमा

अत्रेति । अभिप्राय अभिधाशक्तिद्वारा बोधयित्वा । सन्निहितमुपनायक प्रति "सतः पुरुषस्य आननः" इति वस्तु व्यनक्ति व्यञ्जनाझरा बोधयंतीत्यर्थः ।

ननु तदविवक्षणं प्रति किं बीजमित्याह रहस्येति । हि यस्मात् रहस्यस्य कर्त्तव्यस्य अथ च गोपनीयस्य उपपतेराममनेनानन्दसूचनस्वेत्यर्थः, सङ्गोपनार्थमेव न तूपमाप्रतिपादनार्थमिति भावः । प्रकरणादीत्वादिपदेन सच्छास्त्रमर्म्मानभिज्ञ-सखीजनसन्निधानग्रहणम् । पर्यालोचनेन अनुसन्धानेन । तथा च तत्र सच्छास्त्रप्रशंसायाः प्रस्तावाभावेन सखीजनानां सच्छास्त्रमर्म्मानभिज्ञत्वेन च तस्या नायिकायाः सच्छास्त्राभिधानस्य असम्बन्धत्वादप्रासङ्गिकत्वादित्यर्थ । एतेन यत्र वाच्यार्थस्य प्राकरणिकत्वं तत्रैव उपमाध्वनिरिति प्रतिपादितम् ।

शब्दशक्तिमूलं संलक्ष्यक्रमभेदं पदगतमलङ्कारध्वनिमुदाहरति जनन्वेति । असनक्षे राजस्मृतिरियम् । अनव्यसाधारणी जन्यबुद्धिभिरसमाना धौर्बुद्धिर्यस्य सः, धृता परिपालिता कूर्मरूपेण गृहे स्थापिता च वसुन्धरा पृथिवी येन सः, पुरुषेणू त्तमो नरश्रेष्ठी नारायच्च, तथा जगति कोऽपि अनिर्वचनीयप्रभावः स राजा राजते ।

अत्रेति । अत्र वाच्यार्थस्य राज्ञः प्राकरणिकत्वादेवोपमाध्वनिरिति भावः । अनयोः भुकतिमुक्तिकृदित्याद्यनन्वसाधारणधीरित्याद्योः । संलक्ष्यक्रमस्य ध्वनेर्भेदौ प्रकारौ यथाक्रमं वस्तुरूपङ्कारूपौ ज्ञेयाविति शेषः ।

## विमला

**शब्दशक्तिमूलं पदप्रकाश्यमलङ्कारमाह, अनन्वेति ।**—न अन्येषां साधारणी—अनन्यतुल्या इत्यर्थः, **धीर्यस्य तादृशः**, धृता—पालिता, हस्तेनोद्धृता च, अखिला—समग्रा, वसुन्धरा—पृथ्वी, येन तथाविधः, स पुरुषोत्तमः;—पुरुषश्रेष्ठः, कोऽपि राजा, जगति—पृथिवीतले, राजते । [अत्र पुरुषोत्तमपदस्यैव प्राधान्यमिति पदद्योत्य उपमाध्वनिरिति बोध्यम्] ।

**अत्रेति ।—पुरुषोत्तम इव—विष्णुरिव ।** ननु अत्र पूर्वार्द्धेऽपि श्लेषसम्भवेन "दुर्गालङ्घितविग्रहः" इतिवत् वाक्यव्यङ्ग्यमेवोपमानोपमेयत्वमिति चेत् ? सत्यम् । अनेकार्थस्य पुरुषोत्तमपदस्य सार्थकत्वाय एकार्थकानामपि अनन्येतिपदानां द्व्यर्थकत्वं कल्प्यते इति पुरुषोत्तमपदस्यैव प्रधानत्वम् ! "दुर्गालङ्घितः,—" इत्यादौ तु बहूनामेव पदानां स्वभावत एवानेकार्थकत्वमिति ततोऽस्य भेदः । ननु संज्ञायामेव ["संज्ञायाम" (२/१/४४ पा०) इति समासशासनात्] कथं पुरुषोत्तमपदस्य अनेकार्थत्वम् ? न च सप्तमीसमासस्यैव संज्ञायां विधानात् षष्ठीसमासेन पुरुषश्रेष्ठवाचकत्वमिति वाच्यं, निर्द्धारणे विहितायाः षष्ठ्याः ["न निर्द्धरणे" (२/२/१० पा०) इति] समासनिषेधात्; उच्यते,—पुरुषम् उत्तमयति—संसर्गेण उत्कृष्टं करोतीति व्युत्पत्त्या तस्य परुषश्रेष्ठवाचकत्वात् । **अनयोरिति ।**—शब्दशक्तिः मूलं ययोः तौ, शब्दशक्त्युद्भवावित्यर्थः । स्पष्टमन्यत् ।

## लक्ष्मी

शब्दशक्तिमूलं संलक्ष्यक्रमभेदं पदद्योत्यमलङ्कारध्वनि दर्शयति—अनन्येति । परोक्षे राजस्तुति वर्णनेयम् । अनन्यसाधारणा अनन्यतुल्या धीर्बुद्धिर्यस्य सः । धृत पालिता कच्छरूपेण पृष्ठे धारिता च वसुन्धरा पृथिवी येन सः । पुरुषाणाम् उत्तमो मनुष्यश्रेष्ठो नारायणश्च । पुरुषोत्तमत्वं नारायणे कथमिति गीताया भगवत क्षवोक्तिः—

'यस्मात्क्षरमतीतोऽहमीश्वरादपि चोत्तमः । अतोऽस्मिलोके वेदे च प्रथितः पुरुषोत्तमः ।' इति । नृपतौ' इति मेदिनी । राजते शोभते शासकत्वेन 'तमेव भान्तमनुभाति सर्वम्' इत्यादिश्रुतिप्रसिद्धत्वेन वा विराजते इति यावत् ।

अत्रेति । पुरुषोत्तम इव विष्णुरिव । अत्र वाच्यार्थस्य राज्ञः प्राकरणिकादेवोपमाध्वनिरिति बोध्यम् । अत्र **वागीशः**—'नन्वत्र पूर्वार्द्धेऽपि श्लेषसम्भवेन 'दुर्गालङ्घतविग्रहः' इति वद्वाक्यव्यङ्ग्यमेवोपमानोपमेयत्वमिति चेत् ! सत्यम्, अनेकार्थस्य पुरुषोत्तमपदस्य सार्थकत्वाय एकार्थानामप्यनन्येत्यादिपदानां द्वयर्थकत्वं कल्प्यत इति पुरुषोत्तमपदस्यैव प्रधानत्वम् । 'दुर्गालङ्घित' इत्यादौ तु बहूनामेव पदानां स्वभावत एवानेकार्थत्वमिति ततोऽस्य भेदः । ननु संज्ञायामेव (संज्ञायामिति शास्त्रेण) समासशासनात् कथं पुरुषोत्तमपदस्यानेकार्थत्वम्, न च सप्तमीसमासस्यैव संज्ञायां विधानात् षष्ठीसमासेन पुरुषश्रेष्ठवाचकत्वमितिवाच्यम्, निर्धारणेविहिताया षष्ठयाः (न निर्धारणे) इत्यनेन समासनिषेधात् । उच्यते—पुरुषोत्तमयति संसर्गेणोत्कृष्टं करोतीति व्युत्पत्त्या तस्या पुरुषश्रेष्ठवाचकत्वात्' इति वदन्ति । अनयोरिति । भुक्तिमुक्तिकृदित्याद्यनन्यसाधारणयोरित्याद्योः । संलक्ष्यक्रमस्य ध्वनेर्भेदौ प्रकारौ वस्त्वलङ्कारात्मकावगन्तव्यावि शेषः ।

## रुचिरा

अथ पदप्रकाश्यमलङ्कारध्वनिमुदाहति-**"अनन्यसाधारणधी"** रित्यादिना।

**"अनन्यसाधारणधीः** नान्यसाधारणा अन्येन साधारणा तुल्या धीर्यस्य सः। 'साधारणः समानञ्चे' त्यमरः। विलक्षणविचक्षणत्वात्सर्वज्ञत्वाद्वा। **धृताखिलवसुन्धरो** धृता स्ववशीकृतत्वेन हस्तसात्कृता वराहरूपेण वोद्धृता अखिला समस्ता चतुःसमुद्रान्ता वसुन्धरा रत्नगर्भा पृथिवी येन स तथोक्तः। **पुरुषोत्तमः** पुरुषाणां मनुष्याणां क्षेत्रज्ञानां वोत्तमः श्रेयान्। पुरुषाणां प्रभुत्वेन "उत्तमः पुरुषस्त्वन्य" इत्यादिस्मृत्यनुकूलेषु 'श्रीपतिः पुरुषोत्तमः' इतयादिकोषेषु प्रसिद्धो वा। सम्बन्धसामान्यविवक्षया षष्ठी न तु निर्धारणे। 'न निर्धारणे' २/२/१० इति निषेधात्। यत्तु केचि "न निर्धारणे।" २/२/१० इति षष्ठीनिषेधान्न षष्ठीसमासः, किन्तु पुरुषेषूत्तम इति निर्धारणसप्तमीसमास एवेत्याहुस्तन्न हृदयङ्गमम्। "संज्ञायाम्।" २/१/४४ इति शास्त्रात्सप्तम्यन्तस्य सञ्ज्ञायामेव समासस्यं नित्यत्वात्। अत एवाहुः कैयट पादाः-"यस्मिन्निर्धार्यते वा यश्चैकदेशो निर्धार्यते यश्च निर्धारणहेतु"—रित्येतत्रयसन्निधाने निर्धारणं भवतीति तत्रैव षष्ठीसमासनिषेधो भवति। इह तु नागानामुत्तमो नागोत्तम इतिवत तत्रितयसन्निधानाऽभावात्सम्बन्धसामान्ये षष्ठीति समासो भवत्येवेति। अन्येऽप्याहुः, "यत्तु केऽप्याहुः पुरुषेषूत्तम इति निर्धारणसप्तम्याः "सञ्ज्ञाया"-मिति समासः- नचैवं 'न निर्धारणे' इति व्यर्थम्, स्वरे भेदात्। सप्तमीसमासे हि "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्विपीयाकृत्याः।" ६/२/२ इत्यादिना पूर्वप्रकृतिस्वरः, षष्ठीसमासे तु "समासस्य।" ६/१/२२३ इत्यन्तोदात्तत्वं स्यात्, तञ्चानिष्टमिति, तन्न विचारसहम्। सञ्ज्ञायामिति समासस्य नित्यत्वेन स्वपदविग्रहासङ्गतिप्रसङ्गत्" इति। तर्कवागीशास्त्वाहुः—"ननु सञ्ज्ञायामेव "सञ्ज्ञायाम्।" २/१/४४ इति शास्त्रात् (समासशास्त्रात्) कथं पुरुषोत्तमपदस्यानेकार्थकत्वं? न च सप्तमीसमासस्यैव सञ्ज्ञायां विधानात् षष्ठीसमासेन पुरुषश्रेष्ठवाचकत्वमिति वाच्यम्। निर्धारणे विहितायाः षष्ठयाः, "न निर्धारणे।" २/२/१० इति शास्त्रात्समासनिषेधात्। उच्यते-"पुरुषमुत्तमयति संसर्गेणोत्कृष्टं करोति" इतिव्युत्पत्त्या तस्य पुरुषश्रेष्ठवाचकत्वात्।" इति। अन्येऽप्याहुः "उत्तमः पुरुषमुत्तमयति संसर्गेणोत्कृष्टं करोति" इतिव्युत्पत्त्या तस्य पुरुषश्रेष्ठवाचकत्वात्।" इति। अन्येऽप्याहुः "उत्तमः पुरुषस्त्वन्तः" इत्युक्तदिशा 'उत्तमः पुरुष' इति कर्मधारय एव युक्तः प्रतिभासते, परनिपातस्तु राजदन्तादित्वादूह्यः।" इति। **सः** प्रसिद्ध। **कोऽपि** कश्चिददृष्टस्वरूपोऽनिर्वचनीयस्वरूपो वा। **राजा** राजतीति राजा, नृपतिर्विभुर्वा "स सर्वस्येशान" इत्यादिश्रुतेः। "कनिन्..." (उ०) १/१५४ इत्यादिना कनिन्। "राजा प्रभौ च नृपता" विंति मेदिनी। **जगति** भूमण्डले भुवनत्रितये वा। **राजते** द्योतते शासकत्वेन "तमेव भान्तमनुभाति सर्व" मित्यादिश्रुतिप्रसिद्धत्वेन वा विराजते इति यावत्॥ १९३॥'

अथात्र ध्वनिं निर्दिशति-**अत्रे**त्यादिना।

**अत्रो**दाहृते पद्ये। **पुरुषोत्तमः** पुरुषेषु श्रेष्ठत्वेन तथा प्रसिद्धः। **पुरुषोत्तमः** श्रेत्रज्ञाऽपरपर्य्यायेषु पुरुषेषु श्रेष्ठत्वेन प्रसिद्धः परमात्मा। **इव** यथा तथा राजते इति शेषः। **इतीत्येव** "पुरुषोत्तम इति पदमात्रप्रकाश्य" इति शेषः। **उपमाध्वनिः** उपमाया ध्वनिरवसेय इति शेषः।

ननु कस्यैतौ प्रभेदावित्याशङ्कामुन्मूलयन्नाह-**इमावि**त्यादि।

**इमौ** भुक्तिमुक्तिकृत्यादिना, अनन्यसाधारणधीरित्यादिना चोदाहृतावित्यर्थः। **शब्दशक्तिमूलौ** शब्दशक्ति मूलं ययोस्तौ। शब्दपरिवृत्त्यसहत्वेन तच्छक्तिमूलत्वमवसेयम्। **संलक्ष्यक्रमव्यङ्ग्यभेदौ** संलक्ष्यक्रमव्यङ्ग्यस्य तदभिधेयस्य ध्वनेभेदौ "ज्ञैया" विति शेषः।

यथा वा मम—"कस्यामोदं कमलं वदनमिदं ते प्रिये न सन्तनुयात्। अवलम्ब्य मित्रमेकं विकसति न यदन्यथा जातु" इति। अस्यायमर्थः-हे प्रिये! यत् एकं मित्रं सूर्यं वा "मित्रं सुहृदि न द्वयोः। सूर्ये पुंसि" इति अवलम्ब्य विकसति हृदयामोदमुद्घाटयति अन्यथा प्रकारान्तरेण जातु कदाऽपि न विकसति तत्ते तवेदं वदनं (कर्त्तृ) कमलं वदनमिति वा कस्य यून आमोदं कमाकोदं न सन्तनुयात्सम्पादयेत्, अपि तु सर्वस्यैव सर्वविधमामोदं सर्वदैव विदध्यात् इति। अत्र हि मित्रमितिपदमात्रप्रकाश्यो रुपकध्वनिः।

**'सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं**
**यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः ।**
**आश्चर्यं तव सौकुमार्यमभितः क्लान्तासि येनाधुना**
**नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति ते नासितुम् ॥'**

अत्र स्वतः संभविना वस्तुना कृतपरपुरुषपरिचया क्लान्तासीति वस्तु व्यज्यते । तच्चाधुना क्लान्तासि, न तु पूर्वं करदाचिदपि तवैवंविधः क्लमो दृष्ट इति बोधयतोऽधुना पदस्यैवेतरपदार्थोत्कर्षादधुनापदस्यैव पदान्तरापेक्षया वैशिष्ट्यम् ।

---

## विवृतिः

स्वतः संभविवस्तुव्यङ्ग्यं वस्तु पदप्रकाश्यमाह—**सायमिति** । उपनायकेन पथ्युपभुक्तां स्नातागतां सखीमुपहसन्त्याः सख्या उक्तिरियम् । उपासितं कृतम् । स्नानमलयजलेपयोः श्रमप्रतिबन्धकत्वं दर्शितम् । सायंपदस्य त्रिमुहूर्तरूपसायाह्नपरत्वे तत्रातपसंभावनया तां वारयति—**यात इति । अम्बरमणिः** सूर्यः । विस्रब्धं स्वच्छन्दं यथा स्यात्तथात्रागतिः । एतेन भयाद्दौत्याद्वा श्रमो नास्तीति दर्शितम् । 'विस्रब्धमन्दा' इत्यपि क्वचित्पाठः । आश्चर्यमदृष्टपूर्वम्, येन सौकुमार्येण अभितो बहिरन्तश्च क्लान्तासि । क्लमज्ञापकमाह—**नेत्रद्वन्द्वमिति । अमीलनव्यतिकरं** मीलनसंपर्करहितम् । **आसितुं** स्थातुम् । **अत्रेति** । वस्तुना वाक्यार्थेन । ननु तादृसार्थस्य वाक्यार्थव्यङ्ग्यत्वे वाक्यगतध्वनिरेवायं न तु पदगत इत्यत आह—**तच्चेति** । तादृशव्यङ्ग्यं चेत्यर्थः तद्व्यङ्ग्यमधुनापदस्यैवेत्यन्वयः । अत्र हेतुगर्भं विशेषणमाह—अधुना क्लान्तासीत्यादिबोधयत इति । तथा च तादृशक्लमस्य सौकुमार्यप्रयुक्तत्वे दिनान्तरेऽप्येवं स्यादतोऽधुनापदादाधुनिकक्लमहेतुलाभ इति भावः । ननु तथाप्यधुनापदस्यैवेति नियमः कथमुत्पद्यते । स्वं स्वमर्थं बोधयतां पदान्तराणामपि व्यञ्जनायामुपकारसंभवादित्यत आह—**इतरेति** । अधुनापदस्येतरपदार्थानामुत्कर्षाधानात्तस्यैव पदार्थान्तरापेक्षया **वैशिष्ट्यं** प्राधान्यम् । अधुनापदार्थप्राधान्येन तावद्वाक्यार्थेन तादृशपदार्थान्तराणामपि परपुरुषपरिचयव्यञ्जकत्वम् । तथाहि—सायमित्यादि । अधुनापदार्थप्रतिसंधानेन सायंतनस्नानस्य निमित्तान्तरानुसंधानप्रतिबन्धादविलम्बितमेव परपुरुषपरिचयं प्रत्याययति । एवं मलयजेनेत्यादि परपुरुषसंभोगचिन्हगोपनम्, यात इति परपुरुषसंभोगप्रतिबन्धकप्रकाशाभावम् ।

## विवृतिपूर्तिः

**समासेति** । 'संज्ञायाम्' इति शास्त्रादित्यर्थः, । संज्ञा हि समुदायोपाधिः । तेन नित्यसमास एवायम् । न हि वाक्येन, संज्ञा गम्यत इति प्रकृतसूत्रव्याख्याने **वृत्तिकाराः** ॥

**समासेति** । 'न निर्धारणे' इति सूत्रेण समासप्रतिषेधादित्यर्थः ॥

**अमीलनेति** । न विद्यते मीलनस्य मुद्रणस्य व्यतिकरः पौनः पुन्येन प्रवृत्तिः संबन्धो वा यस्मिंस्तथाभूतम् ॥

**अत्रेति** । इह शब्दानां परिवृत्तिसहिष्णुत्वादर्थशक्तिमूलत्वमवसेयम् । एवमग्रिमोदाहरणेऽपि ॥

## विज्ञप्रिया

स्वतः सम्भविवस्तुव्यङ्ग्यं वस्तुपदद्योत्याह—**सायमिति**। स्नानवर्त्मनि उपनायकोपभुक्तां स्नातागतां क्लान्तां सखीं प्रति सख्या उपहासोक्तिरियम्। अधुना तव सौकुमार्यामाश्चर्यम्। येन सौकुमार्येण अभितः सर्वाङ्गं क्लान्ताऽसि। ननु वर्त्मनि आतपात् ईदृशः क्लम इत्यत्राह—**सायमिति**। मलयजेन चन्दनेन इति। एतद्द्वयमपि क्लमनिवारकम्। ननु स्नानादुत्तरं मुहूर्त्तद्वयात्मकसायंकाले आतपसत्त्वात् तत एव क्लम इत्यत्राह—**यातोऽस्तेति**। अम्बरमणिः सूर्यः। द्रुतगमनात् क्लममपि निरस्यति—**विस्रब्धमिति**—विस्रब्धं यथेष्टम्, आगतिक्रियाविशेषणमिदम्। विश्रब्धमन्येति क्वचित् पाठः। ननु क्लमः कथं जात इत्यत्राह—**येनाऽधुना** इति। येन क्लमेन तव नेत्रद्वन्द्वम् अमीलनव्यतिकरं मीलनसम्बन्धरहितं यथा स्यात्तथा आसितुं स्थातुं न शक्नोति।

## लोचन

**सायमिति**—न विद्यते मीलनेन व्यतिकरः सम्पर्को यत्र तत् अमीलनव्यतिकरं यथा स्यात्तथाऽऽसितुं स्थातुमित्यर्थः।

## कुसुमप्रतिमा

१—अर्थशक्तिरूपेण स्वतःसम्भविना वस्तुना पदगतं वस्तुध्वनिमुदाहरति सायमिति। पथि उपपतिना सह सुरतं विधाय स्नात्वागतां सखी प्रति कथाचिदुक्तमिदम्। सायं सन्ध्यासमये स्नानम् उपासितं विहितम्, तथा मलयजेन चन्दनेन अङ्गं समालेपितम् आत्मना लिप्तं कारितम्। सुतरामनयोः कथमपि श्रमसम्भावन नास्तीति भावः। अस्वरमणिर्दिवाकरः अस्ताचलस्य मौलिं शिखरं यातः पूर्वमेव गतः। तस्मादातपनिबन्धनश्रमोऽपि न सम्भवतीत्याशयः। तथा अत्र मत्समीपे विस्रब्धं निशङ्कं यथा स्यात्तथा आगतिस्तवागमनं सम्पन्नम्। अतोऽपि गमनद्रुत्वाभावेन तत्रायं श्रमो नोपपद्यत इत्याशयः। तथापि येन हेतुना त्वम् अभितः सर्वतो भावेन क्लान्ता परिश्रान्ता असि, अतएव च परिश्रमात् ते तव नेत्रद्वन्द्वं नयनद्वयं कर्तृ, अमीलनव्यतिकर मुद्रणसम्बन्धरहितं सत् आसितुं स्थातुं न शक्नोति स्वत एव मुद्रणाय प्रवत्त्रत इत्यर्थः। अधिकपरिश्रमात् परं हि नयनं स्वभावत एव मुद्रितं भवितुं प्रयर्त्तत इति द्रष्टव्यम्। अतस्तव सौकुमार्यं कोमलता आश्चर्यम् अनन्यसमानतया अद्भुतम्। तादृशपरिश्रमकारणाभावेऽपि असाधारणसौकुमार्यवशादेव त्वमित्थं श्रान्तासीति बहिर्भावः।

अत्रेति। स्वतःसम्भविना अत्यन्तसौकुमार्यवशात् सर्वत्रैव सम्भवपरेण, वस्तुना अधुना क्लान्तासीत्यधुनापदात् केवलेदानीन्तनपरिश्रमरूपार्थेन, कृतः परपुरुषस्य परिचयो रमणसम्बन्धो [यथा सा। अन्यबहितपूर्वं रमणाभावे तदानीं क्रमस्थित्यसम्भवात् पथि रमणमनुमितं तच्च स्वपत्या सह स्वगृह एव प्राप्तावसरमिति पथि तेन सह न सम्भवतीति कृतपरपुरुषपरिचयैवेयमिति निश्चितमिति बोध्यम्।

नन्वीदृशार्थरूपवस्तुव्यङ्ग्यत्वस्य वाक्यगतत्वमेव दृश्यते तत् कथं पदगतत्वमभिप्रेत्येदमुदाहृतमित्याह तच्चेति। किञ्चेति चार्थः। तद्व्यङ्ग्यम् अधुनापदस्यैवेति परेणान्वयः। बोधयती व्यञ्जनया प्रतिपादयतः।

ननु तादृशार्थव्यञ्जनेऽपि क्लान्तासीत्यस्यापि सामर्थ्यदेववाक्यगतत्वं पुनरापद्यत इत्याह इतरेति। अत्र यत इत्यध्याहार्यम् इतरपदयोः क्लान्ता असीति पदयोरर्थाभ्यां वाच्यार्थद्वयात् उत्कर्षात् तादृशार्थव्यञ्जने सामर्थ्याधिक्यात्। अधुनैव क्लान्तासि न पुनः पूर्वमीदृशार्थबोधनेनेवेति भावः। पदान्तरा पेक्षयाक्लान्ता असीति पदद्वया-

पेक्षया वैशिष्ट्यं तादृशार्थव्यञ्जने सामर्थ्यातिरेकः । अतः प्रधानानुसारेणैव व्यवहारस्यौचित्यात् उक्तविधार्थप्रत्या-
यने च अधुनापदस्यैव प्राधान्वात् पदगतध्वनिरेवायामिति भावः ।

## विमला

स्वतःसम्भविवस्तुव्यङ्ग्यं वस्तु पदप्रकाश्यमाह,—सायमिति ।—पथि उपनायकेन भुक्तां स्नातागतां सखीम् उपहसन्त्याः कस्याश्चिदुक्तिरियम् । सायं—सन्ध्याकाले, स्नानम्, उपासितं—कृतं, मलयजेन—चन्दनेन, अङ्गं समालेपितम्, [एतेन स्नानमलयजलेपयोः श्रमप्रतिबन्धकत्वं दर्शितम्] । सायंपदस्य त्रिमुहूर्तरूपसायाङ्गपरत्वे, तत्रातपसम्भावनया तां वारयति, यात इति ।—अम्बरमणिः,—सूर्यः, अस्ताचलमौलिम्—अस्ताचलस्य चूड़ां, यातः, (अतः) अत्र—मत्मकाशे इत्यर्थः, विश्रब्धं—निःशङ्कं, स्वच्छन्दमित्यर्थः, यथा तथा आगतिः,—आगमनं, ["विश्र-ब्धमन्दगतिः" इति काव्यप्रकाशकारसम्मतः पाठः, तथा सति विश्रब्धम् अथ च मन्दं यथा स्यात्तथाऽऽगतिरित्यर्थः । अत्र असमस्तत्वाङ्गीकारे विश्रब्धाऽसौ मन्देति तथोक्ता गतिः,—गमनं, सञ्चरणमिति भावः । एतेन सायं सूर्यस्य अस्तगतत्वात् आतपक्लेशोऽपि नास्तीति सूक्षितम्] (तथाऽपि) तव सौकुमार्यं—मार्दवम्, आश्चर्यम्—अद्भुतम्, अनन्यसाधारणमित्यर्थः, येन—सौकुमार्येण हेतुना, अधुना—इदानीमेव, न तु इतः प्रागिति भावः, अभितः,—वहि-रन्तश्च उभयतः, क्लान्ताऽसि । क्रमज्ञापकमाह, नेत्रद्वन्द्वमिति ।—(यतः) ते—तव, नेत्रद्वन्द्वं—नयनयुगलम्, अमी-लनव्यंतिकरं—न विद्यते मीलनस्य—मुद्रणस्य, व्यतिकरः,—पौनःपुन्येन प्रवृत्तिः सम्बन्धो वा यस्मिन् तत् तथोक्तं, मीलनसम्पर्करहितम् इति यावत्, तत् यथा स्यात् तथा, स्वत एव मुद्रितं न भूत्वा इत्यर्थः, आसितुम्—अवस्थातुं न शक्नोति—न पारयति । शार्दूलविक्रीडितं वृत्तम् ।

अत्रेत्यादि ।—स्वतः सम्भविना—स्वभावतः सम्भवितुं योग्येन, वस्तुना—वाक्यार्थरूपेण । ननु तादृ-शार्थस्य वाक्यार्थव्यङ्ग्यत्वे वाक्यगतध्वनिरेवायं, न तु पदगतः ? इत्यत आह, तच्चेति ।—तच्च—तादृशव्य-ङ्ग्यञ्चेत्यर्थः, "अधुना क्लान्ताऽसि" इत्यादि बोधयत इति ।—तथा च तादृशक्रमस्य सौकुमार्यप्रयुक्तत्वे दिनान्तरेऽप्येवं स्यात्, अतोऽधुनापदादाधुनिकक्तमहेतुलाभः इति भावः । ननु तथाप्यधुनापदस्यैवेति नियमः कथमुपपद्यते ? स्व समर्थं बोधयतां पदान्तराणामपि व्यञ्जनायामुपकारसम्भवात्; इत्यत आह, इतरेति ।—अधुना-पदस्य इतरपदार्थानामुत्कर्षाधानात् तस्यैव पदान्तरापेक्षया, वैशिष्ट्यं—प्राधान्यम्; अधुनापदार्थप्राधान्येन तावद्वा-क्यार्थेन तादृशपदान्तराणामपि परपुरुषपरिचयव्यञ्जकत्वम्; तथाहि "सायम्" इत्यादि अधुनापदार्थप्रतिसन्धानेन सायन्तनस्नानस्य निमित्तान्तरानुसन्धानप्रतिबन्धादविलम्बितमेव परपुरुषपरिचयं, मलयजलेपने तत्सम्भोगोपनं, सूर्यास्तगमनं चान्यविधोपभोगलक्षणदर्शनाभावं प्रत्याययति । अत्रोपहास एव महावाक्यव्यङ्ग्यः, इदञ्च व्यङ्ग्यं तत्प्रकर्षकमित्यवधेयम् ।

## लक्ष्मी

अर्थशक्तिरूपेण स्वतः सम्भविना वस्तुना पदगतं वस्तुध्वनिं दर्शयति—सायमिति । वत्मनि उपपतिना सह सुरतं विधाय तज्जनितश्रमापनयनाय स्नानादिकृतवतीं सखीं प्रति ज्ञातरहस्यायाः कस्याश्चिद् विदग्धाया उक्तिरियम् । हे सखि ! तव सौकुमार्यं सुकुमारत्वं कोमलतेति यावत् आश्चर्यम् आश्चर्यभूतम्, अनन्यसादृश्यतया अद्भुतमित्यर्थः । येन सौकुमार्येण अधुना कुसुमसामग्रयभावे तन्निवर्त्तकसामग्रीसत्त्वे च अभितो बहिरन्तश्च क्लान्तासीत्यत्रान्वयः । तादृशक्लममेव दर्शयति—नेत्रेत्यादिना । ते तव नेत्रद्वन्द्वं लोचनयुगलं कर्तृ, अमीलव्यति-

करं न विद्यते मीलनस्य मुद्रणस्य व्यतिकरः सम्बन्धः पौनः पुन्येन प्रवृत्तिर्वा यत्र तादृशम् आसितुं स्थातुं न शक्नोति न समर्थं भवति एवञ्च मीलनसम्बन्धः सर्वाङ्गीणश्रमं कथयतीति भावः। ननु वर्त्मनि आतपात् क्लेशः कुतस्तवाश्र-र्यमत आह—सायमिति। सायं सन्ध्यासमये भानोरस्तोन्मुखे इत्यर्थः। अनेन स्नानानन्तरमन्यकार्याकरणं प्रतीयते। ननु दिनकृतगृहकृत्येनेदृशः श्रमः कुतः ? अत आह—स्नानमिति। स्नानम् अङ्गप्रक्षालनम् उपासितं यत्नाचिरकालं कृतम्। तथा च सायं स्नानस्य श्रम निवृत्तिमात्रफलकत्वात् दिनकृतगृहकर्मश्रमस्य तेनैव निवृत्तिर्जतेति भावः। तथा मलयजेन सुगन्धिना चन्दनेन अङ्गं वक्षः स्थलादिगात्रं समालेपितं सम्यगासमन्तात् लेपितं केनाऽपि चर्चितं वा, न तु लिप्तं तथा चन्दनलेपजनितश्रमस्यापि नावकाश इति भावः। ननु स्नानादुत्तरं त्रिमुहूर्त्तात्मकसायंकाले आतपसं-भवात्, तत एव क्लम अत आह—यातोऽस्तेति। अम्बरस्य आकाशस्य मणिरिव मणिः सूर्यः अस्ताचलस्य मौलिं शिखरमुल्लंङ्घ्य यातो गतः। एतेन रात्रिर्जतेति भावः। अतएव सायमित्यनेन न गतार्थता तेनांशतोऽपि उष्णाभावो ध्वन्यते। द्रुतगमनात् क्लममपि निरस्यति—विस्रब्धेति। तथा अत्र कुञ्जादिना घनच्छायामार्गे देशे विस्रब्धं स्वच्छन्दं मन्थरमभीतं च यथा स्यात्तथा आगतिः आगमनम्, तेन वर्त्मनि द्रुतगमनकृतो भयाद्वा न श्रम इति भावः। तस्मात् स च श्रमः सामग्रन्थराभावेन केवलसौकुमार्थकृत एवेति अहो जगद्विलक्षणमाश्चर्यभूतं तव सौकुमार्य मित्यर्थः। '**शार्दूलविक्रीडितं** छन्दस्तल्लक्षणन्तूक्तं प्राक् (९ पृ०)।

अत्र 'तव सौकुमार्यमाश्र्यं येनाधुना क्लान्तासि' इति वाच्यार्तरूपेण वस्तुना कृतपरपुरुषपरिचया (गाढो-न्मर्द्दना) स्नातासि इति वस्तु अधुनापदेन प्राधान्येव व्यज्यते। तदेवाह—अत्रेति।

नन्वीदृशार्थस्य वाक्यार्थव्यङ्ग्यत्वे वाक्यगतध्वनिरेवायमिति तत्कथं पदगतत्वमित्यत आह—तच्चेति। किञ्चेति चार्थः। तद्व्यङ्ग्यमधुना पदस्यैवेत्युत्तरेणान्वयः। अत्र हेतुगर्भं विशेषणं दर्शयति—अधुना। 'क्लान्तासीत्यादि बोधयत' इत्यन्तम्। तथा च तादृशक्लमस्य सौकुमार्यप्रयुक्तत्वेऽन्यस्मिन्नपि दिने स्यात्, न च तथाऽतोऽधुना पदादाधुनिकक्लमहेतुलाभ इति भावः। बोधयतः प्रतिपादयतः। नन्वेवमधुनापदस्यैवेति नियमः कथमुपपद्यते, स्वं स्वमर्थं प्रतिपादयतामन्यपदानामपि व्यञ्जनोपकारित्वसम्भवादित्यभिप्रेत्याह—इतरेति। अधुना पदस्येतरपदयोः 'क्लान्ता—असीतिपदयोरर्थाभ्यामभिधेयार्थद्वयात्, उत्कर्षात् तादृशार्थप्रतिपादने सामर्थ्याधि-क्यात् अधुनैव क्लान्ता न ततः पूर्वमेतादृशार्थप्रतिपादनेनैवेति भावः। पदान्तरापेक्षया क्लान्ता असीति पदद्वयापे-क्षया। वैशिष्ट्यं तादृशार्थबोधने प्राधान्यम्। अतः 'प्रधानेन व्यपदेश भवन्ति' इति न्यायात् अधुना पदार्थप्राधान्येन तावद्वाक्यार्थेन तादृशपदार्थान्तरामामपि परपुरुषपरिचयव्यञ्जकत्वम्। एवञ्च पदगतध्वनिरयम्। 'दृष्टिं हे प्रतिवे-शिनि' इत्यादौ तु नेदृशं पदमिति वाक्यगतध्वनिरेवेति ततोऽस्य भेदः. अत्र च शब्दानां परिवृत्तिसहिष्णुत्वादर्थश-क्तिमूलत्वमवगन्तव्यम्। एवमग्रिमोदाहरणादावपि बोध्यम्।

## रुचिरा

अथ पदप्रकाशयस्यार्थशक्तिमूलस्य संलक्ष्यक्रमव्यङ्ग्यस्य धवनेर्द्वादशसु भेदेषु स्वतःसम्भवीत्यर्थे व्यञ्जके वस्तुना वस्तुनो व्यक्तिमुदाहरति—"**साय**" मित्यादिना।

"**सायं** सूर्यास्तवेलायां दिवसे विधेयानां कृत्यानां सम्पादनानन्तरमिति यावत्, 'सखी' ति शेषः। **स्नानं** न वङ्गस्य कस्यचिन्मुस्वादेरेव प्रक्षालनम् 'त्वया' इति शेषः। **उपासितमनुष्ठितं** सुचिरं सम्यक्तया विहित मिति यावत्। तत्तत्कर्म समाप्यैव सायं स्नानं क्रियते लोकैस्त्वयाऽप्येवं सायं स्नानमनुष्ठितं तदनन्तरं च कर्त्तव्यान्तरानवसरतया न श्रमावकाशः सम्भवितुमर्हति, सायं स्नानस्य दिवाकृतकृत्यजनितश्रमनिवृत्तिमात्रफलकत्वात्। एवं च दिवाकृत-

कृत्यजनितः क्लमः इति न वक्तुं शक्यमिति व्यज्यते। तथा-**मलयजेन** मलयसम्भवेन सुगन्धिना चन्दनेना 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रिया" मित्यमरः। **अङ्गं** वक्षःस्थलादि गात्रम्। **समालेपितं** समन्ताल्लेपितं 'परेण केनापी' ति शेषः। न तु चर्चितं वा लिप्तम्। एवं च लेपकरणजनितश्रमस्यापि नावकाशः। तथा-**अम्बरमणिरम्बरमाकाशं** तस्य मणिरिव मणिरिति तथोक्तः सूर्यः। अस्ताचलमौलिमस्ताचलस्य स्वयं यमुपेत्य अस्तो भवति तस्य पर्वतस्येति यावन्मौलिः शिखरं तम्। 'मौलिर्मस्तकमुण्डके' इति हैमः। 'उल्लङ्घ्ये'ति शेषः। **यातः**। निबिडा सम्प्रति जाता रात्रिः, अतः सूर्योऽस्तगिरेरपि, परस्मिन्प्रदेशे गत इति भावः। एवं च न लेशतोऽप्युष्णतासद्भावः, येन कथमपि कलमाविर्भावः सम्भाव्येत इति व्यज्यते। तथा-**विश्रब्धं**-विश्रब्धं निर्भीकं यथा भवेत्तथा, स्वच्छन्दमित्यर्थः। मन्थरमभीतं चेति भावः **अत्र** अस्मिन्दृश्यमाने प्रत्याख्यातुमशक्ये कुञ्जादिना घनच्छायभूते देशे इति यावत्। **आगतिरागमनम्**। 'तवे' ति शेषः। एवं च मार्गकृतस्तत्र त्वरया गमनकृतश्च न क्लमः सम्भवति इति व्यज्यते। **आश्चर्यं** विस्मयः। किं तदित्याह-**तव** प्रौढामप्येतामवस्थामापन्नाया इति भावः। **अभितः** सर्वतो बहिरन्तश्च, न वा बहिरेव नचान्तरेवेति यावत्। **सौकुमार्य्यं** सुकोमलत्वम्। 'अस्ती'ति शेषः। **येन** सौकुमार्येण। 'हेतौ'। २/३/२३। इति तृतीया। **अधुना** साम्प्रतं सायङ्कालिकस्नानविधानान्तरमितरकार्याननुष्ठेयत्वात्सुरभितेन चन्दनेन सम्यगासमन्तात्परकृतलेपनाऽनन्तरं समस्ततापशान्तो लेपविधानादिश्रमाऽनुत्पत्तौ च रात्रेश्च समीपायाः कृतावस्थानाद्भयाद्यभावश्च क्लमसामग्र्याः सर्वथाऽसम्भवेऽस्मिन्समये। **क्लान्ता श्रान्ता। असि** त्वं यद्यभितोऽत्यन्तं सुकोमलत्वं न स्यात्कथमेवमस्मिन्नपि समये क्लान्ताऽभविष्य इति व्यज्यते। अत एव-ते तव **अमीलनव्यतिकरः**। **नेत्रद्वन्द्वं** नेत्रयोर्द्वन्द्वं युगलं (कर्तृ)। **न** नैव । **आसितुं** स्थातुम्। आस् उपवेशने। **शक्नोति** क्षमते। अत्र सखीतिपदाऽनभिधानं तन्मात्रकृततमुरतानन्दलाभाऽसहिष्णुतां व्यञ्जयति। इति उपनायकेन समं सङ्गम्य विलस्य च श्रमाऽपनोदनाय युचिरं कृतस्नातां परकृताऽङ्गसुगन्धितचन्दनालेपान्निशि निर्भयमागच्छन्तीं सखीं प्रति ज्ञातरहस्याया उपहसन्त्या विदग्धाया कस्याश्चिदुक्तिरियम्। अत्र च शार्दूलविक्रीडितं वृत्तम्। लक्षणं च प्रागुक्तम्॥ १९४॥

अत्रध्वनिमाह-**अत्रे**त्यादिना।

**अत्रो**दाहृते पद्ये। **स्वतः सम्भविना** न तु कवेः प्रौढोक्तिसिद्धेन। वस्तुना। 'हे सखि! तव सौमुमार्य्यमत्यन्तं, येनाऽधुना क्लान्तासी' ति वाच्यरूपेणेति शेषः। **कृतपरपुरुषपरिचया** कृतः परपुरुषपरिचयो यया, परपुरुषस्य स्वपतिभिन्नस्योपपतेरिति परिचय आमन्त्रणालिङ्गनादिरूपः व्यापारः। अत एव परपुरुषेण निर्दयतया मर्दितत्वात्। **क्लान्ता** श्रमार्ता। **असि इति वस्तु। व्यज्यते तद्** व्यङ्ग्यवस्तु इत्यर्थः॥ **च** पुनः। **अधुना** कथमपि किञ्चिदपि क्लमाऽनापादके प्रत्युत सर्वथा सर्वतोभावेन कथमपि किञ्चित्सम्भवस्तापश्रमस्य झटिति यथेष्टं निवृत्तिकरे शान्तेश्च सम्पादकेऽस्मिन्नपि समये इति भावः। **कान्ताऽसि** श्रमार्त्ता **असि** विद्यसे। ननु-**न**। पुनः-**कदाचित्क**स्मिंश्चित्समये अपि **पूर्वमितः** पूर्वम्। **तव** 'सख्या' इतिशेषः। **एवंविध** इतादशः। **क्लमः** परिश्रमः। **दृष्टो** 'मये' ति शेषः। इत्येवम्। **बोधयतो** ज्ञापयतः सूचितं कुर्वत इति यावत। **इतरपदार्थोत्कर्षा**दितराणि यानि पदानि तेषामर्थस्तस्मादुत्कर्षात्तदुत्कर्षमपेक्ष्यतेति भावः। ल्यब्लोपे कर्मण्यधिकरणे चेति पञ्चमी। **अधुनापदस्य। एव** न त्वितरेषामितरपदार्थो त्कर्षापेक्षयाऽधुनापदार्थयोत्कर्षस्यैव सद्भावात्। इति कारणात्। **'अधुना' पदस्य। एव। पदान्तरापेक्षया। वैशिष्ट्यं** विशिष्टत्वं विशेषेणोत्तमत्वप्राधान्योत्कृष्टत्वमवगम्यमिति शेषः।

अत्रेदमवधेयम्-अधुनेत्येकं पदं सायन्तनस्नानस्य निमित्तान्तरानुसन्धानप्रतिबन्धकं मलयजचन्दनलेपनस्य च तत्तत्सुरतकालिकपरपुरुषकृतचिह्नगोपनं सूर्यस्य चास्ताचलोल्लङ्घनोक्तेः परपुरुषसम्भोगप्रतिबन्धकप्र-

काशाऽभावं विश्रब्धागमनस्य चेप्सिताभोदहेतुकपरपुरुषसङ्गलाभेन हर्षोद्रेकं सूचयन् सुचिरं स्वच्छन्दं परपुरुषेण समं रमणानन्तरमन्तः सन्तृप्तिजनितेनाऽऽमोदोद्रेकेण च परपुरुषगाढोन्मर्दनश्रमार्ततया च निद्रास्पृहित्वं ध्वनयति। पदान्तरार्थानामुत्कर्षपिक्षयास्यैवोत्कर्षाति शयात् प्राधान्यं निर्बाधितम्। अधुनापदमपि स्वयं न परिवृत्यसहिष्णु, कित्वर्थेनेति तत्पदार्थशक्तिमूल एवाऽयं वस्तुध्वनिरिति। यथा वा मम-'विचरसि यतोयतस्त्वं मधुपा अनुयान्ति तत्रतत्र त्वाम्। केनापि रहसि दष्टं हन्त तवेदं प्रिये! वदनम्॥' अस्यायमर्थः-हे प्रिये! यतोयतस्त्वं विचरसि तत्रतत्र त्वां मधुपा मधु मकरन्दम्पिबन्तीति मधुपाः प्रमत्ता भ्रमरा अनुयान्ति हन्त कष्टं रहसि प्रतिबन्धकरहिते देशे केनापि मधुपेन तवेदं वदनं दष्टमिति। अत्र हि केनापि सुकृतिना दष्टां रमणीं प्रति प्रार्थयमानस्य कस्याप्यलब्धकामस्योक्तिरियमितिकेनापीति पदार्थेन तस्य सुकृतभाजनत्व स्वस्य च हतभाग्यत्वं सूचितमिति 'वदनं कमल' मिति रूपकातिशयोक्ति ध्वनयति अत एतत्पदार्थशक्तिमूलएवालङ्कारध्वनिरिति।

**'तदप्राप्तिमहादुःखविलीनाशेषपातका ।**

**तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ।**

**चिन्तयन्ती जगत्सूतिं परं ब्रह्मस्वरूपिणम् ।**

**निरुच्छ्वासतया मुक्तिं गतान्या गोपन्यका ॥'(युग्मकम्)**

अत्राशेषचयपदप्रभावादनेकजन्मसहस्रभोग्यदुष्कृतसुकृतफलराशितादात्म्याध्यवसिततया भगवद्विरहदुःखचिन्ताह्लादयोः प्रत्यायनमित्यतिशयोक्तिद्वयप्रतीतिरशेषचयपदद्वयद्योत्या । अत्र च व्यञ्जकस्य कविप्रौढोक्तिमन्तरेणापि संभवात्स्वतः संभविता ।

---

## विवृतिः

विस्रब्धमित्यादि तद्देशे तत्कालिकनायकसत्त्वाभावमधुनापदार्थप्रतिसंधानेनैव प्रत्याययति । अत्रोपहास एव महावाक्यव्यङ्ग्यः । इदं च व्यङ्ग्यं तत्प्रकर्षकमित्यवधेयम् ॥ स्वतः संभविवस्तुव्यङ्ग्यमलंकारं पदप्रकाश्यमाह—**तदप्राप्तीति** । श्रीकृष्णाप्राप्तीत्यर्थः । **तच्चिन्तेति** । श्रीकृष्णचिन्तेत्यर्थः । जगतः सूतिर्जन्म यस्मात्तं परं सर्वोत्कृष्टं ब्रह्मस्वरूपिणं श्रीकृष्णं निरुच्छ्वासतया निरुद्धप्राणतया अन्या या गुरुजनोपरोधेन श्रीकृष्णसमीपं गन्तुमशक्ता सा श्रीकृष्णवियोगेन मुक्तिं गता । मुक्तेत्यर्थः । समस्तपापपुण्यक्षयादेव मुक्तिरित्युपपादयति—**तदप्राप्तीति** । तदप्राप्तिजन्येत्यर्थः । तच्चिन्तेति । तच्चिन्ताजन्येत्यर्थः । भोगेन हि पापपुण्यक्षयो भवति । तल्लाभायाह—**महादुःखेति,** विपुलाह्लादेति च तयोरुपभोगेनेति बोध्यम् । पापपुण्ययोः सामस्त्यलाभश्च अशेषचयपदाभ्याम् । **अशेषचयपदयोः** प्रभावात्सामर्थ्यात् । कारणसामस्त्येन फलसामस्त्यप्रतीतिरुचितैवेति भावः । हेतुरयं तादात्म्याध्यवसाये । दुष्कृतसुकृतफलराशिर्दुःखाह्लादप्रचयः । **तादात्म्याध्यवसितयोः**रभेदारोपविषययोः **प्रत्यायनं** प्रकरणवैशिष्ट्येन प्रतिपादनम् । **अतिशयोक्तीति** । 'विषयनिगरणेन विषयितादात्म्यारोपोऽतिशयोक्तिः' इति तल्लक्षणम् । यथा—'कथमुपरि कलापिनः कलापः—' इत्यादि । अत्र प्रकरणवैशिष्ट्याद्विषयस्य केशपाशस्य लाभ इति विषयनिगरणम् । **अशेषचयपदद्वयद्योत्या** अशेषचयपदव्यञ्जनाजन्या । अयं भावः—प्रकृतेऽभिधेयबोधनान्तरं सुखदुःखभोगविशेषेण कथं यावत्पुण्यपापक्षय इत्यनुपपत्तिं प्रतिसंदधतो व्यञ्जनया यावत्सुखदुःखभोगजन्याशेषपुण्यापापक्षय वतीति । प्रतीतिर्जायते । अत्राशेषचयपदाभ्यां विषयिणः सुखदुःखराशेर्वाच्यवद्व्यञ्जनया झटिति प्रतीतिः, प्रकरणवैशिष्ट्येन प्रकृतयोर्भगवद्विरहदुःखचिन्ताह्लादयोः प्रतीतिरित्यतिशयोक्तिद्वयस्य व्यङ्ग्यत्वम् । न चाध्यवसायमात्रेण कथमनुपपत्तिनिरास इति वाच्यम् । एककार्यकारित्वरूपसादृश्यपर्यवसानेन तन्निरासात् । तथा च भवच्चिन्ताविरहाभ्यां तथा सुखदुःखे जनिते यदुपभोगेन यावत्सुखदुःखभोगनाश्ययोः सुकृतदुष्कृतपुञ्जयोर्नाशो जनितः । एतत्सूचनाय महत्त्वं विपुलत्वं च दुःखाह्लादयोर्विशेषणमुपन्यस्तम् । केचित्तु—'मुक्त्युपयोगित्वेन प्रकृतस्य समस्तपापफलराशेः पापविशेषफलेनाप्रकृतेन भगवद्विरहमहादुःखेन, मुक्तयुपयोगित्वेन प्रकृतस्य समस्तपुण्यफलराशेः पुण्यविशेषफलेनाप्रकृतेन तच्चिन्ताविपुलसुखेन सहाभेदप्रतीतिरतिशयोक्तिः । निगीर्णे प्रकृते शब्दोपात्तेनाप्रकृतेन सहाभेदप्रतीतिरतिशयोक्तिरिति तल्लक्षणात्' इत्याहुः । तन्न । विषयिणि प्रसिद्धधर्मस्य विषये प्रतीतिरेवातिशयोक्तिः फलम्, न तु विषये प्रसिद्धस्य विषयिणि

प्रतीतिः । एवं स्थितावतिशयोक्तिद्वयस्य निष्फलत्वापाताद् विषये प्रसिद्धस्य यावत्पुण्यपापनाशकत्वस्य विषयिणि प्रतीतेरसंभवेनाभिप्रेतानुपपत्तिनिरासस्यायोगाद्विषयिणः शब्दोपात्तत्वेन 'कथमुपरि कलापिनः कलाप—' इति तद्वाच्योपपत्तावतिशयोक्तिद्वयस्य व्यङ्ग्यत्वमिति योगाच्च । नचाशेषचयपदप्रभावेण विषयस्य व्यङ्ग्यत्वेनैव तस्य व्यङ्ग्यत्वमिति वाच्यम् । तथा सति 'कथमुपरि—' इत्यादौ प्रकरणवैशिष्ट्येन विषयस्य व्यङ्ग्यतयातिशयोक्तेर्व्यङ्ग्यत्वापातात् । **व्यञ्जकस्य** वाक्यार्थस्य ॥

स्वतः संभव्यलंकारव्यङ्ग्यवस्तुपदप्रकाशं वस्तु यथा—'क्षणदासावक्षणदा वनमवनं व्यसनमव्यसनम् । बत वीर ! तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम् ॥' क्षणदा रात्रिः । अक्षणदा अनुत्सवकरी । व्यसनं दुःखम् । अवीनां मेषाणामिव असनमितस्ततो भ्रमणं च । पराङ्मुखे विपरीते । पराङ्मुखं विपरीतम् । अत्र शब्दशक्तिमूलविरोधिनिर्वाह्येन चतुर्थपादगतेनार्थान्तरन्यासेन विधिरपि त्वामनुवर्तत इति सर्वपदद्योत्यं वस्तु स्वतः संभव्यलंकारव्यङ्ग्योऽलंकारः । पदद्योत्यो यथा—'तव पत्यधरस्तन्विम्लानपद्मदलं प्रगे । इति श्रुत्वा नववधूः करोति मुखमानतम् ॥' अत्र रूपकालंकारेण त्वयास्यात्यन्तचुम्बनं कृतं येन म्लानत्वमिति काव्यलिङ्गलंकारो म्लानादिपदद्योत्यः ।

## विवृतिपूर्तिः

**तदिति ।** तस्य अप्राप्त्या वियोगेन यन्महादुःखं तेन विलीनानि नष्टानि अशेषाणि पातकानि यस्याः सा । तथा, तस्य चिन्तया ध्यानेन यो विपुलो महानाह्लाद आनन्दस्तेन क्षीणः पुण्यचयः सुकृतसमूहो यस्याः सा । निर्गत उच्छ्वासः प्राणोत्क्रमणं यस्याः सा, तस्या भावस्तत्ता तया । प्राणोत्क्रमणं विनेत्यर्थः । 'न तस्य प्राणा उत्क्रामन्तीहैव समवलीयन्ते' इति श्रुतेः ॥

## विज्ञप्रिया

स्वतः सम्भविवस्तुव्यङ्ग्यमलङ्कारं पदव्यङ्ग्यमाह—**तदप्राप्तीत्यादि**श्लोकद्वयं पूर्ववर्णितव्यवसायाद् अन्या गोपकन्यका निरुच्छ्वासतया निरुद्धप्राणवायुतया मुक्तिं गता । मुक्तिहेतुं श्रीकृष्णचिन्तनमाह—**चिन्तयन्तीति** । जगत्सूतिं जगज्जनकं श्रीकृष्णं तथापि समस्तपापपुण्यक्षये एव मुक्तिरित्यतस्तदुपपादयति—**तदप्राप्तीति**—तच्चिन्तेति च ।

**अत्रेति**—तदप्राप्तिदुःखस्य तच्चिन्ताह्लादस्य चोपभोगेन तज्जनकपापपुण्ययोरेव क्षयः सम्भवति; नतु समस्तपापपुण्ययोः । अतः समस्तपापपुण्यनाशकसमस्ततत्फलदुःखसुखेष्वनुक्तेषु उक्तदुःखसुखयोरारोपः । अयमेव चात्रातिशयोक्त्यलङ्कारः । अतोऽत्र तदलङ्कारद्वयम् । अनुक्ते उपमेये उक्तोपमानारोपस्य तत्त्वात् । यथा कमलमनम्भसीत्यत्र अनुक्ते उपमेये मुखे उपमानकमलारोपः । प्रकृतानीत्यत्र उपमेयानि अनुक्तानि उक्तसुखदुःखद्वयं चाऽप्रकृतत्वात् उपमानानि अतस्तदारोपादतिशयोक्तिद्वयम् । उपमेयस्यानुक्तत्वेन चातिशयोक्त्यलङ्कारो व्यङ्ग्य एव । तद्वयव्यञ्जकौ चात्राशेषचयशब्दौ पापपुण्ययोः, अशेषचयत्वाभ्यां नाशकयोर्दुःखसुखयोरशेषचयत्वव्यञ्जनात् । अत्र अशेषचयपदयोरेकवाक्यस्थत्वेऽपि द्वाभ्यां व्यङ्ग्यद्वयव्यञ्जनान्वेकवाक्यत्वेन व्यञ्जकत्वमतः पदत्वेनैव व्यञ्जकत्वम् ।

## लोचन

**तद्प्राप्तीति**—मुक्तिं गुरुयन्त्रणाया मोक्षम् । न तस्य प्राणा उत्क्रामन्ति तत्रैव समवलीयन्ते; इति श्रुतेः । निरुच्छ्‌वासताया मोक्षेऽपि सम्बन्धः ।

## कुसुमप्रतिमा

२—स्वतःसम्भविना वस्तुना पदगतमलङ्कारध्वनिमुदाहरति तदित्यादि । श्रीमद्‌भागवते पत्यादि निषेधेन श्रीकृष्णस्य रासीत्सवे गन्तुमसर्थायाः कस्यश्चिद्‌गोपिकाया मुक्तिलाभवर्णनेयम् । तस्य श्रीकृष्णस्य अप्राप्तेर्हेतो-र्यन्महादुःखं तेन तद्‌भोगेन विलीनानि नष्टानि अशेषाणि पातकानि अनेकजन्मार्जितपापानि यस्याः सा, तथा तस्य श्रीकृष्णस्य चिन्तया भावनयैव यो विपुलाह्लादो महासुखं तेन तद्‌भोगेनैव क्षीणा नष्टाः पुण्यक्षया अनेकजन्मार्जित-धर्मसमूहा यस्याः सा । पापस्येव पुण्यस्यापि भोगारम्भकत्वेन मुक्तिप्रतिबन्धकत्वात् तद्‌भावे च मुक्तिसम्भात् "भोगादेव प्रारब्धक्षयः" इति तत्त्वविदां नियमात् साकल्येन पापपुण्ययोः क्षयेण मुक्त्यधिकारं प्राप्तेति भावः ।

ननु "नियतकारणात्तदुच्छित्तिर्ध्वान्तवत्" इति सांख्यमूत्रादिना ब्रह्मज्ञानमन्तरेण कथ मुक्तिसम्भव इत्याह चिन्तयन्तीति जगतां सूतिरुत्पत्तिर्यस्मात् तं परं सर्वोत्कृष्टं ब्रह्मस्वरूपिणं श्रीकृष्ण चिन्तयन्ती ध्यानेन साक्षात् कुर्वती, अन्वा गुरुजनावरुद्धा गोपकन्यका निरुच्छ्‌वासतया निरुद्धश्वासतया मुक्तिं गता प्राप्ता ।

अत्रेति । अशेष चय पदयोः प्रभावात् साकल्यवाचकत्वसामर्थ्यादिति तादात्म्याध्यवसिततयेत्यस्य हेतुः । अनेकजन्मसहस्रेषु भोग्यो यो दुष्कृतसुकृतयोः पापपुण्ययोः फलराशिर्दुःखसुखसमूहस्तस्य तादात्म्येन अभेदेन अध्यवसिततया आरोपितत्वप्रकारेण । प्रत्यायनं प्रतीतिजननम् । तथा च अनेकजन्मभोग्यनानादुःख तदानीन्तनवि-रहदुःखयोर्भेदेऽपि "विलीनशेषपातका" इत्यत्राशेषपदसामर्थ्येन तयोरभेदाध्यवसायादेका अतिशयोक्तिः, तथा अनेकजन्मभोग्यनानासुख-तदानीन्तनचिन्ताजन्यसुखयोर्भेदेऽपि "क्षीण पुण्यक्षया" इत्यत्र क्षयपदसामर्थ्येन तयोर-भेदाध्यवसायादपरा अतिरशयोक्तिश्चेति सरलार्थः । अशेषेति चयेति । च पदहयेन द्योत्या व्यङ्‌ग्या ।

नन्वत्र स्वतःसम्भविता कुत इत्याह अत्र चेति । व्यञ्जकस्य व्यञ्जनया उक्तातिशयोक्तिद्वयप्रत्यायकस्य अशेषेति चयेतिच पदद्वयरूपस्य वस्तुनः प्रौढ़ोक्तिं कवेः कविनिबद्धजनस्य च कल्पनाबलेन निरङ्कुशभाववचम्, अन्तरेण विनापि, सम्भवत् तत्तदनेकजन्मार्जितपापपुण्य-विशेषणत्वे सम्भवपरत्वात्, स्वतः सम्भविता व्यञ्जकस्ये-त्यन्वयः

## विमला

स्वतःसम्भविवस्तुव्यङ्ग्यमलङ्कारं पदप्रकाश्यमाह, तदिति ।—रासोत्सवे गुरुजनोपरोधेन कृष्णसमीपे गन्तुमशक्ताया अपि गोपकन्याया मुक्तिलाभवर्णनमिदम् । समस्तपापपुण्यक्षयादेव मुक्तिः इत्युपपादयति, तद-प्राप्तीति ।—तस्य—श्रीकृष्णस्य, अप्राप्तिः,—अलाभः, एव, अथवा तज्जन्यं यद् महादुःख तेन विलीनानि—विशे-षण अपगतानि, अशेषाणि पातकानि यस्याः सा, (भोगेन हि पापपुण्यक्षयो भवति, दुःखभोगोऽपि पापफलं, तद्‌भोगेनैव पापध्वंसोऽभूदिति प्रतिपादनाय महादुःखेति कथनम् इति भावः ।) तथा, तस्य श्रीकृष्णस्य, या चिन्ता-ध्यान तथा तज्जन्यो वा यः विपुलः, महान्, आह्लादः,—सुखं, तेन क्षीणाः पुण्यानां चयाः,—समूहाः यस्याः तथोक्ता; (सुखभोगोहि पुण्यफलं, तद्‌भोगेनैव पुण्यक्षयांभूदिति भावः;) जगता सूतिः,—उत्पत्तिः, यस्मात् तं, परब्रह्मस्वरू-पिणं—परमात्मरूपं श्रीकृष्णं, चिन्तयन्ती—ध्यायन्ती, अन्या—या गुरुजनोपरुद्‌भा सती श्रीकृष्णसमीपं गन्तुम-

शक्तः सा इत्यर्थः, गोपकन्यका, निरुच्छ्वासतया—निर्गत उच्छ्वासः,—प्राणोत्क्रमणं यस्याः सा तस्याः भावः, निरुच्छवासता तया—निरुद्धप्राणतया, प्राणोत्क्रमणमन्तरेण इति यावत्, ("न तस्य प्राणाः उत्क्रामन्ति" [वृह. उप. ४ अध्याय. ४ ब्रा. ६ मन्त्रः] अत्रैव समवलीयन्ते" [बृह. उप. ३ अध्या. २ ब्रा. ११ मन्त्रः] इति च श्रुतिशासनात्) मुक्तिं गता—श्रीकृष्णवियोगेन मुक्तेत्यर्थः । मुक्तिं प्रति ब्रह्मज्ञानस्य पापपुण्यक्षयसहकृतस्यैव हेतुत्वादिति भावः । श्रीमद्भागवतस्येदं युग्मकम् ।

अत्राशेषेत्यादि ।—पापपुण्ययोः सामस्त्यलाभश्च अशेषचयपदाभ्यां दर्शित एव, अशेषचयपदयोः प्रभावात्—सामर्थ्यात्; कारणसामस्त्येन फलसामस्त्यप्रतीतिरुचितैवेति भावः । हेतुः अयं तादात्म्याध्यवसाये इति सारः । दुष्कृतसुक्रतफलराशिः,—दुःखाह्लादसञ्चयः, तथा हि, तादात्म्याध्यवसितयोरभेदारोपविषययोः, प्रत्यायनं—प्रकरणवैशिष्ट्येन प्रतिपादनम् इत्यर्थः; तथा च भगवद्विरहदुःखमशेषपापफलं, भगवच्चिन्ताह्लादः अशेषपुण्यफलमतिशयोक्तिप्रयोजकमिति बोध्यं, "सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते" इति वक्ष्यमाणत्वात् ध्येयम् । अत्रायं विचारः;—'विषयनिगरणेन विषयितादात्म्यारोपोऽतिशयोक्तिः' इति अतिशयोक्तेः लक्षणम्; यथा,—"कथमुपरिकलापिनां कलापः" इत्यादि । अत्र प्रकरणवैशिष्ट्याद्विषयस्य केशपाशस्य लाभ इति विषयनिगरणम् । अशेषयपदद्वयद्योत्या—अशेषचयपदव्यञ्जनाजन्य । अयं भावः;—प्रकृतेऽभिधेयबोधानन्तरं सुखदुःखभोगविषयेण कथं यावत्पुण्यपापक्षयः ? इत्यनुपपत्तिं प्रतिसन्दधतो व्यञ्जनया यावत्सुखदुःखभोगजन्याशेषपुण्यपापक्षयवतीति प्रतीतिर्जायते । अत्राशेषचयपदाभ्यां विषयिणः सुखदुःखराशेर्वाच्यत्वव्यञ्जनया झटिति प्रतीतिः प्रकरणवैशिष्ट्येन प्रकृतयीः भगवद्विरहदुःखचिन्ताह्लादयोः प्रतीतिः इत्यतिशयोक्तिद्वयस्य व्यङ्ग्यत्वम् । न चाध्यवसायमात्रेण कथमनुपपत्तिनिरास इति वाच्यम्, एक कार्य्यकारित्वरूपसादृश्यपर्य्यवसायेन तन्निरासात् । तथा च भगवच्चिन्ताविरहाभ्यां तथा सुखदुःखे जनिते यदुपभोगेन यावत्सुखदुःखभोगनाश्ययोः सुकृतदुष्कृतपुञ्जयो नाशः जनितः । एतत्सूचनाय महत्त्वं विपुलत्वञ्च दुःखह्लादयोर्विशेषणमुपन्यस्तम् । केचित्तु—"मुक्त्युपयोगित्वेन, प्रकृतस्य समस्तपापफलराशेः पुण्यविशेषफलेनाप्रकृतेन तच्चिन्ताविपुलमुखेन सहाभेदप्रतीतिः अतिशयोक्तिः इति तल्लक्षणात्" इत्याहुः; तन्न, विषयिणि प्रसिद्धधर्मस्य विषये प्रतीतिरेवातिशयोक्तिफलं, न तु विषये प्रसिद्धस्य विषयिणि प्रतीतिः ।

एवं स्थितौ अतिशयोक्तिद्वयस्य निष्फलत्वापातात् विषये प्रसिद्धस्य यावत्पुण्यपापनाशकत्वस्य विषयिणि प्रतीतेरसम्भवेनाभिप्रेतानुपपत्तिनिरासस्यायोगात् विषयिणः शब्दोपात्तत्वेन "कथमुपरि कलापिनां कलापः" इति तद्वाच्योपपत्तौ अतिशयोक्तिद्वयस्य व्यङ्ग्यत्वायोगाच्च । न चाशेषक्षयपदप्रभावेण विषयस्य व्यङ्ग्यत्वेनैव तस्य व्यङ्ग्यत्वमिति वाच्यम्; तथा सति "कथमुपरि" इत्यादौ प्रकरणवैशिष्ट्येन विषयस्य व्यङ्ग्तया अतिशयोक्तेर्व्यङ्ग्यत्वापातात् । व्यञ्जकस्य—द्योतकस्य, वाक्यार्थस्येत्यर्थः, प्रौढ़ोक्तिम्, अन्तरेण—विना, सम्भवात्, स्वतः सम्भविता—स्वतः सम्भविरूपत्वम् । स्वतः सम्भव्यलङ्कारव्यङ्ग्यवस्तुपदप्रकाश्यं वस्तु यथा,—"क्षणदासावक्षणदा वनमवनं व्यसनमव्यसनम् । वत वीर ! तव द्विषतां पराङ्मुखे त्वयि पराङ्मुख सर्वम् ॥" [क्षणदा—रात्रिः, अक्षणदा—अनुत्सवकरो, वनं—काननम्, पवनं—वारिशून्यं,त्रयसनं—दुःखम्, अव्यसनम्—अवीनां—मेषाणामिव असनम्—रतस्ततः भ्रमणञ्च, पराङ्मुखे—विमुखे, पराङ्मुख—विपरीतम् । अत्र शब्दशक्तिमूलविरोधिनिर्वाह्यते चतुर्थपादगतेनार्थान्तरत्यासेन विधिरपि त्वामनुवक्तते इति सर्वपदद्योत्यं वस्तु, स्वतः सम्भव्यलङ्कारव्यङ्ग्योऽलङ्कारः] । पदद्योत्यो यथा,—"तव प्रत्यधरास्तन्व ! म्लानपद्मदलं प्रगे । इति श्रुत्वा नववधूः करोति मुखमानतम् ॥" अत्र रूपकालङ्कारत्वयाऽस्यन्यस्तं चुम्बनं कृतं, येन म्लानत्वमिति काव्यलिङ्गलङ्कारः

म्लानादिपदद्योत्यः। कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यं वस्तु पदप्रकाश्यं यथा,—"चन्द्रधवलासु रात्रिषु धनुरपि कुसुमं समास्फाल्य। एकच्छत्रमनङ्गस्त्रिभुवनराज्यं करोत्यनिशम् ॥" अत्रानङ्गस्य चापास्फालनपूर्वकविभुवनाधिकारकस्यालोकत्वात् कविप्रौढोक्तिसिद्धेन तेन वस्तुना येषां कामिनामसौ राजा, तेषां न कोऽपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरैः केवलं तैर्निशाऽतिवाह्यते इति त्रिभुवनराज्यपदद्योत्यं वस्तु व्यज्यते। कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्योऽलङ्कारः पदप्रकाश्यो यथा,—"निशितशरधियाऽर्पयत्वनङ्गो दृशि सुदृशः स्वबलं वयस्यराले। दिशि निपतति यत्र सा च तत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥" अवस्थाः,—प्रागुक्ताः, विरहकालिकाः दश कामदशाः। अत्र क्रमिकाणां युगपदुन्मेषणरूपं वस्तु वाक्यार्थः, स च स्वतोऽसम्भवित्वात् कविप्रौढोक्तिसिद्धः, तेन व्यतिकरपदद्योत्यो विरोधो व्यज्यते। कविप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यं यथा,—"सन्तापभाजा हृदयेन हारा निर्वार्य्यमाणोऽपि मुहुर्मृगाक्ष्याः। वक्षोजमारस्य वयस्यभावाद्विशुद्धजातिर्न चलत्यमुष्मात् ॥" [विशुद्धजातिः,—विशुद्धमुक्ताजातिघटितः]। अत्र विशुद्धजातित्वहेत्वलङ्कारेणानवरतकल्पमान एवास्ते इति न चलतीति पदव्यङ्ग्यं वस्त्वनपगमनहेतुत्वस्य अवान्तरत्वेन आरोप्यमाणत्वात् कविप्रौढोक्तिसिद्धत्वम् इति सङ्क्षेपः।

## लक्ष्मी

स्वतः सम्भविना वस्तुना पदगतमलङ्कारध्वनिं दर्शयति—तदाप्राप्तीति। श्रीमद्भागवते स्वाम्याद्यवरोधने श्रीकृष्णस्य रासोत्सवे गन्तुमक्षमायाः कस्याश्चिद्गोपिकायाः मुक्तिवर्णनेयम्। युग्मकमिदम्, द्वाभ्यां छन्दोभ्यां वाक्यार्थसमाप्ते, न तु पद्यद्वयमिदम्। तदुक्तम्—

**'द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम्।**

**कलापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतम् ॥' इति।**

तस्य श्रीकृष्णस्य अप्राप्त्या वियोगेन हेतुना यन्महादुःखं तेन तद्भोगेन विलीनानि नष्टानि अशेषाणि समस्तानि पातकानि अनेकजन्मसञ्चितपापानि यस्याः सा तद्योक्ता, तथा तस्य श्रीकृष्णस्य चिन्तया भावनया अहर्निशं ध्यानेनेत्यर्तः यो विपुलो महान् आह्लाद आनन्दः तेन तद्भोगेनैव क्षीणः नष्टः पुण्यस्य चयः समूहः यस्याः सा तथोक्ता, पापपुण्ययोः फलभोगनाश्यत्वात् 'प्रारब्धकर्ममां भोगादेव क्षय' इति स्मरणादिति बोध्यम्। ननु 'ऋते ज्ञानान्न मुक्तिः इति सिद्धान्तात्कथं मुक्तिसम्भव इत्यत आह—चिन्तयन्तीति। जगतः सूतिर्जन्म यस्मात्तं तथोक्तं जगज्जनकं श्रीकृष्णमित्यर्थः। परं सर्वोत्कृष्टं ब्रह्मस्वरूपिणं सच्चिदानन्दरूपं चिन्तयन्ती भावयन्ती ध्यानेन साक्षात्कुर्वतीत्यर्थः, अन्या स्वामिजनाद्यवरुद्धा काचिद् गोपकन्यका, निरुच्छ्वासतया निरुद्धप्राणवायुतया 'नास्य प्राणाः समुत्क्रामन्ति अत्रैव समवलीयन्ते' इति श्रुतेः, मोक्षकाले निरुच्छ्वासता, यद्वा निरुच्छ्वासतया प्राणायामेन प्रामोत्क्रमणं विना वा मुंक्ति मोक्षं गता प्राप्ता।

अत्र श्रीकृष्णवियोगदुःखचिन्ताह्लादयोरशेषदुष्कृतसुकृतफलत्वेनाध्यवसितयोरवगतिरित्यतिशयोक्तिद्वयमशेषचयपदप्राधान्येन व्यज्यते, तदेव निरूपयति—अत्रेति। दुष्कृतसुकृतयोः सामस्त्यलाभश्चात्रासेष-चयपदभ्याम्। अशेष-चयपदयोः प्रभावात् सामस्त्यवाचकत्वसामर्थ्यात्। कारणसामस्त्येन फलसामस्त्यप्रतीतिर्युक्तैवेति भावः। तादात्म्याध्यवसिततयेत्यस्यायं हेतुः। अनेकजन्मसहस्रेषु भोग्यो यो दुष्कृतसुकृतराशिः पापपुण्यप्रचयस्तस्य तादात्म्येन अभेदेन अध्यवसिततया आरोपविषयतय। प्रत्यायनं प्रकरणवैशिष्ट्येन प्रतिपादनम्। **अतिशयोक्तीति**। 'विषयनिगरणेन विषयितादात्म्यारोपोऽतिशयोक्तिः' इति लक्षणं तस्य।

यथा—'कथमुपरि कलापिनः कलापा' इत्यत्र प्रकरणवैशिष्ट्याविषयस्य केशपाशस्य लाभ इति विषयनिगरणम्। तथा च प्रकृते अनेकजन्मभोग्यानेकदुःखतत्कालीनविरहदुःखयोर्भेदेऽपि **'विलीनाशेषपातका'** इत्यत्र चयपदसामर्थ्येन तयोरभेदारोपादन्या अतिशयोक्तिश्चेति। अशेषेति चयेतिपदद्योत्या प्रतीयमाना। अत्र अशेषचयपदयोरेकवाक्यस्थत्वेऽपि द्वाभ्यां व्यङ्ग्यद्वयव्यञ्जनादिभिन्नवाक्यत्वेन व्यञ्जकत्वमतः पदत्वेनैव व्यञ्जकत्वम्। 'दिशि मन्दायते' इत्यादौ तु न किमपि तादृशमपदमिति वाक्यगतत्वमेव। न चात्रोक्तव्यङ्ग्यस्य वाच्यसिद्ध्यङ्गतया गुणीभूतव्यङ्ग्यत्वमाशङ्कनीयम्, अन्यत्र तथात्वेऽपि प्रकृते भगवद्विषयकरत्युत्कर्षप्रयोजकतया वाक्यादतिशयितत्वेन तदप्रसङ्गात्। वाच्यादनतिशयत्वेन हि व्यङ्ग्यस्य गुणीभावः। स वाच्यसिद्ध्यङ्गतया क्वचित्क्वचित्प्रकारान्तरेमेत्यष्टौ गुणीभूतव्यङ्ग्यस्य भेदः, न तु वाच्यसिद्ध्यङ्गत्वं गुणीभावनियतम्, वाच्यातिशयित्वे तदसम्भवात्।

नन्वत्र कुतः स्वतः सम्भवितेत्यत आह—अत्र चेति। व्यञ्जकस्य व्यञ्जनद्वारा उक्तातिशयोक्तिद्वयबोधकस्य अशेषेति—चयेति पदद्वयरूपस्य वाक्यार्थस्य वस्तुनः प्रौढोक्तिं कवेस्तन्निबद्धवक्तुश्च निरङ्कुशकल्पनाबलात्कथनम्, अन्तरेण रहितेनापि सम्भवात् तत्तदनेकजन्मसञ्चितदुष्कृतसुकृतविशेषणत्वे सम्भवपरत्वात्, स्वतः सम्भविता व्यञ्जकस्येति पूर्वेणान्वयः।

तत्रैव स्वतः सम्भविनालङ्कारेण पदगतो वस्तुध्वनिर्यथा—

**'क्षणदा सावक्षणदा वनमवनं व्यसनमव्यसनम्।**

**बत वीर! द्विषतां पराङ्मुके त्वयि पराङ्मुखं सर्वम्'॥**

अत्र परङ्मुखे त्वयि पराङ्मुखं सर्वमित्यर्थान्तरन्यासे न विधिरपि त्वामनुवर्त्तते, इति वस्तु सर्वपदप्राधान्येन व्यञ्जकस् सर्वपदस्य च नानार्थत्वाभावाद्वस्तुनोऽर्थशक्तिमूलालङ्कारव्यङ्ग्यता बोध्या। 'आपतन्तममुम्' इत्यादौ तु न किमपि पदं तादृशमिति वाक्यगतत्वमेवेति। भेदो ज्ञेयः। तत्रैव स्वतः सम्भविनालङ्कारेणालङ्कारस्य ध्वनिः पदगतो यथा—

**'तव वल्लभस्य प्रभाते आसीदधरो म्लानकमलदलम्।**

**इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम्॥'**

रात्रावतिशयचुम्बितदयिताधरां वधूं प्रति कस्यचिदुक्तिरियम्।

अत्राधरो म्लानकमलमिति रूपकालङ्कारेण त्वया तथास्याधरस्य मुहुर्मुहुः चुम्बनं कृतं येन तस्य म्लानत्वमिति काव्यलिङ्गालङ्कारो म्लानकमलदलपदप्राधान्येन व्यज्यते। अत एवात्र पदगत्वम्। 'गाढकान्तदशनक्षतव्यथा' इत्यत्र तु नेदृसं पदमित वाक्यगत्वमेवेति भेदः।

## रुचिरा

अथ स्वतःसम्भविता वस्तुनाऽलङ्कारध्वनिमुदाहरति- **'तदप्राप्तिमहादुःखविलीनाशेषपातकेत्यादिना।'**

**'तदप्राप्तिमहादुःखविलीनाशेषपातका** तस्य प्रकृतस्य श्रीकृष्णस्येति यावत्। अप्राप्तिर्वियोगस्तया यन्महादुःखं परःसहस्रजन्मजन्मान्तपरिभोग्यं महत्कष्टमिति यावत् तेन तद्भोगेन विलीनानि विशेणादर्शनीयतां प्राप्तानि अशेषाणि समस्तानि पातकानि पापपुञ्जा यस्याः सा। **तथा** पुनः। **तच्चिन्ताविपुलाल्हादक्षीणपुण्यचया** तस्य प्रकृतस्यैव श्रीकृष्णस्य या चिन्ता ध्यानं तदेकाग्रतया मनसा तत्स्वरूपभावेनेति यावत्, तया यो विपुलाह्लादः विपुलो

महाननेकसहस्रयुगावसानभोगेनाप्यक्षय्यः अन्यत्रान्यथा चानुपलब्धुमशक्य आह्लादस्तेन तत्राप्त्या क्षीणाः पुण्यचयाः पुण्यानामाह्लादहेतुकानां धर्म्मानुष्ठानजनितादृष्टविशेषाणां चयाः पुञ्जा यस्याः सा। **जगत्सूतिं** जगत् प्रसवस्थानीयं यस्य तादृशमित्यर्थः। यत्तु जगतः सूतिर्यस्मात्तमिति व्याख्यानं तन्न, व्यधिकरणबहुव्रीहेरगतिकगतित्वात्। **परब्रह्मस्वरुपिणं** परब्रह्माभिन्नस्वरूपशालिनमित्यर्थः। श्रीकृष्णमिति शेषः। **चिन्तयन्ती** ध्यायन्ती। **अन्या** पूर्वश्लोकोक्ताभ्यो भिन्ना **गोपकन्यका** गोपस्य कन्यका पुत्री। **विरुच्छ्वासतया** निरुद्धप्राणतया निर्गत उच्छ्वासः श्वासोत्क्रमणं यस्मास्तत्तया "त्वतलोर्गुणवचनमि" ति पुंवद्भावः। 'नास्य प्राणाः समुत्क्रामन्ति अत्रैव समवलीयन्ते' इति श्रुतिः। **मुक्तिम् गता** प्राप्ता। इति भावः। गुरुजनोपरोधेन श्रीकृष्णसमीपं गन्तुमशक्यायाः श्रीकृष्णध्यानवशान्मुक्तिं गतायाः गोपकन्यकाया वर्णनपरं विष्णुपुराणपद्यं न चेदं पद्यद्वयमूह्यम् द्वाभ्यां युग्ममिति प्रोक्तमिति नियमात्॥ १९५॥ १९६॥'

अथात्रालङ्कारध्वनिमाह-**अत्रे**त्यादिना।

**अत्रो**दाहृतपद्ये। **अशेषचयपदप्रभावाद**शेषचयपदयोः प्रभावः सामर्थ्यं तस्मात्। **अनेकजन्मसहस्रभोग्यदुष्कृतसुकृतफलराशितादात्म्याध्यवसिततया** अनेकजन्मनां सहस्राणि तैर्भोग्या ये दुष्कृतसुकृतफलराशयस्तेषां तादात्म्यभिन्नत्वं तस्याध्यवसितता अध्यवसायस्तया। "हेतुने"ति शेषः। **भगवद्विरहदुःखचिन्ताल्हादयोर्भगवतो** विरहदुःखं च चिन्ताह्लादश्चेति तयोः। **प्रत्यायनं** प्रतीतिसम्पादनम्। **इत्यतः** कारणात्। **अतिशयोक्तिद्वयप्रतीति**रतिशयोक्त्योस्तदभिधेययोरलङ्कारयोर्द्वयं तस्य प्रतीतिः। **अशेषचयपदद्वयद्योत्या** अशेषपदद्योत्यां चयपदद्योत्या चेत्यर्थः। **च** पुनः। **अत्र**। **व्यञ्जकस्या**शेषचयपदद्वयस्य **कविप्रौढोक्ति** कवेः प्रौढोक्तिं विना **अन्तरेण। अपि। सम्भवात्। स्वतः सम्भविता**। बोध्येति शेषः।

अत्रेदमवसेयम्—'नाभुक्तं श्रीयते कर्म्म कल्पकोटिशतैरपि।' इति स्मरणात्कर्मणां भोगा आवश्यकाः। कर्म्मफलाना भोगमन्तरेण मुक्तेरनुपपत्तेः। प्रकृतायाः गोपकन्यकायाः गुरुजनकृतनिरोधवशात्साक्षाद्भगवत्सविधं गन्तुमशक्त्याया भगवत्सन्निधानानुपस्थितिजन्यापरिमेयात्यन्तदुःखसमूहस्यैकपदमेव भोगेन समस्तानां पापानां क्षयः सपद्येव सञ्जातः। पुण्यकर्मणां सर्वेषां भोगश्च भगवद्ध्यानजन्यानिर्वचनीयानतिशयासमानापरिमेया संस्थाया असम्भवे स्वत एव मुक्तिः मुक्तिदशायां च प्राणा न बहिर्निर्यान्तीति तस्या अपि तत्रैव विलीना न तु निष्क्रान्ताः। इत्येवमशेषचयपदद्वयेन समस्तपापपुण्यभोगप्रतिपादनात्तयोरेव प्राधान्यम्। अथ भगवतः सन्निधानाप्राप्तिजन्यं दुःखं ततश्च प्रेमवशाद्भगवति मनसः सन्निवेशः। इत्येतयोरनेकजन्मसहस्रभोग्यदुष्कृतसुकृतफलराश्यभिन्नत्वेनाध्यवसायान्निगीर्याध्यवसानरूपातिशयोक्तिद्वयमशेषपदस्य च चयस्यैवाधीनमिति। अत्राहुस्तर्कवागीशाःअत्रायम्भावः। प्रकृतेऽभिधेयबोधानन्तरं सुखदुः खभोगविशेषेण कथं यावत्पुण्यपापक्षयइत्युपपत्तिं प्रति सन्दधतो व्यञ्जनया यावत् सुखदुःखभोगजन्याशेषपुण्यपापत्वव्यञ्जनया झटिति प्रतीतिः प्रकरणवैशिष्ट्येन प्रकृतयोर्भगवद्विरहदुःखचिन्ताऽऽह्लादयोः प्रतीतिरित्यतिशयोक्तिद्वयस्य व्यङ्ग्यत्वम्। न चाध्यवसायमात्रेण कथमनुपपत्तिनिरास इति वाच्यम्। एककार्य्यकारित्वरूपसादृश्यावसाने च तन्निरासात्तथा च भगवच्चिन्ताभगवच्चिन्ताविरहाभ्यां तथा सुखदुःखे जनिते यदुपभोगेन यावत्सुखदुःखभोगनाश्ययोः सुकृतदुष्कृतपुञ्जयोर्नाशो जनितः। एतत्सूचनाय महत्त्वं विपुलत्वं च दुःखाह्लदयोर्विशेषणमुपन्यस्तम्। केचित्तु मुक्त्युपयोगित्वेन प्रकृतस्य समस्तपुण्यफलरशिः पुण्यविशेषफलेनाप्रकृतेन तच्चिन्ताविपुलसुखेन सदा भेदप्रतीतिरतिशयोक्तिः। निगीर्णे प्रकृते शब्दोपात्तेनाप्रकृतेन सदा भेदप्रतीतिरतिशयोक्तिरिति तल्लक्ष णादित्याहु, स्तन्न; प्रसिद्धधर्म्मस्य विषये प्रतीतिरेवातिशयोक्तेः फलम्। ननु विषये प्रसिद्धस्य विषयिणि प्रतीतिः। एवं स्थितावतिशंयोक्तिद्वयस्य निष्फलत्वापादविषये प्रसिद्धस्य यावत्

पुण्यपापनाशकत्वस्य विषयिणि प्रतीतेरसम्भवेनाऽभिप्रेतानुपपत्तिनिरासस्यायोगाद्विषयिणः शब्दोपात्तत्वेन 'कथमुपरिकलापिनाङ्कलापाः' । इति तद्वाच्योपपत्तावतिशयोक्तिद्वयस्य व्यङ्ग्यत्वायोगाञ्च । न चाशेषचयदप्रभावेण विषयस्य व्यङ्ग्यत्वेनैवैतस्य व्यङ्ग्यत्वमितिवाच्यम् । तथा सति 'कथमुपरि' इत्यादौ प्रकरणवैशिष्ट्येन विषयस्य व्यङ्ग्यतयाऽतिशयोक्तेर्व्यङ्ग्यत्वापातादिति । उदयोतकारा अप्याहुः-ननु वियोगदुःखचिन्तासुखाभ्यां कथमशेषपापपुण्यनाशस्तेषां स्वस्वफलभोगनाश्यत्वादित्युपपत्तेरशेषदुष्कृतसुकृतफलराशितादात्म्याध्यवसायेनैव परिहार इति वाच्यसिद्ध्यङ्गमेतदिति चेन्न-भगवन्माहात्म्यातिशयमादायापितदुपपत्तेरिति । प्रभाकरा अप्याहुः । अन्यथा सर्वपुण्यपापनाशस्य चिन्तावियोगसुखदुःखाभ्यां क्षयाऽनुपपत्तेरिति भावः ।

न चोक्तव्यङ्ग्यस्य वाच्यसिद्ध्यङ्गतया गुणीभूतव्यङ्ग्यत्वमाशङ्कनीयम् । अन्यत्र तथात्वेऽपि प्रकृते भगवद्वि षयकरत्युत्कर्षप्रयोजकतया वाच्यदतिशयितत्वेन तदप्रसङ्गात् । इति दिक् । विस्तरस्तु काव्यप्रकाशव्याख्यायां द्रष्टव्यम् । यथा वा मम—'मुग्धे ! स्मायं स्मायं हन्त किमेतान्निहंसि दैवहतान् । हननं सुकृतं सुकृती सुकृतिनि नहि कोऽपि निर्वक्ति' । अस्यार्थःमुग्धे ! स्मायंस्मायं स्मित्वास्मित्वा दैवहतान् दैवेन पूर्वमेव पूर्वमेव निहतान् एतान्मादशान्निहंसि हि यतः-हे सुकृतिनि धर्म्मशीले ! कोऽपि कश्चित् हननं हिंसाविधानं सुकृतं धर्म्मं न निर्वक्तिऽआह । अत्र च मन्दहासस्य निहननक्रियासानधत्वेनाभिधानं कविप्रौढत्वमात्रनिष्पन्नमिति तेन मुग्धाऽसीत्येन निहंसीति पुनरपि सुकृतिनीत्युपरमेति च, मुग्धे इति सुकृतिनीतिपदाभ्यां द्योत्यते अलङ्कारेण वस्तुध्वनिः । यथावा मम-'स्मितसदृशानि सुमानि त्वन्मुखसुधया सुषिच्यमाणानि । प्राणप्रिये ! मनोभव आदाय जगन्तिः संहरति ॥' अस्यार्थः-हे प्राणप्रिये ! मनोभव आदाय जगन्तिः संहरति ॥' अस्यार्थः-हे प्राणप्रिये ! मनोभवः कामदेवः त्वन्मुखसुधया तव मुखामृतेन सुषिच्यमाणानि स्मितसदृशानि सुमानि प्रसूनानि आदाय गृहीत्वा जगन्ति संहरति संहर्तुं प्रवृत्तः । अत्र च स्मितानां कुसुमसदृशत्वमभिधाय कुसुमानां पुनः स्मितसादृश्यमभिहितमित्युपमानस्योपमेयत्वेन प्रतीपं तेन च प्राणप्रिय इति पदेन तवातिप्रियस्यास्य रक्षणं त्वदधीनमिति वस्तु व्यज्यते । यथा वा मम-'त्वरितं पिधेहि वदनं वहिरथवा मेव जीविते ! यासीः । प्रस्फुरदमृतनिधानं पातुं समयः सदैवास्ते ।' अस्यार्थः-हे जीविते प्रणस्वरूपे ! वदनं त्वरितं पिधेहि अथवा वहिर्भैव यासीः याहि स्फुरत्पुर्णतया समुल्लसदमृतनिधानं चन्द्रं सुधासमुद्रं वा पातुं सदैव समय आस्ते न कदाप्यसमयः अमृतनिधेः पानाय । अत्र च वदनस्यामृतनिधानस्य च सादृश्यमनाभिधायं वदनमात्रस्य वर्णनेन प्रसिद्धस्यामृतनिधानस्यापह्नवनमिति तन्मूलया कविप्रौढोक्तिसिद्ध्याऽपह्नुत्या वदनस्य आऽमृतनिधानस्य वा सादृश्यमनभिधाय वदनभेव पुनरभिधाय तयोरैकात्म्यमभिदधातीत्यर्थान्तरन्यासः । इति कविप्रौढोक्तिसिद्वेन वा त्वरितमिति पदमूलं जीवितइतिपदमूलं वा, यदि न वदनं पिधास्यसि अन्तरेव वा न स्यास्यसि तर्ह्यवश्यं कश्चितदिदं पास्यति इति निजकर्तृकतद्वदवकर्मकपानान्तराभिधानापह्नवनमिति ध्वन्यते । अथ वस्तुनाऽलङ्कारध्वनिर्यथा मम प्रागुदाहृते । 'अयि दयिते तव वदनं पापं पापं मनोभवो गर्जन् । स्मितमवलम्ब्य तमिस्रास्वपिहतकान्हन्त नो हन्ति ॥' इत्यत्र । यथा वा मम 'निशितशरधियार्पयत्यनङ्गो दृशि सुदृशः स्वबलं वयस्यराले । निशि निपतति यत्र सा च तत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ।' अस्यार्थः—अनङ्गे अङ्गहीनोपि स्वयं निशितशरधिय निशितस्तीक्ष्णोऽसौ शर इति बुद्धया अराले कुटिले प्रमादोन्मेषशालित्वेन हिंसके तारुण्ये वयसि सति सुदृशोर्दृशि स्वबलमर्पयते सा च पुनर्दृष्टिर्यत्र निपतति तत्र व्यतिकरमहमहमिकया युगपदेव सङ्घं समुपेत्य "दृङ्मनःसङ्गसङ्कल्पा जागरः कृशता रतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दशा ॥" इत्युक्ता अवस्थाः समुन्मिषन्ति । अत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्था इति वस्तुना परस्परविरुद्धा अपि दशावस्थाः समुन्मिषन्तीति विरोधाभासो व्यतिकरमितिपदद्योत्यः । यद्यपि मदनस्य कुसुमेषुत्वेन दृशः कमलत्वेनाभिधेयनिग-

रणमित्यतिशयोक्त्या विरोधालङ्कारध्वनिः। निशितशरधियेत्युत्प्रेक्षया च भ्रान्त्या वा विरोधः समुत्स्फुरति तथापि तथा वस्तुनाऽप्यलङ्कारो ध्वन्यत एवेति। यथा वा मम-'स्मयते यथा यथेदं सुमुखि ! मुखं ते तथा तथा हन्त। सहृदयहृदये मदनो निदधाति शरान्बलान्निशितान् ॥'

अस्यार्थः-हे सुमुखि ! यथा यथेदं ते तवेदं मुखं स्मयते तथा तथा हन्त मदनो बलात् सहसा सहृदयहृदयन्तिशितांस्तीक्ष्णान् शरान्निदधाति समर्पयतीति। अत्र च सुमुख्या मुखकर्तृकस्मयनानुक्रमेण मदनकर्तृकसहृदयहृदयाधिकारकनिशितशरकर्म्मकार्पणं कविप्रौढोक्तिमात्रनिष्पन्नमिति वस्तुना मदन इति पदद्योत्य उपहासकर्तारमनिहत्य तदितरसहृयहृदयनिहननस्य विरुद्धत्वाद्विषमः। यथा वा मम-'सुमुखि ! मनोजो मदनः सुधानिधिर्वापि विश्रुतः परितः। इति तव वदनसुधानिधिरर्हति मदनात्मना स्थातुम् ॥' इति। अस्यार्थः-हे सुमुखि ! मदनः सुधानिधिर्वापि मनोजः मनसो जातः 'शम्बरा रिर्मनसिज' इत्यमरः। चन्द्रमा मनसो जात इति च परितो विश्रुत इतिवत्तव वदनसुधानिधिर्मदनात्मना स्थातुमर्हति। अत्र च वदनमेव सुधानिधिरिति रुपकेण इति तवेति काव्यलिङ्गेन वा वदनसुधानिधेर्मदनात्मनाऽभिधानेन सुधानिधिदर्शनस्य मदनोद्भावकापह्नवनादपह्नुतिरित्यर्हति इति पदप्राधान्येन द्योत्यते। यथा वा मम-'वदनं सुषमाभरणां पृथुले चपले च तेऽबले ! नयने। इति सङ्गतं सुमुख्या न पुनर्मदमन्थरं गमनम् ॥' अस्यार्थः-हे अबले ! ते तव वदनं मुखं सुपमाभरणं 'सुषमा परमा शोभा सैवाभरणं यस्यास्तादृशं च पुनश्चपले पृथुले च नयने शोभेते इति सुमुख्यास्तव सङ्गतं युक्तियुक्तं न पुनर्मदमन्थरं गमनं सङ्गतं तवाबलत्वादिति भावः। अत्र च तव सुमुख्या मुखं सुन्दरं नयने पुनः पृथुले अथ चपले इति वरं यदसि। सुमुखी त्वम्। किन्तु त्वमबला बलविहीना मदं च बलाधीनमिति मदसम्बन्धाभावे निश्चीयमानेऽपि यत्तव मत्ताया इव गमनं तन्न शोभते इति स्वतः सम्भविना वस्तुना मदमन्थरस्य गमनस्य कारणाभावेऽपि तत्सद्भावकथनाद्विभावना। वदनस्य च सुषमाभारणोत्तया चन्द्राभिन्नत्वेनामिधानभिति रुपकम्। नयनयोः पुनश्चापत्वपृथुलत्वोक्त्या च मृगनयनसादृश्योक्त्या च निगरणात् रूपकातिशयोक्तिः। एवमेव गमनस्य मदमन्थरत्वमात्रोक्त्या प्रतीयते न तु साक्षादभिधीयते इति तस्यापि निगरणात्सैव। अथ तत्र कारणोत्प्रेक्षाभावेऽपि तस्य प्रतीयमानोक्त्या हेतूत्प्रेक्षा इत्येषां संसृष्टिः। असौ च सुमुख्या इति पदद्योत्या अथ स्वतः सम्भविनाऽलङ्कारेण पदद्योत्यो वस्तुध्वनिर्यथा मम 'अयि दयिते ? तव वदनं सुधानिधानं द्वितीयमभ्युदितम्। तदसहृदयमवलोक्य त्रस्येदिति निश्चितं स्थाने ॥' अस्यार्थः-अयि दयिते ! द्वितीयमभ्युदितं सुधानिधानं चन्द्रो वदनम्। तत्तस्मादेव असहृदयरसिकं राहुमवलोक्य त्रस्येदिति निश्चितं स्थाने युक्तम्। 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः। अत्र हि स्वतः सम्भविना रूपकेण "असहृदयपदमात्रमूलं ततो विरक्तिर्मयि पुनरनुरागस्तवोचित एवे" ति वस्तु व्यज्यते। यथावा- 'क्षणदाऽसावलक्षणदा, वनमवनं व्यसनमव्यसनम्। वत वीर ? तव द्विषतां पराङ्मुखे त्वयि सर्वमिति।'

यस्यार्थः-हे वीर ! बत कष्टं त्वयि पराङ्मुखे विमुखे सति तब द्विषतां सर्वं पराङ्मुखं विमुखं भवति। अत एव क्षणदा रात्रिरसौ अक्षणदा न क्षणमुत्सवं ददातीति तथाभूता अथ वनमवनं रक्षकमेवं व्यसनं विपद्व्यसनं द्यूतादिव्यसनापहारकम्। 'क्षणमुद्धव उत्सव' इति, 'व्यसनं विपदि भ्रंशे दोषे कामजकोपजे' इत्यमरः। अत्र हि स्वतः सम्भविना विरोधाभावस्योत्पादकेनार्थान्तरन्यासेन सर्वपदमूलम्। विधिरपि त्वामनुवर्तते। इति व्यज्यते। अथ स्वतः सम्भविनालङ्कारेण पदमूलोऽलङ्कारध्वनिर्यथा 'तव पत्यधरस्तन्वि ! म्लानपद्मदलं प्रगे। इति श्रुत्वा नववधूः करोति मुखमानतम्।' अस्यार्थः-हे तन्वि ! प्रगे प्रातःकाले तव पत्यधरो म्लानपद्मदलमिति श्रुत्वा नववधूरानतं मुखं करोतीति। अत्र रूपकेण त्वया नितान्तं पत्युर्मुखं चुम्बितं तेन तस्य म्लानत्वमिति काव्यलिङ्गो व्यज्यते। यथा मम-'सुभगे ! तव मुखमिन्दुर्मानसजातं बत प्रफुल्लयति। क्रीडनमेतत्तस्यैतस्य पुनः सङ्गतो मृत्युः।' अस्यार्थः—हे

सुभगे ! तब सुखेन्दुर्बत कष्टं मानसजातं कमलं कामं वा प्रफुल्लयति । एतत्तत्प्रफुल्लितत्वविधानं तस्य तव मुखेन्दोः क्रीडनं निरायासस्त्राध्यमेतस्य मम पुनर्हतकस्य सङ्गतो मृत्युर्निकटमुपेतो मृत्युः । अत्र पुनर्मुखमिन्दुरिति रूपकेण इन्दुर्यदि मानसजातं कमलं प्रफुल्लितमपि म्लापयेदिति युक्तं न पुनरेवं किन्त्वसौ म्लानमपि मानसजातं (मदनं) प्रफुल्लयतीति विरोधो बतेति पदद्योत्यस्तथा तस्य क्रीडा एतस्य मृत्युरिति रुपकेण विरोधङ्गतेन मानसजातस्योद्दीपनमात्रविधानेन एतस्य सन्निहितो मृत्युर्भवतीति कारणमनभिधाय कार्यस्यमृत्युसन्निधानकथनस्य स्फुरणात्तस्य पुनस्तदभेदकथनेन ग्रस्तत्वाद्विभावना, पुनरिति पदेन ध्वन्यते । पुनरिति अनभिधाने रूपकस्यैवोल्लास इति दिक् । यथा वा मम-'वदनसुधानिधिरेष प्रमदे ! न पुनस्त्वया तथा विहितः । तदिति सुधानिधिमपरं वीक्ष्य कृतार्था मुधा मनसि' अस्यार्थः-हे प्रमदे ! एष वदनसुधानिधिः त्वया पुनस्तथा न विदितः । तदिति हेतोरपरं द्वितीयं तदपेक्षया चानुत्कृष्टं सुधानिधिं वीक्ष्य मुधा कृतार्था कृतकृत्या भवसि । अत्रापि पुना रूपकेण विशेषोक्तिः मुधापदप्राधान्येनाभिव्यज्यते । अथ कविप्रौढोक्तिमात्रसिद्धेन यस्तुना पदद्योत्यो वस्तुध्वनिर्यथा मम-'अपि दयिते ! तव वदनं पायंपायं मनोभवो गर्जन् । स्मितमवलम्ब्य तमिस्रास्वपि हतकान्हन्त नो हन्ति ॥' अत्र हि वदनस्य पानं तेन च मनोविकारमात्रस्याप्यनङ्गस्य गर्जनं स्मितस्य चावलम्बनं तेन च गाढान्धकारास्वपि रजनीषु हननमिति सर्वं कविप्रौढोक्तिमात्रनिष्पन्नशरीरं, तेन पुनः यदि स्ववदनमस्मान्पाययेत्तर्हि वयमपि गर्जन्तस्तं मदनं प्रति रोदुं समुत्सहेमहि । इति न इतिपदप्राधान्येन ध्वन्यते । अत्र च कस्यापि वियोगिनः स्वप्नमात्रार्पितशरीरां नायिकां स्मरत्प्रबुद्धस्योक्तिरति विभावनीयम्। अत्र पुना रूपका तिशयोक्तिरपिव्यज्यते, वदनत्वेनाध्वस्तस्य सुधांशोः स्मितत्वेनाध्यस्तस्य च कुसुमस्य च गिरणात् । सा च गर्जन् हन्तीति पदद्योत्या ।'

अलङ्कारेणालङ्कारध्वनिमुदाहरति-'**पश्यन्ती**त्यादिना ।'

'**देव** राजन् ! 'देवं हृषीके देवस्तु नृपतौ तोयदे सुरे' इति हैमः । **त्वद्दानजलवाहिनीं**- तव यद्दानं तस्य यज्जलं सद्वाहिनी तस्य नदीरूपेण प्रवाहमिति यावत् । **असङ्ख्यपथगाम्** असङ्ख्या अगणिता ये पन्त्यानस्तान् गच्छतीति ताम् । असङ्ख्यभूत्वा सञ्चारकारिणीमित्यर्थः । 'अन्तात्यन्ताध्वदूरपासर्वान्तेषु डः ।' ३/२/४८ इति डः । **पश्यन्ती** निरीक्षणमाणा अत एव ह्रीणेति यावत् । **त्रिपथगा** गङ्गा त्रीन् पथो गच्छतीति सा । **आत्मानं** मार्गत्रयेण प्रवाहिस्वरूपम् **गोपयति** पिधाय रक्षतीति भावः । अत्र कस्यापि दानिप्रवरस्य राज्ञोऽभिनन्दनवर्णनम् । तथा पश्यन्तीति गोपयतीति क्रियाया हेतुवचनम् । तेन चैकत्वमिति काव्यलिङ्गालङ्कारः ॥ २८७ ॥'

उदाहृतस्य पद्यस्यान्यदीयत्वभ्रमापनोदाय आह ।

इदमुदहृतम् । **मम** 'पद्यनिति शेषः ।'

उदाहरणीयं निरूपयति-**अत्रे**त्यादिना ।

**'पश्यन्त्यसंख्यपथगां त्वद्दानजलवाहिनीम्।**

**देव ! त्रिपथगात्मानं गोपयत्युग्रमूर्धनि ॥'**

इदं मम । अत्र पश्यन्तीति कविप्रौढोक्तिसिद्धेन काव्यलिङ्गालंकारेण न केऽप्यन्ये दातारस्तव सदृशा इति व्यतिरेकालंकारोऽसंख्यपदद्योत्य:। एवमन्येष्वप्यर्थशक्तिमूलसंलक्ष्यक्रमभेदेषूदाहर्यम्।

तदेवं ध्वनि: पूर्वोक्तेष्वष्टादशसु भेदेषु मध्ये शब्दार्थशक्त्युत्थो व्यङ्ग्यो वाक्यमात्रे भवन्नेक:। अन्ये पुन: सप्तदश वाक्ये पदे चेति चतुस्त्रिंशदिति पञ्चत्रिंशद्भेदा:।

---

## विवृति:

कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यं वस्तुपदप्रकाश्यं यथा—'चन्द्रधवलासु रात्रिषु धनुरपि कुसुमं समास्फाल्य। एकच्छत्रमनङ्गस्त्रिभुवनराज्यं करोत्यनिशम् ॥' अत्रानङ्गस्य चापास्फालनपूर्वकत्रिभुवनाधिकारकरणस्यालीकत्वात्कविप्रौढोक्तिसिद्धेन तेन वस्तुना येषां कामिनामसौ राजा तेषां न कोऽपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरै: केवलं तैर्निशातिवाह्यत इति त्रिभुवनराज्यपदद्योत्यं वस्तु व्यज्यते। कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्योऽलंकार: पदप्रकाश्यो यथा—'निशितशरधियार्पयत्वनङ्गो दृशि सुदृश: स्वबलं वयस्यराले। दिशि निपतति यत्र सा च तत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्था: ॥' अवस्ता: प्रागुक्ता विरहकालीना दश कामदशा:। (१७४ पृ.) अत्र क्रमिकाणां युगपदुन्मेषणरूपं वस्तु वाक्यार्थ: स्वतोऽसंभवित्यात्कविप्रौढोक्तिसिद्धस्तेन व्यतिकरपदद्योत्यो विरोधो व्यज्यते। कविप्रौढोक्तिसिद्धालंकारव्यङ्ग्यं वस्तु पदप्रकाश्यं यथा—'संतापभाजा हृदयेन हारो निवार्यमाणोऽपि मुहुर्मृगाक्ष्या:। वक्षोजभारस्य वयस्यभावाद्विशुद्धजातिर्न चलत्यमुष्मात् ॥' विशुद्ध जातिर्विशुद्धमुक्ताजातिघटित:। अत्र विशुद्धजातित्वहेत्वलंकारेणानवरतकम्पमान एवास्त इति न चलतीति पदव्यङ्ग्यं वस्त्वनपगमनहेतुत्वस्यावास्तवत्वेनारोप्यमाणत्वात्कविप्रौढोक्तिसिद्धत्वम् ॥ कविप्रौढोक्तिसिद्धालंकारव्यङ्ग्यमलंकारं पदप्रकाश्यमाह—**पश्यन्तीति**। अत्र दानजलस्य नदीरूपत्वं स्वतोऽसंभवि कविप्रौढोक्त्या सिद्धम्। अत्रोत्प्रेक्षापि व्यङ्ग्या। **एवमन्येष्वपीति**। कविप्रौढोक्तिसिद्धवस्त्वलंकारव्यङ्ग्येषु मयोदाहृतं कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्त्वलंकारव्यङ्ग्येषु चतुर्षु भेदेषु। यथा मम—'सुतरामक्षमस्तत्र पञ्चभि: पुष्पस्त्रिभि:। युवत्यामोघया शक्त्या जगद्विध्यति मन्मथ: ॥' अत्र नायिकारूपशक्त्या मन्मथस्य जगद्वेधनमसंभवि कविनिबद्धप्रौढोक्तिसिद्धं वस्तु तेन नायिकाया: सर्वमनोहरस्वरूपं वस्तु जगत्पदद्योत्यं प्रकाश्यते। 'यो व्रजत्यतितरां सहायतां हन्त विश्वविजये मनोभुव:। तं निशम्य मधुरं पिकस्वरं क: प्रयाति धृतिमानतानने ॥' अत्र पिकस्वरसहायस्मरस्य विश्वजयो वस्तु कविनिबद्धप्रौढोक्तिसिद्धं तेन मानभङ्गकारणे पिकस्वरे सत्यपि मानो न भङ्ग इति विशेषोक्तिलंकार आनत इतिपदद्योत्यो व्यज्यते। 'संतप्तचामीकरचारुवर्णे कर्णे निबद्धं नवकर्णिकारम्। तदेव शस्त्रं मदनस्य जैत्रं जगत्रयं तेन जितं भवत्या ॥' अत्र नायिकाकर्णार्पितं नवकर्णिकारमेव मदनशस्त्रमिति रूपकं कविनिबद्धप्रौढोक्तिसिद्धं कर्णिकारेण तव मुखस्य तादृशी शोभा जाता यया वीतरागा अपि स्मरपराधीना भवन्तीति वस्तु जगत्त्रयपदप्रकाश्यं व्यञ्जयति। 'यशश्चन्द्र इवाभाति राजंस्ते दानसंभवम्। दैन्यं न हन्यते हन्त तेन दृष्टिविरोधि मे ॥' अत्र यशस: शुक्लत्वासंभवात्तेन चन्द्रोपमानमप्यसंभवि कविनिबद्धप्रौढोक्तिसिद्धं तेन दैन्यमेव तम इति रूपकं दृष्टिपदद्योत्यं व्यज्यते।

## विवृतिपूर्तिः

**उग्रेति**। उग्रमूर्धनि शिवशिरसि। अत्रोग्रपदेन मूर्ध्नोऽतिशयितगोपनसमर्थदेशत्वं द्योत्यते ॥

**तवेति**। 'तुह वल्लहस्स गोसम्मि—' इति प्रकाशोदाहृतसर्वविपुलायाश्छाया ॥

**चन्द्रेति**। 'राईसु चन्दधवलासु—' इति प्रकाशोदाहृतसर्वविपुलायाश्छाया ॥

**संतापेति**। 'वारिज्जन्तो वि उणो—' इति प्रकाशोदाहृतगीतेश्छाया ॥

**पञ्चत्रिंशदिति**। शब्दशक्तिमूलो द्विविधः, अर्थशक्तिमूलो द्वादशविधः, अविवक्षितवाच्यो द्विविधः, असंलक्ष्यक्रमव्यङ्ग्य एक इति सप्तदशानां वाक्यपदगतत्वेन द्वैविध्ये चतुस्त्रिंशत्, एकार्थशक्तिमूलकस्त्वेक इति पञ्चत्रिंशत् ॥

## विज्ञप्रिया

संक्षेपार्थमलङ्कारस्य वस्त्वलङ्कारव्यञ्जनामुपेक्ष्य प्रौढोक्तिसिद्धालङ्कारस्य व्यङ्ग्यमलङ्कारपदद्योत्यमाह—**पश्यन्तीति**। त्वद्दानजलवाहिन्या नद्या असंख्यपथगामित्वदर्शनात् पथत्रयगामिन्या गङ्गाया लज्जया शिवशिरसि आत्मगोपनम्। **काव्यलिङ्गेनेति**—दर्शनस्य आत्मगोपनहेतुत्वात् हेत्वलङ्कारेण इत्यर्थः।

## कुसुमप्रतिमा

८—पदगतं कविप्रौढोक्तिसिद्धालङ्कारेणालङ्कारध्वनिमुदाहरति पश्यन्तीति। राजस्तुतिरियम्। हे देव! राजन्! तव दानजलवाहिनीं धनवितरणकालीनोत्सर्गजलनदीम्, असंख्यपथगां नानादिक्षु दानादनन्तपक्षगामिनीम्, पश्यन्ती त्रिपथगा केवलत्रिपथगामिनी गङ्गा, उग्रमूर्द्धनि महादेवमस्तकीयजटामध्ये आत्मानं स्वदेहं गोपयति लज्जया तिरोदधाति। असंख्यपथगामिन्या दर्शने त्रिपथमात्रगामिन्या लज्जा सम्भवत्येवेति भावः।

अत्रेति। कविप्रौढोक्तिमात्रसिद्धेन न तु यथार्थेनेत्यर्थः, जलमया गङ्गाया दर्शनासम्भवात्। यतः पश्यन्ती अतएव गोपयतीति पदार्थहेतुककाव्यलिङ्गालङ्कारेणेत्यर्थः। असंख्यपदेन द्योत्यो व्यङ्गः। अतएवास्य ध्वनेः पदगतत्वमिति भावः।

एवमिति। अन्येषु उदाहृतेभ्यो भिन्नेषु।

३—तत्र स्वतःसम्भविना अलङ्कारेण वस्तुध्वनिः पदगतोयथा रघुवंशे—

"अथवा कृतवाग्द्वारेवंशेऽस्मिन् पूर्वसूरिभिः। मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥" अत्र स्वतःसम्भविना उपमालङ्कारेण कवेर्दुर्बलतारूपवस्तुध्वनिः सूत्रपदद्योत्यः।

४—स्वतःसम्भविना अलङ्कारेणालङ्कारध्वनिः पदगतो यथा शिशुपालवधे—

"आज्वल्यमाना जगगतः शान्तये समुपेयुषी। व्यद्योतिष्ट सभावेद्यामसौ नरशिखित्रयी ॥"

अत्र नरशिखीति स्वतः सम्भविना रूपकालङ्कारेण कृष्णबलरामोद्भवरूवह्नित्रयात् शान्तिहोमौयवह्नेर्भेदेऽपि तयोरभेदाध्यवसायमूलाया अतिशयोक्तेर्ध्वनिः शान्तिपदद्योत्यः।

५—कविप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः पदगतो यथा मम रुक्मिणीहरणे—

"कलावतः सकलजनप्रमोदिनः सितात्मनोऽप्यमृतकरस्य यस्य च।

कलङ्किनीं किल परिचायिणीं तनोर्विधोर्विधां ननु विदधौ पटुर्विधिः ॥"

अनेन कविप्रौढ़ोक्तिसिद्धेन श्लोकार्थरूपेण वस्तुना भीष्मकराजस्य सकलकलङ्कशून्यत्वरूपवस्तुध्वनिः परिचायिनीपदयोग्यः।

६—कविप्रौढ़ोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिः पदगतो यथा मत्तातश्रीगङ्गाधरविद्यालङ्कारपादानाम्—

"यशसा विशदेन तेऽधुना धरणीमण्डलमण्डनात्मना।

द्विजराजरुचाऽप्यराजिता विलराजिः परिराजते गिरेः ॥"

अनेन कविप्रौढ़ोक्तिसिद्धेन श्लोकार्थरूपेण वस्तुना चन्द्रादपि तव यशोऽधिकदेशष्वापीति व्यतिरेकालङ्कारध्वनिरराजितापदद्योत्यः।

७—कविप्रौढ़ोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिः पदगतो यथा नैषधे—

"श्रियास्य योग्याहमिति स्वमीक्षितुं करे तमालोक्य सुरूपया धृतः।

विहाय मैमीमपदर्पया कथा न दर्पणः श्वांसमलीमसः कृतः ॥"

अत्र प्रौढ़ोक्तिसिद्धेनातिशयोक्त्यलङ्कारेण दमयन्त्येव नलस्य योग्येति वस्तुध्वनिः "विहाय मैमीम्" इति पदद्वयद्योत्यः।

९—कविनिबद्धजनप्रौढ़ोक्तिसिद्धेन वस्तुना वस्तुध्वनिः पदगतो यथा तत्रैव—

"पृथुवर्त्तुलन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया।

विधिरेककवक्रचारिणं किमु निर्मित्सति मान्मथं रथम् ॥"

अनेन कविनिबद्धहंसप्रौढ़ोक्तिसिद्धेन श्लोकार्थरूपेण वस्तुना दमयन्त्या नितम्बदेशोऽतीव अरोद्दीपक इति वस्तुध्वनिर्मान्मथपदद्योत्यः।

१०—कविनिबद्धप्रौढ़ोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिः पदगतो यथा किराते—

नाभियोक्तुमनृतं त्वमिष्यसे कस्तपस्विविशिखेषु चादरः।

सन्ति भूभृतं शरा हि नः परे ये पराक्रमवसूनि वज्रिणः ॥'

अनेन कविनिबद्धदूतप्रौढ़ोक्तिसिद्धेन श्लोकार्थरूपेण वस्तुना किरातराजादर्जुनस्य न्यूनत्वरूपव्यतिरेकालङ्कारध्वनिस्तपस्विपफ्दद्योत्यः।

११—कविनिबद्धजनप्रौढ़ोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिः पदगतो यथा मम जानकीविक्रमनाटके—

"नहि विकसति चन्द्रे चन्द्रिका मन्दहासा प्रतपति तपमे वा नो सवर्णा विवर्णा।

कथितयशसि रामे किं स्मितं रामरामे भवति गुणिनि पत्यौ कापि वामा न वामा ॥"

अनेन कविनिबद्धविश्वामित्रप्रौढ़ोक्तिसिद्धेन दृष्टालङ्कारेण तादृशावसारे सीतायाः स्मितं पत्नीविरुद्धं गहितमिति वस्तुध्वनिः किं पदद्योत्यः।

१२—कविनिबद्धप्रौढ़ोक्तिसिद्धेनालङ्कारध्वनिः पदगतो यथा शिशुपालवधे—

"प्रतिवाचमदत्त केशवः शपजानाय न चेदिभूभुजे ।अनुहुङ्कुरुते धनध्वनिं नहि गोमायुरुतानि केशरी ॥"

अनेन कविनिबद्धसात्यकिप्रौढ़ोक्तिसिद्धेन दृष्टान्तालङ्कारेण श्रीकृष्णसिंहयोः शिशुपालशृगालयोश्च तुल्यतारूपोपमालङ्कारध्वनिः केशरिगोमायुपदद्योत्यः ।

अन्ये त्रयस्तु पदगता वृत्तावेव दर्शिताः ।

एतावता पुनर्ध्वनिसंख्याः सङ्कलयितुमाह तदेवमिति । शब्दार्थशक्त्युत्थः शब्दार्थोभयशक्तिमूलः । वाक्यमात्रे केवलवाक्ये न तु पदे इत्यर्थः । तत्कारणन्तुक्तम् । वाक्ये सप्तदश, पदे च सप्तदशेति मिलित्वा चतुस्त्रिंशदित्यर्थः । वाक्यमात्रे सम्भाव्यं शब्दार्थोभयशक्तिमूलमेकामादाय पञ्चत्रिंशद्भेदा इति बोध्यम् ।

## विमला

कविप्रौढ़ोक्तिसिद्धालङ्कारव्यङ्ग्यमलङ्कारं पदप्रकाश्यमाह, पश्यन्तीति ।—हे देव ! त्रिफथगा—गङ्गा, तव दानजलवाहिनीम्, असङ्ख्यपथगां—बहुमार्गगामिनीं, पश्यन्तो आत्मानम्, उग्रस्य—हरस्य, मूर्द्धनि—शिरसि, [उग्रमूर्द्धपदेन मूर्ध्नोऽत्यन्तगोपनसमर्थदेशवत्वं सूचितम्) गोपयति । [अत्र दानजलस्य नदीरूपत्वं स्वतोऽसम्भविकविप्रौढ़ोक्त्या सिद्धम् । अत्रोत्प्रेक्षाऽपि व्यङ्ग्या] ।

अत्रेति ।—काव्यलिङ्गालङ्कारेण—"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" इति लक्षणोक्तेन, पश्यन्तीति हेतुगर्भविशेषणरूपेण इत्यर्थः । एवमन्येष्वपि इति ।—कविप्रौढ़ोक्तिसिद्धवस्त्वलङ्कारव्यङ्ग्येषूदाहृतं कविनिबद्धवक्तृप्रौढ़ोक्तिःसिद्धवस्त्वलङ्कारव्यङ्ग्येषु चतुर्षु भेदेषु यथा,—"सुतरामक्षमस्तव पञ्चभिः पुष्पपत्रिभिः । युवत्याऽमोधया शक्त्या जगद्विध्यति मन्मथः ॥" अत्र नायिकारूपशक्त्या मन्मथस्य जगद्वेधनमसम्भवि, कविनिबद्धप्रौढ़ोक्तिसिद्धं वस्तु, तेन नायिकायासर्वमनोहरस्वरूपं वस्तु जगत्पदद्योत्यं प्रकाश्यते । "यो व्रजत्यतितरां सहायतां हन्त ! विश्वविजये मनोभुवः । तं निशम्य मधुरं पिकस्वरं कः प्रयाति धृतिमानताननने ! ॥" अत्र पिकस्वरसहायस्मरस्य विश्वजया वस्तु कविनिबद्धप्रौढ़ोक्तिसिद्धं, "तेन मानबङ्ककारणे पिकस्वरे सत्यपि भानो न भग्नः" इति विशेषोक्तिरलङ्कारः आनत इति पदद्योत्यो व्यज्यते । "सन्तप्तक्षामीकरचारुवर्णे कर्णे निबद्धं नवकर्णिकारम् । तदेव शस्त्रं मदनस्य नैचं जगत्रयं तेन जितं भवत्या ॥" अत्र नायिकाकर्णार्पितं नवकर्णिकारमेव मदनशस्त्रमिति रूपकं कविनिबद्धप्रौढ़ोक्तिसिद्धं, कर्णिकारेण तव मुखस्य तादृशी शोभा जाता, यया वीतरागा अपि स्मरपराधीना भवन्ति, इति वस्तु जगन्त्रयपदप्रकाश्यं व्यञ्जयति । "यशश्चन्द्र इवाभाति राजंस्ते दानसम्भवम् । दैत्यं न हन्यते हन्त ! तेन दृष्टिविरोधि मे ॥" अत्र यशसः शुक्लत्वासम्भवात् तेन चन्द्रोपमानमप्यसम्भवि कविनिबद्धप्रौढ़ोक्तिसिद्धं, तेन दैन्यमेव तमः इति रूपकं दृष्टिपदद्योत्यं व्यज्यते इति दिक् ।

प्रबन्धे इति ।—अर्थशक्त्युद्भवः ध्वनिः धीरैः,—विद्वद्भिः, प्रबन्धे—महावाक्येऽपि मतः—कथितः । पञ्चत्रिंशद्भेदाः पूर्वोक्ताः; प्रबन्धगताश्च द्वादशेति मिलित्वा सप्तचत्वारिंशद्भेदाः इति बोध्यम् ।

## लक्ष्मी

तत्रैव कविप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः पदगतो यथा—

'रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्रापम् ।

**एकच्छत्रमिव करोति भुवनराज्यं विजृम्भमाणः ॥'**

मानिनीं प्रति माननिर्वाहः कठिन इत्येतद्बोधिका सख्युरुक्तिरियम्।

अत्र कविप्रौढोक्तिसिद्धेन वस्तुना 'स्वशासकानङ्गपारवश्येन कुशलैः कामिभिरुपभोगपरैरेव निशातिबाह्यते' इति वस्तु भुवनराज्यपदेन प्राधान्येन व्यज्यते। अत एव पदगतत्वम्। 'सज्जयति सुरभिमासः' इत्यत्र तु तादृशपदाभावात् वाक्यगतत्वमित्यनयोर्भेदः।

तत्रैव कविप्रौढोक्तिसिद्धेन वस्तुनालङ्कारध्वनिर्यथा—

**'निशितशरधियार्पयत्यनङ्गो दृशि सुदृशः स्वबलं वयस्यराले।**

**दिशि निपतति यत्र सा च तत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥'**

अवस्थाः प्रागुक्ता विरहकालीना दश कामदशाः। अत्र 'व्यतिकरमेत्यावस्ताः समुन्मिषन्तीति' वस्तुना परस्परविरुद्धा अपि हसितरुदितनिर्वेदोन्मादादयोऽवस्थाः युगपद्भवन्तीति विरोधालङ्कारो व्यतिकरपदेन प्राधान्येन व्यज्यते। अत्र शरे योद्धा स्वबलार्पणं तात्पातदिशि चावस्थासमुन्मेष इति सर्वं कविप्रौढोक्तिमात्रसिद्धम्। व्यतिकरपदस्य प्राधान्यात् पदगतत्वम्। 'रजनीषु विमलभानोः' इत्यादौ तु नेदृशं किमपि पदं व्यञ्जकमिति वाक्यगतत्वमेवेति भेदः। तत्रैव कविप्रौक्तिसिद्धेनालङ्कारेण वस्तुध्वनिः पदगतो यथा—

**'सन्तापभाजा हृदयेन हारो निवार्यमाणोऽपि मुहुर्मृगाक्ष्याः।**

**वक्षोजभारस्य वयस्यभावाद्विशुद्धजातिर्न चलत्यमुष्मात् ॥'**

नायिकाविपरीताचरणसूचिका कवेः प्रौढोक्तिरियम्। विशुद्धजातिर्विशुद्धमुक्ताजातिघटितः। अत्र विशुद्धजातित्वलक्षणकाव्यलिङ्गालङ्कारेण हारोऽनवरतं कम्पमान एवास्ते इति—'न चलति' पदद्योत्यं वस्तु। अत्र मुक्ताजातेरत्यन्तशुभ्रत्वरूपे विशुद्धत्वे ब्राह्मणत्वादिकुलविशुद्धत्वाध्यवसायात्तस्य विशुद्धत्वस्याचलनहेतुता स्वतोऽसम्भविनीति कविप्रौढोक्तिसिद्धत्वम्। तथा 'न चलती'ति पदस्य प्राधान्यात् पदगतत्वम्। **'दशाननकिरीटेभ्यः'** इत्यादौ तु न किमपि पदमीदृशं व्यञ्जकमिति वाक्यगतत्वमेवेत्यनयोर्भेदः।

कविप्रौढोक्तिसिद्धेनालङ्कारेणालङ्कारध्वनिं पदगतं स्वयमेवोदाहरति—पश्यन्तीति। राजस्तुतिरियम्। हे देव राजन्! 'राजा भट्टारको देवः' इत्यमरः, 'देवं हृषीके देवस्तु नृपतौ तोयदे सुरे' इति हैमः। तव दानजलवाहिनीं वित्तप्रदानकालीनोत्सर्गजलनदीम्, असंख्यपथगां नानादिक्षु वितरणादनन्तमार्गगामिनीम्, पश्यन्ती त्रिपथगामिनी भागीरथी उग्रमूर्द्धनि हरशिरसि आत्मानं स्वशरीरं गोपयति व्रीडया तिरोदधाति। त्वद्दानजलवाहिन्या नद्या असंख्यपथगामित्वदर्शनात् पथत्रयमात्रगामिन्याः लज्जा सम्भवत्येवेति भावः।

अत्रेति। कविप्रौढोक्तिमात्रसिद्धेन न तु वास्तविकेनेत्यर्थः। प्रवाहरूपायाः दर्शनासम्भवात्। यतः 'पश्यन्ती अवलोकयन्ती अत एव गोपयति' इति पदार्थहेतुककाव्यलिङ्गालङ्कारेणेत्यर्थः। असंख्यपदद्योत्यो व्यङ्ग्यः, अत एव पदगतत्वम्। 'धम्मिल्ले नवमल्लिकासमुदयः' इत्यादौ तु नेदृशं किमपि पदमिति वाक्यगतत्वमेवेति भेदः।

एवमन्येष्वपीति। उदाहृतभिन्नेषु स्वतः सम्भव्यलङ्कारेण वस्तुध्वन्यादिष्वित्यर्थः। उदाहार्यमिति। तत्र स्वतः सम्भव्यलङ्क्रेण वस्तुध्वन्यादिषु पञ्चानामुदाहृतं मया, अथावशिष्टमुदाह्रियते। तत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः पदगतो यथा—

**'नव पूर्णिमा मृगाङ्कस्य सुभग ! कस्त्वमसि भण मम सत्यम्।**

**का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥'**

वृद्धपरस्त्र्यासक्तं स्वामिनं प्रति खण्डिताया उक्तिरियम्।

अत्र नवत्वेन चाञ्चल्यं क्षणिकानुरागित्वम्। पूर्णिमाचन्द्रः प्रदोषे रज्यतेऽनन्तरं तु विरज्यते। एवं पूर्णिमां मृगाङ्कत्वेन नायिकान्तरानुरागित्वं कलङ्कित्वम् प्रदोषपदेन प्रकृष्टदोषवत्वम्। रजनीपदेन मालिन्यं च व्यज्यते। अत्र कविनिबद्धा नायिका वक्त्री तथा च यथोक्त वाक्यार्थरूपेण वस्तुना मयीवान्यस्यामपि नवेत्यादिपदेन प्रथमासक्तस्त्वमिति प्रदोषत्यादि पदेन तु तत इत्युभयपदद्योत्यं वस्तु व्यज्यते, अत्रोभयोः पदयोः प्राधान्यात्पदगतत्वमवगन्तव्यम्। 'सज्जयति सुरभिमास'इत्यादौ तु न किमपि पदं प्राधानमिति वाक्यगतत्वमिति भेदः। न चात्र 'प्रदोषरजनीव' इत्युपमालङ्कारसत्त्वेन वस्तुध्वनित्वं कथमिति वाच्यम्, तदनुदानेऽपि 'प्रदोषरजनी तव का' इत्येतावतैव व्यङ्ग्यव्यञ्जनं सम्भवतीति वस्तुमात्रस्य व्यञ्जकत्वोपपत्तेः। यथा वा **नौषधे**—

**'पृथुवर्त्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया।**

**विधिरेककचक्रचारिणं किमु निर्मित्सति मान्मथं रथम् ॥'**

अथ कविनिबद्धहंसप्रौढोक्तिसिद्धेन वाक्यार्थरूपेण वस्तुना दमयन्त्या नितम्बभागोऽतीव कामोद्दीपक इति वस्तुध्वनिर्मान्मथपदव्यङ्ग्यः।

१० कविबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुनालङ्कारध्वनिर्यथा—

**'सखि ! नवनिधुवनसमरेऽङ्गपाली सख्या निबिडया।**

**हारो निवारित एवोच्छ्रियमाणस्ततः कथं रमितम् ॥'**

नवोढां नायिकां प्रति अत्यन्तविश्वस्ताया रसज्ञाया संख्या उक्तिरियम्।

अत्र 'निधुवनसमरे' इति रूपकस्य व्यञ्जनायामप्रयोजकतया वाच्येन वस्तुमात्रेण हारच्छेदानन्तरं प्रौढाङ्गनारताद्विलक्षणं नवोढायास्ते रतमभूत्तत्कथय कीदृगिति **व्यतिरेकालङ्कारः** कथंपदद्योत्य इति। कथंपदप्राधान्यादेव पदगतत्वम् 'रजनीषु विमलाभानो' रित्यादिषु तु नैतादृशं पदमिति वाक्यगतत्वमेव।

कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिर्यथा—

**विश्रृङ्खलां त्वां सखि ! दृष्ट्वा कुटिलेन तरलतरदृष्टिम्।**

**द्वारस्पर्शमिषेण चात्मागुरुक इति पातयित्वा विभिन्नः ॥**

नदीकूले लतागहने कृतसङ्केतमप्राप्तं गृहप्रवेशसमये पश्चादगच्छन्तं कामुकं दृष्ट्वा पुनर्नदीगमनाय बुद्धिपूर्वं द्वारस्पर्शव्याजेन घटं स्फोटितवतीं नायिकां प्रति सख्याः 'त्वदभिप्रायोऽवगतो मया तत्समाश्वासं विधाय समीहित सिद्धये व्रज अहं त्वत्पश्चात्तन्निकटे सर्वं समाधास्ये' इत्यभिप्रायगर्भाऽविदग्धजनप्रतारणाय उक्तिरियम्। विभिन्नेत्यन्तर्भावितण्यर्थोऽयम्, तेन बिभेदित इत्यर्थः। तथा च नायं द्वारस्पर्शाद्घटनाशस्त्वया कृतः किन्तु गुरुतया परपीडकत्वात् घटेनैव स्वात्मा बिभेदित इत्यपह्नुतिरत्राङ्कारस्तेन द्वारस्पर्शमिषेणेति पदद्योत्यं वस्तु द्योत्यते। द्वारस्पर्शमिषेणेति पदप्राधान्यात् पदगतत्वमस्य 'दशाननकिरीट' इत्यादौ तु न तथेति वाक्यगतत्वमेवेति भेदः।

कविप्रौढोक्तिसिद्धेनालङ्कारेणालङ्कारध्वनिर्यथा—

**'ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा।**

**वृद्धाऽपि नवोढेव परवधूरहह हरति तव हृदयम्॥'**

वृद्धपरवधूमनुरक्तं नायकमुपहसन्त्यास्तरुण्या उक्तिरियम्। अत्र परवधूत्वेन सा तव हृदयं हरतीति काव्यलिङ्गालङ्कारेणास्मानुज्झित्वा वृद्धां परवधूमभिलषसीति त्वदाचरितं वक्तुं न शक्यत इत्याक्षेपालङ्कारः प्राधान्येन परवधूपदेन द्योत्यते। 'महिला सहस्रभरिते' इत्यादौ तु नैतादृशं किमपि पदं व्यञ्जकमिति वाक्यगतत्वमेवेति भेदः।

एतावता पुनर्ध्वनिसंख्याः गणयितुमुपक्रमते—तदेवमिति। शब्दार्थशक्त्युत्थः शब्दार्थोभयशक्तिमूलः व्यङ्ग्यो व्यङ्ग्यध्वनिरिति यावत्, वाक्यमात्रे इति। मात्रपदेन पदव्यवच्छेदः, हेतुस्तत्र पूर्वमेव दर्शितः। पञ्चत्रिंशदिति—द्विविधः शब्दशक्तिमूलः, द्वादशविधोऽर्थशक्तिमुलः, द्विविधोऽविवक्षितवाच्यः, एक असंलक्ष्यक्रमंव्यङ्ग्य इति सप्तदशानां पदवाक्यगतत्वेन चतुस्त्रिंशत्, शब्दार्थोभयशक्त्युत्थस्त्वेक इति मिलित्वा पञ्चत्रिंशदित्यर्थः।

एवं ध्वनेः पञ्चत्रिंशद्भेदान् निरूप्य प्रकारान्तरेण भेदान् निरूपयति—प्रबन्धेऽपीति। अर्थशक्त्युद्भवोऽर्थशक्तिमूलो द्वादशविधो ध्वनिः प्रबन्धेऽपि न केवलं पदवाक्योरेव धीरैर्मतः। तथा च पूर्वोक्तैः पञ्चत्रिंशद्विधैः सह मिलित्वा एतावन्तं यावत् सप्तचत्वारिंशद्भेदा ध्वनयो भवन्ति।

## रुचिरा

**अत्रोदाहृते पद्ये पश्यन्तीति** निरीक्षमाणे "लक्षणहेत्वोः क्रियायाः।" ३/२/१२५ इति शता 'उगितश्च।' ४/१/६ इति डीप् "शप्श्यनोर्नित्यम्। ७/१/८१ इति नुम्। **कविप्रोढोक्तिसिद्धेन** एतत्पदमूलकत्वेन कविप्रौढोक्तिसिद्धेनेत्यर्थः। दानजलस्य नदीरूपत्वं स्वतस्समभवतीति कवेः प्रौढोक्त्यैव सिद्धम्। **काव्यलिङ्गालङ्कारेण** तद्द्वारेति यावत्। **न। के अपि। अन्ये त्वद्भिन्नाः। तव** त्वया। "तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यरस्याम्।" २/३/७२ इति तृतीयायाः पाक्षिकत्वात् षष्ठी। **सदृशास्तुल्याः। दातारो** दानिनः। **इतीत्येवमुपमानान्तरोक्त्यभावद्वारैतस्य** वैलक्षण्याभिधानादिति भावः। **व्यतिरेकालङ्कारः**। आधिक्यमुपमेस्योपमानादितिः वक्ष्यमाणस्वरूप इति भावः। **असङ्ख्यपदद्योत्यः** असङ्ख्येति पदमात्रप्रकाश्य इत्यर्थः। 'अस्ती'ति शेषः। यद्यपि गोपयतीत्युत्प्रेक्षा तथोत्प्रेक्षणा त्तन्मूला, तथा गोपनक्रियायाः कत्र्यर्याः पश्यन्तीत्यादिपदानां साभिप्रायत्वात्परिकरोऽपि तत्पदमूलः। तथापि व्यतिरेकस्यालङ्कारान्तरापेक्षया चमत्काराधिक्येन नोत्प्रेक्षा न वा परिकरः। यथा वा मम-'अयि सुन्दरि! तव वदनं नित्यं पूर्णं सुधा निधिर्मत्वा। हन्त पततु। परिष्टान्मध्येऽम्बुधि नित्यमेवासौ॥' अस्यार्थः। अयि सुन्दरि! सुधानिधिस्तव वदनं नित्यं पूर्णं मत्वा हन्त! उपरिष्टान्मध्येऽम्बुधि नित्यमेवासौ॥' अस्यार्थः। अयि सुन्दरि! सुधानिधिस्तव पदनं नित्यं पूर्णं मत्वा हन्त! उपरिष्टान्मध्येऽम्बुधि समुद्रान्तर्नित्यमेवासौ सुधानिधिः पतति। अत्र च चन्द्रः प्रतिदिनं क्षयवृद्धिशीलं वदनं पुनर्नित्यमेव पूर्णं द्वितीयं सुधाया निधानमिति वदनस्योपमानत्वेन प्रसिद्धाश्चन्द्रमसस्तस्य व्यतिरेकस्तन्मूलया पुनर्मत्वा इति सूच्यमानयोत्प्रेक्षया हन्त पतत्युपरिष्टादिति विरोधस्तथैवं प्राणांस्त्युक्तुं प्रवर्तमानोऽपि जीवतीति। यद्वा-मम जन्माम्बुधिरिति जन्मभूमिमुपेत्य कान्तिर्वर्धनीयेति यतमाने नाभीष्टपूर्तिरिति कारणसद्भावेऽपि कार्यासङ्गतिर्नाम विभावना।'

एवं स्वतःसम्भवि वस्तुव्यङ्ग्याद्युदाहृत्य कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुव्यङ्ग्याद्युदाहणानि तथैवावसेयानीत्याह एवमित्यादिना।

**एवं** यथोदाहृतेषु तथा। **अन्येषूदाहृतव्यतिरिक्तेषु अपि। अर्थशक्तिमूलसंलक्ष्यक्रम** (व्यङ्ग्य) **भेदेषु** कविनिबद्धवक्तृप्रौढोक्तित्रद्धेष्विति यावत्। **उदाहार्यमुदाहरणं बोध्यम्**। तत्र कविनिबद्धवृक्तृप्रौढोक्तिसि द्धव-स्तुना वस्तुध्वनिर्यथा मम- 'सखि ! सम्प्रति तव वदनं विकिरति हन्त ! स्मितं तत्किमिति। प्रकृतित एव सदा यच्छारदपूर्णेन्दुमानहरम्।' अस्यार्थः-हे सखि ! यत् प्रकृतितः स्वभावादेव शारदपूर्णेन्दुमानहरं शरत्कालि कस्य पूर्णस्य चन्द्रमसो मानापहारि दृष्टमिति शेषः। तत् स्मितं (कर्म) तव वदनं 'कर्तृ' किमिति हन्त सम्प्रति न विकिरति। अत्र च कविनिबद्धा काचित्सखी सङ्केतस्थेले नायकमप्राप्य प्रत्यागच्छन्तीं हसन्ती प्रौढोक्त्याहेति। अन्यथा स्मितस्य विकीर्णत्वं वदनस्य पुनर्विकिरतीति क्रियायाः। कर्तृत्वं शारदपूर्णेन्दोर्मानापहारित्वं च स्मितस्य सर्वकालिकत्वमिति कथं सङ्घटेत। तेन च स्मितं न सम्प्रति विकिरतीति वस्तुना नायकोऽद्य न लब्धस्तत एव खण्डितैवमसीति वस्तु सम्प्रति इतिपदद्योत्यम्। अथ वस्तुनालङ्कारध्वनिर्यथा मम-'सलिले तपदरविन्दं ग्लावं वा लीयमानमभ्रेषु। सुमुखि ! कृतार्थय मैवं यामो यामोऽपयात्येषः।' अयि सुमुखि ! सलिले जले तपत्तपः कर्त्तुं प्रवर्तमानमरविन्दं कमलमभ्रेषु। मेघेषु लीयमानं धावित्वा धावित्वा तिरोभवन्तं ग्लावं ग्लानिधर्म्माणं चन्द्रं वा मैवं कालं 'यापयित्वे' ति शेषः। कृतार्थय कृतार्थं लीयमानं धावित्वा धावित्वा तिरोभवन्तं ग्लावं ग्लानिधर्म्माणं चन्द्रं वा मैवं कालं 'यापयित्वे' ति शेषः। कृतार्थय कृतार्थं कुरु यामः स्वयमेव तत्सन्निधावुत्थाय गच्छामः। एष यामस्तदुपलक्षितः समयोऽपयाति मृषैव व्यतीतो भवतीति। अत्र च कविनिबद्धायाः कस्याश्चिद् दूत्या मानवशंवदां नायिकां प्रति यद्यत्रैव स्थास्यामस्तर्हि समयस्त्वसौ निर्यास्यत्येव किन्तु औदासीन्येन सुमुख्यास्तव मुखं ग्लास्यति। म्लाने च तस्मित्वत्सदृशं भवितुं तपसे यतमानं कमलं कृतार्थितं भविष्यतिसम्प्रति च तत्सदृशत्वमनुपेत्य सुधानिधिः सुधानिधिरेवेति प्रतिष्ठाभङ्गं भाविनं विचार्यैव म्लायति लज्जाया चाभ्रान्तः क्वापि निलीय स्थातुमिच्छति चन्द्रमाः सोपि कृतार्थी नो भविष्यतीति स्वयमेव तथा वयं यतामहे। यथैनयोः कृतार्थता न स्यात्तथा यतनं च नायकमुपेत्य चिरसम्भृतमनोरथपूर्तिविधानमतो वयं झटिति याम अन्यथा च समयोऽयं दुर्निरोध्य एवेत्युक्तिः। प्रौढा अन्यथा तथाऽभिधानं न सङ्घटेतेति तथाभूतेन वस्तुना मुखं चन्द्रश्चेत्युभावपि न तव मुखसदृशाविति व्यतिरेकः कृतार्थयेति पदद्योत्यः। अलङ्कारेण वस्तुध्वनिर्यथा मम-'वदनसुधानिधिरयि सखि ! सुस्मितकलया सुधारसाप्लुतया कस्य निषिच्यानङ्गं साङ्गं कर्त्तुं समुल्लसति।' अयि सखि ! वदनसुधानिधिस्त्वन्मुखरूपश्चन्द्रः सुधारसेन सुधाया इव सुधा वद्रसस्तेन 'तत्र तस्यैव।' ५/१/११६ इति वतुः। आप्लुताऽत्यन्तं पूर्णतया इति सुधारसाप्लुतया सुस्मित-कलया कस्य सुकृतिनोनङ्गस्मृतप्रायं मदनं मुस्मितम् अत्यन्तं मृदुलो रुचिरोहासस्तद्रूपया कलया निषेकसाधनय-न्त्रविशेषेणेति यावत्। निषिच्य साङ्गं सशरीरं कर्त्तुं समुल्लसति विकसर्ततेति। अत्र च कविनिबद्धा कापि सखी वक्री तस्याश्च वदनरूपत्वेन सुधानिधेः सुस्मितरूपत्वेन च कलायाः सुस्मितस्य च सुधारसत्वेन तथानङ्गस्यापि साङ्गत्व-कृतेन तत्कृतनिषेककर्तृत्वेन वदनसुधानिधेरभिधानं प्रौढमिति तत्सिद्धेश्च न रूपकेण कोपि प्रच्छन्नोऽत्र तद् दृष्ट्वैवं स्मयसे इति वस्तु कस्येतिपद द्योत्यम्। अलङ्कारेणालङ्कारध्वनिर्यथा मम-'मध्येऽम्बु तपति कमलं निपतति मध्येऽब्धि चन्द्रमा नित्यम्। सुभगे ! तव मुखमेकं जयति विकाशं दधन्नितराम्। हे सुभगे सोभाग्यवति ! स्वाधीननायके इति यावत्। कमलं मध्येऽम्बु जलस्य मध्ये तपति चन्द्रमा मध्येऽब्धि समुद्रस्य मध्ये न तु कस्मिन्नेवाह्नि निपतति एकं तव मुखं नितरां विकाशं दधज्जयति। अत्र च खण्डितायाः कस्याश्चिदुक्तिरिति तस्याश्च प्रौढत्वं कमलकर्तृकंजलान्तस्तपश्चर्यायाश्चन्द्रकर्तृकस्य च प्रतिदिवसं समुद्रान्तरात्मपातस्य साक्षा-त्तयाऽभिधानेनेति तस्मिद्धेन काव्यलिङ्गेन व्यतिरेक एक इति पदद्योत्यः।

अथैवमुदाहृतान् ध्वनेः प्रभेदान्दृढप्रतिपत्तये स्मारयति-**तदेवमित्यादिना**।

**तत्तस्मात्**। **एवम्** उदाहृतप्रकारेण। **ध्वनेर्ध्व**निसम्बन्धिष्वित्यर्थः। **पूर्वोक्तेषु** पूर्वमुदाहृतेषु। **अष्टादससु भेदेषु मध्ये शब्दार्थशक्त्युत्थः**। शब्दार्थयोः शक्तिस्तस्या उत्तिष्ठतीति शब्दार्योभयशक्तिमूल इत्यर्थः। **व्यङ्ग्यो** व्यङ्ग्यध्वनिरिति यावत्। **वाक्ययमात्रे** वाक्य एव। **भवन्स्फुरन्**। **एक** एकप्रभेदः। **अन्ये**। **पुनः**। **सप्तदश** ध्वनेर्भेदा इति शेषः। **वाक्ये**। **पदे**। **च**। सम्भवन्ति इति शेषः। **इतीत्यस्माद्** हेतोः। **चतुस्त्रिंशच्चतुरधिकास्त्रिश**-त्संख्याकाः। इत्येवं सर्वे मिलित्वा-**पञ्चत्रिशत्**। **भेदा** 'जाता' इति शेषः। अत्रेयं व्यवस्था- तत्र तावत् ध्वनिर्लक्ष-णमूलोऽभिधामूलश्चेति द्विविधः। तत्राप्याद्यो विवक्षितवाच्याऽभिधेयो द्वितीयः पुनर्विवक्षितान्यपरवाच्यः। अथाविवक्षितवाच्यः-अर्थान्तरसङ्क्रमिवाच्यः, अत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः। एवं पुनर्विवक्षितान्यपर-वाच्योऽसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विविधः। तत्राऽसंलक्ष्यक्रमव्यङ्ग्यो रसभावादिस्वरूप एक-विध एव रसभावादीनामसङ्ख्यत्वादनन्ताद्वा। इत्येवमर्थान्तरसङ्क्रमितवाच्योऽत्यन्तिरस्कृतवाच्योऽसङ्लक्ष्यक्रम-व्यङ्ग्यश्चेत्यास्तां ध्वनेस्त्रैविध्यम्। अथ संलक्ष्यक्रमव्यङ्ग्यः शब्दशक्त्युद्भवोर्थशक्त्युद्भवः शब्दार्थशक्तयुद्भ-वश्चेति त्रिविधः। तत्राप्याद्यः स्वतःसम्भवी, कविप्रौढोक्तिसिद्धः।' कविनिबद्धप्रौढोक्तिसिद्धश्चेति त्रिविधः। एवं पुनर्द्वितीयः स्वतःसम्भवी, कविप्रौढोक्तिसिद्धः, कविनिबद्धप्रौढोक्तिसिद्धश्चेति त्रिविधः। अथैवं षड्विधो वस्तुनाऽलङ्कारेण च वस्तुस्वरूपोऽलङ्कारस्वरूपश्चेति त्रिविधत्वं प्रतिपाद्यमानो द्वादशविधः। तत्र शब्दार्थशक्त्यु-द्भवमन्तरेण सर्वेऽप्यन्ये ध्वनेः सप्तदश प्रभेदा वाक्ये पदे च सम्भवन्ति, शब्दार्थशक्त्युद्भवः पुनर्वाक्तस्य एवेति सप्तदशद्विगुणिताश्चतुस्त्रिशदेकेनापरेण पुनः सम्मिलिताः पञ्चत्रिंशदिति।

**प्रबन्धेऽपि मतो धीरैरर्थशक्त्युद्भवो ध्वनिः ॥ १० ॥**

प्रबन्धे महावाक्ये । अनन्तरोक्तद्वादशभेदोऽर्थशक्त्युत्थः ।

यथा महाभारते गृध्रगोमायुसंवादे—

**'अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसंकुले ।**

**कङ्कालबहले घोर सर्वप्राणिभयंकरे ॥**

**न चेह जीवितः कश्चित्कालधर्ममुपागतः ।**

**प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥'**

इति दिवा प्रभवतो गृध्रस्य श्मशाने मृतं बालमुपादाय तिष्ठतां तं परित्यज्य गमनमिष्टम् ।

---

## विवृतिः

स्वतः संभविवस्तुव्यङ्ग्यवस्तुप्रबन्धप्रकाश्यमाह—**अलं स्थित्वेति** । श्मशाने मृतबालकं त्यजतस्तद्बन्धून्प्रति गृध्रस्य वचनमिदम् । न स्थेयमित्यर्थः । शरीरास्थि **कङ्काल**स्तेन बहले व्याप्ते । **कालधर्मं** मृत्युम् । **दिवा प्रभवतो** दिने भक्षणक्षमस्य ।

## विवृतिपूर्तिः

**प्रबन्ध इति** । प्रबन्धश्च संघटितनानावाक्यसमुदायः । स च ग्रन्थरूपस्तदवान्तरप्रकरणरूपश्चेति ॥

## विज्ञप्रिया

महावाक्यमिति—कुलकरूपमहावाक्यमित्यर्थः । तदप्राप्तिमहादुःखेत्यादिस्लोकद्वयस्य महावाक्यत्वेऽपि तत्र व्यञ्जकपदद्वयसत्त्वात् तद्व्यङ्ग्यस्यैवोदाहरणत्वेन तद्दर्शितम् ।

अलं स्थित्वेत्यति—श्मशाने मृतबालकम् अत्यजतस्तद्बन्धन् प्रति गृध्रवाक्यमिदं श्लोकद्वयरूपं महावाक्यम् । दिवसे शक्तस्य इति—दिवसे एव भक्षणसमर्थस्येत्यर्थः । गमनमिष्टमिति—वक्तुर्गृध्रस्य इष्टं मृतबन्धूनां गमनमित्यर्थः । तथा च बालकं त्यक्त्वा यूयं गच्छध्वमिति वस्तु स्वतः सम्भविवस्तुनः उक्तप्रबन्धार्थस्य व्यङ्ग्यमित्यर्थः ।

## लोचन

अलमिति—कालधर्मो मरणम् । अस्य च श्लोकस्य पद्यान्तरसचिवस्यैव महावाक्यतेति स्पष्टार्थम् । महावाक्यान्तरमुदाहरति ।

## कुसुमप्रतिमा

प्रबन्ध इति । अर्थशक्त्युद्भवः केवलार्थशक्तिमूलः प्रागुक्तो द्वादशप्रकारा ध्वनिः प्रबन्धेऽपि न केवलं वाक्ये पदे च महावाक्यात्मकानेकवाक्येऽपि धीरैर्मतः । एवञ्च पूर्वोक्तैः पञ्चत्रिंशत्प्रकारैः सह मिलित्वा एतावन्तं यावत् सप्तचत्वारिंशत्प्रकारा ध्वनयः ।

प्रबन्ध इति । अनन्तरोक्ताः पूर्वोक्ता द्वादशभेदाः प्रकारा यस्य, सः ।

## विमला

प्रबन्धे इति ।—अर्थशक्त्युद्भवः ध्वनिः धीरैः—विद्वद्भिः, प्रबन्धे—महावाक्येऽप्रि, मतः—कथितः । पञ्चविंशद्भेदाः पूर्वोक्ताः; प्रबन्धगताद्यं द्वादशेति मिलित्वा सप्तचत्वारिंशद्भेदाः इति बोध्यम् ।

स्वतः सम्भविवस्तुव्यङ्ग्यवस्तु प्रबन्धप्रकाश्यमाह, अलमिति ।—श्मशानमृतबालकं त्यजतः तद्बन्धून् प्रति गृध्रस्य वचनमिदम् । गृध्रैः, गौमायुभिः,—शृगालैश्व, सङ्कुले—व्याप्ते, कङ्कालाः,—शरीरास्थीनि, बहला यत्र तादृशे ["कङ्कालबहले" इति पाठे—कङ्कालेन व्याप्ते इत्यर्थः] अत एव सर्वेषां प्राणिनां भयङ्करे, घोरे—दारुणे, अस्मिन् श्मशाने स्थित्वा अलं—स्थितिर्न कत्तव्येत्यर्थः; कालधर्मः,—पञ्चत्वं, तम् उपागतः,—प्राप्तः; प्रियो वा, यदि वा द्वेष्यः,—अप्रियः, कश्चित्, इह—श्मशाने, न च जीवितः, जात इति शेषः; प्राणिनां गतिः ईदृशी—एवम्प्रकारा पञ्चत्वमुषागतः कश्चित् न पुनरुज्जीवति इति भावः । महाभारतस्येदम् ।

इति दिवसे इति ।—दिवसे शक्तस्य—दिने भक्षणक्षमस्येत्यर्थः । गमन्मिष्टमिति ।—"वाक्यसमूहेन द्योत्यते" इत्यग्रेणान्वयः बोध्यः ।

## लक्ष्मी

प्रबन्धपदस्यार्थं निरूपयति—प्रबन्ध इति । महावाक्यमिति । कुलकरूपमहावाक्यमित्यर्थः । प्रदीपकारास्तु संघटितनानावाक्यसमुदायः, स च ग्रन्थरूपस्तदवान्तरप्रकाररूपश्चेत्याहुः ।

भोजराजस्तु—'पदं चैव पदार्थश्चैव वाक्यं वाक्यार्थ एव च ।

विषयोऽस्याः प्रकरणं प्रबन्धश्चाभिधीयते ॥' इत्याह ।

ननु अर्थशक्युद्भव एक एवात्र गृह्यते ? उत द्वादशविधः ? इत्याशङ्क्य स्फुटीकरोति—अनन्तरोक्ता इति । अनन्तरोक्ताः पूर्वप्रदर्शिता द्वादशभेदाः प्रकारा यस्य स तथोक्तः ।

पदवाक्ययोरुदाहृतम्, प्रबन्धे तूदाहर्तुमाह—यथा महाभारते गृध्रगोमायुसंवाद इति ।

पद्यद्वयात्मके प्रबन्धे स्वतः सम्भविना वस्तुना वस्तुध्वनिमुदाहरति—अलमिति । महाभारते शान्तिपर्वण्यापद्धर्मे त्रिपञ्चादशदधिकशततमाध्याये मृतं बालं सायङ्काले श्मशाने समानीतं दृष्ट्वा दिवसे एव मृतमांसभक्षणसमर्थस्य रात्रावन्धत्वादसमर्थस्य गृध्रस्य तद्बन्धुजनविसर्जनपरमिदं श्लोकद्वयात्मकं वचनम् । गृध्रैः मांसादैः पक्षिविशेषैः गोमायुभिः श्रृगालैश्च सङ्कुले परिव्याप्ते तथा कङ्कालानि पूर्णमानुषास्थीनि यत्रैवंभूते अस्थिप्राये इत्यर्थः । 'स्याच्छरीरास्थि कङ्कालः ।' इत्यमरः अत एव घोरे भवादृशां भयङ्करे, सर्वेषां प्राणिनां शरीरिणां भयङ्करे त्रासोत्पादके, अस्मिन् श्मशाने स्थित्वा अलम् । निष्फला सम्भावितानिष्टा चैवंविधस्थले भवादृशां स्थितिरत्यन्ता-

योग्येति भावः। ननु बालकोज्जीवनं भविष्यतीत्याशयात्रा स्थीयत इत्यत आह—न चेहेति। इह जगति कालधर्म मृत्युम् उपागतः प्राप्तः प्रियो बन्धुः द्वेष्यः शत्रुर्वा यदि वा अथवा कश्चित् तटस्थोऽपि वा, यद्वा प्रियाप्रियान्यतरोऽपि न जीवितः अद्यावधिपर्य्यन्तमिति शेषः। तथा च मृतस्य पुनरुज्जीवनमसम्भावितमिति भावः। तदेतत्समर्थयति— प्राणिनामिति। प्राणिनां जनानाम् ईदृशी मरणानन्तरमपरावृत्तिरूपागतिरवस्था प्राणमुत्सृज्याननन्तरं पुनर्न जीवन्ति 'स्वभावो दुरतिक्रम' इति न्यायात् स्वभावस्य दुरतिक्रमत्वात् परितापो न विधेय इति भावः। अत्र पद्यान्तरसचिव-स्यैवास्यश्लोकस्य महावाक्यतेति स्फुटमेव।

व्यङ्ग्यार्थं दर्शयति—इतीति। दिवा दिवसे प्रभवतः रात्रबन्धत्वाद्दिवस एव शवमांसभक्षणसमर्थस्य। गमनमिष्ठमिति। एतस्य 'वाक्यसमूहेन द्योत्यते' इत्यग्रिमेणान्वयः। वक्तुर्गृध्रस्य इष्टं मृतबन्धूनां गमनमित्यर्थः। एवञ्च बालकं त्यक्त्वा यूयं गच्छध्वमिति वस्तु स्वतः सम्भविवस्तुनः उक्तप्रबन्धार्थस्य व्यङ्ग्यमित्यर्थः। तथा च स्वतः सम्भविना वाच्यार्थरूपेण वस्तुना पुरुषविसर्जनरूपं वस्तु व्यज्यते तद्वयञ्जकश्चायं पद्यद्वयात्मको गृध्रवचन-रूपः प्रबन्ध एव न तु तदतं पदं वाक्यं वेति प्रबन्धगतत्वमेव। **'तदप्राप्तिमहादुःखेत्यादिश्लोकद्वयस्य**, महावा-क्यत्वेऽपि तत्र व्यञ्जकपदद्वयसत्त्वात् तद्वयङ्ग्यस्यैवोदाहरणत्वेन तद्दर्शितत्वमिति बोध्यम्।

## रुचिरा

अथैवं ध्वनेः पञ्चत्रिंशद्भेदानुदाहृत्य भेदान्तरोदाहरणान्याह-२९३ **प्रबन्धे** इत्यादि।

२९३ **अर्थशक्त्युद्भवो** 'वस्तु वाऽलङ्कृति' रित्युक्तदिशा द्वादशात्मेति शेषः। **ध्वनिः**। **प्रबन्धे** महा-वाक्ये तन्निष्ठ इति ययावत्। **अपि** पदे वाक्ये च निष्ठितस्त्वस्त्येवेति यावत्। **धीरैः** प्रबन्धमार्मिकैः। **मतः** स्वीकृतः॥ २९३॥

ननु को नाम प्रबन्धः, योगशक्त्या यंस्यानेकपर्य्यायवाचित्वोपपत्तिरित्याशङ्क्याह-**प्रबन्धे**। निरुक्तलक्षणे **महावाक्ये** सङ्घटितनानावाक्यकदम्बरूप इत्यर्थः। ननु-अ[illegible]क्त्युद्भव एकविध एवात्र गृह्यते? आहोस्विद् द्वादशविधः? इत्याशङ्क्य स्पष्टयति। **अनन्तरोक्तद्वादशभेदो**ऽनन्तरं किञ्चित्पूर्वमेव न त्वत्यन्तं व्यवधायोक्ता द्वादशभेदा यस्य स इत्यर्थः। **अर्थशक्त्युत्थो**ऽर्थशक्त्युद्भवः। ज्ञेय इति शेषः।

अथोदाहर्तुमुपक्रममाण आह **यथे**त्यादिना।

**यथा** यद्वत्तथेति शेषः। यथा स्वतः सम्भाविना वस्तुना प्रबन्धप्रकाश्यो वस्तुध्वनिस्तथेति भावः। **गृध्रगोमायुसंवादे** गृध्रा **महाभारते** स्वनाम्नैव प्रसिद्धे तदन्तर्गते शन्तिपर्वणि आपद्धर्माभिधानप्रसङ्गे इति यावत्। **अस्मिन्** रात्र्यन्धाः पक्षिविशेषाश्च, गोमायवः प्रायो नक्तंप्रभावाः जम्बूकाश्चेति तेषां संवादे। अलमित्वति शेषः। दृश्यमाने **गृध्रगोमायुसङ्कुले** गृध्राश्च गोमायवश्चेति तैः सङ्कुलं तत्र। **कङ्कालबहुले** कङ्कालाः कारीरास्थीनि बहुला यत्र तत्र। अस्थिप्राय इत्यर्थः। 'स्याच्छरीरास्थि कङ्काल' इतयमरः। अत एव **घोरे** दारुणे। **सर्वप्राणिभयङ्करे** सर्वे ये प्राणिनो जन्तवस्तेषां भयङ्करस्त्रासजनकस्तत्र। घोरभयङ्करशब्दयोरेकार्यकत्वेन परस्परं च तयोर्विशेष्यविशेषण-भावेनोपस्थाने 'विशिष्टवाचकानां पदानां सति विशेषणसमवधाने विशेष्यमात्रपरत्वमि'ति नयेन घोरशब्दस्य अत्यन्तमिति भयङ्करशब्दरय च यथाश्रुतार्थत्वमवसेयम्। **श्मशाने** तत्रत्यप्रदेश इति यावत्। **स्थित्वा**। **अलं** पर्य्याप्तम्। यतः-**इहास्मिन्**संसारे। **यदि**। **प्रियः**। **वा**। **द्वेष्यः** द्वेषार्हः शत्रुः। **वा**। **कश्चित्**कोऽपि। **कालधर्म्मं**

मरणम्। **उपागतः** प्राप्तः। **न च** न पुनः। **जीवित** आसीदिति शेषः। **प्राणिनां** जन्तूनाम्। **गतिः** क्रमः स्वभाव इति यावत्। एवेति शेषः। **ईदृशी** भवतीति 'स्वभावो दुरतिक्रम' इति नियमात्॥ १९८॥ १९९॥

अत्र दिवा प्रभवतो गृध्रस्योक्त्या झटित्येव यावद्दिवसं बालमुपादाय प्रयास्यन्त्येते अहं पुनरेनं भक्षयिष्यामि इत्यभिधानरूपवस्तु प्रबन्धगतं व्यज्यते इत्याह-**इतीत्यादिना**।

**इतीत्येवम्**। **दिवा** दिवसे। **प्रभवतः** प्रभूभवतः। **गृध्रस्य** पक्षिराजस्य। **श्मशाने** श्मशानभूमौ। **मृतं** गतप्राणम्। **बालम्**। **उपादाय** गृहीत्वा। **तिष्ठतां** श्मशानमपरित्यज्य स्थितिं कृतवतां जनानाम्। **तं मृतं** बालम्। **परित्यज्य** श्मशान एव त्यक्त्वा। **गमनं** श्मशानभूमेः स्वगृहं प्रति यानम्। **इष्ट** 'मभिव्यज्यते' इति शेषः। अत्रायम्भावः- मृतं बालं श्मशानभूमिमानीयापि स्नेहवशादुत्सङ्ग एव निधाय रुदतस्तं त्यक्त्वा च स्वमन्दिरमप्रत्यागच्छतः दिवसं पुनरेवमेव व्यतीयमानमवलोक्य तन्मांसं झटिति भक्षितुकामेन गृध्रेणालोचितं यथेते कियन्तं समयमत्रैव स्थास्यन्ति तर्हि भविष्यति दुष्टाया रात्रेरवतारः तस्मिन्सति च क्वैतन्मांसलाभः शृगालादीनां सुखमुपगतस्य सर्वथैव पुनर्लाभासम्भवः, अत एव मनुष्ठेयं येन-एते झटित्येव इतः प्रसरेयुरित्यालोच्यैवाऽभिहितं तेनापि, जनानां श्माशानात्पुनर्जीवाशा न सङ्गच्छते इतः पुनर्गमनासम्भवादिति। एतत्पुनः स्वतः सम्भव्येवेत्यनेन इतो झटिति दिवैव निवर्त्तन्तामिति व्यज्यते। इति।

**"आदित्योऽयं स्थितो मूढाः ! स्नेहं कुरुत सांप्रतम्।**
**बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥**
**अमुं कनकवर्णाभं बालमप्राप्तयौवनम्।**
**गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः ॥'**

इति निशि समर्थस्य गोमायोर्दिवसे परित्यागोऽनभिलषित इति वाक्यसमूहेन द्योत्यते। अत्र स्वतः संभवी व्यञ्जकः। एवमन्येष्वेकादशभेदेषूदाहार्यम्। एवं वाच्यार्थव्यञ्जकत्वे उदाहृतम्।

लक्ष्यार्थस्य यथा—'निःशेषच्युतचन्दनम्—' इत्यादि (६४ पृ.)। व्यङ्ग्यार्थस्य यथा—'उअ णिच्चल—' इत्यादि ६७ पृ.)। अनयोः स्वतः संभविनोर्लक्ष्यव्यङ्ग्यार्थो व्यञ्जकौ। एवमन्येष्वेकादशभेदेषूदाहार्यम्।

---

## विवृतिः

गमनमिष्टमिति। वाक्यसमूहेन द्योत्यत इत्यग्रेणान्वयः। गोमायूक्तप्रबन्धस्य तादृशव्यङ्ग्यमाह—आदित्योऽयमिति। आदित्यसत्त्वादि युष्माकं रात्रिंचरतोऽपि भीतिर्नास्तीति सूचितम्। स्नेहकारणं स्थितिरेव। अयं संध्यासमयासन्नो मुहूर्तो दारुणतया बहुविघ्नः संभावितभूताद्यावेशः। तदवगमान्मुहूर्तान्तरे जीवनस्य संभावना दर्शिता। तत्संभावनायां हेतुमाह—अमुमिति। कनकवर्णाभत्वे रूपविपर्यासाभावज्जीवनसंभावना। मूढाः। 'बालाः' इति पाठे शिशुबुद्धय इत्यर्थः। समर्थस्य भक्षणक्षमस्य। स्वतःसंभवीति। वाक्यार्थ इति शेषः। एवं निरुक्तध्वनिसमूहः। लक्ष्यार्थस्येति। 'व्यञ्जकत्वे' इति शेषः। एवमग्रेऽपि। एवमन्येष्विति। एकादशत्वं लक्ष्यव्यङ्ग्ययोः प्रत्येकापेक्षया। उभयापेक्षया तु द्वाविंशताविति द्रष्टव्यम्।

## विज्ञप्रिया

आदित्योऽयम् इत्यादिश्लोकद्वयरूपं महावाक्यं गोमायोरुक्तिः। बहुविघ्न इति—तथा च विघ्नशून्यमुहूर्त्तान्तरे जीवनसम्भावना दर्शिता। एवं कनक वर्ण्णत्वेन रूपविपर्य्ययाभावादप्राप्तयौवनत्वेन च मृत्युहेतुयौवनाधीनाऽकार्य्याभावाज्जीवनसम्भावना दर्शिता। बाला इति-शिशुबुद्धय इत्यर्थः। मूढा इति क्वचित् पाठः। नाभिलषित इति। तथा च अत्रापि स्वतः सम्भविना एतत्प्रबन्धार्थेन बालकपरित्यागानभिलाषरूपं वस्तु व्यज्यते इत्यर्थः। एवमन्येष्विति। स्वतः सम्भविवस्तुव्यङ्ग्यालङ्काराद्येकादशभेदेष्वित्यर्थः।

## लोचन

आदित्य इति—स्नेह जीवनोपायानुसरणबीजम्। मुहूर्त्तः सन्ध्याकालः; बहुविघ्नः भूताद्यावेशसम्भावनादायित्वात्। अतः स्वतः सम्भविना वस्तुना वस्तु व्यज्यते। उदाहार्य्यमिति—तथा च रघुवंशे "समयुज्यत भूपतिर्युवा" इत्यादिना "उभयां सिद्धिमुभाववापतुः" इत्यन्ते तुल्ययोगितया काव्यलिङ्गेन वा रघुराघवयोर्व्यतिरेकालङ्कारः प्रतीयते। किञ्च कुमारसम्भवे हिमगिरिवर्ण्णनप्रौढोक्त्यप्रौढोक्तिसिद्धालङ्कारसंसृष्टे हिमगिरेरितरोत्कर्षः

प्रतीयते । अर्थशक्तिभूरित्युपलक्षणम् । शब्दशक्त्युद्भवोऽपि क्वचित् प्रबन्धव्यङ्ग्यो दृश्यते । यथा माघकाव्ये शिशुपालदूतोक्तौ सन्धौ काव्ये वस्तुमात्ररूपो विग्रहः उपमाध्वनिरपि तथाविधः सम्भाव्यते ।

## कुसुमप्रतिमा

चलमिति । शान्तिपर्वण्यापद्धर्म्मे त्रिपञ्चाशदधिकशततमाध्याये सायाह्ने बालकशवमादाय श्मशानमागतान् तद्बन्धु जनान् प्रति दिवस एव तं शवं परित्यज्य गमनाय रात्रयन्धस्य गृध्रस्य दिवस एव तद्भक्षणेच्छयोक्तिरियम् । गृध्रैः पक्षिविशेषैः गोमायुभिः श्रृगालैश्च सङ्कुले परिव्याप्ते:, कङ्कालानि पूर्णमानुषस्यीनि यत्र तादृशे, अतएव घोरे भवादशां भीषणे, तथा मादृशामपि सर्वेषां प्राणिनां भयङ्करे, अस्मिन् श्मशाने स्थित्वा अलं पुनरम्ययं बालको जीविष्यतीत्याशया युष्माकमवस्थानं न कर्त्तव्यमित्यर्थः, निरर्थकमयभीगादिति भावः ।

यतश्चेत्याह न चेति । अत्रागतानां जनानां प्रियो बन्धुर्वा यदि वा अथवा द्वेष्यः शत्रुः । कालधर्म्मम्, मृत्युम् उपागतः प्राप्तः सन् कश्चिदपि जनः, इह श्मशाने आगत्य पुनर्जीवित इति न च, केनापि नैव दृष्ट इत्यर्थः । येन हि प्राणिनाम् ईदृशी गतिरवस्था मृत्वा ते पुनर्नजीवन्तीत्यर्थः ।

व्यङ्ग्यार्थमाह इतीति । दिवसे शक्तस्य रात्रयन्धतया दिवस एव शवमांसभक्षणसमर्थस्म । विवृतां जनानां गमनमिष्टमति सम्बन्धः ।

उक्तगृध्रवाक्यानुसारेण तं बालकशवं गन्तुमुद्यतान् तद्बन्धून् प्रति तत्र स्थितस्य दिवान्धस्य श्रृगालस्य रात्रौ तच्छावभक्षणेच्छया उक्तिरियम् । हे मुढ़ाः । गृध्रवाक्यमात्रेणैव बालकपरित्याग पूर्वकगमनोद्यनादिति भावः । अयमादित्यः सूर्य्यः स्थितः सुतरां साम्पतमिदानीमपि स्नेहं कुरुत । अयं दिवसस्य शेषो मुहूर्त्तः, बहुविघ्नः डाकिन्याद्याविष्टतासम्भवाद्विघ्नबहुलः । एतेन बालकोऽयं डाकिन्याद्याविष्ट एव, न तु मृतं इति सूचितम् । अतः, कदाचन इतः परं जीवेदपि । हे बालाः ! मूर्खाः ! कनकवर्णाभम् । अतएव वैवर्ण्याभावान्न मृत इति द्योतितम् । अप्राप्तयौवनम्, तेन च परदारगमनादिना तद्बन्धुजनप्रहारादितोऽपि न भर्तुमर्हतीति ध्वनितम् । अमुं बालं केवलात् गृध्रवाक्यात् अविशङ्किता मृत्यौ निःसन्देहा, सन्तः कश्चं त्वजध्वम् । अत्रात्मनेपदमार्षम् ।

व्यङ्ग्यार्थमाह इतीति । निशि समर्थस्व दिवान्धतया रात्रावेव शवमांसमक्षणशक्तध्व । परित्वागो बालकशवस्येति शेषः । अनभिलषित इति "ज्ञनुबन्धमतिबुद्धो" त्यादिना क्तप्रत्ययात् गोमायोरिति "वर्त्तमानाधिकरण्योः सौत्रे" इति कर्त्तरि षष्ठी । अत्र उभयोरेवोक्तयोः परस्परसापेक्षत्वात् उभयोक्त्योरेवोपादानम्, तेन च एतदुक्तिद्वयात्मकप्रबन्धसमुदायार्थरूपेण स्वतः सम्भविना वस्तुना उक्तविधवस्तुध्वनिः प्रबन्धद्योत्यः ।

नन्वत्र कीदृशी व्यञ्जक इत्याह अत्रेति । स्वतःसम्भवी स्वभावत एव सम्भवपरः प्रबन्धद्वयार्थी व्यञ्जक इत्यर्थः ।

एवमिति । अन्येषु स्वतः सम्भविना वस्तुना अलङ्कारध्वनिप्रभृतिप्रकारेषु । ग्रन्थस्यातिविस्तृतिभयात्तेषामुदाहरणान्वस्माभिरप्युपेक्षितानि ।

एवमिति । एवं "दृष्टिं हे प्रतिवेशिनि !" इत्यादिकमेतत् सर्वम् ।

लक्ष्यार्थस्येति व्यञ्जकत्वे इति शेषः । "निःशेषच्युतचन्दनम्" इत्यादौ स्नातुं गतासीत्स्य स्नातुं न गतासीति विपरीतलक्षणाया लक्ष्यार्थरूपेण स्वतः सम्भविना वस्तुना तदन्तिकमेव रन्तुं गतासीति वस्तुध्वनिरधमपदद्योत्यः, दूत्यादिनीधस्त्रीरन्तुरधमत्वात् ।

व्यङ्ग्यार्थस्येति। व्यञ्जकत्वे इति शेषः। "उष्म णिश्चल" इत्यादौ बलाकाया निष्पन्दतया तद्देशस्य विजनत्वरूपेण स्वतः सम्भविना व्यङ्ग्यार्थात्मकवस्तुना सङ्केतस्थानमेतदिति वस्तुध्वनिर्निस्पन्दपदद्योत्यः।

अनयोरिति। स्वतः सम्भविनीः स्ववावत एव सम्भवपरयोः, अनयोः "निःशेषच्युतचन्दम्" "उष्ण णिश्चल" इत्याद्योरुदाहरणयोः।

एवमिति। अन्वेषु स्वतःसम्भविना वस्तुना अलङ्कारध्वनिप्रभृतिप्रकारेषु। लक्ष्यार्थव्यङ्ग्यार्थयोर्व्यंञ्ज-कत्वे इति शेषः। अस्माभिरपि ग्रन्थगौरवभयात्तदुदाहरणाण्युपेक्षितानि।

## विमला

गोमायुक्तप्रबन्धस्य तादृशव्यङ्ग्यमाह, आदित्योऽयमिति।—हे मूढाः! ["बालाः!" इति पाठे—शिशुबुद्धय इत्यर्थः] अयम् आदित्यः,—सूर्य्यः, स्थितः, नेयं रात्रिरिति भावः, [आदित्यसत्त्वात् युष्माकं रात्रिञ्च-रतोऽपि भीतिर्नास्तीति सूचितम्] साम्प्रतं स्नेह कुरुत, स्नेहकारणं स्थितिरेवेति भावः, अयं—सन्ध्यासमयासन्नः, मुहूत्तः बहुविघ्नः—दारुणतया विघ्नपूर्णत, सम्भावितभूताद्यावेशः इत्यर्थः, [तदवगमात् मुहूर्त्तान्तरे जीवनस्य सम्भावना दर्शिता] कदाचन जीवेदपि; जीवनसम्भावनायां हेतुमाह, अनुमिति।—हे बालाः!—अज्ञा इत्यर्थः, अप्राप्तयौव—कनकवर्णाबं—काञ्चनकालिं, [कनकवर्णाभत्वे रूपविपर्य्यासाभावात् जीवनसम्भावना दर्शिता] किशोरम्, अमुं, बालैः, गृध्रस्य वाक्यात् अविशङ्किताः,—सर्वथा प्रलुज्जीवनाऽऽशां परिवृज्य गृध्रादिना व्यापाद-नभयशून्याः सन्तः, कथं त्यजध्वम्?। ["त्यजध्वम्" इत्ययमार्षः प्रयोगः]

इति निशीति।—समर्थस्य—भक्षणक्षमस्येत्यर्थः। अत्र स्वतः सम्भवो, वाक्यार्थः इति शेषः, व्यञ्जकः,—वाच्यम्। एवं—निरुक्तध्वनिसमूहः इत्यर्थः। [अनयोः स्वतः सम्भविना वस्तुना महावाक्यगतेन वस्तु व्यज्यते]। लक्ष्यार्थस्येति।—व्यञ्जकत्वे इति शेषः, एवमग्रेऽपि। निःशेषेत्यादि।—लक्ष्यार्थस्य—"तस्यान्तिक्रमेण गतासि" इति विपरीतलक्षणया बोधितस्य इत्यर्थः, [अनेन स्वतः सम्भाविनां वस्तुना रमणरूपं वस्तु व्यज्यते इति बोध्यम्]। "उश्र" इत्यत्र स्वतः सम्भाविभ्यां लक्ष्यार्थव्यङ्ग्यार्थाभ्यां वस्तुभ्यां सङ्केतस्यानरूप वस्तु व्यज्यते इति बोध्यम्। एवमन्धेष्विति—एकादशत्वं लक्ष्यव्यङ्ग्ययोः प्रत्येकापेक्षया, उभयापेक्षया तु द्वाविंशमिति द्रष्टव्यम्।

## लक्ष्मी

इत्थं गृध्रसंवादे वस्तुध्वनिमुदाहृत्य गोमायुसंवादेऽप्युदाहरति—**आदित्योऽयमिति**। उक्तगृध्रवचनानु-सारेण बालकशवमुत्सृज्य गन्तुमुत्सुकान् प्रति रात्रावेव शवमांसभक्षणसमर्थस्य तत्र स्थितस्य दिवान्धस्य श्रृगालस्य मृतबालकबन्धूनां श्मशआने रात्रिं यावत् अवस्थानार्थं वचनमिदम्। हे मूढा मूर्खाः! गृध्रवचनमात्रेणैव प्रस्थातुमु-द्युक्तत्वादियमुक्तिः अयम् आदित्यो भास्कर 'आदित्यो भास्करो देवः' इति विश्वः। स्थितः अस्तीति शेषः। आदित्यसत्त्वात् युष्माकं रात्रिञ्चरेभ्योऽपि भयमधुना नास्तीति सूचितम्। अतो यूयं साम्प्रतं स्नेहं पुत्रास्यास्य वियोगकालिकंतत्परित्यागासहिष्णुत्वं रोदनादिरूपं प्रेम कुरुत विधत्त। मृतस्य पुनरुज्जीवनासम्भवात् निष्फलमे-वात्रावस्थानं स्यादित्यत आह—बहुविघ्न इति। सन्ध्यात्मको मुहूर्त्तो बहुविघ्नो भूतावेशादिरूपविघ्नबहुलः। तथआ च दारुणसमयत्वात् भूतावेशादिरूपग्रहग्रस्तश्चेत्तदा एतन्मुहूर्तपगमे तद्विघ्नोपशान्तावेषो बालः कदाचि-ज्जीवेदित्यर्थः। अपिः सम्भावनायाम्, एतेन भूताद्यविष्ट एवायं बालको न तु मृत इत्यस्ति जीवनस्याशेति द्योत्यते। एवं जीवनसम्भावनामुत्पाद्य मोहयितुमाह—अमुमिति। कनकवर्णवत् सुवर्णवदाभा कान्तिर्यस्य तादृशम्, कनक-

वर्णाभत्वे रूपविपर्ययाभावान्न मृतः किन्त्वस्त्याशा जीवनस्येति ध्वनितम् । तथा न प्राप्तम् आसादितं यौवनं येन तादृशम् । अथापि परदारगमनादि पापराहित्येनायुःसत्त्वं प्रतीयते, तेनाऽपि मत्र्तुं नार्हतीति सूचितम् । परदारगमनेनायुः क्षीणता भवत्येव । **तदुक्तं मनुना—**

'न हीदृशमनायुष्यं लोके किञ्चन विद्यते । यादृशं पुरुषस्येह परदारोपसेवनम्' । इति ।

अमुं बालं केवलात् गृध्रावाक्यात् अविशङ्किताः लोकापवादशङ्कारहिताः कथं त्यजध्वम् । अत्रार्षमात्मने पदम् ।

व्यङ्ग्यार्थ दर्शयति—इतीति । निशि समर्थस्य दिवान्धतया रात्रावेव मांसभक्षणसमर्थस्येत्यर्थः । गोमायोः जम्बूकस्य परित्यागो बालकस्येति शेषः । अनभिलषितेत्यत्र 'मतिबुद्धिपूजार्थेभ्यश्चेति । सूत्रेण कर्मणि क्तः, कृद्योगात्कर्त्तरि षष्ठी । तथा च स्वतःसम्भविना वाच्यार्थरूपेण वस्तुना जनव्यावर्त्तनरूपवस्तु प्रतीयत इति भावः । कीदृशोऽत्र व्यञ्जक इति जिज्ञासायामाह—अत्रेति । स्वतः सम्भवी वाक्यार्थ इति शेषः । पद्यद्वयात्मको गोमायुवचनरूपः प्रबन्ध एव व्यञ्जकः न तु तद्गतं पदं वाक्यं वेति प्रबन्धगतत्वमेव ।

अर्थशक्त्युद्भवध्वनेर्द्वादशभेदानां मध्ये एक एवोदाहृतः अन्ये त्वेकादशभेदा अपि कुतो नोदाहृता इत्यत आह—एवमन्येष्विति । ग्रन्थविस्तरभयान्मया नोदाहृताः स्वयमेव लक्षणतोऽनुसंत्रव्यः, तदाह—उदाहार्यमिति । तथा च दिङ्मात्रमुच्यते—रघुवंशे 'समयुज्यत भूपतिर्युवा' इत्यादिना 'उभयां सिद्धिमुभाववापतुः' इत्यन्ते तुल्ययोगित्या काव्यलिङ्गेन वा रघुराघवयोव्यतिरेकालङ्कारः प्रतीयते । अपि च कुमारसम्भवे—हिमगिरिवर्णनप्रौढोक्त्यप्रौढोक्तिसिद्धलङ्कारसंसृष्टे हिमगिरेरितरोत्कर्षः प्रतीयते । मूलेऽर्थशक्त्युद्भवेत्युपलक्षणम्—शब्दशक्त्युद्भवोऽपि क्वचिद् प्रबन्धव्यङ्ग्यो दृश्यते, यथा माघकाव्ये शिशुपालदूतोक्तौ सन्धौ काव्ये वस्तुमात्ररूपो विग्रहः उपमाध्वनिरपि तथाविधः सम्भाव्यते । एवमिति । एवं 'दृष्टि हे प्रतिवेशिनि' इत्यादिकम् ।

लाक्ष्यार्थस्येति । व्यञ्जकत्वं इति शेषः । एवमुत्तरत्राऽपि । 'निःशेषच्युतचन्दनम्' इत्यादौ हि स्नानकार्यमिदं सर्वमिति 'स्नातुमितो गताऽसी'त्यनेन बोधयन्त्या आपाततो दुर्विग्धानभिधया बोधयितुं तथा प्रयुक्तम्, किन्तु पश्चात्तस्यैव अनुरणनरीत्या स्नातुं न गताऽसीति विपरीतलक्षणया लक्ष्यार्थरूपेण स्वतः सम्भविना वस्तुना 'भय धम्मिअ' इत्यादाविवात्र तदन्तिकमेव रन्तुं गतासीति अधमपदद्योत्यो वस्तुध्वनिः । नायकेऽधमत्वं तु नीचस्त्रीगमनादेवेति बोध्यम् । व्यङ्ग्यार्थस्येति । 'उअ णिच्चल' इत्यादौ हि बलाकाया निष्पन्दत्वेन वाच्येन विश्वस्तत्वम् अचेतनोपमया लेशतोऽपि शोभाभावस्तेन निर्जनत्वं च गम्यते एवञ्च तद्देशस्य निर्ज्जनवनरूपेण स्वतः सम्भविना वस्तुना सङ्केतस्थानमेतदित्यत्रागन्तव्यमिति निष्पन्दपदव्यङ्ग्योः वस्तुध्वनिः । **अनयोरिति** । निश्शेषच्युतचन्दनम्' उअणिच्चल' इत्याद्योरुदारणयोरित्यर्थः ।

एवमिति । अन्येषु स्वतः सम्भविना वस्तुनालङ्कारध्वनिप्रभृतिभेदेषु । एकादशत्वं लक्ष्यव्यङ्ग्यप्रत्येकापेक्षया । उभयापेक्षया तु द्वाविंशतिरितिद्रष्टव्यमिति वागीशः । उदाहार्यमिति ।

तत्र स्वतः सम्भविना लक्ष्यार्थरूपेण वस्तुनाऽलङ्कारध्वनिर्यथा—

**'वधान द्रागेव द्रढिमरमणीयं परिकरं, किरीटे बालेन्दुं नियमय पुनः पन्नगगणैः ।**

**न कुर्यास्त्वं हेलामितरजनसाधारणधिया, जगन्नाथस्यायं सुरधुनि ! समुद्धारसमयः ।।'**

अत्र हि जगन्नाथ इति वाच्योऽर्थः प्रकृतानुपयुक्तपापविशिष्टत्वेन लक्ष्यते असौ पुनरितरजनसाधारणो नायं पापीति जगन्नाथो जगन्नाथ इव पापीयानित्यनन्वयालङ्कारं व्यञ्जयति। उदाहरणानन्तरमाकरतोऽनुसन्धेयं ग्रन्थगौरवभयान्नेह प्रतन्यते।

## रुचिरा

एवं गृध्रसंवादे वस्तुध्वनिमुदाहृत्य गोमायुसंवादेऽप्युदाहरति-'**आदित्य...**' इत्यादिना।

'हे **मूढाः** मूर्खा जनाः! **अयं** प्रत्यक्षं दृश्यमानः। **आदित्यः** सूर्यः। न दितिः खण्डनं यस्यास्तस्या अदितेरपत्यं पुमानिति तथोक्तः। 'आदित्यो भास्मरो देव' इति विश्वः। **स्थित** अस्तीति शेषः। इति सम्प्रतिरात्रिञ्चरेभ्यो न भयङ्कार्यम्। **साम्प्रतमि**दानीम्। **स्नेहं** पुत्रस्यास्य वियोगकालिकं तत्परित्यागाऽसहिष्णुत्वरोदनादिरूपं प्रेम। **कुरुत** विधत्त। यद्वा-स्नेहं कुरुतेति साम्प्रतं युक्तम्। **अयं** सन्ध्यासमयासन्नः। **मुहूर्त** 'स्तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रिया' मित्युक्तस्वरूपः समयविशेषः। **बहुविघ्नो** वहवो विघ्ना यत्र सः। भूतावेशादिरूपविघ्नबहुल इत्यर्थः। अस्यापगमे च भूतावेशादिरुपग्रहग्रस्तत्वादिविध्नानां स्वतोऽपगमस्तस्मिन्सति च कदाचिद्युष्माकं भाग्यवशान्मुहूर्तस्य च भव्यभावुकत्वेनेति शेषः। **कदाचन**। **जीवेत्** इति सम्भाव्यते। **अमुम्**। **कनकवर्णाभं** सुवर्णवर्णप्रति मम्। अन्यथा तद्गतकाठिन्यस्यापि प्रतिपत्तिः स्यात्। **अप्राप्तयौवनं** न प्राप्तं यौवनं येन तादृशम्। **बालं** यौवनाप्राप्तौ परदाराभिमर्शासम्भवादायुःक्षीणत्वस्याऽपि असम्भवग्रस्तत्वम्। **गृध्रवाक्यात्** गृध्रस्य मांसप्रियस्यात एव दुष्टान्तः- करणस्य वाक्यात्। **मूढाः** कतर्व्याकर्तव्यममीमांसित्वैव। **अविशङ्किता** निर्भयाः। **कथम्। त्यजध्वं** परित्यजत ॥ २०० ॥ २०१ ॥'

अत्र व्यङ्ग्यं निर्दिशति-**इती**त्यादिना।

**इती**त्येवम्। **निशि** रात्रौ। **समर्थस्य** 'भक्षितु' मिति शेषः। **गोमायोः** शृगालस्य। **दिवसे**। **परित्यागः** 'बालस्ये' ति शेषः। **अनभिलषितो**ऽनभिमतः। **इति**। **वाक्यसमूहेन** निरुक्तेन 'आदित्योऽय' मित्यादिनेत्यर्थः। **द्योत्यते**। इदमुक्तम्-अत्र नक्तं प्रभवतः। शृगालस्योक्त्या यावद्दिनमत्र यद्येते तिष्ठेयुस्तर्हि अवश्यं बालं भक्षितुं प्रभविष्यामि सम्प्रति तु गृध्रादीनामेव प्रभाव इति यावत्। न खल्वस्य दिने परित्यागः साम्प्रतं, किन्तु नक्तमेवेति व्यज्यते। **अत्रा**स्मिन्वस्तुध्वनौ **स्वतःसम्भवी** अर्थ इति शेषः। **व्यग्जकः** कारणत्वेनावसेयः। अत्रायम्भावः—सन्ध्या यावन्न भवेत्तावन्न रात्रिञ्चरेभ्यो मनागपि भयं विधेयम्। आदित्ये भगवति प्रतपति सति तेषां भयदातृत्वाऽनवसरात्। एष पुनर्बाल इति नैवमरण्यप्राये प्रदेशे परिहातव्यः, न चायं मृत इति निश्चितम्। तथा सति कनकवर्णभत्वस्यैकान्ते सम्भवात्। प्रत्युत तदभावस्यैव सम्भवात्। न चायुःक्षयकारणमपि किञ्चित्प्रतीयते यौवनाऽप्राप्ततया परदाराभिगमनाद्यसम्भवे आयुःक्षीणत्वऽयोगात्, न चेदमप्याशङ्कनीयं कुतोऽयं निरुच्छ्वासो जडभूतश्चेति सन्ध्यायाः प्रवर्तमानाद् भूतावेशादिनाऽपि सम्भवादिति। मुहूर्तं पुनर्जीविताशा प्रतीक्ष्यतामिति स्वतःसम्भविनाऽभिधानेन (वस्तुना) यावन्न रात्रिस्तावदत्रैव स्थितिर्विधेया पुनर्यथाऽऽगतास्तथा गन्तव्यमिति वस्तु व्यज्यते।

एवमाद्यप्रभेदमुदाहृत्य भेदान्तरोदाहरणप्रसङ्ग आह **एवमित्याहि**।

**एवं** यथाऽत्र तथा। **अन्येषु** एतद्भिन्नेषु। **एकादशभेदेषु** तद्रूपेषु ध्वनिषु सत्सु। **उदाहार्यमवधेयमिति** शेषः। तत्र तावत्स्वतः सम्भविना वस्तुनाऽलङ्कारध्वनिर्यधा श्रीमद्भागवते वामनावतारवर्णने। अत्र हि श्रीपतिर्वामनस्वरूपेणावतरदित्यनेन-'अभूवद्वामनः श्रीशः स्वयं बलिमखोत्सवे। सर्व एवाऽर्थिनो हन्त सम्भवन्ति हि वामनाः॥'

इति दृष्टान्तः। श्रीपतिरपि बत साक्षाद्वामन आसीद् यदाऽर्थयामास। किं पुनरन्ये स्युर्यदि याचनमात्रोद्यताः दीना इति वाऽर्थान्तरन्यासः प्रबन्धे परिस्फुरति। अलङ्कारेण वस्तुध्वनिः पुनर्यथा श्रीमद्भागवते ययातिना शर्मिष्ठायै स्वावस्थावस्तुस्वरूपेण निर्दिष्टेति तत्र तेन रूपकातिशयोक्त्यलङ्कारेण-विषयभोगवासनैव महतोप्यनर्थताया आपादिकेति व्यज्यते। अलङ्कारेणालङ्कारध्वनिर्यथा श्रीमद्भागवते ऋषभदेवोपाख्याने मलादिदूषितशरीरस्यापि ऋषभदेवस्य योजनान्तं सुरभिरुत्तस्थे इत्यतिशयोक्त्या महात्मनां सर्वमपि सम्पद्यते इत्यर्थान्तरन्यासोऽभिव्यज्यते। कविप्रौढोक्तिसिद्धेन वस्तुना वस्तुव्यक्तिर्यथा महावीरचरिते वाली स्वयं रामेण समगम्यग इति वस्तुना मुमूर्षुः स्वयं मृत्युमाह्वयतीति वस्तु व्यज्यते। अलङ्कारध्वनिर्यथा नैषधीयचरिते निगृहीतपरिमुक्तस्य हैमस्य राजहंसस्य स्वयं पुनर्नलहस्तयोः संवादवर्णनमित्यनेन सुकृतिनः कृतज्ञा भवन्तीति अर्थान्तरन्यासो व्यज्यते। यथा वा वाल्मिकीये रामायणे मारीचागमने रामस्य तत्र हि-'प्रायः समापन्नविपत्तिकाले धियो जनानां मलिना भवन्ती' त्यर्थान्तरन्यासः। अलङ्कारेण पुनर्वस्तुध्वनिर्यथा श्रीमद्भागवते पुरन्दरोपाख्याने रुपकाव्यतिरिक्तेन संसारः सर्वथैव निःसार इति वस्तु व्यज्यते। अलङ्कारेणालङ्कारध्वनिर्यथा श्रीमद्भागवते यदुकुलसंहारवर्णने एकेनैव प्रहारेण यदुवीराणां संहार इति वस्तु व्यज्यते। अलङ्कारेणालङ्कारध्वनिर्यथा श्रीमद्भागवते यदुकुलसंहारवर्णने एकेनैव प्रहारेण यदुवीराणां संहार इति शक्त्या-'सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रया।' इति अर्थान्तरन्यासौ व्यज्यते। कविनिबद्धप्रौढोक्तिसिद्धेन वस्तुना वस्तुनोऽभिव्यक्तिर्थया श्रीमद्भगवद्गीताथामर्जुनेन-ममैते सुहृदः कथमेतानेव विनिहन्यां विनिघ्नन्हि कुलघ्नः स्यामिति।

नाहमेतान्निहनिष्यमि इति भगवता पुनर्न कस्यापपि कश्चित् सुहृत् स्वयं सर्वं न स्वतो भिन्न किञ्चिदिति न कस्यापि कश्चिन्निहन्ता निहन्तुं योग्यो वा भवितुमर्हति इत्युपदिष्ठम्। अत्र हि कवितानिबद्धो भगवदर्जुनसंवादस्तत्प्रौढोक्तिः—'गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते। निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन॥ पापमेवाश्रयेदस्मान्हत्वैतानाततायिनाः। कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्॥ अशोच्यानन्वशोचरत्वं प्रज्ञावादांश्च भाषसे।' इत्यादिरुपा, एतन्मूलकेन च सुहृदामपकारिणामपि अन्याय्यं हननम्। नात्मनः कदापि हननं सम्भवति तन्निमित्तनिबन्धनः शोकोऽपि अविच्छित्कर एव। किन्तु वस्तुतः सुकृतसाधनसम्पत्स्वरूपस्य स्वर्गादेरपि हानिहेतुः। इत्यनेनाऽभिधानरूपेण वस्तुना सुहृद्वियोगकारणीभूतप्रेमस्नेहाऽन्यतरनिबन्धनो दुःसहो दुःखतया परिणामी शोकः केवलं यावंदज्ञानमिति वस्तु प्रबन्धप्रकाश्यमभिव्यज्यते। वस्तुनाऽलङ्कारध्वनिर्यथा श्रीमन्महाभारतेगजग्राहकथाप्रस्तावनायां तत्र हि देवलशापेन गन्धर्वराजौगजो ग्राहश्च बभूवतुः, इत्यनेन भीष्मप्रौढोक्तिसिद्धेन महात्मानां कथमपि अवज्ञाता न कदाचित् सुखमेधते। यथा गन्धर्वराजावित्युपमाऽभिव्यज्यते। अलङ्कारेण पुनर्वस्तुध्वनिर्यथा तत्रैव मूषकसिहगाथाप्रस्तावे-अत्र हि युधिष्ठिरेण लधुर्महतपदं प्राप्य किमिव भवतीति पृष्टेन भीष्मेण कस्यापि मुनेर्मूषक आसीत्प्रसादभाजनं, स च तस्य कृपया सिंहो बभूव, भूत्वा पुनः सिंहः कोपेन तस्यैव मूषक एव जात इति यथा मूषकः सिंहोपि भूत्वा मूषक एवासीत्तथा 'लघुरपि महत्पदम्प्राप्तोऽवहेलितः पुनर्लघुतामेव प्रतिपद्यते' इत्युपमया महानेव महान्भवितुमर्हति लघुः कदाचित्तथा भवेदपि किन्तु पुनः पततीति सर्वथा प्रमादाद्यवद्यजातं परिहातव्यमिति वस्तु व्यज्यते। अलङ्कारेण पुनरलङ्कारध्वनिर्यथा तत्रैव श्रीकृष्णादीनां माधवं विजेतुं प्रयाणप्रस्तावे श्रीकृष्णेन समं भीमार्जुनौ ब्राह्मणौ भृत्वैव जरासन्धं विजेतुं प्रस्थितौ, जरासन्धेन समं पुनः सङ्गतास्ते युद्धं देहीत्यर्थयित्वा विजितवन्तस्मित्युत्प्रेक्षया वैशम्पायनप्रौढोक्तिनिष्पन्नस्वरूपया दीनतयाऽपि कार्यं सम्पादयितुं प्रवृत्तोऽपि शत्रुसविधे न वस्तुतया दीन इव भवेदित्युत्प्रेक्षा-यथा श्रीकृष्णादयो मागधसविधे इत्युपमा वाऽभिव्यज्यते-यथा वा कादम्बर्य्यां शुकवर्णिते मातङ्गस्य शबरसेनापतेरागमनसमये तत्रोपमया विरोधाभासेन च

'अपरो मृत्युरेवैष' इति रूपकं व्यज्यते-यथा वा रामायणे सीताविकलेन रामेण पम्पाया नायिकात्वेन वर्णनप्रस्तावे तत्र हि रामप्रौढोक्तिसिद्धेन रूपकोत्प्रेक्षयाऽलङ्कारेण वा सीतां ध्यायमानस्य रामस्य सर्वतः सीतैव दृष्टिगौंचरीभूताऽऽसीत्। स्थाने च ध्यानानुकालाप्रतीतिर्भवतीति रुपकातिशयोक्तिद्वारा सर्वं ध्यानानुकूलं सम्पद्यते इति रूपकं विशेषोक्तिर्वा ऽभिव्ज्ययते।

लक्ष्यार्थव्यङ्ग्यार्थयोरप्येवं व्यञ्जकत्वमुदाहर्तुकाम आह-**एवमितयादि**।

**एवं** निरुक्तदिशा। **वाच्यार्थव्यञ्जकत्वे** वाच्यार्थस्य व्यञ्जकत्वं तस्मिन्सति। **उदाहृतं** व्यङ्ग्यमिति शेषः।

अथ कमप्राप्तं लक्ष्याऽर्थव्यङ्ग्याऽर्थयोरपि व्यञ्जकत्वे व्यङ्ग्यमुदाहर्तुं प्रवृत्त आह-**लक्ष्यार्थस्य** व्यञ्जकत्वे सतीति शेषः। **यथा** 'व्यङ्ग्य' मिति शेषः। **'निःशेषच्युत' मित्यादि**। 'बोध्य' मिति शेषः। अत्राऽयभिप्रायः-पद्यार्थस्तु स्फुटीकृत एव प्राक्। अत्रेदमन्वेषणीयम्-कोऽत्र लक्ष्यार्थः? तस्य व्यञ्जकत्वे किं व्यङ्ग्वं स्फुरतीति। अत्र वापीं स्नातुमितो याता न भवती किन्तु तस्यान्तिकभिति विपरीतं परिणमन् अत एव सुचिरं तेन समं विहृत्य समायाताऽस्तीति व्यङ्ग्यार्थमचतारयति। अथ स्वतःसम्भविता लक्ष्यार्थरूपेण वस्तुनाऽलङ्कारध्वनिर्यथा—'बधान द्रागेव द्रढिमरमणीयं परिकरं किरीटे बालेन्दुं नियमय पुनः पन्नगगणैः। न कुर्य्यास्त्वं हेलामितरजनसाधाणधिया जगन्नाथस्याऽयं सुरधुनि! समुद्धारसमयः।' अत्र हि जगन्नाथ इति वाच्योऽर्थः प्रकृतानुपयुक्तपापविशिष्टत्वेन लक्ष्यते असौ पुनरितरजनसाधारणोनायं पापीति जगन्नाथो जगन्नाथ इव पापीयानिति व्यञ्जयत्यनन्वयम्। अलङ्कारेण पुनर्वस्तु ध्वनिर्यथा मम-'शान्तोऽसि दान्तोऽसि सुहृद्वरोऽसि त्वमेक एवासि दयानिधानम्। परोपकर्ता त्वमनन्य एव एवं निरर्थं भुवनयेत्रेऽपि॥' एवं निरर्थं भुवनत्रयेऽद्य परोपकर्ता न परस्त्वयाऽस्ते। इत्येक एवासि विधातृसृष्टौ दयानिधानं त्वमेव' इति। अत्र हि नितान्तं निरर्थमपकारिणं प्रत्युक्तिरिति वाच्योऽर्थः। प्रकृतेऽनुपयुज्यमानो विपरीतलक्षणया विपरिणमति। तत्सिद्धेन पुनरनन्वयेन हन्त यदद्य निरर्थमपकृतम्-अथापि मधुर एवाहं भाषे न पुनः परुषमितिदृशेऽपि मयि दुर्धियस्तव पापीयस्त्वं केन वक्तुं न शक्येतेति व्यज्यते। यद्वा-विधातृसृष्टौ त्वमेतादृश इति वरम्। यद्यपरोऽपि त्वादृशोऽभविष्यत्तर्हिकिं लोकदुःखमुदवर्धिष्यतेति किं केन वक्तुं शक्येत इति व्यज्यते। अलङ्कारेण पुनरलङ्कारध्वनिर्यथा मम-अलकतमः परिपीतं सुस्मितसुषमापुरस्कृतं मधुरम्। को न सुधानिधिसहजं सुमुखि! मुखं हन्त सम्मनुयात्॥' अस्यार्थः—अलकयोस्तमोऽलक एव तमो राहुरिति वा तेन परिपीतं सुषमा परमा शोभा तया पुरस्कृतं मधुरं मिष्टं रमणीयं वा मुखंः सुधानिधिसहजं कोन सम्मनुतेऽपि तु सर्व एवेति। अत्रोत्प्रेक्षया रूपकं समासोक्तिश्च व्यज्येते। कविप्रौढोक्तिसिद्धेन लक्ष्यवस्तुना वस्तुध्वनिर्यथा मम-'अयि सुभगे! तव नयने कृतार्थयेते अपि क्षणं यं यम्। हन्त! स एव न चाऽन्यो भुवनत्रितयेऽपि धन्यमूर्धन्यः॥' अत्र हि कृतार्थयेते इति स्वयंः बाधितः सन् पश्यत इति परिणमन् तव दृष्टिपातोऽनेकसुकृतैकलभ्य इति व्यञ्जयति। वस्तुनाऽलङ्कारध्वनिर्यथा मम-'विकसितसुस्मितरुचिरं मधुरिमसुरभितदिगन्तमुल्लसितम्। मध्ये भुवनत्रितये सुन्दरि! तव सङ्गतं वदनम्॥' अत्र हि विकास्य सुरभेरुल्लासस्य च कुसुमधर्मस्य च स्मिते मधुरिमणि वदने च वाधितत्वात्। स्मितादिपदैः कुसुमधर्म्मा लक्ष्यन्ते तैश्च मुखस्य साधर्म्यमुपस्थाप्यते इत्युपमालङ्कारो लक्ष्यवस्तुना व्यज्यते। अलङ्कारेण वस्तुध्वनिर्यथा-'जयति प्रियापदान्ते गरलग्रैवेयकः स्मरारातिः। विषमविशिखे विशन्निव शरणं बद्धकरवालः॥' अत्र हि गरलस्य रसविशेषस्य पार्थववेिषेत्वाऽसम्भवाद्गरलस्य तस्यापि तादृशधर्मित्वं लक्ष्यते तस्मिद्धेन पुना रूपकेण-अयि प्रिये झटिति प्रसीद अन्यथा त्वत्सम्मुख एवैषोऽहं प्रिये। स्मरहतके कुपितायामेव त्वयि तमहंविजितवानापि अद्य पुनर्मयि कुपितायां त्वयि स एव मां विजेतुमुद्यत इति व्यज्यते। यथा वा मम-'मानससम्भवदयितं मित्रमुपेत्य प्रहृष्यदास्यरूचि। सरसिजविकाससहजं सुमुखि! तवेदं मुखं भवने॥'

अत्र हि सरसिजविकाससहजताया मुखे बाधात्तत्साधर्म्यं लक्ष्येत एतत्सिद्धेन पुनरुपमालङ्कारेण तव मुखं सरसिज-मिव जडत्वादिसम्पन्नं किन्तु तद्विकासमात्रसमानमिति व्यज्यते । अलङ्कारेण पुनरलङ्कारध्वनिर्यथा ममसुमुखि ! तव स्मितसहजऽश्चन्द्रः स्मितं च तत्सहजम् । तदुभयमपि रमणीयं नयनानन्दसोपानम् ॥' अत्र हि उपमेयोपमया रूपकं व्यज्यते । कविनिबद्धप्रौढोक्तिसिद्धेन लक्ष्यवस्तुना वस्तुध्वनिर्यथा-'मुखं विकसितस्मितं वशितविभ्रमप्रेक्षितं समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः । उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥' अत्र विकासस्य पुष्पधर्मस्य स्मिते वशीकरणस्य प्रेक्षिते ऊर्ध्वगतिरूपसमुच्छलनरूपस्य मूर्तद्रवधर्मस्य विभ्रमे संस्थाया (मर्यादायास्त्यागस्य चेतनधर्मस्य) मतौ मुकुलितत्वस्य पुष्पधर्मस्य स्तनयुगले उद्धुरस्योत्कृष्टरू-पधुरावत्त्वस्य चेतनधर्मस्य जघने मोदस्य (हर्षस्य चेतनधर्मस्य) यौवनोद्गमे बाधितत्वाद्विकासादिभिः पदैः पुष्पा-दिनिष्ठधर्माः स्मितादिसङ्क्रान्तत्वेन लक्ष्यन्ते तैश्च सौरभादिशालित्वं व्यज्ते। अलङ्कारध्वनिर्यथा मम—'मृगमदमानितसुषमे ! सुकृतपताकावलोकने ! सुभगे ! मृदुरुचि हसितं विकिरद्वदनमिदं ते सदोदयते ॥' मृगमदेन मानिता चर्चिताऽलौकिकी शोभा तदधिष्ठितं कलेवरं यस्यास्तत्सम्बुद्धौ । सुकृतस्य पुण्यस्य पताकासूच-कमवलोकनं दर्शनं यस्यास्तत्सम्बुद्धौ । सुभगे ! मृदुलं हसित हासं विकिरत्तच्छालीति यावत् । तवेदं वदनं सदोदयते । अत्र हि भानकर्तृत्वस्य चेतनधर्मस्य मृगमदे सुकृतस्य चावलोकनस्य मूर्तत्वात् पताकायाश्च मूर्तध-र्मस्य सृकृतेऽवलोकने चामूर्ते विकिरणस्य पुष्पधर्मस्य तत्कर्तृतायाश्च पाणिधर्मस्य मृदुले हसिते मुखे चन्द्रादिध-र्मस्य च मुखे बाधितत्वात्तत्तद्गताः धर्मा अन्येषु हसितादिषु लक्ष्यन्ते । तत्सादृश्यप्रत्यायनं प्रयोजनम् । एवं च प्रसिद्धादुपमानभूतात् कुसुमात्स्मितस्य तथा चन्द्रमसो मुखस्य सर्वकालिकोदयशालित्वेन वैलक्षण्यं प्रतीयत इति व्यतिरेको ध्वन्यते ।

अलङ्कारेण वस्तुध्वनिर्यथा-'धिक् तं विधे ! पाणिमजातलज्जं निर्माति यः पर्वणि पूर्णमिन्दुम् । मन्ये स विज्ञः स्मृततन्मुखश्रीः कृत्वाऽर्धमौज्झन्मृडमूर्ध्नि यस्तम् ॥' अत्र हि अजातलज्जत्वोक्त्याऽऽक्षिप्तस्य लज्जास्पद-भवनयोग्यताया विज्ञत्वस्य स्मर्तृत्वस्य च मनस्वितागतधर्मस्य पाणौ वाधितत्वात्पाणेरपि मनस्वित्वं संलक्ष्यते-तन्मूलकेन पुनः प्रतीतेनोत्प्रेक्षालङ्कारेण सुमनस्विनो यदि कदाचित्कुत्रचित्प्रमाद्यन्ति तर्हि ते तत्क्षणादेव पुनः स्वरूपतामापद्यन्ते । इति व्यज्यते । अलङ्कारेणालङ्कारध्वनिर्यथा मम-'महतामपि सुभगानां लोचनमिथुनस्य निर्भरं पेया । सा तव तत्र विलोचनसुषमा सुकृतिन् ! वत त्वमिह ॥' अस्यार्थः-हे सुकृतिन् ! सुभग विद्वद्वर्य इति वा महतामुत्त्मानामुत्कृष्टानामिति यावत् । सुभगानां भोभाग्यास्पदानां रूपलावण्यादिसौभाग्यसम्पन्नानामिति याव-ल्लोचनमिथुनस्य नेत्रयोर्निर्भरं यथेष्टं पेयाऽऽस्वादनीया दर्शनीयेति यावत् । सा मम सखी तव नायकस्य लोचन-सुषमा तत्र तस्मिन्सङ्केतनिलये सोत्कण्ठाऽऽस्ते । त्वं पुनस्तस्या लोचनम्, अस्मिस्ततोऽतिदूरे प्रदेशे निर्विचारं तिष्ठतीति । अत्र हि-पानकर्तृकायाः पानोचितताया॒श्च सत्ताधर्मस्य रसधर्मस्य च लोचनयोर्नायिकायां चाऽसम्भ-वात्तत्तदधर्मा लक्ष्यन्ते । तत्सातिशयत्वप्रतिपादनं च प्रयोजनमिति तन्मूलकेन पुनर्व्याजोक्त्यऽलङ्कारेण लोचनवि-लोचनयोश्चन्द्ररूपत्वानध्यवसितत्वेऽपि तत्स्फुरणस्य सहृदयहृदयवेद्यत्वम् । तेन च समासोक्तिर्व्यज्यते । अथ लक्ष्यमूलः प्रबन्धगतोऽर्थध्वनिर्यथा-'निपीय यस्य क्षितिरक्षिणः कथां तथाऽऽद्रियन्ते न बुधाः सुधामपि ।...रसैः कथा यस्य सुधावधीरणी ।...पवित्रमत्राऽतनुते जगद्युगे स्मृता रसक्षालनयेव यत्कथा' इत्यादौ । अत्र हि कथाया रसधर्म-त्वाभावान्निपानं सुधाया रसविशेषमात्रत्वे आदराऽनादराऽनभिज्ञतयाऽऽदरणीयत्वं, कथाया वाक्यसन्दर्भविशेषा-त्मकत्वेन रससम्पर्कः । कथाया एवं सुकृतविशेषात्मकत्ववैधुर्य्ये पवित्रीकरणौचित्यं च न सम्भवतीति

तेनाऽऽन्यत्राऽन्यत्र गता अपि धर्म्मास्तत्तद्गता एव लक्ष्यन्ते इति नलकथाऽलौकिकमहिममहिता सर्वदैव यथेष्ट श्रोतव्येति वस्तु व्यज्यते । इति दिक् ।

एवं लक्ष्यार्थध्वनिमप्युदाहृतय व्यङ्ग्यार्थध्वनिमुदाजिहीर्षुराह-**व्यङ्ग्यार्थस्येत्यादि** ।

**व्यङ्ग्यार्थस्य** ध्वन्युदाहरणमिति शेष । **यथा-'उअ णिच्चल णिप्फंदा' इत्यादि-**

'उअ णिच्चलणिप्फंदा भिसिणीपत्तम्मि रेहइ वलाआ । णिम्मलमरगअभाअणपरिट्ठिआ संखमुत्ति व्व ॥'

इत्यादि बोध्यमित्यर्थः । अयमभिप्रायः-(पद्यस्यार्थो निरूपितः प्राक् ।) अत्र बलाकाया निष्पन्दत्वेन वाच्येन विश्वस्तत्वं व्यंङ्ग्यं तेनाऽस्य देशस्य निर्जनत्वं (रमणयोग्यत्वं) व्यज्यते । एवं च सङ्केतस्थानमेतदावयो रुचिरमिति कयाऽपि सन्निहितमपि प्रच्छन्नं कमपि सुकृतिनं प्रति स्वाभिप्रायमाविष्क्रियते ।

एवं 'निःशेषच्युतचन्दन' मित्यत्र 'उञ णिश्चलणिप्फन्दा' इत्यत्र चोदाहृते सन्देहापनुदे व्यञ्जकाऽभिधानमाह **अनयोरित्यादिना** ।

**अनयोर्**निर्दिष्टयोरुदाहृतपद्योरित्यर्थः । **स्वतःसम्भविनोर्वस्तुनोरि**ति शेषः । **लक्ष्यव्यङ्ग्याऽर्थौ** व्यङ्ग्यार्थः लक्ष्यार्थश्चेत्यर्थः । **व्यञ्जकौ** स्त इति शेषः ।

उदाहरणान्तरं तु स्वत एवोह्यमित्याह-एवमित्यादिना ।

**एवम् अन्येषु** अदाहृतभिन्नेषु । **एकादशभेदेषु** स्वतः सम्भविना वस्तुना वस्तुध्वनिमन्तरेण सव्रेषु अलङ्कारध्वन्या दिषु । **उदाहार्य**मुदाहरणीयत्वमवसेयमिति शेषः । अत्रेदमवधेयम्-लक्ष्यार्थस्य द्वादश भेदा ध्वनयः सुनिरुपिता एव प्राक् । अथ व्यङ्ग्यार्थध्वनेराद्यप्रभेदमुदाहृत्यान्येष्वपि भेदेषूदाहर्तव्येषु वस्तुनाऽलङ्कारध्वनिर्यथा मम-'उन्नतपीनपयोधरयुगलोपरिपीतमञ्जुलाभरणा ।' अभिवाञ्छितदर्शन्तः सुभगे ! कथमिति मुदे न स्याः ।' अत्र च सुभगायाः सर्वदैव दर्शनमभिप्रेतं भवति किं पुनस्तव सुन्दर्या इति दर्शनदानेन सर्वथा कृतार्थनीयस्त्वयैष इति व्यङ्ग्येन उन्नतपीनपयोधरयुगलोपरि सत्या झटिति स्फुरन्त्याः सुभगायाश्चन्द्रकलाया दर्शनं सर्वस्यापि यावत्तापितस्य लोकस्याऽभिप्रेतमिति समासोक्तिर्व्यज्यते । अलङ्कारेण वस्तुध्वनिर्यथा मम-'न हसति वर्धते न च मलिनं च न दृश्यते मनाक् क्वापि । वदनमिदं तव सुभगे ! स्फुरति न कस्य प्रमोदाय ॥' अत्र हि-व्यज्यमानेन व्यतिरेकेण तव दर्शनमेव सदैकरसत्वेन कामपि कमनीयतामावहतीति व्यज्यते । अलङ्कारध्वनिर्यथा मम-'उपारि स्थितः सुधानिधिरत्र पुनस्ते स्थितं सुखं सुभगे । उभयोरनयोर्भूयः स्पृहणीयं दर्शनं कस्या' इति । अत्र व्यज्य मानेन व्यतिरेकेणाक्षेपो व्यज्यते । कविप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिर्यथा-'स्थिताः क्षणं पक्ष्मसु ताडिताधरा' इत्युदाहृते पद्ये । वस्तुनाऽलङ्कारध्वनिर्यथा मम-'मृगमदतिलमकितनिटिलं केशच्छटयाऽपि सर्वदाऽधरितम् । नित्यं विकसनशीलं विकसत्येवाननं सुभगे ॥' अत्र च मलिनसम्पर्केण किमपि भवत्येव मलिनत्वं दुर्जना मलिनाः पुनरमलिनं मलिनयितुमीलषन्त्येव, किन्तु निर्मलान्तःकरणानान्न काऽपि क्षतिः सम्भवतीति भावना व्यज्यते । अलङ्कारेण वस्तुध्वनिर्यथा 'नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् । नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥' अत्र च व्यतिरेकेण सुकृतिभिर्ब्रह्मणः सृष्टिमपहाय कविभारत्या सृष्टायामेव विहर्तव्यमिति व्यज्यते । अलङ्कारेणालङ्कारध्वनिर्यथा मम'नक्तं चकोरमाला मधुकरमाला पुनर्दिवा बाला । भ्रमति किमेषा सुमुखि ? त्वमितः किञ्चिदपि वीक्षस्व ॥' अत्र हि व्यज्यमानया व्याजोक्त्या भ्रान्तिमान्व्यज्यते । कविनिबद्धप्रौढोक्तिसिद्धेन व्यज्यमानेन वस्तुना वस्तुध्वनिर्यथा मम'मध्ये गुरुजनवृन्दं स्थिता विदग्धा विलोक्य मां पुरतः । विकसत्सुरतसरोजं विदधौ सा मुद्रितं सहसा ॥' अत्र हि वाच्यः सूक्ष्माऽलङ्कारः, तेन सुभग ! गुरुजननिरुद्धा कि

साम्प्रतं विदध्यां तदिदानीं गन्तव्यं सन्ध्यायां पुनरागन्तव्यमिति व्यज्यते तेन परतन्त्रैव त्वदागमनेन विकसितमपि हृदयं निमीलयन्ती स्वात्मानं वञ्चयामीति न क्षन्तव्य एतस्या अपराध इति व्यज्यते ।

वस्तुनाऽलङ्कारध्वनिर्यथा मम—'सुभगे ! तव मुखमेकं पश्यन् सुकृती कृतार्थतां मनुते । भ्रमति स एव सुतप्तः क्वचिदपि विन्दन्न चान्यदा शर्म्म ॥' अत्र हि सुभगायास्तव दर्शने जाते सुकृती प्रसीदति प्रमुदं प्राप्नोति च तदितरदर्शने पुनर्जाते सन्ताप एव शरणमिति व्यज्यमानेन त्वमेव सुभगा तवैव सुखं विलोकितं सुभगं त्वन्मुखम-नवलोक्य स्थितस्य कमलं सुधानिधिरपि वा सुभग इति व्यतिरेको व्यज्यते । अलङ्कारेण वस्तुध्वनिर्यथा मम-'विक-सतु सरोजमुदयतु सुधानिधिर्वा मुदा किमेतेन । मम तु मुदे तव सुभगे ! वदनं भुवने सुवर्णायाः ।' अत्र हि व्यतिरेकेण व्यज्यमानेन यदि परजनप्रमोदवर्धनहेतुकं विकसनमुदयनं वा न स्यात्तर्हि तत्सर्वं मृषैवेति व्यज्यते । अलङ्कारेणाल-ङ्कारध्व निर्यथा मम-'एकं जीवयसि त्वं सुदति ! निहंसि द्वितीयमेव त्वम् । किमिदं का वा त्वमपि स्थगयसि सत्यं बलाञ्चेतः ॥' अत्र हि विरोधेन व्याजोक्तिरभेव्यज्यते न च विरोधो वाच्यः । अनेकक्रियाकुशलाया नायिकाया विरुद्धयोः क्रिययोयोग्यतापादनमुखेन विस्मयमात्रस्याऽवशेषितत्वात् । अयं पुनः प्रबन्धगतोऽपि द्वादशविध एव । तत्र यथा अभिज्ञानशाकुन्तले प्रथमेऽङ्के-'शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहाऽस्य ।' इत्यादि प्रस्तूय । 'असंशयं क्षत्रपरिग्रहक्षमा यदाऽऽर्यमस्यामभिलाषि मे मन । सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तः करणप्रवृत्तयः' इत्यादौ 'स्खलनपदेष्वपि न महातः कदापि स्खलन्ति इत्यनेन व्यज्यमानेन महतां सर्वमनुकूलं दृष्टचरं, ते च स्वत एव महनीयचरिता भवन्तीत्यभिव्यज्यत इति दिक् ॥ अत्रेदमवसेयम्- ध्वनिस्तावल्लक्षणामूलोऽभिधा-मूलश्च । तत्राद्यः-अविवक्षितवाच्यः द्वितीयः पुनर्विवक्षितान्यपरवाच्यश्च । अथासावेव अर्थान्तरसङ्क्रमितवाच्यः, अत्यन्ततिरस्कृतवाच्यश्चेति । विवक्षिताऽन्यपरवाच्यः पुनरसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्च । तत्राद्यो रसादिस्वरूप एकप्रकार एव, द्वितीयः पुनः शब्दशक्तिमूलोऽर्थशक्तिमूलः शब्दार्थोभयशक्तिमूलश्चेति त्रिप्रभेदः । अथ शब्दशक्तिमूलो वस्तुरूपोऽलङ्कारमूलश्चेति द्विविध एव, अर्थशक्तिमूलः पुनः स्वतः सम्भवित्वादिरूपः द्वादशविधः । एवं शब्दार्थोभयशक्तिमूल एक एव वाक्यनिष्ठ अथ शब्दशक्तिमूलोऽर्थशक्तिमूलश्च पदे वाक्ये च, किं त्वर्थशक्तिमूलः प्रबन्धेऽपीति निर्णीतम् । ननु अर्थशक्तिमूलस्याभि धामूलत्वे सिद्धान्तितेऽपि **लक्ष्यार्थस्य यथा**-इत्याद्यभिधानं किम्मूलमिति चेत्सत्यम् । अत एव काव्यप्रकाशकारेण लक्ष्यार्थस्य यथेत्यादिन प्रपञ्चनमार-ब्धम् । अथैवं सति यदि विचारययामस्दैवं प्रतीमः । लक्षणामूलस्तावद्ध्वनिरविवक्षित वाच्यो न विवक्षितस्तत्र वाच्यः किन्तु लक्ष्यार्थस्तत्र विवक्षितः स्यादिति मा भृद् विवक्षितो वाच्यो लक्षणामूले ध्वनौ, किन्तु लक्ष्यार्थस्तु विवक्षित एवेत्यत्र न काऽपि प्रतिपत्तिरिति न तिरोहितं विदुषाम् । अर्थान्तरसङ्क्रमितो वाच्य एव लक्ष्यः स पुनर्विवक्षितश्च । असौ पुनः स्वतः सम्भविवस्त्वादिस्वरूपो भवितुमर्हत्येव विवक्षितार्थनतिरिच्यमानत्वात् । वाच्य इति लक्ष्य इति सत्यपि प्रभिन्नत्वे अर्थोऽर्थ इति जात्या तु न तथा । एवं व्यङ्ग्योऽप्यर्थः, अभिधाया मुख्यवृत्तित्वा-ल्लक्षणायाः पुनरमुख्यवृतित्वाल्लक्षणामूलस्य ध्वने स्तनमूल-वमिति लक्ष्यार्थस्याभिधामूलत्वानपायात् । वाच्यस्य लक्ष्यस्य चार्थस्वरूपेणानतिरिक्तत्वादर्शशक्तिमूलसय लक्ष्यार्थमूलत्वमपि निबोधमिति बोध्यम् ।'

**पदांशवर्णरचनाप्रबन्धेष्वस्फुटक्रमः ।**

असंलक्ष्यक्रमव्यङ्ग्यो ध्वनिस्तत्र पदांशप्रकृतिप्रत्ययोपसर्गनिपातादिभेदादनेकविधः ।

यथा—

**'चलापाङ्गं दृष्टिं स्पृशसि बहुशो वेपथुमतीं**

**रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।**

**करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं**

**वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं खलु कृती ॥'**

अत्र 'हताः' इति न पुनः 'दुःखं प्राप्तवन्तः' इति हन्प्रकृतेः ।

---

## विवृतिः

'अस्फुटक्रमः' इत्यस्य विवरणम् 'असंलक्ष्यक्रमव्यङ्ग्यः' इति । चलापाङ्गामिति । भ्रमरं प्रति दुष्यन्त-
स्योक्तिरियम् । वेपथुमतीमतिचपलाम् । करं व्याधुन्वन्त्याः शकुन्तलायाः । भ्रमरनिराकरणाय करव्याधूननम् । रतेः
सुरतेच्छायाः सर्वस्वं प्रधानकारणम् । यद्वा रतौ सर्वस्वमिवादरणीयम् । यद्वा रतेः कामपत्न्याः सर्वस्वं युवजये
परमसहायम् । वयं तद्दृष्टिस्पर्शादिवञ्चिताः । तत्त्वान्वेषात् तत्त्वपरीक्षातः । हता हतप्रायाः । अतिपीडिता इत्यर्थः ।
कृती धन्यः । यद्वा तत्त्वान्वेषात् तत्कर्माकर्तृत्वस्यान्वेषात् मुहुर्विसंवादीच्छातो वयं हता इत्यर्थः । अत्र विप्रलम्भो-
त्कर्षो दुःखातिशयेन व्यज्यते । दुःखातिशयश्च हता इत्यनेन व्यज्यते । अत्रेति । 'हताः' इति प्रयुक्तम्, न तु 'दुःखं
प्राप्तवन्तः' इति प्रयुक्तम् । तथात्वे प्रकृतोपयुक्तस्य दुःखातिशयस्य प्रतीतिर्न स्यात् । हन्प्रकृतेरिति । व्यञ्जकत्व-
मिति शेषः ॥

## विवृतिपूर्तिः

अपि तत्त्वान्वेषणाद्वस्तुवृत्तेऽन्विष्यमाणे हता आया-
चलेति । हे मधुकर, वयमेवंविधाभिलाषचाटुप्रवाणा अपि तत्त्वान्वेषणाद्वस्तुवृत्तेऽन्विष्यमाणे हता आया-
समात्रपात्रीभूता जाताः । त्वं खल्विति निपातेनायत्नसिद्धःतवैव चरितार्थत्वमिति । तथाहि—कथमेतदीयकटाक्ष-
गोचरा भूयास्म, कथमेषास्मदभिप्रायव्यञ्जकं, रहोवचनमाकर्ण्यात्, कथं हठादनिच्छन्त्या अपि परिचुम्बनं
विधेयस्मेति यदस्माकं मनोराज्यपदवीमधिशेते तत्तवाययत्नसिद्धम् । भ्रमरो हि नीलोत्पलधिया तदाशङ्काकातरां
दृष्टिं पुनः पुनः स्पृशति । श्रवणावकाशपर्यन्तत्वाच्च नेत्रयोरुत्पलशङ्कानपगमात्तत्रैव ध्वन्नास्ते । सहजसौकुमार्यत्रा-
सकातरायाश्च रतिनिधानभूतं विकसितारविन्दामोदमधुरमधरं पिबतीति । अत्र हि भ्रमरस्वभावोक्तिरलंकारो
रसानुगुणः ॥

## विज्ञप्रिया

पदांश इति—अस्फुटपदक्रमस्य अक्रमव्यङ्ग्यध्वनिरर्थ इत्याह—असंलक्ष्येति। अत्र ध्वनिपदं काव्य-परम्। व्यङ्ग्यपरत्वे व्यङ्ग्यो व्यङ्ग्य इत्यन्वयानुपपत्तेः। पदांशादिव्यङ्ग्य इत्यर्थः। तत्र पदांशद्योत्यानां बहुविधत्वमाह—तत्रेति।

चलापाङ्गामिति। शकुन्तलां व्याकुलयन्तं भ्रमरं प्रति दुष्यन्तस्योक्तिरियम्। तत्त्वान्वेषात् इति। किं ब्राह्मणस्य औररसकन्यात्वेन मत्परिणयायोग्या, किं वा तस्य पुष्टकन्यात्वेन मत्परिणययोग्या इत्येवं तत्त्वस्यान्वेषणादित्यर्थः। हनप्रकृतेरिति। हनधातुरूपप्रकृतेरित्यर्थः। अत्र मृत्युकथनात् विप्रलम्भातिशयो व्यङ्ग्यः।

## लोचन

पदांशे इति—इह यद्यपि प्रकृत्यादेः केवलस्य न व्यञ्जकत्वम्, तथापि वाचकसमुदायप्रविष्टस्य रसादिषु तदतिशयाधायकत्वं सहृदयानुभवसिद्धम्। हता इत्यादि—अत्र हननप्रतीतेरनन्तरं निर्वेदव्यङ्ग्यत्वमिति शेषः। तथा ह्यत्र हता इत्यस्य स्थाने क्तप्रत्ययं स्थापयित्वा हनः स्थाने प्रकृत्यन्तरनिवेशने न तथा प्रतीतिः।

## कुसुमप्रतिमा

असंलक्ष्यक्रमव्यङ्ग्यध्वनेर्भेदानाह पदांशेति। न स्फुटो न स्पष्टं ज्ञायमानः क्रमो व्यञ्जकव्यङ्ग्ययोः पौर्वापर्य्यं यत्र सः असंलक्ष्यक्रमव्यङ्ग्योः ध्वनिः, पदांशे, वर्णे, रचनायां शब्दग्रथनपरिपाठ्याम्, प्रबन्धे महावाक्ये बहुवचनात् पदे वाक्ये च सम्भवतीति षड्विध इत्यर्थः। न चात्र षड्विधत्वाङ्गीकारात् "तत्राद्यो रसाभावादिरेक एवात्र गण्यते" इति पूर्वोक्तकारिकया सह विरोध इति वाच्यम्, अमीषां षड्विधानां तस्यैवावान्तरभेदाभिप्रायात्।

अस्फुटक्रमशब्दार्थं व्याचष्टे असंलक्ष्यक्रमव्यङ्ग्यो ध्वनिरिति। पदांशशब्दस्यार्थं दर्शयितुमाह तत्रेति। तत्र तेषु पदांशादिषु मध्ये। निपातोऽत्र अव्ययरूपः; तेन तस्य द्योतकमात्रतया उपसर्गवत् स्वान्वयिपदांशत्वमित्याशयः। आदिपदेन वचनादीनां ग्रहणम्।

तत्र प्रकृतिरूपपदांशगतध्वनेरुदाहरणमाह क्कलेति। अभिज्ञानशकुन्तले भ्रमरकर्त्तृकशकुन्तलामुखबाधामवलोक्य दुष्मन्तस्योक्तिरियम्। हे मधुकर! भ्रमर! भ्रमर! त्वं चलस्तव दंशनभयात् चपलः अपाङ्गः प्रान्तभागी यस्यास्ताम्, अतएव वेपथुमतीं कम्पान्वितां दृष्टिं स्पृशसि; रहस्याख्यायीव गुप्तविषयभावीव कर्णान्तिकचरः कर्णसमीपचारी सन् मृदु अस्थुटं स्वनसि रौषि; करं हस्तं व्याधुन्वत्यास्तवापसारणायकम्पयन्त्याः शकुन्तलायाः रतिसर्वस्वं रमणकाले सर्वप्रधानतया आदरणीयम् अधरं पिबसि। अतएव वयं तत्वस्य याथार्थ्यस्य "कस्येयं कन्या" "मम रमणयोग्या न वा" इति विषयस्य अन्वेषात् अन्वेषणात् हता अत्यन्ताकुलतया मृतप्रायाः, त्वं खलु कृती कृतार्थी जातोऽसि।

व्यङ्ग्यं दर्शयितुमाह अत्रेति। हता इति आकुलत्वान्मृता एव, न पुनर्दुःखमात्रं प्राप्तवन्त इत्यर्थः। हन्प्रकृतेर्दुःखातिशयस्य व्यञ्जकत्वमिति शेषः।

## विमला

पदांशेति ।—अस्फुटक्रमः संलक्ष्यक्रमव्यङ्ग्यः ध्वनिः पदांश, वर्णे, रचनायां, प्रबन्धे च भवति । तत्र—पदांशादिषु मध्य इत्यद्येः, पदांशकः, ध्वनिरिति शेषः प्रकृत्यादिभेदादनेकविधः इति गद्यांशेनान्वति ।

पदांशगतमुदाहरति, चलेति ।—भ्रमरं प्रति दुष्मन्तस्योक्तिरियम् । हे मधुकर !भ्रमर ! करं—पाणिं, व्याधुन्वयाः,—बाणनार्थमितक्षतो विक्षिपन्त्याः, अस्याः शकुन्तलाया इति शेषः, अली—चञ्चलौ, अपाङ्गौ—नेत्रपान्तौ ("अपाङ्गौ नेत्रयोरन्तौ" इत्यमरः) यस्याः तां तथोक्तां, वेपथ्युमतीं—त्वदागमनशङ्कया इतस्ततः सतर्कष्टिपातेन अतिक्षपलाभित्यर्थः, दृष्टिं—नयनं, बहुशः,—पुनः पुनः स्पृशसि; रहस्याख्यायीव—गुप्तभाषीव, कर्णान्तिकचरः,—कर्णसमीपगः सन्, मृदु—नन्दं, स्वनसि—गुञ्जसि; [अनेन कपोलचुम्बनविशेषः ध्वन्यते । कामिनः खल् रहस्याख्यानव्याजेन कपोलं चुम्बन्ति इति प्रसिद्धिः] तथा रतिसर्वस्वं—सुरतसर्वधनम्; यद्वा,—रतौ सर्वस्वमिव आदरणीयम्, [अनेन तस्य स्वाभिलाषः व्यज्यते] अधरं—दन्तच्छदं, पिबसि—चुम्बसि, दशसि इत्यर्थः; अतः त्वं खलु—त्वमेव, कृती— क्रतबहुकृत्यत्वात् कृतार्थ एव, तवैव कृतित्वं सर्वभावेन सिद्धमिति भावः वयम्—एवंविधाभि खाषिणः अपि तदृष्टिम्पर्शादिवर्ज्जिताः इत्यर्थः, [अत्र बहुवचनेन आत्मनि गौरवं, तच्च अहं प्रख्यातपुरुवंशोत्पन्नः, सुरूपः युवा, मानवः, नृपतिः, अस्याः सर्वथा योग्योऽपि इत्यादिकं व्यज्यते] तत्त्वान्वेषात्—इयं क्षत्रपरिगृहक्षमा न वेत्यादितत्त्वपरीक्षातः, दताः,—हतपायाः, अतिपीड़िताः इत्यर्थः; यद्वा—वस्तुवृत्ते अन्विष्यमाने आयासमात्रपात्रीभूता जाता इत्यर्थः । [अत्र त्वं कृतौ, न वयमिति व्यतिरेको व्यङ्ग्यः, भ्रमरस्य स्वभावोक्तेः स्वभावोक्तेः, मधुकरस्य कृतित्वे पादक्षयगतं वाक्यजातं हेतुभूतमिति काव्यलिङ्गं भ्रमरस्य च कमलएवानुरागौचित्येन मुखे तद्धियैवानुरञ्जनमिति कृत्वा भ्रान्तिमान् व्यङ्ग्यश्चेति बोध्यम्] । अभिज्ञानशकुन्तलस्वेदं पद्यम् शिखरिणौ वृत्तम् ।

अत्रेति ।—हता इत्यनेन दुःखातिशयो व्यज्यते, दुःखं प्राप्तवन्त इति प्रयोगेण प्रकृतोपयुक्तस्य दुःखातिशयस्य प्रतीतिर्न स्यात् इत्याशयः । हन् प्रकृतेरिति ।—हन् प्रकृतेरेव प्राधान्येन व्यञ्जकत्वमिति शेषः ।

## लक्ष्मी

असंलक्ष्यक्रमव्यङ्ग्यध्वनेर्भेदान् दर्शयति—पदांशेति । न स्फुटो न स्पष्टं क्रमो व्यङ्ग्यव्यञ्जकयोः पौर्वापर्य यत्र स तथोक्तः, असंलक्ष्यक्रमव्यङ्ग्य इत्यर्थः । स च ध्वनिः पदानां 'सुप्तिङ्न्तमिति' पाणिन्यनुशासनात् तिङ्सुबन्धरूपाणाम् अंशेषु प्रकृतिप्रत्ययोपसर्गनिपातादिषु वर्णेषु 'मूर्ध्नि वर्गान्त्यगा युक्ताः' इत्यादिनाष्टमे वक्ष्यमाणेषु अक्षरविशेषेषु रचनायां वैदर्भ्यादिसंज्ञिकायाम् अष्टमे वक्ष्यमाणायाम्, यद्वा रचनासु दीर्घसमासादिरूपविन्यासविशेषेषु प्रबन्धेषु महावाक्येषु बहुवचनात् पदे वाक्ये च सम्भवतीति षड्विध इत्यर्थः । यद्यपि षड्विधत्वाऽभ्युपगमे 'तत्राद्यो रसभावादिरेक एवात्र गण्यते' इति पूर्वोक्तेन सह विरोधः प्रतीयते तथापि तदवान्तरभेदाऽभ्युपगमेन समाधेयम् ।

अस्फुटक्रमपदस्य असंलक्ष्यक्रमंव्यङ्ग्यध्वनिरर्थ इत्याह—असंलक्ष्येति । पदांशपदस्यार्थ बोधयितुमाह—तत्रेति । तत्र पदांशादिषु मध्ये । प्रकृतिः धातुरूपा चेति द्विविधा । तत्वञ्च प्रत्ययविधावुद्देश्यतावच्छेदकक्रान्तत्वं प्रत्ययविधानावधित्वं वा बोध्यम् । प्रत्ययः प्रत्येति अर्थ बोधयतीति प्रत्ययः । तत्त्वञ्च प्रत्ययाधिकारपठितत्वे

सत्यर्थबोधकत्वम्। उपसर्गाः प्रादयः। निपाता अन्राव्ययरूपाः, तेन द्योतकमात्रतया उपसर्गवत् स्वान्वयि पदांशत्वमित्यभिप्रायः। आदिशब्देन प्रथमपुरुषमध्यमपुरुषोत्तमंपुरुषादीनां परिग्रहः।

तत्र प्रकृतिरूपपदांशगतध्वनेरुदाहरणं दर्शयति—चलापाङ्गमिति। अभिज्ञानशाकुन्तले शकुन्तलां व्याकुलयन्तं भ्रमरं प्रति दुष्यन्तस्योक्तिरियम्। हे मधुकर भ्रमर! त्वं चलौ तव दंशनभयाच्चपलौ अपाङ्गौ नेत्रप्रान्तभागौ यस्यास्ताम्, 'अपाङ्गौ नेत्रयोरन्तौ' इत्यमरः, अत एव वेपथुमतीं त्वद्भयेन कम्पमानाम्, अतिचपलामित्यर्थः दृष्टिं स्पृशसि, रहस्यं गोपनीयम् आचष्टे आख्याति वेति रहस्याख्यायी गुप्तविषयभाषीव, कर्णान्तिकचरः श्रवणेन्द्रियसमीपचारी सन्, मृदु कोमलम् अस्फुटं वा यथास्यात्तथा स्वनसि शब्दं करोषि, तथा करं हस्तं व्याधुन्वत्यास्तवापसारणाय इतस्ततो विलोयन्त्याः शकुन्तलायाः, रतिसर्वस्वं रतेः सुरतेच्छायाः सर्वस्वं प्रधानकारणम्, यद्वा रतौ सर्वस्वं सर्वप्रधानतयादरणीयम्, वा रतेः कामपत्न्याः सर्वस्वं युवजये परमसहायम्, अधरं दन्तच्छन्दं पिबसि दशसि अत एव वयम् अहमित्यर्थः, तत्त्वान्वेषात् किं ब्राह्मणस्य औरसकन्यात्वेन मत्परिणयायोग्या किं वा तस्य क्षत्रियकन्यात्वेन मत्परिणययोग्या इत्येवं तत्त्वस्यान्वेषणादित्यर्थः। हता अत्यन्ताकुलतया मृतप्रायाः दैवेन विप्रलम्भिता इति शेषः। वयमेवंविधाभिलाषचाटुप्रवणा अपि तत्त्वान्वेषणाद्वस्तुवृत्तेरन्विष्यमाण आयासमात्रपात्रीभूता जाता इति भावः, किन्तु त्वं खलु कृती कृतार्थः जातोऽसि। शिखरिणीच्छन्दः।

व्यङ्ग्यं दर्शयति—अत्रेति। हताति प्रयुक्तम्, न तु दुःखं प्राप्तवन्त इति प्रत्युक्तम्, तथा सति प्रकृतोपयुक्तस्यदुःखातिशयस्याभिव्यक्तिर्न स्यात्। हन् प्रकृतेः हन् धातुरूपप्रकृतेः दुःखातिशयस्य 'व्यञ्जकत्व'मिति शेषः। अत्र मृत्युकथनात् विप्रलम्भातिशयो व्यङ्ग्यः, हता इत्यस्य स्थाने क्तप्रत्ययं स्थापयित्वा हनः स्थाने प्रकृत्यन्तरनिवेशने तु न तथा प्रतीतिः। अथ च त्वं खल्विति निपातेनायत्नसिद्धं तवैव चरितार्थत्वमिति। तथाहि—कथमेतदीयकटाक्षगोचरा भूयास्म, कथमेषास्मदभिप्रायव्यञ्जकं रहो वचनमाकर्ण्यात् कथं नु हठादनिच्छन्त्या अपि परिचुम्बनं विधेयास्मेति यदस्माकं मनोराज्यपदवीमधिशेते तत्त्वायत्नसिद्धम्। भ्रमरो हि नीलोत्पलधिया मदाशङ्काकरीं दृष्टिं पुनः पुनः स्पृशति, श्रवणावकाशपर्यन्तत्वाच्च नेत्रयोरुपलशङ्कानपगमात्तत्रैवातिशयेन ध्वनिं कुर्वन्नास्ते सहजसौकुमार्यत्रासकातरायाश्च रतिनिधानभूतं विकसितारविन्दकुवलयामोदमधुरमधरं पिबतीति भ्रमरस्वभावोक्तिरलङ्कारोऽङ्गतामेवाभिलाषा**विप्रलम्भस्य** प्रकृतरसस्योपगतः।

## रुचिरा

एवं संलक्ष्यक्रमव्यङ्ग्यं ध्वनि प्रपञ्च्य तत्राद्यो रसभावादिरित्याद्युक्तदिशा प्रपञ्चितोऽध्येकविधो रसाद्यात्माऽसंलक्ष्यक्रमव्यङ्ग्यो वाक्ये तु सम्भवत्येव किन्त्वन्यत्राऽपि सम्भवति न वेति जायमानायामाकाङ्क्षायां तत्स्थानानन्तरस्थापि प्राधान्येन व्यपदेशा भवन्तीति न्यायमनुसृत्य निर्देशमाह-२९४ **पदांशवर्णरचनाप्रवन्धेष्वित्यादिना।**

**२९४ पदांशवर्णरचनाप्रबन्धेषु** पदानां 'सुप्तिङन्तं पदम्।' १/४/१४ इत्युक्तदिशा सुबन्तानां तिङन्तानां चांशाः प्रकृतिप्रत्ययोपसर्गरूपास्त्रिप्रकारा अवान्तरभेदोनानेकप्रकारास्ते च ये वर्णास्तेषां वा रचना ते च या रचनेति वेति सा च प्रबन्धश्चेति तेषु पदांशेषु पदांशवर्णेषु वा वर्णरचनायां रचनायां वा प्रबन्धे चेत्यर्थः। **अस्फुटक्रमो** न स्फुटः संलक्ष्यक्रमः क्रमव्यङ्ग्यो यत्र सोऽसंलक्ष्यक्रमव्यङ्ग्य इत्यर्थः 'सम्भवती' ति शेषः।

कारिकोक्तमेव स्पष्टयति-**असंलक्ष्येत्यादिना।**

**असंलक्ष्यक्रमव्यङ्ग्यः** रसादिरूप इति भावः। **ध्वनिः। सः। च। पदांशप्रकृतिप्रत्ययोपसर्गनिपातादिभेदात्** पदांशाः पदावयवभूताः प्रकृतिप्रत्ययोपसर्गनिपातादयस्तेषां भेदस्तमात्तमङ्गीकृत्येत्यर्थः। आदिपदेन वर्णप्रबन्धरचनानां ग्रहणम्। **अनेकविधः**।

उदाहरति-**यथेत्यादिना**।

**यथा**-"हे **मधुकर! करं** हस्तम्। **व्याधुन्वन्त्या** इतस्ततस्तवापनयनाय सञ्चालयन्त्याः 'अस्या' इति शेषः। चलापाङ्गां चलौ चञ्चलावपाङ्गौ प्रान्तभागौ यस्यास्तथाभूताम्। 'अपाङ्गो नैत्रयोरन्तौ' इत्यमरः। **वेपथुमतीं** वेपथुः कम्पोऽस्यामस्तीति तथोक्ताम्, तव दंशनभयेन कम्पमानाम्। **दृष्टिम्। बहुशो** बारंवारम्। **स्पृशसि**। रहस्याख्यायी रहस्यं गोप्यमाख्यातीति तथोक्तः। गोपनीयस्यार्थस्य वक्तेति भावः। **इव। कर्णान्तिकचरः** कर्ण समीपचारी 'स' न्निति शेषः। **मृदु** मधुरं यथा तथा। **स्वनसि** (अनेन तस्य तन्मिषेण चुम्बनकारित्वं ध्वन्यते। कामिनो हि रहस्यकथनमिषेण कपोलामृतं पिबन्तीति नातितिरीहितम्)। एवम्-**रतिसर्वस्वं** रतेरुपचारात्तदानन्दस्य सर्वस्वं सर्वप्रकारेण फलभूतम्। **अधरमुपचारात्तत्रत्यममृतम्। पिबसि। वयम्। तत्त्वान्वेषात्** 'इयं कस्य सुता, परिणेया वा न वा' इति स्वरूपान्वेषणात्। **हता** मृताः, न कवेलं दुःखं प्राप्ता इति शेषः। **त्वम्। खलु** निश्चयेन। **कृती** कृतार्थः। इदमभिज्ञानशाकुन्तलस्य। अत्र च शिक्षरिणीवृत्तम्॥ २०२॥"

**इत्यत्र। "हताः" इति** 'प्रयुक्त' मिति शेषः। **न। पुनः। "दुःखम्। प्राप्तवन्तः"। इतिः। अतःहन्प्रकृतेः** 'व्यञ्जकत्व' मिति शेषः। अयम्भावः-प्रत्ययविधानावधिः प्रकृतिः, सा च-धातुस्वरूपा नामस्वरूपा चेति द्विधा। एवं सति 'हता' इति हन् प्रकृतेरेव 'दुःख प्राप्तवन्त' इत्यपेक्षया दुःखातिशयव्यञ्जकत्वं स्फुटम्। इति।

'मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु ॥'

अत्र 'तु' इति निपातस्यानुतापव्यञ्जकत्वम्।

---

## विवृतिः

मुहुरिति। गौतम्या शकुन्तलायां नीतायां दुष्यन्तस्यानुतापवर्णनमिदम्। प्रतिषेधाक्षरेण मैवं कुर्विति प्रतिषेधवचसां विक्लवं व्याकुलमतएवाभिरामम्। तादृशप्रतिषेधस्य विधिपर्यवसन्नतया तत्प्रयोगेण मुखस्य रमणीयत्वमिति भावः। अंसे स्कन्धे विवर्तयितुं परिवृत्त्य स्थातुं शीलमस्य। **कथमपि** चक्षुः परागापसारणच्छलेन उन्नमितमंङ्गुलिभ्यामूर्ध्वीकृत्य धृतम् ॥

## विज्ञप्रिया

मुहुरङ्गुलीति—शकुन्तलां प्राप्य तत्सम्भोगविघ्ने सति अनुतप्यमानस्य दुष्यन्तस्य उक्तिरियम्। असंविवर्त्तीति भुजमूले परावर्त्तमानम्। अङ्गुलिः शकुन्तलायाः। अत्रेति—नञा एव चुम्बनाभावलाभे तुशब्देन चुम्बनस्य अत्यन्तव्यवच्छेदलाभात् विप्रलम्भानुतापातिशयो व्यङ्ग्यः।

## कुसुमप्रतिमा

निपातगतध्वनिमुदाहरति मुहुरिति। शाकुन्तले गौतम्या सार्द्धं शकुन्तलायामपसृतायां दुष्मन्तस्य सानुतापोक्तिरियम्। मुहुर्वारं वारम् अङ्गुल्या संवृतौ आवृतौ अधरोष्ठौ यस्य तत्, प्रविषेधाक्षरे तादृशकरणनिषेधकवाक्योच्चारणावसरे विक्तवेन विह्वलतया अभिरामं सुन्दरम्, तथा अंसे स्कन्धे विवत्र्तते परिवृत्य तिष्ठतीति तत्तादृशम्, पक्ष्मलाक्ष्या घनलीमशालिनयनायाः शकुन्तलायाः, कथमपि नयनगतकुसुमरेणुदूरीकरणव्याजेन, उन्नमितम् उत्तोल्य धृतम्, न चुम्बितन्तु; अतः किं कृतमेतदिति भावः।

व्यङ्ग्यमाह अत्रेति। अत्र तुशब्दस्य चुम्बितपदान्वयित्वात्तदं शत्वेन पदांशध्वनेरवेदमुदाहरणमिति तत्प्रकरणमध्य एव दर्शितमिति बोध्यम्।

## विमला

मुहुरिति।—गौतम्या शकुन्तलायां नीतायां दुष्मन्तस्यानुतापवर्णनमेतत्। पक्ष्माणि सन्त्यनयोरिति पक्ष्मले—["लिक्ष्मादिभ्यश्च" (५/२/९७ पा.) इति लच् शोभनपक्ष्मशालिनी, अक्षिणी—नयने, यस्यास्तथोक्नायाः, ["बहुब्रीहोसृक्थ्यक्ष्णोः" (५/५/११३ पा०) इति षक्षि "षिद्गोरादिभ्यश्च" (४/१/४१ पा.) इति ङीप्।] शकुन्तलाया इति शेषः, मुहुः,—पुनः पुनःअङ्गुलिभिः, संवृतौ—आच्छादितो, अधरोष्ठौ यस्य तादृशं, प्रतिषेधाक्षरेण—"न हि न हि" इत्येवं वर्णप्रयोगेण, यो विक्लवः,—वैक्लव्यं, तेन अभिरामं—मनोहरम्; यद्वा,—प्रतिषेधवचसा विक्लवं—व्याकुलम्, अत एवाभिराममित्यर्थः, अंसविवत्रि—महताऽऽयासेन, चक्षुःपरागापसारणच्छलेन इति यावत्, उन्नभिमतम्—अङ्गुलीभ्यामूर्द्धोकृत्य धृतं, चुम्बनयोग्तां नीतमित्यर्थः, तु—किन्तु, न चुम्बितं—न मया हतपुण्यन चुम्बितुं शक्तमित्यनुतापातिशयः। [अत्र स्वभावोक्तिरलङ्कार]। अभिज्ञानशकुन्तलस्येद पद्यम्। अत्रौपच्छन्दसकल्लामच्छन्दः तदुक्तं यथा पैङ्गलं,—"गोपच्छन्दसकम्" इति।

## लक्ष्मी

निपातगतध्वनिमुदाहरति—मुहुरङ्गुलीति। शकुन्तलां प्राप्य तत्सम्भोगविघ्ने सति अनुतप्यमानस्य दुष्यन्तस्योक्तिरियम्। मुहुर्वारं वारम् अङ्गुल्या संवृतौ मत्कर्तृकचुम्बनप्रतिषेधाय आवृतौ अधरोष्ठौ यस्य तत्, प्रतिषेधाक्षरे 'मा''मा' इति चुम्बननिषेधवाक्योच्चारणवसरे विक्लवेन विह्वलतया अभिरामं मनोज्ञम्, तादृशप्रतिषेधस्य विधिपर्यवसन्नतया तत्प्रयोगेण मुखस्य रमणीयत्वमिति भावः, तथा अंसे स्कन्धोपरिभागे विवर्त्तते चुम्बनाशङ्कात् तद्रक्षणायैव लज्जयैव वा परावर्त्तत इति अंसविवर्त्ति, पक्ष्मणि नयनलोमानि अनयोः सन्तीति पक्ष्मले घनलोमशालिनी 'सिध्यादिभ्यश्च' इति पा. सूत्रेणास्त्यर्थे लच् प्रत्ययः, अक्षिणी लोचने यस्यास्तादृश्याः शकुन्तलायाः, मुखम् आननम्, कथमपि लोचनगतकुसुमपरागापनोदनच्छलेन उन्नमितम् अङ्गुलिभ्यां चुम्बनार्थमूर्ध्वीकृत्य धृतम्, तु किन्तु न चुम्बितम् ममायमतिशयः प्रमादोऽभूदिति भावः। औपच्छन्दसिकं च्छन्दस्तल्लक्षणन्तु—'गौपच्छन्दसकम्' इति पिङ्गलाचार्यः।

व्यङ्ग्यं निर्दिर्दशति—अत्रेति। नञा एव चुम्बनाभावलाभे तु-शब्देन चुम्बनस्यात्यन्तव्यवच्छेदलाभात् विप्रलम्भानुतापातिशयो व्यङ्ग्यः। एवञ्च तुशब्दस्य चुम्बितपदान्वयित्वात्तदंशत्वेन पदांशध्वनेरुदाहरणम्। व्यङ्ग्यान्तरमप्यत्र बोध्यम्, तथाहि—नायिकाया अङ्गुलिसम्बरणपौनःपुन्योक्त्या नायकस्य तन्निपौनः पुन्यं व्यज्यते, तथा कामशास्त्रे ऊर्ध्वोष्टे चुम्बनस्याविधानादोष्ठपदेनैवाधरोष्ठस्य लाभेऽप्यधरपदोपादानेन 'उमामुखे बिम्बफलाधरोष्ठे' इत्यादाविव तस्य पाटलिमसौकुमार्यमाधुर्यातिशयो ध्वन्यते। अपि च नायिकायाः प्रतिकूलाचरणेन नायकस्य मदनाभिवृद्धिः प्रतीयते। तथाचोक्तं रघुवंशे

**'चुम्बने विपरिवर्त्तिताधरं हस्तरोधि रसनाविघट्टने।**

**विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद्वधूरतः ॥' इति।**

अथाप्यत्र बलात्कारे सत्यपि क्रन्दनापसरणादिकमविधाय अङ्गुलिसंवरणादिविधानेन सुरते नायिकाया अर्धाङ्गोकारो द्योत्यत इति।

## रुचिरा

"**पक्ष्मलाक्ष्याः** प्रशस्तानि पक्ष्माणि सन्त्यनयोरतिपक्ष्मले तादृशे अक्षिणी यस्यास्तस्याः। 'सिध्मादिभ्यश्च।' ५/२/९७ इति लच्। 'अस्या' इति शेषः। **मुहुः। अङ्गुलिसंवृताधरौष्ठम**ङ्गुलिभिः संवृतोऽधरौष्ठो न तूर्ध्वौष्ठो यस्य तादृशम्। **प्रतिषेधाक्षरविक्लवाभिरामं** प्रतिषेधाक्षरेण 'नाजी, नाजी' इत्यात्मकेन निषेधसूचकेन पदप्रयोगेण यो विक्लवो विक्लवता तेनाभिरामं मनोहरम्। **अंसविवर्त्ति** अंसे स्कन्धदेशे विवर्त्तते लज्जया चुम्बनशङ्क्या प्रवर्त्तत इति तथोक्तम्। **मुखम्। कथमपि** महताऽऽयासेन पुण्यसाहाय्येन वा। **उन्नमितम्।** तु किन्तु। **न। चुम्बितं** तस्य चुम्बनं लब्धुं न मया पारितमिति भावः। अभिज्ञानशाकुन्तलस्येदं पद्यम्, अत्रौपच्छन्दसिकं वृत्तम्। "गौपच्छन्दसकम्" इति च पिङ्गलाचार्य्यः ॥ २०३ ॥"

**इत्यत्र। "तु" इतिनिपातस्य। अनुतापव्यञ्जकत्वम्।** अनेन 'यदि तावन्मात्रं चुम्बनमलप्स्यत तदा तेनैव कृतार्थोऽभविष्य' मिति, तदभावेनानुतापातिशयो राज्ञो ध्वन्यते इति भावः।

'न्यक्कारो ह्यमेव मे यदरयः—' इत्यादौ (७ पृ.) 'अरयः' इति बहुवचनस्य, 'तापसः' इत्येकवचनस्य, 'अत्रैव' इति सर्वनाम्नः, 'निहन्ति' इति 'जीवति' इति च तिङः, 'अहो' इत्यव्ययस्य, 'ग्रामाटिकां' इति करूपतद्धितस्य, 'विलुण्ठन' इति व्युपसर्गस्य, 'भुजैः' इति बहुवचनस्य व्यञ्जकत्वम्।

---

## विवृतिः

न्यक्कार इति। व्याख्यातमिदं प्राक् (७ पृ.) बहुवचनस्येत्यादिषष्ठयन्तानां व्यञ्जकत्वमित्यग्रेतनेनान्वयः। अरीणां प्रतीकाराक्षमत्वं तापसादेरेकत्वख्यापनेन। नैकतापसनिग्रहेण सर्वरक्षा भवति सोऽपि सर्वप्राणैः कर्तुमशक्य इति। इदंपदेन रिपुनिग्रहे दूरगमनादिव्यापारो नास्ति तथापि स कर्तुं न शक्यत इति। अपकारस्य वर्तमानत्वख्यापनेन विलम्बासहिष्णौ रिपुनिग्रहे नास्माकमुद्यमः। तथेति जीवनस्य वर्तमानत्वख्यापनेन विलम्बासहिष्णौ रिपुनिग्रहे नास्माकमुद्यमः। तथेति जीवनस्य वर्तमानत्वख्यापनेन विलम्बासहिष्णौ रिपुनिग्रहे नास्माकमुद्यमः। तथेति जीवनस्य वर्तमानत्वख्यापनेन प्रागेव मरणमुचितं येनैतादृशः पराभवो मा भूदिति। जीवनस्य साश्चर्यत्वख्यापनं मानिनां तादृशपराभवे जीवनमत्यन्तमनुचितमिति।

स्वर्गस्य क्षुद्रत्वख्यापनेन यस्य स्वर्गविलुण्ठनेनापि श्लाघा नास्ति स तावदेकतापसेन पराभूयते अहो दुर्दैवविलसितमेतदिति। स्वर्गविलुण्ठनस्य विशिष्टत्वख्यापनेन स्वःपतेरत्यन्ततिरस्कारिणो रावणस्य एकतापसेन पराभवो दुर्दैवेनोपपद्यत इति। भुजानां बहुत्वख्यापनेन रिपुनिग्रहे रावणस्याधिकसाधनसत्त्वेऽपि स कर्तुं न शक्यत इति व्यज्यते। यद्यप्येते संलक्ष्यक्रमव्यङ्ग्यानां वस्तुध्वनय एव तथाप्येतेऽसंलक्ष्यक्रमव्यङ्ग्यस्य निर्वेदाख्यभावस्य परिपोषका इति तेनैव व्यपदेश इति भावः॥

## विवृतिपूर्तिः

ग्रामाटिकेति। अल्पग्रामवाचको हि ग्रामटीशब्दः, गौडभाषायां 'गाँवटी' इति ख्यातः। ततः 'अज्ञाते' ति 'कुत्सिते' इत वा कप्रत्यये 'केऽणः' इति ह्रस्वे निष्पन्नो ग्रामटिकाशब्दः। अत्यन्तक्षुद्रग्राम इति तदर्थः। नागोजिभट्टास्तु—"तद्धिताः इति बहुवचनबोध्यष्टिकच्प्रत्ययः" इत्याहुः। मूलग्रन्थस्तु ध्वन्यालोकलोचनादिदर्शनेन कप्रत्ययानुग्राहक एव। तेन 'टिकच्रूपतद्धितस्य' इति पाठोऽनाकर इति।

सोत्रासस्य सोपहासस्येत्यर्थः॥

## विज्ञप्रिया

न्यक्कार इति—अत्र व्यञ्जकत्वमित्यत्र विषादव्यञ्जकत्वमित्यर्थः। बहवचनस्येति—मम एकोऽप्यरिर्नास्ति बहु तत्सत्त्वे सम्भाविते विषादः। एकवचनस्येति—बह्वीभिः पिपीलिकाभिरप्यपकर्तुशक्यत्वे कस्मिन्नपकारिणि तु अत्यन्त विषादः। अत्रैवेति। इति—विप्रकृष्टमार्गवर्त्तिखरदूषणाद्यनेकराक्षसवधोऽपि सह्यः। अत्रैव लङ्कायामित्यत्र विषादः। तिङ् इति—मदनवधाने पूर्व निहन्तु, वर्त्तमानमपि हननमित्यत्र विषादः। अहो इति—अदृश्यविपर्ययदर्शनात् विस्मयेन अत्यन्तविषादः। करूपेति कप्रत्ययस्य तद्धितत्वं पाणिनिमते। अल्पार्थकस्य तस्य विषादाति शयव्यञ्जकत्वम्। तथा हि—यदि लुण्ठने स्वर्गोऽपि स्वल्पग्रामः कप्रत्ययवशात् चात्यन्त-

स्वल्पः। तद्विलुण्ठनोच्छूनभुजानामिदानीं किमपि कर्त्तुमक्षमत्वेन वैयर्थ्यमित्यन्तविषादः। व्युपसर्गस्येति विशेषलुण्ठनबोधनात्। भुजैरिति एकद्वित्रिभुजवैयर्थ्यं सह्यं बहूनां वैयर्थ्यादित्यत्यन्तविषादः।

**नरि नरि किरति द्राक् सायकान् पुष्पधन्वा**
**पुरि पुरि च निवृत्ता मानिनीमानचर्च्चा॥"**

अत्र किरतीति वर्त्तमानप्रत्ययेन निवृत्तेत्यत्र क्तप्रत्ययेन कार्यकारणपौर्वापर्यव्यत्ययरूपातिशयोक्तिः प्रतीयते। उदाहरिष्यते गुणरीतिनिरूपण इति शेषः।

## लोचन

न्यक्कार इत्यादौ उदाहरणद्वये पदांशव्यञ्जकत्वस्य प्रकृतत्वेऽपि प्रसङ्गात् पदव्यञ्जकत्वकथनम्। एवम्—

**"रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-**
**मस्मद्भाग्यविपर्ययादिह परं देवो न जानाति तम्।**
**वन्दी वैष यशांसि गायति मरुत् यस्यैकबाणाहत-**
**श्रेणीभूतविशालशालविवरोत्कीर्णैः स्वरैः सप्तभिः॥"**

अत्रासाविति सर्वनाम्ना साक्षात् क्रियमाणा तदीयलोकोत्तरप्रसिद्धिर्व्यज्यते। भुवनेष्वित्यत्र बहुवचनेन गुणैरित्यत्र प्रकृत्या बहुवचनेन च। ते ते विशेषा अस्मद् भाग्यविपर्ययादित्यत्र च न तव न मम किन्त्वस्माकं सर्वेषामपि भाग्यविपर्ययादित्यस्मद्भाग्यविपर्ययादित्यत्र न खल्वभाग्यात् किन्तु भाग्यविपर्ययात्। एवं हि पूर्वमस्माकं भाग्यमवस्थितम्। संप्रति तु अनवधानेन तस्य विपर्ययो जात इति प्रतिपादनादात्मना प्रतिपादनेन च ते ते सहृदयसंवेद्या अर्थाः प्रतीयन्ते। तथा रक्तोत्फुल्लेत्यादौ हरेः पश्यत इत्यत्रानादरषष्ट्या किञ्च न केवलं रसादिध्वनेरेव पदांशप्रकाशता, किन्तु वस्त्वलङ्कारयोरपि। अत्रालङ्कारस्य यथा—

**"पथि पथि शुकचञ्चूचारुराभाङ्कुराणां**
**दिशि दिशि पवमानो वीरुधां लासकश्च।**

## कुसुमप्रतिमा

प्रत्ययोपसर्गादीनां व्यङ्ग्यं दर्शयितुमाह न्यक्कार इति। बहुवचनस्येत्यादीनां षष्ठ्यन्तपदानां व्यञ्जकत्मिति परिणान्वयः। एषां व्यङ्ग्यार्थास्तु प्रागेव (७-८ पृष्ठे) दर्शिताः।

## विमला

न्यक्कार इति।—व्याख्यातमिदं प्राक्। "अरयः इति बहुवचनस्य" इत्यादि षष्ठ्यनतानां, "व्यञ्जकत्वम् इत्यग्रेतनेनान्वयः। "अरयः" इति बहुवचनेन अरेरेकस्याणि सद्भावाऽनुचितः, किं पुनर्बहूनामिति। तापस इत्येकवचनेने अरीणा प्रतीकाराक्षमत्वं ज्ञापितम्; यद्वा,—यदि विदितपराक्रमा महान्ता देवरागाद्यन्यतमाः शत्रवः समुद्यताःस्युः, तताऽपि क्षमं, किन्तु तत्राम्यस्माकं भक्ष्यस्तापलः! अहो! अत्रापि तापस इति एकवचनेन अमर्षातिशयं,

तथा हि;—यद्यपि एकतापसग्रहेणैव सर्वरक्षा च सम्भवति, परन्तु सोऽपि सर्वप्राणै: कर्त्तुभयशक्य इति । अत्रेति इदं पदेन, यदि सोऽपि दूरं सरोऽद्य निहन्तुं समुद्यत: स्यात्, तदाऽपि किञ्चित् क्षमं, किन्तु मत्सविध एवेति शत्रोरपरोक्ष-भपराधित्वस्यात्यन्तमसहनीधमिति; यद्वा,—रिपुनिग्रहे दूरगमनादिव्यापारा नास्ति, तथाऽपि स न कर्त्तुं शक्यते इति । विधन्तीति वर्त्तमानपकारकथनेन, विलम्बासहिष्णौ रिपुनिग्रहे नाम्नाकमुद्यम: । जींवतीति जीवनस्य वर्त्तमा-नत्वक्ष्यापनेन, इत: पूर्वमेव मे मरणमुयितमासीत्, किन्तु नासीदित्येव कष्टं, न हि मरणो परं पराभव: कमपि बाधते इति । अहो ! इति अध्ययस्य जीवनस्य साम्भ्र्यत्व स्थापनं, मानिनाम् एतादृशपरिभवे जीवनमत्यन्तमनुचितमिति । स्वर्गग्रामटिकेति स्वर्गस्य क्षुद्रपामत्वख्यापनेन तल्लुण्ठनमपि यस्य श्लाघायै न, सोऽपि तापसेन पराभूषते, अहो ! दुर्दैवविलसितमेतत् इति । यद्वा,—टिकक्कस्य अल्पार्थकस्य तद्धितप्रत्ययस्य स्वर्गस्य विलुण्ठनेऽतिशयाभावरूप व्यञ्जकत्वम्, इति । व्युपसर्गस्य लुण्ठनस्य विलुण्ठतस्य—स्वर्गविलुण्ठनस्येत्यर्थ:, वैशिष्ट्य कथनेन सुरपते: अत्यन्तपराभवकारिणी रावणस्य एकतापसेन पराभव दुर्दैवेनोपपद्यते इति । भुजैरिति बहुवचनेन भुजानां बहुत्व ख्यापनेन, रिपुनिग्रहे रावणस्य एतादृशाधिकसाधनसत्त्वेऽपि स कर्त्तुं न शक्यते इति व्यज्यते । यद्यप्येत संलक्ष्य-क्रमंव्यङ्ग्यानां वस्तुध्वनय: एव, तथाप्येते असंलक्ष्यक्रमव्यङ्ग्यस्य निर्वेदाख्यभावस्य पोषका:, इति तेनैव व्यप-देश: ।

## लक्ष्मी

प्रत्ययोपसर्गादीनां व्यङ्ग्यमुदाहर्त्तु दर्शयति—न्यक्कार इति । एतद्व्याख्यानन्तु (८ पृ०) कृतम् । बहु-वचनेत्यादिषष्ठ्यन्तानां व्यञ्जकत्वमित्यग्रिमेणान्वय: । अरय इति बहुवचननेन एकमात्रशत्रुसद्भावेऽपि यस्य निर्वेदो जायते तस्यैव मे रामलक्ष्मणसुग्रीवादयो बहव एव रिपवो जाता इति नास्ति निर्वेदावधिरिति ध्वन्यते । तापस इत्येकवचनेन तुच्छभूतमेकत्वं गम्यते । यद्वा प्रतीकाराक्षमत्वमेव प्रतीयते । अत्रेति । सर्वनाम्ना रिपुनिग्रहे दूरगम-नादिव्यापारो नास्ति तथापि किञ्चिद्विधातुमशक्यत्वादात्मनोऽत्यन्तमकर्मण्यत्वं द्योत्यते । निहन्तीति तिङ्पकारस्य वर्त्तमानत्वख्यापनेन विलम्बासहिष्णौ रिपुनिग्रहे नास्माकमुद्यम इति तथा नासौ निश्चेष्टो वर्त्तत इति च ध्वन्यते । जीवतोत्यनेन जीवनस्य वर्त्तमानत्वख्यापनेनेदृशे वृत्तान्ते रावणस्य प्रागेव मरणमुचितं येनैतादृश: पराभवो माभूदिति, अहो इत्यव्ययेन रावणे मृते सतीदृग्परिस्थितेरागमनं नाश्रचर्यम् जीविते तु महदाश्चर्यम् । ग्रामाटिवेति । अल्पग्रा-मवाचको हि ग्रामटीशब्द: क्वचित्प्रसिद्ध: तत: 'अज्ञाते' 'कुत्सिते' इति वा क प्रत्यये 'केऽण:' इति ह्रस्वे सिद्धो ग्रामटिकाशब्द:, अत्यन्तक्षुद्रग्राम इति तदर्थ: । ध्वन्यालोकलोचककारादयोऽप्येवमेवाहु: । नव्यास्तु 'तद्धिता:' इति बहुवचनष्टिकच्प्रत्ययमाहु: । अनेन कप्रत्ययेनाहमीदृग् बलवान् येन सुविशालोऽपि स्वर्ग: क्षुद्रो ग्राम इव मे प्रतीत आसीदिति विलुण्ठनेत्यत्र व्युपसर्गेण अण्वपि किञ्चिदपहृत्य न विरतं किन्तु विशेषेण लुण्ठनं विहितमिति प्रत्याय्यते । भुजैरिति बहुवचनेन रिपुनिग्रहे रावणस्याधिकसाधनसत्त्वेऽपि किञ्चित्कर्तुं न शक्यत इति नास्ति दु:खस्य परिसीमेत्येवावगम्यते । ध्वन्यालोककृताऽपि—

**'सुप्तिङ्वचनसम्बन्धैस्तथाकारकशक्तिभि: ।**

**कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रम: क्वचित् ।।'**

इतिकारिकाया उदाहरणप्रसङ्गेऽमुमेव श्लोकमुदाहृतम् । यद्यप्येते संलक्ष्यक्रमव्यङ्ग्यानां वस्तुध्वनय एव प्रतीयन्ते तथाऽप्येतेऽसंलक्ष्यक्रमव्यङ्ग्यस्य निर्वेदाख्यभावस्य परिपोषका इति तेनैव व्यपदेश इति तत्त्वमिति

वागीशादयो व्याचक्षते । अत्रेदमवगन्तव्यम्—न केवलं रसादिध्वनेरेव पदांशप्रकाशता, किन्तु वस्त्वलङ्कारयोरपि । अत्रालङ्कारस्य यथा—

**'पथि पथि शुकचञ्चूचारुरागाङ्कुराणां, दिशि दिशि पवमानो वीरुधां लासकश्च ।**
**नरि नरि किरति द्राक् सायकान् पुष्पधन्वा, पुरि पुरि च निवृत्ता मानिनी मानचर्चा ॥'**

अत्र किरतीति वर्त्तमानप्रत्ययेन निवृत्तेत्यत्र कार्यकारणपौर्वापर्यव्यत्ययरूपातिशयोक्तिरलङ्कारः प्रतीयते ।

## रुचिरा

**"न्यक्कारोह्ययमेव..."** इति पद्यमुदाहृतपूर्वं व्याख्यातपूर्वं च । **इत्यत्र । 'अरयः'** इति । **बहुवचनस्य ।** 'व्यञ्जकत्व' मित्यग्रे तनेन सम्बन्धः । तथा च-शत्रुसम्बन्धस्य सर्वथाऽनौचित्येऽपि बहुत्वमनुतापशबलितामर्षातिशयं ध्वनयति बहुवचनमिति निष्कर्षः । एवम्-**'तापस' इत्येकवचनस्य** 'व्यञ्जकत्व' मिति पूर्ववत्सम्बध्यते, तथा च तपस्विनां स्वभावतः पौरुषकथाराहित्यम्, अथ तत्राप्येकः सन् मम प्रतिकूलः संवृत्त इत्येकवचनं प्रधानतया व्यञ्जकमिति निष्कर्षः । **'अत्रैव** मदाधिष्ठिते एव देशे' । **इतिसर्वनाम्न** इदमात्मकस्य सर्वनाम्नः । 'व्यञ्जकत्व' मिति पूर्ववत् । तथा च-मम परोऽक्षेऽपि कस्यचिच्छत्रुताऽऽचरणं सर्वथाऽसमभवम्, अथ मम प्रत्यक्षमित्यपि दूरमास्तां कथा, किन्तु मम सन्निधाविति तत्राप्यत्रैवेति सर्वनाम व्यनक्ति । **'निहन्ति' इति** 'अत्रे'ति शेषः । **'जीवति' इति** 'अत्रे' ति शेषः । **च । तिङ्ः** तिङ्प्रत्ययस्य । 'व्यञ्जकत्व' मिति पूर्ववदन्वेति । तथा च-मयि जीवति तस्य निहननकर्त्तृत्वं सर्वथाऽनुचितमिति तिङ्प्रत्ययो व्यनक्तीति निष्कर्षः । **'अहो' इत्यव्ययस्य** । 'व्यञ्जकत्वम्' इति पूर्ववत् । तथा च-एतत्सर्वं सर्वथाऽसम्भाव्यमानमवस्थितमिति पुरुषकारापेक्षया दैवस्यातिशयकार्य्यकारित्वं द्योतयत् स्वस्य विस्मयाकुलताऽनुपदं किंकर्त्तव्यविमूढताम् 'अहो' इत्यव्ययं व्यनक्तिति बोध्यम् । **'ग्रामटिका' इति टिकच्रूप तद्धितस्य** । 'व्यञ्जकत्व' मिति पूर्ववत् । तथा च-स्वर्गस्य ग्रामेष्वपि तुच्छत्वात्तस्य विलुण्ठनेन किं में भुजययोरुच्छूनात्मना भवनं युक्तमिति स्वात्मन्यवज्ञानिवेशानुपदममर्षातिशयः 'टिकच्' प्रत्ययव्यङ्ग्य इति हृदयम् । तथा **'विलुण्ठन' इति** 'अत्रे'ति शेषः । **व्युसर्गस्य** 'व्यञ्जकत्व'मिति पूर्ववत् । तथा च-'विशेषेण लुण्ठन' मित्यर्थे व्युपसर्गो लुण्ठनस्य विशिष्टतां बोधयन् स्वात्मनस्तादृशपराक्रमशालिनोऽपि अकिञ्चित्करतमाक्षमतां च सूचयति । एवम् **'भुजैः' इति । वहुवचनस्य । च । व्यञ्जकत्वम्** । तथा च-द्वाभ्यां भुजाभ्यां यदमुना क्रियते तत् तदनेक गुणितैरपि एभिर्न कर्त्तुं पार्य्यते इत्येषां केवलं भारायमाणत्वमिति द्योतयत् तथैवामर्षातिशयं तद्बहुवचनं ध्वनयतीति निष्कृष्टम् ।

**'आहारे विरतिः, समस्तविषयग्रामे निवृत्तिः परा,**
**नासाग्रे नयनं, तदेतदपरं यच्चैकतानं मनः।**
**मौनं चेदमिदं च शून्यमधुना यद्विश्वमाभाति ते,**
**तद् ब्रूयाः सखि! योगिनी किमसि, भोः! किंवा वियोगिन्यसि॥'**

अत्र तु 'आहारे' इति विषयसप्तम्याः, 'समस्त' इति 'परा' इति च विशेषणस्य, 'मौनं चेतम्' इति प्रत्ययपरामर्शिनः सर्वनाम्नः, 'आभाति' इत्युपसर्गस्य, 'सखि' इति प्रणयस्मारणस्य, 'असि भोः' इति सोपहासोत्प्रासस्य, 'किंवा' इत्युत्तरपक्षदाढर्यसूचकस्य वाशब्दस्य, 'असि' इति वर्तमानोपदेशस्य तत्तद्विषयव्यञ्जकत्वं सहृदयसंवेद्यम्।

---

## विवृतिः

आहार इति। विरहिणीमुपहसन्त्याः सख्या उक्तिरियम्। विरती रागाभावः। एकतानमनन्यवृत्ति। योगिन्या विश्वं शून्यमसद्भूतं प्रतिभाति। वियोगिन्याश्च सदपि विश्वं प्रकृतानुपयोगित्वेनासादेव प्रतिभाति। विशेषणस्येत्यनन्तरं तदेतदिति बुद्धिस्थपरामर्शिनः सर्वनाम्नः अपरमिति विशेषणस्येत्यवगन्तव्यम्। प्रतीयत इति प्रत्ययः प्रतीतिविषयः, तत्परामर्शिनस्त द्वाचकस्य। क्वचिच्च 'प्रत्यक्षपरामर्षिणः' इत्यपि पाठः। प्रणयस्मारणस्य प्रेमसूचकस्य। सोत्प्रासस्य उपहाससूचकस्य। उत्तरपक्षस्य वियोगिनीति पक्षस्य दाढर्य प्रामाण्यं तत्सूचकस्य वर्तमानोपदेशस्य वर्तमानकालप्रयोगस्य। तत्तदिति। सहृदयनिर्वचनीयेत्यर्थः। तथाहि—आहार इति विषयसप्तम्या आहारविषयकरागाभाव एव। न तु योगिनीवदनिष्ठसाधनताज्ञानद्योगप्रतिकूलाहारान्निवृत्तिः। तदुक्तम्—'नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः' इति। एवं च योगिन्याः प्राणधारणार्थमाहारोऽस्त्येव। तव तु सोऽपि नास्तीति भवः। एवं योगिन्या योगसाधने यदृच्छोपपन्ने च विषये प्रवृत्तिरस्ति। तव तु सर्वथैव विषयान्निवृत्तिरिति। समस्तेत्यादि विशेषणद्वयं व्यञ्जयति—योगिन्या ध्यानसमय एव नासाग्रे नयनं चित्तैकाग्रत्वं च। तव तु सर्वदैव तदुभयमिति। तदेतदपरमिति व्यञ्जयति—योगिनी मौनसमये इङ्गितादिना अर्थ बोधयति, तव तु तदपि नास्तीतीदंपदेन व्यज्यते। योगिन्यास्तत्त्वेन विश्वमसत्स्फुरति, तव तु तत्त्वं विनैवेतीदंपदद्योत्यम्। योगिन्या जगति शून्यत्वस्फुरणं ब्रह्मस्फूर्तिसंवलितम्, तव तु न तथेत्याङुपसर्गो द्योतयति। योगिन्या रागिणि जने प्रणयो नास्ति, तव तु सोऽस्तीति सखीत्यनेन व्यज्यते। त्वं योगिन्येव, न तु वियोगिनीति किंवाशब्देन द्योत्यते॥

## विज्ञप्रिया

आहारे इति—ध्यायन्तीं वियोगिनीं योगधर्मिणीं दृष्ट्वा कस्यचिदियं पृच्छा। अत्र नायिकाया विप्रलम्भातिशयः समस्तपदव्यङ्ग्यः। एकताननमेकमात्रविषयः। तव स्थाने यदा विश्वं शून्यभातिः इत्यन्वयः।

विषयसप्तम्या इति। मनसा अपि आहारविषय इत्यर्थः। न तु आहारक्रियायामधिकरणम् इत्यर्थः। समस्तेति। न तु यत् किञ्चिद्विषये एतद् विशेषणस्य समासपदैकदेशः, किन्तु पदस्यापि पदे व्यञ्जकत्वमस्तीति दर्शितम्। प्रत्यक्षपरामर्शिन इति। अनुभूयमानत्वपरामर्शिन इत्यर्थः। क्वचित्तु प्रत्यक्षपरामर्षिण इति सम्यक् पाठः।

मौनात् मिथ्यात्वसूचनाच्च तस्य विप्रलम्भव्यञ्जकत्वम्। इदमपि पदमेव न पदैकदेशः। उपर्गस्येति। आङुपसर्गेण मिथ्यात्वरूपं सम्यक् प्रतिभाति इति भावबोधनात् विप्रलम्भव्यञ्जनम्। प्रणयस्मरणस्येति—तेन दृश्यमानो विप्रलम्भो न त्वया गोपनीय इत्यर्थ। सोत्रासोपहासस्येति—सोत्रासः समनाक्स्मितम्। वियोगकथनात् मन्दस्मितोपहासः। उत्तरपक्षेति—वियोगपक्ष एव दृढ इत्यर्थः। वर्त्तमानोपदेशस्येति—विप्रलम्भविशेषः।

## कुसुमप्रतिमा

प्रत्ययादिगतध्वनिमुदाहरति आहार इति प्रियतमविच्छेदेन सर्वकर्म्मनिवृत्तां प्रति सख्याः सोपहासोक्तिरियम्। भोः सखि ! ते तव आहारे अन्नादिभक्षणे विरतिर्विरागः, समस्ते सर्वप्रकारे विषयग्रामे स्रक्चन्दनादिभोग्यपदार्थं समूहे परा अत्यन्ता निवृत्तिः, नासाग्रे नासिकाया अग्रभाभे नयनं वर्त्तते, यच्च एकतानं कस्मिन्नपि विषये एकाग्रं तव मनः तदेतत् अपरं योगिन्वा वियोगिन्या वा लक्षणमित्यर्थः, इदञ्च मौनम् इदञ्च विश्वं जगत् अधुना यत् शून्यम्, आभाति तव चित्ते शून्यमिव भासते। तत् तस्मात् ब्रूयः—त्वं किं योगिनी असि किं वा वियोगिनी असि ? आहारविरतिप्रभृतिधर्म्माणां योगिनोवियोगिन्योरुभयोरेव सम्भवेन तत्त्वनिश्चयाभावादियं जिज्ञासेति बहिर्भावः।

उदाहृतश्लोके प्रत्ययादीनां व्यञ्जकत्वं विविच्य दर्शयितुमाह अत्र त्विति। अत्रापि विषयसप्तम्या इत्यादिषष्ठ्यन्तपदानां तत्तद्विषयव्यञ्जकत्वमिति परेणान्वयः। आहारे सर्वप्रकाराहारविषय एव तव विरतिः, न तु योगिन्या। इव केवलमंत्स्यमांसादिभक्षणरूपाहारविशेषे विरतिरिति विषयसप्तमी व्यनक्ति, तस्याः समान्यबोधकत्वादित्याशयः। योगिन्वाश्चौरचीवरादौ योगाप्रतिबन्धकविषये निवृत्तिर्न वर्त्तते, भक्तनिर्बन्धादिना तदितरविषयोऽपि च कदाचित् प्रवृत्तिरूपजायते; तव तु आवश्यकेऽपि समस्तविषयग्राम एव आत्यन्तिकौ निवृत्तिरेवेति समस्तेति परेति च विशेषणद्वयं व्यनक्ति; योगिनौ योगिन्वन्तरमागतमालपन्त्येव, त्वन्तु सखीं मामागतमवलोक्यापि मौनमेवाश्रितेति इदं पदेन व्यज्यते। प्रत्यक्षपरामर्शिनः "इदमः प्रत्यक्षगतत्वे" इति नियमात् मौनप्रत्यक्षतासूचकस्य, योगिन्वाः पारमार्थिकभावेनैव जगतः शून्यत्वं भाति न तु व्यवहारिकभावेन, तव तु, निजप्रयोजनाभावात् सर्वथैव जगतः शून्यत्वं भाति; इति सम्यगर्थक आङ् उपसर्गो द्योतयति। योगिन्वा जगति कुत्रापि प्रणयो नास्ति, तव तु मयि प्रणयोऽस्तीति सखीति सम्बोधनेन द्योत्यते। 'असि भोः' इत पदद्वयप्रकार एव सोपहासमुत्रासं व्यनक्ति; सुतराञ्च तादृशपदद्वयव्यङ्ग्यस्य सोपहासीत्रासस्य उपहासव्यञ्जकेषद्भास्यस्य व्यञ्जकत्वमित्यर्थः। एवञ्चात्र "उष्मं णिञ्चल" इत्यादिवत् व्यङ्ग्यार्थव्यङ्ग्यो ध्वनिरिति बोध्यम्। तथा च योगिनी कस्यापि नोपहासविषयी भवति, त्वन्तु ममैव भवसीति 'असि भीः' इति पदद्वयव्यङ्ग्यः सोपहासोत्रासो व्यनक्ति। "कुरूपा सुरूपा वा तरुणौ ते रोचते" इति तत्त्वजिज्ञासावत् उत्तरपञ्चदार्ढ्यसूचकस्य वियोगिनीपक्षगतनिश्चिततत्वं बोधयत इत्यर्थः। तेनात्रापि व्यङ्ग्यार्थव्यङ्ग्यत्वमिति बोध्यम् तथा च त्वं वियोगिन्येवासीति वाशब्दोव्यनक्ति। वर्त्तमानोपदेशस्य वर्त्तमानकालबोधक सि-विभक्तिनिर्देशस्य। तथाहि योगित्वस्य तत्क्षणमसम्भवात् वियोगित्वस्य तु तदैव सम्भवात् त्वं वियोगिन्वेवासीति सिविभक्त्या व्यज्यते।

## विमला

आहारे इति।—विरहिणीमुपहसन्त्याः सख्या उक्तिरियम्। भोः सखि ! [इदञ्च प्रणयसूकं सम्बोधनं, तेन योगिन्या न कुत्रापि प्रणयो भवति, तव तु प्रणयोऽस्तीति सखीत्यनेन व्यज्यते]। आहारे—भोजने, विरतिः,—रागाभावः, अप्रवृत्तिरित्यर्थः, आहारे इति विषयसप्तम्या आहारविषयकरागाभावः एव, न तु योगिनीवत् अनिष्टसा-

धनताज्ञानात् योगप्रतिकूलाहारान्निवृत्तिः; तदुक्तं,—"नाटयश्लतस्तु योगोऽस्ति न चैकान्तमनश्नतः" इति (भ.गो.), एवञ्च योगिन्या वैधाहारे प्रवृत्तिरस्ति वियोगिन्यास्तु (तव) सर्वस्मिन्नेप्राहारे वीतरागतेति भावः। समस्तविषयाणां—सर्वेषां विप्रयाणां—भोग्यानां, ग्रामे—समूहे, परा—आत्यन्तिको, निवृत्तिः [अत्र समस्तेति परेति च विशेषणेन योगिन्याः सर्वविषयनिवृत्तिर्न दृश्यते, शरीरधारणीपयोगिषु तस्याः प्रवृत्तिदर्शनात्, वियोगिन्धाः निवृत्तिर्न योगिन्धाः निवृत्तेरात्यन्तिकत्वं नास्तिः वियोगिन्धास्तु आत्यन्तिकता, योगिन्धाः योगसाधने यदृच्छोपपन्ने च विषये प्रवृत्तेः, तव च सर्वथैव विषयान्निकृतेः पार्थक्यं व्यज्यते]। नासाऽग्रे नयनं, तिष्ठतीति शेषः, चिन्तास्तिमितत्वादितिभावः, यच्च एकतानम्—एकाग्रम्, अनन्यवृत्तौत्यर्थः, मनः तदेतत् अपरम्—अन्यत्। [योगिन्धा ध्यानसमये एव नासाऽग्रे नयनं, मनसश्च एकतानत्वं भवति, वियोगिन्यास्तु (तत्र) सर्वदैव तदुभयमिति तदेतदपरमति व्यञ्जयतीति]। इदं मौनं—तूष्णीम्भावश्च [योगिनौ मौनसमये इङ्गितादिना अर्थं बोधयति, तव तु इङ्गिताऽऽदिनाऽपि अर्थबोधकत्वं नास्तौति इदंपदेन व्यज्यते]। इदञ्च विश्वं, यत् तो—तव, अधुना शून्यम् आभाति—आ—सम्यक्प्रकारेण भातौत्यर्थः; [योगिन्धाः विश्वं तत्त्वेनासद्भूतं प्रतिभाति, वियोगिन्याश्च सदपि विश्वं प्रकृतानुपयोगित्थकनासदिव प्रतिभातीति इदंपदेन व्यज्यते, तथा योगिन्धाः विश्वस्य शून्यत्वेन ज्ञानं परमात्मावच्छिन्नस्य तु न, वियोगिन्यास्तु तव सब्रह्मैव विश्वं शून्यमिति आङुपसर्गेण व्यज्यते]। तत्—तस्मात्, ब्रूयाः—कथयेः, योगिनी असि किम्? वा अथवा, [इदञ्च वियोगिन्येवासोत्युत्तरपक्षं द्रढयति, तथा चास्य न त्वं योगिनी, किन्तु सत्यवियोगिन्येवासीति व्यञ्जयति] किं वियोगिनी असि? [अयञ्च परिहासूचकः प्रश्नः, तेन सोत्प्रासस्य उपहाससूचकस्य अस्य प्रश्नस्य योगिनीव प्रतीयसे, न तु तथाभूता त्वामिति व्यक्तिविषयः, तथा असीति वर्त्तमानकालिका क्रिया प्रत्यक्षतामनुभावयति]। शार्दूलविक्रीडितं वृत्तम्।

अत्र त्विति।—"आहारे" इति, विषयसप्तम्याः व्यञ्जकत्वमिति शेषः, एवं परत्रापि षष्ठयन्तेन व्यञ्जकत्वमिति सम्बन्धनीयम्। "मौमं चेदम्" इति।—प्रत्ययपरामर्शिनः,—प्रतीयते इति प्रत्ययः,—प्रतीति विषयः, तस्य परामर्शि—वाचकं तस्य, ["प्रत्यय" इत्यत्र "प्रत्यक्ष" इति क्वचित् पाठः, तथा सति प्रत्यक्षवाचकस्वेत्यर्थः]। सर्वमान्त्रः,—सर्वादिगणान्तर्गतस्य प्रातिपदिकस्य, इदंशब्दस्वेति यावत्। प्रणयस्मारणस्य—प्रणयं—प्रेम, स्मारयति—प्रत्याययतीति तस्य तथोक्तस्य, प्रेमसूचकस्येत्यर्थः, [अत्रनन्द्यादित्वात् ल्युः]। उपहासेन सह वर्त्तते इति च चासौ उत्प्रासः,—कथनं तस्य। तत्तद्विशेषव्यञ्जकत्व—तत्तेषाम्—आहारादिविषयविरत्यादिरूपाणां प्रतिपाद्यानां, ये विशेषाः,—प्रकाराः, ["विशेष" इत्यत्र "विषय" इति पाठे—तेषां तेषां ये विषयाः, प्रतिपाद्याः इत्यर्थः] तेषां व्यञ्जकत्वं—तत्कर्मद्योतकत्वं, सहृदयसंवेद्यं—सचेतसामनुभवविषयम्।

## लक्ष्मी

इत्थं प्रकृत्यादीनां व्यञ्जकत्वमुदाहृत्य प्रत्ययादीनां व्यञ्जकत्वमुदाहरति—आहार इति। ध्यायन्तीं वियोगिनीं योगधर्मिणीमवलोक्योपहसन्त्याः सख्या उक्तिरियम्। भोः सखि? ते तव आहारे अन्नादिभक्षणे विरतिःरागाभाव, समस्ते समग्रे विषयग्रामे माल्यचन्दनाति भोग्यपदार्थनिचये परा परमा निवृत्तिः परावृत्तिः, नासाया अग्रे अग्रभागे नयनं वर्त्तते, यञ्च एकतानम् एकस्मिन् विषये एकलयं तव मनः तदेतदपरं योगिन्या वियोगिन्या वा लक्षणमित्यर्थः, इदञ्च मौनम् इदञ्च विश्वं जगत् अधुना शून्यम्, यदाभाति तव हृदये शून्यमिव प्रतीयते। योगिन्या विश्वं शून्यमसद्भूतमाभाति वियोगिन्याश्च सदपि विश्वं प्रकृतानुपयोगित्वेनासदिव प्रतिभाति। तत् तस्मात् ब्रूयाः

त्वं किं योगिनी असि किं वा वियोगीनी असि। आहारादिधर्माणामुभयोरेव सम्भवात्तत्त्वनिर्णयाभावेनेयं जिज्ञासोदेतीति वाच्यार्थः। अत्र नायिकाया विप्रलम्भातिशयः समस्तपदद्योत्यः।

प्रत्ययादीनां व्यञ्जकत्वं विचार्य स्फुटीकर्त्तुमाह—अत्रेति। **विषयप्तम्या** इत्यादीनां तत्तद्विषयव्यञ्जकत्वमित्यग्रिमेणान्वयो बोध्यः। तथा त आहारे सर्वप्रकारविषयकरागाभाव एव न तु योगिनीवदनिष्टसाधनतावगमात् योगप्रतिकूलमत्स्यमांसादिरूपाहारान्निवृत्तिरिति विषयसप्तमी प्रत्याययति, सामान्यबोधकत्वादित्यभिप्रायः। 'नात्यश्नतस्तु योगोऽस्ति नचैकान्तमनश्नत' इत्युक्त्या योगिन्याः प्राणधारणार्थमाहारोऽस्येव तव तु सोऽपि नास्तीति भावः। योगिन्या योगाप्रतिबन्धकविषये चीरचीवरादौ निवृत्तिर्न वर्त्तते भक्तपारवश्यादिना तदितरविषये यदृच्छोपपन्नेऽपि च विषये प्रवृत्तिरस्ति तव तु आवश्यकेऽपि समस्तविषयग्राम एव सर्वथैव निंवृत्तिरिति समस्तेति परेति च विशेषण द्वयमभिव्यनक्ति। योगिनी मौनसमये इङ्गितादिना अर्थ बोधयति तथा योगिन्यतरमागतं वदत्येव त्वन्तु सहचरीं मामागतां दृष्ट्वाऽपि तूष्णीम्भावमाश्रितेतीदं पदेन ध्वन्यते। प्रत्यक्षपरामर्शिनः। 'इदमस्तु सन्निकृष्टम्' इति नियमात् मौनप्रत्यक्षताद्योतकस्य। योगिन्यास्तत्त्वज्ञानेनैव विश्वमसदिति भाति न तु व्यावहारिकभावेन, तव तु स्वप्रयोजनाभावात् तत्त्वं विनैव विश्वस्यासत्त्वं भाति, इत्याङुपसर्गः प्रत्याययति। योगिन्या विश्वस्मिन् कुत्रापि रागिणि जने प्रणयो नास्ति तव तु मयि सोऽस्तीति सखीति सम्बोधनेन व्यज्यते। एवञ्च दृश्यमानो विप्रलम्भो न त्वया गोपनीय इति भावः। 'असि भोः' इति पदद्वयप्रकार एव 'सोत्प्रासः समनाक्स्मितम्' मन्दस्थितोपहासस्तं द्योतयति। तथा च योगिनी कस्यापि नोपहासविषयो भवति त्वं तु ममैवेति 'असि भो'; इति पदद्वयव्यङ्ग्यः सोपहासोत्प्रासोऽवगमयति। त्वं योगिन्येव न तु वियोगिनीति 'किं वा' शब्दो द्योतयति। वर्त्तमानोपदेशस्य 'असि' इत्यत्र वर्त्तमानकालबोधक 'सि' विभक्तिनिद्र्देशस्य। एवञ्चात्र योगित्वस्य तत्कालेऽसम्भवात् वियोगस्य तु तदैवोपलम्भात् त्वं वियोगिन्येवासीति मध्यमपुरुषैकवचने प्रतीयते।

## रुचिरा

एवं प्रकृत्यादीनां व्यञ्जकत्वमुदाहृत्य विभक्त्यादीनां व्यञ्जकत्वमुदाहरति—"**आहारे**"-इत्यादिना।

"हे **सखि! आहारे** भोजनक्रियायाम्। 'तवे'ति शेषः। **विरतिः** रागाभावः। **समस्तविषयग्रामे** समस्ता विषया भोगास्तेषां ग्रामः समूहस्तत्र। **पराऽ**तिशयिता। **निवृत्तिः** पराङ्मुखत्वम्। 'तवे'ति शेषः। **नासाग्रे। नयनं** दृष्टिः। **यत्। च। एकतानम्** एकाग्रम्। **तत्। एतत्। अपरम्। मनः**। 'तवे'ति शेषः। **इदम्। च। मौनम्। इदम्। च। विश्वं** समस्तो लोकः। **शून्यभ्। अधुना। ते** तव। **यत्** यतः। **आभाति** प्रतिभासते। **तत्** तस्मात्। **ब्रूयाः** कथय। **भो** भवति। **किम्। योगिनी** योगनिरता। **असि? किं वा। वियोगिनी** विप्रकृष्टपतिका। **असि?** विरहिणीमुपहसन्त्याः सख्या उक्तिरियम्। शार्दूलविक्रीडितं वृत्तम्॥ २०५॥"

अत्र पूर्वपिक्षया वैशिष्ट्यं दर्शयति-**इत्यत्र त्वित्यादिना**।

**इत्यत्र** 'उदाहृते पद्य' इति शेषः। **तु। 'आहारे' इति** 'पदे' इति शेषः। **विषयसप्तम्याः** 'आहारविषयकरागाभावव्यञ्जकत्व' मिति शेषः। तथा च—'नात्यश्नतस्तु योगोऽस्ति न चैकात्मनश्नतः।' इतयुक्तदिशा योगिन्या न सर्वथाऽऽहाराभावस्तव तु सर्वथैवेति वियोगिन्येवासीति व्यज्यत इति निष्कर्षः। **'समस्त' इति** 'अस्ये' ति शेषः। **च। विशेषणस्य** 'विषयमात्रस्य याथाऽऽत्म्येन व्यञ्जकत्व' मिति शेषः। तथा च योगिन्या योगसाधने यदृच्छयोपस्थिते च सति विषये प्रवृत्तिरिति वियोगिन्येवासीति व्यज्यते इति हृदयम्। **मौनम्। 'चेदम्' इति** 'अत्रे' ति शेषः। **प्रत्ययपरामार्शिनः** प्रत्ययस्य मौनावस्थाऽनुभवस्य परामर्शी प्रणिधाता तादृशस्य। **सर्वनाम्नस्तत्सञ्ज्ञकस्येदंशब्द-**

स्येत्यर्थः । 'मौनस्य सर्वात्मना सर्वकालसम्भववित्वप्रत्यायकत्व' मिति शेषः । तथा च योगिन्या मौनेऽपि इङ्गिता-दिनाऽर्थबोधकता, मौनस्य च सर्वकालिकत्वाभाव इति वियोगिन्येवासीति व्यज्यते इति निर्गलितोर्थः । **'आभाति' इति** 'अत्रे' ति शेषः । **उपसर्गस्याडुपसर्गस्य** । 'शून्यतायाः सर्वात्मना प्रत्यायकत्व' मिति शेषः । तथा च-योगिन्या विज्ञानानुपदं जगति शून्यत्वं न सर्वात्मना; तदानीं ब्रह्मस्फूत्तेरपि सम्भवात् । इति वियोगिन्येवासीति व्यज्यते इति सूचितम् । **'सखि' इति** 'अनेन'ति शेषः । **प्रणयस्मारणस्य** 'स्वानुरक्ते प्रणयसद्भावद्योतिकता' इति शेषः । तथा च-योगिन्याः प्रणयाभावो भवतीति वियोगिन्येवासीति व्यज्यत इति निष्कृष्टोऽर्थः । **'असि भोः !' इति** 'अनेने' ति शेषः । **सोपहासस्योपहासपूर्वकस्याभिधानस्य** 'योगिनीचेष्टितव्यञ्जकत्व' मिति शेषः । तथा च-योगिनीव दूरात् प्रतीयसे न सर्वथा तथाभूताऽसीति ध्वनितोर्थः । **'किं वा' इति** 'अत्रे' ति शेषः । **उत्तरपक्षदाढर्यसूचकस्य 'वा' इति** 'निपातरूपस्ये'ति शेषः । **शब्दस्य** । 'उत्तरपक्षदाढर्यव्यञ्जकत्' मिति शेषः । तथा च-योगिनी नासि, किन्तु वियोगि-न्येवासि इति सूच्यते । **'असि' इति** 'अस्ये'ति शेषः । **वर्त्तमानोपदेशस्य** 'योगिनीत्वभ्रान्तिनिवृत्तिव्यञ्जकत्व' मिति शेषः । **च** । 'इत्येव' मिति शेषः । **तत्तद्विषयव्यञ्जकत्वम्** । **सहृदयसंवेद्यम्** 'नतु सहृदयेतरैरपि संवेद्य' मिति शेषः ।

वर्णरचनयोरुदाहरिष्यते । प्रबन्धे यथा—महाभारते शान्तः । रामायणे करुणः । मालतीमाधव-रत्लावल्यादौ श्रृङ्गारः । एवमन्यत्र ।

**तदेवमेकपञ्चाशद्भेददास्तस्य ध्वनेर्मताः ॥ ११ ॥**

---

## विवृतिः

वर्णरचनयोरिति । वर्णो माधुर्यादिगुणव्यञ्जकः । रचना पदविन्यासविशेषः । सापि माधुर्यादिव्यञ्जिका । उदाहरिष्यत इति । गुणपरिच्छेदे इति शेषः । एवमन्यत्रेति । 'माघे शिशुपालदूतोक्तौ संघौ वाच्ये वस्तुमात्ररूपो विग्रहः शब्दशक्तिमूलः प्रबन्धव्यङ्ग्यो दृश्यते' इति चण्डीदासः ॥ तदेवमिति । पूर्वं पञ्चत्रिंशद्भेदा उक्ताः । अर्थशक्तिमूलध्वनेः प्रबन्धप्रकाश्यत्वेन पुनर्द्वादशविधत्वम् ।

## विवृतिपूर्तिः

एकपञ्चाशदीति । अत्र ध्वनेर्लक्षणाभिधामूलत्वेनाविवक्षितवाच्यविवक्षितान्यपरवाच्याख्यौ प्रथमं द्वौ भेदौ अविवक्षितवाच्यस्यार्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्यतया द्विविधस्य वाक्यपदगतत्वेन द्वैविध्ये चातुर्विध्यम् । विवक्षितान्यपरवाच्यस्य संलक्ष्यक्रमंव्यङ्ग्यासंलक्ष्यक्रमव्यङ्ग्यतया द्वौ भेदौ । संलक्ष्यक्रमव्यङ्ग्ये शब्दशक्तिमूले वस्त्वलंकाररूपतय द्वैविध्ये वाक्यपदगतत्वेन चातुर्विध्यम् । अर्थशक्तिमूले संलक्ष्यक्रमव्यङ्ग्ये अर्थस्य स्वतः संभवित्वेन कविप्रौढोक्तिसिद्धत्वेन कविनिबध्वक्तृप्रौढोक्तिसिद्धत्वेन च त्रैविध्यम् । त्रिविधस्यापि वस्त्वलंकाररूपतया द्वैविध्ये । षड्विधत्वम् । षड्विधस्यापि व्यङ्ग्यव्यञ्जकतया द्वैविध्येद्वादशविधत्वम् । द्वादशविधस्यापि प्रबन्धगतत्वेन वाक्यगत्वेन पदगतत्वेन त्रैविध्ये षट्त्रिंशत्प्रकारोऽर्थशक्तिमूलोऽनुरणध्वनिः । उभयशक्तिमूलो वाक्यगतत्वेनैकविधः । एवं संलक्ष्यक्रमव्यङ्ग्यध्वनेरेकचत्वारिंशद्भेदाः । असंलक्ष्यक्रमंव्यङ्ग्यो रसादिध्वनिः प्रबन्धवाक्यपदपदैकदेशरचनावर्णगतत्वेन षड्विधः । एवं विवक्षितान्यपरवाच्यध्वनेः सप्तचत्वारिंशद्भेदाः । अविवक्षितवाच्येभेदैश्चतुर्भिः सह ध्वने, प्रथमं शुद्धा एकपञ्चाशद्भेदाः । तेषां नामानि निर्दिश्यन्ते—

(१) पदगतार्थान्तरसंक्रमिताविवक्षितवाच्यध्वनिः, (२) वाक्यगतार्थान्तरसंक्रमिताविवक्षितवाच्यध्वनिः, (३) पदगतात्यन्ततिरस्कृताविवक्षितवाच्यध्वनिः, (४) वाक्यगतात्यन्ततिरस्कृताविवक्षितवाच्यध्वनिः, (५) पदगतशब्दशक्तिमूलसंलक्ष्यक्रमवस्तुध्वनिः, (६) पदगतशब्दशक्तिमूलसंलक्ष्यक्रमालंकारध्वनिः, (७) वाक्यगतशब्दशक्तिमूलसंलक्ष्यक्रमवस्तुध्वनिः, (८) वाक्यगतशब्दशक्तिमूलसंलक्ष्यक्रमालंकारध्वनिः, (९) पदगतस्वतःसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः, (१०) पदगतस्वतः सिद्धार्थशक्तिमूलो वस्तुनालंकारध्वनिः, (११) पदगतस्वतः सिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः, (१२) पदगतस्वतःसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः (१३) वाक्यगतस्वतः सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः, (१४) वाक्यगतस्वतः सिद्धार्थशक्तिमूलोवस्तुनालंकारध्वनिः, (१५) वाक्यगतस्वतः सिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः, (१६) वाक्यगतस्वतः सिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः, (१७) प्रबन्धगतस्वतः सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः, (१८) प्रबन्धगतस्वतःसिद्धार्थशक्तिमूलो वस्तुनालंकारध्वनिः, (१९) प्रबन्धगतस्वतः सिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः, (२०) प्रबन्धगतस्वतःसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः, (२१) पदगतकविप्रौढोक्तिसिद्धार्थश-

क्तिमूलो वस्तुना वस्तुध्वनिः, (२२) पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनालंकारध्वनिः, (२३) पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः, (२४) पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः, (२५) वाक्यगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः, (२६) वाक्यगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनालंकारध्वनिः, (२७) वाक्यगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽ- लंकारेणालंकारध्वनिः, (२८) वाक्यगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः, (२९) प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः, (३०) प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनालंकारध्वनिः, (३१) प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारध्वनिः, (३२) प्रबन्धगतकविप्रौढोक्ति- सिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः, (३३) पदगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः, (३४) पदगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनालंकारध्वनिः, (३५) पदगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः, (३६) पदगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेम वस्तुध्वनिः, (३७) वाक्यगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः, (३८) वाक्यगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनालंकारध्वनिः, (४०) वाक्यगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः, (४०) वाक्यगतकविनिबद्धवकतृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेण- वस्तुध्वनिः, (४१) प्रबन्धगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः, (४२) प्रबन्धगतविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनालंकारध्वनिः, (४३) प्रबन्धगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः, (४४) प्रबन्धगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः, (४५) प्रबन्धगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः, (४६) वाक्यगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः, (४७) पदगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः, (४८) पदैकदेशगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः, (४९) रचनागतासंलक्ष्यक्रमंव्यङ्ग्यो रसादिध्वनिः, (५०) वर्णगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः, (५१) वाक्यगतोभयशक्तिमूलो ध्वनिरिति ॥

## विज्ञप्रिया

प्रबन्ध इति। प्रबन्धोऽत्र ग्रन्थरूपः। शान्त इति। स्वर्गारोहणरूपमहाभारतश्रोतुः युधिष्ठिरशमज्ञातुः युधिष्ठिरशमज्ञातुः शान्तरसो बोध्य इत्यर्थः। रामायणेति। रामशोकज्ञातु रामायणाश्रोतुः करुणारस इत्यर्थः। मालतीति—माधवत्सराजरतिज्ञातुस्तन्नाटकश्रोतुः शृङ्गार इत्यर्थः।

## लोचन

प्रबन्ध इत्यादि। अयमाशयः—न केवलं वस्त्वलङ्कारध्वनिवदर्थान्तरमाह। वाक्यव्यङ्ग्येऽपि तत्समुदायभूते महाभारतादिप्रबन्धेऽपि; अन्यथा काव्यत्वाहानेरिति।

## कुसुमप्रतिमा

वर्णेति। वर्णरचनयोर्गुणव्यञ्जकत्वं रीतिव्यञ्जकत्वञ्च अष्टमे.च परिच्छेदे उदाहरिष्यत इत्यर्थः।

प्रबन्ध इति। शान्तो रसः। एवमन्वयोरपि। आदिपदेन शाकुन्तलादिग्रहणम्।

एवमिति। किरातार्जुनीयेंकादशे देवेन्द्रोक्तप्रबन्धे शान्तरसः। अर्जुनोक्तप्रबन्धे तु वीररसः। शिशुपालवधत्रयोदशे रौद्रो वीरश्चेत्यादि द्रष्टव्यम्।

## विमला

वर्णरचनयोरिति।—वर्णः,—माधुर्य्यादिगुणव्यञ्जकः, रचना—पदविन्यासविशेषः, साऽपि माधुर्य्यादि-गुणव्यञ्जिका, तयोः, माधुर्य्यादगिगुणव्यञ्जकत्वादिति भावः। उदाररिष्यते ति गुणपरिच्छेदे इति शेषः। एवमन्य-वेति।—"माघे शिशुपालदूतोक्तो सन्धौ वाच्मे वस्तुमावरूपी विग्रहः शब्दशक्तिमूलः प्रबन्धव्यङ्ग्यो दृश्यते" इति चण्डीदासः।

## लक्ष्मी

सम्प्रति वर्णरचनयोरसंलक्ष्यक्रव्यङ्ग्यत्वमुपेक्ष्य प्रबन्धगतत्वेन तदुदाहर्तुमाह—वर्णेति। वर्णोऽक्षरवि-शेषः माधुर्यादिगुणव्यञ्जकः, रचना दीर्घसमासादिरूपविन्यासविशेषः, सापि माधुर्यादिव्यञ्जिका। उदाहरिष्यते। अष्टमे नवमे च 'परिच्छेदे' इति शेषः। तेषां रसनिष्ठमाधुर्यादिगुणव्यञ्जकत्वेन गुणज्ञाने सत्येव तज्ज्ञानत्वसम्भवादत्र नोदाहृतमिति भावः। प्रत्ययादीनां तु स्वबोध्यनिष्ठतत्तद्विशेषव्यञ्जकत्वमित्यत्रैवोदाहृतम्।

प्रबन्ध इति। पूर्वं प्रबन्धशब्देन संघटितावान्तरवाक्यसमूहोऽभिहितः, अधुना तु संघटितमहावाक्यमिति पौनरुक्त्यं न शङ्क्यम्, पूर्वं हि अर्थशक्तिमूलमात्रस्य प्रबन्धविषयत्वस्योक्तत्वात् अत्र तु असंलक्ष्यक्रमंव्यङ्ग्यस्येति पौनरुक्त्यभावात्। शान्त इति। स्वर्गारोहणरूपमहाभारतश्रोतुः युधुष्ठिरशमज्ञातुः शान्तरसो बोध्य इत्यर्थः। रामायण इति। रामशोकज्ञातुः रामायणश्रोतुः करुणरस इत्यर्थः। मालतीत्यादाविति माधववत्सराजरतिज्ञातुस्तन्ना-टकश्रोतुः श्रृङ्गार इत्यर्थः। आदिशब्देन शकुन्तलादिपरिग्रहः। अत्रेदं बोध्यम्—न केवलं वस्त्वलङ्कारध्वनिवदर्था-न्तरमाह किन्तु वाक्यव्यङ्ग्येऽपि तत्समुदायभूतेमहाभारतादिप्रबन्धेऽपि अन्यथा काव्यत्वहानेरिति। एवमन्यत्रेति। किरातार्जुनीयैकादशसर्गे सुरराजोक्तप्रबन्धे शान्तरसः। पार्थोक्तप्रबन्धे तु वीररसः। 'माघे शिशु-पालदूतोक्तौ सन्धौ वाच्ये वस्तुमात्ररूपो विग्रहः शब्दशक्तिमूलः प्रबन्धव्यङ्ग्यो दृश्यते' इति चण्डीदासः।

अथेदानीं ध्वनीनां सङ्कलनं दर्शयति—तदेवमिति। तत्तस्मात् असंलक्ष्यक्रमंव्यङ्ग्यस्यापि पदपदांशा-दिगतत्वेन षड्विधत्वादित्यर्थः। एवं शुद्धभेदेन तस्य ध्वनेः एकपञ्चाशद्भेदा मताः। व्यङ्ग्यस्य पदवाक्यगतत्वेन पञ्चत्रिंशद् (३५) भेदाः संख्याताः। तदनन्तरमर्थशक्त्युद्भवस्य प्रबन्धगतत्वेन द्वादशविधत्वम्। रसभावादिरूप-स्यासंलक्ष्यक्रमव्यङ्ग्यध्वनेरपि पदांशवर्णरचनाप्रबन्धगतत्वेन चत्वार इति मिलित्वा ध्वनिकाव्यस्य एकपञ्चाश-द्भेदाः(५१) शुद्धा इत्यर्थः। यद्यपि लक्ष्यार्थवाच्यार्थव्यङ्ग्यार्थभेदेन पदांशानां च प्रकृतिप्रत्ययादि भेदेनातोऽधिका बहुतरसंख्या भवन्ति तथापि प्राचीनसम्प्रदायानुरोधेनैकपञ्चाशत्त्वमेव दर्शितमिति बोध्यम्। सङ्करेण त्रिरूपेणेति। साक्षात्परम्परया वा यथाकथञ्चित् परस्परसापेक्षः सङ्करः तद्भिन्नः स संसृष्टिः। सङ्करस्थले हि क्वचिच्च साधकबा-धकमानाभावादेकतरानिश्चयेन 'अयम् अयं वा' इति भवति संशयः क्वचिच्च स्वत एवोपादेयतया प्रधानयोरपि एकस्य कथंचिदपरानुगुण्यमात्रेण अङ्गाङ्गिभावापरनामकानुग्राह्यानुग्राहकभावः, क्वचित्तु एकव्यञ्जकव्यङ्ग्यतया एकाश्रयानुप्रवेश इति सङ्करस्य त्रैविध्यम् वक्ष्यति दशमपरिच्छेदे—

**'अङ्गाऽङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ।**

**सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः'॥ इति॥**

## रुचिरा

अथ वर्णरचनयोरसंलक्ष्यक्रमव्यङ्ग्यत्वमनुदाहृत्य प्रबन्धगतत्वैन तदुदाहरन्नाह-**वर्णे**त्यादि ।

**वर्णरचनयोर्वर्णो** माधुर्य्यादिव्यञ्जक-ष्टठादिभिन्नः स च, रचना पदविन्यासरूपा वैदर्भ्यादिरूपा च, इति तयोः 'असंलक्ष्यक्रमव्यङ्ग्यत्वमष्टमे नवमे च परिच्छेदे' इति शेषः । **उदाहरिष्यते । प्रबन्धे** । 'पुनरसलक्ष्यक्रमव्यङ्ग्-यत्व' मिति शेषः । **यथा महाभारते । शान्तः** 'अङ्गित्वेने' ति शेषः । एवं परत्र, शेषं स्पष्टम् । **एवं** यथोक्तेषु प्रबन्धेषु तथा-**अन्यत्र** वेणीसंहारादिषु वीरादिरिति भावः ।

एवमभिहिता ध्वनेर्भेदाः समुच्चीय सौकर्य्याय दश्यन्ते-२९५ **तदेवमि**त्यादिना ।

२९५ **तत्** तस्मात् । **एवं** निरुक्तप्रकारेण । **तस्य** वाच्यातिशायिव्यङ्ग्यत्वेनाभिहितस्वरूपस्य । **ध्वनेः । एकपञ्चाशद्‌भेदाः । मताः** । अत्र टिप्पणीकाराः—"अत्र ध्वनेर्लक्षणाऽभिधामूलत्वेन विवक्षितवाच्यविक्षितान्यपर-वाच्याख्ययो द्वौ भेदौ, अविवक्षितवाक्यस्यार्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्यतया द्विविधस्य वाकयपदगत-त्वेन द्वैविध्ये चातुर्विध्यम्, विवक्षितान्यपरवाच्यस्य संलक्ष्यक्रमव्यङ्ग्यासंलक्ष्यक्रमव्यङ्ग्यतया द्वौ भेदौ। संलक्ष्यक्रमव्यङ्ग्ये शब्दशक्तिमूले वस्त्वङ्कारररूपतया द्वैविध्ये वाक्यपदगतत्वेन चातुर्विध्यम्, अर्थशक्तिमूले संलक्ष्यक्रमव्यङ्ग्येऽर्थस्य स्वतःसम्भवित्वेन कविप्रौढोक्तिसिद्धत्वेन कविनिबद्धप्रौढोक्तिसिद्धत्वेन च त्रैविध्यम् । त्रिविधस्यापि वस्त्वलङ्काररूपतया द्वैविध्ये षड्विधत्वम् । षड्विधस्यापि व्यङ्ग्यव्यञ्जकतया द्वैविध्ये द्वादशविध-त्वम्, द्वादशविधस्यापि प्रबन्धगत्वेन वाक्यगतत्वेन पदगतत्वेन च त्रैविध्ये षट्त्रिंशत्प्रकारोऽर्थशक्तिमूलोऽनुरण-नध्वनिः, द्वादशविधस्यपि प्रबन्धगतत्वेन वाक्यगतत्वेन पदगतत्वेन च त्रैविध्ये षटत्रिंशत्प्रकारोऽर्थशक्तिमूलोऽनुणनध्वनिः, उभयशक्तिमूलो वाक्यगतत्वेनैकविधः, एवं संलक्ष्यक्रमव्यङ्ग्यध्वने-रेकचत्वारिशद्‌भेदाः । असंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः प्रबन्धवाक्यपदपदैकदेशरचनावर्णगतत्वेन षड्विधः । एवं विवक्षितान्यपरवाच्यध्वनेः सप्तचत्वारिंशद्‌भेदाः । अविवक्षितवाच्यभेदैश्चतुर्भिः सह ध्वनेः प्रथमं शुद्धा एकपञ्चाशद्‌भेदाः । तेषां नामानि निर्दिश्यन्ते

(१) पदगतोऽर्थान्तरसङ्क्रमितोऽविवक्षितवाच्यध्वनिः,(२) वाक्यगतोऽर्थान्तरसङ्क्रमितोऽविवक्षितवा-च्यध्वनिः (३) पदगतोऽत्यन्ततिरस्कृतोऽविवक्षितवाच्यध्वनिः (४) वाक्यगतोऽत्यन्ततिरस्कृतोऽविवक्षितवाच्य-ध्वनिः (५) पदगतः शब्दशक्तिमूलः संलक्ष्यक्रमवस्तुध्वनिः (६) वाक्यगतः शब्दशक्तिमूलः संलक्ष्यक्रमवस्तुध्वनिः (७) पदगतः शब्दशक्तिमूलः संलक्ष्यक्रमालङ्कारध्वनिः (८) वाक्यगतः शब्दशक्तिमूलः संलक्ष्यक्रमालङ्का रध्वनिः (९) पदगतः स्वतः सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः (१०) पदगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्का-रध्वनिः (११) पदगतः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः (१२) पदगतः स्वतः सिद्धार्थशक्ति-मूलोऽलङ्कारेण वस्तुध्वनिः (१३) वाक्यगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः (१४) वाक्यगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः ।(१५) वाक्यगतः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः (१६) वाक्यगतः स्वतः सिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः (१७) प्रबन्धगतः स्वतःसिद्धार्थशक्तिमलो वस्तुना वस्तुध्वनिः (१८) प्रबन्धगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः (१९) प्रबन्धगतः स्वतः सिद्धार्थशक्तिमूलो ऽलङ्कारेणालङ्कारध्वनिः (२०) प्रबन्धगतः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः (२१) पदगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः (२२) पदगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः (२३) पदगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः (२४) पदगतः कवि-

प्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः (२५) वाक्यगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः (२६) वाक्यगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः (२७) वाक्यगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः (२८) वाक्यगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः (२९) प्रबन्धगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः (३०) प्रबन्धगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः (३१) प्रबन्धगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः (३२) प्रबन्धगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः (३३) पदगतः कविनिबद्धप्रौढोक्तिसिद्धार्थराक्तिमूलो वस्तुना वस्तध्वनिः (३४) पदगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः (३५) पदगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः (३६) पदगतः कविनिबद्धप्रौढिक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः (३७) वाक्यगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः (३८) वाक्यगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः (३९) कनिविबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः (४०) वाक्यगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः (४१) प्रबन्धगतः कविनिबद्धप्रोढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः (४२) प्रबन्धगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलउकारध्वनिः (४३) प्रबन्धगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः (४४) प्रबन्धगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः (४५) प्रबन्धगतोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः (४८) पदैकदेशगतोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः (४९) रचनागतोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः (५०) वर्णगतोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः (५१) वाक्यगत उभयशक्तिमूलो ध्वनिः ।" इति ।

**संकरेण त्रिरूपेण संस्सृष्ट्या चैकरूपया।**

**वेदखाग्निशराः (५३०४) शुद्धैरिषुबाणाग्निसायकाः(५३५५) ॥ १२ ॥**

**शुद्धैः शुद्धभेदैरेकपञ्चाशता योजनेत्यर्थः।**

---

## विवृतिः

असंलक्ष्यक्रमव्यङ्ग्यध्वनेरपि पदांशवर्णरचनाप्रबन्दप्रकाश्यत्वेन चतुर्विधत्वमिति षोडश। मिलित्वा एकपञ्चाशदिति। यद्यप्यर्थानां वाच्यलक्ष्यव्यङ्ग्यभेदेन पदांशानां च प्रकृत्यादिभेदेनातोऽधिका अपि प्रकारा भवन्ति तथापि संप्रदायानुरोधेनैकपञ्चाशत्त्वमेव दर्शितम्। संकरेणेति। अलंकारपरिच्छेदे वक्ष्यमाणरीत्या त्रिरूपेणेत्यर्थः। यथा—'अङ्गाङ्गित्वेऽलंकृतीनां तद्वदेकाश्रयस्थितौ. संदिग्धत् च भवति संकरस्त्रिविदः पुनः ॥' इत्यलंकारसंकरस्य त्रैविद्यमुक्तं तदनुसारेण संकरत्रैविध्यं बोध्यम्। अत्र 'एकाश्रयस्थितौ' इत्यस्य एकव्यञ्जकानुप्रवेश इत्यर्थः. संदिग्दत्वे 'अयं ध्वनिः स ध्वनिर्वा इति संशयेऽङ्गाङ्गिभावापन्नोऽनेकव्यञ्जकानुप्रविष्टः। असंदिग्धो ध्वनिसमुदायः संसृष्टिः। अनेकधेति यदुक्तं तदेवाह— वेदेति। वेदाश्चत्वारः, खं शून्यम्, अग्नयस्त्रयः, शराः पञ्च। सजातीयानेकसंख्याप्रस्तावे 'अङ्कानां वामतो गतिः' इत्यङ्कविदां नियमेन चतुरुत्तरशतत्रयाधिकपञ्चसहस्रामीत्यर्थः। ननु कथमेतदेकपञ्चाशतस्वतुर्गुमेन चतुरधिकशतद्वयमेव भवतीति चेत्, न। यतः प्रथमस्य सजातीयेनैकेन विजातीयैः पञ्चासता च संसृष्टावेक पञ्चाशत्त्वम्। एवं द्वितीयस्य सजातीयेनैकेन विजातीयैरूनपञ्चासता च संसृष्टौ पञ्चाशत्त्वम्। तृतीयस्य सजातीयेनैकेन विजातीयैरष्टचत्वारिंसता च संसृष्टावूनपञ्चाशत्त्वं भवति। चतुर्थस्य सजातीयेनैकेन विजातीयैः सप्तचत्वारिंशिता च संसृष्टावष्टचतरिंशत्त्वम्। एवमन्येषमेकैकह्रासेन सप्तचत्वारिंशदादिकम्। चरमस्य सजातीयेनैकेन संसृष्टावेकविषयत्वमेवेति मिलित्वा षड्विंशत्यधिकत्रयोदशशतत्वं ध्वनिसंसृष्टेः। एवं क्रमेण अष्टसप्तत्युत्तरनवशताधिकत्रिसहस्रत्वं त्रिविधध्वनिसंकरस्य।

मिलित्वा 'वेदखाग्नि—' इत्यादिसंख्याया उपपत्तिः। न चैकपञ्चाशतस्तावता गुणने एकाधिकषड्विंशतिशती संसृष्टौ, तत्रैव तत्रिगुणसंकरयोजने 'वेदखाब्धिवियच्चन्द्राः' इति काव्यप्रकाशोक्तसंख्या भवति कथं 'वेदखाग्नि'—इत्यादिसंख्येति वाच्यम्। संसृष्टिसंकरयोः पूर्वपूर्वसंसर्गस्योत्तरोत्तरगणनायाम प्रवेशात्तावत्संख्यत्वानुपपत्तेः। अत एव काव्यप्रकाशटीकाकारचण्डीदासेन "संसृष्टौ संकरयोजने च सिन्धुगगनशिखिशराः, शद्धयोगे शरबाणाग्निबाणाः' इत्युक्तम्। शुद्धैरिति। संसृष्टिसंकररहितैर्योगे इत्यर्थः। इषवः पञ्च, बाणाः पञ्च, अग्नयस्त्रयः, सायकाः पञ्च। पञ्चपञ्चाशदुत्तरशतत्रयाधिकपञ्चसहस्राणीत्यर्थः ॥

## विवृतिपूर्तिः

संसृष्टावित्यादि। वस्तुतस्तु प्रकाशकारमतमेव ज्यायः। तथाहि—एकपञ्चाशतो भेदानामेकपञ्चाशता भेदैर्योजनमिति तावतां तावद्गुणनेनैकोत्तरषड्विसतिसतं ९२६०१) भवति। संयोजनं च संसृष्ट्यादिचतुः प्रकारैरिति तावतां चतुर्भिर्गुणने 'वेदखाब्धिवियच्चन्द्राः' (१०४०४) इति संख्या संपद्यते। नन्वस्त्वेकपञ्चाशद्भेदेष्वेकतराणां पञ्चाशता योजनम्, स्वस्य तु स्वेन कतं योजनमिति चेत्, न, व्यक्तिभेदमादाय विजातीयवत्सजातीयेनापि संकरादिति राजानकमम्मटासयः। अत एव यता कविकर्मसु अशीतिभेदालक्षणानुदाहृतापि तात्पर्यगत्या सह्याः;

एवम्—'एकोऽपि भेदोऽनन्तत्वाद् असंख्येय इति स्थितिः।' इति भवत्कारिकाभङ्ग्यापि (२२१) प्रकाशोक्ता भेदसंक्या कथमिव न संभावनीयेत्यलं पर्यनुयोगेन। यत्तु चण्डीदासादिभिः 'सिन्धुगगनशिखिशराः—'(५३०४) इत्यादि सिद्धान्तितं तत्र ब्रूमः—अनुभवसिद्धौ तावत्पुण्ड्रकादीक्षुरसेष्विव ध्वनिष्वपि हृद्यत्वातिसयनानतिशयौ। तथा चार्थान्तरसंक्रमितवाच्यस्य यत्रातिसयस्तत्रात्यन्ततिरस्कृतवाच्येन तद्योजनम्। यत्र तु तद्वैपरीत्यं तत्रात्यन्ततिरस्कृतवाच्यस्येतरेम योजनमिति व्यपदेशः। 'प्रधान्येन व्यपदेश भवन्ति' इति न्यायात्। एतदेव प्राधान्यमादाय गणना सौत्री। नन्वेवं यत्रोभयोस्तुल्यमेव चारुत्वं तत्र भेदान्तरं स्यादिति. मैवम्। अपकर्षाभावस्यातिशयपदेन विवक्षितत्वात्तत्रोभयभेदसंस्करस्वीकारादिति प्रदीपादौ व्यक्तम्॥ अथ ग्रन्थकारमते तु विवृतिकारशैल्या प्राङ् निर्दिष्टध्वनिसंख्यानमेवं क्रियते—

सजातीयेनैकेन—विजातीयैः—भेदाः।

१ + ५० = ५१

१ + ४९ = ५०

१ + ४८ = ४९

१ + ४७ = ४८

एवमेकैकह्रासेन ५१ तमे स्थाने शून्यम्

१ + ० = १

यथोक्तन्यासे योगः = १३२६ ध्वनिसंसृष्टयः।

ध्वनिसंसृष्टिसंकरयोगः = ५३०४

शुद्धध्वनिभेदाः = ५१

सर्वयोगः = ५३५५

## विज्ञप्रिया

एकपञ्चासदिति—पूर्वदर्शिताः पञ्चत्रिंशत् कुलकरूपमहाक्यव्यङ्ग्याः द्वादशपदैकदेशादिव्यङ्ग्याः चत्वार इत्येकपञ्चाशत् एषा परस्परयोजने संख्यां दर्शयति—सङ्करेति. अङ्गाङ्गित्वरूपेम एकाश्रयानुप्रवेशरुपेण संदिग्दरूपेण च त्रिविधेन संकरेण योजने तस्य त्रिरूपता। किमयम्-अयं वेति संसयास्पदत्वरूपः एकः, तयोः परस्परानुग्राहकानुग्राह्याभावरूपो द्वितीयः, तयोरेकव्यञ्जकेन व्यञ्जनरूपस्तृतीयः। संसृष्टिः, तु एतत् त्रितयराहित्येनैकपदे स्थितिः। एभिर्याः संख्या भवन्ति ता आह—वेदेति—"अङ्कानां वामतः क्रम' इति रीत्या वेदाश्चत्वारः तद्रवमे खं शून्यत्वम्। तद्वामेऽग्नयसद्दयः। तद्रवमे शराः पञ्च। नन्वेवमित्थमेकपञ्चाशत् चतुर्गुणेन चतुरधिकद्विशतमेव भवति। तत्कथमेतादृशी संख्येति चेन्न। एकस्यैव स्वजातीयेन एकेन स्वस्वजातीयैः पञ्चाशता च चतुर्गुणने एकस्यैव चतुरधिकद्विशतरूपत्वम् एवं तदुत्तरस्य पूर्वेण सह चातुर्विद्यं पूर्वगणनायां प्रविष्टमित्यतः तस्य चातुर्विधत्स्य अगण्यत्वात् द्विशतरूपम्। एवं तदुत्तरस्य पूर्वद्वाभ्यां चतुश्चतुर्विधत्वस्य अगण्यत्वात् चतुर्न्युनाद्विसतरूपत्वम्। एवं रीत्या चरमस्य चतुरूपत्वमात्रं गुण्यमिति भवत्युक्तरूपा संख्या। काव्यप्रकाशे तु दर्शितक्रमेण क्रमशो ह्रासमविचार्य्य सर्वेषामेव चतुरधिकद्विशतरूत्वेन एकपञ्चाशत एवं तादृशसंख्यात्वेन 'वेदस्वाग्निवियच्चन्द्राः'

इत्येवं संख्या एव उत्सर्गसिद्धा दर्शिताः। वस्तुतस्तु, अत्यन्तविचारे वेदखाग्निशररूपा या संख्या ग्रन्थकृता दर्सिता साऽपि न सम्भवति। तथा हि एकपञ्चाशत एव उक्तचातुर्विध्यं न सम्भवति, पदैकदेशपदव्यङ्ग्ययोः पदवाक्य व्यङ्ग्ययोश्च शब्दशक्त्युत्थव्यङ्ग्ययोरर्थान्तरसंक्रमितवाच्याऽत्यन्ततिरस्कृताच्य व्यङ्ग्योश्ंच एक व्यञ्जकानुप्रवेसरूपसंकराऽसम्भवात् चातुर्विध्याभावात्। एषु शुद्धैकपञ्चाशन्मीलनेन संख्यामाह—शुद्धैरिषुबाणेति। व्याचष्टे-शुद्धैरिति। योजनेन संस्थातुं योजनेन।

## लोचन

तदेवमिति—एवं व्यङ्ग्यस्य पदवाक्यगतत्वेङ्गवृत्तौ पञ्चत्रिंशद्भेदाः संख्याताः। तदनन्तरमर्थशक्त्युद्भवस्य प्रबन्धगतत्वेन द्वादश। रसस्य पदांशवर्णरचनाप्रबन्धगतत्वेन चत्वार इति मिलित्वा ध्वनिकाव्यस्य एकपञ्चाशद्भेदाः शुद्धा इत्यर्थः। संकरेणेति। संकरस्याङ्गाङ्गिभावैकव्यञ्जकनानुप्रवेशसन्देहभेदात् त्रिभिः प्रकारैः परस्परनिरपेक्षयैकप्रकारया संस्ष्टया चान्योऽन्यमिश्रणे शुद्धभेदानामेव पञ्चाशतः सम्भूय वेदाश्चत्वारः, खं शून्यम्, अग्न्यस्त्रयः, शराः पञ्च; एवं "चाङ्कविन्यासे वैलोम्यस्य गणितशास्त्रप्रसिद्धत्वात्" पञ्चसहस्राणि; शतत्रयं चत्वारश्च भेदाः "५३०४।" तथा हि प्रथमभेदस्य सजातीयमिश्रणे चत्वारो भेदाः, विजातीयैः पञ्चाशता प्रत्येकं ध्वनिना विमिश्रणे चत्वारो भेदाः इति मिलित्वा चतुरधिकं भेदशतद्वयं द्वितीयस्य भेदशतद्वयमेव। यदि प्रथमभेदस्य द्वितीयभेदेन सह सहमिश्रयणं; द्वितीयभेदस्य प्रथमभेदन सह तत्तदेवेति। द्वितीयभेदे प्रथमभेदापेक्षय। चत्वारो भेदाः पातनीयाः। एवं तृतीयेऽर्थ चतुर्थे द्वादश इति क्रमेणन्येषामपि स्वकीयाद्यभेदापेक्षया सर्वेषां भेदचतुष्टयपातनम्। शुद्धैरिति। इषवः पञ्चबाणाः; पञ्च अग्नयः त्रयः सायकाः पञ्च एवं पञ्चसहस्राणि शतत्रयं पञ्चात् पञ्च च; "५३५५" अत्र अग्रिग्रामिभेदस्य योजने एकैकभेदह्रासात् एवं प्रकारेण एवं योजनं भवति।

**"एको राशिद्विधा स्थाप्य एकमेकाधिकं कुरु।**

**समार्द्धेनासमो गुणयः एतत् संकलितं लघु॥"**

इत्युक्तदिशा द्विपञ्चाशदर्द्धेन षड्विंशत्या एकपञ्चाशतं गुणयेत्। तथा (५१x२) २ = २६। ५१x२६ = १३२६ संख्या जायन्ते। तेषु चतुर्भिर्गुणितेषु (१३२६ = ४ = ५३०४ पञ्चसहस्राणि चतुरधिकं शतत्रयं संकीर्णभेदाः।

## कुसुमप्रतिमा

इदानीं ध्वनीनां सङ्कलनमाह तदिति। तत्तस्मात् रसभावादिरूपस्य असंलक्ष्यक्रमव्यङ्ग्यस्यापि पद पदांश वाक्य महावाक्य-वर्ण-रचना गतत्वेन षट् प्रकारत्वादित्यतः। एवम् अनेन ग्रहप्रकारेण तस्य ध्वनेः एकपञ्चाशङ्गेदाः प्रकारा मताः। पुनश्च त्रिरूपेण अलङ्कारवत् अङ्गाङ्गित्ववरूपेण एकास्चयानुप्रवेशरूपेण सन्दिग्धत्वरूपेण च त्रिविदरूपेण च त्रिविधेन सङ्करेण, एकरूपया परस्परनैरपेक्ष्यस्तितिरूपया संसृष्टया च वेदारुतरः, स्वं शून्यम्, अग्नयस्त्वयः, शराश्च पञ्च तन्मिताः, ततस्च "अङ्कस्य वामागतिः" इत्यङ्कशास्त्रनियमात् चतुधिकत्रिंसतयुतपञ्चसहस्रभेदा ध्वनयः। पुनश्च शुद्धैः केवलरूपैरुक्तैकपञ्चशत्प्रकारैर्योगेन, इषवः पञ्च, वाकाश्च पञ्च, अग्न्यस्त्रयः, पुनः सायकाश्च पञ्चेति तन्मिता इत्यर्थः। तथा च तासां संख्यानामपि वामगत्या पञ्चपञ्चाशदधिकत्रिशतयुतञ्चसहस्रसंख्यकप्रकाराः समुदायेन ध्वनयः। लक्ष्यार्थव्यङ्ग्यार्थगतव्यञ्जकत्वभैदैः प्रकृतिप्रत्ययादिपदासभेदैश्च अतोऽप्यत्यन्तबहुतरादिकसंख्याप्रसक्तावपि प्राचीनमनानुरोधात्ते न गणिता इति बोध्यम्। काव्यप्रकाशकारेण तु अतोऽपि

बहुतराधिकसंख्याः सङ्कलिताः । तथा च तत्कारिकांश—"शरेषुयुगस्वन्दनः" इति । एवञ्च तन्मते पञ्चपञ्चाशदधिकचतुःशतयुतदशसहस्रकाराः ध्वनय इति । एव्चालङ्कारिकाः प्रतिपाद्याविषयस्य संख्याधिक्यप्रतिपादनं दिग्विजयमिव महाकीर्त्तिकरं मन्वन्त इति मन्तव्यम् । तत्रायमुक्त सङ्करलनप्रकारः—

लक्षणमूलः अर्थान्तरसंक्रमितवाच्यः—२ पदगतः...१

आववक्षितवाच्यः वाक्यगतः...१

चतुर्विदः । अत्यन्ततिरस्कृतवाच्य—२

अभिधामूलः असंलक्ष्यक्रमव्यङ्ग्यः पदगतः...१

विवक्षितान्यपरवाच्यः वाक्यंगत...१

प्रदानतो द्विविधः । सलक्ष्यक्रमव्यङ्ग्यः

## विमला

तदेवमिति ।—तत्—तस्मात्, एवम्—उक्तरीत्या, तस्य—पूर्वोक्तस्य, ध्वनेः एकपञ्चाशत् भेदा मताः । तथाहि,—लक्षणामूलध्वनिः, अर्थान्तरसङ्क्रमितवाच्यः अत्यन्ततिरस्कृतवाच्य इति द्विविधोऽपि पदवाक्यगतत्वेन चतुर्विधः । असंलक्ष्यक्रमव्यङ्ग्यः, पदपदांभ्यवर्णरचनावाक्यमहावाक्यगतत्वेन षड्विधः । शब्दशक्त्युत्य संलक्ष्यक्रमंव्यङ्ग्यः, पदपदांशवर्णरचनावाक्यमहावाक्यगतत्वेन षड्विधः । शब्दशक्तत्थ संलक्ष्यक्रमव्यङ्ग्य, वस्त्वलङ्काररूपत्वेन द्विविधोऽपि पदवाक्यगतत्वेन चतुर्विधः । अर्थशक्त्युत्यः संलक्ष्यक्रव्यङ्ग्यः, वस्त्वलङ्कारयोः स्वतःसिद्धकविप्रौढ़ोक्तिसिद्धकविनिबद्धवक्तुप्रौढ़ाक्तिसिद्धत्वेन षड्विषयोः वस्त्वलङ्कारोभयव्यञ्जकत्वेन द्वादशविधोऽपि पदवाक्यमहावाक्यगतत्वेन त्रैविध्यात् षट्त्रंशप्रकारः । उभयशक्त्युत्यस्तु वाक्यगतः, एकविध एवात् [पूर्वं पञ्चवत्रिंशद्भेदाः उक्ताः; अर्थशक्तिमूलध्वनेः प्रबन्धप्रकाश्यत्वेन पुनर्द्वादशविधत्वम् । असंलक्ष्यक्रमव्यङ्ग्यध्वनेरपि पदांशवर्णरचनाप्रबन्धप्रकाश्यत्वेन चतुर्विंशत्वमिति षोडशः] मिलित्वा एकपञ्चाशद्विधो ध्वनिरिति फलितार्थः । यद्यप्यर्थानां वाच्यलक्ष्यव्यङ्ग्यभेदेन पदाभानाञ्च प्रकृत्यादिभेदेनातोऽधिका अपि प्रकाराः भवन्ति, तथापि सम्प्रदायानुरोधेनैकपञ्चाशत्वमेव दर्शितम्; अत्र वैशद्यविन्यासः;—अविवक्षितवाच्याविवक्षितान्यपरवाच्यसंज्ञौ लक्षणाभिधामुलकौ प्रथमं ध्वनेः द्वौ प्रकारौ । अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्यत्वनिमित्तकत्वेन द्विप्रकारस्य अविवक्षितवाच्यस्य वाक्यपदायत्तत्वेन द्वैविध्ये चतुःप्रकारत्वम् । संलक्ष्यक्रमंव्यङ्ग्यासंलक्ष्यक्रमव्यङ्ग्यभेदेन विवक्षितान्यपरवाच्यस्य द्विप्रकारत्व, शब्दशक्तिमूलकसंलक्ष्यक्रमव्यङ्ग्यस्य वस्त्वलङ्कारात्मकत्वेन द्विप्रकारत्वे वाक्यपदगतत्वनिमित्तकं चतुःप्रकारत्वम् । अर्थशक्तिमूलक संलक्ष्यक्रमव्यङ्ग्यस्य स्वतः सम्भवित्वार्थेन कविप्रौढ़ोक्तिसिद्धत्वार्थेन कविनिबद्धवक्तुप्रौढ़ोक्तिसिद्धत्वार्थेन च त्रिप्रकारत्वम् । तस्य पुनः वस्त्वलङ्काररूपत्वेन हिप्रकारत्वे षट्प्रकारत्वम् । तस्य चापि व्यङ्ग्यव्यञ्जकत्वभेदेन द्विप्रकारत्वे द्वादशप्रकारत्वम् । द्वादशप्रकारस्य पुनः प्रबन्धगत च वाक्यगतत्व पदगतत्वरूपत्रिप्रकारेण अर्थशक्तिमूलोऽनुरणनात्मकः ध्वनिः षट्विंशत्प्रकारकः । शक्तिद्वयमूलकः वाक्यगतत्वेनैकप्रकारः, संलक्ष्यक्रमव्यङ्ग्यध्वनेः एवमेकचत्वारिंशद्भेदाः । असंलक्ष्यक्रमव्यङ्ग्याङ्गस्य प्रबन्धवाक्यपदपदैकदैशरचनावर्णगतत्वे भेदेन रसादिध्वनेः षट्प्रकारत्वम्; विवक्षितान्यपरवाच्यध्वनेः सप्तचत्वारिंशप्रकाराः एवं ज्ञेयाः । अविवक्षितवाच्यस्य चतुर्विधभेदैः साकं प्रथमं विशुद्धरूपाः एकपञ्चाशद्भेदाः ध्वनेरवगन्तव्याः । ते पृथक् नामनिर्देशेन प्रदश्र्यन्ते ।—

(१) पदनिष्ठोऽर्थान्तरसंक्रमिताविवक्षितवाच्यध्वनिः, (२) वाक्यनिष्ठोऽर्थान्तरसंक्रमिताविवक्षितवाच्य-ध्वनिः, (३) पदनिष्ठात्यन्ततिरस्कृताविवक्षितवाच्यध्वनिः, (४) वाक्यनिष्ठोऽत्यन्ततिरस्कृताविवक्षितवाच्यध्वनिः, (५) पदनिष्ठः शब्दशक्तिमूलसंलक्ष्यक्रमवस्तुध्वनिः (६) पदनिष्ठः शब्दशक्तिमूलसंलक्ष्यकमालङ्कारध्वनिः, (७) वाक्यनिष्ठः शब्दशक्तिमूलसंलक्ष्यक्रमवस्तुध्वनिः, (८) वाकयनिष्ठः शब्दशक्तिमूलसंलक्ष्यक्रमालङ्कारध्वनिः, (९) पदनिष्ठः अतः सिद्धार्थशक्तिमूलो वस्तुद्वारको वस्तुः ध्वनिः, (१०) पदनिष्ठः स्वतःसिद्धार्थऐशक्तिकारणयी वस्तुद्वारकोऽलङ्कारध्वनिः, (११) पदनिष्ठः स्वतः सिद्दार्थशक्तिमूलोऽलङ्कारद्वारकोऽलङ्कारध्वनिः, (१२) पदनिष्ठः स्वतः सिद्धार्थशक्तिमूलोऽलङ्कारद्वारको वस्तुध्वनिः, (१३) वाक्यनिष्ठः स्वतः सिद्धार्थशक्तिमूलो वस्तुद्वारको वस्तुध्वनिः, (१४) वाक्यनिष्ठः स्वतः सिद्धार्थशक्तिमूलो वस्तुद्वारकोऽलङ्कारध्वनिः, (१५) वाक्यनिष्ठः स्वतः सिद्धार्थशक्तिमूलोऽलङ्कारद्वारकोऽलङ्कारध्वनिः, (१६) वाक्यननिष्ठः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारद्वारको वस्तुध्वनिः, (१७) प्रबन्धनिष्ठः स्वतः सिद्धार्थशक्तिमूलो वस्तुद्वारको वस्तुध्वनिः, (१८) प्रबन्धनिष्ठः स्वतः सिद्धार्थशक्तिमूलो वस्तुद्वाकऽलङ्कारध्वनिः, (१९) प्रबन्धनिष्ठः स्वतः सिद्धार्थशक्तिमूलोऽलङ्कारद्वारकोऽलङ्कार-ध्वनिः, (२०) प्रबन्धनिष्ठः स्वतः-सिद्धार्थशक्तिमूलोऽलङ्कारद्वारको वस्तुध्वनिः, (२१) पदनिष्ठः कविप्रौढ़ोक्तिसि-द्धार्थशक्तिमूलो वस्तुद्वारको वस्तुध्वनिः, (२२) पदनिष्ठः कविप्रौढ़ोक्तिसिद्धार्थशक्तिमूलो वस्तुद्वारकोऽलङ्कारध्वनिः, (२३) पदनिष्ठः कविप्रौढ़ोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारद्वारकोऽलङ्कारध्वनिः, (२४) पदनिष्ठः कविप्रौढ़ोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारद्वारकीवस्तुध्वनिः, (२५) वाक्यनिष्ठः कविप्रौढ़ोक्तिसिद्धार्थश-क्तिमूलो वस्तुद्वारको वस्तुध्वनिः

(२६) वाक्यनिष्ठःकविप्रौढ़ोक्तिसिद्धार्थशक्तिमूली वस्तुद्वारकोऽलङ्कारध्वनिः, (२७) वाक्यनिष्ठः कवि-प्रौढ़ोक्तसिद्धार्थशक्तिमूलोऽलङ्कारद्वारकोऽलङ्कारध्वनिः, (२८) वाक्यनिष्ठः कविप्रौढ़ोक्तिसिद्धार्थशक्ति-मूलोऽलङ्कारद्वारको वस्तुध्वनिः, (२९) प्रबन्धनिष्ठः कविप्रौढ़ोक्तिसिद्धार्थशक्तिमूलो वस्तुद्वारको वस्तुध्वनिः, (३०) प्रबन्धनिष्ठः कविप्रौढ़ोक्तिसिद्धार्थशक्तिमूलो वस्तुद्वारकोऽलङ्कारध्वनिः, (३१) प्रबन्धनिष्ठः कविप्रौढ़ोक्तिसिद्धा-र्थशक्तिमूलोऽलङ्कारद्वारकोऽलङ्कारध्वनिः, (३२) प्रबन्धनिष्ठः कविप्रौढ़ोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारद्वारको वस्तुध्वनिः, (३३ पदनिष्ठः कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धार्थशक्तिमूलो वस्तुद्वारको वस्तुध्वनिः, (३४) पदनिष्ठः कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धार्थशक्तिमूलो वस्तुद्वारकोऽलङ्कारध्वनिः, (३५) पदनिष्ठः कविनिबद्धवक्तृप्रौढ़ो-क्तिसिद्धार्थशक्तिमूलोऽलङ्कारद्वारकोऽलङ्कारध्वनिः, (३६) पदनिष्ठः कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धार्थशक्ति-मूलोऽलङ्कारद्वारको वस्तुध्वनिः, (३७) वाक्यनिष्ठः कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धार्थशक्तिमूलो वस्तुद्वारकोऽलङ्कारध्वनिः, (३८) वाक्यनिष्ठः कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धार्थशक्तिमूलो वस्तुद्वारकोऽलङ्कार-ध्वनिः, (३९) वाक्यनिष्ठः कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारद्वारकोऽलङ्कारध्वनिः, (४०) वाक्य-निष्ठः कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारद्वारको वस्तुध्वनिः, (४१) प्रबन्धनिष्ठः कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धार्थशक्तिमूलो वस्तुद्वारको वस्तुध्वनिः, (४२) प्रबन्धनिष्ठः कविनिबद्धवक्तृप्रौढ़ो-क्तिसिद्धार्थशक्तिमूलो वस्तुद्वारकोऽलङ्कारध्वनिः, (४३) प्रबन्धनिष्ठः कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धार्थशक्ति-मूलोऽलङ्कारद्वारकोऽलङ्कारध्वनिः, (४४) प्रबन्धनिष्ठः कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारद्वारको वस्तुध्वनिः, (४५) प्रबन्धनिष्ठोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः, (४६) वाक्यनिष्ठोऽसंलक्ष्यक्रमव्यङ्ग्यो रसा-दिध्वनिः, (४७) पदनिष्ठोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः, (४८) पदैकदेशनिष्ठीऽसंलक्ष्यक्रमव्यङ्ग्यो रसादि-ध्वनिः, (४९) रचनानष्ठीऽसंलक्ष्यक्रव्यङ्ग्यो रसादिध्वनिः, (५०) वर्णनिष्ठोऽसंलक्ष्यक्रम व्यङ्ग्यो रसादिध्वनिः,

(४८) पदैकदेशनिष्ठोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः, (४९) रचनानिष्ठोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः, (५०) वर्णनिष्ठोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः, (५१) वाक्यनिष्ठः शब्दार्थोभयशक्तिमूलो ध्वनिरिति ।

सङ्करेणेति—त्रिरूपेण—त्रिविधेन, अलङ्कारपरिच्छेदे अङ्गाङ्गिभावसन्देहैकाश्चयानुप्रवेशरूपेम ["अङ्गाऽङ्गित्वेऽलङ्कृतीनां तद्वदेकास्रयस्थितौ. सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः ॥" इत्यलङ्कारसङ्करस्य त्रैवध्यमुक्तं, तदनुसारेण सङ्करत्रैविध्यं ज्ञेयम् । अत्र "एकाश्रयस्थितौ" इत्यत्र एकव्यञ्जकानुप्रवेशे इत्यर्थः । सन्दिग्धत्वे "अयं ध्वनि स ध्वनिवां" इति संशये, अङ्गाङ्गिभावापन्नम्, अनेकव्यञ्जकानुप्रविटः इति सङ्क्षेपः] वक्ष्यमाणेन इत्यर्थः, सङ्करेण, पञ्चरूपया—एकविषया, असन्दिग्धध्वनिसमुदायरूपया इत्यर्थः संसृष्टया च वक्ष्यमाणलक्षणया इति शेषः, (ते एकपञ्चाशद्भेदाः) वेदखाग्निशराः—वेदाः—चत्वारः, स्वं—शून्यम्, अग्नयः—त्रयः, शराः—पञ्च इत्यर्थः. सजातीयानेकसंख्याप्रस्तावे "अङ्कानां वामती गतिः" इत्यङ्कविदां नियमेन ५३०४ चतुरधिकानि त्रिपञ्चशच्छतानि इति निष्कृष्टोऽर्थः, शुद्धैः,—अविमिश्रैरित्यथः, एकपञ्चाशता मिलिता इति शेषः, ५३५५ पञ्चपञ्चासदधिकत्रिपञ्चाशच्छतभेदाः इत्यर्थः । ननु कतमेतत् ? एकपञ्चाशतः चतुर्गुणने चतुरधिकशतद्वयमेव भवति इति चेत् ? न; यतः प्रथमस्य सजातीयेनैकेन विजातीयैः पञ्चाशता च संसृष्टौ एकपञ्चाशत्त्वम् । एवम् सजातीयेनैकेन विजातीयैः च संसृष्टौ रुनपच्चभताष्टचत्वारिंसत्त्वम् । एवमन्येषामेकैकह्रासेन सप्तचतरिंशदादिकम् चरमस्य सजातीयेनैकेन संसृष्टौ एकविषयत्वमेवेति मिलित्वा षड्विंसत्यदिकत्रयोदशशत्वं ध्वनिसंसृष्टेः इत्यादिसङ्क्या ? इति वाच्य, संसृष्टिमङ्करयोः पूर्वपूर्वसंसर्गस्योत्तरोत्तरगणनायामप्रवेशात् तावत्सख्यत्वानुपपत्तेः । अत एव काव्यप्रकाशटीकाकारणीदासेन "संसृष्टौ सङ्करयोजने च सिन्दुगगनांसखिशराः, शुद्धयोगे सरवाणाग्निवाणाः" इत्युक्तम् ।

शुद्धैरिति ।—संसृष्टिसङ्कररहितैर्योगे . इत्यर्थः । इषवःस—पञ्च, वाणाः,—पञ्च, अग्नयः,—तभः, सायकाः,—पञ्च । तथा च, पञ्चपञ्चशदुत्तरशतत्रयादिकपञ्चसहस्राणीत्यर्थः । एकं प्रकासमतानुयायिकस्त्वमाहुः,—एकप्पञ्चासतः प्रकाराणामेष्पञ्चाशता प्रकारैः सम्मेलनम्, इत्येवं तद्व्यङ्ग्यकानां तत्रङ्कावगुमनेन एकोत्तरषट्शताधिकद्विसहस्रं (२६०१) सम्पद्यते। संसृष्टयाचतुर्भेदे तक्तेलनश्चेति चतुर्भिः तत्सङ्क्यकानां गुणनेन "वेदस्वाब्दिवियश्चन्द्राः" (१०४०४) चतुरुत्तरचतुः शताधिकदशसहस्रःणीति सङ्ख्या जायते । अन्वेकपञ्चाशद्भेदानामेणतराणां पञ्चाशत्सङ्ख्यया मेलनम्, आत्मनस्तु आत्मना मेलनं कथमिति चेत् ? न; विजातीयस्येषु प्रजातीयस्यापि सङ्करयोगात् इति मम्मटादयः । यत्तु प्रकाशव्याख्यातारः चण्डीदासप्रमुखाः, "सिन्धुमनशिखिशराः" (५३०४) चतुरुत्तरशतत्रयाधिकपञ्चसहस्राणि इत्यादि प्रतिपादितवन्तः, तटोच्यते,—इक्षुदण्डमृद्वाकादिरसादाविव ध्वनावपि प्रेष्ठत्वातिशयानतिशयौ अनुभवसिका एवञ्च यत्र अर्थान्तरसंक्रमितवाच्यस्यातिशयः, तत्र अत्यन्ततिरस्कृतवाच्ये न तन्मेलनम् । वैपरीत्यस्थले तु इतरेणात्यन्ततिरस्कृतवाच्यस्य मेलनं "प्राधान्येन व्यपदेशाः भवन्ति" इति न्यायेन सिद्धान्तितत्वात् । इदमेव मुख्यत्वमवलब्ध्य सौत्री (ध्वनिकारसूत्रोक्ता) गणना सिद्धा । ननु एवं यत्र द्वयोः सदृशमेव सौन्दर्य्यं, तत्र प्रकारान्तरं सम्पद्येत, इति चेत् ? न, अतिशयपदेन अपकर्षाभावस्य अभिषित्सितत्वात्, तत्र भेदद्वयसङ्कराङ्गीकारात् इति काव्यपदीपादौ स्पष्टम् ।

## लक्ष्मी

न चानुग्राह्यानुग्राहकभावेन सङ्करस्थलेऽनुग्राहकस्याङ्गतया गुणीभाव इति न ध्वनिसङ्करत्वमिति वाच्यम्, तत्र हि स्वतश्चमत्कारिण एव तस्य किञ्चित्परोपकारकतामात्रम्, न तु शेषशेषिभाव एवेती प्रदीपे स्पष्टम् । एकरूपया परस्परनैरपेक्ष्यस्थिति रूपया संसृष्टया च.

एभिर्या: संख्या भवन्ति ता आह—वेदेति। साजातीयानेकसंख्याप्रस्तावे—'अङ्कानां वामत: क्रम:' इति गणितशास्त्रप्रसिद्दत्वेन वेदास्चत्वार:, तद्वामे खं शून्यम्, तद् वामेऽग्नयस्त्रय: तद्वामे शरा: पश्चेति चतुरुत्तरसतत्रयदिकपञ्चसहस्राणि ध्वन्य:। नन्वेवमप्येकपञ्चासतस्चतुर्गुणनेन चतुरधिकद्विशतमेव भवतीति तत्कथमेतादृशी संख्येति चेत्? मैवम्, यत: प्रथमस्य सजातीयेनैकेन विजातीयै: पञ्चाशता च संसृष्टावेकपञ्चाशत्वम्? एवं द्वितीयस्य सजातीयेनैकेन विजातीयैरूनपञ्चाशता च संससृष्टौ पञ्चाशत्वम्। तृतीयस्य सजातीयेनैकैन विजातीयैरष्टचत्वारिंसत च संसृष्टावनपञ्चाशत्वम्, एवमन्येषामेकैकहासेन सप्तचत्वारिंशदादिकम्। संसृष्टावेकविषयत्वमेति मिलित्वा षड्विंशत्यदिकत्रयोदशशतत्वं ध्वनिसंसृष्टे:। एवंक्रमेण अष्टसप्तत्युत्तरनवशताधिकत्रिसहस्रत्वं त्रिविधध्वनिसङ्करस्य मिलित्वा भवति 'वेदखाग्नि' संख्याया उपपत्तिरिति स्पष्टं विवृतौ। काव्यप्रकाश कृता तु—एकपश्चाशद्भेदानाम् एकपञ्चाशतागुणने एकोत्तरषट् शतादिकसहस्रद्वयं (२६०१) भवति। योजनं च संसृष्ट्यायदिचतु:प्रकारैरिति तावतां चतुर्भिर्गुणने 'वेदखाब्धिक्यिञ्चन्द्रा:' (१०४०४) इत्युक्तम्। नन्वस्त्वेकपञ्चाशद्भेदेष्वेकतराणां पञ्चाशता योजनम् स्वस्य तु स्वेन कथं योजनेति चेत्? न व्यक्तिभेदमादाय विजातीयवत्सजातीयेनाऽपि सङ्करादिति मम्मटा शय:। अत एव यथा कविकर्मसु लक्षणाया अशीतिप्रकारा अनुदाहृता आप्यभिप्रायवशेन स्वीक्रियते, तथा प्रकाशोक्ता भेदसंख्या अपि कथमिव न सम्भवनीया अन्यथा 'एकोऽपि भेदोऽनन्तत्वादसंख्येय:' इति स्वोक्तिरपि कथं सङ्गच्छेत।

वस्तुतस्तु अत्यन्तविचारे 'वेदरवाग्निशररूपा' या संख्या ग्रन्थकृता दर्शिता साऽपि न सम्भवति तथाहि—एकपञ्चाशत एवोक्तचातुर्विध्यं न सम्भवति पदैकदेशपदव्यङ्ग्ययो: पदवाक्यव्यङ्ग्ययोश्च शब्दशक्त्युद्भवव्यङ्ग्ययोरर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्य व्यङ्ग्ययोश्च एकव्यञ्जकानुप्रवेशसङ्करासम्भवात् चातुर्विध्याभावात्

यत्तु—चण्डीदासादय: 'संसृष्टौ सङ्करयोजने च सिन्धुगगनशिखिरा:, शुद्धयोगे शिश्विाणाग्निवाणा:' इत्याहुस्तन्न पेशलम्, अनुभवसिद्धौ तावत्पुण्डरीकादीक्षुरसेष्विव ध्वनिष्वपि हृद्यत्वाशयानतिशयौ तथा चार्थान्तरसंक्रमितवाच्यस्य यत्रातिशयस्तत्रात्यन्ततिरस्कृतवाच्ये तद्योजनम्, यत्र तु तद्वैपरीत्यं तत्रात्यन्ततिरस्कृतवाच्यस्येतरेण योजनमिति व्यपदेश: 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायात्। एवमन्यात्राऽप्यूह्यम्। एतदेव प्राधान्यमादाय गणना सौत्री। नन्वेवं यत्रोभयोस्तुल्यमेव चारुत्वं तत्र भेदान्तरं स्यादिति चेत्? मैवम्, अपकर्षाभावस्यातिसयपदेन विवक्षितत्वात्तत्रोभयभेदसङ्करस्वीकारादिति प्रदीपादौ स्पष्टम्। एषु शुद्धैकपञ्चाशन्मिलने संख्यामाह—शुद्धैरिषुबाणेति। व्याचष्टे—शुद्धैरिति। संसृष्टिसङ्कर सहितैर्योग इत्यर्थ:। इषव: पञ्च, बाणा: पञ्च, अग्नयस्त्रय:, सायका: पञ्चेतितन्मिता इत्यर्थ:। एवञ्च तासां संख्यानामपि वामगत्या पञ्चपञ्चाशदुत्तरत्रिशतयुतपञ्चसहस्रसंख्यकभेदा: (५३५५) समुदायेन ध्वनय:। अत्र अग्रिमाग्निमभेदस्य योजने एकैकभेदह्रासात् एवं प्रकारेण योजनं भवति—

'एको राशिद्विधा स्थाप्य एकमेकाधिकं कुरु। समार्धेनासमो गुण्य: एतत्सङ्कलितं लघु॥'

इत्युक्तदिशा द्विपञ्चाशदर्धेन षड्विंशत्या एकपञ्चाशतं गुणयेत्। तथा (५१ + २ २ = २६, ५१X२६ = १३२६) रसदस्राग्निमेदिन्य: संख्या जायन्ते। तेषु चतुर्भिर्गुणितेषु (१३२६ + ४ = ५३०५) पञ्चसहस्राणि, चतुरधिकं शतत्रयं संकीर्णभेदा:।

अथ ग्रन्थकारमतेन प्राङ्निर्दिष्टध्वनिसंख्यासङ्कलनप्रकार: प्रदश्यते—

लक्षणामूलः अर्थान्तरसङ्क्रमितवाच्यः—२ (पदगतः—१

दिङ्मात्रं तूदाह्रियते—

**'अत्युन्नस्तयुगा तरलायताक्षी द्वारि स्थिता तदुपयानमहोत्सवाय।**

**सा पूर्णकुम्भनवनीरजतोरणस्रक्संभारमङ्गलमयत्रकृतं विधत्ते ॥'**

अत्र स्तनावेव पूर्णकुम्भौ, दृष्टय एव नवनीरजस्रज इति रूपकध्वनिरसध्वन्योरेकाश्रयानुप्रवेशः सङ्करः।

## रुचिरा

विवृतिकारास्तु-'यद्यपि-अर्थानां वाच्यलक्ष्यव्यङ्ग्यभेदेन पदांशानां च प्रकृत्यादिभेदेन अतोऽधिका अपि प्रकारा भवन्ति, तथाऽपि सम्प्रदायानुरोधेन एकपञ्चाशत्त्वमेव दर्शितम्' इति प्राहुः। अथैषामपि प्रकारप्रपञ्चमाह- **त्रिरूपेण** 'अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ। सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः ॥' इतिवक्ष्यमाण-रीत्या त्रिविधेनेत्यर्थः। सङ्करेण। सहार्थेयं तृतीया। **एकरूपया। संसृष्ट्या** 'मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते।' इत्यात्मिकयया रचनया। **च**। 'एकपञ्चाशद्भेश' इति पूर्वतोऽनुवृत्तम्। तथा च-एते चतुर्भिस्तङ्कर संसृष्टिभेदैर्योजिता इत्यर्थः। **वेदखाग्निशराः** चतुरधिकशतत्रयोत्तरपंश्चसहस्रसङ्ख्याकाः—सम्पद्यन्ते इत्यर्थः। तथा हि-वेदाश्चत्वारः, खं शून्यं विन्दुरिति यावत्, अग्नयस्त्रयः, शराः पञ्च। एते च-'अङ्कानां वामतो गतिः। इति नयेन वामतः पठितास्तां सङ्ख्यामाहुरिति बोध्यम्। बजेऽपि-**शुद्धैः** सङ्कराद्यसम्पृक्तैः। सहार्थेयं तृतीया। तथा च-एतैः संयोजिता इत्यर्थः। **इषुबाणाग्निसायकाः** पञ्चपञ्चाशदुत्तरशतत्रयाधिकपञ्चसहस्रसङ्ख्याकाः सम्पद्यन्ते इत्यर्थः। तथा हि-इषवः पश्च, बाणाः पञ्च, अग्नयस्त्रयः, सायकाः पञ्चेत्येते पूर्ववत् वामतः पठितास्तथा सम्पद्यन्त इति बोध्यम्। अत्राहुस्तर्कवागीशाः—'नन्‌ तदेकपञ्चाशतश्चतुर्गुणने चतुरधिकशतद्वयमेव भवतीति चेत्! न; यतः-प्रथमेन सजातीयेनैकेन विजातीयैः पञ्चाशता च संसृष्टावेकपश्चाशत्त्वम्, एवं द्वितीयस्य सजातीयेनैकेन विजातीयैः पञ्चाशता च संसृष्टौ पञ्चाशत्वम्। तृतीयस्य सजातीयेनैकेन विजातीयैरष्टचत्वारिशता च संसृष्टावूनप-ञ्चाशत्त्वं भवति, चतुर्थस्य सजातीयेनैकेन विजातीयैः सप्तचत्वारिशता च संसृष्टावष्टचत्वारिंशत्त्वम्। एवमन्येषा-मेकैकंह्रासेन सप्तचत्वारिंशदादिकम्। चरमस्यसतजातीयेनैकेन संसृष्टौ एकविपयत्वमेवेति मिलित्वा षड्विंशत्यधिकत्रयोदशशतत्वं ध्वनिसंसृष्टेः। एवम्-क्रमेण अष्टसप्तत्युत्तरनवशताधिकत्रिसहस्रत्वं त्रिविधध्वनि-सङ्करस्य। मिलित्वा 'वेदखाग्निशरा' इति सङ्ख्याया उपपत्तिः।'

नच 'एकपञ्चाशतस्तावता गुणने एकाधिकषड्विंशतिशती संसृष्टौ, तत्रैव तत्रिगुणसङ्करयोजने 'वेदखा-ब्धिवियञ्चन्द्रा' इति काव्यप्रकाशोक्तसङ्ख्या भवति, तत् कथं 'वेदखाग्निशरा' इति सङ्ख्या इति वाच्यम्, संसृष्टिसङ्करयोः पूर्वपूर्वसंसर्गस्योत्तरोत्तरगणनायामप्रवेशात्तत्सङ्ख्यत्वानुपपत्तेः।' इति प्रदीपकाराः। 'अर्थान्तरस-ङ्क्रमितवाच्यस्यात्यन्ततिरस्कृतवाच्येन योजने यो भेदः स एवात्यन्ततिरस्कृतवाच्यस्यार्थान्तङ्क्रमितवाच्येन योज-नायाम्। एवमन्यत्रापि। तास्मात्-"एको राशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु। समार्धेनासनो गुण्य एतत्सङ्कलितं लघु ॥" इत्युक्तदिशा द्विपञ्चाशदर्धेन षड्विंशत्या एकपञ्चाशते गुणयेत्। तथा च-' 'रसदस्राग्निमेदिन्यः' इति त्रयोदशशतानि षड्विंशत्यधिकानि जायन्ते, योगश्चतुष्प्रकार इति तेषु चतुर्भिर्गुणितेषु 'वेदाभ्रदहनेषवः' इति पञ्चसहस्राणि चतुरधिकं शतत्रयं सङ्कीर्णभेदाः।' इति, यत्तु 'तेषां चान्योऽन्ययोजने। सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया। वेदखाब्धिवियञ्चन्द्राः। (शुद्धभेदैः सह) शरेषुयुगखेन्दवः।' इति काव्यप्रकाशकारिकां व्याचक्षाणा-

स्तदेकपक्षपाता: 'एकपञ्चाशतो भेदानामेकपञ्चाशता गुणने एकोत्तरषट्शताधिकसहस्रद्वयं भवति, योजनं च सङ्क-रादिचतुष्प्रकारैरिति तावता चतुर्भिर्गुणने चतुरुत्तरचतु:शताधिकायुतपरिमिता भेदा: सम्पद्यन्ते। तेषां च प्रागुक्तै: शुद्धैरेकपञ्चाशद्भेदै: समं योजने शरेषुयुगखेन्दुमिता भेदा भवन्ति। यद्यपि अर्थान्तरसङ्क्रमितवाच्यस्यात्यन्तति-रस्कृतवाच्येन योजने यो भेद:, स एवात्यन्ततिरस्कृतवाच्यस्यार्थान्तरसङ्क्रमिवाच्येन योजने भेद इति वक्तुं युक्तम्, तथाऽपि-'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायेन पुड्रकेक्षुरसेष्विव ध्वनिष्वपि हृद्यत्वातिशयानतिशयौ व्यपेक्ष्या-र्थान्तरसङ्क्रमितवाच्यस्य यत्रातिशय: तत्रान्ततिरस्कृतवाच्येन तद्योजनम्, यत्र तु अर्थान्तरसङ्क्रमितवाच्यापे-क्षयाऽत्यन्ततिरस्कृतवाच्येऽतिशयस्तत्रात्यन्ततिरस्कृतवाच्यस्यार्थान्तरसङ्क्रमितवच्येन योजनम्। तथैव तैषां व्यपदेश:, व्यक्तिभेदमादाय विजातीयवत्सजातीयेनापि योजनेभेदान्तरस्वीकारौचित्यात्।' इत्याहु:। तन्नातिपेश-लम्, एवं गुणननयस्वीकारे वक्ष्यमाणविरोधभेदाभिधानेऽपि एतस्यैव गुणननयस्य स्वीकारौचित्ये 'जातिश्चतुर्भि-र्जात्याद्यैर्विरूद्धा स्याद् गुणास्त्रिभि:। क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश॥' इति वक्तुमयुक्तत्वस्यापत्स्यमानत्वात्, किन्तु-'गुणजातिक्रियाद्रव्यैश्चतुर्भिश्च परस्परम्। गुणादीनां चतुर्णां हि भेदा: षोडशयोजने॥' इत्येवं वक्तुं युक्तत्वस्यापत्स्यमानत्वात्। चमत्कारस्य यथातथं तथाऽपि सुसम्भवात्॥ २८९॥ २९०॥

कारिकां सुगमयितुमाह-**शुद्धैरित्यादि**। स्पष्टम्।

सर्वेषां भेदानामुदाहरणाशक्यत्वादाह-**दिङ्मात्रमित्यादि**।

**दिङ्मात्रं** मार्गनिदर्शनमात्रमित्ययर्थ:। **तु**। **उदाह्रियते** 'ध्वनि' रिति शेष:। **"अत्युन्नत..."** इत्यादिना।

दिङ्मात्रं तूदाह्रियते—

**'अत्युन्नतस्तनयुगा तरलायताक्षी**
**द्वारि स्थिता तदुपयानमहोसत्वाय।**
**सा पूर्णकुम्भवनीरजतोरणस्रक्**
**संभारमगङ्लमयत्नकृतं विधत्ते ॥'**

अत्र स्तनावेव पूर्णकुम्भौ, दृष्टय एव नवनीरजस्रज इति रूपकध्वनिरसध्वन्योरेकाश्रयानुप्रवेशः संकरः।

---

### विवृतिः

अत्युन्नतेति। प्रवादागतं नायकं श्रुत्वा वासगृहद्वारि स्थिताया नायिकाया वर्णनमिदम्. तस्य नायकस्य उपयानमुपगमः। स्वगृहप्रवेश इति यावत्। तत्कालीनमहोत्सवाय। संभारः संघटनमेव मङ्गलम्. प्रवासादागतस्य गृहप्रवेशसमये पूर्णकुम्भस्थापनादिमङ्गलं क्रियत इति लोकाचारः। अत्र स्तनकटाक्षयोर्यथासंभवं पूर्णकुम्भत्वेन, नवनीरजस्रक्त्वेन च रूकत्वम्। तयोरेव नायकरतेरुद्दीपकतया शृङ्गारश्च व्यङ्ग्य इत्येवं व्यञ्जकानुप्रवेशः॥

### विज्ञप्रिया

अत्युन्नेतेति—प्रवासादगच्छन्तं पतिं द्वारा स्थित्वा दृष्टवतीं नायिकां कस्मिंश्चिनवेदयतः कस्यचिदुक्ति-रियम्। स्तनयुगं पूर्ण्णकुम्भौ आयतमक्षियुगं नवनीरजतोरणस्रक्सम्भारः। रसध्वन्योरिति—एतत् वाक्यव्यङ्ग्य-त्वात् शृङ्गारस्य। ध्वनिपदमत्र व्यङ्ग्यरसपरम्। एकाश्रय एतत् वाक्यम्।

### कुसुमप्रतिमा

पदगतध्वनिसङ्करमुदाहरति अत्युन्नतेति। विदेशादानतं प्रियतममाकर्ण वासगृहद्वारस्थिताया नायिकाया वर्णनियम्। अत्युन्नतं स्तनयुगं यस्याः सा, तरले चपले आयते दीर्घे च अहिणी चक्षुषी यस्याः सा, वा नायिका हारे द्वारि स्थिता सती, तस्य प्रियतमस्य उपयानम् उपस्थितिरेव महोत्सवस्तस्मै, अववकृतन् अमावासेन विहितम्, पूर्वकुम्भौ महोत्संवादौ हारीभपात्रे स्थापनीयाविति भावः, तथा नवनीरजानां सह्यः प्रस्फुटितपद्मानां तीररुकजस्तोरणे बन्धनीयाः मास्तस्ते, सम्बार आयोजनमेव मङ्गलं माङ्गलिकव्यापारस्तत् विधत्ते करोति।

सङ्करप्रकारं प्रहर्षवति अत्रेति। स्तनयोः पूर्वकुम्बहदत्वस्य दृष्टिषु नयनीरजनालात्वस्य च साक्षादारोप-भावेन तत्र व्यङ्ग्यत्वात् रूपकालङ्कारध्वनिरित्यर्थः। तामिल स्तनयुगदृष्टिभिर्नायकरतेरुद्दीपनात् सम्भोयङ्गाररसस्य च ध्वनिः। ततोह ध्वन्येः स्तब्धुनेति तरलावताचीति चनैकपदरूपे एकैकस्मिनशब्दवे द्वयोर्द्दवोरेवानुप्रवेसरूपः प्रवेशनतरस्थितिरूपः सङ्कर इत्यर्थः।

## विमला

अत्युन्नतेति ।—प्रवासादागतं पतिं श्रुत्वा वासगृहद्वारि स्थितायाः नायिकायाः वर्णनमिदम् । अत्युन्नतम्—अत्युच्च, [एतेन पीनत्वं सूच्यते] स्तनयुगं यस्याः सा, तरले—चञ्चले, [एतेन प्रतीक्षीन्मुखीत्वं सूच्यते] —आयते—विस्फारे, [एतेन द्रविष्ठस्यापि पत्युः दर्शनपरत्व सूच्यते] च अक्षिणौ—नेत्रे, यस्याः तथोक्ता, सा, द्वारि स्थिता सतो, तस्य—पत्युः, उपयानम्—उपस्थितिः, एव महोत्सवः तस्मै, स्वगृहप्रवेशकालिकमहानन्दकापारयेत्यर्थः, अयत्नकृतं—विना प्रयासेन जनितं, पूर्णकुम्भौ च नवनीरजानां—पद्मानां, तीरणस्रक्—द्वारदेशोभार्थं माल्यञ्च तेषां सम्भारः,—आहारणमेव मङ्गलं, विधत्ते—करोति । प्रवासादागतस्य गृहप्रवेशसमये घूर्णकुम्भत्वारोतमूलकेन दृष्टयोश्च नवनीरक्षस्रक्त्वारोपमूलकेन रूपकेणालङ्कारेण नायकतेयद्दीपकत्वात् एकाश्रयीभावेन व्यङ्ग्यः, इत्येव व्यञ्जकानुप्रवेशः ज्ञेयः । वसन्तालिकं वृत्तम् ।

धिन्वन्तौति ।—वसन्तदिवसवर्णनमिदम् । मदेन—हर्षेण, मूर्च्छन्तः,—वृद्धिं गच्छन्तः, अलीनां—भ्रमराणां, ध्वनयः, येषु तानि; धूतानि—कम्पितानि अध्यनीनानां—पान्थानां, हृदयानि यैः तथोक्तानि; तथा निस्तन्द्रः,—अतिप्रकाशमानः पूर्ण इति यावत्, यश्चन्द्रः, स एव वदनं यासां तासां, वदनारविन्दानि—मुखपद्मानि तत्सम्बन्धि यत् सौरभ्यं—सौगन्ध्यं, तेन यत् सौहृदं संख्यं साहश्य सम्बन्ध इति यावत तेन सगर्बाः—साहङ्कारं उत्कृष्टा इति यावत्, समीरणाः,—वायवः, यत्र तथाविधानि, अमूनि—अनुभूयमानमहोत्सवानि, मधोः,—वसन्तस्य, दिनानिं, धिन्वन्ति—प्रीणयन्ति, लोकानिति शेषः । वसन्ततिलकं वृत्तम् ।

## लक्ष्मी

पदगतध्वनिसङ्करं दर्शयति—अत्युन्नतेति । प्रवासादागच्छन्तं पतिं द्वारि स्थित्वा दृष्टवर्ती नायिकां कस्मिश्चिन्निवेदयतः कस्यचिदुक्तिरियम् । अत्युन्नतं स्तनयुगं कुचयुगलं यस्याः सा तादृशी, तरले चञ्चले आयते दीर्घे च अक्षिणी नयने यस्याः सा तादृशी सा नायिका द्वार्यवस्थिता द्वारि वर्त्तमाना सती तस्य वल्लभस्य उपयानम् उपगमः उपस्थितिरेवेति यावत्, तत्कालीनमहोत्सवस्तस्मै, अयत्नकृतम् अनायासेनैव विहितम् । पूर्णकुम्भौ पूर्णकलशौ नवनीरजानां तत्क्षणविकसितपद्मानां तोरणस्रजः तोरणमालास्तेषां सम्भर एव आयोजनमेव मङ्गलं तद्विधत्ते करोति । यथा महोत्सवसमये द्वारपार्श्वे पूर्णकुम्भौ जनाः स्थापयन्ति माल्यादिना तोरणं च भूषयन्ति तद्वत्सा प्रवासात् प्रियतमागमनमहोत्सवे स्तनरूपकुम्भ द्वियं स्थापितवती नयनरूपनवनीरजैः तोरणस्रक्सम्भारं कृतवती ।

सङ्करप्रकारं स्पष्टीकरोति—अत्रेति । स्तनकटाक्षयोर्थथासम्भवं पूर्णकुम्भत्वेन नवनीरजमालात्वेन च साक्षादारोपाभावेन तस्य व्यङ्ग्यत्वाद् रूपकालङ्कारध्वनिः, तयोरेव नायकरतेरुद्दीपकतया सम्भोगश्रृङ्गाररस्य च ध्वनिः उभयोश्च 'स्तनयुगेति' 'तरलायताक्षीति' चैकैपदरूपे एकैकस्मिन्नाश्रये उभयोरुभयोरेवानुप्रवेशरूपः प्रवेशानन्तरस्थितिरूपः सङ्करः इत्यर्थः ।

## रुचिरा

"**आत्युन्नतस्तनयुगा**ऽत्युनतं स्तनयुगं यस्यास्तादृशी । **तरलायताक्षी** तरले चञ्चले आयते दीर्घे अक्षिणी यस्यास्तादृशी । **तदुपयानमहोत्सवाय** तस्य पत्युरुपयानं विदेशतः स्वगृहं प्रति यानं महोत्सवस्तस्मै तं प्रकटयितुमिति भावः । तुमर्थेयं चतुर्थी । **द्वारि** । **स्थिता** । अत एव-**सा** तद्गेहिनी युवतीति यावत् । **अयत्नकृतं** विना यत्नेन सम्पादितम् । **पूर्णकुम्भनवनीरजतोरणस्रक्सम्भारमङ्गलं** पूर्णकुम्भौ च नवनीरजतोरणस्रजौ चेति तास ! सम्भारः

सम्पादनमेव मङ्गलं तत्तथोक्तम्। नवानि नीरजानि कमलानि तेषां तोरणस्रजौ वहिर्द्वारस्य माले। **विधत्ते**। महोत्सवे हि पूर्ण कुम्भद्वयं नीरजादिस्रजश्च बहिर्द्वारिऽलङ्क्रियन्ते, अत्र च द्वारि स्थिताया युवत्या उच्चं स्तनद्वयं तदेव तथाभूतकुम्भवत्, तरले आयते च नेत्रे द्वारस्य भागद्वये माले इवालमक्रियेतामिति भावः। प्रवासादागच्छति पत्यौ तत्पत्न्या द्वारि स्थिताया वर्णनमिदम्। वसन्ततिलकं वृत्तम्॥ २०८॥"

**इत्यत्र**। प्रागुदाहृते पद्य इत्यर्थः। **स्तनौ**। **एव**। **पूर्णकुम्भौ** कलशौ। **दृष्टयः**। **एव**। **नवनीरजस्रजः**। **इति**। **रूपकध्वनिरसध्वन्योः**। **एकाश्रयानुप्रवेशः**। **सङ्करः**। अयम्भावः—स्तनयोर्लोचनयोश्च यथाक्रमं पूर्णकुम्भ-द्वयात्मना तोरणस्रगात्मना च रूपकध्वनिः। तेषामेव नायकरतेरुद्दीपकतया रसश्च शृङ्गारो ध्वन्यमान इत्येवमेत-योरेकत्रैवाश्रितत्वादेकाश्रयानुप्रवेशः सङ्करश्चेति।

'धिन्वन्त्यमूनि मदमूर्च्छदलिध्वनीनि
धूताध्वनीनहृदयानि मधोर्दिनानि
निस्तन्द्रचन्द्रवदनावदनारविन्द-
सौरभ्यसौहृदसगर्वसमीरणानि ॥'

अत्र निस्तन्द्रेत्यादिलक्षणामूलध्वनीनां संसृष्टिः ।

---

## विवृतिः

धिन्वन्तीति । प्रीणय्रन्तीत्यर्थः । अमूनि अनुभूयमानमहोत्वानि । मदेन संमूर्च्छन्तो वर्धमाना अलिध्वनयो यत्र । मधोर्वसन्तस्य. निस्तन्द्रोऽतिप्रकाशमानश्चन्द्र इव वदनं यस्यास्तस्या वदनसौरभ्यस्य सौहृदेन सादृश्येन सगर्वा उत्कृष्टाः समीरमा यत्र तादृशानि । लक्षणामूलध्वनीनामत्यन्ततिरस्कृतवाच्यान् । तथाहि—निस्तन्द्रपदेन तन्द्रारहित उच्यते । चन्द्रे तत्कथनस्यानुपयोगिता प्रकाशमाने लक्षणा । प्रकाशातिशयबोधः प्रयोजनम्. एवं प्रेमवाचकस्य सौहृदपदस्य सादृश्ये लक्षणा । सादृश्यातिशयबोधः प्रयोजनम्. गर्वस्याचेतने वायावसंभवात्सगर्वपदस्योत्कृष्टे लक्षणा। सादृस्यातिसयबोधः प्रयोजनम्। एषु वाच्यार्थस्यार्थान्तरसंक्रमितत्वाबावादत्यन्ततिरस्कृतवाच्यत्वम्. अत्रोक्तत्रिविदसंकरासंभवाद् ध्वनीनां संसृष्टिरेव ॥

## विज्ञप्रिया

ध्वन्योः संसृष्टिमाह—धिन्वन्त्यमूनि इति । अमूनि मधोर्दिनानि धिन्वन्ति लोकान् प्रीणयन्ति । कीदृशानि-मदेन मूर्च्छन् वर्द्धमानः अलिध्वनिर्येषु. तथा निस्तन्द्र उन्निद्रः चन्द्रः तादृशवदनायाः यद् वदनारविन्दं तस्य सौरभ्यं सौगन्ध्यं तस्य सौहृदेन संपर्केण सगर्वाः समीरणा यत्र तादृशानि । अत्रेति चन्द्रस्य निद्राभावात् तन्द्रापदस्याप्रकाशे लक्षणा समीरणस्योत्कृष्टत्वं तद्रव्यङ्ग्यम्, तथा समीरणस्य गर्वाभावात् उत्कृष्टे लक्षणा सुखस्पर्शत्वं तद्रव्यङ्ग्यम् । एषां व्यङ्ग्यानां त्रिविधसंकराभावात् एकपदसंस्थितिरूपा संसृष्टिः । तदाह—निस्तन्द्रेत्यादीति । इदमुपलक्षणम् । अलिध्वनिचन्द्रसमीरणैः कामोद्दीपकैः व्यङ्ग्यस्य श्रृङ्गारस्य अप्यत्र प्रतीतिरित्यतस्तस्य चन्द्रोज्जवलत्वेन समीरणोत्कृष्टत्वेन तस्य सुखस्पेर्शत्वेन च लक्षणामूलव्यङ्ग्ये न प्रकर्षणादनुग्राह्यानुग्राहकभावरूपसंकरोप्यत्रैव सुखस्पर्शत्वेन च लक्षणामूलकव्यङ्ग्ये न प्रकर्षणादनुग्राह्यानुग्राहकभावरूपसंकरोप्यत्रैव श्लोके बोध्यः । संशयास्पदरूपसङ्करश्चात्र नोदाहृत । तदुदाहरणं च काव्यप्रकाशकृता दत्तमन्वेष्टव्यम् । यथा—

खणपाहुमिआ देअर जाआए किं पिदे भणिआ ।
रुअइ पडाहेपिलहीदरम्मि अणुणिज्वउ वाराई ॥" इति ।
क्षणप्रधुणिका देवर जायया किमपि ते भणिता ।
रोदिति पश्चाद् भागवलभीगृहे-अनुनीयतां वराकी ॥ इति संस्कृतम् ।

गृहपतिप्रसक्तामुपनायिकामुत्सवे तद्गृहागतां तत्पत्न्या भर्त्सितां पश्चात् गृहे रुदतीमनुनेतुं गृहपतिज्येष्ठ-भ्रातृपत्न्याः सोपहारोक्तिरियम्. अत्र क्षण उत्सवस्तत्र प्राघुणिका अभ्यागता उत्सवागतेत्यर्थः । तद्देवर सा ते तव जायया किमप्यप्रियं भणिता सती पश्चाद् वलभीगृहे रोदितति । तादृशी वराकी दुःकिता अनुनीयतामित्यर्थः । भवता इति शेषः । अत्र च अनुनयो वाच्यार्थः । तद्व्यङ्ग्यश्च उपभोग इति । अयं किं स्वतः सम्भविवस्तुव्यङ्ग्य-वस्तुध्वनिः किंवा अनुनयपदे उपभोगलक्षणा; तद्व्यङ्ग्य तस्याः दुःखापसारणमित्ययर्थान्तरसंक्रमितवाच्यलक्षणा मूलध्वनिरिति ध्वन्योः संशयास्पदत्वम् । एतादृशव्यङ्ग्योपयोगाय पश्चादगृहमुक्तं निर्जनत्वात् ।

## लोचन

धिन्वतीति—धिन्वन्ति प्राणयन्ति । अध्वनीनां: पथिकाः निस्तन्द्रसौहृदसगर्वशब्दा निर्मलाद्यभावप्रौढरू-पार्थपर्य्यवसानादत्यन्ततिरस्कृतवाच्याः ।

## कुसुमप्रतिमा

पदनतध्वेनसंसृष्टिमुदाहरति धिन्वन्तीति । वसन्तवर्णनमिदम्. नदेन आनन्देन मूर्च्छन्तौ वर्द्धमानाः अलि-ध्वनवीं भ्रमररवा येषु तानि, धूतानि कामावेगजननेन कम्पितानि अच्वनीनां पथिकानां विराहिजनानां हदवानि बैतानि, तथा निस्तन्द्रः प्रकाशमानचन्द्र इव वदनं वासां तासां रमणीनां वदनारविन्दानां सौरभ्येण सौरर्मण वत् सौहृदं सौहार्द्दं सम्पर्कस्तेन समर्थः साभिमानी बहुलसुरभिः सनीरधी वायुर्येषु तानि अमूनि नवोर्कसन्तकालस्य दिनानि धिन्वन्ति जनानायवदन्ति ।

अत्रेति । तन्द्रा नाम प्रमीलाः तस्यास्तु चन्द्रे प्रसक्ते रसम्बवादेव निस्तन्द्रत्वसामसम्भव इति मूख्यार्थ बाधेन जहत्स्वार्थ लक्षणया निस्तन्द्रपदस्य प्रकाशद्योऽर्थः प्रतिपाद्यतेः; प्रकाशातिरेकण प्रयोजनम्, तच्च व्यञ्जनाप्र-तिपाद्यनित्येकोऽत्यन्ततिरस्कृतवाच्यो ध्वनिः; तथा सौहृदगर्वौ प्राविधर्म्मौ, तमोघ वायावसम्भवात् यथाक्रमं सम्पर्के बाहुल्ये च जहत्स्वार्था लक्षणा; प्रयोजनञ्च तदोरष्वतिस्व एव, सोऽपि च व्यञ्जनाप्रतिपाद्य एवेन्यपरावपि अत्यन्त-तिरस्कृतवाची ध्वनौ, इति तत्राधान् अत्यन्ततिरस्कृतवाच्यरूपाणां पदगतानां लक्षलामूलध्वनीनां परस्मरनैरपेक्ष्य-स्थितेः संसृष्टित्यर्थः । न च पूर्व वदवापि कथं न सङ्कर इति दाक्षन्, अङ्गाङ्गित्वाभावात् नैरपेक्ष्यात् पदत्रयगतत्वेन पूर्ववद्देकात्रयस्थितित्वभावात् सन्दिग्धतभावाच्च तन्निविधस्यैव सङ्करस्याप्रसक्तेः ।

## विमला

निस्तन्द्रेत्यादीति ।—निस्तन्द्रः;—निद्रारहित इति मुख्योऽर्थः । इत्यादि इति ।—अत्र आदिपदेन सौर-भादीनां ग्रहणम् । चन्द्रे निस्तन्द्रताया असम्भवात् तदर्थस्य बाधः, तस्मात् लक्षणया निस्तन्द्रशब्दः प्रकाशमानरूपमर्थं बोधयत, प्रकाशातिशयबोधनञ्च तस्य प्रयोजनम्; एवं प्रेमाहङ्कारवाचकौ सौहदगर्वशब्दौ चेतनमात्रधर्मत्वात् प्रकृते असम्भवन्तौ लक्षणया सादृश्यीत्कर्षरूपौ अर्थौ बोधयतः, सादृश्याऽतिशयबोधनमुत्कर्षातिशयबोधनञ्च तत्प्रयो-जनम् । तस्मात् अत्र वाच्यार्थानिमत्यन्ततिरस्कृतत्वात् (वाच्यार्थस्यार्थान्तरसंक्रमितत्वाभावादित्यर्थः) उक्तत्रिविध-सङ्करभावात् अत्यन्ततिरस्कृतवाच्यलक्षणामूलध्वनीनां संसृष्टिरेव सहृदयगम्येति भावः ।

## लक्ष्मी

पदगतध्वनिसंसृष्टिं दर्शयति—धिन्वन्तीति। वसन्तवर्णनेयम्। मदेन हर्षेण मूर्च्छन् वर्द्धमानः अललिध्वनिभ्रमररवो येषु तानि तथोक्तानि, धूतानि मदनावेगकरणेन कम्पितानि अध्वनीनां विरहवतां पथिकानां हृदयानि यैस्तानि तादृशानि, तथा निस्तन्द्रोऽतिप्रकाशमानश्चन्द्र इव वदनं मुखं यासां तासां कामिनीनां वदनारविन्दानां सौरभ्येण सौगन्ध्येन यत् सौहृदं प्रेमसम्पर्कस्तेन सगर्वः साहङ्कारः समीरणः पवनो येषु तानि तथोक्तानि अमूनिमधोर्वसन्तसमयस्य दिनानि धिन्वन्ति लोकान् प्रीणयन्ति। वसन्ततिलकं वृत्तम्।

अत्रेति। लक्षणामूलध्वनीनामात्यन्ततिरस्कृतवाच्यानाम्। तन्द्रा। प्रमीलातस्याश्चन्द्रेऽभावात् मुख्यार्थबाधेन जहत्स्वार्थलक्षणयां निस्तन्द्रपदस्य प्रकाशमानरूपोऽर्थोऽभिधीयते। प्रकाशातिशयबोधः प्रयोजनम्। तच्च व्यञ्जनागम्यमित्येकोऽद्यन्ततिरस्कृतवाच्यो ध्वनिः। एवं सौहृदगतौ चेतनधर्मौ तथोश्च समीरणेऽसम्भवात् यथाक्रमं सादृश्ये उत्कृष्टे च जहत्स्वार्था लक्षणा, सादृश्यातिशयबोधः प्रयोजनम्, सोऽपि च व्यञ्जनागम्य एवेत्यन्यावपि अत्यन्ततिरस्कृतवाच्यौ ध्वनि, इति त्रयाणां पदगतानां लक्षणामूलध्वनीनाम् अन्योन्यनैरपेक्ष्य स्थिते संसृष्टिरित्यर्थः। इदमुपलक्षणम्—अलिध्वनिचन्द्रसमीरणैः कामोद्दीपकैः व्यङ्ग्यस्य श्रृङ्गारस्याऽप्यत्र प्रतीतिरित्यतस्तस्य चन्द्रोज्वलत्वेन समीरणोत्कृष्टत्वेन तस्य सुखस्पर्शत्वेन च लक्षणामूलकव्यङ्ग्येन प्रकर्षणादनुग्राह्यानुग्राहकरूपसङ्करोप्यत्रैव श्लोके बोध्यः, एवं 'त्रिविधसङ्करस्याप्रसक्ते' इत्युक्तिः कथं सङ्गच्छत इति स एव प्रष्टव्यः। सन्देहरूपसङ्कश नोदाहृतः। तदुदाहरणं च काव्यप्रकाशकृता दत्तमित्यन्वेषणीयम्। यथा—

**'क्षणप्राघुणिकदेवरजायया किमपि ते भणिता।**

**रोदित पश्चाद्भागवलभीगृहे अनुनीयतां वराकी॥'**

गृहपतिप्रसक्तामुपनायिकामुत्सवे तद् गृहागतानां तत्पत्न्या भर्त्सितां पश्चाद् गृहे रुदतींमनुनेतुं गृहपतिज्येष्ठभ्रातृपत्न्याः सोपहासोक्तिरियम्।

अत्र चानुनयो वाच्यार्थः। तद्व्यङ्ग्य उपभोग इति। अयं किं स्वतःसम्भविवस्तुध्वनिः, किं वा अनुनयपदे उपभोलक्षणा तद्व्यङ्ग्यस्तस्य दुःखापसरणमित्ययमर्थान्तरसंक्रमितवाच्यलक्षणामूलध्वनिरिति ध्वन्योः संशयास्पदत्वम्। एतादृशव्यङ्ग्योपयोगाय पश्चाद्गृहामुक्तमनिर्जनत्वादिति विज्ञप्रिय दयः।

## रुचिरा

"**अमूनि। मदमूर्च्छदलिध्वनीनि** मदेन मूर्छन्तस्तदुत्कटतां प्रकटयन्तो येऽलयो मधुपास्तेषां ध्वनयो यत्र तथाभूतानि यद्वा-मदेन मूर्च्छन्तो मूर्छां (रागविशेषस्यावस्थाविशेषम्) प्रकटयन्तोऽलिध्वनयो यत्र तानि। अत एव-धूताध्वनीनहृदयानि धूतानि अध्वनीनानां पान्थानां हृदयानि यैस्तादृशानि। **निस्तन्द्रचन्द्रवदनावदनारविन्दसौरभ्यसौहृदसगर्वसमीरणानि** निस्तन्द्र उदितः परिपूर्णमण्डलतया स्वस्वरूपं याथाऽऽत्म्येनवदनावदनारविन्दसौरभ्यसौहृदसगर्वसमीरणानि निस्तन्द्र उदितः परिपूर्णमण्डलतया स्वस्वरूपं याथाऽऽत्म्येन प्रकटयितुमुद्यत इति यावत् यश्चन्द्रस्तद्वद्वदनं मुखं यासां वदनारविन्दानि वदनायन्यरविन्दानीवेति तेषां सौरभ्यं तेन यत्सौहृदं तेन सगर्वः समीरणे यत्र तथाभूतानि। नीचो हिं महद्भिः संसक्तः स्वप्रतिष्ठालाभामांदेन गर्वितो भवतीति सिद्धम्। **मधोर्वस-**

न्तस्य । "मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः । दैत्ये चैत्रे वसन्ते च जीवाशोके मधुद्रुमे ॥" इति विश्वः । **दिनानि** । धिन्वन्ति प्रीणयन्ति । 'लोक' मिति शेषः । वसन्ततिलकं वृत्तम् ॥ २०९ ॥"

**इत्यत्र** प्रागुदाहृते पद्ये इत्यर्थः । **निस्तन्द्रेत्यादिलक्षणामूलध्वनीनां** निस्तन्द्रेत्यादिषु या लक्षणा सा मूलं येषां तादृशा ये ध्वनयस्तेषां तथोक्तानाम् । **संसृष्टिः** । अयम्भावः—'तन्द्रा निद्राप्रमीलयोः' इत्यमरोक्त्या तन्द्रा निद्राऽक्षिप्रमीलनावस्था वा, सा निर्गताऽस्येति निस्तन्द्रः, इत्येवं निस्तन्द्रपदेन निद्राततपूर्वापरावस्थाऽन्यतररहित उच्यते, चन्द्रे च तत्त्वस्यानुपयोगितया प्रकाशमानत्वाभावाभावोऽर्थो लक्ष्यते तदतिशयश्च प्रयोजनम् । एवम्-सौहृदपदेन प्रेमोच्यते, तत्सादृश्यं च लक्ष्यते तदतिशयश्च प्रबोध्यमानः प्रयोजनम्, तथा—गर्वपदेनाभिमानः प्रोच्यते, तस्य च समीरणेऽसम्भवादुत्कर्षो लक्ष्यते तदतिशयबोधनं च फलम् । तदिति लक्ष्यमाणेष्वर्थेषु वाच्यार्थस्यार्थान्तरसङ्क्रमिततदत्यन्ततिरस्कृतवाच्यत्वम् । एतेषां च त्रिविधेषु सङ्करेष्वनन्तर्भावात् संसृष्टिरिति ।

अथ गुणीभूतव्यङ्ग्यम्—

**अपरं तु गुणीभूतव्यङ्ग्यं वाच्यादनुत्तमे व्यङ्ग्ये.**

**अपरं काव्यम्। अनुत्तमत्वं न्यूनतया साम्येन च संभवति.**

**तत्र स्यादितराङ्गं काक्वाक्षिप्तं च वाच्यसिद्ध्यङ्गम्॥ १३॥**

**संदिग्धप्राधान्यं तुल्यप्राधान्यमस्फुटमगूढम्।**

**व्यङ्ग्यमसुन्दरमेवं भेदास्तस्योदिता अष्टौ॥ १४॥**

---

## विवृतिः

ध्वनिं निरूप्य गुणीभूतव्यङ्ग्यं निरूपयति—अथेति। अपरं ध्वनिभिन्नम्। तत्र गुणीभूतव्यङ्ग्ये। इतरस्य रसादेर्वा वाक्यार्थस्य वा अङ्गम्। रसादि अनुरणनरूपं वा व्यङ्ग्यमित्यन्वयः। एवमन्यत्रापि। काक्वाक्षिप्तं काकुवशात् झटिति वाच्यप्रतीयमानम्, वाच्यस्यान्वयबोधबीजं वाच्यसिद्ध्यंगम्, आपाततः प्रतीतस्य वाच्यस्य प्रतिसंधानानुपपत्तिनिरासकम्।

अस्फुटं सहृदयैरपि झटित्यप्रतीयमानम्। अगूढं स्फुटम्, तथा वाच्यायमानम्। असुन्दरं चमत्काराप्रत्यासन्नम्। एवं निरुक्तव्यङ्ग्यभेदेन तस्य गुणीभूतव्यङ्ग्यस्य रसाङ्गं रसरूपव्यङ्ग्यम्।

## विवृतिपूर्तिः

गुणीभूतेति। वाच्यापेक्षया अचमत्कारित्वेनेह व्यङ्ग्यस्य गुणीभावः। ध्वनिकारेणाप्यभिहितम्—'प्रकारोऽन्यो गुणीभावः। ध्वनिकारेणाप्यभिहितम्—'प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते। यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात्प्रकर्षवत्॥' इति 'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्। यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥' इत्युक्तरूपो व्यङ्ग्यार्थो यः प्रतिपादितस्य प्राधान्ये ध्वनिरित्याम्नातम्। तस्यैव गुणीभावेन वाच्यार्थचारुत्वप्रकर्षे गुणीभूतव्यङ्ग्यो नामापरः काव्यभेद इति तदाशयः॥

काक्वेति। काका हठेनोपस्तापितमिति वा॥

संदिग्धेति। संदिग्दं वाच्यकृतं व्यङ्ग्यकृतं वेत्यनिश्चितं प्राधान्यं यस्य यत्र वा तत्। यद्वा संदिग्धं चमत्कृतिजनने वाच्यव्यङ्ग्ययोः संशयास्पदं प्राधान्यं यत्र तत्॥

तुल्येति। तुल्यं वाच्यसमानं प्राधान्यं यत्र तत्। चमत्कारोत्पादने वाच्यव्यङ्ग्ययोरपि क्षमत्वेन तुल्यत्वमवधेयम्॥

अगूढमिति। अगूढं चासहृदयैरपि वेद्यम्। तादृशं वाच्यायमानतया न तथा चमत्करोति यथा कामिनीकुचकलशवद्गूढम्। तदुक्तम्—'नान्ध्रीपयोधर इवातितरां प्रकासे नो गुर्जरीस्तन इवातितरां निगूढः। अर्थो गिरामपिहितः पिहितस्च कश्चित्सौभाग्यमेति मरहट्टवदूकचाबः॥' इति। एवं च कामिनीकुचकलशन्यायेन सहृ-

दयैकैद्यमेव व्यङ्ग्यं ध्वनित्वमुपयाति। सहृदयैरपि दुःकसंवेद्यमसहृदयैरपि वेद्यं वेत्युबयमपि गुणीभूतव्यङ्ग्यमेवेति बोध्यम्। एवमन्येष्वपि भेदेष्वनुभव एव साक्षीति प्रदीपादौ व्यक्तम्॥

प्रासादेति। प्रासादपारम्परीषु॥

## विज्ञप्रिया

गुणीभूतव्यङ्ग्यकाव्यमाह—अथेति। काव्यमनुत्तमत्वमिति। व्यङ्ग्यानुत्तमत्वेन काव्याऽनुत्तमत्वम्। भेदास्तस्योदिता इति—तस्य गुणीभूतव्यङ्ग्यकाव्य एवमष्टविधव्यङ्ग्यभेदात् तस्याऽष्टौ भेदा उदिता इत्यर्थः।

## लोचन

एवं ध्वन्याख्यं काव्यस्य भेदं निरूप्य गुणीभूतव्यङ्ग्यमवतारयति अथेति—तत्र स्यादिति—काक्का आक्षिप्तं वाच्यवत् स्फुटीकृतम्। वाच्यसिद्धेरङ्गंकारणम्। अस्फुटं सहृदयानामपि क्लेशप्रत्येयम्। एवं पूर्वव्यङ्ग्याद्भेदः। असुन्दरं वाच्यापकृष्टचमत्कारकम्। व्यङ्ग्यमिति प्रतिपदमन्वयः। भेदाः विशेषाः।

## कुसुमप्रतिमा

अपरमिति। व्यङ्ग्ये अर्थे वाच्यादर्थात् अनुत्तमे तत्समाने ततो निकृष्टे वा संत, अपरं ध्वनिभिन्नं काव्यं गुणीभूतव्यङ्ग्यं तत्संज्ञकं स्यात्।

सम्भवतीति. अनुत्तमस्य उत्तमेतररूपत्वादिति भावः।

तत् गुणीभूतव्यङ्ग्यं नामतः प्रकारतश्च विभजते तत्रेति। तत्र गुणीभूतव्यङ्ग्ये व्यङ्ग्यं वस्तु, इतरस्य रसभावादेरङ्गं परिपोषकम्, काक्का विकृतकण्ठध्वनिविशेषेण आक्षिप्तं वाच्यार्थेन सहैव प्रतीतमं, वाच्यसिद्धेर्मुख्यार्थनिष्पत्तेरङ्गं सम्पादकम्, सन्दिग्धं प्राधान्यं यस्य तत् वाच्यार्थस्य व्यङ्ग्यार्थ वा प्राधान्यमिति संभवविषयीभूतमित्यर्थः तुल्यं वाच्यार्थ समानतया निश्चितं प्राधान्यं यस्य तत् तुल्यप्राधान्वय, अस्फुटम् अस्पष्टं निपुणबुद्धिभिरध्वनिनिर्विघ्न ज्ञायमानम्, अगूढम् अगुप्तं स्थूलबुद्धिभिरपि सहसेव ज्ञायमानाम्, असुन्दरम् अघनल्तारि च स्यात्; एवमित्वं तस्य गुणीभूतव्यङ्ग्यस्य अष्टौ भेदा उदिता उक्ताः तथा च इतराङ्गम्, काक्वाचिन्हम्, वाच्यसिद्धङ्गम्, सन्दिग्धबाधान्यम्, तुल्यप्राधान्यम्, अस्फुटम्, अगूढम्, असुन्दर चेत्यष्टौ नानावध्यवीयां ज्ञेयानि।

## विमला

ध्वनिं निरूप्य गुणीभूतव्यङ्ग्यं निरूपयति, अथेति।—अपरमिति।—अपरं—द्वितीयप्रकारं, ध्वनिभिन्नं काव्यमित्यर्थः, तु—पुनः, वाच्यात्—वाच्यार्थपेक्षया, अनुत्तमे—निकृष्टे, व्यङ्ग्ये—व्यञ्जनया बोध्येऽर्थे सति, गुणीभूतव्यङ्ग्यं—गुणीभूतं व्यङ्ग्यं यत्र तादृशं ज्ञेयमिति शेषः, वाच्यस्यापेक्षया चमत्कारानुत्कर्षे व्यङ्ग्यस्य गुणीभावः सम्प्रदायसिद्धः। यथोक्तं ध्वनिकृता,—"प्रकारोऽथो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते। यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात् प्रकर्षयत्॥" इति, "प्रतीयमानं पुनरन्यदेव वस्तस्ति वाणीषु महाकवीनाम्। यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनानाम्॥"इति।

अस्य भेदानाह, तत्रेति।—तत्र—गुणीभूतव्यङ्ग्ये काव्ये, व्यङ्ग्य—व्यञ्जनया बोध्योऽर्थः, इतराङ्गम्—इतरस्य—रसादेः, वाक्यार्थस्य इति सारः, अङ्गं—पोषकमित्यर्थः, काका—काकुः—ध्वनिविकारविशेषः, तया,

आक्षिप्तम्—आहृतं, झटिति वाच्यवत् प्रतीयमानमित्यर्थः, च—तथा, वाच्यसिद्ध्यङ्गं—वाच्यस्य—मुख्यार्थस्य सिद्धेः अकं—साधकं, वाच्यस्यान्वयबोधबीजमित्यर्थः, आपाततः प्रतीतस्य वाच्यस्य प्रतिसन्धानानुपपत्तिबाधकमिति भावः, सन्दिग्धप्राधान्यं—सन्दिग्धं—संशयितं, वाच्यकृते व्यङ्ग्यकृतं वैत्यनिश्चितमिति, सन्दिग्धप्राधान्यं—सन्दिग्धं—संशयितं, वाच्यकृत व्यङ्ग्यकृतं दैत्यनिश्चितमिति यावत्, प्राधान्यं—प्रधानभावः, यस्य यत्र वा तादृशम्, अथवा सन्दिग्धं चमत्कारोत्पत्तौ सन्देहाश्रयं प्रधान्यं यत्र तथाभूतमित्यर्थः, तुल्यप्रधान्यं—समानप्रधानभावम्, अस्फुटं—सहृदयैरपि झटित्यबोध्यमित्यथः, अगूढ़—स्फुटतया वाच्यवत् प्रतीयमानम् [अगूढमरसिकैरपि सहसाऽवधार्य्यम्, तत् हि वाच्यवत् प्रतीयमानत्वेन न तथा चमत्कारकं भवति; व्यङ्ग्यं हि कामिनीकुचकलशवत् नातिगूढं, न वाऽगूढं सहृदयान् आमीदयति; अत एवोक्तं,—"नाऽऽन्ध्रीपयोधर इवातितरा प्रकाशो नो गुर्ज्जरीस्तन इवातितरां निगूढः । अर्थो गिरामपिहितः पिहितश्च कश्चित् सौभाग्यमेति मरहट्टवधूकुचाभः ॥" इति । अयं भावः,—कामिनीकुचकलशन्यायेन रसिकैरपि दुर्बोध्यम्, अरसिकैरपि सुबोध्यं वा गुणीभूतव्यङ्ग्यमेवेति; एवं भेदान्तरेष्वपि अनुभवसाक्षिकत्व ग्रन्थान्तरादौ द्रष्टव्यम्] असुन्दरं—चमत्कारिताशून्यम् । एवं— निर्दिष्टरीत्यां इत्यर्थः, तस्य—गुणीभूतव्यङ्ग्यस्य काव्यस्य, अष्टौ भेदाः, उदिताः,—कथिताः । उक्तञ्च वृत्तिवार्त्तिकेऽप्ययदीक्षितैः,—"व्यङ्ग्य यदि वाच्याङ्ग्यत्वं वा काक्वा च नेयता । वाच्यसिद्ध्यङ्ता वाऽपि सन्दिग्धमुख्यताऽथवा ॥ वाच्यतुल्यप्रधानत्वसत्त्वं विस्फुटताऽपि वा । अस्फुटत्वमचारुत्वं तत् स्यादष्टविधं परम् ॥" इति ।

## लक्ष्मी

एवं ध्वन्याख्यं काव्यस्य भेदं निरूप्य गुणीभूतव्यङ्ग्यमवतारयति—अथेति ।

अपरमिति । तु भिन्नक्रमः । व्यङ्ग्ये व्यङ्ग्यार्थे वाच्याद‍र्थादनुत्तमे वाच्यापेक्षयातिशयितचमत्कारानाधायके इत्यर्थः । ततो न्यूने वा सति अपरं ध्वनिभिन्नं काव्यं गुणीभूतव्यङ्ग्यं तन्नामकं स्यात् । ध्वनिकृताऽप्युक्तम्—

**'प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते ।**
**यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात्प्रकर्षवत् ॥'**
**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।**
**यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनाम् ॥' इति ।**

इत्युक्तरूपो यः प्रतिपादितस्तस्य प्राधान्ये ध्वनिरित्यास्नातम् । तस्यैव गुणीभावेन वाच्यार्थचारुत्वप्रकर्षे गुणीभूतव्यङ्ग्यो नामान्यः काव्यभेद इति तदभिप्रायः ।

अनुत्तमत्वमिति । व्यङ्ग्यानुत्तमत्वेन काव्यानुत्तमत्वमित्यर्थः ।

तद्रगुणीभूतव्यङ्ग्यं नामतो भेदतश्च विभज्य दर्शयति—तत्रेति । तत्र गुणीभूतव्यङ्ग्ये व्यङ्ग्यं वस्तु इतरस्य रसादेर्वा वाक्यार्थीभूतस्य वाक्यतात्पर्यविषयतया प्रधानस्य वा अङ्गम् उपकारकम् उत्कर्षमिति यावत् । काकुर्ध्वनेर्विकारः तथा आक्षिप्तं झटिति प्रकाशितं यथा यथा काक्का विना वाक्यार्थ एव नात्मानं लभते तथा प्रकाश्यमित्येर्थः । काक्का हठेनोपस्थापितमिति वा अत एव मुख्यार्थबाधाद्यनुसन्धानविलम्बाभावान्न लक्षणावसर इति भावः । वाच्यसिद्ध्यङ्गं वाच्यस्य वाच्यार्थस्य (कुतोऽपि वैगुण्यात् अविश्रान्तस्य) सिद्धिः विश्रान्तिः तत्र अङ्गं निदानम् वाच्यस्यान्वयबोधबीजमेतद्दिति बोध्यम् । सन्दिग्धप्राधान्यं नाम सन्दिग्धं वाच्यकृतं व्यङ्ग्यकृतं वेत्यनि-

श्रिचतं प्राधान्यं यत्र तत्, वाच्यकृतो व्यङ्ग्यकृतो वा चमत्कार इति सन्देहः। तुल्यप्रधान्यन्तु तुल्यमर्थाद्वाच्येन समानं प्राधान्यं यत्र तत्, चमत्कारजनने वाच्यव्यङ्ग्ययोर्द्वयोरपि समर्थत्वेन समानता बोध्या। अस्फुटं सहृदयानामपि दुःखसंवेद्यं सहृदयैरपि झटित्यसंवेद्यमिति यावत्। अगूढं चासहृदयैरपि झटिति संवेद्यं तादृशं वाच्यायमानतया न तथा चमत्करोति। यथा—

**'नान्ध्रीपयोधर इवातितरां प्रकाशो न गुर्जरीस्तन इवातितरां निगूढः।**

**अर्थो गिरामपिहितः पिहितश्च कश्चित् सौभाग्यमेति मरहट्‌वधूकुचाभः॥'**

**अपि च—अनुघृष्टः शब्दैरथ च रचनातः स्फुटरसः**

**पदानामर्थात्मा जनयति कवीनां बहु मुदम्।**

**यथा किञ्चित्किञ्चित्पवनचलचोलाञ्चलनया**

**कुचद्वन्द्वं कान्तिं किरति न तयोद्घाटितमुरः॥**

एवं च 'कामिनीकुचकलशन्यायेन' सहृदयैकसंवेद्यमेव व्यङ्ग्यं ध्वनित्वमुपयाति। सहृदयैरपि दुःखसंवेद्यं सहृदयैरपि वेद्यं वेत्युभयमपि गुणीभूतव्यङ्ग्यमेवेति बोध्यम्। एवमन्येष्वपि भेदेष्वनुभव एव साक्षीति प्रदीपादौ स्पष्टम्। असुन्दरं चमत्कारजनने वाच्यमुखनिरीक्षकम्, यद्वा स्वभावादेव वाच्यापेक्षया चारु। एवमित्थं तस्य गुणीभूतव्यङ्ग्यस्य अष्टौ भेदा उदिताः कथिताः। तथा च—१ इतराङ्गम्, २ काक्वाक्षिप्तम्, ३ वाच्यसिद्ध्यङ्गम् ४ सन्दिग्धप्राधान्यम् ५ तुल्यप्राधान्यम्, ६ अस्फुटम्, ७ अगूढम्, ८ असुन्दरञ्चेत्यष्टौ नामान्यप्येतेषां बोध्यानि। अत्र गणनादेवाष्टत्वे लब्धेऽष्टाविति न्यूनाधिकव्युदासाय। तेनाप्रधानं सन्दिग्धतुल्यप्राधान्यञ्चेति गुणीभूतव्यङ्ग्यं त्रिविधमित्युक्तिरपास्ता उपाधिवैलक्षण्यस्य निह्नोतुमशक्यत्वात्।

## रुचिरा

एवं ध्वनिं निरूप्य गुणीभूतव्यङ्ग्यं निरूपयितुमाह—**अथेत्यादि**।

**अथ**। गुणीभूतव्यङ्ग्यम् 'लक्ष्यते' इति शेषः। २९६ **अपरं त्वित्यादिना**।

२९६ **वाच्यात्** अभिधाप्रतिपाद्यदर्थात् तदपेक्षयेति यावत्। **व्यङ्ग्ये** व्यञ्जना बोध्येऽर्थे। **अनुत्तमे**ऽनुत्कृष्टे सतीत्यर्थः। **अपरं** भिन्नं काव्यम् 'ध्वनिकाव्या' दिति शेषः। **तु**। **गुणीभूतव्यङ्ग्यं** गुणीभूतमप्रधानभूतचमत्कारं व्यङ्ग्यं व्यञ्जनया बोध्यं यत्र तादृशम्। 'भवती'ति शेषः।

कारिकां सुगमयति—**अपरमित्यादिना**। स्पष्टम्। तत्राद्यं यथा—"ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्। पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया॥" इत्यत्र मुखच्छायाया मालिन्यातिशयप्रतिपादको वाच्योऽर्थः तदपेक्षया 'वञ्जुलगृहे दत्तसङ्केताऽपि गता तरुणी'ति व्यङ्ग्यं न्यूनचमत्कारम्। द्वितीयं यथा—"ब्राह्मणातिक्रमत्याग" इत्याद्युदाहरिष्यत्येव।

अस्य पुनर्भेदानन्यानाह—२९७ **तत्रेत्यादिना**।

२९७ **तत्र** तस्मिन् गुणीभूतव्यङ्ग्यकाव्य इत्यर्थः। **व्यङ्ग्यम्**। **इतराङ्गम्**इतरस्य रसादेर्वाक्यार्थस्य वाऽङ्गमङ्गभूतम्। **काक्वाक्षिप्तं** काक्वाऽऽक्षिप्तमाक्षेपेण सिद्धमिति तथोक्तम्। **च** तथा। **वाच्यसिद्ध्यङ्गं** वाच्यस्याभिधाप्रतिपाद्यस्यार्थस्य (कुतोऽपि वैगुण्यादसिद्धस्य) सिद्धिः सिद्धतया सम्पत्तिस्तस्या अङ्गम्। आपाततः

प्रतीतस्य वाच्यार्थस्य प्रतिसन्धानानानुपपत्तिनिवर्त्तकमिति भावः। **सन्दिग्धप्राधान्यं** सन्दिग्धं (वाच्यव्यङ्ग्ययोः) सन्देहास्पदं प्राधान्यं यत्र तादृशम्। **तुल्यप्राधान्यं** तुल्यं (वाच्यस्य) समकक्षं प्राधान्यं (व्यङ्ग्यस्य) चमत्कारोल्लासो यत्र तथोक्तम्। वाच्यस्य चमत्कारेण समकक्षो यस्य चमत्कारस्तथाभूतमित्यर्थः। **अस्फुटं** न स्फुटं सहृदयैरपि झटित्यवगन्तुं शक्यमिति तथोक्तम्। **अगूढं** न गूढं सहृदयेतरैरपि झटिति बोध्यम्। **एवम्। असुन्दरं** चमत्कारव्यपदेशानर्हम्। **स्यात्।** तस्मात् **तस्य** गुणीभूतव्यङ्ग्यस्य। **अष्टौ। भेदाः। उदिताः** कथिताः। अयम्भावः—गुणीभूतव्यङ्ग्यं हि काव्यं व्यङ्ग्यस्य इतराङ्गत्वाष्टविधत्वेनेतराङ्गाद्यष्टविधम्। इति ॥ २९१ ॥ २९२ ॥

क्रमादुदाहर्त्तुकाम आह—**इतरस्येत्यादि**।

**इतरस्य रसादेरङ्गं रसादि व्यङ्ग्यम्।**

यथा—

**'अयं स रसनोत्कर्षी पीनस्तनविमर्दनः।**

**नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥'**

अत्र श्रृङ्गारः करुणस्याङ्गम्।

---

## विवृतिः

उदाहरति—अयमिति। भूरिश्रवसः समरपतितं हस्तं विलोक्य तत्पक्ष्या रोदनमिदम्। अयमीदृगवस्थः स तत्तत्कर्ममि मुहुरनुभूतः। तत्तत्कर्माह—रसनेति। रसनां मम क्षुद्रघण्टिकामुत्कर्षयितुं मार्जनादिना उत्कृष्टीकर्तुमाक्रष्टुं वा शीलमस्य सः। नीव्या वस्त्रबन्धस्य विस्रंसनो मोक्षणकरः। अत्रालम्बनविच्छेदेन रतेरसाश्रयतया स्मर्यमाणानां तदङ्गानां शोकोद्दीपकत्वात्करुणानुकूलतेति श्रृङ्गारस्य करुणाङ्गत्वम्। अत एव प्राकरणिकत्वेन प्रधानस्य करुणस्य व्यञ्जकं वाक्यार्थमपेक्ष्य तदानीमप्राप्तरसभावस्य श्रृङ्गारस्य न्यूनत्वमचमत्कारित्वम्। ननु तदानीं श्रृङ्गारस्य रसत्वाप्राप्त्या कथमस्य रसाङ्गारसोदाहरणत्वं संगच्छतामिति चेत्, न। तदानीं श्रृङ्गाररसस्य पूर्णरसत्वाभावेऽपि खण्डरसत्वस्य सत्त्वात्। तच्च दोषपरिच्छेदे निर्णेष्यते। श्रृङ्गारस्य करुणविरुद्धत्वेऽपि स्मृतिविषयत्वेन गुणत्वमेव, न तु दोषत्वम्॥

## विज्ञप्रिया

रसादेरङ्गं रसादि इत्युभयत्र आदिपदात् भावाद्यङ्गताऽपि रसादेः, एवं वाच्याङ्गत्वमपि वस्त्वलङ्कारयोरित्युक्तम्। अयं स इति—भूरिश्रवसः समरपतितं हस्तमादाय रुदत्यास्तत्पत्न्या उक्तिरियम्। अत्रेति—रसोत्कर्षणादिना व्यङ्ग्यः श्रृङ्गारः मृतालम्बनकत्वेन रसतामनापन्नो मृतालम्बनकस्य करुणस्याङ्गम्। रसतापन्नस्य तस्य श्रृङ्गारेण प्रकर्षणात् पूर्वानुभूतसुखस्मरणे हि करुणप्रकर्षः।

## लोचन

यथोद्देशमुदाजिहीर्षुरितराङ्गमिति विवृणेति, इतरस्यार्थात् प्रधानभूतस्य रसादेः, रसशब्देनात्र भावादीनामुपग्रहः आदिशब्देन वाच्यस्याङ्गम् उत्कर्षकारिरसादि अत्रादिशब्दादनुरणरूपम्। अयं स इति—इदं हि महाभारते, समरच्छिन्नं भूरिश्रवसो हस्तमादाय तत्कान्ताया विलपनम्।

## कुसुमप्रतिमा

इतस्येति। उक्तत्वादिशब्देन भावादीनां ग्रहमम्। रसादिरूपं व्यङ्ग्यं रसादिव्यङ्ग्यम्।

अवनिति। महाभारते स्त्रीक्वर्णि चतुर्विंशाध्याये समराङ्गने धृश्च भूरिचण्डी पतितं तङ्गर्प्यावा उक्तिरियम्। अयं दृष्टवानः, च पूर्वानुभूतः, रसनोत्कर्षी रननाथ कटिदेशात् काचीदा नीत्हारचकारी, पीनौ स्थूलौ स्तनौ नदीवकुचौ विमर्द्दर्षतीति सः, नामिन् ऊरु वचनस्य अष्टु नीलमस्येति सः, तथा नीवीं कटिक्खबन्धं विचंख्यतिस्तलप्रतीति सः तथोक्तः करो हस्तः।

अत्रेति । अत्रालम्बनस्य भूरिस्रवसो मृतत्वेन रत्यादीनां केवलं अर्ण्यनाहतया पूर्णशृङ्गारत्वाभावेऽपि खण्डरसतया व्यपदेश्यः शृङ्गारः; करुणस्तु प्राकरणिकतयां शोकस्य प्रधानत्वात् पूर्ण एव । अतएव शृङ्गारी विशेषेण शोकमुद्दीप्य करुणं पुष्णातीति करुणस्याङ्गमित्याशय । अत्र विरुद्धयोरपि शृङ्गारकरुणयीकिवसमावेशस्य समाधानं खण्डरसप्रकारश्च सप्तमपरिच्छेदे वक्ष्यते ।

## विमला

इतरस्य रसादेः इति ।—अत्रादिपदेन भावादीनां ग्रहणम् ।

इतराङ्गमुदाहरति, अयमिति ।—भूरिश्रवसः समरक्षेत्रपतितं छिन्नं हस्तं दृष्ट्वा तत्पत्रयाः शोकात्ताया वचनमिदम् । रसनोत्कर्षी—रसनां—काञ्ची, ["स्त्रीकण्यां मेखला काश्री सप्तकौ रसना तथा" इत्यमरः] मज्जधनस्थितामिति भावः, उत्कर्षयति—आक्षिपतीति तथोक्तः, अथवा ताम उत्कर्षयितुं मार्जनादिना उत्कृष्टीकर्त्तुमाक्रष्टुं वा शीलमभ्य तथोक्तः; पीनस्तनविमर्दनः;—पीनौ स्तनौ विमर्दतीति तथोक्तः, नाभ्युरुजघनस्पर्शी—नाभिम् उरु जघनञ्च स्पृशतौति तादृशः, सुरताभिलाषोद्बोधनार्थं नाभ्यादिस्पर्शशील इत्यर्थः, तथा नीवीविस्रंसनः;—नौवीं—(मम) कटिदेशस्थवसनग्रन्थि ["स्त्रीकटीवस्त्रबन्धेऽपि नीवौ" इत्यमरः] विससमयति—श्लघयति इति तथोक्तः, मदीयकटिवसनग्रन्थिमोक्षणकर इति यावत्, सः;—तत्तत्कर्मणि मुहुरनुभूतः इति धावत्, करः;—हस्तः, अयम्—इदानीम ईदृगवस्थः । महाभारतस्येदं पद्यम् ।

अत्रेति ।—शृङ्गारः, आलम्बनविच्छेदेन रतैरपरिपुष्टतया रसतामनापद्यमानत्वे स्मर्य्यमाणानां तदङ्गानां शोकोद्दीपकतयेति शेषः, करुणस्य—अङ्गं—पोषकभूतः । एवं श्रृङ्गारः करुणाङ्गं; करुणाञ्च श्रृङ्गाराङ्गी, अत एव प्राकरणिकत्वेन प्रधानस्य करुणस्य व्यञ्जकवाक्यार्थमपेक्ष्य तदानीमप्राप्तरमभावस्य न्यूनत्वम् (अक्षमत्कारित्वम्) । ननु तदानीं श्रृङ्गारस्य रसत्वाप्राप्त्या कथमस्य रसाङ्गरसोदाहरणत्वं सङ्गच्छतामिति चेत् ? न; तदानीं श्रृङ्गाररसस्य पूर्णरसत्वाभावेऽपि खण्ड रसत्वमत्त्येवेति परत्र (दोषपरिच्छेदे) निर्णेष्यते । ध्वनिकारास्तु अत्र करुणमेव श्रृङ्गाराङ्गमाचक्षते, तदानीं तद्दर्शनादिना करुणस्यीद्भूततया श्रृङ्गारस्य च रसनोत्कर्षित्वादिना उद्भूयमानस्यापि तदपेक्षया अनुद्भूत इति दिक् ।

## लक्ष्मी

यथोदेशमुदाजिहीर्षुपरिताङ्गमितिं विवृणोति—इतरस्येति । इतरस्य प्रधानभूतस्य रसादेः, रसशब्देन रस्यत आस्वाद्यत इति व्युत्पत्त्या भावरसाभासभावाभासभावशान्ति भावोदयभावसन्धिभावशबलतारूपस्यासंलक्ष्यक्रमस्य ग्रहणम्, आदिशब्देन वाच्यस्य वाच्यार्थस्य लक्ष्यक्रमस्य च ग्रहणम्, अङ्गमुपकारकम् उत्कर्षकारीति यावत् । रसादि असंलक्ष्यक्रमरूपमित्यर्थः । निष्पन्नरसभावस्याङ्गत्वाभावाद्रसपदमत्र स्थायिभावपरम् । आदिशब्दादनुरणरूपं संलक्ष्यक्रममित्यर्थः । एवञ्चासंलक्ष्यक्रमम् अनुस्वानमसंलक्ष्यक्रमं चेति द्विविधमितराङ्गव्यङ्ग्यमित्याशयः । अत्र रसभावादिप्रधानानां मध्ये रसभाववाच्यरूपस्य त्रिविधस्यैव प्रधानस्य मूलकृता उदाहरणानि प्रदर्शितानि रसाभासाद्यसंलक्ष्यक्रमरूपस्य संलक्ष्यक्रमरूपस्य च प्रधानस्योदाहरणानि तु शेमुषीभिः स्वयमूह्यानि ।

रसस्य रसाङ्गतायामपराङ्गव्यङ्ग्यं मध्यमकाव्यमुदाहरति—अयं स इति । महाभारते स्त्रीपर्वणि चतुर्विंशेऽध्याये समरच्छिन्नं भूरिश्रवसो हस्तमादाय तत्कान्ताया विलपनमिदम् । अयं दृश्यमानदुखस्थः, पूर्वानुभूतरसनोत्कर्षणादि तत्तच्छृङ्गारवस्तु, उत्कर्षतीत्युत्कर्षी 'सुप्यजातौ णिनिस्ताच्छील्ये' ३/२/७८ इति पाणिनिसूत्रेण

ताच्छील्ये णिनिप्रत्ययः। रशनाया उत्कर्षी रमणाय कटिदेशात् काञ्चीदासोत्सारणकारी। तथा पीनौ पुष्टौ स्तनौ मदीयकुचौ विमर्दयति यः स तथोक्तः। नाभिश्च ऊरू च जघनं चैतानि स्पर्ष्टुं शीलमस्य। जघनं कटिपुरोभागः। 'जघनं स्यात् स्त्रियाः श्रोणि पुरोभागे कटावपि' इति मेदिनी। नीव्याः नाभितलवसनग्रन्थेः विस्रंसनः मोचक इत्यर्थः, एवम्भूतः करो हस्तः दृश्यमानदुःखस्थो वर्त्तत इति शेषः।

अत्र किं कस्याङ्गमिति जिज्ञासायामाह—अत्रेति। अत्र रसनोत्कर्षणादिना व्यङ्ग्यः शृङ्गारः आलम्बनस्य भूरिश्रवसो मृतत्वेन रसतामनापन्नो मृतालम्बनकस्य करुणस्याङ्गम्, रसतापन्नस्य तस्य शृङ्गारेण प्रकर्षणात् पूर्वानुभूतसुखस्मरमे हि करुणप्रकर्षः, एवञ्च शृङ्गारो विशेषेण शोकमुद्दीप्य करुणं पुष्णातीति भवति तस्याङ्गमिति भावः। न च तदानीं शृङ्गारस्य रसत्वाऽप्राप्त्या कथमस्य रसाङ्गरसोदाहरणत्वं सेत्स्यतीति वाच्यम्, तदानीं शृङ्गाररसस्य पूर्णरसत्वाऽभावेऽपि खम्डरसस्य विद्यमानत्वात्। शृङ्गारस्य करुणविरुद्धत्वेऽपि स्मृतिविषयत्वेन गुणत्वमेव न तु दोषत्वम्, अनयोः समावेशस्य समाधानं खण्डरसत्वं चापि दोषपरिच्छेदे निर्णेष्यते। अत्र करुणमादाय काव्यस्य ध्वनित्वम्, शृङ्गारस्थायिनमादगाय गुणीभूतव्यङ्ग्यत्वं बोध्यम्। शोकावेशादेव शृङ्गारोऽपुष्टः। ननु रसध्वनौ भावध्वनिरवश्यं वाच्या तथा च कञ्चन प्रधानव्यङ्ग्यमादाय ध्वनित्वं कञ्चनाङ्गभूतमादाय गुणीभूतव्यङ्ग्यत्वमिति निमित्तद्वयसमावेशद्विनिगमनाविरहे कथं व्यपदेशनियम इति चेत्? सत्यम्, 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेन भवति तथात्वम्, तथाहि यत्र यन्मुखेन चमत्कारस्तत्र तेनैव व्यवहारः प्राधान्यं च चमत्कारप्रयोजकत्वम्, तथा चाङ्गीभूतरसादीनां चमत्कृत्यतिशये गुणीभूतव्यङ्ग्यत्वम् अङ्गिनस्तथात्वे ध्वनित्वमिति भावः। एवञ्च प्रकृते करुणध्वनावपि गुणीभूतव्यङ्ग्यशृङ्गारेणैव चमत्कार इति तेनैव व्यवहारो न तु ध्वनित्वेनेति सहृदयहृदयप्रमाणम्।

## रुचिरा

**इतरस्य** स्वस्माद् भिन्नस्य। **रसादेः अङ्गम्** अङ्गभूतमित्यर्थः। **रसादिव्यङ्ग्यम्**। तद्रूपमितराङ्गं नाम गुणीभूतव्यङ्ग्यं काव्यमित्यर्थः। **यथा**—

"**स** प्रागनुभूतनाभ्यूरुजघनोत्कर्षणादिततच्छृङ्गारावस्थः। **अयं** दृश्यमानदुरवस्थः। **रसनोत्कर्षी** रसनायाः काञ्च्या उत्कर्षी आकर्षक इति तथोक्तः। उत्कर्षतीत्याकर्षतीत्युत्कर्षी। 'सुप्यजातौ णिनिस्ताच्छील्ये' ३/२/७८ इति णिनिः। **पीनस्तनविमर्दनः** पीप्नौ पुष्टौ यौ स्तनौ तयोर्विमर्दनो विमर्दकः। **नाभ्यूरुजघनस्पर्शी** नाभिश्चोरू च जघनं च तानि स्पृशतीति तथोक्तः। **नीवीविस्रंसनो** नीव्या नाभितलगतवसनग्रन्थेर्विस्रंसन उन्मोचकः। 'नीवी स्त्री कटीस्त्रवविबन्धने। मूलद्रव्ये परिपणे' इति हैमः। **करः**। महाभारते स्त्रीपर्वमि चतुर्विंशेध्याये रणभूमौ पतितं भूरिश्रवसःच्छिनं हस्तं गृहीत्वा तत्पत्न्याः प्रलापोऽयम्॥ २०६॥"

उदाहरणं समर्थयते—**इत्यत्रे**त्यादिना।

**इत्यत्र** प्रागुदाहृते पद्ये। **श्रृङ्गारो** नायकाश्रयो रतिस्थायिभावको रसः। **करुणस्य** नायिकाश्रयस्य शोकस्थायिभावस्य रसस्य। **अङ्गम्**। अयम्भावः-प्रामप्रियस्य वियोगे युवत्यास्तेन कृतस्य श्रृङ्गारोचितस्य रसनोत्कर्षणादेः स्मरणं हृदयं विगलयच्छोकावेगं प्रवर्धयतीति श्रृङ्गाराः करुणाङ्गभूतः, रतेः शोकपकारितया प्रस्तुतत्वान्न श्रृङ्गारः प्रधानभूततां प्राप्तः, शोकस्य तथा प्रवृद्धत्वात् तत्स्थायिभावकः करुणः पुनः प्रधानतां प्राप्तः। तथा च-श्रृङ्गारमपेक्ष्यास्य गुणीभूतव्ययङ्ग्यकाव्यत्वम्, करुणमपेक्ष्य पुनरस्यैव ध्वनिकाव्यत्वम्। इति।

**'मानोन्नतां प्रणयिनीमनुनेतुकाम-**

**स्त्वत्सैन्यसागररवोद्गतकर्णतापः ।**

**हा हा कथं नु भवतो रिपुराजधानी-**

**प्रासादसंततिषु तिष्ठति कामिलोकः ॥'**

अत्रौत्सुक्यत्राससंधिसंस्कृतस्य करुणस्य राजविषयरतावङ्गभावः ।

---

## विवृतिः

भावाङ्गं रसव्यङ्ग्यमुदाहरति—मानोन्नतामिति । राज्ञः स्तुतिरियम् । मानोन्नतामुन्नतमानाम् । त्वत्सैन्य-सागररवेण उद्गतकर्णतापो भवति । अत्रेति । प्रथमपादेन औतसुक्यम्, द्वितीयपादेन त्रासो व्यज्यते । औत्सुक्यत्रा-सयोः संधिना संस्कृतस्य कृतोत्कर्षस्य । एतेन भावसंधे रसाङ्गत्वं दर्शितम् । भावस्यास्वादमात्रत्वेन प्रधानत्वम् । वाच्यार्थो व्यङ्ग्यकरुणनिरपेक्ष एव तस्य व्यञ्जकः । करुणस्तु वाच्यसापेक्षहाहापदार्थव्यङ्ग्य एव तत्प्रकर्षक इति वाक्यार्थपेक्षया व्यङ्ग्यस्य न्यूनचमत्कारित्वम् । एवं भावादीनां भावाद्यङ्गत्वे उदाहरणानि काव्यप्रकाशाद्युक्तानि बोध्यानि । ग्रन्थप्रपञ्चभयादीह नोक्तानि ॥

## विवृतिपूर्तिः

काव्यप्रकाशे पञ्चमोल्लासे यथा—"अत्युच्चाः परितः स्फुरन्ति गिरयः, स्फारास्तथाम्भोधयस्तानेतानापि विभ्रती किमपि न क्लान्तासि तुभ्यं नमः । आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुवस्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥" अत्र भूविषयको रतिभावो राजविषयकस्य रतिभावस्याङ्गम् । "वन्दीकृत्य नृपद्विषां मृगदृशस्ताः पश्यतां प्रेयसां, श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः । अस्माकं सुकृतैर्दृ-शोर्निपतिततोऽस्यौचित्यवारंनिधे ! विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥" अत्र भावस्य रसाभासभावाभासौ प्रथमार्धद्वितीयार्धद्योत्यौ राजविषयकस्य रतिभावस्याङ्गम् । "अविरलकरवालकम्पनैर्भ्रुकुटी-तर्जनगर्जनैर्मुहुः । ददृशे तव वैरिणां मदः, स गतः क्वापि तवेक्षणे क्षणात् ॥" अत्र भावस्य भावप्रशमोऽङ्गम् । "साकं कुरङ्गकदृशा मधुपानलीलां कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते । अन्वाभिधायि तव नाम विभो गृहीतं केनापि तत्र विषमामकरोदवस्थाम् ॥" अत्र त्रासोदयो राजविषयकरतिभावस्याङ्गम् । "असोढा तत्कालोल्लसदसहभावस्य तपसः, कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः । प्रमोदं वो दिश्यात्कपटवटुवेषापनयने त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥" अत्रावेगधैर्ययोः संधिः शिवविषयकरतिभावस्याङ्गम् । "पश्येत्कश्चिच्चल चपल रे ! का त्वराहं कुमारी, हस्तालम्बं वितर, हहहा व्युत्क्रमः क्वसियासि । इत्थं पृथ्वीपरिवृढ ! भवद्विद्विषोऽरम्यवृत्तेः कन्या कंचित्फलकिसलयान्याददानाऽभिधत्ते ॥" अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता राजविष-यकरतिभावस्याङ्गम् ॥

वर्तमानसामीप्ये वर्तमावद्वा इति पाणिनिसूत्रम् ।

अलंकारेति. अलंकारान्तरस्य रूपकादेरलंकारप्रतीतौ सत्यामपि यत्र वाच्यस्य व्यङ्ग्यप्रतिपादनौन्मुख्येन चारुत्वं न प्रकाशते नासौ ध्वनेर्मार्गः । तथा च दीपकादावलंकारे उपमाया गम्यमानत्वेऽपि तत्परत्वेन चारुत्वस्याव्यवस्थानान्न ध्वनिव्यपदेशः । यथा मम—'रजनी हिमकरकिरणैर्बिसिनी नलिनैस्तरङ्गिणी सलिलैः । बल्ली कुसुमस्तवकैः काव्यकथाभूष्यते सुजनैः ॥' इत्यादिषूपमांगगर्भत्वेऽपि वाच्यालंकारमुखेनैव चारुत्वं व्यवतिष्ठते, न व्यङ्ग्यालंकारतात्पर्येण । अतस्तत्र वाच्यालंकारमुकेनैव काव्यव्यपदेशो न्याय्यः । एवं समासोक्त्याक्षेपानुक्तनिमित्तविशेषोक्तिपर्यायोक्तापह्नुतिसंकरालंकारादवपि ज्ञेयम् । समासोक्तौ तावत् 'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् । यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥' इत्यादौ व्यङ्ग्येनानुगतं वाच्यमेव प्राधान्येन प्रतीयते । समारोपितनायिकानायकव्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वात् । एवमग्रेऽप्यनुसंधेयम् । तथा चोक्तम्—'व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः । समासोक्त्यादयस्तत्र वाच्यालंकृतयः स्फुटाः ॥ व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा । न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ॥' इति ॥

शोणेति । अत्र शास्त्रसिद्धमपि कतुरिकवचनं किमप्यरुचिबीजं सहृदयहृदयेष्वङ्कुरयतीति त एवात्र प्रमाणम् । एवं चात्र 'शोणमणिप्रकाशः' इति पठनीयम् । अथवा 'यत्रोन्मदानां प्रमदाजनानामभ्रंलिहा विद्रुमवेश्मभासः । संध्याभ्रमं प्राप्नुवतामकालेऽप्युल्लासयन्ति स्मरवेषलीलाम् ॥' इति । अभ्राणि लिहन्तीत्यभ्रंलिहाः । 'वहाभ्रे लिहः' इति खश् । गगनस्पृश इत्यर्थः ॥

## विज्ञप्रिया

भावस्याङ्गं करुणमाह—मानोन्नतामिति । उन्नतमानामित्यर्थः । हाहेति त्रासविज्ञातुर्वक्तुस्तद्विषयकशोकः । भवतो रिपुराजधानीप्रसादसन्तीषु कथं कामिलोकस्तिष्ठति इति अन्वयः । अत्रेति औत्सुक्यं मानिन्यनुनयकामनया व्यङ्ग्यम् । तद्विरुद्धः त्रासः यथोक्तकर्णतापपदव्यङ्ग्य इत्यनयोः सिद्धिः । तादृशसन्धिविशिष्टानां रिपुराजधानीकमिलोकानां शोच्यावस्थाज्ञातुर्वक्तुः शोकरूपः करुणो राजविषयरतिभावस्याङ्गमित्यर्थः । अत्र च हाहाशब्दः क्रोधव्यञ्जकहुङ्कारवन्निरर्थकः ।शोकव्यञ्जक इति ग्रन्थकृतोऽभिप्रायः तदैव व्यङ्ग्यभूतस्य हाहाशब्दप्रतिपाद्यस्य शोकरूपकरुणस्य व्यङ्ग्यत्वोपपत्तेः । हाहाशब्दस्य वाच्य एव शोकरूपः करुणः । हाहेत्युक्ते शोचामीति प्रतीत्या तद्वाच्यतसिद्धेः । अन्यथा गोशब्दस्यापि गौर्न वाच्यः स्यात् अतो ग्रन्थकृतः छिद्रमेवात्र ।

## कुसुमप्रतिमा

रसस्य भावङ्गतामुदाहरति मानोन्नतामिति । राज्ञः प्रशसेयम् । हे राजन् ! भवतो रिपुराजधान्याः प्रासादसन्ततिषु अट्टालिकासमूहेषु मानोन्नताम् अत्यन्तगानवतीं प्रणयिनीम् अनुनेतुकामः प्रसादयितुमिच्छुः कामिलोकः तव सैन्यसागरस्य रवेण आक्रमणकोलाहलेन उद्गत उपस्थितः कर्णयोस्तापः पीड़ा यस्य स तादृशः सन् कथं तु तत्र तिष्ठति ? ।

अत्रेति । अत्र श्लोके प्रथमचरणेनौत्सूक्यं द्वितीयचरणेन च त्रासो व्यज्यते; तयोश्च श्रौत्सुक्यत्रासयोः सन्धिना सम्मेलनेन संस्कृतस्य परिपोषितस्य, करुणस्य हाहापदद्योत्यस्य करुणरसस्य, राजविषयरतौ प्राधान्येन प्रतिपाद्ये राजविषयकानुरागे अङ्गभावः अङ्गत्वम् । अत्र उक्तानामौत्नुक्यादीनां व्यङ्ग्यार्थानां वाच्यार्थात् न्यूनचमत्कारित्वेन गुणीभूतव्यङ्ग्यत्वम् ।

## विमला

भावाङ्गमाह, मानोन्नतामिति ।—राजस्तुतिरियम् । हे राजन् ! भवतः रिपुराजधआनीप्रासादसन्ततिषु स्थित इति सेषः, कामिलोकः, मानोव्रताम्—उन्नतमानां, प्रणयिनौ—कान्ताम्, अनुनेतुकामः,—अनुनिनीषुरित्यर्थः, तव सैन्यसागरस्य—सैनिकसमूहरूपस्य समुद्रस्य, रवेण—कोलाहलेन, उदङ्गतः,—जनितः, कर्णतापः,—श्रोत्रपीड़ा, यस्य तादृशः सन्, हा हा इति विषादयोतकमव्ययम्, अहो इत्यर्थः, कतं तु तिष्ठति ? अतिकष्टेन वत्र्तते इत्यर्थः । वसन्ततिलकं वृत्तम् ।

अत्रेति ।—मानोव्रतामिति प्रथमे पादे औत्सुक्यं, त्वस्नैन्येति, तयोः सन्धिना—संयोगेन, समावेशेनेति यावत, संस्कृतस्य—पुष्टस्य इत्यर्थः, [एतेन भावसन्धेः रसाङ्गत्वं दर्शितम्] करुणस्य राजविषया या रतिस्तस्याम्, अङ्गभाव—पोषकतया निविष्टत्वम् । ततश्च भावसन्धिः करुणस्याङ्गं; करुणश्च राजविषयञ्च रतिरूपस्य भावस्येति बोध्यम् । अत्र तु मुख्यार्थः व्यङ्ग्यकरुणनिरपेक्ष एव भावव्यञ्जककरुणस्तु वाच्यसापेक्षहाहापदार्थव्यङ्ग्यः सन् तत्प्रकर्षक इति वाच्यार्थपिक्षया व्यङ्ग्यार्थन्यूनचमत्कारित्वमवधेयम् । एवं भावदीनां भावाद्यङ्ग्यत्वे उदाहरणानि काव्यप्रकाशाद्युक्तानि बोध्यानि, ग्रन्थप्रपञ्चभयादिह नोक्तानि ।

## लक्ष्मी

रसस्य भावाङ्गतायामितराङ्गव्यङ्ग्यं मध्यमकाव्यमुदाहरति—मानोन्नतामिति । राज्ञः स्तुतिरियम् । हे राजन् ! भवतो रिपुराजधान्याः प्रासादसन्ततिषु अट्टालिकासमूहेषु मानोन्नताम् अतिमानवतीं प्रणयिनीं प्रियतमाम् अनुनेतुकामः प्रसादयितुमिच्छुः कामिलोकः तव सैन्यसागरस्य रवेण आक्रमणशब्देन उद्धतो ज्ञातः कर्णयोः श्रोत्रयोस्तापः पीडा यस्य स तादृशः सन् हाहेति त्रासविज्ञातुर्वक्तुस्तद्विषयशोकः । कथं नु तत्र तिष्ठति ? वसन्ततिलकाछन्दः ।

अत्र किं कस्याङ्गमित्याकांक्षायामाह—अत्रौत्सुक्येति । अत्र प्रथमपादेन मानिन्यनुनयकामनया औत्सुक्यं व्यङ्ग्यम्, तद्विरुद्धो द्वितीयपादेन त्रासः यथोक्तकर्णतापदव्यङ्ग्य इत्यनयोः सन्धिना संस्कृतस्य परिपोषितस्य । तथा च तादृशसन्धिविशिष्टानां रिपुराजधानी कामिलोकानां शोच्यावस्थाज्ञातुर्वक्तुः शोकरूपः करुणो राजविषयरतिभावस्याङ्गमित्यर्थःभावस्यास्वादमात्रत्वेन प्रधानत्वम्, वाच्यार्थौ व्यङ्ग्यकरुणनिरपेक्ष एव तस्य व्यञ्जकः । औत्सुक्यादीनां व्यङ्ग्यार्थानां वाच्यार्थपिक्षया न्यूनचमत्कारित्वेन गुणीभूतव्यङ्ग्यत्वं बोध्यम् । अत्र हि 'हा ! हा !' शब्दः क्रोधव्यञ्जकहुङ्कारवन्निरर्थकः तथाहि शोकव्यञ्जक इति ग्रन्थकृतोऽभिप्रायः, तदैव व्यङ्ग्यभूतहाहाशब्दप्रतिपाद्यस्य शोकरूपंणस्य व्यङ्ग्यत्वोपपत्तेः । हा हा शब्दस्य वाच्य एव शोकरूपः करुणः, हाहेत्युक्ते शोचामीति प्रतीत्या तद्वाच्यतोपपत्तेः अन्यथा गोशब्दस्यापि गौर्न वाच्यः स्यादित्युच्यते—

**तदा—'कैलासालयभाललोचनरुचा निर्वर्त्तितालक्तक-**

**व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा प्रीयताम् ।**

**स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः**

**कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते ॥'**

इदमुदाहरणीयम् । प्रणति परे भगवति भवे भवान्याः मानभङ्गेन नेत्रारुण्यनाशवर्णमिदम् । अत्र कविनिष्ठे पार्वतीविषयकप्रीतिरूपे भावे पार्वतीपरमेश्वरयोः शृङ्गारोऽङ्गमिति भावः । एवं भावादीनां भावाद्यङ्गत्वे उदाहरणानि काव्यप्रकारशाद्युक्तानि ज्ञेयानि ।

तत्र भावस्य भावाङ्गतायामितराङ्गव्यङ्ग्यम्, यथा—

'अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथामम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥'

अत्र भूविषयको रतिभावो राजविषयकस्य रतिभावस्याङ्गम् ।

रसाभासभावाभासयोर्भावाङ्तायामितराङ्गव्यङ्ग्यं यथा—

'वन्दीकृत्य नृपद्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः ।
अस्माकं सुकृतैर्दृशो निपतितोऽस्यौचित्यवारांनिधेः
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे' ॥

अत्र भावस्य रसाभासभावाभासौ प्रथमार्धद्वितायर्धद्योत्यौ राजविषयकस्य रतिभावस्याङ्गम् । भावसन्धेः भावाङ्गतायामितराङ्गव्यङ्ग्यं यथा—

'अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥'

अत्र वैरिणो मदाख्यौ गर्वरूपो भावस्तस्य प्रशमः (शान्तिः) कविनिष्ठराजविषयकरतिभावस्याङ्गम् । भावोदयस्य भावाङ्गतायामितराङ्गव्यङ्ग्यं यथा—

'साकं कुरङ्गकदृशा मधुपानलीलां कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याभिधायि तव नाम विभो ! गृहीतं केनापि तत्र विषमामकरोदवस्थाम् ।

अत्र विषमावस्थाव्यङ्ग्यस्य त्रासरूपभावस्योदयः कविनिष्ठस्य राजविषयकस्य रत्याख्यभावस्याङ्गम् । भावसन्धेर्भावाङ्गतायामितराङ्गव्यङ्ग्यं यथा—

'असोढा तत्कालोल्लसदसहभावस्य तपसः कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात्कपटवटुवेशापनयने त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥'

अत्र स्मरहरगतयोः त्वरापदशैथिल्यपदगम्ययोरावेगधैर्याख्यभावयोः सन्धिः कविनिष्ठस्य शिवविषयकरतिभावस्याङ्गम् । भावशवलतायाः भावाङ्गतायामितराङ्गव्यङ्ग्यं यथा—

**'पश्येत्कश्चिच्चलचपल रे ! का त्वराहं कुमारी,**

**हस्तालम्बं वितर, हहहा व्युत्क्रमं कासी यासि ।**

**इत्थं पृथ्वीपरिवृढ ! भवद्विषोऽरण्यवृत्तेः**

**कन्या कच्चित्फलकिसलयान्याददानाऽभिधत्ते ॥'**

अत्र 'पश्येत्कश्रित्' इति शङ्का 'चलचपल रे' इत्यसूया 'का त्वरा' ति धृतिः 'अहं कुमारी' इति स्मृतिः 'हस्तालम्बं वितर' इति श्रमः 'हहहा' इति दैन्यम्, व्युत्क्रम इति विबोधः, 'कासि यासि' इत्यौत्सुक्यम्, एतेषां शवलता राजविषयकरतिभावेऽङ्गम् ।

## रुचिरा

इतरस्य रसादेरित्यत्रादिपदेन निर्वेदादीनां ग्रहणमिति द्योतयन्नुदाहरति—"**मानोन्नतामित्यादि** ।

"भो राजन् ! (इतिसम्बुद्धिपदमूह्यम्) **भवतः । रिपुराजधआनीप्रासादसन्ततिषु** रिपूणां शत्रूणां राजधान्यो राजनगर्य्यस्तासु याः प्रासादसन्ततयः प्रासादश्रेणयस्तासु । 'प्रासादो देवभूभुजाम् ।' इत्यमरः । **कामिलोकः** कामी जनः । **मानोन्नतां** मानेनाग्रहेण उन्नतोद्धता ताम् । **प्रणयिनीम्** प्रियाम् । **अनुनेतुकामः** प्रसादयितुमिच्छुः । **त्वत्सैन्यसागररवोद्गतकर्णतापस्तव** सैन्यमेव सागरः समुद्रस्तस्य रवो गर्जनं तेनोद्गत उत्थित उत्पन्न इति यावत् कर्णतापो यस्य तादृशः । **हाहा** । **कथंनु** । **तिष्ठति** वसन्ततिलकं वृत्तम् ॥ २०७ ॥"

उदाहृते किं कस्याङ्गमित्यपेक्षायामाह—**इत्यत्रेत्यादि** ।

**इत्यत्र** प्रागुदाहृते पद्ये । **औत्सुक्यत्राससन्धिसंस्कृतस्यौ**त्सुक्यत्रासयोः सन्धिराविर्भावतिरोभावयोर्मध्यावस्था तेन संस्कृतो विशेषितस्तादृशस्य । **करुणस्य** तदाख्यस्य रसस्य । **राजविषयरतौ** राजविषयिण्यां रतावित्यर्थः । **अङ्गभावो** गौणात्मनाऽवस्थानम् । अयम्भावः—अत्र हि प्रथमेन पादेनौत्सुक्यस्य, द्वितीयेन त्रासस्याभि व्यक्तिः, इत्येवं तयोः सन्धिना विशेषितस्तृतीयेनाभिव्यज्यमानः करुणः कवे राजविषयिण्यां रतो न्यभूतः । इति ।

यथा वा—"कैलासालयभाललोचनरुचा निर्वर्त्तितालक्तकव्यक्तिः पादनखद्युतिर्गिरिभुवः साबम् सदा त्रायताम् । स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्य्यते ॥" इति, अत्र हि "त्रायता" मित्यभिव्यक्तस्य पार्वतीविषयिण्यां रतेर्महादेवनिष्ठः पार्वतीविषयकः, सम्भोगः श्रृङ्गारोऽङ्गम् । यथा वा—"अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाऽम्भोधयस्तानेतानपि बिभ्रती किमपि न क्लान्ताऽसि तुभ्यं नमः । आश्चर्येण मुहुर्मुहुः स्तुतिमिमां प्रस्तौमि यावद्भुवस्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्तत मुद्रिताः ॥" इति, अत्र हि भूमिविषया रता राजविषयाया रतेरङ्गम् । यथा वा—"बन्दीकृत्य नृप ! द्विषां मृगदृशस्ताः पश्यतां प्रेयसां श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः । अस्माकं सुकृतैर्दृशोर्निपातितोऽस्यौचित्यवारानिधे ! विध्वस्ता विपदोऽखिलास्दिति तैः प्रत्यर्थिभिः स्तूयसे ॥' इति, अत्र हि प्रथमार्धे सैनिकनिष्ठः परस्त्रीविषयकतया श्रृङ्गारः, द्वितीयार्धे च प्रत्यर्थिनिष्ठो निजशत्रुभूतराजविषयकतया रतिभावश्चेत्येवमनौचित्यात्तदुभयमप्याभासरूपं सत् कविनिष्ठस्य राजविषयकरतेरङ्गम् । "अविरलकरवालकम्पनैर्भ्रुकुटीनर्त्तनगर्जनर्मुहुः । ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥" इति अत्र हि वैरिगतस्य गर्वापरपर्य्यायस्य मदभावस्य शान्तिः कविनिष्ठायां राजविषयकरतावङ्गम् । यथा वा—"साकं कुरङ्गकदृशा मधुपानलीलाः कर्त्तु सुहृद्भिरपि वैरिणि ते

प्रवृत्ते । अन्याभिधायि तव नाम विभो ! गृहीतं केनापि तत्र विषमाकरौदवस्थाम् ॥" इति, अत्र हि विषमावस्थानव्यङ्ग्यस्य त्रासभावस्योदयो रजाविषयकरतेरङ्गम्। यथा वा—"असोढा तत्कालोल्लसदसहभावस्य तपसः कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः । प्रमोदं वो दिश्यात् कपटवटुवेषापनयने त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥"इति, अत्र हि आवेगधैर्य्ययोस्त्वरापदशैथिल्यपदव्यङ्ग्ययोर्महादेवनिष्ठयोः सन्धिः कविनिष्ठाया महादेवविषयिण्या रतेरङ्गम् । यथा वा—"पश्येत् कश्चिच्चलचपल ! रे ! का त्वरा ? ऽहं कुमारी हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि । इत्थं पृथ्वीपरिवृढ ! भवद्विद्विषोऽरण्यवृत्तेः कन्या कश्चित् फलकिसलयान्यादधानाऽभिधत्ते ॥" इति, अत्र हि 'पश्येत् कश्चि' दित्यनेन शङ्कायाः, 'चल चपल !' इत्यनेना सूयायाः, 'का त्वरा' इत्यनेन धृतेः, 'अहं कुमारी' इत्यनेन स्मृतेः, 'हस्तालम्बं वितरे' त्यनेन श्रमस्य, 'हहहे' त्यनेन दैन्यस्य, 'व्युत्क्रमः' इत्यनेन विबोधस्य, 'क्वासि यासि' इत्यनेन औत्सुक्यस्य च व्यज्यमानस्य शबलता कविनिष्ठे नृपतिविषयके रतिभावेऽङ्गम् । इति ।

'जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्।
कृतालङ्काभर्तुर्वदनपरिपाटीषुघटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥'

अत्र रामत्वं प्राप्तमित्यवचनेऽपि शब्दशक्तेरेव रामत्वमवगम्यते। वचनेन तु सादृश्यहेतुकतादात्म्यारोपणमाविष्कुर्वता तद्गोपनमपाकृतम्। तेन वाच्यं सादृश्यं वाक्यार्थान्वयोपपादकतयाङ्गतां नीतम्।

---

## विवृतिः

वाच्यार्थस्याङ्गं शब्दशक्तिमूलमनुरणनरूपव्यङ्ग्यमुदाहरति—जनस्थान इति। धनार्थं प्रयतमानस्याप्राप्तधनस्य कस्यचिदुक्तिरियम्। मया रामत्वं प्राप्तमित्यापाततः प्रतीयते। पश्चादन्यस्य धर्मं कथमन्यो लभतामित्यनुपपत्तिं प्रतिसंदधतः सरूपशब्दसामर्थ्येन व्यज्यमानं सादृश्यमादाय रामसादृश्यं प्राप्तमिति बोधः पारमार्थिकः। सादृश्यघटकानि सरूपशब्दवाच्यत्वरूपसाधर्म्याण्याह—जनस्थान इति। कनकमृगस्य तृष्णया प्राप्तीच्छया अन्धितधिया रामेण जनस्थाननाम्नि दण्डकारण्यैकदेशे भ्रान्तम्। मया तु कनकस्य मृगतृष्णाभ्यामन्वेषणप्राप्तीच्छाभ्यामन्धितधिया जनानां स्थाने भ्रान्तम्। केचित्तु—'कनकमेव मृगतृष्णा मरीचिका, कनके मृगतृष्णारोपणं च दुष्प्रापजलार्थिनो मृगतृष्णायामिव दुष्प्रापकनकार्थिनः कनकेऽपि प्रवत्तेस्तादृशप्रवृत्तिविषयत्वरूपसाधर्म्यात्' इत्याहुः। तन्न। स्वरूपसतः कनकस्य बुद्ध्यन्धीकरणासंभवात्तत्प्राप्तीच्छायां लक्षणावश्यमङ्गीकार्या। एवं च तत्र निरुक्तसाधर्म्यासंभवाद्रूपकासंगतेः। 'मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः। अन्वेषणे च याञ्चायाम्' इति मेदिनी। रामेण प्रतिपदं पदे पदे 'वैदेहि' इति वचः उदश्रु यथा स्यात्तथा प्रलपितम् मया तु वै निश्चितं 'देहि' इति वचः प्रतिपदं प्रतिस्थानं प्रलपितम्। रामेण लङ्काभर्तूरावणस्य वदनानां परिपाट्यां पङ्क्तौ इषुघटना कृता। मया तु भर्तुर्धनस्वामिनो वदनस्य परिपाटीषु संतोषसूचकभङ्गिषु कापि घटना परिचयोऽलमत्यर्थं कृता। कुशलं दारिद्र्यापनायकं वसु यस्य तत्ता मया नाधिगता। रामेण तु कुशलवौ सुतौ यस्याः सा सीता प्राप्तैवेति तुशब्दलभ्योऽर्थः। अस्योपमाध्वनित्वं वारयन्वाक्यार्थाङ्गत्वमुपपादयति—अत्रेति। शब्दशक्तेरेव सरूपशब्दसामर्थ्यादेव, रामत्वं रामसादृश्यम्। वचनेन मयाप्तं रामत्वमिति वाक्येन, आविष्कुर्वता व्यञ्जयता तद्गोपनं सादृश्यस्य गूढत्वमपाकृतं खण्डितम्। एतेनाधिकचमत्कारित्वभावेनास्योपमाध्वनित्वं वारितम्। तेन सादृश्यस्य गोपनापाकरणेन वाच्यं वाच्यवज्झटिति प्रतीयमानं वाक्यार्थस्य रामसादृश्यप्राप्तेरन्वयोपपादकतया अन्वयप्रतियोगित्वेनान्वयस्य् निर्वाहकतया।

तत्रापाततः प्रतीतस्यार्थस्यानुपपत्तिर्व्यङ्ग्यं निरस्यति स वाच्यसिद्ध्यङ्गस्य विषयः। यत्र त्वापाततः प्रतीतस्य बाधनेन तत्स्थाने आत्मानमर्पयित्वा अन्वयं निर्वाहयति सोऽस्य विषयः, इत्यनयोर्भेदः, अत्र 'उपमानोपमेयभावो व्यङ्ग्यो वाच्याङ्गतां नीतः' इति काव्यप्रकाशवृत्तिं केचिदेवं विवृण्वन्ति—उपमानोपमेयभाव उपमा रामत्वप्राप्तिव्यङ्ग्या, वाच्यस्य कुशलवसुताप्राप्त्या प्राप्ततत्कार्याद्रामाद्व्यतिरेकरूपस्यास्याङ्गतां प्रकर्षकतां नीतः" इति। तन्न। अङ्गतामुपपादकतामित्यस्यैव वक्तुं युक्तत्वात्। उपमानव्यञ्जनाभावे व्यतिरेकप्रतीत्यनुपपत्तेरुपपत्त्यतिश-

याधायकस्यैव वक्तुं युक्तत्वात्। उपमानव्यञ्जनाभावे व्यतिरेकप्रतीत्यनुपपत्तेरुपपत्त्यतिशयाधायकस्यैव प्रकर्षत्व-संभवात्॥ अर्थशक्तिमूलानुरणनरूपस्य वाच्यस्याङ्गत्वं यथा—'आगल्य संप्रति वियोगविसंष्ठुलाङ्गीमम्भोजिनीं क्वचिदपि क्षपितत्रियामः। एतां प्रसादयति पश्य शनैः प्रभाते तन्वङ्गि! पादपतनेन सहस्ररश्मिः॥' अत्र नायकवृ-त्तान्तोऽर्थशक्तिमूलो वस्तुरूपो रविकमलिनीवृत्तान्ताध्यारोपेण स्थितः॥

## विज्ञप्रिया

वाच्यार्थस्याऽङ्गं सादृश्यरूपं वस्त्वाह—जनस्थान इति। दरिद्रस्योक्तिरियम्। मया रामत्वं प्राप्तं रामसदृशोऽहं जात इत्यर्थः। शब्दात्मकं सादृश्यमाह—जनस्थान इति। मया कनकरूपया मृगतृष्णया मरीचि-कयाऽन्धितधिया जनानां स्थाने भ्रान्तम् असारे संसारे कनकस्यापि तुच्छत्वेन तस्योपादेयत्वभ्रमजनकत्वादुपादेय-जलभ्रमकनकमृगतृष्णयाऽन्धितधिया भ्रान्तम्। मया वै इति सम्बोहय प्रतिपदं स्थाने २ देहीति वचः। मया भर्त्तुः ईश्वरस्य परिपाटीषु परिचर्य्यासु अलमित्यर्थका घटना न कृता तद्वत् रामेणाऽपि लङ्काभर्त्तुः रावणस्य वदनानां मुखानां परिपाट्यां परिपाटनस्य निमित्तमिषुघटना कृता। किन्तु कुशलं दारिद्रयापनायकं वसु धनं यस्य तादृशता तु मया न प्राप्ता। अत्र तुशब्देन रामवाक् छेदात् रामेण तु कुशलवसुता प्राप्ता इत्यर्थः प्रतीयते—तत्र च कुशलवौ सुतौ यस्यास्तादृशी सीतेत्यर्थः।

अत्र विषादाधिक्यव्यञ्जकया कुशलवसुताऽप्राप्त्या प्राप्ततत्कात् रामात् उपमानाद् वैलक्षण्यरूपो व्यति-रेकालङ्कारः नञो वाच्यः। तत्प्रकर्षकतया रामसादृश्यं व्यङ्ग्यम्। तदङ्गमिति मनसिकृत्य व्यङ्ग्यस्य सादृश्यस्य अगूढत्वात् गुणीभूतत्वमुपपादयितुमाह—अत्र रामत्वमिति। अवचनेऽपीति अनुक्तावपीत्यर्थः। वचने तु इति। तदुक्तौ इत्यर्थः। तादात्म्यारोपणं रामत्वप्राप्त्या रामतादात्म्यारोपम्। तदारोपश्च सादृश्यमूलकः इत्याह—सादृ-श्यहेतुरिति—आविष्कुर्वता वक्त्रा तद् गोपनं ध्वनित्वहेतुतद्गूढत्वम्। तद्गोपनात् सादृश्यस्य गुणीभूतत्वमुपपादि-तम्। यद्यपि एकशब्दरूपं सादृश्यं श्रोत्रग्राह्यमेव न तु वाक्यं, व्यङ्ग्यस्यैव च गुणीभूतत्वे गुणीभूतव्यङ्ग्यं भवति। तथापि शब्दस्य सादृश्यत्वेन रूपेण व्यङ्ग्यत्वमेव न श्रोत्रग्राह्यत्वम्। तथा च तस्याऽपराङ्गत्वमुपपादयति—तेन वाच्यमिति—व्यङ्ग्यमित्यर्थः। न च तद् गोपनात् अगूढरूपगुणीभूतव्यङ्ग्यप्रभेद एवायमिति वाच्यम्। तथात्वेऽपि अपराङ्गतानपायात्। वाच्यार्थो रामव्यतिरेको नञो वाच्यः, तत्प्रकर्षान्वयोपपादकतया इत्यर्थः। न तु रामव्यतिरेकस्यान्वयनिष्पादकतया अबाधितत्वेन तद् विनापि तन्निष्पत्तेः। प्रकर्षद्वाराऽपराङ्गत्वाच्च। ननूपमानापे-क्षया उपमेयस्याधिकं व्यतिरेकालङ्कारः। स च सादृश्यहेतुकोपमानत्वघटित एव। तथा च व्यतिरेकालङ्कारशरीर-घटकमेव सादृश्यम्; कथं तत्प्रकर्षकमिति चेन्न। एकविशेषणेनाऽपि तद् घटनसम्भवे बहुविशेषणसम्भवा-त्तत्प्रकर्षकत्वमपि लभ्यते तच्च सहृदयैकवेद्यम्।

## लोचन

अपङ्गपरिपोषकत्वाद् वाच्याङ्गभूतमनुरणरूपं शब्दशक्तिमूलमुदाहरति-एवं च रसभावादेरङ्गं रसभावादि, वाच्यस्य चानुरणनरूपं व्यङ्ग्यमिति द्विधेत्यर्थः। जनस्थान इति। जनस्थानं—नगरग्रामादि, दण्डकारण्यं च। कनकं प्रति मृगतृष्णा विफलाशा, कनकमृगे तृष्णा च वै निश्चितं; देहि प्रयच्छ; विदेहजा सीता च। अलं व्यर्थम्। काभर्त्तुः कुत्सितस्वामिनः यद् वदनं तस्य परिपाटीषु परम्परासु लङ्काभर्त्तुः रावणस्य वदनानां मुखानां परिपाट्यां

पङ्क्तौ इषुघटना शरयोगश्च । कुशलम् आयतिशुद्धं वसु धनं यस्य एवंभूतता, कुशलवौ सुतौ यस्याः सा सीता च ।

अत्रेति वचने तु रामोऽस्मीत्युक्त्वा पुनः सादृश्यहेतुकतादात्म्यरोपणं जनस्थान इत्यादि वचनप्रतिपादनेनाऽपि लभ्यम् । तदेगोपनं व्यङ्ग्यभूतरामतादात्म्यारोपस्य गोपनम् । वाच्यं मयाप्तं रामत्वमिति पदाभिधेयम् । सादृश्यस्य व्यङ्ग्यतो व्यङ्ग्यत्वेऽपि स्फुटप्रतिभासने वाच्यत्वमुक्तम् । व्यङ्ग्यमिति पाठे तु सुगमा एव व्याख्या । सादृश्यं रामेण सहेत्यर्थः । वाक्यं जनस्थान इत्यादि । एवमर्थशक्तिमूलानुरणनरूपस्य व्यङ्ग्यस्याऽपि व्यङ्ग्यत्वे उदाहार्य्यम् ।

**सहभावेनैव स्थितमित्यनेन ध्वनित्वनिरासः ।**

सन्देहः-द्वयोरपि रसाभिव्यञ्जकत्वाऽविशेषात् ।

## कुसुमप्रतिमा

शब्दशक्तिमूलानुरणरूपव्यङ्ङ्ग्यार्थस्य वाच्यार्थाङ्गतां दर्शयति जनेति । धनार्थं चेष्टमानस्यापि कस्यचिदप्राप्तधनतया धनिसमीपे सनिर्वे दीक्तिरियम् । कनके धनलाभविषयेन्मृगतृष्णा अनर्थकाकाङ्क्षा तया अन्धिता तत्त्वनिर्णयाक्षमीकृता धीर्बुद्धिर्यस्य तेन तथोक्तेन मया, जनानां धनिलोकानां स्थाने सन्निधाने भ्रान्तं भ्रमणं कृतम् । अन्यत्र तु कनकमृगः सुवण मयहरिणो मारीचः तस्य दृष्णया धारणलोभेन अन्धिता मोहिता धीर्यस्य तेन रामेण जनस्थाने तदाख्ये दण्डकारण्यैकदेशे भ्रान्तं भ्रमणं कृतम् । वक्तुपक्षे वैशब्दः पादपूरणे । प्रतिपदं प्रत्येकधनिस्थाने 'देहि, इति वचो वाक्यम् उदश्रु उद्गतरोदनजलं यथा स्यात्तथा प्रलपितम् अनर्थक मुक्तं तेषां दानाभावादितिभावः । अन्यत्र तु प्रतिपदं प्रत्येकपादक्षेपे "वैदेहि ! हे विदेहनन्दिनि ! सीते !" इति वचः उदश्रु यथा स्यात्तथा प्रलपितम् अनर्थकमुक्तस्, तत्पूर्वमेव रावणेन सीताया हृततया तत्प्रत्युत्तरालाभादिति भावः । भर्त्तुर्धनस्वामिनी जनस्य परिपाटीषु उपकरणवेष रचनादिषु का घटना प्रशंसायोजना अलमत्यन्तं न क्वता ? इति त्वं वद, अपि तु सर्वैव कृतेत्यर्थः । तथापि तस्माद्धनं नाधिगतमिति भावः । अन्यत्र तु लङ्काभर्त्तुलङ्केश्वरस्य रावणस्य वदनमपिठ्यां मुखश्रेण्याम् इषुघटना वाण्योजनाकृता । अतएव रामत्वं दाशरथित्वम् आप्तं प्राप्तम्; तु किन्तु कुशल दारिद्रानाशेन मङ्गलकरं वसु धनं यस्य तस्य भावः सा, अन्यत्र तु कुशलवौ सुतौ पुत्रौ यस्याः सा सीता न अधिगता न प्राप्ता ।

अत्रेति । अवचनेऽपि अनुक्तावपि । शब्दशक्तेरेव शब्दगताभिधामूलव्यञ्जनावृत्तिवशादेव । रामत्वं रामसादृश्यं उक्तरीति शेषः । वचनेन तु 'रामत्वम् आप्तम्' इत्युक्त्या तु सादृश्यम् एकवाचकवाच्यत्वरूपं शाब्दमौपम्यं हेतुर्वस्य तत् सादृश्यहेतुकम् । तादृशसादृश्यमन्तरेण वक्तरि रामस्य तादात्म्यारोपणासम्भवादिति भावः, तादात्मारोपणम् आत्मनि रामस्याभेदारोपम् अविष्कुर्वता प्रकाश्यता वचनेनेति सम्बन्धः तस्य रामसादृश्यस्य गोपनं गूढ़त्वम् अपाकृतं निरस्तम् । तेन हेतुना, वाच्यं व्यङ्ग्यमपि शीघ्रबोध्यया वाच्यायमानं सादृश्यं रामतुल्यत्वम्, वाक्यस्य आत्मना रामत्वप्राप्तिरूपस्य अन्वयोपपादकतया, सम्बन्ध सम्पादकतया, अन्यथा अन्यस्य धर्म्मं कथमन्यः प्राप्नुयादिति "मयाप्त रामत्वम्" इत्यस्य अनुपपत्तिः स्यादिति भावः । अङ्गतां नीतम् आत्मकत्तकरामत्वाप्राप्तिरूपस्य वाच्यार्थस्य सम्पादकत्वं प्रापितं वक्तेति शेषः । अतएव व्यङ्ग्यार्थरूपस्य सादृश्यस्य वाच्यार्थादविकचमत्कारेत्वाम वेताव गुणीभूतस्याङ्ग्यत्वम् ।

## विमला

वाच्यार्थस्याङ्गं शब्दसक्तिमूलमनुरणनरूपव्यङ्ग्यमुदाहरन्, सादृश्यघटकानि स्वरूपशब्दवाच्यत्वरूप-साधर्म्याण्याह, जनस्थाने इति ।—धनार्थं कृतेऽपि प्रयत्नेऽप्राप्तधनस्य कस्यचितुक्तिरियम् । (रामेण) कनकमृगे—तद्रूपधारिणि मारीचे, (मया तु) कनकस्य—स्वर्णस्य, धनस्येत्यर्थः, मृगे—अन्वेषणे, ("मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः । अन्वेषणे च याञ्चायाम्" इति मेदिनी) या तृष्णा—प्रतीक्षा, लोभ इति यावत्, तया—तटहणे-च्छया, अन्यत्र,—तत्सद्भुहकामनया इत्यर्थः, यद्वा,—मृगतृष्णाभ्याम्—अन्वेश्रणप्रतीक्षाभ्यामित्यर्थः; अन्विता—आच्छन्ना क्लुप्ता इत्यर्थः, धीर्यस्य तादृशेन सता, [केचित्तु—"कनकमेव मृगतृष्णा—मरीचिका कनके मृगतृष्णाऽऽरोपणञ्च दुष्प्रापजलार्थिनो मृगतृष्णायामिव दुष्प्रभावकरणानि कालेकेऽपि प्रवृत्तेः तादृशप्रवृत्तिविषयत्व रूपसाधर्म्यात्" इत्याहुः, तत्; स्वरूपतः कनकस्य बुद्ध्यन्धीकरमासम्भवात् तत्प्राप्तीच्छायां लक्षणाऽवश्यमङ्गी-कार्य्या; एवञ्च तत्र निरुक्तसाधर्म्यासम्भवात्, रूपकासङ्गतेः इति सारः] जनानां—धनिनामित्यर्थः, स्थाने—समीपे, अन्यत्र,—जनस्थाने—तदाख्यदण्डकारण्यप्रदेशविशेषे, भ्रान्तं—पर्य्यटितं, (रामेण) प्रतिपदं—पदे पदे, वैदेहि ! हे विदेहवंशसम्भूते सीते ! इति वचः, उदश्रु—सजलनयनं यथा तथा, प्रलपितम्—अनर्थकमुक्तम्, ("प्रलापोऽनर्थकं वचः" इत्यमरः) अन्यत्र,—वै—निश्चितं, ("वे" शब्दः निश्चयार्थः पादपूरणार्थौ वा) "देहि" इति वचः, (रामेण) लङ्काभर्त्तुः,—रावणस्य, वदनानां परिपाट्यां—पङ्क्तौ, इषुघटना—शरयोजना, कृता, अन्यत्र,—भर्त्तुः,—धनस्वा-मिनः, वदनपरिपाटीषु—वदनस्य—मुखस्य, परिपाट्यः,—सन्तोषासन्तोषसूचकविविधभङ्ग्यः, तासु तथोक्तासु, का घटना—परिग्रहः, अलम्—अत्यर्थं, कृता ? न कापीत्यर्थः । भर्त्तुः क्रोधोदयो वा, सन्तोषाविर्भावो वाऽस्तु, तद्विषयेषु कोऽपि विचारो न कृत इति भावः; अथवा,—भर्त्तुः वदनस्य परिपाटीषु—आनुपूर्व्येषु, अनुकूलतास्विति यावत्, का घटना मया अलं—न, ("अलं भूषणपर्य्याप्तिवारणेषु" इति मेदिनी) कृता ? वदत्वमिति शेषः, अपि तु सर्वविधैव मया कृतेति भावः; (अतः तत्तत्साधर्म्येण) मया रामत्व—रामसाधर्म्यम्, आप्तं—प्राप्तं, तु—किन्तु, (रामेण) कुशलवसुता—कुशलवौ सुतौ यस्याः सा सीता प्राप्तैवेति तुशब्दलभ्योः; मया कुशलं—दारिद्र्यहरणे समर्थमित्यर्थः, वसु—धनं यस्य तस्य भावस्तत्ता, तु न अधिगता—प्राप्ता । [अनेन मया रामत्व प्राप्तमित्यापाततः प्रतीयते, पश्चादन्यस्य धर्मे कथमन्यो लभतामित्यनुपपत्तिं प्रतिसन्दधतः स्वरूपशब्दमामर्थ्येन व्यज्यमानं सादृश्य-मादाय रामसादृश्यं प्राप्तमिति बोधः पारमार्थिकः] । शिखरिणीवृत्तम् । उदात्तराघवस्येदं पद्यम् ।

अस्योपमाध्वनित्वं वारयन् वाक्यार्थाङ्गत्वमुपपादयति, अत्रेति ।—अत्र—उदाहृते पद्ये, रामत्वं, प्राप्तं—लब्दम्, इत्यवचने—इत्येवं यावत् वर्णनेऽकृते अपि, शब्दशक्तेरेव—स्वरूपशब्दसामर्थ्यादेव, रामत्वं—रामसा-दृश्यमित्यर्थः, अवगम्यते—प्रतीतिविषयत्वंनीयते, वचनेन तु—मया रामत्वमाप्तमिति वाक्येन पुनः, सादृश्यहेतुकं—रामसादृश्यस्य कारमभूतं, यत् तादात्म्यं—रामत्वं, तस्य आरोपणम्—अभेदेन प्रतिपादनं, तत्, आविष्कुर्वता—व्यञ्जयता, प्रकटयता इत्यर्थः, तद्गोपनं—तस्य रामसादृश्यस्य गोपनं—गूढत्वम्, अपाकृतं—नि-राकृतं, खण्डितमिति यावत्, [एतेन अधिकचमत्कारित्वाभावेन अस्योपमाध्वनित्वं वारितम्] तेन—सादृश्यगोप-नाकरणेन, वाच्यं—वाच्यवत् झटिति प्रतीयमानं, सादृश्यं—तुल्यत्वं,—वाक्यार्थस्य—रामसादृश्यप्राप्तिरूपस्य, अन्वयीपपादकतया—अन्वयसम्पादकतया, अन्वयप्रतियोगित्वेनान्वयस्य निर्वाहकतयेत्यर्थः, अङ्गतां—पोषकतां, नीतं—प्रापितम् । अत्र सादृश्यस्य गूढत्वापाकरणेन अधिकचमत्कारित्वस्य खण्डनात् गुणीभूतव्यङ्ग्यत्वं, नोप-माध्वनिरित्यवधेयम् । यत्रापाततः प्रतीतस्यार्थस्य अनुपपत्तिर्व्यङ्ग्यं निरस्यति, स वाच्यसिद्ध्यङ्गस्य विषयः । यत्र त्वापाततः प्रतीतस्य बाधनेन तत्स्थाने आत्मानमर्पयित्वा अन्वयं निर्वाहयति, सोऽस्य विषयः, इत्यनयोर्भेदः । [अत्र

"उपमानोपमेयभावो व्यङ्ग्यो वाच्याङ्गतां नीतः" इति काव्यप्रकाशवृत्त्रिकेचिदेवं विवृण्वन्ति,—"उपमानोपमेयभाव उपमा रामत्वप्राप्तिव्यङ्ग्या, वाच्यस्य, कुशलवसुताप्राप्त्याप्राप्ततत्कार्य्यात् रामात् व्यतिरेकरूपस्य अस्य अङ्गतां (प्रकर्षकतां) नीतः" इति, तत्र, अङ्गतामुपपादकतामित्यस्यैव वक्तुं युक्तत्वात्; उपमानव्यञ्जनाऽभावे व्यतिरेकप्रतीत्यनुपपत्तेः, उपपत्त्यतिशयाधायकस्यैव प्रकर्षत्वसम्भवात्। अर्थशक्तिमूलानुरणरूपस्य वाच्यस्य अङ्गत्वं यथा,—"आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गीसम्भाजिनौं क्वचिदपि क्षपितत्रियामः। एतां प्रसादयति पश्य शनैः प्रभाते तन्वङ्गि। पादपतनेन सहस्त्ररश्मिः॥" अत्र नायकवृत्तान्तः अर्थशक्तिमूलः वस्तुरूपः रविकमलिनीवृत्तान्ताध्यारोपेण स्थितः इति बोध्यम्]।

## लक्ष्मी

अथ शब्दशक्तिमूलानुसरणरूपोपमालङ्कारस्य संलक्ष्यक्रमस्य वाच्यङ्गतायामितराङ्गव्यङ्ग्यमुदाहरति—जनस्थान इति। धनार्थमुद्योगं विदधतोऽपि कस्यचिद्दरिद्रस्याप्राप्तधनतया धनिसमक्षे सनिर्वेदोक्तिरियम्। कनकस्य सुवर्णस्य मृगोऽन्वेषणं प्रार्थना वा तत्र या तृष्णा निष्फलाशा तया अन्धिता विवेकरहिता धीर्यस्य तादृसेन मया जनानां धनिलोकानां स्थाने ग्रामनगरादौ भ्रान्तं भ्रमणं कृतम्। अन्यत्र कनममृगे मारीचे तृष्णाधारणलोभस्तया अन्धिता विवेकरहिता धीर्यस्य तेन रामेण जनस्थाने तन्नाम्नि दण्डकारण्यैकदेशे भ्रान्तम्। वै निश्रचयेन प्रतिपदं प्रत्येकधनिस्थाने देहि प्रयच्छेति वचो वाक्यम् उदश्रू उदग्रतम् उत्थितम् अश्रुनेत्रजलं यथा स्यात्तथा प्रलपितं व्यर्थमेवोक्तम्। अन्यत्र तु प्रतिपदं प्रत्येकपादन्यासे वैदेहि ! हे जनकनन्दिनि सीते ! इति वचः उदश्रु यथास्यात्तथा प्रलपितं निरर्थकमेवोक्तम्, तत्रागेव रावणेन सीताया नीततया तत्रत्युत्तराप्राप्तेरिति भावः। भर्त्तुः भरणकर्त्तुः धनिकस्य परिपाटीषु सेवारचनासु अलम् अत्यर्थं घटना प्रशंसायोजना न कृता अथवा का भर्त्तुः कुत्सितभर्त्तुः वदनपरिपाटीसु मिथ्याभाषणप्रकारेषु घटना उपपत्तिः न कृता, इति त्वं कथय, अपि तु सर्वैव कृतेत्यर्थः, तथापि ततो धनं न लब्धमिति भावः। अन्यत्र तु लङ्काभर्त्तुः रावणस्य वदनपरिपाटयां मुखपंक्तौ इषुघटना शरसंयोजना कृता अत एव रामत्वं दाशरथित्वं रामधर्म इति यावत् तत् आप्तं प्राप्तम, परन्तु कुशलं दारिद्रयायापाकरणेन भद्रङ्करं परिणामसुरसं वा वसु धनं यस्य तद्भावः, अन्यत्र कुशलवौ सुतौ पुत्रौ यस्याः सा सीता नाधिगता न प्राप्ता। शिखरिणीच्छन्दः।

अत्र शब्दशक्तिमहिम्ना पादत्रयव्यङ्ग्या प्रकृताप्रकृतयोः कवयितृरामयोरुपमा 'मयाप्तं रामत्वमि'ति वाच्यायाः रामत्वप्राप्तेरुपकारकतयैव वक्तुरभिप्रेतेति उपमाया वाच्याङ्गत्वम्।

तदेव दर्शयति—अत्र रामत्वमिति। अवचनेऽपि अनुक्तावपि शब्दशक्तेरेव शब्दशक्त्वभिधामूलव्यजनावृत्तिसामर्थ्यादेव रामत्वं रामसादृस्यं वक्तरीति शेषः। वचनेन तु 'मयाप्तं रामत्वमि'ति वाक्येन तु तदुक्ताविव्यर्थः, सादृस्यम् एकवाचकवाच्यत्वरूपं शाब्दमौपम्यं हेतुर्यस्य तत्तथोक्तम्, वक्तरि तादृशसादृश्यं विना रामस्याभेदरोपणासम्भवादित्याशयः। तादात्म्यापरोपणं रामत्वप्राप्त्या रामतादात्म्यारोपम्, तदारोपश्रच सादृश्यमूलक एवेति सादृश्यहेतुरित्यनेनोक्तम्। आविष्कुर्वता व्यञ्जयता वचनेनेति सम्बन्धः तद्गोपनं व्यङ्ग्यभूतरामसादृश्यस्य गूढत्वम् आपकृतं खण्डितम्, तद्गोपनात् सादृश्यस्य गुमीभूतत्वमुपपादितमिति भावः। एतेनाधिकचमत्कारित्वाभावेनास्योपमाध्वनित्वं न शङ्कनीयमिति सूचितम्। तेन सादृश्यस्य गोपनाकरणेन हेतुना वाच्यं "मयाप्तं रामत्वम्" इति पदाभिधेयं व्यङ्ग्यमपि झटिति बोध्यतया वाच्यमानं सादृश्यं रामतुल्यत्वं वाक्यार्थस्य आत्मना रामसादृश्य प्राप्तेः अन्वयोपपादकतया अन्वयप्रतियोगित्वेन सम्बन्धस्य सम्पादकतया,

अन्यथा 'अन्यस्य धर्मे अन्यः कथं लभेदिति मयाप्तं रामत्वम्' इत्यस्यानुपपत्तेः वारयितुमशक्यत्वादिति भावः। अङ्गतां नीतम् उत्कर्षतां प्रापित 'मयाप्तं रामत्वम्' इत्यभिधाय वक्त्रेति शेषः एवञ्च व्यङ्ग्यार्थरूपस्य सादृश्यस्य वाच्यादधिकातिशयत्वाभावेन गुणीभूतव्यङ्ग्यत्वमिति।

नन्वेवन्तर्हि वाच्यसिद्ध्यङ्गमित्यस्यैवोदाहरणं जातं न त्वितराङ्गस्येति चेत्? मैवम्, यत्रापाततः प्रतीतस्यार्थस्यानुपपत्तिर्व्यङ्ग्यं निरस्यति स वाच्यसिद्ध्यङ्गस्य विषयः, यत्र त्वापाततः प्रतीतस्य बाधेन तत्स्थानेऽऽत्मानमर्पयित्वा सम्बन्धं सम्पादयति सोऽस्य विषय इत्यनयोर्भेदः। न च तथापि तद्गोपनात् अगूढरूपगुणीभूतव्यङ्ग्यप्रभेद एवायमिनि वाच्यम्, तथात्वेऽपि इतराङ्गतानपायात्। न च 'रामत्वं प्राप्तम्' इत्यनेन रामाभेदप्राप्तिरेव प्रतीयते इति रूपकमेवेदमिति वाच्यम्, समानविभक्तिकत्वाभावात् भेदान्वयबोधस्याशाब्दत्वात्। न च श्लेषस्यायं विषय इति शङ्क्यः,—यत्र शब्देन द्वितीयोऽर्थः साक्षात्प्रतिपाद्यते स श्लेषस्य विषयः, यत्र तु शब्दसामर्थ्यापदपरोऽर्थ आक्षिप्यते न तु शब्देनोच्यते स व्यञ्जनाया एव विषयः। शब्दस्य साक्षात्प्रतिपादकं तत्रैव—यत्र शब्दप्रतिपादितोऽर्थः समभिव्याहृतशब्दान्तरेण साकं विवक्षितमन्वयं प्राप्नोति, यथा—'येन ध्वस्त' इत्यादौ। प्रकृते तु प्रतिपन्नो द्वितीयोऽर्थो रामेणेत्यन्वयप्रतियोगिपदाभावेनान्वयं लभते अतो रामेण यथा जनस्थानं भ्रान्तं मयापि तथा इत्यर्थो व्यञ्जनालभ्य एवेति बोध्यम्।

अर्थशक्तिमूलानुसरणरूपस्य लक्ष्यक्रमस्य वस्तुनो वाच्याङ्गतायामितराङ्गव्यङ्ग्यत्वं यथा—

**'आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गीमम्भोजिनीं क्वचिदपि क्षपितत्रियामः।**
**एतां प्रसादयति पश्य! शनैः प्रभाते तन्वङ्गि! पादपतेन सहस्ररश्मिः॥**

अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो रविकमलिनीवृत्तान्तध्यारोपेणैव स्थितः।

## रुचिरा

एवं रसादेरङ्गभूतत्वेन व्यङ्ग्यस्य गुणीभूतत्वमुदाहृत्य वाच्यार्थस्याङ्गभूतत्वेनापि व्यङ्ग्यस्य गुणीभाव इतराङ्गव्यपदेशार्ह इति सूचयन्नुदाहरति—"**जनस्थाने...**" इत्यादि।

"**जनस्थाने** जनानां स्थानं ग्रामनगरादि, तत्र (दण्डकारण्ये इति तु श्लिष्टोऽर्थः) **कनकमृगतृष्णाऽन्धितधिया** कनकस्य सुवर्णस्य मृगतृष्णा निष्फलाऽऽशा तयाऽन्धिता अन्धभूता या धीस्तया, यद्वा—अन्धिता धीर्यस्य तेन 'मये'ति शेषः (कनकमृगस्य तृष्णा लाभेच्छा तयाऽन्धिता धीर्यस्य वा तेन तया वेति तु श्लिष्टोऽर्थः)। **भ्रान्तं** भ्रमणं कृतम्। वै निश्चयेन। **देहि** सम्प्रददस्व (वैदेहि हे सीते! **इति** तु श्लिष्टः)। **इति**। **वचः**। **प्रतिपदम्** (इदं क्रियाविशेषणम्)। उदश्रु उद्गतमश्रु यत्र तद् यथा तथा (इदमपि क्रियाविशेषणम्)। **प्रलपितम्**। भर्तुः स्वामिनो धनिन इति यावत्। **वदनपरिपाटीषु** वदनानि कथनानि प्रार्थननीति यावत्, तेषां परिपाट्य आनुपूर्व्यस्तासु। **का**। **घटना**। **अलम्**। अनैवेत्यर्थः **कृता** धनिनः पुरस्तात् प्रार्थनानां सन्ताने का न घटना कृता? अपितु सर्वा अपि प्रार्थनाः कृता न तत्र काऽपि त्रुटिर्विहितेति भावः। यद्वा—काभर्तुरीषद्भर्त्तेति काभर्त्ता तस्य। 'ईषदर्थे।' ६/३/१०५ इति कादेशः वदनपरिपाटीषु वदनानि कथनानि प्रार्थनानि तेषां परिपाट्यस्तास्विति पूर्ववत्। घटना समर्थनार्था युक्तिः। अलम् कृता। यद्वा-लङ्कानां कुलटानां ननु दीनानां भर्त्ता पोषकस्तादृशस्य। 'लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च।' इति मेदिनी। वदनपरिपाटीषु स्तवनपरम्परासु। घटना कृता ('लङ्काभर्त्तुः रावणस्य वदनपरिपाटीषु घटना मस्तकानुपूर्व्ये बाणसम्पातघटनेति तु श्लिष्टोऽर्थः)। इत्थम्-**मया**। **रामत्वं** रामधर्म्मत्वम्। **आप्तं** प्राप्तं लब्धमिति यावत्।

तु किन्तु । **कुशलवसुता** कुशलं निपुणं स्वकुटुम्बपरिपोषणपयोगीति यावत् वसु धनं यस्य तस्य भावस्ता (कुशलवौ सुतौ यस्यास्तया सदृशी सीतेत्यर्थस्तु श्लिष्टः) । **न । अधिगता** लब्धा । अत्र श्लेषोपस्थितानां जनस्थानादिपदार्थानामभेदारोपाद्रामत्वोपपत्तिर्बोध्या । नानायत्नोत्तरमप्यलब्धधनस्य कवेरुक्तिरियम् । भट्टवाचस्पतेः पद्यमिदम् । शिखरिणीवृत्तम् ॥ २०८ ॥"

उदाहरणं सङ्गमयति—**इत्यत्रेत्यादिना** ।

**इत्यत्रेत्य**स्मिन्नुदाहृते पद्य इति यावत् । **'रामत्वं** रामधर्मः । **प्राप्तम् ।' इत्यवचने** इति कथनाभावे । **अपि । शब्दशक्तेः** शब्दनिवेशसामर्थ्यात् । **एव । रामत्वम्** । 'कवयितु'रिति शेषः । **अवगम्यते** बुध्यते । **वचनेन**'मयाऽऽप्तं रामत्वम्'इति कथनेन । **तु पुनः । सादृश्यहेतुकतादात्म्यारोपणं** सादृश्यं रामेण समं साधर्म्यं तद्धेतुकं यत् तादात्म्यारोपणं शब्दशक्तिद्वाराऽऽत्मनि वक्तरि रामत्वस्यारोपस्तत् । **आविष्कुर्वता**'वाच्यतां नीत्वा ध्वन्यतां निवर्त्य च पामरैरपि बोद्धव्यतां नयता । **तद्गोपनं** तस्य गोपनं शब्दशक्तिमात्रवेद्यत्वं ध्वन्यत्वमिति यावत् । **अपाकृतम् । तेन** सादृश्यस्य गोपनापाकरणेन । **वाच्यम**भिधया प्रतिपाद्यम् । **सादृश्यम् । वाकग्यार्थान्वयोपपादकतया** वाक्यार्थस्य रामसादृश्यावगमकस्य पदार्थविशेषस्यान्वयोपपादकतासम्बन्धसङ्कटकता तया । **अङ्गताम् । नीतम्** । अयम्भावः—स्वस्य रामेण समं साधर्म्यं प्रतिपाद्यमानं यावत् पादत्रयं व्यञ्जनया बोध्यं सन्नाभिधेयतां गतम्, 'मयाऽऽप्तं रामत्व'मिति वचनेन चाभिधेयतां नीतम् इति तस्य व्यङ्ग्यस्य वाच्याङ्गत्वम् । एवं च—शब्दशक्तिमूलकानुरणनेन यच्चमत्कारातिशयेनोपमाया ध्वन्यमानत्वं तत् न्यग्भूतम् । इति । यथा वा—'आगत्य सम्प्रति वियोगविसंष्टुलाङ्गीमम्बोजिनीं क्वचिदपि क्षपितत्रियामः । एतां प्रसादयति पश्य शनैः प्रभाते तन्वङ्गि ! पादपतनेन सहस्त्ररश्मिः ॥" इति, अत्र हि विनैवानुनयमपनीतमानां नायिकां प्रति सख्या उपालम्भोक्तौ नायकवृत्तान्तोऽर्थशक्त्या व्यज्यमानो वाच्ये रविकमलिनीवृत्तान्तेऽभिन्नतयाऽऽरोप्यमाण एतस्याङ्गतां गतः ।

काक्वाक्षिप्तं यथा—

**'मथ्नामि कौरवशतं समरे न कोपाद्-**
**दुःशासनस्य रुधिरं न पिबाम्युरस्तः।**
**संचूर्णयामि गदया न सुयोधनोरू**
**संधिं करोतु भवतां नृपतिः पणेन॥'**

अत्र मथ्नाम्येवेत्यादिव्यङ्ग्यं वाच्यस्य निषेधस्य सहभावेनैव स्थितम्।

---

## विवृतिः

मथ्नामीति। सहदेवं प्रति संधिकरणसहिष्णोर्भीमस्योक्तिरियम्। सर्वत्र सामीप्ये लट्। उरस्तो वक्षःस्थलात्। सुयोधनेति दुर्योधनस्यैव नामान्तरम्। नृपतिर्युधिष्ठिरः। भवतामिति 'अभिमतम्' इति शेषः। यद्वा, भवतां नृपतिरित्यनेन स्वाभीष्टानाचरणात्स्वनृपतित्वाभावसूचनम्। पणेन कुशस्थल्यादिग्रामपञ्चकप्रापणरूपेण। मथ्नाम्येवेति प्रबलतरपरिपन्थिसंधिप्रसङ्गसमुज्जृम्भमांणसंरम्भविसंष्ठुलकण्ठतालुसंयोगकृतेन शिरश्चालनसहोत्पन्नेन नञा झटित्ययोगव्यवच्छेदो व्यज्यते। स एवकारेण दर्शितः। सहभावेनेति। वाच्यप्रतीतिसमकालमेव दीप्तभावगद्गदसाकाङ्क्षतया काकुरवेण व्यङ्ग्यप्रतीति वाच्यमाभातमात्रं व्यङ्ग्यमेव हठादिवाकृष्यमामं वाच्यायमानम्। अत एवात्र 'मुख्यार्थबाधाद्यनुसरणविलम्बासहत्वाल्लक्षणा' इति प्राचीनः। 'मुख्यार्थबाधो झटित्यर्थपर्यवसानाय प्रतीयते' इति नवीनाः। वाच्यार्थप्रतीतिसमये व्यञ्जनाया अर्थबोधनासामर्थ्यमेव प्राचीनमतास्वरसः। केचित्तु—'न मथिष्यामीत्यादिरीत्या अपरनञ्र्थ आक्षिप्यते। तथा च नञ्र्थद्वयेनैवकारार्थः पर्यवस्यति' इत्याहुः। तन्न। वाच्यार्थस्यैव व्यञ्जनयोपस्थितेरसंभवात्, वाच्यव्यङ्ग्ययोर्युगपदुपस्थित्ययोगाच्च॥

## विज्ञप्रिया

काक्वाक्षिप्तमिति—काक्का उच्चारणेन शिरश्चालनसहकृतध्वनिविशेषणाक्षिप्तम्। शाब्दबोधस्य प्राक् पदार्थविधया सहसा प्रत्यायितमित्यर्थः। मथ्नामीति—दुर्योधनेन सह सन्धिकरणे प्रवृत्तं युधिष्ठिरं श्रुत्वा क्रुद्धस्य भीमस्य सहदेवं प्रत्युक्तिरियम्। भवतामित्यनेन अस्माकम् असमीहितकारित्वात् नास्माकं नृपतिरिति सूचितम्। सुयोधनमिति दुर्योधनस्यापरं नाम कृतकौरवशतवधप्रतिज्ञस्य तत्क्रोधसत्त्वेन मथ्नामीत्युक्तिर्बाधितार्था। अतो नञः शिरश्चालनसहकृता काकुः प्रतीयते। तया व्यञ्जनया अपरनञोऽर्थोपस्थापनात् न मथ्नामीत्यर्थो लभ्यते। तच्च मथनायोगव्यवच्छेदरूपम्। तदाह—अत्र मथ्नाम्येवेति। आदिपदात् पिबाम्येव इत्यादिकं बोध्यम्। इत्यादि व्यङ्ग्यमिति—इत्यादि एकदेशरूपं व्यङ्ग्यमित्येवार्थः। एवकारार्थक नञ्द्वये एकनञ्र्थस्यैव व्यङ्ग्यत्वात्।

## कुसुमप्रतिमा

मथ्नामीति। वेणीसंहारनाटके युधिष्ठिरस्य सन्धिप्रवृत्तिं ब्रुवन्तं सहदेवं प्रति भीमेनोक्तमिदम्। समरे कोपात् कौरवशतं दुर्योधनादिभ्रातृशतं न मथ्नामि? पूर्वप्रतिज्ञानुसारेण न निहन्मि भविष्यत्सामीप्ये वर्त्तमाना। अन्यत्राप्येवम्। अपि तु मथ्नाम्येवेत्यर्थः। दुःशासनस्य उरस्तो वक्षःस्खलात् रुधिरं न पिवानि? अपि तु पिवाम्येव।

गदया सुयोधनस्य दुर्य्योधनस्य ऊरु न सञ्चुर्णयामि । अपि तु सम्पूर्णयान्येव । भवतां नृपतिः युधिष्ठिरः आत्मनः प्रतिज्ञाभङ्गकरणे प्रवृत्तत्वात् स मे न नृपतिरिति भावः, पणेन इन्द्रप्रस्थादिग्रामपञ्चकमात्रप्राप्तिरूपेण सन्धि करोत् ।

अत्रेति । निषेधस्य न मथ्नामीत्यादेः, सहभावेनैव स्थितं युगपत् प्रतीतिविषयत्वे नैव श्लोके विद्यमानम् । तथा च यथा निष्पीड्य पात्ररक्षितेक्षुरसापेक्षया स्वयं चर्वितक्षुदण्डर से माधुर्य्यमधिकतरं प्रतीयते; तथा वाच्यार्थ सहभावेन प्रतीयमानव्यङ्ग्यार्थपेक्षया किञ्चिद्विविच्य प्रतीयमान एव व्यङ्ग्यार्थे माधुर्यमधिकतरं प्रतीयत इति गुणीभूतव्यङ्ग्यत्वमत्रेति भावः ।

## विमला

मथ्नामीति ।—सहदेवं प्रति सन्धिकरमासहिणोः भीमसेनस्योक्तिरियम् । समरे—युद्धे, कोपात् कौरवाणां—कुरुवंशीयानां, धृतराष्ट्रसुतानामित्यर्थः, शतं न मथनामि ?—-न मर्दयामि ? न नाशयामीत्यर्थः; दुःशासनस्य उरस्तः;—वक्षसः, रुधिरं—रक्तं, न पिबामि ? गदया सुयोधनस्य ऊरु न सञ्चूर्णयामि ? अव काकुवशात् अपि तु मथ्नाम्येव, पिबाम्येव, सञ्चूर्णयाम्येवेत्यर्थौ बोध्यः । नृपतिः—युधिष्ठिर इत्यर्थः पणेन—इन्द्रम्रस्थादिग्रामपञ्चकप्रापणरूपेणविनिमयेन, भवताम् अभिमतमिति शेषः, सन्धिं करोतु; अन्यत्र,—भवता नृपतिः,—भवदभिमतकार्य्यकारितयाऽभिमती राजा युधिष्ठिर इत्यर्थः, [एतेन स्वाभीष्टाऽनाचरणात् स्वनृपतित्वाभावसूचनम्] । अत्र व्यङ्ग्यं, वाच्यार्थेन सहैव प्रतीयते इति चमत्कारित्वस्यापगमात् गुणीभूतव्यङ्ग्यत्वमिति बोध्यम् । वसन्ततिलकं वृत्तम् । वेणीसंहारस्येदं पद्यम् ।

अत्रेति ।—अत्र मथनाम्येवेत्यादि [आदिना पिबाम्येव सञ्चूर्णयाम्येवेत्यनयोः ग्रहणम्] । व्यङ्ग्यं वाच्यस्य—न मथ्नाम्येवेत्याद्यर्थरूपस्य, निषेधस्य—निषेधनरूपस्य, सहभावेन एव स्थितम् । [अत्र प्रबलतरपरिपन्थिसन्धिप्रसङ्गसमुज्जृम्भमाणसंरम्भविसंष्ठुलकण्ठतालुसंयेगकृतेन शिरयालनसहोत्पन्नेन नञा ("न कोपात्" इत्यादिवाक्यगतेन निषेधकार्थेन शब्देन) झटिति अयोगव्यवच्छेदो व्यज्यते, स एवकारेण (काक्वात्मकतया निश्रवायकतां गतेन न शब्देन) दर्शितः] । अयं भावः,—वाच्यप्रतीतिसमकालमेव दौप्तभावगद्गदाकाङ्क्षतया काकुरवेण व्यङ्ग्यप्रतीतिः, अतः तन्मात्रं व्यङ्ग्यमेव एवादिभिराकृष्यमाणं वाच्यायमानं भवति; अत एवात्र "मुख्यार्थबाधाद्यनुसरणविलम्बासहत्वाल्लक्षणा" इति प्राचीनाः, "मुख्यार्थबाधो झटिति अर्थपर्य्यवसानाय प्रतीयते" इति च नवीनाः, वाच्यार्थप्रतीतिसमये व्यञ्जनाया अर्थबोधसामर्थ्यमेव प्राचीनमतास्वरसः । केचितु—"न मथिप्यामि इत्यादिरीत्या अपरनञर्थ आषिप्यते; तथा च नञर्थद्वयेन एवकारार्थः पर्य्यवस्यति" इत्याहुः तन्न; वाच्यार्थस्यैव व्यञ्जनयोपस्थितेरसम्भवात्, वाच्यव्यङ्ग्योः युगपत् उपस्थितत्ययोगाच्च इति ।

## लक्ष्मी

काक्वाक्षिप्तमिति । काकुः उच्चारणेन शिरश्चालनसहकृतध्वनिविशेषस्तया आक्षिप्तं शाब्दबधात्राक् पदार्थविधया झटिति प्रत्यायितमित्यर्थः । काक्वाक्षिप्तव्यङ्ग्यमुदाहरति—मथ्नामीति । वेणीसंहारे प्रथमेऽङ्के दुर्योधनेन सह सन्धिकरमे प्रवृत्तं युधिष्ठिरं श्रुत्वा सन्धिकरमासहिष्णोः भीमसेनस्य सहदेवं प्रत्युक्तिरियम् । अहं समरे युद्धे कोपात् कौरवाणां दुर्योधनादीनां शतं न मथ्नामि । अत्र प्रतिज्ञातकुरुकुलक्षयभीमसेनस्य 'न मथ्नामि' इत्युक्तिर्विरुद्धेति नञा शिरश्चालनसहकृता काकुः प्रतीयते । तथा च काका नञर्थान्तरं प्रतीयते, तेन 'न मथ्नामि' इति न अर्थात् मथ्नाम्येवेत्यवधारणं गम्यते । एवमग्रेऽपि सर्वत्र । दुःशासनस्य उरस्तो हृदयात् रुधिरं शोणितं न

पिबामि, अपि तु पिबाम्येव। सुयोधनमिति दुर्योधनस्यापरं नाम। दुःखेन योधनीयत्वाभिप्रायेण दुर्योधनपदं त्यक्त्वा सुयोधनपदप्रयोगः। तस्य ऊरू सक्थियुग्मं गदया न सञ्चूर्णयामि, अपि तु सञ्चूर्णयाम्येव भवतां नृपतिः राजा युधिष्ठिरः न तु मम प्रजानां वा स्वबुद्धया राजपारत्यागादिति भावः, पणेन—

**'इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतम्।**

**देहि मे चतुरो ग्रामान् पञ्चमं किञ्चिदेव तु॥'**

इत्युक्तेन ग्रामपञ्चकरूपेण सन्धिं मैत्रीं करोत्वित्यर्थः। अभ क्रोधातिशायान्मथनादौ वर्त्तमानत्वं बोध्यम्। यद्वा 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा' इति पाणिनिसूत्रेण वर्त्तमानसामीप्ये भविष्यति लट्। वसन्ततिलकाच्छन्दः।

अत्र किं व्यङ्ग्यं कथं तस्य गुणीभाव इत्यत आह—अत्रेति। प्रतिज्ञातकुरुकुलक्षयस्य 'न मथ्नामी'त्याद्युक्तिर्बाधितेति नञ्सु काकुः प्रतीयते, तया च काका नञर्थान्तरं बोधयति तेन 'न मथ्नामि' इति न किन्तु मथ्नाम्येवे(क)त्यवधारणं व्यङ्गयम्, तदेव मथ्नाम्येवेत्येवकारेण दर्शितः। आदिपदात् 'पिबाम्येवेत्यादिकं बोध्यम्। इत्यादिव्यङ्ग्यमिति। इत्याद्येकदेशरूपं व्यङ्ग्यं काकाक्षिप्तमिति सम्बन्धः अतो विरोधिलक्षणया अपि नायं विषयः मुख्यार्थबाधाद्यनुसन्धानात्प्रागेव काका विक्षितार्थोपस्थितेः। ननु मथ्नाम्येवेत्यादिव्यङ्ग्यस्य चमत्कारित्वे ध्वनित्वमेव स्यात् तत्कथं गुणीभूतव्यङ्ग्यत्वमत आह—वाच्यस्येति। निषेधस्य 'न मथ्नामि' इत्यादेः सहभावेनैव समकालं प्रतीयमानत्वेनैव स्थितं व्यवस्थितमित्यर्थः। स्थितस्य वाच्यार्थस्य व्यङ्ग्यार्थोपस्थितावनुपयोगात् काकुरेव नियमविशिष्टविधिव्यञ्जिका इत्यर्थः। एवञ्च यथा निष्पीडय पात्रस्थापितेक्षुरसापेक्षया स्वयं चर्वितेक्षुदण्डरसे माधुर्य्यातिशयं प्रतीयते तथा वाच्यार्थरूपभावेन व्यज्यमानव्यङ्ग्यार्थपेक्षया किञ्चिद्विचार्यं व्यज्यमान एव व्यङ्ग्यार्थो माधुर्य्यातिशयः प्रतीयत इति भवति गुमीभूतव्यङ्ग्यत्वम्, एतेन ध्वनित्वनिरासो बोध्यः। यद्यप्यगूढव्यङ्ग्यान्तःपातित्वमस्य सम्भवति तथापि काकुरूपविच्छित्तिविशेषात्पृथग्ग्रहमं बोध्यम्।

## रुचिरा

काक्वाक्षिप्तमुदाहर्त्तुमाह—**काक्वेत्यादि**।

**काक्वाक्षिप्तं** काक्वा ध्वनिविशेषेणाक्षिप्तं झटिति बोध्यतां नीतम्। 'व्यङ्ग्य'मिति प्रकृतम्। **यथा—"मथ्नामी"**'त्यादि।

**"समरे** सङ्ग्रामे। **कोपात्। कौरवशतं** कौरवाणां कुरुपुत्राणां दुर्योधनादीनां शतं तत्। **न। मथ्नामि। दुःशासनस्य। रुधिरम्। उरस्त** उरसो वक्षः स्थलं निर्भद्येति यावत्। ल्यबर्थेयं पञ्चमी। **न। पिबामि। गदया। सुयोधनोरू** सुयोधनस्य दुर्य्योदनस्योरू जङ्घे ते। **न। सञ्चूर्णयामि। भवतां** (नतु ममेति त्वाक्षिप्तोऽर्थः)। **नृपतिः** राजा युधिष्ठिर इति यावत्। **पणेन** 'इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतम्। देहि मे चतुरो ग्रामान् पञ्चमं कञ्चिदेव तु॥' इत्युक्तयोन्नयेन। **सन्धिं** मैत्रीं विरोधशान्तिं वा। **करोतु**। वेणीसंहारे सन्धिश्रवणेन कुपितस्य भीमसेनस्य सहदेवं प्रत्युक्तिरियम्। वसन्ततिलकं वृत्तम्॥ २०९॥'

उदाहृते पद्ये किं व्यङ्ग्यमित्यपेक्षायामाह—**इत्यत्रेत्यादि**।

**इत्यत्र** प्रागुदाहृते पद्ये। **'मथ्नामि कौरवशतम्'** इति शेषः। **एव** 'नति मथ्नामि' इति शेषः।' **इत्यादि**। 'आदिना—'पिबाम्येव, सञ्चूर्णयानम्येवे'त्यनोग्रहणम्। **व्यङ्ग्यम्। वाच्यस्य। निषेधस्य** 'न मथ्नामीत्यादिपदार्थभूतस्य मथनादिविषयकप्रतिषेधस्य। **सहभावेन एव** 'न तु पार्थक्येने'ति शेषः। **स्थितम्**। अयम्भावः—कुपितस्य

भीमसेनस्य प्रतिज्ञात्रयम्, 'दुर्योधनादीन् अहमेव शतसङ्ख्यकान् धात्त्रराष्ट्रान् निहनिष्यामि' इत्येका, 'दिःशासनस्य वक्षो विदार्य्य रुधिरं पास्यामी' त्यन्या, 'दुर्य्योधनस्य जङ्घे गदया चूर्णयिष्यामी'ति तृतीया च प्रतिज्ञा। इत्येवं प्रतिज्ञात्रयवतः 'न मथ्नामी'त्यादिः प्रतिज्ञाविरुद्धोक्तिरिति नञि काकुः; तया च काक्वा नञर्थान्तरं प्रतीयमानं 'न मथ्नामीति, न,' 'न पिबामीति, न,' 'न सञ्चूर्णयामीति, न' इति प्रकृतनञर्थान्यवयीत्यभावरूपं 'मथ्नाम्येवे'त्याद्यवधारणं समुन्नीयते। स्फुटं चैवं व्यङ्ग्यस्य काक्वाऽऽक्षिप्तत्वम्। आक्षिप्तत्वं नाम झटिति प्रत्याय्यमानत्वम्। तत्सर्वमभिप्रेत्यैव कविराजैः 'वाच्यस्य निषेधस्य सहभावेनैव स्थित' मित्युक्तम्। एवकारेण—"तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः। विराटस्यावासे स्थितमनुचितारम्भनिभृतं गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥" इत्यादौ 'मयि न योग्यः खेदः, कुरुषु तु योग्य' इति इति काक्वा प्रतीयमानस्यार्थस्य व्यवच्छेदः। इति दिक्।

**'दीपयन्रोदसीरन्ध्रमेष ज्वलति सर्वतः।**
**प्रतापस्तव राजेन्द्र! वैरिवंशदवानलः॥'**

अत्रान्वयस्य वेणुत्वारोपणरूपो व्यङ्ग्यः प्रतापस्य दावानलत्वारोपसिद्ध्यङ्गम्।

---

## विवृतिः

वाच्यसिद्ध्यङ्गं व्यङ्ग्यमुदाहरति—दीपयन्निति। प्रकाशयन्नित्यर्थः। रोदस्योर्द्यावापृथिव्यो रन्ध्रमवकाशं ज्वलति दीप्यते। अत्रेति। अन्वयस्य कुलस्य प्राथमिकबोधे दवानलस्य शत्रुगोत्रसंबन्धासंभवोपलम्भादप्रामाण्यग्रहः, ततः प्रतापस्य दावानलत्वोपपत्त्या व्यङ्ग्यं कुलस्य वेणुत्वारोपणमभिसंदधतः स्रोतुर्वैरिकुलवेणुदवानल इति द्वितीयबोधः। आरोप्यमाणस्य वेणोर्दवानलसंबन्धित्वमक्षतमित्यनुपपत्तिनिरासेन दवानलत्वारोपणस्याङ्गं व्यङ्ग्यंरूपकं प्रतापस्य दाहकत्वेन कविपरम्परासिद्धपिशङ्गत्वेन च दवानलसादृश्यं प्रसिद्धमिति तद्रूपकं वैरिकुलस्य वेणुत्वारोपणकारणमिति श्लिष्टनिबन्धनं परम्परितरूपकमितदम्। क्वचिच्च प्रकरणादिनियमाभावेन रूप्यरूपकयोरुभयोरेव शिलषशब्दवाच्यत्वम्। यथा—'विद्वन्मानसराजहंस—' इत्यादि। प्रकृते तु नियन्त्रणवशाद्रूपकस्य व्यङ्ग्यत्वमेवेत्यवधेयम्॥

## विज्ञप्रिया

वाच्यसिद्ध्यङ्गमुदाहरति—अनुपपन्नस्य वाच्यार्थस्य यद् व्यङ्ग्यान्वयेनैव सिद्धिः तादृशं व्यङ्ग्यं वाच्यसिद्ध्यङ्गम्। दीपयन्निति—रोदसीरन्ध्रं द्यावापृथिव्योरन्तरालम्। अत्रेति। अन्वयस्य वैरिकुलस्य वंशपदवाच्यस्य वेणुत्वारोपणरूपो व्यङ्ग्य इति कुलवेणुद्वयार्थकस्य वंशपदस्य प्रकरणात् कुले नियन्त्रणेन वेणो स्तद् व्यङ्ग्यत्वेन तद्रूपणस्यापि व्यङ्ग्यत्वात् दवानलत्वारोपसिद्ध्यङ्गमिति कुले दवानलबाधेन वेणावेव तद्बा बात्। अत्रेदमवधेयम्। यदि प्रकरणवशात् अनेकार्थस्य वंशपदस्य प्रथमं कुलबोधकत्वम्; तदैव वेणुरूपोऽर्थोव्यङ्ग्यो भवति तदेव तु न; दवानलस्य कुले बाधात्। किन्तु कुलवेण्योरुभयोरेकदा एव दवानलान्वयार्थ तात्पर्य्याद् वेणुस्तु अप्राकरणिको व्यङ्ग्य एवेति वाच्यम्। दवानलरूपणस्यापि तात्पर्य्यविषयत्वेन तस्य कुले बाधेन तदुपपादनतया वेणोरपि प्राकरणिकत्वात्। अन्यथा "आहवे जगदुद्दण्ड" इत्यादावपि परम्परितरूपकं न स्यात्। किन्तु वाच्यसिद्ध्यङ्गमेंव तदपि स्यात्। भ्रमिमरतिमित्यादौ तु जलदे भुजगहरूपणं न स्यात्। किन्तु वाच्यसिद्ध्यङ्गमेव तदपि स्यात्। भ्रमितमरतिमित्यादौ तु जलदे भुजगरूपणं श्यामत्वेनापकारित्वेन च जले हलाहलरूपणं विनापि आपाततः सिध्यत्येवेति हलाहलमप्राकरणिकमित्यतो व्यङ्ग्यमेव। परन्तु प्रणिधाने सति जलस्य भुजगजन्यत्वाऽसम्भवेन भुजगरूपणाऽसिद्धया तत्सिद्धिकारित्वेन पश्चाज्जले हलाहलरूपणमिति।

## कुसुमप्रतिमा

वाच्यसिद्धाङ्गरूपं गुणीभूतव्यङ्ग्यं दर्शयति दीपयन्निति। राजस्तुतिरियम्। हे राजेन्द्र! वैरिवंशः शत्रुकुलमेव वंशी वेणुः तव दवालनो दावाग्निस्वरूपः एव तव प्रतापः रोदसीरन्ध्रं स्वर्गमर्त्ययीरन्तरालं दीपयन् प्रकाशयन् सर्वतो ज्वलति राजते।

अत्रेति अन्वयस्य वंशशब्दवाच्य कुलस्य अन्वये इत्यर्थः वेणुत्वारोपणरूपी वंशदण्डत्वारोपात्मकः व्यङ्ग्यो व्यङ्ग्यार्थः प्रतापस्य या दवानलत्वारोपसिद्धिस्तस्या अङ्गः निर्वाहकः। तथा च प्रताप इति दावानल इति च प्रथमाविभक्तिद्वयम् अन्यथानुपपत्त्या प्रतापे दवानलत्वारीपपुर सरमेव तयोरभेदं वक्ति; सुतराच प्रतापे दवानलत्वारोपनिबन्धनभेदरूपवाच्यार्थस्य सिद्धिनिर्वाहको वैरिकुले वंशदण्डत्वारोपरूपो व्यङ्ग्यार्थ एव। अन्यथा प्रतापे दवानलत्वारोपणसमञ्जसमेव स्यात् सादृश्यघटकाभावात्। अतएव ईदृशश्लिष्टपरम्परितरूपकस्य "यत्र कस्यचिदारोपः परारोपणकारणम् इति वक्ष्यमाणलक्षमे कारणपदं वक्ष्यते। अतएवात्र सादृश्यमात्रनिर्वाहकतया व्यङ्ग्यारोपस्य वाच्यारोपादनधिकचमत्कारितया गुणीभूत व्यङ्ग्यत्वम्। यत्र एकस्याभावे अन्वस्यानुपपत्तिस्तत्र वाच्यासिद्ध्यगम्, यत्र तु अन्वतराभावेऽपि अन्वतरोपपत्तिस्तत्र इतराङ्गमित्यनयोः पार्थक्यम्।

## विमला

वाच्यसिद्ध्यङ्गं व्यङ्ग्यमुदाहरति, दीपयन्निति।—राज्ञः स्तुतिरियम्। हे राजेन्द्र ! वैरिणां—शत्रूणां,—वंशेषु—कुलेषु, यद्वा वैरिणः,—शत्रवः, एवं वंशाः,—वेणवः, तेषु, दवानलः,—दावाग्निः, एषः एव प्रतापः,—कोषदण्डजं तेजः, ("स प्रभावः, प्रतापश्च यत्तेजः कोषदण्डनम्" इत्यमरः) रोदसीरन्ध्रं—द्यावापृथिव्योरन्तरालं, दीपयन्—भासयन्, सर्वतः,—सर्वासु दिक्षु, ज्वलति।

अत्रेति।—अत्र अन्वयस्य—वंशस्य, वेणुत्वस्यारोपणरूपः, व्यङ्ग्य—व्यञ्जना बोध्योऽर्थः। प्रतापस्य दवानलत्वारोपस्य सिद्धेः अङ्गं—साधकम, उपपादकमित्यर्थः, अन्यथा प्रतापे दवानलन्वारोपणसङ्गतं स्यादिति भावः; यत्र व्यङ्ग्यं विना वाच्यार्थस्य नोपपत्तिस्तवैव वाच्यसिद्ध्यङ्गस्यावसरः; यत्र तु न तथा, तव इतराङ्गमित्यनयोर्भेदः, इति वाच्यार्थस्य साधकतया च अत्र व्यङ्ग्यस्य न तथा चमत्कारित्वमिति गुणीभूत व्यङ्ग्यत्वमिति च ध्येयम्। इदं तत्त्वम्,—अन्वयस्य (कुलस्य) प्राथमिकबोधेदवानलस्य शवुगोत्रसम्बन्धासम्भवोपलम्भादप्रामाण्यगह ततः प्रतापस्य दवानलत्वोपपत्त्या व्यङ्ग्यं कुलस्य वेणुत्वारोपणमभिसन्दधतः श्रोतुः वैरिकुलवेणुदवानल इति द्वितीयबोधः, आरोप्यमाणस्य वेणीः दवानलसम्बन्धित्वमक्षतम् इत्यनुपपत्तिनिरासेन दवानलत्वारोपणस्याङ्ग व्यङ्ग्यरूपकं प्रतापस्य दाहकत्वेन कविपरम्परासिद्धपिशङ्गत्वेन च दवानलसादृश्यं प्रसिद्धिमिति तद्रूपकं वैरिकुलस्य वेमुत्वारोपणकारणमिति श्लिष्टनिबन्धनं परस्परितरूपकमिदम्। क्वचिद्र प्रकरणादिनियमाभावेन रूप्यरूपकयोरुभयोरेव शिलष्टशब्दवाच्यत्वम्; यथा,—"विद्वन्मानराजहंस" इत्यादौ, प्रकृते तु नियन्त्रणवशात् रूपकस्य व्यङ्ग्यत्वमेवेत्यवधेयम्। इति।

## लक्ष्मी

वाच्यसिद्ध्यङ्गव्यङ्ग्यमुदाहरति—दीपयन्निति। राज्ञः प्रशंसेयम्। हे राजेन्द्र ! वैरिवंशः शत्रुकुलमेव वंशो वेणुः तत्र दावानलः दावाग्निस्वरूपः, एष तव प्रतापः रोदसीरन्ध्रं द्यावापृथिव्योरन्तरालं दीयपन् प्रकाशयन् सर्वतो ज्वलति दीप्यते।

अत्रेति—अन्वयस्य वैरिकुलस्य वंशपदवाच्यस्य अन्वये इत्यर्थः, वेणुत्वारोपणरूपः वंशदण्डत्वारोपात्मकः व्यङ्ग्यो व्यङ्ग्यार्थः, प्रतापस्य या दवानलत्वारोपसिद्धिस्तस्या अङ्गम् उपकारकः। तथा च कुलवेणुद्वयार्थकस्य वंशपदस्य प्रकरणात् कुले नियन्त्रणेनवेणोस्तद्द्वयङ्ग्यत्वेन तद्रूपणस्यापि व्यङ्ग्यत्वात् दवानलत्वारोपसिद्ध्यङ्गमिति कुले दवानलबाधेन वेणावेव तदबाधात्। अथ च प्रताप इति दवानल इत्युभयत्र

प्रथमाविभक्तिः अन्यथानुपपत्त्या प्रतापदवानलत्वारोपपूर्वकमेव तयोस्तादात्म्यं प्रतिपादयति, एवञ्च प्रतापे दवानलत्वारोपनिबन्धनं तादात्म्यरूपवाच्यार्थस्य सिद्धिनिर्वाहको वैरिकुले वंशदण्डत्वारोपरूपो व्यङ्ग्यार्थ एव अन्यथा सादृश्यघटकपदाभावेन प्रतापे दवानलत्वारोपणासम्भवात्। अत्र हि सादृश्य मात्रनिष्पादकतया व्यङ्ग्यारोपस्य वाच्यारोपादनधिकचमत्कारित्वेन गुणीभूतव्यङ्ग्यत्वम्।

## रुचिरा

वाच्यसिद्ध्यङ्गमुदाहरति—"**दीपय**'न्नित्यादिना।

"**हे राजेन्द्र ! रोदसीरन्ध्रं** रोदस्योद्योवापृथिव्यो रन्ध्रं विवरं तत्तथोक्तम्। 'भूद्यावौ रोदस्यौ रोदसी च ते।' इत्यमरः। **दीपयन्** प्रकाशयन्। **एषः। वैरिवंशदवानलो** वैरिण एव वंशा वेणवस्तेषां दवो वनं तस्यानलः तद्रूप इति भावः। **तव। प्रतापः। सर्वतः। ज्वलति** दीप्यते ॥ २१० ॥"

वाच्यसिद्ध्यङ्गतां दर्शयति-**इत्यत्रे**त्यादिना।

**इत्यत्र। अन्वयस्य** वंशस्य वैरिवंशस्येति यावत्। **वेणुत्वारोपणरूपः। व्यङ्ग्यः।** स च-**प्रतापस्य। दावानलत्वारोपसिद्ध्यङ्गं** दवानलस्यारोपस्तस्य सिद्धिस्तस्या अङ्गम्। अयम्भावः—प्रतापस्य दवानलत्वं वाच्यम्, तेन दावानलत्वारोपस्य सिद्ध्यर्थं वैरिवंशे वंशत्वारोप उपपाद्यः, प्रतापस्य वैरिवंशसंहारमूलत्वात्; स च व्यङ्ग्यः। आरोपणं च दवानलस्य साक्षादात्मना वैरिवंशत्वासम्भवात्। इत्येवमेष व्यङ्ग्येऽर्थस्तस्य वाच्यस्य सिद्धावङ्गभूतः। अत एव-तर्कवागीशा अप्याहुः, अन्वयस्य कुलस्य प्राथमिके बाधे दवानलस्य शत्रुगोत्रसम्बन्धासम्भवोपलम्भादप्रामाण्योपग्रह, ततः प्रतापस्य दवानलत्वोपपत्त्या व्यङ्ग्यं कुलस्य वेणुत्वारोपणसन्दधतः श्रोतुर्वैरिकुलवेणुदवालन इति द्वितीयबोधः। आरोप्यमाणस्य वेणोर्दवानलसम्बन्धित्वमक्षतमित्यनुपपत्तिनिरासेन दवानलत्वारोपणस्याङ्गं व्यङ्ग्यरूपकं प्रतापस्य दाहकत्वेन कविपरम्परासिद्दपिशङ्क्त्वेन च दवानलसादृश्यं प्रसिद्धमिति तद् रूपकं वैरिकुलस्य वेणुत्वारोपणकारणमिति श्लिष्टनिबन्धनं परम्परितरूपकमिदम्।' इति। ननु वेणोर्न व्यङ्ग्यत्वम्, सत्यपि राजप्रतापवर्णनप्रसङ्गेन प्रसिद्धिबलादभिधयैव वंशपदेन वेणूपस्थिते। प्रसङ्गात् हि प्रसिद्धिः खलु बलीयसी, अन्यथा निहतार्थत्वविलोपप्रसङ्गात्, प्रसङ्गबलादप्रसिद्धार्थस्यार्थस्य प्रागुपस्थितौ तद्दोषस्यानवसरात्। इति। चेत् उच्यते, प्रसिद्धा वेणूपस्थितिरिति कुलभिन्ने वेणौ दवाभिन्नवैरित्वावगमः। सर्वथा वेणुप्रत्यायनं तु व्यञ्जनयैव, अभिधाया विरामात्। ननु पुनरभिधयैव वेणुप्रत्यायनं भवतु, किं व्यञ्जनयेति न शङ्क्यम्, एवं सति अभिधायाः पुनरुत्थानकल्पनापत्तेः पुनरुत्थानस्य चासम्भवात् एवं च निहतार्थत्वं श्लेषावदुष्टम्। इति च बोध्यम्। यथा वा—"गच्छाम्यच्युत ! दर्शनेन भवतः किं तृप्तिरुत्पद्यते ? किं त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा। इत्यामन्त्रणभङ्गिसूचितवृथाऽवस्थानखेदालसामाश्लिष्यन् पुलको कराञ्चिततनुर्गोपी हरिः पातु वः ॥". इत्यत्र तृतीयपादार्थस्य अच्युतादिपदव्यङ्ग्योऽर्थः सिद्धावङ्गभूतः।

'हरस्तु किंचित्परिवृत्तधैर्यः— इत्यादौ (१९९ पृ.) विलोचनव्यापारचुम्बनाभिलाषयोः प्रधान्ये संदेहः ।

---

## विवृतिः

संदिग्धप्राधान्यं व्यङ्ग्यमुदाहरति—हरस्त्विति । आकालिकवसन्ते पार्वतीमालोकमास्य हरस्य धैर्य-विपर्ययवर्णनमिदम् । परिवृत्तधैर्योनष्टधृतिः । लोचनेति । मुखमात्रे लोचनव्यापारेण चुम्बनाभिलाषः संभाव्यते । न च द्वयोरेव शृङ्गारव्यञ्जकतया प्राधान्यमिति तुल्यप्राधान्यमेवेदमिति वाच्यम्ष उभयोः प्राधान्यसंदेहे तस्यानवकाशात् । प्रधान्यसंदेहश्च दर्शनं रतेरनुभावरूपतया श्रृङ्गारस्य व्यञ्जने प्रधानमुत चुम्बनाभिलाषव्यञ्जकत्वेनाङ्गमिति । एवं चुम्बनाभिलाषः संभाव्यमानत्वेनाप्रधानमुतास्वाद्यत्वेन शृङ्गारव्यञ्जकतया प्रधानमित्याकारको बोधः । प्रधान्यस्य निश्चयाभावादेव वाच्यादनुत्तमत्वं व्यङ्ग्यस्य ॥

## विज्ञप्रिया

संदिग्धप्राधान्यमाह—हरस्त्विति । प्राधान्यं रसव्यञ्जकतया व्यज्यते रसे । किं वाच्यार्थेन किं वा व्यङ्ग्यार्थेन किं वा व्यङ्ग्यार्थेन व्यञ्जितोऽयं रसः इत्येवं सन्देहविषयत्वं तत्त्वम् । हरस्त्विति कुमारसम्भवे आकालिके वसन्ते जाते सवेषामेव क्रामोद्रेके सति हरस्यापि किञ्चित् तथात्ववर्णनमिदम् । चन्द्रोदयास्यारम्भे नतु चन्द्रस्योदये तदानीमेवाम्बुराशेर्धैर्य्यपरिवृत्तेः किञ्चित्त्वात् । अत्रेति—प्राधान्यसन्देहो हरस्य श्रृङ्गारव्यञ्जकतास-न्देहः । विलोचनव्यापारो हि वाच्यः । चुम्बनाभिलाषस्तु व्यङ्ग्यः तद्द्वयमपि श्रृङ्गारानुभावस्तत् केन रसो व्यञ्जित इति । सन्देहात् । न च द्वाभ्यामेव व्यज्यतां, तथा च तुल्यप्राधान्योदाहरणमेव इदमस्त्विति वाच्यम् । धैर्य्यपरिवृत्तेः किञ्चित्त्वेन चुम्बनाभिलाषो जातो न वा; इति सन्देहेन तदीयरसव्यञ्जकताया अपि तदधीनसन्देहात् अत एव वाच्यार्थेन तद्व्यञ्जनमपि संदिग्धमेव ।

## कुसुमप्रतिमा

सन्दिग्धप्राधान्यं दर्शयति हर इति । विलोचनव्यापारी विष्वफलाधराष्ठे उमामुखे दृष्टिपाती वाच्य । मुखमात्रे दृष्टिपाताच्च चुम्बनाभिलाषी व्यङ्ग्यः । तत्र श्रृङ्गारव्यञ्जकत्वात् किं विलोचनव्यापारणमा प्राधान्यम्, उत व्यङ्ग्यत्वेनास्वाद्यत्वाच्चु स्वनाभिलाषमा प्राधान्यमिति प्राधान्यविषये सन्देह इत्यर्थः । व्यङ्ग्यस्य प्राधान्यसन्देहा-देव चात्र नातिचमत्कारितया गुणीभूतव्यङ्ग्यत्वम् । तादृशसन्देहादेव च नेदं तुल्यप्राधान्य लक्ष्यम्, तत्र प्राधान्यतु-ल्यताया निश्चितत्वादिति बोध्यम् ।

## विमला

सन्दिग्धप्राधान्यं व्यङ्ग्यमाह, हर इति ।—आकालिकवसन्ते पार्वतीम् आलोकमानस्य हरस्य धैर्य्यवि-पर्य्ययवर्णनमिदम् । अत्र विलोचनव्यापारणं वाच्यं, चुम्बनाभिलाषश्च व्यङ्ग्यः; मुखमात्रे लोचनव्यापारेण चुम्ब-नाभिलाषः सम्भाव्यते । न च द्वयोरेव श्रृङ्गारव्यञ्जकतया प्राधान्यमिति तुल्यप्राधान्यमेवेदम् इति वाच्यम्, उभयोः प्राधान्यसन्देहे तस्यानवकाशात् । इह विलोचनव्यापारणं रतेरनुभावरूपत्वेन श्रृङ्गारव्यञ्जनेन प्रधानं, वा चुम्बनाभि-

लाषव्यञ्जकत्वेन अङ्गम्, इति, तथा चुम्बनाभि सम्भाव्यत्येन अप्रधानम्, उत आस्वादविषयत्वेन अङ्गम् इति, तथा चुम्बनाभि लाषः सम्भाव्यत्येन अप्रधानम्, उत आस्वादविषयत्वेन श्रृङ्गारव्यञ्जकतया प्रधानम् इत्यनयोः सन्देह एव प्राधान्यसन्देह इति भावः । प्राधान्यनिश्चयाभावादेव व्यङ्ग्यस्य अनधिकचमत्कारितया वाच्यादनुत्तमत्वे गुणीभूतव्यङ्ग्यत्वमवधेयम् ।

## लक्ष्मी

सन्दिग्धप्राधान्यं व्यङ्ग्यमुदाहरति—हरस्त्विति । कुमारसम्भवे आकालिके वसन्ते जाते सर्वेषामेव कामोद्रेके सति हसस्यापि किञ्चित्तथात्ववर्णनमिदम् । एतच्च व्याख्यातं प्रागेव । अत्र प्राधान्यसन्देहो हरस्य श्रृङ्गारव्यञ्जकता विलोचनव्यापारो हि वाच्यः,चुम्बनाभिलाषस्तु व्यङ्ग्यः, तद्द्वयमपि श्रृङ्गारानुभावस्तत्केन रसो व्यञ्जित इति सन्देहः । तथापि श्रृङ्गारव्यञ्जकत्वात् किं विलोचनव्यापारणस्य प्राधान्यम् उत व्यङ्ग्यत्वेनास्वाद्यत्वाच्चुम्बनाभिलाषस्य प्राधान्यमिति प्रधान्यविषये सन्देह इत्यर्थः । प्रधान्यस्य निश्रचयाभावादेव चमत्कारानाधायकतया गुणीभूतव्यङ्ग्यत्वम् । न च द्वयोरपि श्रृङ्गारव्यञ्जकतया प्राधान्यमिति तुल्यप्रधान्यस्योदाहरणमेवेदमिति वाच्यम्, उभयोः प्रधान्य सन्देहे न तत्, तत्र प्राधान्यतुल्यताया निश्रिचतत्वादिति ध्येयम् ।

## रुचिरा

सन्दिग्धप्राधान्यमुदाहरति—'**हरस्त्व**त्यादिना । व्याख्यातपूर्वमिदं पद्यम् ॥ २११ ॥

उदाहरणीयं निर्दिशत-**इत्यत्रे**त्यादिना ।

**इत्यत्र । विलोचनव्यापार—चुम्बनाभिलाषयोः** तद्रूपयोर्वाच्यव्यङ्ग्ययोरर्थयोरित्यर्थः । **प्राधान्ये** चमत्कारित्वातिशयस्फूर्तौ । **सन्देहो** विलोचनव्यापारविधानस्य वाच्यस्य किंस्वत् प्राधान्यम् ? आहोस्वत् चुम्बनाभिलाषप्रकटनस्य; इति संशय उभयत्र साधकबाधकमानाभावात् । अयम्भावः—विलोचनव्यापारणं धैर्य्यपरिवृत्तता चानुभावौ वाच्यौ, तौ चेदौत्सुक्यादीन् व्यभिचारिणोऽभिव्यज्य रतिचर्वणायां पर्य्यवासास्यातां तर्हि 'चुम्बितुमभ्यलाषीदिति व्यङ्ग्यस्यापि प्राधान्यम् । व्यङ्ग्यभूताभिलाषाऽनुपदमेवौत्सुक्यादेर्व्यञ्जनात् । न च तथा । यदि तु रतिकार्यत्वादाहत्यैव रतिचर्वणायां पर्य्यवासास्यातां तर्हि वाच्यस्य । न च तथा । विनिगमकाभावात् । तस्मात् उभयोरपि प्राधान्यं सन्दिग्धम् ।न च तुल्यं प्राधान्यंम्, पृथगा् विश्रामाभावात् । इति ।

**'ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।**
**जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते ।।'**

अत्र परशुरामो रक्षः कुलक्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम् ।

---

## विवृतिः

तुल्यप्राधान्यव्यङ्ग्यमाह—ब्राह्मणेति । दिग्विजये भार्गवजिगीर्षु दशग्रीवं प्रति तन्मन्त्रिण उक्तिरियम् । अतिक्रमः पराबवः । भवतामेव भूतये, न तु स्वार्थं ब्रवीमि । मित्रं चेति चकारस्यान्वयः । उभयोरेकशिष्यत्वेन सतीर्थ्यतया मित्रत्वं तस्यातिक्रमो न केवलं ब्राह्मणातिक्रमो मित्रातिक्रमश्च । अन्यथातिक्रमे दुर्मनायते इति भविष्यत्सामीप्ये लट् । तस्यातिक्रमप्रवृत्तावतिक्रमो न सेत्स्यति तस्य दौर्मनस्यमेव भविष्यति । यथा कार्तवीर्येण तद्दौर्मनस्यामाचर्य क्षत्रियकुलं नाशितं तथा भवतापि रक्षःकुलं नाशयितव्यमिति भावः ।

जामदग्न्यदौर्मनस्यव्यङ्ग्यो रक्षःकुलक्षयः, मित्रब्राह्मणातिक्रमत्यागजन्या विभूतिर्वाच्या, ताभ्यां जामदग्न्यातिक्रमो न कर्तव्य इत्यर्थनिर्धारणरूपमतिर्व्यज्यत इत्युभयोः समं प्राधान्यम् । अत एव वाच्यादनुत्तमत्वमस्य । केचितु—'वाच्यस्य मित्रब्राह्मणदौर्मनस्यस्य समं प्राधान्यमिति त्रासरूपव्यभिचारिभावव्यञ्जने द्वयोः साम्याच्छापपापोत्पादकत्वेन हि वाच्यात्रासो व्यङ्ग्यात्तु साक्षात्' इत्याहुः । तन्न । दुर्वृत्तस्य पापसंभावनया त्रासासंभवाब्राह्मणदौर्मनस्यजन्यशापसंभावनया त्राससंभवेऽपि वाच्यस्य व्यङ्ग्यापेक्षया व्यवहितत्वात्तुल्यप्राधान्यासंभवाच्च ।।

## विज्ञप्रिया

तुल्यप्राधान्यमाह—ब्राह्मणेति—दिग्विजये परशुरामं जिगीर्षु रावणं प्रति तदमात्यस्य तत्रासाकवाक्यमिदम् । भवतामेव भूतये न तु स्वार्थं ब्रवीमीत्यर्थः । तथेति—ब्राह्मण इत्यर्थः । मित्रमित्यत्र चार्थो गम्यः मित्रं चेत्यर्थः । अन्यथेति । अतिक्रमे इत्यर्थः । दुर्मनायत इत्यत्र भविष्यत्सामीप्ये वर्त्तमाना । समं प्राधान्यमिति—यथोक्तव्यङ्ग्यार्थस्याऽप्यत्र निश्चितत्वेन द्वयोरपि रावणत्रासरूपव्यभिचारिभावे व्यञ्जकत्वात् । वाच्येन ब्राह्मणतिक्रमेणाऽपि शापतो भस्मीकरणसम्भावनया त्रासात् ।

## लोचन

ब्राह्मणेति—रावणं प्रति परशुरामदूतस्य वाक्यमिदम् । भवतां रक्षसां मित्रे जन्मप्रभृति निखिलरहस्यवेदी । अत्रेति—अत्र वाच्यव्यङ्ग्ययोः सामदण्डयोस्तुल्यतयैव वैरमोचने पर्य्याप्तत्वादप्रस्तुतप्रशंसावत् परस्परापेक्षया चमत्कारास्पदत्वात् द्वयोरपि समं प्राधान्यम् ।

पूर्वत्र सन्देहालङ्कारवत् संदिग्धत्वम् । नान्य उपशभोपाय इति व्यङ्ग्यम् । प्राणनिग्रहे प्राप्ते धनत्यागादेः ईषत्करत्वाभिप्रायेणेत्यर्थः ।

अनेनेत्यादौ अर्थशक्तिमूलानुरणरूपव्यङ्ग्यस्यागूढत्वम् । अत्यन्ततिरस्कृतवाच्यस्यागूढत्वं यथा—

**"एतद् विभाति चरमाचलचूलचुम्बी**
**हिण्डीरपिण्डरुचिशीतमरीचिबिम्बम् ।**

**प्रज्ज्वालितस्य रजनीं मदनानलस्य**
**धूमं दधत् प्रकटलाञ्छनकैतवेन।"**

अत्र चुम्बीति पदे वदनसंसर्गरूपस्यार्थस्यासम्भवात् संसर्गमात्रं लक्ष्यते तदतिशयश्चाभिधेयवत् स्फुटं प्रतीयते।

## कुसुमप्रतिमा

तुल्यप्राधान्यं दर्शयति ब्राह्मणेति। महावीरचरितनाटकद्वितीयाङ्के रावणं प्रति पत्रद्वारा परशुरामस्योक्तिरियम्। "दिग्विजये भार्गवविजिगीर्षु दशग्रीवं प्रति मन्त्रिण उक्तिरियम्" इति रामचरणेन यल्लिखितं तदुक्तनाटकादर्शनादनुमानमात्रेण। ब्राह्मणानाम् अतिक्रमत्याग उत्पीड़नपरित्यागः, भवतां राक्षसानामेव भूतये मङ्गलाय भविष्यति। अन्यथा ब्राह्मणातिक्रमत्यागाभावे वो युष्माकं मित्रं समानशिवीपा सकत्वेन सखा जानदप्राप्य दुर्म्मनाय़ते असन्तुष्टो भविष्यति।

अत्रेति। व्यङ्ग्यस्य दुर्म्मनायते इति पदद्योत्यसा, वाच्यस्य मित्रमित्यनेन प्रतिपाद्यस्य हितकारित्वरूपसा अर्थस्य च सर्ग प्राधान्यं समानचमत्कारित्वादित भावः। अतएव च व्यङ्ग्यार्थस्य वाच्यार्थादनुत्तमत्वेन गुणीभूतव्यङ्ग्यत्वम्।

## विमला

तुल्यप्राधान्यं व्यङ्ग्यमुदाहरति, ब्राह्मणेति।—परश्रुरामप्रेषितां पत्रिकां पठतः दशग्रीवं प्रति माल्यवत उक्तिरियम्। ब्राह्मणस्य—जामदग्न्यस्य, अतिक्रमः—आक्रमणं, पराभव इति यावत्, तस्य त्यागः,—अनाक्रमणमित्यर्थः, भवतामेव, मूतये—कल्याणाय, न तु स्वार्थे ब्रवीमि इति भावः; अन्यथा—अतिक्रमे इत्यर्थः, वः,—युष्माकं, मित्रञ्च, एकाचार्य्यतया सतीर्थत्वादित भावः, [अत्र चकारस्य मित्रपदेन सहान्वयेन उभयोरेकाचार्य्याध्ययननिमित्तकं निरतिशयमित्रत्वं, तस्यातिक्रमः न केवलं ब्राह्मणातिक्रमः, मित्रातिक्रमणस्च इति सूचितम्] जामदग्न्य, दुर्मनायते—विद्वेषमाचरतीत्यर्थः, [इह "वत्र्तमानसामीप्ये—" (३/३/१३१ पा.) इति भविष्यत्सामीप्येऽर्थे लट्] तस्यातिक्रमप्रवृत्तावतिक्रमो न सेस्यति, परन्तु तस्य दौर्मनस्यमेव भविष्यति; यथा कात्तवीर्य्येम तद्दौर्मनस्यमाचर्य्य क्षत्रियकुलं नाशितं, तथा भवताऽपि रक्षः कुलं नाशयितव्यमिति भावः। महावीरचरितस्येदं पद्यम्।

अत्रेति।—अत्र जामदग्न्यदौर्मस्यव्यङ्ग्यो रक्षः कुलक्षयः, मित्रब्राह्मणातिक्रमत्यागजन्या विभूतिर्वाच्या, ताभ्यां जामदग्न्यातिक्रमो न कर्त्तव्यः इत्यर्थनिर्धारणरूपामतिव्यंज्यते, इत्युभयोःसमं प्राधान्यम्, अत एव वाच्यादनुत्तमत्वमेतस्य। क्वचित्—"वाच्यस्य मित्रब्राह्मणदौर्मनस्यस्य समं गाधान्यमिति त्रासरूपव्यभिचारिभावव्यञ्जने द्वयीः साम्यात् शापपापोत्पादकत्वेन हि वाच्यात् त्रासी व्यङ्ग्यात् तु साक्षात्" इत्याहुः, तन्न; दुर्वृत्तस्य पापसम्भावनया त्रासासम्भवात्, ब्राह्मणदौर्मनस्यजन्यशापसम्भावनया वाससम्भवेऽपि वाच्यस्य व्यङ्ग्यपेक्षया व्यवहितत्वात्, तुल्यप्राधान्यासम्भवाच्चेति बोध्यम्।

## लक्ष्मी

तुल्यप्रधान्यव्यङ्ग्यमुदाहरति—ब्राह्मणेति। दिग्विजये परशुरामं विजगीर्षु रावणं प्रति तन्मन्त्रिणस्तत्रासकावचनमिदम्। सिद्धान्तवागीशेन तु—'महावीरचरिते द्वितायेऽङ्के रावणं प्रति पत्रद्वारा परशुरामस्योक्तिमभि-

धाय रामचरणेन 'दिग्विजये भार्गवविजगीषुं दशग्रीवं प्रतीत्युक्ति प्रति यल्लिखितं तदुक्तनाटकादर्शनादनुमानमात्रेण इति यदुक्तम्, तदातिसाहसमात्रमेव तथाहि न हि तन्नाटकेऽन्यदीयानि पद्यानि सन्तीति वक्तुं युक्तम्, बहूनामन्येषां पद्यानामुपलम्भात्। तथा च 'ग्रीवाभङ्गाऽभिरामम्' इति पद्यं शकुन्तलानाटके प्रथमेऽङ्के विद्यमानं हनुमन्नाटके चतुर्थेऽङ्के दृश्यते। अपि च बालरामायणे षष्ठेऽङ्के पठितं 'सद्यः पुरीपरिसरेऽपि' इति पद्यम् अनर्घ्यराघवनाटके तृतीयेऽङ्के पठितं 'समन्तादुत्तालैः सुरसहचरी' इति पद्यं च हनुमन्नाटके दृश्यत इति दिक्। ब्राह्मनाम् अतिक्रमत्यागः पराभवपरित्यागः भवतां रक्षसामेव भूतये कल्याणाय भविष्यति न तु स्वार्थं ब्रवीमीत्यर्थ। जामदग्न्यः परशुरामस्तथा ब्राह्मण इत्यर्थः। मित्रं चेति चकारस्यान्वयः। उभयोरेकशिष्यत्वेन शिवोपासकत्वेन च सतीर्थ्यतया मित्रत्वं तस्यातिक्रमो न केवलं ब्राह्मणातिक्रमो मित्रातिक्रमश्रच, अन्यथा ब्राह्मणातिक्रमस्यागाभावे दुर्मनायते असन्तुष्टो भविष्यति। 'दुर्मनायत' इत्यत्र भविष्यत्सामीप्ये वर्त्तमानता। तथा च परशुरामातिक्रमप्रवृत्तावतिक्रमो न सेत्स्यति किन्तु तस्य दौर्मनस्यमेवं भविष्यतीति यथा कातवीर्येण दौर्मनस्य विधाय क्षत्रियकुलं नाशितं तथा भवताऽपि रक्षः कुलं नाशयितव्यमित्याशयः।

अत्रेति। व्यङ्ग्यस्य 'दुर्मनायत' इवि पदगम्यस्य, वाच्यस्य मित्रमित्यनेनाभिधीयमानस्य हितकारित्वरूपार्थस्य च तुल्यचमत्कारित्वातुल्यप्राधान्यम्। तथा च जामदग्न्यः क्षत्रियामामिव रक्षसामपि क्षयं करिष्यतीति दण्डरूपं व्यङ्ग्यमिव भिन्नत्वाभिधानरूपं सामोपायात्मकं वाच्यमपि प्रधानमेव। अत एव व्यङ्ग्यार्थस्य वाच्यार्थात् चमत्कारानाधायकत्वेन गुणीभूतव्यङ्ग्यत्वम्।

## रुचिरा

तुल्यप्राधान्यमुदाहरति—'**ब्राह्मणे**'त्यादिना।

"**ब्राह्मणातिक्रमत्यागो** ब्राह्मणानामतिक्रमोऽवमानस्तस्य त्यागोऽनाचरणम्। **भवताम्। एव** नतु ब्राह्मणानाम्। ब्राह्मणानां हि भूतेर्जामदग्न्ये जीवति स्वतः सिद्धत्वात् तदर्थं चान्यस्यापेक्षाविरहादिति भावः। **भूतये** सम्पदेऽस्तु। **वो** युष्माकम्। **च। जामदग्न्यो** जमदग्निनन्दनः। **मित्रं** 'महादेवशिष्यत्वेनोभयेषां सतीर्थ्यतया मित्रत्वम्। **अन्यथा** ब्राह्मणातिक्रमे। दुर्मनायते झटिति दुर्मना भविष्यतीति भावः। 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा।' ३/३/१९१ इति भविष्यत्सामीप्ये वर्त्तमाननिर्देशः। अयम्भावः—ब्राह्मणातिक्रमे भवतामकल्याणम्, भवन्मित्रस्य जामदग्न्यस्य च क्षोभः। ब्राह्मणानतिक्रमे च भवतां कल्याणम्, जामदग्न्यस्य च क्षोभाभावः। इति महावीरचरितस्येदं पद्यम्। 'रावणमुद्दिश्य रावणामात्यम्माल्यवन्तं प्रति परशुरामेण प्रेषिते पत्रे पद्यमिदम्॥ २१२॥"

अत्र कस्य व्यङ्ग्यस्य कस्य च वाच्यस्य समं प्राधान्यमित्याशङ्क्याह—**इत्यत्रे**त्यादि।

**इत्यत्र। 'परशुरामः**। 'ब्राह्मणातिक्रमे इति शेषः। रक्षः **कुलक्षयम्**। 'क्षत्रकुलभयमिवे'ति शेषः। **करिष्यति।' इति। व्यङ्ग्यस्य। वाच्यस्य** 'ब्राह्मणा शेषः। करिष्यति।' इति। व्यङ्ग्यस्य। वाच्यस्य 'ब्राह्मणनतिक्रमो युष्माकं सम्पत्तये, जामदग्न्यस्य च युष्माकं मैत्र्यै इति तस्याप्येवमेव प्रमोद' इत्यात्मकस्य। **च। समं** तुल्यम्। **प्राधान्यम्**। अयम्भावः—'परशुरामो ब्राह्मणातिक्रमे क्षत्रियाणामिव रक्षसामपि क्षयं करिष्यती'ति दण्डरूपं व्यङ्ग्यमिव 'ब्राह्मणातिक्रमे युष्माकं मित्रं परशुरामो दुर्मनायते। ब्राह्मणातिक्रमे च युष्माकं सम्पत्ति'रिति सामरूपं वाच्यमपि 'अन्यथा दुर्मनायते' इति गभीरोक्त्या प्रधानम्, विग्रह वत्सन्धेरपि अनर्थनिवारकतया विवक्षितत्वाच्च। इत्येतयोः समं प्राधान्यम्। इति।

**'संधौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः ।**

**अल्लावदीननवृपतौ न संधिर्न न विग्रहः ॥'**

अत्राल्लावदीनाख्ये नृपतौ दानसामादिमन्तरेण नान्यः प्रशमोपाय इति व्यङ्ग्यं व्युत्पन्नामपि झटित्यस्फुटम् ।

---

## विवृतिः

अस्फुटं व्यङ्ग्यमाह—संधाविति । विग्रहे युद्धे । अन्यः संधिर्विग्रहो वा । अत्र दानादिकमेवोचितमित्यर्थनिर्धारणरूपमतेर्व्यभिचारिभावस्य संधिविग्रहानिष्टसाधनत्वरूपवाच्यं व्यङ्ग्यनिरपेक्षमेव व्यञ्जकं वाच्यसंधिविग्रहाभावसापेक्षमिति वाच्यादनुत्तमत्वमस्य ॥

## विज्ञप्रिया

अस्फुटमाह सन्धाविति—विदग्धानामपि कष्टगम्यं व्यङ्ग्यमस्फुटम् । झटित्यस्फुटमिति तत् प्रशमोपायो नास्त्येव इति हि व्यङ्ग्यमापाततः प्रतिभाति । यथोक्तं व्यङ्ग्यं तु कृच्छ्रगम्यम् । तद्धि जीवनरक्षार्थं सर्वस्वदानेनापि सन्धिः करणीय इत्येवंरूपम् ।

## कुसुमप्रतिमा

अस्फुटव्यङ्ग्यं दर्शयति सन्ध्यविति । अल्लाउदीनेन सहात्मनो विरोधं सम्भाव्य कस्यचिद्दुर्बलनृपतेरुक्तिरियम् । सन्धौ अल्लावदीनेन सह सन्धिकरणे सर्व स्वहरण समस्तवित्तग्रहणं तेन कर्त्तव्यमिति शेष, विग्रहे युद्धकरणे तु प्राणनिग्रहस्तेन कत्रव्यः । अतएव अल्लावदीननृपतौ न सन्धिनं च विग्रही घटत इति शेषः ।

अत्रेति । दानसामादीत्यादिपदेन पलायनपरिग्रहः व्युतपन्नानामपि निपुणमतीनामपि । अस्फुटप्रतीत्यविषयीभूतम् । अतएव चास्य वाच्यार्थादलुत्तमत्वेन गुणीभूतव्यङ्ग्यत्वम् ।

## विमला

अस्फुट व्यङ्ग्यमुदाहरति, सन्धौ इति ।—अलाउद्दीननृपतौ—अलाउद्दीनाख्ये दिल्लीश्वरे यवनराजे विषये, [क्वचित "अलाउद्दीन" इत्यत्र "अल्लापदीन" इति, क्वचित् पुनः "अल्लावदीन" इति पाठः, स सर्वोऽपि न सम्यक्, संज्ञायाः परिवृत्तौ प्रमाणाभावात्] सन्धौ—मित्रताकरणे, युद्धात् निवर्त्तने इति यावत्, सर्वस्वहरणं—सर्वधनदानमित्यर्थः, सर्वधनदानं विना न कोऽपि अलाउद्दीननृपेण सह सन्धिं कर्तुं शक्नोतीति भावः, विग्रहे—युद्धे, प्राणनिग्रहः,—प्राणदण्डः अलाउद्दीनेन सह संग्रामे प्राणनाशी भवेदिति भावः, अतः तत्र न सन्धिः, न च—नापि, विग्रहः,—युद्धं, युक्त इति शेषः ।

अत्रेति—अत्र व्यङ्ग्यं सामदानादिरूपसूचितमिति तात्पर्य्यग्रहणरूपबुद्धे व्यभिचारिभावस्य, सन्धिविग्रहनिष्टसाधनरूपं वाच्यं व्यङ्ग्यनिरपेक्षमेव व्यञ्जकं वाच्यसन्धिविग्रहाभावसापेक्षतयाऽनधिकचमत्कारकम्, अतः वाच्यादनुत्तममेव तत्, इति गुणीभूतत्वमिति बोध्यम् ।

## लक्ष्मी

अस्फुटं व्यङ्ग्यमुदाहरति—सन्धाविति। अल्लावदीनेन सार्द्धं स्वस्य विरोधं सम्भाव्य कस्यचिच्छक्तिहीनराज्ञ उक्तिरियम्। सन्धौ अल्लावदीनेन साकं सन्धिविधाने सर्वस्वहरणं समग्रधनग्रहणं तेन कर्त्तव्यमिति शेषः, विग्रहे सङ्ग्रामकरणे तु प्राणनिग्रहस्तेन प्राणनाशः कर्त्तव्यः, अतो हेतोः अल्लावदीननृपतौ न सन्धिः परस्परं मैत्रीभावो न च विग्रहो युज्यत इति शेषः।

व्यङ्ग्यस्यास्फुटतां दर्शयति—अत्रेति। सामदानादीत्यादिपदेन पलायनग्रहणम्। नान्यः प्रशमोपाय इति व्यङ्ग्यं प्राणनिग्रहे प्राप्ते धनत्यागादेः ईषत्करत्वाऽभिप्रायेणेत्यर्थः। एवञ्च जीवनरक्षार्थं सर्वस्वदानेनाऽपि सन्धिः करणीय इत्येवं रूपं व्यङ्ग्यं व्युत्पन्नानामपि परिपक्वबुद्धीनामपि। अस्फुटं प्रतीत्यविषयीभूतम्। अत एव वाच्यार्थाद्दधिकचमत्कारानाधायकत्वेन गुमीभूतव्यङ्ग्यत्वम्।

## रुचिरा

अस्फुटं व्यङ्ग्यमुदाहरति—"**सन्धा**"वित्यादिना।

"**सन्धौ**। 'कर्त्तव्य'इति शेषः। **सर्वस्वहरणम्। विग्रहे** युद्दे 'कत्तव्य'इति शेषः। **प्राणनिग्रहः** प्राणानां निग्रहो दण्डः। अतः-**अल्लावद्दीननृपतौ** (विषये सप्तमीयम्)। **सन्धिर्मे**लनोपायः। **न** 'सम्भवती'ति शेषः। **विग्रहो** युद्धम्। **च**। **न** अल्लावद्दीनाखअयस्य यवनेन्द्राय स्तुतिरियम्॥ २१३॥

व्यङ्ग्यास्यास्फुटतां दर्शयति—**इत्यत्रे**त्यादिना।

**इत्यत्र। अल्लावद्दीनाख्ये। नृपतौ। दानसामादिम्**। आदिना शुश्रूषाया ग्रहणम्। **अन्तरेण** विना। **अन्यः। प्रशमोपायः** कापशान्त्युपाय इत्यर्थः। **न। इति। व्यङ्ग्यम्। व्युत्पन्नानां** सहृदयानाम्। **अपि। झटिति। अस्फुटं** न स्फुटम्। अयम्भावः—अल्लावद्दीनेन सन्धिविग्रहावुभावपि न युक्तविति वाच्येन व्यज्यमानं 'दानाद्येव युक्त'मिति न स्फुटम्, तस्य हेतोः 'न कथमपि तस्य कुपितस्य कोपोपशमोपाय'इत्येवं प्रत्यायने स्फुटमुपपत्तेः। इति।

**'अनेन लोकगुरुणा सतां धर्मोपदेशिना।**
**अहं व्रतवती स्वैरमुक्तेन किमतः परम्॥'**

अत्र प्रतीयमानोऽपि शाक्यमुनेस्तिर्यग्योषिति बलात्कारोपभोगः स्फुटतया वाच्यायमान इत्यगूढम्।

---

## विवृतिः

अगूढव्यङ्ग्यमाह—अनेनेति। शाक्यमुनंस्तिर्यग्योषिद्बलात्कारोपभेगमस- हमानायास्तत्पत्या उक्तिरियम्। व्रतं गृहस्थधर्मानुष्ठानम्, तद्वती। उक्तेनेति। अतः परं न वक्तव्यमित्यर्थः। लोकगुरोः सद्धर्मोपदेश-कस्यास्य दुष्कर्माचरणमनुचितमेव। मम तु व्रताचरणसहायस्य तादृशस्य कथनमपि नोचितमिति भावः। आक्षेपा-लंकारमहिम्ना व्यङ्ग्यरूपो विशेषो झटित्येव प्रतीयत इति वाच्यायमानत्वमस्य। व्यङ्ग्यनिरपेक्ष एव वाच्य आक्षेपालंकार ईर्ष्यासंचारिभावज्ञापकः प्रतिनायिकायास्तिर्यक्त्वेन व्यङ्ग्यस्य तदुपभोगस्य नेर्ष्योत्कर्षाधायकत्व-मिति व्यङ्ग्यादनुत्तमंत्वमस्य॥

## विज्ञप्रिया

अगूढमाह—अनेनेति। शाक्यमुनिना बलादुपभोक्तुमुपक्रम्यमाणायाः तैर्थिकयोषित उक्तिरियम्। अहं व्रतवतीति धर्मोपदेशिनः अस्य उपभोगो मम व्रतभङ्गाय नो भविष्यतीत्यतोऽहं व्रतवत्येव इत्यर्थः। स्वैरं स्वच्छन्दम् अतः परम् उक्तेन किं प्रयोजनमित्यर्थः। अत्रेति—प्रतीयमानोऽपि व्यज्यमानोऽपि। प्रतीयमानस्य प्रायशोऽस्फुट-त्वेन स्फुटत्वे तद् विरोधेऽत्राऽपिकारः स्फुटतयेति—प्रबन्धश्लोकात्प्रकरणवशाद् बलात्कारोपभोगज्ञानात् स्फुटता।

## कुसुमप्रतिमा

अगूढव्यङ्ग्यं दर्शयति अनेनेति। शाक्यसिंहस्य तिर्य्यग्योषिता सह बलात्कारोपभोगं सोढुमशक्तुव-त्यास्तद्भार्य्यायास्तद्वृत्तान्तं जिज्ञासमानां मस्ती प्रत्युक्तिरियम्। सतां धर्म्मोपदेशिना लोकगुरुणा अनेन पत्या अहं व्रतवती, पतिव्रताया नियमवती, अतएव अतः पर स्वैरं स्वच्छन्द सम्पूर्णमित्यर्थः उक्तेनकथितेन पतिचरित्रेण किं प्रयोजनम्? पतिव्रतया पतिदोषस्यावक्तव्यत्वान्मया नातः परं किञ्चिद्वाच्य मिति भावः।

अत्रेति। प्रतीयमानोऽपि व्यङ्ग्यतया ज्ञायमानोऽपि। स्फुटतया आक्षेपालङ्कारद्योत्येर्य्याख्य व्यभिचारि-भावप्रभावेण स्पष्टतया हेतुना, वाच्यायमानो वाच्यार्थवत् शीघ्रं प्रतीयमानः अतएवात्र व्यङ्ग्यार्थस्य सुस्पष्टत्वेन वाच्यार्थादनुत्तमत्वाद्गुणीभूतव्यङ्ग्यत्वम्।

## विमला

अगूढं व्यङ्ग्यमुदाहरति, अनेनेति।—शाक्यमुनेस्तिर्य्यक्जातीययोषिति बलात्कारमसहमानायास्तत्प-त्रया उक्तिरियम्। अहं व्रतवतौ—व्रतं—गृहस्थधर्म्मानुष्ठानं, तद्वती इत्यर्थः, लोकगुरुणा—लोकानां गुरुः,—उप-

देशेन अज्ञानरुपतिमिर विनाशकत्वादाचार्य्य:, तेन तथाभूतेन, अनेन—शाक्यमुनिना इत्याशय:, सतां—महात्मनामिति भाव:, धर्म्मस्य—कर्त्तव्यस्य, पुण्यानुष्ठानस्येति यावत्, उपदेशौ—शिक्षक:, तेन, स्वरम—एतावन्मात्रकथनमेव यथेष्टम्, अत: परम् उक्तेन किम्? किमपि न वक्तव्यम्; लोकगुरो: सद्धर्म्मोपदेशकस्य अस्य दुष्कर्मानुष्ठानमनुचितमेव अथाऽपि अनेन यदाचरितं तत् किं कथयेयम्? मम तु व्रताचरणसहायस्य तादृशस्य कथनमपि नोचितमिति भाव:।

अत्राक्षेपालङ्कारेण व्यङ्ग्यरूपी विशेषो झटिति एव प्रतीयते इति वाच्याय मानत्वस्य व्यङ्ग्यनिरपेक्ष एव वाच्य आक्षेपलङ्कार ईर्ष्यासञ्चारिभावावगमक: प्रतिनायिकायास्तिर्य्यक्तेन व्यङ्ग्यस्य तदुपभोगस्य नेर्ष्योत्कर्षाधायकत्वमिति व्यङ्ग्यादनुत्तमत्व मेतस्येति बोध्यम्।

## लक्ष्मी

अगूढव्यङ्ग्यमुदाहरति—अनेनेति। शाक्यमुने: तिर्यग्योषिता सह बलात्कारोपभोग मसहमानायास्तद्भार्यायास्तद्वृत्तान्तं ज्ञातुमभिलषन्तीं सखीं प्रत्युक्तिरुयम्। सतां सज्जनानां धर्मोपदेशिना लोकगुरुणा अनेन स्वामिना अहं व्रतवती व्रतं गृहस्थधर्मानुष्ठानम्, तद्वती पतिव्रताया: नियमवतीत्यर्थ:। अत एव अत: परं स्वैरं स्वच्छन्दम् उक्तेन कथनेन स्वाम्याचरमेन किम्। पतिव्रताया: स्वाम्यवगुणस्यावाच्यत्वान्नात: परं मया किञ्चिद्वक्तव्यमित्याशय:।

लोकगुरो: सद्धर्मोपदेशकस्यास्य दुर्वृत्ताचरणमनुचितमेव मम तु व्रताचरणसहायस्य तादृशस्य कथनमपि नोचितमिति गूढाऽभिप्रायोऽवगन्तव्य:।

अत्रेति। प्रतीयमानोऽपि व्यङ्ग्यतया बोध्यमानोऽपि। प्रतीयमानस्य प्रायशोऽस्फुटत्वेन स्फुटत्वे तद्विरोधेऽत्रापि स्फुटतयेति प्रबन्धश्लोकात् प्रकरणवशाद् बलात्कारोपभोगज्ञानात् स्फुटता। वाच्यायमानो वाच्यार्थवत् शीघ्रं व्यज्यमान:। आक्षेपालङ्कारमहिम्ना व्यङ्ग्यरूपोविशेषो झटित्येव प्रतीयत इति वाच्यायमानत्वमस्य। व्यङ्ग्यापेक्षरहित एव वाच्य आक्षेपालङ्कार ईर्ष्याव्यभिचारिभावबोधक:। अत्र प्रतिंनायिकायास्तिर्यग्नित्वेन व्यङ्ग्यस्य नेर्ष्योत्कर्षाधायकत्वमिति व्यङ्ग्यार्थस्य स्फुटत्वेन वाच्यार्थाद्यतिशयत्वाभावाद्रगणीभूतव्यङ्ग्यत्वम्। अर्थशक्तिमूलानुसरणरूपो व्यङ्ग्यो ह्यत्रागूढ:। अत्यन्ततिरस्कृतवाच्यस्यागूढत्वं यथा—

**'एतद्विभाति चरमाचलचूडचुम्बि हिण्डीरपिण्डरुचिशीतमरीचिबिम्बम्।**
**प्रज्वालितस्य रजनीं मदनानिलस्य धूमं दधत् प्रकटलाञ्छनकैतवेन॥'**

अत्र चुम्बीति पदे वदनसंसर्गरूपस्यार्थस्यासम्भवात् संसर्गमात्रं लक्ष्यते. तदतिशयश्चाभिधेयवत् स्फुटं प्रतीयते।

## रुचिरा

अगूढं व्यङ्ग्यमुदाहरति—**अनेनेत्यादिना**।

"**सतां** महताम्। **धर्म्मोपदेशिना** धर्म्मोपदेशकेन। अत एव-**लोकगुरुणा**। लोकस्य जगतो गुरुरधर्म्मतो निवर्त्तकत्वेनाज्ञाननमिवर्त्तकत्वेन वाऽचार्य्यस्तत्त्वेन ख्यातस्तथोक्तेन। **अनेन**। 'तिर्य्यग्योषिद्बलादुपभुज्यते स्मे'ति शेष:। नु त्वया किं नासौ तदा प्रबोधित इत्यत आह—**अहं** तस्य गृहिणीत्यर्थ:। **व्रतवता** पतिव्रता तदनुकूलत्वा-

चरणनियमपरेति यावत्। अतो न किमपि वक्तुं क्षमेत्याह **अतः। परम्।** स्वैरं यथेष्टमुच्चैरिति यावत्। **उक्तेन** कथनेन। भावे क्तः। **किम्।** न किमपि फलमिति भावः। शाक्यमुनि तिर्य्यग्योषितमुपगतवन्तमसहमानातस्यात्पत्न्या उक्तिरियम्। अतोऽत्र प्रकरणद्वयङ्ग्योऽर्थो वाच्यायते ॥ २१४ ॥"

इत्यत्र को व्यङ्ग्योऽर्थः स्फुट इत्यत आह—**इत्यत्रेत्यादि।** स्पष्टम्। यथा वा मम—"अस्माक्रमेषु एको जीवितमेनं विना कथं स्यामः। इत्यनुरक्ता नित्यं स्त्रीपुत्राद्या भवन्ति स्म।। सोऽहं तेषां भरणाद्विमुको विकलोन्द्रियादिसामर्थ्यः। तृणतोऽपि तैः परास्तः श्वसिमीति बतास्य वैभवं जगतः॥" इति। अत्र हि 'जीवन्नपि मृत' इति श्वसिमीति पदेन, 'लोकोऽयं स्वार्थपर' इति च 'बतास्य वैभवं जगत' इत्यनेन च व्यज्यमानोऽर्थो नितान्तं स्फुटो वाच्यतां धत्ते।

**'वाणीरकुडङ्गुड्डीणसउणिकोलाहणं सुणन्तीए।**
**घरकम्मवावाडाए बहुए सीअन्ति अङ्गाइं ॥'**

अत्र दत्तसंकेतः कश्चिल्लतागृहं प्रविष्ट इति व्यङ्ग्यात् 'सीदन्त्यङ्गानि' इति वाच्यस्य चमत्कारः सहृदयसंवेद्य इत्यसुन्दरम्।

---

## विवृतिः

असुन्दरं व्यङ्ग्यमाह—वाणीरेति। 'वानीरकुञ्जोड्डीनशकुनिकोलाहलं श्रृण्वन्त्याः। गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥' इति संस्कृतम्। चण्डीदासस्तु—'कुडङ्गे लतागृहम्। वावडा व्याकुला' इति व्याचकार। सीदन्ति गृहकर्माक्षमाणि भवन्तीति लक्षणात् इति शेषः। गृहकर्मव्यापृताया इति तु तात्पर्यग्राहकम्। व्यङ्ग्याद् व्यङ्ग्यमनपेक्ष्येत्यर्थः। वाच्यादेवाङ्गावसादाद् हर्षाविगसंवलितानुरागोद्रेककृतमदनपरवशताप्रतीतिः। व्यङ्ग्यस्तु(न्तु)तटस्थप्रायम्। एतच्च स्वविषये वाच्यसिद्ध्यङ्गादिपवादस्वरूपं द्रष्टव्यम्। तेषु व्यङ्ग्यस्यापि चारुत्वसंभवात् इति चण्डीदासः। तटस्थं च व्यवहितोपकारत्वेनदासीनवदाभासमानम्। तथाहि—शकुनिकोलाहलश्रवणेनोपनायकस्य लतागृहप्रवेशानुमानम्, ततो हर्षावेगौ, ताभ्यामनुरागोद्रेकः, ततो मदनपरवशताप्रतीतिः। एवं च व्यङ्ग्यस्य चमत्काराप्रत्यासन्नत्वमेवासुन्दरत्वमिति फलितम्। केचित्तु "रसादिबोधजनने वाच्यसापेक्षत्वमेवासुन्दरत्वम्' इति व्यङ्ग्यादिति। इत्यादिव्यङ्ग्यादित्यर्थः। तथा च वधूश्च न तत्र गतेत्येतपर्यन्तादित्यर्थः। वध्वा अगमनमेव न केवलं तदीयविप्रलम्भव्यञ्जकम्। किंतु शकुनिकोलाहलश्रवणेन सीदन्त्या वध्वा अगमनमिति वाच्याङ्गावसादसहकारेणैव रसव्यञ्जनाया वाच्यमुखनिरीक्षकत्वात्तदपेक्षया न्यूनचमत्कारी" इति वदन्ति। तन्न। अङ्गावसादव्यङ्ग्यविषादसहकृतस्यैव वध्वगमनस्य विप्रलम्भव्यञ्जनसंभवेन वाच्याङ्गावसादमुखनिरीक्षणायोगात्तदानींतनगमनाभावसत्त्वेऽपि गमनसंभावनया विप्रलम्भासंभवात्। न च गृहकर्मव्यापृताया इत्यनेन गमनाभावनिश्चयेन गमनसंभावनैव नास्तीति वाच्यम्। गृहकर्मान्तःपातिजलाहरणादिच्छलेनापि तत्संभवात्, रतेरुपनायकविषयत्वेन विप्रलम्भाभासस्यैव वक्तुमुचितत्वाच्च ॥

## विज्ञप्रिया

असुन्दरमाह—वाणीरेति। वाच्यार्थान्न्यूनचमत्कारिव्यङ्ग्यमसुन्दरम्।

**"वानीरकुञ्जोड्डीनशकुनिकोलाहलं श्रृण्वन्त्याः।**
**गृहकर्मव्यापृताया बध्वाः सीदन्त्यङ्गानि ॥" इति संस्कृतम्।**

वानीरकुञ्जे कृतसंकेताया गृहकर्मव्यापारात् तत्र गन्तुमशकत्या बध्वा अङ्गावसादवर्णनमिदम्। अत्रेति—प्रविष्ट इत्यन्तमात्रं न व्यङ्ग्यं बध्वास्तत्रागमनस्यापि तदीयपक्षिकोलाहलश्रवणाधीनाङ्गावसादेन व्यङ्ग्यत्वात्। तथा चेति—व्यङ्ग्यादित्यत्र इत्यादि व्यङ्ग्यादित्यर्थः वाच्यस्य चमत्कार इति वध्वा विप्रलम्भव्यञ्जकत्वेन ह्यत्र चमत्कारः। स चात्रोद्दीपकशकुनिकोलाहलश्रवणाधीनाऽवसादस्य विप्रलम्भं बिना अन्यतोऽसम्भवात् तत्प्रतीत्यवश्यम्भावेन संकेतस्थले वध्वा अगमनादुक्ताऽङ्गावसादसहकारं विना न विप्रलम्भप्रतीत्यवश्यम्भावः। वध्वा ईदृशकार्य्यत्यागेनापि तत्रागमनसम्भवाद्दते वाच्याङ्गावसादमुखप्रेक्षत्वेन तस्य न्यूनचमत्कारितेत्यर्थः।

## लोचन

वानीरेति—वानीरकुञ्जोड्डीनशकुनिकोलाहलं श्रृण्वन्त्याः गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥ वाच्यस्य चमत्कारः प्रधानप्रत्यासत्तेरधिकत्वात्।

इदानीमन्यत्रापि व्यङ्ग्यस्य गुणीभावस्थले ध्वनिभ्रमं निरस्यन् आह—किञ्चेति। अलङ्कारान्तरस्यापीति। काव्यस्य च तत्परत्वं न भासत इति सम्बन्धः।

## कुसुमप्रतिमा

असुन्दरं व्यङ्ग्यं दर्शयति वाणीरेत। "वाणीरकुञ्जोड्डीनशकुनिकोलाहलं श्रृण्वत्याः। गृहकर्म्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥ इति संस्कृतानुवादः। उपनायकाय दत्तसङ्केतां भतृवधूं प्रति ननान्दुरुपहासमच्छलेनोक्तिरियम्। वाणीरकुञ्जात् वेतसलतावृतस्यानात् उड्डीनानां निजागमसूचनाय तदुपनायक कर्तृकसंघट्टनेन हठादुत्पतितानां शकुनीनां पक्षिणां कोलाहलं श्रृण्वत्याः, गृहकर्म्मव्यापृताया रन्धनादौ प्रवृत्ताया अपि वध्वाः अङ्गानि सीदन्ति आनन्दावेगवशादवमनानि तत्तत्कर्म्मासमर्थानि भवन्ति।

अत्रेति। दत्तः सङ्केती यस्मै सः। व्यङ्ग्यात् प्रथमार्द्धसूचितव्यङ्ग्यार्थात् अधिकतर इति शेषः। अतएवास्य गुमीभूतव्यङ्ग्यत्वम् असुन्दरमिति संज्ञा च सङ्गच्छते । न चात्रापि प्रथमार्द्धमूचिताव्यङ्ग्यार्थस्य अङ्गावसादरूपवाच्यार्थस्य अङ्गावसादरूपवाच्यार्थसिद्धिसम्पादकतया वाच्यसिद्ध्यङ्गत्वापत्तिरिति वाच्यम्, अत्र अङ्गावसादरूपवाच्यार्थस्य आनन्दावेगादिद्योतकत्वात् तत्र तु तदभावात्। एतेन यत्र वाच्यार्थस्य सुन्दरापरार्थद्योतकत्वं तत्रैव व्यङ्ग्यार्थस्यासुन्दरत्वम्, यत्र तु वाच्यार्थस्य न तादृशापरार्थद्योतकत्वं तत्र वाच्यसिद्ध्यङ्ग्य मिति फलितम्।

## विमला

असुन्दरं व्यङ्ग्यमुदाहरति, वाणीरेति।—["वानीरकुञ्जोड्डीनशकुनिकोलाहलं श्रृण्वन्त्याः। गृहकर्मव्यापृताया वध्वः सीदन्त्यङ्गानि ॥" इति संस्कृतम] वानीरकुञ्जात—वेसलतावेष्टितात् स्थानात्, उड्डीनानाम—उत्पतितानां शकुनीनां—पक्षिणा, कोलाहलं—कलरवं, कूजितमित्यर्थः, श्रृण्वन्त्याः गृहकर्मणि, व्यापृतायाः,—व्यायायाः, निरतायाः इति यावत्, [चण्डीदासस्तु प्राकृत "वानडाएं" इत्यस्य "वारतायाः" इति संस्कृतीक्तं स्वीकृत्य, वारतायाः,—व्याकुलायाः, इत्यर्थं व्याख्यातवान्] वध्वाः अङ्गानि, सीदन्ति—अवसादं गच्छन्ति, गृहकर्मणः निवृत्तानि भवन्तीति यावत्, लक्षणातः इति शेषः। गृहकर्म्मव्यापृतायाः इति तात्पर्य्यग्राहकम्।

अत्रेति।—कश्चित्—उपनायकः। व्यङ्ग्यात्—व्यङ्ग्यमपेक्ष्य इत्यर्थः। वाच्यस्य—अङ्गसादनाभिधानस्य। चमत्कारः,—हर्षवेगसंवलितानुरागोद्रेककृतमदनपरवशताप्रतीतिः। सहृदयसंवेद्यः,—सहृदयानुभवगम्यः। व्यङ्ग्यस्तु तटस्थप्रायम्। एतश्च स्वविषये वाच्यसिद्ध्यङ्गादिसर्वापवादस्वरूपं द्रष्टव्यम्। तेषु व्यङ्ग्यस्यापि चारुत्वसम्भवात् इति चण्डीदासः। तटस्थञ्च व्यवहितोपकारत्वेन उदासीनवदामामानम्; तथाहि,—शकुनिकोलाहलश्रवणेनोपनायकस्य लतागृहप्रवेशानुमानं, ततो हर्षविगौ, ताभ्यामनुरागोद्रेकः, तत मदनपरवशताप्रतीतिः; एवञ्च व्यङ्ग्यस्य चमत्काराप्रत्यासन्नत्वमेवासुन्दरत्वमिति फलितम्। कचित्तु "रसादिबोधजनने वाच्यसापेक्षत्वमेवासुन्दरत्वम इति। व्यङ्ग्यात्—इत्यादिव्यङ्ग्यादित्यर्तः, तथा च वधूश्च न तत्र गतेत्यैतत्पर्य्य-

न्तादित्यर्थः । वध्वा अएगमनमेव न केवलं तदीयविप्रलम्भव्यञ्जकं, किन्तु, शकुनिकोलाहलश्रवणेन सौदल्या बध्वा अगमनम् इति वाच्याङ्गावसादसहकारेणैव रसव्यञ्जनायाः बाच्यमुखनिरीक्षकत्वात् तदपेक्षया न्यूनचमत्कारि" इति वदन्ति, तन्न; अङ्गावसादव्यङ्ग्यविषादसहकृतस्यैव वध्वगमनस्य विप्रलम्भव्यञ्जनसम्भवेन वाच्याङ्गावसादमुख-निरीक्षणायोगात् तदानीन्तनगमनाभावसत्त्वेऽपि गमनसम्भावनया विप्रलम्भासम्भवात् । न च गृहकर्म्मण्यापृतायाः इत्यनेन गमनाभावनिश्चयेन गमनसम्भावनैव नास्तीति वाच्यं, गृहकर्म्मान्तः पातिजलाहरणादिच्छलेनापि तत्सम्भ-वात्; रतेर्दविष्ठीपनायकविषयत्वेन विप्रलम्भाभासस्यैव वक्तुमिचितत्वाच्च ।

## लक्ष्मी

असुन्दरं व्यङ्ग्यमुदाहरति—वाणीरेति ।

**'वानीरकुञ्जोड्डीनशकुनिकोलाहलं श्रृण्वन्त्याः ।**

**गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥'**

इति संस्कृतम् । गृहपाश्ववर्त्रिवेतसनिकुब्जे दत्तसङ्केताया निकुञ्जोड्डीनपक्षिकोलाहलतर्कितोपनायकप्र-वेशायाः गुरुजनपारतन्त्रयेण गृहकर्मव्यापृततया च तत्र गन्तुमशक्नुवन्त्याः स्वरूपवर्णनमिदम् । वानीरा वेतसाः । 'अथवेतसे । रथाभ्रपुष्पविदलशीतवानीरकञ्जुलाः' इत्यमरः । तेषां कुब्जानि गहनस्थानानि 'निकुञ्जकुञ्जौ वा क्लीवे लतादिपिहितोदरे' इत्यमरः । तेभ्य उड्डीना उत्प्लुता ये शकुनयः पक्षिणस्तेषां कोलाहलं कलकलशब्दं श्रृण्वन्त्याः, गृहकर्मणि रन्धनादौ व्यापृतायाः प्रवृतायाः प्रवृत्तयाः स्त्रिया अङ्गानि सीदन्ति आकुलतां प्राप्नुवन्ति प्रमोदावेगवशा-दवसन्नानि तत्तत्कर्मसमर्थानि भवन्तीत्यर्थः । सीदन्तीति । वर्त्तमाननिर्द्देशादवसादस्याविरामः । श्रृण्वन्त्याः सीद-न्तीति वर्त्तमानप्रत्ययाभ्यां श्रवणासादनयोः कारणकार्ययोः पौर्वापर्यविपर्ययरूपातिशयोक्तिलङ्कारः । तेन चोत्कण्ठातिशयो व्यज्यत इत्युद्योते स्पष्टम् । मुखविपुलाच्छन्दः ।

अत्रेति । अत्र दत्तङ्केतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यम् । तत्र वध्वा गृहव्यापारवशादगमनेन अङ्गावसादः । स च वाच्योऽनुभावरूपो विप्रलम्भाभासव्यञ्जकत्वात् यथा चमत्कुरुते न तथा व्यङ्ग्यमित्यसुन्दरम् । वाच्यस्य चमत्कार इति प्रतीकमादाय विज्ञप्रियातातस्तु—'वध्वा विप्रलम्भव्यञ्जकत्वेन ह्यत्र चमत्कारः । स चात्रो-द्दीपकशकुनिकोलाहल श्रवणाधीनाऽवसादस्य विप्रलम्भं विना अन्यतोऽसम्भवात् तत्प्रतीत्यवश्यम्भावेन सङ्केत-स्थले वध्वा अगमनादुकताऽवसादसहकारं विना न विप्रलम्भ प्रतीत्यवश्यम्भावः । बध्वा ईदृशकार्यत्यागेनापि तत्रागमनसम्भवादृते वाच्याङ्गवशादमुखप्रेक्षत्वेन तस्य न्यूनचमत्काररितेत्यर्थः' इत्याह ।

## रुचिरा

असुन्दरं व्यङ्ग्यमुदाहरति—**"वाणीरे"**त्यादिना ।

**"वामीरकुडंगुड्डीमसउणिकोलाहलं** वानीरकुञ्चोट्टीनशकुनिकोलाहलं वानीरा वेतसास्तेषां कुञ्जा गहन-स्थांनानि तेभ्य उड्डीना उत्थायाकाशमार्गे उत्पतिता ये शकुनयः पक्षिणस्तेषां कोलाहलः कलकलशब्दस्तम् । 'अथ वेतसे । रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः ।'इति, 'निकुञ्जकुञ्जौ वा क्लीबे लताऽदिपीहितोदरे ।'इति, 'कोलाहलः कलकलः' इति च नामलिङ्गनुशासनम् । **सुणंतीए** श‍ृण्वन्त्याः । **घरकम्मवावडाए** गृहकर्म्मव्यापृतायाः । **बहुए** वध्वाः । **अंगाई** अङ्गानि । **सीअंति** सीदन्ति विषीदन्तीतियावत् । गृहपाश्ववर्तिनि वेतसकुञ्जे दत्तसङ्केतायास्तदुत्प-

तत्पक्षिको लाहलतर्कितोपनायकप्रवेशाया गुरुजनापारजन्यत्रयेण गृहकर्म्मणि व्यापृताया अत एव तत्र गन्तु स्पृहायामप्यशन्नुवत्या अवस्थावर्णनमिदम्। मुखविपुला छन्दः। तल्लक्षणं च यथोक्तम्, "संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः। यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति॥" इति, 'इयं विपुला चपलावन्मुखजघनभेदभिन्ना भवति, प्रथमेऽर्धे मुखविपुला, उत्तरार्धे जघनचपला।' इति च॥ २१५॥"

कथं व्यङ्ग्यस्यासुन्दरत्वमित्यपेक्षायामाह—**इत्यत्रे**त्यादि।

**इत्यत्र**। '**दत्तसङ्केतो** दत्तः सङ्केतो यस्येति तथोक्तः। **कश्चित्** 'उपनायक'इति शेषः। **लतागृहम्**। **प्रविष्टः**।' **इति व्यङ्ग्यात्** तमपेक्ष्येति भावः। '**अङ्गानि** गात्राणि। **सीदन्ति** विषीदन्ति।' **इति**। **वाच्यस्य**। 'विप्रलम्भपरिपोषकत्वा'दिति शेषः। **चमत्कार**स्तस्यातिसौन्दर्यादिना मुग्धाया अतीवौत्सुक्यातिपर्य्यवसायी बोधविशेषः। **सहृदयसंवेद्यः** सहृदयाः काव्यतत्त्वज्ञास्तत्संवेद्यः। अयम्भावः—'मया स दत्तसङ्केत आगतः' इति व्यङ्ग्यम्, तदपेक्षया च 'तत्कोलाहलश्रवणसमकालमेव नायिकायाः सर्वाङ्गवसादन'मिति वाच्यस्य 'तदलाभेनायिकाया अतीवौत्सुक्यमासी'दित्यत्र पर्य्यवसायी चमत्कारः सुन्दर इति व्यङ्ग्यस्य गुणीभूतत्वम्। इति। तथाऽऽहुः 'दत्तसङ्केतः स उपेत'इति व्यङ्ग्यं शरीरावसादस्य विप्रलम्भानुभावभूतस्य वाच्यास्यौत्सुक्यावेगसंबलितानुरागोद्रेकजनितमदनपारतन्त्रयपरश्चमत्कारः सुन्दरः।' इति। "शकुनिकोलाहलश्रवणेन उपनायकस्य लतागृहप्रवेशानुमानम्, ततो हर्षावेगौ, ताभ्यामनुरागद्रेकः। ततो मदनपरवशताप्रतीतिः, एवं च-व्यङ्ग्यस्य चमत्काराप्रत्यासन्नत्वमेवासुन्दरत्वमिति फलितम्। केचित्तु'रसादिबोध जनने वाच्यसापेक्षत्वमेवासुन्दरत्वम्। इति। व्यङ्ग्यादिति। इत्यादिव्यङ्ग्यादित्यर्थः। तथा च वधूश्च न तत्र गतेत्येतत्पर्यन्तादित्यर्थः। वध्वा अगमनमेव न केवलं तदीयविप्रलम्भव्यञ्जकम्, किन्तु—शकुनिकोलाहलश्रवणेन सीदन्त्यां वध्वा आगमनमिति वाच्याङ्गवसादसहकारेणैव रसव्यञ्जनाया वाच्यमुखनिरीक्षकत्वात्तदपेक्षया न्यूनचमत्कारी।' इति वदन्ति, तन्न; अङ्गवसादव्यङ्ग्यविषादसहकृतस्यैव वध्वगमनस्य विप्रलम्भव्यञ्जनसम्भवेन वाच्याङ्गवसादमुखनिरीक्षणायोगात्तदानीन्तनगमनाभावसत्त्वेऽपि गमनसम्भावनया विप्रलम्भासम्भवात्। न च 'गृहकर्म्मव्यापतायाः' इत्यनेन'गमनाभावनिश्चयेन गमनसम्भावनैव नास्ती'ति वाच्यम्। गृहकर्म्मान्तः पातिजलाहरणादिच्छेलेनापि तत्सम्भवात्, रतेरुपनायकविषयत्वेन विप्रलम्भाभासस्यैव वक्तुमुचितत्वाच्च।"इति च।

किंच यो दीपकतुल्ययोगितादिषूपमाद्यलंकारो व्यङ्ग्यः स गुणीभूतव्यङ्ग्य एव। वाच्यस्य दीपकादिमुखेनैव चमत्कारविधायित्वात्। तदुक्तं ध्वनिकृता—

**'अलंकारान्तरस्यापि प्रतीतौ यत्र भासते।**

**तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मतः ॥'**

---

## विवृतिः

विषयविशेषे केषांचिद्ध्वनिभ्रमं निरस्य गुणीभूतव्यङ्ग्यत्वं व्यवस्थापयति—किंचेति। दीपकादिमुखेनैवेत्येवकारेण व्यङ्ग्योपमादिव्यवच्छेदः। अलंकारान्तरस्येति। अलंकारान्तरस्य प्रतीतावपि यत्र वाच्यस्य तत्परत्वं व्यङ्ग्यालंकारान्तरतात्पर्यकत्वं न भासते। असौ न ध्वनेर्मार्गो विषय इत्यर्थ। वाच्यस्य दीपकादेरेव वैचित्र्यावहत्वम्। व्यङ्ग्यं तूपमादिकमजागलस्तनायमानमेवेति भावः। चारुत्वस्य चमत्कारस्य विपर्यास इति सोऽपि गुणीभूतव्यङ्ग्य इति पूर्वेणान्वयः ॥

## विज्ञप्रिया

असुन्दरस्य बहून्युदाहरणानि सम्भवन्तीति दर्शयितुमाह—किञ्च यो दीपकेति। बहूपमानानामेकधर्मान्वयो दीपकम्। उपमेयोपमानानामेकधर्म्मान्वयवस्तुल्ययोगिता। सर्वत्रैव व्यञ्जनया उपमा प्रतीयते। अस्याश्च गुणीभूतत्वे हेतुमाह—काव्यस्येति। अलङ्कारान्तरस्यापि प्रतीतौ सत्यां यच्चाऽलङ्कारान्तरं भासत इत्यर्थः। काव्यस्य न तत्परत्वं, चमत्कारानुत्कटत्वेन तत्तत्तात्पर्य्यकत्वम्। अतो भासमानालङ्काररूपोसौ न ध्वनेर्मार्ग इत्यर्थः। यत्रेति पाठे तु यत्र काव्ये भासते इत्यलङ्कार इति कर्तृपदमध्याहार्य्यम्।

अन्यमपि गुणीभूतव्यङ्ग्यप्रकारमाह यत्रेति—व्यङ्ग्यार्थस्य गोपनकृतचारुत्वे हि ध्वनित्वं तद् विपर्य्यासो व्यक्तीकरणं यत्र शब्दान्तरादिना क्रियते सोऽगूढरूपगुणीभूतव्यङ्ग्यप्रभेद इत्यर्थः।

## कुसुमप्रतिमा

असुन्दराख्यगुणीभूतव्यङ्ग्यस्य उदाहरणान्तराण्याह किञ्चेति। अपि चेत्यर्थः। प्रथमादिपदेन प्रतिवस्तुपमादृष्टान्तादीनां ग्रहणम्। द्वितीयादिपदेन च अनेकक्रियाघटितदीपकादौ क्रियासमुच्चयादीनां परिग्रहः। गुणीभूतव्यङ्ग्य एव असुन्दरस्य इति शेषः। दीपकादिमुखेनैव आपातत व प्रतीयमानदीपकादिद्वारैव; न तु तात्पर्य्यपर्य्यालोचनायाः परं प्रतीयमानीपमादिना व्यङ्ग्यलङ्कारेणेत्येवशब्दार्थः। दीपकादीनां प्रकारन्तरत्या अभूतपूर्वत्वादित भावः। अतएव च तादृशीपमाद्यलङ्काररूपगुणीभूतव्यङ्ग्यस्य असुन्दरसंज्ञापि सङ्गच्छत इत्यवधेयम्।

अलङ्करेति। यत्र स्थले अलङ्कारान्तरस्य प्रतीतावपि व्यङ्ग्यतया ज्ञाने सत्यपि, काव्यस्य काव्यात्मक्तवाक्यस्य तत्परत्वं तदलङ्कारान्तरतात्पर्य्यकत्वं न भासते न प्रतीतिविषयी भवति; असौ प्रकारः ध्वने मार्गो विषयी न मतः; अपि तु गुणीभूतव्यङ्ग्यप्रकारविशेष एव मत इत्यर्थः।

असुन्दरस्य प्रकारान्तरं दर्शयितुमाह यत्र चेति । शब्दान्तरेण व्यङ्ग्यार्थ हठात् प्रत्यायकेन पदान्तरेण आदिशब्दात्तादृशवाक्यान्तरेण वा, गोपनेन व्यञ्जनावृत्तिकाव्यव्यञ्जनमात्रद्वारा कृतं यच्चारुत्वं चमत्कारित्वं तस्य विपर्य्यासी व्यत्ययो भवति तत्रापि गुणीभूतव्यङ्ग्य एव प्रकार इति पूर्वेण सम्बन्धः ।

## विमला

विषयविशेषे केषाञ्चिनिभ्रमं निरस्य गुणीभूतव्यङ्ग्यं व्यवस्थापयति, किञ्चेति ।—काव्यस्य—काव्यार्थस्य, दीपकादिमुखेन—दीपकादिसङ्गभावेनेत्यर्थः ["दीपकादिमुखेनैर्त्थ" इत्येवकारेण व्यङ्ग्योपमादिव्यवच्छेदः] । चमत्कारविधायित्वात्—चित्तरञ्जकत्वात् ।

उक्तमर्थं प्राचां संवादेन प्रमाणयति, तदुक्तमिति ।—ध्वनिकृता—गोवर्द्धनाचार्य्येणेत्यर्थः । अलङ्कारेति ।—अलङ्कारान्तरस्य—अन्यस्य व्यङ्ग्यभूतस्य अलङ्कारस्य, प्रतीतौ—व्यञ्जने, अपि यत्र काव्यस्य तत्परत्वं—व्यङ्ग्यालङ्कारतात्पर्य्यबोधकत्वं, न भासते—न प्रकाशते, असौ ध्वनेः मार्गः,—विषयः, न मतः,—न कथितः, यथाहि दीपकादिषु अलङ्कृतिषु उपमाऽलङ्कृतेः व्यज्यमानतायामपि वाच्यपरत्वेन सुन्दरताया अनवस्थितेः न ध्वनिरिति व्यपदेश्यत्वं, यथा,—"लता पुष्पोद्गमैर्नारी दावभावादिभिः, शुभैः । रात्रिर्ज्योतिर्गणाभासैर्ध्वनिभिः, कविता स्फुरेत् ।।" इत्यादौ उपमासहितत्वेऽपि वाच्यलङ्कृतिटारैव सुन्दरत्व, न तु व्यङ्ग्यालङ्कृतिनिष्ठत्वेन; तस्मात् तत्र वाच्यालङ्कृतिद्वारेणैव काव्यंव्यपदिश्यते । इत्थं समासोक्त्याक्षेपानभिहितविमित्तविशेषोक्तिपर्य्यायोक्त्यापह्नुतिसङ्करालङ्कृतिप्रभृतावपि बोध्यम् । "उपोढञरागेण विलीलतारकं तथा गृहीतं शशिना निशामुखम् । यथा समस्तं तिमिराशुकं तया पुरोऽपि रागाट्वलितं न लक्षितम् ।." इत्यादौ समसोक्त्यलङ्कृतौ व्यङ्ग्यार्थेन सङ्गतो वाच्यार्थ एव मुख्यत्वेन प्रवगम्यते, आरोपितकान्ताकान्तचेष्टितयोः रात्रिचन्द्रमसोरेव पदोच्चयविशेषार्थरूपत्वात् । एवं पुरस्तादपि द्रष्टव्यम् । तथोक्तं प्रदीपकृता,—"व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः । समासोक्त्यदयस्तत्र वाच्यालङ्कृतयः, स्फुटाः ।।" व्यङ्ग्यस्य प्रतिभामात्रं वाच्यार्थानुगमेऽपि वा । न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ।।" इति ।

## लक्ष्मी

असुन्दरस्य बहून्युदाहरणानि सम्भवन्तीति दर्शयितुमाह—किञ्च यो दीपवेति । बहूपमानानामेकधर्मान्वयो दीपकम् । उपमेयोपमानानामेकधर्मान्वयस्तुल्ययोगिता । आदिपदेन प्रतिवस्तूपमादृष्टान्तादीनां परिग्रहः । उपमाद्यलङ्कार इति । सर्वत्रैव व्यञ्जनया उपमा प्रतीयते । अत्रादिपदेन च अनेकक्रियाघटितदीपकादौ क्रियासमुच्चयादीनां ग्रहणम् । गुणीभूतव्यङ्ग्य एव असुन्दराख्य इति शेषः । उपमायाश्रच गुणीभूतत्वे हेतुं दर्शयति—काव्यस्येति । दीपकादिमुखेनैव आपातत एव व्यज्यमानदीपकादिद्वारैव न तु तात्पर्यावगतेरनन्तरं व्यज्यमानोपमादिना व्यङ्ग्यालङ्कारेणेत्येवशब्दार्थ, उपायान्तरेण दीपकादीनां पूर्वमसम्भवादिति भावः अत एव चोक्तव्यङ्ग्यस्य असुन्दरसंज्ञापि सङ्गटत इति बोध्यम् । उक्तार्थे ध्वनिकारं प्रमाणयति—तदुक्तमिति । ध्वनिकृता आनन्दवर्धनेन ।

अलङ्कारान्तरस्यापीति । यत्र स्थले अलङ्कारान्तरस्य रूपकादेलङ्कारप्रतीतावपि व्यङ्ग्यतया बोधे सत्यपि वाच्यस्य तत्परत्वं व्यङ्ग्यालङ्कारान्तरतात्पर्यकत्वेन चारुत्वं न भासते न प्रतीतविषयो भवति असौ प्रकारः ध्वनेर्मार्गो विषयो न मतः, किन्तु गुणीभूतव्यङ्ग्यप्रकारविशेष एव मत इत्यर्थः । एवञ्च दीपकादावलङाक्रे उपमायाः प्रतीयमानत्वेऽपि चारुत्वस्यावस्थानान्न ध्वनिव्यवहारः । यथा—

**'रजनीशशिकरकिरणैर्विसनीकमलैस्तरङ्गिणीसलिलैः ।**

**व्रततिः पुष्पस्तवकैः काव्यकथा भूष्यते सुजनैः ।**

इत्यादिषूपमागर्भत्वेऽपि न तन्मुखेन चारुत्वं व्यवतिष्ठते, किन्तु वाच्यालङ्कारमुखेनैवेति, अतो ह्यत्र वाच्यालङ्कारः काव्यव्यवहारो युक्तः । एवं समासोक्त्याक्षेपानुक्तनिमित्तविशेषोक्तिपर्यायोक्तापह्नुतिसङ्करालङ्कारादावपि ज्ञेयम् । समासोक्तौ तावत्—

**'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।**

**यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥'**

इत्यादौ व्यङ्ग्येनानुगतं वाच्यमेव प्राधान्येन प्रतीयते समारोपितनायिकानायक व्यवहारयोर्निशाशिनोरेव वाक्यार्थत्वात् । एवमाक्षेपानुक्तादावप्यनुसन्धेयम् ।

तथा चोक्तम्—

**'व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः ।**

**समासोक्त्यादयस्तत्र वाच्यालङ्कृतयः स्फुटाः ॥**

व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा । न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ॥ तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ । ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः ॥' इति

## रुचिरा

एवं गुणीभूतव्यङ्ग्यस्याष्टौ भेदान् लक्ष्यलक्षणाभ्यां निर्दर्श्य गुणीभूतव्यङ्ग्यत्वमेवमन्यत्रापि निर्द्रष्टव्यमिति ध्वनिभ्रमसम्भवनिरासपूर्वकं निर्देष्टुमुपक्रमते—**किञ्चे**त्यादिना ।

**किञ्च** निरूपणीयान्तरमस्तीति भावः । **दीपकतुल्ययोगिताऽऽदिषु** तदाख्येष्वलङ्कारेषु । आदिना व्याजस्तुतिसमासोक्त्यादीनां ग्रहणम् । **उपमाऽऽद्यालङ्कारः** । आदिना श्लेषादीनां ग्रहणम् । **यः** । **व्यङ्ग्यः** । **सः** । **गुणीभूतव्यङ्ग्यो** गुणीभूतं व्यङ्ग्यं यत्र तादृशः । एव । ननु कोऽत्र हेतुरित्याशङ्क्याह **'काव्यस्य** व्यज्यमानोपमाऽऽद्यलङ्कारस्ये'ति शेषः । **दीपकादिमुखेन** दीपकादिरा । **एव** । **चमत्कारविधायित्वात्** । अयम्भावः—यत्र दीपकादिसद्भावे उपमाऽऽदेर्व्यज्यमानत्वं तत्र दीपकाऽऽद्यन्वयव्यतिरेकगानुविधायित्वमिति न व्यज्यमानस्याप्युपमादेश्चमत्कारकारित्वे प्राधान्यम्, किन्तु दीपकादेरेव । इति ।

उक्तमर्थं ध्वनिकारसम्मतया समर्थयते—**तदुक्त**मित्यादिना ।

**तत्** 'यत्रागुक्त'मिति शेषः । **ध्वनिकृता** ध्वनिमार्गस्थापकाचार्य्येणानन्दवर्धनेनेत्यर्थः । **उक्तम्** । किमित्याह—

"**अलङ्कारान्तरस्यान्यो** वाच्याद्भिन्नोऽलङ्कार इति तस्य । **यत्र** यस्याम् । **प्रतीतौ** कथमपि व्यक्तौ 'सत्या' मिति शेषः । **अपि** किं पुनरसत्या'मिति शेषः । **काव्यस्य** । **तत्परत्वं** तस्मिन् प्रतीयमानेऽलङ्कारे परः कृतनिष्टस्तस्य भावस्तत्त्वम् । **न** । **भासते** प्रकाशते । **असौ** स इत्यर्थः । **ध्वनेः** । **मार्गो** विषयः । न । मतः । अयम्भावः दीपकादौ या ह्युपमाऽऽदेः प्रतीतिस्तत्र यदि प्रकृतस्य काव्यस् चारुत्वापादनौन्मुख्यं न प्रत्यवतिष्ठेत तन्न ध्वनिः किन्तु व्यङ्ग्यस्य गुणीभाव एव । अत एवोक्तं ध्वनिकृता "तथा च दीपकादावलङ्कारे उपमायां गम्यमानत्वेऽपि तत्परत्वेन

चारुत्वस्याव्यवस्थानान्न ध्वनिव्यपदेशः। यथा—"चंदमऊएहिं णिसा णालिनीकमलेहिं कुसुमगुच्छेहिं लआ। हंसेहिं सरअसोहा कव्वकहा सज्जणेहिं करइ गुरुई ॥" इति।" यथा वाऽस्यैव च्छायाभूते—"रजनी हिमकरकिरणैर्विसिनी नलिनै स्तरङ्गिणी सलिलैः। वल्ली कुसुमस्तबकैः काव्यकथा भूष्यते सुजनैः ॥" इत्यादौ तुल्ययोगिताऽऽदौ उपमाऽऽदेः प्रतीयमानस्यापि वाच्यालङ्कार (तुल्ययोगिताऽऽदि) द्वारेणैव चारुत्वमिति न तस्य धवनिव्यपदेश्यत्वम्। इति दिक्।

यत्र च शब्दान्तरादिना गोपनकृतचारुत्वस्य विपर्यासः।

यथा—

**'दृष्टया केशव! गोपरागहृतया किंचिन्न दृष्टं मया**
**तेनात्र स्खलितास्मि नाथ! पतितां किं नाम नालम्बसे।**
**एकस्त्वं विषमेषुखिन्नमनसां सर्वाबलानां गति-**
**र्गोप्येवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम्॥'**

अत्र गोपरागादिशब्दानां गोपे राग इत्यादिव्यङ्ग्यार्थानां सलेशमिति पदेन स्फुटतयावभासः। सलेशमिति पदस्य परित्यागे ध्वनिरेव।

---

## विवृतिः

दृष्टयेति। हे केशव, हे नाथ, गोपरागैर्गौधूलिभिर्हृतया आच्छन्नया दृष्टया चक्षुषा मया किंचिन्मार्गादिकं न दृष्टम्, तेन हेतुना अत्र तवाग्रत एव स्खलितास्मि पितता भवामि। पतितां मां किं कथं नालम्बसे, न धारयसि। धारणे हेतुमाह—एकस्त्वमिति। विषमेषु वातवर्षादिसंकटेषु खिन्नमनसां दुःस्थितचेतसां सर्वासामबलानां स्वरक्षणाक्षमाणां गती रक्षकः। सलेशं सश्लेषम्।

श्लिष्टार्थो यथा—गोपे निजस्वामिनि यो रागस्तेन हृतया लुप्तया दृष्टया ज्ञानेन किंचित्तव रहस्यं मया न दृष्टं नानुभूतम्, तेन हेतुना आत्रसु गोपीषु मध्येऽहमेव स्खलिता परमसुखाद्भ्रष्टा। पतितां मां किं नालम्बसे नानुगृह्णासि। ननु परस्त्रियां ममानुग्रहो नोचित इत्यत आह—एकस्त्वमिति। विषमेषुः। कामः तेन परस्त्रियां कामः तेन खिन्नमनसां व्याकुलचेतसां सर्वासामबलानां गतिः स्मरवैक्लव्यनाशकः। 'परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि' इत्यमरः। **स्फुटतयावभास** इति। तथा च कामिनीकुचकलशवद्गूढं चमत्कारोति। अगूढं तु स्फुटतया वाच्यायमानमिति गुणीभूतमेवेति भावः।

## विवृतिपूर्तिः

सलेशमिति। सलेशं ससूचनमित्यर्थः। अल्पीभावनं हि सूचनमेव॥

## विज्ञप्रिया

दृष्टयेति—केशवं दृष्ट्वा मदनान्धतया गोष्ठे पतितताया गोप्याः सलेशं सश्लेषं गदितो हरिश्चिरमवतात्। दृष्टयेत्यादि—सश्लेषोक्तिः तत्र वाच्यार्थो यथा—हे केशव गवां परागेण रजसा हृतया नष्टया दृष्टया मया किञ्चिन्न दृष्टम्। तेन हेतुना अत्र स्खलिताऽस्मि पतिताऽस्मि। हे नाथ! पतितां मां किं नालम्बसे। कथमालम्बिष्ये इत्यत्राह—एकस्त्वमिति—विषमेषूच्चनीचेषु वर्त्मसु खिन्नमनसां पतनेन क्लान्तहृदयानां सर्वाबलानां सकलबलरहितानां स्त्रीणां पुंसा च यतस्त्वं गतिरिति। व्यङ्ग्यार्थो यथा—हे केशव गोप गोपालक। रागेण त्वय्यनुरागेण हृतया दृष्टया मया किञ्चिन्निजपतिरोषादिकं न दृष्टम्। तेनात्र गोष्ठे स्खलितास्मि आगतास्मि हे नाथ! पतितां

पतिभावं भर्तृत्वं किं नाम नालम्बसे नाश्रयसि । यतो विषमेषुणा पञ्चेषुणा खिन्नमनसां सर्वासाम् अबलानां त्वमेको गतिरिति ।

स्फुटतयेति—श्लेषवशादेव तत्प्रतीतेः सलेशपदेन तत् स्फुटीकरणम् । रसाभास इति बोद्धणामल्पसन्तोष इत्यर्थः । न त्वनौचित्यप्रवर्त्तितरूपरसाभासः तद् गोपनेऽपि परनायकविषयत्वेन तदवश्यंभावात् ।

## लोचन

दृष्टयेति—गवां परागेण रजसा हृतया तिरस्कृतया । गाः इन्द्रियाणि सम्भोगदानादिना पातीति गोपः तस्मिन् गोपे त्वयि, रागेण प्रेम्णा हृतया वशीकृतया स्खलिता भ्रष्टपादा गतधैर्य्या च । अथ पतितां मार्गपतितां धवत्वं च नावलम्बसे न धारयसि न परिगृह्णासि च । विषमेषु उच्चनीचस्थानेषु, विषमेषुः कामः तेन च खिन्नमनसाम् । अबलानां दुर्बलानां स्त्रीणां च ।

## कुसुमप्रतिमा

दृष्ट्येति । हे केशव ! मया गवां परागैश्वरणीत्यापितधुलिभिः हृतया आकृष्टदर्शनशक्तिकया दृष्ट्या चक्षुषा किञ्चिद्गमनपथादिकं न दृष्टम्; अन्यत्र तु गोपे गोपाले त्वयि यो रागोऽनुरागस्तेन हृतया आकृष्टया मया दृष्टया ज्ञानेन किञ्चित् कुलादिकं न दृष्टं न विचारितम् । तेन सम्यक्पथादिदर्शनाभावेन अत्र स्खलिता पतितास्मि, अतएव हे नाथ ! रक्षक ! पतितां मां किं नाम न आलम्बसे धरसि; अन्यत्र तु तेन अनुरागेण हेतुना, अत्र स्खलितास्मि सतीचारित्रयात् विच्युतास्मि, तथा च हे नाथ ! अंन्यतर पतित्वेनाभिमत ! पतितां रमणानुग्रहलामाय तव पदप्रान्ते प्रणतां मां किं नाम नालम्बसे रमणाय न धरसि । ननु कथमहं परस्त्रियं त्वामवलम्बे इत्याह एक इति । विषमेषु उच्चावचस्यानेषु खिन्नमनसां पतनेन क्लान्तहृदयानां सर्वेषाम् अबलानां दुर्बलजनानां त्वम् एक एव गतिः रक्षिता, अतो रक्षणेच्छया परस्त्रीधरणेऽपि न दोष इति भावः । अन्यत्र तु विषमेषुः पञ्चशरः कामस्तेन खिन्नमनसां पीड़ितचित्तानां सर्वासां स्वपरसाधारणीनाम् अबलानाम् स्त्रीणां त्वमेक एव गतिः सुरतेन तद्दुःखहर्त्ता । गोष्ठे गोप्वा एवं सलेशं सश्लेषं किञ्चित् सुरतेङ्गितसहितं वा गदित उक्तो हरिः कृष्णः चिरं वो युष्मान् अवतात् रक्षतु ।

अत्रेति । स्फुटतया अवभासः स्पष्टतया प्रतीति । ध्वनिरेव शब्दशक्तिमूलवस्तुध्वनिरेव, न तु गुणीभूतव्यङ्ग्यमित्येवशब्दार्थः । कामिनीकुचकुम्भवत् किञ्चिद्गूढताया एव चमत्कारविधायित्वादिति भावः ।

## विमला

दृष्टयेति ।—हे केशवः ! गोपरागैः,—गवां, परागैः,—रजोभिः, ("परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि" इत्यमरः) हृतया—आच्छन्व्या, दृष्टया, [करणे तृतीयेयम्] मया [इदं कर्तृपदम्] न किञ्चित्, मार्गादिकमिति शेषः, दृष्टं, तेन—निरुक्तहेतुना, अस्मि—अहम्, अत्र—तव अयत इत्यर्थः, ["अत्र" इत्यत्र "इह" इति पाठान्तरम्] स्खलिता—पतिता, भवामि इति शेषः; हे नाथ ! पतितां—च्युतां, मामिति शेषः किं—कथं, नाम न आलम्बसे ?—न धारयामि ? ननु धारणे को हेतुः ? इत्याह, एकस्त्वमिति ।—त्वम्, एकः,—केवलः, विषमेषु—वातवर्षादिसङ्कटेषु, खिन्नमनसां—क्लन्तचेतसां, सर्वेषाम् अबलानां—दुर्बलानां, स्वरक्षणाक्षमाणामित्यर्थः, जनानां, गतिः,—आश्रयः, गोप्या, गोष्ठे एवं सलेशं—सव्याजं, सदोषं यथा तथा इत्यर्थः, गदितः,—अभिहितः, प्रार्थित इति यावत्, हरिः,—कृष्णः, चिरं वः,—युष्मान अवतात्—रचतु । शिलिष्टार्थस्तु—केशव एव गोपः,—गां—दृशाम्, उपलक्षणेन तदा-

द्रौनि इन्द्रियाणि, पाति—तत्तदभिमतविषयात्मना उपस्थाय रचतीति तथोक्तः, ("गौः...... स्त्री सौरभेयौदृग्वाणदिग्वाम्भूष्वष्मु भूम्नि च" इति मेदिनी । एतेनानुरागौचित्यभावेदितम्) तस्मिन् रागः—अनुरागः, तेन हतया—आकृष्टया, दृष्टया—नेत्रवृत्त्या, बाह्यज्ञानेनेत्यर्थः, केशवानुरागेण बाह्यज्ञानस्य तिरोहितत्वादिति भावः, किञ्चित्—कुलाटिकं, न दृष्टं—न गणितमित्यर्थः । यद्वा,—"केशव" इति सम्बोधनपदगोपे—निजस्वामिनि, यो रागः, तेन हृतया—लुप्तया, दृष्टया—ज्ञानेन, किञ्चित्—तव रहस्यं, मया न दृष्टं—नानुभूतमित्यर्थः, तेन—हेतुना, अत्र आसु गोपीषु मध्ये, अहमेव स्खलिता—परमसुखाद्भ्रष्टाऽस्मि, अतः हे नाथ ! पतितां—प्रणताम, अद्यावधि चरणानुपसादनजन्धापराधस्य क्षमापनार्थं साञ्जलि शरणं रयातिमिति यावत्, मां, किन्नाम, नालम्बसे ?—नानुगृह्णासि ? ननु परस्त्रियां ममानुग्रही नोजितः इत्यत आह, एकस्त्वमिति ।—विषमेषुणां—पञ्चशरेण, कामेनेति यावत्, खिन्नमनसांम—व्याकुलचेतसां, सर्वासाम्, अबलानां—नारीणाम, एकः,—-अद्वितीयः, त्वं—त्वमेवेत्यर्थः, गतिः,—स्मरवैक्लव्यनाशकः, इति । शार्दूलविक्रीडितं वृत्तम् ।

अत्रेति ।—अत्र "सलेशम" इति पदेन—अभिप्रायान्तरगर्भितन्तासूचकेन पटेन, स्फुटतया—वाच्यवत् प्रकास्यभावेन इत्यर्थः, अवभासः,—प्रतीतिः इति अगूढं गुणीभूतं व्यङ्ग्यमिति भावः । तथा च कामिनीकुचकलमवत् गूढमेध व्यङ्ग्यं चमत्करोति, अगूढं तु न, तस्य स्फुटतया वाच्यायमानत्वादिति निष्कर्षः । अतः "सलेशम्" इति 'पदस्य परित्यागे—अनभिधाने, ध्वनिः,—ध्वनिकाव्यत्वम्, एव; यद्यपि वक्तुर्भागवततया तथाऽभिधाने मातापित्रोः रतिवर्णनमिवानौचित्यम्, अथापि सलेशमिति पदस्यैव अनौचित्यावहत्वं मुख्यमिति तथोक्रतमवधेयम् ।

## लक्ष्मी

अन्यमपि गुणीभूतप्रकारं निरूपयितुमुत्थापयति—यत्र चेति । शब्दान्तरेण व्यङ्ग्यार्थस्य हठात् प्रत्यायकेन पदान्तरेण आदिना तादृशवाक्यान्तरेण वा गोपनेन व्यङ्ग्यद्वारा कृतं यच्चारुत्वं चमत्कारत्वं तस्य विपर्यासो भवति तत्रापि गोपनीयत्वापाकरणं गुणीभूतव्यङ्ग्य एवेति पूर्वेमान्वयः । व्यङ्ग्यार्थस्य गोपनकृतचारुत्वे हि ध्वनित्वं तद्विपर्यासो व्यक्तीकरणं यत्र शब्दान्तरादिना क्रियते सोऽप्यगूढरूपगुणीभूतव्यङ्ग्यप्रभेद इत्यर्थः ।

दृष्टयेति । सश्लेषोक्तिः । तत्र वाच्यर्थो यथा—हे केशव ! गवां परागेण रजसा 'परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि' इत्यमरः, हतया आच्छन्नया दृष्टया चक्षुषा मया किञ्चिन्मार्गादिकं न दृष्टं नावलोकितम्, तेन हेतुना अत्र तवाग्रत एव स्खलितास्मि पतिताऽस्मि, अत एव हे नाथ पालक ! पतितां मां किं नालम्बसे न धारयसि । ननु कथमहं परस्त्रियमालम्बिष्ये इत्यत आह—एकस्त्वमिति । विषमेषु उच्चनीचेषु वातगर्तादि सङ्कटेषु वर्त्मसु खिन्नमनसां पतनेन क्लान्तहृदयानां, सर्वावलानां सकलवलरहितानां स्त्रीणां पुंसा च यतस्त्वं गती रक्षकः, अतो रक्षणेच्छया परस्त्रीधरणेऽपि न दोषः शङ्क्य इति भावः । गोष्ठे गोप्या एवं सलेशं सश्लेषं गदितो हरिः श्रीकृष्णः वो युष्मान् चिरम् अवतात् रक्षतु ।

व्यंङ्ग्यार्थस्तु यथा—गोपे निजस्वामिनी गोपाले यो रागोऽनुरागस्तेन हृतया लुप्तया मया, दृष्टया ज्ञानेन किञ्चित्तव रहस्यं न दृष्टं नानुभूतम् यद्वा गोपे गोपाले त्वयि यो रागस्तेन हतया आकृष्टया मया दृष्टया किञ्चिन्निजपतिरोषादिकं न दृष्टं न विचारितम् । तेन अनुरागेण हेतुना अत्र गोष्ठे स्खलिताऽस्मि विच्युताऽस्मि । तथा च हे नाथ ! पतितां पतिभावं भतृत्वं किं नाम मां नालम्बसे नानुगृह्णासि । विषमेषुः कामः तेन खिन्नमनसां व्याकुलचेतसां सर्वासामबलानां त्वमेको गतिः रमणेन स्मरदुःखनायक इति । शाद्र्दूलविक्रीडितं छन्दः ।

अत्रेति। गोपरागादीत्यादिना दृष्ट्यादेः परिग्रहः स्फुटतया स्पष्टतया अवभासः प्रतीतिः। श्लेषवशादेव तत्प्रतीतेः श्लेषलेशपदेन तत् स्फुटीकरणम्। ध्वनिरेवेति। शब्दशक्तिमूलस्तु ध्वनिरेव न तु गुणीभूतव्यङ्ग्यमित्येव शब्दार्थो ज्ञेयः। एवञ्च—

'गोप्यैवं गदितः समुद्धृतिपरः पायादपायाद्धरिः'। इति पठनीयम्।

तथा च कामिनीकुचलकलशवद्गूढं चमत्करोति। अगूढन्तु स्फुटतया वाच्यायमानमिति तत्र गुणीभूतमेवेति भावः।

## रुचिरा

प्रकारान्तरेण व्यङ्ग्यस्य वाच्यापेक्षया न्यग्भावं लक्षयितुमाह—**यत्रेत्यादि**।

**यत्र** यस्मिन् काव्ये। **च**। **गोपनकृतचारुत्वस्य** गोपनेन 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु।' इत्युक्त-दिशा द्व्यर्थैः पदैरभिधानेन कृतं यच्चारुत्वं चमत्कारस्तस्य। **शब्दान्तरादिना** शब्दान्तरं विजातीयः शब्दस्तदादिना। आदिपदं च तद्विजातीयेङ्गिताऽऽदिबोधकम्। **विपर्यासो**गोपनीयत्वापाकरणम्। 'तत्रापि गुणीभावो व्यङ्ग्यस्ये'ति शेषः।

उदाहरति—**यथा**। **"दृष्ट्या"** इत्यत्र।

"हे **केशव** कृष्ण ! **गोपरागहतया** गवां परागा धूलयस्तैर्हता विनष्टा स्वकार्य्यक्षमत्वश्चावितेति यावत् तया तथाभूतया। (गोपे त्वयि यो रागोऽनुरागस्तेन हतयेति तु गोपितोऽर्थः)। दृष्टया दर्शनेन (विचारेणेति तु गोपितोऽर्थः)। **किञ्चित्** प्रस्तरादिकमिति शेषः। (परत्वादिकं धर्म्मविरुद्धाचरणादिजन्यप्रत्यवायादीति तु गोपना-र्थम्)। **न**। **मया दृष्टम्** (विचारितमिति गोपितोऽर्थः। **तेन** निरुक्तेन हेतुना। **इहास्मिन्** प्रस्तरादिदेश इति भावः (अस्मिंस्त्वयि 'प्रवृद्धमन्मथतयेति शेषः।' इति गोपनीयोऽर्थः)। हे **नाथ** रक्षक ! **स्खलिता** पतिता (च्युतधैर्य्येति गोपनीयोऽर्थः)। **अस्मि**। अतः—पतितां प्रस्तरादिदेशे च्युताम् (त्वयि चलितचित्ततया वा भ्रष्टाम् उपभोक्तुमर्हतां वा प्रतिपाद्य शयितामिति गोपनीयोऽर्थः)। 'मा' मिति शेषः। **किन्नाम**। **न**। **आलम्बसे** उद्धरसि करावलम्बदानेन रक्षसीति यावत् (स्वकीयां मत्वा कृतार्थऐयसे इति गोपितोऽर्थः)। ननु किमहमेव रक्षिताऽस्मि तदन्यमाश्रयमित्या-शङ्क्याह—**विषमेषु** सङ्कटेषु। **खिन्नमनसा**मुद्विग्नानाम् (विषमेषुः पञ्चशरः काम इति यावत् तेन खिन्नं मनो यासां तादृशीनामिति गोपनीयोऽर्थः)। **सर्वाबलानां** सर्वेषां निर्बलनाम् (सर्वासां सुन्दरीणामिति गोपितोऽर्थः)। **एकोऽनन्यः**। **त्वम्**। **गतिराश्रयः**। **एवम्**। **सलेशं** लेशोऽशोभिप्रायाविष्करणार्थे सूक्ष्ममीहितमिति यावत् तेन सहिता यत्र तद् यथा भवेत्तथा। **गोप्या**। **गदितः** कथितः। **गोष्ठे** गोमण्डले 'स्थित'इति शेषः। **हरिः**। **चिरम्**। **वो** युष्मान्। **अवतात्** रक्षतु। अत्र 'सर्वाबलानाम्' इत्यंशे सर्वशब्दस्य गुणीभावेऽपि श्लेषोपकारितया नाविमृष्टवि-धेयांशतामावहतीत्यस्यानित्यस्यादोषत्वमिति बोध्यम्। शार्दूलविक्रीडितं वृत्तम्॥ २१६॥"

लक्ष्यं सङ्गमयति—**इत्यत्रेत्यादिना**।

**इत्यत्र**। **'गोपरागादिशब्दानाम्**। आदिना-दृष्ट्यादिपदानां ग्रहणम्। **'गोपे राग' इत्यादिव्यङ्ग्यार्थानाम्।'** आदिना 'विचारित' मित्याद्यर्थानां ग्रहणम्। **'सलेश' मितिपेदन** (साधने तृतीयेयम्।) **स्फुटतया**। **अवभासः**। अतः क्षौमान्तरितकामिनीकुचकलशयुगलस्येव व्यङ्ग्यस्य गुढत्वमपेक्षितमपि निवृत्तमिति न ध्वनिव्यपदेश्यत्वमेत-स्येति भावः। तदेव युक्त्या समर्थयते—**हि** यतः। **'सलेश' मितिपदस्य**। **परित्यागे** 'कृते सती' ति शेषः। **ध्वनिः**। **एव**। तथा च—'गोप्यैवं गदितः समुद्धृतिपरः पायाच्चिरं वो हरिः।' इति पठनीयमिति भावः।

किंच। यत्र वस्त्वलंकाररसादिरूपव्यङ्ग्यानां रसाभ्यान्तरे गुणीभावस्तत्र प्रधानकृत एव काव्यव्यवहारः।

तदुक्तं तेनैव—

**'प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्।**

**धत्ते रसादितात्पर्यपर्यलोचनया पुनः ॥' इति।**

---

## विवृतिः

इदानीं गुणीभूतव्यग्यप्रकारेष्वपि यत्र विश्रामंधामतया रसादिकं प्रधानमस्ति तत्र तेनैव काव्यव्यपदेश इत्याह—**किंच। यत्रेति**। 'प्रधाने हि व्यपदेशा भवन्ति' इति न्यायादिति भावः। **तेनैव** ध्विकृतैव। **रसादीति**। रसादौ यत्तात्पर्य तस्य पर्यालोचनया अनुसंधानेन ॥

## विज्ञप्रिया

क्वचित्तु व्यङ्ग्ये गुणीभूतेऽपि ध्वनिकाव्यव्यवहार एव न गुणीभूतव्यवहार इत्याह—किञ्चात्र यत्र वस्त्विति। रसाभ्यन्तरे प्रधानीभूतरसादौ। तत्र प्रधानकृत एवेति व्यवहारो ध्वनिव्यवहारः। न चेदं कथमुपपद्यते ईदृशस्थलेऽपराङ्गाख्यगुणीभूतव्यङ्ग्यस्यैवोक्तत्वात् इति वाच्यम्, यत्र गुणीभूतानामलङ्काररसादीनामङ्गिजनकत्वमेव नत्वङ्गि प्रकर्षकत्वं तत्रैवाङ्गिनो व्यञ्जकविशेषणत्वेनाङ्गिन एष चमत्कारित्वात् ध्वनिव्यवहारात्। यथा च चलापाङ्गां दृष्टिमित्यत्र मधुकरकामुकरूपालङ्कारस्य व्यङ्ग्यस्य हता इति व्यञ्जकविशेषलभ्य व्यङ्ग्यविप्रलम्भप्रतिजनकत्वात् नापराङ्गत्वं किन्तु विप्रलम्भध्वनित्वमेव। यथा—

**"जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया**

**मा मां संस्पृश पाणिनेति रूदती गन्तुं प्रवृत्ता ततः।**

**नो यावत् परिरभ्य चाटुकशतैराश्वासयामि प्रियां**

**भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥"**

इत्यत्र विधि प्रत्यसूयाध्वनिरेव शठपदेन व्यञ्जकविशेषेण व्यक्तः। नो यावदाश्वासयामि इत्यनेन व्यङ्ग्यस्य विप्रलम्भस्य तु असूयाजनकत्वमेव नासूयाप्रकर्षकत्वमित्यतो नाऽपराङ्गत्वमित्यादि स्वयमूह्यम्।

प्रकारोऽयमिति—रसादितात्पर्य्यपर्य्यालोचनमङ्गीभूतरसादेरङ्गादिजन्यत्वादिना तत्रैव तात्पर्य्यपर्य्यालोचनम्। क्वचित्तु प्रकारणगम्ये वस्तुनि तात्पर्य्यसत्त्वेन अङ्गीभूतरसादौ तात्पर्य्याभावेऽपि आपाततश्चमत्कारिभिस्तैरङ्गभूतै रसाद्यैरेव पराङ्गव्यवहार इत्याह।

## लोचन

किञ्चात्रेति। प्रधानेन रसेनैव काव्यव्यवहारो न तु गुणीभूतव्यङ्ग्येन तथा च तत्रोत्तमकाव्यत्वमेव इत्यर्थः। यथा "अयं स रसनोत्कर्षी" त्यादावेव हि तत्र शृङ्गारस्य गुणीभावेऽपि तं भागमवलम्ब्य मध्यमकाव्यव्यवहारोऽपि

न कर्त्तव्यः। किन्त्वङ्गिनं करुणमाश्रित्य उत्तमकाव्यव्यवहार एवेंत्यर्थः। किन्त्वत्राह काव्यप्रकाशकारः, यद्यपि स नास्ति कश्चिद् विषयो यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः संकरः संसृष्टिर्वा नास्ति तथापि प्राधान्येन व्यपदेशा भवन्तीति क्वचित् केनाचिद् व्यवहारः कृत इति।

यत्रेति—असौ गुणप्रधानभावाभासः काव्यव्यपदेशं प्रधान्यदर्शनिन मूढमतिभिः अपेक्षणीयम्।

## कुसुमप्रतिमा

व्यङ्ग्यस्य व्यवस्थान्तरमाह किञ्चेति। अपि चेत्यर्थः। रसादीत्यादिपदेन भावादीनां ग्रहणम्। रसाभ्यन्तरे अन्वरसमध्ये गुणीभावः अप्रधानभावेनावस्थितिः। तत्रेति। "प्रधानानुयायिनी हि जनव्यवहारा भवन्ती"ति न्याया-दित्याशयः। तथा च—"अयं स रसनोत्कर्षी" इत्यादौ करुणरमाभ्यन्तरे श्रृङ्गाररसस्य गुणीभावात् "करुणकाव्य-मिदम्" इति करुमरसेनैव व्यवहारः कर्त्तव्य इत्युपदिष्टम्। तेनैव ध्वनिकृतैव।

प्रकार इति। अयं गुणीभूतव्यङ्ग्योऽपि प्रकार इतराङ्गादिभेदः, रसादौ यत् तात्पर्य्यं रसादिप्रत्यायनेच्छया कविरुच्चरितत्वं तस्य पर्य्यालोचनया अनुसन्धानेन पुनर्ध्वनिरूपतां धत्ते प्राप्नोति। एवञ्च "अयं स रसनोत्कर्षी" इत्यादौ गुमीभूतव्यङ्ग्यस्यापि श्रृङ्गारस्य ध्वनित्वसम्भवेन श्रृङ्गारकाव्यव्यवहारप्रसक्तावपि तत्र करुणस्यैव प्राधा-न्यात्तेनैव काव्यव्यवहार इति भावः।

नन्वेवं सर्वैरेष कविभिः रसादिप्रत्यायनेच्चयैव काव्यनिर्म्मामात् सर्वत्रैव ध्वनिकाव्यव्यवहारापत्तिः, तथा च गुणीभूतव्यङ्ग्यस्याख्यभेदनिरूपणं निरर्थकमेवेत्याह यत्र त्विति।

## विमला

इदानीं गुणीभूतव्यङ्ग्यप्रकारेष्वपि यत्र विश्रामधामतया रसादिकं प्रधानमस्ति, तव तेनैव काव्यव्यपदेशः इत्याह, किञ्चेति।—गुणीभावः,—अप्राधान्येऽवस्थितिः, रित्यर्थः, "प्रधानेन हि व्यपदेशा भवन्ति" इति न्यायादिति भावः। तैनैव—ध्वनि कारेणैव, गोवङ्धनाचार्येणैवेति यावत्।

प्रकार इति।—अयं गुणीभूतव्यङ्ग्यः प्रकारः अपि रसादिषु यत्, तात्पर्य—तत्परत्वं, तस्य पर्य्यालोच-नया—अनुशौलनेन, पुनः, ध्वनिरूपताम्—अगुणीभूत व्यङ्ग्यत्वं, धत्ते—प्राप्नोति। रसादितात्पर्य्यवत्त्वे सति गुणीभूतव्यङ्ग्यस्यापि ध्वनित्वव्यपदेशो भवतीति भावः।

## लक्ष्मी

क्वचित्तु व्यङ्ग्ये गुणीभूतेऽपि ध्वनिकाव्यवहार एव न गुणीभूतव्यवहार इत्याशयेनाह-किञ्चेति। अपि चेत्यर्थः। रसादीत्यत्रादिपदेन भावादीनां ग्रहणम्। रसाभ्यन्तरे प्रधानीभूतरसादौ गुणीभावः अप्रधानभावेनावस्थि-तिस्तत्र प्रधानकृत एव काव्यव्यवहारः प्रधानेन रसेनैव काव्यव्यवहारो न तु गुणीभूतव्यङ्ग्येन तथा च तत्र 'प्राधान्येन व्यपदेशा भवन्ति' ति न्यायादुत्तमकाव्यत्वमेवेत्यर्थः। यथा—'अयं स रसनोत्कर्षी' इत्यादावेव हि श्रृङ्गारस्य गुणीभावेऽपि तं भागमवलम्ब्य मध्यमकाव्यव्यवहारोऽपि न कर्त्तव्यः, किन्त्वङ्गिनं करुणमाश्रित्य उत्तमंकाव्यव्यवहार एवेति भावः। अत्राह काव्यप्रकाशकारः—यद्यपि स नास्ति कश्चिद्विषयो यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदा-दिभिः सङ्करः संसृष्टिर्वा नास्ति तथापि 'प्राधान्येन व्यपदेशा भवन्तीति' क्वचित् केनचिद् व्यवहारः कृत ति। न चेदं कथमुपपद्यते ईदृशस्थलेऽपराङ्गाख्यगुणीभूतव्यङ्ग्यस्यैवोक्तत्वादिदिति वाच्यम्, यत्र गुमीभूतानामलङ्काररसादीना-मङ्गिजनको न त्वङ्गिप्रकर्षकत्वं तत्रैवाङ्गिनी व्यञ्जकविशेषणत्वेन चमत्कारित्वम् ध्वनित्वव्यवहारात्। यथा च

'चलापाङ्गां दृष्टिम्' इत्यत्र मधुकरकामुकरूपालङ्कारस्य व्यङ्ग्यस्य 'हताः' इति व्यञ्जकविशेषलभ्यत्वेन नापराङ्गत्वम्, किन्तु विप्रलम्भध्वनिरेव ।

यथा वा—

'जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मां संस्पृश पाणिनेति रुदती, गन्तुं प्रवृत्ता ततः ।
नो यावत् परिरभ्य चाटुकशतैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥'

इत्यत्र विधिं प्रत्यसूया ध्वनिरेव 'शठ' पदेन व्यञ्जकविशेषेण व्यक्तः । 'नो यावदाश्वासयामि' इत्यनेन व्यङ्ग्यस्य विप्रलम्भ तु असूयाजनकत्वमेव नासूया प्रकर्षकत्वमित्यतो नेतराङ्गत्वमित्यादिस्वयमूहनीयम् । उक्तार्थे प्रमाणणमुपपादयति—तदुक्तमिति । तेनैवेति ध्वनिकृतैवेत्यर्थः ।

प्रकारोऽयमिति । अयं गुणीभूतव्यङ्ग्योऽपि प्रकारः इतराऽङ्गादिभेदः, 'रसादौ यत्तात्पर्यरसादिबाधनेच्छया कवेरुच्चरितत्वं तस्य पर्यालोचनया अनुसन्धानेन पुनर्ध्वनिरूपतां धत्ते लभते । यथा च 'अयं स रसनोत्कर्षी' इत्यादौ गुणीभावस्यापि श्रृङ्गारस्य ध्वनित्वसम्भवेन तं भागमवलम्ब्य श्रृङ्गारकाव्यव्यवहारप्रसक्तावपि तत्र करुणस्यैव प्राधान्यात्तेनैव काव्यव्यवहार इत्याशयः ।

## रुचिरा

एवं गुणीभूतव्यङ्ग्येष्वपि यत्र रसादितात्पर्यपर्य्यालोचनेन काव्यत्वं तद्ध्वनिरूपमेवेत्याह—**किञ्चेत्यादिना** ।

**किञ्च** वक्तव्यान्तरमस्त्येति भावः । किं तदित्याह—**यत्र** यस्मिन् । **रसाभ्यन्तरे** । रसे **वस्त्वलङ्काररसादिरूपव्यङ्ग्यानाम्** । **गुणीभावः** । **तत्र** । **प्रधानकृत** प्रधानेन यत्र वस्त्वादीनां गुणीभावस्तेन रसेन कृतः । **एव** 'न तु गुणीभूतव्यङ्ग्यस्त्वादिकृत' इति शेषः । **काव्यव्यवहारः** । अयम्भावः—प्रधाने रसेऽङ्गभूतादेर्वस्त्वलङ्कारादेश्च गुणीभाव इति रसादीनां गुणीभावमादाय गुणीभूतव्यङ्ग्यकाव्यत्वं वक्तुमर्हत्वेऽपि 'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायेन रसस्य प्राधान्यमादाय काव्यस्य प्रधानत्वम् । नहि सागरेऽन्तर्भवतां नदीनदानां गौणत्वमादाय तस्य तुच्छत्वं केनचिद्वक्तुं शक्यते, किन्तु सागरस्य गभीरतामादायागाधत्वमेव । इति ।

तदेव ध्वनिकारसम्मत्या समर्थयते—**तत्** 'यदस्माभिरुक्त'मिति शेषः । **तेन** ध्वनिकृतेत्यर्थः । **एव** । **उक्तम्** । किमित्याह—

"**अयम्** । **गुणीभूतव्यङ्ग्यः** । **प्रकारो** भेदः 'काव्यस्ये'ति शेषः । **अपि** 'किम्पुनरगुणीभूतव्यङ्ग्यात्मा प्रकार'इति शेषः । **रसादितात्पर्यपर्य्यालोचनया** रसादौ यत्तात्पर्य्यं तस्य पर्य्यालोचनानुसन्धानं तया । **पुनः** । **ध्वनिरूपताम्** अगुणीभूतव्यङ्ग्यताम् **धत्ते** । अयम्भावः—यथा—"प्रयच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता । न किञ्चिदूचे चरणेन केवलं लिलेख बाष्पाकुललोचना भुवम् ।" इत्यादौ 'न किञ्चिदूचे' इत्यादिना व्यङ्ग्यस्यार्थस्योक्त्या गुणीभावोऽपि नायिकानायकयोरनुरागातिशयमुपजीव्य व्यज्यमानं श्रृङ्गारमादाय ध्वनिकाव्यत्वम् । यथा वा—'अयं स रसनोत्कर्षी त्यादौ श्रृङ्गारमादाय गुणीभावः, करुणमादाय ध्वनिकाव्यत्वम् । तथा सर्वत्र रसादिप्राधान्ये व्यङ्ग्यान्ता रमादाय गुणीभावेऽपि न तस्य गुणीभूतव्यङ्ग्यव्यपदेशार्हत्वम् । इति ।

यत्र तु—

**'यत्रोन्मदानां प्रमदाजनानामभ्रंलिहेः शोणमणीमयूखः ।**
**संध्याभ्रमं प्राप्नुवतामकाण्डेऽप्यनङ्गनेपथ्यविधिं विधत्ते ॥'**

इत्यादौ रसादीनां नगरीवृत्तान्तादिवस्तुमात्रेऽङ्गत्वम्, तत्र तेषामतात्पर्यविषयत्वेऽपि तैरेव गुणीभूतः काव्यव्यवहारः । तदुक्तमस्मसगोत्रकविपण्डितमुख्यश्रीचण्डीदासपादैः—'काव्यार्थस्याखण्डबुद्धिवेद्यस्य तन्मयीभावेनास्वाददशायां गुणप्रधानभावावभासस्तावन्नानुभूयते, कालान्तरे तु प्रकरणादिपर्यालोचनया भवन्नप्यसौ न काव्यव्यपदेशं व्याहन्तुमीशः, तस्यास्वादमात्रायत्तत्वात्' इति ।

---

## विवृतिः

नन्वेवं यत्र रसादीनामन्यतमतात्पर्यविषयत्वेन प्रधानत्वं तत्रैव काव्यव्यवहार इति फलितम् । एवं च ध्वनित्वासंकीर्णं गुणीभूतव्यङ्ग्यं क्वापि नास्तीति कुतस्तस्य काव्यविभाजकत्वमत आह—**यत्र** त्विति । यत्र नगर्यां **शोणमणी** पद्मरागः **अनङ्गनेपथ्यविधिं** सुरतोपयुक्तवेषरचनां **विधत्ते** संपादयति ॥

## विज्ञप्रिया

यत्र तु यत्रोन्मदानामिति—अत्र पुरेऽभ्रंलिहः मेघस्पर्शी शोणमणीमयूखः पद्मरागमणीनां रश्मिः । सन्ध्याभ्रमं तादृशरश्मिसञ्चरणादेव सन्ध्याकाले इति भ्रान्तिं प्राप्नुवतामुन्मदानां मदनमत्तानां प्रमदाजनानामंनङ्गनेपथ्यविधिं कामसम्भोगवेशं विधत्त इत्यन्वयः । सन्ध्याकाले प्रमदानामनङ्गक्रीडार्थनेपथ्यविधानात् । नेपथ्यं वेशः ।

अत्र हि प्रकरणात् पुराप्रकर्षे तात्पर्य्यसत्त्वेन अनङ्गनेपथ्यविधानव्यङ्ग्यस्य श्रृङ्गारस्य तात्पर्य्यविषयत्वाभावेऽपि आपाततश्चमत्कारित्वलाभेनैवाऽपराङ्व्यवहारः ।

काव्यार्थस्याखण्डेति—प्रकृते काव्यार्थः अनङ्गनेपथ्यव्यङ्ग्यः श्रृङ्गारः । तस्य विभावादिनानापदार्थघटिततत्वेऽपि प्रपानकरसन्यायेनाऽखण्डबुद्धिवेद्यत्वं; बोद्धुस्तन्मयीभावेनाऽऽस्वाददशायां श्रृङ्गारो गुणः । पुरीप्रकर्षः प्रधानमित्यवभासस्तावदापाततो नानुभूयत इत्यर्थः । तत्र आपाततस्तदननुभवेऽपि उत्तरकालं प्रकरणादिपर्य्यालोचनया पुरीप्रकर्षप्राधान्यावगमो भवन्नापि काव्यस्य गुणीभूतव्यङ्ग्यव्यपदेशं व्याहन्तुं नेश इत्यर्थः । अत्र हेतुमाह—तस्येति । अस्य काव्यव्यवहारस्य आस्वादमात्रायत्तत्वादित्यर्थः । तथा च अप्रधानेनाऽपि श्रृङ्गारेणाऽऽवस्वादात् न गुणीभूतव्यङ्ग्यव्यपदेश इत्यर्थः ।

## कुसुमप्रतिमा

यत्रेति । यत्र नगर्य्याम् अभ्रंलिहो दूराकाशगामी शोणमणीनां पद्मरागाणां मयूखी रश्मिः अकाण्डे अनवसरे सन्ध्याभ्रमं तादृशरश्मिसञ्चरणादेव अयं सन्ध्याकाल इति भ्रान्तिं प्राप्नुवताम् उन्मदानां मदनमत्तानां प्रमदाजनानाम् अनङ्गनेपथ्यविधिं कामसम्भोगोपयोगिवेशविधानं विधत्ते सम्पादयति ।

इत्यादाविति। नगरीवृत्तादिवस्तुमात्रे केवलनगरीमध्यगतवृत्तान्तप्रभृतिप्रदर्शनरूपवस्तुविषये, अङ्गत्वं तत् परिपोषकत्वम्। तेषां रसादीनाम् क्षतातपर्य्यविषयत्वेऽपि प्रत्यायनेच्छया कविना अनिर्म्मितत्वेऽपि नगरीवृत्तान्तादिज्ञापनरूपवस्तुमात्रस्य कवेरुद्देश्यत्वेन रसादिज्ञापनस्यानुद्देश्यत्वेऽपीत्यर्थः तैरेव गुमीभूतैरप्रधानीभूतैः रसादिभिः काव्यव्यवहारः एवञ्च "यत्रोन्मदानाम्" इत्यादौ श्रृङ्गाररसस्य नगरीवृत्तान्तं प्रति अनुत्वात् इतराङ्गरूपगुणीभूतव्यङ्ग्यत्वम्, तथापि च 'श्रृङ्गारकाव्यमिदम्' इत्येव तत्र व्यवहारः कर्त्तव्यः न पुनः नगरीवृत्तान्तकाव्यम्' इति; तेन च गुमीभूतव्यङ्ग्याख्यकाव्यभेदनिरूपण न निरर्थकमिति भावः।

अत्रालङ्कारिकान्तरसंवन्दमाह तदुक्तमिति। अखण्डबुद्धिवेद्यस्य एकाग्रबुद्धिमात्रज्ञेयसा काव्यार्थस्य काव्यप्रतिपाद्यस्य विभावादेः। आस्वाददशायां ज्ञानकाले, गुणप्रधानभावेनावभासः अनुभिभावेन बुद्धावुपस्थितिः। नानुभूयते सहृदयैरिति शेषः तन्मयीभावादेवेति भावः। कालान्तरे तु काव्यार्थानुभवकालात् परकाले तु। भवन्नपि जायमानोऽपि, असौ गुणप्रधानभावावभासः, काव्यव्यपदेशं रसादीघटितकाव्यसंज्ञां व्याहन्तुं रसादिभिन्न प्राधान्यज्ञानेनापि दूरीकर्तु न ईशो न समर्थः तस्य काव्यव्यप्रदेशस्य आस्वादमात्रायत्तत्वात् श्रणादिकालीनयथाकथञ्चिदास्वाद्यमानसरसादिमात्रघटित्वात्। अतश्चण्डीदासस्यापि मते गुणीभूतव्यङ्ग्यरूपरसादिनापि काव्यव्यवहारः सिद्ध एवेति भावः।

## विमला

नन्वेवं यत्र रसादीनामन्यतमतात्पर्य्यविषयत्वेन प्रधानत्वं, तत्रैव काव्यव्यवहार इति फलितम्; एवञ्च ध्वनित्वासङ्कीर्णं क्वापि नास्ति इति कुतस्तस्य काव्यविभाजकत्वम्? अत आह, यत्र त्विति।—यस्मिन् पुनः काव्ये इत्यर्तः। यत्रेति।—नगरीवर्णनमिदम्। यत्र—नगर्य्याम्, अभ्राणि लेढ़ि इति अभ्रलिहः,—गगनस्पर्शी, ["वहाभ्रे लिहः(३/२.३२ पा. इति स्वश्] शीणानां मणीनां—पद्मरागाणामित्यर्थः, मयूखः,—किरणः [मयूखशब्दस्यैकवचनान्ततया सन्ध्याब्रमकारकत्वानुपपत्तेः "शीणमणिप्रकाशः" इति पाठ्यम्। एवं मति छन्दोभङ्ग भिया मणिशब्दात् प्रक्रियमाणस्य ङ्गोप्रत्ययस्य नावशअयकत्वम्] उन्मदानां—मद्दीन्द्रतानाम्, अत एव अकाण्डेऽपि—असंमयेऽपि, प्राप्नुवतां प्रमदाजनानाम् अनङ्गनेपथ्यविधिं—सुरतोपयोगिवेशभूषाऽऽदिकं, व्यधत्त—कारयामास ["व्यधत्त" इत्यत्र "विधत्ते" इति पाठे—सम्पादयतीत्यर्थ]। उपजातिः वृत्तम्।

रसादीनामिति।—नगरीवृत्तादिवस्तुमात्रे—नगरौवृत्तं—नगरीवृत्तान्तः, तदादि—तत्प्रभृति, यत् वस्तु, तन्मात्रे; [मात्रपदेनालङ्कारस्य व्यवच्छेदः सूचितः] अङ्गत्वं—नगरीवृत्तान्तपरिपोषकत्वमित्यर्थः, तत्र—"यत्रोन्मदानाम्" इत्यादौ, तेषां—रसादीनाम्, अतात्पर्य्यविषयत्वेऽपि—तात्पर्य्यविषयत्वाभावेऽपोत्यर्थः, नगरीद्वैत्तस्यैव तात्पर्य्यविषयत्वादिति भावः, तैरेव—रसादिभिरेव, गुमीभूतैः,—गुणीभावेन तिष्ठङ्भिरिति भावः, काव्यव्यवहारः; तथा च यत्रोभयसङ्करः, तत्र व्यवहारसन्देहे तथा निरुपितम्, यत्र तु उभयसङ्करो नास्ति, तत्र रसादीनामन्यतनस्य सम्बन्धमात्रतेनैव काव्यव्यवहारः, न तु प्रधानत्वेऽपीति भावः।

काव्यार्थस्येति।—काव्यार्थस्य—विभावादिपदार्थनिश्चयस्य, अखण्डबुद्धि वेद्यतया—एकमतिगम्यतया। ननु अनेकपदार्थानां कथमेकबुद्धिग्राह्यत्वनियमः? इत्यत आह, तन्मयीभावेनेति।—अखण्डबुद्धिस्वरूपीभावेन, आस्वाददशायाम्—अनुभवावस्थायां, गुणप्रधानभावस्य—अङ्गाङ्गिभावस्य, अवभासः,—प्रतीतिः, तावत् न अनुभूयते, कालान्तरे—आस्वादविनाशदशायान्तु, प्रकारणादिपर्य्यालोचनया—प्रस्तावाद्यनुसन्धानद्वारा, भवन् अपि, असौ—गुणप्रधानभावावभासः, काव्यव्यपदेशं—काव्यसंज्ञां, ध्वनिकाव्यमिदं वा गुणी भूतव्यङ्ग्यमिदमिति

निर्णीतं काव्यं नाम इति यावत्, व्याहन्तुं—खण्डयितुं, निराकर्त्तुमित्यर्थः, न ईशः—न शक्तः, तस्य—काव्यव्यपदेशस्य। तथा च, उक्तस्थले वाक्यस्य रसादितात्पर्य्यकत्वाभावेऽपि प्रासङ्गिकरसादिव्यञ्जकत्वेनापि काव्यत्वमक्षतमेवेति भावः।

## लक्ष्मी

नन्वेवं यत्र रसादीनामन्यतमतात्पर्यविषयत्वेन प्रधानत्वं तत्रैव काव्यव्यपदेश इत्येता वता फलितम्। ततश्च ध्वनित्वासङ्कीर्णं गुमीभूतव्यङ्ग्यं क्वापि नास्तीति गुणीभूतव्यङ्ग्याख्य काव्यभेदनिरूपणं व्यर्थमेवेत्यत आह—यत्र त्विति।

यत्रोन्मदानामिति। यत्र नगर्याम् अभ्रंलिहः अभ्राणि लिहन्तीति अभ्रंलिहाः 'वहाभ्रे लिहः' इति खश्, मेघस्पर्शी, शोणमणीमयूकः पद्मरागमणीनां रश्मिः अकाण्डे असमये सन्ध्याभ्रमं तादृशरश्मिसञ्चरमादेव सन्ध्याकाल इति भ्रान्तिं प्राप्नुवताम्, उन्मदानां मदनमत्तानां प्रमदाजनानाम् अनङ्गनेपथ्यविधिं सुरतोपयुक्तवेशरचनां विधत्ते सम्पादयति। उपजातिश्छन्दः।

इत्यादाविति। नगरीवृत्तादिवस्तुमात्रे—केवलनगरीमध्यगतोदन्तप्रभृतिप्रदर्शनरूपवस्तुविषये अङ्गत्वं तत् परिपोषकत्वम्। तेषां रसादीनाम् अतात्पर्यविषयत्वेऽपि तात्पर्यविषयत्वेनाप्रधानत्वेऽपि तैरेव रसादिभिरेव काव्यव्यपदेशः। तथा च 'यत्रोन्मदानाम्' इत्यादौ श्रृङ्गाररसस्य नगर्युदन्तं प्रति अङ्गत्वात् इतराङ्गभूतगुणीभूतव्यङ्ग्यत्वम् एवञ्चात्रापि 'श्रृङ्गारकाव्यमिदम्' इत्येव व्यपदेशो विधेयः नतु 'नगर्य्युदन्तकाव्यम्' इति। तेन न गुणीभूतव्यङ्ग्याख्यकाव्यभेदनिरूपणं व्यर्थमिति ग्रन्थकर्त्तुराशयः।

अत्रार्थे प्राचां सम्मतिं दर्शयति—तदुक्तमिति। वाक्यार्थस्य पदार्थसमूहस्य अखण्डबुद्धिवेद्यतया एकबुद्धिग्राह्यतया। नन्वनेकपदार्थानामेकबुद्धिग्राह्यत्वनियमः कथमुपपद्यत अत आहतन्मयीभावेनेति। अखण्डबुद्धिस्वरूपीभावेनेत्यर्थः। आस्वाददशायां ज्ञानकाले गुणप्रधानभावेन अङ्गाङ्गिभावेन अवभासो बुद्धावुपस्थितिः। नानुभूयते सचेतोभिरिति शेषः, तन्मयीभावदेवेति भावः। कालान्तरे आस्वादविनाशदशायां तु भवन्नपि जायमानोऽपि असौ गुणप्रधानभावाऽवभासः काव्यव्यपदेशं रसादिघटितकाव्यसंज्ञां व्याहन्तुं नेशः प्राधान्यज्ञानेनाऽपि दूरीकतुं न समर्थः। अत्र हेतुमाह—तस्येति। तस्य काव्यव्यपदेशस्य आस्वादमात्रायत्तत्वात् आस्वादमात्राधीनत्वात्। तस्माच्चण्डीदासस्याऽपि मते गुणीभूतव्यङ्ग्यरूपरसादिना काव्यव्यवहारः उपपन्न एवेति भावः। तथा च प्रकृते काव्यार्थः अनङ्गनेपथ्यव्यङ्ग्यः श्रृङ्गारस्तस्य विभावादिनानापदार्थघटितत्वेऽपि प्रपानकरसन्यायेन अखण्डबुद्धिवेद्यत्वं नानुभूयते। ततश्रापाततस्तदननुभवेऽपि उत्तरकालं प्रकरणादिपर्य्यालोचनया पुरीप्रकर्षप्रधान्यावगतोभवन्नपि काव्यस्य गुणीभूतव्यङ्ग्यव्यपदेशं व्याहन्तुं नेश इति समुदिताभिप्रायः।

## रुचिरा

ननु सर्वत्रैवं निवत्रतां नामास्य गुणीभूतव्यङ्ग्यत्वमित्याशङ्क्याह—**यत्र त्वित्यादि**। **यत्र** यस्मिन्।

तु—

'यत्र यस्यां नगर्य्यामित्यर्थः। **अभ्रंलिहो** गगनस्पर्शी अत्युद्गत इति यावत्। **शोणमणीमयूखः** शोणायमण्यो मणयो रत्नानीति यावत् तासां मयूखः। 'कृदिकारादक्तिनः।' इति गणसूत्रेण मणिशब्दात् ङीष्। **उन्मदानां** प्रमत्तानाम्। **अकाण्डे**ऽसमये। **अपि**। **सन्ध्याभ्रमम्**। **प्राप्नुवतां** लब्धवताम्। **प्रमदाजनानाम्**। **अनङ्गने पथ्यवि-**

**धिमनङ्गः** कामस्तसय नेपथ्यं तद्वर्धको वेषस्तस्य विधिर्विधानं तम् । विधत्ते सम्पादयति । अत्र टिप्पणीकाराः 'अत्र शास्त्रसिद्धमपि कतुरिकवचनं किमपि अरुचिबीजं सहृदयहृदयेष्वङ्कुरयतीति त एवात्र प्रमाणम्, एवं चात्र 'शोणमणिप्रकाशः' इति पठनीयम्, अथवा—'यत्रोन्मदानां प्रमदाजनानामभ्रंलिहा विद्रुमवेशमभासः । सन्ध्याभ्रमं प्राप्नुवतामकाले ऽप्युल्लासयन्ति स्मरवेषलीलाम् ॥' इति । अभ्राणि लिहन्तीत्यभ्रंलिहाः । 'वहाभ्रेलिहः ।' ३/२/३२ इति खश् । गगनस्पृश इत्यर्थः ।' इत्याहुः । 'सा नगरी'ति शेषः । उपजातिच्छन्दः ॥ २१७ ॥"

**इत्यादौ । रसादीनाम् । नगरीवृत्तान्तादिवस्तुमात्रे । अङ्गत्वम**प्रधानत्वम् । नगरीवृत्तान्तादिरूपवस्तुमात्रे प्रधानभूते रसादीनामप्राधान्यमित्यर्थः । **तत्र** 'अत्रे'ति शेषः । **तेषां** रसादीनाम् । **अतात्पर्य्यविषयत्वे** तात्पर्य्यविषयत्वाभावे । **अपि । तैः** रसादिभिरित्यर्थः । **एव । गुणीभूतैः** । 'कृत' इति शेषः । **काव्यव्यवहारः** । अयम्भावः—अत्र हि नगरीवर्णने प्रक्रान्ते चरमपादेन स्फुरतां श्रृङ्गारानुभावादीनां तत्रानुपयोगिनामपि न प्रधानव्यपदेशार्हत्वम्, एषां चमत्कारस्य तन्मुखमात्रपेक्षित्वात् । अते रसोदेरपि व्यपेक्षया सर्वत्र ध्वनिकाव्यत्वमङ्गीकार्य्यम् । अत एवोक्तं ध्वनिकृता—"प्रभेदस्यास्य विषयो यश्च युक्त्या प्रतीयते । विधातव्या सहृदयैर्नऐ तत्र ध्वनियोजना ॥" इति ।

उक्तमर्थं प्राचां सम्मत्या समर्थयते—**तदुक्त**मित्यादिना ।

**अस्मत्गोत्रकविपण्डितमुख्यश्रीचण्डीदासपादैरस्माकं** सगोत्राः कविपण्डितेषु मुख्याश्च ते श्रीचण्डीदासापादास्तैः । समानं गोत्रं येषां ते सगोत्राः, कवयः काव्यनिर्म्माणपटवः आलङ्कारिका वा, पण्डिता ब्रह्मविदस्तेषु मुख्यालब्धमानाः । पादशब्दश्च पूज्यत्वादिप्रत्यायनार्थः । 'एकत्वं न प्रयुञ्जीत गुरावात्मनि चेश्वरे । उत्तमानां स्वरूपं तु पादशब्देन पठयते ॥' इत्थभियुक्तोक्तेः । 'चण्डिदासे'ति पाठे तु 'कालिदासे'त्यादिवत् क्वचित्सञ्ज्ञायां ह्रस्वत्वमपीत्याश्रित्व समाधेयम् । **तत् । उक्तम् । "अखण्डबुद्धिवेद्यस्याखण्डा** वासनान्तरेणाविच्छिन्ना या बुद्धिस्तया वेद्योऽनुभाव्यस्तस्य । **काव्यार्थस्य** रसादेः **तन्मयीभावेन** तदभिन्नप्रमातृप्रमेयत्वानध्यवसायीभावेन । **आस्वाददशायां** तत्तत्स्वरूपानुभवावसरे । **गुणप्रधानभावावभासो** गुणत्वप्रधानत्वाभ्यां प्रत्यय इति भावः । **तावत्** यथार्थ्येन । **न । अनुभूयते**ऽनुभवगोचरो विधातुं शक्यते । **कालान्तरे** आस्वादप्रत्ययनिवृत्त्यन्तरमिति भावः । **तु । प्रकरणादिपर्य्यालोचनया** प्रकरणादेः पर्य्यालोचना मीमांसा तया तद्द्वारेति यावत् । **भवन्** विद्यमानः । **अपि । असौ**गुणप्रधानभावः । **काव्यव्यपदेशं** ध्वनिकाव्यमिदं गुणीभूतव्यङ्ग्यकाव्यमिदमित्येवं काव्यभेदप्रत्यायिकीं सञ्ज्ञाम् । **न । व्याहन्तुम् । ईशः** समर्थो भवति । कुत इत्याह—**तस्य** काव्यव्यपदेशस्य । **आस्वादमात्रायत्तत्वादा**स्वादमात्राधीनत्वात् । अयम्भावः—आस्वादानुभवदशायां यादृशो गुणप्रधानभावो यस्य प्रतीतः, तदनन्तरं प्रकरणादिपर्य्यालोचनयाऽन्यथा प्रतीयमानोऽप्यसौ न तमन्यथाकर्त्तुं शक्नोति, तस्यैव ज्यायस्त्वात् प्रमाणकोटौ । तथा च—अनन्तरोदाहृते पद्ये आस्वादयाथाऽत्म्यानुभवावसरे गुणीभूतव्यङ्ग्यतया कृतः प्रत्यय एव तदनन्तरमपि तथाभूतः ।" इति बोध्यम् । **इति** ।

केचिच्चित्राख्यं तृतीयं काव्यभेदमिच्छन्ति। तदाहुः—

**'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्।' इति।**

इति तन्न। यदि हि अव्यङ्ग्यत्वेन व्यङ्ग्याभावस्तदा तस्य काव्यत्वमपि नास्तीति प्रागेवोक्तम्। ईषद्रव्यत्वमिति चेत्, किं नामेषद्व्यङ्ग्यत्वम्। आस्वाद्यव्यङ्ग्यत्वम्, अनास्वाद्यव्यङ्ग्यत्वं वा। आद्ये प्राचीनभेदयोरेवान्तः पातः। द्वितीये त्वकाव्यत्वम्। यदि चास्वाद्यत्वं तदा क्षुद्रत्वमेव। क्षुद्रतायामनास्वाद्यत्वात्।

तदुक्तं ध्वनिकृता—

**'प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते।**
**उभे काव्ये ततोऽन्यद्यत्तिचत्रमभिधीयते॥' इति।**

इति श्रीमन्नारायणचरणारविन्दमधुव्रत-साहित्यार्णवकर्णधार-ध्वनिप्रस्थापन-परमाचार्य-कविसूक्तिरत्नाकराऽष्टादशभाषावारविलासिनीभुजङ्ग-सान्धिविग्रहिक-महापात्र-श्रीविश्वनाथकवि राजकृतौ साहित्यदर्पणे **ध्वनिगुणीभुतव्यङ्ग्याख्यकाव्यभेदनिरूपणो नाम्न** चतुर्थ परिच्छेदः।

---

## विवृतिः

तेषां रसादीनामतात्पर्यविषयत्वेऽपि तात्पर्यविषयत्वेनाप्रधानत्वेऽपि तैरेव रसादिभिरेव काव्यवहार इति। तथा च यत्रोभयसंकरस्तत्र व्यवहारसंदेहे तथा निरूपितम्। यत्र तूभयसंकरो नास्ति तत्र रसादीनामन्यतमस्य संबन्धमात्रेणैव काव्यव्यवहारः, न तु प्रधानत्वेऽपीति भावः। **वाक्यार्थस्य** पदार्थसमूहस्य। **अखण्डबुद्धिवेद्यतया** एकबुद्धिग्राह्यतया। नन्वनेकपदार्थानां कथमेकबुद्धिग्राह्यत्वनियम इत्यत आह—**तन्मयीभावेनेति**। अखण्डबुद्धि-स्वरूपीभावेनेति। अखण्डबुद्धिस्वरूपीभावेन। कालान्तरे आस्वादविनाशदशायाम्। **असौ** गुणप्रधानभावावभासः। **तस्य** काव्यव्यपदेशस्य। तथा चोक्तस्थले वाक्यस्य रसादितात्पर्यकत्वाभावेऽपि प्रासङ्गिकरसादिव्यञ्जकत्वेनापि काव्यत्वमक्षतमेवेति भावः॥ काव्यप्रकाशादिकारमतं दूषयति—**केचिदिति**। **व्यङ्ग्यभाव इति**। 'विवक्षितः' इति शेषः। **ईषद्व्यङ्ग्यत्वमिति**। 'विवक्षितम्' इत्यनुषज्यते। **प्राचीनभेदयोः** प्राचीनोक्तध्वनिगुणीभूतव्यङ्ग्ययोः। आद्येऽनुपपत्त्यन्तरमाह—**यदि चेति**। तदा अक्षुद्रत्वमेवेत्यकारप्रश्लेषः। तथा च व्यङ्ग्यस्य आस्वाद्यत्वे क्षुद्रत्वायोगादनास्वाद्यत्वे काव्यत्वायोगाच्चेषद्यङ्ग्यमिति काव्यमपार्थकमेवेति भावः। चित्रस्य काव्यप्रकारत्वाभावे प्राचीनसंवादमप्याह—**तदुक्तमिति**। ततस्ताभ्यां चित्रं काव्याभासमांत्रम्, न तु वास्तवं काव्यम्॥

**इति श्रीरामचरणतर्कवागीशभट्टाचार्यविरचितायां साहित्यदर्पणविवृतौ चतुर्थः प्रकाशः।**

## विवृतिपूर्तिः

प्रधानेति । व्यङ्ग्यार्थस्य प्राधान्ये ध्वनिः, गुणभावे तु गुणीभूतव्यङ्ग्यता । ततोऽन्यद्रसभावादितात्पर्यरहितं व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्यं च काव्यं केवलवाच्यवाचकवैचित्र्यमात्राश्रयेणोपनिबद्धमालेख्यप्रख्यं यदाभासते तच्चित्रम् । तच्च द्विविधमिति ध्वनिकृतैवाग्रिमकारिकया व्यवस्थापितम्—'चित्रं शब्दार्थभेदेन द्विविधं न व्यवस्थितम् । तत्र किंचिच्छब्दचित्रं वाच्यचित्रमतः परम् ॥' इति । तत्र किंचिच्छब्दचित्रं यथा दुष्करयमकादि । वाच्यचित्रमतः परं शब्दचित्रादन्यद्व्यङ्ग्यार्थसंस्पर्शरहितं प्राधान्येन वाक्यार्थतया स्थितं रसादितात्पर्यरहितमुत्प्रेक्षादि । अथ किमिदं चित्रं नाम, यत्र न व्यङ्ग्यार्थसंस्पर्शः । तत्र, यत्र वस्तु अलंकारान्तरं वा व्यङ्ग्यं नास्ति स नाम चित्रस्य कल्प्यतां विषयः । अत्र तु रसादीनामविषयत्वं स काव्यप्रकारो न संभवत्येव । यस्मादवस्तुसंस्पर्शिता काव्यस्य नोपपद्यते । वस्तु च सर्वमेव जगद्गतमवश्यं कस्यचिद्रसस्य चाङ्गत्वं प्रतिपाद्यते । विभावत्वेन चित्तवृत्तिविशेषा हि रसादयः । न च तदस्ति वस्तु किंचिद्यन्न चित्तवृत्तिविशेषमुपजनयति, तदनुत्पादने वा कविविषयतैव तस्य न स्यात् । कविविषयश्च चित्रतया कश्चिन्निरूपते । अत्रोच्यते—सत्यम् । न तादृक्काव्यप्रकारोऽस्ति यत्र रसादीनामविप्रतिपत्तिः । किं तु यदा रसभावादिविवक्षाशून्यः कविः शब्दालंकारमर्थालंकारं वोपनिबध्नाति तदा तद्विवक्षापेक्षया रसादिशून्यतार्थस्य परिकल्प्यते । विवक्षोपरूढ एव हि काव्ये शब्दानामर्थः । वाच्यसामर्थ्यवशेन च कविविवक्षाविरहेऽपि तथाविधे विषये रसादिप्रतीतिर्भवन्ती परिदुर्बला भवतीत्यनेनापि प्रकारेणा नीरसत्वं परिकल्प्य चित्रविषयो व्यवस्थाप्यते । तदिदमुच्यते—'रसभावादिविषयविवक्षाविरहे सति । अलंकारनिबन्धो यः स चित्रविषयो मतः ॥ रसादिषु विवक्षा तु स्यात्तात्पर्यवती यदा । तदा नास्त्येव तत्काव्यं 'ध्वनेयत्र न गोचरः ॥ इति । एतेन तृतीयकाव्यभेदं प्रत्याचक्षाणस्य ग्रन्थकृतो मतं न सहृदयहृदयमधिरोहति । इत्थं च 'अव्यङ्ग्यम्' इत्यत्र तात्पर्यविषयीभूतव्यङ्ग्यविकलत्वमेवाव्यङ्ग्यपदेनाभिप्रेतम् । अत्र पक्षे 'अतादृशगुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्' तु इति मध्यमकाव्यलक्षणे व्यङ्ग्यपदं विवक्षितव्यङ्ग्यपरम् । यद्वा अव्यङ्ग्यम् अस्फुटतरातिरिक्तव्यङ्ग्यरहितम् । तादृशं चास्फुटतरव्यङ्ग्यसद्भावे व्यङ्ग्यमात्राभावे वा । ईषत्त्वस्य नञर्थत्वाद् अव्यङ्ग्यमस्फुटतरव्यङ्ग्यमिति कतिपये । वस्तुतस्त्वत्रार्थचित्रशब्दचित्रयोरविशेषेणाधमत्वं वक्तुमयुक्तम् । तारतम्यस्य स्फुटमुपलब्धेः । को ह्येवं सहृदयः सन् 'विनिर्गतं मानदमात्ममन्दिराद् भवत्युपश्रुत्य यदृच्छयापि यम् । ससंभ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियामरावती ॥' इति, 'स च्छिन्नमूलः क्षतजेन रेणुस्तस्योपरिष्टात्पवनावधूतः । अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवावभासे ॥' इत्यादिभिरर्थचित्रकाव्यैः 'स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटामूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्वायः वः । भिन्द्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुमद्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥' इत्यादीनां पामरश्लाघ्यानामविशेषं ब्रूयात् । सत्यपि तारतम्ये यद्येकभेदत्वं कस्तर्हि ध्वनिगुणीभूतव्यङ्ग्ययोरीषदन्तरितयोर्विभिन्नभेदत्वे दुराग्रह इति रसगङ्गाधरकाराः ।

तत्रपरे तु—"अव्यङ्ग्यं स्फुटप्रतीयमानार्थरहितं तु अवरं चरमम् । तृतीयकाव्यमित्यर्थः । चरमत्वं च ध्वनिगुणीभूतव्यङ्ग्यापेक्षया कानिष्ठ्यम् । न त्वधमत्वमेव । तस्य चित्राख्यतृतीयकाव्यावान्तरभेदे विवक्षितत्वात् । तच्चित्रमित्यध्याहार्यम् । चित्रं च गुणालंकारयोगि । तच्च शब्दचित्रं वाच्यचित्रमित्यवान्तरभेदेन द्विविधम् । अत्र कल्पे ध्वनिग्रन्थोऽप्यनुकूल एव । 'तत्तुल्यमेवार्थचित्रं मन्तव्यम्' इत्याचार्याभिनवगुप्तोक्तिस्तु प्रौढिवादपरा । तत्र शब्दचित्रस्य वाच्यचित्रापेक्षयापकृष्टत्वादधमत्वम्" इत्याहुः । एतेन काव्यस्य चातुर्विध्यमतिरोहितमेव । तथाहि—यत्र शब्दार्थौ गुणीभावितात्मानौ कमप्यर्थमभिव्यङ्क्तस्तदुत्तमम् । 'निःशेषच्युतचन्दनम्—' इत्यादि । इदमेव रसगङ्गाधरे उत्तमोत्तममिति व्यपदिश्यते । तत्र शयिता सविधेऽप्यनीश्वरा सफलीकतर्पुमहो मनोरथान् ।

दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते ॥' इत्येवोदाहरणम् । यत्त्विह 'अहो पूर्णं सरो यत्र लुठन्तः स्नान्ति मानवाः' इति दर्शनेन सहृदयहृदयैकवेद्यमुग्धमुग्धावस्थानसंमुग्धधिया प्रसह्य अनीश्वराद्याक्षिप्तविधवार्थाकलन-मूलकः काव्यत्वाभाव इति, तदतीव मन्दम् । यत्र व्यङ्ग्यमप्रधानमेव सच्चमत्कारजनकं तन्मध्यम् । 'राघवविरह-ज्वालासंतापितसह्यसैलशिखरेषु । शिशिरे सुखं शयानाः कपयः कुप्यन्ति पवनतनयाय ॥' इति पद्ये जानकीकुशलावेदनेन राघवः शिशिरीकृत इति व्यङ्ग्यमाकस्मिकपिकर्तृकपवनतनयविषयककोपोपपादकतया गुणीभूतमपि दुर्दैववसतो दास्यमनुभवद्राजकलत्रमिव कामपि कमनीयतामावहति । इदमुत्तमम् । यत्र व्यङ्ग्यचम-त्कारासमानाधिकरणो वाच्यचमत्कारस्तद्वाच्यचित्रम् । 'विनिर्गतम्—' इत्यादि । इहामरावतीति स्त्रीप्रत्ययकृतका-मिनीत्वाध्यवसानमूलोत्प्रेक्षा वाच्यैव चमत्कारविश्रमभूमिः । वीररसचमत्कारोऽशतया वर्तमानोऽप्युत्प्रेक्षा-चमत्कृतिक्रोडनिलीनो नागरेतरनायिकाकल्पितकाश्मीरद्रवाङ्गरागनिगीर्णो निजाङ्गैरिमेव प्रतीयते । इदं मध्यमम् । यत्रार्थचमत्कारोपस्कृतः शब्दचमत्कारः प्रधानं तच्छब्दचित्रम् । 'स्वच्छन्द—' इत्यादि अत्र शब्दचमत्कारावली-ढोऽर्थचमत्कारः क्षाराकूपारपूरपतितगङ्गाप्रवाहमधुरिमेव न विभाव्यते । इदमधममिति दिक् ॥

## विज्ञप्रिया

काव्यप्रकाशकृता चित्राख्यं तृतीयं काव्यमुच्यते तद्दूषयितुमाह—केचिदिति । तद्दूषयितुं वितर्कयति । तन्न यदि हीति, काव्यत्वमपि नास्तीति । सगुणाविति तैः काव्यलक्षणे कृते व्यङ्ग्यरसद्वारेणैव सगुणत्वेन व्यङ्ग्य-भावे सगुणत्वाभावात् काव्यत्वं नास्तीत्यर्थः ।

आद्ये आस्वाद्यत्वे प्राचीनभेदयोः ध्वनिगुणीभूतव्यङ्ग्ययोः । द्वितीये त्विति-अनास्वाद्यव्यङ्ग्यत्वे इत्यर्थः । अकाव्यत्वमिति । आस्वाद्यव्यङ्ग्यत्वे एव काव्यत्वाङ्गीकारात् इदं च स्वकपोलकल्पितं दूषणम् । अनास्वाद्यव्यङ्ग्यत्वेऽप्यास्वाद्यालङ्कारत्वेन तैः काव्यत्वाङ्गीकारात् । ननु आस्वाद्ये एव तारतम्यान्न प्राचीनद्वयान्त-र्भाव इत्यत आह—यदि चास्वाद्यत्वमिति—तदा क्षुद्रत्वमेवति—प्राचीननभेदद्वयात् अस्याल्पत्वमेवेत्यर्थः । अस्तु तावत् क्षुद्रत्वं तु काव्यत्वाप्रयोजकत्वेनाऽनुपादेयत्वादनास्वाद्यत्वमेव इत्याह—क्षुद्रतायामिति—तथा च ध्वनिगु-णीभूतव्यङ्ग्याख्यं द्वयमेव काव्यम् । चित्राख्यं पद्यं न तु काव्यमिति भावः ।

अत एव ध्वनिकारोक्तसंवादमाह—यदुक्तमिति । एवमुक्तप्रबन्धेन व्यङ्ग्यस्य प्रधानगुणभावाभ्याम् उभ एव काव्ये व्यवस्थिते । ततोऽन्यत्तु चित्राख्यपद्यमेव न तु काव्यमित्यर्थः । तत्र काव्यव्यवहारस्तु साधर्म्याद् गौण इति भावः ।

**इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्य्यविरचितायां साहित्यदर्पणटीकायां चतुर्थपरिच्छेदविवरणम् ॥**

## लोचन

चित्रमिति—गुणालङ्कारयुक्तम् । अवरं मध्यमम् ।

प्राचीनभेदयोः ध्वनिगुणीभूतव्यङ्ग्योरेव ।

काव्यत्वमाचार्य्यसम्मतमित्याह—तदुक्तमिति । चित्रं विचित्रमात्रमास्वादाभावादिति भावः । ननु सरस-त्वमेव काव्यसामान्यमिति न्यायसहस्रैरुक्तम्‌उच्यते वक्ष्यते च—तस्य च व्यङ्ग्यस्य प्राधान्याप्राधान्याभ्यां ध्वनि-गुणीभूतव्यङ्ग्याख्यौ द्वौ भेदौ, तयोरपि प्रत्येकं व्यङ्ग्यस्य वस्त्वलङ्काररसरूपत्वेन त्रैविध्यमित्युक्तप्रकारेणात्मना

एव आत्मनो भेदः प्रभेदश्च । इति दुरुपपादः सामान्यलक्षणश्च व्याप्तेः इति चेत्; अत्रोच्यते—यदि वयं रसवत्त्वाख्यस्य काव्यसामान्यलक्षणस्य वस्त्वलङ्कारव्यङ्ग्ययोः काव्यभेदयोरभावं ब्रूमः तदैष दोषो, न तथा । 'गतोऽस्तमर्क' इत्यादिवाक्यानां 'गावो निरुध्यन्ता' मित्यादिव्यङ्ग्येषु तात्पर्य्येऽपि न काव्यत्वम् । किन्त गुणीभूतयोर्वस्त्वलङ्काररूपयोः रसवत्त्वादेव काव्यत्वमित्युक्तत्वात् । रसवत एव काव्यत्वादित्युक्त्वात्तथा चेयमत्र व्यवस्था । रसवदेव काव्यं; तच्च क्वचित् वस्तुध्वनिना शवलं क्वचिदलङ्कारध्वनिना; क्वचिच्छुद्धञ्चेति त्रिविधम् । एवं गुणीभूतव्यङ्ग्येऽपि त्रैविध्यं बोद्धव्यम् । अत एवाहुः—रसाद्यपेक्षया तु सर्वगुणाभावव्यभिचार एव इति । ननु तर्हि कथं निःशेषच्युतचन्दनमित्यादौ वस्तुध्वनेः प्राधान्यं, तत्र हि दौत्यकर्मजीविकायां कृतघ्नायां त्वयि तस्मिन् अधमे शठे च मम नासूया, किन्तु यदेवंविधायां त्वयि विश्वसिमि, तथाविधे च तस्मिन् अनुरक्ताऽस्मि, तदेवंवञ्चनासहस्रजनितप्रौढपरितापायास्तु मम युक्तमेवेति विप्रलम्भप्रभेदेर्ष्यामानवव्यभिचारनिर्वेदध्वनिः प्रधानम् । तदङ्गस्तु लक्षणामूलध्वनिरिति चेत्, मैवम् । वाच्यतः प्राधान्याप्राधान्यमात्रेणा वस्तुध्वनिगुणीभूतव्यङ्ग्याभ्युपगमात् । 'प्राधान्याप्राधान्ये च प्राधानभूतास्वादप्रत्यासक्त्यप्रत्यासक्तयपेक्षे एव' इति न्यायाविदामभ्युपगमात् । नन्वेवमलं यथाकथञ्चित् प्राधान्यमुपकल्प्य वस्त्वलङ्काररूपयोर्ध्वनिगुणीभूतव्यङ्ग्ययोः काव्यव्यवहारप्रवर्त्तकोक्त्या रसध्वनिनापि स निवत्रतामिति चेत्, अत्राह काव्यप्रकाशकारः—'समनन्तरोक्तं यद्यपि स नास्ति कश्चिद्विषय इति । प्रधानं चापातमात्रेण आपर्यन्तं प्रधानेन रसेन एव व्यपदेशः ।' तथा तेनैवोक्तमलङ्कारप्रस्तावे—"रसादिरूपस्तद्व्यङ्ग्योऽर्थोलङ्कारान्तरं च सर्वत्राव्यभिचारीत्यगणयित्वा एव तदलङ्कारा उदाहृताः ।" इति । नन्वेवमलं ध्वनिगुणीभूतव्यङ्ग्याख्यकाव्यभेदकल्पनया । तयोरलङ्कारेभ्यः पृथगप्रतीतेरिति चेत्, मैवम् । यत्र खलु समासोक्त्याद्यलङ्कारेषु व्यङ्ग्यस्य वैषद्येनापि प्रतीतिः, न तेषु ध्वनेरन्तर्भावः । वाच्यापेक्षया व्यङ्ग्यस्य प्राधान्याभावात् । यदुक्तं ध्वनिकृता—

**"काव्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः ।**

**समासोक्त्यादयस्तत्र वाच्यालङ्कृतयः स्फुटाः ।।" इति**

किञ्च क्वचित् कदाचित् यत्रालङ्कारे व्यङ्ग्यस्यास्वादप्रकर्षकत्वेन प्राधान्यमपि यथाऽप्रस्तुतप्रशंसायां—

**"जं वेल्लिहिण म असि जं चासि परवरिं पिलघेभं ।**

**तमण्डे कोहलि अज्जं वलं पिफुलि हंसि ।।"**

इत्यादावचमत्कारिणः कुण्डाकर्षणार्थात् प्रस्तुतात् गृहकर्मरत्या युवानं प्रति नायिकाया अप्रसङ्गीनिषेधाय प्रस्तुतस्य बालाया यौवनोद्भेदकथनस्य तस्य ध्वनौ अन्तर्भावोऽस्तु, उक्तरीत्या तस्या महाविषयत्वात् । एवं चालङ्कारेषु गुणीभूतव्यङ्ग्यस्यान्तर्भावे एष एव न्यायः । किञ्च दीपकतुल्ययोगितादौ येयमुपपाद्यलङ्काराणां प्रतीतिर्न तत्र गुणीभूतव्यङ्ग्याक्यकाव्यभेदान्तः पातोऽनास्वाद्यत्वात् व्यङ्ग्यस्य, किं त्ववर्जनीयसन्निधित्वमात्रेणाऽवस्थितेः । अत एव कविप्रतिभासंरम्भगोचरत्वं तेषु नास्तीति वाच्यम् । वानीरकुञ्जे इत्यादौ व्यङ्ग्यस्य नाऽनास्वाद्यत्वम्, किन्तु वाच्यापेक्षया आस्वादापकर्ष इति तेषु उचितो गुणीभूतव्यङ्ग्याख्यकाव्यव्यवहारः । कथं च ध्वनिगुणीभूतव्यङ्ग्ययोरलङ्कारेष्वन्तर्भावः, तयोरङ्गित्वात् । अलङ्काराणां च तदङ्गभूतशब्दार्थाश्रित्वात् । तदुक्तं ध्वनिकृता एव—

"अङ्गाश्रितास्त्वलङ्काराः मन्तव्याः कटकादिवत् ।" इत्यलं बहुना ।

**इति श्रीसाहित्यदर्पणलोचने चतुर्थः परिच्छेदः ।**

## कुसुमप्रतिमा

इदानीं काव्यप्रकाशसम्मतं तृतीयकाव्यभेदं निरसितुमाह केचिदिति । तथा च तन्मते काव्यं त्रिविधम् उत्तम मध्यमम् अधमञ्चेति । तत्र ध्वनिकाव्यमुत्तमम् "इदमुत्तममतिशिशयिनि व्यङ्ग्ये वाच्याज्ञनिर्वैधैः कथितः" इति लक्षणात् गुणीभूतव्यङ्ग्यकाव्यं मध्यमम्, "अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्यं तु मध्यमम्" इत्यभिधानात् व्यङ्ग्यार्थरहितकाव्यन्तु अधमं चित्राख्यम् ।

तदधममपि द्विविधमित्याह शब्देति । अवरमधमम् अव्यङ्ग्यं काव्यन्तु शब्दचित्रं वाच्यचित्रस्येति द्विविधं स्मृतमित्यर्थः ।

दूषयति तन्नेति । अव्यङ्ग्यत्वेन न विद्यते व्यङ्ग्यं यत्रेति बहुब्रीहिणा व्यङ्ग्यार्थराहित्येन व्यङ्ग्याभावो रसादिव्यङ्ग्यसामान्याभआवो विवक्षित इत्यर्थः । प्रागेव प्रथमपरिच्छेद एवं ।

तन्मतीयसमाधानमाशङ्क्य तद्विकल्प्य च दूषयितुमाह ईषदिति । अथ अव्यङ्ग्यमित्यत्र ईषदर्थे नञ स्वीकारेण अव्यङ्ग्यत्वं नाम ईषद्याङ्ग्यत्वमित्युच्यते चेदित्यर्थः । आस्वाद्यम् ईषत्त्वेऽपि नातिक्षुद्रत्वात् अनुभव-योग्यं व्यङ्ग्यं व्यङ्ग्यार्थो यत्र काव्ये तस्य भावः अनास्वाद्यवाङ्ग्यत्वम् । वा किं वा, अनास्वाद्यम् ईषत्त्वेन अत्यन्तक्षुद्रत्वात् परमाणुवत् अननुभवयोग्यं व्यङ्ग्यं यत्र तस्य भावः अनास्वाद्यव्यङ्ग्यत्वम् । अनयोः कतरदोष-व्यङ्ग्यत्वमुच्यत इत्यर्थः ।

दूषयति आद्य इति । आद्ये आस्वाद्यव्यङ्ग्यत्वरूपेषद्यङ्ग्यत्वाङ्गीकार, प्राचीनभेदयोरेव प्राचीनेरङ्गीकृत-योर्ध्वनिगुणीभूतव्यङ्ग्यरूपयोरेव प्रकारयोर्मध्ये अन्तः पात अन्तर्भावः, भवदीयाव्यङ्ग्यानामकाधमकाव्यस्येति शेषः, तयोरुभयोरेव श्रृङ्ग्यस्यानुभवयोग्यत्वात् । एवञ्च अव्यङ्ग्यनामकतृतीयकाव्यभेदाङ्गीकारां व्यर्थ एवेति भावः । द्वितीये तु अनास्वाद्यद्यङ्ग्यत्वाङ्गीकारे तु अकाव्यत्वम्, अव्यङ्ग्यकवाक्यस्येति शेषः, तत्र व्यङ्ग्यानां रसादीनामय्याभावेन काव्यस्यात्मन एवाभावादिति भावः ।

ननु ध्वनिदगुणीभूतव्यङ्ग्यंकाव्ययोर्व्यङ्ग्यार्थस्य स्थूलत्वेनास्वाद्यत्वम् अस्मन्मतीयाव्यङ्ग्यकाव्यग-तव्यङ्ग्यार्थ तु ईषत्त्वेन आस्वाद्यत्वम्, अतः कथ तस्य तयोरन्तपात इत्याह यदि चेति । आस्वाद्यत्वं भवदीयाव्य-ङ्ग्यकाव्यगतव्यङ्ग्यार्थ्स्यापि अनुभवयोग्यत्वम्, अङ्गीक्रियत इति शेषः। तदा अक्षुद्रत्वमेव तस्यापि व्यङ्ग्यार्थस्य असूक्ष्मत्वमेव; क्षुद्रतायां तस्य व्यङ्ग्यार्थस्य ईषत्त्वेन सूक्ष्मतायाम् अनास्वाद्यत्वात् परमाणुवदनुभ-वायोग्यत्वात् एवञ्च अव्यङ्ग्यमित्यस्य ईषद्वयङ्ग्यमित्यर्थ करणमेव नोपपद्यते स्थूलत्वापातेन ईषत्वासम्भवा दित्याशयः । सर्वथा व्यङ्ग्यवर्जितवाक्यस्य काव्यताभावं प्रति प्राचीनस्यापि सम्मतिं दर्शयितुमाह तदुक्तमिति ।

प्रधानेति । व्यङ्ग्यस्य अर्थस्य प्रधानगुणभावाभ्यां प्रधानभावेंन गुणभावेन चेत्यर्थः, एवं ध्वनिगुणीभूत-व्यङ्ग्यनामके उभे द्वे द्विविधे काव्ये व्यस्थिते निरूपिते; ततस्ताभ्याम् उभाभ्यां भेदाभ्याम् अन्यत् यत् व्यङ्ग्यवर्जित वाक्यं तत् चित्रं नाम वाक्यमात्रम् अभिधीयते । तेन रसादिरूपव्यङ्ग्यस्याप्यभावे काव्यत्वस्यैवाभावात् "अव्य-ङ्ग्यमवरं स्मृतम्" इति काव्यप्रकाशमतमसमञ्जसमेवेति भावः ।

**इति महामहोपाध्याय-महाकवि-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीशभैट्टाचार्य्यविरचितायां साहित्यदर्पण-टीकयां कुसुमप्रतिमायां चतुर्थः परिच्छेदः ॥ ० ॥**

## विमला

काव्यप्रकाशकारादिमतं दूषयति, केचिदित।—केचित्—मम्मटादय तृतीयं—ध्वनिगुणीभूतव्यङ्ग्याभ्यां भिन्नम्। तद्वाक्यं निर्दिशति, शब्दचित्रमितचि।—अव्यङ्ग्यं, काव्यमिति शेष: तु अवरम्—अधमं, स्मृतं, तत् द्विविधं,—शब्दचित्रं वाच्य चित्रच्च इति।

व्यङ्ग्याभाव:, विवक्षित इति शेष:। ईषव्यङ्ग्यत्वं, विविक्षितमित्यनुषज्यते। प्राचीनभेदयो:,—प्राचीनोक्तध्वनिगुणीभूतव्यङ्ग्ययो:। आद्योऽनुपपत्त्यन्तरमाह, यदि चेति।—तदा अक्षुद्रत्वमेवेत्यकारप्रश्लेष:। तथा च व्यङ्ग्यस्य आस्वाद्यत्वे क्षुद्रत्वायोगादनास्वाद्यत्वे काव्यत्वायीनाञ्च ईषद्वयङ्ग्यमिति काव्यम् अपार्थकमेवाभिधानमिति भाव:।

चित्रस्य काव्यप्रकारत्वाभावे प्राचीनसंवादनप्याह, प्रधानेति।—व्यङ्ग्यस्य प्रधानगुणभावाभ्याम्, एवं—निरुक्तरीत्या, उभे काव्ये—ध्वनिगुणीभूतव्यङ्ग्यरूपे इत्यर्थ:, व्यवस्थिते—सिद्धान्तिते, तत:,—ताभ्याम् अन्यत्, यत् काव्यं तत्, चित्रं—काव्याभासमात्रं, लेख्यप्रतिमतया निर्जीवमिति भाव:, अभिधीयते—कथ्यते, न तु तत् काव्यळशब्देनोच्यते; रसवर्जितत्वादिति भाव:, रसस्यैव काव्यजीवनत्वेनाभिहितत्वादिति बोध्यम्। अत्रेयं व्यवस्था,—व्यङ्ग्यार्थस्य प्राधान्ये ध्वनिसंज्ञितकाव्यव्यवहार:, गुणभावे तु गुणीभावव्यङ्ग्यता; ततोऽन्यह रसभावादिरहितं व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्यञ्च काव्यं केवलवाच्यवाचकवैचित्रयमात्राश्रयेणोपनिबद्धमालेख्यप्रख्य यदा भासते, तत् चित्रसदृशत्वात् चित्रमिति कैषित् स्वीक्रियमाणमपि न स्वीकार्य्यम्, आत्मभूतस्य रसभावादेरभावेन तस्य वास्तविककाव्यत्वानुपलब्धे:। यथा चित्रेऽङ्कित: पुरुषो निर्णीवोऽपि बालानां पुरुषेति व्यपदेशय:, तथा शब्दार्थयोऽस्तु अनुप्रासादौ उपपादितस्वरूपं काव्यं नीरसमपि काव्येति व्यपदेश्य न युक्तं इति। इदमत्रावधेयम्;—व्यज्यमानस्यार्थस्य मुख्यत्वे ध्वनिरिति व्यपदेश:, मुख्यत्वाभावे पुन: गुणीभूतव्यङ्ग्यमिति बोद्धव्यम्। आम्यामितरद्रसभावाद्यभिप्रायशून्य व्यज्यमानार्थविशेषप्रत्यायनसामर्थ्यरहितञ्च काव्यं केवलाभिधेयाभिधायकवैलक्षण्यमात्रावष्टम्भेन सङ्ग्रथितं चित्रप्रतिमं यदुद्भासते, तच्चित्रमिति व्यपदिश्यते। इदञ्च द्वेधा तदिदं गोवर्द्धनाचार्य्येणैव,—"चित्रं शब्दार्थभेदेन द्विविधश्च व्यवस्थितम्। तत्र किञ्चिच्छन्दचित्रं वाच्यचित्र मत: परम्॥" इति कारिकया स्फुटीकृतम्। अत्र किञ्चिच्छब्दचित्रं दुष्करयमकानुप्रासादिषं, शब्दचित्राद्भिन्नं व्यज्यमानार्थसम्पर्कशून्यं मुख्यतया वाक्यार्थात्मनाऽवस्थितं सद्रसाद्यभिप्रायशून्यमुत्प्रेक्षत्रादिरूपं वाच्यचित्रम्। इदमभिहितं भवति,—यदवस्तुरूपम् अलङ्काररूपं वा व्यङ्ग्य नास्ति, स विषयश्चित्रस्येति व्याख्यातृणां सिद्धान्त:, अथेदं प्रतिपत्तव्य,—यत्र रसादीनां संस्पर्श एव न, स काव्यविशेष इति वक्तु न शक्यते, रसादीनाञ्च सर्वथा संस्पर्शशून्यत्वे काव्यत्वापायात्। रसादि हि सर्वस्मिन् काव्यसंसारे आत्मतयाऽनुष्यूतम्। रसादेर्विभावादिरूपत्वेन विभावादेय चित्तवृत्तिविशेषतया सर्वत्र स्फूर्त्तिमत्त्वम्; तथा सति काव्यस्य चित्रेति व्यपदेश एव न शोभत, वस्त्वलङ्कारयोरपि रसाद्यभिन्नत्वात् इति। अत्राहु: काव्यप्रकाशकारानुयायिन:,—यद्यपि यत्र न रसादि, तत् काव्यमेव न; रसादेरसत्त्वे च वस्त्वादेरपि असत्त्वं स्वत: सम्भवीति बाढम्; वस्त्वादेरपि रसाद्यभिन्नत्वात्। एवं सति वस्तुरूपालङ्काररूपव्यङ्ग्यशून्यत्वेऽपि स्वीक्रियमाणं चित्रकाव्यं वस्तुती नास्त्ववेति सिद्धम्; तथाऽपि यत्र रसादितातपर्य्यशून्य: शाब्द आर्थो वाऽलङ्कार: स्यात्, तदा तात्पर्य्यशून्यतया रसादिशून्यत्वं, तत्सत्त्वे च चित्रकाव्यत्वं स्वीकार्य्यम्। अयं भाव:,—तात्पर्य्यमूलो हि काव्ये शब्दानामर्थ, अर्थसामर्थ्येन कवेस्ताहशतातपर्य्यशून्यत्वेऽपि तादृशे विषये रसभावादिप्रत्यय: सर्वत: क्षीणोभवतीति विरसतामुररीकृत्य चित्रकाव्यविषय उररीक्रियते। अत एवोक्तं प्रदीपकृता,—"रसभावादिविषयविवक्षा विरहे सति। अलङ्कारनिबन्धी य: स चित्रविषयी मत:॥ रसादिषु विवक्षा तु स्यात्

तात्पर्य्यवती यदा। तदा नास्त्येव तत्काव्यं ध्वनेर्यत्र न गोचरः॥' इति। एतेन तृतीयं काव्यप्रकारं निरस्यन्तो निरस्ताः। एवञ्च "अव्यङ्ग्यं काव्यम्" इत्यत्राभिप्रायविषयीभूतव्यज्यमानार्थशून्यत्वमेव अव्यङ्ग्यपदवाच्यम्। "अतादृशगुणीभूता व्यङ्ग्यं काव्यन्तु मध्यमम्" इत्यत्र मध्यमकाव्यलक्षणेऽव्यङ्ग्यपदस्य अभिप्रेतव्यज्यमानविषयताशून्यार्थत्वं, स्फुटव्यज्यमानशून्यार्थत्वं वा।

"अव्यङ्ग्यम्" इत्यत्र च नञ्शब्दो न सर्वथा निषेधार्थोऽभिमतः, किन्तु ईषदर्थः इति। अप्पयदीक्षिताद-यस्त्वाहुः,—"यत्तु काव्यप्रकाशकारेण शब्दचित्रं वाच्यचित्रमव्यङ्ग्य त्ववरं स्मृतम्" इत्युक्तं, तत्र शब्दचित्रवाच्य-चित्रयोरभेदनाधमकाव्यन्वाङ्गीकारो न क्षोदक्षमः प्रतिभासते, न हि कश्चित् सचेता भवन् "विनिर्गतं मानदमात्मनन्दिराद्भवत्युपश्रुत्य यदृच्छयाऽपि यम्। स सम्भ्रमेन्द्रद्रुतपातिताऽर्गला निमीलिताक्षीव भियाऽमरा-वती॥" इति, "स छिन्नमूलः क्षतजेन रेणुस्तस्योपरिष्टात् पवनावधूतः। अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवावभासे॥' इत्यादिभिर्वाच्यचित्रैः काव्यैः समं 'स्वच्छन्दोच्छलदच्छ कच्छकुहरच्छातेतराम्बुच्छटा मूर्च्छन्मोह-महर्षिहर्षविहित स्नानाह्निवाऽह्नायवः। भिन्द्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुमद्रोहोद्रेकमहीर्मिमेदुरमदा मन्दाकिनी-मन्दताम्॥"इत्यादीनां शब्दमात्रचित्रतया क्षुद्राभिमतानां काव्यानामभेदमङ्गीकुर्यात्"इति। रसागङ्गाधरकारा अपि एतनेव विषयं सिद्धान्तयन्तः प्राहुः,—"सत्यपि विनिर्गतं मानदमात्ममन्दिरात्" इत्यादिना "स्वच्छन्दोच्छल..." इत्यादेः भिन्नत्वे यद्येकप्रकारत्वमेवाङ्गीकार्य्य, कः तर्हि ध्वनिगुणीभूतव्यङ्ग्ययीरल्पभेदयोर्भिन्नप्रकारत्वाङ्गी, कारे दुष्पुरुषार्थः इति। "अव्यङ्ग्यं त्ववरं स्मृतम्" इति सिद्धान्तयद्भिः काव्यप्रकाशकारानुयायिभिस्तूक्तम्,—अव्य-ङ्ग्यपदेन स्फुटप्रतीयमानार्थरहितवाक्यस्य ग्रहणम्, अवरपदेन च चरमप्रभेदार्थबोधनम्; चरमप्रभेदत्वञ्च ध्वनि गुणीभूतव्यङ्ग्यरूपभेदद्वयोपेक्षया भिन्न सत् तृतीयकक्षागतमेव, न त्वधमत्वपरम्; तृतीयाया एव ध्वनि-गुणीभूत-व्यङ्ग्यापेक्षया भिन्नचित्रकाव्यगतत्वेन वक्तुं युक्तत्वात्। चित्रत्वञ्च गुणालङ्कारयोगित्वम्। तथा च चित्रं काव्यं शब्दचित्रवाच्यं चित्रभेदाग्यां द्विधा। यत्तुक्तं रसमीमांसाकारैरभिनक्गुप्तपादैः,—"तत्तुल्यमेवार्तचित्रं मन्तव्यम्" इति, तत् प्रौढोक्तिमात्रम्; शब्द चित्रवाच्यचित्रयोरुभयोरविशेषेणार्थचित्रत्वानौचित्यात्। यद्यपि शब्दार्थयोरेकतर-चित्रत्वे तदन्यतरचित्रत्वमपि अर्थतः प्रतिपद्यते, तथाऽपि "प्राधान्येन व्यपदेशा भवन्ति" इति न्यायेन तत्र भिन्नताया एव वक्तुं युक्तत्वात्। एतेन काव्यस्य चातुर्विध्यं सिद्धान्तयन्तोऽप्ययदीक्षिताभिनवगुपपादप्रदीपकारादयः सर्वेऽपि निरस्ताः। इदमभिहितं रसमीमांसाप्रदीपकारादिभिः,—यत्रपदपदार्थौ उभावपि गुणीभूतस्वरूपौ सन्तौ कमपि कम-नीयमर्थं बोधयतः, तदुत्तमम्; यथा,—"निःशेषच्युतचन्दनम्..." इत्यादि, तदेवदेव रसगङ्गाधरकारा उत्तमोत्तमं प्राहुः, यत्र गुणीभूतं सदेव व्यङ्ग्यं चमत्कारकारणं स्यात्, तन्मध्यमं, यथा,—"भद्रात्मनो दुरधिरोहतनीर्विशालवंशोन्तेः कृतशिलीमुखसङ्ग्रहस्य। यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत्॥" इति। इदमेव रसगङ्गाधरप्रदीपकारादय उत्तमं प्राहुः, तन्मते,—"राघवविरहज्वालासन्तापितसह्यशैलशिखरेषु। शिशिरे मुखं शयानाः कपयः कुप्यन्ति पवनतनयाय॥" इत्याद्युदाहरणं बोध्यम्। अत्र हि सीताकुशलवृत्तान्तनिवेदनेन रघुनन्दनः शिशिरीकृतः इति व्यज्यमानोऽर्थः आकस्मिकवानरकर्त्तुकहनुमद्विषयकक्रोधोपकारितया गुणीभूतमपि दुर्भाग्यव-शेन किङ्करत्वं गता राणदारा इव कामपि चारुतामनुभावयति। यत्र व्यज्यमानकमनीयताऽतुल्याधिकरणाऽभिधेय-कमनीयता स्यात्, तत् वाच्यचित्रम्; यथा—"विनिर्गतम्..." इत्यादि अत्र हि "अमरावतौ" इत्यत्र स्त्रीयन्यक्तकान्तात्वाध्यवसाया वष्टम्भोत्प्रेक्षाऽभिधेयैव कमनीयताहेतुः। वीररसस्तु अल्पतया चमत्कुर्वाणीऽपि उत्प्रेक्षाऽलङ्कतिकमनीयतीत्सङ्गतिरोहितो ग्राम्यकान्ताकल्पितकेशरसाङ्गरागकृतनिगरणः स्वगौरिमेवाभाति। इद-मेव रसगङ्गाधरप्रदीपकारादयो मध्यममामनन्ति। यव वाच्यकमनीयतापुरस्कृता शब्दकमनीयता प्राधान्यमवलम्बेत

तत् शब्दचित्रं काव्यम्। यथा,—"स्वच्छन्दोच्छल..." इत्यादि। अत्र हि शब्दकमनीयतानिगीर्णाऽर्थकमनीयता क्षारसमुद्रप्रवाहपतितजाह्नवीपूरस्वाद इव न प्रतीयते। इदं चान्येऽधर्म प्राहुः। एवं चतुर्थः प्रभेदः प्रदीपकाररसगङ्गाधरकारादिभिरङ्गीक्रियमाणोपि निरुक्तेषु त्रिषु भेदेषु एवान्तर्भाव्यः इति दिक्।

**इत्यशेषशास्त्राटवीसञ्चारपञ्चानन-पण्डितकुलपतिना वि, ए, उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां पण्डितश्रीआशुबोधविद्याभूषण-पण्डितश्रीनित्यबोधविद्यारत्नभ्यां प्रतिसंस्कृतायां विमलाख्यायां साहित्यदर्पणव्याख्यायां चतुर्थः परिच्छेदः ॥ ४ ॥**

## लक्ष्मी

अथेदानीं काव्यप्रकाशकृत्सम्मतं चित्राख्यं तृतीयकाव्यभेदं दूषयितुमुत्थापयति—केचिदिति। तथा हि तन्मते काव्यं त्रिविधम्—उत्तमं मध्यमम् अधमञ्चेति। तत्र 'इदमुत्तममतिशायिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः' इति लक्षणलक्षितं ध्वनिकाव्यमुत्तमम्। 'अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्' इति लक्षणलक्षितं गुणीभूतव्यङ्ग्यकाव्यं मध्यमम्। स्फुटप्रतीयमानार्थरहितन्तु अधमं चित्राख्यम्।

अधमकाव्यस्य लक्षणमाह—शब्दचित्रमिति। अत्र चित्रमित्यध्याहार्य्यम्, अन्यथा संज्ञान्तराकरमान्यूनतापत्तेः। तथा चाव्यङ्ग्यं काव्यम् अपरम्। अधमं स्मृतम्। तदेव बुधैश्रचत्रमिति कथितम्। तच्च चित्रं वाच्यचित्रञ्चेति।

दूषयति—तत्रेति। अव्यङ्ग्यत्वेन न विद्यते व्यङ्ग्यं यत्रेति त्रिपदबहुब्रीहिणा व्यङ्ग्यार्थशून्यत्वेन व्यङ्ग्याभावः रसादिव्यङ्ग्यसामान्याभावोऽभिप्रेतः। प्रागेवेति प्रथमपरिच्छेद एवेत्यर्थः। तथाहि सगुणाविति तैः काव्यलक्षणे कृते व्यङ्ग्यरसद्वारेणैव च सगुणत्वेन व्यङ्ग्याभावेन गुणत्वाभावात् काव्यत्वं नास्तीति तत्रोक्तमिति भावः।

तन्मतानुसारेम समाधानमाक्षिप्य तद्विकल्प्य च निरसितुमाह—ईषद्व्यङ्ग्यत्वमिति। 'विवक्षितम्' इत्यनुषञ्जनीयम्। यदि अव्यङ्ग्यमित्यत्र ईषदर्थो नञोऽङ्गीकरणे अव्यङ्ग्यत्वं नाम ईषद्व्यङ्ग्यत्वमित्युच्यते चेत्? आस्वाद्यव्यङ्ग्यत्वम् आस्वाद्यम् अनुभवयोग्यं व्यङ्ग्यं व्यङ्ग्यार्थो यत्र काव्ये तस्य भावस्तत्त्वम् वा अथवा अनास्वाद्यम् अननुभवयोग्यं व्यङ्ग्यं व्यङ्ग्यार्थो यत्र तस्य भावस्तत्त्वम्। अनयोर्मध्ये भवत्सम्मतं कतरयुक्तमिति प्रश्नाशयः।

निराकरोति—आद्य इति। आस्वादव्यङ्ग्यत्वरूपेवद्व्यङ्ग्यत्वाऽभ्युपगमे प्राचीनैः स्वीकृतयोरेव ध्वनि-गुणीभूतव्यङ्ग्यभेदयोर्मध्ये अन्तः पातः अन्तरितः, भवत्सम्मताव्यङ्ग्यसंज्ञककाव्यस्येति शेषः। तयोरुभयोरेवास्वादयोग्यत्वात्। तथा चाव्यङ्ग्यसंज्ञकतृतीयकाव्यभेदस्वीकारो व्यर्थ एवेति ग्रन्थाशयः। द्वितीये तु—अनास्वाद्यत्वेऽनुभवयोग्यत्वरूपेषद्व्यङ्ग्यत्वाऽभ्युपगमे तु अकाव्यत्वम् आस्वादव्यङ्ग्यत्व एव काव्यत्वाऽभ्युपगमात्।

ननु ध्वनिगुणीभूतव्यङ्गयकाव्ययोर्व्यङ्ग्यार्थस्य स्थूलत्वेनास्वाद्यत्वम्, मदीयाव्यङ्ग्यकाव्यवृत्तिव्यङ्ग्यार्थस्य तु ईषत्वेन आस्वाद्यत्वमिति आस्वाद्य एव तारतम्यात्कथमेतस्य तयोरन्तर्भाव इत्याशयेनाह—यदि चेति। आस्वाद्यत्वम् अव्यङ्ग्यवृत्तिव्यङ्ग्यार्थस्यापि अनुभवयोग्यत्वम्, स्वीक्रियत इति शेषः। तदा अक्षुद्रत्वमेव तस्यापि व्यङ्ग्यार्थस्य असूक्ष्मत्वमेव। अस्तु तावत्, क्षुद्रत्वन्तु काव्यत्वाप्रयोजकत्वेनाऽनुपादेयत्वम्। तथा च

अव्यङ्ग्यमित्यस्य ईषद्वयङ्ग्यत्वमित्यर्थकरणमेव भवितुं नार्हति स्थूलत्वापातेन ईषत्वासम्भवात्। एवञ्च ध्वनि-गुणीभूतव्यङ्ग्याख्यं द्वयमेव काव्यम्, चित्राख्यं पद्यं न तु काव्यमिति भावः।

सर्वथारसभावादितात्पर्यरहितस्य वाक्यस्य काव्यत्वाभावं प्रति नास्माकमेवाग्रहः किन्तु ध्वनि-कारोऽप्यत्रार्थेऽनुकूल इति दर्शयति मूले-तदुक्तं ध्वनिकृतेति।

व्यङ्ग्यस्य अर्थस्य प्रधानगुणभावाभ्याम्, एवं ध्वनिगुणीभूतसंज्ञके उभे द्विविधे काव्ये व्यवस्थिते व्यवस्थापिते। व्यङ्ग्यार्थस्य प्राधान्ये ध्वनिः, गुणभावे तु गुणीभूतव्यङ्ग्यतेति निरूपित इत्यर्थः। ततस्ताभ्यामु-भाभ्यां भेदाभ्याम् अन्यत् यत् रसभावादितात्पर्यरहितं व्यङ्ग्यार्थविशेषप्रकाशनशक्तिरहितञ्च वाक्यं काव्यं केवलवाच्यवाचकवैचित्र्यमात्राश्रयेणोपनिबद्धमालेख्यप्रख्यं यदाभासते तच्चित्रं नाम काव्याभासमात्रम्, न तु वास्तवं काव्यम्। तेन रसभावादिरूपव्यङ्ग्याभावे काव्यत्वस्यैवाभावात् 'अव्यङ्ग्यमवरं स्मृतम्' इति काव्यप्र-काशकृन्मतमयुक्तमेवेति तद्भावः।

(अत्र मूलकारिकाः = १४) पूर्वाभिः सह ३०४ (उदाहरणश्लोकाः = ४७) (पूर्वै सह २०५)

**इति वत्सकुलावतस-दैवशशिरोमणि-श्रीलोकनाथात्मज-साहित्यव्याकरणाचार्य-ठक्कुरीपनामक श्रीकृष्ण-मोहनशास्त्रि एम. ए. विरचितायां 'लक्ष्मी' नामिकायां साहित्यदर्पणटीकायां चतुर्थः परिच्छेदः।**

## रुचिरा

सिंहनिरीक्षणनयेन काव्यस्य रसात्मकवाक्यतामात्रं पुनः स्थापयितुं प्रकाशकारादिमतं पर्य्यालोचते**केचि-दित्यादिना**।

**केचित्** काव्यप्रकाशकारादयः। **चित्राख्यं** चित्रसञ्ज्ञकमित्यर्थः। **अपि। तृतीयम्। काव्यभेदम्। इच्छन्ति** स्वीकुर्वन्ति। **यत्। आहुः**। 'ते' इति शेषः। "**अव्यङ्ग्यं** न नास्ति ईषद्वा व्यङ्ग्यं रसादि यत्र तादृशम्। **तु। शब्दचित्रम्। वाच्यचित्रम्**। 'चेति द्विविध'मिति शेषः। **अवरं** तृतीयं काव्यम्। **स्मृतम्**।" इति। **तत्**। न'सङ्गच्छते' इति शेषः। **हि** यतः **यदि। अव्यङ्ग्यत्वेन** 'अव्यङ्ग'मिति विशेषणविशिष्टत्वेनेति भावः। **व्यङ्ग्याभावो** रसादिम-त्त्वाभावः 'विक्ष्यते' इति शेषः। **तदा। तस्याव्यङ्ग्यस्य। काव्यत्वम्। अपि। न। अस्ति। इति। प्राक्** काव्यल-क्षणसमीक्षणावसरे इत्यर्थः। **एव। उक्तम्। ईषद्वयङ्ग्यमीषत्** किञ्चित् व्यङ्ग्यं यत्र तदित्यर्थः। 'विवक्ष्यते' इति शेषः। **इति। चेत्**। 'तर्हि पृच्छयते'इति शेषः। **किन्नाम।ईषद्वयङ्ग्यत्वम्? आस्वाद्यव्यङ्ग्यत्वं** रसादिस्फूर्तिमद् व्यङ्ग्याशालित्वम्। वा अथवा। अनास्वाद्यव्यङ्ग्यत्वं रसादिस्फूर्त्तिशून्यव्यङ्ग्यवत्त्वम्। 'ईषद्वयङ्ग्यत्वं विव-क्ष्यते' इति शेषः। एवं विकल्प्य क्रमादुत्तरयति—आद्ये 'आसाद्यव्यङ्ग्यमीषद्वयङ्ग्यं तदेव काव्यम्' इति मते इत्यर्थः। **प्राचीनभेदयोर्ध्वगुणीभूतव्यङ्ग्याख्ययोर्भेदयोरित्यर्थः। एव। अन्तः पातः। द्वितीये** अनास्वाद्यव्यङ्ग्य-मीषद्वयङ्ग्यम्, तत् काव्यमिति स्वीकारे इत्यर्थः। **तु। अकाव्यत्वम्**। आद्येऽनुपपत्यन्तरमाह—**यदि। च। आस्वाद्यत्वम्** 'व्यङ्ग्यस्ते'ति शेषः। तदा। अक्षुद्रत्वम् एव। **क्षुद्रतायामीषत्तायामित्यर्थः। अनास्वाद्यत्वात्**। एवं च-व्यङ्ग्यस्यास्वाद्यत्वाङ्गीकारे क्षुद्रताया असम्भवात् अनास्वाद्यत्वाङ्गीकारे काव्यताया असम्भवाच्च ईषद्वयङ्ग्य-मव्यङ्ग्यं तच्च शब्दचित्रवाच्यत्वाभ्यां द्विविधं चित्रप्रभेदे क मित्येतत्सर्वं क्षुद्रमिति निष्कृष्टोऽर्थः।

तदेव प्राचां सम्मत्याऽनुगमयति—**तत्। उक्तम्। ध्वनिकृता "एवं** निरुक्तप्रकारेण। **काव्यस्य**। प्रधान-**गुणभावाभ्याम्। उभे** द्वे ध्वनिगुणीभूतव्यङ्ग्यात्मके इति यावत्। **काव्ये। व्यवस्थिते**। ततस्ताभ्याम्। अन्यत्

भिन्नम्। **यत्**'तृतीयंप्रभेदक'मिति शेषः। **तत्**। **चित्र**माभासरूपम्, नतु वास्तवं काव्यमिति भावः। **अभिधीयते**॥" **इति**।

अत्राहुष्टिप्पणीकाराः—"व्यङ्ग्यार्थस्य प्राधान्ये ध्वनिः, गुणभावे तु गुणीभूतव्यङ्ग्यता; ततोऽन्यद्रसभावादितात्पर्य्यरहितं व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्यं च काव्यं केवलवाच्यवाचकवैचित्र्यमात्राश्रयेण उपनिबद्धमालेख्यप्रख्यं यदाभासते, तच्चित्रम्, तच्च द्विविधम्, इति ध्वनिकृतैव अग्रममकारिकया व्यवस्थापितम्—"चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम्। तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम्॥" इति तत्र,—किञ्चिच्छब्दाचित्रं यथा दुष्करयमकादि, वाच्यचित्रम्, अतः शब्दचित्राद्न्यत् व्यङ्ग्यार्थसंस्पर्शरहितं प्राधान्येन वाक्यार्थतया स्थितं रसादितात्पर्य्यरहितमुत्प्रेक्षादि। अथ किमिदं चित्रं नाम! यत्र न व्यङ्ग्यार्थसंस्पर्शः! तत्र, यत्र वस्तु अलङ्कारान्तरं वा व्यङ्ग्यं नास्ति स नाम चित्रस्य कल्प्यतां विषयः। यत्र तु रसादीनामविषयत्वं स काव्यप्रकारो न सम्भवत्येव, यस्मादवस्तुसंस्पर्शिता काव्यस्य नोत्पद्यते। वस्तु च सर्वमेव जगद्गतमवश्यं कस्यचिद्रसस्य चाङ्गत्वं प्रतिपद्यते। विभावत्वेन चित्तवृत्तिविशेषा हि रसादयः। न च तदस्ति वस्तु किञ्चित् यन्न चित्तवृत्तिविशेषमुपजनयति, तदनुत्पादने वा कविविषयतैव तस्य न स्यात्। कविविषयश्च कश्चिन्निरूप्यते। अत्रोच्यते, सत्यम्। न तादृक् काव्यप्रकारोऽस्ति यत्र रसादीनामविप्रतिपत्तिः, किन्तु यदा रसभावादिविवक्षाशून्यः कविः शब्दालङ्कारमर्थालङ्कारं वा उपनिबध्नाति तदा तद्विवक्षाऽपेक्षया रसादिशून्यताऽर्थस्य परिकल्प्यते। विवक्षोपारूढ एव हि काव्ये शब्दानामर्थः, वाच्यसामर्थ्यवशेन च कविविवक्षाविरहेऽपि तथाविधे विषये रसादिप्रतीतिर्भवन्ती परिदुर्बला भवतीत्यनेनापि प्रकारेण नीरसत्वं परिकल्प्य चित्रविषयो व्यवस्थाप्यते, तदिदमुच्यते—"रसाभावादिविषयविवक्षाविरहे सति। अलङ्कारनिबन्धो यः स चित्रविषयो मतः॥ रसादिषु विवक्षा तु स्यात्तात्पर्य्यवती यदा। तदा नास्त्येव तत्काव्यं ध्वनेर्यत्र न गोचरः॥" इति। एतेन-तृतीयकाव्यभेदं प्रत्याचक्षाणस्य ग्रन्थकृतो मतं न सहृदयहृदयमधिरोहति।" इत्यादि, सर्वमेतत् प्रागल्भ्योज्जृम्भितम्। कथमन्यथा तत्र ध्वनिकृतैव—"एतच्च चित्रं कवीनां विशृङ्खलगिरां रसादितात्पर्यमनपेक्ष्यैव काव्यप्रवृत्तिदर्शनादस्माभिः परिकल्पितम्। इदानीन्तनानां तु न्याय्ये काव्यनयव्यवस्थापने क्रियमाणे नास्त्येव ध्वनिव्यतिरिक्तः काव्यप्रकारः। यतः परिपाकवतां (सहृदयानां) कवीनां रसादितात्पर्य्यविरहे व्यापार एव न शोभते। रसादितात्पर्य्ये च नास्त्येव तद्वस्तु यदभिमतरसाङ्गतां नीयमानं न प्रगुणीभवति।" इत्यादि प्रतिपादितं सङ्गच्छेत? को वाऽनुन्मत्तः सन् 'काव्यस्यात्मा ध्वनि'रिति प्रतिपाद्य "शब्दचित्रं वाच्यचित्रं च काव्य"मिति प्रतिपादयन् 'रसादितात्पर्य्यविवक्षाविरहे' इत्यादि प्रतिपादयेत्। वस्तु-तस्तु-तथा सति काव्यजीवातोरेवासत्त्वम्, कथं पुनश्चित्रं काव्यम्, इति बुक्कतां लज्जाऽभाव इत्येव चित्रम्। इति। शम्।

एवमवान्तरं प्रकृतं समापयन्नाह—**इतित्यादि**।

**इति** 'श्रीविश्वनाथकविराजकृते' इति शेषः। **ध्वनिगुणीभूतव्यङ्ग्याख्यकाव्यभेदनिरूपणो** ध्वनिगुणीभूताख्यौ यौ काव्यबेदौ तयोर्निरूपणं यत्र। तादृशः। **नाम**। **चतुर्थः परिच्छेदः**। 'समाप्तः' इति शेषः।

सहृदयानुभवैककलेवरं सकलतापनिवारणभेषजम्।

सुकृतिदिव्यविभूतिनिदर्शनं स्मरति तं रतितन्त्रमयं न कः।

**इति श्री शिवनाथसूरिसूनुना कविरत्नेन श्रीशिवदत्तशर्म्मणा रचितायां रुचिराऽऽख्यायां साहित्यदर्पणव्याख्यायां चतुर्थः परिच्छेदः समाप्तः।**

## पञ्चमः परिच्छेदः

अथ केयमभिनवा व्यञ्जना नाम वृत्तिरित्युच्यते—

**वृत्तीनां विश्रान्तेरभिधातात्पर्यलक्षणाख्यानाम्।**

**अङ्गीकार्या तुर्या वृत्तिर्बोधे रसादीनाम्॥ १॥**

अभिधायाः संकेतितार्थमात्रबोधनविरताया न वस्त्वलंकाररसादिव्यङ्ग्यबोधने क्षमत्वम्। न च संकेतितो रसादिः। नहि विभावाद्यभिधानमेव तदभिधानम्, तस्य तदैकरूप्यानङ्गीकारात्। यत्र च स्वशब्देनाभिधानं तत्र प्रत्युत दोष एवेति वक्ष्यामः। क्वच्चि 'शृङ्गाररसोऽयम्' इत्यादौ स्वशब्देनाभिधानेऽपि न तत्प्रतीतिः, तस्य स्वप्रकाशानन्दरूपत्वात्।

अभिहितान्वयवादिभिरङ्गीकृता तात्पर्याख्या वृत्तिरपि संसर्गमात्रे परिक्षीणा न व्यङ्ग्यबोधिनी।

यच्च केचिदाहुः—'सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः' इति, यच्च धनिकेनोक्तम्—

**'तात्पर्याव्यतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः.**

**यावत्कार्यप्रसारित्वात्तात्पर्यं न तुलाधृतम्॥' इति,**

तयोरुपरि 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति वादिभिरेव पातनीयो दण्डः।

एवं च किमिति लक्षणाप्युपास्या। दीर्घदीर्घतराभिधाव्यापारोणापितदर्थबोधसिद्धेः। किमिति च 'ब्राह्मण, पुत्रस्ते जातः। कन्या ते गर्भिणी' इत्यादावपि हर्षशोकादीनामपि न वाच्यत्वम्।

---

### विवृतिः

ननु व्यङ्ग्यं तावत्काव्यव्यपदेशबीजम्। तच्च व्यञ्जनया बोध्यं वस्तु। तस्या अप्रामाणिकत्वे सर्वमेतदसिद्धमिति। तत्र प्रमाणमुपन्यसितुमुत्थापयति—अथ केयमिति। इयं व्यङ्ग्यबोधसाधनी अभिनवा नवीनैरभ्युपगम्यमाना। प्रामाण्योपन्यासाय प्रथमं तस्याः स्वरूपं निरूपयति—वृत्तीनामिति। यद्यपि 'विरतासु—' इत्यादिना (५७. पृ.) व्यञ्जनायाः स्वरूपं निरूपितमेव। 'व्यञ्जनध्वननावगमनप्रत्यायनादिव्यपदेशविषया' इत्यनेन तत्र प्रमाणं

चोपन्यस्तम्, तथापि दृढप्रत्ययप्रतिपत्तये प्रमाणान्तरोपन्यासार्थ पुनरारम्भः। विश्रान्तेः स्वार्थबोधनेन विरामाद् वृत्तिः शब्दार्थयोरन्यतरस्य व्यापारः। बोधे बोधनिमित्तम्। रसादीनामिति वस्त्वलंकारयोरप्युपलक्षणम्।

नन्वभिधयैव रसादिबोध इत्यत आह—अभिधाया इति। मात्रपदेन लक्ष्म्यादिव्यवच्छेदः विरतायाः पुनरुत्थानाभावाद् इति प्रागुक्तो हेतुरत्र द्रष्टव्यः। (५० पृ.) हेत्वन्तरमप्याह—न चेति। स्वव्यञ्जकपदसंकेताभाववानित्यर्थः। तेन रसादीनां रसादिपदसंकेतितत्वेऽपि न क्षतिः। नहीति। तदभिधानं रसाद्यभिधानम्। विभावादेरेव रसरूपत्वाङ्गीकारादिति भावः। तस्य विभावाद्यभिधानस्य तदैकरूप्यानङ्गीकारात् आस्वादरूपरसादिप्रतीतितादात्म्यास्वीकारात्। तथा च विभावाद्यभिधानन्तरं जायमानाया आस्वादरूपरसादिप्रतीतेः कारणतया व्यञ्जनावश्यं स्वीकार्येति भावः। तादृशप्रतीते रासदिपदाजन्यत्वमपि प्रतिपादयति—यत्र चेति। 'तामुद्वीक्ष्य कुरङ्गाक्षीं रसो नः कोप्यजायत' इत्यादावित्यर्थः। स्वशब्देन रसशृङ्गारादिपदेन अभिधानं रसस्य प्रतिपादनम्। दोष एवेत्येवकारेणास्वादरूपरसप्रतीतिव्यवच्छेदः। ननु रसस्य स्वशब्दाभिधानं काव्ये एव दोषो न तु लौकिकवाक्ये, एवं च काव्यदोषवशात्तादृशी प्रतीतिर्मास्तु, लौकिकवाक्ये तु स्यादेवेत्यत आह—क्वचिच्चेति। लौकिकवाक्ये चेत्यर्थः। तत्प्रतीति रसप्रतीतिः। तस्य रसस्य। तथा चाभिधया जायमानस्य बोधस्य स्वप्रकाशत्वाभावादानन्दरूपत्वाभावाच्च न रसस्वरूपत्वस्वीकार इति भावः कारिकोक्तक्रमेण तात्पर्याख्यवृत्तेरपि व्यङ्ग्यबोधनाक्षमत्वमुपपादयति—अभिहितेति। एतच्च वक्तृतात्पर्यविशेषरूपाया व्यञ्जनाया वारणाय। संसर्गमात्रेऽन्वयबोधमात्रे। परिक्षीणा विरता। शब्दश्रुतेरन्तरं यावानर्थः प्रतीयते तत्र शब्दस्याभिधैव व्यापार इति मतं दूषयितुमुत्तापयति—सोऽमिति। इषोरिवेति। अतिदीर्घ इषुव्यापारो यथैकलक्ष्यं भित्त्वा लक्ष्यान्तरमपि भिनति तथैकैवाभिधावाच्यार्थ बोधयित्वा व्यङ्ग्यार्थमपि बोधयतीति भावः। तात्पर्येति। तात्पर्यभेदाभावात् शब्दादेर्व्यञ्जकत्वस्य व्यञ्जनसामर्थ्यस्य न ध्वनिर्न व्यञ्जना नाम। एवं च तात्पर्यमेव व्यङ्ग्यंबोधकम्। नन्विदं संसर्गमात्रबोधकं कथं व्यङ्ग्यं बोधयत्वित्यत आह—यावदिति। तात्पर्य हि संसर्गव्यङ्ग्ययोर्बोधकत्वान्न तुलाधृतं न संसर्गमात्रबोधकत्वेन नियन्त्रितमित्यर्थः। नन्वयं न्यायोऽप्रामाणिक एवेत्यत आह— एवं चेति। अभिधयैव व्यङ्ग्यबोधस्वीकारे चेत्यर्थः। तदर्थेति। लक्ष्यार्थेत्यर्थः। लक्षणाजन्यबोधानन्तरमपि व्यङ्ग्यबोधायाभिधासत्त्वस्वीकारे लक्षणासत्त्वस्वीकारस्याकिंचित्करत्वादिति भावः। लक्षणाया अस्वीकारे इष्टापत्तेर्दोषान्तरमाह—किमिति चेति। न वाच्यत्वमित्यन्वयः। कन्या अदत्तपुत्री। प्रतिपाद्यस्य मुखप्रसादादिभिरनुमितानामपि हर्षशोकादीनां शब्दानन्तरप्रतीतत्वेन वाच्यत्वापत्तिरिति भावः।

## विवृतिपूर्तिः

वृत्तीनामिति। अत्रेदं तत्त्वम्—'गङ्गायां घोषः' इत्यत्र गङ्गाशब्दो घोषशब्दश्च सामान्यात्मके जलप्रवाहे आभीरगृहनिकुरम्बे च संकेतितौ। सामान्य एवोद्योगात्। विशेषस्य हि संकेतकरणे आनन्त्यं व्यभिचारश्च स्यात् ततश्चाभिधया जलप्रवाहमात्र तद्गृहनिकुरम्बमात्रं च प्रतीतमिति प्रथमा कक्ष्या। एतत्प्रतिपाद्यान्यप्रतिपादनायाप्यभिधा न समर्था। 'विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे' इति नयेन "अभिधा शक्तिः विशेष्यं व्यक्तिरूपं धर्मिणं न गच्छेत् न यायात्। यतः विशेषणे जातिरूपे उपाधौ क्षीणशक्तिः व्यक्तिरूपं धर्मिणं न गच्छेत् न यायात्। यतः विशेषणे जातिरूपे उपाधौ क्षीणशक्तिः विरतव्यापारा। 'नागृहीतविशेषणा बुद्धिर्विशेष्ये चोपजायते' इति न्यायेन 'विशेषणं प्रत्याय्य विरामात्" इत्यर्थकेन तस्या विरम्य व्यापारासंभवात्। 'सामान्यान्यन्यथा—सिद्धेर्विशेषं गमयन्ति हि' इति न्यायात्तात्पर्यशक्त्या सामान्यान्याधाराधेयभावेनावस्थितं विशिष्टं गङ्गाघोषाद्यागूरयन्तीति तात्प-

र्येण परस्परान्वितत्वमात्रमेव प्रतीयत इति द्वितीया। जलप्रवाहस्य च घोषाधिकरमत्वमयुक्तमिति प्रमाणान्तरबाधितः सन् गङ्गाशब्दस्तदधिकरमयोग्यं तीरं लक्षयतीति तृतीया। तत्र तावत् 'मुख्यार्थबाधे तद्युक्तो ययान्योऽर्थः प्रतीयते। रूढेः प्रयोजनाद्वापि—' इति नीत्या लक्षणा त्रितसंनिधावेव भवति। तत्र मुख्यार्थबाधा तावत्प्रत्यक्षादिप्रमामान्तरमूला। यश्च सामीप्यादिसंबन्धः स च प्रमाणान्तरावगम्य एव। यत्पुनरिदं तीरस्य शैत्यपावनत्वादिलक्षणं प्रयोजनं प्रतीयते तच्छब्दान्तरानुक्तं प्रमाणान्तराप्रतिपन्नं च कुत आगतम्। न तावत्प्रत्यक्षादेतत्प्रतीतिः। अस्मादेव शब्दादवगमासिद्धेः, शब्दार्थे च तस्याप्रवृत्तेः। नाप्यनुमानात्। सामीप्येऽपि शैत्यपावनत्वादेरसंभवादनैकान्तिकत्वात्। न च स्मृतिः तदनुभावाभावात्। सत्यामपि तस्यां नियतस्मरणं न स्यात्। अस्मादेव च शब्दादेतदेव बुध्यत इति को हेतुः। तस्मादस्यैव शब्दस्यैव व्यापारोऽभ्युपगन्तव्यः। निर्व्यापारस्यार्थप्रतीतिकारित्वाभावात्। स तावन्नाभिधात्मा, समयाभावात्। तात्पर्यात्मा, तस्यान्वयप्रतीतावेव परिक्षयात्। न लक्षणात्मा, मुख्यार्थबाधाद्यभावात्। तस्मादभिधातात्पर्यलक्षणाव्यतिरिक्तश्चतुर्थकक्ष्यानिक्षिप्तो व्यङ्ग्यनिष्ठो व्यञ्जनाव्यापारो व्यञ्जनद्योतनादिसोदरव्यपदेशनिरूपितोऽभ्युपगन्तव्य इति निष्कर्षः॥

केचिदिति। भट्टमतोपजीविनो लोल्लटादयः॥

सोऽयमिति। यथा बलवता प्रेरित इषुरेकेनैव वेगाख्येन व्यापारेण वर्मच्छेदमुरोभेदं प्राणहरणं च रिपोर्विधत्ते, तथैक एव शब्द एकेनैवाभिधाख्यव्यापारेण पदार्थस्मृतिं वाक्यार्थानुभवं व्यङ्ग्यप्रतीतिं च विधत्ते। अतो व्यङ्ग्यत्वाभिमतस्यार्थस्य वाच्यत्वमेवेति तेषामाशयः॥

अत्रायमाचार्यधनिकसंदर्भः—'वाच्या प्रकरणादिभ्यो बुद्धिस्था वा यथा क्रिया। वाक्यार्थः कारकैर्युक्ता स्थायी भावस्तथेतरैः॥' यथा लौकिकवाक्येषु श्रूयमाणक्रियेषु 'गामभ्याज' इत्यादिषु अश्रूयमाणक्रियेषु च 'द्वारं द्वारम्' इत्यादिषु स्वशब्दोपादानात् प्रकरणादिवशात् बुद्धिसंनिवेशिनी क्रियैव कारकोपचिता वाक्यार्थः, तथा काव्येष्वपि स्वशब्दोपादानात् क्वचित् 'प्रीत्यै नवोढा प्रिया' इत्येवमादौ क्वचिच्च प्रकरणादिवशात् नियताविहितविभावाद्यविनाभावाद्वा साक्षाद् भावकचेतसि विपरिवर्तमानो रत्यादिः स्थायी स्वस्वविभावानुभावव्यभिचारिभिसतत्तच्छब्दोपनीतैः संस्कारपरम्परया परं प्रौढिमानीयमानो रत्यादिवाक्यार्थः। न चापदार्थस्य वाक्यार्थत्वं नास्तीति वाच्यम्। कार्यपर्यवसायित्वात्तात्पर्यशक्तेः।

## विज्ञप्रिया

व्यङ्ग्यभेदात् काव्यभेदस्य उक्तत्वाद् व्यङ्ग्यस्य च व्यञ्जनावृत्तिगम्यत्वाद् व्यञ्जनां पृच्छति—अथ केयमिति। अभिनवेति। आलङ्कारिकैरेव स्वीकृतत्वेन अभिनवत्वम्।

वृत्तीनामिति—अभिधालक्षणातात्पर्याख्यानां तिसृणां वृत्तीनाम्। विश्रान्तेरिति—स्वबोध्यार्थं बोधयित्वा विरतेरित्यर्थः। तुर्या चतुर्थी।

व्याचष्टे-अभिधाया इति। ननु रसादिरभिधयैव बोध्यताम् इत्यत आह—न च संकेतित इति। ननु विभावादिभिरेव रसादिभावादिः संकेतित एव इत्यत्राह—न हीति। तदवैक्यरूप्यं तत्स्वरूपता, विभावादिर्हि नायकादिः, रसश्च तद्वयक्तेरत्यादिः। रसस्याऽभिधा गम्यत्वे बाधकान्तरमाह—यत्र चेति। काव्यान्तर्गतरसादिशब्देनाऽभिधाने तु न रसादिप्रतीतिरित्याह—क्वचिच्चेति। ननु रसादिर्नाभिधया बोध्यताम्, नैयायिकस्वीकृतया तात्पर्याख्यया वृत्त्या बोध्यतामित्यत आह—अभिहितान्वयेति।

उभयसिद्धवाच्यार्थस्य बोधिका शक्तिरूपा वृत्तिरेव व्यङ्ग्यबोधिका, यथा धनुर्धरमुकतेन इषुणा प्रतिसंहितमेकं लक्ष्यं दीर्घेण वेगरूपव्यापारेण भित्त्वा अप्रतिसंहितं लक्ष्यान्तरमपि दीर्घतरीभूतेन तेनैव वेगरूपव्यापारेण भिद्यत इति यत् केषाञ्चिन्मतम्, यच्च तात्पर्यवृत्तिरेव व्यङ्ग्यबोधिका इति ध्वनिकस्य मतम्, दूषयितुं तदुभयमुत्थापयति—यच्च केचिद् इति। सोऽमितयभिधैव व्यङ्ग्यबोधिकेति यत् कैश्चिदुक्तं तत्र सोऽयमित्यभिधानरूपेषोर्व्यापार इवेत्यर्थः।

यच्च ध्वनिकेति—तात्पर्यव्यतिरेकादिति—व्यञ्जकत्वस्य व्यञ्जनायास्तात्पर्यानतिरिक्तत्वाद् असौ न ध्वनिर्न व्यञ्जना, किन्तु तात्पर्यमेवेत्यर्थः। यावत्कार्यं यावदर्थबोधनरूपं कार्यम्, तत्रप्रसारित्वात्तात्पर्यम्, न तुलाधरणेन नियमितमित्यर्थः।

तयोरुपरीति। इषुव्यापारवादितात्पर्यवादिनोरुपरीत्यर्थः। वाच्यव्यङ्ग्ययोर्युगपद्बोधने तात्पर्यसत्त्वे क्रमशो बोधनानुपपत्तिः, क्रमशो बोधे च तत्सत्त्वे विरम्य व्यापाराभाव इत्यर्थः। इदं च दूषणं न रुचिरम्; व्यञ्जनावादिनापि क्रमशो बोधाङ्गीकारेण विरम्य व्यापारस्वीकारात्। तात्पर्यसत्त्वे वृत्तिभेद एव विरम्य व्यापारः स्वीक्रियते, न तु एकया वृत्त्या इति चेन्न। तात्पर्यस्यैव नियामकत्वेन वृत्तिभेदस्याकिञ्चित्करत्वात्; शब्दविरतेश्चोभयत्र साम्यात्। तस्मात् क्रमशो बोधेन तात्पर्यग्राहकाभाव एव तयोरुपरि दोषः। न च फलमेव तद्ग्राहकमिति वाच्यम्; फलस्य तात्पर्योत्तरभावित्वात्। क्रमशो व्यञ्जनया बोधने तु वक्तृबोद्धव्यादिवैशिष्ट्यमेव तात्पर्यग्राहकम्। न चैवं तद्ग्राहितं तदेवं तात्पर्यं ध्वनिकमते वृत्तिरस्तु, न व्यञ्जनेति वाच्यम्; अतात्पर्यविषयेऽपि क्वचिद् व्यञ्जनादर्शनात्। यथा "यत्रोन्मदानां प्रमदाजनानाम्" इत्यत्रातात्पर्यविषयस्य व्यङ्ग्यश्रृङ्गारस्य अपराङ्गम्, यथा वा "सुरभिमांसं भुङ्क्ष्व" इति सुगन्धिमांसतात्पर्यके वाक्ये धेनुमांसव्यञ्जना। दीर्घदीर्घतराभिधावादिमते तु तदभिधाग्राहककोषाद्यभाव एव दोषः, अगृहीतयैवाभिधया व्यङ्ग्यबोधनोक्तिस्तत्प्रमामाभावेनैव निरसनीया।

अभिधारूपाया वाच्यार्थबोधकवृत्तेर्वङ्ग्यबोधकत्वे दोषान्तरमाहएवञ्चेति।

ननु न अङ्गीकार्यैव लक्षणा इत्यत आह—किमिति चेति। कन्येति—अत्र कन्या अदत्ता; तस्या एव गर्भे पितुः शोकात्। अत्र हि सम्बोध्यब्राह्मणसन्निहिताऽपरजनस्य तादृशशब्दश्रवणान्तरं ब्राह्मणस्य हर्षशोकावगमात् तच्छब्दीयदीर्घतराभिधयैव तद्बोधसम्भवेन तयोर्वाच्यतापत्तिरित्यर्थः।

## लोचन

इदानीं समनन्तरोक्तकाव्यभेदद्वयस्य व्यञ्जनाव्यापारसिद्धयधीनत्वेन तत्र विप्रतिपत्तिं निराचिकीर्षुः प्रथमं परिच्छेदमारभमाणः प्रथममभिधादिप्राचीनवृत्तिवेद्यत्वनिरासिकां प्रथमकारिकामवतारयति—अथेति। का—किं प्रमाणा। इयं समनन्तररोक्ता काव्यभेदद्वयस्य साधिका। अभिनवा—अखिलशास्त्रार्थतत्त्ववेदिनः काव्यपुरुषस्यावतारात् श्रीमदानन्दवर्धनाचार्यात् प्राचीनैराचार्यैरप्रदर्शिता।

वृत्तीनामीति—तुर्या वृत्तिर्व्यञ्जनध्वननगमनप्रत्ययनादिव्यदेशविषया। रसशब्देनात्रात्वाद्यमात्रस्य ग्रहमम्। आदिशब्देन वस्त्वलङ्कारयोः रसस्य प्राधान्यात् प्रथमं निर्देशः।

संकेतितो वाच्याऽर्थः। रसादिरपि कथं न संकेतित इत्याशङ्क्याह—न चेति। कुत इत्याह—न हीति। यदि स्यादयमर्थः। यदि रसादेः संकेतितत्वमुच्यते तत् किं विभावादिवाचकेन शब्देन? किं स्वशब्देन वा? नाद्यः,

तस्य विभावादिभिर्व्यञ्जनीयत्वात्। स्वशब्दाभिधाने च न तस्य प्रतीतिः किन्तु दोष एव। स्वशब्दो हि रसशब्दः, शृङ्गारादिशब्दो वा इत्यर्थः।

"शृङ्गारः सखि ! मूर्तिमानिव मधौ मुग्धो हरिः क्रीडती"त्यादौ च विभावादि सामग्रयादेव तद्व्यञ्जकत्वम् न तु शृङ्गारादिशब्दस्य। संसर्गमात्रेण प्रत्येकं पदैरभिहितानामर्थानामित्यर्थः।

यच्चेति। अयमर्थः—यथा खलु धनुष्मता मुकतो बाण एकेनैव वेगरूपव्यापारेण शत्रोः कवचादिकमनेकं भिनत्ति, तथैक एव शब्दस्य व्यापारो यावदुद्देश्यं बोधयति।

ध्वनिको दशरूपर्ता। तात्पर्यकार्यमुद्देश्यम्, यदर्थ शब्दप्रयोग इति भावः। न तुलया धृतम्; क्वचिन्निरुद्धप्रसरीकृत्य वाक्यार्थबोधनमात्रे व्यवस्थापितम्। विरम्य व्यापाराभाववादिभिः—अभिहितान्वयवादिभिः। किमस्माक माद्रकवाणिजां वहित्रचिन्तया इत्यर्थः।

एवं च यदि शब्दश्रुतेरनन्तरं यावनर्थोऽवगम्यते तावति शब्दस्याभिधा एव व्यापार इति भावः। 'लक्षणा' इत्यनन्तरं पृथगिति शेषः। तदर्थो लक्षणीयः।

अनुपपत्त्यन्तरमाह—किमिति चेति। अयमर्थः-हर्षादयो हि न केनापि वाच्यत्वेनाभ्युपगम्यन्ते, यतोऽमी वाच्यार्थप्रतीत्या न क्रियन्ते। न खलु शब्दस्य कारकत्वं, ज्ञापकत्वात्तस्य।

## कुसुमप्रतिमा

ननु नैयायिकवैयाकरणादिभिर्वञ्जनाया एवानङ्गीकारेण तत्प्रतिपाद्यस्य वाङ्ग्यनामकस्यार्थस्यै वा भावात् कथं तमर्थमादाय काव्यस्य ध्वनिगुमीभूतव्यङ्ग्यरूपं भेदद्वयमभिधीयत इत्याह अथेति अथ बाह्यभेदनिरूपणानन्तरम् इयं वाङ्ग्यार्थबोधिका, अभिनवा नवीनात्रैरङ्गीकृता। वृत्तिरर्थबोधिका शक्तिः।

वृत्तीनामिति। अभिधा तात्पर्य्य लक्षणाख्यानां प्रागुक्तलक्षणानां तिसृणां वृत्तीनां शक्तीनां विश्रान्तेः स्वं स्वमर्थं बोधयित्वा विरामात् स्वस्वार्थ बोधनानन्तरमेव उपक्षीणशक्तिकत्वेन अर्थान्तरबोधने अक्षमत्वादित्यर्थः; रसादीनां रस रसाभास भाव भावाभास सन्धि शबलता वस्त्वलङ्काराणां बोधे बोधनिमित्तं तुर्य्या क्वापि चतुर्थीवृत्तिः शक्तिः अङ्गीकार्य्या सर्वैरेव स्वीकर्त्तव्या। सैव चास्माकं वाञ्जनानमवृत्तिरिति भआवः। "विरतास्वभिद्यासु" इत्यत्राप्यमीषामर्थानामुक्तत्वेऽपि तस्य लक्षणपरत्वात् अस्य च व्यञ्जनागतप्रामाण्यस्थापनाभिप्रायात् उभयोरपि न पौनरुक्तयमिति बोध्यम्।

अथ शब्दगतसर्वशक्तिज्येष्ठा अभिधैव तावङ्गवदभिमतं व्यङ्ग्यार्थे बोधयत्वित्याह अभिधाया इति। सङ्केतितार्थमात्रस्य बोधनेन विरताया लक्ष्याद्यर्थान्तरबोधने नष्टसामर्थ्याया इत्यक्षमत्वं प्रतिहेतुगर्भविशेषणम्। क्षमत्वं सामर्थ्यम्। ननु सङ्केत नियमाभावात् रसादिरपि सङ्केतितं एवास्त्वित्याह न चेति। "शून्यवासगृहम्" इत्यादौ शून्यादिशब्दानां शृङ्गारादिर्न च सङ्केतित इत्यर्थः। तथात्वे "शून्यं गमनम्" इत्यादावपि तत्प्रतीत्यापत्तिः सङ्केतितार्थस्य सर्वदा प्रत्या कत्वनियमादिति भावः।

ननु सीतादिशब्दानामधिया सीताद्यालम्बनविभावादीनुपस्थापयन्तो अविनाभावद्वारा तद्विषयकशृङ्गारादीनपि उपस्थापयतु देवदत्तं पश्य इत्यादो देवदत्तादिशब्दभिधा तद्गतरूपादिवदित्याह नहीति। न चेत्यर्थः। विभावादे अभिधानम् अभिधया बोधनमेव, तेषां रसादीनामभिधानम् अभिधया बोधनम्। इति वाच्यमिति शेषः। तस्य विभावादेः तदैकरूप्यस्य रसाद्यभिन्नत्वस्य अनङ्गीकारात्। तथा च विभावादयीज्ञेयविशेषः रसादयश्च

ज्ञानविशेषा इति परस्परमेदेन एकस्याभिधाने अन्वस्याभिधानासम्भवात् 'देवदत्त' पश्य इत्यादौ तदीयरूपप्रतीतिस्तु तयोरभेदोपलम्भादिति भावः।

ननु "उदितं चन्द्रमालोक्य शृङ्गारे मग्नमन्तरम्" इत्यादी शृङ्गारादिशब्देनैव रसाद्यभिधानात्तत् प्रतीतिरिति यत्र तादृशशब्दो नास्ति तत्रापि तत्कल्पनया रसादिप्रतीतिरास्तामित्याह यत्र चेति। किञ्चेति चार्थः। यत्र उक्तोदाहरणादौ। स्वशब्देन रसादिवाचकेन रसपदेन शृङ्गारादिपदेन च, अभिधानम्, अभिधया रसादेर्बोधधनम्। तत्र स्थले स्वप्रकाशानन्दरूपत्वेन रसादेः प्रतीतिस्तु दूरे आस्ताम्, प्रत्युत वैपरीत्येन दोषः एवेत्यर्थः। वक्ष्यामः सप्तमपरिच्छेदे "रसस्योक्तिः स्वशब्देन" इत्यनेन। उदितं चन्दमालोक्यं इत्यादावपि व्यञ्जनात एव शृङ्गारादिप्रतीतिः, न पुनः शृङ्गारादिशब्दादिति भावः।

अथ तत्रापि शृङ्गारादिशब्दादेव तत्तद्रसादिप्रतीतौ किं प्रतिबन्धकमित्यपेक्षायां तवान्वयभिचारमेव प्रतिबन्धकं दर्शयितुमाह क्वचिच्चेति। क्वचित् शृङ्गाररसरहिते 'शृङ्गाररसोऽयं निरूप्यते' इत्यादौ वाक्ये इत्यर्थः। तथा चोक्तवाक्ये शृङ्गारशब्दसत्त्वेऽपि स्वप्रकासानन्दरूपत्वेन शृङ्गाररसत्त्वानुभवादन्वयवभिचार एव शृङ्गारादिशब्दानामभिधया शृङ्गारादिसबोधने प्रतिबन्धक इत्याशयः। एतदुपलक्षणम्—'शून्यं वासगृहम्' इत्यादौ वाक्ये इत्यथः। तथा चीक्रवाक्ये शृङ्गारशब्दसत्वेऽपि स्वप्राशानन्दपत्वेन शृङ्गारादिशब्दानामभिधया शृङ्गारादिसंबोधने प्रतिबन्धक इत्याशयः। एतदुपलक्षणम्—"शून्यं वासगृहम्" इत्यादौ शृङ्गारादिशब्दासत्त्वेऽपि स्वप्रकाशानन्दरूपत्वेन तत्तद्रसानुभावाद्व्यतिरेकव्यभिचारोऽपि द्रष्टव्यः।

ननु तर्हि तात्पर्य्यवृत्तिरेव रसादीन् व्यङ्ग्यर्थान् बोधयत् इत्याशयेन कारिकाक्रमादाह अभिहितेति। संसर्गमात्रे वाक्यघटकपदानां केवलपरस्परान्वयबोधजनने परिक्षीणा नष्टसामर्थ्या। तथा च तात्पर्य्यवृत्तिरपि वाक्यघटकपदानां केवलं परंस्परमन्वयबोधं जनयित्वैव "शब्दबुद्धिकर्म्मणाम्" इत्यादिन्यायेन अर्थान्तरबोधने नष्टसामर्थ्या सती कथं व्यङ्ग्यार्थान् बोधयेदिति भावः।

इदानीं व्यङ्ग्यार्थबोधनेऽपि अभिधावृत्तिवादिनां तात्पर्य्यवृत्तिवादिनाञ्च मतमेकोद्यमेन दूषयितुं क्रमेणाह यच्चेति। इषीर्बाणस्येव स प्रसिद्धोऽयम् अभिधाया व्यापारः कार्य्यं दीर्घदीर्घतरः सातिशयं इत्यर्थः। अयमाशय—महाबलधानुष्कनिक्षिप्तो दुर्निवारवेगो वाणी यथा लक्ष्यं भित्त्वा अलक्ष्यमपि भिनत्ति, तथा ज्येष्ठशक्तिरभिधापि स्वार्थे बोधयित्वा व्यङ्ग्यार्थानपि बोधयतीति।

तात्पर्य्येति। तात्पर्य्यस्य स्वाभिमततात्पर्य्याख्यवृत्तेः अव्यतिरेकादभिन्नत्वात् हेतो व्यञ्जकत्वस्य व्यञ्जनानामकनूतनवृत्तेः प्रतिपाद्यो न ध्वनिः। तथा च व्यञ्जनानामकनूतनवृत्तेरस्मदभिमततात्पर्य्यवृत्त्यन्तर्भूतत्वात् तात्पर्य्यवृत्तिप्रतिपाद्य एव ध्वनिः एवञ्च गौरवाव्यञ्जना नाम वृत्त्यन्तरं नाङ्गीक्रियत एवेति भावः। ननु भवदभिमता तात्पर्य्यवृत्तिः पदानामन्वयमात्रं बोधयित्वै वोक्षीणा कथं व्यङ्ग्यार्थान् बोधयेत् कथं वा भिन्नप्रकारा व्यञ्जना तदन्तर्भवेदित्याह यावदिति। यावन्ति कार्य्याणि अर्थबोधनव्यापारास्तावन्त्येव प्रसरति वाङ्गप्रतीति स तस्य भावस्तस्मदावश्यकतानुरूपव्यङ्ग्यङ्गीकारादित्यर्थः तात्पर्य्यं तदाख्या वृत्तिः न तुलाधृतं न तोलनदण्डेन मापितम्, अस्मन्मते तात्पर्य्यवृत्तिः पदानमन्वयमात्रमेव बोधयेदिति न नियमः अपि तु अभिधालक्षणाभ्यामबोध्यन् सर्वनिवार्थान् बोधयेदिति भावः।

तयोरिति। दीर्घदीर्घतरेणाभिधाव्यापारेणैव व्यङ्ग्यार्थबोध इतिवादिनः तात्पर्य्यवृत्त्यैव व्यङ्ग्यार्थबोध इति वादिनश्च उपरीत्यर्यः। दण्डः पातनीयो दोषः प्रदर्शनीयः। तथा च अभिधा सङ्केतितार्थ मात्र बोधयित्वा विरता

सती कथं व्यङ्ग्यार्थमपि बोधयेत्; तात्पर्य्यवृत्तिश्च वाक्यघटकपदानां परस्परमन्वय मात्र बोधयित्वैव विरता सती कथं व्यङ्ग्यार्थमपि बोधयेत् तयोर्लक्षणाभ्यां तत्तन्मात्रार्थबोधनस्य नियन्त्रितत्वादिति दोषी द्रष्टव्यः।

ननु "शब्दबुद्धिकर्म्मणाम्" इत्यादिकं न राजशासनम्, येन तत् सर्वैरवाङ्गीकर्त्तव्यमिति, किन्तु कस्यचिन्मतमात्रं तदिति न वयमाद्रियामह इत्याह एवञ्चेति। "शब्दबुद्धिकर्मणा' इत्यादिकमनाहृत्य अभिधया तात्पर्य्येण व्यङ्ग्यार्थस्यापि बोधाङ्गीकारे चेत्यर्थः। उपास्या लक्ष्यार्थबोधाय आश्रयणीया। अपिशब्दात् तात्पर्य्यवृत्त्यापि। तदर्थबोधसिदधेः लक्ष्यार्थज्ञाननिष्पत्तेः।

अथ लक्षणापि नाङ्गीक्रियत इत्याह किमिति चेति। कन्या अनागतगर्भधारणसमया तनया। तथा च 'पुत्रस्ते जात:' इति श्रणान्तरं प्रवासिनो ब्राह्मणस्य मुखमफुल्लतादर्शनेन हर्षः, "कन्या ते गर्भिणी" इति श्रवणानन्तरञ्च अप्राप्तव्यस्कायाः प्रसवसमये प्राणशङ्कया तस्य मुखमालिन्दर्शनेन शोकषानुमीयत इत्यनुमेयानामपि हर्ष शोकादीनां किमिति न वाच्यत्वम् अभिधया बोध्यत्वं स्यात्? तस्या अति दीर्घव्यापाराङ्गीकारादित्यर्थः। तस्यांपौष्टापत्तौ तु शाब्दबोधानां विनियमापत्तिः प्राचामभिधादिलक्षणानामुन्मत्तप्रलापत्वापत्तिश्चेति भावः।

## विमला

ननु व्यङ्ग्यं तावत् काव्यबीजं, तच्च व्यञ्जनावृत्तिबोध्यं वस्तु, व्यञ्जना च अभिनवा वृत्तिः, अभिनवायाश्च तस्याः स्वीकारे प्रयोजनविशेषमन्तराऽनुपपत्तिः; इतीयं कथमङ्गीक्रियते? इत्याशङ्क्याह, अथेत्यादि।—इयं—व्यङ्ग्यबोधसाधनीभूता, अभिनवा—नव्यैरङ्गीकृता इत्यर्थः।

प्रामाण्यीपन्यासाय प्रथमं तस्याः स्वरूपं निरूपयति, वृत्तीनामिति।—यद्यपि "विरतासु" इत्यादिना व्यज्यनायाः स्वरूपं निरूपितमेव, "व्यञ्जनध्वननावगतप्रत्यायनादिव्यपदेशविषया" इत्यनेन तत्र प्रमामं चोपन्यस्तं, तथाऽपि दृढ़प्रत्ययप्रतिपत्तये प्रमाणान्तरोपन्यासार्थञ्च पुनरारम्भोऽयम्। अभिधातपर्य्यलक्षणाऽऽख्यानां वृत्तीनां, विश्रान्तेः,—स्वस्वार्थं निर्वाह्य विरामात्, रसादीनाम् [अत्रादिपदेन भावादयो वस्तूनि अलङ्काराश्च गृह्यन्ते] बोधे—प्रतीतौ, तुर्य्या वृत्तिः,—चतुर्थी व्यञ्जना नाम व्यापारः इत्यर्थः, अङ्गीकार्य्या—स्वीकार्य्या।

अत्रेदं तात्पर्य्यम्—"गङ्गायां घोषः" इति गङ्गाशब्दघोषशब्दौ साधारणे नीरस्रोतोगोपालगृहस्तोमयोः कृतसङ्केतौ, साधारणेऽर्थे एव प्रथमतः सर्वेषां शब्दानां प्रवृत्तेः, असाधारणस्य हि सङ्केतोत्पादने असङ्ख्यत्वं व्यभिचरितत्वञ्च भवेत्, तेन च शक्त्या नीस्रोतोभावं गोपालगृहस्तोममावञ्च ज्ञातं भवेत्, इति आद्या सरणिः। एतद्वाध्यान्यबीधनाय चाशक्ता शक्तिः, "विशेष्य नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे" इति शास्त्रनियमात्; (अभिधा—शक्तिः, विशेष्यं—व्यक्तिस्वरूप धर्मिणं, न गच्छेत्—नावलम्बेत इति च तदर्थः। यस्माद्विशेषणे—जात्यात्मन्युपाधौ, क्षीणशक्तिः,—स्वव्यापारादुपता) "नागृहीतविशेषेणा बुद्धिर्विशेष्ये चोपजायते" इति नयेन "विशेषणं प्रत्याप्य विरामात्" इति तात्पर्य्यकेण तस्या विराममनुष्ठाय क्रियोदोगाप्रसङ्गात्, "सामान्यान्यन्यथसिद्धेर्विशेषं गमयन्ति हि" इति शास्त्रनियमात् अभिप्रायशक्तिद्वारा साधारणान्याधाराधेयभावेन वर्त्तमानम् असाधारणं गङ्गाघोषाद्युद्गमयन्ति इत्यभिप्रायेणान्योऽन्यसंवलितत्वमात्रमेव ज्ञायते, इति द्वितीया सरणिः। नीरस्रीतसश्च गोपाग्रामाधारत्वमसङ्गतमित्यव्यप्रमानिषिद्धः गङ्गाशब्दः तदाधारोचितं तीरं लक्षणया बोधयति इति तृतीया सरणिः। अत्र तावत् "मुख्यार्थबाधे तद्युक्तो यथाऽन्वयोर्थः प्रतीयते। रूढेः प्रयोजनाद्वापि—" इति नियमेन लक्षणा निरूपितमुख्यार्थबाधादिवयसन्निधाने एव सम्पद्यते। मुख्यार्थबाधः तस्यां तावदन्वप्रमितिमूलकः। यः पुनः सामी-

प्यादिसंसर्गः, स अन्यप्रमाणावबोध्य एव; यत्पुनरेतत् गङ्गातीरस्य शीतलत्वपवित्रताऽऽपादकत्त्वादिकं कार्य्यद्देश्यं प्रज्ञायते, तदन्यशब्दाप्रतिपादितम् अन्यप्रमामायुक्तं कुतो ह्यापतितम् ? न प्रत्यक्षात्, कथितशब्दादेव तत्प्राप्तिसिद्धेः, शब्दार्थे हि तदप्राप्तिप्रसङ्गात्; न चानुमितेः, नैकट्येऽपि पावित्रशीतलत्वादेः असम्भवत्वेन व्यभिचारितत्वात्; न स्मृतेश्च, तदनुभवाभावप्रसङ्गात् । स्मृतौ सत्यामपि निरन्तरस्मरणासम्भवात् । "एतस्माद् एव शब्दादिमेव ज्ञायते" इति च किम्? अस्मादस्यैव शब्दस्याद्योगो विज्ञेयः; निक्रियोद्योगस्य अर्थप्रत्यायकत्वासम्भवात् । स तावत् अभिधा(शक्ति) स्वरूपः, तत्कालाभावत् । तात्पर्य्यस्वरूपोऽपि न, अन्वयप्रतीतावेव तत्राशात् ।न च लक्षणास्वरूपः, मुख्यार्थबाधादेरभावप्रसङ्गात् । तस्मादभिधादिचितयव्यतिरिक्तश्चतुर्थसरणिपतितः व्यङ्ग्योऽर्थः व्यञ्जनाक्रियी-टोगः व्यञ्जनप्रकाशनादिसधर्म्मपदेशसम्पादितोऽवसेय इति सङ्क्षेपः ।

ननु अभिधयैव रसादिबोधः स्यादित्यत आह, अभिधाया इति ।—सङ्केतितार्थ एवेति सङ्केतितार्थमात्रं, तस्य बोधनात्—बोधं कारयित्वा, विरतायाः,—निवृत्तव्यापारायाः, [मात्रपदेन लक्ष्यादिव्यवच्छेदः] पुनरुत्थानाभा-वादिति शेषः । वस्तुनः, अलङ्कारस्य, रसादिव्यङ्ग्यस्य च बोधने न क्षमत्वं—सामर्थ्याम् । ननु रसादिरपि सङ्के-तितोऽङ्गीक्रियताम् ? इत्याशङ्क्याह, न चेति ।—रसादिः, [आदिपदेन भावादीनां, वस्त्वलङ्कारयो ग्रहणम्] न च सङ्केतितः,—स्वव्यञ्जकपद सङ्केताभावोनित्यर्थः, तेन रसादीनां रसादिपदसङ्केतितत्वेऽपि न चातिः । न ह्योति ।—हि—यतः, विभावाद्यभिधानं—विभावादीनाम् [अत्रादिपदेन अनुभावसहारिणी गृह्यन्ते] अभिधानं—कथनम्, अभिधया प्रतिपादनमिति यावत् एव तदभिधानं—तस्य—वस्त्वलङ्कारसादेः, अभिधानं, न, तस्य—वस्त्वलङ्कार-रसादेः, तदैकरूप्यानङ्गीकारात्—आम्वादरूपपररसादिप्रतीतितादात्म्यस्वीकारात्, विभावा अभिन्नरूपताया अस्वीकारादिति यावत्; तथा च विभावाद्यभिधानानन्तरं णावमामया आस्वादरूपरसादिप्रतीतेः कारणतया व्यञ्जनाऽवश्यं स्वीकार्येति भावः; तादृशप्रतीतेः रसादिपदजन्यत्वसपि प्रतिपादयति, यत्र चेति ।—"तामुवीक्ष्य कुरङ्गाक्षी रसो न कोऽप्यजायत" इत्यादौ चेत्यर्थः, स्वशब्देन—रसशृङ्गारादिपदेव, अभिधानं—कथनं, रसादेरिति शेषः, तत्र प्रत्युत [इदं वैपरीत्ये] दोषः एव [एवकारेण आस्वादरूपरसपप्रतीतिव्यवच्छेदे] । ननु रसस्य स्वशब्दा-भिधानं काव्ये एव दोषः, न तु लौकिकवाक्ये, एवञ्च काव्यदोषवशात्तादृशौ प्रतीतिर्माऽस्तु, लौकिकवाक्ये तु स्यादेवेत्यत आह, कश्चिद्र ।—लौकिकवाक्ये चेत्यर्थः, तत्प्रतीतिः,—तस्य रसादेः प्रतीतिः । तस्य—रसस्य, तथा चाभिधया जायमानस्य बोधस्य स्वप्रकाशत्वाभावादानन्दरूपत्वाभावाच्च न रसस्वरूपत्वस्वीकार इति भावः ।

कारिकोक्तक्रमेण तात्पर्य्यवृत्तेरपि व्यङ्ग्योधन मुपपादयति, अभिहितेति ।—अभिहितानां—कवितानां, सर्वेषां पदानामिति शेषः, अन्वयः,—परस्परं सम्बन्धः, तात्पर्य्यशक्त्या स्वत एव तात्पर्य्यग्राहकतयाऽऽङ्गाङ्गित्वमिति यावत्, तं वदन्ति—स्वीकुर्वन्तीति तैः मीमांसकैरित्यर्थः, अङ्गीकृता, तात्पर्य्याख्या—तात्पर्य्यन्नाम, वृत्तिः अपि संसर्गमात्रे—केवलान्वयबोधे इत्यर्थः, परिक्षीणा—गतशक्तिः, न तस्या अपरार्थबोधने क्षमत्वमिति भावः । एतेन वक्तृतात्पर्य्यरूपैवास्तु व्यञ्जनेनि वदन्तः परास्ताः ।

शब्दश्रवणान्तरं यावन्तः अर्थाः प्रतीयन्ते, तावत्स्वेव शब्दस्य अभिधा एव व्यापारः, इति मतमुत्थाप्य दूषयति, सोऽयमिति ।—अतिदीर्घः इषुव्यापारो यथैकलक्ष्यं भित्त्वा लक्ष्यांन्तरमपि भिनत्ति, तथा एकैवाभिधा वाच्यार्थ बोधयित्वा व्यङ्ग्यार्थ अपि बीधयतीति भावः; यथा इषुः वलुवद्वीरिण प्रक्षिप्त, प्रचण्डगवाभिधेन क्रियायोगेन कवचोद्भेदनं वक्षोविदारणं जीवनापहरणञ्च प्रतियीद्धुः सम्प्रादयति, तथैव एव शब्दः अभिधाऽऽक्येन एकैनैव क्रियायोगेन पदार्थस्मरणं, वाक्यार्थविज्ञातं व्यङ्ग्यार्थप्रत्ययञ्च संविधत्ते तस्माद्वयत्वसम्मतस्य अर्थविशे-षस्य वाच्यगम्यत्वमेवेति सारः । भट्टमतोपजीविनां लोल्लटादीनामयमाशयः इति ।

तात्पर्य्येति ।—तात्पर्य्यस्य अव्यतिरेकात्—अभिन्नत्वात्, शब्दादेरिपि शेषः, तथा च शब्दादिसम्बन्धिनस्तात्पर्य्यस्य भिन्नत्वाभावादित्यर्थः, व्यञ्जकत्वस्य—व्यञ्जनाया, न ध्वनिः;—न व्यञ्जनानाम्नो वृत्तिरङ्गीकार्य्या इत्यर्थः, एवञ्च तात्पर्य्यवृतरेव व्यङ्ग्यबोधइनीत्यर्थः । नन्विदं संसर्गमात्रबोधकं कथं व्यङ्ग्यं बोधयतु ? इत्याह, यावदिति ।—तात्पर्य्य यावत्कार्य्यप्रसारित्वात्—यावन्ति कार्य्याणि इति यावत्कार्य्यं, तत्र प्रसारित्वात—व्यापकत्वात्, तुलया—तोलनपात्रेण धृतं न, तात्पर्य्यम् एतावत्कार्य्यं साधयेत्, नान्यत्, इति नेत्यर्थः, अयं भावः,—व्यञ्जना तात्पर्य्यञ्च नामसो भिद्येते, न पुनः स्वरूपतः; तात्पर्य्यं हि न केनापि तुलायां धृत्वा द्रव्यमिव एतावदिति निश्चितम् । संसर्गमात्रबोधकत्वेन न नियन्त्रितमित्यर्थः; एतस्य सर्वकार्य्यव्यापितत्वात् । अतः वाक्यस्य तात्पर्य्यार्थस्वीकारेणैव व्यञ्जनया प्रतिपाद्यस्यार्थस्य गतार्थत्वेन व्यञ्जनायाः पुनः स्वीकारौचित्यम् इति ।

त्रयोरिति ।—तयोः,—इषुवत् अभिधाव्यापारवादि-यावत्कार्य्यप्रसादितात्पर्य्यवादिनोरित्यर्थः । शब्देति ।—शब्दबुद्धिकर्मणां विरतानां व्यापारोत्थानं न पुनर्भवतीत्यर्थः, तच्च शब्दः,—घटादि, वृद्धिः,—ज्ञानं, कर्म—क्रिया, एतेषां विरतत्वं नाम एकं व्यापारमुद्भाव्य हितीयं व्यापारमुङ्भावयितुं स्थगितत्वम् । तथा सति घटादिः शब्दः एवमर्थ बोधयित्वा विरतः सन् नान्यमर्थं बोधयितुं शक्नोति, बुद्धिः एकमर्थं विषयीकृष्य नान्यमर्थं विषयीकर्त्तुशक्नोति । इदमुक्तं,—यथा बुद्धया घटो विषयीक्रियते, न तया पुनः पटो विषयीकर्त्तुं पार्य्यते, तदान बुद्धैः घटाकारेणावतिष्ठानानायाः पटाकारेणावस्थातुमशक्यत्वात् । तत् एवोक्तं,—बुद्धिरेकमर्थं विषयीकृत्य नान्यं विषयीकर्त्तुं शक्नोतीति हिरम्य तस्या व्यापाराभावात्, तथा पचनादिरूपं क्रियाऽपरपर्य्यायं कर्म एकं स्वानकृतं तण्डुलादीनां विक्लेदनादिरूपं व्यापारं निष्पाद्य नापरं निष्पादयितुं वक्तोति । इद तत्त्वम्;—"तण्डुलान् पचति" इत्यादौ तण्डुलपाकाद्यनुकूला क्रिया "ग्रामं गच्छन्ति इत्यादौ गमनाद्यनुकूला न भवति वक्तुं शक्या, तस्य तथैव सम्पद्य वर्त्तमानत्वात् तस्मात् तस्या अन्यथासम्पद्यमानत्वम् असम्भवौति विरतव्याप्रत्वं बाढ़म् । इति ।

ननु बुङ्ग्यादयो विरता नान्यमर्थं बोधयितुं शक्नुवन्तीतु नोपपद्यते, एकया बुद्धया एकेन शब्दादिना च बहुकार्य्यसाधनस्य अनेकार्थादिबोधनस्य च सर्वदैव प्रसिद्धेरित्यस्वरसमाशङ्कयाह, एवञ्चेति ।—एवञ्च—निरुक्तप्रकारेण पुनः, अभिधयैव व्यङ्ग्यबोध स्वीकारेण चेत्यर्थः, किमिति—किमर्थम् ? यदि तथाविधेन अभिधासामर्थ्येनैव व्यँज्यतया बोध्योऽर्थोऽपि बोध्यत्वेन स्वीक्रियते, तदा किमभिप्रायो लक्षणया अपि स्वीकारः । लक्षणया बोध्यस्यार्तस्य तथाविधेन अभिधाव्यापारेणैव बोध्यत्वस्वीकार्य्यात् इत्यर्थः । अयं भावः,—"सोऽयमिषिरिव" इत्यभिधायिनी मीमांसकः, मीमांसाश्च आचार्य्यजैमिनः, तथा सिद्धान्ते च स्वाचार्य्यसिद्धान्तेनापि विरोधः; तथा हि,—"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" (मीमां. द. ३ अ. ६ पा. १४ सू.) इति जैमिनिसूत्रम्; एतेन च श्रुतिलिङ्गादीनां पूर्वपूर्वबलिष्ठत्वं पर परदुर्बलत्वञ्च प्रतिपादितम् । अथ यदि यथा श्रुतिस्थले तथा लिङ्गस्थलेऽपि शब्दाऽऽकर्म्मनोत्तरमवगम्यमानानामर्थानां दीर्घदीर्घतराभिधासामर्थ्येनैव अवगतिः स्यात्, तदा लिङ्गप्रभृतीनां दुर्बलत्वं कथङ्कारमुपपत्स्यते ? इति । विस्तारस्तु माधवीये जैमिनिन्याय मालाविस्तरे, आपोदेवरचिते मीमांसान्यायप्रकाशे, रामेशवरभिक्षुरचितायां मीमांसाऽर्थ सङ्ग्रहकौमुद्यां, श्रीकृष्णयाज्ञिकनिर्मितायां मीमांसापरिभाषायाञ्चेति दिक् । तदर्थस्य—लक्षणाजन्यबोधविषयस्य, लक्ष्यार्थस्य इत्यर्थः बोधसिद्धेः,—प्रतीतिसिद्धेः । तथा हि, लक्षणाजन्यबोधान्तरमपि व्यङ्ग्यबोधाय अभिधासत्त्वस्वीकारे लक्षणासत्त्वस्वीकास्य अकिञ्चित्करत्वमिति भावः ।

ननु लक्षणाया अपि अस्वीकारे का हानिः ? इति सामान्यतः समाशङ्याह, किमिति चेति ।—ते—तव, सम्बोध्यस्येति यावत्, पुत्री जातः,—उत्पन्नः, कृत्या—अनूढ़ा पुत्ती य, गर्भिणी—गर्भवती, धृतसन्तानवीना वर्त्तवै

इति । भावः, इत्यादौ अपि वाक्ये श्रूयमाणे हर्षशोकादीनां पुषजननश्रवणादिना मनसि स्फुरती हर्षादिंबोधस्य, कन्याया अन्तर्वजीत्वश्रवणादीना कुलकलङ्कनबोधादिना शोकादिसम्पत्तेश्च न वाच्यत्वमापद्येति भावः । "पुत्तस्ते जातः" "कन्या ते गर्भिणीइत्यादीनामपि "विधृरुदितः" "सूर्योऽस्तमितः" इत्यादीनामिव वाचकत्वाङ्गीकार स्वैवौचित्यात् । तव मते व्यञ्जकत्वाभावात् वाचकत्वाङ्गीकारस्य सर्वत आपातत उपस्थितौ तथा प्रातिस्विकस्य बोधस्य निर्म्मूलत्वमेष । अस्मन्मते तु व्यञ्जनारूपस्य व्यापारान्तरस्य जागरूकत्वान्न याऽपि क्षतिः; इति दरमुकुलितनयनं स्वहृदये निहितप्रकरेण क्षणं विचार्य्य वाच्यम् ।

## लक्ष्मी

एतावता व्यङ्ग्यं तावत्काव्यव्यपदेशबीजमित्युपपादितम्, तथा च समनन्तरोक्तकाव्यभेदद्वयस्य व्यञ्जनाव्यापारसिद्धयधीनत्वेन तदप्रामाणिकत्वे सर्वमेतदनुपपन्नमेवेति तत्र विप्रतिपत्तिनिराकरणपूर्वकं प्रमाणोपन्यासाय परिच्छेदमारभमाणः प्रथममभिधादिप्राचीनवृत्तिवेद्यत्वनिरासिकां प्रथमकारिकामवतारयति—अथेति । अथ व्यङ्ग्यभेदनिरूपणानन्तरम् । का किं प्रमाणा किं स्वरूपा च इयं समन्तरोक्ता व्यङ्ग्यार्थबोधसाधिनी । अभिनवा अखिलशास्त्रार्थतत्त्ववेदिनः काव्यपुरुषस्यावतारात् श्रीमदानन्दवर्धनाचार्यात् प्राचीनैराचार्यैरप्रदर्शिता नवीनैरभ्युपगम्यमानेत्यर्थः । वृत्तिः अर्थबोधिका शक्तिः । इत्युच्यते प्रतिपाद्यते 'मया ग्रन्थकर्त्रेति' शेषः ।

यत्तु—'नैयायिकवैयाकरणादिभिर्व्यञ्जनायाः अनङ्गीकारेण' इत्युक्तम्, तत्तुच्छम्, नैयायिकैरनभ्युपगमेऽपि वैयाकरणैरवश्यमभ्युपगन्तव्यत्वात् । तथाहि—'व्यञ्जना कः पदार्थः' इति जिज्ञासायां 'मुख्यार्थबाधनिरपेक्षबोधजनको मुख्यार्थसम्बन्धासम्बद्धसाधारणः प्रसिद्धार्थविषयको वक्त्रयादिवैशिष्टयज्ञानप्रतिभाद्युद्रबुद्धः संस्कारविशेषो व्यञ्जना' इत्युक्तम् । लक्षणैवव्यञ्जनाऽन्तर्भूतेति तार्किकमतं निरसितुं—मुख्यार्थेति । मुख्यार्थस्य शक्यार्थस्य बाधः परस्परसम्बन्धनिरूपकाणां पदार्थानां तात्पर्यविषयीभूतसम्बन्धेनैकपदार्थेऽपरपदार्थाभावः । तन्निरपेक्षो यो बोधस्तज्जनकः । अन्वयश्च 'संस्कारविशेषः' इत्यत्र । मुख्यार्थेन सम्बन्धासम्ब्दधौ यौ अर्थौ तदुभयसाधारणौ यौ प्रसिद्धाप्रसिद्धार्थौ तौ विषयौ यस्य स तथोक्त इत्यर्थः । वक्त्रादीत्यादिना—वक्तृबोद्धव्यकाकूनामित्यादेः संग्रहः । तथा च वक्त्रयादिवैलक्षण्यहेतुका या प्रतिभाशालिनामन्यार्थधीस्तद्धेतुव्यापारत्वं व्यञ्जनात्वं फलितम् । प्रतिभा च वासनाविशेषरूपा । वैयाकरणानां व्यञ्जनाऽभ्युपगमादेव निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यत्वं च हर्याद्युक्तं संगच्छते । द्योतकत्वञ्च—स्वसभिव्याहृतपक्षनिष्ठशक्तिव्यञ्जकत्वम् । अपि च निपातानां व्यञ्जनापरपर्यायद्योतकतात्पर्यरूपवृत्त्यार्थबोधकत्वस्वरूपार्थवत्वात् प्रातिपदिकत्वसिद्धिः । काव्यप्रकाशकृतापि—'इदमुत्तममतिशयिनि' इति सूत्रविवरणे—'बुधैः वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः' इत्यभिधाय तन्मतात्स्वमते भेदप्रदर्शनाय 'ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यञ्जनक्षमस्य शब्दार्थ युगलस्य' इत्युक्तम् । अत एवाहुः—

ननु कथं शब्दात् पदार्थवाक्यार्थावगमः आशुविनाशिनां क्रमिकाणां वर्णानां मेलकभावेन क्रमादवगन्तुमशक्यत्वादिति चेत्? एवं पूर्वपूर्ववर्णानुभवजनितसंस्कारविशेषान्तिमवर्णानुभवेन स्फोटोऽभिव्यज्यते । स च स्फुटयति प्रकाशयत्यर्थमिति स्फोटनं वा स्फोट इत्येवं ध्वन्यभिन्न एव, असौ नित्यो ब्रह्मरूपः सकलप्रत्येयप्रत्यायनशक्तः, एतद्वयव्यञ्जक वर्णात्मकः शब्दः, तत्र वृत्तिर्व्यञ्जना नाम अभिधालक्षणातात्पर्याख्याभ्यो वृत्तिभ्यो भिन्ना सङ्केताद्यनुपत्तेः ।' इति ।

एतेन वैयाकरणसिद्धान्तानभिज्ञतया काव्यप्रकाशमर्मविद्यतया च रभसादेव तत्कथनमित्यधिकं सुधीभिरेव विभावनीयम्।

प्रमाणोपन्यासाय प्रथमं व्यञ्जनायाः स्वरूपं दर्शयति—वृत्तीनामिति। ननु 'विरतास्वभिधाद्यासु' इत्यादिना—(५३ पृ.) व्यञ्जनायाः स्वरूपं प्रदर्शितम्। तथा 'व्यञ्जनध्वननगमनप्रत्यायनादिव्यपदेशविषया' इत्यनेन प्रमाणाञ्चाप्युपन्यस्तमेवेति चेत्? सत्यम्, तस्य लक्षणपरत्वात् दृढप्रतिपत्तये प्रणाणान्तरोपन्यासार्थञ्च पुनरायास इति बोध्यम्। वृत्तीनाम् अभिधा-तात्पर्य-लक्षणाख्यानां तिसृणां शक्तीनां विश्रान्तेः स्वार्थबोधनेन विरामात्, रसादीनां रस-रसाभास-भाव-भावाभाससन्धिशबलतावस्त्वलङ्काराणाम्। रसस्य प्राधान्यात् प्रथममुपन्यासः। बोधे बोधनिमित्तं तुर्या काऽपि चतुर्थी वृत्तिः शक्तिः शब्दार्थयोरन्यतरस्य व्यापार इति यावत्, अङ्गीकार्या सर्वैरवाभ्युपगन्तव्या।

अत्रेदं रहस्यम्—'गङ्गायां घोषः' इत्यत्र गङ्गाशब्दः सामान्यात्मके भगीरथरखातावच्छिन्नजलाप्रवाहे घोषशब्दश्चापि सामान्यात्मके आभीरपल्ल्यां च सङ्केतितौ। सामान्य एव सङ्केतात्। विशेषस्य हि सङ्केतकरणे आनन्त्यं व्यभिचारश्च स्यात्। ततश्चाभिधया भगीरथरथखातावच्छिन्नजलाप्रवाहमात्रम् आभीरपल्लिमात्रं च प्रतीतमित्याद्याः क्रमः एतदभिधायान्यबोधनेऽप्यभिधा न समर्था 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायेन—(क) **अभिधाशक्तिः** विशेष्यं धर्मिणं न गच्छेत् बोधयितुं न समर्था भवति कुत इत्याकाङ्क्षायां यतः क्षीणशक्तिरिति। यतः विशेषणं प्राप्य पदशक्तिः क्षीणशक्तिः नष्टसामर्थ्या विरतव्यापारा भवतीत्यर्थः। नाऽगृहीतविशेषणा बुद्धिः विशेष्ये चापजायते' इति न्यायात्, अगृहीतम् अविषयीकृतं विशेषणं ययेति व्युत्पत्त्या विशेषणाऽविषयिणी बुद्धिः, विशेष्ये च विशेष्यं प्रत्याय्य विरामादित तस्या विरम्य व्यापारासम्भवात्। 'सामान्यो नान्यथासिद्देर्विशेषं गमयन्ति हि' इति न्यायात्तात्पर्यशक्त्या सामान्यान्याधाराधेयभावेनावस्थितं परस्परान्वितत्वमात्रमेव बोध्यत इत्यपरा। भगीरथरथखातावच्छिन्नजलप्रवाहस्य च घोषाधिकरणत्वं न सम्भवतीति प्रमाणान्तरबाधितः सन् गङ्गाशब्दो हि तदधिकरणयोग्यं तीरं लक्षणया प्रत्यायतीति तृतीया। तत्र तावत् लक्षणा—मुख्यार्थबाधादित्रितयसन्निधावेव भवति। मुख्यार्थबाध्यश्चोक्तस्थले प्रत्यक्षादिप्रमाणन्तरगम्य एव। यश्चापि सामीप्यादिसम्बन्धः, सोऽपि प्रमाणान्तरबोध्य एव। परन्तु शैत्यपावनत्वाद्यतिशयबोधनेच्छयोच्चरितं यत्तत्पुनः शब्दान्तराप्रतिपाद्य प्रमाणान्तराज्ञातश्च कुत आगतम्?

न तावत्प्रत्यक्षगम्यः, अस्मादेव शब्दात्प्रतीत्यसिद्धेः शब्दार्थे च तस्याप्रवृत्तेः। नाप्यनुमानम् सामीप्येऽपि शैत्यपावनत्वादेरसम्भवेन हेतोराभासात्। तदनुभवाभावाच्च न स्मृतिः, सत्यामपि च तस्यां नियतस्मरणं न स्यात्। अस्मादेव च शब्दादेतदेववगम्यत इत्यत्र को हेतुः। तस्मादस्यैव शब्दस्य कश्चन विलक्षणव्यापारः स्वीकर्त्तव्यः, निर्व्यापारस्य शब्दस्यार्थप्रतीतिकारित्वाभावात्। स च तावन्नाभिधात्मा सङ्केताभावात्। न चापि तात्पर्यात्मा, तस्यान्वयबोधन एव क्षीणशक्तित्वात्। नापि लक्षणात्मा मुख्यार्थबाधादिरहितत्वात्। तस्मादभिधातात्पर्यलक्षणातिरिक्तः तुरीयकक्षास्थितो व्यङ्ग्यनिष्ठो व्यञ्जनाव्यापारः, व्यञ्जनध्वननगमनादिसोदरव्यपदेशनिरूपितोऽवश्यं स्वीकरणीय इति कारिकानिर्गलितोऽर्थ इत्यन्यत्र स्पष्टम्।

ननु शब्दवृत्तिसर्वशक्तिज्येष्ठाऽभिधैव तावद्भवदभिमतं व्यङ्ग्यार्थ जनयत्वित्याशङ्कां मनसि निधाय समाधत्ते—अभिधाया इति। सङ्केतितार्थमात्रस्य बोधने मात्रपदेन लक्ष्यादिविरतायाः क्षीणसामर्थ्यायाः विरतायाश्च पुनरुत्थानाभावादिति प्रागुक्तो हेतुरत्रवलोकनीयः। ननु सङ्केते कश्चन नियमाभावात् रसादिरपि सङ्केतित एव, तथा चाभिधयैव बोध्यतामत आह—न च सङ्केतित इति। 'शून्यं वासगृहम्' इत्यादौ शून्यादिपदानां शृङ्गारादिर्न च

सङ्केतित इत्यर्थः। तथा सति सङ्केतितार्थस्य सर्वदा बोधकत्वनियमात् 'शून्यं मण्डलम्' इत्यादावपि तत्प्रत्ययापत्तेः।

ननु 'देवदत्तं पश्य' इत्यादौ देवदत्तादिपदाभिधा तत्संज्ञकं मांसपिण्डं तथा तद्गतरूपादिकञ्च यथोपस्थापयति तथैव सीतादिपदानामभिधा सीताद्यालम्बनविभावादीनुपस्थापयन्ती अविनाभावद्वारा तद्विषयकश्रृङ्गारादीनपि कथन्नोपस्थायिष्यतीत्यत आह—नहीति विभावादेः अभिधानम् अभिधया बोधनमेव तदभिधानम् रसाद्यभिधानम् वाच्यमिति शेषः। विभावादेरेव रसरूपत्वस्वीकारादिति भावः। तस्य विभावाद्यभिधानस्य तदैकरूप्यानङ्गीकारात् आस्वादरूपरसादिप्रतीतितादात्म्यास्वीकारात्। तथा च विभायादयो ज्ञेयविशेषाः रसादश्चच ज्ञानविशेषा इत्यनयोभेदेन एकस्य प्रतिपादने अन्यस्य प्रतिपादनासम्भवात्। 'देवदत्तं पश्य' इत्यादौ तदीयरूपावगमस्तु तयोरभेदप्रतीतेरित्याशयः। एवञ्च विभावाद्यभिधानानन्तरं जायमानाया आस्वादरूपरसादिप्रतीतेः कारणतया व्यञ्जनावश्यकमङ्गीकरणीयेति भावः।

ननु—'तामुद्वीक्ष्य कुरङ्गाक्षीं रसो नः कोऽप्यजायत' इत्यादौ।

'शृङ्गारः सखि! मूर्तिमानिव मधौ मुग्धो हरिः क्रीडतिः॥ इत्यादौ च

रसादिपदेनैव रसाद्यभिधानतत्तत्प्रतीतिरिति यत्र सादृशपदं नास्ति तत्रापि तत्कल्पनया रसादिप्रतीतिर्जायतामाह आह—यत्र चेति। अपि चेति चार्थः। यत्र उक्तोदाहरणादौ स्वशब्देन रसश्रृङ्गारादिपदेन अभिधानम् अभिधया रसस्य प्रतिपादनम् तत्र स्थले स्वप्रकाशानन्दरूपत्वेन आस्वादरूपरसादेः प्रतीतिस्तु दूरे तिष्ठतु प्रत्युत वैपरीत्येन दोषा एवेत्येवकारेण आस्वादरूपरसप्रतीतिव्यवच्छेदः। वक्ष्यामः सप्तमपरिच्छेदे 'रसस्योक्तिः स्वशब्देन' इत्यनेन। 'तामुद्वीक्ष्य' इत्यादावपिं व्यञ्जनाद्वारेणैव श्रृङ्गारादिप्रतीतिः न तु श्रृङ्गारादिशब्देनेति भावः।

ननु रसस्य स्वशब्दाभिधानं काव्ये एव दोषो न तु लौकिकवाक्ये एवं च काव्यदोषवशात्तादृशी प्रतीतिर्मास्तु लौकिकवाक्ये तु स्यादेव, यद्वा तामुद्वीक्ष्येत्यत्रापि रसादिपदादेव तत्तद्रूसादिप्रतीतौ न किञ्चिद् बाधकमिति सन्दिहानानामन्वयव्यतिरेकव्यभिचार एव बाधक इति बोधयितुमाह—क्विच्चेति। क्वचित् श्रृङ्गारशून्ये 'श्रृङ्गाररसोऽयमेतेन प्रदर्शितः' इति लौकिकवाक्ये चेत्यर्थः। तत्प्रतीतिः रसप्रतीतिः, तस्य रसस्य। स्वप्रकाशानन्दरूपत्वादिति। स्वप्रकाशः स्वप्रकाशेनैव प्रकाशभानत्वम्, आनन्द आह्लादभिन्नत्वं तद्रूपत्वात् तन्मात्ररूपत्वादिति यावत्। अत्र चाभिधया जायमानस्य बोधस्य प्रकाशत्वाभावादानन्दरूपत्वाभावाच्च न रसस्वरूपत्वाङ्गीकारः। तथा चोक्तवाक्ये शृङ्गारशब्दसत्त्वेऽपि श्रृङ्गाररसानुभवाद्न्वयव्यभिचार एव तद्बोधने बाधकः। उपलक्षणञ्चैतत् 'शून्यं वासगृहम्' इत्यादौ श्रृङ्गारादिपदसत्त्वेऽपि स्वप्रकाशत्वेनानन्दरूपत्वेन चं तत्तद्रसानुभवाद्वतिरेकव्यभिचारोऽपि ज्ञातव्यः। ननु। शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तत्र सर्वत्रापि उपस्थितत्वाच्छब्द एव निमित्तं कल्प्यते 'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्त' इति न्यायात्। तथ च व्यङ्ग्यप्रतीतिनैमित्तिका निमित्तान्तरानुपलब्देः शब्द एव निमित्तामिति शब्दस्य पुनः पुनरनुसन्धानं कल्प्यते इति वाच्य इव व्यङ्ग्यार्थेऽपि न वृत्त्यन्तरकल्पनं किन्त्वभिधैव वृत्तिरिति चेत्? मैवम्, व्यङ्ग्योपस्थितौ शब्दस्य ज्ञापकत्वरूपनिमित्तत्वमस्माकमपि सम्मतम्। तत्र नास्माकं विवादः, परन्तु व्यञ्जनाया अस्वीकारे तन्न सम्भवति। शब्दस्यार्थनिमित्तत्वं हि व्यापारसापेक्षमेव नियतम् यथा वाच्यार्थलक्ष्यार्थयोरभिधालक्षणाव्यापारौ तथा इहापि कोऽपि व्यापारोऽवश्यमङ्गीकरणीयः, अन्यथा हि शब्दस्य निमित्तत्वनिश्चयेन नैमित्तिको व्यङ्ग्यार्थ इत्येव भवदभिमतोऽपि सिद्ध्यति, यदि तु व्यापारं विनापि शब्दस्य निमित्तत्वं स्यात्तदा अभिधालक्षणे अपि दत्तजलाञ्जली स्यातामित्यस्माभिरुच्यते इत्यभिप्रायमबुद्ध्वाभिधानविचारविजृम्भितमेव।

ननु रसादिर्नाभिधया बोध्यतां किन्तु भट्टमीमांससादिस्वीकृतया तात्पर्याख्यया वृत्त्यैव बोध्यतामिति कारिकोक्तक्रमेण तस्या अपि व्यङ्ग्यबोधनाक्षमत्वमुपपादयति—अभिहितान्वयेति। एतच्च वक्तृतपर्यविशेषरूपाया व्यञ्जनाया वारणाय। संसर्गमात्रे वाक्यघटक पदानां केवलं परस्परान्वयबोधजनने परिक्षीणा विगतसामर्थ्या सर्वतो भावेन क्षीणेति यावत्। तथा च तात्पर्याख्यावृत्तिरपि वाक्यघटकपदानां केवलं परस्परान्वयबोधं प्रतिपाद्यैव 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति न्यायेन अर्थान्तरप्रतिपादने विगतसामर्थ्या सती कथं व्यङ्ग्यार्थ प्रतिपादयेदिति भावः।

अथ उभयमतसिद्धवाच्यार्थस्य बोधिका शक्तिरूपा वृत्तिरेव व्यङ्ग्यबोधिकेति भट्टमतोपजीविनां भट्टोल्लटादीनां केषाञ्चिन्मतम्, यच्च तात्पर्यवृत्तिरेव व्यङ्ग्यबोधिकेति धनिकस्य मतन्तदुभयमपि दूषयितुमुत्थापयति—यच्च केचिदिति। इषोर्बाणस्येव स प्रसिद्धोऽयमभिधाया व्यापारः यत्कार्यं दीर्घदीर्घतरोऽतीव यथेष्टं प्रसरणशीलः। अयम्भावः—यथा बलवता प्रेतिरत एक एवेषुरेकनैव वेगाख्येन व्यापारेण रिपोर्वर्मच्छेदं मर्मभेदं प्राणहरणञ्च विधत्ते, तथा सुकविप्रयुक्तः एक एव शब्दः एकेनैवाभिधाख्यव्यापारेण पदार्थोपस्थित्तिमन्वयबोधं च व्यङ्ग्यार्थप्रतीतिं च विधत्ते (जनयति) अतो व्यङ्ग्यत्वाभिमतस्यार्थस्य वाच्यत्वमेव इति। न चैकार्थप्रतीतौ शब्दस्य विराम इति वाच्यम्, विवक्षितार्थप्रतीत्युत्तरमेव विरामाभ्युपगमात्।

यच्च धनिकेनेति—तात्पर्याव्यतिरेकादिति। धनिको दशरूपककर्त्ता तात्पर्यस्य स्वाभिमततात्पर्यरूपवृत्तेः अव्यतिरेकात् भेदाभावात् हेतोः शब्दादेर्व्यञ्जकत्वस्य व्यञ्जनानामकाभिनववृत्तेः प्रतिपाद्यो न ध्वनिः। एवञ्च व्यञ्जनानामकाभिनववृत्तेस्मदधिमततात्पर्यवृत्त्यन्तर्गतत्वात् तात्पर्यवृत्तिप्रतिपाद्य एव ध्वनिः। तथा च व्यञ्जनानामवृत्त्यन्तरं गौरवादस्माभिर्न स्वीक्रियत इति भावः। ननु भवदभिलषिततात्पर्याख्यावृत्तिः पदानां संसर्गमात्रबोधनेनोपक्षीणा कथं व्यङ्ग्यार्थान् बोधयेत्, अतिरिक्तस्वरूपा च व्यञ्जना कथं वा तदन्तर्भवेदित्यत आह—यावदिति। यावन्ति कार्याणि अर्थबोधनव्यापाराः तावन्त्येव प्रसरति व्याप्रियत इति स तस्य भावस्तस्मात्तादृशात् आवश्यकतानुरूपव्याप्तिस्वीकारादित्यर्थः, तात्पर्य तदाख्यावृत्तिः संसर्गव्यङ्ग्ययोर्बोधकत्वान्न तुलाधृतम् संसर्गमात्रबोध कत्वेन न नियन्त्रितमित्यर्थः। अस्मन्मते तात्पर्यवृत्तेः सीमा तु निर्धारितो न भवति अतोऽधिकं व्यङ्ग्यादिकमपि बोधयतीति भावः।

तथा च भट्टमतोपजीविमतानुयायिधनिको हि 'यत्परः शब्दः स शब्दार्थ' इति न्यायोक्तदिशा यं यमर्थ बोधयितुं प्रवृत्तः स शब्दः सर्वोऽपि शाब्दः तत्त्वञ्च तात्पर्यम्। एवञ्च शब्दसम्बन्ध्यर्थस्वरूपत्वं तात्पर्यमिति फलितम्। अथ तात्पर्यस्य दीर्घशरीरत्वाद् व्यञ्जकसम्बन्धित्वमपि तदभिन्नम्, व्यञ्जकसम्बन्धी च व्यङ्ग्य एवार्थः, तदेवं वाच्य इव व्यङ्ग्यः, द्वयोरप्येतयोः शाब्दत्वात्, तात्पर्यञ्च यावत्कार्यं प्रसरणशीलमिति न परिमेयपरिच्छिन्नत्वमनवच्छेद्यत्वात्' इति।

तयोरुपरीति। इषुव्यापारवादितात्पर्यवादिनोरूपरीत्यर्थः। शब्दबुद्धिकर्मणामिति। वाचकस्य लाक्षणिकस्य वा शब्दस्य अभिधया लक्षणया वा सकृच्छाब्दबोधमुत्पाद्य पुनरभिधया लक्षणया वार्थान्तरबोधने सामर्थ्याभावादित्यर्थः। वादिभिरेव अभिहितान्वयवादि भिरित्यर्थः। दण्डः पातनीयःदोषः प्रदर्शनीयः। तथा चाभिधा सङ्केतितार्थमात्रं जनयित्वा विगतसामर्थ्या सती कथं व्यङ्ग्यार्थमुत्पादयेत्? तात्पर्यवृत्तिरपि वाक्यघटकपदानां संसर्गमात्रं जनयित्वैव नष्टसामर्थ्या सती कथं व्यङ्ग्यार्थमप्युत्पादयेत्? तयोस्तत्तन्मात्रार्थनियन्त्रितत्वादित्याशयः।

ननु 'शब्दबुद्धिकर्मणां विरस्य व्यापाराभाव:' अयं न्यायो न राजाज्ञाप्रतिपादक: येन सर्वैरभ्युपेतव्य: स्यात् किन्तु कस्यचिन्मीमांसकमतमात्रपरस्तथा चाप्रामाणिक एव न वयमङ्गीकुर्म इत्यत आह—एवञ्चेति। यदि न्यायमेन तिरस्कृत्य शब्दश्रुतेरनन्तरं यावानार्थो लभ्यते तावति शब्दस्य तात्पर्याभिधान्यतरव्यापारेणैव व्यङ्ग्यार्थावबोधाऽभ्युपगमे चेत्यर्थ:। उपास्या लक्ष्यार्थबोधाय आश्रयणीया, तदर्थबोधसिद्धे: लक्ष्यार्थज्ञानसिद्धे:। लक्षणाजन्यबोधानन्तरमपि व्यङ्ग्यबोधायाभिधासत्त्वाङ्गीकारे लक्षणासत्त्वाङ्गीकारस्य निष्प्रयोजनत्वादिति भाव:।

ननु लक्षणापि नाङ्गीकार्यैवेतीष्टापत्तौ दोषान्तरं प्रदर्शयति—किमिति चेति। न वाच्यत्वमित्यत्र सम्बन्ध:। प्रोषितेन ब्राह्मणेन पृष्टो देशादागतो विप्रो गृहवार्तां कथयति—ब्राह्मणेति। कन्या अप्राप्तगर्भधारणसमया दुहिता, तथाचाहुर्देवलात्रिंकश्यपा:—

**'पितुर्गेहे तु या कन्या रज: पश्यत्यसंस्कृता।**

**भ्रूणहत्या पितुस्तस्या: सा कन्या वृषली स्मृता॥' इति।**

तथा च 'पुत्रस्ते जात:' इति पुत्रोत्पत्तिवाक्यश्रवणानन्तरं प्रोषितस्य ब्राह्मणस्य मुखप्रफुल्लतादिदर्शनेन हर्ष:। 'कन्या ते गर्भिणी' इति वाक्यश्रवणानन्तरम् अविवाहिताया: कन्याया: व्यभिचारबोधकत्वेन शोक:, ततश्च तच्छब्दीयदीर्घदीर्घतराभिधयैव तत्तद्रबोधसम्भवेन किमिति न वाच्यत्वम् अभिधया बोध्यत्वं स्यात्? वाक्येन तदर्थप्रतीतिद्वारा हर्षशोकादय उत्पद्यन्ते न तु तत्प्रतीति:, हर्षशोकादिप्रतीतिस्तु हर्षशोकादिलिङ्गैर्मुखप्रसादमालिन्यादिभिरनुमानात्प्रत्याय्यते 'अनन्यलभ्यो हि शब्दार्थ:' इति न्यायेनानन्यलभ्येऽर्थेऽभिधाकल्पनमिति सिद्धान्त:। अनुमानाकारस्तु—ब्राह्मण: सुखवान् मुखप्रसन्नयुक्तत्वात्, ब्राह्मणो दु:खवान् मुखमालिन्ययुक्तत्वादिति। अभिधयैवात्र निर्वाह इत्युच्यते तदा शाब्दबोधानां विनियमापत्ति:। प्राचीनानामभिधादिलक्षणानामुच्छेदापत्तिश्च स्यादिति भाव:।

ननु 'गङ्गायां घोष' इत्यादौ गङ्गाद्यर्थप्रतिपादनद्वारा तीरादिप्रतिपादनस्यापि अभिधयैव सम्भवान्नास्मन्मते लक्षणा नामातिरिक्तावृत्तिरिति लक्षणोच्छेदो न दूषणमिति चेत्? मैवम्, एवं सति किमर्थं मीमांसादर्शने भगवता जैमिनिना श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्—' ३/३/७ इतिसूत्रेण यथाक्रममुक्तानां श्रुत्यादीनामेकत्रोपनिपाते परपरस्य विलम्बेनार्थोपस्थापकतया दुर्बलत्वमभिधया श्रुत्यादिषु पूर्वपूर्वबलीयस्त्वं निरणायि। यदि शब्दश्रवणानन्तरं यावानर्थ: प्रतीयते तावति शब्दस्याभिधैव व्यापार: स्यात् तदा श्रुत्युपस्थापितार्थस्येव लिङ्गाद्यनुगृहीतार्थानामनिभिधेयतया सर्वेषां समकालमर्थोपस्थापकत्वप्रसक्त्या अर्थविप्रकर्षाभिधानं मुनेरनुचितं स्यात्।

आद्य इति। आद्ये अभिहितान्वयादिस्वीकृतैव तात्पर्याख्यावृत्तिरिति कल्पे। दत्तमेवोत्तरम् 'तात्पर्याख्यावृत्तिरपि संसर्गमात्रे परिक्षीणा न व्यङ्ग्यबोधिनी' इत्यनेनोत्तरं कृतमेवेत्यर्थ:। 'तात्पर्याख्यां वृत्तिमाहु:' इत्यादिना संसर्गमात्र एव तैस्तात्पर्याख्यवृत्त्यभ्युपगम: स्वीक्रियत इति प्रागेव निरूपितम्।

द्वितीये तात्पर्यातिरिक्तव्यङ्ग्यार्थबोधनोपयोगिनी प्रकारान्तरैव तात्पर्यायख्यावृत्तिरिति कल्पे। तन्मतेऽपि अभिहितान्वयवादिमतेऽपि रसादिबोधनस्यानपलपनीयत्वात् तात्पर्यस्य पदार्थान्वयबोधने परिक्षीणत्वात् तुरीयवृत्तिसिद्धिगेले आपतत्येव केवलनामविषय एवावयोर्मतभेद:। तन्न, व्यङ्ग्यबोधाय तुरीयवृत्तिसिद्धिर्गले आपतत्येव केवलनामविषय एवावयोर्मतभेद:। तन्न, व्यङ्ग्यबोधाय तुरीयतात्पर्याख्यवृत्तिकल्पनापेक्षया

तदर्थबोधिकाया वृत्तेर्व्यञ्जनानाम्न्या एव युक्तत्वादस्मन्मतमेव नितरां श्रेय इति भवताऽपि तदेवाङ्गीककरणीयमिति भावः।

नन्वतिरिक्तपदार्थरूपा तात्पर्याख्या तुरीया वृत्तिर्नाभ्युपेयते किन्तु 'शब्दबुद्धिकर्मणाम्' इत्यादिनियमेन विभावादिसंसर्गबोध-रसादिबोधयोः क्रमिकत्वाऽभ्युपगम एव तात्पर्यवृत्त्या पदार्थानामन्वयं बोधयित्वा क्षीणशक्तिकतया रसादीनां बोधो न स्यादिति दूषणस्याभिहितत्वात्, विभावादिसंसर्गबोधयोः यौगपद्यमेवाभ्युपेयत इत्यत आह—नन्विति। तात्पर्यशक्त्या तात्पर्यरूपया वृत्त्या विभावादिसंसर्गस्य विभावादिषु कारणतासम्बन्धस्य। प्रकाशनं बोधनम्, प्रकाशनमित्यस्यानन्तरम् 'तथा सति विरम्य व्यापारो न भविष्यति' इति शेषः। तयोः विभावादिसंसर्गबोधरसादिबोधयोः हेतुफलभावाङ्गीकारात् कार्यकारणत्वस्वीकारात्। तथा हि विभावादिससंर्गः कारणम्, रसादि कार्यम्, परं तयोर्यौगपद्ये तु कार्यकारणभावो न सम्भवति, अनन्यथासिद्धनियतपूर्ववर्तित्वं कारणत्वम्, नियतपश्चाद्भावित्वं कार्यत्वमिति तल्लक्षणात् एवञ्च कार्यकारणलक्षणस्य तत्राव्याप्तिरिति भावः। न च 'यस्मादोष समूहालम्बनात्मकस्तस्मान्न कार्यः' इत्येकातमकत्वं रसस्याकार्यत्वञ्च प्रागुक्तमिति तेन सह विरोध इति वाच्यम्, विभावादिसंसर्गबोधरसादिबोधयोः कारणकार्ययोरत्यन्तसमीपतया पौर्वापर्यस्य लक्षयितुमशक्यत्वमित्यभिप्रायेण तथोक्तत्वात्।

विभावादिसंसर्गबोधरसादिबोधयोर्हेतुफलभावे ऋषिवचनं प्रमाणयति—यदाहेति। मतान्तरप्रदर्शनपूर्वकं प्रागेव (९० पृ.) व्याख्यातमिदम्।

ननु सहोत्पन्नयोरपि तयोर्हेतुफलभाव आस्तामत आह—सह भावे चेति। युगपदुत्पत्तिस्वीकारे चेत्यर्थः। सव्येतरविषाणयोः गवादीनां वामदक्षिणशृङ्गयोरिव तयोर्विभावादिबोधरसादिबोधयोः कुतः कार्यकारणभावः कथमपि नेत्यर्थः। पौर्वापर्येति कार्यस्य नियतपूर्ववतितया कार्यस्य नियतपश्चाद्भावितया व्यस्ययापत्तेरित्यर्थः।

## रुचिरा

**निधानं भव्यानां, धृततनु च भव्यं विभाविनां, फलं भूयस्तेषां सुकृतविभावानां समुदितम्।**

**फलस्याप्याधानं, परममनघं तस्य च पदं, निरस्तानर्थौघं मम शरणमेकं भवतु तत्॥ १॥**

ननु काव्यस्य रसात्मकत्वमभिहितं, रसश्च व्यङ्ग्यं वस्तु तदिति तदेव काव्यस्य व्यपदेशबीजं, तस्य पुनर्व्यञ्जनया बोध्यत्वं सहृदयसाक्षिकमेव, अथैवं व्यञ्जनाया अप्रामाणिकत्वेऽसिद्धत्वे च तत् सर्वमप्रामाणिकमसिद्धं च स्वत एव स्यादित्यवश्यं तत्र प्रमाणमुन्नेयं, तत्सिद्धिश्च युक्तिःपुरः सरमवस्थाप्येति मन्वानः पञ्चमपरिच्छेदरूपस्यास्य प्रकरणान्तरस्यावतरणिकाभूतामाशङ्कामुपन्यस्यति-**अथे**त्यादिना।

**अथ** रसात्मकवाक्यस्वरूपस्य काव्यस्य भेदनिरूपणानन्तरमित्यर्थः। **इयं** सहृदयानामनुभवास्पदत्वेन साक्षादिव सन्निकृष्टाया निर्देष्टुं शक्येत्यर्थः। **अभिनवा** नूतना। अनादरणीयेति भावः। नवीनैरेव कैश्चिदुद्घोष्यमाणा न तु वस्तुयाथात्म्यविद्भिर्नैयायिकैरत एव नूतना क्षोदक्षमत्वशून्यत्वेन वस्तुतयाऽनङ्गीकार्येति निष्कर्षः। **व्यञ्जना** व्यज्यते न त्वभिधीयते लक्ष्यते वा रसादिरनयेति। **नाम** प्रसिद्धा। **का** किम्प्रमाणा किंस्वरूपा चेत्यर्थः। **वृत्तिः**। 'अस्ती'ति शेषः। **इति**। सिंहावलोकनन्यायेनेति शेषः। (इत्येवं सिंहावलोकनन्यायमनुसन्दधानेन ग्रन्थकृतेति निष्कृष्टोऽर्थः)। **उच्यते**। प्रमाणोपन्यासपुरः सरं तस्याः स्वरूपं निरूप्यते—२९८ **वृत्तीना**मित्यादिना।

अत्रेदमभिव्यज्यते—यत्सद्भावे एव सन्देहः कथं साक्षात्तदभिधानं सङ्गच्छेत ? इदमाऽभिधानं च दृश्यमानस्य, निश्चितत्वेनादृश्यमानस्यापि, दृश्यमानस्येवाभिधेयस्य वाः अन्यथा तद्वतां भ्रममूलं, तथाऽभिधानं वा वञ्चनमात्रम्। प्रकृते च व्यञ्जना येषामज्ञातरूपाकथं ते 'केय'मित्याशङ्कितुं शक्ताः। तदिति तेषां तथाऽऽशङ्कनं भ्रमास्पदत्वं वा वञ्चनमात्रत्वं वाऽऽह—अथेत्यादि। ननु 'विरतास्वभिधाऽऽद्यास्वि'त्यादिना व्यञ्जनायास्तावन्निरूपितमेव स्वरूप(लक्षण)म्, उपन्यस्तं च तत्र 'व्यञ्जनध्वननावगमनप्रत्यायनादिव्यपदेशविषये'त्यनेन प्रमामम्। अथ कथमाशङ्क्यते—अथेत्यादिनेति चेत्? दृढप्रत्ययप्रतिपत्तये प्रमाणान्तरोपन्यासार्थ चेति गृहणेति बोध्यम्।

२९८ **अभिधातातपर्य्यलक्षमाऽऽख्यान**मभिधाऽख्यायास्तात्पर्याख्याया लक्षणाख्यायाश्चेत्यर्थः। 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते'इति नयेनाभिधाऽऽदिभिः प्रत्येकं सम्बन्धः। तात्पर्यस्यान्तर्निवेशश्च वृत्त्यन्तरोपयोगित्वानुकूलत्वोपलक्षणार्थम्। **वृत्तीनां** शब्दार्थयोर्व्यापारभूतानाम्। **विश्रान्ते**र्विश्रामात्तदन्तरम्। स्वस्वव्यापारमुद्भाव्य विरतत्वात्। विरतत्वं च व्यापारान्तरमुद्भावयितुमशक्तवम्। 'अपादाने पञ्चमी।' २/३/२८ इति पञ्चमी। **रसादीनां** रसभावतदाभासादिवस्त्वलङ्काराणाम्। **बोधे** बोधनिमित्तं बोधविषये वेत्यर्थः। **तुर्य्या** चतुर्था अभिधातात्पर्यलक्षणाख्याभ्यो वृत्तिभ्यो विलक्षणेति यावत्। 'चतुरश्छयतावाद्यक्षरलोपश्च' इति चतुरश्चलोपो यत्प्रत्ययश्च। **वृत्तिः**। 'व्यञ्जने'ति शेषः। **अङ्गीकार्या**। 'आलङ्कारिकै'रिति शेषः ॥ २९३ ॥

अत्राहुष्टिप्पणीकाराः—'अत्रेदं तत्त्वम्—"गङ्गायां घोषः। इत्यत्र 'गङ्गाशब्दो' 'घोष' शब्दश्च सामान्यात्मके जल प्रवाहे आभीरगृहनिकुरम्बे च सङ्केतितौ। सामान्ये एवोद्योगात्। विशेषस्य हि सङ्केतकरणे आनन्त्यं व्यभिचारश्च स्यात्। ततश्च अभिधया जलप्रवाहमात्रं तद्वहनिकुरम्बमात्रं च प्रतीतमिति प्रथमा कक्ष्या। एतत्प्रतिपाद्यान्यप्रतिपादनायाप्यभिधा न समर्था। 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे।' इति नयेन "अभिधाशक्तिर्विशेष्य व्यक्ति रूपंधर्मिणं न गच्छेन्न यायात्। यतो विशेषणे जातिरूपे उपाधौ क्षीणशक्तिर्विरतव्यापारा। 'नागृहीतविशेषणा बुद्धिर्विशेष्ये चोपजायते।' इति न्यायेन विशेषणं प्रत्याय्य विरामात्॥" इत्यर्थकेन तस्याः विरम्य व्यापारासम्भवात्। 'सामान्यान्यन्यथासिद्धेर्विशेष्यं गमयन्ति हि।' इति न्यायात्तात्पर्यशक्त्या सामान्यान्याधाराधेयभावेनावस्थितं विशिष्टं गङ्गाघोषाद्यागूरयन्ति इति तात्पर्येण परस्परान्वितत्वमात्रमेव प्रतीयत इति द्विविधा। जलप्रवाहस्य च घोषाधिकरणत्वमयुक्तमिति प्रमाणन्तरबाधितः सन् गङ्गाशब्दस्तदधिकरणयोग्यं तीरं लक्षयतीति तृतीया। तत्र तावत् 'मुख्यार्थबाधे तद्युक्तो ययाऽन्योऽर्थः प्रतीयते। रूढेः प्रयोजनाद् वाऽपी'ति नीत्या लक्षणा तत्रितयसन्निधावेव भवति। तत्र मुख्यार्थबाधा तावत् प्रत्यक्षादिप्रमाणान्तरमूला। यश्च सामीप्यादिसम्बन्धः स च प्रमाणान्तरावगम्य एव। यत् पुनरिदं तीरस्य शैत्यपावनत्वादिलक्षणं प्रयोजनं प्रतीयते तत् शब्दान्तरानुक्तं प्रमाणान्तराप्रतिपन्नं च कुत आगतम्। न तावत प्रत्यक्षदेततप्रतीतिः। अस्मादेव शब्दादवगमसिद्धेः, शब्दार्थे च तस्याप्रवृत्तेः। नाप्यनुमानात्। सामीप्येऽपि शैत्यपावनत्वादेरसम्भवादनैकान्तिकत्वात्। न च स्मृतिः। तदनुभवाभावात्। सत्यमपि तस्यां नियतस्मरणं न स्यात्। अस्मादेव च शब्दादेतदेव बुध्यत इति को हेतुः। तस्मादस्यैव शब्दस्यैष व्यापारोऽभ्युपगन्तव्यः। निर्व्यापारस्यार्थप्रतीतिकारित्वाभावात्। स तावन्नाभिधात्मा समयाभावात्। न तात्पर्यात्मा, तस्यान्वयप्रतीतावेव परिक्षयात्। न लक्षणात्मा मुख्यार्थबाधाद्यभावात्। तस्मादभिधातात्पर्य्यलक्षणाव्यतिरिक्तश्चतुर्थकक्ष्यानिक्षिप्तो व्यङ्ग्यनिष्ठो व्यञ्जनाव्यापारो व्यञ्जनद्योतनादिसोदरव्यपदेशनिरूपितोऽभ्युपगन्तव्य इति निष्कर्षः।" इति।'

अथ कारिकोक्तं विवृणेति-**अभिधाया** इत्यादिना।

**सङ्केतितार्थमात्रबोधनविरतायाः** सङ्केतो जातोऽस्येति सङ्केतितः कृतसङ्केत इति यावत्, सोसावर्थ इति, स एवेति सङ्केतितार्थमात्रं, तस्य बोधनं ज्ञापनं तस्माद्विरता विरतव्यापारा तस्याः मात्रपदेन लक्ष्यादेर्व्यवच्छेदः। **अभिधायास्तदगाख्याया** वृत्तेः। **वस्त्वलङ्कारसादिव्यङ्ग्यबोधने** वस्त्वलङअकाररसादयो येये व्यङ्ग्या व्यञ्जनामात्रगम्यास्तेषां बोधने ज्ञापनविषये। अत्रादिपदं रसाभासभावभावाभासादिग्राहकम्। **न** नैव। **क्षमत्वं** सामर्थ्यम्। 'अस्ती'ति शेषः। अभिधया सङ्केतितरूपो वाच्योऽर्थ एव, न तु लक्ष्यादिरूपोऽपि बोध्यते; सङ्केतितार्थबोधनान्तरमेव तद्विरामात्। विरतायाश्च तस्या निरुक्तदिशा पुनरुत्थानासम्भवाद् रसवस्त्वलङ्कारादिबोधो व्यञ्जनयैवैकया वृत्त्या न पुनरभिधयाऽपि शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभावः।' इति सिद्धान्तात्। ननु यद्यभिधया सङ्केतित एवार्थो बोध्यते? तर्हि रसादिरपि सङ्केतितार्थस्वरूपः किं न स्यादित्याह—**रसादिः। च** पुनः। **न** नैव। **सङ्केतितः**। सङ्केतितार्थरूपः। यदसातभिधया बोधितः स्यात्। 'स्वव्यञ्जकपदसङ्केत्ताभाववत्त्वादिति' शेषः। एवं च—रसादेः रसादिपदसङ्केतितत्वेऽपि न क्षतिरिति भावः। 'अस्ती'ति शेषः। **हि** यतः कारणात्। **विभावाद्यभिधानं** विभावानुभावादेरभिधानम्। **एव। तदभिधानं** तस्य रसादेरभिधानम्। **न**। नैव। 'अस्ती'ति शेषः। विभावादेः रसादिरूपत्वादिति भावः। तदेवोपपादयति—**तस्य** विभावादेः। तदैकरूप्यानङ्गीकारात्तस्य रसादेरैकरूप्यमेकरूपत्वमभिन्नस्वरूपत्वमिति यावत्तस्यानङ्गीकारः स्वीकाराभावस्तस्मात्। 'आस्वादरूपरसादिप्रतीतितादात्म्येनैवं विभावादेरङ्गीकाराच्चे'ति शेषः। विभावाद्यभिधानस्य रसाद्यभिधानस्य च भिन्नत्वाद् विभावादेरेव रसादिस्वरूपत्वाङ्गीकाराच्च। तस्य चास्वादानतिरिक्तत्वात् कथं भवेद् रसादिः सङ्केतित इति भावः। सङ्केतस्तस्यैव भवेद् यस्य स्वरूपं निर्देष्टुं शक्यते। विभावाद्यभिधानेन विभावादिस्वरूपस्य निर्दिष्टतया च न रसाद्यभिधानं, न वा रसादिस्वरूपस्य निर्देशः सम्पद्यते। वस्तुतस्तु विभावादिरेव रसादिःसोऽसावास्वादानतिरिक्तभूतः। तत्तश्चास्वादस्वरूपाया रसादिप्रतीतेस्तादात्म्यमेव विभावादेः। तदेवं नात्रभिधायाः सञ्चारः। तदभावे च व्यञ्जनैव आस्वादस्वरूपाया रसादिप्रतीतेः कारणतयाऽभ्युपगन्तव्या। ननु 'देवदत्तोऽय' मित्यादिना देवदत्तदोरेव 'रसोऽय' मित्यादिना रसादेरभिधाने प्रत्यक्षसिद्धमिति कुतो न अभिधाया अत्र स्वीकारः कुतो वा वृत्त्यन्तारन्वेषणप्रयासः?

इत्याशङ्क्य परिहरति-**रसादिशब्देन** रसादिः रसभावतदाभासादिस्तस्य शब्दो वाचकस्तेन **च। शृङ्गारादिशब्देन** शृङ्गारादिवाचकशब्देन। 'रसादे'रिति शेषः। **वा अभिधेयत्वं** वाच्यत्वम् **न** नैव। 'सम्भवती'ति शेषः। **तस्य** रसादेः। **तदन्वयव्यतिरेकानु**विधानात्तस्य रसादिशब्देन शृङ्गारादिशब्देन वा यद् रसादेर्वाच्यत्वं तस्यान्वयव्यतिरेकौ तदनुविधानात्तदनुविधानापत्तेः। यदि रसादिशब्दद्वारा रसादेर्वाच्यत्वं स्यात् तर्हि 'रसोऽयं' 'शृङ्गारोऽय' मित्यादिशब्देनैव रसादिष्यवतिष्ठेत न च तथेति भावः। (**किञ्च** किन्तु)। **यत्र**। 'तामुद्वीक्ष्य कुरङ्गाक्षीं रसो नः कोऽप्यजायत।' इत्यादाविति शेषः। (**च** पुनः।) **स्वशब्देन** स्वं रसादिस्तस्य शब्दो वाचकस्तेन। 'रसोऽय'मिति शब्देन शृङ्गारोऽय' मित्यादिशब्देन वेति यावत्। **अभिधानं** प्रतिपादनम्। 'रसादे'रिति शेषः। तत्र तादृशे स्थले। 'तामुद्वीक्ष्ये'त्यादाविति यावत्। **प्रत्युत** (चमत्कारसद्भआवो दूरमास्ताम्।) दोषः सतोऽपि चमत्कारप्रत्ययस्य तिरोधाता। **एव** निश्चितः। **इति। वक्ष्यामः** कथयिष्यामः। 'रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि।' इत्यादिनेति शेषः। ननु रसादेः स्वशब्देनाभिधानं काव्ये एव दुष्टं न तु लौकिकेऽपि वाक्ये, इति यत्रयत्र (काव्ये) दुष्टत्वं, तत्रतत्र मा भूतादृशी प्रतीतिः किन्त्वन्यत्र स्यान्नामेति चेन्नेत्याह—**क्वचिद**लौकिकवाक्यस्वरूपकाव्यातिरिक्ते लौकिके' वाक्ये इत्यर्थः। **च। 'शृङ्गारः। अयम्।' इत्यादौ स्वशब्देन अभिधाने** 'सति' ति शेषः। **अपि** 'किं पुनरसती' शेषः। **तत्प्रतीतिस्तस्य** रसादेः प्रतीतिरित्यर्थः। **न** नैव सम्भवति। **तस्य** रसादेः। **स्वप्रकाशानन्दरूपत्वात्** स्वप्रकाशः स्वप्रकाशेनैव प्रकाशमानत्वम्, आनन्द आह्लादाभिन्नत्वं तद्रूपत्वात्तन्मात्रस्वरूपत्वादिति

यावत्। 'रसोऽयं' 'श्रृङ्गारोऽय' मित्येवमभिधीयमानत्वेऽपि तस्य रसादेः स्वप्रकाशानन्दरूपतया न तथा प्रतीतिः सम्भवति। स्वप्रकाशानन्दस्याभिधेयत्वासम्भवान्मूकानुभूतास्वादायमानत्वाच्च तस्य न रसादेर्वाच्यत्वम्, किन्तु तेन वाचकेन प्रतीतेस्तिरोभाव इति भावः। अत्रेदं तत्त्वम्—'लौलिकोप्यास्वादप्रत्ययो न वाच्यः, तस्य रसनामात्रग्राह्यत्वात्। कुतः पुनरलौकिकः। तथा हि—न रसादिर्वाच्यः, तस्य सहृदयहृदयमात्रसाक्षिकास्वादानुभवातिरिक्तस्वरूपत्वाभावात्, तदभिधानं प्रत्युत तद्रयाथात्म्यापह्नवनार्थमिति तद्रदोष एवेति निर्विवादम्। रसादिमनुभवन् 'ब्रह्मविद् ब्रह्मैव भवति' 'अविज्ञातं विजानता' मित्यादिश्रुत्युक्तदिशा रसादिस्वरूप एव भवति, ज्ञातृज्ञानज्ञेयाभावात्; न च ततस्तदभिधानं शक्यते तुच्छत्वपरिमेयत्वस्वव्यतिरिच्यमानत्वाद्यापत्तेः। न हि रसादिस्तुच्छोपरिच्छिन्नत्वात्, न च परिमेयोखण्डत्वात्, न वा स्वस्माद् व्यतिरिच्यमानः प्रतीत्यन्तरानुभवस्य सहृदयहृदयासाक्षिकत्वात्। व्यतिरिच्यमानश्च तदनुभवादपि व्यतिरिच्यते एव, तस्यानुभवमात्रस्वरूपस्यानिर्वचनीयत्वेन वचनीयत्वानुपपत्तेः। अनिर्वचनीयत्वं च मूकानुभूतास्वादायमानत्वम्।

विगलितविभावादिपार्थक्यप्रतीत्यभिन्ना च रसादिप्रतीतिरिति व्यञ्जनैकगम्यत्वं रसादेः, इति स्थितम्। ननु माभूदभिधा रसादिव्यङ्ग्यबोधनक्षमा, किन्तु तात्पर्याभिधेया वृत्तिरपि कुतो न? रसादेर्व्यङ्ग्यत्वाद् व्यङ्ग्यस्य च तात्पर्य्यातिरिक्तत्वात्। इति चेन्नेत्याह-**अभिहितान्वयवादिभिः** सर्वेषामेव कथितानां पदानां परस्परं सम्बन्धो योग्यत्वसाकाङ्क्षत्वादिना स्वत एव भवतीति कथयद्भिरित्यर्थः। 'नैयायिकै'रिति शेषः। **अङ्गीकृता। तात्पर्याख्या** तात्पर्यमित्याख्या यस्याः सा। **वृत्तिः। अपि।** किं पुनरभिधा, अस्याः प्रथममेव क्षीणत्वात्। **संसर्गमात्रे।** संसर्गो योग्यतादिवशात्पदानामेकार्थोपस्थापनार्थोऽन्वयापरपर्य्यायः परस्पर, पार्थक्यमपहाय 'खले कपोत' न्यायेन युगपदेकत्र सम्बन्धविशेषः स एव संसर्गमात्रं तस्मिंस्तथोक्ते। **परिक्षीणा** सर्वतो भावेन क्षीणा। अत एव-**न** नैव। **व्यङ्ग्यबोधिनी** व्यङ्ग्यस्य बोधिका। 'सम्भवती'ति शेषः। व्यङ्ग्यस्य तात्पर्यादतिरिच्यमानत्वात्तात्पर्यस्य च व्यङ्ग्यापेक्षया जघन्यत्वात्पर्यमात्रमुद्बोध्य परिक्षीयमाणया वृत्तेर्व्यङ्ग्यं पुनरुद्बोधयितुमक्षमत्वमिति भावः। व्यङ्ग्यस्य तात्पर्यादतिरिच्यमानत्वं तात्पर्यस्य च व्यङ्ग्यापेक्षया जघन्यत्वं, व्यङ्ग्यस्य तात्पर्योद्बोधोत्तरकाले समुद्भासमानत्वादवसेयम्। अभिधया हि पदानां तावन्मुख्योऽर्थ एवोपस्थाप्यते, तात्पर्यवृत्त्या पुनस्तदीयं तादृशं तात्पर्य्यमुपस्थाप्यते, तदनन्तरमपि कस्यापि सहृदयहृदयमात्रेमापरिमिततयाऽपरिच्छिन्नतयाऽखण्डतया च चमत्कुर्वतश्चमत्कारस्यावरणापसारणद्वारोपस्थापनार्थमवश्यमभ्युपेतव्यत्वं व्यञ्जनायाः, तथा च तादृशस्तथोद्बोधः स्फुट एव तात्पर्योत्तरभावीति न तिरोहितं प्रेक्षावताम्।

ननु किमिदमभिदीयते? शब्दश्रवणान्तरं जायमानस्यं सर्वस्याप्यर्थस्य शाब्दत्वात्, अभिधाया व्यापारस्य, बाणवेगस्येव दीर्घदीर्घतरत्वं स्वीकर्त्तुमुचितत्वात् इति चेन्नेत्याह—**यच्चे**त्यादिना।

**केचित्।** भट्टमतोपजीविनो लोल्लटप्रमुखा इत्यर्थः। भट्टश्च मीमांसाया आचार्यविशेषः। नामानिर्देशः पुनरेतन्मतस्य क्षोदाक्षमत्वसूचनार्थः। **च** तथा। '**इषोर्बाणस्य** बलीयसा प्रेरितस्येति शेषः। **इव। अभिधायास्त**न्नाग्न्याः वृत्तेः। **स** परैर्वृत्त्यन्तरस्य व्यापाररूपत्वेन स्वीक्रियमाणोऽपि य' इति भावः। **अयं** 'सर्व' इति शेषः। **व्यापारः। दीर्घदीर्घतरो**ऽतीव यथेष्टं प्रसरणशीलः।' **इतीत्येवम्। यत्। आहुः** कथयन्ति। **तथा** तथैव। **धनिकेन** तदाख्येन केनापि विदुषेत्यर्थः। 'ध्वनिकेने'ति पाठेऽपि 'तदाख्येन केनापि विदुषा' इत्येवार्थः। 'ध्वनिकारेणे'ति पाठस्वत्वपपाठः। स्वमतविरुद्धत्वापत्तेः। धनिकश्च'दशरूपक'कर्त्तेत्यपि न सम्यक्। दशरूपकेऽनुपलब्धेः। '**तात्पर्यव्यातिरेका**त्तात्पर्यस्यव्यातिरिको व्यतिरेकाभावस्तस्मात्। यदसत्त्वे यदसत्त्वं व्यतिरेकः। न व्यतिरेकोऽव्यतिरेकः। तात्पर्येण समंभेदाभावात् इति भावः।' 'यत्परः शब्दः स शब्दार्थः' इत्युक्तनयेन सर्वविधस्याप्य-

र्थस्य तात्पर्याव्यतिरेकित्वं च निर्बाधम्। **च**। **व्यञ्जकत्वस्य** व्यञ्जनोद्बोधकतायाः। व्यञ्जनोद्बोधकापरपर्यायो व्यञ्जकश्च क्वचिच्छब्दः क्वचिदर्थः क्वचित्पुनस्तदुभयमिति व्यञ्जकस्य तस्य शब्दाद्यन्यतमस्य यद् व्यञ्जनोद्बोधनसम्बन्धि सामर्थ्यं तस्येति भावः। **ध्वनिः**। इति व्यपदेश इति शेषः। **न** नैव। 'सङ्गच्छते' इति शेषः। एवं च तात्पर्य्यमेव सर्वोऽप्यर्थ इति न व्यञ्जकत्वस्य ध्वनिरिति व्यपदेशोपयोगित्वमावश्यकमिति निष्कृष्टम्। न चेदं (तात्पर्य) संसर्गमेव बोधयित्वा परिक्षीयते, तत् पुनः कथं व्यञ्जनोद्बोधकत्वोपयोगित्वमावहेदिति वाच्यमित्याह—**यावत्कार्यप्रसादित्वाद्** यावन्ति कार्याणि वाच्यादीनीति यावत्कार्याणि, तानि तेषु वा प्रसर्तुं शीलमस्यास्तीति तत्त्वात्। यद्वा-यावत्कार्यं यदवधि कार्यं तावत्प्रसरणशीलत्वादित्यर्थः। कार्यमवधीकृत्य वर्त्तमानं यावत्कार्यम्। 'यावदवधारणे।' २/१/८ इति समासः। **तात्पर्य**मभिप्रायो यत्परः शब्दस्तत्परत्वमिति यावत्। यादृशाभिप्रायको वक्ता भवति तादृशाभिप्रायक एव तस्य शब्द इति सर्वोऽप्यर्थः शाब्दः, स च तत्पर'इति तात्पर्यं शब्दसम्बन्धित्वं च न भिन्नार्थम्। इति बोध्यम्। **तुलाधृतं** तुलान्यां सादृश्ये तन्निश्चायके पात्रविशेषे वा धृतं निहितमित्यर्थः। **न** नैव। 'भवती' ति शेषः। एवं च—तात्पर्यं संसर्गमेव न बोधयति, यन्न व्यञ्जनाकार्यकारीति निष्कृष्टम्। **इतीत्येवम्**। **यत् उक्तं** प्रोक्तं प्रतिपादितमिति यावत्। इदमभिहितम् प्रबलेन वीरेण प्रेरितो यथा बाण एकेनैव स्वीयेनात्यन्तं दीर्घीयसा वेगेन व्यापारेण रिपोर्वर्म्म च्छित्त्वा, उरो भित्त्वा, जीवितं हरन् प्रसर्पति, तथा विविधाभिप्रायेण विचक्षणेन निवेदिताऽभिधाऽपि वृत्तिरेकेनैव स्वीयेन तत्तत्पदार्थोपस्थाप्यतकत्वरूपेण व्यापारेण तत्तत्पदार्थस्यार्थमुपस्थाप्य, वाक्यार्थमनुभाव्य रसादेश्चमत्कारं च सम्भाव्य विजयते इति ये केऽपि यया कयाप्यन्ययाऽपि वृत्त्या यस्य यस्यार्थजातस्योपस्थिति कल्पयन्ति स सर्वोऽप्यर्थस्तन्मतेऽभिधयैवैकया वृत्त्योपस्थाप्यः, तस्य सर्वस्यैव तयैवोपस्ताप्यत्वात्; इत्येकयाऽभिधयैव वृत्त्या निर्वाहे वृत्त्यन्तरकल्पनाया अन्याय्यत्वमिति यदेकेषां भट्टमतोपजीविनां मतम्, धनिकस्य पुनस्तन्मतानुमन्तृणां वा 'यत्परः शब्दः स शब्दार्थः' इति न्यायोक्तदिशा यंयमर्थं समवगमयितुं प्रवृत्तः शब्दः स सर्वोऽपि शाब्दः, तत्त्वं च तात्पर्यम। एवं च शब्दसम्बन्ध्यर्थस्वरूपत्वं तात्पर्यमिति फलितम्। अथ तात्पर्यस्य महाकायत्वाद् व्यञ्जकसम्बन्धित्वमपि तदभिन्नम्। व्यञ्जकसम्बन्धी च व्यङ्ग्य एवार्तः। तदेवं वाच्य इव व्यङ्ग्य, उभयोरप्यनयोः शाब्दत्वात्। तात्पर्यं च यावत्कार्यं प्रसरणशीलमिति न परिमेव्यामियक्तयाऽनवच्छेद्यत्वात्।' इति यन्मतम्। इति।

**तयोरुभयोर्मतयोरित्यर्थः**। **उपर्य्युपरिष्टात्**। '**शब्दबुद्धिकर्मणां** शब्दस्य बुद्धेः कर्मणश्चेत्यर्थः। तत्र-शब्दो वाचकादिः, बुद्धिर्घटाद्याकारेण परिणमनशीलाऽन्तर्वृत्तिः, कर्म पुनः पचनादि। **विरम्य** विश्रम्यः विश्रामान्तरमिति यावत्। 'स्थिताना'मिति शेषः। **व्यापाराभावो** व्यापारोन्मुखीभावाभावः। एकं कार्यं निष्पाद्य कार्यान्तरं निष्पादयितुमव्यापृतत्वं क्षीणशक्तिकत्वात् सकृदेव कार्यकारित्वोपयोगिशक्तिशालित्वाच्चेति भावः। 'भवती'ति शेषः।' इतिवादिभिरितिवक्तृभिः। 'आचार्यै'रिति शेषः। **एव** 'न त्वस्माभिरपी'ति शेषः। **दण्डः**। 'स्वविरोधफलं प्रदर्शयितु'मिति शेषः। **पातनीयः** पातनार्हः। इति अत्रेदमभिहितं भवति—ये हि 'बाणस्य वेगइवाभिधाया व्यापारो दीर्घदीर्घतर सर्वेषामप्यर्थानामभिधेयत्व'मिति, ये च—'सर्वोऽप्यर्थः शाब्दस्तात्पर्य्यरूपत्वानपायात्। तात्पर्यं च शब्दसम्बन्धि तस्यापारेमेयतया व्यङ्ग्यमपि तथाभूतमिति न व्यञ्जनोपास्या, न च सा सार्थाऽन्यथाऽपि तदर्थसिद्धेः। एवं च व्यञ्जकत्वं वाचकत्वं च न भिन्नस्वरूपे न वा व्यङ्ग्यत्वं वाच्यत्वं चे'ति मन्वते; ते सर्वेऽपि 'शब्दबुद्धिकर्मणां व्यापारविरम्यव्यापाराभावः' इति सिद्धान्तविरुद्धाभिधाना देवानांप्रियाः। तदिति तान् स्वयमेव शब्दबुद्धिकर्मणां व्यापार-भावः' इति सिद्धान्तिन उत्तरयिष्यन्ति, वयं पुनस्तत्रोदास्म हे इति। अथापि—जिज्ञासवः पृच्छामः—**एवं** 'सिद्धान्ते सती'ति शेषः। **च**। **लक्षणा** शब्दसम्बन्धरूपाऽन्यावृत्तिः। **अपि**। 'व्यञ्जनाया इवैतस्या अपि परिहारौचित्यात्।'

इति शेषः । **किमिति** किमिर्थं किमभिप्रेत्येति वा । **उपास्या** निषेव्याऽपेक्ष्या स्वीकार्येति यावत् । **दीर्घदीर्घतराभिधाव्यापारेणत्यन्तं** सुदीर्घेणाभिधायास्तत्तसमस्तपदार्थोपस्थापकेन व्यापारेणेत्यर्थः । **अपि** एव । अव्ययानामनेकार्थकत्वादत्रैवार्थेऽपिरिति बोध्यम् । **तदर्थबोधसिद्धेस्तया** लक्षणया कृतो योऽर्थस्तद्बोधसिद्धेरित्यर्थः । 'तृतीया तत्कृतार्थेन गुणवचनेन ।' २/१/३० इति समासः । यद्वा-तस्या लक्षणायास्तत्सम्बन्धिनीति यावद्, याऽर्थबोधसिद्धिस्तस्मात्तद्रूपात् कारणादित्यर्थः । इह सम्बन्धसामान्यविवक्षया षष्ठी तया पुनः समासः । लक्षणयाऽपि प्रतिपद्यास्यार्थस्य बोधो यदि स्वकल्पितेनाभिधाव्यापारेण तेन सम्पद्येत, **किं** पुनस्तस्या अपि 'स्वीकारौचित्यम् । **इति** भावः । **च** तथा । **'ब्राह्मण ! ते** तव । **पुत्रः जात** उत्पन्नः । **ते** तव । **कन्या**ऽनूढा पुत्री । **गर्भिणी** गर्भवती । 'जाते'ति शेषः । **इत्यादौ** 'वाक्यकदम्बे'इति 'शब्दे' इति 'उच्चरिते' इति च शेषः । **अपि । हर्षशोकादीनां** 'जायमानाना'मिति शेषः । **अपि** । आश्चर्यम् । **वाच्यत्वम्** । **न** 'स्वीक्रियते' इति शेषः ।

इदमभिहितम्—यदिषोर्वेगेन रिपोर्वर्मशरीरच्छेदादिरिवाभिधाया व्यापारैणैव सर्वोऽपि तस्यतस्य शब्दस्यार्थः सम्पत्स्यते, तर्हि तेन व्यङ्ग्यइव लक्ष्योऽपि कुतो न सम्पद्येत, किं वा व्यञ्जनाया इव लक्षणाया अपि व्यापारान्तरस्वीकारौचित्यम् । व्यञ्जनाया इव लक्षणाया अप्यभिधातो भिन्नत्वेन तस्या अपि आनर्थक्यम् । अन्यथा किमपराद्धं व्यञ्जनया, किं वा लक्षणयोपकृतम् । इति पिक् ।

यत्पुनरुक्तं "पौरुषेयमपौरुषेयं च वाक्यं सर्वमेव कार्यपरम्, अतत्परत्वेऽनुपादेयत्वादुन्मत्तवाक्यवत्। ततश्च काव्यशब्दानां निरतिशयसुखास्वादव्यतिरेकेण प्रतिपाद्यप्रतिपादकयोः प्रवृत्त्यौपयिकप्रयोजनानुपलब्धेर्निरतिशयसुखास्वाद एव कार्यत्वेनावधार्यते। 'यत्परः शब्दः स शब्दार्थः" इति न्यायात्' इति।

तत्र प्रष्टव्यम्—किमिदं तत्परत्वं नाम, तदर्थत्वं वा, तात्पर्यवृत्त्या तद्बोधकत्वं वा। आद्ये न विवादः। व्यङ्ग्यत्वेऽपि तदर्थतानपायात्। द्वितीये तु—केयं तात्पर्याख्या वृत्तिः। अभिहितान्वयादिभिरङ्गीकृता, तदन्या वा आद्ये दत्तमेवोत्तरम्।

---

## विवृतिः

रसादीनां तात्पर्यग्राह्यत्वमनुमानेन साधयतां मतमाह—यत्पुनरिति। पौरुषेयं पुरुषनिष्पन्नं लौकिकं मन्वादिशास्त्ररूपं वाक्यं तत्कार्यपरम्। यथा 'घटमानय' इति लौकिकं वाक्यं जलाहरणरूपकार्यतत्परम्। यथा वा 'विश्वजिता यजेत' इति वैदिकं वाक्यं स्वर्गरूपकार्यतत्परमित्यन्वयव्याप्तिरत्रावधेया। व्यतिरेकव्याप्ति दर्शयति—अतत्परत्वे इति। यद्यन्न कार्यतत्परं तदनुपादेयवाक्यम्, यथा उन्मत्तादिवाक्यम्, इति। अनुमितिं दर्शयति—ततश्चेति। प्रतिपाद्यस्य श्रोतुः काव्यश्रवणे प्रवृत्तिः, प्रतिपादकस्य वक्तुः काव्यपाठे प्रवृत्तिः, तयोरौपयिकं कारणीभूतफलेच्छविषयो यत्प्रयोजनानन्तरं चतुर्वर्गादि, तस्यानुपलब्धेः शब्देनानुपस्थानात्। अवधार्यते. तात्पर्येण प्रतिपाद्यते। ननु कार्यान्तरवद्रसादि।

## विवृतिपूर्तिः

तथाहि—पौरुषेयमपौरुषेयं वाक्यं सर्व कार्यपरम्। अतत्परत्वेऽनुपादेयत्वादुन्मत्तादिवाक्यवत् काव्यशब्दानां चान्वयव्यतिरेकाभ्यां निरतिशयसुखास्वादव्यतिरेकेण प्रतिपाद्यप्रतिपादकयोः प्रवृत्तिविषययोः प्रयोजनान्तरानुपलब्धेः स्वानन्दोद्भूतिरेव कार्यत्वेनावधार्यते। तदुद्भूतिनिमित्तत्वं च विभावादिसंसृष्टस्य स्थायिन एवावगम्यते। अतो वाक्यस्याभिदानशक्तिस्तेन तेन रसेनाकृष्यमाणा तत्तत्स्वार्थपेक्षितावान्तरविभावादिप्रतीपादनद्वारा स्वपर्यवसायितामानीयते। तत्र विभावादयः पदार्थस्थानीयाः, तत्संसृष्टो रत्यादिवाक्यार्थः तदेतत् काव्यवाक्यम्। यदीयौ ताविमौ पदार्थवाक्यार्थौ। न चैवं सति गीतादिवत् सुखजनकत्वेऽपि वाच्यवाचकभावानुपयोगः। विशिष्टविभावादिसामग्रीविदुषामेव तथाविधरत्यादिभावनावतामेव स्वादोद्भूतेः। तदनेनातिप्रसङ्गोऽपि निरस्तः। ईदृशि च वाक्यार्थनिरूपणे परिकल्पिताभिधाशक्तिवशेनैव समस्तवाक्यार्थावगतेः शक्त्यन्तरपरिकल्पनं प्रयासः। यथावोचाम काव्यनिर्णये—'तात्पर्यनतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः। किमुक्तं स्यादश्रुतार्थतात्पर्येऽन्योक्तिरूपिणि॥ विषं भक्षय पूर्वो यश्चैवं परसुतादिषु। प्रसह्यते प्रधानत्वाद् ध्वनित्वं केन वार्यते॥ ध्वनिश्चेत् स्वार्थविश्रान्तं वाक्यमर्थान्तराश्रयम्। तत्परत्वं त्वविश्रान्तौ तन्नविश्राम्यसंभवात्॥ एतावत्येव विश्रान्तिस्तात्पर्यस्येति किं कृतम्। यावत्कार्यप्रसारित्वात्तात्पर्य तुलाधृतम्॥ 'भम धम्मिअ वीसत्थो' इति भ्रमिकृतास्पदे। निर्व्यावृत्ति कथं वाक्यं निषेधमुपसर्पति॥ प्रतिपाद्यस्य विश्रान्तिरपेक्षापूरणाद्यदि। वक्तुर्विवक्षितप्राप्तेरविश्रान्तिर्नवा कथम्॥ पौरुषेयस्य वाक्यस्य विवक्षापरतन्त्रता। वक्त्रभिप्रेततात्पर्यमतः काव्यस्य युज्यते॥' इति। अतो न रसादीनां काव्येन सह

व्यङ्ग्यव्यञ्जकभावः । किं तर्हि, भाव्यभावकसंबन्धः । काव्यं हि भावकम्, भाव्या ररसादयः । ते हि स्वतो भवन्त एव भावकेषु विशिष्य विभावादिमता काव्येन भाव्यन्ते । न चान्यत्र शब्दान्तरेषु भाव्यभावकलक्षणसंबन्धाभावात् काव्यशब्देष्वपि तथा भाव्यमिति वाच्यम् । भावनाक्रियावादिभिस्तथाङ्गीकृतत्वात् । किंच, मा चान्यत्र तथा स्त्वन्व-यव्यतिरेकाभ्यामिह तथावगमात् । तदुक्तम्—'भावाभिनयसंबन्धान् भावयन्ति रसानिमान् । यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ॥' इति । कथं पुनरगृहीतसंबन्धेभ्यः पदेभ्यःस्थाय्यादिप्रतिपत्तिरिति चेत्, लोके तथाविधचेष्टायुक्तस्त्रीपुंसादिषु रत्याद्यविनाभूतचेष्टादिप्रतिपादकशब्दश्रवणाद् अभिधेयाविनाभावेन लाक्षणिकी रत्यादिप्रतीतिः ॥

शब्देति । वाचकस्य लाक्षणिकस्य वाशब्दस्य अभिधया लक्षणया वा सकृच्छाब्दबोधमुत्पाद्य पुनरभि-धया लक्षणया वार्थान्तरबोधने सामर्थ्याभावादित्यर्थः ॥

किमितीति । यदि भवन्मते तादृशाभिधाव्यापारेणैव व्यङ्ग्यार्थोऽवबुध्यते, तर्हि किमर्थ लक्षणा स्वीक्रि-यते, लक्ष्यार्थस्यापि भवत्कल्पिताभिधाव्यापारेणैव बोधात् । एवं च किमर्थं मीमांसादर्शने भगवता जैमिनिना 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ३/३/७' इति सूत्रेण श्रुत्यादिषु पूर्व-पूर्वबलीयस्त्वं निरणायि । श्रुतिस्थल इव लिङ्गादिस्थलेऽपि शब्दश्रवणानन्तरं प्रतीयमानानामर्थानां दीर्घदीर्घतरा-भिधाव्यापारेणैव प्रतीतौ लिङ्गादीनां दौर्बल्ये बीजाभावात् । निरपेक्षो रवः श्रुतिः । अर्थविशेषप्रकाशनसामर्थ्य लिङ्गम् । परस्पराकाङ्क्षावशात्क्वचिदेकस्मिन्नर्थे पर्यवसितानि पदानि वाक्यम् । लब्धवाक्यभावानां कार्यान्तरा-पेक्षाभावाद्वाक्यन्तरेण संबन्ध आकाङ्क्षापर्यवसन्नं प्रकरणम् । स्थानं क्रमः । स चानेकस्याम्नातस्य संनिधिविशे-षादान्नातम् । समाख्या योगबलम् । श्रुत्यादीनां समवाये एकत्रोपनीपाते तेषां मध्ये यदपेक्षया यत्परं तदपेक्षया तद्दुर्बलम् । कुतः । अर्थविप्रकर्षात् पूर्वापेक्षया विलम्बेनार्थप्रत्यायकत्वादिति तदर्थः । अत्र विशेषः शाबरभाष्यादा-वनुसंधेयः ॥

किमिति चेति । शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तावति शब्दस्याभिधैव व्यापार इति मीमांसकनयेन हर्षशोकादीनां किमिति न वाच्यत्वमेवं पूर्वेणान्वयः । तन्मते दीर्घदीर्घतराभिधाव्यापारेमैव हर्षशोकादीनां वाच्यत्व-मिति स्यादिति भावः । वाक्येन तदर्थप्रतीतिद्वारा हर्षशोकादय उत्पद्यन्ते, न तु तत्प्रतीतिः । सा तु हर्षशोकादिलिङ्गै-र्मुखप्रसादमलिन्यादिभिरनुमानात्प्रत्याय्यत इति हि सिद्धान्तः ॥

यदिति । 'अन्विताभिधानवादमनुसरता धनिकेन' ॥

यदिति । यदर्थे यस्य शब्दस्य तात्पर्य स एव शब्दार्थ इति मीमांसकनियमात् ।

तदिति । अभिहितान्वयवादिमतेऽपि रसबोधस्यानपलपनीयत्वात् तात्पर्यस्य पदार्थान्वयबोधने परिक्षी-णत्वात् तुरीयवृत्तिसिद्धिः शिरस्यापततीति स्पष्टतरम् ॥

विभावेति । तत्तन्मतानुसारेण प्राग्व्याख्यातस्याप्यस्य भरतकृतं व्याख्यानं प्रदर्श्यते—"विभाव इति कस्मादुच्यते । विभावो विज्ञानार्थः । विभाव्यन्तेऽनेन वागङ्गसत्त्वाभिनया इत्यतो विभावः । विभावितं विज्ञातमिति नार्थान्तरम् । अत्र श्लोकः—'वहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रयाः । अनेन यस्मात्तेनायं विभाव इति संज्ञितः ॥' अथानुभाव इति कस्मादुच्यते । यदमनुभावयति वागङ्गसत्त्वकृतमभिनयम्, अत्र श्लोकः—'वागङ्गस-त्त्वाभिनयैर्यस्मादर्थोऽनुभाव्यते । वागङ्गोपाङ्गसंयुक्तस्त्वनुभाव इति स्मृतः ॥' व्यभिचारिण इति कस्मादुच्यते—'वि' 'अभि' इत्येतावुपसर्गौ । चरति धातुः । विविधमाभिमुख्येन रसेषु चरन्ति नयन्तीति व्यभिचारिणः । कथं

नयन्ति । उच्यते—यथा सूर्य इदं नक्षत्रमनुवासरं नयतीति । नच तेन बाहुभ्यां स्कन्धेन वा नीयते । किंतु लोकप्रसिद्धमेतत् । इति भरतः । तैःसंयोगात्संबन्धात् । अत्र 'संयोगात्' इति पञ्चम्या विभावादीनां हेतुत्वमुक्तम् । व्यञ्जकत्वं च तदर्थः" इत्याचार्याभिनवगुप्तपादानुयायिनः । इह दृष्टान्तमपि भरत एवाह—यथाहि गुडादिभिद्रव्यैर्व्यञ्जनैरोषधिभिस्च षाडवादयो रसा निवर्तन्ते तथा नानाभावोपगता अपि स्थायिनो भावा रसत्वामाप्नुवन्तीति ॥

## विज्ञप्रिया

यत्परः शब्दः स शब्दार्थः" इति जैमिनिवाक्यमेव व्यङ्ग्यबोधने तात्पर्याख्यवृत्तौ प्रमाणमिति मतं दूषयितुमुत्थापयति—यत्पुनरिति । पौरुषेयं लौकिकवाक्यम्, अपौरुषेयं वैदिकवाक्यम् । कार्यपरम्—साध्यतात्पर्यकम् । ननु कार्यपरत्वे प्रकृते किमायातमित्यत आह—ततश्चेति । निरतिशयसुखास्वाद एव कार्यत्वेनानुभूयत इति । तथा च सुखास्वादकारणता काव्यवाक्यस्य व्यङ्ग्यबोधद्वारेणैव एतद्वाक्यस्य व्यङ्ग्यतात्पर्यकत्वात् । स शब्दार्थ इति । जैमिनिवाक्यस्य सशब्दस्य तात्पर्यवृत्तिलमभ्योऽर्थ इत्यर्थः ।

काव्यप्रकाशे तु अस्य वाक्यस्य भिन्न एवार्थः कृतः । तथा हि—"यत्परो यत्साध्यतात्पर्यकः शब्दः स शब्दस्य प्रामाण्यनियामकोऽर्थः न तु सिद्धांशे तस्य शब्दस्य प्रामाण्यम्" इति । यथा, "गामभ्याज" इत्यत्र साध्यांशोऽभ्याजनं प्रामाण्यनियामकोऽर्थो न तु सिद्धगवांशः; यथा वा, "दध्ना जुहोति" इत्यत्र दध्नः करणत्वं साध्यांशस्तु तथा; न तु वाक्यान्तरतः सिद्धहोमांश इति ।

स्वयं कल्पितार्थे वितर्कयति—तत्र प्रष्टव्यमिति । स शब्दार्थ इत्यस्य वाक्यस्य तत्परत्वमर्थः तदेव तत्परत्वं पृच्छति—किमिदमिति । तदर्थत्वम्तत्प्रतीतिप्रयोजनकत्वम् । तदर्थत्वानपायात्—तत्प्रतीतिप्रयोजनकत्वानापायात् । दत्तमेवोत्तरमिति—संसर्गमात्र एव तैस्तात्पर्याख्यवृत्त्यभ्युपगमादित्यर्थः । तदन्यवा वा इतितात्पर्याख्या वृत्तिः संसर्ग बोधयित्वा व्यङ्ग्यार्थमपि बोधयतीति ध्वनिकेन यदुक्तं तच्च प्रागेव दूषितम् । ततोऽन्या वेत्यस्य तात्पर्यभिन्नोऽतिरिक्तपदार्थ इत्येवार्थः । नाममात्रेति—अङ्गीकृतायां तुरीयवृत्तौ, 'व्यञ्जना वा तात्पर्य वा तन्नाम' इत्येव विवाद इत्यर्थः ।

ननु अतिरिक्तपदार्थरूपा तुरीया वृत्तिर्ध्वनिकेन नोच्यते, किन्तु क्लृप्तातपर्यमेव व्यङ्ग्यबोधकम् । तेन च क्रमशो बोधन एव, "शब्दबुद्धिकर्मणाम्" इत्याद्युक्तं दूषणं युगपदेव तेन बोध्यतामित्याशङ्क्ते—नन्विति । तात्पर्यशक्त्या तात्पर्यरूपतया वृत्त्या । तयोः विभावादिसंसर्गप्रकाशनरसादिप्रकासनयोरित्यर्थः । रसनिष्पत्तिरित्यत्र रसस्य ज्ञाननिष्पत्तिरेव निष्पत्तिः स्वप्रकाशस्य स्वज्ञानाभिन्नत्वात् । पञ्चम्या च विभावादिसंसर्गज्ञानस्य कारणताप्रदर्शनात् । सहभावेनोत्पत्तौ तद्दर्शितकारणतानुत्पत्तिं दर्शयति—सहभावे चेति । सव्येतरविषाणे वामदक्षिणरागवादिशृङ्गे ।

## लोचन

सम्प्रति गुरुमतैकदेशीयस्य, "यत्परः शब्दः स शब्दार्थः" इति वादिनो मतमाशङ्क्य दूषयति—यत्पुनर् इति । पौरुषेयमित्यादिन्यायादित्यन्तः शङ्काग्रन्थः । तत्रेत्यादिना सिद्धान्तः । पौरुषेयं लौकिकम् अपौरुषेयो वैदिकम् । कार्यमुद्देश्यम् । ततश्च यस्मोंदवमनुमानमित्यर्थः । प्रतिपाद्यो यं प्रति वाक्यं श्राव्यते; प्रतिपादकस्तस्य श्रावयिता । कार्यत्वेनावधार्यते इत्यर्थः । तस्मान्निरतिशयसुखास्वादरूपो रसादिरूपोऽर्थः शब्दस्य तात्पर्यविषयो जातः कि वृत्त्यन्तरकल्पनयेति । यत्परो यदुद्देश्यप्रयुक्तः; स शब्दार्थः शब्देनावश्यं बोद्धव्यः ।

तत्रेति—यदुक्तं पौरुषेयमित्यादि तत्र प्रष्टव्यमित्यर्थः। तदर्थत्वं तस्य शब्दस्यार्थत्वम्। दत्तमेवोत्तरं तयोरुपरीत्यादिना।

नन्विति। प्रकाशनमित्यनन्तरं, "तथा सति विरम्यव्यापारो न भविष्यति" इति शेषः। अनयैव दिशा प्रतीयमानयोर्वस्त्वलङ्कारयोरपि, "यत्परः शब्दः स शब्दार्थः" इतिन्यायाश्रयेण व्यञ्जनाङ्गीकारोऽनुपपन्न एव। किञ्च, "यत्परः शब्दः स शब्दार्थः" इतिन्यायाश्रेरेणा व्यञ्जनाङ्गीकारोऽनुपपन्न एव। किञ्च, "यत्परः शब्दः स शब्दार्थः" इति न्यायमङ्गीकुर्वतां व्यञ्जनानङ्गीकारे वानीरकुञ्ज इत्यादौ गुणीभूतः प्रतीयमानोऽर्थः प्रथममवतरन् शब्दस्य तत्पर-त्वाभावात् कस्य व्यापारस्य विषयतामवलम्बताम्? ननु तर्हि भट्टनयवत्, 'पीनो देवदत्तो दिवा न भुङ्क्ते।' इत्यादौ, 'रात्रौ भुङ्क्ते' इत्यादिवदत्रापि व्यङ्ग्यार्थप्रतीतौ वाक्यशेषं कल्पतामिति चेन्न। "धर्मिकल्पनातो वरं धर्मकल्पना" इति न्यायाद् व्यापारान्तरकल्पनस्यैव न्याय्यत्वात्।

## कुसुमप्रतिमा

तात्पर्य्यहारेव व्यङ्ग्यार्थानामपि अनुमानेन बोध इति मतं दूषयितुमाह यत् पुनरिति। पौरुषेयं 'गामानय' इत्यादिकं लौकिकपुरुषप्रयुक्तम्, अपौरुषेयं "स्वर्गकामो यजेत" इत्यादिकं पुरुषाप्रयुक्तं वैदिकम्। कार्य्यपरं कर्त्तव्यविशेषेच्छया उच्चारितम्। अतत्परत्वे कार्य्यपरत्वाभावे अनुपादेयत्वात् सर्वैरवाशयत्वात् उन्मत्तवाक्यवत् अप्रमाणं स्यादिति शेषः। तथा च पूर्वमीमांसायां जैमिनिसूत्रम्, "आम्तायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति। काव्यशब्दानां "शून्यं वासगृहम्" इत्यादीनाम्, निरतिशयसुखस्वादो रसाद्यनुभवः तद्व्यतिरेकेण तं बिना, प्रतिपाद्यः श्रोता प्रतिपादकश्च वक्ता तयोः प्रवृत्तेःकाव्यश्रवणादौ यत्रस्य औपयिकम् उपायभूतं प्रयोजकमित्यर्थः यत्प्रयोजनान्तरम् अम्बदुद्देश्यं तस्य अनुपलब्धेरज्ञानात् निरतिशयसुखस्वाद एव रसाद्यनुभव एव कार्य्यत्वेन कर्त्तव्यत्वेन अवधार्य्यते तत्पर्य्येणानुमाय निर्णीयते। यत्परो यद्बोधनेच्छया उच्चरितः। तथा च काव्यशब्दा रसादिव्यङ्ग्यार्थबोधका स्तबोधनेच्छयोच्चारितत्वादित्यनुमानम्। यथा कम्बुग्रीवादिमन्तमर्थं बोधयित्वतीच्छया उच्चारितो घटशब्दः कम्बुग्रीवादिमन्तं बोधयति; यथा वा तीर बोधयित्वतीच्छया उच्चारितः "गङ्गायां घोषः" इत्यादौ गङ्गाशब्दस्तीरं बोधयति; तथा रसादीन् बोधयत्वितीच्छया उच्चारिताः काव्यशब्दा अपि रसादीन् व्यङ्ग्यार्थान् बोधयन्तीति तेषामभिप्रायः।

उक्तमतं विकल्पा दूषयितुं पृच्छति तत्रेति। "अतत्परत्वे अनुपादेयत्वात्" इत्यनेनायतं यत् तत्परत्वे उपादेयत्वात्" इति तत्र तत्परत्वं किं नामेत्यर्थः। तदर्थत्वं सामान्यतस्तदर्थबोधकत्वम्, तात्पर्य्यवृत्त्या केवलयेति शेषः।

दूषयति आद्य इति। व्यङ्ग्यत्वेऽपि मदीयव्यञ्जनावृत्त्या तदर्थबोधकत्वाङ्गीकारेऽपि तदर्थतानपायात् सामान्वतस्तदर्थबोधकत्वसम्भवेन "तत्परत्वे उपादेयत्वात्" इति युक्तेरपि सङ्गच्छमानत्वात्। अत्र "व्यङ्ग्यत्वेऽपीति। व्यञ्जनावादिनी मते सिद्धसाधनमिति भावः" इति रामचरणोक्तमपर्य्यालोचनविजृम्भितमिव प्रतिभाति, अस्य ग्रन्थकतुरेव व्यञ्जनावादित्वातन्मत एव सिद्धसाधनसम्भवेन तस्यैव पराजयपत्त्या तादृशयुक्तेरन-वतारणीयत्वात्। किञ्च व्यञ्जनावृत्तिद्वारेव तदर्थबोधकत्वाङ्गीकाराद्ग्रन्थकर्त्तमेते सिद्धसाधनदोषप्रसक्तिरेव नास्तीति सुधीभिर्भाव्यम्।

तात्पर्य्यवृत्त्या तद्बोधकत्वमिति द्वितीयपञ्चं दूषयति द्वितीयेंत्विति । तदन्था व्यङ्ग्यार्थबोधनोपयोगिनो या क्वचित् प्रकारान्तरा ।

आद्य इति । आद्ये अभिहितान्वयपादिभिः "तात्पर्य्याख्या वृत्तिमाह" इत्यादिना अङ्गीकृतैव तात्पर्य्याख्या वृत्तिरिति पक्षे । दत्तमेवोत्तरम "तात्पर्य्याख्या वृत्तिरपि संसर्गमात्रं परिक्षीणा न व्यङ्ग्यबोधिनी इत्यनेनेयर्तः । न च अभिहितान्वयवादिभिः" "शब्दबुद्धिकर्म्मषां विरम्य व्यापाराभावः" इति नियमो नाङ्गीक्रियत इति तन्मते तात्पर्य्य-वृत्तिरेव पदार्थानामन्वयं बोधयित्वा व्यङ्ग्यार्थानपि बोधयेदिति वाच्यम्, 'पदार्थन्वय बोधने' इतिमात्रतत्रयोजना-भिधानासङ्गतेः ।

द्वितीय इति । द्वितीये व्यङ्ग्यार्थबोधनोपयोगिनी प्रकारान्तरेव तात्पर्य्याख्या वृत्तिरिति हितौयपक्षो । तुरीयवृतिसिद्धेस्तातपर्य्याख्यतादृशचतुर्थवृत्तिसिद्धेः नाममात्रे तन्मते ततपर्य्याख्या अन्मन्मते त् व्यञ्जनाख्येति केव-लनामविषय एवावयोर्विवादः; न तु तुरीयवृत्तिस्वीकारेऽपीत्यर्थः । तत्रापि व्यङ्ग्यार्थबोधिक वा वृत्तेव्यञ्जनेति नाम्न एवौचित्यादस्मन्मतमेव श्रेय इति भावः ।

अथ मया तात्पर्य्याख्या तुरीयवृत्तिर्नाङ्गीक्रियते, अपि तु "शब्दबुद्धिकर्म्मणाम्" इत्यादिनियमेन तात्पर्य्य-वृत्त्या पदार्थानामन्वयं बोधयित्वा क्षीणशक्तिकतया रसादीनां बोधयितुमशक्त्यात्वात पदार्थान्वयबोध रसादिबो-धयोर्यौगपद्यमेवाङ्गीक्रियत इत्याह नन्विति । विभावादिसंसर्गस्य विभावादिषु कारणतासम्बन्धस्य । प्रकाशनं बोधनम् । तयोर्विभावादिसंसर्गबोधरसादिबोधयोः हेतुफलभावङ्गीकारात्, कारणत्वकार्य्यत्वं प्रकाशनं बोधनम् । तयोर्विभावादिसंसर्गबोधरसादिबोधयोः हेतुफलभावङ्गीकारात् कारणत्वकार्यत्वस्वीकारात् । अनयोश्च कारमका-र्य्ययोरत्यन्तसन्निहिततया पौर्वापर्य्यस्य लक्षयितुमशक्यत्वात् "यस्मादेवस्वाकारात् । अनयीश्च कारणकार्य्ययो-रत्यन्तसनिहिताया पौर्वौपर्य्यस्य लक्षयितुमशक्यत्वात् "यस्मादेष विभावादिसमूहालम्बनात्मकः । तस्मान्न कार्य्यः" इत्येकात्मकत्वं रसस्याकार्य्यत्वञ्च प्रागुक्तमिति न विरोधः ।

विभावादिसंसर्गबोधरसादिबोधयोर्हेसफलभावे आर्षं प्रमाणमाह यदाहेति । मुनिर्भरत । पागेवेदं व्याख्यातम् ।

अथ युगपदुत्पन्नयोरेव तयोर्हे तुफलभावो भविष्यतीत्याह सहेति । सहभावे उत्पत्तेर्यौगपद्ये, सव्येतरवि-षाण्योरिव हरिणादीनां वामदक्षिणशृङ्गयोरिव तयोर्विभावादिबोधरसादिबोधयोः कुतः कार्य्य कारणभावः पूर्वनिपा-तव्यत्ययात् हेतुफलभावः सम्भवति, कथमपि नेत्यर्थः । पौर्वेति । कारणस्य नियत पूर्ववर्त्तितायाः कार्य्यस्य च नियतपरवर्त्तिताया बाल्ययापत्तेरित्यर्थः ।

## विमला

रसादीनां तात्पर्य्यविषयत्वमनुमानेन गतार्थयतामन्विताभिधानवादिनां मतं दर्शयति, यत्पुनरित्या-दिना ।—यत्पुनः उक्तम्—अन्विताभिधानवादिना सिद्धान्तितं, पौरुषेयं—पुरुषस्येदं, "दध्यानय" इत्यादि लौकि-कवाक्य, "धर्म एव इती हन्ति" इत्यादि मन्वादिवाक्यञ्चेत्यर्थः, अपौरुषेयं—यन्न पौरुषेयं, "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादि नैगमं वाक्यम्; तदेतत्मर्वमेव वाक्यं कार्य्यपरं—कार्य्यसाधनप्रयोजनकम् । कार्य्यं हि दध्यानयन-देवयजनादिरूपं भोजनस्वर्गाद्यर्थपरम् । व्यतिरेकव्याप्तिं दर्शयति, अतत्परत्वं इति ।—अतत्परत्वे स्वीक्रियमाणे

पुनः तस्य तस्य वाक्य स्थोपादेयत्वं न स्यात्, उपादेयत्वाभावे चोन्मत्तप्रमत्तजल्पितायितत्वं निर्बाधम् इति वर्त्तुलीऽर्थः । एवञ्च सिद्धमर्थमाह, ततश्चेति ।—तत्पुनरित्यर्थः । काव्यसम्बन्धिनां शब्दानां निरतिशयमुखास्वादनमेव फलं, तदतिरिक्तस्य च अनुपलब्धेः; प्रतिपाद्यप्रतिपादकयोः,—"दध्यानय" "ज्योतिष्टोमेन स्वर्गकामी यजेत" इत्यादीनां यं प्रत्यभिधानं, स प्रतिपाद्यः; यथाभिधाता, स प्रतिपादक इति तयोः,—श्रोतृवाचकयोरित्यर्थः; प्रवृत्तिः,—काव्यश्रवणकाव्यपाठयोरिच्छा इत्यर्थः, तस्या औपयिकं—युक्तियुक्तं साधकमित्यर्थः, यत्प्रयोजनान्तरं—निरतिशायनन्दात् अन्यत् प्रयोजनं, तस्य अनुपलब्धेः,—शब्देनानुपस्थितेः हेतोः, अवधार्य्यते—निर्णीयते, तात्पर्य्येति शेषः । उक्तमर्थं मीमांसकमतेन द्रढ़यति, यत्पर इति ।—शब्दः यत्परः,—यत्र यद्बोधेच्छया प्रयुक्तः इत्यर्थः, स शब्दार्थः,—शब्दप्रतिपाद्यः, इति, ततश्च तात्पर्य्येणैव रसादि प्रतीतिर्भवेत्, न तदर्थं व्यञ्जनाऽङ्गीकार्य्या इति भावः ।

एतन्मतं दूषयति, तत्रेतिं ।—व्यङ्ग्यत्वे—व्यञ्जनया बोध्यमानत्वे, अपि किं पुनरबोध्यमानत्वे इत्यर्थः, तदर्थताऽनपायात्—तदर्थतायाः,—तत्परतायाः अनपायात—अनपगमात् । व्यञ्जनावादिमते सिद्धसाधनमिति भावः । द्वितीये त्विति अत्राभिधया "कार्य्यं कुरु" इत्यादिवाक्ये, जलाऽऽहरणार्थं "घटमानय" इत्यादौ च कार्य्यप्रतिपादके व्यभिचारोऽपि द्रष्टव्यः । दत्तमिति ।—संसर्गबोधे परिक्षीणत्वाच कार्य्यबोधनाक्षमत्वं तात्पर्य्यस्येत्युत्तरं बोध्यम् । तन्मतेऽपि—रसादीनां तात्पर्य्यग्राह्यत्वं वादिमतेऽपि । स्पष्टमन्यत् ।

ननु विभावादिसंसर्गबोध-रसादिबोधयोः क्रमिकत्वाङ्गीकारं एव दूषण मुक्तं, यौगपद्याङ्गीकारे तु नास्यावसर इत्यभिप्रायेणाह, नन्वस्त्विति ।—तयोः,—विभावादिसंसर्गस्य रसादेश्चेत्यर्थः, हेतुफलभावाङ्गीकारात्—कारणकार्य्यभावस्वीकारत् मुनिवचनेन द्रढ़यति, यदाहेति ।—"विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिः इति शेषः, रसनिष्पत्तिः,—रसात्मना प्रतीयमानत्वम् । इदमतावधेयम्,—विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिः इति । तव विभावादयोऽभिहिताः, एतेषां संयोगः,—सम्बन्धः, तदात्, रत्यादीनाम् इति शेषः, रसनिष्पत्तिः,—रसात्मना प्रतीयमानत्वम् । इदमत्रावधेयम्;—विभावानुभावेति भरतमुनिसूत्रम्, इदञ्च स्वस्वशेमुषीसमुन्मेषवशेन अनेकैर्महाऽनुभावैः विद्यावितार्थमपि भरतमतेन पुनर्विभाव्यते,—"विभाव इति कस्मात् ? उच्यते,—विभावो विज्ञानार्थः, विभाव्यन्तेऽनेन वागङ्गसत्तवाभिनया इत्यतो विभावः, विभावितं विज्ञातमित्यनर्थान्तरम् । अत्र श्लोकः,—"वहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रयाः । अनेन यस्मात् तेनायं विभाव इति संज्ञितः ॥" अथानुभाव इति कस्मात् ? उच्यते,—यदयमनुभावयति वागङ्गसत्त्वकृतमभिनयम् । अत्र श्लोकः,—"वागङ्गसत्त्वाभिनयैर्यस्मादर्थोऽविभाव्यते । वागङ्गेपाङ्गसंयुक्तस्त्वनुभाव इति स्मृतः ॥" एवमेतेषां विभावानुभावसंयुक्तानां लक्षणनिर्दर्शनान्यभिव्याख्यास्यामः । तत्र विभावानुभावौ लोकप्रसिद्धो । लोकस्वभावोपगतत्वादनायोर्लक्षणां नोच्यतेऽतिप्रसङ्गनिवृत्यर्थम्; तत्र श्लोकः,—"लोकस्वभावसंसिद्धा लोकयात्राऽनुगामिनः । अनुभावा विभावाश् ज्ञेयास्त्वभिनयैर्बुधै ॥" तत्राष्टौ भावाः स्थायिनः, तयस्त्रिंशद् व्यभिचारिणः, अष्टौ सात्त्विकाः, एवमेते काव्यरसाभिव्यक्तिहेतव एकोनपञ्चाशद्भावाः प्रत्यवगन्तव्याः । एभ्यश्च सामान्यगुणयोगेन रसा निष्पद्यन्ते । भवति चात्र श्लोकः,—"योऽर्थो हृदयसंवादौ तस्य भावो रसोद्भवः ॥ शरीरं व्याप्यते तेन शुष्ककाष्ठमिवाग्निना ॥" अत्राह,—कथं स्थायिन एव भावाः रसत्वमाप्नुवन्ति ? उच्यते,—यथा हि समानलक्षणाः तुल्यपाणिपादीदरशरीराः समानाङ्गप्रत्यङ्गः कुलविद्याकर्मशिल्पविचक्षणत्वाद्राजत्वामाप्नुवन्ति, तत्रैव च अन्येऽल्पबुद्धयस्तेषामेवानुचरा भवन्ति, तथा विभावानुभावव्यभिचारिणः स्थायिभावानुपाश्रिता भवन्ति, वह्वाश्रयत्वात् स्वामिभूताः स्थायिनी भावाः । तत्स्थानीयपुरुषगुणभूता अन्ये भावास्तान् गुणतया आश्रयन्ते परिजनभूताः व्यभिचारिणी भावाः । यथा नरेन्द्रो बहुजनपरि-

वारोऽपि स एव नाम लभते, नान्यः सुमहानपि पुरुषः, तथा विभावानुभावव्यभिचारिपरिष्कृतः स्थायिभावो रसतां लभते । "यथा नराणां नृपतिः शिष्याणाञ्च यथा गुरुः । एवं हि सर्वभावानां भावः स्थायी महानिह ॥......" की दृष्टान्तः ? अत्राह यथा,—नानाव्यञ्जनौषधिद्रव्यसंयोगाह रसनिष्पत्तिः । यथाहि गुड़ादिभिद्रव्यैः व्यञ्जनैरौषधिभिश्च षाड़वादयो रसा निवर्त्तन्ते, तथा नानाभावोपगता अपि स्थायिनी भावाः रसत्वमाप्नुवन्ति इति । एतेन विभावादीनां संयोगो हेतुरिति प्रतिपादितम् । विभावादिंसंसर्गः रसप्रतीतौ हेतुः, रसश्च कार्य्यम्; तत् कथं तयोर्यौगपद्ये प्रतीतिः ? कार्य्यकारणयोः पौर्वापर्य्यनियमात्; न हि कार्य्यं कारणञ्च युगपद्भवतीति भावः । सहभावे—युगपदुत्पत्तौ, सव्येतरविषाणयोः,—वामदक्षिशृङ्गयोः, इव कुतः,—कथं, कार्य्यकारणभावः ? शृङ्गयोः समकाले उत्पन्नयार्यथा परस्परं कार्य्यकारणभावो न स्यात्, तथाविभावदिसंसर्गरसयोः तथात्वे मुनिवचन विरोध इति भावः ।

## लक्ष्मी

सम्प्रति व्यङ्ग्यार्थानमपि तात्पर्यग्राह्यत्वमनुमानेन साधयतो गुरुमतैकदेशिनो धनिकस्य मतं दूषयितुमुत्थापयति—यत्पुनरिति । पौरुषेयं 'घटमानय' इत्यादिकं पुरुषनिष्पन्नं लौकिकम्, मन्वादिशास्त्ररूपञ्च अपौरुषेयं 'विश्वजिता यजेत' इत्यादिकं पुरुषाप्रयुक्तं वैदिकं वाक्यम् । कार्यपरं साध्यतात्पर्यकं कत्र्तव्यविशेषेच्छया उच्चरितमिति वा अतत्परत्वे कार्य परत्वाभावे अनुपादेयत्वात् सर्वैरेवानङ्गीकारत्वात् उन्मत्तवाक्यवत् अप्रामाण्यं स्यादिति शेषः ननु कार्यपरत्वे प्रकृते किमायातमत आह—ततश्चेति । काव्यशब्दानां 'शून्यं वासगृहम्' इत्यादीनां निरतिशयसुखास्वादः रसाद्यनुभवः तद्व्यतिरेकेण तद्विना प्रतिपाद्य यं प्रति वाक्यं श्राव्यते सः श्रोता प्रतिपादकः तस्य श्रावयिता तयोः, प्रवृत्तेः श्रोतुः काव्यश्रवणे वक्तुः काव्यपाठे यत्नस्य औपयिकं कारणीभूतंफलेच्छाविषयं यत्प्रयोजनानन्तरं चतुर्वर्गादिः, तस्यानुपलब्धेः शब्देनानुपस्थानात्, निरतिशयसुखास्वाद एव रसाद्यनुभव एव कार्यत्वेन अवधार्यते तात्पर्येणानुमाय प्रतिपाद्यते, तस्मान्निरतिशयसुखास्वादरूपो रसादिरूपोऽर्थः शब्दस्य तात्पर्यविषयो जातः किं वृत्त्यन्तरकल्पनयेति । ननु कार्यान्तरवद्रसादिरपि न प्रतीयेतेत्यत आह—यत्पर इति ।यद्रबोधने उच्चरित इत्यर्थः । शब्दार्थः शब्दप्रतिपाद्यः । तथा चात्रानुमानाकारस्तु—'काव्यशब्दा रसादिव्यङ्ग्यार्थबोधकाः व्यङ्ग्यबोधनेच्छ्योच्चरितत्वात्' इति । यथा—कम्बुग्रीवादिमन्तमर्थं बोधयतु इतीच्छया उच्चरितो घटशब्दः कम्बुग्रीवादिमन्तमर्थबोधयति । यथा वा—तीरं बोधयतु इतीच्छया उच्चरिताः 'गङ्गा' शब्दस्तीरं बोधयति तथा रसादीन् बोधयतु इतीच्छया उच्चरिताः काव्यशब्दाः व्यङ्ग्यार्थान् बोधयिष्यन्तीति तात्पर्येणैव निर्वाहे व्यञ्जनाङ्गीकारेणालमिति तेषामाशयः ।

इदमत्रानुसन्धेयम्—'यत्परः शब्दः' इत्यस्य हि उपात्तशब्दैः प्रतिपाद्येष्वर्थेषु यदंशे विधेयत्वं तत्र वाक्यतात्पर्यं यत्र तात्पर्यं स शब्दार्थस्तदंशे शब्दस्यानधिगतार्थागन्तृस्वरूपं प्रामाण्यमित्यर्थः, न तु यत्तात्पर्यकतया शब्दः प्रयुज्यते स शब्दार्थ इति भावः । एवं हि तात्पर्यस्यानियतत्वेन शक्तेरप्यनियतत्वापत्तिरित्याहुः ।

एतन्मतं विकल्प्य वितर्कयति—तत्र प्रष्टव्यमिति । 'अतत्परत्वे अनुपादेयत्वात्' इत्यनेनागतं यत् 'तत्परत्वे उपादेयत्वात्' इति तत्र तत्परत्वं किन्नामेति प्रष्टव्यमित्यर्थः । यद्वा—'स शब्दार्थः' इत्यस्य वाक्यस्य तत्परत्वमर्थः तदेव तत्परत्वं किन्नामेति प्रष्टव्यमित्यर्थः । तदर्थत्वम् सामान्यतस्तस्य शब्दस्य अर्थबोधकत्वम्, तात्पर्यवृत्त्या केवलयेति शेषः ।

दूषयति—आद्य इति। व्यङ्ग्यत्वेऽपि अस्मदीव्यञ्जनावृत्त्या तदर्थबोधकत्वस्वीकारेऽपि तदर्थतानपायात् सामान्यतस्तदर्थबोधकत्वानपायात्।

तात्पर्यवृत्त्या तद्बोधकत्वमिति द्वितीयकल्पं दूषयति—द्वितीये त्विति। तदस्येति। तात्पर्यातिरिक्तव्यङ्ग्यार्थबोधनोपयोगिनी काचित् प्रकारान्तरा।

अपि च—'यत्परः शब्दः स शब्दार्थः' इति। न्यायमङ्गीकुर्वतां व्यञ्जनानङ्गीकारे 'वानीरकुञ्ज' इत्यादौ गुणीभूतः प्रतीयमानोऽर्थः प्रथममवतरन् शब्दस्य तत्परत्वाभावात् कस्य व्यापारस्य विषयतामवलम्बताम्? ननु तर्हि भट्टनयवत् अर्थापत्त्या देवदत्तो दिवा न भुङ्क्ते' इत्यादौ 'रात्रौ भुङ्क्ते' इत्यादिवदत्रापि व्यङ्ग्यार्थप्रतीतौ वाक्यशेषं कल्प्यतामिति चेत्? मैवम्, 'धर्मिकल्पनतो वरं धर्मकल्पना' इति न्यायात् व्यापारान्तरकल्पनस्यैव न्याय्यत्वात्।

नन्वेवन्तर्हि लक्षणामूलव्यञ्जना नाङ्गीक्रियताम्, एकयैव लक्षणया लक्ष्यव्यङ्ग्यार्थद्वयं बोधयतामित्यत आह—गङ्गायामिति। तटाद्यर्थमात्रस्य बोधनात् पश्चादेव विरताया विगतसामर्थ्यायाः 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति नियमादिति भावः। उपसंहरति—तेनेति अभिधातात्पर्यलक्षणानां रसादिबोधने सामर्थ्याभावेनेत्यर्थः। तुरीया वृत्तिः अभिधालक्षणामूलाव्यञ्जनानाम्नी चतुर्थी वृत्तिः उपास्यैव सर्वैराश्रणीयैव।

न च अभिलक्षणा च दीर्घतरीभूतैव व्यङ्ग्यार्थ बोधयतु कुतस्तयोर्विरामः शब्दस्य विरम्य व्यापारस्तु भवन्मतव्यङ्ग्यबोधन एव ममापीष्ट इति वाच्यम्, तथासति दीर्घतराभिधाव्यापारेणाऽपीष्टसिद्धौ लक्षणोच्छेदापत्तेरुक्तत्वात्। वाच्यवाचकव्यतिरेकेणाऽपि व्यङ्ग्यव्यञ्जकभावानभ्युपगमे असाधुत्वादीनां नित्यदोषत्वं कष्टात्वादीनामनित्यदोषत्वमिति विभागरणमनुपपन्नं स्यात्। तथा हि असाधुत्वादयो हि सर्वदैव हेया इति नित्यदोषाः। कष्टत्वादयस्तु श्रृङ्गाराद्यभिव्यक्तिप्रतिकूलतया शृङ्गारादावेव हेया अपि रौद्रादौ व्यङ्ग्येऽनुगुण तया उपादेया एवेत्यनित्यदोषाः। इत्थञ्च व्यङ्ग्यव्यञ्जकभावे प्रातिकूल्यानुकूल्याभ्यामेव नित्यानित्यदोषविभागः। स च व्यञ्जनाया असत्वे नोपपन्नः। वाच्यवाचकभावे हि कष्टत्वादीनामौदासीन्येन सर्वत्रैव दुष्टत्वमदुष्टत्वं च अन्यतरन्नियतमेव स्यात्।

अभिधादिभ्यो व्यञ्जनाया भेदमुपपाद्य अभिधेयार्थादपि व्यञ्जनाया भेदमुपपादयति—किञ्चेति।

## रुचिरा

ननु मैवं भूद् व्यङ्ग्यस्य वाच्यस्यार्थस्य च नाममात्रे विवादास्पदत्वम्, किन्तु—'यत्परः शब्दः स शब्दार्थः' इत्युक्तदिशा सर्वेषां शब्दानां कार्यपरत्वस्य विचिकित्सितत्वे रसात्मकवाक्यस्वरूपस्य काव्यस्य शब्दानां च निरतिशयसुखास्वादस्वरूपरसाविभिन्नतायां सहृदयहृदयसाक्षिकायां, तेषां पुनः कार्य्यपरतया, कार्यस्य च निरतिशयसुखास्वादानतिरेकितया परैरभ्युपगतो व्यङ्ग्यो रसोऽपि कुतो न शब्दार्थः? इति प्रकारान्तरेण व्यङ्ग्यस्य वाच्यात्मकतामभिदधातामन्विताभिधानवादिनां मतं परिहर्त्तुं तत्र तावत् तदेवोपपादयति—**यत्पुन**रित्यादिना।

**पुनः**। निरुक्तदिशा रसस्य व्यङ्ग्यमात्रस्य वा वाच्यतायां परिहृतायां सत्यामित्यर्थः। 'प्रकारान्तरेण पुनस्तामेव समादधानैः कैश्चि'दिति शेषः। "**पौरुषेयं** लौकिकम्। पुरुषाणामिदमिति तथोक्तम्। 'शुभ्रादिभ्यश्च।' ४/१/१२३ इति ढक्। **च** तथा। **अपौरुषेयमलौकिकम्**। न पौरुषेयमिति तथोक्तम्। **सर्वं** यावदस्ति तावत् तत्प्रकारकमिति यावत्। **एव**। **वाक्यं** पदोच्चविशेषः। **कार्यपरं** कार्ये पर परायणं तत्कर्तुं समुद्युतमिति

यावत् कार्यं च वाक्यस्यार्थबोधनम्, तथा च-अर्थबोधने सदैववोद्यतमिति निष्कृष्टम्। 'अस्ती'ति शेषः। **अतत्परत्वे** तत्परत्वाभावे। तत्परत्वं च कार्यपरत्वं, तथा च-कार्यपरत्वाभावे इति निष्कृष्टम्। **उन्मत्तवाक्यवत्** उन्मत्तोऽऽसमाहितचेताः। 'उन्मत्तो मुचुकुन्दे स्याद्धत्तूरोन्मादयुक्तयोः।' इति मेदिनी। 'तत्र तस्येव।' ५/१/११६ इति वतुप्। **अनुपादेयत्वादुपादेयताहानेरित्यर्थः।** 'हेतो'रिति शेषः। अत्रेयमनुमितिः—सर्वविधं वाक्यं कार्यपरम्, यदेवं न भवति, तत्तथा न भवति यथोन्मत्तस्य वाक्यम्। इति। अयं पुनर्निष्कर्षः—वाक्यं सर्वं द्विविधं, लौकिकमलौकिकं चेति।

लौकिकं, तावत् 'गामानय, अश्वं बधाने'त्यादि। अलौकिकं पुनः—'विश्वजिता यजेत, शुन्धध्वं दैव्याय कर्मणे'इत्यादि। वाक्यं च योग्यताऽऽकाङ्क्षाऽऽसत्तिशालीपदसमूहः। इत्थं द्विविधमप्यशेषजातीयं वाक्यं कार्यपरम्। यतः—'गामानय' इति 'अहरहः सन्ध्यामुपासीते'ति च वाक्यं यथाक्रमं 'गवानयन' रूपकार्यपरं प्रतिदिनं सन्ध्योपासनरूपकार्यपरं च। यत् पुनर्वाक्यं, वस्तुतः (वाक्याभासरूपः पदोच्चय इति यावत्) कार्यपरं न स्यात् तद्वाक्यमपि, न, अनुपादेयत्वात्; यथोन्मत्तजल्पितम्। अतः—यद् वाक्यं भवति तत् कार्यपरमुपादेयं च, यथा 'घटमानये'त्यादि। यन्न वाक्ये, तत्कथं कार्यपरमुपादेयं च न स्यात्, यथोन्मत्तजल्पितं 'पपे'त्यादि। इति **च** पुनः। **ततस्तस्मात्** कारणात्। 'वाक्यं सर्वं कार्यपरं भवत्येवे'ति नियमात्। **काव्यशब्दानां** काव्यसम्बन्धिनां शब्दानाम्। **निरतिशयसुखास्वादव्यतिरेकेण** निरतिशयो यदपेक्षयाऽतिशयितो न भवति, सोऽसौ सुखास्वादो यस्मात् स निरतिशयसुखास्वादस्तस्य स एव वा व्यतिरेक इति तेन। 'हेतुने'ति शेषः। **प्रतिपाद्यप्रतिपादकयोः**। प्रतिपाद्यः श्रोता। प्रतिपादकः पुनर्वक्ता। प्रतिपादनं प्रतिपादस्तत्र साधुस्तस्मै हित इति वेति प्रतिपाद्यः। 'तत्र साधुः।' ४/४/९८ इति 'तस्मै हितम्।' ५/१/५ इति वा यत्। ननु 'पादार्थाभ्यां च।' ५/४/२५ इति यत्, तेन तादर्थ्ये एव केवलादेव पादाशब्दाच्च तस्य विधानात्। प्रतिपादयति निरूपयति शब्देन खाभितार्थमिति प्रतिपादकः। 'ण्वुल्तृचौ।' ३/१/१३३ इति ण्वुलि 'युवोरनाकौ।' ७/१/१ इत्यकः। **प्रवृत्त्यौपयिकप्रयोजनानुपलब्धेः** प्रवृत्त्यौपयिकं यत् प्रयोजनं तदनुपलब्धेः कारणादित्यर्थः। प्रवृत्तिः काव्यस्य श्रवणे पाठे वा चित्तवृत्तेः प्रावण्यम्। उपायादनपेतमौपयिकम्। 'विनयादिभ्यष्ठक्।' ५/४/३४ इति ठक्। 'उपायो ह्रस्वं च' इति ह्रस्वम्। प्रवृत्त्युपायकारणीभूतप्रयोजनवत्ताया अनुपस्थितेः कारणादिति भावः। **निरतिशयसुखास्वादो** निरतिशयं यत् सुखं तदास्वाद इति। **एव**। ननु यत्किञ्चित्सुखास्वाद इत्यर्थः। **कार्य्यत्वेन** सम्पाद्यत्वेन तद्रूपेणेति यावत्। **अवधार्यते** निश्चीयते। 'वाक्यं तावत् सर्वमेव कार्यपरम्।' इति नियमोऽस्त्येव, अतः काव्यशब्दाः कार्यपराः स्युस्तेषामपि वाक्यत्वापायात्। यस्य पुनः कार्यपरत्वं, तस्य पुनरुपादेयत्वमपीत्यपि सिद्धान्तः। अथ काव्यवाक्यस्य किं कार्यं किं च तत्परत्वं तस्येति गवेषणीयम्। तत्र, कार्यं प्रयोजनम्। काव्यं च रसात्मकं वाक्यम्। तस्यैतस्य पुनः कार्यं (प्रयोजनं) **निरतिशयसुखास्वादेन** निरतिशयं यत् सुखं तदास्वाद इति। **एव**। ननु यत्किञ्चित्सुखास्वाद इत्यर्थः। **कार्य्यत्वेन** सम्पाद्यत्वेन तद्रूपेणेति यावत्। **अवधार्यते** निश्चीयते।' वाक्यं तावत् सर्वमेव कार्यपरम्।' इति नियमोऽस्त्येव, अतः काव्यशब्दाः कार्यपराः स्युस्तेषामपि वाक्यत्वानपायात्। यस्य पुनः कार्यपरत्वं, तस्य पुनरुपादेयत्वमपीत्यपि सिद्धान्तः। अथ काव्यवाक्यस्य किं कार्यं किं च तत्परत्वं तस्येति गवेषणीयम्। तत्र, कार्यं प्रयोजनम्। काव्यं च रसात्मकं वाक्यम्। तस्यैतस्य पुनः कार्यं (प्रयोजनं) निरतिशयसुखास्वादेन स्वमुपासीनस्याभिमुखीकरणम्, तस्य रसान्वयव्यतिरेकानुविधायित्वात्। रसश्च निरतिशयसुखास्वादात्र व्यतिरिक्तः। आयातं चैवं रसस्यापि वाक्यकार्यत्वम्। वाक्यकार्ये च वाच्यमेवेत्युभयमतम्। तथआ सति रसस्य वाच्यत्वे स्वतः सिद्धं

व्यङ्ग्यमात्रस्यापि वाच्यत्वम्। व्यङ्ग्यत्ववाच्यत्वयोश्चाव्यतिरेके नाममात्रे विवाद:। सत्येवं किमर्था व्यञ्जना? इति। न चैतत् प्रपाणासिद्धमभिधानमित्याह—"**यत्परो** यस्मिन् बोधनीयत्वेच्छाविषयीभूतेऽर्थे इति यावत् पर: कारणत्वेनाभिमत इति तथोक्त:। यत्तात्पर्यमुद्दिश्य प्रवृत्त इत्यर्थ:। **शब्द:** पदरूपो वाक्यरूपो वा। **स:। शब्दार्थ:** शब्दस्यार्थस्तात्पर्यमिति तथोक्त:।' **इतिन्यायात्**। इत्येवम्भूतात् सिद्धान्तादित्यर्थ:।' **इतीत्येवम्। यत्। उक्तं** प्रतिपादितम्।

इत्येवमन्विताभिधानवादिनां रसादेर्व्यङ्ग्यत्वनिरसनाय युक्तयन्तरं प्रतिपाद्य सहेलं खण्डयितुमाह—**तत्रे**त्यादि।

**तत्रे**'ति यत्पुनरुक्त'मिति प्रदर्शिते इति यावत्। **प्रष्टव्यं** जिज्ञास्यम्। किमित्याह-इदं तथाऽभिमतम्। **तत्परत्वं** तस्मिन् बोध्येऽर्थे इति यावत् परं तत्त्वम्। नाम प्रसिद्धम् तेन रूपेण प्रसिद्धमिति यावत्। किं किंस्वरूपमिति यावत्। **तदर्थत्वं** तस्य शब्दस्यार्थ इति तस्याभाव: तत्त्वम्। **वा। तात्पर्यवृत्त्या** तद्द्वारेति भाव:। **तद्बोधकत्वं** तस्यार्थस्य बोधकस्तत्त्वम्। **वा**। 'अस्ती'ति शेष:। अत्र 'वे'त्याधिक्यं समुच्चयार्थम्। अत एव 'दील्लीश्वरो वा जगदीश्वरोवे' इत्यादौ 'वे'ति 'शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्।' इत्यादौ च 'चे'त्यधिकं सङ्गच्छते। आद्ये तत्परत्वं नाम तदर्थत्वमिति पक्षस्वीकारे। **विवादो** विपरीतो वादोऽभिधानम्। **न** नैव। कुत इत्याह—**व्यङ्ग्यत्वे** 'व्यञ्जनावाद्युक्तदिशा रसादे'रिति शेष:। **अपि** 'सिद्धान्तिते' इति शेष:। **तदर्थताऽनपायात्** तस्य शब्दस्यार्थ इति तद्भावस्तत्ता तस्या अनपायस्तस्मात्। व्यङ्ग्यताया अपि शब्दार्थताऽपरिहानात्। **तु** पुन: **द्वितीये** 'तत्परत्वं नाम तात्पर्यवृत्त्या तदर्थबोधकत्व'मिति पक्षस्वीकारे इत्यर्थ:। इयं 'यया तदर्थबोधकत्वं से'ति शेष:। **तात्पर्याख्या** तात्पर्यमित्याख्या नाम यस्या: सा। **वृत्ति:। का** किंस्वरूपा। **अभिहितान्वयवादिभि**र्नैयायिकैरिति शेष:। **अङ्गीकृता** सिद्धान्तत्वेनाभिमता। **वा**ऽथवा। **तदन्या** प्रसिद्धायास्तात्पर्याख्याया वृत्तेरन्या भिन्नेति यावत्। आद्ये 'अभिहितान्वयादिभिरङ्गीकृतैव तात्पर्याख्या वृत्तिरस्माकमप्यभिमते'ति पक्षस्वीकारे। **उत्तरं** तदपसिद्धान्तताप्रदर्शकं समाधानम्। **दत्तं** 'संसर्गमात्रे परिक्षीणा न व्यङ्ग्यबोधिनी'त्यनेनेति शेष:। **एव** नात्र कश्चित् संशय:। **तु**। अथ। **द्वितीये**'प्रसिद्धायास्तात्पर्यवृत्तेर्भिन्नैव तात्पर्यवृत्तिरिय'मिति पक्षस्वीकारे इत्यर्थ:। 'सती'ति शेष:। **नाममात्रे** नामैवेति तस्मिन्। **विवादो** विरुद्धो वाद:। कुत इत्याह—**तन्मते** तदिदं मतमिति तस्मिन्। प्रसिद्धायास्तात्पर्यवृत्तेरपेक्षया विलक्षणां तात्पर्यवृत्तिमभ्युपगच्छतां मते इति भाव:। यत्तु टिप्पणीकारै:—'तदिति अभिहितान्वयादिमतेऽपी'ति व्याख्यातम्। तदापातरमणीयमम्। 'तदन्या वे'त्युक्तदिशाऽभिहितान्वयादिभिरङ्गीकृतायास्तात्पर्यवृत्तेरपेक्षया विलक्षणायास्तात्पर्यवृत्ते: स्वीकारस्यैव द्वितीयत्वेनाभिमतत्वात्। अभिहितान्वयवादिनां मते तुरीयवृत्तेरनङ्गीकाराच्चेति। **अपि**। किं पुन: साक्षाद् व्यञ्जनामङ्गीकुर्वतां मते इति भाव:। **तुरीयवृत्तिसिद्धेस्तुरीया** चतुर्थी या वृत्तिरिति तत्सिद्धे:। वाच्यलक्ष्यतत्तात्पर्यरूपार्थबोधाय वृत्तित्रयमङ्गीकृत्य प्रतीयमानस्यार्थस्य पुनर्बोधायापरां तात्पर्यवृत्तिमुरीकुर्वतां मते स्वत एव तुरीयाया वृत्तेरङ्गीकृतत्वात्।

अत्रायं पर्यालोक:—'शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणानुपश्यति। श्रोतुशच प्रतिपन्नत्वमनुमानेन चेष्टया॥ अन्यथाऽनुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम्। अर्थापत्त्याऽवबोधेच्च सम्बन्धं त्रिप्रमाणकम्॥' इति नयेन 'यज्ञदत्त! गामानयेत्यादे: प्रयोजकवृद्धवाक्यप्रयोगात् प्रयोज्यवृद्धे देशान्तरात् सास्नादिमन्तमर्थं सन्निधायितुमानयति सति प्रतिपत्सु: 'एतेनैतस्माद् वाक्यदेष स्यादर्थ: प्रतिपन्न:' इति तदीहितानुपदमनुमाय प्राक् तत्र प्रतिपद्यते। अथ 'यज्ञदत्त! गां बधान। अश्वमानये' त्यादे: प्रयोजकवृद्धवाक्यप्रयोगात् प्रयोज्यवृद्धे सास्नादिमन्तमर्थं बध्नति,

एकशफत्वादिमन्तमर्थं सन्निधापयति च सति स्वमावापोद्वापाभ्यां तस्यतस्य शब्दस्य तंतमर्थमभ्युपद्यते। अतः प्रवृत्तिनिवृत्तिहेतुभूतमेव प्रयोगयोग्यं वाक्यमिति निर्विचिकित्सितं प्रतिभासते विवेकदृशाम्। तस्मात्-वाक्यत्वमुपगतानां वाक्यान्तरेण चासम्पृक्तानामेवान्वितैः पदार्थैः समं सङ्केतस्य गृह्यमाणत्वादन्विता एव (परस्परं सम्बद्धा एव) पदार्था वाक्यार्थः, नतु पदैरभिधया प्रतिपादितानामर्थानामकाङ्क्षायोग्यताऽऽदिवशाद्भासमानः सम्बन्धरूपोऽप्यपदार्थोऽप्यर्थस्तात्पर्यवृत्त्या वाक्यार्थ इति बोद्धव्यम्। अन्वयबोधार्थ वृत्त्यन्तरकल्पनाया वैयर्थ्यदन्याय्यत्वाच्च। ननु-प्रत्यभिज्ञावशाद् वाक्यान्तरेणान्वीयमानानामपि पदानां 'तान्येवैतानी' ति प्रत्ययात् कलशामानय, अश्वमानयेत्यादिस्थले 'आनये' त्यादेः कलशान्वितत्वमशान्वितत्वमित्यादिरूपो नार्थः, किन्तूभयत्र साधारण्याय साधारण्यैनापरपदार्थान्वितानयनत्वादिनाऽपरपदार्थान्वितानयनादिरूप एवार्थः, सति चैवं निरुक्तस्थले कलशान्वयरूपविशेषान्वयावगमाय स्वीकार्यैव तात्पर्यवृत्तिरिते चेन्न। साधारण्यादपरपदार्थान्वितत्वेन सङ्केतेऽप्याकाङ्क्षादिवशात् समभिव्याहृततत्पदार्थान्वयबलाच्च तत्तदन्वितत्त्वरूपविशेषान्वयस्यैवावगमात्। सम्बन्धानां हि पदार्थानां साधारण्येन विशेषस्यैवावगमः।" इत्याहुरन्विताभिधानवादिनः। एतन्मते सर्वमभिधानं सर्वदैवान्वितं भवति, न चान्वयवगमापेक्षितं किमप्यभिधानमिति तात्पर्यवृत्तिरपि न स्वीकार्या। अथ तात्पर्यवृत्तिस्वीकर्त्तारः प्राहुः—प्रथमत एव न भवति किञ्चिदन्वितमभिधानम्, सर्वस्यैवाभिधानस्यानन्विततयोपस्थानं च निर्बाधं प्रत्यक्षसिद्धं च सूक्ष्मदृशाम्। इति तदर्थं काऽपि वृत्तिरवश्यं स्वीकर्त्तव्येति स्थिते तात्पर्याख्यैव, तस्यतस्याभिहितस्य तात्पर्यगवेषणार्थमेव वृत्तेरपि गवेषणीयत्वात्। इति। एवं चैते एवाभिहितान्वयवादिन इत्यप्यूहम्। भेदश्चात्र—'अन्वितं भवत्यभिधान' मिति, 'अनन्वितं भवत्यभिधान'मिति च। तत्र तावत्—'वाक्यं सर्वं, 'यत्परः शब्दः स शब्दार्थ' इति निरूपितदिशा स्वत एव कार्यपरं भवति, कार्यं च तात्पर्यरूपमेव। तदनुद्दिश्य तस्य प्रवृत्त्यसम्भवात्। अतः—व्यङ्ग्यमपि काव्यं तथाभूतमेव। तदीयवाक्यस्यापि वाक्यत्वेनाव्यतिरेकात् तथाभूतं कार्यपरम्। कार्यं चात्रालौकिकास्वादानुभावकत्वम्। अलौकिकत्वं च निरतिशयत्वम्। अनुभावकत्वं च मुखविकासादिना हर्षादेरिव तस्यतस्य प्रतीतिगमकत्वम्।' काव्यसम्बन्धिनोऽपि वाक्यस्यैवं तात्पर्य्यस्योल्लासकतया तस्य पुनः परेषां विचारदृशा व्यञ्जनाप्रतिपाद्यरूपत्वाद् व्यञ्जनाप्रतिपाद्यस्य च रसादिरूपत्वात्तस्यैवार्थभूतत्वे व्यञ्जनाया वृत्त्यन्तरत्वेन स्वीकारोऽपि न किञ्चित्करः प्रतिभासते।' इत्याहुरेके, अपरे पुनः 'अभिहितानि तावत् सर्वाण्येव पदानि भवन्त्यनन्वितानि, तदर्थं तात्पर्याख्याऽपराऽपि वृत्तिरेका स्वीकार्या। अपरा चाभिधाऽपेक्षया लक्षणाऽपेक्षया च द्वितीया न तु व्यञ्जनाऽपेक्षयाऽपि।

एतया पुनस्तस्यतस्यानन्वितमेव तंतमर्थमुद्बोध्य पुनरन्विततां नीत्वा तात्पर्यमुपस्थाप्यते, तदेव वाक्यार्थः। तात्पर्यं च यदुद्दिश्य वक्ताऽभिहितानि पदानि। एवं च व्यञ्जनां वृत्त्यन्तरत्वेन स्वीकृत्य तथा पुनः प्रत्यायितत्वेन स्वीक्रियमाणा रसादयोऽपि तात्पर्यान्नातिरिक्तस्व रूपा उपलभ्यन्ते, तदर्थं च तात्पर्याख्या वृत्तिः स्वीकृतैवेति तात्पर्यभिन्नाया वृत्तेः स्वीकारः किम्मूल इति त एव जानन्तु व्यञ्जनास्वीकर्त्तारः। एकतः कार्यसम्पत्तौ द्वितीयकल्पनाया वैयर्थ्याद् गौरवापत्तेश्च। न तात्पर्यवृत्त्यैव रसादि बोधे तदर्थं व्यञ्जनायाः स्वीकारः स्थाने।' इति। अत्रोच्यते—'कलशमानय, अश्वमानये' त्यादौ व्रस्तुत्वेन वस्तुपदवाच्यस्यापि कलशादेः कलशत्वादिना तदवाच्यत्वभिवाऽपरपदार्थान्वितानयनत्वादिनाऽऽ'नये'त्यादिपदवाच्यस्यापि कलशाद्यानयनस्य कलशानयनत्वादिना तदवाच्यत्वमेवेति सङ्केताविषये वाक्यबोध्धे प्राथमिकबोधविषयीकृतेऽपि अभिधाया व्यापारसञ्चारे सुतरां तत्पुनः प्रतीतिमात्रस्वरूपेऽर्थेऽभिधाया व्यापारासञ्चार इति साम्प्रतं तदर्थं व्यञ्जनायाः स्वीकारः। इति नान्विताभि-

धानवादिनां पक्षे युक्त:। इति। अत्र-काव्यप्रकाशकारा:। 'अनन्वितस्यैवाभिहितानां पदानामर्थस्याभिधेयत्वेऽन्वितत्वायापि वृत्त्यन्तरस्वीकारार्हत्वे तदनन्तरं प्रतीतियोग्योऽपि स्यादभिधाया व्यापार इत्यविचारितमेवाभिधानमभिहितान्वयवादिनाम्।' इति। कविराजा: पुन:—'भवन्तु सर्वेऽर्था: शाब्दा:, तावता व्यङ्ग्यताऽनापायात्। न च तात्पर्याख्यया वृत्त्या व्यङ्ग्यस्यार्थस्यपि प्रतिपत्तिरिति वक्तुं शक्यम्। तस्या: संसर्गमात्रे विरामात्। व्यञ्जनाया: पुनरप्यभ्युपेयत्वात्। तात्पर्यवृत्तिरन्यैव वाक्यार्थादनन्तरमुद्बुध्यमानेऽर्थे। तथा सति नाममात्रे विवाद:। वाक्यार्थावषमाय तात्पर्यवृत्तिमेकामङ्गीकृत्य व्यङ्ग्यार्थवगमायापरां स्वीकर्त्तुं प्रवृत्ते:। अपराया एव व्यञ्जनेत्यभिधीयमानत्वाच्च।' इत्याहु:—यत्तु—"नैमित्तिकानुसारेण निमित्तनि कल्प्यते।" इति न्यायाच्छब्दश्रवणान्तरं यावानर्थोऽवगतो भवति तावति सर्वस्मिन्नेव समुपस्थिततत्वाच्छब्द एव निमित्त'मित्याहु: केचित्। तत्र प्रष्टव्यम्—किमिदं निमित्तम्? जनकं वा, बोधकं वा; न जनकं, शब्दस्य बोधकत्वात्, न चापि बोधकम्, तत्वासम्भवात्। बोधकं हि द्विविधं, बुद्धमबुद्धं चेति। न बुद्धं, सङ्केतमन्तरेणासम्भवात्, सङ्केतश्च अन्वितमात्रे, न त्वन्विते विशेषे, न वा प्रतीयमाने व्यङ्ग्ये। न चाबुद्धम्, तस्य बोधकत्वासम्भवात्। इति न यावत्तस्य नियतत्वं बुध्येत, तावन्न नैमित्तिकं बुद्धिविषयम्। न चैवं व्यङ्ग्योपस्थितिर्निर्निमित्ता स्यात्। इति वक्तुं शक्यम्। तत्र शब्दस्य बोधकत्वरूपेण निमित्तस्याभिप्रेतत्वात्। किन्तु—न तद् व्यञ्जनामन्तरा। शब्दस्यार्थनिमित्तताया व्यापारापेक्षितत्वात्। वाच्यलक्ष्यार्थयोरभिधालक्षणे व्यापारभूते इव व्यङ्ग्यार्थेऽपि कस्यापि व्यापारस्यावश्यकत्वे व्यञ्जनरूपस्यैव व्यापारस्यावश्यकत्वम्। अन्यथा—वृत्त्यन्तरमपि दत्तजलाञ्जलि: स्यात्। अत:—'गतोऽस्तमर्क: उदितश्चन्द्र:, पुत्रस्ते जात:, कन्या पुनर्गर्मिणी' त्यादौ तस्यतस्य कस्याप्यर्थस्य शाब्दस्य व्यञ्जनव्यापार एव बोधकन्निमित्तम्।" इति पुन: प्राहु: प्राञ्:।" इति।

ननु 'शब्दबुद्धिकर्मणां विरम्यव्यापारभाव' इति निरूपितदिशा मा भूत्तात्पर्यवृत्त्या विभावादे: संसर्गस्य रसादे: पुन: प्रकाशस्य क्रमात् प्रतिपत्ति:! किन्तु युगपत् स्यात्, तदर्थं च तस्या: स्वीकार: सम्मत एव सर्वेषाम्। एवं सति किमर्थं पुनर्व्यञ्जना। तदर्थमेवैत्या अपि स्वीकारात्। इति चेन्न। तात्पर्य्यवृत्त्या हि तत्र तावदनन्वितानि पदानि अन्वितत्तां नीत्वा तेषामखण्डं तात्पर्यं प्रत्युपस्थाप्यते, अथ व्यञ्जनया तदनन्तरं समुल्लसि किमपि प्रत्याप्यते तत्त्वम्। अत:-विभावादे रसादेश्च प्रतीयमानत्वातिरिक्ततयाऽनवस्थानात्तयो: संसर्गप्रकाशावपि तथाभूतविति नास्त्येव तत्र व्यञ्जनामन्तरेण कस्या अपि वृत्तेर्व्यापारसार्थक्यम्। इति तु दूरमास्ताम्। किन्तु-अत्र यौगपद्यमेव न सङ्गच्छते इत्यभिधत्सु स्तत्र तावदाशङ्कते **नन्वित्यादिना**।

**ननु** आशङ्क्यते। **तात्पर्यशक्त्या** तात्पर्यरूपया शक्त्या वृत्येति यावत्। वस्तुतस्तु-तात्पर्यस्य तात्पर्यवृत्त्या प्रतिपाद्यस्यार्थस्य शक्तिस्तद्रूपा व्यञ्जना नाम वृत्तिस्तयेत्यर्थ:। **विभावादिसंसर्गस्य** विभावादेरालम्बनोद्दीपनादे: संसर्गोऽन्वय: परस्परमनन्वितस्य तस्यान्विततयोपस्थितिरिति तस्य। **च** तथा। **रसादे:** श्रृङ्गारादे:। **प्रकाशनं** प्रकाश: प्रतिपत्तिरिति यावत्। **युगपदे**ककालावच्छेदेन। एव न पुन: क्रमात्। **अस्तु** स्यात्। 'लोट्च।' ३/३/१६२ इति सम्भावनायां लोट्। **इति चेदि**त्येवं यदि। 'प्रतिपद्यते'इति शेष:। तर्हि-**न** नैव। 'युक्त'मिति शेष:। कुत इत्याह-तयो: संसर्गप्रकाशनयो:। **हेतुफलभावाङ्गीकारात्**। हेतुफलत्वयोरङ्गीकारात्। विभावादिसंसर्गस्य हेतुत्वेन रसादे: पुन: प्रकाशस्य फलत्वेनाभिप्रेतत्वादिति यावत्। ननु निष्प्रमाणे तयोर्हेतुत्वफलत्वे इति चेन्नेत्यभिप्रेत्याह—**यद्** यस्मात् कारणात्। **मुनि:**। 'भरत' इति शेष:। **'विभावानुभावव्यभिचारिसंयोगाद्** विभावस्यानुभावस्य

व्यभिचारिणश्च संयोगात् सम्बन्धविशेषात्। **रसनिष्पत्तिः**। रसस्य निष्पत्तिः समुल्लास इत्यर्थः। 'भवती'ति शेषः।' **इतीत्येवम्**। **आह** प्रतिपादयति। अत्र विस्तरः प्राग् द्रष्टव्य इति दिक्।

न च युगपद्भवयोरपि तयोः 'कार्यकारणभावोऽस्त्वि'ति वाच्यमित्याह—**सहभावे** इत्यादिना।

**च** पुनः। **सहभावे** विभावादिसंसर्गस्य रसादिप्रकाशस्य चेति शेषः। **सव्येतरविषाणयोर्वमदक्षिणश्रृ-ङ्गयोः**। सव्यं चेतरच्चेति सव्येतरे, ते इमे विषाणे श्रृङ्गे इति, तयोः। **इव** यथातया। **कार्यकारणभावः** कार्य्यत्वं कारणत्वं च। कुतः कस्माद्धेतोः। तयोरिति शेषः। तथा च—विभावादिसंसर्गस्य रसादिप्रकाशस्य च कार्यत्वं कारणत्वं च **कुतः** स्यात इत्यर्थः। हेतुमाह—**पौर्वापर्यविपर्ययात्** पूर्वं चापरं चेति, तयोर्भावः पौर्वापर्य्यं तस्य विपर्यस्तस्मात्। 'कारणात् कार्यमुत्पद्यते' इति नियमात् कारणस्य पूर्ववर्त्तित्वं कार्यस्य पुनस्तदपेक्षया पश्चाद्भावो नियत एवेति हेतोर्विभावादिसंसर्गस्य रसादप्रकाशस्य च यौगपद्यं न सङ्गच्छते। यौगपद्यं तु सव्यापसव्यविषाण-योरिव स्यात्। तयोः पुनः कारणत्वं कार्यत्वं च न कुत्रापि दृष्टचरे। अथैतयोः कारणत्वं कार्यत्वं च भगवता मुनिनाऽऽज्ञापितमेवेति तात्पर्यशक्त्यैतयोः सममुल्लासः स्यादिति कथमपि न सम्भवितुमर्हतीति भावः।

द्वितीये तु—नाममात्रे विवादः। तन्मतेऽपि तुरीयवृत्तिसिद्धेः।

नन्वस्तु युपदेव तात्पर्यशक्त्या विभावादिसंसर्गस्य रसादेश्च प्रकाशनम्—इति चेत्। न। तयोर्हेतुफलभावाङ्गीकारात्। यदाह मुनिः—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति। सहभावे च कुतः सव्येतरविषाणयोरिव कार्यकारणभावः। पौर्वापर्यविपर्ययात्।

'गङ्गायां घोषः' इत्यादौ तटाद्यर्थमात्रबोधविरताया लक्षणायाश्च कुतः शीतत्वपावनत्वादिव्यङ्ग्यबोधकता। तेन तुरीया वृत्तिरुपास्यैवेति निर्विवादमेतत्।

---

## विज्ञप्रिया

ननु लक्षणामूलव्यञ्जना नाद्रियताम्, एकयैव लक्षणया लक्ष्यव्यङ्ग्यार्थद्वयं बोध्यतामित्यत आह—गङ्गायामिति।

## लोचन

एवं पूर्वोक्तव्यङ्ग्यानामभिदातात्पर्यवेद्यत्वं निरस्य लक्षणवेद्यत्वं दूषयति—गङ्गायामिति। उपसंहरति—तेनेति तेन हेतुना।

## कुसुमप्रतिमा

अथ तर्हि लक्षणया एव, व्यङ्ग्यार्थबोधकताङ्गीक्रियतामित्याह गङ्गायामिति। तटाद्यर्थमात्रस्य बोधनात् परमेव विरतायाः "शब्दबुद्धिकर्म्मणाम्" इत्यादिनियमादिति भावः। तेन अभिधालक्षणातात्पर्य्याणां व्यङ्ग्यार्थबोधने सामर्थ्याभावेन। तुरीया व्यञ्जनानाम्नी चतुर्थी वृत्तिः उपास्यैव सर्वै राश्रयणीयैव।

अभिधादिभ्यो व्यञ्जनाया भेदं प्रतिपाद्यं अभिधेयार्थादपि व्यङ्ग्यार्थ स्यभेदं प्रतिपादयितुमाह किञ्चति।

## विमला

ननु लक्षणया रसादिबोध आस्तामित्याशङ्क्याह, गङ्गायामिति।—तुरीया—चातुर्थी। स्पष्टमन्यत्।

## रुचिरा

ननु मैवम्भूदभिधा तात्पर्यवृत्तिश्च व्यञ्जनास्थानपन्ने, किन्तु लक्षणा तु भवितुमर्हत्येव व्यञ्जनाया अपि कार्यकारिणी, 'गङ्गायां घोषः।' इत्यादावर्थान्तरस्य प्रत्यायिकत्वात्। अन्यथा 'मुख्यार्थबाधे तद्युक्तो ययाऽन्योऽर्थः प्रतीयते। रूढेः प्रयोजनाद्वाऽपि लक्षणाशक्तिरर्पिता॥' इत्यत्र 'ययाऽन्योऽर्थः प्रतीयते' इत्युक्तमनर्थकं स्यादिति चेन्नेत्याह—गङ्गायां गङ्गाऽऽख्यायां नद्याम्। **घोषो** ग्रामविशेषः।' **इत्यादौ** 'वाक्यप्रयोग' इति शेषः। **च तटाद्यर्थमात्रबोधविरतायास्तटं** तीरमादौ यस्य सः, तटादिरसावर्थ इति, स एवेति, तत्र विरतायाः। तीरादिरूपमर्थमेव बोधयित्वा विरतव्यापारायाः। **लक्षणायास्तन्नाम्न्या** वृत्तेः। **शीतत्वपावनत्वादिव्यङ्ग्यबोधकता** शीतलत्वपवित्रत्वादिरूपस्य व्यञ्जनया प्रतिपाद्यस्य तात्पर्यस्य प्रत्यायिकत्वम्। **कुतः**। कथं स्यात्। **तेन** 'हेतुने' ति शेषः। **तुरीया**

चतुर्थी व्यञ्जनाऽऽख्येति यावत्। **वृत्तिः**। उपास्याऽऽश्रयणीया। **एव** निश्चितम्। **इतीत्यस्मात्** कारणात् **एतत्** अभिधालक्षणातात्पर्यवृत्तित्रयव्यतिरिक्ता चतुर्थी व्यञ्जना वृत्तिरुपास्यैवेति कथनमिति यावत्। **निर्विवादं** सिद्धान्तभूतम्। 'अस्तीति' शेषः।

अत्रेदमभिहितं भवति-गङ्गा हि जलराशिरूपा तन्मध्ये ग्रामस्थितिर्निरान्तमसम्भववैवेति 'गङ्गायां (जलप्रवाहमध्ये) घोषः (ग्रामविशेषः)।' इति कथनमुन्मत्तप्रमत्तजल्पितायितमात्रं, नात्र काऽपि विप्रतिपत्तिः। सत्ये तत्सजातीये वाक्यप्रयोगस्थले वक्तुस्तात्पर्यान्तरमन्वेष्टव्यमिति भवत्यन्तः काऽपि चेतोवृत्तिः सचेतोमात्रस्य। अथावगम्यते-मुख्यार्थस्तावद्बाधज्ञानपराहत् एवअतोऽत्र लक्षणा। मुख्यार्थबाधे एव तस्याः प्रवृत्तेः। किन्तु तत्सम्बद्धोऽर्थोवश्यमत्रास्तीति पुनर्गवेषणावसरे 'गङ्गायां गङ्गातीरे' इत्यर्थो द्रागारोहति प्रज्ञाविषयताम्। अथ—'गङ्गातीर' इत्यनभिधाय 'गङ्गाया'मित्येव किमर्थमुक्तमिति पुनस्तत्तत्त्वान्वेषणे कर्त्तव्ये तदाश्रितस्य शीतलत्वं पावनत्वं च बोधयितुमिति गृहीतव्यम्। ननु 'गङ्गातीरे घोष' इत्युच्यमानेऽपि किं घोषस्य शीतलत्वादि न बोद्धुं शक्यम्। यद्'गङ्गायां घोष' इत्येवोक्तम्। इति चेत् तत्रातिशयिततत्वार्थमित्यवधार्यम्। तथा च—'गङ्गाया' मित्यस्य'गङ्गाऽधिकरणकतीरवत्ते'तिलक्षमया प्रतिपादितोऽर्थः। अथ 'शब्दबुद्धिकर्मणां विरम्यव्यापाराभाव'इत्युक्तदिशा लक्षणाया विरतव्यापारायां 'नितान्तं शीतलत्वपावनत्वविशिष्टोघोषः' इति चमत्कुर्वतोऽर्थस्य प्रतीतिरभिधया लक्षणया वा तात्पर्येण वा भवितुमशक्यैव। 'घोष' इत्यस्य 'भीराणां ग्रामस्य सद्भाव'इत्यर्थमात्रस्याभिधेयत्वात् लक्षणायाश्च स्वत एव दूरमपसारितत्वाच्च। अतोऽसौ कयाऽपि तुरीययवृत्त्येति सिद्धान्ते व्यञ्जनयैवेति स्थितम्। न च 'ययाऽन्योऽर्थ'इत्युक्तदिशा 'गङ्गातीरे' इत्यस्मादर्थादिभन्नस्याप्यर्थस्य 'शीतलत्वादिविशिष्टं'इत्यात्मकस्यापि लक्ष्यत्वं कुतो नेति शङ्क्यम्। अन्यशब्देन मुख्यभिन्नस्यैवोपात्तत्वात् 'तद्युक्त' इति विशेषणस्य च तथैव सार्थक्यात्। इति दिक्।

**किंच—बोद्रधृस्वरूपसंख्यानिमित्तकार्यप्रतीतिकालानाम्।**
**आश्रयविषयादीनां भेदाद्भिन्नोऽभिधेयतो व्यङ्ग्यः ॥ २ ॥**

वाच्यार्थव्यङ्ग्यार्थयोर्हि पदतदर्थमात्रज्ञाननिपुणैर्वैयाकरणैरपि सहृदयैरेव च संवेद्यतया बोद्धृभेदः।

---

## विवृतिः

बोद्धृभेदमुपपादयति—वाच्यार्थेति। पदेति तदर्थेति पदाभिधेयेत्यर्थः। मात्रपदेन व्यङ्ग्यव्यवच्छेदः। वैयाकरणैरपीत्यादिना सहृदयपरिग्रहः। सहृदयैरेवेत्येकारेण वैयाकरणव्यवच्छेदः।

## विवृतिपूर्तिः

अभिधेयत इति। अभिधेयतो वाच्यार्थात्। क्वचित्तु 'अभिधीयते' इति पाठः। तत्र 'वाच्यात्' इत्यनुषज्यते॥

वैयाकरणैरिति। ध्वनिकारेणाप्युक्तम्—'शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते। वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम्॥' इति। यदि च वाच्यरूप एवासावर्थः स्यात्तर्हि वाच्यवाचकरूपपरिज्ञानादेव तत्प्रतीतिः स्यात्। अथ वाच्यवाचकलक्षणामात्रकृतश्चमाणां काव्यतत्त्वार्थभावनाविमुखानां स्वरश्रुत्यादिलक्षणमिव प्रतीतानां गन्धर्वलक्षणविदामगोचर एवासावर्थः' इति व्याख्यातं च॥

## विज्ञप्रिया

ननु अभिधा लक्षणा च दीर्घतरीभूतैव व्यङ्ग्यार्थ बोधयतु, कुतस्तयोर्विरामः? शब्दस्य विरम्यव्यापारस्तु भवन्मते व्यङ्ग्यबोधन इव स्वीकार्य इत्यतो वैधर्म्यादेव वाच्यव्यङ्ग्यबोधकव्यापारयोर्भेदं साधयति। किञ्च—बोद्धृस्वरूपेति—बोद्धा, स्वरूपम्, संख्या निमित्तम्, कार्यम्, प्रतीतिः, कालः, आश्रयः, विषयश्चेत्यादीनां च भेदादित्यर्थः। एषां भेदं स्वयमेव दर्शयिष्यति। भिन्नोऽभिधेयतो व्यङ्ग्य इति—यद्यपि अभिधाव्यञ्जनयोरेव भेदः प्रदर्शनीयः, तथापि तद्भेदप्रदर्शनेनैव तद्बोधकस्यापि भेदः प्रदर्शित इत्याशयेन इत्थमुक्तम्।

तत्र बोद्धृभेदं दर्शयति—वाच्यार्थव्यङ्ग्यार्थयोरिति। वाच्यार्थस्य वैयाकरणैर्वेद्यतया, व्यङ्ग्यार्थस्य च सहृदयैरित्येवं यथासंख्यमन्वयः। वैयाकरणा हि पदस्य पदवाच्यार्थस्य ज्ञानमात्रे निपुणाः, न तु व्यङ्ग्यार्थज्ञाने।

## लोचन

व्यङ्ग्यस्याभिधेयत्वे दूषणान्तरमवतारयति—किञ्चेति। भेदादित्यस्य बोद्भित्यादौ प्रत्येकमन्वयः। तेन बोद्रधृभेदात्, स्वरूपभेदात्, संख्याभेदादित्यादि बोद्धव्यम्।

## कुसुमप्रतिमा

वाद्धिति। बोद्धा अवगन्ता, स्वरूपं स्वाभावः संख्या एकत्वद्वित्वादिः, निमित्तं कारणम्, कार्य्यं फलम्, प्रतीतिर्ज्ञानम्, कालः क्षणशच तेषाम्। तथा आश्रय आधारः, विषय उद्देश्यम्, आदिशब्दाशक्तुरभिप्रायश्च तेषाम्, भेदात् व्यङ्ग्यः अर्थः अभिधेयतः अभिधाप्रतिपाद्यदर्थात् भिन्नः। अत्राभिधेयत इत्युपलक्षणम्, तेन लक्ष्यार्थात् तात्पर्य्यार्थाश्च भिन्न इत्यपि बोध्यम्।

कारिकोक्तक्रमेण भेदान् दर्शयितुं प्रथमं बोद्धुंभेदं दर्शयति वाच्यार्थेति। अत्र यथा संख्येनान्वयः। मात्रपदेन व्यङ्ग्यार्थव्यावृत्तिः अपिशब्दात् सहृदयैरपि। एवशब्दाद्वैयाकरणव्यवच्छेदः। तथा च काव्यज्ञसहृदया वाचकलक्षकशब्द तदुभयार्थं मात्रज्ञानसमर्था वैयाकरणाश्च उभय एव वाच्यार्थं बुध्यन्तं, व्यङ्ग्यार्थन्तु केवलता-दृशसहृदया एव जानन्तीति बोद्धभेद इति सरलार्थः। वाच्यार्थव्यङ्ग्यार्थ यीकत्वे ईदृशो भेदो न सम्भवतीत भावः। अन्वत्राप्येवं भावः उह्यः।

## विमला

अभिधेयव्यङ्ग्योरन्योऽन्यं भेदमुपपाद्य, तैनेव अभिधातः, व्यञ्जनायाः भेदमुपपादयति, किञ्चेत्या-दिना।—वोद्धा च स्वरूपञ्च सङ्ख्या च निमित्तञ्च कार्य्यञ्च प्रतीतिष कालश्चेति तेषाम्; तत्र बोद्धा—ज्ञाता, स्वरूपं—विधिरूपं, निषेधरूपं वा; सङ्ख्या—प्रसिद्दा, निमित्तं—कारणं, कार्य्यं—प्रसिद्धं, प्रतीतिः,—निश्रचयः, कालः,—पौर्वापर्य्यम्। आश्रयविषयादीनाम्—आश्रयञ्च विषयश्रचेति तावादौ येषां तेषाम्। एततदनन्तरं चकारो द्रष्टव्यः। तत्र आश्रयः,—अवलम्बनं विषयः,—प्रतिपाद्योऽर्थः, [आदिना देशौचित्यादीनां ग्रहणं] भेदात्—भिन्न-त्वात्, व्यङ्ग्यः,—व्यञ्जनया बोध्योऽर्थः, भिन्नः,—भेदं प्राप्तः, अभिधीयते। अत्र "वाच्यात्" इत्यस्यानुषङ्गः ["अभिधेयतः" इति पाठे—वाच्यार्थात् इति तदर्थो ज्ञेयः]। अयं भावः,—बाध्यस्य अर्थस्य यो बोद्धादिः, सोऽन्य एव, यश्च व्यङ्ग्यार्थस्य, स चान्यः; इति तयो परस्परमनैक्यात् स्याद्भेदो विदितचरः। यद्वा,—व्यङ्ग्योऽर्थो बोङ्दिभेदादनेकविधता यथा प्रतिपद्यते, न तथा वाच्यीऽर्थः; तस्मात् स्फुट एव बोद्धवाद्यनेकविधत्वाद् व्यङ्ग्य अनेकविधत्वं, वाच्यस्य च बोद्धवाद्यनेकविधत्वाभावादेकविधत्वम् इति भावः।

बीङ्धृभेदं दृर्शयति, वाच्यार्थव्यङ्ग्यार्थयोरिति।—पद्दतदर्थमात्रस्य—पटपदार्थमात्रस्य, [मात्रपदेन व्यङ्ग्यव्यवच्छेदः] ज्ञाने निपुणैः वैयाकरणैः अपि [एतेन सहृदयानामपि परिग्रहः] सहृदयैः एव [एतेन वैयाकरणव्यवच्छेदः] च संवेद्यतया —बीङ्व्यतया, बीङ्धृभेदः, वैयाकरणा वाच्यार्थमेव, न तु व्यङ्ग्यार्थं बीङ्धुं शक्नुवन्ति, काव्यतत्त्वं सूक्ष्मतयोद्बोङ्धुं शक्ताः सहृदयास्तु उभयमेव वाच्य व्यङ्ग्य चेति द्विविधमप्यर्थं बीङ्धुं प्रभवन्ति, इति वाच्यार्थबीङ्गारी वैयाकरणाः, व्यङ्ग्यार्थबीङ्गारस्तु सुहृदया एवेति स्फुटं बीङ्धृभेद इति भावः। [ध्वनिवक्ता गीवर्द्धनसूरिणाऽपि तथोक्तम्:—"शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते। वेद्यते स हि काव्यार्थस्तत्त्वज्ञैरेव केवलम्॥" इति। "यदि च वाच्यरुप एवासावर्थः स्यात्, तर्हि वाच्यवाचकरूपपरिज्ञानाद्देव तत्रप्रतीतिः स्यात्। अथ वाच्यवाचकलक्षणमात्रक्वतश्रमाणां काव्यतत्त्वार्थभावनाविमुखानां स्वरः श्रुत्यादिलक्षणमिव प्रतीतानां गन्ध-र्वलक्षणविदामगीत्तर एवासावर्थः" इति च तद्व्याख्यायां राजानकैर्गोविन्दभट्टैः]। स्वरूपभेदं दर्शयति,—"भम धन्भिध !" इत्यादाविति।—विधिरूपे वाच्ये सतोत्यन्वयः, निषेधरूपतया, व्यङ्ग्यस्येति शेषः।निषेधरूपे वाच्ये सतोत्यन्वयः। स्वरूपभेदः, वाच्यव्यङ्ग्यार्थयोरिति पूर्वेणान्वयः।

## लक्ष्मी

बोद्धृस्वरूपेति। बोद्धा अवगन्ता, स्वरूपं प्रकृतिः, संख्या एकत्वादिः, निमित्तं कारणम्, कार्य फलम् उद्देश्यमिति यावत्, प्रतीतिर्बोधः, कालः समयश्च तेषां तथोक्तानाम्। तथा आश्रय आधारः, विषय उद्देश्यम्, आदिपदात् वक्तृप्रकरमादयश्च तेषां तथोक्तानाम्। तथा आश्रय आधारः, विषय उद्देश्यम्, आदिपदात् वक्तृप्रकरणादयश्च तेषां तथोक्तानाम् अनुक्तोऽपि चकारोऽत्रोहनीयः। भेदादित्यस्य बोद्ध्रधृत्यादौ प्रत्येकमन्वयः। तेन बोद्धृभेदात्, स्वरूपभेदात् संख्याभेदादित्यादि बोद्धव्यम्। भेदश्चैषां स्वयमेव दर्शयिष्यति। व्यङ्ग्यः अर्थः अभिधेयतः अभिधाप्रतिपाद्यदर्थाद् भिन्नः। उपलक्षणञ्चैतत् तेन लक्ष्यार्थात् तात्पर्यार्थाच्च भिन्न इत्यपि ज्ञेयम्।

तत्र कारिकोक्तदिशा भेदान् दर्शयितुं बोद्धृभेदं प्रथमं दर्शयति—वाच्यार्थव्यङ्ग्यार्थयोरिति। वाच्यार्थस्य वैयाकरणैर्वेद्यतया व्यङ्ग्यार्थस्य च सहृदयैरित्येवं यथासंख्यमन्वयः। प्रतिकूलतया श्रृङ्गारादावेव हेया अपि रौद्रादौ व्यङ्ग्येऽनुगुणतया उपादेया एवेत्यिनित्यदोषाः। इत्थञ्च व्यङ्ग्यव्यञ्जकभावे प्रातिकूल्यानुकूल्याभ्यामेव नित्यानित्यदोषविभागः। स च व्यञ्जनाया असत्त्वे नोपपन्नः। वाच्यवाचकभावे हि कष्टत्वादीनामौदासीन्येन सर्वनैव दुष्टत्वमदुष्टत्वं वा अन्यतरन्नियतमेव स्यात्, पदेति तदर्थेति पदाभिधेयेत्यर्थः। मात्रपदेन व्यङ्ग्यार्थव्यवच्छेदः। अपिना सहृदयपरिग्रहः। सहृदयैरेवेत्येवकारेण वैयाकरणव्यवच्छेदः। उक्तञ्च ध्वनिकृता— 'शब्दार्थशासनज्ञानमात्रेणैव न विद्यते। वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम्॥' इति।

## रुचिरा

अथ वृत्त्यन्तराद् व्यञ्जनाया व्यतिरेकं दर्शयितुं प्रवृत्तस्तत्र तावदभिधाया विभेदं दर्शयन् व्यञ्जनया प्रतिपाद्यमानोऽर्थः किमेकस्वरूप एव, आहोस्विदनेकस्वरूप इति जिज्ञासामप्यनुषङ्गतोऽपनयन् 'स्थूणानिखणन' न्यायेन पुनरेतस्या अङ्गीकारौचित्यं द्रढयितुमुपक्रमते-**किञ्चेत्यादिना**।

**किञ्च**—२९९ **बोद्धृस्वरूपसङ्ख्यानिमित्तकार्यप्रतिकालानाम्**। तत्र-बोद्धा श्रुत्वा तात्पर्यज्ञाता, स्वरूपं लक्षणं, सङ्ख्या बोद्धृणां यावन्मात्रतासूचिका गणना, निमित्तं हेतुः, कार्यमुद्देश्यम्, प्रतीतिर्ज्ञानम्, कालः समयः। च तथा **आश्रयविषयादीनामाश्रयो** विषय (पूर्वोपक्रान्तं वक्तव्यं तात्पर्यं वा) श्चेत्येतावादौ येषां (प्रकरणादीनाम्) तेषाम्। **भेदात्तद्रूपात्**, कारणात्। **व्यङ्ग्यो** व्यञ्जनया वृत्त्या प्रतिपाद्योऽ'र्थ'इति शेषः। **अभिधेयतो**ऽभिधेयोऽभिधया प्रतिपाद्योऽर्थस्त्स्मात्। 'पञ्चम्यास्तसिल्।' ५/३/७ इति तसिल्। **भिन्नः** पृथग्भूतः। 'भवती'ति शेषः। क्वचित्। 'अभिधीयते'इति पाठः। तत्र 'वाच्या'दित्यध्याहृत्य भिन्नो व्यङ्ग्योऽभिधीयते इत्यन्वयः॥ २९४॥

अत्रायम्भावः—वाच्यो व्यङ्ग्यश्च नैकात्मानौ। तयोरनेकान्तिकत्वात्। यो व्यङ्ग्यः स नाभिधेयः, यश्चासौ न सः। तथाहि—'संयोगो विप्रयोगश्च साहचर्यं विरोधितो। अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः। सामर्थ्यमौचिता देशः कालो व्यक्तिः स्वरादयः। शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥' इति निरूपितदिशा संयोगादयोऽभिधाया नियन्तारः। तदेतया प्रतिपाद्या अप्यथा नियमितात्मान एव न पुनरनियतस्वरूपा जातु। संयोगादिभिर्नियमनानन्तरमपि वक्तृबोद्धव्यादितात्पर्यवशात् समुल्लसन्तः सर्वेऽप्यर्था नाभिधेयाः, किन्तु व्यङ्ग्या एवेति न तिरोहितं विदुषाम्। अतः—संयोगादयः शब्दस्यार्थविशेषस्मृतिहेतुभूता एकत्राभिधाया नियन्तारः, परत्र त एव व्यञ्जनायाः सञ्चारयितारः तमस्ततेरपनेतारो हि तेजस्ततेः प्रवर्त्तयितारो भवन्ति। स्पष्टश्चैव-

मभिधाव्यञ्जनयोर्वाच्यव्यङ्ग्ययोश्च भेदः। अभिधाया नियन्तु शक्यत्वादभिधेया अपि नियन्तुं शक्याः, व्यञ्जनायाः पुनः सर्वदाऽधीशानत्वाद् व्यङ्ग्या अपि सर्वेऽधीशाना एवेत्येवोच्यते—'यो व्यङ्ग्यः स नाभिधेयः, यश्चारौ न सः।' इति। अथ-अभिधेयस्य बोद्धृप्रभृतयोऽन्य एव व्यङ्ग्यस्य पुनरन्य एव। अभिधेयः पुनः शब्दसम्बन्धिसङ्केतमात्रेण प्राप्तस्वारूप्यः, व्यङ्ग्यस्तु न तथाभूत इति कथमनयोः सारूप्यं सम्भाव्येन ? तथा—ऽभिध्योऽभिधातुं शक्यः, व्यङ्ग्यः पुनरनुभवदृशा विज्ञातुमेव शक्यः, नतु साक्षाद्वचसा प्रत्यक्षीकर्त्तुमिति महदान्तर्यमेतयोः। एवमभिधेयो नानवच्छेद्यः, व्यङ्ग्यः पुनः सर्वदाऽनवच्छेद्य एव, अभिधेयस्तथाऽऽस्वादि तास्वाद एव व्यङ्ग्यस्तु प्रतिक्षणं समुपपद्यमानानास्वादितास्वादोद्रेकः। न ततस्तयोरैक्यम्। अभिधेयस्तथा यस्मिन् सङ्केतितोऽभिधायकः शब्दस्तस्मिन् परिज्ञाते परिज्ञातो भवति, व्यङ्ग्यः पुनस्तदनन्तरमेव केषाञ्चित्। तदेवं वाच्यव्यङ्ग्ययोः सामञ्जस्यं सारूप्यं च न केनापि सचेतसाऽभिधातुं शक्येते। इति दिक्।

अथैतदेव विवृणोति—**वाच्यार्थव्यङ्ग्यार्थयो**रित्यादिना।

**पदतदर्थमात्रज्ञानिपुणैः** पदानि सुबन्तास्तिङन्ता वा शब्दविशेषास्तदर्थास्तेषाम् (पदानाम्) अर्था इति ते चेति, पदतदर्था एवेति, तस्य ज्ञानं तत्र निपुणैः। पदानां सिद्धिमेव पुनः सङ्केतितमेवार्थं जानद्भिरित्यर्थः। **वैयाकरणै**र्व्याकरणाभिज्ञैः। व्याकरणमधीते वेद वेति तैः। 'तदधीते तद्वेद।' ४/२/५९ इति साधु। **अपि** किं पुनस्तार्किकैकैर्मीमांसकप्रमुखैश्च। 'सम' मिति शेषः। यद्वा—'वृद्धो यूना' इत्यादिनिर्देशवशात् तत्र विनाऽपि तद्योगं तृतीया। **च** तथा। **सहृदयैर्मार्मिकैः। एव** नतु परैरप। **वाच्यार्थव्यङ्ग्यार्थयो**र्वाच्यार्थस्य व्यङ्ग्यार्थस्य चेत्यर्थः। **संवेद्यतथा** सम्यग्रूपेण विज्ञेयतया। 'हेतुने'ति शेषः। 'हेतौ।' २/३/२३ इति तृतीया। **बोद्धृभेदो** ज्ञातृभेदः। उक्तं च ध्वनिकारैः—'शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते। वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलैः॥' इति। एवं च—शब्दार्थशासनज्ञानमात्रेण वाच्यार्थस्यैवाभिज्ञातोल्लासान्न तेषां व्यङ्ग्याभिज्ञत्वम्। इत्यतोऽतिरोहित एव बोद्धृभेदः। सहृदया हि व्यङ्ग्यार्थाभिज्ञा न पुनस्तदितरे। एतेषां वाच्यार्थज्ञानमात्रेण कृतार्थत्वात् व्यङ्ग्यार्थज्ञाद्धर्या तु नितान्तं वञ्चितत्वात्। सुष्ठूक्तं केनापि कविना—'कविताऽऽस्वादसमये पदव्युत्पत्तिमात्रधीः। नीवीमोक्षस्य वेलायां यथा क्षौमार्घचिन्तकः॥' इति। अथ बोद्धृभेदो यथा मम—'सुन्दरि ! चिरेण तव परिरम्भायाव स्थितोऽस्म्यहं स्पृहयन्। त्वं पुनरवेक्ष्य बत मां नियताऽम्बुजमुद्रणे जाता॥' इति। अस्यायं पुनरर्थः—हे सुन्दरि ! तव परिरम्भायालिङ्गनाय स्पृहयन् चिरेण चिरादहमवस्थितोऽस्मि। त्वं पुनर्मामवेक्ष्य दृष्ट्वाम्बुजस्य मुद्रणरूपे खेलने नियता दत्तचित्तेति बत कष्टम्॥ इति अत्र हि—वैयाकरणो वक्ता, तद्विचारेण नात्र प्रतिभासते चमत्कारः। श्रुत्वा पुनस्तत्तात्पर्यमन्वेषमाणस्य सहृदयस्य पुनर्विचारेण 'सूर्यास्तपर्यन्तं सह्यतां तद्वियोग' इति प्रतिभासते 'एव चमत्कारः। इति स्पष्टो बोद्धृभेदः।

'मम धम्मिअ—' (२०९ पृ.) इत्यादौ क्वचिद्वाच्ये विधिरूपे ।

निषेधरूपतया, क्वचित् 'निःशेषच्युतचन्दनम्—' इत्यादौ निषेधरूपे विधिरूपतया च स्वरूपभेदः ।

---

## विवृतिः

स्वरूपभेदमुपपादयति—भम धम्मिअ इत्यादि विधिरूपे वाच्ये सतीत्यन्वयः । निषेधरूपतेयति । व्यङ्ग्यस्येत्यादि । निषेध रूप इति । वाच्ये इत्यन्वयः । स्वरूपभेद इति । वाच्यार्थव्यङ्ग्यार्थयोरिति पूर्वेणान्वयः । एवमग्रेऽपि 'निःशेष—' इत्यत्र लक्षणावादिमतेनेदमुदाहरणमुक्तम् ।

## विवृतिपूर्तिः

क्वचिदिति । क्वचिद्वाच्ये विधिरूपेऽनुभयरूपो व्यङ्ग्यः । यथा मम—'याहि ममैवैकस्या भवन्तु निःश्वासरोदितव्यानि । मा भूवन्हृतमनसस्तवापि तस्या वियोगेन ॥' इत्यत्र न विध्यभावरूपो निषेधो नापि विध्यन्तरम् । क्वचिद्वाच्ये निषेधरूपेऽनुभयरूपः । यथा मम—'अयि वदनेन्दुविकशप्रशमिततितिमिरोत्करे निवर्तस्व । प्रत्यूहयसि परासामप्यभिसारं हताशे किम् ॥' प्रितममभिसरन्तीं कांचिन्नायिकां प्रति तद्गृहाभिमुखमागच्छतः प्रियतमस्योक्तिरियं प्रत्यभिज्ञानच्छलेन । अतएवात्मप्रत्यर्भिपनार्थं हताशे इति नर्मवचनम् । परासामप्यभिसारं प्रत्यूहयसि, तवाभिमतसिद्धिर्भविष्यतीति का प्रत्याशा । ततश्च मदीयं वा गृहमायाहि त्वदीयं वायामीति तात्पर्यादनुभयरूपो व्यङ्ग्य इति प्राचामाशयः ॥

अनेक इति । प्रपञ्चस्तु प्राक् ॥ (५७ पृ.)

## विज्ञप्रिया

स्वरूपभेदं दर्शयति—भमेति । अत्र भ्रमणविधिर्वाच्योऽर्थः । अभ्रममं निषेधो व्यङ्ग्यः । निषेधरूपे इति—तदन्तिकेऽगमनं निषेधो वाच्यः । तदन्तिके गमनविधिर्व्यङ्ग्य इत्यर्थः । विधिरूपे वाच्ये ज्ञाते सति निषेधरूपतया व्यङ्ग्यो ज्ञायत इत्यर्थः । एवमुत्तरत्रापि ।

## लोचन

'निःशेषच्युतचन्दनम्' इत्यादौ "गतासीत्" इत्यर्थस्य व्यङ्ग्यत्वमङ्गीकृत्य विधिरूपत्वोक्तिः ।

बोद्‌वादीत्यादिशब्देन वक्तृप्रकरणादयः ।

## कुसुमप्रतिमा

स्वरूपभेदं दर्शयति भम इति । 'भ्रम' इति विधिरूपे, व्यङ्ग्यार्थतावेलावान्तु 'न भ्रम' इति निषेधरूपतया पर्य्यवसानादि शेषः, स्वरूपभेद इत्यन्वयः । निषेधरूपे 'तस्याधमस्यान्तिकं न गतासि' इति गमनभावरूपताया पर्य्यवसानात् स्वरूपभेदः वाच्यार्थव्यङ्ग्यार्थयोः स्वभाववैषम्यम् ।

## विमला

एवमग्रेऽपि। अत्र च "धार्मिक ! भ्रम" इति वाच्यार्थः विधिरूपः, व्यङ्ग्यार्थस्तु निषेधरूपः, इति वाच्यव्यङ्ग्योः स्वरूपं सुमहत् भिन्नमिति भावः। "निःशेष—" इति लक्षणावादिमतेनोदाहरणम्।

## लक्ष्मी

स्वरूपभेदमुदाहरति—'भम धम्मि अ' इत्यादि 'भ्रम' इति विधिरूपे वाच्ये सतीत्यन्वयः। व्यङ्ग्यार्थ-प्रतीतिसमये तु अभ्रमणमिति निषेधरूपतया पर्यवसितादिति शेषः, स्वरूपभेद इत्यत्र सम्बन्धः। निःशेषमिति। अत्र निषेधरूपे 'तस्याधमस्यान्तिकं न गतासि' इति गमननिषेधरूपे 'वाच्ये' इत्यन्वयः विधिरूपतया व्यङ्ग्यार्थबोधस-मये 'तदन्तिकमेव रन्तु गतासि' इति पर्यवसितात् स्वरूपभेदः स्वभाववैषम्यं वाच्यार्थव्यङ्ग्यार्थयोरिति पूर्वेणा-न्वयः। क्विचद् वाच्ये विधिरूपे अनुभयरूपो यथा—

**'व्रज ममैवेकस्याः भवन्तु निःश्वासरोदितव्यानि।**
**मा तवापि तया विना दाक्षिण्यहतस्य जनिषत॥'**

अत्र व्रजेति विधिः। न प्रमादादेव नायिकान्तरसंगमनं तव, अपि तु गाढानु(क)रागात् येनान्यादृङ्मुखरागः गोत्रस्खलनादि च केवलं पूर्वकृतानुपालनात्मना दाक्षिण्येनैकरूपत्वाभिमानेनैव त्वमत्र स्थितः, तत्सर्वथा शठोऽसीति गाढमन्युरूपोऽयं खण्डितनायिकाभिप्रायोऽत्र प्रतीयते। न चात्र विध्यभावः (व्रज्याभावः) निषेधः, विध्यन्तरं वा व्यङ्ग्यम् अपि तु गाढमन्युरूपो नायिकाभिप्राय ति व्यङ्ग्यस्यानुभयरूपत्वं बोध्यम्।

क्वचिद्वाच्ये निषेधरूपेऽनुभयरूपो यथा—

'प्रार्थये तावत्प्रसीद निवर्त्तस्व मुखशशिज्योत्स्ना विलुप्ततमोनिवहे।
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे !'

काचिद्रभसा प्रियतममभिसरन्ती तद्गृहाभिमुखमागच्छता तेनैव हृदयवल्लभेनैवमुपश्लोक्यते प्रत्यभिज्ञा-च्छलेन। अत एवात्मप्रत्यभिज्ञाज्ञापनार्थमेव 'हतांशे' इति नर्मवचनम् अन्यासां च विघ्नं करोषि तव चेप्सितलाभो भविष्यतीति का प्रत्याशा ? अत एव मदीयं वा गृहमागच्छ त्वदीयं वा गच्छावेत्युभयत्रापि तात्पर्यादनुभयरूपो वल्लभाभिप्रायश्चाष्ट्वात्मा व्यङ्ग्य इति प्राचामभिप्रायः।

## रुचिरा

**'भम धम्मिअ—' इत्यादौ**। 'भम धम्मिअ ! वीसत्थो सो सुणओ अज्ज मारिओ देण। गोलाणइ कच्छकुंडगवासिणा 'दरिअसींहेण॥' इत्यादावित्यर्थः। क्वचित्। कस्मिंश्चित्। 'उदाहरणप्रसङ्ग' इति शेषः। विधिरूपं 'भ्रम धार्मिक ! विश्रब्धः—' इत्याद्युक्तदिशा भ्रमणनिर्भयतचाभिधानात्मकविधानरूपे इत्यर्थः। **वाच्ये** वाच्यार्थे। निषेधरूपतया 'नात्र पादविन्यासोऽपि कदाचन विधेयः।' इत्यात्मकनिषेधरूपेण। **स्वरूपभेदः**। स्वरू-पस्य भेदः। तथा च—वाच्यस्य विधिरूपतया व्यङ्ग्यस्य पुनर्निषेधात्मकतया वाच्यार्थव्यङ्ग्यार्थयोः स्वरूपतो भेदः क्वाचित्क इति निष्कृष्टम्। यथा वा मम—'अयि ललने ! तव लोचनपातः कस्यास्तु न प्रमोदाय। येनायम-नुगृहीतो लोकान्तरमुद्यतो लब्धुम्॥' इति। अस्यायमर्थ—'अयि ललने ! येन लोचनपातेनानुगृहीतोऽयं जनो लोकान्तरं स्थानान्तरं लब्धुमुद्यतो लब्धुम्॥' इति। अस्यायमर्थः—'अयि ललने ! येन लोचनपातेनानुगृहीतोऽयं

जनो लोकान्तरं स्थानान्तरं लब्धुमुद्यतो जातः, स तव लोचनपातः कस्य प्रमोदाय नास्तु न स्यात्। इति। अत्र हि, लोचनपातोऽयं नितान्तं स्पृहणीयस्ते इति विधिरूपो वाच्योऽर्थो निषेधरूपः सन् व्यङ्ग्यपर्यवसाययीति स्पष्टं वाच्यार्थव्यङ्ग्यार्थयोः स्वरूपतो भेदावस्थानम्। **च** पुनः। **क्वचित्**। उदाहरणप्रसङ्ग इति शेषः। **'निश्शेषच्युतचन्दनम्—' इत्यादौ**। 'निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।

मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे ! वापीं स्नातुमितो गताऽसि, न पुनस्तस्याधमस्यान्तिकम्॥' इत्यादावित्यर्थः। **निषेधरूपे** 'वाच्ये' इति शेषः।' **विधिरूपतया**। 'व्यङ्ग्यस्येति' शेषः। **स्वरूपभेदः**। तथा च 'तस्य सन्निधिं न गता' इति निषेधरूपस्य वाच्यस्य तस्यैव सन्निधिं गता' इति विधिरूपेण व्यङ्ग्यदशायां पर्यवसानात् स्पष्ट एव वाच्यार्थव्यङ्ग्यार्थयोः स्वरूपतो भेदः क्वाचित्को विधिरूपस्य निषेधपर्यवसायीति निष्कृष्टम्। यथा वा मम—'वामे ! मैव निपातय मयि दृष्टिं मन्मथासिकारूपाम्। अपनय दूरं त्वरितं शरणागत एष ते दीनः॥' इति अस्यायमर्थः—हे वामे कुटिले ! मन्मथस्यासिकां छुरिकां तत्स्थानापन्ना दृष्टिं मयि मेव निपातय, किन्तु—त्वरितं दूरमपनय, एषोऽहं दीनस्य शरणागतः॥' इति। अत्र हि—नयननिपातदूरीकरणरूपनिषेधस्य नयननिपातवश्यकताऽत्मकविधिरूपेण व्यङ्ग्यदशायां पर्यवसायित्वम्। अथात्र टिप्पणीकाराः प्राहुः—'क्वचिद् वाच्ये विधिरूपेऽनुभयरूपो व्यङ्ग्यो यथा मम—"याहि ममैवैकस्या भवन्तु निःश्वासरोदितव्यनि। मा भूवन् हृतमनसस्तवापि तस्या वियोगेन॥" इत्यत्र न विध्यभावो निषेधो, नापि विध्यनन्तरम्। क्वचिद्वाच्ये निषेधरूपेऽनुभयरूपो यथा मम "अयि वदनेन्दुविकाशप्रशमितमिरोत्करे निवर्त्तस्व। प्रत्यूह्यसि परासामप्यभिसारं हताशे किम्॥" प्रियतममभिसरन्तीं काञ्चिन्नायिकां प्रति तद्गृहाभिमुखमागच्छतः प्रियतमस्योक्तिरियं प्रत्यभिज्ञानच्छलेन। अत एवात्मप्रत्यभिज्ञापनार्थं 'हताशे' इति नर्मवचनम्। परासामप्यभिसारं प्रत्यूहयसि, तवाभिमतसिद्धिर्भविष्यतीति का प्रत्याशा। ततश्च मदीयं वा गृहमायाहि, त्वदीयं वा यामीति तात्पर्यादनुभयरूपो व्यङ्ग्यः।' इति। यथा वा मम—'सुन्दरि ! सुधानिधानं नयननिपातं निरूपयान्यत्र। एष तु सदा कृतार्थः स पुनर्भूयात् परं सुभगः॥' इति। अत्र हि—'अन्यत्र दृष्टिं निपातये'ति विधिरूपवाच्यः, व्यङ्ग्यः पुनः—त्वां निषेवमाणोऽप्ययं नाद्य यावत् कृतार्थस्त्वया विहितो जातो वा, स केवलं पुनस्त्वामसेवमामकृतार्थोऽवश्यम्भावीति। तथा च—वाच्यस्य न विधिपर्यवसायित्वं न वा निषेधपर्यवसायित्वम्, स्वरूपतो भेदस्तु जागरूक एव। यथा पुनर्मम—'शशिमुखि ! सुदृष्टिसुधया जीवय मा मां कृताऽपराधं ते। अपराधिरोधिजन्यं न जहीहि यशः स्वकीयमुल्लसितम्॥' अत्र हि 'कृतापराधं मां मैव जीवये'ति जीवनदाननिषेधरूपस्य वाच्यस्य यदि कृत एवानेन तवापराधस्तर्हि मां मां जीवय यदि तु न तर्हि मृतप्रायोऽपि जीवितव्य एवायम्, अन्यथाऽपराधिनाशनजन्ययशो रक्षणापेक्षया निरपराधिनाशनजन्यं शारणागतपरित्यागजन्यं चायशस्त्वमपि लप्स्यसे इति व्यङ्ग्यदशायां निषेधानिषेधो भयसाधारण्येन पर्यवसायीति स्वरूपतो भेदः।

'गतोऽस्तमर्कः' इत्यादौ च वाच्योऽर्थ एक एव प्रतीयते व्यङ्ग्यस्तु तद्‌बोधादिभेदात् क्वचित् 'कान्तमभिसर' इति 'गावो निरुध्यन्ताम्' इति 'नायकस्यायमागमनावसरः' इति संतापोऽधुना नास्ति' इत्यादिरूपेणानेक इति संख्याभेदः।

---

## विवृतिः

संख्याभेदमुपपादयति—गतोऽस्तमिति। बोद्धा प्रतिपाद्यः। आदिना प्रकरणादीनां ग्रहणम् भेदाद्वलक्षण्यात्।

## विज्ञप्रिया

संख्याभेदं दर्शयति—वाच्याऽर्थः इति। एष इति—व्यङ्ग्य इत्यर्थः।

## लोचन

ननु गतोऽस्तमर्क इत्यादिवाक्ये प्रकरणादिरूपज्ञापकान्तरसहायेनैव बोधितस्य कान्तमभिसरेत्यादि व्यङ्ग्यार्थस्य कथं शब्दप्रमामबोध्यत्वम्, शब्दैकसमधिगम्यत्वाभावाद, इति चेद् केचिदाहुः—यथा शब्दबोधितस्य क्वचिद् वाच्यस्यार्थस्य सत्यासत्यत्वजिज्ञासायां सत्यत्वमनुमानविषय इति शब्दानुमानप्रमाणयोर्भिन्नविषयत्वम्। व्यङ्ग्यास्तु एक एव शब्दप्रमाणेन प्रकरणादिबोध्य इति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम्। तत्र का गतिरिति चेत्—तत्रैवं सङ्गतिः। यथा प्रकरणादेर्विष्णवाद्यनेकाभिदेयस्याऽपि हर्याद्यभियेयावच्छेदकत्वं तथानेकव्यञ्जकस्यापि शब्दस्य एकव्यङ्ग्ये प्रकरणादिसाहाय्यस्येति कर्तव्यतारूपतया शब्दस्याङ्गत्वं स्वाङ्गस्य चाव्यवधायकत्वं न्यायसिद्धमेवेति न शब्दप्रमामाव्याकोपः। इह च यद्यपि वाक्यार्थस्य प्रतीत्यन्तरं तस्य सत्यासत्यत्व जिज्ञासायां सत्यत्वं प्रमाणान्तरेणानुमानेनैव बोध्यते, तथापि सत्यासत्यवजिज्ञासातः पूर्वमुपपन्नाया वाक्यार्थप्रमाया अप्रमाभावात् शब्दैकसमधिगम्यत्वाच्च न शब्दप्रामाण्यव्याकोपः। न हि चक्षुरादिना प्रतीतौ सत्यासत्यत्वप्रत्यक्षप्रामाण्यं व्याकुप्येत।

तथेति। न खलु एतावतैव व्यङ्ग्यानामभिधालक्षणाबोध्यत्वं नास्ति, अपि तु इतरथापीत्यर्थः।

## कुसुमप्रतिमा

संख्याभेद दर्शयति गत इति। एकः पूर्णस्वास्तगमनरूपः। अङ्गान्तु अथ इति पूर्वे णान्वयः। तस्य गतोऽस्तमर्कः इति वाक्यस्य बोद्धा श्रोता आदिशब्दात् वक्रादि च तेषां भेदात् अनेक इति परेणान्वयः। क्वचित्, अभिसारिकारूपबोद्धुस्थले—कान्तमभिसरति. क्वचित् नृत्योबोद्धस्थलं—वनादौ विमुक्तागावो गोष्ठेनिरुध्यन्तामिति। क्वचिद्विरहिणीरूपबोदु स्थले सखीरूपवक्तृस्थले वा 'नायकस्यायम्' इत्यादि। आदिशब्दस्य गुरुरूपवक्तृस्थले 'इदानीं सन्ध्यामुपास्स्व' इत्यादिरूपस्य च ग्रहणम्।

## विमला

सङ्ख्याभेदं दर्शयति, गत इति ।—बोद्धा—प्रतिपाद्य:, [ आदिना प्रकरणादीनां ग्रहणम् ] अत्र एक एव वाच्यार्थ:, व्यङ्ग्यस्तु बहुविध इति भाव: ।

## लक्ष्मी

संख्याभेदमुदाहरति—गतोऽस्तमिति । एक:सूर्यास्तगमनरूप: । व्यङ्ग्यस्तु 'अर्थ' इति पूर्वेण सम्बन्ध: । तस्य 'गतोऽस्तमर्क:' इति वाक्यस्य बोद्धा प्रतिपाद्य: आदिपदात् प्रकरणादि च तेषां भेदात् वैलक्षण्यात् 'अनेक' इत्युत्तरेण सम्बन्ध: । क्विचत्—अभिसारिकारूपबोद्धस्थले—कान्तमभिसरेति । क्वचिदनुचरबोद्धस्थले—वनादौ विसृष्टा गावो निरुध्यन्तामिति । क्वचिद्वियोगिनीरूपबोद्धस्थले—सहचरीरूपबोद्धस्थले वा—'नायकस्यायमागमने'त्यादि । आदिपदेन—क्वचित् सेनापतिरूपबोद्धस्थले—'शत्रूणां हठेनावमदर्दनावसर:' इति । क्विचत् वासकसज्जारूपबोद्धस्थले—'प्राप्तप्रायस्ते प्रेयान्' इति । क्वचिद्गुरुरूपवक्तृस्थले—"सान्ध्यो विधिरूपक्रम्यताम्' इति । क्वद्रिदूरं जिगमिषुरूपबोद्धस्थले—'दूरं मा गा:' इति । अधिकं प्रदीपादौ स्पष्टम् ।

## रुचिरा

**च** पुन: । **'गत:** प्राप्त । **अस्तं** प्रकाशतिरोधानम् । **अर्क:** सूर्य: ।**' इत्यादौ** । 'उदाहरणप्रसङ्ग' इति शेष: । **एको** द्वितीयत्वानवच्छिन्न: । **एव** । **वाच्यो**ऽभिधाप्रतिपाद्य: । **अर्थ:** । **प्रतीयते** प्रतिभासते । **व्यङ्ग्य:** । 'अर्थ' इति शेष: । **तु** पुन: । **तद्बोद्धादिभेदा**त्तस्य (व्यङ्ग्यस्य) बोद्धा ज्ञातेति, स आदौ येषां (बोद्धव्यादीनाम्) तद्भेदात् । 'हेतो'रिति शेष: । **क्वचित्** । **'कान्तं** प्रियतमम् । **अभिसर** तत्सम्मुखीना भूयात् ।' **इती**त्येवं रूप: ।क्वचित्—**'गाव:** । **निरुध्यन्ताम**वरुद्धा: क्रियन्ताम् ।' इतीत्येवंरूप: । क्वचित् **'नायकस्य** प्राणप्रियस्य । **अयं** 'वर्त्तमान' इति शेष: । **आगमनावसर:** । समागमस्य समय: ।' **इती**त्येवंरूप: । क्वचित्—**'सन्तापस्ता**पोद्रेक: । **अधुना**ऽस्मिन् समये । **न** । नैव । **अस्ति** विद्यते ।**' इत्यादिरूपेणे**त्याद्यात्मकतया । **अनेको** नानाविध: । **इती**त्यस्मात् कारणात् । **सङ्ख्याभेद:** सङ्ख्यातो भेद: । यथा वा मम—'स्फुरति सुधानिधिरुच्चैर्गर्जति नीचै: पयोनिधिर्भूय: । अनयो: सुषमा सुमुखि ! स्मयमानं कं न हा कुरुते ।।' इति । अस्यायमर्थ:—सुमुखि ! सुधानिधिश्चन्द्र उच्चैरुपरिष्टादाकाशे स्थित: सन् स्फुरति, पयोनिधि: समुद्रो भूय: पुनर्नीचैरधस्ताद गर्जति । अनयो: सुषमा मनोरमा शोभा कं स्मयमानं प्रसन्नवदनं न कुरुते करोति ।' अपि तु सर्वमेवेति भाव: । इति ।

अत्र हि—सुधानिधानभूतं 'त्वदीयं वदनमप्राप्यमेव, अथापि मदीयमन्त: करणं समुद्र इव नितान्तमुच्छ्वलति, एतयो: पुनरेतामवस्थामवेक्षमाणा: सर्वेऽपि हसन्ति, हसन्तु नाम, किं तेन यद्यनयो: परस्परं प्रेमोद्गार ।' इति 'सुकृती उपरिष्टाद् विराजमानोऽपि न गर्जति, दुष्कृती पुनरध: पतितोऽपि निस्त्रपो गर्जति, इत्येतयोर्दशामवेक्षमाणस्य कस्य न मनसि पारमेश्वरं वैभवमुदेति इति नितान्तं स्पृहणीयसम्पत्तिकोऽप्यवदान्यो यद्युपरिष्टादपि विराजेत, तर्हि विराजतु नाम, किं तेन; य: पुनर्नितान्तं स्पृहणीयसम्पत्तिकोऽपि किन्तु परं वदान्य: स उच्चं पदमप्राप्तोऽपि उच्चं पदं प्राप्तस्यावदान्यस्य तस्यापेक्षया प्रसीदति तं विलोक्य च हसति गर्जति च; इत्यहो वदान्यतैव धन्यमूर्धन्या न तु सम्पन्नता जात्विति व्यवस्थां भावं वा मनस्याकलयत: कस्य न मनो हृष्यति' इति 'महान्तोऽगर्जन्तोऽपि जयन्ति, क्षुद्रा: पुनर्गर्जन्तोपि पतिता एवेत्येतयोरवस्थाभेदं स्मरन् कस्य न भवेन्मनश्चकितम्' इति वा व्यङ्ग्ये स्फुटमेव सङ्ख्ययाभिन्नत्वमेतयो: ।

वाच्यार्थः शब्दोच्चारणमात्रेण वेद्यः। एष तु तथाविधप्रतिभानैर्मल्यादिनेति निमित्तभेदः।

---

## विवृतिः

निमित्तभेदमुपपादयति—वाच्यार्थ इति। मात्रपदेन प्रतिभानैर्मल्यादिव्यवच्छेदः। शब्दोच्चारणं शब्दज्ञानम्, वाच्यार्थबोधे तस्यैव निमित्तत्वात्। एष तु व्यङ्ग्यार्थस्तु। प्रतिभेति। गूढार्थग्रहणशक्तिस्च प्रतिभा, तस्या नैर्मल्यं तादृशग्रहणप्रतिबन्धकीभूतदुरदृष्टासंसर्गः। आदिना वक्रादिवैशिष्टयज्ञानादिपरिग्रहः।

## कुसुमप्रतिमा

निमित्तभेदं दर्शयति वाच्यार्थ इति। एव व्यङ्ग्यार्थः। तथाविधा सातिशया या प्रतिभा सूक्ष्मबुद्धिस्तस्या नैर्मल्यं भ्रमादिसम्पर्कराहित्यम् आदिशब्दात् प्राक्प्रदर्शितप्रस्तावादिवैशिष्ट्यश्च तेन।

## विमला

निमित्तभेदं दर्शयति, वाच्यार्थ इति।—शब्दस्य, उच्चारण—ज्ञानं, तन्भावेण [भात्रशब्देन प्रतिभानैर्मल्या दिव्यच्छेदः] वाच्यार्थबोधे शब्दज्ञानस्यैव निमित्तत्वात्। एव तु व्यङ्ग्यास्तुः प्रतिभेति।—प्रतिभा—गूढार्थग्रहणशक्तिः, तस्या नैर्गल्य ताहश ग्रहणप्रतिबन्धकौभूतटुरहृष्टासंसर्गः, [आदिना वक्तादिवैशिष्टयज्ञानादिपरिग्रहः]।

## लक्ष्मी

निमित्तभेदमुपपादयति—वाच्यार्थ इति। शब्दोच्चारणं शब्दज्ञानं वाच्यार्थबोधे तस्यैव निमित्तत्वात्। मात्रपदेन प्रतिभानैर्मल्यादिनिरासः। एव तु व्यङ्ग्यार्थास्तु। तथाविधा या प्रतिभा गूढार्थग्रहणशक्तिस्तस्या नैर्मल्यं भ्रमादिसम्पर्कराहित्यम्, आदिदात् पूर्वप्रदर्शितवक्त्रयादिवैशिष्टयज्ञानादिकञ्च तेन तथोक्तेन।

## रुचिरा

**वाच्यार्थो**ऽऽभिधावृत्त्या प्रतिपाद्योऽर्थः। **शब्दोच्चारणमात्रेण** शब्दस्य पदस्योच्चारणमिति, तदेवेति तेन। **वेद्यो** ज्ञेयो ज्ञातुं शक्य इति यावत्। **एषः**। 'व्यङ्ग्यार्थ' इति शेषः। **तु** पुनः। **तथाविधप्रतिभानैर्मल्यादिना** तथाविधं विविधार्थोन्मेषशालिवत् प्रतिभानैर्मल्यं (प्रतिभाया बुद्धिविशेषस्य नैर्मल्यं निर्मलत्वं स्वच्छत्वमिति यावत्) इति तदादौ यस्य तेन। 'भावनाविशेषादिने'ति भावः। 'वेद्यः' इति पूर्वेणान्वयः। **इतीत्यस्मात्कारणात्**। **निमित्तभेदो** निमित्तान्निमित्तस्य वा भेदः। यथा मम—'सुमुखि मुखं तव रुचिरं स्फुरति चिराय स्मितं किरत् परेतः। राहोरपि यः प्रमुदे स तथा विदितः सुधानिधिर्लोके॥' इति। अत्र हि- उच्चारणमात्रेण वाच्यार्थस्य बोध्यत्वात् 'सहृदयरमणीयं तवैवाननं, सुधानिधिः पुनः सुहृदयेतरमात्ररमणीयः, अत एवैतस्मै स्पृहयति'इति व्यङ्ग्यस्य पुनरुच्चारणमात्रेण वेद्यत्वाभावात् सहृदयतयैव पुनर्वेद्यात् स्फुटो विमित्ततो भेदः।

प्रतीतिमात्रकरणाच्चमत्कारकरणाच्च कार्यभेदः ।

---

## विवृतिः

कार्यभेदमुपपादयति—प्रतीतीति । मात्रपदेन चमत्कारव्यवच्छेदः । वाच्यस्य प्रतीतिमात्रकरणात् । व्यङ्ग्यास्य तु सुखसंवलितप्रतीतेश्चमत्कारस्य च करणात्तयोः कार्यभेदः ।

## विज्ञप्रिया

कार्यभेदं दर्शयति—प्रतीतिमात्रेति—अभिधाया अभिधेयप्रतीतिमात्रं कार्यम्, व्यञ्जनायास्तु चमत्कारोऽपि कार्यम् ।

## कुसुमप्रतिमा

कार्य्यभंद दर्शयति प्रतीतीतिं । वाच्यार्थो विषयतया केवलं स्वज्ञानमेव जनयति, न पुनश्चमत् कारम्; व्यङ्ग्यार्थस्तु स्वज्ञानं चमत्कारञ्च जनयतीति कार्य्यस्य फलस्य भेदः ।

## विमला

कार्यभेदं दर्शयति, प्रतीतीति ।—वाच्यार्थ प्रतीतिमात्रं—बोधमात्रं, [मात्रपेदन चमत्कारव्यवच्छेदः] व्यङ्ग्यार्थे चमत्कारकरणं—चित्तोल्लासविधानम् ।

## लक्ष्मी

कार्यभेदमुपपादयति—प्रतीतिति । वाच्यार्थो विषयतया केवलं प्रतीतिमात्रमेव जनयति । मात्रपदेन चमत्कारनिरासः । व्यङ्ग्यार्थस्तु सुखसंवलितप्रतीतिचमत्कारश्च जनयतीति तयोः कार्यस्य फलस्य भेदः ।

## रुचिरा

**प्रतीतिमात्रकरणात्** प्रतीतिरेव न त्वभिधानमपीति यावत् तत्करणात्तत्कारित्वात् । **च** तथा । **चमत्कारकरणाच्च**मत्कारस्य करणं साधनमिति तस्मात् । 'हेतो'रिति शेषः । **कार्यभेदः** । वाच्यस्य प्रतीतिमात्रकारित्वाभावात्, चमत्कारकत्वाभावाच्चेति शेषः । यथा मम—'सुदति ! तवेदं वदनं कथमपि सदृशं न सोमबिम्बेन । यदमुष्य' विलीयापि स्फुरति तथैव प्रपूर्णा श्रीः ॥' इति । अस्यायमर्थः—'हे सुदति ! तवेदं वदनं मुखं सोमस्य चन्द्रस्य बिम्बेन सदृशं कथमपि नैवास्ति । यतः—अमुष्य सोमबिम्बस्य श्रीः शोभा विलीयापि तथैव पूर्ववत्प्रसन्ना सती स्फुरति न पुनरेतस्येति शेषः । इति । अत्र हि वाच्योऽर्थः स्फुट एव शाब्दः, व्यङ्ग्योऽर्थः पुनः 'पराभूयापि निस्त्रपस्येवाम्लायतः प्रत्युत हृष्यतस्तत एव स्वात्मना समं मृषैव स्पर्धिनश्चन्द्रमसो बिम्बस्य स्ववदनेन समं सादृश्यं सङ्गच्छेत कविभिस्तदुद्घोष्यते इति सर्वं मनस्येव स्मरन्ती पुनः पुनः स्मयसे'इति । असौ पुनः प्रतीयमान एव चमत्कुरुते । स्पष्टं चैवं वाच्यव्यङ्ग्ययोः कार्यभिन्नत्वम् । केवलरूपतया चमत्कारविरहितस्वरूपेण । 'वाच्यस्ये'ति शेषः । **च** पुनः । **चमत्कारितया** 'व्यङ्ग्यस्ये'ति शेषः । **प्रतीतिभेदः** प्रतीतिर्भेदः ।

केवलरूपतया चमत्कारितया च प्रतीतिभेदः ।

---

## विवृतिः

प्रतीतिभेदमुपपादयति—केवलेति । वाच्यप्रतीतेः सुखचमत्कारहीनतया, व्यङ्ग्यप्रतीतेस्तदुभयवत्तया भेदः ।

## कुसुमप्रतिमा

प्रतीतिभेदं प्रतिपादयति केवलेति । वाच्यार्थप्रतीतेः केवलरूपतया केवलंशाब्दबोधस्वभावतया, व्यङ्ग्यार्थप्रतीतेस्तु चमत्कारिशाब्दबोधस्वभावतया च हेतुना ।

## विमला

प्रतीतिभेदं दर्शयति, केवलेति ।—वाच्यप्रतीतेः सुखचमत्कारहीनतया, व्यङ्ग्यप्रतीतेस्तदुभयतत्तया भेदः ।

## लक्ष्मी

प्रतीतिभेदं दर्शयति—केवलेति । वाच्यार्थप्रतीतेः केवलरूपतया सुखचमत्कारहीनतया केवलं शाब्दबोधस्वभावयेत्यर्थः । व्यङ्ग्यार्थप्रतीतेस्तु—सुखचमत्कारशाब्दबोधस्वभावतया चेत्युभयवत्तया भेदः ।

## रुचिरा

'वाच्यस्य व्यङ्ग्यस्य चे'ति शेषः । यत्तूक्तं तर्कवागीशैः—'प्रतीतिभेदमुपपादयति—**केवलेति** । वाच्यप्रतीतेः सुखचमत्कारहीनतया, व्यङ्ग्यप्रतीतेस्तदुभयवत्तया भेदः ।' इति ।

तद्विशदीकरणाय । वस्तुतस्तु 'केवलरूपतये'त्यस्य 'चमत्कारशून्यतये'त्येवार्थः । चमत्कारस्यालौकिकाह्लादस्फुरणरूपपदार्थत्वात् । यथा मम—'अयि सुन्दरि ! तव वदनं स्मयमानं नैव कस्य मोदाय । अमृतनिधिस्तु प्रमुदे राहोः कवलीभवन्नपि सः ॥' इति । अत्र हि न वाच्यार्थस्तथा चमत्कुरुते यथा 'असहृदयस्य राहोरेव प्रमुदे चन्द्रः, चन्द्रस्यापि प्रमुदे स एवैकः, अन्यथा तत्कवलीभावनम सह्यमेव भवेत्, तव पुनर्वदनं स्मयमानमपि सुभगस्य सहृदयस्यैव प्रमुदे इति न कथमपि तयोः सादृश्यं, वदनस्य निरुपमत्वात्, चन्द्रमसोऽपि तदपेक्षया ततो न्यूनत्वात् ।' इति व्यङ्ग्योऽर्थः । स्फुटश्चैवं प्रतीतिभेदः ।

पूर्वपश्चाद्भावेन च कालभेदः ।

---

## विवृतिः

कालभेदमुपपादयति—पूर्वेति । वाच्यार्थव्यङ्ग्यार्थयोः प्रतीतिपौर्वापर्येम कालभेदः ।

## विज्ञप्रिया

कालभेदं दर्शयति—पूर्वपश्चादिति ।

## कुसुमप्रतिमा

कालभेदं प्रकटयति पूर्वेति । पूर्वं वाच्यार्थप्रतीतेः, पश्चात्तु व्यङ्ग्यार्थप्रतीतिरिति ।

## विमला

कालभेदं दर्शयति, पूर्वेति ।—वाच्यार्थव्यङ्ग्यार्थयोः प्रतीतिपीर्वापर्येण कालभेद इत्यर्थः, वाच्यार्थः प्रथमं प्रतीयते, व्यङ्ग्यार्थस्तु पर्यालोचनतया परत्र इति भावः ।

## लक्ष्मी

कालभेदं प्रतिपादयति—पूर्वेति । पूर्वं वाच्यार्थप्रतीतिः । पश्चाद्धि व्यङ्ग्यार्थप्रतीतिरिति कालभेदः ।

## रुचिरा

**च** तथा । **पूर्वपश्चाद्भावेन** । वाच्यस्य प्राक्कालिकत्वाद् व्यङ्ग्यस्य पुनरुत्तरकालिकत्वादित्यर्थः । **कालभेदः** कालस्य भेदः । यथा मम 'मानसगतमपि कमलं जयता, कुमुदं विकाशमानयता । सुतनु ! मुखं तव सदृशं भवतु कथं चन्द्रबिम्बेन ॥' इति । अत्र हि व्यतिरेको न वाच्यः, उपमानस्य विशेषवैर्व्यतिरिच्यमानत्वेऽपि तस्य साक्षादभिधानात् न च 'कथ' मित्येव व्यतिरेकमाह । इति वाच्यम् । तस्य सन्देहमात्राभिधायकत्वात्, उत्थापितस्य च सन्देहस्य निर्णीतार्थाभिधानेन निवर्त्तकत्वाभावात् । अतः श्लेषमूलको व्यतिरेको व्यङ्ग्यः । व्यङ्ग्यस्य वाच्य-पेक्षया पश्चात् प्रस्फुर्त्तिमत्त्वेन स्फुटः कालभेदः ।

**शब्दाश्रयत्वेद शब्दतदेकदेशतदर्थवर्णसंघटनाश्रयत्वेन चाश्रयभेदः ।**

## विवृतिः

आश्रयभेदमुपपादयति—शब्देति । वाच्यस्य शब्दाश्रयत्वेन शब्दमात्रसंबन्धित्वेन व्यङ्ग्यस्य शब्दादिसंबन्धित्वेन तयोराश्रयभेदः । तदेकदेशेति । शब्दैकदेशेत्यर्थः । स च प्रकृतिप्रत्ययोपसर्गादिरूपः । तदर्थेति । शब्दार्थेत्यर्थः ।

## विज्ञप्रिया

आश्रयभेदं दर्शयति—शब्दाश्रयत्वेनेति । अभिधायाः शब्दमात्रमाश्रयः । व्यञ्जनायास्तु शब्दतदेकदेशवर्णादिः ।

## कुसुमप्रतिमा

आश्रयभेदमुद्बोधयति शब्देति । शब्दाश्रयत्वेन वाच्यार्थस्य वाच्यतासम्बन्धेन पदघटककेवलशब्दवृत्तितया हेतुना । शब्दः पदघटकवर्ण समुदायः, तदेकदेशः पदघटकवर्णसमुदायस्य एको वर्णो द्वित्रयादयं वा वर्णाः, तदर्थः शब्दार्थः स च वाच्यार्थो लक्ष्यार्थो वा, वर्णो गुणाभिव्यञ्जकमक्षरम्, सङ्घटना रीत्यभि व्यञ्जिका वर्ण रचना च आश्रय आधारो यस्य तस्य भावस्तेन व्यङ्ग्यार्थस्य व्यङ्ग्यतासम्बन्धेन व्यञ्जकशब्दतदेव देशादिवृत्तितया च हेतुनेत्यर्थः ।

## विमला

आश्रयभेदं दर्शयति, शब्दाश्रयत्वेनेति ।—वाच्यस्य शब्दमात्राश्रयत्वेन—शब्दभात्रसम्बन्धित्वेन, व्यङ्ग्यस्य शब्दादिसम्बन्धित्वेन तयीराश्रयभेदः वाच्यार्थः केवलं शब्दमाश्रयति, व्यङ्ग्यार्थस्तु शब्दादिकमिति भावः । तदेकदेशेति ।—शब्दैकदेशेत्यर्थः स च प्रकृतिप्रत्ययोपसर्गादिरूपः, तदर्थः,—तस्य—शब्दस्य, अर्थः ।

## लक्ष्मी

आश्रयभेदं स्फुटीकरोति—शब्दाश्रयत्वेनेति वाच्यार्थस्य शब्दाश्रयत्वेन शब्दमात्रसम्बन्धित्वेन व्यङ्ग्यार्थस्य तु शब्दः पदघटकवर्णसमुदायः तदेकदेशः तादृशसमुदायस्य प्रकृतिप्रत्ययादिः, तदर्थः शब्दार्थः वाच्यलक्ष्यव्यङ्ग्यस्त्रिविधात्मकोऽपि वर्णः अक्षरम्, संघटना वर्णरचना च आश्रय आकारो यस्य तस्य भावस्तेन तथोक्तेन शब्दादिसम्बन्धित्वेनेत्यर्थः । तयोराश्रयस्य भेदः । यथा वा—

**रे रे चञ्चललोचनाञ्चितरुचे ! प्रमुच्य स्थिर-**
**प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि ?**
**मन्ये त्वं विहरिष्यते बत ! हता मुञ्चान्तराशामिमा-**
**मेषा कण्ठतटे कृता खलु शिला संसारवारन्निधौ ॥**

अत्र हि 'किं त्वं मन्यसे अहं विहरिष्ये' इत्यनुक्त्वा किं त्वं मन्ये अहं विहरिष्यसे' इत्युक्त्वा किं त्वं अहं विहरिष्यसे' इति पुरुषव्यत्ययनोक्तौ तदर्थ एव हासव्यञ्जक इति स्फुटं व्यङ्ग्यस्य वाच्यैकदेशाश्रितत्वमित्याश्रय-भेदः ।

## रुचिरा

**शब्दाश्रयत्वेन** 'वाच्यस्ये'ति शेषः । **च** पुनः । 'व्यङ्ग्यस्ये'ति शेषः । **शब्दतदेकदेशतदर्थवर्णसङ्घटनाश्र-यत्वेन** शब्दश्च तदेकदेशश्चेति तौ च तदर्थवर्णसङ्घटने चेति, तदाश्रयत्वेनेत्यर्थः । शब्दः पदम् । तस्य पदस्यैकदेश इति तदेकदेशः । तदर्थश्च वर्णसङ्घटना चेति तदर्थवर्णसङ्घटने तयोः पदपदांशयोरर्थ इति तदर्थः । वर्णानां सङ्घटना विन्यासविशेष इति वर्णसङ्घटना, रीतिरिति यावत् । **आश्रयभेदो** वाच्यस्य व्यङ्ग्यस्य चे'ति शेषः । यथा मम— 'वामे ! तव मुखमेतन्मृगमदतिलकं सुधाधरं रुचिरम् । अलकग्रस्तं पर्वणिपर्वणि काञ्चन रुचिं जयति ॥' इति । काञ्चन चान्द्रमसीम् । अत्र जयति न तु स्मारयतीति, व्यापारविश्रान्तिसामान्येऽपि लोकोत्तरतायास्तथैव समुद्रेकात् । वाच्यस्य वाक्याश्रयत्वेन, व्यङ्ग्यस्य 'जि'धातुरूपप्रकृत्यात्मपदैकदेशाश्रयत्वेन स्फुट एवानयोराश्रयभेदः । यथा पुनर्मम—'सुन्दरि ! तव वदनमिदं सङ्गतमपरं सुधानिधिं मन्ये । अधराधरीकृतरसं सकलं दृष्टं नयत् प्रमुदम् ॥' इति अस्यायमर्थः—'हे सुन्दरि ! अधेरणाधरीकृतरसं (अधरीकृता न्यग्भाविता रसा येन तत्) तद्वा-अधराधरीकृता रसा येन तत् (अधरेभ्योऽधरा इत्यधराधराः, न तादृशास्तादृशाः कृता इत्यधराधरीकृताः; अत्यन्तं तिरस्कृता इत्यर्थः) । सकलं कलाभिः सहितं, समस्तमिति वा दृष्टं दृष्टिविषयतामापन्नं लोकं प्रमुदं नयदिदं तव वदनमपरं द्वितीयं सङ्गतं प्राप्तं सुधानिधिं मन्ये ।' इति । अत्र हि—'ममैवोपभोगार्ह'मिति व्यङ्ग्यस्य वाच्याश्रितत्वास्फुट आश्रयभेदः । यथा वा मम—'मम सुखमेव सुधाऽधरमिति मानं मैव सुव्रते ! निवह । राहुरपि स्पृहयति ननु यस्मै, तं किं न जानासि ॥' इति । अत्रापि 'सुधानिधिना सदृशं तव वदनं ममोपभोग्यस्वरूप'मिति व्यङ्ग्यस्य वाच्याश्रितत्वास्फुट आश्रय-भेदः । यथा वा मम—'मुखमेव सुधाऽधरमिति मानं मैव सुव्रते ! निवह । राहुरपि स्पृहयति ननु यस्मै, तं किं न जानासि ॥' इति । अत्रापि 'सुधानिधिना सदृशं तव वदनं ममोपभोग्यस्वरूप'मिति व्यङ्ग्यस्य वाच्याश्रितत्वं, वाच्यस्य च वाक्याश्रितत्वम् । यथा पुनः—'रेरे चञ्चललोचनाञ्चितरुचे ! चेतः प्रमुच्य स्थिरप्रेमाणं महिमानमेणन-यनामालोक्य किं नृत्यसि । किं मन्ये विहरिष्यसे ? बत हतां मुञ्चान्तरशामिमामेषा कण्ठतटे कृता खलु शिला संसारवारान्निधौ ॥' इति । अत्र हि—'किं त्वं मन्यसे अहं विहरिष्ये' इत्यनभिधाय 'किं त्वं, मन्ये अहं विहरि-ष्यसे'इति पुरुषव्यत्ययेनाभिधाने तदर्थ एव हासव्यञ्जक इति स्फुटं व्यङ्ग्यस्य वाच्यैकदेशाश्रितत्वम् । यथा पुनर्मम—'वन्दारुमन्दारममन्दभूतिमानन्दकन्दं नवकन्दकान्तम् । दरं दरन्तं भगवन्तमन्तः परिस्फुरन्तं विनतोऽस्म्यनन्तम् ॥' इति । अत्र हि माधुर्यवती वर्णसङ्घटना भगवद्विषयिणा रतेरभिव्यज्यमानायाः परिपोषिका, न तु अभिधयोन्नीयमानस्याप्यर्थस्येति स्फुटं पुनराश्रयभिन्नत्वम् ।

**'कस्स व ण होइ रोसो दट्ठूण पिआएँ सव्वणं अहरं।**

**सब्भमरपडमग्घाइणि वारिअवामे सहसु एहिंणम्॥'**

इति सखीतत्कान्तविषयत्वेन विषयभेदः; तस्मान्नाभिधेय एव व्यङ्ग्यः।

---

## विवृतिः

विषयभेदमुपपादयति—कस्स वेति। 'कस्य वा न भवति रोषः पश्यतः प्रियायाः सव्रणमधरम्। सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीम्॥' इति संस्कृतम्। उपनायकदष्टाधरां पत्नीं तर्जयन्तं कान्तं प्रतारयन्त्याः सख्या उक्तिरियम्। सभ्रमरेति। सभ्रमरपद्माघ्राणे निवारितापि तत्कारिंणी, तत्संबोधने। तथा सहस्व पत्युस्तर्जनां भ्रमरदंशनजन्यव्रणवेदनां च। अत्र वाच्यार्थबोधे सखी उद्देश्या, इति विषयभेदः। सख्या कान्तेन चोभयबोधः संभवतीति न बोद्धृभेदः। उपसंहरति—तस्मादिति। नैव व्यङ्ग्य इत्यन्वयः॥

## विवृतिपूर्तिः

कस्स वेति। कस्य वेति अनीर्ष्यालोरपि। सभ्रमरपद्माघअरामशीले। शीलं हि कथं चिदपि वारयितुं न शक्यम्। सहस्वेदानीम्। उपालम्भपरम्परामित्यर्थः। अत्रायं भावः—काचिदविनीता कुतश्चित्खण्डिताधरा तत्संविधाने भर्तरि तमनवलोकयमानयेव कयाचिद्विदग्धसख्या तद्वाच्यतापरिहारायैवमुच्यते। सहस्वेदानीमिति वाच्यमविनयवतीविषयम्। भर्तृविषयं तु अपराधो नास्तीत्यावेद्यमानं व्यङ्ग्यम्। तस्यां च प्रियतमेन गाढमुपालभ्यमानायां तद्व्यलीकशङ्कितप्रातिवेश्मिकलोकविषयं चाविनयच्छादनेन प्रत्ययनं व्यङ्ग्यम्। तत्सपत्न्यां च तदुपालम्भतदविनयहृष्टायां सौभाग्यातिशयख्यापनं प्रियाया इति शब्दबलादिति सपत्नीविषयं व्यङ्ग्यम्। सपत्नीमध्ये इयत्खलीकृतास्मीति लाघवमात्मनि ग्रहीतुं न युक्तम्, प्रत्युतायं बहुमानः, सहस्व शोभस्वेदानीमिति सखीविषयं सौभाग्यप्रख्यापनव्यङ्ग्यम्। अद्येयं तव प्रच्छन्नानुरागिणी हृदयवल्लमेत्थं रक्षिता पुनः प्रकटरदनदंशनविधिर्न इति तच्चौर्यकामुकविषयसंबोधनं व्यङ्ग्यम्। इत्थं मयैतदपह्नुतमिति स्ववैदग्ध्यख्यापनं तटस्थविदग्धलोकविषयं व्यङ्ग्यमिति लोचनकाराः॥

## विज्ञप्रिया

विषयभेदं दर्शयति—'कस्स वा म होइ' इति।

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्?

सभ्रमरपद्माघ्रायिणि! वारितवामे! सहस्वेदानीम्।" इति संस्कृतम्।

उपनायकदष्टाधरां पत्नीं तर्जयन्तं प्रति नायिकासख्याः प्रतारणोक्तिरियम्। हे वारितवामे! वारिते सभ्रमरपद्माघ्राणे वामे प्रतिकूले इत्यापाततः। 'वारितायामधरदंशपर्यन्तायां रतौ वामे' इति तु गूढम्। सहस्वेत्यत्र पत्युस्तर्जनकर्म बोध्यम्। सखीत्कान्तेति—वक्त्रयाः सखी नायिका, तत्कान्तस्तत्पतिः। तद्विषयत्वेन—तज्ज्ञानविषयत्वेन। नायिकया हि प्रतीयते इयं प्रतारयतीत्येवं व्यङ्ग्यार्थः। तस्मादिति—व्यङ्ग्यार्थो नाभिधागम्य इत्यर्थः।

## लोचन

कस्स वा णेति—वारितादर्थाद् वामे प्रतिकूलकारिणि । तत्र वाच्यं सखीविषयम्, 'भ्रमरेम दष्टाधरेयं, न पुनः परकामुकेन' इति व्यङ्ग्यार्थ तु कान्तविषयम् । एवं बोद्धृस्वरूपादिभेदेऽपि यदि वाच्यव्यङ्ग्ययोरेकत्वं तदा क्वचिदपि नीलपीतादौ नरपुङ्गवदौ भेदो न स्यादित्याशयः ।

## कुसुमप्रतिमा

विषयभेदं दर्शयितुमुदाहरति कस्म इति । 'कस्य न वा भवति दोषो दृष्ट्वा प्रियायाः सव्रणमधरम् । मभ्रमपद्मघ्रायिणि ! वारितवामे ! सहस्वेदानीम् ॥' इति संस्कृतानुवादः । उपपतिदन्तक्षताधरां भार्य्यामाक्रोशन्तं भर्त्तारं छलेन प्रबोधयन्त्याः सख्या उक्तिरियम् । प्रियाया अधरं सव्रणं क्षतचिन्हयुक्तं दृष्ट्वा कस्य पत्युः रोषो न भवति ? अपि तु सर्वस्यैव भवतीत्यर्थः । सुतरामत्र कियानपि नास्य दोष इति भावः । वारितापि सभ्रमरं पद्ममघ्रातुं मर्या निषिद्धापि वामा प्रतिकूला तदाघ्राणकारिणीति सा तत्सम्बोधनम् । सभ्रमरं केनापि भ्रमरेण सहितं पद्मम् आजिघ्रतीति तत्सम्बोधनञ्च ! इदानीं सहस्व निषिद्धाचरणफलस्वरूपं भर्त्तुराक्रोशदुःखं भ्रमरदंशकष्टश्चानुभव ।

अत्र विषयभेदं दर्शयति इतीति । उदाहतश्लोके वक्तृसख्या वाच्यर्थस्य उद्देश्या आक्रोश्यमाना तद्भार्य्यारूपा सखी "सभ्रमरपद्माघ्राणकाले तस्य भ्रमरस्य दर्शनादेव तस्या अधरे क्षतचिन्हं जातम्, न तु उपपतेर्दन्तदर्शनात्" इत्थं व्यङ्ग्यार्तस्य तु उद्देश्यः स आक्रोष्टा कान्ती भर्त्ता इति विभिन्नोद्देश्यकत्वेन विषयभेद इति भावः, अत्र ऊभाभ्यामेव भायर्याभर्तृभ्यामुक्तव्यङ्ग्यार्थस्य बुध्यमानत्वान्न बोद्धुभेद इत्यवधेयम् । तस्मात् सर्वप्रकारेणैव भेदादभिधेयोऽर्थो नैव व्यङ्ग्यः अनयोरभेदो न नेवेत्यर्थः ।

कारिकायामादिशब्दग्राह्याभिप्रायभेदस्तु "गतोऽस्तकर्मः" इत्यत्रैव सम्भवति । तथा च चौरं प्रति चौरान्तरेण तदुक्तौ सूर्य्यस्यास्तगमनरूपो वाच्यार्थः, व्यङ्ग्यार्थस्तु "इदानीं चौर्य्या यगच्छ" इति । न चात्रापि बोद्धु भेदः उभाभ्यामेव उभयार्थस्य बुध्यमानत्वात् ।

## विमला

विषयभेदं दर्शयति, कस्त इतिः— ["कस्य वा न भवति रोषी दृष्टा प्रियायाः सव्रणमधरम् । सभ्रमरपद्माप्रायिणि ! वारितवामे ! सहखेदानीम ॥" इति संस्कृतम्] उपपतिना दृष्टाधरां भार्या प्रति क्रुद्धं नायकं छलयितुमोहमानाया नायिकासख्या उक्तिरियम् । हे वारितवामे !—वारिता—निवारिताऽसौ वामा—प्रतिकूला तत्सम्बुद्धौ, हे सभ्रमरपद्माघ्रायिणि ।—सभ्रमरं पद्म निव्रतोति तत्सम्बोधने, प्रियायाः सव्रणं—व्रणयुक्तम्, अधरं दृष्टा कस्य—नायकस्य, रोषः,—क्रोधः, न भवति ? अपि तु सर्वस्यैव भवतीत्यर्थः । इदानीं सहख, भर्त्तुतजंना व्रणवेदनाञ्चेति शेषः । अत्र "वारितवामे" इति "सभ्रमरपद्माघ्रायिणि" इति च साभिप्रायमत्रापि वामपद्मशब्दयोर्विशेषणीभूतौ वारितसभ्रमरशब्दौ साभिप्रायौ इति परिकरालङ्कारः । अत्राहुश्चित्रमीमांसायां लोचनकारा गोविन्दभट्टाः,—"कस्य वेति अनोर्ष्यालोरपि, न भवति रोषी दृष्टेति कुतश्चिदेवापूर्वतया प्रियायाः सव्रणमधरं दृष्टां—अवलोक्य, सभ्रमरपद्माघ्राणशीले ! शीलं हि कथञ्चिदपि वारयितुं न शक्यम् इति हेतोः, वारिते—वारणयां सत्यपि, वामे—तदनङ्गकारिण ! सइखेदानीम्, उपलम्भपरम्परामित्यर्थः । अत्रायं भावः,—काचिदविनीता कुतश्चित् खण्डिताधरा तत्सविधसंविधाने भर्त्तरि तमनवलोकयमानयेव कयाचित् विदग्धसख्या तड़ाच्यतापरिहारायैवमुच्यते । सहखेदानीमिति वाच्यमविनयवतोविषयम् । भर्त्तुविषयन्तु अपराधी

नास्तोत्याविद्यमानं व्यङ्ग्यम्। तस्याञ्च प्रियतमेन गाढमुपालभ्यमानायां तडालोकशङ्कित-पातिवेश्मिकलोकविषयञ्चाविनयच्छादनेन प्रत्यायनं व्यङ्ग्यम्। तत्सपत्न्याञ्च तदुपालम्भतदविनयप्रहृष्टायां सौभाग्यातिशयख्यापनं प्रियाया इति शब्दबलादिति सपत्नीविषयं व्यङ्ग्यम्। सपत्नीमध्ये इयत्खलीवक्ताऽस्मीति लाघवमात्मनि सौभाग्यप्रख्यापनव्यङ्ग्यम्। अद्येयं तव प्रच्छन्नानुरागिणो हृदयवल्लभेत्थं रक्षिता पुनः प्रकटरदनदंशनविधिनं विधेय इति तच्चौर्यकामुकविषयसम्बोधनं व्यङ्ग्यम्। इत्यं मयैतदपह्नुतमिति खवेदग्धाख्यापनं तटस्थविदग्धलोकविषयं व्यङ्ग्यम्" इति।

सखीतत्कान्तविषयत्वेनेति।—अत्र वाच्यार्थबोधे सखी उद्देश्या, भ्रमरेणास्या अधरो दष्टः, न पुनः उपपतिनां इति व्यङ्ग्यार्थबोधे उद्देश्यः कान्तः इति विषयभेदः, सख्या कान्तेन चोभयबोधः सम्भवतीति न बोद्धृभेदः। उपसंहरति, तस्मादिति।—न एव व्यङ्ग्य इत्यन्वयः।

## लक्ष्मी

**कस्स वेति। 'कस्य न वा भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।**

**सभ्रमरपद्माघ्रायिणि! वारितवामे! सहस्वेदानीम्॥'**

इति संस्कृतम्। 'सभ्रमरपद्माघ्रामशीले' इति लोचनस्थः पाठः। स्वकान्ताया उपपति दष्टमधरं वीक्ष्य रुष्टे प्रोषितागते पत्यौ निरपराधत्वबोधनाय प्रतारयन्त्याः सख्या उक्तिरियम्। प्रियायाः स्वप्रियतमायाः सव्रणं व्रणस-हितम् अधरम् अधरोष्ठ दृष्ट्वा कस्य वा पत्युः रोषो न बवति अपि तु सर्वस्यापि रोषो भवत्येवेति भावः। एतेनास्याः न कोऽपि दोष इति व्यञ्जितः। सभ्रमरं केनाऽपि भ्रमरेण सहितं पद्मम् जिघ्रतीति तत्सबोधने रूपम्। अधरदर्शन-पर्यन्तावसायि सभ्रमरपद्मघ्राणं तत्त्वेनाध्यवसितषिङ्गनिधुवनं च मा कृथा इति वारितेऽपि वामे प्रतीपाचरणात्प्रति-कूले! 'वारितायामधरदशनपर्यन्तायां रतौ वामे' इति गूढव्यङ्ग्यम्। त्वम् इदानीम् अविचारितदशायां प्रतिनायकसन्निधौ च सहस्व पत्युस्तर्जनां भ्रमरदशंनजन्यवेदनां चानुभव। इयमेवं खण्डिताधरा त्वं तदन्यहेतुक-त्वाशङ्क्या मा कुप्येत्यर्थः। गाथाछन्दः।

अत्राविनीतत्वरूपवाच्यार्थस्य संबोध्या सखी प्रकृतनायिकाविषयः। तत्र हि वाच्योऽर्थः श्रोत्र्याः सम्बोध्यनायिकाया व्यवतिष्ठते। 'इयं भ्रमरेण दष्टा न तु षिङ्गेन' इति व्यङ्ग्यार्थस्य तु तत्कान्तो नायको विषयः, तदेव दर्शयति-इति सखीतत्कान्तेत्यादि। वक्त्रयाः सखी नायिका तत्कान्तस्तत्पतिः तद्विषयत्वेन तज्ज्ञानविषय-त्वेन। विषयभेद इति वाच्यार्थबोधे सखी उद्देश्या, 'भ्रमरेणास्य अधरो दष्टः न पुनरुपपतिना' इति व्यङ्ग्यार्थबोधे कान्त उद्देश्य इति विषयभेद इत्यर्थः। अत्रोभाभ्यामेव सखीतत्कान्ताभ्यामुक्तव्यङ्ग्यार्थस्य ज्ञायमानत्वान्न बोद्धृ-भेद इति ज्ञेयम्। अथापि 'ममैवं वैदग्ध्यम्' इति प्रतिवेशिनी विषयः, 'इदं मया समाहितं पुनरेवं त्वया न विधेयम्' इत्यस्योपपतिर्विषयः, 'भ्रमरेणास्या अधरः खण्डितो न तु भर्त्रेति त्वयेर्ष्या न विधेया' इत्यस्य सपत्नीविषयः, सरलतरेयं न किञ्चित्प्रपञ्चं जानाति' इत्यस्य साध्वीविषयः' 'नान्यथा शङ्कनीया' इत्यस्य श्वश्रूः विषयः, 'अनया विना त्वत्पतिर्नजीवति' इति विदितमेव तदस्मत्समन्विते भेदो न विधेयः, इत्यस्योपपतिभार्याविषय इत्यादिव्य-ङ्ग्योऽवधेयः। एवं बोद्धृस्वरूपादिभेदोऽपि यदि वाच्य व्यङ्ग्ययोरेकत्वं तदा क्वचिदपि नीलपीतगुणे तद्वसि घटादौ च इदं नैल्यमिदं पैत्यमिति इदं नीलमिदं पीतमिति च तथा नरपुङ्गवादावपि भेदो न स्यात्। अत एवाहुः—'अयमेव हि भेदो भेदहेतुर्वा. यद्विरुद्धधर्माध्यासः कारणभेदश्चे'ति। एवं बोद्धृस्वरूपादिभेदादवश्यं वाच्यार्थव्यङ्ग्यार्थयोर्भेदः स्वीकर्तृव्य इति महावाक्यसन्दर्भाशयः।

## रुचिरा

'**वारिअवामे** वारितवामे ! वारिता 'एवं माकार्षी'रिति निवारिताऽपि वामा तत्प्रतिकूलाचरणेति, तत्सम्बुद्धौ तथोक्ते इति यावत्। **सभमरपडमग्घाइणि** सभ्रमरपद्माघ्रयिणि ! सभ्रमरं यत् पद्मं कमलं तदाघ्रातुं शीलमस्या अस्तीति तत्सम्बुद्धौ तथोक्ते इति यावत्। **पिआए** प्रियायाः। **सव्वणं** सव्रणम्। आघ्रातपद्मस्थेन भ्रमरेण दष्ट्वा कृतव्रणमिति यावत्। **अहरं** अधरम्। घ्राणस्य सन्निधिवर्त्तिनमङ्गविशेषमिति यावत्। ओष्ठमित्यर्थः। **दट्ठुण** पश्यतः, न तु दृष्टवतो न च द्रक्ष्यतः। एतेन 'काचिदविनीता कुतश्चित् खण्डिताधरा तत्सविधसंविधाने भर्त्तरि तमवलोकमानयेव कयाचिद्विदग्धसख्या तद्वाच्यतापरिहारयैवमुच्यते।' इति यदुक्तं लोचनकारैस्तन्निर्मूलमिति सूच्यते। **कस्स** कस्स क्लीबव्यतिरिक्तस्य। **व** वा। **रोसो** रोषः। **ण** न। **होइ** भवति। अतः—**एण्हि** इदानीम् पश्चात्तापावसरे इति यावत्। **सहसु** सहस्व। 'पत्युस्तर्जनां भ्रमरदंशजन्यव्रणवेदनां चे' ति शेषः। स्वोपार्जितस्य दुःखस्यान्यं प्रति सापराधतारोपानुपपत्तेः। न हि स्वकृतं कर्मान्येन भुज्यते कृतनाशाकृताभ्यागमापत्तेः ॥ २१८ ॥

**इत्यत्र**। 'उदाहृते पद्ये' इति शेषः। **सखीतत्कान्तविषयत्वेन** सखीविषयत्वेन सख्याश्च प्रियविषयत्वेनैत्यर्थः। 'वाच्यव्यङ्ग्ययो' रिति शेषः। **विषयभेदः**। 'बोध्य' इति शेषः। अत्रेदं तत्त्वम्—'कस्से'त्यादि उपनायकदष्टाधरां पत्नीं तर्जयन्तं कान्तं प्रतारयन्त्या विदग्धया तत्सख्योक्तम्। स्वतस्त्वमविवेकिनी परेणोपदिष्टस्य स्वहितस्याप्यनङ्गीकारिणी प्रत्युत तद्विरुद्धाचरणपरायणाऽसि, अतः पुनः पुनः 'इदं पद्मं मा जिघ्राण, अत्रत्य एष भ्रमरहतकस्त्वां दक्ष्यति'इति निवार्य्यमाणाऽपि 'तत्पद्मं घ्रातवत्येव, भ्रमरेणापि पुनर्दष्टैव, न हि खलः कदापि खलताया विरमति'इति तद्वेदना कयाऽन्ययाऽनुभूयेतेतित्वमेव सहस्वेति, अथ—प्रियाया भ्रमरेणैव स्यादधरो दष्टः, किन्तुप्रियायादष्टमधरं दृष्ट्वा को नाम स भवेत् पुरुषः, यस्य चेतसि न बलात्'दुष्ट्वाऽसौ, अस्या अवश्यं कश्चिन्नाकोऽन्योऽपि, तेनैव दष्टोऽयमोष्ठ'इत्याशङ्काजन्येन स्याद् रोषः, स चासौ साम्प्रतमुपस्थित एवेति त्वयैव सोढव्यः, यदि मयोपदिष्टा न पद्मघ्रअरास्यस्तर्हि मृषा कलङ्कीभवनमपि न तवाभविष्यदिति वाच्यार्थबोधे सखी स्यादुद्देश्या भ्रमरेणैव दष्टोऽस्या अधरो न पुनः केनापि नायकान्तरणे'ति व्यङ्ग्यार्थबोधे कान्त एवोद्देश्यः, स्फुटश्चैवं विषयभेदः। इति।

अत्रैवं पुनराहुर्लोचनकाराः 'सहस्वेदानी'मिति वाच्यमविनयवतीविषयम्। भर्तृविषयं तु 'अपराधो नास्ती'त्यावेद्यमानं व्यङ्ग्यम्। तस्यां च प्रियतमेन गाढमुपालभ्यमानायां तद्व्यलीकेशङ्कितप्रातिवेश्मिकलोकविषयं चाविनयप्रच्छादनेन प्रत्यायनं व्यङ्ग्यम्। तत्सपत्न्यां च तदुपालम्भतदविनयप्रहृष्टाय सौभाग्यातिशयख्यापनं प्रियाया इति शब्दबलादिति सपत्नीविषयं व्यङ्ग्यम्। 'सपत्नीमध्ये इयत् खलीकृताऽस्मी'ति लाघवमात्मनि ग्रहीतुं न युक्तम्। प्रत्युतायं बहुमानः। सहस्व शोभस्वेदानीमिति सखीविषयं सौभाग्यप्रख्यापनं व्यङ्ग्यम्। अद्येयं तव प्रच्छन्नानुरागिणी हृदयवल्लभेत्थं रक्षिता, पुनः प्रकटरदनदंशनविधिर्न विधेय इति तच्चौर्यकामुकविषयसम्बोधनं व्यङ्ग्यम्। इत्थं मयैतदपन्हुतमिति स्ववैदग्ध्यख्यापनं तटस्थविदग्धलोकविषयं व्यङ्ग्यम्।' इति। अथ प्रकरणभेदो यथा—'अधिगम्य जगत्यधीश्वरादथ मुक्तिं पुरुषोत्तमात्ततः ।वचसामपि गोचरो न यः स तमानन्दमविन्दत द्विजः ॥' इति। अत्र हिं—वाच्योऽर्थः पूर्वसर्गोक्तं प्रकरणमाश्रितः, व्यङ्ग्यः पुनस्तदानीमेवारभ्यमाणसर्गारम्भकाले शिष्टाचारानुप्रयुक्तं मङ्गलाचरणकर्त्तव्यताकं प्रकरणमाश्रितः। इति स्फुटोऽनयोः प्रकरणतो भेदः। अथौचित्यभेदो यथा—'मन्दः कवियशः प्रार्थी गमिष्याम्युपहास्यताम् ॥' इति। अत्र हि प्रकरणतः कालिदासस्य वक्तृत्वं, तेन पुनः स्वानुद्धतताऽऽविष्करणाय स्वात्मनि मन्दत्वमध्यस्येव कवित्वाभिलाषित्वं हास्यास्पदमिति प्रकटयमाने वाच्योऽर्थो वक्तुर्मूढत्वेऽपि पाण्डित्याभिलाषित्वं हास्यायैवेत्यभिधानौचित्यमाश्रितः, व्यङ्ग्योऽर्थस्तु वक्तुर्मन्दस्यैव

मन्दत्वेऽपि कवेरिव कवित्वाभिलाषित्वं हास्यास्पदमिति प्रस्फुटयति। स्फुट एवमेतयोर्भेदः। शब्दान्तरसन्निधिभेदो यथा 'देवाद्भवानीपतेः।' इति। अत्र हि 'देवा' दिति सन्निधेर्भवानीपतेरित्यस्य वाच्यार्थः 'पार्वतीपतेर्महेश्वरा'दिति, किन्तु व्यङ्ग्योऽर्थः पतिशब्दसन्निधेर्भवानीशब्दस्य पार्वती पुंश्चलीति; स्फुटं चैवं शब्दान्तरसन्निधिभेदः। इदं च प्राचामनुरोधात्, वस्तुतस्तु 'देवोऽसौ ब्राह्मणीपति'दित्यादावेवैतादृशव्यङ्ग्यावस्थानं बोध्यम्। इति दिक्।

ननु भवत्वेवं वाच्यव्यङ्ग्ययोर्बोद्भादातिभेदः, किं तेनेत्यत आह—**तस्मादित्यादि**।

**तस्माद्** यस्मादेवं भेदस्तस्मात् कारणादित्यर्थः। **अभिधेयो**ऽभिधयां वृत्त्या प्रतिपाद्यः। 'अथ' इति शेषः। व्यङ्ग्यः। अर्थ इति शेषः। **एव**। **न** नैव। तत् कथं न स्याद् व्यञ्जनाया अङ्गीकारावश्यकत्वमिति शेषः। अत्रैवमाहुर्ध्वनिकाराः 'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्। यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥' इति।

ननु मा भूदभिधेयो व्यङ्ग्यः, किन्तु लक्ष्यः पुनः कथं नेत्याशङ्क्य व्यङ्ग्यस्य लक्ष्यत्वं निराचिकीर्षुर्निराकृतं च तस्याभिधेयत्वं पुनः प्रकारान्तरेण निराकुर्वन् व्यञ्जनयैव प्रतिपाद्यत्वं द्रढयति—**किञ्चे**त्यादिना।

किंच ।

**प्रागसत्वाद्रसादेर्नो बोधिके लक्षणाभिधे ।**

**किंच मुख्यार्थबाधस्य विरहादपि लक्षणा ॥ ३ ॥**

'न बोधिका' इति शेषः । नहि कोऽपि रसनात्मकव्यापाराद्भिन्नो रसादिपदप्रतिपाद्यः पदार्थः प्रमाणसिद्धौऽस्ति, यमिमे लक्षणाभिधे बोधयेताम् ।

किंश्च यत्र 'गङ्गायां घोषः' इत्यादावुपात्तशब्दार्थानां बुभूषन्नेवान्वयोऽनुपपत्त्या बाध्यते तत्रैव हि लक्षणायाः प्रवेशः ।

यदुक्तं न्यायकुसुमाञ्जलावुदयनाचार्यैः—

**'श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ।**

**पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन संगतिः ॥'**

---

## विवृतिः

व्यङ्ग्यान्तरबोधे यथा तथास्तु रसादिबोधस्तु व्यञ्जनावृत्त्यङ्गीकारमन्तरेण सर्वथा न संभवतीत्यभिप्राये-णाह—प्रागसत्वादिति । बोधात्पूर्वं प्रमाणान्तरसिद्धत्वादित्यर्थः । प्रमाणान्तरसिद्धमेव वस्तु लक्षणाभिधे बोधयत इति नियमाभिप्रायेणेदम् । रसादिपदं तु व्यञ्जनासिद्धं रसादिमभिधया बोधयतीति न दोषः ।

लक्षणया रसादिबोधे सामग्रयन्तरमाह—किंचेति । पूर्वार्धं विवृणोति—नहीति । द्वितीयार्ध विवृ-णोति—किंचेति । उपात्तशब्दार्थानां वाच्यार्थानां बुभूषन् भवन् । अन्वयोऽन्वयबोधः । अनुपपत्तिग्रहेण बाध्यते प्रतिबध्यते । श्रुतान्वयादिति । वाच्यार्थान्वयबोधजननादित्यर्थः । अन्यदर्थान्तरमिच्छति आकाङ्क्षति । पदार्तान्व-यवैधुर्यात् मुख्यार्थान्वयानुपपत्तिग्रहात् । तदाक्षिप्तेन मुख्यार्थसंबन्धितया गृहीतेन । संगतिरन्वयबोधः ।

## विवृतिपूर्तिः

यदि चेति । अत्रेदं तत्त्वम्—यथा गङ्गाशब्दस्य प्रवाहो मुख्यार्थः, तत्र च बाधः, तीरे च तत्संबन्धः, तीरस्य च लक्षणयोपस्थापनम्, मुख्यशब्देन प्रतिपादयितुमशक्यस्य पावनत्वादेः प्रतीतिश्च प्रयोजनम्, इति गङ्गाशब्देन तीरं लक्ष्यते । एवं यदि तीरमपि गङ्गाशब्दस्य मुख्यं स्यात्, तत्र घोषाधिकरमत्वासंभवरूपो बाधः स्यात्, प्रयोजनस्य च गङ्गादिगतपावनत्वादिविशेषस्य तीरेण साक्षात्संबन्धः स्यात्, लक्षणया प्रयोजनप्रतिपादनस्य च प्रयोजनान्तरं संभ-वेत्, तर्हि गङ्गाशब्दः प्रयोजनं लक्षयेत् । न चैतत्किमप्यस्ति । यदि चेह तीरगतपावनत्वादिरूपे प्रयोजनेऽपि लक्ष्ये लक्ष्यघोषगतपावनत्वादिरूपं प्रयोजनान्तरमूरीक्रियते, तदा प्रयोजनापारम्पर्या लक्षणास्वीकारे प्रयोजनान्वेषणस्या-पर्यवसानेन प्रकृतस्य पावनत्वादेस्तीरादेवा बोधाभावकृदनवस्था स्यादिति भावः ॥

## विज्ञप्रिया

रसादिबोधिका न लक्षणा नापि अभिधा सम्भवतीत्याह—प्रागसत्त्वादिति । तत्काव्यस्थशब्दजन्यो यो रसस्तस्य शब्दबोधानन्तरमेव जन्यमानत्वात् तत्प्राक् तस्याऽसत्त्वात् तत्र तत्काव्यस्थशब्दस्य शक्तेर्लक्षणाया वा ग्रहीतुमशक्तत्वादित्यर्थः; प्रागुपस्थिते वस्तुन्येव तयोर्ग्रहणसम्भवात् । ननु काव्यात् प्रथमंमनुभूयमानो यो रसस्तन्निष्ठसामान्यधर्मरूपया सामान्यलणया उपस्थिते भाविन्यपि रसे शक्तिग्रहोऽस्त्विति चेन्न । शक्त्या लक्षणया वा प्राथमिकरसबोधस्यैव तत्सम्भवात् प्राक् तस्याऽनुपस्थितत्वात् विभावादिवाचकशब्दानां तत्र शक्तिग्राहकत्वाभावाच्चेत्यपि बोध्यम् । नापि कोषग्राहितशक्तिकात् काव्यस्थश्रृङ्गारादिशब्दात्तद्बोधः, अननुभवात् । प्रत्युत तत्सत्त्वे रसादेः स्वशब्दवाच्यतादोषस्यैव वक्ष्यमाणत्वात् । अतः श्रृङ्गारादिशब्दबोध्यत्वे रसत्वानापत्तेः, किन्तु विभावाद्यभिधानद्वारैव तत्प्रतीतेरानुभविकत्वात् ननु इह काव्यस्थात् श्रृङ्गारादिशब्दाज्ज्ञातस्य रसस्य प्रागुपस्थितत्वेन विभावादिवाचकशब्दैर्लक्षणया रसादेर्बोधोऽस्तु इत्यत आह—किञ्च मुख्यार्थेति। लक्षणेत्यस्य शेषाञ्चलं पूर्वतोऽनुषञ्जयति—न बोधिकेति ।

ननु रसेऽपि तात्पर्यसत्त्वाल्लक्षणं विना तदनिर्वाह एव मुख्यार्थबाध उच्यत इत्यत आह—न हीति । यदि रसादिशब्दात्तस्य प्रागुपस्थितिस्तदैव तस्य लक्षणया बोधार्थमुक्तरूपमुख्यार्थबाधनिर्वचनं सैव तु नेत्यर्थः । रसनात्मको व्यञ्जनात्मको व्यापारो यस्य, एतादृशरसाद् भिन्न एव रसादिप्रतिपाद्य इत्यर्थः । बुभूषन्—भवितुमिच्छन् । प्रवाहादौ घोषाद्यन्वयः ।

अस्मिन्नर्थे संवादं दर्शयति—तदुक्तम् इति । श्रुतान्वयात्—श्रुतपदार्थयोरन्वयसम्भवात्; अबाधितादन्यत्राऽनाकाङ्क्षं वाक्यमन्यद्धि नेच्छति नाकाङ्क्षति । पदार्थन्वयवैधुर्यात्-पदार्थयोरन्वयाऽसम्भवात् । तदाक्षिप्तेन-तदुल्लिखितेन । सङ्गतिरन्वय इत्यर्थः ।

## लोचन

प्रागिति । अयमर्थः—रसभावादेर्व्यङ्ग्यस्य प्रागसत्त्वाल्लक्षणाभिधे न बोधिके । त्रयाणामपि व्यङ्ग्यानां मुख्यार्थबाधविरहादपि न लक्षणा बोधिकेति । अपिः पूर्वोक्तसमुच्चये ।

प्रमाणसिद्ध इत्यनन्तरम्, "क्वचिद्" इति शेषः ।

श्रुतान्वयादिति । अन्यत्-पदार्थान्तरम् । नेच्छति नापेक्षते । यदि तु 'गङ्गायां घोषः' इत्यादौ पदार्थानामन्वयकाल एव बाधप्रतिभासाद्यन्वयस्य विधुरीभावस्तदा तेन पदार्थेन जलमयादिना आक्षिप्तो यस्तटादिस्तेन सङ्गतिरन्वय इत्यर्थः ।

ततः किमित्यत आह—न पुनरिति । तत्कथं रसादिप्रतीतौ लक्षणा इत्यर्थः ।

## कुसुमप्रतिमा

प्राक्साननूक्तेषु सर्वत्रैवाभिधावृत्त्या अनुरणनस्वरूपमनुव्यवसायात्मकं ज्ञानं भविष्यतीत्याह प्रागिति । प्राक्सानुभवोत्पत्तेः पूर्व रसादे रसतदाभासादेः असत्त्वात् अविद्यमानत्वात् हेतोः लक्षणाभिधे लक्षणा अभिधा च शक्तौ नो रसादेर्वोधिके । तथा च यः पदार्थः स्वानुभवात् पूर्वमपि येन केनचित् प्रत्यक्षादिना प्रमाणेन सिद्धः, तमेव पदार्थ लक्षणा अभिधा च बोधयति । यथा घटशब्दौयाभिधा प्राक्प्रत्यक्षादिसिद्धं कम्बुग्रीवादिमत्पदार्थं बोधयति । यथा

वा गङ्गाशब्दीयलक्षणा प्राक्प्रत्यक्षादिसिद्धं तीरं बोधयति। रसादिस्तु स्वयमेवानुभवविशेषरूपत्वात् स्वोत्पत्तेः पूर्वं स्वरूपेण केनापि प्रमाणेन न सिद्ध एवेति न लक्षणा न वा अभिधा तं बोधयतीति सरलार्थः। किञ्च अपि च मुख्यार्थबाधस्य विरहादपि अभावञ्च लक्षणा रसादेन बोधिका। तथाहि लक्षणां प्रति मुख्यार्थबाध एव हेतुः, ततश्च रसादिप्रतीतौ मुख्यार्थबाधाभावात् स्वयमेवोत्पत्तुमसमर्था लक्षणा कथं रसादिं बोधयेदिति भावः।

कारिकास्थ निष्क्रियलक्षणापदस्य क्रियाध्याहारेणान्वयं दर्शयति न बोधिकेति।

पूर्वार्द्धव्याख्यायां रसादेः स्वानुभवात् प्रागसिद्धत्वं दर्शयितुमाह नहीति। नहीत्यस्य अस्तीति परेणान्वयः। रसनात्मकव्यापारात् चमत्कारमिश्रितानुभवविशेषरूपात्। एतेन स्वरूपानुभवात् पूर्वं रसादेरसिद्धत्वं दर्शितम्।

परार्द्धव्याख्यायां मुख्यार्थबाधाभावेन लक्षणाया असम्भवं दर्शयितुमाह किञ्चेति। अपि चेत्यर्थः। उपात्तशब्दार्थानाम् उच्चारितपदार्थानां जलमय्यां गङ्गायाम् आभीरपल्लीति वाच्यार्थानामित्यर्थः अन्वयः परस्परसम्बन्धः बुभूषन्नेव भवितुमिच्छन्नेव उत्पद्यमान एवेत्यर्थः, अनुपत्त्या जले पल्लया स्थिततत्यसम्भवादसङ्गतिज्ञानेन। प्रवेशः सम्भवः।

श्रुतेति। श्रुतानां पदानाम् अन्वयात् परस्परोपपन्नसम्बन्धात् हेतोः अनाकाङ्क्षम् अर्थान्तरकाङ्क्षारहितं वाक्यं कर्त्तृ अन्यत् अर्थान्तरं नहि इच्छति नैवाकाङ्क्षति। किन्तु पदार्थानाम् अन्वयवैधुर्य्यात् परस्परान्वयासम्भवात् हेतोः, तेन मुक्यार्थेन आक्षिप्तः स्वसम्बन्धितया अन्वयोपपत्त्यर्थं प्रत्यायितो योऽर्थस्तेन सङ्गतिरन्वयोपपत्तिः स्यात्। एतेन कुसुमाच्चलिकरमतेऽपि अन्वयानुपपत्तिस्थल एव लक्षणेति दर्शितम्।

## विमला

व्यङ्ग्यान्तरबोधे यथा तथाऽस्तु, रसादिबोधस्तु व्यञ्जनावृत्त्यङ्गीकारणन्तरेण सर्वथा न सम्भवतोत्यभिप्रायेणाह, प्रागिति।—रसादेः प्राक् असत्त्वात्—अविद्यमानत्वात्, बोधात् पूर्वं प्रमाणान्तरासिद्धत्त्वादित्यर्थः, लक्षणाऽभिदे —लक्षणावृत्ति—रभिधावृत्तिश्चेत्यर्थः, नो बोधिक—बोधवितुं न शक्नुत इत्यर्थः। लक्षणा अभिधा च प्रमाणान्तरसिद्धमेव वस्तु बोधयतः, इति नियमाभिप्रायेणेदं, रसादिपदन्तु व्यञ्जनासिद्धं रसादिम् अभिधया बोधयतीति न दोष इति भावः। लक्षणया रसादिबोधे सामग्र्यान्तरमाह, किञ्चेति।—किञ्च—अन्यच्च, मुख्यार्थबाधस्य विरहात्—अभावादपि, लक्षणा, नो बोधिका इति शेषः, लक्षणया मुख्यार्थबाधे हि प्रमाणान्तरसिद्धं वस्तु बोध्यते, रसादिबोधे तु न मुख्यार्थबाधः, नापि रसादिः प्रमाणान्तरसिद्धः इति भावः।

पूर्वार्द्ध विवृणोति, न हीति।—व्यापारात्—कार्य्यात्। द्वितीयार्द्धं विवृणोति, किञ्चेति। उपात्तशब्दार्थानां—वाच्यार्थानां, बुभुषन्—भवन्, अन्वयः,—अन्वयबोधः, अनुपपत्त्या—अन्वयानुपपत्तिग्रहेण, बाध्यते—प्रतिबध्यते।

श्रुतेति। श्रुतान्वयात्—श्रुतानां—शब्दोपात्तानाम्, अन्वयात्—अन्वयबोधजनकात्, वाच्यार्थान्वयबोधजननादित्यर्थः, अनाकाङ्क्षम्—अकाङ्क्षारहितं, बाच्याम् अन्यत्—अर्थान्तरं, न इच्छति—आकाङ्क्षति; पदार्थान्वयवैधुर्य्यात्—पदार्थानाम्, अन्वयस्य—सम्बन्धस्य, वैधुर्य्यम्—अनुपपत्तिः, तस्मात्, मुख्यार्थान्वयार्नुपपत्तिग्रहादित्यर्थः, तदाक्षिप्तेन—मुख्यार्थसम्बन्धिता गृहीतेन, अथेनेति शेषः, सङ्गतिः,— अन्वयबोधः, भवतौति शेषः। "गामानय" इत्यादीनां वाक्यानां श्रुतमात्राणामन्वयेन स्वस्वार्थबोधकत्वेन स्वमर्थं बोधयितुं

न पदान्तराकाङ्क्षित्वम् । "गङ्गायां घोषः" इत्यादीनां पुनः श्रुतमात्राणामन्वयेन स्वस्वार्था बोधकतया स्वमर्थं बोधयितुं पदान्तराकाङ्क्षिश्रमस्त्येवेति तदर्थमवश्य पदान्तरमाक्षेप्तव्यम्; तथैवान्यवेन स्वस्वार्थबोधकतया स्वमर्थं बोधयितुं पदान्तराकाङ्क्षिश्रमस्त्येवेति तदर्थमवश्य पदान्तरमाक्षेप्तव्यम्; तथैवान्वयेन स्वस्वार्थबोधकत्वोपयोगितालाभात् इति भावः । इदमभिहितं भवति,—"कर्म्मणि कुशलः," "गङ्गाया घोषः" इत्यादौ कुसलगङ्गाऽऽदिशब्दानां कुशग्राहिप्रवाहादिरूपो मुख्योऽर्थः, तव च बाधसद्भावः, मुख्यार्थस्य च तत्सदृशतीरादौ सम्बन्धः, तत्सदृशतीरादेश्र लक्षणयाऽऽनयनं, तत्सदृशतीरादिरूपैर्मुख्यशब्दैरुद्वोधयितुमसम्भाव्यस्य विधेकित्वपावनत्वादेश्र प्रत्यायनं फलम्, इति कुशलगङ्गाऽऽदिशब्दैः कुशग्राहिसदृश तीरादि आनीयते । यद्येवं कुशग्राहिमदृश तीराद्यपि, कुशलगङ्गाऽऽदिशब्देः कुशग्राहिसदृश तौरादि आनीयते । यद्येवं कुशग्राहिमदृश तीराद्यपि, कुशल गङ्गाऽऽदिशब्दानां मुख्योऽर्थो भवेत्, तव कुशग्राहिता घोषाधिकरव्यताऽऽद्यसम्भवरूपी बाधो भवेत्, फलस्य च कुशग्राहीगङ्गाऽऽदिनिष्ठकुशग्राहिसदृश(विवेकि)त्व पावनत्वादिविशेषरूपस्य कुशग्राहिसदृश तीरादिना साक्षात्मसम्बन्धी भवेत्; लक्षणया फलोद्वोधनस्य च फलान्तरं भवेत्, तदा कुशलगङ्गाऽऽदिशब्दाः फलं लक्षयेषुः, न चेदं किञ्चिसम्भवति, अथात्र यदि कुशग्राहिसदृश तीरादिनिष्ठविवेकित्वपावतत्वाऽऽत्मनि फलेऽपि लक्षणीये लक्षणीयकुशल घोषादिनिष्ठपावनत्वाद्यात्मकं फलान्तरमङ्गीक्रियेत्, तर्हि फलानुपूर्व्यां लक्षणाऽङ्गीकारं फलगवेषणानवसाने प्रस्तुतस्य बोधाभावकारिणौ अनवस्थाऽऽपद्येतेति ।

## लक्ष्मी

ननु मास्तु व्यङ्ग्योऽभिधेयः किन्तु लक्ष्यः कथन्नेत्याशङ्क्य व्यङ्ग्यस्य लक्ष्यत्वं निराकरिष्णुः निराकृतेऽप्यभिधेये पुनः प्रकराणान्तरेण निराकुर्वन् व्यञ्जनयैव प्रतिपाद्यत्वं स्थापयति—तथेति । न खलु एतावतैव व्यङ्ग्यानामभिधादिबोध्यत्वं नास्ति अपि तु इतरथापीत्यर्थः ।

व्यङ्ग्यान्तरबोधे लक्षणाभिधा यथा तथास्तु रसादिबोधस्तु व्यञ्जनावृत्त्यनङ्गीकारेण सर्वथा न सम्भवतीत्याशयेनाह—प्रागसत्त्वादिति । प्राक् स्वानुभवोत्पत्तेः पूर्वं रसादेः असत्त्वात् अविद्यमानत्वात् हेतोः लक्षणाभिधे लक्षणा अभिधा च शक्ती नो बोधिके । प्रत्यक्षादि प्रमाणान्तरसिद्धमेव वस्तु लक्षणाभिधे बोधयतः यथा घटशब्दीया अभिधा पूर्वं प्रत्यक्षादि सिद्धं कम्बुग्रीवादिमत्पदार्थं बोधयति । यथा वा गङ्गाशब्दीयलक्षणा पूर्वप्रत्यक्षादिसिद्धं तीरं बोधयति । रसादिस्तु न तथा तत्काव्यस्थशब्दजन्यो यो रसस्तस्य शब्दबोधानन्तरमेव जन्यत्वात् स्वोत्पत्तेः पूर्वं स्वरूपेण केनापि प्रमाणेनासत्त्वात् तत्र तत्काव्यस्याशब्दस्य शक्तेर्लक्षणाया वा ग्रहीतुमशक्यत्वादिति सरलार्थः ।

न च तत्काव्यात् प्रथममनुभूयमानो यो रसस्तन्निष्ठसामान्यधर्मरूपया सामान्यलक्षणया उपस्थिते भाविन्यपि रसे शक्तिग्रहोऽस्त्विति वाच्यम्, शक्त्या लक्षणया वा प्राथमिकरसबोधस्यैव तत्सम्भवात् प्राक् तस्याऽपस्थितत्वात् । विभावादिवाचकशब्दानां तत्र शक्तिग्राहकत्वाभावाच्च । नापि कोशग्राहितशक्तिकात् काव्यस्यश्रृङ्गारादिशब्दात्तद्बोधः अननुभवात् प्रत्युत तत्सत्त्वे रसादेः स्वशब्दवाच्यतादोषस्यैव वक्ष्यमाणत्वात् । अतः श्रृङ्गारादिबोध्ये रसत्वानाप्तेः किन्तु विभावाद्यभिधानद्वारैव तत्प्रतीतेरानुभविकत्वात् । न च रसादिपदमेव तद्बोधकम्, रसादिपदेन हि व्यञ्जनासिद्धरसादेरभिधया बोधनात् । ननु इह काव्यस्थात् श्रृङ्गारादिशब्दाज्ज्ञानस्य रसस्य प्रागुपस्थिततत्वेन विभावादिवाचकशब्दैर्लक्षणया रसादेर्बोदोऽस्तु इत्यत आह— किञ्च मुख्यार्थेति । अपि चेत्यर्थः । मुख्यार्थबाधकस्य विरहादपि बाधाच्च लक्षणा रसादेर्न बोधिका । तथा हि मुख्यार्थबाध एव लक्षणां प्रति

हेतुः। रसादिप्रतीतौ 'गङ्गायां घोषः' इत्यादाविव मुख्यार्थबाधाभावात् स्वयमेवोद्भवितुसमर्था कथं रसादि लक्षणां बोधयितुं शक्नुयादिति भावः।

कारिकास्थ 'लक्षणा' पदस्य निष्क्रियत्वात् विभक्तिविपरिणामेन पूर्वतोऽऽनुषङ्गयान्वयमुपपादयति—न बोधिकेति।

ननु रसेऽपि तात्पर्यसत्त्वाल्लक्षणां विना तदनिर्वाह एव मुख्यार्थबाध उच्यते इत्याशयेनाह—न हीति। यदि रसादिशब्दात्तस्य प्रागुपस्थितिस्तदैव तस्य लक्षणया बोधार्थमुक्तरूपमुख्यार्थबाधनिर्वचनं सैव तु नेत्यर्थः। रसनात्मकः व्यञ्जनात्मकः व्यापारो यस्य एता दृशरसाद् भिन्न एव रसादिप्रतिपाद्य इत्यर्थः। प्रमाणसिद्ध इत्यनन्तरं 'क्वचिद्' इति शेषः। एतेन स्वानुभवातपूर्व रसादेरसत्वं प्रतिपादितम्।

## रुचिरा

किञ्च अथ—

३०० **रसादेः**। 'बोधा' दिति शेषः। 'रसादेः' रिति व्यङ्ग्यार्थमात्रग्राहकम्। 'शेषे षष्ठी।' २/३/५० इति षष्ठी। तथा च—रसाद्यात्मकव्यङ्ग्यार्थसम्बन्धिबोधादित्यर्थः। 'बोधा'दिति पञ्चमी तु 'अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदजाहियुक्ते।' २/३/२९ इत्यनेन। यत्तूक्तं तर्कवाकीशैः—'व्यङ्ग्यान्तरबोधो यथा तथाऽस्तु रसादिबोधस्तु व्यञ्जनावृत्त्यङ्गीकारमन्तरेण सर्वथा न सम्भवतीत्यभिप्रायेणाह—प्रागसत्त्वादिति।' इति, तन्न चारुः, रसादिभिन्नस्य व्यङ्ग्यावगमायापि व्यञ्जनामनङ्गीकृत्य वृत्त्यन्तरेणैव निर्वाहे तत्प्रतिपाद्यत्वापत्तेर्व्यङ्ग्यत्वस्य च मूलोच्छेदे व्यङ्ग्यत्वसाधारण्येन रसादेरपि निर्मूलत्वापत्तेश्च। **प्राक्** पूर्वम्। **असत्त्वाद**विद्यमानत्वात् अव्यवहितपूर्वक्षणवर्त्तित्वाभावात् कारणादिति भावः। 'लक्षणाऽभिधेयो'रिति शेषः। 'तयोर्हि स्वस्वव्यापारं निरूप्य सति विरामे पुनरुत्थानासम्भव' इति सुष्ठूक्तमसत्त्वादिति। **लक्षणाऽऽभिधे** लक्षणाऽभिधा च वृत्ती इत्यर्थः। **नो** नैव। 'अभावे नह्यनो नापी'त्यमरः। **बोधिके** 'रसादेः'रिति व्यङ्ग्यार्थस्येति वा शेषः। इति। यद्वा-प्राक् पूर्वस्यामवस्थायाम्। 'रसादिबोधा'दिति 'व्यङ्ग्यार्थबोधा'दिति वा शेषः। तथा च—रसादिबोधाद्वयङ्ग्यार्थबोधाद्वा पूर्वस्मिन् समये इति निष्कृष्टम्। असत्त्वादविद्यमानत्वात्। पदार्थत्वेन विद्यमान त्वाभावात् कारणादिति यावत्। 'रसादे' रिति 'व्यङ्ग्यार्थस्ये'ति वा शेषः। यद् रसादिर्व्यङ्ग्यार्थो वा प्रतीयमानत्वानतिरिक्तस्वरूपः, तस्य च शाब्दत्वेन विद्यमानत्वाभावः। रसादे रसादिस्वरूपस्य व्यङ्ग्यार्थस्येति वा भावः। नो नैव। बोधिके बोधकर्त्री। तस्य लक्षणाऽऽभिधे लक्षणावृत्तिरभिधावृत्तिश्चेत्यर्थः। 'सम्भवत' इति शेषः। इति। अत्रेदमुक्तम्—सर्वोऽपि शब्दः सङ्केतितस्तावद्भवति, तत्सङ्केतमुपस्थाप्य विरमति पुनरभिधा, यत्र तु वाक्यान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा भवेत् तत्र मुख्यार्थैकांशमादाय प्रवर्त्तमाना लक्षणा वाक्यान्वयोपपत्त्यनुकूलं तात्पर्योपपत्त्यनुकूलं वा तत्सदृशमेवार्थमुपस्थापयति विरमति च। (तत्सदृशमभिधेयसमरूपम्)।

तदेवं विस्तयोस्तयोः 'शब्दबुद्धिकर्मणां विरम्यव्यापाराभावः।' इति प्रतिपादिता दिशा पुनर्व्यापारानुपपत्तौ सहृदयहृशा प्रस्फुरतः कस्याप्यर्थस्य पुनरुत्थापनाय कस्य अपि वृत्तेरङ्गीकारौचित्ये व्यञ्जनैव शरणमवतिष्ठते। (कस्यापि निह्नोतुमशक्यस्याह्लादहेतोश्च)। 'नहि कारणमन्तरेण कार्यमुत्पद्यते' इति नियमेन व्यङ्ग्यार्थरूपस्य कार्यस्योल्लासाय व्यञ्जनायाः स्वीकारावश्यकत्वं बलादायातम्। न च—कालभेदेनैव व्यङ्ग्यार्थस्यार्थान्तरत्वनिरासे किं पुनरिदमभिहितम्? इति शङ्क्यम्, कालभेदेन व्यङ्ग्यस्य वाच्यत्वमात्रविरासे लक्ष्यताया अनिरासात्। ननु तस्य वाच्यत्वनिरासेऽप्येवं स्वतोऽभिधाया निरासे किं पुनस्तस्या एव निरासार्थमयमुद्योगः। इति चेत्? कालभेदेन

वाच्यार्थव्यङ्ग्यार्थयोः पूर्वपश्चाद्भावाभिधाने निरूपितेऽपि अभिधायाः पुनरर्थान्तरोपस्थापनार्थं स्थगितव्यापारानभिधाने पुनः प्रवृत्तिचर्वायाः सर्वतोभावेनातिरोधानात्। 'लक्षणाऽभिधे' इत्यभिधानं तु तयोरुभयोरपि व्यङ्ग्यार्थोल्लाससम्पादनरूपं व्यापारं प्रति अकिञ्चित्करत्वाख्यापनार्थम्। क्रमवशादभिधानस्य प्राप्तेऽपि औचित्ये पुनर्निदेशो लक्षणाया एव व्यञ्जनाकार्यकारित्वस्य निरासार्थं इति बोध्यम्। इति। यद्वा—न हि व्यङ्ग्यार्थजातं सङ्केतस्वरूपं, न वा तद्बाधे तदंशमालम्ब्यावतिष्ठमानम्; किन्तु तदनन्तरं सहृदयदृशैवामुभूयमानम्। इति तस्य कृते लक्षणाया अभिधायाश्च न किञ्चित्करत्वं प्रतिभासते। ते हि सङ्केतं तत्सम्बन्धमेव वोपस्थापयितुं शक्नुतः, न तु तदनन्तरं प्रस्फुरणशीलम्; इति कथं तयोस्तत्र व्यापारः किञ्चित्करः स्यात्। इति सुव्यक्तं सुलोचनानाम्। तथा च—सङ्केतमुद्बोधयितुमभिधा यदा प्रयतते तदाऽपि नावतिष्ठते व्यङ्ग्योऽर्थः, यदा पुनस्तद्बाधे तत्सम्बन्धिनमपरमर्थमुद्बोधयितुं प्रयतते लक्षणा तदाऽपि नावतिष्ठते व्यङ्ग्योऽर्थः, इति प्रागसद्भावः सुव्यक्त एव व्यङ्ग्यस्यार्थस्य। तस्मात् स्वस्वव्यापारमुपस्थापयितुं प्रयतमानयेरपि लक्षणाऽभिधयोः प्रयतनावसरे व्यङ्ग्यस्यार्थस्याद्भावात् सङ्केतस्य तत्सम्बन्धिनो वा तदनुरूपस्यार्थस्य सद्भावादेतावेव तयोर्व्यापाररूपतामवलम्बते न तु व्यङ्ग्योऽपि। व्यापारभूतयोश्च तयोरर्थयोः सति सम्पत्तिसद्भावे निर्व्यापारयोश्च लक्षणाऽभिधयोरुपशमः शरणम्। इति। **किञ्चान्यच्चेत्यर्थः**। **मुख्यार्थबाधस्य** मुख्योऽभिधया प्रतिपाद्योऽसावर्थ इति, तस्य बाधोऽनुपपत्तिस्तस्य। अभिधेयस्यैव सङ्केतस्वरूपत्वात् प्राग्भवत्वमिति मुख्यत्वम्। मुखमिव मुखे वा भवतीति मुख्यः। 'शाखादिभ्यो यः।' ५/३/१०३ इति यः। **विरहाद्** वियोगादभावादिति यावत्। **अपि**। प्रागसत्त्वात्त्वस्त्येव, न, किन्तु एतस्मादपि कारणादित्यर्थः। **लक्षणा** 'न बोधिके'ति शेषः। यद्वा-लक्षणा लक्षणावृत्तिः केवला। अपि 'न बोधिके'ति शेषः ॥ २९५ ॥

अत्रायम्भावः—वाक्यार्थानुपपत्त्या तात्पर्यार्थानुपपत्त्या वा मुख्यार्थस्य बाधः स्यात्। अस्मिन् पुनः सति तदंशमबलम्ब्य लक्षणायाः प्रवृत्तिः,र्न त्वन्यथाऽपि। अथ-यत्र व्यङ्ग्यार्थावस्थानं न तत्र मुख्यार्थबाधः प्राग्वर्त्ती। येनासौ प्रवर्त्तेत। किन्तु-क्वचित्मुख्यार्थबाधादुत्तरस्मिन्क्षणे सम्भवी लक्षणया प्रथमत एव तथा प्रतिपादितोऽर्थ, यथा पुनर्मुख्यार्थबाध एव नावतिष्ठेत। क्वचित् पुनरबाधितः प्रथमतः एव मुख्यार्थ इति व्यङ्ग्यार्थस्य बोधावसरे नैवोभयथाऽपि मुख्यार्थबाधोऽव्यवहितपूर्वक्षणवर्त्तीति न तदर्थं लक्षणायाः सद्भावः, किन्तु कस्याश्चन वृत्तेरन्यस्याः। एवं पुनर्निश्चये व्यञ्जनाया एवेति बलादायातम्। इति।

अत्रावशिष्टांशमाह—'**न** नैव। **बोधिका** 'व्यङ्ग्यस्ये'ति शेषः। **इतिशेष** इत्युषज्यते। इति।

अथोक्तकारिकायाः पूर्वभागं भङ्ग्यन्तरेण विवृण्वंस्तस्य तात्पर्यं निर्दिशति—**नहीत्यादिना**।

**इमे**। **लक्षणाऽभिधे** 'वृत्ती' इति शेषः। यं 'पदार्थ' मिति शेषः। **बोधयेतां** बोधितं कुर्याताम्। '**स**' इति शेषः। **कोऽपि** कश्चित्। **रसनात्मकव्यापाराद्रसनं** प्रतीतिस्तदात्मको यो व्यापारस्तस्मात्। रस्यते आस्वाद्यते प्रतीयत इति यावत्, इति रसनम्। 'ल्युट्च।' ३/३/११५ इति ल्युट्। 'रस' आस्वादनस्नेहनयोः। **भिन्नो** द्वितीयः। **रसादिपदप्रतिपाद्यो** रसादीनि यानि पदानीति, तैः प्रतिपाद्यः। **पदार्थो** वस्तु। **प्रमाणसिद्धः** प्रत्यक्षादिष्वन्यतमेन प्रमामेन सिद्धः। **अस्ति** विद्यते। **नहि**। इति।

अत्रायं निष्कर्षः—व्यङ्ग्यस्तावदर्थो रसाद्यात्मा व्यज्यमानत्वात्, तच्च प्रतीयमानत्वानुभूयमानत्वास्वाद्यमानत्वाद्यपरपर्यायः आह्लादविशेषोद्बोधः। तत्रैव सहृदयहृदयस्य साक्ष्यत्वात्। वाच्यः पुनरर्थस्तद्भिन्नोऽभिधीयमानत्वात्। तत्त्वं च सङ्केतविषयत्वम्। सङ्केतः पुनर्जातिगुणक्रियायदृच्छाभेदाच्चतुर्विधो, जातिमात्रस्वरूपतया

वैकात्मैव। तदाश्रितत्वेनैव तस्यावस्थानात्। व्यंङ्ग्यत्वावच्छिन्नत्वावच्छेदकं च जात्याद्यतिरिक्तस्वरूपमिति व्यङ्ग्यस्य वाच्यत्वं न सङ्घटते, तथा सति तस्याभिधाव्यापारस्पर्शित्वं स्वतः सिद्धम्। लक्ष्योऽप्येवं न व्यङ्ग्यः। लक्ष्यो हि सङ्केतमवष्टभ्य लब्धसत्ताकः। तथा च—सङ्केतावष्टम्भावं लक्ष्यत्वमिति निष्पन्नम्। सङ्केतश्च जात्याद्यवष्टम्भात्मा। व्यङ्ग्यस्तु न जात्याद्यवष्टम्बो न च सङ्केतावष्टम्भः, येनासौ तथाविधः स्यात्। किन्तु ताभ्यां विलक्षण एवेति तत्तत्प्रतिपादिकाभ्यां वृत्तिभ्यां विलक्षणयैव कयाऽपि वृत्त्या प्रतिपाद्यः स्यादिति सिद्धान्तो नापनीयते विवेकदृशा सूक्ष्मदृशाम्। एवं सति व्यङ्ग्यो व्यञ्जनयैव प्रतिपाद्यो न तु लक्षणया नाप्यभिधया वृत्त्येति।

अथोत्तरभागं विवृणोति—**किञ्चे**त्यादिना।

**किञ्च। यत्र** यस्मिन्। '**गङ्गायां** भागीरथ्यां नद्याम्। **घोषो** ग्रामविशेषः।' **इत्यादौ** 'प्रयोग' इति शेषः। **उपात्तशब्दार्थानामुपात्ताः** सम्पादिता अभिधया वृत्त्या स्वव्यापारात्मकतामानीता इति यावत्, ये शब्दार्थाः पदार्था इति तेषाम्। **अन्वयः** सम्बद्धतयाऽवस्थानम्। **बुभूषन्** भवितुमिच्छन्। भवितुमिच्छतीति बुभुषतीति तथोक्तः। सङ्गतत्वमुपस्थातुमिच्छां कुर्वन् न तु कृतवान् च करिष्यन्निति भावः। **एव। अनुपपत्त्योपपत्तिः** सङ्गतिस्तदभावेनेत्यर्थः। **बाध्यते** बाधितः क्रियते बाधां प्राप्तः क्रियते इति यावत्। **तत्र** 'गङ्गायां घोषः।' इत्यादौ 'प्रयोग'इति शेषः। **एव** नत्वन्यत्र। **हि** यतः कारणात्। **लक्षणायास्त**न्नाम्यां वृत्तेः। **प्रवेशः** सफलव्यापारा भवितुमवतारः। ततो व्यङ्ग्यार्थोद्बोधावसरे न लक्षणया प्रवेश इति शेषः।

इदमुक्तम्—'गङ्गा'शब्दस्य जलप्रवाहविशेषरूपोऽर्थः, सप्तम्याश्चाधिकरणरूपः; तथा—घोषशब्दस्याभीरजातीयजनसम्बन्धी ग्रामविशेषरूपोऽर्थः, प्रथमायाः पुनर्वर्त्तमानकालिकरूपोऽर्थः। इत्यस्य पुनरन्वयो बुभूषन्नेव दरिद्रमनोरथ इवासम्पन्नो बाधितो जायते। बाधिका चानुपपत्तिः। सा च—गङ्गाऽधिकरणघोषाधेयताया असम्भवरूपा। इत्येवं मुख्यार्थस्योपस्थितस्थापि बाधे लक्षणायाः प्रवृत्तिः अत्रेवान्यत्राप्येवम्, किन्तु यत्र नैवं तत्र नैवम्। तस्मात्—व्यङ्ग्यो न लक्ष्योऽर्थः। न च तदर्था लक्षणायाः प्रवृत्तिरिति।

अभिहितं प्रमाणयितुमाह—**यदि**त्यादि।

**उदयनाचार्यै**रुदयना अमी आचार्या इति तैः उदयनेतिनाम्ना प्रसिद्धैराचार्यैरित्यर्थः'। अत्र बहुवचनं गौरवार्थम्। **न्यायकुसुमाञ्जलौ। यद्** यतः कारणात्। **उक्तं** प्रतिपादितम्। ततस्तन्मयोक्तं तथैवेति शेषः।

अथ किमुक्तमित्याह—'**श्रुतान्वयात्**—' इति।

'**वाक्यं** पदसमुदायविशेषः। **श्रुतान्वयात्**। श्रुतानामभिधयोपस्थापनानन्तरं श्रवणविषयमुपगतानामर्थानामन्वयः सम्बन्धः परस्परं योग्यत्वादिना साचिव्यं तस्मात् कारणादित्यर्थः। यद्वा—श्रुतो योग्यताऽऽदिमत्तया प्रसिद्धिं प्राप्तोऽसौ अन्वय इति तस्मात्। यद्वा—श्रुतस्य (वाक्यस्य) अन्वयोऽर्थबोधजनकत्वेन पर्यवसाने तस्मात्। **अनाकाङ्क्षं** निराकाङ्क्षं सजातीयस्य विजातीयस्य वाऽर्थस्यावलम्बविषयिण्याऽऽकाङ्क्षया शून्यमिति यावत्। 'स'दिति शेषः। **अन्यत्**। 'अवलम्बनीयत्वेने'ति शेषः। **न** नैव। **हि** यतः। **इच्छति**-काङ्क्षते। 'तत'इति शेषः। **पदार्थान्वयवैधुर्यात्** पदानां सुप्तिङ्न्तानां शब्दविशेषाणामर्था अभिधया प्रतिपाद्या अर्था इति तेषामन्वयोचितत्वेन (सम्बद्धरूपेण) पर्यवसानं तस्य वैधुर्यमंभावस्तस्मात्। विधुरस्य वियुक्तस्य भावो वैधुर्यम्। 'कैवल्येऽपि च विश्लेषे विधुरं विकले त्रिषु' इति त्रिकाण्डशेषः। तदा तस्मिन् समये पदार्थान्वयवैधुर्यावसर इति यावत्। **आक्षिप्तेनाक्षे**पोपात्तेन न तु सङ्केतित मात्रस्वरूपेण। यद्वा—तदाक्षिप्तेन इत्येकं पदम्। तेन शक्येनाक्षिप्त आक्षिप्योपात्तोऽर्थस्तेन तद्द्वारा। **सङ्गतिर**न्वयोपपत्तिः। 'भवती'ति शेषः॥' **इति**।

अत्रेदमभिधानम्—अभिधया तावद्वृत्त्या तस्यतस्य पदस्य ससोऽर्थ उपस्थाप्यते। ते सर्वेऽप्यर्थाः श्रुतप्रायत्वा च्छ्रुता इत्युच्यन्ते, तथाभूताः पुनरर्थास्तात्पर्यवृत्त्या सम्भूयावतिष्ठमानाः सम्बद्धा अन्विता इति वाऽप्युच्यन्ते। अन्वितेषु तेषु पदेषु निराकाङ्क्षत्वं निर्बाधम्,—यावदनन्वयं तेषां साकाङ्क्षत्वात्; अन्वयोत्तरं च निराकाङ्क्षत्वात्। वाक्यं हि पदावष्टम्भम्। पदानि पुनरन्वितान्येव अवष्टम्भस्वरूपाणि वाक्यस्य। अन्वितेषु तेषु न तस्य कस्यापि साहाय्यापेक्षा, येन तत साकाङ्क्षं स्यात्। यदि तु अभिधयोपस्थापिता अर्थास्तात्पर्यवृत्त्या अन्विततां, प्रतिनीयमाना अपि कथञ्चिदन्विततां न प्रतिनीयेरन्, किन्तु प्रतिबध्येरन्, तर्हि तद्वाचका अपि शब्दा अनन्विता एव, तेषु तथाविधेषु स्वावष्टम्भेषु वाक्यं विकलमिव सम्भवतीति तस्य वैकल्यस्य परिहाराय कस्याप्यवलम्बः सापेक्ष इति स्थिते न नितान्तं विजातीयस्येति अभिधया प्रतिपाद्यमानेनार्थेन ससम्बन्धस्यार्थस्यावष्टम्भः स्थाने, तस्मात्तदा साकाङ्क्षस्य तस्य सङ्गतिर्वैकल्यपरिहारश्चो पपादनीयत्वेनोपयुज्येते। इत्येवाभिसन्धाय हरिहासभट्टाचार्यैरपि व्याख्यातम्—'गोसादृश्यसामानाधिकरण्येन गवयपदवाच्यत्वविषयकज्ञानजनकतया शब्दस्य गवयत्वादिना शक्तिबोधेनाकाङ्क्षा अन्वयस्य पर्यवसनात्, यत्र पदार्था एवान्वयविधुराः केनापि रूपेणान्वयायोग्याः तत्र तदाक्षिप्तेन तेन लक्षणीयेनार्थेन सङ्गतिरन्वयः, यथा 'गङ्गायां घोषः।' इत्यादौ।' इति।

न पुनः 'शून्यं वासगृहम्—' इत्यादौ (२३ पृ.) मुख्यार्थबाधः। यदि च 'गङ्गायां घोष' इत्यादौ प्रयोजनं लक्ष्यं स्यात्,तीरस्य मुख्यार्थत्वं बाधितत्वं च स्यात्। तस्यापि लक्ष्यतया प्रयोजनान्तरं तस्यापि प्रयोजनान्तरमित्यनवस्थापातः।

न चापि प्रयोजनविशिष्ट एव तीरे लक्षणा। विषयप्रयोजनयोर्युगपत्प्रतीत्यनभ्युपगमात्।

---

## विवृतिः

प्रकृते मुख्यार्थबाधाभावं दर्शयति—न पुनरिति। व्यङ्ग्यस्य लक्षणाबोध्यत्वाङ्गीकारे अनवस्थादोषमाह—यदि चेति। प्रयोजनं शीतत्वपावनत्वाद्यतिशयः। लक्ष्यं लक्षणाबोद्यम्। 'तदा' इति शेषः। बाधितत्वं चेति। चकारेण पावनत्वाद्यतिशयेन लक्षणीयेन संबन्धश्चेत्यपि बोध्यम्। न च तीरे पावनत्वाद्यतिशयस्य संबन्धसत्त्वेन कथं तदापत्तिरिति वाच्यम्। तीरे त्वाहार्यप्रतीतिविषयस्य प्रवाहवृत्तिपावनत्वाद्यतिशयस्य संबन्धाभावात्, परस्परासंबन्धस्याव्यावर्तकत्वेन लक्षणाहेतुत्वाभावात्, तटादिनिष्ठपावनत्वादेस्तु गङ्गापदेनानुपस्थइतेरकिंचित्करत्वात्। तस्यापि लक्ष्यमाणप्रयोजनस्यापि। 'लक्ष्यतया' इति विशेषणे तृतीया। लक्ष्यं प्रयोजनान्तरं कल्प्यं स्यादित्यर्थः। एवमग्रेऽपि। अनवस्थायाः प्रकृताप्रतिपत्तिकरत्वं दूषकताबीजम्। विशिष्टलक्षणावादिनां मतं दूषयति—न चापीति। प्रयोजनेन पावनत्वाद्यतिशयेन विशिष्टे। तथा च 'अतिपावने तीरे घोषः' इति लक्षणाजन्यो बोधः। तस्य च 'गङ्गातटे घोषः' इत्यभिधाजन्यबोधादधिकार्थप्रतीतिः फलम्। एवं च फलफलिनोरभेद एव पर्यवसन्नः। इममेव दोषमाह—विषयेति। विषयः कारणीभूतज्ञानविषयः। प्रयोजनं फलीभूतज्ञानविषयः। युगपत्प्रतीत्यनभ्युपगमादिति। एतदभ्युपगमे फल फलिनोरभेदापत्तिरिति भावः।

## विवृतिपूर्तिः

प्रयोजनेति। प्रयोजनं फलम्। प्रयोजनीभूतज्ञानविषयेण पावनत्वादिना विशिष्टे एव गङ्गातीरे लक्षणा। तथा च कारणत्वेन तीरत्वज्ञानविषयात् कार्यत्वेन पावनत्वज्ञानप्रयोजनस्याभेदे जन्यजनकभावानुपपत्तिः। नैतद्युज्यते। अत एवोक्तम्—'प्रयोजनेन सहितं लक्षणीयं न युज्यते। ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्॥' इति॥

## विज्ञप्रिया

एवं, 'शून्यं वासगृहम्' इत्यादौ शून्यवासगृहादीनां विलोकनाद्यन्वयाबाधाद् न रसलक्षणेत्याह—न पुनरिति।

नन्वेवं रसबोधनार्थमेव व्यञ्जना स्वीक्रियताम्; 'गङ्गायां घोषः' इत्यादौ यत् शैत्यपावनत्वं च व्यङ्ग्यमुक्तं तीरलक्षणानन्तरं तत्रापि लक्षणैवास्तु; किं व्यञ्जनया? इत्याह—यदि चेति।

प्रयोजनं प्रयोजनीभूतज्ञानविषयः। मुख्यार्थत्वं बाधितत्वं च स्यादिति—उभयमेव तु नास्तीति शेषः। प्रयोजनस्य लक्ष्यत्वेऽनवस्था स्यादित्यत आह—तस्यापीति। अनवस्थापात इत्यत्र अनवस्थापातश्चेत्यर्थः।

## लोचन

नन्वेवं विवक्षितान्यपरवाच्ये ध्वनौ मास्तु लक्षणा; अविवक्षितवाच्ये तु शीतत्वपावनत्वादिरूपं प्रयोजनं लक्षणीयमस्त्वित्याशङ्क्याह—यदि चेति। शब्दो हि प्रथमं मुख्यमर्थं प्रतिपाद्य तस्य वाक्यार्थान्वयानुपपत्तौ तत्सम्बन्धिनमर्थं लक्षयति। इह यदि तीरप्रत्ययानन्तरं बोध्यं प्रयोजनं लक्षयति तदा गङ्गाशब्दस्य तीरं मुख्योऽर्थः स्यात्। तस्य च वाक्यार्थान्वयानुपपत्तिः स्यात् इत्यर्थः। प्रयोजनलक्ष्यत्वेऽनवस्थादोषोऽपीत्याह—तस्यापीति। तस्य तया लक्ष्यतया अङ्गीकार्यस्य प्रयोजनानन्तरम्, रूढिप्रयोजनाभावे लक्षणासम्भवादित्यर्थः। तस्यापि—द्वितीयप्रयोजनस्य। "अनवस्था या मूलक्षतिकारिणी" मूलं ह्यत्र तीरनिष्ठस्य पावनत्वस्य च पूर्वपक्षेण लक्ष्यत्वेनाङ्गीकारः। तस्येवंविधाऽनर्थमूलत्वेन परित्यागो न्याय्य इति भावः।

ननु यदि तटाद्यर्थबोधनाय लक्षणावृत्तिराश्रयणीया, इह चैतद्विशिष्टमेव तटं लक्षणा बोधयतु किं वृत्त्यन्तरेण? तथा हि गङ्गातादात्म्येन तटप्रत्ययस्तावल्लक्ष्यः, गङ्गातादात्म्यप्रतीत्या च तटस्थ दैवसिद्धमेव शैत्यादिविशिष्टत्वमित्याशङ्क्याह—न चापीति—प्रयोजनविशिष्टेऽपि लक्षणेत्यर्थः। कुतः? इत्याह—विषयेति। लाक्षणिकज्ञानविषयस्य तटादेस्तत्फलस्य च तटादिनिष्ठस्य च पावनत्वा देरेककालप्रतीत्यसम्भवादित्यर्थः। गङ्गातादात्म्यप्रतीतेः कार्ये एव तटपावनत्वादिप्रत्ययो भवतु तादात्म्यविशिष्टज्ञानस्य विशेष्यविशेषणज्ञानपूर्वकत्वात्। इह गङ्गायामित्यत्र सरिद्भेद एवार्थः प्रतीयते, न खलु संलग्नशैत्यादिरपि। न हि धर्मिणि संकेत्ये तद्गतः सर्वोऽपि गुणादिः संकेत्यो भवितुमर्हति। ततश्च गङ्गातादात्म्यप्रत्यायनेन सरिद्भेदत्वमेव प्रतीयते, तत्कारणकश्च शैत्यादिप्रत्यय इति।

## कुसुमप्रतिमा

इदानीं रसादिप्रतीतिस्थले मुख्यार्थबाधाभावमाह न पुनरिति। अतएव लक्षणाति न सम्भवतीति भावः

अथ "गङ्गायां घोषः" इत्यादौ तीरस्य शीतत्वपावनत्वाद्यतिशयस्य च बोधनेच्छया गङ्गापदप्रयोगात् यथा तीरं शीतत्वादिप्रयोजनश्च द्वयमपि लक्ष्यम्, तथआ रसादिबोधनेच्छया "शून्यं वासगृहम्" इत्यादिकाव्यशब्दानामपि प्रयोगादेव मुख्यार्थबाधाभावेऽपि रसादिरपि लक्ष्य एव भविष्यतीत्याह यदि चेति; प्रयोजनं शीतत्वपावनत्वाद्यतिशयरूपं लक्षणोद्देश्यम्, लक्ष्यं लक्षणाबोध्य स्यात्; तदा तीरस्य मुख्यार्थत्वं तत्सम्बन्धितया शीतत्वादेर्लक्ष्यत्वेन तीरार्थे गङ्गापदस्य शख्यार्थत्वं स्वीकर्त्तव्यं स्यात्, तथा तीरार्थे गङ्गापदस्य सङ्केताग्रहात् बाधितत्वञ्च स्यादित्यर्थः।

ननु गङ्गापदस्य तीरे सङ्केताग्रहादेव तस्य मुख्यार्थत्वं न स्यात् बाधितत्वञ्चेष्टमेवेत्याह तस्यापीति। तस्यापि शीतत्वपावनत्वाद्यतिशयरूपस्य प्रयोजनस्यापि, लक्ष्यतया भवन्मते लक्षणयैव बोध्यतया हेतुना, प्रयोजनानन्तरं प्रथमप्रयोजनबोधकलक्षणाहेतुभृतं द्वितीयं प्रयोजनम्, तस्यापि, च, द्वितीयप्रयोजनस्य लक्ष्यतया प्रयोजनान्तरं तृतीयं प्रयोजनम्, स्वीकर्त्तव्यं स्यादिति शेषः। इति इत्थम् अनवस्थापातः अनवस्थादोषप्रसङ्गः। लक्षणां प्रति प्रयोजनस्य हेतुत्वेन प्रयोजनाभावे लक्षणाया अप्यभावात् रूढ़ेश्चात्रासम्भवादिति भावः।

अर्थ "पशुना यजेत" इत्यादावभिधया पुंस्त्वैकत्वविशिष्टपशुज्ञानवत् "गङ्गायां घोषः" इत्यादावपि लक्षणयैव शीतत्वादिप्रयोजनविशिष्टतीरज्ञानं युगपदेव भविष्यति। तथा च सति नानवस्थादोष इत्याह न चेति। लक्षणेति वाच्यमिति शेषः। विषयः सर्ववादिसिद्धलक्षणाविषयीभूतं तीरं प्रयोजनं शीतत्वपावनत्वा द्यतिशयरूपं

तयोः, युगपत् प्रतीत्यमनभ्युपगमात् एकदा ज्ञानानङ्गीकारात्। अत्रायमाशयः—प्रकृते लक्षणाजन्यतीज्ञानं कारणं शीतत्वादिप्रयोजनज्ञानञ्च तत्कार्य्यम्, तेन च तयोः पौर्वापर्य्यावश्यम्भावेन यौगपद्यासम्भव इति।

## विमला

प्रकृते मुख्यार्थबाधाभावं दर्शयति, न पुनरिति।—"शून्यं वासगृहम्..." इत्यादौ—शून्यं वासगृमित्यमरुशतकीये काव्योदाहरणत्वेन उदाहृतपूर्वे पद्ये इत्यर्थः, मुख्यस्य—वाच्यस्य, अर्थस्य बाधः,—अनुपपत्तिः, पुनः न। तस्मात् अत्र प्रतीयमानस्य घाच्यती व्यतिरिक्तस्य अर्थस्य बोधनाय न लक्षणाऽपि अङ्गीकर्तुं शक्या स्यात्। अतः प्रतीयमानोऽर्थः वाच्यद्भिन्नो लक्ष्य इत्यभिधातुं चाशक्यः। मुख्यार्थबादनमन्तरा लक्षणाया अप्रवृत्तेरिति भावः। व्यङ्ग्यस्य लक्षणाबोध्यत्वाङ्गीकारे अनवस्थादोषमाह, यदि चेति।—यदि पुनरित्यर्थः, "गङ्गायां घोषः" इत्यादौ प्रयोजनं लक्ष्यं स्यादिति।—प्रयोजनं—शीतत्वपावनत्वाद्यतिशयः, लक्ष्यं—लक्षणाजन्यबोधविषयः, स्यात् ("तदा" इति अध्याहार्य्या) तीरस्य मुख्यार्थत्वं—गङ्गाशब्दमुख्यार्थत्वं, बाधितत्वञ्च—बाधश्च स्यात्। चकारेण पावनत्वाद्यतिशयेन लक्षणीयेन सम्बद्धश्चेत्यपि बोध्यम्। न च मुख्यार्थभिमते तीरं लक्ष्यार्थाभिमतपावनत्वाद्यतिशयस्य सम्बन्धसत्त्वेन कथं तदापतिरिति वाच्यं, च तीरे तु असम्बद्धे सम्बन्धरूपाहार्य्यप्रतीतिविषयस्य प्रवाहवृत्तिपावनत्वाद्यतिशयस्य सम्बन्धाभावात् स्वाश्रयप्रवाहसम्बन्धित्वादिरूपपरासम्बन्धस्या व्यावर्त्तकत्वेन लक्षणाहेतुत्वाभावात्, तटादिनिष्ठपावनत्वादेस्तु गङ्गपदेनानुपस्थिते अकिञ्चित्करत्वात्। इष्टापत्तावाह, तस्यापीति।—तस्यापि—शीतत्वपावनत्वादि रूपस्य लक्ष्यमाणप्रयोजनस्यापि, लक्ष्यतया—[विशेषणे तृतीया] लक्ष्यमित्यर्थः, प्रयोजननान्तरम्—अन्यत्प्रयोजनम् इति तथोक्तम्; [मयूरव्यंसकादित्वाञ्चान्यस्यान्तरादेवसः, प्रयोजनस्य च पूर्वनिपातः]। अनवस्थाऽऽपातः,—असीमत्वात् लक्ष्यप्रयोजनानां न काऽपि व्यवस्थेति भावः। अयं भावः—गङ्गायां घोषः प्रतिवसति इत्यत्र गङ्गाशब्दस्य भगीरथखातावच्छिन्नजलप्रवाहो मुख्यार्थः, तत्र घोषणाधिकारणत्वासम्भवरूपबाधात्, तत्सम्बद्धतीरस्य लक्षणयोपस्थितिः, लक्षणाप्रयोजनस्य शीतत्वपावनत्वाद्यतिशयस्य गङ्गादिशब्दाभिधया बोधयितुमशक्यतया व्यञ्जनयैव बोध इति गङ्गाशब्दस्य तीरं लक्ष्यं, तादृशपावनत्वादि व्यङ्ग्यम्। अत्र शङ्क्यते, यदि चेत्यादिना।—तथाच, यदि गङ्गाशब्दस्य शीतत्वपावनत्वादिरूपप्रयोजनं लक्ष्यं स्यात्, तदा तीरस्य गङ्गाशब्दमुख्यार्थत्वं स्यात्, तथात्वे तु तत्र घोषवासाद्यधिकरमत्वासम्भवरूपबाधोऽपि स्यात्, मुख्यार्थबाधस्थले एव लक्षणास्वीकारात्। एवं लक्ष्यत्वाभिमतशीतत्वपावनत्वादेः मुख्यार्थभिमततीरेण साक्षात्सम्बन्धोऽपि स्यात्, शक्यसम्बन्धे एव लक्षणास्वीकारात्। एवं शीतत्वपावनत्वादिरूपप्रयोजने लक्षणास्वीकारे तत्र प्रयोजनान्तरमपेक्षणीयं, यतः प्रयोजनादेव लक्षणा स्वीक्रियते। एवं तादृशप्रयोजनान्तर-स्यापि लक्ष्यत्वापत्तिः तत्रापि प्रयोजनान्तरस्याप्यपेक्षेत्यनवस्थेति। इदमुक्तम्—अनवस्थाऽऽपाते निर्णयो न जायते, अत एवं न वक्त्व्यम्। अस्तु वाऽवस्थाया अपि स्वीकारः, किन्तु "भक्षितेऽपि लशुने न शान्तो व्याधिः" इतिवत् अनवस्थायामपि पूर्वपूर्वपेक्षया उत्तरोत्तरस्यैव व्यङ्ग्यत्वेनावशिष्यमाणत्वमापातत आपद्यते इति अनवस्थायाः प्रकृताप्रतिपत्तिकरत्वं दूषकताबीजं न निवारयितुं शक्यमिति भावः।

## लक्ष्मी

एवं पूर्वार्द्धं व्याख्याय उत्तरार्द्धं व्याचिख्यासुः। मुख्यार्थबाधाभावेन लक्षणायाः असम्भवमुपपादयितुमाह—किञ्चेति। अपि चेत्यर्थः। उपात्तशब्दार्थानाम् उच्चरितपदार्थानाम्। जलप्रवाहरूपायां गङ्गायाम् आभीरप-

ल्लीतिवाच्यार्थानामित्यर्थः। अन्वयः अन्वयबोधः बुभूषन् भवितुमिच्छन्नेव अनुपपत्त्या प्रवाहे घोषस्यासम्भवाद-सङ्गतिबोधेन। बाध्यते प्रतिबध्यते। प्रवेशो योग्यत्वं भवतीति शेषः।

उक्तार्थे संवादं दर्शयति—युक्तमिति। श्रुतान्वयादिति। श्रुतान्वयात् श्रुतपदार्थयोरन्वयसम्भवात् अबाधिताद्धेतोः अन्यत्रानाकाङ्क्षम् अर्थान्तराकाङ्क्षारहितं वाक्यं पदसमुदाय विशेषः (कर्तृ) अन्यत् अर्थान्तरं नेच्छति नैवाकाङ्क्षति। परन्तु पदार्थान्वयवैधुयात् पदार्थयोरन्वयाऽसम्भवात् मुख्यार्थान्वयानुपपत्तिग्रहाद्धेतोरित्यर्थः, तेन मुख्यार्थेन आक्षिप्तः अन्वयोपत्त्यर्थं सम्बन्धितया गृहीतो योऽर्थस्तेन सङ्गतिरन्वयोपत्तिः स्यात्, यथा 'गङ्गायां घोषः' इत्यादौ पदार्थानामन्वयकाल एव बाधप्रतिभासादन्वयस्य विधुरीभावस्तथा तेन पदार्थे न जलप्रवाहादिना आक्षिप्तो यस्तटादिस्तेन सङ्गतिरन्वयोपपत्तिर्नेत्यर्थः। एतेनोदयाचार्यमतेऽपि अन्वयानुपपत्तिस्थल एव लक्षणेति प्रकटितम्।

एवं 'शून्यं वासगृहम्' इत्यादौ शून्यवासगृहादीनां विलोकनाद्यन्वयाबाधात् न रसे लक्षणेत्याह—न पुनरिति। न केवलं मुख्यार्थबाधाभा एव, न चापि तद्योगः, परम्परासम्बद्धस्यापि व्यङ्ग्यत्वात्, नापि प्रयोजनम्, रसस्यैव परमप्रयोजनत्वात्।

नन्वेवं रसबोधनार्थमेव व्यञ्जना स्वीक्रियताम्, 'गङ्गायां घोषः' इत्यादौ यत् शैत्यपावनत्वादिकं तीरलक्षणान्तरं व्यङ्ग्यमुक्तं तत्रापि लक्षणैवास्तु किं व्यञ्जना? इत्यत आह यदि चेति। प्रयोजनं शीतत्वपावनत्वाद्यतिशयरूपं लक्षणोद्देश्यम्, लक्ष्यं लक्षणाबोध्यं स्यात् 'तदा' इति शेषः, तीरस्य मुख्यार्थत्वं तत्सम्बन्धितया शीतत्वादेर्लक्ष्यत्वेन तीरार्थे गङ्गापदस्य शक्यार्थत्वमङअगीकरणीयं स्यात् तथा तीराऽर्थे गङ्गापदस्य सङ्केताग्रहात् बाधितत्वं स्यात्। अत्रायमाशयः—शब्दो हि प्रथमं स्वमर्थं प्रतिपाद्य तस्य वाक्यार्थान्वयोतदागङ्गापदस्य तीरं मुख्याऽर्थः स्यात् तस्य च वाक्यार्थान्वयानुपपत्तिःस्यादिति।

ननु गङ्गापदस्य तीरे सङ्केताभावादेव मुख्यार्थत्वं तस्य न स्यात् बाधितत्वञ्च ममाभिलषितमेवेत्यत आह—तस्यापीति। तस्यापि शीतत्वपावनत्वाद्यतिशयरूपप्रयोजनस्यापि 'लक्ष्यतया' इति विशेषणे तृतीया, भवन्मते लक्षणयैव बोध्यतया हेतुना प्रयोजनान्तरं प्रथमप्रयोजनसूचकलक्षणाहेतुभूतद्वितीयं प्रयोजनम्, तस्यापि च द्वितीयप्रयोजनस्यापि च लक्ष्यतया प्रयोजनानन्तरं तृतीयं प्रयोजनं स्वीकरणीयं स्यादिति शेषः, इति अनेन प्रकारेण अनवस्थापातः। अनवस्थाया दूषकताबीजं तु प्रकृताप्रतिपत्तिकरत्वमेव। प्रयोजनपारम्परया लक्षणास्वीकारे तु प्रयोजनान्वेषणस्यापर्यवसानेन प्रकृतस्य पावनत्वादेस्तीरादेर्वा बोधाभावकृदनवस्थादोष इति भावः। तस्मात्तस्या एवं विधाऽनर्थमूलत्वेन परित्यागो न्याय्य इति।

ननु तटाद्यर्थबोधनाय लक्षणावृत्तिराश्रयणीया इह चैतद्विशिष्टमेव तटं लक्षणा बोधयतु किं वृत्त्यन्तरेण? तथा हि गङ्गातादात्म्येन तटप्रत्ययस्तावल्लक्ष्यः गङ्गातादात्म्यप्रतीत्या च तटस्थ दैवसिद्धमेव शैत्यपावनत्वादिविशिष्टत्वम्, तथा च 'पशुना यजेत' इत्यादावभिधया पुंस्त्वैकत्वविशिष्टपशुज्ञानवत्, उक्तलक्ष्यादावपि लक्षणयैव शैत्ययपावनत्वादिप्रयोजनविशिष्टतीरज्ञानम्, एककालवच्छेदेनैव सेत्स्यति तथासति नानवस्थादोषप्रसङ्ग इत्यत आह—नचापीति। प्रयोजनं शैत्यपावनत्वाद्यतिशयरूपं फलम्, प्रयोजनीभूतज्ञानविषयेण शैत्यपावनत्वादिना विशिष्ट एव गङ्गातटे लक्षणा वाच्यमिति शेषः। विषयः सर्ववादिसिद्धिलक्षणाविषयीभूतं तटं प्रयोजनं शैत्यपावनत्वाद्यतिशयरूपं तयोः युगपत्प्रतीत्यनभ्युपगमात् एक कालावच्छेदेन भानाऽनङ्गीकारात। लक्षणाजन्यं तटज्ञानं कारणम्, शैत्यपावनत्वादिप्रयोजनज्ञानं च तत्कार्य्यम् तेन तयोः पौर्वापर्य्यस्यावश्यं भावितत्वेन यौगपद्यासम्भवः। न हि विषयप्रयोजनं चैकदा सम्भवति। अत एवोक्तम्—

## रुचिरा

व्यङ्ग्यार्थस्थले मुख्यार्थबाधाभावं दर्शयन् तत्र लक्ष्यत्वं परिहर्तुमाह—**न पुनरि**त्यादि ।

**न नैव । पुनः तु । 'शून्यं वासगृहम्—इत्यादौ** 'शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैः' इत्यादौ इत्यर्थः । **मुख्यार्थबाधः** पदार्थान्वयवैधुर्य 'मस्ती'ति । शेषः । येन आक्षिप्य सङ्गतिभिप्रेता स्यात् किन्तु प्रकृते तदभावाच्छ्रुतान्वयसद्भावाच्च निराकाङ्क्षत्वमिति 'गङ्गायां घोषः ।' इत्यादिस्थले एव मुख्यार्थबाधस्तदमुत्रैवाक्षिप्तेन सङ्गतिः सव्यपेक्षेति बोध्यम् । अत्रायंम्भावः—'शून्यं वासगृहं विलोक्य' इत्यादौ मुख्यार्थोपपत्तेस्तदभावाभावाच्च नाक्षिप्तेन सङ्गतिरपेक्ष्यते, 'गङ्गायां घोषः ।' इत्यादौ तु मुख्यार्थस्य बाधः स्फुट एवेति कथमाक्षिप्तमनपेक्षितं स्यात् । इति । अनेवंविधस्थलेऽपि ('शून्यं वासगृहं—'इत्यादावपि) व्यङ्ग्याभ्युदयदर्शनात्र लक्ष्यत्वं सम्भवति न च तथा सम्भावनीयमपीति ।

ननु लक्षणा हि प्रयोजनमूला प्रयोजनमन्तरेण तदप्रवृत्तेः प्रयोजनं पुनरालङ्कारिकाणां विचारदृशा व्यङ्ग्यं, किन्तु तयोपस्थाप्यमानस्यार्थस्येव तस्यापि तत्त्वं कुतो न स्यात् तथा सति व्यङ्ग्यमेव लक्ष्यमिति सिद्धान्तः शरणमिति चेन्नेत्यभिधत्सुस्तत्रानवस्थापातमाह—**यदी**त्यादि ।

**यदि** यर्हि । **च** पुनः । **"गङ्गायां** तन्नाम्न्यां नद्याम् । **घोषो** 'स्ति'ति शेषः ।' **इत्यादौ** 'प्रयोगे' इति शेषः । **प्रयोजनं** 'लक्षणायाः प्रवृत्तिनिवृत्तिनिमित्तभूत'मिति शेषः । **लक्ष्यं** यन्मूलं प्रयोजनं तयैव लक्षणया वृत्त्या प्रतिपाद्यम् । **स्याद्** भवेत् । 'तदे'ति शेषः । **तीरस्य** लक्षणया समर्प्यमाणस्यार्थस्येत्यर्थः । **मुख्यार्थत्वं** मुख्यार्थोऽभिधय प्रतिपाद्योऽर्थस्तत्त्वम् । 'स्यात्'इति शेषः । **च** तथा । 'तस्ये'ति शेषः । **बाधितत्व**मनुपपत्तिमत्त्वम् । बाधितस्योपपत्ति प्राप्तस्य भाव इति तथोक्तम् । **स्यात्** । 'पावनत्वाद्यतिशयेन लक्षणीयेन सम्बन्धश्च स्या'दिति शेषः । **च** पुनः । **तस्य** लक्ष्यमामाणस्य तस्य प्रयोजनस्य । अपि । लक्ष्यतया लक्षणया समर्प्यमाणत्वेन । **प्रयोजनान्तरे** 'ऽभिप्रेते सती'ति शेषः । **तस्य** प्रयोजनान्तरस्य । **अपि** । 'यदी'ति शेषः । **प्रयोजनानन्त**रमन्यत् प्रयोजनम् । 'स्यादि'ति शेषः । **इतीत्येवम्** । **अनवस्थापातो**ऽनवस्थायास्तदाख्यस्य दोषस्य पातः प्रसङ्ग आपतत उपस्थितिः स्यादिति यावत् ।

अत्रेदं तात्पर्यम्—यदि यत्र प्रयोजनो मुख्यार्थबाधः स्यात्तत्र तर्हि मुख्यार्थे कथमपि सति बाधिते किमपि प्रयोजनमधिष्ठाय तत्सम्बन्धमुपादाय तद्बाधितत्वं निरसितुमेव लक्षणायाः प्रवृत्तिः, नान्यथाऽपीति सिद्धान्तः । तथा च—लक्षणया यस्य मुख्यार्थस्य यत्र बाधस्तत्र तत्सम्बद्धः एव तन्मात्रनिरसनपरोऽर्थ उपस्थाप्यते, नतु प्रयोजनमपि तस्य तथात्वेन तस्या अविषयत्वात् । इति । यथा—'गङ्गायां घोषः ।' इत्यत्र गङ्गाशब्दस्य जलप्रवाहरूपो मुख्योऽर्थः, तस्य पुनर्घोषाधिकरणकतयाऽनुपपत्तिरूपो बाधः, अतस्तस्य तीरे सम्बन्धेन निरास इति तत्पावनत्वाद्यतिशयख्यापनरूपं प्रयोजनमधिष्ठाय लक्षणया तीररूपस्यार्थस्योत्थापनम् । इति मुख्यार्थेन प्रतिपादयितुमशक्यस्य पावनत्वाद्यतिशयात्मकप्रतीत्यभिन्नस्य प्रयोजनस्य सद्भावे लक्षणया गङ्गाशब्देन तीरमुपस्थाप्यते गङ्गाशब्देन तीरं लक्ष्यते इति यावत् । तथा यदि गङ्गाशब्दस्य मुख्यार्थस्तीरं स्यात्, तत्र पुनर्घोषाधिकरणत्वं बाधित्वं स्यात् प्रयोजनस्य च गङ्गागतपावनत्वाद्यतिशयविशेषस्य तीरेण साक्षात्, सम्बन्धः स्यात् लक्षणया च प्रयोजनप्रतिपादनस्य प्रयोजनान्तरं स्यात् तर्हि लक्षणया गङ्गाशब्देन प्रयोजनं लक्ष्येत च चेदं किमपि विद्यते । यदि च तीरगतपावनत्वाद्यतिशयरूपस्य प्रयोजनस्यापि लक्ष्यत्वं स्यात् तल्लक्ष्यगतं प्रयोजनान्तरं च स्यात्, तर्हि तथा प्रयोजनपारम्पर्य्ये लक्षणाऽङ्गीकारे प्रयोजनान्वेषणस्य चापर्यवसाने तस्य पावनत्वाद्यतिशयस्य तीरस्य च बोधाभावापादिकाऽनवस्थोपतिष्ठेत । इति ।

वस्तुतस्तु मनोविलसितमात्रमिदम् । कथमन्वथा गङ्गाशब्देन लक्षणयोपस्थापिते तीरे तदनन्तरं च तस्यां विरतव्यापारायां प्रयोजनमुपस्थाप्येत । इति ।

ननु न लक्षणया शक्यसम्बद्ध एवार्थः समुपस्थाप्यते किन्तु प्रयोजनमपि । अथ यदि शक्यसम्बद्धमर्थमुपस्थाप्यैव विरमति लक्षणा, विरतायां च तस्यां पुनरुत्थानाभाव एवाङ्गीक्रियते तर्हि काममङ्गीक्रियतां नाम, किन्तु प्रयोजनसंबलित एवासौ किमु न लक्ष्येतेत्याशङ्क्योत्तरयति—**न चापीत्यादिना** ।

**च** पुनः । **प्रयोजनविशिष्टे** प्रयोजनेन विशिष्टं संयुक्तं तत्र । **एव** । न तु तद्विपरीतेऽपीत्यर्थः । **तीरे** । 'तीरे' इति लक्ष्यमात्रस्योपलक्षकम् । 'निमित्तात्कर्मयोगे ।' इति निमित्ते सप्तमी । तथा च—तीराद्यर्थबोधनिमित्तमित्यर्थः । **अपि** ।लक्षणा 'प्रवर्त्तते' इति शेषः । इति- **न** नैव 'सङ्गच्छत' इति शेषः । कुत इत्याह—**विषयप्रयोजनयोर्विषयः** कारणीभूतज्ञानविषयः, प्रयोजनं फलीभूतज्ञानविषयस्तयोरित्यर्थः । **युगपदेकस्मिन्नेव** समये । **प्रतीत्यनभ्युपगमात्** प्रतीतेरनभ्युपगमस्तस्मात् । तदेव द्रढयति—**हि** यतः । **नीलादिसंवेदनानन्तरं** नीलादिज्ञानोत्तरकाले । **एव** नतु नीलादिज्ञानात् प्रागपि । **ज्ञातताया** ज्ञानविषयीकृततायाः । **वा**ऽथवा । **अनुव्यवसायस्य** निश्चयस्य । **न** नैव । **सम्भवो** 'जायत' इति शेषः ।

अत्रेदमभिहितम्—यदि 'गङ्गायां घोषः ।' इत्यादौ तीरादि लक्षयित्वा प्रयोजनं लक्षयितुं 'शब्दबुद्धिकर्म्मणां विरम्यव्यापारभाव' इत्युक्तदिशा लक्षणा न प्रवर्त्तेत तर्हि मा प्रवर्त्ततताम्, किन्तु प्रयोजनीभूतज्ञानविषयेण पावनत्वादिना विशिष्टमेव तीरादि लक्षयितुं प्रवर्त्तेत, तथा च—'अतिपावने सुशीतले गङ्गातीरे घोषः ।' इत्यादिप्रकारको बोधः, अस्य पुनः 'गङ्गातीरे घोषः ।' इत्याद्यनभिधाय 'गङ्गायां घोषः ।' इत्याद्यभिधानमात्रेणापि तथा बोध इति बोधाधिक्यमेव प्रयोजनम् । इति न परिणामरमणीयम् । अत्र हि—पावनत्वाद्यतिशयात्मकप्रयोजनविशिष्टतीरादिबोधः । प्रयोजनं फलं, तीरादि पुनर्विषयस्तच्छालित्वात् । तथा च—स्फुटः फलफलिनोरभेदः । तत्प्रकारकः पुनर्बोधो न क्षोदक्षमः ।

नीलादिसंवेदनान्तरमेव हि ज्ञातताया अनुव्यवसायस्य वा संभवः ।

**नानुमानंरसादीनां व्यङ्ग्यानां बोधनक्षमम् ।**
**आभासत्वेन हेतूनां स्मृतिर्न च रसादिधीः ॥ ४ ॥**

---

## विवृतिः

फलफलिनोर्भेदमेव दर्शयति—नीलादीति । संवेदनं प्रत्यक्षम्, ज्ञातता प्रकटता, इति । भट्टमते—नीलादौ ज्ञाते हि ज्ञाततारूप एको धर्म उत्पद्यते । अनुव्यवसाय इति । नैयायिकमते—नीलादि ज्ञाने जाते 'नीलमहं जानामि' इति ज्ञानप्रत्यक्षरूपोऽनुव्यवसायो जायत इत्यादौ फलफलिनोर्भेद एव दृश्यते । भवन्मते तयोरभेदापत्तिः । एतदुपलक्षणम् । गङ्गापदात्प्रतीतयमानस्य पावनत्वादेस्तीरे वैशिष्ट्यासंभवोऽपि द्रष्टव्यः । यदि पुनर्दूरतीरापेक्षया समीपतीरे पावनत्वाद्यतिशयः संभवति स एव गङ्गापदेनप्रत्याय्यत इति संभाव्यते तदा नायं दोषः । अत एव 'तीरस्य मुख्यार्थत्वं बाधितत्वं च स्यात्' इत्यत्र ग्रन्थकृता 'पावनत्वाद्यतिशयेन लक्षणीयेन संबन्धश्च' इत्यापत्तिः काव्यप्रकाशोक्तापि नोक्ता । तयोः संबन्धसत्त्वेनापत्त्ययोगात् ॥

## विवृतिपूर्तिः

नीलेति । भट्टनय. नीलज्ञानानन्तरं ज्ञातो नील इति प्रत्ययात्तज्ज्ञानेन नीले प्रकटतापरपर्याया ज्ञातता जायते । अस्मिन्मते ज्ञानमतीन्द्रियम्, तज्जन्या ज्ञातता प्रत्यक्षा, तया च ज्ञानमनुमीयते । इयं ज्ञातता नीलविशेष्यकनीलत्वप्रकारकज्ञानजन्या नीलवृत्ति-नीलत्वप्रकारकज्ञाततात्वाद् या यद्वृत्तिर्यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानसाध्या । यथा पीते पीतत्वप्रकारिका ज्ञाततेत्यनुमितिः ॥

अन्विति । संवित्त्यपरपर्यायस्येत्यर्थः ॥

## विज्ञप्रिया

ननु लक्ष्यार्थबोधानन्तरं यदि प्रयोजने लक्षणा तदैवानवस्था; शीतपावनें तीरे घोष इत्येवं प्रयोजनविशिष्ट एव लक्षणास्त्वित्यत आह—न चापीति । तत्र गङ्गातीरे घोष इत्यतोऽधिकार्थस्य प्रतीतिः प्रयोजनमिति काव्यप्रकाशकृदुक्तं प्रयोजनमनुसन्धेयम् । समाधत्ते-विषयप्रयोजनयोरिति । पावनत्वविशिष्टतीरलक्षणायां हि लक्षणाविषयस्तीरम्, विशेषणं पावनत्वादि प्रयोजनं—प्रयोजनीभूतज्ञानविषयरूपं पावनत्वादि तयोर्युगपत्प्रतीतिः; लक्षणजन्यैप्रतीति तदनभ्युपगमादित्यर्तः । ननु तदनभ्युपगमे किं बीजम् ? इति चेत्-लक्षणया यत्पावनत्वविशिष्टं ज्ञानं जनयितव्यं तत्प्रयोजनीभूतं ज्रानं च तदेव पर्यवसितमित्यतः कार्यकारणयोरभेदापत्तिरेव बीजमिति सर्वत्र तु तयोर्भेद एव दृश्यते इत्याह—नीलादीति । नीलादिज्ञानं व्यंवसायरूपं कारणं, तत्कार्यं तु ज्ञातता । नैयायिकानां मुरारेश्च मतेऽनुव्यवसायः तादृशकार्यकारणयोश्च क्रमोत्पत्तिरेव इत्यर्थः । क्रमिकयोश्च भेद इत्यर्थः ।

व्यक्तिविवेककारमते विभावादिभ्यो रत्याद्यनुमितिरेव रस; न रत्यादीनां व्यञ्जना—इति; तद्दूषयति—नानुमानम् इति । रसादीनां रत्यादीनां व्यङ्ग्यानां बोधनक्षमं बोधकारणं नानुमानमित्यर्थः । कुतः ? इत्यत्राह—आभासत्वे नेति । ग्रन्थकृन्मते हि ज्ञायमानविभावादीनां रत्यादिलिङ्गत्वसम्भवेऽपि, रामः सीताविषयकरतिमान्;

सीतादिविभावादिमत्त्वात् इत्यनुमितिर्न रसः तस्याऽनन्दस्वरूपत्वाभावेन अनास्वाद्यत्वात्; किन्तु शब्दान्वयव्यतिरेकानुविधायित्वेन व्यञ्जनया शाब्दबोधविषयो रत्यादिर्भावुकैर्भाव्यमानः स्वप्रकाशान्दमयत्वेन परिणत आस्वाद्यमानो रसः। तस्य च व्यङ्ग्यत्वं प्रपानकरसन्यायेन, तच्छरीरप्रविष्टरत्यादेर्वा व्यङ्ग्यत्वादिति। तथा च तादृशरसस्य हेतूनां रत्यादिकार्यकारणसहकारिरूपाणां विभावादीनामाभासत्वेन नानुमानं नानुमितिरित्यर्थः। तथा हि विभावादयः सीतादयो हेतवो मतुबर्थदिदृक्षादिसम्बन्धेन रामादिवृत्तयः। साध्यस्तूक्तरूपो रसः काव्यबोद्धनिष्ठ इत्यतो हेतूनां विरुद्धत्वमसिद्धिश्चेति हेत्वाभासता। वृत्तावप्ययमर्थो व्यक्तिर्भविष्यति। रसादिबुद्धिः स्मृतिरूपापि नेत्याह—स्मृतिर्न च रसादिधीः इति। संस्कारजन्यत्वेन रसादिबुद्धिः स्मृतिरूपेति केचिदाहुः। तच्च संस्कारजन्यप्रयभिज्ञायां व्यभिचारादाभासरूपमेवेत्यग्रे वक्ष्यते। वस्तुतस्तु स्वप्रकाशानन्दरूपत्वेनैव न स्मृतिः; तस्या एवंभावाभावात्।

## लोचन

तेन तटशैत्यादिप्रत्यययोर्हि हेतुफलरूपयोर्भिन्नकालत्वमेव वक्तुं युक्तमिति कथमेकवृत्तिविषयत्वमित्याशयः। एतदेव व्याप्तिदर्शनेन द्रढयति—न चापि इति। हि यस्माज् ज्ञातता प्रकटतापरनामको धर्मः स च प्रत्यक्षादीना नीलादेर्विषयीकरणानन्तरं तत्र जातो ज्ञानजन्यो ज्ञानज्ञेयत्वनियामकः कश्चनातिशयः, येन ज्ञातोऽयं घट इति मतिरुत्पद्यते इति भट्टमतम्। ज्ञानविषयकं ज्ञानमनुव्यवसायाख्यमिति नैयायिकाः।

एवं व्यङ्ग्यस्यास्य प्राचीनवेद्यत्वं निरस्य महिमभट्टेन खलु रसवस्त्वलङ्कारव्यञ्जकानां वाक्यानामन्तर्भावार्थ यदनुमानं दर्शितं तत्तद्धेत्वाभासदोषेण विधुरीकृतम्।

हेतोराभासतयेति—'आभासात्वेन हेतूनाम्' इति कारिकापदार्थः। कथं हेतोराभासतेत्याह—व्याप्तिग्रहणाभावादिति.

## कुसुमप्रतिमा

जनकजन्यभूतयोर्ज्ञानयोरपि पौर्वापर्य्यं दर्शयितुं दार्शनिकसंवादमाह नीलादिति। हि तथाहि। नीलादिसंवेदनान्तरमेव "अयं नौली घट" इत्यादिनीलादिविषयकप्रत्यक्षीत्पत्तेः परमेव, ज्ञाततायाः "नीलमहं ज्ञातवान्" इति पूर्वं प्रत्यक्षविषयकज्ञानान्तरस्य सम्भव इति मीमांसकमतम्। अनुव्यय सायस्य तथैव पूर्वं प्रत्यक्षविषयकज्ञानान्तरस्य सम्भव इति नैयायिकमतम्। एवञ्च प्रयोजनविशिष्टेलक्षणाया असम्भवात् प्रयोजनस्यापि पृथग्ल्यत्वे त्वनवस्थापातात् प्रयोजनबोधनार्थं व्यञ्जनावृत्तिरवश्यमङ्गीकर्त्तव्येति तयैव रसादिबोधनसम्भवे तदर्थमपूर्वलक्षणासामर्थ्यकल्पना नितरामन्वाय्येति भावः।

अथ "काव्यं रसादिमत् विभावादिमत्त्वादात्" इत्यनुमानेनैव रसादिज्ञानसम्भवे तदर्थं व्यञ्जनाङ्गींकरणमनर्थकमेवेति व्यक्तिविवेककारमहिमभट्टमतं निराकर्त्तुमाह नानुमानमिति। अनुमानम्, हेतूनाम आभासत्वेन व्यभिचारादिदुष्टत्वेन हेतुना, व्यङ्ग्यानाम् अस्मन्मतीयव्यञ्जनाप्रतिपाद्यानां न बोधने क्षमं समर्थम्। प्रतिवादिदर्शनीयानां सर्वेषामेव हेतूनामाभासत्वसूचनाय हेतूनामिति बहुवचनम्। तथा "रसादिज्ञानं स्मृतिः संस्कारजन्यत्वात्" इति मतं निरसितुमाह स्मृतिरिति। रसादीनां धीर्ज्ञानं न च नवा स्मृतिः संस्कारजन्यज्ञानविशेषः। हेतूनाम् आभासत्वेनेति पूर्वोक्त एवात्रापि हेतुः। कारिकेयं वृत्तिव्याख्यानेनैव स्पष्टीभविष्यति।

दूषयितुं तत् प्रबन्धमाह व्यक्तीति । यदुक्तमिति परेणान्वयः । हि तथाहि । अनुमान एवान्तर्भवितुमर्हतीति । अतएवातिरिक्ता व्यञ्जना नाङ्गीकाव्येति भावः । हि यस्मात् । साधनं हेतुः । विभावादीनां व्याप्तिवैशिष्ट्यं प्रतिपादयति ते होति । हि यस्मात् । ते विभावादयस्त्रयः । तान् रत्यादीन् । अनुमापयन्त एव अनुमानेन बोधयन्त एव । रसादीन् निष्पादयन्ति रसादिरूपतया ज्ञापयन्ति । अबाधमभिप्रायः—यथा वह्निव्याप्यी धूमः पर्वतवृत्तिरिति परामर्शानन्तरम् "पर्वतो वह्निमान् धूमात्" इत्यनुमानम्, तथा रसादिव्याप्यो विभावादिः काव्यवृत्तिरिति परामर्शनन्तरम् "काव्यं रसादिमत् विभावादिमत्त्वात्" इत्यनुमानमिति ।

## विमला

विशिष्टलक्षणावादिनां मतं दूषयति, न चापि इति ।—प्रयोजनेन—पावत्वाद्यतिशयेन विशिष्टे, तथा च "अतिपावने तीरे घोषः" इति लक्षणाजन्यो बोधः; तस्य च "गङ्गातटे घोषः" इत्यभिधाजन्यबोधादधिकार्यर्थप्रतीतिः फलम्; एवञ्च फलफलिनीरभेद एव पर्य्यवसन्नः । इममेव दोषमाह, विषयप्रयोजनयोरिति ।—विषयः,—कारणीभूतज्ञानं, प्रयोजनं—फलीभूतज्ञानं, तयोर्युगपत्—समकालिकी, द्या प्रतीतिः तस्याः अनभ्युपगमात्—अनङ्गीकारात्, एतदभ्युपगमे फलफलिनोरभेदापत्तिः न हि कारणज्ञानं कार्य्यज्ञानञ्च समकाले सम्भवतीति भावः । फलफलिनीभेदमेव समर्थयति, नीलादीति ।—नीलादीनां संवेदनानन्तरमेव—प्रत्यक्षात् परमेव, न तु पूर्वं, यद्वा प्रत्यक्षसमकाले इत्यर्थः, ज्ञातताया—प्रकटताया, मीमांसकमतानुयायिनां सङ्केतविशेषः, इति यावत्, यथा नीलो ज्ञात इत्यादिरूपः, तस्याः, वा—यद्वा, अनुव्यवसायः,—नैयायिकमतानुयायिनां सङ्केतविशेषः, यथा,—नीले प्रत्यक्षे नीलमहं जानमीत्येवंरूपोऽर्थः, तस्य, ततश्च नीलादिप्रत्यक्षं कारणं, तदनन्तरं ज्ञातता वा अनुव्यवसायः तस्य फलं, तयोर्यौगपद्यं न केऽप्यङ्गीकुर्वन्ति । प्रकृते तीरज्ञानात् परमेव शैत्यपावनत्वादिप्रतीतिः, न तु समकालिकीति फलितार्थः, एतदुपलक्षणम् । गङ्गापदात्मप्रतीयमानस्य पावनत्वाद्तेः तीरे वैशिष्ट्यासम्भवोऽपि द्रष्टव्यः । यदि पुनः दूरतीरा पेक्षया समीपतीरे पावनत्वाद्यतिशयः सम्भवति, स एव गङ्गापदेन प्रत्यायते इति सम्भाव्यते, तदा नायं दोषः । अत एव "तीरस्य मुख्यार्थत्वं बाधित्वञ्च स्यात्" इत्यत्र ग्रन्थकृता "पावनत्वाद्यतिशयेन लक्षणीयेन सम्बन्धश्च" इत्यापत्तिः काव्यप्रकाशोक्ताऽपि नोक्ता तयीः सम्बन्धसत्त्वेनापत्त्ययोगादिति भावः ।

नाट्ये रामत्वेनाहार्य्यज्ञानविषये नटे, काव्ये तु रामे एव विभावादिभि रत्याद्यनुमानं, ततः तदनुमानोद्बोधितया सामाजिकानां वासनारूपप्रत्यसक्त्या साक्षात्कृतो रामादिरत्यादि रसः, इति श्रीशङ्कुमतानुयायिनां मतं दूषयन् अनुमानप्रमाणलभ्यत्वं रसादेर्निराकरोति, नेति ।—हेतूनां—कारणानाम्, आभासत्वेन—दुष्टत्वेन, व्यभिचरितत्वेनेत्यर्थः, अनुमानं—व्याप्तिपक्षधर्मताज्ञानं, रसादीनां व्यङ्ग्यानां—व्यञ्जनाजन्यबोधविषयाणां, न बोधने, क्षमं—समर्थम्; रसादिबुद्धेः संस्कारजन्य ज्ञानत्वेन स्मृतित्वं साधयतां मतं दूषयति, स्मृतिरिति ।—स्मृतिः,—संस्कारविशेषः च रसादीनांधीः,—ज्ञानसाधनं, न । अत्रापि प्रागुक्त एव हेतुर्बोध्यः ।

कारिकयोक्तमेवार्थं विशदियितुं तत्र तांवत् पूर्वपक्षमुपपाद्य दर्शयति, व्यक्तिविवेकेति ।—व्यक्तिविवेककारेण—व्यक्तेः,—व्यञ्जनाया वृत्तेः, विवेकः,—"अनुमानेऽन्तर्भावं सकलस्यैव ध्वनेः प्रकाशयितुम् । व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम् ॥" इति तदुक्तदिशाऽनुमानेऽन्तर्भावाय विचारः, तं करोतीतितेन, महिमभट्टेनेत्यर्थः, हि—(निपातानामनेकार्थत्वात्) पुनः, "यदुक्तम्" इत्यग्रेणान्वितम्; या अपि विभावादिभ्यः,—विभावानुभावसञ्चारिसात्त्विकभावेभ्यः, तेषां सम्बन्धेभ्यः इति यावत्, रसादीनां—रसभावतदाभासादीनां, प्रतीतिः,—प्रतिभासः, पण्डितम्मन्यैः कैश्चित् वाच्यत्वलक्ष्यत्वानालिङ्गिततया स्वीक्रियमाणेति शेषः, सा तथाविधा

विभावादिसम्बन्धाद्रसादीनां प्रतीतिः, अनुमाने—अनुमितौ, व्याप्यस्य दर्शनेन व्यापकस्य निश्चयात्मिकायां बुद्धौ इति यावत्, एव (एवकारेण परानुमतव्यञ्जनाजणयबोधव्यवच्छेदः)। अन्तर्भवितुम्—अभेदमवगाहितुम्, अर्हति—युज्यते। ननु कथमित्याशङ्क्य तत्कारणं निर्दिशति, विभावेति।—हि—यतः, ("हि हेतावववधारणे" इत्यमरः) विभावानुभावव्यभिचारिणाम्—उपलक्षणेन स्थायिभावानां, सात्त्विकभावानाञ्चेत्यर्थः, प्रतीतिः,—प्रत्ययः रसादिप्रतीतेः,—रसादीनाम् (आदिपदेन भावतदाभासादीनां ग्रहणम्) प्रतीतिः तस्याः साधनं,—"क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् विवक्ष्यते यदा यत्र कारमं तत् तदा स्मृतम्॥" इत्युक्तं कारणम्, इष्यते—अभिप्रेयते ननु विभावादिप्रतीतेर्व्याप्तिज्ञानत्वाभावात् कथं तज्जन्यरसादिप्रतीतेरनुमितित्वम ? अतो विभावादीनां व्याप्यत्वमुपपादयति, ते हीति।—विभावादयो हीत्यर्थः, रत्यादीनां—इतिहासादीनां, भावानां—स्थायिभावानामित्यर्थः, कारणकार्य्यसहकारिभूताः,—"कारणान्याथ कार्य्याणि सहकारीणि यानि च। रसादेः स्थायिनो लोके तानि त्वेन्नाट्यकाव्ययोः॥ विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः। व्यक्तः स तैर्विभावाद्यैः स्ताथी भावो रसः स्मृतः॥" इत्युक्त्या कारणादिस्वरूपाः सन्तः, धूमादिकारणम् आद्रेन्धनादि यथा धूमादिव्याप्यं, वङ्ग्यादिकार्य्यं धूमादिवङ्ग्यादिव्याप्यं, तथा रत्यादेः कारणं विभावः, कार्य्यमनुभावश्च रत्यादिव्याप्य इति भावः। तान्—रत्यादीन्, अनुमापयन्तः,— स्वविषयकाव्याप्तिपक्षधर्मताज्ञानेन बोधयन्तः, यथा "पर्वती वह्निमान्, धूमात्" इत्यत वह्निव्याप्यधूमवान् पर्वत इति प्रतीतिः, तथा "शून्यं वासगृहम्" इत्यादि यत् काव्यं तत् श्रृङ्गाररसवत्, तत्तद्विभावादिमत्त्वात्; इत्यनुमितौ श्रृङ्गाररसव्याप्य विभावादिसत् काव्यमिति प्रतीतिर्भवेदिति भावः। रसादिप्रतीतिं प्रति विभावादीनां कारणत्वमुपपादयति, त इति।—त एव—विभावादय एव, प्रतीयमानाः,—प्रतिभासमानाः, आस्वादपदवीं—रसनीयतापदं, गताः,—प्राप्ताः सन्तः, रसाः उच्यन्ते—रसगङ्गाधरकारादिभिरभिधीयन्ते, तथा च,—पयो यथाऽम्लयोगेन दधित्वं प्राप्नुवत् दध्नः कारणमुच्यन्ते, तथा विभावादयोऽपि अनुमीयमानरत्यादियोगेन रसादिरूपतां प्राप्नुवन्तो रसादेः कारणान्युच्यन्ते इति भावः।

## लक्ष्मी

'प्रयोजनेन सहितं लक्षणीयं न युज्यते। ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्।' इति।

ननु तदनभ्युपगमे किं बीजम् इति चेत्? लक्षणया यत् शैत्यपावनत्वादिविशिष्टं ज्ञानं जनयितव्यं तत्प्रयोजनीभूतं ज्ञानं च तदेव पर्य्यवसितमित्यतः कार्य्यकारणयोरभेदापत्तिरेव बीजमिति, सर्वत्र तु तयोर्भेद एव दृश्यते इत्यत्र दार्शनिकसंवादं दर्शयति—नीलादीति। नीलादिसंवेदानन्तरमेव 'अयं नीलो घटः' इतयदिनीलादिविषयकप्रत्यक्षोत्पत्तेः पश्चादेव ज्ञाततायाः 'नीलमहं ज्ञातवान्' इति पूर्वप्रत्यक्षविषयज्ञानान्तरस्य सम्भव इति भट्टमीमांसकमतम्, अस्मिन् मते हि—नीलज्ञानानन्तरं 'ज्ञातो नीलः' इति प्रत्ययात्तज्ज्ञानेन तस्मिन्नीले प्रकटतापरपर्य्याया ज्ञातता जायते। ज्ञानञ्चातीन्द्रियं तज्जन्या ज्ञातता प्रत्यक्षा, ज्ञाततया च ज्ञानमनुमीयते। अनुमानाकारश्चेत्थम्—'इयं ज्ञातता नीलविशेष्यकनीलत्वप्रकारज्ञानजन्या नीलवृत्तिनीलत्वप्रकारकज्ञाततात्वात् या यद्वृत्तिर्यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानसाध्या यथा शुक्ले शुक्लप्रकारिका ज्ञातता' इति।

अतीतेऽनागते च नीले ज्ञानेन ज्ञाततायां जनयितुमशक्यत्वाज्ज्ञानविषयत्वमेव ज्ञातता न पदार्थन्तरम्, तथा च नीलज्ञाने 'नीलमहं जानामि' इति प्रत्ययरूपः संविदपरपर्याय अनुव्यवसायः नीलज्ञानाज्जायते इति नैयायिकानां मुरारेश्च मतम्।

एवं प्रयोजनविशिष्टे लक्षणाया असम्भवात् प्रयोजनस्यापि पृथग् लङ्यत्वे त्वनवस्थापातात् प्रयोजनज्ञानार्थं व्यञ्जनावृत्तिरवश्यं स्वीकर्त्तव्येति तयैव सर्वत्र बोधसम्भवे तदर्थमपूर्वलक्षणासामर्थ्यकल्पनमत्यन्तानुचितमिति भावः।

नाट्ये रामत्वेनाहार्यज्ञानविषये नटे, काव्ये तु राम एव विभावादिभी रत्याद्यनुमानम् अनुमानाकारश्च 'नटः रामो वा सीताविषयकरतिमान् सीतादिविभावादिमत्वात्' इति। तत्स्ततदनुमानोद्बोधितया सामाजिकानां वासनारूपप्रत्यास्या साक्षात्कृतो रामादिरत्यादी रस इति श्रीशङ्कुमतानुयायिनां व्यक्तिविवेकारादीनां मतं दूषयितुमत्थापयति—नानुमानमिति। हेतूनां लिङ्गनाम् आभासत्वेन व्यभिचारादिदोषग्रस्तत्वेन हेतुना व्यङ्ग्यानाम् अस्मन्मतीयव्यञ्जनाप्रतिपाद्यानाम्, रसादीनाम् अनुमानं व्याप्तिविशिष्टपक्षधर्मताज्ञानं न बोधनक्षमं न बोधसमर्थम्। प्रतिपक्षिनिद्दिष्टानां सर्वेषामेव हेतूना दृष्टत्वसूचनाय हेतूनामिति बहुवचनम्।ग्रन्थकृन्मते हि ज्ञायमानविभावादीनां रत्यादिलिङगत्वसम्भवेऽपि 'रामः सीताविषयकरतिमान् सीतादिविभावादिमत्वात्' इत्यनुमितिर्न रसः तस्य आनन्दस्वरूपत्वाभावेन अनास्वाद्यत्वात् किन्तु शब्दान्वयव्यतिरेकानुविधायित्वेन व्यञ्जनया शाब्दबोधविषयो रत्यादिर्भावुकैर्भाव्यमानः स्वप्रकाशानन्दमयत्वेन परिणत आस्वाद्यमानो रसः। तस्य च व्यङ्ग्यत्वं प्रपानकरसन्यायेन तच्छरीरप्रविष्टरत्यादेर्वा व्यङ्ग्यत्वादिति। तथा च तादृशरसस्य हेतूनां रत्यादिकार्यकारणसञ्चारिरूपाणां विभावादीनामाभासत्वेन नानुमितिरित्यर्थः। तथा हि विविभावादयः सीतादयो हेतवो मतुवर्थदिदृक्षादिसम्बन्धेन रामादिवृत्तयः, साध्यस्तूक्तरूपो रसः काव्ययोद्धृनिष्टे इत्यतो हेतूनां विरुद्धत्वमसिद्धिश्चेति हेत्वाभासत्वम्। अयमेवार्थो वृत्तावपि स्फुटीकरिष्यति। तथा 'रसादिज्ञानं स्मृतिः संस्कारजन्यज्ञानत्वात्' इत्यनुमानेन रसादिबुद्धेः स्मृतित्वं साध्यतां मतं दूषयितुमाह—'स्मृतिर्न च रसादिधीः' इति। रसादीनां व्यभिचारादाभासरूपमेवेत्यग्रे निरूपयिष्यति। वस्तुतस्तु स्वप्रकाशानन्दरूपत्वेनैव न स्मृतिः तस्या एवंभावाभावात्।

तन्मतं दूषयितुं तत्प्रबधं दर्शयति—'व्यक्तिविवेकी हीति। महिममट्टेनेत्यर्थः। अनेन हि सपरिकरस्य ध्वनेरनुमितावन्तर्भावं विधातुं 'व्यक्तिविवेको' निरमायि। यस्यायमाद्यश्लोकः—

**'अनुमानेऽन्तर्भावं सकलस्यैव ध्वनेः प्रकाशयितुम्।**
**व्यक्तिविवेकं कुरुते प्रणम्य महिमा परंवाचम्॥'**

## रुचिरा

फलज्ञानानन्तरमेव फलशालिविषयकज्ञानस्य सिद्धत्वेन तयोर्यौगपद्यासम्भवात्। न हि फलान्यजानता 'फलशाल्येष वृक्ष' इति ज्ञातुं केनापि पार्यते। अत एव मीमांसकमते नीलज्ञानानन्तरं 'ज्ञातो नील' इति प्रतीतेस्तज्ज्ञानेन नीले प्रकटताऽपरपर्यायै ज्ञातता जायते। ज्ञानस्यातीन्द्रियत्वात्तदनन्तरभाविन्याश्च ज्ञाततायाः प्रत्यक्षत्वादेतया पुनस्तदा नुमीयते। तथा हि—यथा पीते पीतत्वप्रकारिका ज्ञातता, तथैव नीले नीलविशेष्यकनीलत्वप्रकारकज्ञानोत्तरकालिकनीलवृत्तिनीलत्वप्रकारकज्ञाततात्वादियं ज्ञातता, यद्वृत्तिर्यत्प्रकारिका या ज्ञातता सा तद्विशेष्यकंतत्प्रकारकज्ञानोत्तरकालिकेति नैयायिकमते तु जाते नीलादिज्ञाने 'नीलमहं जानामी' ति ज्ञानं प्रत्यक्षरूपोऽनव्यवसायः। तथा हि-यथा सामान्यरूपेण पीतज्ञाने जाते 'पीतमहं जानामी'ति पीतविषयकज्ञानवानहमस्मीत्यात्मकं ज्ञानं प्रत्यक्षमनुव्यवसायरशब्देनाभिधीयते तथैव नीले ज्ञाते 'नीलमहं जानामी' ति नीलनिष्टकर्मतानिरूपितसम्बन्धावच्छिन्ना या जानातिक्रिया तन्निरूपिता या कर्तृता तद्वानहमस्मीति ज्ञानं प्रत्यक्षानुव्यवसायापरपर्यायम्। इति। तदेवं फलफलिनोर्भेद एव सर्वेषामभिमतः। अथ तथा प्रयोजनविशिष्टे

तीरादौ लक्षणायाः स्वीकारे तयोर्भेदाभावो न प्राचां सम्मतो न चानुभवसिद्ध इत्युपेक्ष्य एवेति। वयं तु एवमपि ब्रूमः—प्रयोजनविशिष्टेऽपि तीरादौ लक्षणयोपस्थापिते 'गङ्गातीरे घोषः।' इत्याद्यनभिधा 'गङ्गायां घोषः।' इत्याद्यभिधानमात्रेणापि तथा बोध इति बोधाधिक्यात्मकस्य प्रयोजनस्य पुनरवशिष्यमाणत्वेऽनवस्थापातोऽवशिष्यमाणस्य च प्रयोजनस्यावगमायैव पुनर्व्यञ्जनायाः स्वीकर्त्तव्यत्वम्। इति।

यथा कुज्झटिकाकुलिते देशेऽसतोऽपि धूमस्याभिमानात् धूमनियतस्य वह्नेरनुमानम्, तथाऽभिनयेऽसतामपि विभावादीनामभिमानात् विभावादिनियतानां रसादीनामनुमानम्। इत्यनुभानेनैव रसादिप्रतीतिं (व्यङ्ग्यप्रतीतिं) गतार्थयतां श्रीशङ्कुकानुयायिनां नैयायिकानां व्यक्तिविवेककारणां श्रीमहिमभट्टानां मतं निराकरोति—३०१ **नेत्यादिना**।

३०१ **रसादीनां** रसभावतदाभासादीनाम्। **व्यङ्ग्यानां** व्यञ्जनया बोध्यनाम्। **बोधनक्षमं,** बोधनं क्षमं समर्थमिति यावत्। **अनुमानं** लिङ्गपरामर्शः लिङ्गं च—अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि चेति त्रिविधम्। परामर्शः पुनः—व्याप्तिविशिष्टपक्षधर्मतात्रानम्। **हेतूनाम्**। बहुत्वमविवक्षितम्। हेतोरित्यर्थः। अनन्यथा सिद्धत्वे सति कार्याव्यवहितपूर्वक्षणे नियतत्वेन वर्त्तमानस्यानुमितिसाधनस्येति यावत्। **आभासत्वेना**भासमात्रत्वेन। तच्च व्यभिचारादिदुष्टत्वम्। 'हेतुने'ति शेषः। 'हेतौ।' २/३/२३ इति तृतीया। **न** नैव। 'सङ्गच्छते।' इति शेषः।

अत्रायम्भावः—ज्ञानं तावद्विविधं, यथाऽर्थमथाऽर्थं च, तत्र यथाऽर्थं ज्ञानं प्रमा, तद्भिन्नं भ्रमः। अथ प्रमा चतुष्प्रकारा प्रत्यक्षानुमानोपमानशब्दभेदात्। एवमनुमानमपि प्रमारूपमेव न तु तद्भिन्नम्। तथा हि—अनुमितेरसाधारणं कारणमनुमानम्, अनुमितिश्च परामर्शजन्यज्ञानरूपा। अनन्यथासिद्धनियतपूर्ववर्त्ति असाधारणं कारणम्। प्रत्यक्षमुपजीव्यप्रवृत्तं तथाभूतं, ज्ञानं परामर्शः, स एव व्याप्तिविशिष्टपक्षधर्मताज्ञानम्। तत्र व्याप्तिर्यथा—'यत्रतत्र धूमस्तत्रतत्र वह्नि'रिति, पक्षधर्मता पुनः—'यत्र धूमस्तत्र वह्नि'रिति महानसादौ व्याप्तिमवलम्ब्य'अयं पर्वतो वह्निमान्'इति ज्ञानम्। न चेदं प्रत्यक्षम्। तदवधि धूमस्यैव प्रत्यक्षत्वात्। वह्नेस्तु तत्र व्याप्तिविशिष्टतयैवानुभूयमानत्वात्। इति। अथ—रसादयोऽनुमेया न वेति विविच्यते। रसादयस्सर्वेऽपि व्यङ्ग्यार्था अनुमेयाः। विभावादिनियतत्वात्। अत्र रसादयः, विभावादिसत्त्वात् यत्र विभावादिसत्त्वं तत्र रसादिशालित्वं यथाऽन्यत्र सर्वत्र। अतः—अभिनयोऽयं रसादिमान् विभावादिमत्वात्। इति। यद्यपि न नाटये न च काव्ये वस्तुतया विभावादायः, किन्तु नटेन कविनैव वा तत्र निरूप्यमाणाः; अतः—तथाभूतैः सहृदयहृदयदयितानामत एव सहृदयैर्निर्भरमनुभूयमानानां रसादीनामनुमानं किं नामेति वक्तुं शक्यते, तथाऽपि कुज्झटिकाकुलिते देशे धूमस्यासतोऽप्यभिमानं, तेन यथा धूमनियतस्य वह्नेरनुमानम्, ततैव नाटये काव्ये वा नटेन कविनैव वा सुनिपुणं निरूप्यमाणैर्वस्तुतश्चासद्भिरपि विभावादिभिर्विभावादिनियता रत्यादयोऽनुमीयमानास्तत्साधर्म्या पादकनैपुण्यबलात्तेषां तेषामास्वाद्यमानतया चमत्कारकारणीभूताः सन्तो रसादयः, इति तत्रतत्रोपयुज्यत एवानुमानम्। इति। तथा—**यत्** प्रतीयते तत् सर्वमर्थात् सम्बद्धम्। न तु तद्विरुद्धम्। यस्मात् कस्मादपि यस्य कस्यापि प्रतीतेः प्रसङ्गात्। अतः—**व्यङ्ग्योऽप्यर्थो** नियत एवेति सपक्षसत्त्वेन विपक्षासत्त्वेन पक्षसत्त्वेन चेति त्रिरूपाल्लिङ्गल्लिङ्गिज्ञानस्यानुमानस्यैव विषयः सर्वोऽपि व्यङ्ग्योऽन्यः। तथाहि—'माए ! घरोवअरणं अज्ज हु ण त्थित्ति साहिअं तुमए। ता भण किं करणिज्जं एमेअ ण वासरो ठाई॥' इति। अस्य च—'मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया। तद् भण किं करणीयमेवमेव न वासरः स्थायी॥' इत्यर्थः। अत्र हि—सम्बोध्यकर्त्तृकगृहसमस्तोपकरणविनाशाभिधानेन गृहोपयोगिनस्तस्यतस्योपकरणस्य सम्पत्तये वक्तृमात्रकर्त्तृकय आवश्यकत्वाभिधानमनुमीयते, तेन च—बहि-

निगमार्थायामाज्ञायामनुमितायां वक्तृकत्र्तृकस्वैरभ्रमणार्थनमनुमीयते । इति दिक् ।' इत्याहुर्व्यक्तिमसहमाना: । व्यक्तिमङ्गीकत्तार: पुनरेवमाहु:—निर्जले जलज्ञानमिव कुजझटिकाकुलितेऽपि देशे धूमज्ञानं न यथार्थम् । तथा सति तथाऽनुमानमपि न प्रमाणकोटिमधिरोहति, किन्तु भ्रमकोटिमेवेति यथा, तथा नाटये काव्ये वा विभावादीनां वस्तुतया सद्भावाभावे अननुभूतपूर्वाणां च तेषां स्मृतिगोचरतया प्रतिपादयितुमशक्यत्वे तत्तत्समर्प्यमाणतत्तत्सादृश्यभ्रमावहसामग्रीवशादपि विभावादिनियतानां रत्यादीनां प्रतीतिस्तया पुनर्यश्चमत्कारो न स्यात्तद्याथाऽर्थ्यम् । इति । तथा—सम्बोध्यकत्र्तृकगृहसमंस्तोपकरणविनाशाभिधानेन तथातथाऽनुमानमपि न वस्तुसत् । त्वया सर्वमुपकरणं विलयं नीतमिति त्वयैव तत्सम्पत्तये यतितव्यम्, यद्यपि त्वयाऽपि न किमपि कर्त्तुं शक्यं, किं पुनर्मया, अथापि मया बालया किंकत्तव्यविमूढया न कथमपि किमपि श्रेय: प्रतिपद्यते, अथ यदि त्वया प्रतिपद्यते तर्हि त्वयैव तथा यतितव्यम्—अन्यदा त्वयाऽपि मयेव स्थातव्यं, भोक्तव्यं च कृतं कर्मेति विरुद्धधियोऽपि तथाऽभ्युपगमात् । इति ।

व्यक्तिविवेककारेण हि—"यापि विभावादिभ्यो रसादीनां प्रतीतिः सानुमान एवान्तर्भवितुमर्हति । विभावानुभावव्यभिचारिप्रतीतिर्हि रसादिप्रतीतेः साधनमिष्यते' ते हि रत्यादीनां भावानां कारणकार्यसहकारिभूतास्ताननुमापयन्त एव रसादीन्निष्पादयन्ति, त एव प्रतीतयमाना आस्वादपदवीं गताः सन्तो रसा उच्यन्त, इति अवश्यंभावी तत्प्रतीतिक्रमः केवलमाशुभावितयासौ न लक्ष्यते, यतोऽयमद्याप्यभिव्यक्तिक्रमः' इति यदुक्तम्, तत्र प्रष्टव्यम्—किं शब्दाभिनयसमर्पितविभावादिप्रत्ययानुमितरामादिगतरागादिज्ञानमेव रसत्वेनाभिमतं भवतः, तद्भावनया भावकैर्भाव्यमानः स्वप्रकाशानन्दो वा आद्ये न विवादः । किंतु 'रामादिगतरागदिज्ञानं रससंज्ञया नोच्यतेऽस्माभिः' इत्येव विशेष ।

---

## विवृति

तन्मतं दूषयितुं परिष्करोति—व्यक्तिविवेककारेण हीति । 'यदुक्तम् इत्यग्रेणान्वितम् । यापीति । अनुमाने एव अनुमितावेव । एवकारेण परानुमतव्यञ्जनाजन्यबोधव्यवच्छेदः । अत्र कारणमाह—विभावानुभावेति । हिशब्दो हेतौ । ननु विभावादिप्रतीतेर्व्याप्तिज्ञानत्वाभावात्कथं तज्जन्यरसादिप्रतीतेरनुमितित्वम्, अतो विभावादीनां व्याप्यत्वमुपपादयति—ते इति । विभावादयो हीत्यर्थः । धूमादिकारणमाद्रेन्धनादि यथा धूमादिव्याप्यम्, वह्न्यादिकार्यं धूमदि व्ह्न्यादिव्याप्यम्, तथा रत्यादेः कारणं विभावः, कार्यमनुभावश्च रत्यादिव्याप्य इति भावः । तान्यरत्यादीन् अनुमापयन्त इति । स्वविषयकव्याप्तिपक्षधर्मताज्ञानेन बोधयन्त इत्यर्थः । रसादिं प्रति विभावादीनां कारण त्वमुपपादयति—त एवेति । विभावादय एवेत्यर्थः । आस्वादपदवीं प्रत्यक्षविषयत्वम् । तथा च पयो यथाम्लयोगेन दधित्वं प्राप्नुवद्दध्नः कारणमुच्यते तथा विभावादयोऽप्यनुमीयमानरत्यादियोगेन रसादिरूपतां प्राप्नुवन्तो रसादेः कारणमुच्यन्त इति भावः । नन्वेतादृशकार्यकारणभावस्वीकारे रसादेरसंलक्ष्यक्रमव्यङ्ग्यत्वं कथमुपपन्नमत आह—अवश्यंभावीति । तासां विभावादिप्रतीतिव्याप्तिपक्षधर्मताग्रहरसाद्यनुमित्यास्वादरूपाणां प्रतीतीनां क्रमः पौर्वापर्यम् । आशुभावितया शीघ्रोत्पन्नतया । असौ क्रमः । तथा चासां शतपत्रव्यतिभेदवत्क्रमसत्त्वेऽपि सूक्ष्मकालतया स न लक्ष्यत इति भावः । ननु भवतामिदमधिकं कल्पनमत आह—यत इति । अयमीदृशः, अद्यापि रसादेर्व्यङ्ग्यत्वस्वीकारेऽपि, अभिव्यक्तिर्व्यञ्जनाजन्यबोधः । यथा भवतां प्रथमं विभावाद्युपलस्थितिः, ततो रत्यादिव्यञ्जनम्, ततः साधरण्याभिमानः, ततो रसाद्युत्पत्तिः, इति क्रमसत्त्वेऽप्याशुभावितया रसादेरसंलक्ष्यक्रमत्वमुपपन्नं तथास्माकमपीति भावः । शब्दाभिनयेति । दृश्यश्रव्यरूपकाव्यद्वयाभिप्रायेण । समर्पितेति । जनितेत्यर्थः । भवतस्तव । तद्भावनया विभावादिबोधेन । भावकैः सामाजिकैः । भाव्यमान आस्वाद्यमानः स्वेन आत्मना प्रकाशो यस्य सः । 'रसत्वेनाभिमतः' इति लिङ्गव्यत्ययेनान्वयः ।

## विवृतिपूर्तिः

व्यक्तीति । व्यक्तिविवेककारेण महिमभट्टेनेत्यर्थः । एतेन-सपरिकरस्य ध्वनेरनुमितावन्तर्भावं कर्तु व्यक्तिविवेको निरमायि । तथा चोक्तम्—'अनुमानेऽन्तर्भावं सकलस्यैव ध्वनेः प्रकाशयितुम् । व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम् ॥'

## विज्ञप्रिया

व्याचष्टे—व्यक्तिविवेककारेणेति। रसादिनिष्ठा रसादिविषया। क्वचित्तु, 'रसादीनाम्' इति पाठः। तादृशी या विभावादिभ्यः प्रतीतिः सिद्धेत्यर्थः। तान् रसादीन्निष्पादयन्तीति निष्पादनप्रकारमाह—त एवेति। त एव अनुमीयमाना रत्यादय एव पुनःपुनरनुशीलनादास्वाद्यपदवीं गताः सन्तो ज्ञानसम्बन्धेन सामाजिकनिष्ठरसतामापद्यन्त इत्यर्थः। तत्प्रतीतिक्रम इति—विभावादिज्ञानम्, ततो रत्यनुमितिः, ततः पुनः पुनरनुशीलम्, तत आस्वाद इत्येवं प्रतीतिक्रम इत्यर्थः। आशुभावितया इति। रत्याद्यनुमितेर्विभावादिज्ञानानन्तर्यस्याशुभावितया व्याप्त्याद्युपस्थित्यधीनानुमितिक्रमो न लक्ष्यत इत्यर्थः। किन्तु विभावादिभिरेव रत्यादि र्व्यज्यत इत्येव भ्रमो जायत इत्याह—यतोऽयमद्यपीति।

शब्दाभिनयेति—शब्दो विभावादिवाचकः शब्दः, अभिनयो नाट्यभिनयः, समर्पणं ज्ञापनम्, रागोऽनुरागो रतिः। तदिति—पूर्वमेवेदं दर्शितम्। स्वप्रकाशानन्दो वेत्यत्रानुमित इति शेषः। अनुमितिविषयस्यैव वितर्क्यमाणत्वात्।

न विवाद इति। रत्यादेरनुमानं व्यञ्जना चेति विवादो नापातत इत्यर्थः। तदैवात्र विवादः स्याद् यदा रामादिगतरत्यादिव्यञ्जनं मया रसत्वेनोक्तं स्यात्, तदेव तु नेत्याह—किन्त्विति। मयोच्यते रामादिगतरत्यादेर्व्यञ्जनम्,ततश्च व्यङ्ग्यरत्यादिरेव सामाजिकरत्यादावभेदेनाऽऽरोप्यमामो रसनाख्यव्यापारेणास्वाद्यमानो रस इति रसनिरूपणप्रस्तावोक्तसिद्धान्तः।

## लोचन

अत्र महिमभट्टदर्शितां व्याप्तिं दूषयित्वा व्याप्तिग्रहणाभावं द्रढयति—यच्चेत्यादि। पक्षधर्मतेत्यन्तेन। तस्मादतः शृङ्गाररसाविर्भाव इति रूपः।

भवद्भिरेषंविधा व्याप्तिरन्वेष्टव्येत्यत आह—यार्थेति। अर्थान्तराभिव्यक्तौ या सामग्री कारणम् इष्टा सैवास्माकमनुमितौ लिङ्गमित्यर्थः। सामग्रीभावेऽप हि व्यङ्ग्यार्थप्रतिपतौ यतः कुतश्चिदपि यदेव तदेव प्रतीयते। एवं व्यङ्ग्यस्य प्रकाशने लिङ्गमवश्यमन्वेष्टव्यम्। तस्य व्याप्तिग्रहणं विना आभासतैव स्यादिति भवतामपि व्याप्तिग्रहणं विना व्यङ्ग्यज्ञानं न सम्भवतीति भावः। सम्मतेत्यत्रेतिपदस्य यच्चोक्तमित्यत्र सम्बन्धः।

## कुसुमप्रतिमा

विभावादपुरसादिवाच्यत्वं प्रतिपादयितुं तेषां रसादिं प्रति कारणतां प्रतिपादयति न एवेति। ते विभावादय एव, प्रतीयमानाः काव्यनाट्ययोः प्रथमं सामान्यज्ञानविषयीभूताः परञ्च आस्वादपदवी गतः अपूर्वसमावेशेन चमत्कारिज्ञानविषयतां प्राप्ताः। विभावादिप्रतीतय एवापूर्वसमावेशेन चमत्कुर्वाणा रसाद्यात्मकप्रतीतिरूपतया परिणमन्ते; ततश्च दण्डचक्रादिव्यापारेण मृत्तिका इव घटानां पूर्वा विभावादिप्रतीतय एव रत्याद्यपूर्वसमावेशेन रसाद्यात्मकपरप्रतीतीनां कारणानि सम्भवन्तीत्यर्थः। एवञ्च तासा मभेदोऽपि सङ्गच्छत इति द्रष्टव्यम्। इति हेतोः प्रतीतीनां विभावादिज्ञानरसादिज्ञानानां क्रमः पौर्वापर्य्यम् अवश्यम्भावी; कारणकार्य्यरूपत्वादिति भावः। केवलं किन्तु, आशुभावितया विभावादिप्रतीत्यनन्तरं रसादिप्रतीतीनामतिशीघ्रं भावितया असौ क्रमो न लक्षयते लक्षयितुं न शक्यते। अतएवात्मन्तेऽपि रसादीनामसंलक्ष्यक्रमव्यङ्ग्यत्वमुपपद्यत इत्याशयः। यतो यथ:, अद्यापि रसादीनां

व्यञ्जनावृत्तिबोध्यत्वाङ्गीकारेऽपि अभिव्यक्तिक्रमो भवन्मतेऽपि कार्य्यकारणभावाद्विभावादिप्रतीतिसादिप्रतीत्योः पौर्वापर्य्यम्; तथैव अस्मन्मते रसादीनामनुमानबोध्यत्वेऽपि उक्तक्रमेण प्रतीतिक्रम इत्यर्थः।

इदानीमुक्तमतं विकल्प्य निराकर्त्तु पृच्छति तत्रेति। शब्दः श्रव्यकाव्यम् अभिनयी दृश्यकाव्य ताभ्यां तयोरन्वतेरेणेत्यर्थः समर्पितो जनितो यो विभावादीनां प्रत्ययी ज्ञानं तेन अनुमितो यो रामादिगती रागादिः सीतादिविषयकरत्यादिः तज्ज्ञानमेव।

तदिति। तस्य रामादिगतरागादेः भावनया चिन्तया भावकैर्भावनाकारिभिः सभ्यैः भाव्यमानः प्रतीयमानः प्रागुक्तलक्षणः स्वप्रकाशानन्दी वा भवती रसत्वनाभिमत इति पूर्वेणान्वयः।

प्रथमकल्प दूषयति आद्य इति। न विवादो नावयोर्विरोधः। रामायणादि काव्य रामादिरागादिमत् सीतादिविभावादिमत्त्वादित्यनुमानस्य हेत्वाभासाभावात् व्याप्तिज्ञानसम्भवेन सङ्गच्छमानत्वादिति भावः। तर्हि भवतः किमर्थमेतावानाडम्बर इत्याह किन्त्विति। रामादिगतरागादिज्ञानम् अनुमानलभ्यमिति शेषः विशेषो भेदः। अस्माभिस्तु स्वप्रकाशानन्दमयविभावादिसमूहालम्बनज्ञानविशेष एव रससंज्ञया उच्यते; तेन हि भवता अरसमेव रामादिगतरागादिविषयकं ज्ञानम् अनुमानेन साधयतापि वास्तविकरसस्यानुमानेन साधयितुमशक्यत्वात् साधनार्थमेवास्माकं व्यञ्जनाङ्गीकाराडम्बरं इत्याशयः सोल्लण्ठनोक्तिरियम्।

## विमला

ननु एतादृशकार्य्यकारणभावस्वीकारे रसादेरसंलक्ष्यक्रमव्यङ्ग्यत्वं कथमुपपत्रम्? अत आह, अवश्यम्भावीत।—अवश्यम्भावी—निश्चितं सम्भवी, तत्प्रतीतिक्रमः,—ताः,—विभावानुभावादिप्रतीति-व्याप्तिपक्षधर्मताग्रहरसाद्यनुमित्यास्वादरूपाः, याः प्रतीतयः,—प्रत्ययाः, तासां क्रमः,—पौर्वापर्य्यम्; अन्यथा कथं "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति सङ्गच्छेतेति भावः; केवलम् आशुभावितया—शीघ्रोत्पन्नत्वेन, असौ—क्रमः, न लक्ष्यते—नानुभूयते; तथा च, आसां शतपत्रव्यतिभेदवत् क्रमसत्त्वेऽपि सूक्ष्मकालतया स न लक्ष्यते इति भावः। ननु भवतामिदमधिकं कल्पनम्, अत आह, यत इति।—यतः, अयम्—ईदृशः, अद्यापि—रसादेर्व्यङ्ग्यत्वस्वीकारेऽपि, अभिव्यक्तिः,—व्यञ्जनाजन्यबोधः, तस्याः क्रमः। यथा भवतां बोधः प्रथमं विभावाद्युपस्थितिः, ततो रत्यादिव्यञ्जनं, ततः साधारण्याभिमानः, ततो रसाद्युत्पत्तिः इति क्रमसत्त्वेऽपि रसादेरसंलक्ष्यक्रमत्वमुपपन्नं, तथाऽस्माकमपीति भावः। तथोक्तं रसगङ्गाधरकारैः,—विभावा अनुभावाश्च तथा सञ्चारिणः क्रमात्। पक्षाः सपक्षाः कथिता विपक्षा रसबोधने॥ वस्तुनोऽलङ्कृतेर्वाऽपि व्यङ्ग्यत्वे तु मनीषिणः। वक्तृवाच्यादिधीवृत्तीः पक्षादीन् सम्प्रचक्षते॥" इति दिक्। इत्येवं रसगङ्गाधरकारादिसिद्धान्तमनुसृत्य व्यक्तिविवेकं रचितवती महिमभट्टाचार्य्यस्य मतमुपन्यस्य तत् खण्डयितुमुपक्रमते, तत्रेति।—तत्र—निरुक्तसिद्धान्तस्वीकारे, प्रष्टव्यं—जिज्ञास्यम्। तदेव निर्दिशति, किं शब्देति।—शब्दभिनयेन—दृश्यश्रव्यरूपकाव्यद्वयाभिप्रायेण इत्यर्थः, समर्पितः,—उत्पादितः यः विभावादीनां प्रत्ययः,—प्रतीति, तेन अनुमितः, रामादिगतः यः रागादिः,—सीताऽऽदिविषयकः प्रण्यादिः, तस्य ज्ञानं—प्रतीतिः, एव, रसत्वेन—रसस्वरूपेण, भवतः,—तव, रसगङ्गाधरकारादिमतानुयायिनः महिमभट्टाचार्य्यस्येत्यर्थः, अभिमतं—स्वीकृतम्, किमिति पूर्वतोऽन्वेति। तङ्भावनया—तस्य भावनया, रामादिगतरागादिध्यानरूपेण विभावादिबोधेनेत्यर्थः, भावकैः,—सहृदयैः, भाव्यमानः,—आस्वाद्यमानः, स्वप्रकाशानन्दः,—स्वेन—आत्मना, प्रकाशो यस्य सः रसत्वेनाभिमतः इति शेषः, (अभिमतः इति लिङ्गव्यत्येनान्वयः)।

## लक्ष्मी

व्यक्तिविवेककारेणेत्यस्य यदुक्तमित्युत्तरेणान्वयः। हि तथाहि अनुमाने एव अनुमितावेव अन्तर्भवितुमर्हति एवकारेणातिरिक्ता व्यञ्जना न स्वीकार्य्येति ध्वनितम्। अत्र हेतुं दर्शयति-विभावानुभावेति। हि यस्मात् साधनं हेतुः। ननु विभावादिप्रतीतेः व्याप्तिज्ञानत्वाभावात् कथं तज्जन्यरसादिप्रतीतेरनुमितित्वम्, अतो विभावादीनां व्याप्तिवैशिष्ट्यमुपपादयति—ते हीति। हि यस्मात् ते विभावादयः धूमादिकारणमार्द्रेन्धनादि यथा धूमादिव्याप्यम्, वह्न्यादिकार्यं धूमाधि वह्निव्याप्यम्, तथा रत्यादेः कारणं विभावः कार्यमनुभावश्च रत्यादिव्याप्य इति भावः। तान् रत्यादीन् अनुमापयन्त एव स्वविषयकव्यवाप्तिविशिष्टपक्षधर्मताज्ञानेन बोधयन्त एव। रसादीन् निष्पादयन्ति रसादिरूपतया ज्ञापयन्ति।

अत्रायमाशयः—प्रथमतो विभावादिलिङ्गज्ञानम्, ततो व्याप्यादिज्ञानम्, ततो मानसपरामर्शेन रामत्वेन प्रतीयमानं नटं पक्षीकृत्य सामाजिकानां रसानुमितिः सैव निष्पत्तिशब्दस्यार्थः। अनुमानाकारश्च—रामोऽयं सीताविषयकरत्तिमान् सीतादिविभावादिमत्वात्, अहमिवेति व्यतिरेकी। यद्वा स्वकान्ताविषयकरतिमान् तदालम्बनत्वात्, अहमिवेत्यन्वयी।

रसादि प्रति विभावादीनां कारणत्वं प्रतिपादयति—ते एवेति। ते विभावादय एव प्रतीयमानाः अनुमीयमानाः पुनः पुनरनुशीलनात् आस्वादपदवीं प्रत्यक्षविषयतां गताः सन्तो ज्ञानसम्बन्धेन सामाजिकनिष्ठरसतामापद्यन्त इत्यर्थः। तथा च दुग्धं यथाम्लयोगेन दधित्वं प्राप्नुवद्दधनः कारणमुच्यते तथा विभावादयोऽप्यनुमीयमानरत्यादियोगेन रसादिरूपतां प्राप्नुवन्तो रसादेः कारणमुच्यते इति भावः।

नन्वीदृशकार्यकारणभावस्वीकारे रसादेसंलक्ष्यक्रमव्यङ्ग्यत्वं कथं सेत्स्यतीत्यत आह—अवश्यम्भावीति। तासां प्रतीतीनां क्रमः पौर्वापर्यम्, प्रथमं विभावादिज्ञानं, ततो रत्यनुमितिः, ततः पुनः पुनरनुशीलनम्, तत आस्वाद इत्येवं प्रतीतिक्रम इत्यर्थः। अवश्यम्भावी कारणकार्यरूपत्वादित्यभिप्रायः। केवलं किन्तु आशुभावितया रत्याद्यनुमितेर्विभावादिज्ञानानन्तर्यस्याशुभावितया असौ व्याप्त्याद्युपस्थित्यधीनानुमितिक्रमो न लक्ष्यते न लक्षयितुं शक्यते। तथा चोत्पलपत्रशतव्यतिभेदवत् क्रमसत्त्वेऽपि सूक्ष्मकालतया स न लक्ष्यत इत्यसंलक्ष्यक्रमव्यङ्ग्यत्वं सिद्ध्यतीति भावः। ननु भवन्मतेऽधिकं कल्पनमिदमत आह—यत इति। यतो यथा अयम् ईदृशः अद्यापि रसादीनां व्यञ्जनावृत्तिबोध्यत्वस्वकारेऽपि अभिव्यक्तिक्रमो भवन्मतेऽपि कार्यकारणबावाद्विभावादिप्रतीतिरसादिप्रतीत्योः पौर्वापर्यम्, तथैव मम मते रसादीनामनुमानगम्यत्वेऽपि उक्तक्रमेण प्रतीतिक्रमः। तथा चोपदर्शितक्रमसत्त्वेऽप्याशु भावितया यथा रसादेरसंलक्ष्यक्रमत्वं भवन्मते तथाऽस्मन्मतेऽपीति न काऽप्यनुपपत्तिरिति भावः।

अधुनोक्तवादिमतं विकल्प्य दूषयितुं पृच्छति—तत्रेति। शब्दो विभावादिवाचकः शब्दः श्रव्यकाव्यमित्यर्थः, अभिनयो नाट्याभिनयः दृश्यकाव्यमित्यर्थः। ताभ्यां तयोरन्यतरेणेत्यर्थः, समर्पितो जनितो यो विभावादीनां प्रत्ययो ज्ञानं तेनानुमितो यो रामादिगतरागादिः सीतादिविषयकानुरागादिः तज्ज्ञानमेव भवतः ध्वनिमनुमानेऽन्तर्भावयितुं प्रवृत्तस्य श्रीमतः सम्बोध्यस्य तव अभिमतं स्वीकृतम्। तस्य विभावादेः भावनया बोधेन भावकैः सामाजिकैः भाव्यमान आस्वाद्यमानः प्रागुक्तलक्षणः स्वेन आत्मना प्रकाशो यस्य स चासौ आनन्दश्चेति तथोक्तस्वप्रकाशानन्दो वेत्यत्रानुमित इति शेषः, अनुमितिविषयस्यैव वितर्क्यमाणत्वात्। भवतो रसत्वेनाभिमत इति लिङ्गव्यत्यासेनान्वयः।

आद्यकल्पं दूषयति—आद्य इति। न विवाद इति। रत्यादेरनुमानं व्यञ्जना चेति विवादो नापतत इत्यर्थः, तथा हि 'रामः सीताविषयकरतिमान् सीतादिविभावादिमत्वात्' इत्यनुमानस्य हेत्वाभासाभावात् व्याप्तिज्ञानसम्भवेन

विवादाभावादिति भावः। विवादो ह्यत्र तदैव स्यात् तदा रामादिगतरत्यादिव्यञ्जनं मया रसत्वेनोक्तं स्यात्, तदेव तु नेत्यत आह—किन्त्विति। रामादिगतरत्यादिज्ञानम् अनुमानलभ्यमिति शेषः, विशेषो भेदः। मया तूच्यते रामादिगतरत्यादेर्व्यञ्जनमेव स्वप्रकाशानन्दविभावादिसमूहालम्बनात्मकज्ञानविशेष एव रस इति भावः। तेन रामादिगतरत्यादिविषयकं ज्ञानम् अरसमेवानुमानेन साधयता भवता वास्तविकरसस्यानुमानेन साधयितुमशक्यत्वात्तत्साधनार्थमेवास्माकं व्यञ्जनास्वीकारप्रयास इत्यभिप्रायः।

ननु तर्हि व्यङ्ग्यरत्यादिरेव सामाजिकरत्यादावभेदेनारोप्यमाणो रसनाख्यव्यापारेणास्वाद्यमानो रस इति रसनिरूपणोक्तसिद्धान्तः स एव द्वितीयः पक्षः, तस्यानुमेयत्वं कुतो नेति शङ्कायां तदसम्भवं दर्शयितुं द्वितीयकल्पमपि दूषयति—द्वितीयस्त्विति।

## रुचिरा

अथोक्तमर्थमनुसन्दधानः कारिकां च व्याचक्षणः प्रणिधातव्यमर्थं सुगमयंति—**व्यक्तिविवेककारेणे**त्यादिना।

**'विभावादिभ्यो** विभावानुभाव्यभिचारिभ्यो विभावादीनभिव्याप्येति यावत्। 'ल्यब्लोपे कर्मण्यधिकरणे च॥ इति पञ्चमी। **रसादीनां** रसभावतदाभासादीनाम्। **या**ऽ निर्देश्या। **प्रतीतिः** प्रतीतिमात्रेण स्फुरणम्। अपि किं पुनः साक्षात्तयाऽभ्युपगमः। 'अस्ती'ति शेषः। **सा** 'प्रतीतिं'रिति शेषः। **अनुमाने** प्रत्यक्षमुपजीव्यलिङ्गपरामर्शजन्ये ज्ञाने। **एव** न तु पराभिमतव्यञ्जनाजन्यबोधे। **अन्तर्भवितुं** तिरोभवितुं तत्त्वेनावस्थातुमिति यावत्। **अर्हति**। क्षमते इति भावः। **हि** यतः। **विभावानुभावव्यभिचारिप्रतीति**र्विभावस्यानुभावस्य व्यभिचारिणश्च प्रतीतिः। **रसादिप्रतीते** रसादीनां रसभावतदाभासादीनां प्रतीतिः प्रत्ययोऽनुभवास्पदत्वेन स्फुरणमिति यावत् इति तस्याः। **साधनमुपाय**विशेषः। **इष्यते**ऽभिलषितो भवति। **ततः**—**ते** विभावादयः। **हि** एव। **रत्यादीनां** रतिहासादीनाम्। **भावानां** स्थायिभावानाम्। **कारणकार्यसहकारिभूताः** कारणकार्यसहकारिस्वरूपाः। यथा—रतेर्नायकोद्यानादिरूपो विभावः कारणम्, रोमोद्गमादिरूपोऽनुभावः कार्यम्, मदमूर्च्छाऽऽदिरूपो व्यभिचारी भावः सहकारिकारणम्। इति। तान् रतिहासादीन् स्थायिनो भावान्। **अनुमापयन्तो**ऽनुमितिविषयं नयन्तः सन्तः स्वविषयकव्याप्तिविशिष्टपक्षधर्मताज्ञानेन बोधयन्त इति यावत्। **एव** न त्वनुमाप्य न वाऽनुमापयिष्यन्त इति यावत्। **रसादीन्** शृङ्गारादीन् रसान् निर्वेदादींश्च भावांस्तदाभासादींश्च। निष्पादयन्ति चर्वणीयत्वेनोपस्थापयन्ति। **ते** विभावादयः। **एव** केवलम्। **प्रतीयमानाः** 'सन्त' इति शेषः। **आस्वादपदवी**मास्वादस्य चमत्कारानुभवस्य पदवी सोपानं ताम्। **गताः** प्राप्ताः। **सन्तः**। **रसा** रसादयः। **इतीत्येवम्**। **उच्यन्ते**। **कथ्यन्ते**। **इतीत्यस्मात्** कारणात्। **अवश्यम्भावी** निःसन्देहं भावी सम्भवशील इति यावत्। **तत्प्रतीतिक्रमस्तेषां** विभावादीनां प्रतीतय इति तासां क्रमः पौर्वापर्यम्। **केवलमेव**। **आशुभावितया** सूक्ष्मकालेन स्फुरणशीलतया। **न** नैव। **लक्ष्यते** दृश्यते ज्ञायत इति यवात्। शतपत्रव्यतिभेदवत् क्रमसत्त्वेऽपि नितान्तं त्वरितं सम्भूततया कालसौक्ष्म्ये न संलक्ष्यते तत्प्रतीतिक्रम इति हेतोरेवासंलक्ष्यक्रमा इति व्यपदेश्या रसादयः। इति तात्पर्यम्। **यतः**। **अयम्**। **अभिव्यक्तिक्रमो**ऽभिव्यक्त्याः स्पष्टीभवनतायाः क्रमः। अत्रास्मिन्ननुमानवादे। अपि। 'सम्भवती'ति शेषः। 'अभिव्यक्तिक' इति पाठे—व्यङ्ग्योऽसंलक्ष्यक्रमं इति यावत्। अभिव्यक्तिं कायति ब्रूते इति, अभिव्यक्तो (ऽर्थोऽ) स्मिन्नस्तीति वा। 'आतोऽनुपसर्गे कः।' ३/२/३ इति कः, 'अत इनि ठनौ।' ५/२/११५ इति ठनो वेति। अभिव्यक्तक इति पाठे-अनुकम्पितोऽभिव्यक्तोऽर्थः। 'अनिकम्पायम्।' ५/३/७६ इति कः। इति। अभिव्यक्त इति पाठे तु स्पष्ट एवार्थ इति। **अद्यापीति** पाठे

अद्यानुमानवादाङ्गीकारके दिवसेऽपीत्यर्थः। 'अद्यात्राह्नी'त्यमरः।' **इतीत्येवम्**। **यत्**। 'मत'मिति शेषः। **व्यक्ति-विवेककारेण** व्यक्तिविवेकं (तदाख्यं ग्रन्थम्) करोतीति तेन। 'महिमभट्टेने'ति शेषः। कर्मण्यण्।' ३/२/१ इत्यण्। **हि** एव। नतु केनापि द्वितीयेन सचेतसा। **उक्तं** निरूपितम्।

अत्रेदं तात्पर्यम्—न तावद् व्यञ्जना काचिद् वृत्तिः। किन्तु—तस्याः प्रतिपाद्यत्वेन, विवक्षितोऽभिमत एव वाऽर्थः नासावनुमानास्पदततां जहाति। न चात्र काचिद् विप्रतिपत्तिः। इति मन्यमाना महिमभट्टा व्यक्तिविवेकं विरचयांचक्रुः। अत एव तत्र तावत् प्रोचुः "अनुमानेऽन्तर्भावं सकलस्यैव ध्वनेः प्रकाशियतुम्। व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्।"इति। अथ तत्र ते प्राहुः—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति'रिति निरूपितदिशा या परैरभिहिता विभावादिभ्यो रसादीनां प्रतीतिः, सा नानुमानाद् व्यक्तिरिक्ता। अयमिह हेतुः—विभावादीनां प्रतीतिरेव रसादीनां प्रतीतिसाधनभूता, न हि विभावादिप्रतीतिमन्तरेण रसादिप्रतीतिः, सम्भवति, न च रसादिप्रतीतिर्विभावादिप्रतीत्यमूला, रतिहासादिस्थायिभावानामालम्बनोद्दीपनात्मा विभावः कारणं, रोमोद्गममुख-विकासाद्यात्मानुभावः कार्यं, मदाद्यात्मा सहचारी भावः पुनः सहकारिकारणम्, इत्येतत्त्रितयमेव रत्यादीन् स्थायिननो भावान् सत्त्वासत्त्वाभ्यामनुमितिविषयं नयति'तदन्तरैतेषामनभ्युपगमात्। तथाभूतं पुनरेतद् रसादिनिष्पत्तिमूलम्। पय व यथाऽम्लयोगेन दधिस्वरूपत्वं प्राप्नुवत्तस्य हेतुस्तथैव विभावादिप्रतीतिरप्यनुमीयमानरत्यादियोगेन रसादि-स्वरूपतां प्राप्तवती तत्कारणमित्यूह्यम्। नचैवं रसादिप्रतीतेर्विभावादिप्रतीत्युत्तरकालिकतया कथ 'मसंलक्ष्य-क्रम'इति व्यपदेशः सङ्गमिष्यते? इति चिन्त्यम्। विभावादिप्रतीतिव्याप्तिपक्षधर्मताग्रहरसाद्यनुमित्यास्वादा-भिन्नरसादिप्रतीतिक्रमस्याशुभावितयाऽसंलक्ष्यत्वेनैवावस्थानात्। यथा च व्यक्तिवादिमते—प्रथमं विभावाद्युप-स्थितिः, तत्पुना रसादिव्यञ्जनं, तदनन्तरं साधारण्याभिमानः, अथ रसाद्याविर्भावः इति क्रमसत्त्वेऽपि रसादीनामसं-लक्ष्यक्रमत्वम्; तथाऽनुमानवादेऽपि यत्रयत्र विभावादिप्रतीतिंस्तत्रतत्र रसादिप्रतीतिरिति व्याप्तिः, ततः—रसादिव्याप्यविभावादिमानयमभिनय इति पक्षधर्मता, तत्पश्चात् अभिनयो रसादिमान् विभावादिशालित्वा-दित्यनुमितिः। अथ-अयमभिनय एतद्रसशाली, एतद्विभावादिशआलित्वादित्यास्वादः। इति। यथाहि—'माए—' इत्यत्र'यो यदीयोऽपनयः स तत्साध्यत्वावच्छिन्नोपायनिष्ठसाध्यत्वाभाववानिति व्याप्तिं गृहीत्वा तदन्यकर्त्तव्योपायनिकृत्तव्याप्यापनयाभिधानवदिदं वाक्यमिति पक्षधर्मताग्रहे मत्कर्त्तव्योपायनिवर्त्यत्वदपनय इत्यनुमितौ मया तथा यत्यते यथा त्वत्कर्तृकापनयो नावतिष्ठेत।' इति साक्षान्निरूपणं प्रतिपद्यते। इति।

**तत्र** तस्मिन् विषये। **प्रष्टव्यं** प्रष्टुं शक्यम्। 'अस्ती'ति शेषः। **किं** किन्नु। **शब्दाभिनयसमर्पितविभा-वादिप्रत्ययानुमितरामादिगतरागादिज्ञानं** शब्दाभिनयाभ्यां समर्पिता निरूपिता ये विभावादयस्तेषां प्रत्ययः प्रतीति-स्तेनानुमिता ये रामादिगतरागादयो रामादिनिष्ठसीताऽऽदिसीताऽऽदिविषयकानुरागादय इति तज्ज्ञानम्। शब्दो वाक्यादि। अभिनयो नटकर्तृकरामाद्यनुकरणम्। **एव** केवलम्। **रसत्वेन** श्रृङ्गारादिरसानिर्वेदादिभावादिस्वरूपेण। **भवतो** ध्वनिमनुमानेऽन्तर्भावयितुं प्रवृत्तस्य श्रीमतः सम्बोध्यस्य। **अभिमतं** स्वीकृतम्। **वा**ऽथवा। किम्—**तद्भा-वनया** तेषां शब्दाभिनयसमर्पितविभावादीनां भावना सविश्रम्भं बोधतया। **भावकैः** सहृदयैः। **भाव्यमानः** प्राप्य-माण आस्वाद्यमान इति यावत्। भूप्राप्तावित्यस्येपदम्। **स्वप्रकाशानन्दः** त्वं प्रकाशत इति तादृशोऽसावानन्द इति। 'रसत्वेनाभिमतः' इति शेषः। इति। तत्र-**आद्ये** 'पक्षे' इति शेषः। न नैव। 'वस्तुतया'इति शेषः। **विवादो** विरुद्धाभिधानम्। 'सम्भवती'ति शेषः। **किन्तु** परन्तु। **'रामादिगतरागादिज्ञानं** रामादिनिष्ठसीताऽऽदिविषयका-नुरागादिसम्बन्धिज्ञानम्। **रससञ्ज्ञया** रस इति सञ्ज्ञेति तया। 'सञ्ज्ञा स्याच्चेतना नाम हस्ताद्यैश्चाथसूचना।' इत्यमरः। रस इति नाम्नेत्यर्थः। **न** नैव। **अस्माभिर्व्यक्तिमङ्गीकुर्वद्भिः। उच्यते** कथ्यते।' इतीत्यात्मकः। **एव**

खलु। **विशेषो** विभेदः। रामादिनिष्ठसीताऽऽदिसम्बन्ध्यनुरागादिज्ञानं रस इति अनुमाने ध्वनिमन्तर्भावयितुर्मतम्, अभिधाऽऽदिवृत्तित्रयादतिरिक्तैव व्यञ्जना नाम वृत्तिरित्यङ्गीकर्त्तुः पुनस्तन्न, तादृशज्ञानस्य रसपदवाच्यत्वासम्भवात्। इति भावः। **द्वितीयः** 'पक्ष' इति शेषः। 'तद्भावनया भावकैर्भाव्यमानः स्वप्रकाशानन्दो रसत्वेनाभिमत' इत्यात्मकः पक्ष इति भावः। **तु** पुनः। **व्याप्तिग्रहणाभावात्**। व्याप्तिः 'हेतुमन्निष्ठविरहाप्रतियोगिना। साध्येन हतोरैकाधिकरण्यं व्याप्तिरित्युक्तदिशा साहचर्यनियमस्तस्य ग्रहणं स्मरणं सम्भवित्वेन ज्ञानं वा तदभावस्तद्विरहस्तस्मात् कारणात्। **हेतोः** कारणस्य। **आभासतया** वास्तविकत्वाभावात्। **असिद्धो**ऽनुमानाविषयत्वनासमर्थितः। **एव** न तु सिद्धः। अत्रेदं निष्कृष्टम्—काव्यं तावद् द्विविधं, श्रव्यं दृश्यं च। श्रव्यं रघुवंशादि, दृश्यं शाकुन्तलादि श्रव्ये शब्देनैव विभावादयो वर्ण्यन्ते, दृश्ये पुनः—अभिनयोपयोगिन्या सामग्रया। अतः—यत्प्रतीत्यैवानुमितानां रामादिगतसीतादिविषयकानुरागादीनां ज्ञानं रसः, ते विभावादयः शब्देनाभिनयेनैव वोत्तम्भिताः भवन्तीति यद्ययं पक्षः। न तर्हि नितान्तं मतद्वैविध्यम्। किन्तु रस्यते आस्वाद्यते इति रस इति रसपदनिरुक्तया रसस्यास्वादवाच्यत्वे रामादीनां तेषां स्वात्मभिन्नतया तत्तद्रामादिगतसीताद्यनुरागादिज्ञानस्य च तद्भिन्नत्वे रामादिनिष्ठसीताद्यालम्बनकानुरागादिज्ञानमेव रस इति किं मूलं मतमिति संशयानपनयनमेवास्माकं मतान्तरमास्थापयतीति द्रष्टव्यम्। अथ यदि—शब्देनाभिमयेन वा समर्पितानां विंभावादीनां भावनाद्वारा भावकैर्भाव्यमानः स्वप्रकाशानन्दो रस इति पक्षः स्यात् तर्हि अनुमानवादेऽसिद्ध एवासौ प्रतिभासते। तथा हि—अनुमानं नाम 'व्याप्तिविशिष्टपक्षधर्मताज्ञानम्। तच्च प्रकृते न सम्भवति, व्याप्तिग्रहाभांवे हेतोराभासत्वात्। न हि सति हेत्वाभासेऽनुमानं सङ्गच्छते। व्याप्तिस्तावत् यत्रतत्र विभावादिप्रतीतिः, तत्रतत्र रसादयः इत्येव। असौ च न सर्वत्र। यथा—जरतां श्रोत्रियाणां मीमांसकानां च विभावादिप्रतीतिसत्त्वम्, किन्तु न रसादयः। इति। एवं च व्याप्तिग्रहाभावेऽनुमानहेत्वसिद्धौ द्वितीयः पक्षोऽपि प्रत्युक्तः। इति।

द्वितीयस्तु व्याप्तिग्रहणाभावाद्धेतोराभासतासिद्ध एव । यच्चोक्तं तेनैव—'यत्र यत्रैवंविधानां विभावानुभावसात्त्विकसंचारिणामभिधानमभिनयो वा तत्र तत्र श्रृङ्गारादिरसाविर्भावः' इति सुग्रहैव व्याप्तिः पक्षधर्मता च ।

तथा—

**'यार्थान्तराभिव्यक्तौ वः सामग्रीष्टा निबन्धनम् ।**
**सैवानुमितिपक्षे नो गमकत्वेन संमता ।।' इति ।**

इदमपि नो न विरुद्धम् । न ह्येवंविधा प्रतीतिरास्वाद्यत्वेनास्माकमभिमता किंतु—स्वप्रकाशमात्रविश्रान्तः सान्द्रानन्दनिर्भरः । तेनात्र सिषाधयिषितादर्थादर्थान्तरस्य साधनाद्धेतोराभासता ।

---

## विवृतिः

असिद्धो नानुमितिविषयः । श्रोत्रियजरन्मीमांसकादीनां विभावादिप्रत्ययसत्त्वेऽपि स्वप्रकाशानन्दानुत्पत्तिदर्शनादयं हेतुर्व्यभिचारीति व्याप्तिग्रहाभावात्तस्यानुमानं न संभवतीति भावः । इदानीं विभावनादिव्यापारभागित्वेन हेतुं विशेष्य व्यभिचारं वारयित्वा व्याप्तिग्रहमुपपादयतस्तस्यैव मतं दूषयति—यच्चोक्तमिति । एवंविधानां विभावादिव्यापारभागिनामभिधानं स्वशब्देनोपस्थानम्, अभिनयो नटचेष्टादिभिरुपस्थापनम् । रसाविर्भावो रसाद्युत्पत्तिः । सुग्रहैवेति । विभावनादिव्यापारभागिविभावाद्युपस्थानं रसाद्याविर्भावव्याप्यमिति व्याप्तिग्रहः । श्रोत्रियादीनां तु विभावादेरेवोपस्थितिः, न तु विभावनादिव्यापारभागिनः, तत्र तादृग्व्यापारास्वीकारादिति न व्यभिचारः । पक्षधर्मता पक्षसत्त्वं सुग्रहैवेत्यन्वयः । 'अहं रामाद्याविर्भावव्याप्यतादृग्विभावादग्युपस्थानवान्' इति सामाजिकानां व्याप्तिविशिष्टपक्षधर्मताग्रह इत्यवधेयम् । अर्थान्तराभिव्यक्तौ वाच्यादित्रयभिन्नार्थस्य व्यञ्जनया बोधे । वः व्यञ्जनावृत्तिं स्वीकुर्वतां युष्माकं सामग्री शाब्दबोधादिरूपः कारणसमूहः । निबन्धनं प्रधानम् । अनुमितिपक्षे अनुमितिवादिमते तिष्ठतां नोऽस्माकं गमकत्वेन रसाद्यनुमापकत्वेन । दूषयति—इदमपीति । नो व्यञ्जनावादीनामस्माकम् । न विरुद्धमिति । अस्माभिरपि तादृशानुमानं स्वीक्रियत एवेति भावः । ननु किमधिकं भवान्ब्रवीतीत्यत आह—नहीति । न त्वित्यर्थः । स्वस्वरूपेण प्रकाशमात्रेणैव विश्रान्तो विषयीकृतः । सान्द्रस्य निरन्तरस्य आनन्दस्य निर्भरोऽतिशयः । आस्वाद्यत्वेनास्माकमभिमत इत्यर्थ । तेन तादृशानुमितेरास्वादत्वास्वीकारेण । सिषाधयिषितात् साधयितुमिष्टात् अर्थात् स्वप्राकशानन्दरूपात् अर्थान्तरस्य भिन्नार्थस्य रसाद्याविर्भावस्य साधनादनुमापनात् । आभासता दुष्टता ।

## विवृतिपूर्तिः

व्यक्तीति । व्यक्तिविवेककारेण महिमभट्टेनेत्यर्थः । एतेन सपरिकरस्य ध्वनेरनुमितावन्तर्भावं कर्तुं व्यक्तिविवेको निरमायि । तथा चोक्तम्—'अनिमानेऽन्तर्भावं सकलस्यैव ध्वनेः प्रकाशयितुम् । व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम् ।।'

व्याप्तिपिति । यत्र यत्र धूमस्तत्र तत्र वह्निरिति साहचर्यनियमः । साध्याभाववदवृत्तित्वमित्यर्थः ।।

पक्षेति । व्याप्यस्य (धूमादेः) पर्वतादिवृत्तित्वम् ॥

अत्रायमाचार्यमहिमभट्टविमर्शः—'अत्र केनचित् सुकृतिना यूना सह विश्रम्भसंभोगसुखास्वादलालसया विजने वने विविधकुसुमामोदमुदितमधुकृति कृतसंकेतया कयाचित् कुसुमावचिचीषया भ्रमतो धार्मिकस्य मनोरथपरिपन्थितद्देशासादनं विघ्नमिव मन्यमानया जानानयापि केसरिकिशोरकस्य शौर्यातिरेकं कुक्कुरमारणमात्रासोपन्यासेनास्य प्रियमावेदयितुकामया विदग्धयापि मुग्धयेव विधिमुखेन भ्रमणस्य प्रतिषेधो विहितः । अत्र हि द्वावर्थौ वाच्यप्रतीयमानौ विधिनिषेधात्मौ क्रमेण प्रतीतिपथमवतरतः, तयोर्धूमाग्न्योरिव साध्यसाधनभावेनावस्थानात् । तत्राद्यस्तावदविवेकसिद्धः स्पष्ट एव भ्रमणविधिलक्षणस्य साध्यस्य तत्परिपन्थिक्रूरकुक्कुरमारणात्मनः साधनस्य चोभयोरप्युपादानात् । द्वितीयस्त्वत एव हेतोः पर्यालोचितणिजर्थस्य विवेकिनः प्रतिपत्तुः प्रयोजकस्वरूपनिरूपणे सामर्थ्यात् प्रतीतिमवतरति । तच्च सामर्थ्यमृतेऽपि कौलेयके क्रूरतरस्य सत्त्वान्तरस्य तत्र सद्भावावेदनं नाम, नापरम् । तदेव च साधनम् । तयोश्च साध्यसाधनयोरविनाभावनियमो विरोधमूलः । स चानयोर्लोकप्रमाणसिद्ध इत्युक्तम् । ननु यद्यतो वाक्यादर्थद्वयावगमस्तत्कथमुत्तरस्मिन्नेव नियमेन विश्रान्तिर्न पूर्वस्मिन्नुभयत्रापि वा, तयोः प्राकरणिकत्वेन विशेषाभावात् ॥

## विज्ञप्रिया

स एव द्वितीयः पक्षः, तस्यानुमेयत्वासम्भव इत्याह—द्वितीयस्त्विति । व्याप्तिग्रहणाभावादित—विरुद्धहेतौ तद्भावनियमादित्यर्थः । इदमुपलक्षणं स्वरूपसिद्धेश्चेत्यपि बोध्यम्, सीतादिविभावादिमत्त्वस्य रामादिमात्रवृत्तेर्नतु सामाजिके । ईदृशाभासतामाह—हेतोरिति । असिद्ध इत्यस्य द्वितीयः पक्षः विशेष्यम् । आभासत्वेन हेतूनामित्यस्य व्याख्यानमिदम् ।

व्यक्तिविवेककारेण सम्बन्धविशेषणविभावादीनां यथोक्तानन्दरूपसव्याप्यता पक्षधर्मता च साध्यते, दूषयितुं तदप्युत्थापयति—यच्चोक्तमिति । सात्त्विकसंचारिणामिति—शृङ्गाररसानुमित्यभिप्रायेणोक्तम्, तेषां शृङ्गाररसस्यैव व्याप्यत्वात् । क्वचित्तु विभावानुभावसंचारिणामित्येव पाठो न सात्त्विकेत्यादिः । अभिधानं वाचकः शब्दः, अभिधेयो नाट्यम्, तद्व्यञ्जिका क्रिया, तदुभयमपि स्वविषयबोधाश्रयतासम्बन्धेन रसाश्रयसामाजिकवृत्तिरिति व्याप्तिः । पक्षधर्मता च सुग्रहेत्यर्थः ।

अस्मिन्नेतस्य कारिकामाह—यार्थान्तरेति । अर्थान्तरस्य रसस्याभिव्यक्तौ आस्वादने निबन्धनकारणं वो युष्माकं या सामग्रीष्टा सैव विभावादिरूपा सामग्री नोऽस्माकं मते गमकत्वेन अनुमापकत्वेन सम्मतेत्यर्थः ।

दूषयति—इदमपीति । अनुमितिर्हि न स्वप्रकाशानन्दरूपा इत्यर्थः । निर्भरस्तद्रूपः, तादृश एव सिषाधयिषित इत्यर्थः । सिषाधयिषितत्वं चात्र इच्छाविषयत्वमात्रम्, न तु अनुमित्सितत्वम्, रसेऽनुमित्याभावात् । आभासता असिद्ध साधनरूपाभासता । इदं दूषणं सौलभ्यादेवोक्तम् । वस्तुतस्तु सामाजिके साक्षातक्रियमाणः स्वप्रकाशानन्दोऽनुमीयत एव न, अनुमित्साभावात्, न हि तस्य नियमतोऽनुमित्सा भवति, रसबोधस्तु नियमत एव । तथा ज्ञातविभावादिरूपा सामग्री रसाबोद्धुर्जनस्याप्यस्तीति व्यभिचारश्चेति बोध्यम् ।

यत्र वस्तुनोऽलङ्कारस्य वा व्यञ्जना तत्र वस्तवलङ्कारौ अनुमानगम्यौ एवेति नैयायिकमतं दूषयितुम्स्थापयति—यच्चेति । यच्च पर्यवस्यतीति दूरेन्वयः । उक्तमिति तस्य शेषः । तथा च यच्च पर्यवस्यतीत्युक्तमित्यर्थः । प्रतीयमानं वस्तु, अभ्रमणम् । अलङ्कारव्यञ्जनास्थलं दर्शयति-जलकेलीति । जलकेलौ श्रीकृष्णेन स्वीयकरदत्तज-

लेन राधिकामुखचन्द्रं पुनः पुनरभिषिच्य स्वीयकरेण पिधीयते च मुच्यते च। ततस्तादृशचन्द्रस्य पिधानमोचनाभ्यां कोकमिथुनस्य संघटनविघटने भवतः। पिधाने रात्रौ विरहिणस्तस्य प्रातः कालभ्रमात् संघटनम्, मोचने चन्द्रोदय-विशिष्टसन्ध्याकालभ्रमाद् विघटनम्। कृष्णस्य तादृशकौतुकवर्णनमिदम्। पिधानमोचने कृष्णस्यैव करेण न तु राधिकायाः, तत्करस्य जलकेलितरलत्वे कृष्णमुखस्यैव सिच्यमानत्वसम्भवेन स्वमुखस्य पिधानाऽयोगात्। यद् वा-राधिकाकरेण पिधानमोचनयोरपि जलसेकद्वारा कृष्णकरप्रयोज्यत्वात्तद्द्वारा कृष्णकरेणैव पिधानमोचने। इत्यादौ रूपकादय इति। अत्र श्लोके मुखे चन्द्ररूपणम् आदिपदद्वयात् श्लोकान्तरे अलङ्कारान्तरमित्यर्थः।

तत्र वस्तुरूपं व्यङ्ग्यमुपक्रम्य तस्यानुमेयतां घटयति—तथा हीति। लिङ्गिनि साध्ये विषये ज्ञानम्।

लिङ्ग्यस्य त्रिरूपता च साध्यव्याप्तिसत्त्वे एव सम्भवतीति। अतस्तान् दर्शयति—ततश्चेति। अस-म्बन्धोऽव्याप्यः। अतिप्रसङ्गाऽव्यापकस्यापि प्रतीत्यापत्तिः। कश्चित्सम्बन्धो व्याप्तिरूपः।

## लोचन

सिद्धान्तमाह—इदमपीति। इदं महिमभट्टस्य समन्तरोक्तम्। सिषाधयिषितोऽर्थो रसादेरनुमानान्त-र्भावः। साधितमर्थान्तरम्। तत्र काव्ये शृङ्गारादिरस इत्यादिज्ञानस्याऽनुमेयत्वम्।

## कुसुमप्रतिमा

द्वितीयकल्पं दूषयति द्वितीय इति। द्वितीयः सभ्यवृत्तिः स्वप्रकाशानन्दरूप एव रस इति कल्पः। हेतोराभासतया व्यभिचारदुष्टतया हेतुना व्याप्तिग्रहणाभावात् साध्यसांधनयीः सामानाधिकरणज्ञानभावात्, असिद्ध एव सर्ववादिसिद्धोऽप्यसौ रसः अनुमानेनानिष्पन्नं एव। तथा च काव्यं रसादिमत् विभावादिमत्त्वा दित्यत्र हेतुतावच्छेदकसमवायसम्बन्धेन विभावादिप्रतीतेः सभ्यवृत्तित्वेन काव्यरूपपक्षे वृत्तित्वाभावात् ह्नदीद्रव्यं धूमव-त्वात्" इत्यादिवत् स्वरूपासिद्धिरूपहेत्वाभास; यथा साध्यतावच्छेदकसमवायसम्बन्धेन रसादेरपि सभ्यवृत्तित्वेन काव्यरूपपक्षे वृत्तित्वाभावात् "उत्पत्तिकालीनघटी गन्धवान् पृथिवीत्वात्" इत्यादिवत् बाधरूपहेत्वाभासश्च। एतयोश्च हेत्वाभासयोराद्येन परामर्शस्य द्वितीयेन चानुमितेरेव प्रतिबन्ध क्रियते। तथाहि—"स्वरूपासिद्धिस्तु पक्षे व्याप्यत्वभिमतस्याभावः। तत्र च ह्नदो द्रव्यं धूमादित्यादौ पक्षे व्याप्यत्वाभिमतस्य हेतोरभावे ज्ञाते पक्षे व्याप्यहे-तुमत्ताज्ञानरूपस्य परामर्शस्य प्रतिबन्धः फलम्।...बोधस्तु पक्षे साध्याभावादिः। एतस्य त्वनुमितिप्रतिबन्धः फलम्।" इति सिद्धान्तमुक्तावली। न चोक्तस्थले व्यङ्ग्यतासम्बन्धेन साध्यसाधनयीसमयोरेव काव्यरूपपक्षे वृत्तित्वात् नोक्तहेत्वाभासद्वयमिति वाच्यम्, भवन्मते व्यञ्जनानङ्गीकारेण व्यङ्ग्यताया एवासम्भवात् तदङ्गीकारे त्वनुमानस्यैवानावश्यकत्वात्।

अन्यप्रकारेण व्याप्तिग्रहमुपपाद्य रसादीनामनुमानसिद्धत्वं प्रदशयितुं व्यक्तिविवेककारेण पुनर्यदुपन्युस्तं तदपि दूषयितुमाह यच्चोक्तमिति। तेनैव व्यक्तिविवेकारेणैव। यत्र यत्र स्थले। एवं विधानां प्रदर्शितलक्षणानाम्। अभिधानं श्रव्यकाव्येनोपस्थानम्, अभिनयो दृश्यकाव्येन प्रकाशनम्। सुग्रहैव अनायासबोध्यैव व्याप्तिः साध्यसा-धनयीः सामानाधिकरम्यम्, पक्षधर्मता पक्षवृत्तिता। तथाहि—"सभ्योरसादिमान विभावादिप्रतीतिमत्त्वात्" इत्य-नुमानम्। एवञ्च रसादेः शाब्दबोधरूपसामग्रया जन्यतासम्बन्धेन काव्यवृत्तित्वात् परम्परया काव्यस्वापि सरसत्वसिद्धिः। तथा चात्र साध्यसाधनयीः रसादिप्रतीतिविभावादिप्रतीत्योरेकसमवायसम्बन्धेनैव सभ्यरूपपक्ष-वृत्तित्वात् व्याप्तिज्ञानमनायासंनिष्पन्नं प्रागुक्तहेत्वाभासद्वयनिरासश्चेति भावः।

ननु रसादेरनुमानवादिनां भवतां का नामानुमानसामग्रीत्याह येति। वो युष्माकं व्यञ्जनामङ्गीकुर्वतां मते अर्थान्तरस्य वाच्यार्थलक्ष्यार्थ भिन्नस्य व्यङ्ग्यार्थस्य अभिव्यक्तौ ज्ञाने या शाब्दबोधरूपा सामग्रीकारणम्, निबन्धनं तद्व्यङ्ग्यार्थ ज्ञानस्य प्रतिपादिका इष्टा; न अस्माकं रसादेरनुमानबोध्यत्वादिनाम् अनुमितिपक्षेऽपि सैव शाब्दबोधरूपा सामग्री, गमस्त्वेन तदनुमानप्रतिपादकत्वेन सम्मता। सुतरं, न किञ्चिद्गौरवं नवा दोष इति भावः।

इदमिति। इदमपि यत्र यत्रेत्यादिकं कारिकान्तं व्यक्तिविवेककारोक्तमपि, नः अस्माकं व्यञ्जनावादिनां न विरुद्धम्, निरुक्तानुमानस्य निर्द्दोषत्वादिति भावः।

साधु, तदा स्वत्वत्रैव विरम्यतामित्याह नहीति। एवं विधा प्रतीतिः—"सभ्यो रसादिप्रतीतिमान विभावादिप्रतीतिमत्त्वात्" इत्यनुमानलभ्यो रसादिविषयबोधाः, आस्वाद्यत्वेन प्रकृतरसादिरूपत्वेन अस्माकं व्यङ्ग्यतावादिनां नहि अभिमता; प्रत्यक्षेण रसादिरूपप्रतीतेरनुमानेन रसादिविषयकप्रतीतेश्च परस्परं भिन्नत्वादित्याशयः। इत्यमनुमानलभ्याया रसादिविषयकप्रतीतेः केनापि रसादिरूपत्वेनानङ्गीकारादियमपि सोल्लुष्ठनीक्तिः। तर्हि कीदृशी प्रतीतिर्युष्माकमास्वाद्यत्वेननाभिमतेत्याह किन्त्विति। स्वप्रकाशः स्वयमेव प्रकाशमानः न पुनरनुमानादिना प्रकाश्य इत्यर्थः, य आनन्दंश्चत्स्वरूपी ज्ञानविशेषः, तत्र विश्रान्तः पर्य्यवसितः, सान्द्रानन्दनिर्भरः प्रगाढ़सुखातिशयः, निरतिशयसुखसम्बलितस्वप्रकाशज्ञानविशेष एवास्माकं रसादिरूपत्वेनाभिमतस्तथैव सर्वैरनुभूयमानत्वादित्यर्थः। उक्तानुमानप्रकास्य रसादिविषयकज्ञानस्य निरतिशयसुखसम्बलितत्वं स्वप्रकाशत्वञ्च नास्त्येवेति भावः।

ननु तथाप्युक्तस्थले हेतोव्यर्भचाराभावेऽपि कथं हेत्वाभासतेत्याह तेनेति। तेन रसादिरूपप्रतीतिरसादिविषयकप्रतीत्योर्भेदेन अत्र "सभ्यो रसादिमान् विभावादिप्रतीतिमत्त्वात्" इति स्थले, मिषाधयिषि तात् अनुमानेन साधयितुमिष्टात्, अर्थात् आनन्दमयस्वप्रकाशज्ञानविशेषरूपात् वास्तविकरसपदार्थात् अर्थान्तरस्य अन्यरूपपदार्थस्य रसादिविषयकज्ञानस्य साधनात् अनुमानेन निष्पादनात्, हेतोः "विभावादिप्रतीतिमत्त्वात्' इति लिङ्गस्य आभासता दुष्टता। तथा चोक्तस्थले रसादिरूपसाध्यवति सहृदये रसादिरूपसाध्याभाववति श्रीवियजरन्मीमांसकादौ च विभावादिप्रतीतिरूपहेतोर्वृत्तितया साधारणाख्यहेत्वाभास एवेति भाव इति दिक्।

## विमला

व्याप्ति ग्रहणाभावादिति।—व्याप्तिग्रहणाभावात्—पक्षधर्मताऽनुपपत्तेरित्यर्थः। असिद्धः—नानुमितिविषयः; श्रीवियुजरन्मीमांसकादीनां विभावादिप्रत्ययसत्त्वेऽपि स्वप्रकाशानन्दानुत्पत्तिदर्शनादयं हेतुर्व्यभिचारो, इति व्याप्तिग्रहाभावात् तस्यानुमानं न सम्भवतीति भावः। प्रकारान्तरेण व्याप्तिग्रहं साधयित्वा रसादेः अनुमानसिद्धत्वं साधयति, यच्चोक्तमिति।—तेनैव—व्यक्तिविवेककारेणैव, एवंविधानां—तत्तट्यापारशालिनामित्यर्थः, विभावनादिव्याप्रभागिनामिति भावः, अभिधानं—शब्देनोपस्थापनम्, अभिनयः—नटचेष्टाऽऽदिभिरूपस्थापनम्। रसाविर्भावः—रसाद्युत्पत्तिः। व्याप्तिरिति।—यत्र यत्र धूमसस्तत्र तत्र वह्निरिति साहचर्य्यनियमः, सादृयाभाववदवृत्तित्वमिति भावः, सुग्रहैव—विभावनादिव्यापारभागि विभावाद्युपस्थानं रसाद्याविर्भावव्याप्यमिति व्याप्तिग्रहः, श्रोत्रियादीनान्तु विभावादेरेवीपस्थितिः, न तु विभावनादिव्यापररभागिनः, तत्र ताङ्गव्यापारास्वीकारादिति न व्यभिचारः। पक्षधर्म्मता—-पक्षस्य—व्याप्यस्य, धूमादेरिति यावत्, पर्वतादिमत्त्वमिति भावः, सूग्रहैवेत्यन्वयः, "अहं रामाद्यविर्भावव्याप्यतादृग्विभावाद्युपस्थानवान्" इति सामाजिकानां व्याप्तिविशिष्टपक्षधर्म्मताग्रहः। अत्र व्याप्तिः—अव्यभिचारिहेतुत्वं, पक्षधर्म्मता—पक्षसत्ता, पक्षे विद्यमानतेत्यर्थः, यथा "पर्वतो वह्निमान्" इत्यत्र पक्षः

पर्वतः; तत्र वह्नेः सत्ताऽस्ति, तथाऽत्र सामाजिकानाम् "अहं रामो सीताविषयकरतिमान्" इत्येवं प्रतीतो नायमानायाम् "अहं रसवान्" इति प्रतीतिर्जायते, तत्सत्त्वे च रसिकज्जनः पक्षः रसस्य तत्सत्ताऽस्तीति भावः, इत्थवधेयम्।

येति।—अर्थान्तरस्य—भवन्मते व्यङ्ग्यस्य, वाच्यादित्रयभिन्नार्थस्येति यावत्, अभिव्यक्तौ—व्यञ्जनया प्रकटने, वः;—व्यञ्जनावृत्तिं स्वीकुर्वतां युष्माकं, या सामग्री—शाब्दबोधादिरूपः कारणसमूहः, निबन्धनं—प्रधानम्, इष्टा—अभिलषिता, मैव—उक्तस्वरूपैव सामग्री, अनुमितिपक्षे, तिष्ठतामिति शेषः, नः;—अस्माकम्, व्यक्तिविवेकरसगङ्गाधरादिकाराणामिति भावः, गमकत्वेन—रसाद्यनुमापकत्वेन सम्मता।

दूषयति, इदमिति।—इदमपि—एवंरूपमपि अनुमानं, नः;—व्यञ्जनावादिनामस्माकं, न विरुद्धं—न विपरीतम्, अस्माभिरपि तादृशानुमानं स्वीक्रियते एवेति भावः। ननु किमधिकं भवान् ब्रवीतित्यत आह, न हीति।—न तु इत्यर्थः। स्वप्रकाशमात्रविश्रान्तः;—स्वप्रकाशमात्रेण—स्वरूपेण प्रकाशमात्रेणैव, विश्रान्तः;—विषयीकृतः; सान्द्रस्य—निरन्तरस्य, आनन्दस्य निर्भरः;—अतिशयः, आस्वाद्यत्वेनास्माकमभिमत इत्यर्थः। तेन—तादृशानुमितेरास्वाद्यत्वस्वीकारेण, सिषाधयिषितात्—साधयितुमिष्टात्, अर्थात्—स्वप्रकाशानन्दरूपात्, अर्थान्तरस्य—भिन्नार्थस्य, रसाद्याविर्भावस्य इति भावः, साधनात्—अनुमापनात्, हेतोः, आभासता—दुष्टहेतुत्वमित्यर्थः। अनुमितौ तु येन हेतुना यत् कार्य्यं साध्यते, तदेव कार्य्यमवश्यम्भावि, यदि तेन हेतुना अभिप्रेतकार्य्यं साध्यते, तदेव तस्य हेतोराभासत्वं, नियतहेतुका ह्यनुमितिरिति बोध्यम्।

इदानीं वस्त्वलङ्कारयोरपि अनुमानेनैव बोधः, न तु तदर्थमपि व्यञ्जनावृत्तिः स्वीकार्य्येति पुनरपि व्यक्तिविवेककारस्यैव मतान्तरं दूषयितुमुत्थापयति, यच्चेति।—इदञ्च "पर्य्यवस्यति" इत्यन्तेनान्वेति। प्रतीयमानं वस्तु—अभ्रमणरूपमनुमेयं पश्चात् विवक्षणीयम्।

## लक्ष्मी

द्वितीयः सामाजिकवृत्तिः। हेतोराभासतया व्यभिचारादिदुष्टत्वेन हेतुना व्याप्तिग्रहणाभावात् सामानाधिकरण्यज्ञानाभावात्, इदमुपलक्षणं स्वरूपसिद्धेश्चेत्यपि बोध्यम्, सीतादिविभावस्य रामादिमात्रवृत्तेर्न तु सामाजिके। असिद्ध एव सर्ववादिसिद्धोऽप्यसौ रसः अनुमानेनानिष्पन्न एव। तथा च यत्र येन सम्बन्धेन पक्षे साध्यो वर्तते तत्र हेतुरपि तेनैव सम्बन्धेन वक्तव्यः, यथा 'पर्वतो वह्निमान् धूमात्' इत्यत्र संयोगेन पक्षे साध्ये तेनैव तत्र हेतोरपि विद्यामानत्वम्, साध्यतावच्छेदकसम्बन्धो हेतुतावच्छेदकसम्बन्धश्च स एव। तथा 'काव्यं रसादिमत् विभावादिमत्वात्' इत्यत्र समवायसम्बन्धेनैव हेतुरतो हेतुतावच्छेक सम्बन्धः समवायस्तेन सम्बन्धेन विभावादिप्रतीतेः सभ्यवृत्तित्वेन काव्यरूपपक्षे वृत्तित्वा भावात् 'हृदो द्रव्यं धूमवत्वात्' इतिवत् स्वरूपसिद्धिरूपहेत्वाभासः। तथा यथा 'उत्पत्तिकालीनघटो गन्धवान् पृथिवीत्वात्' इत्यत्र बाधरूपहेत्वाभासस्तथा प्रकृतेऽपि रसादेः साध्यतावच्छेदकसमवायसम्बन्धेन सभ्यवृत्तित्वे काव्यरूपपक्षे वृत्तित्वाभआवात्। स्वरूपासिद्धेः परामर्शप्रतिबन्धः फलम्, बाधस्य त्वनुमितिप्रतिबन्धः फलम्। अपि च यत्र यत्र विभावादि प्रत्ययस्तत्र तत्र स्वप्रकाशानन्दोत्पत्तिरिति व्याप्तेरपि श्रोत्रियजरन्मीमांसकादीनां विभावादिसत्त्वेऽपि स्वप्रकाशानन्दानुत्पत्तिदर्शनादयं हेतुर्व्यभिचारीति व्याप्तिग्रहाभावादनुमानं न सम्भवतीति भावः। न चोक्तस्थले काव्यरूपपक्षे व्यङ्ग्यतासम्बन्धेन हेतुसाध्ययोरुभयोरेव वृत्तित्वात् नोक्तहेत्वाभासद्वयमिति वाच्यम्, व्यञ्जनाया भवन्मतेऽनभ्युपगमेन तत्समंबन्धस्यैवासम्भवात् तत्स्वीकारे तु अनुमानस्यैव प्रयोजनाभावात्।

व्यक्तिविवेककारेणोपायान्तरेण व्याप्तिग्रहमुपपाद्य रसादीनामनुमानसिद्धत्वमुपपादयितुं यत्पुनरुपन्यस्तं तदपि दूषयितुमुत्थापयति—यच्चोक्तमिति। तेनैव व्यक्तिविवेककारेणैवेत्यर्थः। यत्र यत्र स्थले। एवं विधानाम् उपपादितलक्षणानाम्। सात्त्विकसञ्चारिणामिति। श्रृङ्गाररसानुमित्यभिप्रायेणोक्तम्, तेषां श्रृङ्गाररसस्यैव व्याप्यत्वात्। क्वचित्तु विभावानुभावसञ्चारिणामित्येव पाठो न सात्त्विकेत्यादिः। अभिधानं श्रव्यकाव्येनोपस्थापनम्। अभिनयः दृश्यकाव्येन प्रकाशनम्, तदुभयमपि व्याप्तिः। व्याप्तिश्च यत्र यत्र धूमस्तत्र तत्र वह्निरिति साहचर्यनियमः, साध्याभावववदवृत्तित्वमित्यर्थः। पक्षधर्मता च। संदिग्धसाध्यधर्मा पक्षस्तस्य धर्मता पक्षधर्मता, काव्यमात्रं पक्षः तद्रवृत्तित्वं विभावाद्यभिधानस्यास्तीति पक्षधर्मता। व्याप्त्या सामान्यसिद्धिः पक्षधर्मतया विशेषसिद्धिः, यथा वह्निमान् धूमादित्यत्र व्याप्त्या सामान्यसिद्धिः पक्षधर्मतया पर्वते वह्निमत्वादिसिद्धिः। तथा च 'सभ्योरसादिमान् विभावादिप्रतीतिमत्वात्' इत्यनुमानम्।

एवञ्च रसादेः शाब्दबोधरूपसामग्रयाः जन्यतासम्बन्धेन काव्यवृत्तित्वात् काव्यस्यापि परम्परया सरसत्वसिद्धिः। तथा च हेतुसाध्ययोः रसादिप्रतीतिविभावादिप्रतीतित्योरुभयोरपि समवायसम्बन्धेनैव पक्षे वृत्तित्वात् व्याप्तिज्ञानमप्रयत्नेनैव जातम्, प्रदर्शितहेत्वाभासस्याभावश्चेति। श्रोत्रियादीनां तु विभावादेरेवोपस्थितिः न पुनर्विभावनादिव्यापारभागिनस्ते तत्र तादृग्व्यापारानङ्गीकारादिति न तत्रापि व्यभिचार इति भावः।

ननु रसादेरनुमानं वदद्भिर्भवादिभिरेवंविधा व्याप्तिरन्वेष्टव्येत्यत—आह यार्थेति। वो युष्माकं व्यञ्जनास्वीकुर्वतां मते वाच्यार्थलक्ष्यार्थातिरिक्तस्य व्यङ्ग्यार्थस्य रसस्याभिव्यक्तौ आस्वादने या सामग्री शाब्दबोधादिरूपः कारणसमूहः निबन्धनं प्रधानम् इष्टा अभिलषिता नः अस्माकं रसादेरनुमानबोध्यत्ववादिनाम् अनुमितिपक्षेऽपि सैव सामग्री यमंकत्वेन रसाद्यनुमापकत्वेन सम्मता इष्टा। सामग्रयभावेऽपि सैव सामग्री यमकत्वेन रसाद्यनुमापकत्वेन सम्मता इष्टा। सामग्रयभावेऽपि हि व्यङ्ग्यार्थप्रतिपत्तौ यतः कुतश्चिदपि यदेव तदेव प्रतीयेत। एवं व्यङ्ग्यस्य प्रकाशने लिङ्गमवश्यमन्वेष्टम्, तस्य व्याप्तिग्रहणं विना आभासतैव स्यादिति भवतामपि व्याप्तिग्रहणं विना न सम्भवतीति सुतरां न किञ्चिद्गौरवम्, न वा कोऽपि दोषलेश इति भावः। समतेतिपदस्य यच्चोक्तमित्यत्र सम्बन्धः। दूषयति—इदमिति। इदमपि यक्षत्र यत्रेत्यादिकं यार्थान्तरेतिकारिकान्तं नोऽस्माकं व्यञ्जनावादिनाम् न विरुद्धम्, उक्तानुमानस्यादुष्टत्वादस्माभिरपि स्वीक्रियत एवेति भावः।

नन्वविरुद्धमिति चेत्तर्हि अत्रैव विश्रम्यतामितः किं विवक्षुरित्यत आह—न हीति। एवं विधा प्रतीतिः 'सभ्यो रसादिप्रतीतिमान् विभावादिप्रतीतिमत्वात्' इत्यनुमानगम्यो रसादिविषयकबोधः आस्वाद्यत्वेन रसादिस्वरूपत्वेन अस्माकं व्यञ्जनादिनां न हि अभिमता अनुमानेन रसादिविषयकप्रतीतेः प्रत्यक्षेण रसादिस्वरूपप्रतीतेश्चोभयोरप्यतिरिक्तत्वादिति भावः। ननु तर्हि कीदृशी प्रतीतिर्भवतामास्वाद्यत्वेनाभिलषितेत्यत आह—किन्त्विति। स्वस्वरूपेण प्रकाशमात्रेणैव विश्रान्तो विषयीकृतः न पुनरनुमानादिना प्रकाश्य इत्यर्थः। सान्द्रस्य निरन्तरस्य आनन्दस्य निर्भरोऽतिशयस्तादृश एव सिषाधयिषितः स एवास्माकम् आस्वाद्यत्वेनाभिमतस्तस्यैव सहृदयैरनुभूयमानात्वादित्यर्थः। न हि भवन्मतेऽनुमानगम्ये निरन्तरानन्दनिर्भरः स्वप्रकाशत्वं रसादिविषयकज्ञानस्य सम्भवतीति भावः। सिषाधयिषितत्वं चात्र इच्छाविषयत्वमात्रम्, न त्वनुमित्सित्वम् रसेऽनुभवात्।

ननु हेतोर्व्यचिराभावेऽप्युक्तस्थले कथं तदाभासतेत्यत आह—तेनेति। रसादिविषयकप्रतीतिरसादिरूपप्रतीत्यर्भेदेन तादृशानुमितेरास्वाद्यत्वास्वीकारेणेत्यर्थः। अत्र 'सभ्योरसादिमान् विभावादिप्रतीतिमत्वात्' इत्यत्र सिसाधयिषतात् साधयितुमिष्टात् अर्थात् स्वप्रकाशानन्दरूपात् अर्थान्तरस्य भिन्नार्थस्य रसादिविषयकप्रतीतेः साधनात् अनुमापनात् हेतोः 'विभावादिप्रतीतिमत्वात्' इति लिङ्गस्य आभासता दुष्टता। तथा च साध्यवति

साध्याभावे च हेतोर्वर्त्तमानत्वे साधारणाख्यहेत्वाभासत्वेन प्रकृते सभ्ये रसादिरूपसाध्यवति श्रोत्रियरन्मीमांसकादौ च रसादिरूपसाध्याभाववति विभावादिप्रतीतिरूपहेतोर्वृत्तितया साधारणाख्यहेत्वाभास एवेति। वस्तुतस्तु सामाजिके साक्षात्क्रियमाणः स्वप्रकाशानन्दोऽनुमीयत एव न, अनुमित्साभावात्। न हि तस्य नियमतोऽनुमित्सा भवति रसबोधस्तु नियमित एवेति बोध्यम्।

एवं रसादेरनुमानगोचरत्वं व्यवस्थाप्य इदानीं व्यङ्ग्यभूतयोरपि वस्त्वलङ्कारयोरनुमानेनैव बोधो न तु तदर्थमपि व्यञ्जनावृत्तिरङ्गीकार्येति व्यक्तिविवेककारस्यैव मतान्तरं दूषयितुमुत्थापयति—यच्चेत्वादि पर्यवस्यतीत्यन्तेन।

## रुचिरा

अथ व्यक्तिविवेककारोक्तयैव प्रकृतेऽनुमानप्रसङ्गं वारयितुमाह—**यच्चे**त्यादि।

**तेन** व्यक्तिविवेकृता। **एव** नत्वन्येन केनापि। **यत्। च। उक्तम्** 'यत्रयत्र यस्मिन्यस्मिन् स्थले। एवं **विधानां** शब्दाभिनयाभ्यां समर्पितसत्त्वानामित्यर्थः। **विभावानुभावसात्त्विकसञ्चारिणाम्। अभिधानं** कथनं तत्तच्छब्देनोपादानमिति यावत्। **वा**ऽथवा। **अभिनयो**ऽभिनेतुर्नटस्येहितेन निरूप्यमाणं विभावाद्यनुकरणम्। 'स्या' दिति शेषः। **तत्रतत्र** तस्मिंस्तस्मिन् स्थाने। **शृङ्गारादिरसाविर्भावः** श्रृङ्गारहासादिरसानामाविर्भावः। 'जायते' इति शेषः। **इतीत्ये**वम्। **व्याप्तिः** साध्याभाववद्वृत्तित्वरूपो नियमविशेषः। **च** तथा। **पक्षधर्मता** पक्षस्य यत्र यत्त्वं यद्वत्त्वं वा साध्यते तस्य धर्मता तन्निष्ठयत्किञ्चिन्निरूपितप्रकारतेति। व्याप्यस्य साध्यवृत्तित्वमिति भावः। **सुग्रहा** सुखेन ग्रहीतुं शक्या। 'अस्ती'ति शेषः। **एव। तथा** एवमित्यर्थः—

'**वो** युष्माकं व्यक्तिवादिनामित्यर्थः। तेषामेव सम्बोध्यत्वात्। 'बहुवचनस्य वस्नसौ।' ८/१/१ इति वसादेशः। **अर्थान्तरभिव्यक्तौ** अर्थो वाच्यो लक्ष्यो वा तस्मादन्य इति, तस्याभिव्यक्तिः स्फुरणं तस्याम्। **या** यत्स्वरूपा। **निबन्धन**मुपनाहस्तद्वत्प्रधानभूतेति यावत्। 'उपनाहो निबन्धन' मित्यमरः। उपनाहश्च यत्रतन्त्रयोनिबद्धाः स्वनयन्ति तस्योर्ध्वभागः। 'निबन्धनं प्रधान' मिति तर्कवागीशाः। **सामग्री** शाब्दबोधादिस्वरूपः कारणसमुदायः। **इष्टा**ऽभिमताऽभिलषिता वा। 'अस्ती' ति शेषः। **नो**ऽस्माकम्। अनुमानवादिनमिति यावत्। **सा** तत्स्वरूपा। **एवं** न त्वन्यस्वरूपाऽपीत्यर्तः। **अनुमितिपक्षे**ऽनुमितिरनुमानं तस्याः पक्षस्तस्मिन्। **गमकत्वेन** रसाद्यनुमापकत्वेन। गमयति प्रापयति अवबोधयतीति वेति तत्त्वेन। **सम्मता** स्वीकृता॥' इति। अत्रेदं निष्कृष्टम्—यथा महानसमभितो धूममवलोकमानः 'कुतोऽय' मिति तं निश्चेतुं प्रवृत्तः, महानसे प्रविश्य वह्निव्याप्यं धूममवलोकते, परत्र पुनर्जलादिव्याप्यत्वाभावं तदीयमवलोक्य यथा स्वयं यत्र धूमस्तत्र वह्निरिति व्याप्तिं निश्चिनोति। अथ—तथैव पर्वतेऽपि धूममवलोकमानस्तामेव 'यत्र धूमः, तत्र वह्नि' रिति व्याप्तिं स्मरति, स्मरंश्च तत्र वह्निमवलोक्य 'यत्रतत्र धूमस्तत्रतत्र वह्नि' रिति निश्चिनोति तदनन्तरं यत्रयत्र धूमवलोकते तत्रतत्र प्रथमत एव तस्येयमनुमितिः 'अयं वह्निमान् धूमवत्त्वात्।' इति सम्पद्यते। एवं यथा—'यत्र धूमस्तत्र वह्नि'रिति व्याप्तिः, ततश्च धूमो वह्निव्याप्यो वह्निश्च धूमव्यापक इति व्याप्यस्य साध्यवृत्तित्वं पक्षधर्मता, तज्ज्ञानं पुररनुमितिरिति व्यपदिश्यते। तथा कुत्रचिद् विभावादिसम्पत्तिं प्रतिपद्य रसादिसद्भावं प्रतिपद्यमाना विभावादिसम्पत्तीरसादिसम्भूतिव्याप्येति नियते, परत्र पुनर्विभावादिसम्पत्तिं प्रतिपद्यमानानां रङ्गगतानामात्मनश्चान्येषां च क्षणादेवाभिव्यक्ततया रसादिसम्भूतिमुपलभ्य चिरायानुमितिं प्रतिपद्यते यत्रयत्र विभावादिस्तत्रतत्र रसादिः।' इति। एवं च व्याप्तिविशिष्टपक्षधर्मताज्ञानं प्रकृते निर्बाधम् 'अयं रसादिमानं विभावादिमत्त्वादि'ति। अथ—यथा, व्यक्तिस्वीकर्त्तारो वाच्य-

लक्ष्यार्थोभयविलक्षणस्यार्थस्य प्रतिपत्तये व्यञ्जनां वृत्तिं स्वीकुर्वन्ति वयं पुनरनुमानेनैव तदङ्गीकारप्रयोजनं गतार्थयामः । इति विचारापनोद्य एवैष भ्रमो व्यक्तिकारस्य । इति व्यक्तिविवेककाराणां मतम् ।' इति अथैतदूदूषयति— इदं 'त'दिति शेषः । **अपि । नो**ऽस्माकं व्यञ्जनास्वीकर्तृणाम् । न नैव । विरुद्धम् । 'उक्त'मिति शेषः । हि यतः । **एवंविधा** यत्र विभावादिनामभिधानमभिनयो वा स्यात्तत्र रसादिरिति भवतोऽभिमता विभावाद्यभिधानमात्रनिरूपितप्रकाराऽविभावाद्यभिनमभिनयो वा स्यात्तत्र रसादिरिति भवतोऽभिमता विभावाद्यभिधानमात्रनिरूपितप्रकाराऽविभावाद्यभिनयमात्रनिरूपितप्रकाराऽपि वेति यावत्। **प्रतीतिः**। 'रसादे' रिति शेषः। **आस्वाद्यत्वेनास्वादस्वरूपेण । न** नैव । **अभिमता** । 'अस्ती'ति शेषः । **किन्तु स्वप्रकाशमात्रविश्रान्ता** स्वप्रकाश एवेति, तत्र स्वप्रकाशमात्रे इत्यर्थः विश्रान्ता पर्यवसिता । **सान्द्रानन्दनिर्भरा** । सान्द्रोऽसावानन्द इति, तेन निर्भरा सातिशयेति । 'प्रतीति'रिति शेषः । निःशेषेण भरोऽत्रेति, निर्गतो वा भरोऽत्र इति । भरोऽतिशेषः । तेन 'हेतुने'ति शेषः । **अत्रा**स्मिन् । 'अनुमान'इति शेषः । **सिसाधयिषितात्** साधयितुमनुमानद्वारा समर्थयितुमीप्सित इति तस्मादिति तथोक्तात् । **अर्थात्** । 'स्वप्रकाशानन्दस्वरूपा'दिति शेषः । **अर्थान्तरस्यान्यो**ऽर्थ इति तस्य । रसाद्यविर्भावस्वरूपस्येत्यर्थः । **साधनात्**। **अनुमापनात्**। **हेतोर्भ**वन्निरूपितस्वरूपस्य कारणस्य। **आभासता** दुष्टता। अत्रेदमवधेयम्—'यत्रयत्र विभावादीनामभिधानमभिनयो वा तत्रतत्र रसादीनामाविर्भाव' इति व्यक्तिवाद्यनुमानवाद्युभयसाधारणं मतम् । न ह्यत्र किमपि कस्यापि वैमत्यम् । किन्तु-एतद्विचार्यम्—रसाद्याविर्भाव' इति व्यक्तिवाद्यनुमानवाद्युभयसाधारणं मतम्। न ह्यत्र किमपि कस्यापि वैमत्यम्। किन्तु-एतद्विचार्यम्—रसाद्यविर्भावो रसादिप्रतीतिश्च नाम्ना वस्तुत एव वा भिन्ने इति । नच नाम्नैव । उत्पत्त्यपरपर्यायस्याविर्भावपदवाच्यस्य, आस्वादापरपर्यायस्य च प्रतीतिपदवाच्यस्य परस्परं विभिन्नताया दृष्टश्रुतत्वात् । नहि भोग्यस्योत्पत्तिरास्वाद (भोग)श्च केनापि सचेतसाऽभिन्नत्वेन निरूप्येते । उत्पत्त्यपेक्षया भोगस्योत्तरकालिकत्वाद् भोगापेक्षया चोत्पत्तेः प्राक्कालिकत्वात् । आस्वाद्यस्वादकयोर्भिन्नत्वे, तयोरपि भिन्नत्वाच्च । अतो वस्तुत एव भिन्ने इति स्थितम् । यथा च यत्रयत्र मृत्तिकाकुलालादि तत्रतत्रैव घटोत्पत्तिरिति व्याप्तिग्रहेऽपि यत्रयत्र मृत्तिकाकुलालादि तत्रतत्रैव घटप्रतीतिरिति न वक्तुं शक्यते, तथा तत्र विभावादीनामभिधानमभिनयो वा तत्रैव रसाद्याविर्भाव इति व्याप्तिग्रहेऽपि यत्र विभावादीनामभिधानमभिनयो वा तत्रैव रसादिपर्तीतिरिति न सिद्धान्तः । यस्मात्—मृत्तिकाऽऽद्यभावस्थलेऽपि घटप्रतीतिरिवि विभावाद्यभिधानाद्यभावेऽपि रसादिप्रतीतिः, मृत्तिकाऽऽदिसद्भावे च घटाप्रतीतिरिव विभावाद्यभिधानादिसद्भावे च रसाद्यप्रतीतिरिति नासौ सिद्धो हेतुः । अत्रायम्भावः—विभावादीनामभिधानेनाभिनयेन वा रसाविर्भावे, तयोः पुनर्विनाशेऽपि यथा रसप्रतीतिः सहृदयहृदयगोचरा तथआ विभावादीनामभिधानेनाभिनयेन वा रसाविर्भावेऽपि तयोः पुनः सत्त्वेऽपि जरतां श्रोत्रियादीनां हृदयगोचरता न रसप्रतीतिः। इत्युत्यपत्त्यपरपर्याय आविर्भावापरवाच्यो न स्वस्वरूपः, प्रतीतिः पुनरास्वादाद्यपरपर्याया स्वस्वरूपैवेति सुष्टूक्तं 'ह्येवंविधे'त्यादि, अव्याप्त्यतिव्याप्तिभ्यां च हेतोराभासत्वम् । इति ।

यच्चं 'मम धम्मिअ—' इत्यादौ (२०९ पृ.) प्रतीयमानं वस्तु,

**'जलकेलितरलकरतलमुक्तपुनः पिहिताराधिकावदनः ।**

**जगदवतु कोकयूनोर्विघटनसंघटनकौतुकी कृष्णः ॥'**

इत्यादौ च रूपकालंकारादयोऽनुमेया एव । तथाहि—"अनुमानं नाम पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्वविशिष्टाल्लिङ्गाल्लिङ्गिनो ज्ञानम् । ततश्च वाच्यादसंबद्धोऽर्थस्तावन्न प्रतीयते । अन्यथातिप्रसङ्गः स्यात् इति बोध्यबोधकयोरर्थयोः कश्चित्संबन्धोऽस्त्येव । ततश्च बोधकोऽर्थो लिङ्गम्, बोध्यश्च लिङ्गी, बोधकस्य चार्थस्य पक्षसत्त्वं निबद्धमेव । सपक्षसत्त्वविपक्षव्यावृत्तत्वे अनिबद्धे अपि सामर्थ्यादिवसेये ।

तस्मादत्र यद्वाच्यार्थाल्लिङ्गरूपाल्लिङ्गिनो व्यङ्ग्यार्थस्यावगमस्तदनुमान एव पर्यवस्यति इति । तन्नु तथा ह्यत्र "भम अम्मिअ—' इतयादौ गृहे श्वनिवृत्त्य विहितं भ्रमणं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति" इति यद्वक्तव्यं तत्रानैकातिको हेतुः । भीरोरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण वा गमनस्य संभवात् । पुंश्चल्या वचनं प्रामाणिकं न वेति संदिग्धासिद्धश्च ।

'जलकेलि—' इत्यत्र 'य आत्मदर्शनादर्शनाभ्यां चक्रवाकविघटनसंघटनकारी स चन्द्र एव' इत्यनुमितिरेवेयमिति न वाच्यम् । उत्रासकादावनैकान्तिकत्वात् । 'एवंविधोऽर्थ एवंविधार्थबोधक एवंविधार्थत्वात्, यन्नैवं तन्नैवम्' इत्यनुमानेऽप्याभाससमानयोगक्षेमो हेतुः । 'एवंविधार्थत्वात्' इति हेतुना एवंविधानिष्ठसाधनस्याप्युपत्तेः ।

तथा 'दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे'—इत्यादौ (१५) पृ. । नलग्रन्थीनां तनूल्लिखनम्, एकाकितया च स्रोतोगमनम्, तस्याः परकामुपभोगस्य लिङ्गिनो लिङ्गमित्युच्यते । तच्चात्रैवाभिहितेन स्वकान्तस्नेहेनापि संभवतीत्यनैकान्तिको हेतुः ।

---

## विवृतिः

इदानीं वस्त्वलंकारयोरप्यनुमानेनैव बोधो न तु तदर्थमपि व्यञ्जनावृत्तिः स्वीकार्येति व्यक्तिविवेककारस्यैव मतान्तरं दूषयितुमुत्थापयति—यच्चेत्यादिपर्यवस्यतीयन्तेन । प्रतीयमानं व्यज्यमानं वस्तुअभ्रमणरूपमनुमेयमेवेत्यग्रेणान्वयः ॥ जलकेलीति । राधिकावदने मुक्ते सति तत्र चन्द्रबुद्ध्या रात्रिज्ञानेन विघटनम्, पिहिते सति चन्द्रानुपलब्धा रात्रयभावज्ञानेन तयोर्घटनम् । तयोभ्रान्त्या मुहुर्वियोगसंयोगदर्शनेन कौतुकमिति भावः । राधिकावदने चन्द्रत्वारोपणेन रूपकालंकारः । अनुमेया एव, न तु व्यङ्ग्याः । अनुमानत्वमुपपादयति—तथाहीति । संदिग्धसाध्यकः, सिषाधयिषविरहविशिष्ट सिद्ध्यभाववान् वा पक्षः । निश्चितसाध्यवान् सपक्षः । साध्याभाववान् विपक्षः तद्व्यावृत्तत्वं तदवृत्तित्वम् । इयं व्याप्तिः लिङ्गात्साधनात् । लिङ्गि साध्यम् । वाच्यात्तावद्व्यङ्ग्यं प्रतीयत इति वाच्यार्थस्य लिङ्गत्वमभिप्रेत्य तत्र पक्षसत्त्वादित्रयमुपपादयति—ततश्चेति । अन्यथा असंबद्धप्रतीतिस्वीकारेऽतिप्रसङ्गः स्यात् । 'भम धम्मिअ'— इत्यादौ भ्रमणाभावस्येव घटाभावादेरपि बोधः स्यात् । कश्चित्संबन्ध

इव प्रकृते वैपरीत्यरूपः संबन्धः, स एव व्यापकताघटक इति भावः । ततश्च संबन्धस्यावश्यं सत्त्वाच्च पक्षसत्त्वादिज्ञानस्यैवोपयोगित्वात् । तदुपपादयति—पक्षसत्त्वमिति । निबद्धं शब्देनोपस्थितम् । सामर्थ्यात्संस्कारबलात् । अवसेये प्रत्येतव्ये । महावाक्यार्थं निरूपयति—तस्मादिति । दूषयति—तन्नेति । गृहे गृहसमीपे चत्वारादौ श्वनिवृत्त्या कुक्कुरमणप्रदर्शनेन विहितं विधिविषयः 'अभ्रमणमनुमापयति' इत्यनेनान्वितम् । अत्र श्वनिवृत्तिविधीयमानगृहसमीपभ्रमणं लिङ्गम्, तच्च भीरुत्वपर्यवसन्नम् । सिंहवद्गोदावरीतीरभ्रमणं साध्यम् । धार्मिकः पक्षः । सामाजिकोऽनुमाता । अनैकान्तिको व्यभिचारी । भीरोरपीति । अनेन निरुक्तलिङ्गविशिष्टस्य ग्रहणम् । गमनस्य संभवादिति साध्याभावप्रदर्शनम्संदिग्धसिद्धम् । हेतोर्दोषान्तरमाह—पुंश्चल्या इति । कुलटाया इत्यर्थः । प्रामाणिकं प्रमाजनकम् । तथा च वचनमिदं किं धार्मिकस्य भयोत्पादकं किंवा कुक्कुरस्पर्शशङ्कासंकुचितभ्रमणस्य तस्य स्वच्छन्दभ्रमणविधायकमिति सामाजिकानां संदेहाद्भीरुत्वसंदेह इति संदिग्धासिद्धो हेतुरिति भावः ॥ अलंकारानुमानं दूषयति—जलकेलीति । उत्रासतको भयदः । आदीना रात्रिसाधर्म्यान्तरस्यापि ग्रहणम् । तादात्म्यसंबन्धेन साध्यस्य चन्द्रस्य वदने बाधाद्बाधोऽपि हेतुदोषोऽत्र द्रष्टव्यः । व्यभिचारभयेन पक्षमात्रवृत्तिहेतुकवस्त्वलंकारानुमानमाह—एवमिति । एवंविधार्थबोधक इति । अत्र पक्षीभूतवाक्यार्थेन बोधयितुं योग्या ये येऽर्थास्त एव साध्यकोटिनिविष्टेन एवंविध इत्यनेन धर्तव्याः । अन्यथा वक्तुरभिप्रेतस्यैवार्थविशेषस्य ग्राह्यत्वे 'गतोऽस्तमर्कः' इत्यादौ वक्तुरभिप्रेतार्थमवबोधयित्वार्थान्तरबोधके व्यभिचारापातः । हेतोः पक्षमात्रवृत्तित्वेनान्वयदृष्टान्तासंभवादन्वयव्याप्तिग्रहो न संभवतीति व्याप्तिग्रहाय व्यतिरेकोदाहरणमाह—यन्नैवमिति । यदेवंविधार्थबोधकत्वाभाववत्तदेवंविधार्थत्वाभाववदित्यर्थः । 'देवदत्तो भवतीति वाक्यार्थवत्' इति दृष्टान्तोऽत्र द्रष्टव्यः । आभाससमानयोगक्षेमो दुष्टहेतुसमानकार्यकारी । तदेवोपपादयति—एवमिति । अनिष्टो वक्तुरनभिमतः । तथा च यथा दुष्टहेतुः । प्रयोगेण वादिविजयो भवति तथार्थान्तरसाधकहेतुप्रयोगेणापीत्याभासतुल्ययोक्षेमत्वमिति भावः । अत्रापि व्यभिचारमाह—तथेति । एकाकितया चेति चकारो वार्थः । स्रोतोगमनं वेत्यर्थः । लिङ्गं तादात्म्येन साधनम् । तत्रागुक्तमर्थद्वयम् । अत्रैव 'दृष्टिं—' इत्यादिश्लोक एव । अभिहितेन द्वितीयपादप्रतिपादितेन । तथा च यत्र स्नेहस्य किं दुष्करमिति जानतां सर्वेषामेव श्रोतृणां तादृशबोधो न जायते तत्रैव व्यभिचार इति भावः ।

## विवृतिपूर्तिः

उच्यते । न तावदत्र वाच्यानुमेययोरर्थयोः समुच्चयेनावगतिरुपपद्यते भ्रम मा च भ्रमीरिति, विधिनिषेधयोरेकाश्रयत्वविरोधात् । नापि विकल्पेन भ्रम वा मा वा भ्रमीरिति, वचनोच्चारणानर्थक्यप्रसङ्गात् । नाप्यङ्गाङ्गिभावेन, विधिनिषेधयोः साक्षात्तदसंभवात् । केवलं योऽसौ भ्रमणविधौ हेतुभावेन दृप्तपञ्चाननव्यापारस्तत्रोपात्तः स एव विमृश्यमानः परम्परया धार्मिकस्य तन्निषेधे पर्यवस्यति तयोर्वाध्यबाधकभावेनावस्थानात् । को ह्युन्मत्तः कुक्कुरमात्रसद्भावभयात् परिहृतभ्रमणस्तत्रैव दृप्तसिंहसद्भावाशङ्कायामपि सविश्रम्भं भ्रमेदित्यनुमेयार्थविश्रान्तिनियमहेतुबाध्यबाधकभावोऽस्त्येवात्र विशेषः । अवश्यं चैतदभ्युपगन्तव्यम्, अन्यथा शुक्तिकारजतप्रतीत्योरपि क्रमभाविन्योरेतत्पर्यनुयोगप्रसङ्गेन वार्यते । तस्माद् बाध्यबाधकभावावसायकृत एवात्रोत्तरार्थविश्रान्तिनियम इति स्थितम् । तत्र 'भमं धम्मिअ वीसद्धो' इति वाक्यार्थरूपो भ्रमणविधिर्वाच्यः, तस्य 'सो सुणओ अज्ज मारिओ देण' इत्यादिना क्रूरकुक्कुरमारणं दृप्तसिंहविहितं वाक्यार्थरूपमेवार्थो हेतुः । तत्प्रतिषेधस्त्वनुमेय एव न वाच्यः तस्योक्तनयेनाक्षेपात् । तत्र 'गोलाणईकच्छकुडङ्गवासिणा' इति गोदावरीकच्छकुहरस्य धर्मित्वनिर्देशः । 'दरिअसीहेण' इचि श्वमारमकारणाभिधानद्वारेणोपात्तस्य दृप्तसिंहसद्भावस्य हेतुभावः । 'कुडङ्गवासिणा' इति तद्विशेषणेन तस्य

धर्मिणि सद्भावोपादानम्। तस्यास्य हेतोः साध्यस्य च निर्भयभ्रमणविधिलक्षणस्य सहानवस्थानलक्षणो विरोधः प्रसिद्ध एवेत्येकस्य सद्भावावेदनेनापरस्य स्वभावविरुद्धोपलब्ध्या प्रतिषेधे विज्ञायमाने सति समशीर्षिकयोभयार्थप्रतीतिरेवात्र न समस्तीति तद्विश्रान्तिपर्यनुयोगो निरवकाश एव। तेनानुमेय एव भ्रमणस्य निषेधो न व्यङ्ग्य इत्येवंसेयं यथा नात्र-शीतस्पर्शोऽग्नेरित्यतः शीतस्पर्शस्य। यदि वा प्रेक्षावतां प्रवृततिरनर्थसंशयाभावनिश्चयेन व्याप्ता, तद्विरुद्धश्चात्रानर्थसंशयोऽस्माद्विधिवाक्याणिजर्थपर्यालोचनयावसीयत इति व्यापकविरुद्धोपलब्धा यथा नात्र तुषारस्पर्शोऽग्नेरित्यतस्तुषारस्पर्शस्य॥

अनुमापयतीति। 'गोदावरीतीरं भीरुभ्रमणायोग्यं सिंहवत्त्वात्, यन्नैवं तन्नैवम्, यथा गृहम्' इति भ्रमणाभावानुमितिः॥

पक्ष इति। यथा धूमवत्त्वे हेतौ पर्वतः॥

सपक्ष इति। यथा तस्मिन्नेव हेतौ महानसम्॥

विपक्ष इति। यथा पूर्वोक्त एव हेतौ जलाशयः॥

अनैकान्तिक इति। एकस्य साध्यस्य तदभावस्य च योऽन्तःसहचारोऽव्यभिचरितसहचारः स चात्र व्याप्तिग्राहकः। तथा चैकमात्रव्याप्तिग्राहकसहचारवानैकान्तिकस्तदन्योऽनैकांन्तिकः। व्यभिचारी हेतुरित्यर्थः॥

## विज्ञप्रिया

बोधकस्य चार्थस्य इति। गोदावरीतीरदेशे भीरुणा धार्मिकेण न भ्रमणीयम्, तत्र सिंहसत्त्वादित्यनुमानेन बोधकार्यः सिंहसत्त्वम्। सामर्थ्यादिति—अव्यभिचारिसहचारादित्यर्थः।

पर्यवस्यतीति—यच्च पर्यवस्यतीत्युक्तमित्यर्थः प्रागेव व्याख्यातः।

दूषयितुं तदभिमतार्थमनुवदति—तन्न तथा हीति। सिंहोपलब्धेरिति—कुलटावाक्योपलब्धसिंहादित्यर्थः। अनुमापयतीत्यत्र कुलटा कर्त्री। दूषयति-तत्रेति। अनैकान्तिको व्यभिचारी।

व्यभिचारं ग्राहयाते—भीरोरपीति। प्रियानुरागः सिंहवद्देशं प्रविष्टप्रियानुरागः। हेतोः सन्दिग्धासिद्धिमपि दर्शयति—पुंश्चल्या इति। पुंश्चलीवाक्ये प्रामाण्यसन्देहात्। पक्ष गोदावरीतीरे हेतोः सिंहसत्त्वस्य सन्देहात् सन्दिग्धासिद्धिरित्यर्थः।

'जलकेलि' इत्यादौ अलङ्कारस्यानुमेयतामपि हेतोर्व्यभिचाराद् दूषयति—जलकेलीत्यत्रेति। आत्मा दर्शनीयरूपः।

इत्तासकादाविति। उत्तासलको हि आत्मनो दर्शनादर्शनाभ्यां चक्रवाकसंघटनविघटनकारी। न चासौ चन्द्र इति व्यभिचारः। आदिपदात् सूर्यपरिग्रहः। सोऽपि तथाविधोऽपि न चन्द्रः।

सामान्यसिद्धयव्याप्त्या व्यङ्ग्यस्यानुमेयताप्रदर्शनमपि दूषयितुमाह—एवंविधेति। आभासमान आभासो हेतोरुपलभ्यमानो व्यभिचारः कोकत्रासकवृत्तिः स्वदर्शनादर्शनरूपः। एवंविधार्थत्वादितिहेतुस्तत्तुल्ययोगक्षेमस्तत्तुल्यव्यभिचारः। स हेतुःसाध्याभावेन सहचरितत्वेन व्यभिचरतीत्यर्थः। तद्दर्शयति—एवंविधार्थत्वादिति। एवंविधानिष्टार्थस्येति—तथा च एवंविधार्थव्यभिचारी हेतुरित्यर्थः।

श्लोकान्तरेपि व्यङ्ग्यान्तरस्यानुमेयतां हेतोर्व्यभिचारेण दूषयितुमाह—तथा यद्रदृष्टिमिति। स्रोतोगमनमित्यत्र स्रोतोगमनकथन चेत्यर्थः। अत्रेत्थमनुमानम्, इयं परकामुकोपभोगेच्छावती नलग्रन्थिना स्तनदारणसम्भावनासंत्त्वेऽपि स्रोतोगमने एकाकिप्रवृत्तत्वाद् इति। ग्रन्थकृतस्तु स्तनाघातस्रोतोगमनयोः पृथक्कथनेऽपि न पृथक् हेतुद्वयम्। किन्तु हेतुविशेषणमेव तद्द्वयं बोध्यम्। हेतोर्व्यभिचारं दर्शयति—स्वकान्तेति। अपिकारात् तद्भयेनापीति बोध्यम्।

## लोचन

एवं रसादेरनुमानागोचरत्वं व्यवस्थाप्य वस्त्वलङ्कारयोरपि व्यङ्ग्ययोस्तद्दर्शयति—यच्चेति। चः पूर्वोक्तसमुच्चये। पर्यवस्यतीत्यत्र दूरस्थितेन इति शब्देन सम्बन्धः। यदुक्तं महिमभट्टेन तदप्युक्तमित्यर्थः। किमुक्तमित्याह—जलकेलीत्यादि। जलकेलीत्यादौ रूपकालङ्कारः। राधिकामुखस्य चन्द्रत्वस्य व्यङ्ग्यत्वाच्चन्द्रदर्शनादर्शनाभ्यां हि रात्रिसद्भावाभावबुद्धया चक्रवाकयोर्विघनसंगटने भवतः।

कथमनुमेय इत्याह—तथाहीति। नाम प्रकाश्ये। पक्षे पर्वतादौ सपक्षे महानसादौ न विपक्षे जलह्रदादौ व्यावृत्तत्वम्। लिङ्गाद् व्याप्याद् धूमादेः लिङ्गिनि व्यापके वह्न्यादौ।

अत्र प्रकृते, 'भ्रम धार्मिक' इत्यादौ बोध्याऽर्थो व्यङ्ग्यो बोधको वाच्यः।

बोधकस्य चार्थस्य—लिङ्गरूपस्य दृप्तसिंद्भावस्य। पक्षे गोदावरीतीरनिकुञ्जरूपे आश्रये सामर्थ्यादवसेय इति न खलु सपक्षसत्त्विपक्षव्यावृत्तत्वाभावः। लिङ्गात्साध्यावगमः स्यात्—लिङ्गिनः साध्यस्य भीरोरभ्रमणरूपव्यङ्ग्यस्य।

दूषयति—तन्नेति। तन्न युक्तम्। कुतो न युक्तमित्याह—थाहीति अत्र-गृहे इति। अयमर्थः—यस्य खलु भीरोर्गृहे श्वनिवृत्त्या भ्रमणं विहितं स कथं सिंहोपलब्धिस्थाने भ्रमिष्यति। अनैकान्तिकः साध्यव्यभिचारी।

कुतोऽनैकान्तिक इत्यत आह—भीरोरपीति। प्रियानुरागेण चेत्यनन्तरं भयस्थान इति शेषः। पुंश्चल्या वचनम्—भ्रम धार्मिकेत्यादिवचनम्। किञ्च यः खलु वीरः स्पर्शादिशङ्कया शुनो बिभेति स सिंहसद्भावस्थानं प्रत्युतं मृगयादिकुतूहलेनं गच्छतीति दर्शनाद्विरुद्धो भ्रमणरूपसाध्यविरुद्धस्य साधनात्।

उत्त्रासकः—यस्य करतालदानादिनोत्रासेन पक्षिणो न घटन्ते, तदभावे च संघटन्ते।

योगक्षेम इतिकर्तव्यता आभासस्य; यथा इतिकर्तव्यता कार्यनिष्पादनं तथैवेवंविधार्थत्वादितिहेतौरिति भावः। कुत इत्याह—एवमिति।

इममेवाभिमतमर्थमुदाहरणेष्वपि हेत्वाभासं दर्शयन् द्रढयतितथेति। हेतुर्वाच्याऽर्थः।

न विवाद इति—न खलु वयं दूत्यास्तत्कालसन्निहितानां वानुमानं निराकुर्मः। तथाविधेति—न खलु, 'निःशेषच्युतचन्दनम्' इत्यादिप्रतिपादिकाया अभिप्रायाः केनचिन्निश्चिततया विषयीकृत इत्यर्थः।

## कुसुमप्रतिमा

व्यञ्जनावादिमते व्यङ्ग्यभूतयोर्वस्त्वलङ्कारयोप्यस्मन्मते अनुमानबोध्यत्वमेवेति ब्रुवती व्यक्तिविवेककारस्यैव तथोक्तिजातं प्रत्याख्यातामाह यच्चेति। यच्च पर्य्यवस्यतीत्यमुक्तं तन्नेति परेणान्वयः। प्रतीयमानं

वाच्यार्थातिरिक्तत्वेन ज्ञायमानं भ्रमणाभावरूपं वस्तु अनुमेयमेवेति परेणान्वयः। तथा च—"भीरुर्धार्म्मिकीवक्तृनायिकोपलब्धिसिं हकगोदावरीतीराभमणवान् गृहसमीपभ्रमणात्" इति सहृदयैरनुमीयते।

जलेति। जलकेलौ राधिकया सह जलक्रीड़ायाम्, तरलाभ्यां जलक्षेपणेन चञ्चलाभ्यां करतलाभ्यां पाणिभ्यां मुक्तम् आदौ परित्यक्तं पुनःपिहितं पुनरावृत्तं राधिकाया वदनं येन स तथोक्तः, अतएव कोकयूनोश्चक्रवाकदम्पत्याः विघटनसङ्घटनयोर्वियोजनयोः कौतुकी कृष्णः जगत् अवतु परिपालयतु। अत्र कवेरयमाशयः—चक्रवाकदम्पती रात्रैः परस्परं वियुज्येते दिवसे च संयुज्येते इति प्रसिद्धिः, ततश्च राधिकाया मुखस्य चन्द्ररूपत्वात् कृष्णेन तन्मुखात् करतलावरणापसारणे कृते चन्द्रोदयेन रात्रिरियमिति मत्वा चक्रवाकदम्पती परस्परं वियुज्येते, पुनश्च कृष्णेन तन्मुखे करतलाभ्यामावरणे कृते चन्द्राभावादिद्दिवसोऽमिति मत्त्वा तादेव चक्रवाकदम्पतौ पुनः संयुज्येते; इति पुनः पुनस्तथाकरणात् चक्रवाकदम्पत्योर्विघटनसङ्घटनविषये कौतुकवानेव कृष्ण इति। अत्र राधिकावदने चन्द्रत्वारोपस्य वाच्यत्वाभावात् प्रतीयमान एव रूपकालङ्कारः।

तस्य च रूपकालङ्कारस्यानुमेयत्वमेवेत्याह इत्यादाविति। तथा च "राधिकावदनं" चन्द्रः आत्मदर्शनादर्शनाभ्यां चक्रवाकदम्पत्योर्विघटनसङ्घटनकारित्वात्" इत्यनुमानम्।

इदानीं वस्त्वलङ्काररसादीनामनुमितिकरणभूतमनुमानं निरूपयितुमाह तथाहीति। सिषाधयिषाविरहविशिष्टसिद्ध्यभाववान् पक्षः, तत्र सत्त्वं विद्यमानता; साध्यवत्त्वेन निश्चितः सपक्षः, तत्रापि सत्त्वं विद्यमानता; साध्याभाववत्त्वेन निश्चितो विपक्षः तस्माद्यावृत्तत्वं निवृत्तिमत्त्वं तदवृत्तित्वमित्यर्थः; तैर्विशिष्टात् लिङ्गात् हेतोः लिङ्गिनः साध्यस्य। तथा च—"पर्वतो वह्निमान् धूमात्" इत्यत्र पर्वतः पक्षः गोष्ठादिश्च सपक्षस्तयोरुभयोरपि धूमो विद्यते, जलह्रादादिविपञ्चस्तत्र तु धूमी न विद्यत इति धूमदर्शनेन पर्वते साध्यरूपो वह्निरनुमीयते।

अत्र च तात्पर्य्यविषयीभूतं व्याप्तिग्राहकं सम्बन्धं प्रतिपादयितुमाह ततश्चेति। ततश्च तादृशादनुमानाच्च, असम्बद्धस्तात्पर्य्यविषयीभूतसम्बन्धरहितः, अर्थः पदार्थः, वाच्यादर्थात् न प्रतीयते; अपि तु तात्पर्य्यविषयीभूतयतत्किञ्चित्सम्बन्धविशिष्ट एवार्थो वाच्यार्थात् प्रतीयत इत्यर्थः। यथा "मम धम्मिअ" इत्यादौ भ्रमेत्यनेन भ्रमणवैपरीत्यरूपसम्बन्धविशिष्ट एवाभ्रमणरूपः पदार्थः प्रतीयते। अन्यथा। तादृशसम्बन्धानङ्गीकारे, अतिप्रसङ्गः अज्ञेयस्यापि ज्ञानं स्यात् आपद्येत भ्रमेत्यनेन भ्रमणाभावमिव घटाद्यभावमपि प्रतीयादित्यर्थः। इति हेतोः बोध्यबोधकयोरनुमेयानुमापकयीः पदार्थयोः, कश्चित् तात्पर्य्यविषयीभूतः।

अथ प्रकृते तावदुक्तानां किमित्याह ततश्चेति। तादृशसम्बन्धावश्यम्भावास्वेत्यर्थः बोधकोऽनुमापकः अर्थो वाच्यार्थः लिङ्गं हेतुः बोध्योऽनुमेयोऽर्थश्च लिङ्गी साध्यः। पञ्चसत्त्वं प्रकृते समवायसम्बन्धेन धार्म्मिकरूपपक्षवृत्तित्वं निबद्धमेव वक्त्या नायिकया भ्रमेत्यनेन प्रतिपादितमेव। सपक्षसत्त्वविपक्ष व्यावृत्तत्वे तादृशजनान्तररूपसमानपक्षवृत्तित्व-तद्भिन्नप्रकारजनरूपविरुद्धपक्षवृत्तित्वाभावौ। अनिबङ्गे अपि तथा नायिकया अप्रतिपादिते अपि सामर्थ्यात् समानस्थलान्तरानुसन्धानात् अवसेये ज्ञातव्ये; "पर्वती वह्निमान् धूमात्" इत्यत्र धूमस्य गोष्ठादिसत्त्व-ह्रादादिव्यावृत्तत्वेन इवेति भावः।

उपसंहरति तस्मादिति। अत्र "भम धम्मिअ" इत्यादौ। लिङ्गरूपात्, हेतुभूतात् लिङ्गिनः साध्यस्य व्यङ्ग्यार्थस्य व्यञ्जनावादिमतसिद्धस्येत्यर्थः, यदवगमी ज्ञानम्, तदनुमान एव अनुमितावेव पर्य्यवस्यति। अतस्तदवगमार्थं व्यञ्जङ्गीकारी निरर्थक एवेति भावः। इतिशब्दो व्यक्तिविवेककारोक्तिसमाप्तिमूध्नार्थः।

इदानीं प्रदर्शितोक्तिजातं दूषयति तन्नेति । गृहे गृहसन्निहिते तेन धार्म्मिकेणादृश्ये देश विशेषे इत्यर्थः, शुनस्तदुपद्रवजनककुक्कुरस्य निवृत्त्या प्रत्यावतनेन धार्म्मिकेणानवलोकितत्येत्यर्थः, विहितं नायिकया धार्म्मिकता-योपदिष्टम् । अनुमापयति सहृदयानिति शेषः । यद्वक्तव्यं "भीरुधार्म्मिकी वक्तृनायिकोपलब्धसिं हकगोदावरीती-राभ्रमणवान् गृहसमीपभ्रमणात्" इति सहृदयानां यदनुमानं व्यक्तिविवेककारेणाङ्गीकर्त्तव्यम्, ततः अनेकान्तिकः साध्यवत्पक्षमात्रानियती हेतुः साधारणरूपानैकान्तनामा हेत्वाभास इत्यर्थः । तदेवोपपादयति भीरोरिति । भीरोरपि सिंहाद्भयशीलस्यापि तस्य धार्म्मिकस्य, ब्रह्मचारित्वे गुरोः, देवलत्वे प्रभोर्वा निदेशेन आज्ञया, प्रेमिकत्वे तत्रैव सङ्केतितप्रियायाम् अनुरागेण वा गमनस्य सिंहवद्गोदावरीतीर एव भ्रमणस्य सम्भवात् गुरुनिदेशादीनां भयरूपस्य भ्रमणप्रतिबन्धकस्य तिरोधायकत्वादिति भावः । तथा च तादृशगोदावरीतीरे अभ्रमणरूपसाध्यवति तत्तन्निदेशा-दिना तत्रैव भ्रमणरूपसाध्याभाववति च धार्म्मिके गृहसमीपभ्रमणरूपहेतोः सत्त्वेन धूमवान् वह्नेरित्यादाविव साधारणरूपानैकान्तानामा हेत्वाभासः । तथा चोक्तम्—"यः सपक्षे विपक्षे च भवेत् साधारणस्तु सः" इति ।

ननु धार्म्मिकस्य यदा गृहसमीपे भ्रमणं तदा तु तादृशगोदावरीतारे अभ्रमणमेवेति कालान्तरे गुरुनिदेशा-दिना तत्र भ्रमणे सत्यपि तदानीं गृहसमीपभ्रमणस्यासत्त्वात् कथं तादृशहेत्त्वाभास इत्याह पुंश्चल्या इति । पुंश्चल्या व्यभिचारिण्याः, वचनं "भम धम्मिअ" इत्यादि वाक्यम्, प्रामाणिकं सत्यं न वा इति इत्थं सन्दिग्धः सन्देहापन्नी यो धार्म्मिकस्तस्मिन् पक्षे असिद्धेर्गृहसमीप एव भ्रमणरूपस्य हेतोरनिष्पत्तेः; तद्वचनस्य मिथ्यात्वज्ञानेन पूर्ववत्तङ्गोदा-वरीतीर एव तस्य भ्रमणसम्भवादित्याशयः । एवञ्च "ह्रदो द्रव्यं धूमवत्त्वात् इत्यादाविव उक्तस्थले स्वरूपासिद्धि-रूप एव हेत्वाभास इति दर्शितम् ।

इत्थं वस्तुरूपव्यङ्ग्यस्यानुमेयत्वं निरस्य इदानीमलङ्काररूपव्यङ्ग्यस्यानुमेयत्वमपि निरसितुमाह जलेति । तथा च "राधिकावदनं चन्द्रः आत्मदर्शनादर्शनाभ्यां चक्रवाकविघटनसङ्घटनकारित्वात्" इत्यनुमानात्, इयं राधिकावदने चन्द्रत्वारोपेण रूपकालङ्कारप्रतीतिः, अनुमितिरेव न तु व्यञ्जनाख्यवृत्त्यन्तरगम्येत्यर्थः । उत्रासको भयदाता । आदिशब्दात् खाद्यदानादिना संयोजकादिश्च । तथा च कश्चित् दण्डादिना भयं दत्त्वापि चक्रवाकद-म्पती परस्परं विघटयितुमर्हति, कश्चिद्वा खाद्यं दत्त्वा तौ सङ्घटयितुमर्हति । तेन चन्द्रत्वारोपरूपसाध्यति राधिका-वदनरूपपक्षे यथा चक्रवाकदम्पतिविघटनसङ्घटनकारित्वरूपहेतोर्वृत्तित्वम्, तथैव चन्द्रत्वारोपरूपसाध्याभाववति तादृशे भयदातरि खाद्यदातरि च विपक्षे तादृशहेतोर्वृत्तित्वमिति पूर्ववदे वात्रापि साधारणरूपानैकान्तिकनामा हेत्वाभास इत्याशयः ।

उक्तविधानुमाने हेतोर्व्यभिचारिहेतुद्वारा प्रकारान्तरेणानुमानमाशङ्का तदपि निरसितुमाह एवमिति । एवं विधोऽर्थः "भम धम्मिअ" इत्यादौ गृहसमीपे भ्रमणविधानरूपोऽर्थः, एवं विधार्थबोधकः गोदावरीतीरे भ्रमणाभा-वरूपार्थबोधकः, एवं विधार्थत्वात् गोदावरीतीरे सिंहागमनेन गृहसमीप एव भ्रमणविधानरूपार्थत्वात् । एवञ्च कुतोऽपि हेतोर्न व्यभिचार इति भावः । अत्रैतत्पक्षवृत्तित्वे नान्वयीदाहरणासम्भवात् व्यतिरेकोदाररणं दर्शयति यन्नैवमिति । यदर्थरूपं वस्तु, एवम् अत्रत्यहेतुरूपं न, तत् अर्थरूपं वस्तु एवं भ्रमणाभावबोधकं नेत्यर्थः । यथा घटो जायत इति दृष्टान्तः । आभाससमानं दुष्टहेतोस्तुल्यं योगक्षेमं कार्य्यकारिता यस्य सः । कथमित्याह एवमिति । एवंविधो योऽनिष्टार्थो भवदनभिमतार्थो घटपटादिस्तस्य साधनस्यापि निष्पादनस्यापि उपपत्तेः सम्भवात् । तथा च एवं विधशब्दस्य अनिर्दिर्दष्टार्थप्रतिपादकतया एवं विधार्थत्वात् घटार्थत्वात् एवं विधार्थं बोधकः कम्बुग्रीवादिम-दर्थबोधक इत्यस्यापि सुवचत्वमिति भावः ।

व्यक्तिविवेकारस्यैव लक्ष्यान्तरे व्यङ्ग्यस्य यदनुमेयत्वाभिधानं तदपि दूषयितुमाह तथेति । यत् उच्यत इति परेणान्वयः । नलग्रन्थीनामिति कर्त्तरिषष्ठो । तनुलिखनं स्तनाद्यङ्गानां 'चतविक्षीकर' । तस्या वक्तृनायिकायाः परकामुकोपभोगस्य पतिभिन्नकामिपुरुषसम्भोगस्य लिङ्गिनः साध्यस्य लिङ्गं हेतुः । तथा च "दृष्टि हे" इत्यादेर्वक्तुनायिका परकामुकोपभोगवती तनुलिखिनात् एकाकितया स्रोतोगमनाश्च इत्यनुमानम् । तच्च तादृशं लिङ्ग्ञ, तत्र श्लोक एव, अभिहितेन "प्रायेणास्य शिशोः" इत्यादिना उक्तेन, स्वकान्तस्नेहेनापि निजपतिप्रेम्णापि । अनैकान्तिकः साध्यवत्पक्षमात्रानियतः । तथा च परकामुकोपभोगरूपसाध्यवति नायिकारूपपक्षे तादृशसाध्याभाववति स्वकान्तस्निग्धनायिकारूपविपक्षे च उक्तस्य हेतुद्वयस्यैव वृत्तित्वेन पूर्ववदेव साधारणरूपानैकान्तिकनामा हेत्वाभास इत्याशयः ।

## विमला

जलेति ।—जलकेलौ—वारिविहारे, चञ्चला—अक्षलाभ्यां,स करतलाभ्यां, मुक्तं—त्यक्तं, पुनः पिहितम्—आच्छादितं, राधिकायाः वदनं येन तादृशः, अत एव कीकयूनोः,—कीकी च कोकश्चेति कीकौ, युवती च युवा चेति युवानौ, कीकौ एव युवानौ तयोस्तथोक्त्योः, चक्रवाकदम्पत्योरित्यर्थः, विघटनसङ्घटने—वियोगसंयोगौ, तयोः कौतुकौ-कुतूहलवान्, कृष्णः जगत्, अवतु—रक्षतु ।

अत्र राधिकावदने मुक्ते सति तव चन्द्रबुद्धया रात्रिज्ञानेन तयोः विघटनं, पिहिते सति चन्द्रानुपलब्ध्या रात्रयाभावज्ञानेन तयीः सङ्घटनम् । तयोभ्रान्त्या मुहुर्वियोगसयोगदर्शनेन कृष्णस्य कौतुकमिति भावः । राधिकावदने चन्द्रत्वारोपणेनरूपकालङ्कारः । अनुमेया एव—"वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति । सम्बन्धतः कुतश्चित् सा काव्यानुमितिरित्युक्ता ॥" इत्यादिव्यक्तिविवेककारोक्त्याऽनुमिति विषया एव, न तु व्यङ्ग्यः इति भावः ॥

अनुमानत्वमुपपादयति, तथा हीति ।—अनुमानलक्षणमाह, अनुमान, मिति ।—सन्दिग्धसाद्यकः सिषाधयिषाविरहविशिष्टासिद्धयभाववान् वा पक्षः, पञ्च सत्त्वं यथा,—वह्निसाध्यकधूमहेतौ साध्यसन्देहसत्तवेन पर्वतः पक्षः, तत्र सत्त्वं—वर्त्तमानत्वं, लिङ्गस्य धूमस्य । सपक्षसत्त्वं—सपक्षः—निश्चितसाध्यवान्, यथा तादशस्तले महानसं तत्र सत्त्वं धूमस्य । विपक्षव्यावृत्तत्वं—विपक्षः साध्याभाववान्, यथा,—तादृशस्थले ह्रदः, तद्व्यावृत्तत्वं—तस्मिन् अवर्त्तमानत्वं धूमस्य । इयं व्याप्तिः । तादृशपक्षसत्त्वादिविशिष्टात् लिङ्गात्—साधनात्, लिङ्गिनः,—साध्यस्य, ज्ञानं—प्रतीतिः, अनुमानम् । पर्वते धूमदर्शनानन्तरं "पर्वती वह्निमान्, धूमवत्त्वात्, यत्र यत्र धूमस्तत्र तव वह्निः, यथा महानसम्" इत्यादिका धूमस्य वङ्ग्यभाववद्वृत्तित्वरूपव्याप्तिज्ञानानन्तरं वह्निव्याप्यधूमवानिनिति परामर्शात् पर्वते वङ्ग्यनुमितिरिति बोध्यम् ।

वाच्यात्तावत् व्यङ्ग्य प्रतीयते, इति वाच्यार्थस्य लिङ्गत्त्वमभिप्रेत्य तव पक्षसत्त्वादित्रयमुपपादयति, ततश्चेति ।—वायात्—अभिधेयात्, असम्बद्धः,—सम्बन्धवर्जितः । अन्यथा—असम्बद्धप्रतीतिस्वीकारे, अतिप्रसङ्गः,—अतिप्रपातिः, अलक्ष्ये लक्षणगमनरूप इत्यर्थ; यथा "भम धम्मिअ !" इत्यत्र भ्रमणाभावः प्रतीयते, तथा घटाभावोऽपि प्रतीयते । इति—हेतोः "भम धम्मिअ !" इत्यत्र बोध्यबोधकयोरर्थयोर्वैपरीतयलक्षणः सम्बन्धी बोध्यः, स एव व्यापकताघटक इति भावः । ततश्च—बोध्यबोधकयोर्वैपरीत्यरूपसम्बन्धसत्त्वाच्च, तत्र पक्षसत्त्वादिज्ञानस्वैवोपयोगित्वात्; तदुपपादयति, बोधकस्येति ।—अर्थस्य—वाच्यार्थस्य, पक्षसत्त्वं—पक्षे—शब्दे, सत्त्वं—वर्त्तमानं, निबद्धं—शब्देनोपस्थितम्, एव । सामर्थ्यात्—संस्कारबलात्, अवसेये—प्रत्येतव्यें । एतत्स-

दृशः पक्षः,—सपक्षः, एतद्विपरीतन्तु विपक्ष इति भावः। महावाक्यार्थं निरूपयति, तस्मादिति।—वाच्यार्थात्—अभिधायार्थात्, लिङ्गरूपात्—साधनरूपात्, लिङ्गिनः,—साध्यरूपस्य व्यङ्ग्यस्य, अवगमः,—प्रतीतिः। ततश्च "भम धम्मिअ !" इत्यादौ श्वानवृत्त्यां विहितं भ्रमणं भ्रमणरूपवाच्यार्थः वैपरीत्यसम्बन्धेन गोदावरीतीरे सिंहोपलब्धेभ्रमणशब्दे, अभ्रमणार्थवत्त्वमनुमापयतीति भावः।

दूषयति, तन्नेति।—गृहे—गृहसमीपे चत्वारादौ, श्वनिवृत्त्या—कुक्कुरमरणप्रदर्शनेन, विहितं—विधिविषयः, "अभ्रमणमनुमापयति" इत्यनेनान्वितम्। अत्र श्वनिवृत्तिविधीयमानगृहसमीपभ्रमणं लिङ्गं; तच्च भीरुत्वपर्य्यसवन्नम्। सिंहवद्गोदावरीतीराभ्रमणं साध्यं, धार्म्मिकः पक्षः, सामाजिकोऽनुमाता। अनैकान्तिकः,—व्यभिचारीत्यर्थः। भीरोरपीति।—अनेन निरुक्तलिङ्गवैशिष्ट्यस्य सूचनम्। गमनस्य सम्भवदिति।—अत्र अभ्रमणानुमापकलिङ्गसत्त्वेन साध्याभावसत्त्वप्रदर्शनमसन्दिग्धसिद्धमिति भावः। हेतोर्दोषान्तरमाह, पुंश्रया इति। कुलटायाः इत्यर्थः, प्रामाणिकं—प्रमाजनकम्; तथा च इदं वाक्यं धार्म्मिकस्य भयोत्पादकं, यद्वा कुक्कुरस्पर्शशङ्कासङ्कुचितभ्रमणस्य तस्य स्वच्छन्दभ्रमणविधायकम्, इति सामाजिकानां सन्देहात् भीरुत्वसन्देह इति हेतोः सन्दिग्धत्वेन असिङ्गत्वमिति भावः। अनुमितौ असन्दिग्धो हेतुरावश्कः; अत्र तु न तथा, इति हेतोः सन्दिग्धत्वात् न अत्रानुमानमिति भावः। रूपकालङ्कारनुमानं दूषयति, जलकेलीति।—उच्चासकादाविति।—उच्चासकः—भयप्रदः। [आदिना वियोगकारणारात्रिसाधर्म्यान्तरस्यापि ग्रहणम्]। यदि कश्चित् भयं प्रदर्शयति, तदाऽपि वियोगस्य सम्भव इति चन्द्रोदयाभावेऽपि कारणान्तरेण वियोगदर्शनात् कारणान्तरे तादृशविघटनकारित्वरूपहेतोः सत्त्वेन तत्र तादात्म्येन चन्द्ररूपसाध्याभावसत्त्वाद् व्यभिचारः। तादात्म्यसम्बन्धेन साध्यस्य चन्द्रस्य वदने बाधात्; बाधोऽपि अत्र हेतुदोषः इति भावः। अनुमानश्च कदाचित् व्यभिचारभयात् पञ्चमात्रवृतितिहेतुना अपि सम्भवति, इति तेनैव इष्टसिद्धिं कुर्वतोऽस्य मतं दूषयति, एवमिति। आभाससमानेत। आभासस्य—व्यभिचारादिरूपहेतुदोषस्य, समाने योगक्षेमः—कार्य्यसाधकः हेतुः; दुष्टहेतुप्रयोगेण यथा वादिविजयो भवति, तथाऽर्थान्तरसाधकहेतुप्रयोगेणापीत्याभासतुल्ययोगक्षेमत्वमिति भावः। तथा च एवं विधः,—"गतोऽस्तमर्कः" इत्यादिरूपः, एवंविधार्थानां—"गावो निरुध्यन्ताम्" इत्यादि रूपाणां, बोधकः, एवंविधार्थत्वात्—एवंविधार्थबोधाय प्रयुक्तत्वादित्यर्थः। हेतोःपक्षमात्रवृत्तित्वेनान्वयदृष्टान्तासम्भवात् अन्वयव्याप्तिग्रहो न सम्भवति इति व्याप्तिग्रहाय व्यतिरेकोदाहरणमाह, यन्नैवमिति।—यत्—वस्तु, नैवं—न एवम्प्रकारम्, एवं विधार्थबोधकत्वाभाववदित्यर्थः, तत्—वस्तु, नैवम्—एवंविधार्थत्वाभाववदित्यर्थः। "देवदत्ता भवतीति वाक्यार्थवत्" इति दृष्टान्तोऽत्र द्रष्टव्यः इति। आभाससमानयोगक्षेमत्व मेवोपपादयति, एवंविधार्थत्वादिति।—एवंविधार्थत्वादिति हेतुः एवंविधानिष्टार्थस्या साधकत्वसम्भवादित्यर्थः, तथात्वे पक्षमात्रवृत्त्यनुमानेऽपि हेतोर्दुष्टत्वमिति अनुमाभेपक्षमात्रवृत्त्यादिदुष्टे हेतौ नैव सम्भवतीति भावः। यथा दुष्टहेतुप्रयोगेण वादिविजयते, भवति, तथाऽर्थान्तरसाधकहेतुप्रयोगेणापि, इत्याभासतुल्ययोगक्षेमत्वमिति हृदयम्।

अत्रापि व्यभिचारमाह, तथेति।—एकाकितया चेति।—अत्र चकारो वाऽर्थः। स्रोतोगमनं वेत्यर्थः। लिङ्गं—तादात्मेयेन साधनं, तच्च—प्रागुक्तमर्थद्वयञ्च, तत्रैव—"दृष्टिम्" इत्यादि श्लोके एव, अभिहितेन—द्वितीयपादप्रतिपादितेन; तथा च यत्र स्नेहस्य किं दुष्करम् इति जानतां सर्वेषामेव श्रोतॄणां तादृशबोधो न जायते, तत्रैव तादृशार्थद्वयबोधकत्वाभावाद् व्यभिचार इति भावः। यदि तु कालान्तरे तादृग्वाक्यप्रयोगेण यस्य कस्यापि श्रोतुः तादृशार्थबोधाद् व्यभिचारो न भवति, इति विभाव्यते, तदाऽत्र "तद्वाक्यप्रतिपाद्यं ताहशार्थद्वयं परकामुकोपभोगप्रतिपादकं ताहशार्थत्वात्" इत्यनुमाने बाधरूपहेतुदोषो द्रष्टव्यः। यथा—"गन्धप्रागभावकालीनो घटो गन्धवान"

इत्यादौ तत्कालीनघटे साध्याभावमादाय बाधः, तथाऽत्रापि व्यक्तिविशेषे कालविशेषे वा एवंविधार्थबोधकत्वरूपसाध्याभावमादाय बाधो बोध्यः।

## लक्ष्मी

यच्चेत्यस्यान्वयश्च पर्यवस्यतीत्यनेनैव। उक्तमिति तस्य शेषः। तथा च यच्च पर्यवस्यतीत्युक्तमित्यर्थः। प्रतीयमानं व्यज्यमानं भ्रमणाभावरूपं वस्तु अनुमेयमेवेत्युत्तरेणान्वयः। तथा च 'गोदावरीतीरं भीरुभ्रमणायोग्यं सिंहवत्वात् यन्नैवम् तन्नैवम् यथा गृहम्' इति भ्रमणाभावानुमितिः।

अलङ्कारव्यञ्जनास्तलमुदाहरति—जलकेलीति। जलकेलौ राधिकया सह जलक्रीडायाम्, तरलाभ्यां जलक्षेपणेन चञ्चलाभ्यां करतलाभ्यां हस्ताभ्यां मुक्तं प्रथमं परित्यक्तं पुनः पिहितं पुनराच्छादितं राधिकाया वदनं मुखं येन स तादृशः। अत एव कोकयूनोः कोका च कोकश्चेति कोकौ युवती च युवा चेति युवानौ कोकौ अमू युवानाविति तयोः 'पुमान् स्त्रिया' १/२/६७ पा. सूत्रेणैकशेषः। चक्रवाकदम्पत्योरित्यर्थः। चक्रवाकदम्पत्योरित्यर्थः। विघटनसङ्घटनयोः विश्लेषणसंश्लेषणयोः कौतुकी कृष्णो वासुदेवः जगत् संसारम् अवतु रक्षतु। अत्र कथयितुरयमभिप्रायः—रात्रौ परस्परं चक्रवाकदम्पती वियुज्येते दिवसे च संयुज्येते इति लोकप्रसिद्धिः। ततश्चात्र जलकेलौ श्रीकृष्णेन स्वीयकरदत्तजलेन राधिकामुखचन्द्रं पुनः पुनरभिषिच्य स्वीयकरेण पिधीयते मुच्यते च। ततस्तादृशचन्द्रस्य पिधानमोचनाभ्यां चक्रवाकदम्पत्योः सङ्घटनविघटने भवतः। पिधाने रात्रौ विरहिणोस्तयोः प्रातःकालभ्रमात् सङ्घटनम्, मोचने चन्द्रोदयविशिष्टसन्ध्याकालभ्रमाद् विघटनम्। भगवतः श्रीकृष्णस्य तादृशकौवर्णनमिदम्। अत्र पिधानमोचने कृष्णस्यैव करेम न तु राधिकायाः, तत्करस्य जलकेलितरलत्वे कृष्णमुखस्यैव सिच्यमानत्वसम्भवेन स्वमुखस्य पिधानायोगात्।

यद्वा राधिकाकरणेन पिधानमोचनयोपि जलसेकद्वारा कृष्मकरप्रयोज्यत्वात् तद्वारा कृष्णकरेमैव पिधानमोचने।

अत्र हि राधिकावदने चन्द्रत्वारोपस्य वाच्यत्वाभावात् व्यज्यमान एव रूपकालङ्कारः।

तस्य तु रूपकालङ्कारस्यानुमेयत्वमेवेति दर्शयितुमाह—इत्यादाविति। आदिपदद्वयात् श्लोकान्तरे अलङ्कारान्तरमित्यर्थः(क) अनुमेया एव न तु व्यङ्ग्या इत्यर्थः। तथा चानुमानाकारश्च—'राधिकावदनं चन्द्रः आत्मदर्शनादर्शनाभ्यां चक्रवाकविघटनसंघटनकारित्वात्' इति। अग्रे चेदमेवानुमानस्वरूपं 'य आत्मदर्शने'त्यादिना वक्ष्यति।

अनुमेयत्वमेव कथमित्युपपादयति—तथा हीति। नाम प्रकाश्ये। संदिग्धसाध्यकः सिषाधयिषाविरहविशिष्टसिद्ध्यभाववान् वा पक्षः, तत्र सत्त्वं वर्त्तमानता, निश्चितसाध्यवान् सपक्षः, तत्रापि सत्त्वं वर्त्तमानता, साध्याभाववान् विपक्षः तद्व्यावृत्तत्वं तदवृत्तित्वम्, तैर्विशिष्टात् लिङ्गात् व्याप्यात् हेतोरित्यर्थः, लिङ्गिनः साध्यस्य। तथा च 'पर्वतो वह्निमान् धूमात्' इत्यत्र धूमवत्वे हेतौ पर्वतः पक्षः, तस्मिन्नेव हेतौ महानसादिः सपक्षः उभयत्रापि धूमस्य वर्त्तमानत्वात्। पूर्वोक्त एव हेतौ जलहदादिर्विपक्षस्तत्र धूमस्यावर्त्तमानत्वात् इति धूमदर्शनेन वह्निरूपस्य साध्यस्य ज्ञानमनुमितिरित्यर्थः।

वाच्यात्तावद्व्यङ्ग्यमवबुद्ध्यत इति वाच्यार्थस्य लिङ्गत्वमभिप्रेत्य तत्र पक्षसत्त्वादित्रयमुपपादयति—ततश्चेति। तथाविधानुमानाच्चेत्यर्थ। असम्बद्धोऽर्थः तात्पर्यविषयीभूतसम्बन्धशून्यपदार्थः वाच्यात् अर्थात् न प्रतीयते

किन्तु तात्पर्यविषयीबूतयत्किञ्चित्सम्बन्धविशिष्टएवार्थो वाच्यार्थादवगम्यते, अन्यथा असम्बद्धप्रतीतिस्वीकारे अतिप्रसङ्गः स्यात् अज्ञेयस्यापि ज्ञानम् आपद्येत। यदि असम्बद्धार्थस्य प्रतीतिस्तदा यतः कुतश्चिदर्थात् यस्य कस्याऽप्यर्थस्य प्रतीतिर्भवेत् एकस्मिन् श्लोकेऽन्यश्लोकस्यापि प्रतीतिः स्यादित्यतिप्रसङ्गः स्यादित्यर्थः। तथा च—'भम धम्मिअ' इत्यादौ भ्रमेति विधिना भ्रमणाभावस्येव घटाभावादेरपि प्रतीतिः स्यात्, न चेष्टापत्तिं कर्तुं शक्यते तत्र भ्रमेत्यनेन भ्रमणवैपरीत्यरूपसम्बन्धविशिष्ट एवाभ्रमणरूपार्थप्रतीतेरभ्युपगमात्। इति हेतोः बोध्यबोधकतयोः अनुमेयानुमापकयोः, अर्थयोः कश्चित्सम्बन्धः प्रकृते तात्पर्यविषयीभूतभ्रमणवैपरीत्यरूपः सम्बन्धः, अस्त्येव विद्यत एव।

सम्बन्धस्यावश्यम्भावित्वेऽपि प्रकृते किमत आह—ततश्चेति। तथाविधसम्बन्धस्यावश्यम्भावाच्च प्रकृते 'मम धम्मिअ' इत्यत्र बोधकोऽर्थो वाच्यार्थो लिङ्गं हेतुः बोध्योऽर्थो व्यङ्ग्यः लिङ्गी साध्यः। पक्षसत्त्वं पक्षे प्रकृते धार्मिकरूपे समवायसम्बन्धेन वृत्तित्वं निबद्धमेव वक्त्र्या लिङ्गी साध्यः। पक्षसत्त्वं पक्षे प्रकृते धार्मिकरूपे समवायसम्बन्धेन वृत्तित्वं निबद्धमेव वक्त्र्या नायिकया भ्रमेतिपदेनोपस्तापितमेव। सपक्षसत्त्वविपक्षव्यावृत्तत्वे तथाविधधार्मिकान्तररूपसमानपक्षवृत्तित्वतदन्यप्रकारजननरूपविपक्षवृत्तित्वाभावौ अनिबद्धे अपि, 'ईदूदेद्द्विवचनं प्रगृह्यम्' १/१/११ इति प्रगृह्यत्वे संहिताभावः, तथा वक्त्र्या शब्देनाऽनुपस्थापितेऽपीत्यर्तः, सामर्थ्यात् संस्कारबलात् अवसेये प्रत्येतव्ये 'पर्वतो वह्निमान् धूमात्' इत्यत्र यथा धूमस्य महानसादिसपक्षवृत्तित्व-जलह्रदादिविपक्षव्यावृत्तत्वे प्रतीयेते तद्वदिति भावः।

महावाक्यार्थमुपसंहृत्य दर्शयति—तस्मादिति। अत्र 'भम धम्मिअ' इत्यादौ। लिङ्गरूपात् हेतुभूतात् वाच्यार्थात् लिङ्गिनः साध्यस्य व्यञ्जनावादिमतसिद्धव्यङ्ग्यार्थस्येत्यर्थः, 'यदवगमोऽवबोधः तदनुमान एव अनुमितावेव पर्यवस्यति। अतस्तद्बोधनार्थं व्यञ्जनास्वीकारो व्यर्थ एवेति भावः। इति शब्दो व्यक्तिविवेककारमतपूर्त्तिद्योतनार्थः।

दूषयितुं तदभिमतार्थमनुवदति—तन्नेति। तथाहीति गृहे गृहसमीपे चत्वरादौ तेनानवलोकितप्रदेश इत्यर्थः, श्वनिवृत्त्या स्वोपद्रवजनककुक्कुरमरणप्रदर्शनेन विहितं धार्मिकाय नायिकयोपदिष्टं विधिविषयः सिंहोपलब्धेः नायिकावाच्योपलब्धसिंहादित्यर्थः। अनुमापयति सामाजिकानिति शेषः। अत्र नायिका कर्त्री यद्वत्तव्यं 'गोदावरीतीरं भीरुभ्रमणप्रायोग्यं सिंहवत्वात् यन्नैवं तन्नैवम्, तथा गृहम्' इति व्यतिरेकव्याप्तिरभिमता।

अत्र भीरुधार्मिकः सिंहद्गोदावरीतीराभ्रमणवान् श्वनिवृत्तिविधीयमानगृहसमीपभ्रमणात् इत्यनुमानाकारो वा सामाजिकानामिति यदनुमानं व्यक्तिविवेककारेण स्वीकर्त्तव्यम्। अत्रोपलभ्यमानभयकारणवत्वं हेतुः अत्र यत् यदुपलभ्यमानभयकारणवत् तत्तद्भीरूभ्रमणायोग्यं यथा महदरण्यम् इत्यन्वयी। तथा यन्न भीरूभ्रमणायोग्यं न तदुपलभ्यमानभयकारणवद् यथा गृहम्, इति व्यतिरेकी अनुमानम्। तद् दूषयति—तत्रेति। अकान्तिको हेतुरिति एकस्य साध्यस्य तदभावस्य च योऽन्तः सहचारोऽव्यभिचरितसहचारः स चात्र व्याप्तिग्राहकः। एवञ्चैकमात्रव्याप्तिग्राहकसहचारवानैकान्तिकस्तद्भिन्नोऽनैकान्तिकः साध्यव्यभिचारी हेतुरित्यर्थः।

व्यभिचारं ग्राहयति—भीरोरपीति—भीरोरपि सिंहाद्भयशीलस्यापि किं पुनर्वीरस्येति भावः। तस्य धार्मिकस्य छात्रत्वे आचार्यस्य, पितुर्वा पूज्यस्य वा 'गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि। पुमान् निषेकादिकरे पित्रादौ सुरमन्त्रिणि ॥' इति मेदिनी। गुरोः दासत्वे प्रभोर्वा निदेशेन आज्ञया 'निदेशः शासनोपान्तकथनेषु प्रयुज्यते'

इति विश्वः, सङ्केतितप्रियायाम् अनुरागेण स्नेहेन वा एतदनन्तरं भयस्थाने' इति शेषः, गमनस्य सिंहवद्गोदावरीतीर एव भ्रमणस्य सम्भवात् भ्रमणप्रतिबन्धस्यापि भयरूपस्य गुर्वादिनिदेशोनान्तर्हितत्वादिति भावः।

तथा च यो हेतुः सपक्षे विपक्षे च तिष्ठति स साधआरणरूपानैकान्तनामा हेत्वाभासः साध्याभाववद्रव-त्तिरिति यावत्, यथा धूमवान् वह्नेरित्यत्र वह्नेः साद्ये पक्षे पर्वते साध्याभावेऽयोगोलके च वृत्तित्वमिति हेत्वाभासस्तथा प्रकृतेऽपि तथाविधगोदावरीतीरे अभ्रणरूपसाध्यवति तत्रैव तत्तन्निदेशादिना भ्रमणरूपसाध्याभाववति च धार्मिके गृहसमीपभ्रमणरूपहेतोर्विद्यमानत्वेन साधारणरूपानैकान्तिकहेत्वाभासः।

ननु यदा धार्मिको गृहसमीपे भ्रमणं करोति तदा तथाविधघगोदावरीतीरे अभ्रमणमेवेति, अन्यस्मिन् समये गुर्वाद्यज्ञया तत्र भ्रमेण विहितेऽपि तत्समये गृहसमीपभ्रमणस्य भावात् कथमुक्तहेत्वाभास इत्यतो दोषान्तरमाह— पुंश्चल्या इति पुंश्चल्याः कुलटायाः वचनं 'भमधम्मिअ' इत्यादिवचनम्, प्रामाणिकंप्रमाजनकं न वा इति इत्थं संदिग्धः संदेहयुक्तो यो धार्मिकस्तस्मिन् पक्षे असिद्धेः उक्तहेतोरनिष्पत्तेः। किञ्च यः खलु वीरः स्पर्शादिशङ्कया शुनो बिभेति स सिंहसद्भावस्थानं प्रत्युत मृगयादिकुतूहलेन गच्छतीति दर्शनादपि हेतोः पक्षेऽसिद्धेः। तथा च वाक्यमिदं किं धार्मिकस्य भयजनकम् उत कुक्कुरस्पर्शशङ्कसंकुचितभ्रमणस्य तस्य स्वच्छन्दभ्रमणविधायकमिति सामाजिकानां संदेहाद्भीरुत्संदेह इति संदिग्धासिद्दत्वहेतुरित्याशयः।

एवं वस्तुरूपव्यङ्ग्यस्यानुमेयत्वं दूषयित्वा अधुनालङ्काररूपव्यङ्ग्यस्यानुमेयत्वं दूषयितुमुत्थापयति— जलकेलीति। एवञ्च 'राधिकावदनं चन्द्रः आत्मदर्शनादर्शनाभ्यां चक्रवाकविघटनसंघटनकारित्वात्' इत्यनुमानेन, इयं रूपकालङ्कारप्रतीतिः अनुमितिरेवेत्येवकारेण भवन्मतव्यञ्जना वृत्त्यन्तरेण गम्यते व्यवच्छिद्यते। उत्रासकः— यस्य करतलनादिनोत्रासेन पक्षिणो विघटन्ते तदभावे च संघटन्ते। आदिपदात् स्वप्रकासेन संयोजकसूर्यपरिग्रहः। तथा च कश्चित् करतलदानादिना भयं दत्वापि चक्रवाकदम्पती अन्योन्यं विघटयितुं शक्नोति, सूर्य्योऽपि स्वप्रकाशेन दिवसं बोधयित्वा तौ संघटयितुं शक्नोति तेन चन्द्रत्वारोपरूपसाद्यवति राधिकावदनरूपपक्षे तथा चक्रवाकदम्पतिविघटनसंघटनकारित्वरूपहेतोर्वृत्तित्वं तथैव तदभाववति तथाविधे भयदातरि प्रकाशविधायके च विपक्षे ह्युक्तहेतोर्वृत्तित्वादत्रापि प्राग्वदेव साधारणरूपानैकान्तिनामा हेत्वाभास इति ग्रन्थकर्त्तुरभिप्रायः। तादात्म्य-सम्बन्धेन चन्द्रस्य वदने बाधाद्बाधरूपोऽपि हेत्वाभासोऽवधेयः।

प्रदर्शितानुमाने हेतोर्व्यभिचारभयेनाव्यभिचारिहेतुनानुमानप्रकारं प्रदर्श्य तदपि दूषयितुमाह—एवंवि-धेति। एवं विधोऽर्थः 'भम धम्मिअ' इत्यादौ भ्रमणविधानोऽर्थः, एव विधार्थबोधकः गोदावरीतीरे भ्रमणाभावरू-पार्थबोधजनकः एवंविधार्थत्वात् गोदावरीतीरे सिंहागमनेन गृहसमीप एव भ्रमणविधानरूपार्थत्वात् एव 'जलकेलि' इत्यादावपि एवंविधोऽर्थः राधिकवदनं चन्द्र इत्येवं विधरूपोऽर्थः, एवंविधार्थबोधकः राधिकावदने चन्द्रत्वारोपेण रूपकालङ्कारप्रतीतिजनकः, एवंविधार्थत्वात् आत्मदर्शनादर्शनाभ्यां चक्रवाकविघटनकारित्वरूपार्थत्वात्। इत्थञ्च न कापि हेतोर्व्यभिचार इत्याशयः।

अत्र हि पक्षीभूतवाक्यार्थेन प्रत्याययितुं समर्था ये येऽर्थास्त एव साह्यकोटिप्रविष्टेन 'एवंविध' इत्यनेन गृहीतव्याः, अन्यथा वक्तुरभिलषितस्यैवार्थविशेषस्यैव साध्यत्वे 'गतोऽस्तमर्कः' इत्यादौ वक्तुरभिलषितार्थमप्र-त्यायार्थान्तरबोधके व्यभिचार आपद्येत। एवञ्चात्र हेतोः पक्षमात्रवृत्तित्वेनान्वयोदाहरणसम्भवादन्वयव्याप्तिग्रहो न भवितुमर्हतीति व्याप्तिग्रहाय व्यतिरेकोदाहरणं दर्शयति—यन्नैवमिति। यत् अर्थरूपं वस्तु नैवम् एवंविधार्थबो-धकत्वाभाववत्, तत् अर्थरूपं वस्तु नैवम् एवं विधार्थत्वाभाववत् भ्रमणभावबोधकं नेत्यर्थः। 'घट उत्पद्यत इति

वाक्यवत्' इति दृष्टान्तो ज्ञेयः । आभासमानौ योगक्षेमौ यत्र यस्य वा स तथोक्तः, आभासो हतोरुपलभ्यमानो व्यभिचारः चक्रवाकदम्पती तत्रासक्तवृत्तिः स्वदर्शनादर्शनरूपः, एवंविधार्थत्वादिति हेतुस्ततसमानस्तत्तुल्यो यः स हेतुः साध्याभावेन सहचरितत्वेन व्यभिचरतीत्यर्थः । अप्राप्तस्य प्राप्तिर्योगः, लब्धस्य पुना रक्षणं क्षेमः, 'योगौ पूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु वपुः स्थैर्यप्रयोगे च विष्कम्भादिषु भेषजे ॥

विश्रब्धधातुके द्रव्योपायसंहननेष्वपि । कार्मणेऽपि..... । क्षेमोऽस्त्री लब्धरक्षणे ।

चण्डायां ना शुभं न स्त्री कात्यायन्यां च योषिति ॥ इति मेदिनी ।

तदेव दर्शयति—एवंविधार्थत्वदिति । एवंविधो योऽनिष्टार्थो वक्तुरनभिलषितार्थो घटपटादिस्तस्य साधनस्यापि निष्पादनस्यापि उपपत्तेः सम्भवात् । एवं च एवंविधशब्दस्यअनभिलतार्थबोधकतया एवं विधार्थबोधकः कम्बुग्रीवादिमदर्थप्रतिपादकः एवविधार्थत्वात् घटार्थत्वात् इत्यस्यापि वक्तुं शक्यत्वात् । तथा च यथादुष्टहेतुप्रयोगेण वादिविजयो भवति तथार्थान्तरसाधकप्रयोगेणापीत्याभासमानयोगक्षेमत्वमिति भावः ।

उदाहरणान्तरेऽपि व्यङ्ग्यान्तरस्यानुमेयतां हेतोर्व्यभिचारेण दूषयितुमुत्थापयति—तथेति । अस्य उच्यत इत्युत्तरेण सम्बन्धः । दृष्टिं हे प्रतिवेशिनि क्षणमिहाऽप्यस्यद्गृहे' इत्यादाविति । नलग्रन्थीनामित्यत्र कर्तरि षष्ठी बोध्या । तनूलिखनम् स्तनाद्यवयवानां खण्डनप्रतिखण्डनम् । स्रोतो गमनमित्यत्र स्रोतो गमनकथनं चेत्यर्थः । (कृद्योगा षष्ठी समस्यते ति वाच्यम्) इति समासः । तस्याः वक्तृनायिकायाः परकामुकोपभोगस्य पत्यतिरिक्तकामिजनसुरतिरूपस्य लिङ्गिनः साध्यस्य लिङ्गे तादात्म्येन हेतुः । तथा चेत्थमनुमानस्य रूपम्—'इयं परकामुकोपभोगेच्छावती नलग्रन्थिना स्तनदारणसम्भावनासत्त्वेऽपि स्रोतोगमने एकाकिप्रवृततित्वात्' इति । कवेः स्तनाघातस्रोतोगमनयोः पृथक्कथनेऽपि न पृथग् हेतुद्वयम्, किन्तु हेतुविशेषणमेव तद्द्वयमित्यवधेयम् । तच्च तादृशं लिङ्गस्य अत्रैव 'दृष्टिं हे प्रतिवेशिनि' इत्यादिश्लोक एव अभिहितेन 'प्रायेणास्य शिशोः' इत्यादिना उक्तेन स्वकान्तस्नेहेनापि स्ववल्लभप्रेम्णापिं अपिना तद्भयेनापीति बोध्यम्, अनैकान्तिकः साध्यवत्पक्षमात्रानिश्चितः । तथा च परकामुकोपभोगेच्छारूपसाध्यवति नायिकारूपपक्षे परकामुकोपभोगेच्छारूपसाद्याभाववति स्वकान्तस्नेहिनायिकारूपविपक्षे च वृत्तित्वेन प्राग्वदे साधारणंरूपानैकान्तिककाख्यहेत्वाभास इति ग्रन्थकर्त्तुरभिप्रायः ।

## रुचिरा

नन्वेवं रसादिप्रतीतिर्मा भूदनुमेया, किन्तु तद्भिन्नस्य व्यङ्ग्यस्य प्रतीतिरपि कुतो नानुमानगोचरेत्याशङ्क्योत्तरयितुमाह—**'भम धम्मिअ—' इत्यादौ** 'भ्रम धार्म्मिक—' इत्याद्यर्थक उदाहृतपूर्वे । **च । यत् प्रतीयमानं** 'भ्रमणं न त्वयाकार्यं सिंहो हि दृप्तः सदाऽवतिष्ठत' इत्यात्मकतम् । **वस्तु** । 'अलङ्कारशून्य'मति शेषः ।

**'जलकेलितरलमुक्तपुनःपिहितराधिकावदनो** जलस्य केलिः क्रीडा तेन तरलौ चञ्चलौ यौ करौ तयोस्तलं तेन मुक्तं परित्यक्तं स्खलितमिति यावत् पुनः पिहिताच्छादितं राधिकावदनं येन सः । **कोकयूनोः** कोकजातीययोर्दम्पत्योरित्यर्थः । कोका च कोकश्चेति कोकौ । युवती च युवा चेति युवानौ । कोकौ । अम् युवानाविति तयोः । 'पुमान् स्त्रिया ।' १/२/६७ कोकश्चाक्रवाको नाम पक्षी । **विघटनसङ्घटनकौतुकी** । विघटनं सङ्गतयोः पृथक्करणम् । सङ्घटनं पुनः पृथग्भूतयोरपि सङ्गमं प्रति नयनम् तत्र कौतुकी तत्केलिपरः । **कृष्णो** राधिकाप्राणप्रियः । **जगत्** चराचरात्मकं ब्रह्माण्डम् । **अवतु** रक्षतु अभिमतमनिःश्रेयसप्रदानवर्धनाभ्यां पालयत्विति यावत् । प्रार्थनायां लोट् ॥ २१९ ॥'

**इत्यादौ। च। रूपकालङ्कारादयः**। अन्यस्मिन्नन्यत्वारोपमूलो रूपकालङ्कारः। यथा हि—राधिकावदनं चन्द्र इति प्रकल्प्य तद्विकाशे रात्रिज्ञानेन कोकयूनोर्विघटनम्, तत्पिधाने रात्र्यभावज्ञानेन तयोः पुनः सङ्घटनम्। इति। **अनुमेयाः। एव**। नतु व्यङ्ग्याः।

अत्रायम्भावः—व्यक्तिवादिनस्तावत् 'भ्रमधार्मिक! विश्रब्धः स शुनकोऽद्य मारितस्तेन। गोदावरीकच्छकुडङ्गवासिना दृप्तसिंहेन॥' इत्यांद्यर्थकादौ श्लोके 'यद्भयाद् गृहान्तरेव सञ्चरसि सः शुनको दृप्तेन तेन सिंहेन मारित इति शुनकादपि भीरुस्त्वं तस्मिन् मृते गोदावरीकूलकुञ्जपुष्पाणि सञ्चितानि कर्त्तुं प्रतिदिनं तत्र गच्छसि, किन्तु त्वं जानासि वा न वा तत्र दृप्तः सिंहो निवसति, स एव ग्रामान्तरत आगत्य तं शुनकं मारितवान् इति' वाच्यः 'त्वया शुनकादपि भीरुणा न तत्र गन्तव्य'मिति प्रत्याययतीति, तथा—'जलकेली—' त्यादौ 'करतलेन राधिकावदनस्यापिधानपिधानकरणपरः कृष्णो दिनमात्रसङ्गमशीलयोः कोकयोर्विघटनसङ्घटनकर' इति वाच्योऽर्थः 'राधिकावदनं चन्द्र' इति प्रत्याययती' त्याहुः। किन्तु निरूपिष्यमाणप्रकारेण नोभयत्रैव व्यङ्ग्यत्वमम्। अस्ति पुनरनुमेयत्वमेवेत्याचक्षामा अनुमानेनैव व्यञ्जनां गतार्थयन्तो महिमभट्टा उपक्रमन्ते—**तथाही**त्यादिना।

**तथाहि** यथा प्रतीयमाना वस्त्वलङ्कारा नानुमानादतिरिच्येरंस्तथा। 'प्रतिपाद्यते'इति शेषः। '**अनुमानमनुगतत्वेन मीयते निश्चीयते इति तत्। नाम** प्रसिद्धम्। तदाख्यया प्रसिद्धः प्रमाणविशेष इति यावत्। **पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्त्वविशिष्टात्**। पक्षः सिसाधयिषा विरहविशिष्टसिद्ध्यभाववान् संदिग्धसाध्यको वा। 'पर्वतो वह्निमान् धूमवत्त्वाद् यथा महानस'मित्यादौ पर्वतादिस्तत्र सन् तद्वृत्तिस्तत्त्वं यथा धूमत्वादिः समानः पक्ष इति, सपक्षः, स च निश्चितसाध्यवत्स्वरूपो यथा महानसादिः तत्र सत्त्वं धूमत्वादिविपरीतः पक्ष इति विपक्षः, स च साध्याभाववान्। यथा जलाशयादिः। तस्माद् व्यावृत्तस्तद्वृत्तिस्तत्त्वं धूमत्वादि। तद्विशिष्टं तद्वच्छिन्नं तस्मात्। **लिङ्गा**च्चिन्हात् 'धूमादिरूपात्' इति यावत्। **लिङ्गिनो** लिङ्गं चिन्हमस्यास्मिन् वाऽस्तीति तस्य 'वह्न्यादे'रिति भावः। **ज्ञानं** निश्चय। 'मत'मिति शेषः। **अर्थः** शाब्दबोधः। तावत् साकल्येन 'यावत्तावच्च साकल्येऽवधौ मानेऽवधौ मानेऽवधारणे' इत्यमरः। वाच्यात् असम्बद्धः सम्बन्धित्वानवच्छिन्नः। **न। प्रतीयते अन्यथा**। ननु वाच्यादसम्बद्धोऽपि प्रतीयेत का हानिरिति चेन्नयत इति भावः। **अतिप्रसङ्गो**ऽतिव्याप्तिः। **स्याद्** भवेत्। **इत्येवं** सति। **बोध्यबोधकयोर्बोध्यो** व्यङ्ग्यो बोधकस्तद्भिन्नोऽर्थस्तयोः। **अर्थयोः। कश्चित्। सम्बन्धो** वैशिष्ट्यम्। अस्ति। **एव** नत्वत्र सन्देहावसरः। **ततस्**तस्मात्। 'कारणा' दिति शेषः। सम्बन्धस्यावश्यं सद्भाव इति स्वरूपात्। **बोधको** 'व्यङ्ग्यार्थस्ये' ति शेषः। **अर्थो** नतु शब्दः। 'एवे'ति शेषः। **लिङ्गं** चिन्हम् तत्स्वरूप इति यावत्। **च। बोध्यः** लिङ्गी। **च** तथा सति **बोधकस्य** व्यङ्ग्यार्थबोधकस्य। **अर्थस्य पक्षसत्त्वं**। पक्षे विद्यमानत्वम्। **निबद्धं** सिद्धम्। **एव खलु। अथसपक्षसत्त्वविपक्षव्यावृत्तत्वे** सपक्षसत्त्वं विपक्षतश्च व्यावृत्तत्वम्। **अनिबद्धे** अपि। **सामर्थ्यात्** संस्कारबलात् 'पक्षसत्त्वं समुद्दिश्य तत्र प्रकल्प्यमानादिति' यावत्। **अवसेये** अनुमेये। 'ईदूदेद्द्विवचनं प्रगृह्यम्।' १/१/११ इति प्रगृह्यत्वे संहिताऽभावः। **तस्मात्** 'कारणा'दिति शेषः। **लिङ्गरूपात्। वाच्यार्थात्**। वाच्यार्थमाश्रित्य 'ल्यब्लोपे कर्मण्यधिकरणे च' इति पञ्चमी। **लिङ्गिनो** लिङ्गिसम्बन्धी। **यः। व्यङ्ग्यार्थस्य। अवगमो** बोधः। **सः। अनुमाने** निरुक्तलक्षणे प्रमाणे। **एव। पर्यवस्यति** पर्यवसितो भवति निश्चितो जायते इति यावत्। **इतीत्येवम्**। 'यद्व्यक्तिविवेकाराः प्राहुः' इति शेषः। **तत्** 'कथन' मिति शेषः। **न** 'सङ्गच्छते'इति शेषः।

अत्रेदं बोध्यम्—पक्षः पर्वतादिः, सपक्षः पुनर्महानसादिः, तत्र सन् विद्यमानः, स एव विपक्षाद् व्यावृत्तौ धूमादिस्तत्त्वं च धूमादित्वम्। अथ—विशिष्टमवच्छिन्नम्, एवं सति धूमत्वावच्छिन्नमिति, तच्च धूमरूपमेव, तदादि लिङ्गं पुनर्धूमादि। ततश्च (धूमवदादिज्ञानमनुमानमम्। धूमवानग्निः। 'पर्वतोऽयमग्निमान् धूमवत्त्वाद् यथा

महानसम् ।' इत्यस्य च 'पर्वतेऽस्मिन् धूमवानग्निः यथा महानसे; कुत एतत्-धूमवत्त्वा'दिति शाब्दबोध एवानुमानपर्यवसायीति । तत्र-पक्षः, 'एष एतद्वा'निति यत्र हेतुपुरःसरं सिसाधयिष्यते; सपक्षः पुनः, यत्र तादृशं हेतुं प्रतिपद्य तादृशत्वं प्रथमत एव प्रतिपन्नम्; एवं विपक्षः, यत्र तादृशहेत्वभावे तादृशत्वाभावो निश्चितः स्यात् । इति यत्रयत्र व्यञ्जनास्वीकर्त्तारो यादृशं व्यञ्जनया प्रतिपाद्यमानमर्थमुररीकुर्वन्ति, तत्रतत्रैव वयमनुमितिविषयं तादृशं साधयामः, तस्मात्—पक्षः स एव, 'भम धम्मिअ—' इत्यादिः, 'जलकेलि—'इत्यादिर्वा । अत्र सत्त्व तस्य वाच्यस्य यस्माद् व्यङ्ग्योऽर्थः प्रतीयते; एतस्मादेव हि अनुमेयोऽर्थः । सपक्षः पुनः, तादृशवाच्यार्थशाली खलु । तत एव तादृशानुमितिसिद्धेः । अत्र सत्त्वं पुनः तादृशस्यैव वाच्यस्य, तादृशादेव तथा प्रतिपत्तेरभ्युपगमात् । अथ-विपक्षः, तादृशवाच्याभाववान्; तत्रैव तत्त्वाभावप्रतिपत्तेः । लिङ्गं तादृशबोध्यबोधकयोः सम्बन्धविशेषः । अस्ति हि सर्वोऽपि बोध्यो बोधकश्च परस्परं यत्किञ्चितसम्बन्धशाली; तत्त्वमनङ्गीकृत्यातिप्रसङ्गापत्तेः । तथाहि—'भमधम्मिअ—' इत्यादौ भ्रमणाभावस्येव घटाभावादेरपि बोधः स्यात् । इति यदाहुर्व्यक्तिविवेककाराः, तन्न क्षोदक्षमम् । इति । तदेवोपपादयति—**तथाहि**—'यथा तन्न सङ्गच्छत' इति शेषः । **अत्रा**स्मिन् । **'भम धम्मिअ'—इत्यादौ** 'श्लोक'इति शेषः । **श्वनिवृत्त्या** शुनौ निवृत्तिग्रामे आगत्य गोदावरीकुञ्जवासिना सिंहेन मारित इत्येव तस्यानुपलब्धिस्तया । 'हेतुने'ति शेषः । **गृहे** । 'एवे'ति शेषः । **विहितं** प्रतिपादितम् । **भ्रमणं** 'शुनकादपि भीतस्ये'ति शेषः (कर्त्तृ) । **गोदावरीतीरे** गोदावर्यास्तदाख्याया नद्यास्तीरं तत्र । **सिंहोपलब्धेः** । 'विभावा गुणेऽस्त्रियाम् ।' २/३/२५ 'विभाषे'ति योगविभागाद्गुणे स्त्रियां च क्वचिदिति पञ्चमी । **अभ्रमणम्**(कर्म) । **अनुमापयति** । **इतीत्येवम्** । **यत्** । 'व्यक्तिविवेककाराणा'मिति शेषः । **वक्तव्यम्** । 'अस्ती'ति शेषः । **तत्र** तस्मिन्ननुमाने । **अनैकान्तिको** न एकान्तिक इति । व्यभिचारीत्यर्थः । एक एवान्तः परिच्छेदो यस्य स एकान्तः, तं रक्षतीत्यैकान्तिकः । 'रक्षति । ४/४/३३ इति ठक् । यद्वा—एकान्तमाहेत्यैकान्तिकः । 'आहौ प्रभूतादिभ्यः' इति ठक् । **हेतुः** । कुत इत्याह—**भीरोर्भ**यशीलस्य ।**अपि** किं पुनर्वीरस्येति भावः । गुरोराचार्यस्य पितुर्वा पूज्यस्य वा 'गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि । पुमान् निषेकादिकरे पित्रादौ सुरमन्त्रिणि ॥ इति मेदिनीकरः । **वाऽथवा** । **प्रभोः** स्वामिनो राज्ञो वा । **निदेशेन** सङ्केतेनाज्ञया वा । 'निदेशः शासनोपान्तकथनेषु प्रयुज्यते ।' इति विश्वः । **वाऽथवा** । **प्रियानुरागेण** प्रियः सुहृद् बान्धवो वाऽभिष्टदेवो वा तस्यानुरागः प्रेम तेन । प्रियाया वाऽनुरागस्तेन । **गमनस्य** भ्रमणस्य । क्वचित्तु 'भ्रमणस्ये'त्येव साधीयान् पाठः । **सम्भवाद**निर्बाधितत्वात् । **च** पुनः । **पुंश्चल्याः** कुलटायाः । पुमांसं चलति प्राप्नोति त्येव साधीयान् पाठः । **सम्भवाद**निर्बाधितत्वात् । **च** पुनः । **पुंश्चल्याः** कुलटायाः । पुमांसं चलति प्राप्नोति भर्त्तारमपहायेति तस्याः । परपुरुषगामिन्या इति भावः । **वचनं** कथनम् । **प्रामाणिकम्** । प्रमाणं प्रयोजनमस्यास्तीति । प्रमाणप्रयोजनकमिति भावः । 'प्रयोजन ।' ५/१/१०९ इति ठञ् । **न । वाऽथवा** । 'प्रामाणिक'मिति शेषः । **इतीत्यस्मात् कारणात्** । **सन्दिग्धः** सन्देहग्रस्तः । अत एव—**असिद्ध** । 'हेतु'रिति शेषः । 'सन्दिग्धासिद्धश्च' इति पाठे तु सन्दिग्धोऽसावसिद्ध इत्यर्थः । अत्रेदमवधेयम्—'भम धम्मिअ—' इत्यादौ व्यक्तिविवेककाराणां विचारदृशा धार्मिकः पक्षः, तत्र सत्त्वं शुनकनिवृत्त्या गृहान्तिके भीरुत्वपर्यवसायि भ्रमणत्वं सपक्षः कुमारादिः, विपक्षो व्यघ्रादिः लिङ्गं पुनस्तादृशं भ्रमणं, तेन तस्य गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमीयते; तथा च—'गोदावरीतीरम् अभीरुभ्रमणानुचितसिंहवत्त्वा'दिति स्यादनुमानम् ।' इति स्थितम् । व्यक्तिवादिनस्त्वेवं प्रतिपादयन्ति—'यत्तद् भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वक'मिति व्यतिरेकव्याप्तिरेव तावदसिद्धा, भीरोरपि गुरुस्वाम्यादिनियोगवशात् प्रियानुरागादिवशादा भ्रमणकारित्वस्य समुपलब्धेः । अथ—धार्मिकस्य शुनकाद् भीरुत्वं पुंश्चल्या वचनमात्रेण प्रदर्शितम्, तच्च प्रमाणभूतमस्ति न वेत्यपि सन्देह एव । प्रमाणभूतत्वे शुनकाद् भीरोः सिंहाद् भीरुत्वं

च नैकान्तिकम्, धार्मिकस्य शुनकात्स्पर्शादिभयशालित्वेऽपि वीरत्वानपाये सिंहाद्भीरुत्वानुपपत्तेः। प्रमाणभूतत्वाभावे तु सर्वमसिद्धमेवेति प्रतिपत्तव्यम्। इति।

अथ—**'जलकेलि'—इत्यत्र** 'जलकेलितरलकरतलमुक्तपुनःपिहितराधिकावदनः।' इत्यस्मिन्। 'उदाहृते पद्ये' इति शेषः। **'यः'**। 'कश्चि'दिति शेषः। **आत्मदर्शनादर्शनाभ्यां** स्वदर्शनदानतिरोधानद्वारेत्यर्थः। आत्मनो दर्शनादर्शने इति ताभ्याम्। **चक्रवाकविघटनसङ्घटनकारी** चक्रवाकयोर्दिन एव सङ्गमशीलयोः स्वनाम्नैव प्रसिद्धयोः पक्षिणोर्विघटनसङ्घटने वियोगसंयोगौ कर्त्तुं शीलमस्यास्तीति तथोक्तः। 'स्या'दिति शेषः। **स** निरुक्तलक्षणः। **चन्द्रो** रात्रिकरश्चन्द्रमाः। **एव** नत्वन्यः। 'भवती'ति शेषः।' **इतीत्येवम्**। **इयं** बुद्धिस्थस्वरूपा। **अनुमितिरनुमानम्**। 'सङ्गच्छत' इति शेषः। **एव**। **इति**। **न** नैव। **वाच्यम्**। **उत्त्रासकादौ** भयप्रदादौ। उत्त्रासयति नितान्तमुद्वेजयतीति, स आदिर्यस्य तस्मिन्। **अनैकान्तिकत्वाद्** व्यभिचारित्वादतिप्रसङ्गदोषग्रस्तत्वादिति यावत्। 'हेतो'रिति शेषः। अत्रेदमभिधीयते—राधिकावदनं चन्द्रः, आत्मदर्शनादर्शनद्वारा चक्रवाकयोर्विघटनसङ्घटनकारित्वात्। यथाऽऽकाशस्थश्चन्द्राः। इत्येवमनुमितौ 'जलकेलि—' इत्युदाहृते पद्ये रूपकालङ्कारोऽनुमेय एव नतु व्यङ्ग्यः। इति महिमभट्टमतं न सुमतम्। नहि चक्रवाकयोर्विघटनसङ्घटने करोतीति चन्द्र इत्यनुमातुं शक्यते, घृतशरासनकरालाकृतिकव्याघ्रादीनां दर्शनादर्शनाभ्यामपि तत्त्वापत्तेः। राधिकावदनस्य विकाशेन या रात्रिप्रतीतिः, सा तस्य चन्द्राभिन्नत्वेनैव भवेदित्यपि न युज्यते। सूर्यपिधानेऽपि तस्याः सम्भवात्। यदि तु सूर्यस्य मेघादिना पिधाने तमःस्तोमेऽपि रात्रिसाधर्म्यप्रतीतेर्नाङ्गीकारः, तर्हि चन्द्रस्य करतलादिना पिधाने दिनसाधर्म्यप्रतीतेरनङ्गीकारः स्थाने। एव सति राधिकवदनस्य पिधाने दिनसाधर्म्यप्रतीतेरनङ्गीकारः स्थाने एवं सति राधिकावदनस्य पिधाने चक्रवाक्येः सङ्घटनं न सङ्घटते। दिवाऽपि नक्तमपि वा राधिकावदनस्य स्फुरणमस्फुरणं वा यथेष्टं स्यात् किन्तु चक्रवाकयोर्विघटनसङ्घटने किम्मूले इति मीमांसाऽवसरे राधिकावदनस्य चन्द्राभिन्नत्वेनेति न वक्तुं पार्यते, दिवा चन्द्रदर्शनेऽपि नक्तं च तस्य दर्शनाभावे चक्रवाकयोर्विघटनस्य सङ्घटनस्य चादृष्टश्रुतत्वात्। न वा राधिकावदनस्यैव दर्शनादर्शनाभ्यां रात्रेर्दिनस्य च सत्त्वाङ्गीकारे सर्वमवदातम्।' इति वाच्यम्। सूर्यचन्द्रमसयोरुभयोरपि दर्शनादर्शनाभ्यामेव रात्रेर्दिनस्य वा स्थितिरिति नियमस्यासम्भवात्। राधिकावदनं चन्द्र इति कल्पनं तादात्म्यसम्बन्धमादायैव सङ्गच्छते, अन्यथा निरूप्यमाणस्य रूपकस्यापि मूलोच्छेदापत्तिः स्यात्। तादात्म्यसम्बन्धेन पुनः साध्यस्य चन्द्रस्य वदने वस्तुतया बाधाद्बाधोऽपि दोष एव हेतो रित्येवं हेत्वाभासतयाऽनुमानमपि न प्रमाणकोटावारोहतीति। नन्वेवं भा भूदनुमानमिति प्रकारान्तरेणोपपाद्यमानेऽप्यनुमाने दोषमुद्घाटयन्नाह—**'एवंविध** एवम्भूतः पक्षीभूतेन वाक्यार्थेन बोधयितुं योग्यः साध्यकोटिनिविष्टः। **अर्थः**। **एवंविधार्थबोधक** एवंविधो योऽर्थस्तस्य बोधकः प्रतिपादकः। **एवंविधार्थत्वादे**वंविधार्थस्य भावस्तस्मात्। 'हेतो'रिति शेषः। **यत्**। 'किञ्चि' दिति शेषः। **एवम्**। न 'स्या' दिति शेषः। **तत्**। **एवम्**। **न** 'भवितुमर्हती'ति शेषः।' **इत्यनुमाने** इत्थम्भूतेऽनुमाने। **अपि**। **आभासमानयोगक्षेमः** आभासमानौ योगक्षेमौ यत्र यस्य वेति सः। आभासमानौ नतु स्वरूपसन्तौ। अप्राप्तस्य प्राप्तिर्योगः। प्राप्तस्य पुनारक्षणं क्षेमः। 'योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु। वपुः स्थैर्यप्रयोगे च विष्कम्भादिषु भेषजे। विश्रब्धधातुके द्रव्योपायसंहननेष्वपि। कार्मणेऽपि।' इति मेदिनी। 'क्षेमोऽस्त्री लब्धरक्षणे। चण्डायां नाशुभे न स्त्री कात्यायन्यां च योषिति।' इति मेदिनी। **हेतुः**। **'एवंविधार्थत्वा'**दिति हेतुना। **एवंविधानिष्टसाधनस्यै**वंविधस्यानिष्टार्थरूपस्य साधनस्य। **अपि**। **उपपत्तेः** सम्भवात्।

अत्रेदं तत्त्वम्—'जलकेलि—' इति वाक्यार्थ एव 'राधिकावदनं चन्द्र' इति रूपकबोधोपयोगिभूतानुमितिबोधकः 'एवंविधार्थत्वा'दिति मतं महिमभट्टानाम्। व्यक्तिवादिनां पुनः—'एवंविधार्थत्वा' दिति पदार्थस्तावत्

'एवंविधो योऽर्थस्तत्त्वात्।' इति। तत्र—'एवंविध' इति शब्देन 'अनभिमत' इत्यर्थबोधस्यापि भवितुमर्हितत्वात् तादृशो हेतुराभासमात्रावष्टम्भः। 'एवंविध' इति शब्दस्य साधारण्येनं 'अभिमतानभिमतोभयविधार्थस्य बोधकत्वात्। इति तादृशमनुमानमपि न सङ्गच्छते।' इति।

एवमेवान्यत्रापि व्यङ्ग्यविषयेऽऽनुमानं न सङ्गच्छते हेतोर्व्यभिचारदुष्टत्वादिति प्रदर्शयिषुः पुनर्वस्तुव्यङ्ग्ये दोषमाह-**तथा** यथा पूर्वत्रातिप्रसङ्गस्तद्वत्। '**दृष्टिं हे प्रतिवेशिनि! क्षणमिहाप्यस्मद्गृहे—'इत्यादौ**। 'दृष्टिं हे प्रतिवशिनि! क्षणमिहाप्यस्मद्गृहे दास्यसि प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति। एकाकिन्यपि यामि सत्त्वरमितः स्रोतस्तमालाकुलं नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदानलग्रन्तयः॥' इत्यस्मिन् श्लोके। '**नलग्रन्थीनां** नलानां वंशविशेषाणां ग्रन्थयः पर्वाणीति तेषाम्। **तनूलेखनं** तन्वा लेखनमङ्कनं रेखाकरणमिति यावत्। **चाथवा। एकाकितया। स्रोतोगमनं** स्रोतः प्रवाहस्तस्य (तत्प्रति) गमनम्। 'कृद्योगा षष्ठी समस्यत इति वाच्यम्।' इति समासः। **तस्याः** 'कुलटाया'इति शेषः। **परकामुकोपभोगस्य** परः स्ववल्लभादितिरिक्तोऽसौ कामुकः कामीति तस्योपभोगो बाह्यो भोगस्तस्य तदात्मकस्येति यावत्। **लिङ्गिनश्चिन्हवतः। लिङ्गं** चिन्हम्।' **इतीत्येवम्**। उच्यते कथ्यते। **च** पुनः। **तत्** तादृशं वचः। **अत्रास्मिन्। एव** 'श्लोक'इति शेषः। **अभिहितेन** कथितेन। 'प्रायेणास्य शिशोः पिता—'इत्यादिनोद्घोषितेनेति यावत्। **स्वकान्तस्नेहेन** स्वस्याः कान्तः प्रियतम इति तस्य स्नेहः प्रेम तेन। अपि। **सम्भवति** सङ्घटते। **इतीत्यस्मात्** कारणात्। **अनैकान्तिको** व्यभिचारग्रस्तः। **हेतुः** कारणम्।

अत्रेदं बोद्धव्यम्—'सा परकामुकोपभोगवती नलग्रन्थीनां तनूलेखनादेकाकितया वा स्रोतोगमनात्। यथा प्राक्। तथा दृष्टा श्रुता वा कुलटे'ति, 'दा नलग्रन्थिकृततनूलेका या वा एकाकिनी सती स्रोतोमन्त्री सा परकासुकोपभोगवती या नैवं सा नैव'मिति वाऽनुमानमेवात्रेति महिममहिमा। व्यक्तिवादिनां पुनर्वादव्यक्तिः—'नायं हेतुरेकान्तिकः, 'प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यती'त्यभिधानसूचितेन स्वकन्तविषयकप्रेमवशादपि तत्सद्भावोपपत्तेः। इति। अथ विवृत्तिकारा एवमाहुः—'तथा च—यत्र 'स्नेहेन किं दुष्करं'मिति जानतां सर्वेषामेव श्रोतृणां तादृशबोधो न जायते तत्रैव व्यभिचार इति भावः। यदि तु कालान्तरे तादृग्वाक्यप्रयोगेण यस्य कस्यापि श्रोतुस्तादृशार्थबोधाद् व्यभिचारो न भवतीति विभाव्यते, तदाऽत्र तद्वाक्यप्रतिपाद्यं तादृशार्थद्वयं परकामुकोपभोगप्रतिपादकं तादृशार्थत्वात्' इत्यनुमाने बाधहेतुदोषो द्रष्टव्यः। यथा—गन्धप्रागभावकालीनो घटो गन्धवान्' इत्यादौ त्तकालीनसाध्याभावमादाय बाधः। तथाऽत्रापि व्यक्तिविशेषे वा एवं विधार्थबोधकत्वरूपसाध्याभावमादाय बाधो बोध्यः।' इति।

यच्च 'निःशेषच्युतचन्दनम्—' इत्यादौ (६४ पृ.) दूत्यास्तत्कामुकोपभोगोऽनुमीयते तत्किं प्रतिपाद्यतया दूत्या, तत्कालसंनिहितैर्वान्यैः, तत्काव्यार्थभावनया वा सहृदयैः।

आद्ययोर्न विवादः। तृतीये तु तथाविधाभिप्रायविरहस्थले व्यभिचारः। ननु वक्त्राद्यवस्थासहकृतत्वेन विशेष्यो हेतुरिति न वाच्यम्। एवंविधव्याप्त्यनुसंधानस्याभावात्।

किञ्चैवंविधानां काव्यानां कविप्रतिभामात्रजन्मनां प्रामाम्यानावश्यकत्वेन संदिग्धसिद्धत्वं हेतोः।

---

## विवृतिः

यदि तु कालान्तरे तादृग्वाक्यप्रयोगेण यस्य कस्यापि श्रोतुस्तादृशार्थबोधाद्वयभिचारो न भवतीति विभाव्यते, तदात्र 'एतद्वाक्यप्रतिपाद्यं तादृशार्थद्वयं परकामुकोपभोगप्रतिपादकं तादृशार्थत्वात्' इत्यनुमाने बाधहेतुदोषो द्रष्टव्यः। यथा—'गन्धप्रागभावकालीनो घटो गन्धवान्' इत्यादौ तत्कालीनसाध्याभावमादाय बाधः तथात्रापि व्यक्तिविशेषे कालविशेषे वा। एवं विधार्थबोधकत्वरूपसाध्याभावमादाय बोध्यः। तत्कामुकेति। नायिकाकामुकेत्यर्थः। अनुमीयत इति। चन्दनच्यवनादिरत्र हेतुः। तत्कालसंनिहितैस्तादृशकथनसमये नायिकासंनिधानवृततिभिः। काव्यार्थभावनयेति। विशेषणे तृतीया। न विवाद इति। चन्दनच्यवनादीनां स्नानादिनापि संभवात्। संभोगव्यभिचारित्वेऽपि तेषां दूतीतत्कालसंनिहितयोः प्रत्यक्षतो वैलक्षण्यसहस्रग्रहसंभवेन व्यभिचारज्ञानानुदयाद् व्याप्तिग्रहः संभवतीति भावः। ननु सामाजिकानामपि निःशेषादिपदानां संभोगजन्यत्वबोधाभिप्रायविरहस्थल इत्यर्थः। वक्त्रादीत्यतदुणसंविज्ञानबहुव्रीहिणा प्रतिपाद्यदूतीपरिग्रहः। अवस्था कामुकत्वादिवैशिष्ट्यम्।

## विवृतिपूर्तिः

यच्चेति। अयमेवाशयः प्रदीपादौ भङ्ग्यन्तरेण निर्दिष्टः—प्रकृते यानि चन्दनच्यवनादीनि संभोगव्यञ्जकतयोपात्तनि न तानि तद्व्याप्यानि। कारणान्तरादपि संभवात्। अतएवात्र स्नानकार्यत्वेन प्रतिपादितानि। अतोऽनैकान्तिकात्कथमनुमितिः स्यात्। ननु व्यक्तिरपि कथं तैरिति चेत्, अधमपदसाहित्यादिति ब्रूमः। अस्माकमपि सत्साहित्येनानैकान्तिकत्वव्यतिरेक इति चेत्, भवेदप्येवं यद्यधमत्वं प्रमाणादवाधारितं भवेत्। नत्वेवमस्ति। व्यक्तिरपि कथं तादृशाद्भवेदिति चेत्, भो देवानांप्रिय, व्यक्तौ न व्याप्तेर्नापि पक्षधर्मताया निर्धारणमङ्गम्। किंतु संभावितादप्येवंविधादेवंविदोऽर्थः। प्रतीयत इति तूष्णीं तिष्ठते॥

## विज्ञप्रिया

निःशेषच्युतेत्यादावपि दूत्यास्तत्कामुकोपभोगस्य व्यङ्ग्यस्यानुमेयतां दूषयितुमाह—यच्चेति।

आद्ययोर्न विवाद इति—दूतिकर्तृकमनुमानं तावन्न सम्भवत्येव, तस्यास्तदुपभोगस्य प्रत्यक्षसिद्धत्वेन सिद्धसाधनात्। तत्काले सन्निहितजनस्तु यदि न व्यङ्ग्यबोद्धा तदा तस्यानुमानमपि नास्तीत्यस्तत्रापि न विवादः। यदि तु व्यङ्ग्यबोद्धा तदा तृतीयपक्षे एवान्तर्भाव इत्यर्थः। सामाजिकबोधविषयस्यैव तदास्वाद्यस्य मया विचार्य-

त्वेन तत्रैवानुमेयत्वादनुमेयत्वविवादात्। तदनुमेयतां दूषयति—तृतीये त्विति। तथाविधाभिप्रायो दूत्यास्तत्कामुकोपभोगाभिप्रायः। तद्विरहेणोक्तस्य चन्दनच्यवनादे रुपभोगव्याप्यता नास्तीति तत्रैव व्यभिचार इत्यर्थः।

स्नानादिव्यावृत्तचन्दनच्यवनादेर्विशेषणादानेन व्यभिचाराभावोक्तिं दूषयितुमाह—वक्त्राद्यवस्थेति। वक्त्र्यवस्तथादिरित्यर्थः। आदिपदात् स्तनाकर्षणचुम्बननखक्षतपरिग्रहः। अवस्था तु रतिक्लिष्टत्वम्। तथा च तादृशवस्थादिसहकृतत्वेन चन्दनच्यवनादिहेतुर्विशेषणीय इत्यर्थः।

समाधत्ते-एवंविधेति। एवंविधविशेषणघटितव्याप्त्यनुसन्धानस्येत्येर्थः। न हि श्लोके तादृशविशेषणमस्ति। व्याप्त्यादिपदादीदृशविशिषिटहेतु परिग्रहः।

तत्रापि हेतोः सन्दिग्धत्वमपि दर्शयति—किञ्चेति। प्रामाण्यानावश्यकत्वेनेति—वक्त्रया चन्दनच्यवनाद्यकथनेऽपि सम्भाव्यैव कवेस्तदुक्त्यनुवाद सम्भावादित्यर्थः। कव्यनूदितवाक्यलब्धचन्दनच्यवनादिना हि सामाजिकैः सम्भोगोऽनुमातव्यः। तच्चन्दनादिकं वक्त्रयुक्तमनुक्तं वेति सन्देहात्सन्दिग्धमित्यर्थः।

## लोचन

नन्विति—वक्त्री यादृशीमवस्थां प्राप्य तथोक्तवती सावस्था हेतोर्विशेषणीकर्तव्येत्यर्थः।

किञ्चेति—सन्दिग्धासिद्धत्वम्—न खलु कविः सिद्धमेवार्थं वर्णयति।

## कुसुमप्रतिमा

लक्ष्यान्तरेऽपि व्यङ्ग्यस्यानुमेयत्वमपाकर्त्तुमाह यच्चेति। यच्च अनुमीयते सहृदयैरिति सम्बन्धः। दूत्यास्तत्र सम्बोध्यमानायाः। प्रतिपाद्यया श्रोत्रया दूत्या चन्दनच्यवनादिरूपेण दूतीवैशिष्ट्येन हेतुना। तथा च प्रतिपाद्या दूतौ तत्कामुकोपभोगवती स्नानादिविलक्षणचन्दनच्यवनादेरिति सहृदयानामनुमानं किमित्यर्थः। तत्काले निःशेषत्यादिकथनसमये सन्निहितैरन्यैः सखीजनादिभिर्वा अन्यसन्निधिर्वैशिष्ट्यद्वयारेणेति तात्पर्यम्। एवञ्च प्रतिपाद्या दूती तत्कामुकोपभोगवती सन्निहितसखीजनलक्षितस्नानादिकृतविलक्षणचन्दनच्यवनादेरिति वा सहृदयानां किमनुमानमित्यर्थः। तस्य काव्यार्थस्य भावनया पर्य्यलोचनया वा सहृदयैरनुमीयत इति सर्वत्र सम्बन्धः। तथा च निःशेषेत्यादिकाव्यप्रतिपाद्या दूती तत्प्रतिपाद्यकामुकोपभोगवती तत्प्रतिपाद्यस्तनचन्दनच्यवनादेरित्यं वातत्काव्यार्थं पर्य्यालोचयतां सहृदयानामनुमानमित्यर्थः।

तृतीयप्रकारमनुमानं दूषयितुं प्रथमप्रकारद्वयं तत्काव्यार्थं पर्य्यालोच्यतां भङ्गेविशेषणाङ्गीकरोति आद्ययोरिति। स्नानादिकृतचन्दनच्यवनाद्यपेक्षया तत्कालीनतादृशचन्दनच्यवनादीनां सखीजनानिमिर्वैषम्यदर्शनेन तादृशहेतोरव्यभिचारितया तयोरनुमानयोः सङ्गच्छमानत्वादित्याशयः। तथापि "भमं धम्मिअ" इत्यादावन्वथानुपपत्त्या व्यञ्जनाङ्गीकार्य्येवेति बोध्यम्।

तृतीय इति। तृतीये प्रदर्शितृतीयप्रकारातुमाने। तथाविधाभिप्रायविरहस्थले सम्भोगविमर्द्देनैवेदं दूत्याः स्तनचन्दनच्यवनादिकमिति वक्तृनायिकायां अभिप्रायस्य सहृदयानां ज्ञानाभावस्थले अशिरःपर्य्यन्तमज्जनादेवेदं चन्दनच्यवनादिकमिति वक्त्या अभिप्रायस्य सहृदयानां ज्ञानस्थल इत्यर्थः, व्यभिचार उक्तहेतोरिति शेषः। तथा चात्रापि पूर्ववदेव साधारणख्यो हेत्वाभास इति भावः।

विशेषणविशेषदानेन नोक्तो हेतोर्व्यभिचार इत्याशङ्कते नन्विति। वक्त्वाद्यवस्थया प्रतिपाद्याया दूत्या रमणनिबन्धनमुखप्रफुल्लताद्यस्थया सहकृतत्वेन हेतुश्चन्दनच्यवनादेरिति हेतुः विशेष्यो विशेषणीयः। तथा चोक्ततृतीयप्रकारानुमाने मुखप्रफुल्लतादिसहकृतस्तनचन्दनच्यवनादेरिति हेतुर्वक्तव्य इत्यर्थः। एवञ्च स्नानादौ मुखप्रफुल्लतादीनामसम्भवात् हेतोर्न व्यभिचार इति भावः। ईदृशव्याख्यानेनैव सामञ्जस्ये रामचरणस्य वक्तादीत्यतद्गुणसंविज्ञानवहुब्रीहेराश्रयणमर्प्यालोचनविजृम्भितमिति द्रष्टव्यम्। एवंविधन्याप्त्यनुसन्धानस्य हेत्वंशे श्लोकानुक्तविशेषणनिवेशेन साध्यसाधनयोर्नियतसामानाधिकरण्यज्ञानस्य अभावाददर्शनादित्यथः।

ननु "स्लोकानुक्तविशेषणं न देयम्" ईदृशवेदविधेरभावात्तादृशविशेषणदाने की दोष इत्याह किञ्चेति। एवंविधानां "निःशेषच्युत चन्दन्दनम्" इत्यादिप्रकाराणां कवीनां प्रतिभामवात् केवल कल्पनाकुशल जन्म येषां तेषां काव्यानाम्, प्रामाण्यनावश्यकत्वेन वेदादीनामिव प्रामाण्यसतमत्ताया नियमाभावेन, हेतोरुक्तप्रकारसाधनस्य सन्दिग्धसिद्धत्वम् 'उक्तविधं चन्दनच्यवनादिकं सत्यं न वा' इत्थं सहृदयानामेव सन्देहेन पक्षे मिथ्यातवज्ञानात्स्वरूपासिद्धिरेव हेतेवाभास इत्यर्थः।

## विमला

तत्कामुकेति।—नायिकाकामुकेत्यर्थः। अनुमीयते इति।—चन्दनच्यवनादिरत्र हेतुः, तत्कालसन्निहितैः;— तादृशकथंसमये नायिकासन्निधानवृत्तिभिः, काव्यार्थभावनयेति—[विशेषणे तृतीया]। न विवाद इति।—चन्दनच्यवनादीनां स्नानादिनाऽपि सम्भवात्। सम्भोगव्यभिचारित्वेऽपि तेषां दूतीतत्कालसन्निहितयोः भावः।वैलक्षण्यसहस्त्रग्रहसम्भवेन व्यभिचारज्ञानानुदयात् व्याप्तिग्रहः सम्भवतीति भावः। ननु सामाजिकानामपि निःशेषादिपदाभिप्रायेणैव वैलक्षण्यग्रहो भविष्यतीत्यत आह, तथाविधेति।—निशेःषादिपदानां सम्भोगजन्यत्वबधाभिप्रायविरहस्थल इत्यर्थः।

यदि सामान्यतश्चन्दनच्यवनादेः हेत्वाभासेन अनुमितिनं सम्भवति, तदाऽत्र विशिष्टतादृशहेतुर्वाच्य इति मतं दूषयति, नन्विति।—वक्तादीत्यादि।—[तद्गुणसंविज्ञानबहुब्रीहिणां प्रतिपाद्यदूतीपरिग्रहः]। अवस्था—कामुकत्वादिवैशिष्टयं, तत्सहकृतचन्दनच्यवनादिहेतुर्बोध्यः। एवंविधेति।—एवंविधा या व्याप्तिः तस्याः अनुसन्धानस्य अभावात्—शब्दानानुपस्थानात्, तथाच प्रतिपाद्यवस्थासहकृततत्वस्य शब्देनानुपस्थितेः प्रमाणान्तरस्य च असद्भावत्कथं तादृशविशिष्टहेत्वन्तर्भाविण व्याप्तिग्रहसम्भव इति।

किञ्चेति।—कविप्रतिभामाव्रजन्मना—कवीनां प्रतिभा—बुद्धिर्नैर्मल्यं, तन्मात्रेण जन्म—उत्पत्तिर्येषां तादृशानां, प्रामाण्यस्य—याथातथ्यरूपानुसन्धानस्य, अनावश्यकत्वेन हेतोः सन्दिग्धासिद्धत्वं—किमियं परपुरुषार्थिनीं स्त्रीतसि जलाहरणार्थं गता, उत स्वकान्तस्नेहेन? इति सन्देहः, तेन हेतोर्न प्रमाण्यं, तत् कथमत्रानुमानं सम्भवतीति भावः। एषां पदार्थानां—"निःशेषच्युतचन्दनम्" इत्यादीनामित्यर्थः, व्यञ्जकत्वं—व्यङ्ग्यबोधकत्वम्। प्रामाणिकं—प्रमाणानुगतं, तथ्यमित्यर्थः।

## लक्ष्मी

निःशेषच्युतेत्यादावपि दूत्यास्तत्कामुकोपभोगस्यानुमेयतां हेतोर्व्यभिचारेण दूषयितुमाह—यच्चेति। अनुमीयते सहृदयैरित्यन्वयः। दूत्याः सम्बोध्यमानायाः तत्कामुकोपभोगो नायिकाकामिपुरुषसम्भोगरूपः अनुमीयते इति। चन्दनच्यवनादिरूपदूतीवैशिष्टयमत्र हेतुः। प्रतिपाद्या दूत्येति। एवञ्च 'प्रतिपाद्या दूती तत्कामुकोपभोग-

वती चन्दनयवनादेः' इति सामाजिकानामनुमानं किमित्यर्थः, तत्काले 'निःशेषेत्यादि' प्रतिपादनसमये सन्निहितैः नायिकासन्निधानवृत्तिभिः अन्यैः सखीजनादिभिर्वा। तथा च प्रतिपाद्या दूती तत्कामुकोपभोगवती नायिकासन्निधानसखीजनलक्षितचन्दनच्यवनादेरिति किं सामाजिकानामनुमानमित्यर्थः। तत्काव्यार्थभावनया तत्काव्यार्थपरिशीलनया वा सहृदयैः सामाजिकैरनुमीयत इति पूर्वेणान्वयः। तत्काव्यार्थभावनयेति विशेषणे तृतीयावगन्तव्या। एवञ्च निःशेषेत्यादिकाव्यप्रतिपादग्या दूती तत्प्रतिपाद्यकामुकोपभोगवती तत्प्रतिपाद्यस्तनचन्दनच्यवनादेरनेन प्रकारेण वा तत्काव्यार्थं परिशीलवतां सामाजिकानामनुमानमित्यर्थः।

तत्र पक्षत्रये तृतीयप्रकारमनुमानं निरसितुमाद्यप्रकारद्वयं तत्काव्यार्थं परिशीलयतां व्यभिचारग्रहानुदयेन दोषाभावादाह—आद्ययोरिति। न विवाद इति। स्नानादिनापि चन्दन च्यवनादीनां सम्भवात्। सम्भोगव्यभिचारित्वेऽपि तेषां दूतीतत्कालसन्निहितयोः प्रत्यक्षतो वैलक्षण्यग्रहसहस्रसम्भवेन व्यभिचारज्ञानानुत्पत्तेः व्याप्तिग्रहो भवितुं शक्यत इति भावः।

वस्तुतस्तु—दूतीकर्तृकमनुमानं तावन्नैवम्भवति तस्यास्तदुपभोगस्य प्रत्यक्षसिद्धत्वेन सिद्धसाधनात्। तत्काले सन्निहितजनस्तु यदि न व्यङ्ग्यबोद्धा तदा तस्यानुमानमपि नास्तीति तत्रापि न विवादः। यदि तु व्यङ्ग्यबोद्धा तदा तृतीयपक्ष एवान्तर्भाव इति ममाशयः। सामाजिकबोधविषयस्यै वास्माभिरपि विचार्यमाणत्वेन तत्रैवानुमेयत्वादनुमेयत्वविवादत्तदनुमेयतां दूषयितुमाह—तृतीये त्विति। ननु सामाजिकानामपि निःशेषेत्यादिपदाभिप्रायेणैव वैलक्षण्यावबोधो भविष्यतीत्यत आह—तथाविधेति। तथाविधाभिप्रायबोधविरहस्थले निःशेषेत्यादिपदानां दूत्यास्तत्कामुकोपभोगाभिप्रायविरहस्थल उक्तचन्दनच्यवनादेरुपभोगव्याप्यता नास्तीति तत्रैव व्यभिचार इत्यर्थः।

ननु स्नानादिव्यावृत्तचन्दनच्यवनादेर्विशेषणदानेन व्यभिचाराभाव इत्याशङ्क्ते—नन्विति। वक्त्राद्यवस्थेति। वक्त्रयवस्थादिरित्यर्थः, आदिपदात् स्तनाकर्षणनखक्षताधरपानपरिग्रहः। अवस्था तु रतिक्लिष्टत्वम्। वक्त्रयाद्यावस्थया प्रतिपाद्याया दूत्याः स्तनाकर्षणचुम्बननखक्षताधरपानरतिक्लिष्टत्वाद्यवस्थया सहकृतत्वेन हेतुश्चन्दनच्यवनादिः विशेष्यो विशेषणीयः, दर्शिततृतीयप्रकारानुमाने स्तनाकर्षमादिसहकृतचन्दनच्यवनादेरिति हेतुर्वक्तव्य इत्यर्थः, तथा च स्नानादौ स्तनाकर्षणचुम्बनादीनामसम्भवाद्व्यभिचाराभाव इत्याशयः। समाधत्ते—एवंविधेति। एवंविधविशेषणविशिष्टव्याप्त्यनुसन्धानस्येत्यर्थः। न हि श्लोके तादृशविशेषणमस्ति। तथा च स्तनाकर्षणाद्यवस्थासहकृतत्वस्य केनचिच्छब्देनानुपस्थापनात् प्रमाणान्तरस्य वा सम्भवादनुपस्थितिरिति कथं तदन्तर्भावेन व्याप्तिग्रह इति भावः।

नन्वेवन्तर्हि 'श्लोकप्रतिपादितविशेषणं न दातव्यम्' किन्त्वीदृशश्रुतिवचनाभावादित्येतादृशविशेषणदाने न कापि क्षतिरित्यत आह—किञ्चेति। एवंविधानां 'निःशेषच्युतचन्दनम्' इत्यादिरूपाणां कवीनां प्रतिभामात्रात् केवलकल्पनाकुशलतः जन्म उत्पत्तिर्येषां तेषां तथोक्तानां काव्यानां प्रामाण्यानावश्यकत्वेन श्रुत्वादिवचनानामिव प्रामाण्यग्रहस्य निश्चयाभावेन वक्त्रया चन्दनच्यवनाद्यकथनेऽपि सम्भाव्यैव कवेस्तदुक्त्यनुवादसम्भवेनेत्यर्थः। कव्यानूदितचन्दनच्यवनादिना हि सामाजिकैः सम्भोगोऽनुमातव्यः, तच्चन्दनादिकं वक्त्रयुक्तमनुक्तं वेति सामाजिकानामेव सन्देहेन संदिग्धसिद्धत्वम्, पक्षेऽसत्यवज्ञानात् स्वरूपासिद्धिर्हेत्वाभास इत्यर्थः।

## रुचिरा

उक्ते हेतोर्व्यभिचारमन्यत्राप्यतिदिशति—यच्चेत्यादिना।

**'निश्शेषच्युतचन्दनं—'** **इत्यादौ** (उदाहृतपूर्वे) । **च** । **दूत्याः** प्रेष्याया दास्याः । **तत्कामुकोपभोगस्तस्या** नायिकायाः कामुक इति, तस्योपभोग इति तथोक्तः । तद्रूपमिति यावत् । **यद्** 'वस्तु' इति शेषः । **अनुमीयते**'दूती नायिकानायककृतोपभोगा निःशेषच्युतचन्दनस्तनतटादित्वा'दित्यात्मनेति शेषः । **तत्** । **किं** किन्नु । **प्रतिपाद्यतया** प्रतिपाद्याया भावस्तत्तातया प्रतिपाद्या चात्र दूत्येव । तामेवोद्दिश्याभिधेयस्य प्रतिपादितत्वात् । **दूत्या** । 'अनुमीयते' इति शेषः । 'कर्तृकरणयोस्तृतीया ।' २/३/१८ इति कर्त्तरि तृतीया । **वा**ऽथवा । 'किं'मिति शेषः । **तत्कालसन्निहितैः** स काल इति तत्कालस्तं सन्निहिता इति तैः । 'कालाः' २/१/१८ इति द्वितीयया समासः । तस्मिन् काले सन्निधिं भजमानैरित्यर्थः । 'दधातेर्हिः ।' ७/४/४२ इति हिः । **अन्यैः** प्रतिपाद्यप्रतिपादकाभ्यां दूतीनायिकाभ्यां भिन्नैः । 'अनुमीयते' इति शेषः । **वा**ऽथवा । 'किं'मिति शेषः । **तत्काव्यार्थभावनया** स काव्यार्थस्तत्काव्यमिति तस्यार्थ इति वा तस्य भावना तया । **सहृदयैः** काव्यार्थभावनापरिपक्वधिषणैः । 'अनुमीयते' इति शेषः । **आद्ययोः** प्राथमिकयोः । 'पक्षयो' रिति शेषः । प्राक् त्रयः प्रश्ना निरूपिताः, तत्र-आद्यप्रश्नद्वयानुसारेण पक्षद्वयम्, अन्त्यप्रश्नानुसारेण पुनरेकः पक्षः । एवमत्र द्वयोः प्राथमिकयोः पक्षयोः स्वीकारे इति भावः । **न** नैव । **विवादो** विरुद्धौ वादः । वाप्यां स्नानेनापि सम्भवतां निश्शेषच्युतचन्दनत्वादीना प्रत्यक्षमुपभोगजनितत्वेन दूत्यास्तत्कालसन्निहितानां च परेषां तत्रत्यक्षताया एव प्राधान्येन पुरोवर्त्तित्वात् तथा कल्पनायाः पुनरनुपपत्तेः । **तु** पुनः । **तृतीये** 'पक्षे' इति शेषः । **तथाविधाभिप्राय**विरहस्थले तथा यथाऽनुमीयते तत्स्वरूपो विधा प्रकारो यस्य सः तथोक्तोऽसावभिप्रायस्तात्पर्यं तस्य विरहो वियोगोऽभाव इति यावत्, तत्स्थले । **व्यभिचारः** सञ्चारस्तथाविधाभिप्रायस्थलीयतायाः सम्भव इति यावत् । अलक्ष्ये लक्ष्यवृत्तिर्व्यभिचार इति तथाविधाभिप्रायस्थलवर्त्तिताया अन्यत्र सम्भव एव व्यभिचारः इति सुव्यक्तम् ।

अत्रेदं तत्त्वम्—नायकमानेतुमेव प्रेषितां, तं पुनरनुपानीय प्रत्युत तं तत्रैवोपभुज्यैकाकिनीं तां प्राप्तां दूतीं चन्दननिश्शेषच्यवनादिना तथाविधामालक्ष्य तत्प्रेषिकाया नायिकाया वैदग्ध्योक्तिः—'निःशेषच्युतचन्दनं—' इत्यादिः । एवमत्र प्रतिपाद्या (बोद्धव्या) दूत्येव । अथ यदि तथा नायिकाया वैदग्ध्योक्तिमवधार्य तन्नायककृतात्मोपभोगश्चन्दननिश्शेषच्यवनादिनाऽनुमीयेत, यदि वा तदानीतनैरन्येरनुमीयेत तर्हि युक्तमेव । तेषामपेक्षया तत्रत्यक्षभूतताया एव जागरूकत्वे वापीगतस्नानादिना तथाविधतायाः कल्प्यमानायास्तिरोहितत्वात् । तथाभूतं पुनरनुमानं न चमत्कारास्पदम्, सहृदयहृदयाह्लादकत्वाभावात्, सहृदयहृदयाह्लादकस्यैव चमत्कारपदार्थत्वात् । यदि तु तत्काव्यार्थभावनया सहृदयैरनुमीयते तर्हि 'वापीं स्नातुमितोगताऽसी' त्युक्तयोदयमानस्याभिप्रायस्यापि स्थले तेषां विचारदृशा चन्दननिश्शेषच्यवनादीनां सम्भवाद् व्यभिचारग्रस्त एव तथाविधानुमानहेतुः । एतदेवानुसन्धाय काव्यप्रकाशकारैरप्युक्तम्—तथा—'निश्शेच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि, तानि कारणान्तरतोऽपि भवन्ति, अतश्चात्रैव स्नानकार्यत्वनोक्तानि नोपभोगे एव प्रतिबद्धानीत्यनैकान्तिकानी'ति ।

तृतीये पक्षे व्यभिचारोऽस्त्येवेति द्रढयितुं तत्र कल्प्यमानामाशङ्कां निवारयति—**नन्वित्यादिना** ।

**ननु** आशङ्क्यते । **वक्त्राद्यवस्थासहकृतत्वेन** वक्ताऽऽदौ येषां बोद्धव्यादीनामिति तेषामवस्थास्तासां सहकृतत्वं वैशिष्ट्यं तेन । **विशेष्यो** विशेषे साधुरिति तथोक्तः । विशेषणान्तरदाने समर्थनीयः । **हेतुः** । 'स्या'दिति शेषः । तथा सति व्यभिचारभावेऽनुमानमवदातमिति भावः । **इति** । **न** नैव । **वाच्यम्** । **एवंविधव्याप्त्यनुसन्धानस्यैवं**विधाया व्याप्तिस्तस्या अनुसन्धानं तस्य । **अभावादसद्**भावात् । वक्त्राद्यवस्थासहकृतत्वेन विशेष्याया व्याप्तेः शब्देनोपात्तत्वादर्शनादिति भावः ।

अत्रेदं बोध्यम्—यदति 'दूती सम्भोगवती दृष्टशरुतततत्सङ्गरङ्गया नायिकया सेर्ष्यं चन्दननिश्शेषच्यवनादीनामुद्घाटितत्वात्' इति, 'नायकप्रेमवशादेव तद्दौत्यमधिकृतवती दूती सम्भोगवती नायकप्रेममात्रजन्याचन्दननिश्शेषच्यवनादित्वा'दिति वाऽनुमानं सङ्गच्छते। तदपि तथाविधाया व्याप्तेः साक्षादनुपात्तत्वेन सम्भवत्येव न तथाऽनुमानम्। इति। तर्क वागीशा अत्राहुः—प्रतिपाद्यवस्थासहकृततत्वस्य शब्देनानुपस्थानात् प्रमाणान्तरस्य वाऽसम्भवादनुपस्थितिरिति कथं तदन्तर्भावेण व्याप्तिग्रह इति भावः।' इति।

तत्र दोषान्तरमपि दर्शयितुमुपक्रमते—**किञ्चे**त्यादिना।

**किञ्चा**न्यदपि वक्तव्यमस्ति। किं तदित्याह—**एवंविधानां** 'निःशेषच्युतचन्दनं—'इत्यादिस्वरूपाणाम्। **कविप्रतिभामात्रजन्मना** कवेः प्रतिभा लोकोत्तरकल्पनोन्मेषशालिनी बुद्धिरिति, कविप्रतिभैवेति कविप्रतिभामात्रं तस्माज्जन्म येषां तेषाम्। व्यधिकरणे बहुब्रीहिः। **काव्यानाम्। प्रामाण्यानावश्यकत्वेन** प्रमाणस्य भावः प्रामाण्य तस्यानावश्यकत्वं तेन। 'हेतुने'ति शेषः। **हेतोरनुमानकारणस्य। सन्दिग्धासिद्धत्वम्।** सन्दिग्धं सन्देहग्रस्त तदसिद्धमिति तस्य भावः तत्त्वम्।

अत्रायम्भावः—'निःशेषच्युतचन्दनं—' इत्यादीनि काव्यानि केवलं कवेः प्रतिभयैव सम्पादितानि, न तत्र काऽपि दूती स्वरूपसती, न वा नायिका क्व पुनस्तचन्दननिश्शेषच्यवनादीनां गाथा। सत्यामेव भित्तौ चित्रसद्भावमभिधातुं युक्तत्वात्। एवं सति—एतदेतन्मुलकमेतत्पुनरेतन्मूलकमिति तत्प्रामाण्याभिधानमपि निरर्थकम्, प्रामाण्यशून्यत्वे च स्फुटमेव हेतोः सन्दिग्धत्वमसिद्धत्वं च।

व्यक्तिवादिना चाधमपदसहायानामेवैषां पदार्थानां व्यञ्जकत्वमुक्तम् । तेन च तत्कान्तस्याधमत्वं प्रामाणिकं न वेति कथमनुमानम् ।

एतेनार्थापत्तिवेद्यत्वमपि व्यङ्ग्यानामपास्तम् । अर्थापत्तेरपि पूर्वसिद्धव्याप्तीच्छामुपजीव्यैव प्रवृत्तेः । यथा—'यो जीवति स कुत्राप्यवतिष्ठते, जीवति चात्र गोष्ठयामविद्यमानश्चैत्रः' इत्यादि ।

---

## विवृतिः

एवंविधेति ।प्रतिपाद्यव्यवस्थासहकृतत्वस्य शब्देनानुपस्थानात्प्रमाणान्तरस्य वासंभवादनुपस्थितिरिति कथं तदन्तर्भावेन व्याप्तिग्रह इति भावः । एतेन हेतोराभासत्वेन । नन्वर्थापत्तेर्व्याप्तिग्रहादिनिरपेक्षत्वेन हेतोराभासत्वमकिंचित्करमित्यत आह—अर्थापत्तिरपीति । व्याप्तीचछां व्याप्तिंग्रहम् । अर्थापत्तिमाह—यथेति । 'चैत्र एतद्गोष्ठीभिन्नस्थानेऽवतिष्ठते' इत्यर्थापत्तिजन्यज्ञानम् । अत्र जीवित्वस्य यत्किंचिदधिकरणावस्थानव्याप्यत्वज्ञानमपेक्षणीयमिति व्याप्तिग्रहप्रदर्शनपुरः सरमर्थापत्तिप्रदर्शनमिदम् । 'जीवति च' इत्यादिकमर्थापत्तिदर्शनम् ।

## विवृतिपूर्तिः

व्यक्तिवादिनेति । व्यक्तिवादिना व्यञ्जनाव्यवस्थापकेनालंकारिकेणेत्यर्थः ॥

एषामिति । चन्दनच्यवनादीनाम् ॥

अर्थापत्तीति । अर्थापत्तिर्हि जैमिनिशासने प्रमाणत्वेन स्वीक्रियते । सा द्विविधा दृष्टा, श्रुता च । तत्र दृष्टा—एकस्मिन्पक्षे आत्मभावो गृहीतश्चेदन्यस्मिन्नप्यात्मभावो गृह्यत एव । श्रुता—यथा दिवा देवदत्तो न भुङ्क्ते, अथ च पीनो दृश्यते । अतोऽवगम्यते रात्रौ भूङ्क्त इति ।

## विज्ञप्रिया

ननु व्यभिचारिण सन्दिग्धेन वा चन्दनच्यवनादिना कथमुपभोगस्य भवन्मते व्यञ्जनापीत्यत आह—व्यक्तिवादिना चेति । व्यञ्जनावादिनेत्यर्थः । फलबलेन व्यञ्जकत्वसिद्धेस्तथोक्तमित्यर्थः । न ह्यनुमान इव व्यञ्जनायामपि व्यभिचारादिकमङ्गमिति भावः । अनुमानपक्षे अधमसन्निहितप्रेषितत्वे सतीति विशेषणदानमपि न सम्भवतीत्याह—तेन चेति । तेन अधमपदेन उक्तमधमत्वमित्यर्थः । इदमुपलक्षणम् । अधमत्वस्य प्रामाणिकत्वेति तस्य दूतीगमनेच्छाराहित्ये सति तावताप्यनुमानासम्भव इत्यपि बोध्यम् ।

व्यङ्ग्यानामर्थापत्तिवेद्यत्वमपि खण्डयति-एतेनार्थापत्तिरिति । व्याप्तिच्छायां व्याप्तिरीतिव्यभिचरितसहचारमित्यर्थः ।

तादृशं सहचारं दर्शयति—यो जीवतीति । तमुपजीव्य प्रवृत्तामर्थापत्तिं दर्शयति—जीवति चेति । तस्मादेतद्गोष्ठीभिन्नस्थलेऽस्तीत्यर्थापत्तिलभ्योऽर्थः । तथा च दर्शितोदाहरणेषु हेतोर्व्यभिचारेण व्याप्तिच्छायापजीवनासम्भवान्नार्थापत्तिरिति भावः ।

## लोचन

व्यक्तिवादिना व्यञ्जनाव्यापारस्थापनार्थमुद्युक्तेन। अधमपदं न पुनस्तस्याधमस्यान्तिकमित्यत्र स्थितम्।

एतेनेति—एतेनानुमानहेत्वाभासदर्शनेन। कुतः? इत्याह—अर्थापत्तेरपीति। पूर्वसिद्धां—पूर्वगृहीतां व्याप्तिच्छायाम्।

यदि खलु पूर्वं जीवतः कुत्रापि स्थानमवगच्छेत्। अर्थापत्तिस्वरूपं हि—दृष्टः श्रुतो वा अन्यथा नोपपद्यते इति, तदर्थकल्पनमर्थापात्तिरिति। तद्भट्टा विवृण्वते—दृष्ट इति। प्रत्यक्षानुमानोपमानार्थापत्त्यभावलक्षणः पञ्चभिः प्रमाणैरूपलब्धः शब्दस्य च प्राधान्यख्यापनार्थं भेदेन निर्दिशति—श्रुत इति। श्रुत इति शब्दलक्षणेन ज्ञातोऽर्थोऽर्थविशेषोऽन्यथा नोपपद्यत इति। शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यत इति दर्शनात्। 'पीनो देवदत्तो दिवा न भुङ्क्तेः' इत्यत्र रात्रौ भुङ्क्ते इति वाक्यशेषः कल्प्यते। प्रभाकरगुरुस्त्वाह—दृष्टः श्रुतो वेति। लौकिकी-यमनास्थोक्तिः। ततो लोकप्रसिद्धयोपलब्धिमात्रे वर्तते, न तु विकल्पप्रतिपादन इति। शब्दो हि कल्प्यतेऽर्थ प्रतीत्यै विप्रकृतसाधनं तद्वरम् अर्थे एव कल्पयतामिति। तेन भट्टमते श्रुतार्थापत्तौ, रात्रौ भुङ्क्ते। इति शब्दः कल्पते। गुरुमते तु अर्थापत्तौ रात्रिभोजनमर्थ एव। एव मत्र वाक्यविशेषः कल्प्यताम्, मैवम्। पीनो देवदत्त इत्यादौ रात्रिभोजने, जीवंश्चैत्रोऽत्र गोष्ठयां न विद्यत इत्यत्र कुत्राप्यवस्थाने पूर्वानुभवव्याप्तिमुपजीव्यैवार्थापत्तेः प्रवृत्तिरिति। व्यङ्ग्यानामनुमानाविषयत्वेन नार्थापत्तिविषयत्वमिति भावः। व्याप्तिश्च साहचर्यनियमः। व्याप्तिशरीरं दर्श-यति—यथेति।

## कुसुमप्रतिमा

सर्वथैवानुमानस्यासम्भुवतां दर्शयितुमाह व्यक्तीति। किञ्चेति चार्थः। व्यक्तिवादिना व्यक्तिविवेकका-रेण, अधमपदसहायानामेव "तस्याधमस्यान्तिकम्" इत्यधमपदेन सह सम्बद्धानामेव। नीचजातीयदूतैसम्भोगेनैव नायकस्यावमत्वोत्पत्तिरिति भावः। पदार्थानां निःशेषादिपदप्रतिपाद्यानां समस्तचन्दनच्यवनादीनामर्थानाम्, व्यञ्ज-कत्वमनुमापकत्वम्। तेन च काव्यानामुक्तरीत्या प्रामाण्यानावश्यकत्वेन च। कथभनुमानमिति। तथा च काव्यानां प्रामाण्यसन्देहेन तत्कालगताधमत्वस्यापि सन्देहात् तत्सम्भीगस्यैव पक्षे मिथ्यात्वज्ञानेन तदनुमानप्रसङ्ग एव नाप्तीति भावः।

एतेनेति। व्यङ्ग्यानामनुमेयत्वनिरासप्रकारेण हेतोराभासत्वेनेत्यर्थः। वेदान्तमते अर्थपत्तिर्नाम पञ्चमं प्रमाणम्। तथा च वेदान्तपरिभाषायां चतुर्थशाब्दप्रमाणनिरूपणान्तरम् "उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः" इति। व्यङ्ग्यानां रसादीनाम् नन्वर्थापत्तौ व्याप्तिज्ञानस्यानावश्यकतया हेतोराभासस्त्वेऽपि क्षतिरित्याह अर्थपत्ते-रपौति। पूर्वसिद्धानां प्राङ्निष्पन्नानां व्याप्तेञ्छायां प्रकारविशेषं व्यतिरेकव्याप्तिमित्यर्थः, उपजीव्यैव आश्रित्यैव प्रवृत्तेः सम्भवात्।

अर्थापत्तेरुदाहरणमाह यथेति। तत्र लक्ष्ये लक्षणसङ्गमनाय य इत्यादिवाक्यं जीवतः कुत्राप्यवस्थाननिय-मप्रदर्शनार्थम्। जीवतीत्यादिकन्तु लक्ष्यं गोष्ठ्यां सभायाम्। तथा च सभायामविद्यमानस्य चैत्रस्य जीवनरूपीप-पाद्यज्ञानेन अन्यत्र विद्यमानतारुपोपपादकल्पनादर्थापत्तिः सङ्गच्छते। तेन च अत्राविद्यमानो जीवो चैवत्रः अन्यत्र विद्यते अन्यथा जीवनासम्भव इति व्यतिरेकव्याप्तिमादायैवार्तापत्तेः प्रवेश इति भावः। तथा चोक्तम्—

"अर्तापत्तेस्तु नैवेह प्रमाणान्तरतेष्यते। व्यतिरेकव्याप्तिबुद्धया चरितार्था हि सा यतः॥"

अतएव नैयायिकमतेऽर्थापत्तेरनुमानन्तर्भावात् तन्मतमाश्रित्यैव ग्रन्थकारः कारिकायां "नानुमानं रसादीनाम्" इत्यनुमानमात्रसुक्रम्। "एतेन" इत्यादिकन्तु वेदान्तमतमाश्रित्याभिहितमिति बोध्यम्। अत्रेदमवधेयम्—"शून्यं वासगृहम्" इत्याद्यु पपाद्यकाव्यज्ञानेन श्रृङ्गाराद्यु पपादककल्पनरूपार्थापत्त्या तेषां श्रृङ्गारादीनां ज्ञानं न सम्भवति; रसानामास्वादकालमात्रीतपन्नतया पूर्व सिद्धत्वात्वाभावेन व्यतिरेकव्याप्तिज्ञानस्थाप्य सम्भवात्। अतएव पूर्वसिद्धव्याप्तिच्छायामित्युक्तम्।

## विमला

एतेन—हेतोराभासत्वेन इत्यर्थः। पूर्वेति।—पूर्वं सिद्धा—निर्णीता इत्यर्थः, या व्याप्तिः तस्याः इच्छां—ज्ञानमित्यर्थः, उपजीव्य—अवलम्ब्य इत्यर्थः, अर्थस्य—अपरार्थस्य, आपत्तिः—आक्षेपः, अर्थापत्तिः, यथा "जीवति" इति,—यतो जीवति, अतः कुत्रापि—गोष्ठीभिन्नेऽपि स्थाने, अवतिष्ठते इति अर्थापत्त्या प्रतीयते। अत्र "जीवति" इति व्याप्तिग्राहकमित्यवधेयम्। अत्र जीवित्वस्य यत्किञ्चिदधिकरणावस्थानव्याप्यत्वज्ञानमपेक्षणीयमिति व्याप्तिग्रहप्रदर्शनपुरःसरमर्थापत्तिप्रदर्शनमिदम्। "जीवति च" इत्यादिकर्थापत्तिदर्शन्। जैमिन्यनुमताऽर्थापत्तिः दृष्टश्रुतधर्माभ्यां द्विप्रकारा; तत्र दृष्टाऽर्थापत्तिः,—एकत्र अधिकरणे यद्भाव उपलब्धः, अपरत्रापि तङ्गभावः, अङ्गीक्रियते एव। श्रुतार्थापत्तिः यथा,—"पीनो देवदत्तो दिवा न भुङ्क्ते" अतोऽवगम्यते रात्रौ भुङ्क्ते इति।

## लक्ष्मी

ननु व्यभिचारिणा सन्दिग्धेन वा चन्दनच्यवनादिना कथमुपभोगस्य भवन्मते व्यञ्जनापीत्यत आह—व्यक्तिवादिना चेति। व्यञ्जनावादिना व्यञ्जनाव्यवस्थापकेनालङ्कारिकेणेत्यर्थः, एवञ्च व्यक्तिवादिनेत्यस्य विवरणं व्यक्तिविवेककारेणेति तद्धेयमेव, प्रदीपादिग्रन्थास्वरसात्। 'अधमपदसहायानामेव तस्याधमस्यान्तिकम्' इत्यधमपदेन सह संश्लिष्टानामेव। नायकेऽधमत्वं च निकृष्टजातीयदूतीरमणेनैवेति भावः। एषां पदार्थानां चन्दनच्यवनाद्यर्थानाम् अत्राधमपदार्थसहकारेण यथाव्यञ्जकत्वं तथा अधमपदार्थसहकारेण नुमापकत्वम्पि स्यादिति नाशङ्कनीयमित्यत आह—न तेन चेति।तेन काव्यानां दर्शितरीत्याप्रामाण्यानावश्यकत्वेन अधमत्वस्य पक्षधर्मता सन्दैहात्कथमंनुमानम्? न च शब्दादेव निश्चयः, तस्य कोपाकुलितकामिनीवचनत्वेनानिश्चयाकत्वादिति भावः। तथा च नायकस्याधमत्वानिश्चयेन पूर्ववत्सन्दिग्धासिद्धिरित्याशयः। इदमुपलक्षणम्—अधमत्वस्य प्रामाणिकत्वेऽपि तस्य दूतीगमनेच्छाराहित्ये सति तावताऽप्यनुमानासम्भव इत्यपि बोध्यम्। ननु व्यञ्जनास्वीकर्त्तृनयेऽप्येष दोषोऽस्त्येव तथा च व्यञ्जना कथमिति चेत्? मैवम्, तत्र व्याप्तेरनङ्गत्वेन सम्भावनामात्रादेव व्यङ्ग्यप्रीतिरिति व्यञ्जनावादिमते सर्वथा दोषाभावस्य वक्तुं शक्यत्वात्।

व्यङ्ग्यानामर्थापत्तिवेद्यत्वमपि खण्डयितुमाह—एतेनेति। 'इदमस्तु सन्निकृष्टं समीपतरवर्त्ति चैतदो रूपम्। अदसस्तु विपकृष्टं तदिति परोक्षे विजानीयात्' इत्युक्तदिशा एतच्छब्देनानन्तरप्रतिपादितानुमानहेत्वाभासप्रदर्शनेनेत्यर्थः। भाट्टमीमांसकमते अर्थापत्तिर्नाम पञ्चमं प्रमाणं तद्वेद्यत्वं तद्ग्राह्यत्वमपि व्यङ्ग्यानां रसादीनाम्। अपास्तं परास्तं खण्डितमित्यर्थः। नन्वर्थापत्तेर्व्याप्तिग्रहादिनिरपेक्षत्वेन हेतोराभासत्वेऽपि का क्षतिरत आह—

अर्थापत्तेरपीति। पूर्वसिद्धानां प्राङ्निष्पन्नानां व्याप्तीच्छां व्याप्तिग्रहम् अव्यभिचरितसहचारमित्यर्थः, उपजीव्यैव आश्रित्यैव प्रवृत्तेः सम्भवात्। व्याप्तिश्च साहचर्यनियमः। व्याप्तिशरीरं ग्राहयति—यथेति। गोष्ठयां सभायाम्।

पूर्वसिद्धव्याप्तीच्छायामित्युक्त्या 'शून्यं वासगृहम्' इत्यादि प्रतिपाद्यकाव्यज्ञानेन श्रृङ्गारादिप्रतिपादककल्पनारूपार्थापत्त्या तेषां श्रृङ्गारादीनां ज्ञानं भवितुं नार्हति रसानां चर्वणाकालमात्रोद्भवतया पूर्वसिद्धत्वाभावेन व्यतिरेकव्याप्तिज्ञानस्यापि भवितुमशक्यत्वात्।

## रुचिरा

नन्वेवं सति व्यञ्जनाऽपि कथं तत्रेत्याह—**व्यक्तिवादिने**त्यादिना।

**चा**थवा। **व्यक्तिवादिना** व्यञ्जनावादिना। 'निःशेषच्युतचन्दनं—' इत्यत्रेति शेषः। **अधमपदसहायाना** मधमपदं सहायः सहायकं येषां तेषाम्। एव नतु तद्भिन्नानामपि। **एषाम्। पदार्थानां** चन्दनच्यवनादीनाम्। **व्यञ्जकत्वं** व्यञ्जनया प्रतिपादकत्वम्। **उक्तम्। तेन** तथाऽभिधानेन। **च** पुनः। **तत्कान्तस्य** तस्याः कान्त इति तस्य। **अधमत्वं** नीचत्वम्। **प्रामाणिकं** प्रमाणसिद्धम्। 'अस्ती'ति शेषः। **वा**ऽथवा। **न** प्रामाणिकमिति शेषः। **इतीत्येवं** सन्देहे। **कथं** केन प्रकारेण हेतुना वा। **अनुमानं** 'सिध्येते'ति शेषः।

अत्रेदं बोध्यम्—'निश्शेषच्युतचन्दनं—' इत्यादिर्नायकमानेतुमेव प्रेषितां तं पुनः सम्भुज्यैव, न तु तं पुनरनुनीय समुपागतां दूतीं प्रति स्नानकार्यप्रकाशनमुखेन सम्भोगं प्रकाशयन्त्या विदग्धाया नायिकाया उक्तिरियम्। अथ—'तस्याधमस्यान्तिक' मित्यत्रा 'धमस्येति' पदम्। तच्च—दुःखप्रयोजककर्मशीलतां प्रतिपादयति। तदर्थः पुनर्वाच्यतादशायां कर्मान्तरसाधारण्येनावस्थितोऽपि व्यङ्ग्यतादशायां दूतीसम्भोगरूपदुःखप्रयोजककर्मशीलत्वेन पर्यवसायीत्यधमपदार्थ एवैष चन्दनच्यवनादीनां पदार्थानां साहाय्यमुपपादयति। एतेषां स्नानकार्यत्वेन निबद्धत्वेऽपि योग्यतया सम्भोगाङ्गभूतालिङ्गनादिकार्यत्वस्य प्रतिसन्धानेऽपि तद्व्यञ्जनामुखेन तत्साहाय्यैनैव सम्भोगगमकत्वमिति विशेषः। एतेन च नीचकर्मकारित्वस्याधमपदार्थस्य साधकं व्यङ्ग्यमित्यापास्तम्। प्रेषणसापेक्षत्वेन विस्मृतप्रेमताऽपि तत्सम्भवात्। एवं च—अत्राधमपदार्थ एव प्रधानभूतः। स च प्रमाणादनपेतो वेति सन्देहापन्न एव नतु निर्धारितः। तथा सति तस्य पक्षधर्मतासन्देहान्नानुमानं सङ्गच्छते। नच शब्दादेव निश्चय इति वक्तुं शक्यम्। तस्य रोषाकुलितकामिनीवचनत्वेनानिश्चयाकत्वात्। एवं च—नायकस्याधमत्वानिश्चये सन्दिग्धासिद्धत्वमिति स्थितम्। न च व्यञ्जनापक्षेऽप्ययं दोष इति शङ्क्यम्। 'एवंविधादेवंविधोऽर्थउपपत्त्यनपेक्षित्वेऽपि स्फुरती'त्यस्य तत्र भूषणत्वात्। इति।

अथोक्तस्यार्थस्यानुषङ्गिकं फलं दर्शयति—**एतेने**त्यादिना।

**एतेन** 'व्यङ्ग्यानामनुमानबोध्यत्वनिरासेने' ति शेषः। **व्यङ्ग्यानां** व्यञ्जनया बोध्यानाम्। **अर्थापत्तिवेद्यत्वम**र्थस्याभिमतार्थस्यापत्तिरापाततः प्रतीतिस्तस्यावेद्यत्वं ज्ञेयत्वम्। **अपि। अपास्तं** निरस्तम्। कुत इत्याह-अर्थापत्तेः। **अपि। पूर्वसिद्धव्याप्तीच्छां** पूर्वसिद्धाऽसौ व्याप्तिरिति तस्या इच्छेति ताम्। **उपजीव्या**श्रित्यावलम्ब्येति यावत्। **एव** नत्वनुपजीव्यापि। **प्रवृत्तेः** 'बोधयितु' मिति शेषः। **यथा। 'यः** कश्चित्। **जीवति। सः। कुत्रापि** कुत्रचित्। **अवतिष्ठते। च** पुनः। 'य' इति शेषः। **जीवति** 'स' इति शेषः। **अत्रास्याम्। गोष्ठयां** सभायाम्। **अविद्यमानः** न विद्यते इत्यसौ तथोक्तः। **चैत्रः।' इत्यादि**।

अत्रायं निष्कर्षः—अर्तापत्तिरपि प्रमाणान्तरमिति प्राचां मतम्। यथा—'आयुष्मान् देवदत्तो गृहे नास्ती' त्यत्रायुष्मतो देवदत्तस्य गृहासद्भावे परत्र सद्भावोऽर्थतः प्रतिपद्यते, यथा वा—'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र पीनस्य देवदत्तस्य दिवा निराहारिणो नक्तमाहारित्वमर्थादापन्नम्। असावप्यर्थापत्तिर्न व्यङ्ग्यं बोधयितुं क्षमते। व्यङ्ग्यस्य व्याप्तिग्रहानधीनत्वात्, अर्थापत्तेः पुनर्व्याप्तिग्रहोपजीव्यात्वात्। यथा हि-देवदत्तो बहिरवतिष्ठते तस्यायुष्मत्त्वेऽपि गृहेऽनुपलब्धेः, यस्ययस्यायुष्मत्त्वेऽपि गृहेऽनुपलब्धिस्तस्यतस्य बहिरवस्थानमिति, देवदत्तो नक्तंभोजी दिवाऽभोजित्वेऽपि पीनत्वात्, यस्ययस्य दिवाऽभोजित्वेऽपि पीनत्वं तस्यतस्य नक्तम्भोजित्वम्। इति वा। इत्यत एवोदाजिहीर्षतोक्तम्—'यो जीवती' त्यादि। इति। नव्यानां पुनर्मते नानुमानादतिरिक्ताऽर्थापत्तिः। तेनैवैतस्या गतार्थत्वात्। अस्त्वेवम्, किन्तु यन्मतेऽर्थापत्तिः प्रमाणान्तरं, तैरपि 'तया व्यङ्ग्यार्थबोध' इति न वक्तुं शक्यम्। व्याप्तिग्रहमनुपजीव्य तत्सत्ताया एव संशयापत्तेः। यन्मने नास्त्यसौ प्रमाणान्तरं तत्कृते नायं वादः। इति।

किञ्च। वस्त्रविक्रयादौ तर्जनीतोलनेन दशसंख्यादिवत्सूचनबुद्धिवेद्योऽप्ययं न भवति। सूचनबुद्धेरपि संकेतादिलौकिकप्रमाणसापेक्षकत्वेनानुमानप्रकारताङ्गीकारात्।

यच्च 'संस्कारजन्यत्वाद्रसादिबुद्धिः स्मृतिः' इति केचित्। तत्रापि प्रत्यभिज्ञायामनैकान्तिकतया हेतोराभासता।

'दुर्गालङ्घित—' इत्यादौ (५६ पृ.) च द्वितीयार्थो नास्त्येव—इति यदुक्तं महिमभट्टेन तदनुभवसिद्धिमपलपतो गजनिमीलिकैव।

---

## विवृतिः

तर्जनीतोलनेन तर्जन्युत्क्षेपदर्शनेन। 'सूच्यतेऽनेन' इति सूचनं हस्तचेष्टादिरूपः संकेतस्तद्बुद्धिवेद्यः तद्बुद्धिजन्यबोधविषयः। अयं व्यङ्ग्यपदार्थः। संकेतादीत्यादिपदेन संकेतग्रहवेद्यानां ग्रहणम्। लौकिकप्रमाणसापेक्षत्वेन सहचारग्रहजन्यत्वेन। अनुमानप्रकारताङ्गीकारात् व्याप्तिज्ञानविशेषत्वस्वीकारात्। प्रकृते वक्तुरुक्तिवैचित्र्यविशेषः संकेतः। तद्गोचरव्यङ्ग्यार्थव्याप्तिग्रहेणैव व्यङ्ग्यग्रहः, न तु तदर्थं व्यञ्जना स्वीकार्या। एवं च सति यत्र वक्तुरुक्तिवैचित्र्यविशेषसत्त्वेऽपि सर्वेषामेवप श्रोतृणामनभिज्ञतया न व्यङ्ग्यार्थबोधस्तत्रैव व्यभिचार इति, तदपि न सम्यगिति भावः। 'स्मृतिर्न च' इति कारिकास्थं विवृणोति—यच्चेति। संस्कारजन्यत्वात् संस्कारजन्यज्ञानत्वात्। अन्यथा संस्कारध्वंसादौ तज्जन्यत्वस्य सत्त्वाद् व्यभिचारस्यात्यन्तस्फुटत्वापत्तेः। प्रत्यभिज्ञायां सोऽयमित्याकारकज्ञाने अनैकान्तिकतया साध्यं विना विद्यमानतया हेतोः संस्कारजन्यज्ञानत्वस्य सत्त्वाद् व्यभिचारस्यात्यन्तस्फुटत्वापत्तेः। प्रत्यभिज्ञायां सोऽयमित्याकारकज्ञाने अनैकान्तिकतया साध्यं विना विद्यामानतया हेतोः संस्कारजन्यज्ञानत्वस्य आभासता व्यभिचारिता। एतच्च साधनं रसप्रतीतिकारणीभूतवासनायाः संस्कारविशेषत्ववादिमते। अतिरिक्तत्ववादिमते तु हेतोः पक्षावृत्तित्वेन स्वरूपासिद्धिरपि दोषः न तु व्यभिचारमात्रम्। ये तु प्रत्यभिज्ञायाः स्मृतित्वापत्तिबयेन स्मृतिजन्यत्वमेव मन्यन्ते, न तु संस्कारजन्यत्वम्। तन्मते व्यभिचारो न भवतीत्यवधेयम्। अभिधामूलव्यञ्जनामनङ्गीकुर्वतो मतं दूषयति—दुर्गेत्यादि। द्वितीयार्थोऽप्राकरणिकार्थबोधः। गजनिमीलिका हस्तिन इव मूर्खत्वम्। उपसंहरति—तदेवमिति। तत्तद्रसादिलक्षणार्थस्य तत्तद्रसादिस्वरूपार्थस्य। 'विलक्षणार्थस्य' इति पाठे तत्तद्रसादिरूपस्य। वाच्यादिविलक्षणस्येत्यर्थः। अनुमानादीत्यादिपदेन अर्थापत्त्यादेर्ग्रहणम्। अभिधादीत्यादिपदेन लक्षणातात्पर्ययोग्रहणम्॥

## विज्ञप्रिया

सूचना नाम कश्चिद् व्यापारः कैश्चिदुच्यते तद्गम्य एव व्यङ्ग्यार्थः इति मतं दूषयितुमाह—किञ्चेति। दशसंख्यादिवदिति—दशसंख्यादिर्यथा तर्जन्यादितोलनाधीनसूचनाबुद्धिगम्यस्तथा व्यङ्ग्यार्थोऽपीत्यर्थः।

सूचनाप्यचनुमितावन्तर्भवतीति सिद्धान्तयति—सूचनाबुद्धेरपीति। अनुमानप्रकारता अनुमितिस्वरूपता। तथा च यद्यङ्गुलितोलनादौ व्यभिचारशङ्का न भवति तत्रानुमानम्। चन्दनच्यवनादौ तु व्यभिचारग्रहात् सम्भोगादिबुद्धिव्यञ्जनाधीनैवेति भावः।

रसादिबुद्धेः स्मृतिरूपत्वं संस्कारजन्यत्वेनानुमन्यमानानां मतं दूषयितुमाह—तत्रापीति। इदं चापातत एव; सर्वांशे संस्कारजन्यत्वस्य हेतोरव्यभिचारात्। किन्तु स्वप्रकाशानन्दस्वरूपस्य रसस्य स्मृतित्वासम्भव एव दोषः।

द्वितीयार्थो महेशरूपो नास्त्येवेति—बुद्धिविषयो नास्त्येवेत्यर्थः। अपलपत इत्यस्य, उपरि, इति शेषः गजनिमीलिकाऽवज्ञा।

## लोचन

अधुना व्यङ्ग्यानाममनुमानाविषयत्वेन चेष्टाप्रमाणाविषयत्वपीत्याह—किञ्चेति। अयं—व्यङ्ग्यः। संकेतादिलौकिकप्रमाणसापेक्षत्वेनेत्यनेन यत्र यत्रोर्ध्वतर्जनी तत्र तत्र दशसंख्येति पुनर्गृहीतव्याप्तिपुरस्कारवचनम्।

स्मृतिर्न च रसादिधीः इतिकारिकापदार्थ विशदयति—यच्चेति। अनैकान्तिकत्वं सोऽयं देवदत्त इत्यादिज्ञानरूपायाः प्रत्यभिज्ञाया अपि संस्कारजन्यत्वात्

गजनिमीलिकैवेति—पर्यालोचनं विनापि लोकापवादशङ्कयामत्तगजवच्चक्षुषी निमिल्यवचनमित्यर्थः।

## कुसुमप्रतिमा

मतान्तरं निरसितुमाह किञ्चेति। सूच्यते अनेनेति सूचनं हस्तादिसङ्केतविशेषः तज्जन्या या बुद्धिस्तया वेद्यः। अयं रसादिव्यङ्ग्यार्थः। अनुमानप्रकारताया अनुमितिविशेषत्वस्य अङ्गीकारात्। अत्रायामाशयः—यदा विक्रेता कस्यचित् क्रेतुः समीपे एवं सङ्केतयंति। यथा—"बहुतरक्रेतृमध्ये त्वया वस्त्र मूल्ये जिज्ञासिते अन्येभ्यो गोपयितुं मया च तर्जन्यङ्गुल्युत्तोलने कृते त्वया दशसंख्या बोद्धव्या" इत्यादि, तदेव विक्रेतुस्तर्जनीतोलनदर्शनेन क्रेता दशसंख्या बुध्यते, न पुनस्तादृशसङ्केताभावेऽपि। एवञ्च तत्र क्रेतिर्दशसंख्याज्ञानं सूचनबुद्धिरूपानुमितिरेपव। तथा च एतद्वस्त्रं दशानकमूल्यकं पूर्वसूचिततर्जनीतौलनज्ञापितत्वादिति। इत्यञ्च काव्यशब्देषु रसादिज्ञापनाय तादृशसङ्केताभावेन काव्यशब्देभ्यो रसादिषुसूचनबुद्दिरूपानुमितेः सम्भावनैव नास्ति। इत्यतः काव्यं रसादिमत् सूचनबुद्धिवेद्यत्वादित्यत्र अयं गोत्ववान् अश्वत्वादित्यादिवत् विरुद्धाख्यहेत्वाभास एवेति।

इदानीं "स्मृतिर्न च रसादिधोः" इति कारिकांशं व्याख्यातुमाह यच्चेति। केचित् "रसादि बुद्धिः स्मृतिः संस्कारजन्यत्वात्" इत्यनुमानेन रसादिव्यङ्ग्यार्थ मात्रज्ञानस्य यच्च स्मृतिरूपत्वमाहुरित्यर्थः। संस्कारो भावनाख्यसंस्कारः। तथा च भावनावशादतीतघटादिप्रतीतिरिव काव्यार्थभावनावशात् सहृदयानां या रसादिप्रतीतिः सा स्मृतिरूपैवेत्यनुमानसिद्धतया तदर्थं व्यञ्जनाङ्गीकारो व्यर्थ एवेति तेषामाशयः।

दूषयति तत्रापीति। हेतोः संस्कारजन्यत्वादिहेतोः, प्रत्यभिज्ञायामपि वृत्तित्वेन अनैकानितिकतया साध्यवत्पक्षमात्रनियततया आभासता। तथा च प्रत्यभिज्ञा नाम अनुभूतपदार्थस्य पुनरनुभवः। यथा—वाराणस्यां यो दृष्टः स एवायं देवदत्त इति। अस्याञ्च प्रत्यक्षविशेषरूपायां साध्यस्मृतित्वाभाववत्यां प्रत्यभिज्ञायमपि भावनाख्यसंस्कारजन्यत्वरूपहेतोः सत्त्वात् पूर्ववदेव साधारणरूपानैकान्तिकनामा हेत्वाभास इत्याशयः।

अनुमानसामग्रीविरहस्थले कथं व्यङ्ग्यार्थप्रतीतिरित्यपेक्षायां व्यक्तिविवेककारेण यदुक्तं तदपि दूषयितुमाह दुर्गेति। द्वितायार्थः पार्वतीवल्लभरूपव्यङ्ग्यार्थः, नास्त्येव, तत्प्रतीत्यभावादिति भावः। अनुभवसिद्धम-

पलपत इति हेतुगर्भं वशेषणम्। अपलपतोऽनङ्गीकुर्वती महिमाभट्टस्य, गजनिमौलिकैव हस्तिमूरवं तैव, सर्वजनप्रतीतेऽपि विषये तस्य प्रतीत्यनुदयादित्याशयः।

## विमला

किञ्चेति।—तर्जनीतीलनेन—तर्जन्या उत्क्षेपेण, सूचनबुद्धिवेद्यः,—सूचनं सङ्केतः, तद्विषयिणी या बुद्धिः तद्वेद्यः, अयं—व्यङ्ग्यरूपोऽर्थ इत्यर्थः, सूचनबुद्धेरपि सङ्केतादि लौकिकप्रमाणसापेक्षत्वेन—सहचारग्रहजन्यत्वेन; अयं भावः,—यदि कश्चित् पूर्वं व्यवहारार्थं व्यवहारिकेण सह साधारणजनगोपनार्थम् एवं व्यवस्थापयति, यत् मम तर्जनीतीलने युष्माभिर्दशसंख्या बोद्धव्येति, तदा तत्सूचनेन तस्य व्यवहारः सिध्यति; तत्र च सूचने ग्रामाणम्य सद्भावेन, अनुमानप्रकारताऽङ्गीकारात्—व्याप्तिज्ञानविशेषत्वस्वीकारात्, इति, सा सूचनबुद्धिरनुमानविशेष एवेति भावः। प्रकृते वक्तुरुक्तिवैचित्रयविशेष एव सङ्केतः, तेन व्यङ्ग्यार्थप्रतीतिर्व्याप्तिग्रहेणैव भवतीति कथं व्यञ्जनास्वीकारः? इत्यापत्तिरपि न भवति। वक्तुरुक्तिविशेषवैचित्रयसत्त्वेऽपि सर्वेषामेव श्रोतृणामनभिज्ञतया व्यङ्ग्यार्थानवबोधस्थले व्यभिचारदर्शनादिति बोध्यम्।

"स्मृतिनं वा" इति कारिकास्थं विवृणीति, यच्चेति।—संस्कारजन्यत्वात्,—संस्कारजन्यज्ञानत्वादित्यर्थः, अन्यथा संस्कारादौ संस्कारध्वंसादौ तज्जन्यत्वस्य सत्त्वात् व्यभिचारस्यात्यन्तस्फुटत्वापत्तेः। प्रत्यभिज्ञायां—सोऽयमित्याकारकप्रतीतौ, अनैकान्तिकतया—साध्यं विना विद्यमानतया, हेतोः,—संस्कारजन्यज्ञानत्वरूपस्य, आभासता—व्यभिचारिता, दुष्टता इत्यर्थः। एतञ्च साधनं रसप्रतीतिकारणीभूतवासनायाः संस्कारविशेषत्वादिमते। अतिरिक्तत्वादिमते तु हेतोः पक्षावृत्तित्वेन स्वरूपासिद्धिरपि दोषः, न तु व्यभिचारमात्रम्। ये तु प्रत्यभिज्ञायाः स्मृतित्वापत्तिभयेन स्मृतिजन्यत्वमेव मन्यन्ते, न तु व्यभिचारमात्रम्। ये तु प्रत्यभिज्ञायाः स्मृतित्वापत्तिभयेन स्मृतिजन्यत्वमेव मन्यन्ते, न तु संस्कारजन्यत्वं, तन्मते व्यभिचारो न भवतीत्यवधेयम्।

अभिधामूलव्यञ्जनामनङ्गीकुर्वतो मतं दूषयति, दुर्गेत्यादिं।—द्वितीयार्थः, अप्राकरणिकार्थबोधः, अपलपतः—निह्नुवास्य, महिमाभट्टस्य इत्यर्थः, गजनिमीलिका—हस्तिवत् मूर्खता इति भावः।

## लक्ष्मी

अधुना व्यङ्ग्यानामनुमानागम्यत्वं प्रदश्र्य सूचनानाम कश्चिद्व्यापारः कैश्चिदुच्यते तद्गम्य एव व्यङ्ग्यार्थ इति मतं दूषयितुमाह—किञ्चेति। तर्जनीतोलनेन तर्जन्युत्क्षेपदर्शनेन दशसंख्यादिवत् दशसंख्यादिर्यथा तर्जन्यादितोलनाधीनसूचना बुद्धिगम्यस्तथा व्यङ्ग्यार्थोऽपीत्यर्थः। सूच्यतेऽनेनेति सूचनं हस्तचेष्टादिसङ्केतविशेषस्तज्जन्या या बुद्धिस्तया वेद्यो ज्ञेयः। अयं व्यङ्ग्यपदार्थः। सूचनाऽनुमितावप्यन्तर्भवतीति सिद्धान्तयति—सूचनाबुद्धेरपीति। संकेतादिलौकिकप्रमाणसापेक्षत्वे नेत्यनेन यत्र यत्रोर्ध्वतर्जनी तत्र तत्र दश संख्येति पुनर्गृहीतव्याप्तिपुरस्कारवचनमिति प्रतीयते। अनुमानप्रकारताया अनुमितिस्वरूपताया अङ्गीकारात्। अत्रायमभिप्रायः—यदा कोऽपि वणिक् कस्यचित् क्रयणार्थिनः संविधे इत्थं सङ्केतयति यथा—अधिकतरक्रयणार्थिमध्ये भवता वसनमूल्येऽन्वेष्टिते परेभ्यो गोपयितुं मया तर्जन्याद्युत्तोलने कृते सति भवता दशसंख्या ज्ञातव्या' इत्यादि, तदैव बणिजस्तर्जनीतोलनदर्शनेन क्रयणार्थी दशसंख्यां जानाति न पुनस्तथाविधसङ्केतासत्त्वेऽपि। तथा च तत्र क्रयणार्थिनः दशसंख्याबोधसूचनबुद्धिरूपानुमितिरेव यदि व्यभिचारशङ्का न भवेत्तदा। तथा चानुमानम्-एतद्वसनं दशरू-

प्यकमूल्यकं प्राक् सूचिततर्जनीतोलनबोधितत्वात्' इति । इत्थञ्च रसादिबोधनाय काव्यशब्देषु तथाविधसङ्केताग्रहेण रसादिषु सूचनाबुद्धिरूपानुमितेः काव्यशब्देभ्यः प्रतिपादयितुमशक्यत्वात् एवं च चन्दनच्यवनादौ व्यभिचारग्रहात् सम्भोगादिबुद्धिर्व्यञ्जनाधीनैवेति भावः ।

'स्मृतिर्नच रसादिधीः' इतिकारिकापदार्थ स्पष्टयति—यच्चेति । केचित् 'रसादिबुद्धिः स्मृतिः संस्कारजन्यत्वात्' इत्यनुमानेन रसादिव्यङ्ग्यार्थमात्रज्ञानस्य यच्च स्मृतिरूपत्वं वदन्तीत्यर्थः संस्कार जन्यत्वादित्यस्य संस्कारजन्यज्ञानत्वादित्यर्थः, अन्यथा संस्कारध्वंसादौ तज्जन्यत्वस्य विद्यमानत्वात् व्यभिचार आपद्येत । संस्कारो ह्यत्र वासनाख्यसंस्कारः । एवञ्च वासनाबलादतीतघटादिज्ञानमिव काव्यार्थवासनाबलात् सामाजिकानां यद्रसज्ञानं तत् स्मृतिरूपमेवेत्यनुमानगम्यतया तदर्थं व्यञ्जनास्वीकारो व्यर्थ एवेति तेषामभिप्रायः ।

तत्र सिद्धान्तयितुं दूषयति—तत्रापीति । प्रत्यभिज्ञा नाम अनुभूतपदार्थस्य पुनरनुभवः । यथा—'पाटलिपुत्रे यो मया दृष्टः स एवायं पुरुषः' इति । एवं च प्रत्यभिज्ञायां सोऽयमित्याकारकज्ञाने अनैकान्तिकतया साध्यमन्तरेण विद्यमानतया हेतोः संस्कारजन्यज्ञानत्वस्य आभासता व्यभिचारिता तथा च प्रत्यक्षविशेषरूपायां साध्यस्मृतित्वाभावदशायां प्रत्यभिज्ञायामपि वासनाख्यसंस्कारजन्यत्वरूपहेतोर्विद्यमानत्वात् पूर्ववदेव साधारणाख्यहेत्वाभास इतिभावः ।

अत्र विशेषः—एतच्च साधनं रसप्रतीतिकारिणीभूतवासनायाः संस्कारविशेषणत्ववादिमतेन । तदतिरिक्तत्वादिमतेन तु साधनस्य पक्षासत्त्वेन न केवलं व्यभिचारमात्रमेव दोषः किन्तु स्वरूपासिद्धिरपीति । ये खलु प्रत्यभिज्ञायाः स्मृतित्वापत्तिशङ्कया स्मृतिजन्यत्वमेव न तु संस्कारजन्यत्वमिति स्वीकुर्वन्ति तन्मते व्यभिचारो न भवतीत्यवगन्तव्यम् ।

अभिधामूलव्यञ्जनामस्वीकुर्वन्तो व्यक्तिविवेककृतो मतं दूषयितुमुत्थापयति—'दुर्गालङ्घितेति ।' द्वितीयार्थोऽप्राकरणिकपार्वतीवल्लभरूपव्यङ्ग्ययोऽर्थः, नास्त्येव तत्प्रतीत्यभावाद्बुद्धिविषयो नास्त्येवेत्यर्थः । अपलपतोऽस्वीकुर्वतो व्यक्तिविवेकस्य गजनिमीलिकैव पर्यालोचनं विनापि लोकापवादशङ्कया मत्तगजवच्चक्षुषी निमील्य वचनमित्यर्थः । सर्वजनावगतेऽपि विषये तस्यानवगतेरिति भावः ।

## रुचिरा

एवमर्थापत्तेर्व्यङ्ग्यबोधकर्ता निरस्य चेष्टाया अपि निरसितुमाह—**किञ्चेत्यादि** ।

**किञ्च** । 'एतेने' ति शेषः । **वस्त्रविक्रयादौ** वस्त्रस्य विक्रय इति, स आदौ यस्य तस्मिन् । वस्त्रविक्रयस्वर्णादिपरिमाणकथनयुवत्यादीयत्तासङ्केतादौ । 'विषय' इति शेषः । **तर्जनीतोलनेन** तर्जन्या तन्नाम्न्याऽऽङ्गुल्या तोलनं तेन तद्द्वारेति यावत् । इदमतन्त्रम् । तेन हस्तसम्पुटादीनामपि लाभः । **दशसङ्ख्याऽऽदिवद्** दशसङ्ख्यादीनामिवेति । 'दशे'त्यतन्त्रम् । 'तत्र तस्येव ।' ५/१/११६ इति वतिः । **सूचनबुद्धिवेद्यः** सूचनस्य हस्तचेष्टाऽऽदिरूपस्य सङ्केतस्य बुद्धिस्तया वेद्यो ज्ञातुं शक्यः । सूच्यतेऽनेनेति सूचनम् । 'करणाधिकरणयोश्च ।' ३/३/११७ इति करणे ल्युट् । सङ्केत बुद्धिजन्यबोधविषय इति यावत् । **अपि** । **अयं** 'व्यङ्ग्यार्थ' इति शेषः । न नैव । **भवति** । 'इत्यपि सूचित'मिति शेषः । कुत इत्यत आह—**सूचनबुद्धेः** सङ्केतसम्बन्धिन्या बुद्धेः । **अपि** । **सङ्केतादिलौकिकप्रमाणसापेक्षत्वेन** सङ्केतादीनि तानि लौकिकप्रमाणानीति तेषां सापेक्षत्वं तेन तद्द्वारेति यावत् । **न** । **अनुमानप्रकारताऽङ्गीकारात्** । अनुमानस्य प्रकारता विभेदस्तस्याः अङ्गीकारस्तस्मात् ।

अत्रेदं तत्त्वम्—'चेष्टाऽपि प्रमाणन्तरमिति मतं केषाञ्चित्। यथा—'एतद्वस्त्रं दशरूप्यकमूल्यकम्, एतत्स्वर्णं षोडशाणकतोलकम्; इयं षोडशवर्षीया' इत्यादौ वस्त्रादीनां तर्जनीतोलनादिना मूल्याद्यवगमः। इति असावपि न व्यङ्ग्यबोधनक्षमा। व्यङ्ग्यस्य लौकिकप्रमाणानधीनत्वात्। व्यङ्ग्यो ह्यलौकिकोऽर्थः, प्रत्यक्षादिप्रमाणजाततन्त्रः; तत्तामालम्ब्यैव स्फुरणशीलत्वाभावात्। चेष्टायाः पुनः सङ्केतादिप्रमाणाधीनत्वात्। यथा हि—'एतद्वस्त्रं दशरूप्यकमूल्यकम्, एतत्परिमित्त्वात्। एतत् स्वर्णं षोडशाणकतोलकमेतत्समानत्वात्। इयं षोडशवर्षीया एवम्भूताङ्गत्वात्। इति। यथा वा—इयं षोडशवर्षीया वर्धमानम्लानपीनत्वोन्नतत्वादिप्रयोधरादिशालित्वात्, यन्नैवं तन्नैवम्। इति। इतरेषां पुनर्मते नानुमानादतिरिक्तं चेष्टानाम प्रमाणम्, तदुक्तं मुक्तावलीकारैः—'चेष्टाऽपि न प्रमाणान्तरम्, तस्याः सङ्केताग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वात् शब्द एवान्तर्भावाद्। यत्र तु व्याप्त्यादिग्रहस्तत्रानुमितिरेव।' इति।

ननु तर्हि स्मृतिरेव स्याद् व्यङ्ग्यावगमस्वरूपभूतेति चेन्नेत्याह—३०२ **स्मृति**रित्यादि।

३०२ **रसादिधी** रसादीनां व्यङ्ग्यानां धीर्बुद्धिः। **च** पुनः। **स्मृतिः** स्मरणं संस्कारमात्रजन्यो ज्ञानविशेषः। न 'सम्भवती'ति शेषः॥ २९६॥

अत्रेदं निष्कृष्टम्—दृष्टानां श्रुतानां वा पदार्थानां दर्शनेन श्रवणेन वा मनोनिविष्टत्वं संस्कारस्तन्मात्रजन्यं पुनर्ज्ञानं स्मृतिरित्युच्यते। मात्रपदेन प्रत्यभिज्ञायामतिव्याप्तेर्निरासः। तथा च—अनुभूतवस्तुनः उद्बोधसहकारेण संस्काराधीनं ज्ञानं स्मृतिरिति फलितम्। यथा हि—दृष्टं श्रुतं दृष्ट्वा श्रुत्वा वा 'स घटः, सा प्रिया' इति दृष्टश्रुतविषयकसंस्कारमात्रजन्यं ज्ञानम्। रसावतारावसरे च 'सोऽयं राम'इति ज्ञानम्, तच्च संस्कारजन्यत्वे सति प्रत्यक्षताऽवगाहि; इति नैतज्ज्ञानं स्मृतिरिति वक्तुं शक्यते। इति।

ननु तर्हि संस्कारजिन्यं ज्ञआनं स्मृतिरित्येवास्तु, स्मृतेर्लक्षणमित्याशङ्क्य दूषयति—**यच्चे**त्यादिना।'

**यत्**। च तु। **'संसारजन्यत्वात्**। 'हेतो'रिति शेषः। **रसादिबुद्धिः**। **स्मृति** 'र्बोध्येति' शेषः। **इती** त्येवम्। केचित्। 'आहुरिति शेषः। **तत्र** तस्मिन् समर्थने। **अपि**। **प्रत्यभिज्ञायां** संस्कारजन्यत्वे सति प्रत्यक्षावगाहिनि ज्ञाने। **अनैकान्तिकतया** व्यभिचारितया। **हेतोः**। **आभासता** साक्षात्तयाऽवर्तमानत्वम्। नच प्रत्यभिज्ञाऽपि रसादिबुद्धिरित्ति वक्तुं शक्यम्, तत्र हि 'सोऽयं घट' इति संस्कारजन्यज्ञानशबलितं प्रत्यक्षताऽवगाहि ज्ञानम्। अत्र पुनः 'स एवास्मि सीताविषयकरतिमा'निति संस्कारजन्यज्ञानशबलितं परस्मिन्नपि स्वाभेदाध्यवसायात्मकं ज्ञानम्। अत एवैषा भावनाविशेषमहिम्ना सहृदयानामेव, नतु तत्तत्स्मृतिमात्रवतां, न वा तत्तत्प्रत्यभिज्ञावतामेव, सम्पद्यते। अत्रायं सिद्धान्तः—न ह्यभिनये साक्षाद्रामः, सीता वा; किन्तु अभिनेत्रैवोत्तम्भ्यमानस्वरूपास्ते ते। प्रत्यभिज्ञास्थले च रामः सीताऽपि वा साक्षात् न तु केनापि कल्प्यमानस्वरूपाः। तत्र पुनस्तेषां तथात्वेऽपि स्वाभेदाध्यवसायः। अत्रैतेषामैवम्भूतत्वेऽपि न स्वाभेदाध्यवसायः। असौ पुनर्दूरमास्तां किन्तु तदभेदाध्यवसायोऽपि न; 'स एवायं घट' इति ज्ञानस्य प्रत्याभिज्ञायामसम्पन्नत्वात्। अथ-श्रव्ये न कश्चिदभिनेता न च तेनोत्तम्भ्यमानोत्तम्भिता वा रामाद्यवस्था, किन्तु कविनैव उत्तम्भितमात्रस्वरूपा। नच तदर्थं श्रुत्वा बुद्धवा वा तत्तेषां स्मृतिस्तदा रसादिविषयिणी बुद्धिरिति वक्तुमर्हम्। तत्तदर्थं श्रुत्वाऽपि वा बुद्धवाऽपि वा सहृदयव्यतिरिक्तानां तत्तत्स्मृतेः कदाचित्सद्भावेऽपि रसादिरिति वक्तुमर्हम्। तत्तदर्थं श्रुत्वाऽपि वा बुद्धवाऽपि वा सहृदयव्यतिरिक्तानां तत्तत्स्मृतेः कदाचित्सद्भावेऽपि रसादिविषयिण्या बुद्धेरसम्भवात्, अदृष्टाश्रुतानां च स्मृतेः प्रत्यभिज्ञायाश्च सद्भावं वक्तुमशक्यतया तथाविधानामपि तत्र कविनोत्तम्भितमात्रस्वरूपाणां तेषांतेषां सहृदयानां हृदये तदा सम्पद्यमानस्य कस्याप्यानन्दस्य स्मृतिव्यतिरिक्तमेव

कारणम्। एतेन—व्यङ्ग्यानां वस्त्वादीनामपि ज्ञानं न स्मृतिरिति प्रतिपादितम्, तेषामपि नवनवत्वेन दृष्टश्रुतत्वाभावाच्च; स्मृतेः प्रत्यभिज्ञाया एव वा तदानीमेव वक्तुमर्हत्वात्। तेषां नवनवत्वं सुप्रत्यक्षसिद्धम्। अतः सुष्ठूक्तं केनापि कविना—"अपारे काव्यसंसारे कविरेकः प्रजापतिः। यथाऽस्मै रोचते किञ्चित्तथेदं परिवर्त्तते॥' इति। अत्राहुस्तर्कवागीशाः—"अपारे काव्यसंसारे कविरेकः प्रजापतिः। यथाऽस्मै रोचते किञ्चित्तथेदं परिवर्त्तते॥' इति। अत्राहुस्तर्कवागीशाः—"प्रत्यभिज्ञायां ताऽमित्याकारकज्ञानेऽनैकान्तिकतया साध्यं विना विद्यमानतया हेतोः संस्कारजन्यज्ञानत्वस्याभासता व्यभिचारिता, एतच्च साधनं रसप्रतीतिकारणीभूतवासनायाः संस्कारविशेषत्ववादिमते। अतिरिक्तत्ववादिमते तु हेतोः पक्षावृत्तित्वेन स्वरूपासिद्धिरपि दोषः, नतु व्यभिचारमात्रम्। ये तु प्रत्यभिज्ञायाः स्मृतित्वापत्तिभयेन स्मृतिजन्यत्वमेव मन्यन्ते, न तु संस्कारजन्यत्वं, तन्मते व्यभिचारो न भवतीत्यवदातम्।" इति।

अथाभिधामूलां व्यञ्जनामनङ्गीकुर्वाणानां मतमाक्षिपति—"**दुर्गालङ्घित...**"इत्यादिना।

**"दुर्गालङ्घित..." इत्यादौ। च। द्वितीयार्थो**ऽप्राकरणिकः शङ्कररूपोऽभिधेयातिरिक्तर्थ इति यावत्। न। **अस्ति। एव। इति**।यत् महिमभट्टेन व्यक्तिविवेककृतेत्यर्थः। **उक्तम्। तत्. अनुभवसिद्धिम्। अपलपतः** प्रत्याचक्षाणस्य 'तस्ये'ति शेषः **गजनिमीलिका** गजस्य निमीलिका नेत्रे निमील्य क्रीडा। "हस्तिन इव मूर्खत्व"मिति तु तर्कवागीशाः। **एव**। ततस्मात्। **एवम्। अनुभवसिद्धस्य। तत्तद्रसादिलक्षमार्थस्य** तत्तद्रसादिस्वरूपस्यार्थस्य। **अशक्यापलापतया** न शक्योऽपलापः प्रत्याख्यानं यस्य तस्य भावस्तत्ता तया। **तत्तच्छब्दाद्यन्वयव्यतिरेकानुविधायितया** सच सचेति तत्तौ शब्दौ आदी यस्य (प्रतिपाद्यस्य) तस्यान्वयव्यतिरेकौ तयोरनुविधायी तस्य भावस्तत्ता तया। **च। अनुमानादिप्रमाणवेद्यतया। च। अभिधाऽऽऽदिवृत्तित्रयाबोध्यतया। च तुरीया** चतुर्थी अभिधालक्षणातात्पर्याख्यवृत्तिभ्यो व्यतिरिक्तेति भावः। **वृत्तिः** "व्यञ्जने"ति शेषः। **उपास्या** स्वीकार्य्या। **एव। इति। सिद्धम्।** **इयं** 'वृत्ति' रिति शेषः। **व्याप्त्याद्यनुसन्धानम्। विना अपि। भवति। इति। अखिलं** सर्वं कथनम्। **निर्म्मलं** शुद्धम्। **अत्राहुष्टिप्पणीकाराः**—"इहान्वयव्यतिरेकदृष्टान्तेन कश्चिदेव शब्दस्तादृशार्थख्यापनेऽलङ्कर्म्मीण इति दर्शितम्। तदुक्तं ध्वनिकारैः—"सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन। यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः॥"इति, "व्यङ्ग्यव्यञ्जकाभ्यामेव हि सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनाम्, न वाच्यवाचकरचनामात्रेणे" ति व्याख्यातं च। इति।

तदेवमनुभवसिद्धस्य तत्तद्रसादिलक्षणार्थस्याशक्यापलापतया तत्तच्छब्दाद्यन्वयव्यतिरेकानुविधायितया चानुमानादिप्रमाणवेद्यतया चाभिधादिवृत्तित्रयबोध्यतया च तुरीया वृत्तिरुपास्यैवेति सिद्धम्। इयं च व्याप्त्याद्यनुसंधानं विनापि भवतीत्यखिलं निर्मलम्।

तत्किंनामिकेयं वृत्तिरित्युच्यते—

**सा चेयं व्यञ्जना नाम वृत्तिरित्युच्यते बुधैः।**
**रसव्यक्तौ पुनर्वृत्तिं रसनाख्यां परे विदुः॥ ५॥**

एतच्च विविच्योक्तं रसनिरूपणप्रस्ताव इति सर्वमवदातम्॥

इति श्रीमन्नारायणचरणारविन्दमधुव्रत-साहित्यार्णवकर्णधार-ध्वनि प्रस्थापनपरमाचार्य-कविसूक्तिरत्नाकराडष्टादशभाषावार विलासिनी भुजङ्ग। सान्धि विग्रहिक-महापात्रश्री विश्वनाथकविराजकृतौ साहित्यदर्पण व्यञ्जनाव्यापारनिरूपणो नाम पञ्चमः परिच्छेदः।

---

## विवृतिः

ननु रसादिग्रहार्थं रसनाख्यावृत्तिः स्वीकृता कथं तदर्थं व्यञ्जनावृत्तिः स्वीक्रियत इत्यत आह—रसव्यक्ताविति। रसप्रतीतावित्यर्थः। वृत्तिं व्यापारम्।परे नैयायिकाः न त्वालंकारिकाः। तेषआमयमाशयः—'वस्त्वलंकारग्रहार्थं व्यञ्जनावृत्तिरवश्यं स्वीकार्या, तयैव रसादेरपि ग्रहोऽस्तु। तदर्थमतिरिक्तरसनाख्यवृत्तिस्वीकारेणालम्' इति। न च व्यञ्जनाजन्यबोधस्यास्वादरूपत्वं नास्ति, रसनाख्यव्यापारजन्यबोधस्य तु तदक्षतमिति वाच्यम्। एतादृशनियमस्य शपथनिर्णेयत्वात्। एतद्रसनाख्यवृत्तिस्वरूपम्। अवदातमविरूद्धम्॥

**इति श्रीरामचरणतर्कवागीशभट्टाचार्यविरचितायां साहित्यदर्पणविवृतौ पञ्चमः प्रकाशः।**

## विवृतिपूर्तिः

तत्तदिति। इहान्वयव्यतिरेकदृष्टान्तेन कश्चिदेव शब्दस्तादृशार्थख्यापनेऽलंकर्मीण इति दर्शितम्। तदुक्तं ध्वनिकारैः—'सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगो शब्दश्च कश्चन। यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः॥' इति 'व्यङ्ग्यव्यञ्जकाभ्यामेव हि सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनाम्, न वाच्यवाचकरचनामात्रेण' इति व्याख्यातं च॥

**इत्याचार्यश्रीसरयूप्रसादसुत-दुर्गाप्रसादविरचितायां छायायां पूर्वभागः॥**

## विज्ञप्रिया

रसव्यञ्जनाया रसनेत्यपि नाम केचिदाहुरित्याह—रसव्यक्तौ पुनरिति। रसवृत्तौ रसबोधकवृत्तावित्यर्थः। इत्थं व्यङ्ग्यार्थबोधस्य मानसबुद्धिरूपत्वमात्रं न दूषितम्। तत्रायमभिप्रायः—मनसस्तावद् बाहः स्वातन्त्रयमेव नास्ति। स्मृत्युपनयसहकारेण बोधनं तु व्यङ्ग्यार्थस्य पूर्वानुभवाभावेन स्मरणासम्भावनयैव निरस्तम्। नह्युतक्तानन्दरूपो रसो दूत्यादेः कामुकसम्भोगादिरूपोऽर्थो वा पूर्वमनुभूतः।

**इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्यकृतायां साहित्यदर्पणटीकायां पञ्चमपरिच्छेदविवरणम्।**

## लोचन

एतद् विविच्योक्तमत्रैव द्वितीयपरिच्छेदे । उपसंहरति—तदेवमिति ।

न च शब्दसमर्पितस्य विभावादेर्ज्ञानस्यैव रसादेर्जनकत्वात् काव्यमत्र साक्षान्न हेतुत्वेन व्याप्रियत इति वाच्यम्; स्वाङ्गमव्यवधायकमितिन्यायेन विभावाद् विभावनस्यावान्तरव्यापारीकरणेन काव्यस्यैस्वादो भावकत्वात् यथा स्वार्थस्य ज्ञानद्वारेण तत्संसर्ग भावयतां पदानामेव करणत्वाभ्युपगमो भट्टनैयायिकादीनाम् । किञ्च सद्वारक-रणम् । इति न्यायेनान्तरालवर्तिव्यापारान्तरविरहादसम्भाव्यं विभावादिसंवलनज्ञानस्यास्वादं प्रति कारणत्वम् । नन्वेवं व्याप्त्याद्यनुसन्धानमन्तरेणाकस्माद् वाच्यार्थस्यावगतौ कथं नातिप्रसङ्गं इत्याशङ्क्याह—इयं चेति । उत्प-त्तिमन्तरेणापि अनुभवसिद्धाया व्यङ्ग्यार्थप्रतीतेरन्यार्थोपपत्तयैव ।

व्यञ्जनाव्यापारकल्पनं श्रीश्रीमदानन्दवर्धनाचार्यस्येतिभावः । रसस्य रसनव्यापारप्रकाशत्वं स्मार-यति—रसनेति । रसनिरूपणप्रस्तावे, सत्त्वोद्रेकाद् इत्यादिकारिकाव्याख्यायाम् । सर्वम्—व्यञ्जनाव्यापारस्थापकं प्रमेयजातम् ।

**इति साहित्यदर्पणलोचने व्यञ्जनाव्यापारस्थापनो नाम पञ्चमः परिच्छेदः ।**

## कुसुमप्रतिमा

इदानीं स्वसन्दर्भमुपसंहर्त्तुमांह तदेवमिति । अनुभवासङ्कस्यति अशक्यापलापतां प्रति हेतुगर्भविशेष-णम् । तत्तद्रसादिलक्षणार्थस्य रसभावादिस्वरूपव्यङ्ग्यार्थस्य, अशक्यापलापतया सहृदयैरनुभूयमानत्वादेव केनाप्यस्वीकर्त्तुमशक्यतयेत्यर्थः । ततच्छब्दाः "शून्यं वासगृहम्" इत्यादिकाशब्दाः आदि पदात् अर्थ प्रस्तावादयश्च तेषामन्वयव्यतिरेकयोरनुविधायितया अनुसारितया । तथा च तादृशशब्दादिसत्त्वे रसादिव्यङ्ग्यार्थसत्ता तादृश-शब्दाद्यसत्त्वे च रसादिव्यङ्ग्यार्थासत्ता इति नियमेन रसादिव्यङ्ग्यार्थानामवश्य मङ्गीकार्य्यतयेत्यर्थः । अनुमाना-दीत्यादिपदेनार्थापत्तेग्रहणम् । अभिधादिवृत्तित्रयम् अभिधा-लक्षणा-तात्पर्य्यरूपं तेनाबोध्यतया च । तुरीया चतुर्थो काचिद्वृत्तिः उपास्यैव आश्रयणीयैव ।

ननु भवदङ्गीकृताया अपि तुरीयवृत्तेव्यङ्ग्यार्थ प्रतिपादनाय व्याप्त्यादेरावश्यकत्वे पूर्वोक्त एव हेत्वाभा-सादिः प्रसज्येतेत्याह इयञ्चेति । इयञ्च तुरीयवृत्तिः, व्याप्त्यादेर्व्याप्तिहेत्वाभासाभावयोरनुसन्धानं ज्ञानं विनापि भवति रसादिव्यङ्ग्यार्थं बोधयितुमर्हति; अभिधादिरभिधेयार्थादिवदिति भावः । अतएवास्मदुक्तमखिलं निर्म्मलं निर्द्दो-षम् ।

तदिति । अत्र परिच्छेदे व्यञ्जनाशब्दव्यवहृत्य केवलतुर्य्यतुरीयशब्दव्यवहारात् "किं नामिकेयं वृत्तिः" इति जिज्ञासा उपपद्यत एवेति बोध्यम् ।

सेति । सा च तुरीया वृत्तिर्व्यञ्जना नाम इति बुधैः प्रत्येयप्रत्यायकनिरूपणदस्वैरुध्यते । परे पुनः अन्ये अभिनवगुप्तमतावलम्बिनस्तु रसव्यक्तौ रसभावाद्याद्यप्रकाशने, रसनाख्यां रसननाम्नीं पञ्चमी वृत्तिं विदुः । एतन्म-तन्तु तृतीयपरिच्चेदे "विलक्षण एवायं कृतिज्ञप्तिभेदेभ्यः" इत्यस्य टीकायां विस्तरत उक्तम् । अस्मन्मते तु वस्त्वलङ्कारयोरिव रसादीनामपि व्यञ्जनयैव बोधनसम्भवे वृत्त्यन्तराङ्गीकरणमनर्थकमेवेति भावः । एतेन अभिनव-गुप्तमतावलम्बिनां रसादिबोदनाय पञ्चमवृत्तिपर्य्यनतङ्गीकारात् रसादीनामभिधादिबोध्यत्वानुमेयत्वादिकथनमती-वासमञ्जसमिति सूचितम् ।

एतदिति । एतत् एतत्प्रकरणोक्त सर्वं विविच्य रसनिरूपणप्रस्तावे तृतीयपरिच्छेदप्रथमभागे उक्तम्—"रसादीनां व्यङ्ग्यत्वमुक्तं भवती'ति अभिहितम् । सर्वमस्मदुक्तम् अवदातं निर्म्मलं समञ्जसमित्यर्थः ।

**इति महामहोपाध्याय महाकवि भारताचार्य्य श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायां साहित्यदर्पण-टीकायां कुसुमप्रतिमायां चतुर्थ परिच्छेदः ॥ ० ॥**

## विमला

उपसंहरति, तदेवमिति ।—तत्तद्रसादिलक्षणार्थस्य—तत्तद्रसादिस्वरूपार्थस्य, ["विलक्षणार्थस्य" इति पाठे—तत्तद्रसादिरूपस्य, वाच्यादिविलक्षणस्येत्यर्थः] अनुमानादोतदिपदेन अर्थापत्त्यादेग्रहणम् । अभिधादीत्या-दिपदेन लक्षणातात्पर्यग्रर्हणम् ।

सा चेयमिति ।—रसव्यक्तौ—रसप्रकटने इत्यर्थः, वृत्तिं—व्यापारं, परे—अन्ये विद्वांसः, नैयायिकाः इति यावत्, न त्वलङ्कारिका; तेषामयमाशयः,"वस्त्वलङ्कारग्रहार्थं व्यञ्जनावृत्तिरवश्यं स्वीकार्य्या, तयैव रसादेरपि ग्रहोऽस्तु । तदर्थमतिरिक्तरसनाऽऽवव्यवृत्तिस्वीकारेणालम्" इति । न च व्यञ्जनाजन्यबोधस्यास्वादनरूपमेव-नास्ति, रसनाख्यव्यापारजन्यबोधस्य तु तदक्षतमिति वाच्यम्, एतादृशनियमस्य शपथ निर्णेयत्वात् । व्यञ्जनया वस्त्वलङ्काररूपव्यङ्ग्यार्थावगतिः, रसनया तु रसादिरूपार्थावगतिरिति परमतम्; ग्रन्थकृतस्तु सामान्येन व्यञ्जनयैव सर्वव्यङ्ग्यार्थवगम इति बोध्यम् ।

एतत्—रसनाख्यवृत्तिस्वरूपम् । अवदातम्—अविरुद्धम् ।

**इत्यशेषशावाटवीसञ्चारपञ्चानन-पण्डितकुलपतिना वि, ए, उपाधिधारिणा श्रीमज्जीवानन्दविद्यासा-गरभट्टाचार्येण विरचितायां, तदात्मणाभ्यां पण्डितश्रीआशुबोधविद्याभूषण-पण्डितश्रीनित्यबोधविद्यारत्नाभ्यां प्रतिसंस्कृतायां विमलाख्यायां साहित्यदर्पणव्याख्यायां पञ्चमः परिच्छेदः ॥ ५ ॥**

## लक्ष्मी

अधुना स्वसन्दर्भमुपसंहरति—तदेवमिति । तत्तद्रसादिलक्षणार्थस्य तत्तद्रसभावादिस्वरूपार्थस्य वाच्यादिविलक्षणार्थस्येत्यर्थः ।

अशक्यापलापतया सामाजिकैरनुभूयमानत्वादेव केनाऽप्यनङ्गीकर्त्तुमसमर्थतथेत्यर्थः । तत्तच्छब्दाः 'निःशेषच्युतचन्दनम्' इत्यादिकाव्यशब्दः, आदिशब्दात् अर्थप्रस्तावादयश्च तेषामन्वयव्यतिरेकयोरनुविधायितया अनुसारितया । इहान्वयव्यतिरेकोदाहरणेन कश्चिदेव शब्दस्तथाविधार्थख्यापनेऽलंकर्मीण इति प्रकटितम् । उक्तं च ध्वनिकृता—

'सोऽर्थस्तद्वयक्तिसामर्थ्ययोगीशब्दश्च कश्चन । यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः ॥' इति 'व्यङ्ग्यव्यञ्जकाभ्यामेव हि सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनाम्, न वाच्यवाचकरचनामात्रेण' इति व्याख्यातं च । अपि च—

**'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।**

**यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥' इति ।**

एवञ्च 'तादृशशब्दादिसद्भावे रसादिव्यङ्ग्यार्थसद्भावः तादृशब्दाद्यसद्भावे रसादिव्यङ्ग्यार्थासद्भावः' इति नियमेन रसादिव्यङ्ग्यानामवश्यं स्वीकर्तव्यतयेत्यर्थः। अनुमादीत्यादिना अर्थापत्त्यादेग्रहणम्। अभिधादीत्यादिपदेन लक्षणतात्पर्ययोग्रहणम्। अभिधादिवृत्तित्रयम् अभिधा-लक्षणा-तात्पर्यरूपं तेनाबोध्यतया च, तुरीयावृत्तिः चतुर्थी काचिद्रवत्तिःउपास्यैव स्वीकर्त्तव्यैव।

नन्वेवं भवन्मतसिद्धाया अपि तुरीयवृत्तेर्व्यङ्ग्यार्थबोधनाय व्याप्त्याद्यनुसन्धानस्य परमावश्यकत्वे प्राग्दर्शित एव हेत्वाभासादिरापद्येतेत्यत आह—इयं चेति। इयञ्च तुरीयवृत्तिः व्याप्त्याद्यनुसन्धानं विनापि व्याप्तिहेत्वाभासज्ञानमन्तरेणापि भवति। अतोऽस्मत्प्रतिपादितमखिलं सर्वं निर्मलं निर्दुष्टम्।

तत्किमिति। परिच्छेदेऽस्मिन् व्यञ्जनाशब्दमप्रतिपाद्य तुरीया वृत्तिरूपास्यैवेत्युपक्रमे प्रथमकारिकाविवृत्तौ तथा चरमकारिकाविवृत्तावपि प्रतिपादनात् 'किं नामिकेयं वृत्तिः' इति जिज्ञासा चोदेतीति ज्ञेयम्।

सा चेति। सा च तुरीया वृत्तिः बुधैः ज्ञेयज्ञापकप्रतिपादनकुशलैः व्यञ्जनानाम इत्युच्यते प्रतिपाद्यते। ननु रसादिग्रहार्थं रसनाख्यवृत्तिः स्वीकृता तदर्थं व्यञ्जनावृत्तिः कथमङ्गीक्रियते इत्यत आह—रसव्यक्ताविति। परे पुनः अन्ये नैयायिकास्तु रसव्यक्तौ रसभावादिप्रतीतौ रसनाख्या रसननाम्नीं वृत्तिं व्यापारमाहुर्न त्वालङ्कारिकाः। तेषामयमभिप्रायः—वस्त्वलङ्कारप्रतीत्यर्थं व्यञ्जनावृत्तिवश्यमङ्गीकार्या तयैव रसादेरपि प्रतीतिरस्तु तदर्थं वृत्त्यन्तराङ्गीकरणमनर्थकमेवेति। न च व्यञ्जनाजन्यप्रतीतेरास्वादरूपत्वं नास्ति रसनाख्यव्यापारजन्यप्रतीतेस्तु तदक्षतमिति वाच्यम्, एतादृशनियमाङ्गीकारे बीजाभावात्।

एतच्चेति। एतत्प्रकरणोक्तमखिलं विविच्य रसनिरूपप्रस्तावे 'सत्त्वोद्रेकात्' इत्यादिकारिकाव्याख्यायां तृतीयपरिच्छेदप्रथमभाग उक्तभिहितम्। सर्वं व्यञ्जनाव्यापारस्थापनमस्मदुक्तं प्रमेयजातम् अवदातं निर्मलम् अविरुद्धमित्यर्थः।

**इति वत्सकुलावतंस-दैवशशिरोमणि-श्रीलोकनाथात्मज-साहित्य-व्याकरणाद्यनेकाचार्यठक्कुरोपनामक-श्रीकृष्णमोहनशास्त्रि एम. ए. विरचितायां—'लक्ष्मी' नामक साहित्यदर्पण-टीकायां पञ्चमः परिच्छेदः।**

## रुचिरा

अथ तुरीयां वृत्तिं निर्देष्टुमपेक्षामुपस्थापयन् प्रतिजानीते—**तदि**त्यादिना।

**तत्** तस्मात्। **किन्नामिका**। इयमभिधाऽऽदिभ्यस्तिसृभ्योऽपि वृत्तिभ्यो विलक्षणेति शेषः। **वृत्तिः**। **इतीत्यपेक्षायाम्**। **उच्यते**—३०३ **सा चेयमित्यादिना**।

३०३ **सा** 'ययाऽभिधाऽऽदिप्रतिपाद्यातिरिक्तार्थः प्रत्याय्यते' इति शेषः। **च**। **इय** 'मनुमानाद्यन्तर्भावायोग्ये'ति शेषः। **व्यञ्जना**। **नाम**। **वृत्तिः**। **इति**। **बुधैः** सहृदयैरालङ्कारिकैरिति भावः। **उच्यते**। अथ कैश्चिद्रसादेरास्वादाय स्वीकृता रसनाख्यां वृत्तिमप्यत्रैवान्तर्भावमाह—**रसव्यक्तौ** रसप्रतीतौ। **पुनः**। **परे** नैयायिका इत्यर्थः। **रसनाख्याम्**। **वृत्तिम्** 'एनामवे'ति शेषः। **विदुः** अयमभिप्रायः—रसनावृत्तिर्व्यञ्जनावृत्तिश्च न वस्तुतो विलक्षणा, किन्तु नाममात्रतः। तस्मात्, यथा—वस्त्वलङ्काराणां प्रत्ययार्थं व्यञ्जनाऽवश्यमङ्गीकार्य्या, तथा रसादैः रसनार्थं कैश्चिति स्वीक्रियमाणा रसनाख्याम्। वृत्तिम् 'एतामेवे'ति शेषः। विदुः अयमभिप्रायः—रसावृत्तिर्व्यञ्जनावृत्तिश्च न वस्तुतो विलक्षणा, किन्तु नाममात्रतः। तस्मात्, यथा—वस्त्वलङ्काराणां प्रत्ययार्थं व्यञ्जनाऽवश्यमङ्गी-

कार्य्या, तथा रसादेः रसनार्थं कैश्चित् स्वीक्रियमाणा रसनाख्या या वृत्तिः साऽपि न ततो विलक्षणा, अभिधाऽऽदिवत् तस्या अनियन्त्रितव्यापारत्वात्। इति ॥ २९७ ॥

अत एव—ग्रन्थस्य पूर्वोत्तरविरोधं परिहरन्नाह—**एतच्चेत्यादिना**।

**एतत्**। 'यत् परे विदुस्त'दिति शेषः। **च**। **रसनिरूपणप्रस्तावे**। **विविच्य** निर्णीय। **उक्तम्**। इति। **सर्वम्**। **अवदातमपहतपापम्**।

प्रकरणं समापयन्नाह—**इतीत्यादि**।

**इति**। **साहित्यदर्पणे** 'श्रीविश्वनाथकविराजकृत' इति शेषः। **व्यञ्जनाव्यापारनिरूपणो** व्यञ्जनाया व्यापारनिरूपणं प्रकृत्य रचित इत्यर्थः। **नाम**। **पञ्चमः**। **परिच्छेदः**।

न विषयोऽनुमितेर्नच यः स्मृतेः स्फुरति यः परमात्मतया सताम्।

अनभिधेयमलक्ष्यमबोध्यम—भ्युदयितं दयितं तमुपास्महे ॥

**इति श्रीशिवनाथसूरिसूनुना श्रीशिवदत्तकविरत्नेन रचितायां रुचिराऽऽख्यायां साहित्यदर्पणव्याख्यायां पञ्चमः परिच्छेदः समाप्तः।**

# षष्ठः परिच्छेदः

एवं ध्वनिगुणीभूतव्यङ्ग्यत्वेन काव्यस्य भेदद्वयमुक्त्वा पुनर्दृश्यश्रव्यत्वेन भेदद्वयमाह—

**दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम्।**

**दृश्यं तत्राभिनेयं—**

तस्य रूपकसंज्ञाहेतुमाह—

**तद्रूपारोपात्तु रूपकम्॥ १॥**

तदृश्यं काव्यं नटे रामादिस्वरूपारोपाद्रूपकमित्युच्यते।

कोऽसावभिनय इत्याह—

**भवेदभिनयोऽवस्थानुकारः स चतुर्विधः।**

**आङ्गिको वाचिकश्चैवमाहार्यः सात्त्विकस्तथा॥ २॥**

---

## विवृतिः

अभिनेयं नाट्याद्यभिनीयमानं नायकादिचरितम्। एतच्च 'शब्दबोध्यो व्यनक्तयर्थः—इत्युक्तदिशा (६९ पृ.) शब्दोपस्थाप्यमेव। न त्वेवंविधं विभावादिवद्रसाभिव्यञ्जकमपि तत्काव्यम्, काव्यलक्षणायोगात्। यद्वा अभिनेयमत्रास्तीति मत्वर्थीय(अन) प्रत्ययेन अभिनेयपदमभिनेयोपस्थापकम्। अनर्घराघवादि रूपकम्, रत्नावल्याद्युपरूपकं च॥

अवस्था साधर्म्यम्, अनुकारः सदृशीकरणम्। सः अभिनयः। अङ्गेन निष्पन्न आङ्गिकः। एवमग्रेऽपि। वेषरचनादिनिष्पाद्य आहार्यः। सात्त्विकः स्तम्भस्वेदादिरूपः। अङ्गादिभिर्नाट्यादिभिः॥

## विवृतिपूर्तिः

**शुद्धोऽपि संक्रान्तमलोयमस्य व्याख्यापि नाख्याति समस्तवम्।**

**इति क्लमच्छेदकृते कृतेयं छायाल्पकायापि मुदं विदध्यात्॥**

तदिति। 'यथा मुखादौ पद्मादेरारोपो रूपकं मतम्। तथैव नायकारोपो नटे रूपकमुच्यते।' इति भावः॥

अभीति। अयमेवार्थो मन्दारमन्दे भङ्ग्यन्तरेण प्रतिपादितः—'उत्पादयन्सहृदये रसज्ञानं निरन्तरम्। अनुकर्तृस्थितो योऽर्थोऽभिनयः सोऽभिधीयते ॥' इति ॥ नाट्यशास्त्रे भरतोऽप्याह—'विभावयति यस्माच्च नानार्थान्हि प्रयोगतः। शाखाङ्गोपाङ्गसंयुक्तस्तस्मादभिनयः स्मृतः ॥' इति ॥

आङ्गिक इति। नाट्यशास्त्रे तु—'त्रिविधस्त्वाङ्गिको ज्ञेयः शरीरो मुखजस्तथा। तथा चेष्टाकृतश्चैव शाखाङ्गोपाङ्गसंयुतः ॥' इत्यनेनाङ्गिकाभिनयस्य त्रैविध्यमुदीरितम्। आङ्गिकोऽभिनयः शाखेति कथ्यते। शिरोहस्तोरः पाश्र्वकटीपादलक्षणानि षडङ्गानि। नेत्रभ्रूनासिकाधरकपोलचिबुकरूपाणि षडुपाङ्गानि। अङ्गेन अङ्गचालनेन निर्वृत्त आङ्गिकः। एवं वाचिकः। नियुक्तादौ ठक् त्वनाकरः ॥

## विज्ञप्रिया

श्रव्यं काव्यमुक्त्वा नाट्यात्मकं दृश्यकाव्यं वक्तुमाह—एवं ध्वनीति।

नाट्यं रूपकमिति पर्यायाद्रूपकसंज्ञाहेतुं वक्तुमाह—तस्येति। रामादिस्वरूपारोपणादिति वेशाभिनयाभ्यां तदारोपस्यानेन बोधनादित्यर्थः।

तदारोपहेतुत्वेन प्राप्तमभिनयं पृच्छति—कोऽसाविति। आहार्य इति। आङ्गिकवाचिकौ द्वावप्याहार्यौ। सात्त्विकः च तेन चातुर्विध्यम्। तत्र नाट्यस्य सत्त्वानुद्रेकात् रसावेशाभावेन क्रियमाणावाहार्य्यौ। सत्वोद्रेकाद्रसावेशेन क्रियमाणौ सात्त्विकौ। तच्चतुः साधारणंमभिनयलक्षणमाह— नटैरङ्गादिभिरिति। अङ्गं शरीरम्। आदिपदात् वचनपरिग्रहः। अवस्थास्तदीया धर्माः मनः कथावाक्यपाराङुत्वादिरूपवेशसाधारणाः। तस्या अनुकरणं ताद्रूप्येणं ताद्रूप्येण प्रत्यायनम्।

अभिनेयं नाट्यम्।

## लोचन

परिच्छेदसङ्गतिमाह—यवमिति।

दृश्यं दर्शनीयप्रधानम्। श्रव्यं श्रोतव्यमात्रम्। अभिनेयं नटैरङ्गादिभिरिति शेषः।

अन्यस्य रामादेः रूपेणान्यान् नटान् रूपयतीति रूपकम्।

अङ्गकृतः आङ्गिकः। वचसा वाचिकः। आहार्य्य मुकुटकेयूरादिरचना। सात्त्विकः स्तम्भस्वेदादिः।

## कुसुमप्रतिमा

तदिति। तत् दृश्यकाव्यम्, रूपाणां रामाद्याकाराणाम् आरोपात् नटेषु सन्निवेशात् हेतोः रूपकमित्युच्यते। तथाहि रूपयति नटद्वारा रामादीननुकरोतीति रूपकम्। तथा चोक्तम्—"यथा मुखादौ पद्मादेरारोपो रूपकं मतम्। तथैव नायकारोपो नटे रूपकमुच्यते ॥"

क इति। असौ दृश्यलक्षणघटकाभिनेयपदद्योत्यः।

भवेदिति। अवस्थानां वास्तविकरामादिस्वरूपाणाम्, अनुकारः अनुकरणम्, अभिनयो भवेत्। स चाभिनवश्चतुर्विधः—आङ्गिकः अङ्गनिष्पाद्यः करनयनादिभङ्गीविशेषः, वाचिको वाक् प्रतिपाद्यः, आहार्य्य आहरणीयवेशबिम्बासादिसम्पाद्यः, सात्त्विकः स्तम्भस्वेदादिसात्त्विकभआवप्रकटनप्रतिपाद्यः। सर्वत्र नटानामिति सम्बन्धः।

न्वाङ्गिकाहार्य्यसात्त्विकरूपाभिनयत्रये रसात्मकवाक्यत्वाभावेन काव्यत्वानुपपत्तिः । न च तत्तदंशे अकाव्यत्वमेवेतौरूपत्तिरिति वाच्यम् दृश्यकाव्यमिति दर्शनयोग्यांशमादायैव काव्यत्वव्यवहारात् । उच्यते—तत्तदंशेऽपि रसादिसत्त्वात् गौणकाव्यत्वम्, वाचिकांशे तु रसात्मकवाक्यसत्त्वान्मुख्यमेव काव्यत्वमिति ।

## विमला

तदिति ।—तत्—दृश्यं काव्यन्तु, रूपस्य—अभिनेयस्य, नायकादिस्वरूपस्य इत्यर्थः, आरोपः,—आरोपणं, तस्मात्—तं हेतुं निमित्तीकृत्येत्यर्थः, रूपकमित्युच्यते । तथोक्तं दशरूपके,—"रूपकं तस्समारोपात्" इत् । "नटे रामाद्यवस्थाऽऽरोपेण वर्त्तमानत्वाद्रुपकं, मुखचन्द्रादिवत्; इत्येकस्मिन्नर्थे प्रवत्र्तमानस्य शब्दवयस्य 'इन्द्रः पुरन्दरः शक्रः' इतिवत् प्रवृत्तिनिमित्तभेदो दर्शितः" इति च तद्वाख्याकारैः । "इन्द्रः पुरन्दरः शक्रः' इतिवत् प्रवृत्तिनिमित्तभेदो दर्शितः' इति च तद्वाख्याकारैः । "यथा सुखादौ पद्मादेयरोपो रूपकं भवेत् । तथैव नाश्चकारोणो नटे रूपकमुच्यते ॥" इति भावः ।

तदेव स्पष्टवति, तदित्यादिना ।—तत् दृश्य काव्यं, न तु अव्यमित्यर्थः, नटे—अभिनेतरि, रामादेः,—अभिनेयस्य नायकादेरिति भावः, स्वरूपं—देशकालावस्थाऽनुरूपत्वं, तस्यारोपात् रूपकमित्युच्यते ।

भवेदिति ।—अवस्था—आलम्बनस्य शोकहर्षादिना यादृशी मुखविकासाविकासादिव्यवस्था तस्याः, अनुकारः,—अनुकरणम्, अभिनयः अभिनयव्युत्पत्तिर्यथोक्ता,—"अभिपूर्वस्तु णीञ्धातुः पुरा मुख्यार्थनिर्णये । यस्मात् प्रयोग नयति तस्मादिभिनयः स्मृतः ॥ विभावयति यस्माच्च नानाऽर्थान् हि प्रयोगतः । शाखाऽङ्गोपाङ्गसंयुक्तस्तस्मादभिनयः स्मृतः ॥" इति । अस्य चातुर्विध्यमाह, सङ्गति । सः,—निरुक्तलक्षणोऽभिनयः, चतुर्विधः,—चतुर्भेदः, आङ्गिकः,—अङ्गेन निष्पन्नः, वाचिकः,—वचनेन निष्पन्नः, आहार्य्यः,—आहरणीयः, वेशरचनादिरूपः इत्यर्थः, सात्त्विकः,—सत्त्वोद्रेकात् जनितः, स्तम्भस्वेदादिरित्यर्थः । तथोक्तं भरतेन,—"आङ्गिकी वाचिकश्चैव ह्याहार्य्यः सात्त्विकस्तथा । ज्ञेयस्तभिनवो विप्राः । चतुर्धा परिकल्पितः ॥" इत्यादि ।

## लक्ष्मी

यद्यपि ध्वनिगुणीभूतव्यङ्ग्ययोर्भेदगणनैव संख्यातीता ततश्च काव्यभेदस्यापि तथैव प्राप्नोति तथापि 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायात्—

**'काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यश्चेति द्विधा मतम्'**

इत्युक्तदिशा भेदद्वयस्यैव मुख्यत्वात् तत्तद्भेदप्रभेदादौ ध्वनित्वादेरक्षतत्वात् द्विभेदस्यैव काव्यस्यान्योऽपि भेदोऽस्ति न वेति जिज्ञासायां प्रसङ्गसङ्गत्या षष्ठपरिच्छेदमारभमाणोऽवतारयति—एवमिति । एवं निरुक्तप्रकारेण ध्वनिगुणीभूतव्यङ्ग्ययोः संख्याऽतीतेऽपि 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेनेति शेषः, ध्वनिगुणीभूतव्यङ्ग्यत्वेन ध्वनित्वेन गुणीभूतव्यङ्ग्यत्वेन चेत्यर्थः । काव्यस्य चमत्कारप्राणवाक्यात्मकस्य । द्रष्टुं योग्यं दृश्यं श्रोतुं योग्यं श्रव्यम् एकत्र 'ऋगुपधाच्चाक्लृपि चृतेः' ३/१/११० इति पा. सूत्रेण क्यप्, अन्यत्र 'अचो यत्' ३/१/९७ इति पा. सूत्रेण यत्, दृश्यश्रव्ययोर्भावस्तेन तथोक्तेन दृश्यत्वेन श्रव्यत्वेन चेत्यर्थः । अत्र श्रव्यदृश्यत्वेन' इत्यनभिधाय तथाकथनं तु प्रथमं दृश्यस्यैव निरूपयिष्यमाणत्वात् ।

दृश्यश्रव्यत्वभेदेनेति । दृश्यं दर्शनीयप्रधानम्, श्रव्यं श्रोतव्यमात्रम्, तयोर्भावो दृश्यश्रव्यत्वं तस्य भेदस्तेन तथोक्तेन काव्यं पुनर्द्विधा मतं कथितं पूर्वैरिति शेषः । एवञ्च काव्यं पूर्वोक्तभेदद्वयसमुदितेन मुख्यतश्चतुर्विधमित्यवगन्तव्यम् ।

दृश्यमिति । तत्र तयोर्मध्ये अभिनेयम् अभिनययोग्यं नाट्याद्यभिनीयमानं नायकादिचरितमित्यर्थः । काव्यं दृश्यमिति दृश्यकाव्यस्वरूपम् । एतेन नटाद्यभावेनाभिनययोग्यत्वाभावात् श्रव्यकाव्ये नातिव्याप्तिरिति दर्शितम् । दर्शनात्मकचाक्षुषगोचरयोग्यत्वादस्य दृश्यमिति नाम ।

अभिनेयं रूपकमिति पर्यायाद्रूपकसंज्ञाहेतुं दर्शयितुमाह—तस्येति ।

तद्रूपेति । तद् दृश्यकाव्यम्, रूपाणां रामादिस्वरूपाणाम् आरोपात् वेशाभिनयाभ्यां तदारोपस्यानेन बोधनाद् हेतोः रूपकमुच्यते । एवञ्च रूपयति अन्यस्य रामादेः रूपेणान्यान् नटाननुकरोतीति रूपकम् । उक्तञ्च मन्दारमरन्दे—

'यथा मुखादौ पद्मादेरारोपो रूपकं मतम् । तथैव नायकारोपो नटे रूपकमुच्यते ॥' इति ।

यथा अनर्घराघवादि रूपकम्, रत्नावल्याद्युपरूपकं ज्ञेयम् । तदेव विवृणोति—तदिति । तत् अभिनेयापरपर्यायमिति शेषः । नटे अभिनेतरि रामादेर्नायकादेरारोपस्तस्मात्तं निमित्तीकृत्य प्रवृत्तत्वादिति भावः । तदारोपहेतुत्वेन प्राप्तमभिनयं पृच्छति—कोऽसाविति । असौ दृश्यलक्षणघटकाभिनेयपदव्यङ्ग्य इत्यर्थः ।

भवेदभिनय इति । अवस्थानां वास्तविकरामादेर्धर्माणां मनःकथावाक्यपाण्डुत्वादिरूपवेशसाधारणानाम् अनुकारः सदृशीकरणम् अनुकरणमित्यर्थः । अभिनयो भवेत् । स चाभिनेयश्चतुर्विधः—१ आङ्गिकः—अङ्गेन निष्पन्नः, २ वाचिकः—वचसा प्रतिपाद्यः, ३ आहार्यः—आहरणीयमुकुटकेयूरादिरचनानिष्पाद्यः, ४ सात्त्विकः—स्तम्भस्वेदादिरूपः; सर्वत्र नटानामिति सम्बन्धः । ननु वाचिकांशे रसात्मकवाक्यसद्भावात्तत्र मुख्यमेव काव्यत्वम्, किन्त्वेतदतिरिक्ताङ्गिकादित्रये रसात्मकवाक्यत्वाभावेन काव्यत्वं न स्यात्, न च तत्तदंशेऽकाव्यत्वमेवेतीष्टापत्तिं कर्तुं शक्यते, दर्शनयोग्यत्वांशमादाय काव्यत्वोपपत्तेरिति चेत्? वाचिकापेक्षया तत्तदंशेऽपि रसादिसद्भावात् गौणकाव्यत्वं बोध्यम् ।

नटैरङ्गादिभी रामयुधिष्ठिरादीनामवस्थानुकरणमभिनयः ।

तच्चतु: साधारणमभिनयलक्षणं दर्शयति—नटैरङ्गादिभिरिति । अङ्गं शरीरम्, आदि शब्दात् वचनपरिग्रहः । नाट्यशास्त्रे भरतोऽप्ययमेवार्थो भङ्ग्यन्तरेणाह—

**'विभावयति यस्माच्च नानार्थान् हि प्रयोगतः ।**

शाखाङ्गोपाङ्गसंयुक्तस्तस्मादभिनयः स्मृतः ॥' इति ।

**मन्दारमन्दरेऽपि—उत्पादयन् सहृदये रसज्ञानं निरन्तरम् ।**

**अनुकर्तृस्थितो योऽर्थोऽभिनयः सोऽभिधीयते ॥ इति ।**

एवमभिनयं प्रदर्श्य रूपकं विशेषतः प्रदर्शयितुं प्रवृत्तस्तत्र तावत्तस्य भेदप्रतिपादनं प्रतिजानीते—रूपकस्येति ।

आङ्गिको वाचिकश्चापि सात्त्विकाहार्यकाविति । स चतुर्धा कृतस्तज्ज्ञैराङ्गिकोऽङ्गक्रियोच्यते ॥

**रागानुषङ्गि यद्वाक्यं नाटये वाचिक उच्यते।**

**सत्त्वक्रिया सात्त्विकः स्यादाहार्यो भूषणादिकः ॥**'इति ।

## रुचिरा

**स्फुरन्नानादृश्यं श्रुतिरुचिरताकीर्त्तितकलं प्रमोदस्याधानं सहृदयजनस्यान्तरनघम्।**

**समस्तं प्रत्यक्षं स्फुटमुपनयन्तं शुभदृशां तमेकं सर्वेषां स्थितिलयपदं नौमि कमपि ॥**

यद्यपि ध्वनिगुणीभूतव्यङ्ग्ययोर्भेदप्रभेदावतारः सङ्ख्याऽतीतः, तदेवं काव्यस्य भेदावतारोऽपि तथाविध एवेति बाढं, तथाऽपि 'प्राधान्येन व्यपदेशा भवन्ती' त्युपजीव्य ध्वनिर्गुणीभूतव्यङ्ग्यं चेति भेदद्वयमवतिष्ठते, तत्तद्भेदप्रभेदानां ध्वनित्वगुमीभूतव्यङ्ग्यत्वानापायात्; काव्यस्याप्येवं भेदद्वयमेव, एतस्य तदभिन्नत्वात्तन्मूल-त्वाद्वा तदिति द्विप्रभेदस्यास्य प्रकारान्तरेण भेदान्तरं निर्दिष्टुं प्रतिजानीते—**एव**मित्यादिना ।

**एवं** निरुक्तप्रकारेण "ध्वनिगुणीभूतयोरङ्ख्यत्वेऽपि 'प्राधान्येन व्यपदेशा' इति नयेने"ति शेषः । **ध्वनि-गुणीभूतव्यङ्ग्यत्वेन** ध्वनित्वेन गुणीभूतव्यङ्ग्यत्वेन चेत्यर्थः । ध्वन्यते प्राधान्येन व्यज्यते इति, ध्वन्यतेऽर्थो यत्रेति ध्वनिः, गुणीभूतं व्यङ्ग्यमिति, यत्र वेति तथाभूतम् । 'खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च' इत्यौ-णादिकशास्त्रेणेप्रत्ययः । अत्रेदं बोध्यम्—ध्वनिः काव्यं कूटस्थस्थानापन्नम्, इतरत् पुनर्जीवस्थानापन्नम् । तथा च-अनवरतं परितः प्रकाशमानं यथा परमात्मनः स्वरूपं, तथैव ध्वनिकाव्यस्य, अत एवास्य ध्वन्यमानार्थत्वेन ध्वनिरिति व्यपेदशः । ध्वनिश्चागुणीभूतव्यङ्ग्यापरपर्य्यायः प्रधानभूतस्फोटात्मकव्यङ्ग्यव्यञ्जकः शब्दः । अत्राहुः—"ननु कथं शब्दात् पदार्थ वाक्यार्थावगमः ? आशुविनाशिनां क्रमिकाणां वर्णानां मेलकाभावेन क्रमाद-वगन्तुमशक्यत्वात् । इति चेत् ? एवम् पूर्वपूर्ववर्णानुभवजनितसंस्कारविशेषान्तिमवर्णानुभवेन स्फोटोऽभिव्य-ज्यते । स च स्फुटयति प्रकाशयत्यर्थमिति, स्फोटनं वा स्फोट इत्येवं ध्वन्यभिन्न एव, असौ नित्य ब्रह्मस्वरूपः सकलप्रत्येयप्रत्यायनशक्तः एतद्व्यञ्जकश्च वर्णात्मकः शब्दः, तत्र वृत्तिर्व्यञ्जना नाम, अभिधालक्षणातात्पर्य्या-ख्याभ्यो वृत्तिभ्यो भिन्ना सङ्केताद्यनुत्पत्तेः ।" इति । स एव जीवो यथादेहादावहमित्यध्यासमहिम्नाऽभिभूतस्वरूपो गीयते, तथैव वाच्यलक्ष्यतात्पर्य्येभ्यो न्यग्भावमध्युषितः स्फोट एव गुणीभूतव्यह्ग्यतयाऽभिधीयते । इति । **काव्यस्य** चमत्कारप्राणवाक्यात्मकस्य । **भेदद्वयं** ध्वनिरिति गुणीभूतव्यङ्ग्यं चेति द्वौ भेदौ । **उक्त्वा**'स्थित'इति शेषः । **पुनः** । 'कावयस्ये'ति शेषः । **दृश्यश्रव्यत्वेन** चेत्यर्थः । अत्र 'श्रव्यदृश्यत्वेने'त्यनुक्त्वा तथाऽभिधानं तु प्रथमं दृश्यस्यैव प्रतिपादयिष्यमाणत्वादिति बोध्यम् । द्रष्टुं योग्यं दृस्यं, श्रोतुं योग्यं श्रव्यम्; 'ऋगुपधाच्चाक्लृपि चृतेः ।' ३/१/११० इति दृशेः क्यप् । 'अचो यत् ।' ३/१/९७ इति शृणोतेर्यति 'सार्वधातुकार्धधातुकयोः ।' ७/३/८४ इति गुणे च 'वान्तोयि प्रत्यये ।' ६/१/७९ इत्यव् । **भेदद्वयम्** । द्वाववयवौ यस्येति द्वयं, भेदयोर्द्वमिति भेदद्वयम् तत् । **आह ३०४ दृश्यश्रव्यत्वेनेत्यादिना** ।

३०४ **काव्यम्** । **पुनः** तथा ध्वनित्वगुणीभूतव्यङ्ग्यत्वाभ्यां द्विधा भिद्यत इत्यङ्गीकारानन्तरम् । **दृश्यश्र-व्यत्वभेदेन** । **द्विधा** । **मत**मङ्गीकृतम् । 'आचार्य्यै'रिति शेषः । तथाच **काव्यं** चतुर्भेदमिति सिद्धम् ।

अथ दृश्यस्य स्वरूपकथनपुरः सरं सञ्ज्ञान्तरं निर्दिशति **अथ** ३०५ **दृश्यमित्यादिना** ।

३०५ **तत्र** तयोर्दृश्यश्रव्ययोर्मध्ये । **दृश्यं** तन्नामकं काव्यमिति भावः । **अभिनेयं** तत्सञ्ज्ञकम् । 'ज्ञेय'मिति शेषः । अयम्भावः—अभिनेयं नाम अभिनेतुमभिनयेन दर्शयितुं शक्यं योग्यं वा यत्तत् । अभिनवश्च—'व्यञ्जका-

भिनयौ समौ ।' इत्यमरोक्त्याः मनोगतभावाभिव्यञ्जकस्तत्तदवस्थाऽनुकारात्मा नृत्यविशेषः । तथा च—नाटयेन तत्तदवस्थाऽनुकरणात्मनाऽभिनीयमानं नायकादिचरितमभिनेयं, तत्स्वरूपत्वाच्च काव्यमिति फलितम् । नायकादिचरितं च 'शब्दबोध्यो व्यनक्त्यर्थः' इतिदृशा शब्दोन्नेयम् । यद्वा—अभिनेयमत्रास्तीति अभिनेयम् । अर्शादित्वादच् । एवं च—अभिनयोचितनायकादिचरिताद्यभिन्नः शब्दबोध्योऽर्थस्तच्छालि वा काव्यम् । इति फलितम् ।

कारणान्तरेण सञ्ज्ञान्तरं वक्तुं प्रतिजानीते **तस्याभिनेयस्येत्यर्थः । रूपकसञ्ज्ञाहेतुं** रूपकमिति सञ्ज्ञाऽन्तरं वर्त्तते, तस्य यो हेतुस्तमित्यर्थः । **आह**—३०६ **तदित्यादिना** ।

३०६ **तदभिनेयं दृश्यं** काव्यमित्यर्थः । **रूपाटोपाद्रूपस्य** रामादिस्वरूपस्यारोपोऽभेदेन प्रत्यायनं तस्मात् । तु पुनः । **रूपकं** रूपयत्यभेदेन प्रत्याययतीति तथोक्तम् । 'उच्यते' इति शेषः । 'ण्वुल्तृचौ ।' ३/१/१३३ इति ण्वुल् ॥ ३१९ ॥

तदेव विवृणोति—**तदित्यादिना** ।

**तत्** 'अभिनेयापरपर्य्यायमि'ति शेषः । **दृश्यम् । काव्यम् । नटे**ऽभिनेतरि । **रामादिस्वरूपारोपाद्रामादे**र्नायकादेरारोपस्तस्मात्तं निमित्तीकृत्य प्रवृत्तत्वादिति भावः । **रूपकम् । इतीत्येवमित्यर्थः । उच्यते** । अयम्भावः—"यथा मुखादौ पद्मादेरारोपो रूपकं मतम् । तथैव नायकारोपो नटो रूपकमुच्यते ॥' इति नयः, अत्र च नायकपदेन नायकनायिकतदुभयवयस्यादिग्रहणं बोध्यम् । तथा—नायकाद्यारोपोऽपि न रूपकं, किन्तु तन्निमित्तीकृत्य किमपि नायकादिचरिताद्येव, अथापि अभेदोपचारादिदमुक्तम् । तथा च—मुखादौ पद्मादेरिवाभिनेतारे नायकादेरारोपमुपजीव्य प्रवृत्तं यत्तत् रूपकम् । अन्यस्मिन्नन्यत्वकल्पनामारोपः, अन्य इव भूत्वाऽन्यस्यानुकर्तृत्वमभिनयश्चेत्यारोपाभिनयपदार्थयोर्वैधर्म्याभावः । इदमयधेयम्—काव्यं रसप्राणः, रसो यथा न तिरोधीयेत तथैव प्रवृत्तोऽ''भिनयोऽभिनयः । अन्यथा सर्वमेव विरुध्येत । इति ।

एतदेव बोधसौकर्य्याय स्वयं विवरीतुं प्रतिजानीते-**असौ** 'अभिनेयमूलभूत'इति शेषः । **अभिनयः कः** किंस्वरूपः ? **इत्येवजिज्ञासायाम्** । **आह**—३०७ **भवेत्यादिना** ।

३०७ **अवस्थाऽनुकारो**ऽवस्थाया नायकादिसाधर्म्यस्यानुकारोऽनुकरणमनुकृत्य प्रत्यायनमिति यावत् तथोक्तः । **अभिनयः । भवेत्** । स च कतिविध इत्याशङ्क्यामाह—**स** निरुक्तलक्षणोऽभिनय इत्यर्थः । **आङ्गिकः । च । वाचिकः । एवम्1 आहार्य्यः । तथा । सात्त्विकः** । 'इत्येव'मिति शेषः । **चतुर्विधः** । 'बोध्यः'- इति शेषः ॥ २९९ ॥

एतदेव पुनः स्पष्टयति—**नटैः** (कर्तृभिः) । **अङ्गादिभिरङ्ग**वचनादिभिः (कारणैः) । **रामयुधिष्ठिरादीनां** 'नायकादीना'मिति शेषः । अवस्थाऽनुकरणमवस्थायाः साधर्म्यस्यानुकरणम् इति तथोक्तम् । 'नायकादे'रिति शेषः । **अभिनयः** । 'स चाङ्गिकादिचतुर्विध'इति शेषः । इदम्बोध्यम्—दृश्यमभिधेयं रूपकं चेत्यनर्थान्तरम्, तत्र हि दृश्यं नाम द्रष्टुं योग्यं शक्यं वा, तत्त्वं चाभिनेयत्वरूपकाभिन्नमेव, एवम्-अभिनेयं नामाभिनेतुं योग्यं शक्यं वा, तत्त्वं च दृश्यत्वरूपकत्वाभिन्नम्, तथा—रूपकं नाम रूपयति अन्यसाधर्म्यमन्यत्र प्रत्यायतीति तथोक्तम्, तत्त्वमप्येवं दृश्यत्वाभिनेयत्वाभिन्नम् । तथा सति अभिधानपार्थक्यं केवलमभिधानवैलक्षण्यव्युत्पादनार्थम् । एवं दृश्यमभिनेयं रूपकं वा नाम्नैव भिन्नं, तच्चाभिनयमूलम्, अभिनयश्च नायिकादिसाधर्म्यानुकरणम् । अत एवोक्तं भरतमुनिना—"विभावयति यस्माच्च नानाऽर्थान् हि प्रयोगतः । शाखाङ्गपाङ्गतेसंयुक्तस्तस्मादभिनयो मतः ॥" इति । मन्दारमरन्दकृता तु—"उत्पादयन् सहृदये रसज्ञानं निरन्तरम् । अनुकर्त्तृस्थितो योऽर्थोऽभिनयः सोऽभिधी-

यते ॥" इति । एतस्य चत्वारो भेदाः, भरतमुनिनाऽपि तथोक्तम्—"आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा । इत्येवाभिनयो विप्रा ! चतुर्धा परिकीर्त्तितः ॥" इति तत्राङ्गिको नाम, अङ्गेषु शिरोहस्तावक्षःपार्श्वकटिचरणेष्वक्षिभ्रुकुटिनासाऽधरकपोलचिबुकेषु च नियुक्त इति तथोक्तः । 'तत्र नियुक्तः ।' ४/४/६९ इति ठक् । 'अङ्गैर्जयतीति, जित इति वाऽऽङ्गिकः । 'तेन दीव्यति खनति जयति जितम् ।' ४/४/२ इति ठक्' इत्येके । 'अङ्गैः संस्कृतः इत्याङ्गिकः । 'संस्कृतम् ।' ४/४/३ इति ठक्' इत्यपरे । 'अङ्गैर्निवृत्तं इत्याङ्गिकः । 'निर्वृत्तेऽक्षद्यूतादिभ्यः ।' ४/४/१९' इति बहवः । 'अक्षयद्यूतादिष्वपठितत्वात् 'निर्वृत्ते' इति योगविभागाट्ठक्' इति केचित् । वाचि नियुक्तो वाचिकः, अत्रापि पूर्ववट्ठक् । न तु—"वाचो व्याहृतार्थायाम् ।' ५/४/३५ इति ठक् । अभिनयविशेषणत्वानुपपत्तेः । आह्रियते वेषादिना साम्यमधिक्रियते इत्याहार्य्यः । 'ऋहलोर्ण्यत् ।' ३/१/१२४ इति ण्यत् । वेषादिना साम्यानुकरणमाहार्य्यो नामाभिनय इति तात्पर्य्यम् । सत्त्वेन जितःसंस्कृतो वेति सत्त्वे वा नियुक्त इति सात्त्विकः । सत्त्वं च रजस्तमोभ्यां शून्यस्य मनसः काऽपि अवस्था, सात्त्विकश्च स्तम्भस्वेदादिभावात्माऽभिनयः । इति ।

रूपकस्य भेदानाह—

**नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः ।**
**ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥ ३ ॥**

---

## विवृतिः

नाटकमिति । अङ्क उत्सृष्टाङ्क ॥

## विज्ञप्रिया

दशविधं रूपकमुत्कीर्त्याष्टादशविधरूपकमुत्कीर्त्तयति ।

## कुसुमप्रतिमा

नाटकमिति । नाटकम्, प्रकरणम्, भाणः व्यायोगः, समवकारः, डिमः, ईहामृगः, अङ्कः, वीथी, प्रहसनम्, इति इतिनामकानि दगश दशविधानि रूपकाणिस्युः ।

## विमला

नाटकमिति ।—नाटकं, प्रकरणं, भाणः, व्यायोगः, समवकारः, डिमः, ईहामृगः, अङ्कः, वीथी, प्रहसनमिति दश रूपकामि भवन्ति । दशरूपकेऽप्युक्तम्;—"नाटकं समकरणं भाणः प्रहसनं डिमः । व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति ॥" इति ।

## लक्ष्मी

नाटकमिति । नाटकम्, प्रकरणम्, भाणः, व्यायोगः, समवकारः, ईहामृगः, अङ्कः, वीथी, प्रहसनम्, इति इति संज्ञकानि दश दशविधानि रूपकाणि स्युरिति शेषः ।

दशविधं नाटकमभिधायाष्टादशविधरूपकमभिधातुमाह— किञ्चेति । अपि चेत्यर्थः ।

## रुचिरा

एवमभिनयं निरूप्य रूपकं विशेषतो निरूपयितुं प्रवृत्तस्तत्रतावत्तस्य भेदाभिधानं प्रतिजानीते—**रूपकस्येत्यादिना** । स्पष्टम् ।

३०८ **नाटकम्** । **अथ** । **प्रकरणम्** । **भाणव्यायोगसमवकारडिमा** भाणः, व्यायोगः, समवकारः, डिमश्चेत्यर्थः । **ईहामृगाङ्कवीथ्य** ईहामृगः, अङ्कः, वीथी चेत्यर्थः । तथा—**प्रहसनम्** । **इत्येवम्** । **दश** । **रूपकाणि** मतानीति शेषः ॥ ३०० ॥

किंच ।

**नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् ।**

**प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ।।४ ।।**

**संलापकं श्रीगदितं शिल्पकं च विलासिका ।**

**दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ।। ५ ।।**

**अष्टादश प्राहुरुपरूपकाणि मनीषिणः ।**

**विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम् ।। ६ ।।**

सर्वेषां प्रकरणादिरूपकाणां नाटिकाद्युपरूपकाणां च ।.

---

## विज्ञप्रिया

किञ्च नाटिकेति । नाट्यात्मकमित्येकम् । विना विशेषमिति—तदुक्तस्तत्तद्विशेष एव भेदकः । तं विहाय सर्वेषां लक्ष्म लक्षणं नाटकवदेवेत्यर्थः ।

## लोचन

लक्ष्म वक्ष्यमाणं लक्षणम् ।

## कुसुमप्रतिमा

किञ्चेति । अपि चेत्यर्थः ।

नाटिकेति । प्रस्थानम् उल्लाप्यं काव्यञ्चेति. प्रस्थानोल्लाप्यक्ताव्यानि त्रीणि । विशेषं प्रत्येकमवान्तरवैषम्यम् । लक्ष्म लक्षणम् ।

## विमला

एवं रूपकभेदानभिधाय उपरूपकभेदानपि आह, नाटिकेति ।—नाटिकामारभ्य भाणिकाऽन्तं निर्दिष्टान्यष्टादश उपरूपकाणि भवन्ति इति मनीषिणः,—विद्वांसः, प्राहुः । विनेति ।—विशेषं विना सर्वेषां—प्रकरणादीनां रूपकाणां, नाटिकादीनाम् उपरूपकाणाञ्चेत्यर्थः, लक्षण—लक्षणं, स्वरूपमित्यर्थः, नाटकवत् मतं—कथितम् ।

## लक्ष्मी

नाटिकेति । प्रस्थानोल्लाप्येति । प्रस्थानम्, उल्लाप्यम् काव्यञ्चेति प्रस्थानोल्लाप्यकाव्यानि त्रीणि । उपरूपकाणि (कर्म) मनीषिणो विद्वांः, (कर्तृ) ।

ननूक्तानामेषां किं कि लक्षणमिति जिज्ञासायां बोधसौकर्यायाह—विनेति । विशेषं प्रत्येकमवान्तरभेदम्, लक्ष्म वक्ष्यमाणलक्षणम् । नाटकवदिति । विशेषं विहाय सर्वेषां लक्षणं नाटकवदेवेत्यर्थः । मतं भरतादिभिः स्वीकृतम् ।

कारिकां स्पष्टयितुमाह—सर्वेषामिति । प्रकरणादीनां नवानां रूपकाणामित्यर्थः ।

## रुचिरा

अस्य भेदान्तरं निर्दिशति-**किञ्च** भेदान्तरमपि निर्दिश्यते ३०९ नाटकेत्यादिना ।

३०९ **नाटिका । त्रोटकम् । गोष्ठी । सट्टकम् । नाट्यरासकम् । प्रस्थानोल्लाप्यकाव्यानि** प्रस्थानम्, उल्लाप्यम्, काव्यं चेत्यर्थः । **प्रेङ्खणम् । तथा । रासकम् । संल्लापकम् । श्रीगदितम् । शिल्पकम् । च** तथा । **विलासिका । दुर्मल्लिका । प्रकरणी । हल्लीशः । च पुनः भाणिका । इत्येवम् । अष्टादश । उपरूपकाणि** (कर्म्म) । **मनीषिणो** विद्वज्जनाः । (कर्त्तृ) । **प्राहुः** । । ३०१ ॥ ३०२ ॥

ननु एषां किंकिं लक्षणामित्याशङ्क्य बोधसौकर्य्यायाह—**३१० विनेत्यादिना** ।

३१० **विशेषं** विशेषकं लक्षणमित्यर्थः । विशिनष्टयवच्छिनत्तीति तं तथोक्तम् । पचादित्वादच् । **विना । सर्वेषा**मुद्दिष्टानां रूपकाणां प्रकरणादीनां नवानामुपरूपकाणां नाटिकाऽऽदीनामष्टादशानां चेत्यर्थः । **लक्ष्म** लक्षणम् । **नाटकवत्** नाटकस्येव । 'तत्र तस्येव ।'५/१/११६ इति वतिः । **मतं** भरतादिभिरङ्गीकृतमित्यर्थः ॥ ३०२ ॥

कारिकां सुगमयितुमाह—**सर्वेषाम्** 'इत्यस्यार्थ' इति शेषः । **प्रकरणादिरूपकाणां** प्रकरणादीनां नवानां रूपकाणामित्यर्थः । **च** तथा । **नाटिकाऽऽद्युपरूपकाणां** नाटिकाऽऽदीनामष्टादशानामुपरूपकाणामित्यर्थः ।

तत्र—

**नाटकं ख्यातवृत्तं स्यात्पञ्चसंधिसमन्वितम्।**
**विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ॥ ७ ॥**
**सुखदुःखसमुद्भूति नानारसनिरन्तरम्।**
**पञ्चादिका दशपरास्तत्राङ्का परिकीर्त्तिताः ॥ ८ ॥**
**प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्।**
**दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥ ९ ॥**

---

## विवृतिः

नाटकलक्षणमाह—तत्रेति । वृत्तं वृत्तान्तः । विलासेति ।

धीरादृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः' इत्युक्तलक्षणो नायकस्य गुणविशेषो विलासः (१०६ पृ.) । ऋद्धिरभ्युदयः ।

आदिना धैर्यगाम्भीर्यादिग्रहणम् ।

तत्र नाटके अङ्काः परिच्छेदरूपाः ।

कार्ये नायककर्मणि व्यापृताः सव्यापाराः ।

## विवृतिपूर्तिः

सुखदुःखेति । सुखदुःखाभ्यां समुद्भूतिः संभवो यस्य तत् सुखदुःखसमुद्भूति । तदुक्तं मातृगुप्ताचार्यैः—'सुखदुःखोत्पत्तिकृतम्' इति ॥

## विज्ञप्रिया

नाटकलक्षणमाह । नाटकमिति—ख्यातेतिवृत्तादयः स्वयमेव व्याख्यायन्ते ।

## कुसुमप्रतिमा

तत्रेति । तेषु पूर्वमुद्दिष्टेषु नाटकादिरूपकेषु मध्ये इत्यर्थः ।

## लक्ष्मी

तत्रेति । तेषु पूर्वमभिहितेषु नाटकादिरूपकेषु मध्य इत्यर्थः । यथोद्देशलक्षणमाह—नाटकमिति । ख्यातवृत्तादयः दृश्यकाव्यस्य विशेषणम्, एवञ्च एतादृशं यद्दृश्यकाव्यं तन्नाटकमित्यर्थः । नाटयति विचित्रं रञ्जनाप्रवेशेन सभ्यानां हृदयं नर्त्तयतीति नाटकम् । केचित्तु—नमनार्थस्यापि नटेर्नाटकशब्दं व्युत्पादयन्ति, तत्र तु घटादित्वेन

ह्रस्वाभावश्चिन्त्यः। यद्यपि कथादयोऽपि श्रोतृहृदयं नाटयन्ति तथाऽप्यङ्कोपायादीनां वैचित्र्यहेतूनामसत्त्वान्न तथा रञ्जकत्वमिति न ते पाठकपदव्यपदेश्याः। ख्यातवृत्तं लोकेषु प्रसिद्धवृत्तान्तम्। पञ्चसन्धयः—मुख-प्रतिमुखादयो वक्ष्यमाणास्तैः समन्वितं संयुतम्। 'धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः' इत्युक्तलक्षणो नायकस्य गुणविशेषो विलासः ऋद्धिरभ्युदयः आदिपदात् धैर्यगाम्भीर्यप्रियप्राप्त्यादीनां ग्रहणम्। तत्तद्गुणवत्ता तु नायकद्वारैव काव्यस्येति ज्ञेयम्। नानाविभूतिभिः नानाविधविभूतिर्नायकाभ्युदयो येभ्यस्तैस्तथोक्तैर्युक्तम्।

सुखदुःखाभ्यां समुद्भूतिः सम्भव उत्पत्तिरिति यावत् यस्य तत् सुखदुःखसमुद्भूति, नानारसैः श्रृङ्गारवीरादिबहुतररसैः निरन्तरं व्याप्तम्। तत्र नाटके अङ्काः परिच्छेदरूपाः वक्ष्यमाणाः, पञ्च आदयो येषां ते तथोक्ताः तथा दश परे शेषा येषां ते तथोक्ताः। एतेन पञ्चमाङ्कादल्पं दशमाङ्कादधिकं नाटकं न भवेदिति प्रदर्शितम्। उक्तं च दशरूपके—

**'पञ्चाङ्कमेतदवरं दशाङ्कं नाटकं परम्' इति।**

प्रख्यातवंशः रामायणमहाभारतादिप्रसिद्धः। राजर्षिः ऋषिवृत्तिदयादाक्षिण्यादिगुणवान्, राजा स चानभिषिक्तोऽपि रामजीमूतवाहनादीनामनभिषिक्तानामपि दशनात्। राजा च क्षत्रिय एवेति नाग्रहः, तथा सति चन्द्रगुप्तस्य शूद्रत्वेन मुद्राराक्षसस्य नाटकत्वं व्याहन्येत। धीरोदात्तः पूर्वोक्तलक्षणः। दिव्यः दिवि भवः स्वर्गीय इत्यर्थः, दिव्यादिव्यो दिव्योऽपि स्वात्मनि मनुष्यत्वाभिमानी वा शब्दाददिव्यश्च तेन शाकुन्तले दुष्यन्तस्य नायकत्वं सङ्गच्छते। गुणवान् प्रशस्तगुणयुक्तः, प्राशस्त्ये मतुप्। एकः श्रृङ्गार एव एको वीर एव वा अङ्गी प्रधानरसो भवेत्। उत्कर्षहेतवे एक एव रसोऽङ्गित्वेन निवेशनीय' इत्यर्थः श्रृङ्गारो वीरो वेति कथनं तु समुचितरसबोधकम्, तेनोत्तररामचरिते करुणस्य प्रबोधचन्द्रोदये शान्तस्य चाङ्गित्वमक्षतमेव। एवञ्च नाटकेऽवान्तररससम्भवेऽपि तेऽङ्गान्येव समस्तरसनिर्वाहकस्त्वेक एव प्रधानमिति भावः। उक्तञ्च ध्वनिकृता—

## रुचिरा

ननु तर्हि किं नाम नाटकमित्याशङ्कायामाह-३११ **नाटक**मित्यादि।

३११ **ख्यातंवृत्तं** ख्यातं महाऽनुभावैर्वर्णिततया प्रसिद्धं वृत्तं चरितं नायकादेर्यत्र तथोक्तम्। एतेन—पूर्ववर्णितमेव चरितमुपजीव्य नायकादेश्चरितं नाटके वर्णनीयमिति दर्शितम्, **पञ्चसन्धिसमन्वितं** पञ्चसन्धयो वक्ष्यमाणास्तैः समन्वितम्। **विलासद्ध्यादिगुणवत्** विलासः (प्रियासङ्ग उद्यानविहारादिर्वा) च ऋद्धिः (अभ्युदयः) च गुणाः (धैर्य्यादयः) चेत्येते सन्त्यस्मिन् वर्ण्यमानास्तथोक्तम्। **नानाविभूतिभिर्**नानाविभूतिभिरमात्यादिभिः सद्भिः सहायैः। **युक्तम्। सुखदुःखसमुद्भुति** सुखदुःखाभ्यां समुद्भूतिः समुद्भवो यत्र तथोक्तम्। 'सुखदुःखोत्पत्तिकृतम्' इति मातृगुप्ताचार्य्याः। **नानारसनिरन्तरं** नाना विधिना रसास्तैः श्रृङ्गारहास्यादिभी रसैर्निरन्तरं व्याप्तम्। समस्तपाठे तु—सुखं च दुःखं च समुद्भूः (मुदा हर्षेण सह वर्त्तते, इति समुद् असौ भूरिति तथोक्ता) च ऊतिश्च नानारसाश्चेति तैर्निरन्तरं व्याप्तमिति तथोक्तम्। मुत् हर्षः, भूः स्थानम्, ऊतिः रक्षा च। अवनं रक्षणीमत्यूतिः 'ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च।' ३/३/९७ इति निपातनम्। यद्वा—सुखदुःखयोः समुद्भूतिस्तया नानारसनिरन्तरमित्यर्थः। **नाटकं** नटेन निर्वृत्तो नाटः (नटकर्तृकोऽभिनयः) तेन गर्वितमिति तथोक्तम्। अत एव—'विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्।' इत्युक्तम्। अभिनयप्रधानभूतमिति भावः। 'तेन निर्वृत्तम्।' ४//६८ इत्यण्। 'अवक्षेपणे कन्।' ५/३/९५ इति कन्। यद्वा—नाटयति अभिनयोत्कर्षमहिम्नाऽभिनयपरानिव करोतीति तथोक्तम्। **स्यात्। तत्र** तस्मिन्नाटके इत्यर्थः। **पञ्चादिकाः** पञ्चसङ्ख्यातो न न्यूना इति भावः। **दशपरा** दशस-

ङ्ख्यातो नाधिका इति भावः। **अङ्का** वक्ष्यमाणलक्षणा विभागविशेषा इति तात्पर्य्यम्। अत एव मेदिनीकारेणोक्तम्—"अङ्को रूपकभेदाङ्कश्चिन्हे रेखाऽऽजिभूषणे।" इति। परिकीर्त्तिताः। तथा—'तत्रे'ति पूर्वतोऽन्वेति। **प्रख्यातवंशः** प्रख्यातो वंशः पितृपितामहादिपूर्वजवर्गो यस्य तथोक्तः। धीरोदात्तो निरुक्तलक्षणो नायकविशेषः, यद्वा—धीरोऽसावुदात्त इति तथोक्तः। विशेषणविशेष्यभावस्य प्रायिकत्वाद्विशेषणसमासः। **प्रतापवान्** द्विग्विजयादिसमर्थः। **राजर्षिः। अथ** यद्वेति भावः। **दिव्यो** दिव्यत्वाभिमानी। **वाऽथवा। दिव्यादिव्यो** दिव्यत्वेऽप्यदिव्यत्वाभिमानीत्यर्थः। **गुणवान्** गाम्भीर्य्यौदार्यादिगुणसम्पन्नः। **नायकः। मतः।**

**एक एव भवेदङ्गी शृङ्गारो वीर एव वा।**
**अङ्गमन्ये रसाः सर्वे कार्यो निर्वहणेऽद्भुतः ॥ १० ॥**
**चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः ।**
**गोपुच्छाग्रसमाग्रं तु बन्धनं तस्य कीर्तितम् ॥ ११ ॥**

---

## विवृतिः

अङ्गी प्रधानम् । निर्वहणे उपसंहाराख्यचरमसंधौ । अद्भुत आश्चर्यरसः ।

बन्धनं गुम्फनम् । तस्य नाटकस्य । रामचरितादीत्यादिना प्रसन्नराघवानर्घराघवादीनां ग्रहणम् ।

महासहायमित । नानाविधा विभूतिर्नायकाद्यभ्युदयो येभ्यस्ते 'महान्तः सहाया यत्र' इति व्युत्पत्त्यभिप्रा-येण । आदिव्यनायका दुष्यन्तादयः । नराभिमानी नराभेदग्रहवान् । ईश्वरे नरत्वस्य बाधात्तादृशग्रहो भ्रम एव वाच्यः । स चेश्वरे न संभवतीति । तस्य नरचरिताचरणं तु लोकशिक्षार्थं माययैव, न तु नरत्वाभिमानात् । तदुक्तं पाद्मे—'मायामानुषचारित्रो महादेवादिपूजितः' इति ।

श्रीभागवते च—'भ्रात्रा वने कृपणवत्प्रियया वियुक्तः स्त्रीसङ्गिनां गतिमिति प्रथयंश्चचार' इति । तथा सति दिव्यादिव्यपदार्थ एवं वाच्यः—मानुष्यां देवेनोत्पादितो दिव्यादिव्यो यथा युधिष्ठिरादिः । एवं च श्रीरामचन्द्रोऽपि दिव्यनायक एव । अन्येषु गर्भविमर्शनिर्वहणेषु ॥

## विवृतिपूर्तिः

एक इति । उत्कर्षाधानाय एक एव रसोऽङ्गित्वेन निवेशयितव्य इत्यर्थः । शृङ्गारो वीरो वेति कथनं तु समुचितरससूचकम् । तेनोत्तररामचरिते करुणस्य, प्रबोधचन्द्रोदये शान्तस्य चाङ्गित्वमव्याहतम् । अत एवोक्तं ध्वनिकृता—'प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने । एको रसोऽङ्गीकर्तव्यस्तेषामुत्कर्षमिच्छता ॥' इति ॥

निर्वहण इति । निर्वहणसंधावद्भुतरसस्यावश्यकत्वमुक्तं नाट्यशास्त्रे—'सर्वेषां काव्यानां नानारसभा-वयुक्तियुक्तानाम् । निर्वहणे कर्तव्यो नित्यं हि रसोद्भुतस्तज्ज्ञैः ॥' इति ॥

चत्वार इति । इह कार्यपुरुषाचत्वारः पञ्च वेति यदुक्तम्, तत्प्रायोनियमाभिप्रायेणैव । तथा चाष्टादशाध्याये मुनिराह—'न महाजनपरिवारं कर्तव्यं नाटकं प्रकरणं वा । येनात्र कार्यपुरुषाश्चत्वारः पञ्च वा ते स्युः ॥' इति ॥

गोपुच्छेति । 'कायं गोपुच्छाग्रं कर्तव्यं बन्धमासाद्य' इति भरतवाक्यं व्याचक्षाणानां मतभेदं दर्शयति—गोपुच्छेत्यादिना ॥

## विज्ञप्रिया

एक एवेति । नाटकेऽवान्तरनानारससम्भवेऽपि तेऽङ्गान्येव । समस्तरसनिर्वाहः शृङ्गारवीरयोरेक एव त्वङ्गी प्रधानमित्यर्थः ।

ख्यातं रामायणादीति—कार्यं निर्वहणोऽद्भुतमिति यदुक्तं तत्तत्प्रकीर्णार्थसमुच्चयीकरणरूपे निर्वहणोऽद्भुतं कार्यमित्यर्थः। निर्वहणसन्धिर्हि नानास्थले प्रकीर्णार्थानां वैशिष्ट्यरूपमैकात्म्यमिति वक्ष्यते। सन्धयो वक्ष्यन्ते। तत्रैकेनैव प्रयोजनेनान्वितानां कथांशानामवान्तरैकार्थसंबन्ध इति सन्धिसामान्यलक्षणम्। तत्र च एकेनैकेनेत्यर्थः। तत्र इतिवृत्तस्योत्साहसहितबीजसमुत्पत्तिर्मुखसन्धिः। इति वृत्तमभिनेतव्यप्रसङ्गः। बीजं तदङ्कुरः तस्यैव यत्नयुक्त उद्भेदः प्रतिमुखसन्धिः। ह्रासोन्मेषवानुद्देश्यप्राप्त्याशायुक्तः फलप्रधानोपायस्योद्भेदो गर्भसन्धिः। गर्भसन्धितोरधिकतया उद्भिन्नो मुख्यफलोपायः शापादिना विघ्नितो विमर्षसन्धिः। बीजवतां प्रकीर्णानां सकलसन्ध्युक्तार्थानामेकार्थताप्रापणं निर्वहणसन्धिः। अयमुपसंहृतिसन्धिरित्युच्यते। एते पञ्च सन्धयः।

महासहायमिति। रामादेः सुग्रीवादयो महासहायाः। नायकः प्रधानपात्रम्। पञ्चाधिकदशपरास्तत्राङ्का इत्युक्तत्वात् परिच्छेदरूपस्याङ्कस्य स्वरूपमाह—प्रत्यक्षेति। प्रत्यक्षनेत्रेति। अङ्क इति कीर्तित इत्यग्रेन्वयः। नेता नायकः, तच्चरितं प्रत्यक्षं यत्र तादृशः रसभावेति। भावो नायकनायकयोराकूतम्। क्षुद्रचूर्णकमदीर्घसमासं संस्कृतम्। विच्छिन्नेति। व्यापकप्रसङ्गस्य एकदेशरूपोऽर्थो विच्छिन्नसमापितो यत्र तादृशः। किञ्चित्संलग्नबिन्दुक इति। अवान्तरार्थविच्छेदेऽपि प्रसङ्गान्तरोक्त्याकाङ्क्षोत्थापकं वस्तु बिन्दुसंज्ञकम्। "अवान्तरार्थविच्छेदे बिन्द्वविच्छेदकारणम्"इति वक्ष्यमाणत्वात्। किञ्चित्तद्वान् इत्यर्थः। बीजमभिनेतव्यप्रसङ्गस्याङ्कुर इत्यर्थः। नच तत्संहृतिमान् तद्विच्छेदवान्। अङ्केऽभिनेतव्यवस्तुनां निषेधमाह—दूराह्वानमिति। दूरस्थजनस्याह्वानमित्यर्थः। भोजनमन्नभोजनम्। दन्तच्छेद्यनखच्च्वेद्ययोर्वस्तुनोरपि भक्षणनिषेधः। तदपि नाभिनेतव्यमित्यर्थः। एषआमभिनयः सदस्यानाममङ्गलमित्य भिप्रायः।

## लोचन

यथोद्देशं लक्षणमाह—नाटकमिति। यदुक्तं कविना। नानाविभूतिसंयुक्तमृद्धिविलासादिभिर्गुणैश्चैवेति। निर्वहणेऽन्तिमसन्धौ चत्वारः पञ्च वा इत्युपलक्षणमात्रं कार्यव्यापारिणां प्रयत्ने नाल्पत्वं विधेयम्, बहुत्वेऽभिनयदुःखावहत्वात्।

## कुसुमप्रतिमा

नाटकमिति। ख्यातवृत्तमित्यादिकं दृशयकाव्यस्य विशेषणम्। तथा च ईदृशं यद्दृश्यकाव्यं तन्नाटकं स्यादित्यर्थः। ख्यातवृत्तं लोकेषु विख्यातवृत्तान्तम्, न पुनः प्रकरणादिवत् कविकल्पितमिति भावः। पञ्चसन्धयः—मुख-प्रतिमुख-गम-विमर्षोपसंवृतिनामानो वक्ष्यमाणास्तैः समन्वितम्। विलासो धीरा दृष्टिरित्यादिना प्रागुक्तलक्षणः ऋद्धिर्या काचिदुन्नतिः, आदिशब्दात् प्रियप्राप्तिप्रबृतिः। तत्तद्गुणवत्ता तु नायकद्वारैव काव्यस्येति बोध्यम्। नानाविभूतिभिर्बहुविधसम्पद्भिर्युक्तम्। सुखदुःखयोः समुद्भूत्या उत्पत्त्या नानारसैः श्रृङ्गारकरुणादिबहुतररसैः निरन्तरं परिपूर्णम्। सुखदुःखयोरेकतरोत्पत्ताविव रसविशेषस्यावश्यम्भावित्वात् तयोरेकतरेण तत्रावश्यमेव स्थातव्यमिति भावः। तत्र नाटके अङ्का वक्ष्यमाणलक्षणाः एञ्च आदयो येषां ते तथा दश परे शेषा येषां ते। तथा च पञ्चमाङ्कात्र्यूनं दशमाङ्कादधिकञ्च नाटकं न स्यादित्यर्थः। राजर्षिः ऋषियोग्यदयादाक्षिण्यक्षमादिगुणगान् राजा राज्याधिपतिः, न तु ऋषितुल्यक्षत्रियपतिः, तथात्वे चन्द्रगुप्तस्य शूद्रत्वेन मुद्राराक्षसस्य नाटकत्वं न स्यात्। धीरोदात्तः प्रागुक्तलक्षणः। दिव्यः स्वर्गीयः, दिव्यादिव्यो वृत्तौ विवृतः, वाशब्दादितर्यश्च। तेन दुश्मन्तादीनामपि नाटकनायकत्वम्। गुणवान् धार्मिकः न तु धैर्य्यादिमानित्यर्थः "विलासहर्यादिगुणवत्" इत्यनेनैव तत्प्राप्तेः। एकः श्रृङ्गार एव,

एको वीर एव वाशब्दात् एकः शान्त एव वा अङ्क्यो प्रधानरसो भवेत् । तथा च उत्तमप्रकृतीनां श्रृङ्गार-वीर-शान्तानां मध्ये यः कश्चिदेक एव रसो नाटके प्रधानतया निबद्धव्य इत्युक्तं भवति । एवञ्च प्रबोधश्चन्द्रोदय रूपकस्य शान्तरसप्रधानत्वेऽपि नाटकत्वमक्षतम् । न च तस्य ख्यातवृत्तत्वाभावेनापि प्रकरणत्वमेवेति वाच्यम्,

**"प्रबोधचन्द्रोदयनाम नाटकं ज्ञानाग्निसंगृह्यविशुद्धहाटकम् ।"**

इति तत्रैवोक्तत्वात् लोकप्रसिद्धवृत्तान्तस्यैव ख्यातवृत्तत्वाभिप्रायात् । ध्वनिकारेण तु परिगणितानां सर्वेषामेव रसानां मध्ये यस्य कस्यचिदेकस्वैव रसस्य नाटके प्रधानतया निबन्धनमङ्गीकृतम् । तथा चोक्तम्—

**"प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने ।**

**एको रसोऽडअगीकत्तव्यस्तेषामुत्कष मिच्छता ॥"**

किन्तु शृङ्गारवीरशान्तेतररसानां प्राधान्यस्य प्रसिद्धनाटकेष्वदर्शनादियं ध्वनिकारोक्तिरनादरणीयैवैत्यव धेयम् । अन्ये सर्वे रसा अङ्गं यथासम्भवमङ्गभावेनावस्थातुमर्हन्तीत्यर्थः । ''वेदाः प्रमाणम्"इत्यादिवदुद्देश्यविधेय-भावादङ्गमित्यत्र लिङ्गवचनव्यत्ययः । निर्वहणे उपसंहारसन्धौ यत्किञ्चित् अद्भुतं विस्मयावद्व्यापारः कार्य्यं निबद्धव्यम् । चत्वारः पञ्च वा मुख्याः प्रधानाः कार्य्यव्यापृता नायककार्य्येषु निरताः पूरुषाः पात्रादि निबद्धव्या इति शेषः । अत्र वाशब्दोऽनास्थायाम् । तेन ततो न्यूनाधिकतादृशपात्रनिबन्धनेऽपि न दोषः । तस्य नाटकस्य बन्धनं विरचनम्, गोः पुच्छायस्य लाङ्गुलायस्य समं तुल्यम् अयं शेषांशो यस्य तत्तादृशं कीत्र्तितम् । वृत्तावेव स्पष्टीकृत-मेतत् ।

कारिकास्थमस्पष्टपदं क्रमशो व्याचष्टे ख्यातमित्यादि । आत्रादिपदेन महाभारतादीतिहासपुराण-लोकस-माजानां ग्रहणम् । तेनैप्रबोधचन्द्रोदय मालविकाग्निमिव मुद्राराक्षस मदीयवङ्गीयप्रतापादीनामपि ख्यातवृत्ततया नाटकत्वसिद्धिः ।

नानेति । महासहायमित्याभिप्रायेणोक्तमिति भावः । तथा च महान्तो जनाः सहाया नायकस्योद्देश्यका-र्य्येषु साहाय्यकरा यत्र तन्महासहायम् । यथा—वेणीसंहारे भीमादयः, शकुन्तलादौ चन्द्रादयः ।

सुखेति । यथोत्तररामचरिते रामस्य प्रथमं सुखम्, परञ्च दुःखम् । यथा वा वेणीसंहारे युधिष्ठिरस्य प्रथमं दुःखम्, परञ्च सुखम् ।

राजेति । दुष्मन्तादयः अदिन्याः श्रीकृष्णादय इति । "कृष्णस्तु भगवान् स्वयम्" इति श्रीमद्भागवतवच-नात् तदीयचरित्रे प्रायेणैव देवभावाच्च कृष्णः केवल एव दिव्यः । आदिशब्दात् लक्ष्मीस्वयंवरे नारायणादयः । श्रीरामस्य तु नारायणावतारत्वात् दिव्यत्वम्, नराभिमानिताप्रकाशाय सीताविच्छेदादौ विलापाच्च अदिव्यत्वमि-त्याशयः ।

गोपुच्छेति । सूक्ष्मः क्षुद्राः । बाला लोमानि । कार्य्याणि नायकव्यापाराः मुखसन्धौ समाप्तानि, अतएल ह्रस्वानीति भावः । अन्वेष्वपि गर्भादिषु सन्धिषु । कानिचित् कानिचित् कार्य्याणि समाप्तानीत्यन्वयः । अतएव तानि दीर्घाणीति भावः । अतः कस्यापि मतस्यानिराकृतत्वादुभयमेव ग्रन्थकारसम्मतनित्यवधेयम् ।

## विमला

ननुकिं तत् नाटकलक्षणमित्यपेक्षायां नाटकलक्षणमाह, नाटकमिति ।—ख्यातवृत्तं—पुराणेतिहासादिप्रसिद्धवृत्तान्तं, न तु स्वरूपोलकल्पितवृत्तान्तमिति भावः; अत एवोक्तं,—"तत्रख्यातं विधातव्यं वृत्तमत्राधिकारितम्" इति । पञ्चभिः (वक्ष्यमाणैः) सन्धिभिः,—मुखादिभिरङ्गविशेषैः, समन्वितं—सम्बद्धम् । दशरूपककारस्त्वाह,—"आद्यन्तमेवं निश्चित्य पञ्चधा तद्विभव्य च । खण्डशः सन्धिसंज्ञाश्च विभागानपि खण्डयेत् ॥" इति । विलासर्द्धयादिगुणवत्—विलासः,—"धीरादृष्टिर्गतिश्चित्रा विलासे सम्मितंवचः" इति लक्षणोक्तनाथगुणविशेषः, ऋद्धिः,—अभ्युन्नतिः [आदिना धैर्य्यगाम्भीर्य्यादिग्रहणं] तद्गुणवत्—तद्गुणयुक्तम् । तथोक्तं,—"सर्वसम्पत्रभूतं स्यात्"इति । सुखभ्य दुःखस्य च समुद्भूत्या—कदाचित् मुखसमुद्भूत्या, कदाचित् दुःखसमुद्भूत्या चेत्यर्थः, नाना—त्रिविधाः, ये रसाः,—आस्वादव्यापाराः, तैः निरन्तरं—सान्द्र, पूर्णमित्यर्थः; ["सुखदुःखसमुद्भूति" इति पृथकपदस्वीकारे तु सुखदुःखाभ्यां समुद्भूतिः,—सम्भवः यस्य तत्] तथोक्तं,—"सुखदुःखोत्पत्तिवकृतम्" इति । अङ्गी—प्रधानभूतः, अङ्गम्—अप्रधानम् । निर्वहणे—निर्वहणाख्ये सन्धौ, अद्भुतं—विस्मययजनकव्यापारः, [अद्भुत इति पाठान्तरे—तदाख्यो रस इत्यर्थः] कार्य्यं—वर्णनीयम्, अत एवोक्तं दशरूपककृता,—"एको रसोऽङ्गीकर्त्तव्यो वीरः श्रृङ्गार एव वा । अङ्गमन्ये रसाः सर्वे कुर्य्यात् निर्वहणेऽद्भुतम् ॥" बन्धनं—रचनम् । शेषं स्पष्टम् ।

## लक्ष्मी

**प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने ।**

**एकोरसोऽङ्गीकर्त्तव्यस्तेषामुत्कर्षमिच्छता ॥' इति ।**

यत्तु—शृङ्गारवीर-शान्तानां मध्ये यः कश्चिदेक एव रसो नाटके प्रधानतया निबद्धव्यः' इत्युक्तं तदसारम्, तथासति प्रबोधचन्द्रोदयस्य नाटकत्वाक्षतावपि उत्तरामचरितादेर्नाटकत्वं न स्यात् तदर्थमत्र ध्वनिकारोक्तमतमेवावश्यमाश्रयणीयमिति तन्मतखण्डनमतिसाहसमात्रमेवेति सुधीभिर्विभावनीयम् ।

अन्ये सर्वे रसाः अङ्गमप्रधानभावेनावस्थातुं शक्ष्यन्तीत्यर्थः । ननु रसान्तरेषु बहुषु प्राप्तपरिपोषकेषु सत्सु कथमेकस्याङ्गिता न विरुध्यते इति चेत्? अत्रोच्यते—

**'रसान्तररसमावेशः प्रस्तुतस्य रसस्य यः ।**

**नोपहन्त्यङ्गितां सोऽस्य स्थायित्वेनावभासिनः ॥' इति ।**

एतदुक्तं भवति—अङ्गभूतान्यपि रसान्तराणि स्वभावादिसामग्रया स्वावस्थायां यद्यपि ते लब्धपरिपोषाणि चमत्कारगोचरतां प्रतिपद्यन्ते तथापि च चमत्कारस्तावत्येव न परितुष्य विश्राम्यति किन्तु चमत्कारान्तरमनुधावति । सर्वत्रैव ह्यङ्गाङ्गिभावायमयमेवोदन्तः । यथाह तत्रभवान्—

**'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।**

**प्रधानस्योपकारे हि तथा भूयसि वर्त्तते ॥' इति ।**

ननु—

**'या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः ।**

**प्रायस्ता एव कर्त्तव्याः समानार्थे विशेषणे ॥'**

इति नियमात् 'रसाः अङ्गम्' इति कथमिति चेत् ? 'वेदाः प्रमाणम्' इतिवदुद्देश्यविधेयभावेन लिङ्गवचन-व्यत्ययकल्पनात् । निर्वहणे उपसंहाराख्यचरमसन्धौ अद्भुतः आश्चर्य रसः कार्यो निबद्धव्यः । एतदावश्यकत्व-मुक्तं नाटयशास्त्रे—

**'सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम् ।**

**निर्वहणे कर्त्तव्यो नित्यं हि रसोऽद्भुतस्तज्ज्ञैः ॥' इति ।**

कार्ये नायककर्मणि व्यापृता निरताः पूरुषाः पुरुषाः 'पूरुषाः पुरुषा नरः' इत्यमरः, चत्वारः पञ्च वा मुख्याः प्रधानाः निबद्धव्या इति शेषः । अत्र वाशब्दोऽनास्थायाम्, तेन कार्यपुरुषाश्चत्वारः पञ्च वेति यदुक्तं ततो न्यूनाधि-कतथाविधपात्रनिबन्धनेंऽपि न दोषः ।

तस्य नाटकस्य बन्धनं विरचनं गोः पुच्छाग्रस्य गोर्लाङ्गूलाग्रभागस्य समं सदृशम् अग्रम् अवशिष्टांशो यस्य तत्तथोक्तं कीर्त्तितं कथितम् । तदुक्तं मुनिना—

**'कायं गोपुच्छाग्रं कर्त्तव्यं बन्धमासाद्य' ॥ इति ।**

ख्यातं रामायणादिप्रसिद्धं वृत्तम् । यथा—रामचरितादि । संधयो वक्ष्यन्ते । नानाविभूतिभिर्युक्तमिति महासहायम् । सुखदुःखसमुद्भूतत्वं रामयुधिष्ठिरादिवृत्तान्तेष्वभिव्यक्तम् । राजर्षयो दुष्यन्तादयः । दिव्याः श्रीकृष्णादयः । दिव्यादिव्यः, यो दिव्योऽप्यात्मनि नराभिमानी । यथा—श्रीरामचन्द्रः । 'गोपुच्छाग्रसमाग्रमिति क्रमे-णाङ्काः सूक्ष्माः कर्तव्याः' इति केचित् । अन्य त्वाहुः—'यथा गोपुच्छे केचिद्वालाह्रस्वाः केचिद्दीर्घास्तथेह कानिचि-त्कार्याणि मुखसंधौ समाप्तानि कानिचित्प्रतिमुखे । एवमन्येष्वपि कानिचित्कानिचित् इति ।

विवरणे स्पष्टीभविष्यतीतोऽधिकम् । अत्र विशेषो दशरूपके उक्तः—

**'यत्तत्रानुचितं किञ्चिन्नायकस्य रसस्य वा ।**

**विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ॥**

यथा छद्मना वालिबधो मायुराजेनोदात्तराघवे परित्यक्तः, वीरचरिते तु रावणसौहृदेन वाली, रामवधार्थ-मागतो रामेण हत इत्यन्यथाकृतः ॥ इति ।

कारिकास्थास्फुटपदं यथाक्रमं विवृणोति—ख्यातमिति । आदिपदेन महाभारतादीतिहासपुराणजनस-माजानां परिग्रहः । वृत्तं चरितम्, 'यत्र तत्' इति शेषः । 'वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले' इत्यमरः । एवञ्च प्रबोधचन्द्रोदयादीनां ख्यातवृत्तत्वान्नाटकत्वसिद्धिः । रामचरितादीत्यादिना प्रसन्नराघवनार्घराघवादीनां परिग्रहः ।

नानाविभूतिभिरिति । महासहायमित्याशयेनोक्तमिति भावः । एवञ्च महान्तः पुरुषाः सहाया यत्र तत्तथो-क्तम् । यथा रामादेः सुग्रीवादयो वेणीसंहारे युधिष्ठिरस्य भीमः, शाकुन्तलादौ च इन्द्रादयः । सुखदुःखेति । यथा वेणीसंहारे युधिष्ठिरस्य प्रथमं दुःखम् अनन्तरञ्च सुखम् । यथा वा उत्तररामचरिते रामस्य प्रथमं सुखम् अनन्तरञ्च दुःखम् ।

राजर्षय इति। दुष्यन्तादयोऽदिव्यनायकाः। श्रीकृष्णादय इति। 'ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः' इति नारायणाथर्वशिरोपनिषत्। 'कृष्णस्तु भगवान् स्वयम्' इत्यादि श्रीमद्भागवतवचनादिभिः तच्चरित्रे प्रायेण देवभावाच्च श्रीकृष्णः केवलो दिव्य एव। आदिपदात् लक्ष्मीस्वयंवरे नारायणादयः श्रीरामस्यापि।

**राम एव परं ब्रह्म राम एव परं तपः।**

**राम एव परं तत्त्वं श्रीरामो ब्रह्मतारकम्॥' (रा. रह.)**

**'रामो न मानुषो देव! साक्षान्नारायणोऽव्ययः' इति।**

नारायणावतारत्वाद् दिव्यत्वम्, नराभिमानित्वद्योतनाय सीताविरहादौ विलापाच्च अदिव्यत्वमित्यभिप्रायः।

'कायं गोपुच्छाग्रं कर्त्तव्यं बन्धभासाद्य' इति भरतमुनिवचनं व्याख्यातृणां मतभेदं दर्शयितुमाह—गोपुच्छाग्रेति। सूक्ष्मा अल्पाः। बाला लोमानि। कार्याणि नायककर्माणि मुखसन्धौ समाप्तानि, अत एव ह्रस्वानीत्याशयः।

एवमिति। अन्येष्वपि गर्भविमर्शनिर्वहणेषु सन्धिषु। कानिचित्कानिचित् कार्याणि समाप्तानीति पूर्वेण सम्बन्धः। अत एव तानि दीर्घाणीत्याशयः। अत्रोभयविधव्याख्यानेऽपि क्षतिविरहादुभयविधव्याख्यानं ग्रन्थकृदभिप्रेतमिति बोध्यम्।

## रुचिरा

एवम्—'तत्रेति'ति पूर्वतोऽनुक्रान्तम्। **एकः**। **एव** नतु बहन इति भावः। **शृङ्गारः**। **वा**। **वीरः**। **एव** नतु बीभत्साद्यन्यतमोऽप्यन्यः। **अङ्गी** प्रधानभूतः। **भवेत्**। **अन्ये** हास्यबीभत्साद्रय इत्यर्थः। **सर्वे**। **रसाः**। **अङ्गम्**प्रधानभूताः। इदमववधेयम्।—'एक एवे'त्यभिधानमुत्कर्षाधानाय, 'श्रृङ्गारो वीर एव वे'ति पुनः हास्यबीभत्सभयानकरौद्रमात्रव्यवच्छेदाय तेन—प्रबोधचन्द्रे शान्तस्योत्तरचरिते करुणस्य च प्राधान्यं सङ्गच्छते। उक्तं च ध्वनिकृता—"प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने। एको रसोऽङ्गीकर्त्तव्यस्तेषामुत्कर्षमिच्छता॥' इति। तथा—**निर्वहणे** निर्वहणसन्धावित्यर्थः। उपसंहाराख्ये चरमसन्धाविति भावः। **अद्भुतः**। 'रस' इति शेषः। **कार्य्यः**। तथोक्तम्—"सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम्। निर्वहणे कर्त्तव्यो नित्यं हि रसोऽद्भुतस्तज्ज्ञैः॥" इति। एवम्—"तत्रे" ति पूर्वतोऽन्वेति। चत्वारः। पञ्च। वा। कार्य्यव्यापृतपूरुषाः कार्य्येषु नायककर्म्मसु व्यापृताः, तेऽमी पूरुषाः पुरुषा इति तथोक्ताः। 'पुरुषाः पूरुषा नरः।' इत्यमरः। **मुख्याः** प्रधानतयाऽङ्गीकृताः। 'भवन्ती' ति शेषः। एतेन—अन्येऽपि कतिचिदमुख्याः क्वापि स्युरिति सूचितम्। अत एवोक्तम्—"न महाजनपरिवारं कर्त्तव्यं नाटकं प्रकरणं वा। येनात्र कार्य्यपुरुषाश्चत्वारः पञ्च वा ते स्युः॥" इति, "व्यायागेहामृगसमवकारडिमसञ्चितानि कार्य्यामि। दशभिर्वा द्वादशभिर्वा षोडशभिर्वाऽपि पुरुषैः स्युः।" इति च। **गोपुच्छाग्रसमाग्रं** गोपुच्छाग्रेण सममिति तथोक्तमग्रमग्रभागो यस्य यत्र वा तत्तथोक्तम्। **तु** पुनः। **तस्य** नाटकस्य। **बन्धनं** गुम्फनं रचनेति यावत्। **कीर्त्तितम्**।' अत एवोक्तं मुनिना—'काव्यं गोपुच्छाग्रं कर्त्तव्यं 'बन्धमासाद्य।' इति॥ ३०४॥ ३०५॥ ३०६॥ ३०७॥ ३०८॥

बोधसौकर्य्याय कठिनांशस्य तात्पर्य्यं निर्दिशति—**ख्यातम्**। **रामायणादिप्रसिद्धं** रामायणादिषु प्रसिद्धम्। आदिना महाभारतश्रीमद्भागवतादीनां ग्रहणम्। **वृत्तं** चरितम् 'यत्र तत्' इति शेषः। 'वृत्तं पद्ये चरित्रे त्रिष्वतीते

दृढनिस्तले ।' **इत्यमरः** । उदाहरति—**यथा** । **रामचरितादि** । आदिना नलयुधिष्ठिरहरिश्चन्द्रादिचरितस्य ग्रहणम् । **सन्ध्यो** मुखप्रति मुखादयः पञ्च सप्रभेदा' इति शेषः । **वक्ष्यन्ते** 'मुखं प्रतिमुखं' मित्यादिनेति शेषः । **'नानाविभूतिभिः । युक्तम् ।' इति** 'अस्ये' ति शेषः । **महासहायं** महान् सहायः महान्तो वा सहाया यत्र तत् । 'इत्यर्थः इति शेषः । 'सुखदुःखसमुद्भूति' इति पदार्थं निर्दिशति—**सुखदुःखसमुद्भूतित्वं** सुखदुःखाभ्यां समुद्भूतिर्यत्र तस्य भावस्तत्त्वं तथोक्तम् । **युधिष्ठिरादिवृत्तान्तेषु** युधिष्ठिरहरिश्चन्द्रादिचरितेषु । अभिव्यक्तम् । राजर्षिर्दिव्यो दिव्यादिव्यो वा नायकः स्यादित्युक्तं स्पष्टयति-**राजर्षयः** । **दुष्यन्तादयः** । आदिना नलादीनां ग्रहणम् । **दिव्याः** । **श्रीकृष्णादयः** । आदिना कपिलवामननृसिंहादीनां ग्रहणम् । **दिव्यादिव्या** दिव्याश्च तेऽदिव्या इति तथोक्ताः । **ये** । **दिव्याः** । **अपि** । **आत्मनि** । **नराभिमानिनः** 'इव प्रतीयमानास्ते इत्यर्थः' इति शेषः । यथा । **श्रीरामचन्द्रादयः** । आदिना पृथ्वादीनां ग्रहणम् । श्रीरामचन्द्रस्य नरत्वानङ्गीकारे रावणवधाद्यसम्भव आपद्येतेति बोध्यम् । **'गोपुच्छाग्रसमाग्रम्** ।' इति 'अस्ये'ति शेषः । **क्रमेणानुपूर्व्येम** । **अङ्काः** परिच्छेदाः वक्ष्यमाणलक्षणा विभागविशेषा इति यावत् । **सूक्ष्माः** । **कर्त्तव्याः** । 'प्रथमापेक्षया द्वितीयः, द्वितीयापेक्षया' तृतीय इत्येवं पूर्वपूर्वापेक्षया परः परः सूक्ष्मोऽङ्को विधेय इति भावः । 'इत्यर्थः' इति शेषः । **इति** । **केचित्** 'कायं गोपुच्छाग्रं कत्तव्यं बन्धनमासाद्ये' ति भरतपद्य व्याचक्षाणेष्वन्यतमा इति शेषः । 'आहु'रिति शेषः । **अन्ये** इतो भिन्नास्तदेव व्याचक्षामेष्वन्यतमा इत्यर्थः । **तु** पुनः **आहुः** । **"यथा** । **गोपुच्छे** । **केचित् वालाः** । **ह्रस्वा** । अदीर्घाः । **केचित्** । 'वाला'इति पूर्वतोऽन्वेति । दीर्गा आद्यताः । 'भवन्ती'ति शेषः । **तथा** । **इहास्मिन्** नाटके इत्यर्थः । **कानिचित्** 'गुम्फनानी'ति शेषः । **मुखसन्धौ** । **समाप्तानि** । **कार्य्याणि कानिचित्** 'गुम्फानानि' इति शेषः । **प्रतिमुखे** तदाख्ये सन्धौ । समाप्तानि । कार्य्याणि । कानिचित् 'गुम्फनानि' इति शेषः । प्रतिमुखे तदाख्ये सन्धौ । 'समाप्तानि कार्य्यामि'ति शेषः । **एवम्** । **अन्येषु** 'गर्भविमर्शनिर्व्वहणेषु सन्धिष्वि'ति शेषः । **अपि** । **कानिचित्कानिचित्** । वीप्सायां द्विरुक्तिरियम् ।"**इति** ।

**प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः ।**
**भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ॥ १२ ॥**
**विच्छिन्नावान्तरैकार्थः किंचित्संलग्नबिन्दुकः ।**
**युक्तो न बहुभिः कार्यैर्बीजसंहतिमान्न च ॥ १३ ॥**
**नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् ।**
**आवश्यकानां कार्याणामविरोधाद्विनिर्मिता ॥ १४ ॥**
**नानेकदिननिर्वर्त्यकथया संप्रयोजितः ।**
**आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥ १५ ॥**

---

## विवृतिः

अलङ्कलक्षणमाह—प्रत्यक्षेति । प्रत्यक्षवद्भासमानं नेतुर्नायकस्य चरित्रं यत्र ।

चूर्णकं गद्यप्रभेदः । अवान्तरं महावाक्यार्थैकदेशः ।

किंतु अर्थोपक्षेपके ।

अत एव 'बीजार्थख्यापकं च तत्' इत्यङ्कमुखलक्षणं वक्ष्यते । विधानं विहितं कर्म । आवश्यकानामिति ।

एषां विरोधो नाङ्के वर्णनीय इति भावः । पात्रैः सहायैः ।

## विवृतिपूर्तिः

अगूढेति । अगूढः शब्दश्रवणमात्रेणैव झटिति प्रतीयमानः शब्दार्थों यत्र तादृशः । गूढत्वे बोधमान्थर्येणाशु सामाजिकानां हृदयावर्जनायोगादनुपादेयता स्यात् ॥

क्षुद्रेति । क्षुद्रं स्वल्पम् ॥

नातीति । य तेन गद्यपद्यानां तारतम्येन निवेशो विधेय इति सूचितम् । तथा चाष्टादशाध्याये महर्षिणा प्रतिपादितम्—'बहुचूर्णपादवृत्तं जनयति खेदं प्रयोगस्य' इति ॥

नानेकेति । लघुकथाविहित इत्यर्थः ॥

## लोचन

तत्र सर्वार्थविच्छेदात् पद्यानां प्राचुर्यमभिनयदुःखावहत्वात् हेयम् ।

नानेकेत्यादिना—एकदिने कथैवाङ्केऽभिनेया इति त्रिचतुरैरिति पूर्ववदुपलक्षणम् ।

## कुसुमप्रतिमा

नाटकलक्षणे विलासरसादिलक्षणानां प्रागेवोक्तत्वात् तत्तदुल्लङ्घ्य अङ्कलक्षणमाह प्रत्यक्षेति। प्रत्यक्षं यथाकथञ्चिदुल्लिखंत नेतुर्नायकस्य चरितं यत्र सः। रसभावपदं तदाभासादीनामप्यु पलक्षणम्, तेन समुज्ज्वलः शोभितः। अगूढः अनायासबोध्यः शब्दार्थो यस्मिन् सः, न पुनः प्रहेलिकादिवद्दुरूहशब्दार्थ इति भावः। क्षुद्रैर्नातिदीर्घैः च णैकैर्वक्ष्यमांणलक्षणै रल्पसमासघटितैर्गद्यविशेषैः संयुक्तः। एतेन भवभूतिप्रणीतरूपकत्रये दीर्घ समासघटितगद्यबहुलतया दोष एवेत्यनुसन्धेयम्। विच्छिन्नः परिसमाप्तः अवान्तरैकार्थो नाटकाभ्यन्तरीयैकविषयी यत्र सः। किञ्चित् संलग्नः यथाकथञ्चित्प्रवृत्तः "अवान्तरार्थ विच्छेदे बिन्दुरच्छेदकारणम्" इति वक्ष्यमाणलक्षणो विन्दुर्यस्मिन् सः। बहुभिः कार्य्यैः प्रधानोद्देश्यैर्न युक्तः। बीजस्य 'अल्पमात्र' समुद्दिष्टम्' इत्यादिवक्ष्यमाणलक्षणस्य संहतिमान् परिसमाप्तिमान् न च भवेत् एतत्तु शेषाङ्केतरपरं बोध्यम्; तत्र सर्वेषामेवोप संहारावश्यकत्वात्। नानाविधानैर्बहुविधघटनाभिः संयुक्तः। नातिप्रचुरपद्यवानिति गद्यापेक्षया अल्पपद्यवानित्यभिप्रेतम्; प्रसिद्धलक्ष्येषु तथादर्शनात् तत्संख्यानभिधानाञ्च आवश्यकानां कार्य्याणां पात्रविशेषेषु प्रसक्तानां सन्ध्यावन्दनादीनाम् अविरोधादत्यागात् विनिर्म्मिती भवेत्। अनेकदिननिर्वर्त्या बहुकालसम्पाद्या या कथा वृत्तान्तंस्तया न सम्प्रयोजितो भवेत्, अपि तु अल्पदिननिष्पाद्यथा परपरभाविन्या कथयैव सम्प्रयोजिती भवेदित्यर्थः। आर्त्यासन्नस्तत्राविद्यमानोऽपि सन्निहितः, नायकी नायकचरित्रं यत्र सः। प्रत्यक्षनेतृचरितत्वसम्भवे आसन्ननेतृचरित इत्यर्थविवक्षणान्न पूर्वेण सहाय पौनरुक्तम्। तेन च शाकुन्तलचतुर्थाङ्क मुद्राराक्षसप्रथमाङ्कादौ लक्षणसङ्गतिः। त्रिचतुरैः पात्रैर्जनैरिति तु सम्भवप्रदर्शनार्थम्; इतो न्यूनाधिक्यमपि पात्राणामिति द्रष्टव्यम्। शापः अभिशम्पातः, उत्सर्गो मूत्रपुरीषादित्यागस्तौ। शाकुन्तले दुर्वाससः शापस्तु विष्कम्भके इति दोषः। दन्तच्छेद्यम् ओष्ठादौ दन्ताघातः, नखच्छेद्य स्तनादौ नखाघातः, अन्वत् वसनमोचनादिकम्। देवी महिषी। रसभावानामुद्भवो येभ्यस्तैः। प्रत्यक्षाणि न तु वाचनिकानि, चित्राणि आश्चर्य्याणि यानि चरितानि तैर्युक्तः। अन्ते समाप्तिकाले निष्क्रान्तानि रङ्गालयान्निर्गतानि निखिलानि पात्राणि यस्य सः, अङ्क इति कीर्त्तितः।

## विमला

अङ्गमाह, प्रत्यक्षेति।—प्रत्यक्षं—प्रत्यक्षवत् आभासमानं, नेतुः,—नायकस्य, चरितं यत्र सः, तथाऽऽह दशरूपककारः,—"प्रत्यक्षनेतृचरितः" इति। रसेन भावेन च समुज्ज्वलः, अत एवोक्तम्,—"अङ्को नानाप्रकारार्थसंविधानरसाश्रयः" इति। अगूढः,—स्फुटः, शब्दार्थः,—वाक्यतात्पर्य्यं, यत्र तथाविधः, क्षुद्रेण—अल्पकलेवरेण, चूर्णकेन—गद्येन, संयुतः, विच्छिन्नः,—विच्छेदं प्राप्तः, अवान्तरं—सन्दर्भैकदेशः, एव एकः,—मुख्यः अर्थः,—प्रयोजनं, यस्मिन् तथोक्तः, किञ्चित्—ईषत्, संलग्नाः—संविहिताः, विन्दवः,—वक्ष्यमाणलक्षणाः यस्मिन् तथोक्तः; उक्तञ्च दशरूपककृता,—"बिन्दुव्याप्तिपुरस्कृतः" इति। बहुभिः,—हास्योद्वेगादिजनकतया बहुविधैः,—कार्य्यैः,—व्यापारैः, न युक्तः, न च बीजस्य—ग्रन्थप्रकृतिरूपस्य मूलकारणस्य, संहतिः,—संहारः, तद्वान्; नानाविधानैः,—विविधैः विहितकर्मभिः, संयुक्तः, नातिप्रचुरपद्यवान्—अतिबहुभिः पद्यैः न संयुतः, आवश्यकानां—धर्मशास्त्रानुसारेण निश्चितमनुष्ठेयानां, कार्य्याणां—सन्ध्यावन्दानादीनाम्, अविरोधात्—अव्याघातात, विनिर्म्मितः,—विरचितः नानेकदिनैः,—अबहुदिनैः, स्वल्पदिनैरिति यावत्, निर्वर्त्या—निष्पाद्या, या कथा तया सम्प्रयोजितः; आसन्नः,—समीपवर्त्ती, नायको यत्र वर्ण्यमानत्वेनेति शेषः, तथोक्तः, त्रिचतुरैः,—त्रिभिः चतुर्भिर्वेत्यर्थः, पात्रैः,—नाटकीय-पुरुषैः, युतः।

## लक्ष्मी

'पञ्चाधिका दशपरास्तत्राङ्का' इत्युक्तत्वात् परिच्छेदरूपस्याङ्कस्य स्वरूपं दर्शयति—प्रत्यक्षेति । प्रत्यक्षवद्भासमानं नेतुर्नायकस्य नेत्र्या नायिकाया वा चरित्रं यत्र, साक्षान्निछिश्यमाननायकव्यापार इत्यर्थः । भावो नायकनायिकयोराकूतम् । रसभावपदमुपलक्षणं तेन रसाभासादिपरिग्रहः, तेन समुज्ज्वलः शोभितः । अगूढः शब्दश्रवणमात्रेणैव तत्कालेऽनाया सबोध्यः शब्दार्थो यत्र । प्रहेलिकादिवद्दुरूहार्थत्वे बोधमान्तर्येण झटिति सहृदयानां हृदयावर्जनायोगादुपेक्षणीयता स्यादिति भावः । क्षुद्रचूर्णकम् अदीर्घसमासं, संस्कृतं, तः संयुतः । भवभूतेर्नाटके तु दीर्घसमासघटिततया दोष एवेति बोध्यम् । विच्छिन्नः परिसमाप्तः आवान्तरैकार्थः व्यापकप्रसङ्गस्यैकदेशरूपोऽर्थः यत्र सः । किञ्चित् लग्नः यथाकथञ्चित्प्रवृत्तो बिन्दुर्यत्र सः ।

**'अवान्तरार्थविच्छेदे बिन्द्वविच्छेदकारणात्' ।**

इति वक्ष्यमाणलक्षणे न अवान्तरार्थविच्छेदेऽपि प्रसङ्गान्तरोक्त्याकाङ्क्षोत्थापकं वस्तु बिन्दुसंज्ञकं भवति किञ्चित्तद्वानित्यर्थः । बहुभिः कार्यैः प्रधानेद्देश्यैर्न युक्तः । बीजं प्रथमार्थप्रकृतिः अभिनेतव्यप्रसङ्गस्याङ्कुर इत्यर्थः संहृतिः निर्वहणाख्यसन्धिः तयोर्नाङ्के विधानम्, किन्तु अर्थोपक्षपके । अत एव बीजार्थख्यापकं च तत्' इत्यङ्कमुखलक्षणमभिधास्यति । नानाविधानैः बहुभिर्घटनाभिः संयुक्तः । नातिप्रचुरपद्यवानित्युक्त्या गद्यपद्यानां तारतम्येन निवेशनीयः । उक्तं च महर्षिणा भरतेन—

**'बहुचूर्णपादवृत्तं जनयति खेदं प्रयोगस्य ॥' इति ।**

एवञ्च गद्यापेक्षया स्वल्पपद्यवानित्यर्थः । प्रसिद्धोदाहरणेषु तथादर्शनात् तत्संख्याप्रतिपादनाच्च आवश्यकानाम् अवश्यमनुष्ठेयानां कार्याणां पात्रविशेषेषु प्राप्तानां सन्ध्यावन्दना दीनाम् अविरोधादपरित्यागात् विनिर्मितो रचितो भवेत् । अनेकदिननिर्वर्त्या अधिकदिनसम्पाद्या या कथा वृत्तान्तस्तया न संप्रयोजितो भवेत्, किन्तु स्वल्पदिनसम्पाद्यया उत्तरोत्तरभाविन्या कथयैव सम्प्रयोजितो भवेदित्यर्थः । आसन्नस्तत्रावर्त्तमानोऽपि सन्निहितो नायको नायकचरितं यत्र सः, प्रत्यक्षनेतृचरितत्वासम्भवे सन्निहितनेतृचरित इत्यर्थकरणान्न प्रागुक्तेन सहास्य पौनरुक्त्यम् । अत एव मुद्राराक्षसप्रथमाङ्के शाकुन्तल-चतुर्थाङ्कादौ च लक्षणसमन्वयः । त्रिचतुरैः पात्रैः त्रिभिश्चतुर्भिर्वा योग्यै राजमन्त्र्यादिभिर्जनैरित्यर्थः ।

**'पात्रं स्रुवादौ योग्ये च नाटकीये च पूरुषे ।**
**तीरद्वयान्तरे राजाऽमात्येऽचैवाथ पल्लवे ॥'** इति गोपालः.

## रुचिरा

एवं नाटकलक्षणं निरूप्य तदंशभूतस्याङ्कस्य प्रतिपाद्यमर्थमाह—३१ **प्रत्यक्षनेतृचरित** इत्यादिना ।

३१२ **प्रत्यक्षनेतृचरितः** प्रत्यक्षं प्रत्यक्षवद्भासमानं नेतुर्नायकस्य चरितं यत्र तथोक्तः । **रसभावसमुज्ज्वलो** रसस्य भावः सद्भावस्तेन रसभावाभ्यां वा समुज्ज्वलः सम्यक् शोभमान इति भावः । **अगूढशब्दार्थो** न गूढो दुर्बोध्यः शब्दार्थो यत्र तथोक्तः । **क्षुद्रचूर्णकसंयुतः** क्षुद्रं स्वल्पं यत् चूर्णकं सरलं गद्यं तेन संयुतः । अन्यथा बोधमान्थर्य्येण सभ्यानां तदास्वादो न स्यादिति तथोक्तम् । **विच्छिन्नावान्तरैकार्थो** विच्छिन्नमवान्तरमेकांशो यस्य तादृश एकांशो मुख्यप्रतिपाद्योऽर्थो यत्र तथोक्तः । महावाक्येन प्रतिपाद्यस्यार्थस्यैकांशो यत्र विभज्य वर्णितः सोऽङ्क इत्यर्थः । **किञ्चित्संलग्नबिन्दुकः** । किञ्चित् संलग्नो बिन्दुर्वक्ष्यमाणलक्षणो वर्णनविशेषो यत्र तादृशः । 'शेषाद्वि-

भाषा।' ५/४/१५४ इति कप्। **भवेत्**। 'अङ्क'इति तु प्रसङ्गप्रसक्तम्। **बहुभिरनेकैः**। **कार्य्यैर्व्यापारैः**। **युक्तः**। **न** 'भवे'दिति शेषः, तथात्वे हि वैरस्यमापद्येतेति बोध्यम्। **बीजसंहतिमान्** बीजसंहृती अस्मिन् स्त इति तथोक्तः। बीजं प्रथमार्थप्रकृतिः, संहृतिश्च निर्वहणसन्धिः। अन्ये तु 'बीजस्य ग्रन्थप्रतिरूपस्य मूलकारणस्य संहृतिः संहार-स्तद्वा'निति व्याचक्षते। **च** अपीत्यर्थः। **न**। बीजसंहृत्योर्नाङ्के विधानं श्रेय इति भावः। **नानाविधानसंयुक्तो** बहुविधैः रुचिरताऽऽपादकैर्वर्णनैः संयुक्त इत्यर्थः। अथ-**अतिप्रचुरपद्यवान्**। **न,** 'किन्तु मध्येमध्ये क्षुद्रचूर्ण-कवा'निति शेषः। **आवश्यकानामवश्यमनुष्ठेयानाम्**। **कार्य्याणां** सन्ध्योपासनादीनाम्। **अविरोधाद्विरोधमनुप**-पाद्येति भावः। **विनिर्म्मितः** कृतरचनः। सन्ध्योपासनादीनां कर्म्मणां लोपो न दर्शनीयः, किन्तु तदर्थं कार्य्यान्तरव्याघातः प्रदर्शितः श्रेयानिति भावः। **अनेकदिननिर्वर्त्यकथया**ऽनेकदिनैर्निर्वत्याः समाप्या या कथा चरितं तया तथोक्तया। **न सम्प्रयोजितः,** 'किन्तु दिनान्तरैरपि निर्वत्र्यं चरितं तथा दर्शयेत्, यथा तदानीमेव संवृत्तमिदमिति सामाजिका विभावायेयु'रिति शेषः। **आसन्ननायक** आसन्नः प्राप्तो नायको यत्र तादृशः, प्रायः—नायकोपस्थित्या सनाथीकृत इति भावः, प्राय इत्यनेन क्वचितदभावः क्वचिच्चतदभावे नायिकाया अप्युपस्थितिर्न दुष्टेति सूचितम्। **तथा**। **त्रिचतुरैः** त्रीणि वा चत्वारि वेति तैस्तथोक्तैः। त्रिभिश्चतुभिर्वेत्यर्थः। **पात्रैः** योग्यै राजमन्त्रयादिभिर्जनैरिति भावः। 'पात्रं स्रुवादौ योग्ये च नाटकीये च पुरुषे। तीरद्वयान्तरे राजामात्येऽमत्रे च पल्लवे॥' इति गोपालः। **युतः** सम्पन्नः। 'अङ्कः स्यात्, अत्र च'ति शेषः।

**दुराह्वानं वधो युद्धं राज्यदेशादिविप्लवः।**
**विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा॥ १६॥**
**दन्तच्छेद्यं नखच्छेद्यमन्यद् व्रीडाकरं च यत्।**
**शयनाधरपानादि नगराद्यवरोधनम्। १७॥**
**स्नानानुपेलने चैभिर्वर्जितो नातिविस्तरः।**
**देवीपरिजनादीनाममात्यवणिजामपि॥ १८॥**

---

## विवृतिः

प्रथमार्थप्रकृतिर्बीजम्, निर्वहणाख्यसंधिः संहतिः, तयोर्नाङ्के विधानम्।

एभिर्दूराह्वानादिभि। देवी राजपत्नी। परिजनास्तत्परिचारकाः राजकुमारादयो वा।

## विवृतिपूर्तिः

शापोत्सर्गाविति। उत्सर्गौ मलत्यागः॥

## विज्ञप्रिया

देवीपरिजनादीनां प्रत्यक्षचित्रचरितैर्युक्त इत्यन्वयः।

## लोचन

दूराह्वानमित्यादिभिर्वर्जित इति सम्बन्धः। वधयुद्धादिकञ्च यस्य कस्यचित् मुखेनान्येन वा कविप्रतिभोत्थितेन प्रकारेण दर्शनीयम्। तथार्थोपक्षेपकैरिति वक्ष्यते।

## विमला

उत्सर्गः,—मलत्यागः। एभिः,—दूराह्वानादिभिः। परिजनाः,—देव्याः परिचारकाः, राजकुमारादयो वा, तेषाम्।

दशरूपक—काराऽप्याह,...“दूराह्वानं वधं युद्धं राज्यदेशादिविप्लवम्। संरोधं भोजनं स्नानं सुरतं चानुलेपनम्॥ अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत्। नाधिकारिवधं क्वापि त्याज्यामावश्यकं न च॥

एकाहारचिरैकार्थमित्थमासन्नानायकम्। पात्रैस्त्रिचतुरैरङ्गं तेषामन्तेऽस्य निर्गमः॥...पञ्चाङ्कमेतदवरं दशाङ्कं नाटकं परम्।“इतिय अन्यत् स्पष्टम्।

## लक्ष्मी

अङ्केऽभिनेतव्य स्तूनां निषेधमाह—दूराह्वानमिति। दूरस्थजनस्याह्वानमित्यर्थः। वधं युद्धादिकं च यस्य कस्यचिन्मुखेनान्येन वा कविप्रतिभोत्थेन प्रकारेण प्रदर्शनीयम्। भोजनमन्नभोजनम् दन्तच्छेद्यनखच्छेद्यवस्तुनोरपि

भक्षणनिषेधः। शाप अभिसम्पातः उत्सर्गो मलत्यागः तौ तथोक्तौ। शाकुन्तले दुर्वाससः शापस्तु नाङ्के; किन्तु विष्कम्भक इति न दोषः। दन्तच्छेद्यम् ओष्ठादौ दन्ताघातः नखच्छेद्यं कुचादौ नखाघातः अन्यद्वसनमोचनादिकम्। तदपि नाभिनेतव्यम् एषामभिनयः सदस्यानाममङ्गलमित्यभिप्रायः।

दशरूपकेऽपि वर्जनान्याह—

**'दुराध्वानं बधं युद्धं राज्यदेशादिविप्लवम्।**

**संरोधो भोजनं स्नानं सुरम्यञ्चानुलेपनम्॥**

**अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्छिशेत्॥'**

अङ्कैर्नैवोपनिबध्नीत प्रवेशादिभिरेव सूचयेदित्यर्थः। एभिर्दूराह्वानादिभिः वर्जितस्त्यक्तः देवी राजमहिषी परिजनास्ततपरिचारकाः राजकुमारादयो वा तेषां प्रत्यक्षचित्रचरितैर्युक्त इत्यन्वयः भावरसोद्भवैरिति भावो लाला रसो वैदग्ध्यम्। भावरसयोरुद्भवो येभ्यस्तैस्तथोक्तैः। एवञ्च 'रसभावसमुज्ज्वल' इत्यनेन न पौनरुक्त्यम्। भावरसयोरुद्भवो येभ्यस्तैस्तथोक्तैः। एवञ्च रसभावसमुज्ज्वल' इत्यनेन पौनरुक्त्यम्। भावरसोरुद्भवो येभ्यस्तैस्तथोक्तैः। एवञ्च रसभावसमुज्ज्वल इत्यनेन पौनरुक्त्यमं। प्रत्यक्षाणि न तु वाचनिकानि चित्राणि आश्चर्याणि यानि चरितानि तैर्युक्तः संयुतः। अन्ते समाप्तौ निष्क्रान्तानि रङ्गगृहान्निर्गतानि निखिलानि समग्राणि 'पात्राणि नायकतत्सहायादयो यस्य सः अङ्क इति कीर्त्तितः। महर्षिणा भरतेनाङ्कपदस्येत्थं निरुक्तिः प्रदर्शिता—

**'अङ्क इति रूढिशब्दो भावश्च रसैश्च रोहयत्यर्थान्।**
**नानाविधानयुक्तो यस्मात्तस्माद्भवेदङ्कः॥'इति।**

## रुचिरा

**दूराह्वानम्। बधः। युद्धम्। राज्यदेशादिविप्लवः**। आदिना-नगरग्रामादिदाहनादीनां ग्रहणम्। **विवाहः। भोजनम्। शापोत्सर्गौ शापश्चोत्सर्गो** मलत्यागश्चेत्यर्थः। **मृत्युर्मरणम्। तथा। रतं** रमणम्। **दन्तच्छेद्यं** दन्तैश्छेद्यमिति तथोकतम्, नायककृतं नायिकायाः कपोलयोः दन्तैर्हननमिति भावः। **नखच्छेद्यम्** नायककर्त्तृकं नायिकाकुचयोव्रणोद्भावनमिति भावः। यत्। **च** पुनः। **अन्यत्** 'एवंविधम्'इति शेषः। **व्रीडाकरं** लज्जोत्पादक कर्म्म। एवम् **शयनाधपानादि**। आदिना कुचमर्दनादि। **नगराद्यवरोधनं** नगरादेरवरोधनं शत्रुसैनिकादिकर्तृकप्रतिबन्धः। आदिनेत्यन्तरोपद्रवादेग्रहणम्। **स्नानानुलेपने** स्नाने चानुलेपनं चन्दनादिना मण्डनक्रिया चेति तथोक्ते। **च** (सम्मुच्चयार्थमिदमव्ययम्)। **एभिर्दू**राह्वानमित्यारभ्य स्नानानुलेपने इत्यन्तैरित्यर्थः। **वर्जितः। नातिवि तरो**ऽत्यन्त विस्तरमप्राप्त यद्वा नातिविस्तरोऽत्यन्तं शब्दव्यासो यत्र तथोक्तः। 'स च शब्दस्य विस्तरः।' इत्यमरः। 'नैकधे'त्यादिवन्नेन समासः, न तु नञा। **देवीपरिजनादीनां** देवी देवाङ्गना कृताभिषेकायां राज्ञी वेति सा च परिजनः सखीजनो दासीगुणो वेति स चेत्येतावादी येषाम् (कञ्चक्यादीनाम्) तेषाम्। 'देवी कृताभिषेकायां दुर्गायां देवयोषिति। मेदिन्यां पिशुनायां च' इति गोपालः। **अमात्यवणिजाम्। अपि। भावरसोद्भवैर्भा**वो रत्यादिश्च रस आह्लादविशेषश्च तयोरुद्भवा उत्पत्तिस्थानभूताः तैरित्यर्थः। 'भावः सत्तास्वाभावाभिप्रायचेष्टाऽऽत्मजन्मसु।...रत्यादौ च' इति मेदिनी। उद्भव नमुद्भवः। 'ऋदोरप्।' ३/३/५७ इत्यप् 'जनिरुत्पत्तिरुद्भवः।' इत्यमरः।

**प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः ।**

**अन्तनिष्क्रान्तनिखिलपात्रोङ्क इति कीर्तितः ॥ १९ ॥**

बिन्द्वादयो वक्ष्यन्ते । आवश्यकं सन्ध्यावन्दनादि ।

अङ्कप्रस्तावाद् गर्भाङ्कमाह—

**अङ्कोदरप्रविष्टो यो रङ्गद्वारामुखादिमान् ।**

**अङ्कोऽपरः स गर्भाङ्कः सबीजः फलवानपि ॥ २० ॥**

यथा बालरामायणे—रावणं प्रति कोहलः ।

**'श्रवणैः पेयमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः ।**

**भवदर्थमिव निबद्धं नाट्यं सीतास्वयंवरणम् ॥'**

इत्यादिना विरचितः सीतास्वयंवरो नाम गर्भाङ्कः ।

---

## विवृतिः

अन्ते समाप्तौ निष्क्रान्तानि रङ्गान्निर्गतानि निखिलानि पात्राणि नायकतत्सहायादयो यस्य सः ।

सूत्रधारक्रियमाणं मङ्गलं रङ्गद्वारम् । आमुखं प्रस्तावना ।

आदिना सभापूजाकविसंज्ञादीनां ग्रहणम् । फलं नायकनिष्पाद्यप्रधानप्रयोजनम् ॥ भवदर्थमिति । भवते प्रयोजनमित्यर्थः । इवोत्प्रेक्षायाम् । भवतो बहूनि श्रवणानि लोचनानि च सन्ति, भवतैव तद्द्रष्टुं श्रोतुं च योग्यमित्यर्थः ॥

## विवृतिपूर्तिः

अङ्क इति । अङ्कपदस्य निरुक्तिरुक्ता नाट्यशास्त्रे—'अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्वर्थान् । नानाविधानयुक्त यस्मात्तस्माद्भवेदङ्कः ॥' इति ॥

सबीज इति । बीजं वक्ष्यमाणलक्षणम् ॥

कोहल इति । कोहलो नाट्यवेदवक्ता । 'कोहलो वाद्यभेदे स्यान्नाट्यशास्त्रप्रवक्तरि इति मेदिनीकारः ।

## विज्ञप्रिया

भावरसोद्भवैरिति । भावो लीला रसो वैदग्ध्यम् । तेन रसभावसमुज्ज्वल इत्यनेन न पौनरुक्त्यम्—

सन्ध्यावन्दनादीति । रसान्तरप्रसक्तस्य नायकस्येति बोध्यम् ।

गर्भाङ्क प्रधानाङ्कमध्येऽवान्तरविच्छेदरूपोऽपरोऽङ्कस्तल्लक्षणमाह—अङ्कोदरेति । प्रथमतोऽभिनयेन नटप्रवेशो रङ्गद्वारम् । तद्वक्ष्यति "यस्मादभिनयात् पूर्वम्" इत्यादिनाऽत्र चाभिनयो नाट्यवस्तुप्रदर्शनम् । गर्भाङ्क

प्रथमाङ्क एवेति नियमाभावात् आह—रङ्गद्वारामुखादीति । आमुखं प्रस्तावना तल्लक्षणमग्रे वक्ष्यते । रङ्गद्वारामुखे प्रथमाङ्के । आदिपदात् वक्ष्यमाणलक्षणकशुद्धसंकीर्णविष्कम्भकद्वयस्यप्रवेशकस्य च परिग्रहः । वक्ष्यते हि—वृत्त-वर्तिष्यमाणकथांशप्रदर्शकोभिनयो विष्कम्भकः । सच मध्यविधजनप्रवर्तितः शुद्धः । मध्यनीचाभ्यां प्रवर्तितः संकीर्णः । नीचजनमात्रप्रवर्त्तितः प्रवेशकः । तेषान्तु सकलाङ्क एव सम्भवः । अङ्कोदर इति । मुख्यनाटकमध्ये केनापि पात्रेण नाटकान्तरप्रदर्शनं गर्भाङ्क इत्यर्थः । तत्प्रदर्शनफलमाह—सबीज इति तत्प्रदर्शनात्, मुख्यनाटकाभिनेतव्या-र्थस्याङ्कुरफलयोर्लाभात् तद् द्वयवानित्यर्थः ।

तं गर्भाङ्कं दर्शयति—यथा बालरामायण इत्यादि—तत्र हि केनापि कविना निबद्धं श्रवणैरित्यादिगुणयुक्तं सीतास्वयम्बरं नाम नाट्यं कञ्चुकिना रावणे निवेदितम् । तच्छ्रवणात् सीताहरणकनकमृगरामक्रोधरूपबीजस्य सीताहरणरूपकस्य च सूचनात् तद्द्वयवत् । इत्यादिना विरचित इति । इत्यादिना दर्शितः केनापि विरचित इत्यर्थः । कञ्चुकिवाक्येन तद्विरचनाऽभावात् ।

## लोचन

सूक्ष्माः स्वल्पाः ।

कोऽसावङ्क इत्याह—प्रत्यक्ष इति । नेतारौ नायको नायिका च । तयोरेकस्य द्वयोर्वा चरितं तत्र प्रत्यक्षं दर्शनीयमिति भावः । चूर्णकानां क्षुद्रत्वं झटिति बोधफलं विच्छिन्नावान्तरैकार्थत्वादि अन्तिमाङ्कवर्ज न्यायसिद्धम् ।

नृत्यपात्रभूतोऽपि रावणोऽस्य गर्भाङ्कस्य नटान्तरैरभिनेयस्य द्रष्टा ।

संज्ञादीति—आदिशब्दात् गोत्रादिः । नाटकस्याऽपि संज्ञास्वरूपादिकथनमिति सम्बन्धः ।

## कुसुमप्रतिमा

अङ्कोदरेति । अङ्कोदरप्रविष्ट उक्तलक्षणस्य यस्य कस्यचिदङ्कस्य अभ्यन्तरगतः । अतएवास्य गर्भाङ्क इति संज्ञा । रङ्गद्वारं रङ्गे प्रथमकर्त्तव्यं मङ्गलाचरणम् आमुखं प्रस्तावना आदिशब्दात् यथासम्भवं सभापूजादिकञ्च तद्वान्, बीजेन "अल्पमात्रं समुद्दिष्टम्" इत्यादिवक्ष्यमाणलक्षणेन निदानेन सहेति सबीजः, फलवानपि यत्किञ्चिन्मुख्योद्देश्य-विशिष्टश्च, यः अपरः अङ्कः, स गर्भाङ्क इत्युच्यते ।

श्रवणैरिति । अनेकैः श्रवणैः कर्णैः पेयं मधुरत्वात् सादरं श्रोतव्यम्, दीर्घैः सुदृश्यत्वे नाग्रहातिशयात् स्वयमेवायतीभूतैः बहुर्भिर्लोचनै नयनैः दृश्यं द्रष्टव्यञ्च, सीतास्वयंवरणं नाम नाट्यं नटप्रयोज्यं वस्तु, भवदथमिव भवतो दशाननत्वेन विंशतिकणत्वात् विंशतिनयनत्वाञ्च अनेककर्णपेयत्व । दीर्घबहुलीचनदृश्यत्वसम्भवेन भव-न्निमित्तमिव, निपटं जनकेन आयोजितम् ।

## विमला

अन्ते—शेषे, निष्क्रान्तानि निखिलानि—समग्राणि:, पात्राणि यत्र तथाविधः, अङ्कः,—परिच्छेदविशेषः ।

गर्भाङ्कमाह, अङ्कोदरेति ।—रङ्गद्वारं—सूत्रधारक्रियमाणं मङ्गलम्, आमुखं—प्रस्तावना [आदिना सभा-पूजादिग्रहणं] तद्वान्, अङ्कस्य उदरं—मध्यं, प्रविष्टः, सबीजः,—मूलकारणसहितः, फलवान्—नायकनिष्पाद्यप्रधा-नप्रयोजनान्वितः, यः अपरः अङ्कः, सः गर्भाङ्कः,—गर्भ इवाङ्क इति तथोक्तः ।

उदाहरति, श्रवणैरिति ।—सीतास्वयंवरणं—तदाख्यं, नाट्यम्, अनेकैः श्रवणैः,—कर्णैः, पेयं—सर्वजनैः सादरं श्रवणीयमित्यर्थः, बहुभिः दीर्घैः,—आयतैः, लोचनैः,—नेत्रैः, दृश्यं—सर्वजनदर्शनीयमित्यर्थः, अत एव भवदर्थमिव—तव निमित्तमिव, दशाननतया बहुकर्णनेत्रत्वादिति भावः, निबद्धं—रचितम् । आर्य्या वृत्तम् ।

## लक्ष्मी

संशयनिराकरणायाह—विन्द्वादय इति । आदिना बीजादीनां परिग्रहः । सन्ध्यावन्दनादीति । रसान्तरप्रसक्तस्य नायकस्येति बोध्यम् ।

गर्भाङ्कः प्रधानाङ्कमध्येऽवान्तरविच्छेदरूपोऽपरोऽङ्कस्तल्लक्षणं दर्शयति—अङ्कोदरेति । अङ्कोदरप्रविष्टः उक्तलक्षणस्य यस्य कस्यचिदङ्कस्य अभ्यन्तरगतः, तेन चास्य गर्भाङ्क इति नाम । रङ्गद्वारं रङ्गे सूत्रधारेण क्रियमाणं मङ्गलाचरणम्, आमुखं प्रस्तावना तल्लक्षणं वक्ष्यति । रङ्गद्वारा मुखे प्रथमाङ्के । आदिपदात् सभाबूजाकविसंज्ञाधीनां वक्ष्यमाणलक्षणकशुद्धसंकीर्णविष्कम्भकद्वयस्य प्रवेशकस्य च परिग्रहः तद्वान् । वक्ष्यते हि वृत्तवर्त्तिष्यमाणकथां-शप्रदर्शकोऽभिनयो विष्कम्भकः । स च मध्यविधजनप्रवर्त्तितः शुद्धः, मध्यनीचाभ्यां प्रवत्रितः संकीर्णः, नीचजनमा-त्रप्रवर्त्तितः प्रवेशकः । तेषां तु सकलाङ्क एव सम्भवः । बीजेन "अल्पमात्रं समुद्दिषटम्' इत्यादिवक्ष्यमाणलक्षणेनादि-कारणेन सहेति सबीजः, फलं नायकनिष्पाद्यप्रधानप्रयोजनम्, तद्द्वयवांश्च यः अपरः अङ्कः स गर्भाङ्क इत्यभिधीयते ।

तं गर्भाङ्कमुदाहरति—यथा बालरामायण इति । तत्र हि केनापि कविना निषद्धं श्रवणैरित्यादिगुणसंयुतं सीतास्वयवरं नाम नाट्यं कोहलेन (कोहलो नाम वाद्यविशेषः उपचारात्तेन सङ्गीतप्रवर्त्तको नट इत्यर्थः तेन) रावणाय निवेदितम् । तच्छ्रवणात् सीताहरणकनकमृगरामक्रोधरूपबीजस्य सीताहरणरूपकस्य च प्रकाशनात् तद्द्वयवत् । किन्तत्पद्यमित्याकाङ्क्षायाम्—श्रवणैरिति । अनेकैः श्रवणैः कर्णैः पेयं मधुरत्वात् सादरं श्रवणीयम् दीर्घैः सुदृश्य-त्वेनादरातिशयात् स्वयमेव विस्तृतैः बहुभिर्लोचनैर्नेत्रैः दृश्यं दर्शनीयञ्च सीतास्वयंवरणं नाम नाट्यमभिनीयं वस्तु, भवदर्थम् भवते प्रयोजनम् । इवोत्प्रेक्षायाम् । भवतो दशाननत्वेन बहूनि श्रवणानि लोचनानि च सन्ति भवतैव तद्द्रष्टुं श्रोतुं च योग्यमित्यर्थः, निबद्धं जनकेन आयोजितम् ।

इत्यादिना विरचित इति । इत्यादिना दर्शितः केनापि विरचित इत्यर्थः । कोहल (नट) वाक्येन तद्विरचना-भावात् । नृत्यपात्रभूतोऽपिरावणोऽस्य गर्भाङ्कस्य नटान्तरैरभिनेयस्यद्रष्टा ।

## रुचिरा

**प्रत्यक्षचित्रचरितैः** प्रत्यक्षाणि प्रत्यक्षवद्भासमानानि यानि चित्रचरितानि तैस्तथोक्तैः । 'चित्राणि चरितानि चे'ति 'चित्राणि यानि चरितानि' इति वा तैस्तथोक्तैः । चित्राणि प्रतिमूर्त्तयः । 'चित्रमद्भुत आलेख्ये प्रतिमूतौ नपुंसके ।' इति गोपालः । **युक्तः । अन्तनिष्क्रान्तनिखिलपात्रो**ऽत्रे निष्क्रान्तानि निखिलानि पात्राणि नाटकीयपुरुषा यस्मात्तथोक्तः । **अङ्कः । इती**त्थम्भूत इत्यर्थः । कीर्त्तितः ॥ ३०९ ॥ ३१० ॥ ३११ ॥ ३१२ ॥ ३१३ ॥ ३१४ ॥ ३१५ ॥ ३१६ ॥

सन्देहनिवृत्तये प्राह—**बिन्दवादय** इत्यादि ।

**विन्द्वादयः** । आदिना बीजसंहत्यादीनां ग्रहणम् । **वक्ष्यन्ते** । **आवश्यकमा**वश्यकानामिति पदमिति भावः । **सन्ध्योपासनादि** । 'अभिधत्ते'इति शेषः ।

एवं नाटकस्याङ्कलक्षणं निरूप्य तदवान्तरभेदस्वरूपं गर्भाङ्कं निरूपयितुं प्रतिजानीते—**अङ्कप्रस्तावादि**त्यादिना ।

**अङ्कप्रस्तावाद**ङ्कस्याङ्कलक्षणनिरूपणस्य प्रस्तावस्तस्मात् कारणादित्यर्थः । **गर्भाङ्कम्** । **आह**—३१३ **अङ्कोदरप्रविष्ट**इत्यादिना ।

३१३ **यः** । **अङ्कोदरप्रविष्टो**ऽङ्कस्य निरुक्तलक्षणस्य "अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान् । नानाविधानयुक्तो यस्मात्तस्माद्भवेदङ्कः ॥" इति निरुक्तार्थस्योदरं मध्यं तत्र प्रविष्ट इति तथोक्तः । **रङ्गद्वारामुखादिमान्** रङ्गदारं सूत्रधारेण क्रियमाणं मङ्गलं तच्च, आमुखं प्रस्तावना च; इति ते आदौ यस्य तदस्मिन्नस्तीति तथोक्तः । आदिना सभापूजादेग्रहणम् । **सबीजो** बीजेन सह वर्त्तमानः । बीजं च वक्ष्यते । **फलवान्** फलं नायकनिष्पाद्यप्रधानप्रयोजनम्, तदस्यास्तीति तथोक्तः । **अपि** एवं विशेषणचतुष्टयसम्पन्नः । **अपरो** निरुक्तलक्षणात् प्रधानभूतादङ्कादिभिन्न इति भावः । **अङ्कः** । **सः** । **गर्भाङ्को** गर्भ इवाङ्क इति तथोक्तः ॥ ३१७ ॥

उदाहरति—**यथे**त्यादिना ।

**यथा** । **बालरामायणे** तदाख्ये राजशेखररचिते महानाटक इत्यर्थः । **रावणम्** । **प्रति** । "**कोहलः** तदाख्यो बाह्यविशेष उपचारात्तेन सङ्गीतप्रवर्त्तको नट इत्यर्थः ।... **अनेकै**र्बहुभि"र्न तु एकेन द्वाभ्यां वे"ति शेषः । अनेकशब्दस्य द्विवाचकत्वेऽपि बहुवचनप्रत्ययान्तत्वेनेदमुक्तम् । **श्रवणैः** कर्णैः । **पेयं** पानीविषयीकरणीयमाश्वादनीयमिति यावत्, श्रवणैश्च याअसम्भवात् श्रोतव्यमिति भावः । **च** । **दीर्घै**रायतैरुत्सुकतया गृहीतदैर्ध्यैरिति यावत् । **बहुभिः** । **लोचनै**र्नेत्रैः । दृश्यं दर्शनीयम् । तस्मात्—**भवदर्थं** भवते रावणायेति तथोक्तम् । 'अर्थेन नित्यसमासो विशेष्यलिङ्गताचेति वक्तव्यम् ।' इति साधु । **इव** (उत्प्रेक्षाऽर्थमिदमव्ययम्) । **निबद्धं** रचितम् 'भवतो बहुश्रवणलोचनत्वा'दिति शेषः । **सीतास्वयंवरणं** सीतास्वयंवराख्यमिति भावः । **नाट्यं** नाटकमिति भावः । अत्रोत्प्रेक्षाऽलङ्कारः । आर्य्यावृत्तम् । तल्लक्षणं चोक्तं यथा—"स्वरा अर्द्धं चार्य्यार्द्धम् । अत्रायुङ्नज् । षष्ठो ज् । न्लौ वा न्लौचेत्यदं द्वितीयादि । सप्तमः प्रथमादि । अन्त्ये पञ्चमः । षष्ठश्चल् ।" इति ।'**इत्यादिना विरचितः** । **सीतास्वयंवरः** । **नाम** । **गर्भाङ्कः** । इदमवधेयम्—बालरामायणे तृतीयेऽङ्के एवं दृश्यते—"रावणः दिष्टया गतं दिवसेन । भोभो प्रहस्त ! तदुच्यन्तां वैरिञ्चा मुनयः, प्रस्तूयतामिति । प्रहस्तः (नेपथ्यैभिमुखमवलोक्य) भोभो भरतपुत्राः ! प्रेक्षणकृते कृतक्षणः क्षणदाचरचकावर्त्ती तत्प्रस्तूयताम् । (प्रविश्य) काहलः—" कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने । नमः श्रृङ्गारबीजाय तस्मै कुसुमधन्वने ॥" रावणः—द्वादशपदेयं प्रवर्त्तिता नान्दी, तत् प्रस्तावयिष्यति । कोहलः—तत्रभवतः परमेष्ठिनो मानसभुवः प्रथमपुत्रस्य नाट्ययोनेर्भरताचार्य्यस्य कृतिरभिनवं सीतास्वयंवरं इति नाटकं प्रयोक्तव्यम् अतः कमलसम्भवोपदिष्टनाट्यवेदेन स्वपौरुषपरितोषितखण्डपरशुदर्शितलास्यताण्डवप्रपञ्चतुरेण भवता दीनमवधानमभ्यर्थये । यतः—"श्रवणैः पेयमनेकै..." रावणः—किं पुनरिदमसंस्तुतं प्रस्तूयते । कः पुनरसौ योऽयमत्र मयि रावणेऽपि सति सीतां स्वयं वृणुते ? (विमृष्य) भवतु निरङ्कुशाः कविवाचः । कोहलः (समन्तादवलोक्य) अहो राक्षसराजस्य त्रिभुवनशिरः शेखरायमाणा प्रभुशक्तिः ।... । (नेपथ्ये गीयते) "प्रकटितरामाम्भोजः कौशिकवान् सपदि लक्ष्मणा नन्दी । सुरचापदमनहेतोरयमवतीर्णः शरत्समयः ॥" कोहलः ॥ कथमुपक्रान्तं भरतपुत्रैः, यदियं

लक्ष्मणानुगतस्य भगवतो विश्वामित्रस्य प्रावेशिकी ध्रुवा तदहमप्यनन्तरकरणीयाय सज्जो भवामि (इति निष्क्रान्तः) । (प्रस्तावना) । (ततः प्रविशति विश्वामित्र रामलक्ष्मणौ च) विश्वामित्रः—अहो तत्त्वेऽभिनिविष्टं मनो जनकस्य..."इत्येवं दृश्यते एतेन "रावणं प्रति कञ्चुकी"त्युपलभ्यमानोऽपपाठ एवेति सूचितम् ॥ २२० ॥

एव नाटकीयाङ्कस्य लक्षणं सप्रभेदं दर्शयित्वा कथं तावन्नाटकमुपक्रमणीयमित्याह—३१४ तत्रेत्यादि ।

**३१४ तत्र** तस्मिन् नाटके इति यावत् । **पूर्वं** प्रथममारम्भे इति यावत् । **पूर्वरङ्गो** वक्ष्यमाणलक्षणः कर्म्मविशेषः । 'विधातव्य' इति शेषः । **ततः परं** तनदन्तरम् । **सभापूजा** सभाया उपस्थितसत्समाजस्य पूजा प्रशंसनमिति तथोक्ता । 'विधातव्ये'ति शेषः । तत्पुनः—**कवेः** नाटकप्रणेतुः । **सञ्ज्ञाऽऽदिकथनं** सञ्ज्ञाऽऽदेर्नामादेः कथनं वर्णनम् । आदिना सत्यभिप्राये गोत्रादेः कथनमप्युपयुक्तमिति सूचितम् । सत्यभिप्राये एतेनाभिज्ञाना-शाकुन्तलादौ गोत्रादेरकथनमपि सगच्छते । एवम्—**नाटकस्य । अपि** 'सञ्ज्ञाऽऽदिकथन'मिति पूर्वतोऽन्वेति । 'कथनं कविसञ्ज्ञाऽऽदे'रिति पाठान्तरं तु न साधु, नाटकस्येत्यनेन तदेकांशस्य सञ्ज्ञाऽऽदेरन्वयानुपपत्तेः । **अथ । आमुखं** वक्ष्यमाणलक्षणा प्रस्तावनेत्यर्थः । 'विधातव्य'मिति शेषः ॥ ३१८ ॥

**तत्र पूर्वं पूर्वरङ्गः सभापूजा ततः परम्।**

**कथनं कविसंज्ञादेर्नाटकस्याप्यथामुखम्॥ २१॥**

तत्रेति नाटके।

**यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये।**

**कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते॥ २२॥**

---

## विवृतिः

नाटकरचनापरिपाटीमाह—तत्रेति। पूर्वं प्रथमम्। समाजिकसमूहः सभा, तस्याः पूजा प्रशंसा। ततः पूर्वरङ्गात्। संज्ञादेरित्यादिपदेन गोत्रमातापितृणां ग्रहणम्। नाटकस्यापीत्यनेन संज्ञाकथनमित्यनेनान्वितम्। नाट्यमभिनेतव्यं वस्तु वर्णनीयपदार्थः।

कुशीलवाः सूत्र धारप्रधाना नटाः। अस्य पूर्वरङ्गस्य॥

## विवृतिपूर्तिः

पूर्वेति। पूर्वं रज्यतेऽस्मिन्निति पूर्वरङ्गः नाट्यशाला। तत्स्थं कर्मापि पूर्वरङ्गशब्देन व्यपदिश्यते। अतः पूर्वरङ्गो नाम रङ्गविघ्नशामको नान्दीपाठगीतवादित्रादिनानाविधाङ्गविशेषो नाट्यादौ कर्तव्यः कर्मविशेषः। भावप्रकाशिकायामप्युक्तम्—'सभापतिः सभा सभ्या गायका वादका अपि। नटी नटश्च मोदन्ते यत्रान्योन्यानुरञ्जनात्॥ अतो रङ्ग इति ज्ञेयः पूर्ववत्स प्रकल्पते। तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते।।' इति॥

## विज्ञप्रिया

प्रसङ्गतो गर्भाङ्कमुक्त्वा प्रकृतनाटके यद्यदभिनेतव्यं तदाह—तत्र पूर्वमिति—पूर्वरङ्गश्च नटाभिनयरूपरङ्गद्वारादिसूत्रधारनिष्क्रामणान्तः क्रियाकलापः।

नाटकस्येति—नाटकसंज्ञाया अपि कथनमित्यर्थः।

अस्य पूर्वरङ्गरूपसंज्ञाव्युत्पत्तिमाह—यन्नाटयेति। नाट्यवस्तुनो अभिनेतव्येति वृत्तरूपवस्तुनो रामायणादेः। कुशीलवाश्च सूत्रधारादिनटाः। प्रत्यहारादीति—सूत्रधारनटादीनां क्रियाविशेषाः प्रत्याहारादयः।

## लोचन

प्रत्याहारादिकान्यङ्गानि रङ्गविघ्नशान्त्यर्थं नटमात्रकर्त्तव्यन्याकरेषु बोद्धव्यानि। कविकर्त्तव्यत्वाभावात् नेह लक्ष्यन्ते।

## कुसुमप्रतिमा

नाटकरचनाक्रममाह तत्रेति। तत्र नाटके पूर्वं प्रथमं पूर्वरङ्गः पूर्वरङ्गख्यं मङ्गलाचरणम्, ततः परं सभायाः पूजा यथासम्भवं स्तुतिवादः, ततः कवेः संज्ञाया नाम्नः आदिशब्दाद्यथारुचि कवेर्गोत्रादिकस्य च नाटकस्य नाटकनाम्नश्च कथनम्, अथापि अनन्तरञ्च आमुखं प्रस्तावना। क्रमादेतानि कविना विरचनीयानीत्यर्थः।

अथ की नाम पूर्वं रङ्ग इत्याह यदिति। कुशीलवा नटाः, रङ्गे नर्त्तनालये सम्भाव्यमानो यो विघ्नस्तस्य उपशान्तये निवारणाय, नाट्यवस्तुनः अभिनयारम्भात् पूर्वं सर्वप्रथमं यत् प्रकुर्वन्ति स्वसमाजनियमात् कविनिर्द्देशात् सभ्यादेशाद्वा अनुतिष्ठन्ति, स पूर्व रङ्ग उच्यते। यद्यपि अस्य पूर्वरङ्गस्य प्रत्याहारादि कानि भूयांसि प्रचुराणि दशरूपकादावुक्तानि द्वाविं शतिसंख्यकानीत्यर्थः अङ्गानि सन्ति, तथापि विघ्नोपशान्तये नान्दी अवश्यं कर्त्तव्याः। एतेन प्रत्याहाराद्यङ्गानि तु कविना यथारुचि कर्त्तव्यानीति सूचितम्।

## विमला

नाटकरचनापरिपाटीमाह, तत्रेति।—तत्र—नाटके, पूर्वं—प्रथमं, पूर्वरङ्गः,—वक्ष्यमाणलक्षणः, तदनन्तरं, सभापूजा—सभाप्रशंसनं, ततः कविसंज्ञादेः, ["संज्ञादेः" इति आदिपदेन गोत्रमातापितॄणां ग्रहणम्] नाटकस्यापि कथनं—कीर्त्तनम्, अद्य—अनन्तरम्, आमुखं—प्रस्तावना, निबद्धव्येति शेषः।

पूर्वरङ्गमाह, यदिति।—रङ्गः,—नृत्यस्थानं, तस्य विघ्नोपशान्तये—अन्तरायनिवर्त्तनाय, नाट्यवस्तुनः,—नाटकेतिवृत्तप्रस्तावात्, पूर्वं, कुशीलवाः,—सूत्रधारप्रदाना नटाः, यत्—कर्म, प्रकुर्वन्ति, सः पूर्वरङ्गः,—मङ्गलाचरणमित्यर्थः,

## लक्ष्मी

प्रसङ्गतो गर्भाङ्कमभिधाय प्रकृतनाटके यदभिनेतव्यं तद्दर्शयति—तत्र पूर्वमिति। तत्र नाटके पूर्वं प्रथमं पूर्वरङ्गः स च नटाभिनयरूपरङ्गद्वारादिसूत्रधारनिष्क्रमणान्तक्रियाकलापः, तदाख्यं मङ्गलाचरणमित्यर्थः। ततः पूर्वरङ्गात् परं सामाजिकसमूहः सभा, तस्याः पूजा प्रशंसा, ततः कवेः संज्ञायाः नाम्नः आदिपदाद् यथारुचि कवेर्गोत्रमातापितॄणां परिग्रहः, नाटकस्य संज्ञा स्वरूपादिकथनमिति सम्बन्धः। अथापि अनन्तरं च आमुखं प्रस्तावना। यथाक्रममेतानि कविना निबद्धव्यानीत्यर्थः।

पूर्वरङ्गः क इति जिज्ञासायामाह—यन्नाटयेति। कुशीलवाः सूत्रधारादिनटाः 'कुशीलवस्तु बाल्मीकौ नाट्याचार्यकयोरपि' इति मेदिनी। रङ्गे नाट्यशालायां सम्भाव्यमाना ये विघ्ना नटादिदुरदृष्टजन्योपद्रवास्तदुपशान्तये निराकरणाय नाट्यं काव्योपनिबद्धधीरोदात्ताद्य वस्थानुकारणश्चतुर्विधाभिनयेन तादात्म्यापत्तिः। तदुक्तं दशरूपके—'अवस्थानुकृतिर्नाटयम्' इति। तत्र वस्तुवर्णनीयपदार्थस्तस्मात्तादृशात्। पूर्व सर्वप्रथमं यत् प्रकुर्वन्ति स्वसमाजनियमात् कविनिर्द्देशात् सामाजिकादेशाद्वा आचरन्ति, स पूर्वरङ्ग उच्यते। पूर्वं रज्यतेऽस्मिन्निति पूर्वरङ्गो नाट्यशाला तत्स्थं कर्मापि पूर्वरङ्गपदेन व्यवह्रियते, अतः पूर्वरङ्गो नाम रङ्गोपद्रवनिवारकः नान्दीपाठगीतवादित्रादिनानाविधाङ्गविशेषो नाट्यादावनुष्ठेयः। कर्मविशेषः। तदुक्तम्—

'सभापतिः सभा सभ्या गाय्यका वादका अपि। नटी नटश्च मोदन्ते यत्रान्योन्यानुरञ्जनात्॥ अतो रङ्ग इति ज्ञेयः पूर्ववत्स प्रकल्पते। तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते॥' इति।

## रुचिरा

सन्देहापनोदायाह—**तत्रेति**। 'अस्ये'ति शेषः। **नाटके** 'इत्यर्थ'इति शेषः।

अथ तत्र तावत् पूर्वरङ्गं लक्षयति ३१५ **यदित्यादिना**।

**३१५ नाट्यवस्तुनो** नाट्यस्य नाटकस्य वस्तु प्रतिपाद्योऽर्थस्तस्येत्यर्थः। **पूर्वम्। रङ्गविघ्नोपशान्तये** रङ्गे नृत्यस्थाने विघ्ना जायमाना नटादिदुरदृष्टविलसिरूपा उपद्रवास्तेषामुपशान्तिरुपशमनं तस्यै तथोक्तायै। **कुशी-लवाः** सूत्रधारप्रभृतयो नटाः। "कुशीलवस्तु वाल्मीकौ नटयाचकयोरपि।" इति मेदिनी। **यम्। प्रकुर्वन्ति** प्रस्तुवन्ति आचरन्तीति यावत्। **सः। पूर्वरङ्गः। उच्यते**। "यद्यपि—पूर्वं रज्यतेऽऽस्मिन्नति पूर्वरङ्गः, नाटशालेत्येवार्थो मुख्यः तथाऽपि उपचारात् तत्स्थं कर्म्मापि तथा व्यपदिश्यते।" इति केचित्, अन्ये त्वाहुः "पूर्वो रङ्ग पूर्वं क्रियमाणो गानादिनिष्पाद्यः कर्म्मविशेष इति पूर्वरङ्गः, "रङ्गो। नृत्येरणभुवि गाने नृत्याङ्गणेऽपि च। वङ्गे मल्लनियुद्धो तद्भूमौ च" इति गोपालः। तदेवं पूर्वरङ्गशब्दोऽत्र न लाक्षणिकः।" इति ॥ ३१९ ॥

नन्वत्र किमवश्यं विधेयमित्याह ३१६ **प्रत्याहारादिकानीत्यादि**।

३१६ **अस्य** पूर्वरङ्गस्येत्यर्थः। **यद्यपि। प्रत्याहारादिकानि। भूयांसि** बहूनि। **अङ्गानि**। 'सन्ती'ति शेषः। **तथाऽपि। विघ्नोपशान्तये। अवश्यम्। नान्दी। कर्त्तव्या**। अत्रेदं बोध्यम्—"प्रत्याहारोऽवतरणं तथा ह्यारम्भ एव च। आश्रावणा वक्रपाणिस्तथा च परिघट्टना। संस्वदना ततः कार्य्या मार्गसारित एव च। ज्येष्ठमध्यकनिष्ठानि तथैवासारितानि च॥ ततः सर्वैस्तु कुतुपैः संयुक्तानीह कारयेत्। एतानि तु बहिर्योगान्यन्तर्जवनिकागतैः॥ प्रयोक्तृभिः प्रयोज्यानि तन्त्रीभाण्डकृतानि च। ततः सर्वैस्तु कुतुपैः संयुक्तानीह कारयेत्॥ विद्यादन्तर्जवनिकां वृत्तप्रयोक्तृभिः प्रयोज्यानि तन्त्रीभाण्डकृतानि च। ततः सर्वैस्तु कुतुपैः संयुक्तानीह कारयेत्॥ विद्यादन्तर्जवनिकां वृत्तपाठ्यकृतानि च। गीतानां भद्रकादीनां योज्यमेकं तु गीतकम्। वर्धमानमथापीह ताण्डवं यत्र युज्यते। ततश्चोत्थापनं कार्य्यं परिवर्त्तनमेव च॥ नन्दीशुष्कावकृष्टे च रङ्गद्वारं तथैव च। चारी चैव ततः कार्या महाचारी तथैव च॥ प्ररोचना च त्रिगतं पूर्वरङ्गे भवन्ति हि। एतान्यङ्गानि कार्य्याणि पूर्वरङ्गविधौ द्विजाः॥ एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः। कुतुपस्य सविन्यासः प्रत्याहार इति स्मृतः॥ तथाऽवतरणं प्रोक्तं गायकानां निवेशनम्। परिगीतक्रियाऽऽरम्भ आरम्भ इति कीर्त्तितः। आतोद्यरञ्जनाऽर्थं च भवेदाश्रावणाविधिः। वाद्यवृत्तिविभागार्थं वक्रपाणिर्विधीयते॥ तन्त्रीयकरणार्थं तु भवेच्च परिघट्टनम्॥ तथा पाणिविभागार्थे भवेत्संस्वदनाविधिः॥तन्त्रीभा-ण्डसमायोगान् मार्गसारितभिष्यते। कालपातविभागार्थं भवेदासारितक्रिया॥ कीर्त्तनादेवतानां च ज्ञेया गीत-विधिक्रिया॥ ...यस्मादुत्थापयन्त्यत्र प्रयोगं नान्दि (न्दी) पाठकाः। पूर्वमेव तु रङ्गेऽस्मिन् तस्मादुत्थापनं स्मृतम्॥ यस्माच्च लोकपालानां परिवृत्त्य चतुर्दिशम्। वन्दनानि प्रकुर्वन्ति तस्माच्च परिकीर्त्तनम्॥" इत्येवं भरतादिभिर-भिहितानि यद्यपि बहूनि पूर्वरङ्गे विधेयानि प्रत्याहारादीन्यङ्गानि, तथाऽपि न तेषां तथाऽऽवश्यकी स्थितिः प्रार्थनीया, यथा नान्द्याः। इति ॥ ३२० ॥

**प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि ।**

**तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥ २३ ॥**

तस्याः स्वरूपमाह—

**आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते ।**

**देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥ २४ ॥**

**मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी ।**

**पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ॥ २५ ॥**

अष्टापदा यथा अनर्घराघवे—'निष्प्रत्यूहम्' इत्यादि । द्वादशपदा यथा मम तातपादानां पुष्पमालायम्—

**शिरसि धृतसुरापगे स्मरारा-**

**वरुणमुखेन्दुरुचिर्गिरीन्द्रपुत्री ।**

**अथ चरणयुगानते स्वकान्ते**

**स्मितसरसा भवतोऽस्तु भूतिहेतुः ॥**

एवमन्यत्र ।

---

## विवृतिः

रङ्गं नृत्यस्थानम्, तत्र जायमाना ये विघ्ना नटादिदुरदृष्टजन्योपद्रवास्तदुपशान्तये ।

तस्या नान्द्याः । आशीरिति । स्तुतिर्गुणकीर्तनम् । प्रयुज्यते क्रियते । 'स्तुतिः' इत्यत्र 'नित्यम्' इति पाठे 'स्तुतिः' इत्यध्याहार्यम् । नृपादीनामित्यादिना गुर्वादिपरिग्रहः । नान्दीपदेन आशीर्मङ्गल्यं वस्तु वोच्यते । तदन्यतरयोगादेवादीनां स्तुतिरपि नान्दीति भावः । आशीर्वचनयुक्ता, मङ्गल्यशङ्खादिशंसिनी वा । शङ्खेत्यादिमालाद्युपलक्षणम् ।

तेन 'मध्याह्नार्कमरीचिकास्विव पयः पूरो यदज्ञानतः—' इत्यादौ स्रक्शब्दप्रयोगेण नान्दीत्वमक्षतम् । पदैः सुबन्ततिङन्तान्यतरैः । द्वितीयपदशब्देन श्लोकचतुर्थभाग उच्यते । अत एवोभयत्र पदशब्दोपन्यासः । केचित्तु रत्नावल्यादौ श्लोकत्रयेण नान्दीदर्शनात्प्रथमपदस्य श्लोकचतुर्थभागपरत्वं वदन्ति । तन्न । 'इदं गुरुभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे । विन्देम देवतां वाचममृतामात्मनः कलाम् ॥' इत्यादेरुत्तररामचरितादौ प्रणीताया द्वादशपदाया नान्द्या असंग्रहापत्तेः । एवं चाष्टाभिरिति तदधिकोपलक्षणत्वेन श्लोकत्रयेणापि नान्दी असंग्रहापत्तेः । एवं चाष्टाभिरिति तदधिकोपलक्षणत्वेन श्लोकत्रयेणापि नान्दी संगच्छते । अत एव महानाटके त्र्यधिकैः श्लोकैर्नान्दी कृता । नन्वभिज्ञानशाकुन्तले 'या सृष्टिः स्रष्टु—' इत्यादौ द्वादशाधिकपदघटितैकश्लोकप्रणीताया नान्द्याः कथं संग्रह इति चेत्, तस्याः 'कलिदासादिमहाकविप्रबन्धेषु च' इत्यनेन ग्रन्थकृतैव नान्दीत्वाभावस्य वक्ष्यमाणत्वात् ॥

## विवृतिपूर्तिः

**अस्येति। अस्य पूर्वरङ्गस्य प्रत्याहारादिकानि द्वाविंशत्यङ्गानि।**

**तानि नाट्याशास्त्रस्य पञ्चमाध्याये द्रष्टव्यानि॥**

नान्दीति। नान्दीपदव्युत्पत्तिरुक्ता नाट्यप्रदीपे—'नन्दन्ति काव्यानि कवीन्द्रवर्गाः कुशीलवाः पारिषदाश्च सन्तः। यस्मादलं सज्जनसिन्धुहंसी तस्मादियं सा कथितेह नान्दी॥' इति। तत्र भरतः प्रथमाध्याये—'पूर्व कृता मया नान्दी आशीर्वचनसंयुता। अष्टाङ्गपदसंयुक्ता प्रशस्ता वेदसंमता॥' इति। पञ्चमाध्याये च—'सूत्रधारः पठेन्नान्दी मध्यम स्वरमाश्रितः। नान्दीं पदैर्द्वादशभिरष्टाभिर्वाप्यलंकृताम्॥' इति। च। श्लोकोऽयमभिनवगुप्तपादाचार्यैर्भरतटीकायामभिनवभारत्यां व्याख्यातः—'अनेन त्रयस्रतालानुगता त्रिपदा षट्पदा द्वादशपदेति चतुरस्रतालानुगता चतुष्पदा अष्टपदा षोडशपदेति पृथक्त्रिविधैव। नातः परमपि भूयस्त्वादाट्टतेति। पदानि श्लोकावयवभूतानि तिङन्तानि सुबन्तानि वा श्लोकतुरीयांशरूपाणि वा, अवान्तररूपाणि वा' इति व्याख्याय पुनरुक्तम्—'आचार्यस्वरसात्त्ववान्तरवाक्येष्वेव पदत्वम्' इति। एतदेवाभिप्रेत्य—नाट्यप्रदीपे—'श्लोकपादः पदं केचित्सुप्तिङन्तमथापरे। परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे॥' इति प्रतिपादितम्। तथा च पञ्चमाध्याये महर्षिणा—'नमोऽस्तु सर्वदेवेभ्यो, द्विजातिभ्यस्ततो नमः। जितं सोमेन वै राज्ञा, शिवं गोब्राह्मणाय च॥ ब्रह्मोत्तरं तथैवास्तु, हता ब्रह्मद्विषस्तथा। प्रशास्त्विमां महाराजः पृथिवीं च ससागराम्॥ राष्ट्रं प्रवर्धतां चैव, रङ्गस्याशा समृध्यतु। प्रेक्षाकर्तुर्महान्धर्मो भवतु ब्रह्मभाषितः॥ काव्यकर्तुर्यशश्चापि धर्मश्चापि प्रवर्धताम्। इज्यया चानया नित्यं प्रीयन्तां देवता इति॥' इत्यवान्तरवाक्यरूपा द्वादशपदा नान्दी प्रदर्शिता। श्लोकतुर्यांशः पदमिति मतेऽष्टपदेयम्। तत्र टीकाकारैरष्टपदोदाहृता यथा विलक्षकुरुपतौ—'आनन्दं विदधातु पद्मवसतिः शंभुः शिवं यच्छतु, श्रीनाथः श्रियमातनोतु, तनुतां सीतापतिर्वाञ्छितम्। हेरम्बः कुरुतामविघ्नमनघं, वाग्ब्रह्म विद्योततां, व्यासोक्तं तदुदेतु वस्तु भरतो नाट्येऽस्तु नः कौतुकी॥' इति। श्लोकतुर्यभागः पदमिति मते चतुष्पदेयं नान्दी। किंच 'यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः। श्लेषेण वा समासोक्त्या नान्दी पत्रावली तु सा॥' इति नाट्यदर्पणे तस्या विशेषसंज्ञाभिहिता, तत्र 'या सृष्टिः—' इति पद्यमुदाहार्यम्। इयं च चतुरस्रतालानुसारिणी नाट्यशास्त्रकारभरत तट्टीकाकाराभिनवगुप्तपादाचार्यसंमतावान्तरवाक्यरूपाष्टपदा नान्दीति सर्वतन्त्रस्वतन्त्र—राघवभट्टपादाः। अपि च 'नीली शुद्धेति भेदेन सा नान्दी द्विविधा भवेत्। उपादानं वर्णनं वा भवेद्यत्रेन्दुसूर्ययोः। सा नीली स्यात्तदन्या तु शुद्धेति परिगीयते॥' इति तद्भेदः काव्येन्दुप्रकाशे। तत्र पुष्पवदुपादानेन 'या सृष्टिः—' इति नीली। तद्वर्णनेन 'निष्प्रत्यूहमुपास्महे—' इति नीली। 'वेदान्तेषु यमाहुरेकपुरुषं—' इति शुद्धा॥

पदैरिति। अत्र विशेषो मन्दारमरन्दे—अष्टभिर्दशभिः श्रेष्ठा तथा द्वादशभिः पदैः। अष्टादशपदैर्वापि द्वाविंशत्या पदैर्युता॥' इति संक्षेपः॥

निष्प्रत्यूहमिति। "निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने। याभ्यामर्धविबोधमुग्धमधुरश्रीरर्धनिद्रायितो नाभीपल्वलपुण्डरीकमुकुलः कम्बोः सपत्नीकृतः॥' अपि च। 'विरमति महाकल्पे नाभीपथैकनिकेतनस्त्रिभुवनपुरः शिल्पी यस्य प्रतिक्षणमात्मभूः। किमधिकरणा कीदृक्कस्य व्यवस्थितिरित्यसावुदरमविशद्रष्टुं तस्मै जगन्निधये नमः॥' इति शार्दूलविक्रीडितहरिणीछन्दोभ्यामष्टपदा नान्दी संपद्यते। पदं श्लोकचरणोऽपीति व्याख्यानात्।

प्रथममिति । 'नान्दी शुष्कावकृष्टा च रङ्गद्वारं तथैव च' इत्यादिना महर्षिणा पूर्वरङ्गाङ्गभूत-रङ्गद्वारात्पूर्वमेव नान्द्या उद्देशो विहितः ।

## विज्ञप्रिया

नान्दीसंज्ञाव्युत्पत्तिमाह—आशीर्वचनेति । आशंसानुरूपा समृद्धिर्नान्दी । नान्दिस्वरूपपदव्युत्पत्तौ नान्दी समृद्धिरिति चोच्यते इति स्तुतिवचनसंयुक्ता नान्दी यस्मात् प्रवर्त्तते सभासत्सु श्राव्यते । अतस्तद् वचनमेव तत्सम्बन्धान्नान्दी । देवद्विजनृपादीनामाशीर्वचनेत्यन्वयः । एतादृशनान्दीकथनमित्यग्रे व्यक्तीभविष्यति । यद् यद् वस्त्वात्मिका सा तत्तदाह—मङ्गल्येति । एषामन्यतरदेव शंसनीयमित्यर्थः । पदैः द्वादशभिरिति । अत्र चपदं श्लोकपादो विभक्त्यन्तं पदञ्च । यथासम्भवं विवक्ष्यते । तदन्येतरैयुक्तेत्यर्थः ।

अष्टपदा अनर्घराघवे इति । अत्र निष्प्रत्यूह इत्यादि विरमतिं महाकल्प इत्यादि श्लोकद्वयाष्टपादैरष्टपद-त्वम् । नच

**निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः**
**कोकप्रीतिचकोरपारणापटुज्योतिष्मती लोचने ।**
**याभ्यामर्द्धविबोधमुग्धमधुरश्रीरर्द्धनिद्रायितो**
**नाभिपल्लवपुण्डरीकमुकुलः कम्बोः सपत्नीकृतः ॥**

इत्यत्र विभक्त्यन्तपदानां द्वादशत्वमप्यस्ति, तत्कथमष्टपदत्वं दर्शितमिति वाच्यम् । उभयसत्त्वेऽपि अष्टपदत्वानपायात् तद्दर्शनौचित्यात् व्याख्यातम् । अष्टपदत्वासम्भवे विभक्त्यन्तपदरूपद्वादशपदवतीं नान्दीमुदा-हरति ।

एतन्नान्दीति । आशीर्वचनरूपा नान्दीत्यर्थः । रङ्गविघ्नोपशान्तये इत्यनेन पूर्वरङ्गस्य रङ्गविघ्नोपशान्तफ-लत्वस्योक्तत्वात् तथाप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये इति तदर्थान्मुनीतरनाट्यकारिकाकृतः कस्यचिन् मताभिप्रायेणोक्तम् । वस्तुतस्तु पूर्वरङ्गस्य रङ्गद्वारमेवाङ्गं नतु नान्दीत्यन्ये आहुरित्यर्थः ।

## लोचन

आशीरिति । देवद्विजनृपादीनामाशीराशंसा तत्प्रतिपादकेन वचनेन युक्ता । नाटकादिषु नित्यमवश्यं प्रयुज्यते, नत्वस्याः कदाचित्कत्वस्थितिः । नान्दीति नादिधातोः सिद्धा ।

उतेत्यनेन क्वचित् पदैरष्टभिर्द्वादशभिर्वा युता ।

## कुसुमप्रतिमा

ननु का नामासौ नान्दी कथं वा तादृशी संज्ञेत्याह आशीरिति । इष्टार्थस्य आंशनम् आशीः । तथा च यस्मात् आशी वर्चनेन आत्मनः परस्य वा तादृशाशीर्वादेन संयुक्ता, देवद्विजनृपादीनाम् आदिशब्दात् गुरुप्रभृतीनाञ्च स्तृतिर्गुणप्रशंसिनी वाक्तयैवानन्द इत्यर्थः प्रयुज्यते । नटै रुत्पाद्यते; तस्मात् सा वाक् नान्दी इति संज्ञिता 'नान्दी' इत्यं सञ्जातसंज्ञा । तथा च नन्दयति स्तुल्या देवादीनानन्दयतीति नन्दा, इनन्तनन्दधातोः पञ्चादित्वादश्च, ततश्च "प्रज्ञादिभ्यश्च" इति स्वार्थे अण प्रत्ययान्तादीप्रत्ययः ।

सा च नान्दी, मङ्गल्यं मङ्गलसूचकम्, शङ्कम्, चन्द्रम्, अम्नं पद्मम्, कीकं चक्रवाकम्, कैरवं कुमुदं वा शं सति अभिधाद्यन्वतमया वृत्त्याः बोधयतीति सा तथोक्ता भवेत् । तथा सा द्वादशभिः पदैः उत वा अष्टाभिः पदै र्युक्ता च भवेत् ।

पदञ्चात्र—श्लोकपादरूपम्, सुप्तिङन्तरूपम्, अवान्तरवाक्यरूपञ्च ग्राह्यम्, अनेकप्रकारत्वाभिप्रायेणैव-पदशब्दस्य द्विरभिधानात् । तथा च नाट्यप्रदीपे—

**"श्लोक पदं केचित् सुप्तिङन्तमथापरे ।**

**परेऽवान्तरवाक्येक स्वरूपं पदमुचिरे ॥"**

महर्षिभरतप्रणीतनाश्रयशास्त्रटीकाकृदभिनवगुप्तश्च—"पदानि श्लोकावयवभूतानि तिङन्तानि सुबन्तानि वा, श्लोकतुरीयांशपदानि वा, अवान्तरूपाणि वा ।" इति ।

तत्र श्लोकपादरूपद्वादशपदा नान्दी वेणीसंहारनाटके, श्लोकत्रयेण द्वादशपादत्वात् । श्लोकपादरूपाष्टपदा नान्दी मालतीमाधवप्रकरणे, श्लोकद्वयेनाष्टपादत्वात् । सुप्तिङन्तरूपाष्टपदद्वादशपदयोरुदाहरणद्वयं वृत्तौ दर्शितम् । अवान्तरे कैकवाक्यरूपाष्टपदा नान्दी शकुन्तलनाटके, "या सृष्टिः स्रष्टु राद्या—" इत्यादि श्लोकस्याष्टवाक्यघटितत्वात् किञ्च तत्र श्लोकद्वयेनाष्टपादत्वादष्टपदत्वमपि ।

तथा पदशब्दोऽत्र स्वयमेवार्थ प्रतिपादनसमर्थतया प्रधानत्वाद्वाचकपरी लक्षकपरश्च ग्राह्यः । तेनोत्तर रामचरितनाटकनान्द्यां "प्रशास्महे" इति प्रशब्दस्य उपसर्गतया द्योतकत्वेन वाचकत्वलक्षकत्वाभावान्न सुप्तिङन्तरूपद्वादशपदत्वहानिः ।

तथा स्तुतिरित्ये तावन्मात्रमेव नान्दीत्वेन विवक्षितम्, विशेष्यता प्रधानत्वात् तन्मात्रेणैव देवादीनामानन्दयोगाच्च । आशीर्वचनसंयुक्तेति मङ्गल्येत्यादिकञ्च सम्भवप्रदर्शनार्थमभिहितमित्यवधेयम् । तेन महावीरचरिते प्रबोधचन्द्रोदयादौ च नाटके केवलस्तुतिरूपायामपि वाचि नान्दीलक्षणसङ्गतिरिति द्रष्टव्यम् ।

शिरसीति । स्मरादौ शिवे, धृता सुरारुगा देवनदौ गङ्गा येन तथाविधे सति, अरुणा गङ्गायाः सपत्नीत्वात् कोपेन रक्तवर्णा मुखेन्दुरुचिर्मुखचन्द्रद्युतिर्यस्याः सा, अथानन्तरं स्वकान्ते शिवे, चरणयुगे आनते अवनते सति, इन्दुपदेन चन्द्रशंसित्वं बोध्यम् ।

एवमिति । अन्यत्र श्लोकपादरूपपदविषयेः अवान्तरवाक्यरूपपदविषये च एवं नान्द्यु दाहरणमूह्यमित्यर्थः । तत्तु प्रदर्शितमेव ।

ननु "आशीर्वचनसंयुक्ता" इत्यादिविशेषणमभिधाय पुनः स्तुतिमात्रस्य नान्दीत्वविवक्षापेक्षया वरं "देवद्विजनृपादीं स्तृतिर्नान्दी प्रकीर्त्तिता" इत्यमेव लक्षणं क्रियतामित्याह एतदिति । एतशाब्दी "आशीर्व चनसंयुक्ता" इत्याद्य क्तलक्षणनान्दी, इति कस्यचिद्दशरूपककारादेर्मत नुसारेणोक्तम्, प्रायेण लक्ष्येषु सङ्गतेः; किन्तु नास्मन्मतमिदम्, महाकविनिबन्धेष्वे वासङ्गतेरित्याशयः ।

तर्हि भवन्मते महाकविनिबन्धेष्वेव स्तुतिवादाद्यात्मकं तादृशं वाक्यं किं नामकमित्याह वस्तुतस्त्विति । रङ्गद्वाराभिधानं तत् प्रयोज्यैव रङ्गे प्रवेशात् रङ्गद्वारनामकम्, पूर्वरङ्गस्य प्रागुक्तलक्षणस्त, अङ्गं स्वरूपनिर्वाहकम्, इत्युच्यते अस्माभिरिति शेषः । ननु भवतेव अन्य न केनापि किमिदमुच्यत इत्याह तदुक्तमिति । मुनिनेति शेषः ।

## विमला

भूयांसि—बहूनि, अङ्गानि, सन्ति इति शेषः, तथाऽपि विघ्नोपशान्तये नान्दी अवश्यं कर्त्तव्या ।

नान्दीपदार्थमाचष्टे, आशीरिति ।—यस्मात् देवद्विजनृपादीनाम् [नृपादीनामित्यादिपदेन गुर्वादिपरिग्रहः] आशीः,—शुभचिन्तनं, तद्वचनेन संयुक्ता स्तुतिः,—गुणकीर्त्तनं, ["स्तुतिः" इत्यत्र "नित्यम्" इति पाठे—स्तुतिरध्याहार्य्या] प्रयुज्यते—क्रियते, तस्मात् नान्दी इति संज्ञिता—कथिता, नन्दयतीति व्युत्पत्तियोगात् देवद्विजनृपप्रभृतीनामानन्दयित्री स्तुतिर्नान्दीति फलितार्थः । सा तु मङ्गल्यं—मङ्गलायहितं, शङ्खचन्द्रादिं शंसयति—सूचयतीति तथोक्ता, तथा (क्वचित्) द्वादशभिः पदैः,—सुप्तिङन्तरूपैः, वा—अथवा, अष्टभिः पदैः, उत—अथवा, क्वचिद्वा इत्यर्थः, पदैः,—पद्यस्य तुर्य्यांशभूतैः चरणैः, युक्ता । यत्र द्वादशपदा नान्दी, तत्र पदशब्दः सुप्तिङन्तान्यतमवाचकः, यत्राष्टपदा, तत्र पदशब्दः पद्यचतुर्थांशवाचको बोद्धव्यः । अत एवानर्घराघवे, पद्यद्वयेनाष्टपदा नान्दी, पुष्पमालायाञ्चैकैनैव पद्येन द्वादशपदा नान्दो उदाहरिष्यते इति हृदयम् । नान्दीपदव्युत्पत्तिस्तु यथोक्ता नाट्यप्रदीपे—"नन्दन्ति काव्यानि कवीन्द्रवर्गाः कुशीलवाः पारिषदाश्च सन्तः यस्मादलं सज्जनसिन्धुहंसी तस्मादियं वा कथितेह नान्दी ॥" इति । भरतेन तस्या यथोक्ता व्यवस्था—"पूर्वं कृता मया नान्दी आशीर्वचनसंयुता ।इति । "सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः । नान्दीं पदैर्द्वादशभिरष्टाभिर्वाऽप्यलङ्कृताम् ॥" इति एषा च तदीया व्याख्या—"अनेन व्यस्ततालानुगता त्रिपदा षट्पदा द्वादशपदेति, चतुरस्रतालाऽनुगता चतुष्पदाऽष्टपदा षोड़शपदेति पृथक् त्रिविधैव । नातः परमपि भूयस्त्वादाहृता । पदानि श्लोकावयवभूतानि तिङन्तानि सुबन्तानि वा, श्लोकतुरीयांशरूपाणि वा, अवान्तररूपाणि वा । आचार्य्यस्वरसात्त्ववान्तरवाक्येष्वेव पदत्वम् ।" इति । नाट्यप्रदीपकारैश्च—"श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे परेऽवान्तरवाक्यैकस्वरूपं पदमुचिरे ॥" इति ।

तत्र द्वादशपदामुदाहरति, शिरसीति ।—स्मद्वारौ—हरे, शिरसि धृता, सुरापगा—गङ्गा येन तादृशे, सति, अरुणा—रक्ता, मुखेन्दोः,—मुखचन्द्रस्य, रुचिः,—कान्तिः, यस्यास्तथाभूता, अथ—अनन्तरं, स्वकान्ते—तस्मिन् स्मरारौ इत्यर्थः, चरणयुगानते—अपराधं स्वीकृत्य पादतलपतिते सति, स्मितेन—मन्दहासेन, सरसा—सद्भावाद्रां, गिरीन्द्रपुत्री—गरौ, भवतः,—तत्र, भुतिहेतुः,—कल्याणदायिनी, अस्तु—भवतु । ततत् पद्यं द्वादशभिः पदैः रचितम् ।

केचित्तु रत्नावल्यादौ श्लोकत्रयरूपाया नान्द्या दर्शनात् अत्र प्रथमपदशब्दस्यापि श्लोकचतुर्थभागपरत्वं व्याचक्रुः, तन्न; "इदं गुरुभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे । विन्देस देवतां वाचममृतामात्मनः कलाम ॥" इत्युत्तरचरितनाटके द्वादशप्रदायाः नान्दीत्वानुपपत्तेः । एवं चाष्टाभिरिति तदधिकोपलक्षणत्वेन श्लोकत्रयेणापि नान्दी सङ्गच्छते । अत एव महानाटके त्रयाधिकैः श्लोकैः नान्दी कृता । नन्वभिज्ञानशकुन्तलाया "या सृष्टिः—" इत्यादौ द्वादशाधिकपदघटितैकश्लोकप्रणीतायाः नान्द्याः कथं संग्रहः ? इति चेत्, तस्याः "कालिदासादिमहाकविप्रबन्धेषु च" इत्यनेन ग्रन्थकृतैव नान्दीत्वाभावस्य वक्ष्यमाणत्वात्, इति विभिन्नमालोक्योक्तम्, एतदिति ।—"कस्यचित्" इत्यनेनास्वरसः सूचितः । तर्हि तस्य किं नाम ? इत्यत आह, वस्तुस्त्विति ।—पूर्वरङ्गस्य—सामान्यमङ्गलाचरणरूपस्य, रङ्गद्वारम् अभिधानं यस्य तादृशम्, अङ्गं—विशेषः ।

## लक्ष्मी

यद्यपि अस्य पूर्वरङ्गस्य प्रत्याहारादिकानि बहूनि द्वाविंशतिसंख्याकानि अङ्गानि सन्ति तथापि विघ्नोपशान्तये नान्दी अवश्यं कर्त्तव्या । एतेन प्रत्याहारादिकानि तु कविना यथारुचि वर्णनीयानीति द्योतितम् ।

नाट्यप्रदीपे नान्दीपदव्युत्पत्तिश्चेत्थमुक्ता—

**'नन्दन्ति काव्यानि कवीन्द्रवर्गाः कुशीलवाः पारिषदाश्च सन्तः ।**

यस्मादलं सज्जनसिन्धुहंसी तस्मादियं सा कथितेह नान्दी ॥ इति ॥

ननु नान्द्या अवश्यविधानं प्रतिपाद्यते तत्र का नामासौ नान्दी कथं च तादृशं नामेत्याकाङ्क्षायामाह—आशीर्वचनेति । देवद्विजनृपादीनाम् आदिपदाद्‌गुर्वादीनां च अशीराशंसा तत्प्रतिपादकेन वचनेन आत्मनः परस्य वा तादृशाशीर्वादेन संयुक्ता स्तुतिः गुणकीर्त्तनं यस्मात्प्रवर्त्तते सभासत्सु नटैः श्राव्यते, अतस्तद्वचनमेव तत्सम्बन्धान्नान्दीति संज्ञिता 'नान्दी' इत्थं सञ्जातसंज्ञा । 'स्तुतिः' इत्यत्र 'नित्यम्' इति पाठे स्तुतिरित्यध्याहार्यम्, तथा च नाटकादिषु सा नित्यमवश्यं प्रयुज्यते क्रियते न त्वस्याः कादाचित्कत्वस्थितिरित्यर्थः । नन्दयति स्तुत्या देवादीनानन्दयतीति नान्दी 'टुनदि समृद्धौ' इत्यस्मात् पचादित्वादच् ततश्च स्वार्थेऽण्, अणन्तत्वाट्टिढेति ङीप्रत्ययः । यत् यत् वस्त्वात्मिका सा तत्तदाह—माङ्गल्येति । सा च नान्दी, मङ्गल्यं मङ्गलद्योतकम्, शङ्खम्, चन्द्रम्, अब्जं कमलम्, कोकं चक्रवाकम्, कैरवं श्वेतकमलम्, वा शंसति कयाचिदप्यभिधाद्यावृत्त्या प्रत्याययतीति सा तादृशी भवेत् । तथा सा द्वादशभिः पदैः सुबन्ततिङन्ताद्यन्यतमैः उत वा अष्टाभिः पदैर्युक्ता भवेत् ॥

सुप्तिङन्तरूपाष्टपदाद्वादशपदयोरुदाहरणद्वयं दर्शयति—अष्टपदेति । निष्प्रत्यूहम् । इत्यादीति । सम्पूर्णपद्यं तु—

**निष्प्रत्यूहमुपास्महे भगवतः कौमोदकी लक्ष्मणः**
**कोकप्रीतिचकोरपारणपटुज्योतिष्मतीलोचने ।**
**याभ्यामर्धविबोधमुग्धमधुरश्रीरर्धनिद्रायितो**
**नाभीपल्वलपुण्डरीकमुकुलः कम्बोः सपत्नीकृतः ॥**

अपि च—

**विरमति महाकल्पे नाभीपथैकनिकेतनस्त्रिभुवनपुरः शिल्पी यस्य प्रतिक्षणमात्मनः ।**
**किमधिकरिणा कीदृक्कस्य व्यवस्थितिरित्यसावुदरमविशद्‌द्रष्टुं तस्मै जगन्निधये नमः ॥**

इति शार्दूलविक्रीडितहरिणीवृत्ताभ्यामष्टपदा नान्दी सम्पद्यते । न च निष्प्रत्यूहमित्यत्र विभक्त्यन्तपदानां द्वादशत्वमप्यस्ति तत्कथमष्टपदत्वं दर्शितमिति वाच्यम्, उभयसत्त्वेऽपि अष्टपदत्वानपायात् तद्दर्शनौचित्यात् ।

द्वादशपदां नान्दीमुदाहरति—शिरसीति । स्मरारौ शङ्करे । शिरसि मूर्ध्नि धृता स्थापिता सुरापगा गङ्गा येन तादृशे सति, अरुणा सपत्न्या गङ्गायाः दर्शनात् कोपेन रक्तवर्णा मुखेन्दुरुचिर्मुखचन्द्रकान्तिर्यस्याः सा तथोक्ता, अथानन्तरं स्वकान्ते शङ्करे चरणयुगे आनते अवनते सति स्मितेन ईषद्धास्येन सरसा अनुरागाद्रा गिरीन्द्रपुत्री शैलराजदुहिता पार्वती, भवतः सभापतेः भूतिहेतुः सम्पद्दात्री अस्तु भवतु । इन्दुपदोपन्यासादस्याश्चन्द्रशंसित्वं ज्ञेयम् ।

एवमिति। अन्यत्र श्लोकपादरूपपदविषये अवान्तरवाक्यरूपपदविषये च एवं नान्द्या उदाहरणमूहनीयमित्यर्थः।

तत्र श्लोकपादरूपद्वादशपदानान्दी वेणीसंहारनाटके। तत्र 'निषिद्धैः' इत्यादिना (क) श्लोकत्रयेण द्वादशपादत्वात्। श्लोकपादरूपाष्टपदा नान्दी मालतीमाधवप्रकरणे तत्र श्लोकद्वयेनाष्टपादत्वात्। अवान्तरैकैकवाक्यरूपाष्टपदा नान्दी 'या सृष्टिः स्रष्टु'रित्यादिश्लोकस्याष्टवाक्यघटितत्वात्। अवान्तरैकैकवाक्यरूपद्वादशपदा 'नमोऽस्तु सर्वदेवेभ्य' इत्यादि भरतश्लोकस्य द्वादशवाक्यघटितत्वात्।

विशेष्यतया प्रधानत्वात् प्रधानत्वेनैव च देवादीनामानन्दकारित्वाच्चात्र नान्दीत्वेन स्तुतिरित्येतावन्मात्रमेव ग्राह्यम् 'आशीर्वचनसंयुक्तेति' 'माङ्गल्यत्यादिकं च सम्भवप्रदर्शनार्थमुक्तमित्यवगन्तव्यम्। तेन केवलस्तुतिरूपत्वेऽपि प्रबोधचन्द्रोदये महावीरचरितादौ चनाटके नान्दीलक्षणं सङ्गच्छते।

ननु 'देवद्विजनृपादीनां स्तुतिर्नान्दी प्रकीर्तिता' इत्येव नान्द्या लक्षणं विधीयतामलम्। 'आशीर्वचनसंयुक्ता' इति विशेषणमुक्त्वा पुनः स्तुतिमात्रस्य नान्दीत्वाभिधानमित्यत आह—एतन्नान्दीति। आशीर्वचनरूपा नान्दीत्यर्थः। कस्यचिन्मतानुसारेणेति 'रङ्गविघ्नोपशान्तये' इत्यनेन पूर्वरङ्गस्य रङ्गविघ्नोपशान्तफळस्याभिहितत्वात्, 'तथाऽप्यवश्यं कर्तव्यं नान्दीविघ्नोपशान्तये' इति तदर्थान्मुनीतरनाटयकारिकाकृतः। कस्यचिन्मताभिप्रायेणाभिहितमित्यर्थः। नास्माकं तदिष्टं महाकविनिबन्धष्वेवाध्याप्तेरिति कस्यचित्पदेनास्वरसः सूचित इति भावः।

ननु त्वन्मते महाकविनिबन्धेष्वेव स्तुतिरूपादिकं किं नामकं तादृशं वाक्यमित्याशयेन स्वमतं दर्शयति—वस्तुतस्त्विति। रङ्गद्वाराभिधानं रङ्गद्वारनामकम्, पूर्वरङ्गस्य पूर्वोक्तस्वरूपस्य अङ्गं स्वरूपनिर्वाहकम्, पूर्वरङ्गस्य रङ्गद्वारमेवाङ्गं न तु नान्दीत्यर्थः। 'अन्ये' इति बहुसम्मतत्वेन स्वस्यापि स्वरसः सूचितः। अत्रेदं बोध्यम्—'निष्प्रत्यूहमुपास्महे' इत्यादौ नान्दीलक्षणसमन्वयो भवतीत्येतावतैव नान्दीति न सर्ववादिसम्मतं मतम्, पूर्वरङ्गस्य रङ्गद्वारनाम्नोऽङ्गस्यात्र यथार्थतया विद्यमानत्वात्। अत एव—

**'एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः**
**कान्तासमिश्रदेहोऽप्यविषय उदितो यः परस्माद् यतीनाम्।**
**अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्विभ्रतो नाभिमानः**
**सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः॥'**

इत्यादौ अष्टपदाद्वादशपदान्यतमाया नान्द्या लक्षणासद्भावेऽपि न क्षतिरिति।

## रुचिरा

ननु कीदृशीयं तर्हि नान्दीत्यतस्तत्स्वरूपमभिधातुं प्रतिजानीते—**तस्या इत्यादिना**।

**तस्या** नान्द्या इत्यर्थः 'अस्या' इति पाठान्तरम्। **स्वरूपं** लक्षणम्। **आह**—३१७ **आशीरित्यादिना**।

३१७ **यस्मात्**। 'कारणात्' इति शेषः। **देवद्विजनृपादीनाम्**। आदिना—गुरुप्रभृतीनां ग्रहणम्। **आशीर्वचनसंयुक्ता**ऽऽशीर्वचनमाशीर्वादस्तेन संयुक्ता। **स्तुतिः**। **प्रयुज्यते**। **तस्मात्**। **नान्दी**। **इति**। **सञ्ज्ञिता**। अयम्भावः—"नन्दन्ति यस्मात्सर्वेऽपि तस्मान्नान्दीति कीर्त्यते। पूज्यानां स्तवनं तत्र तथाऽऽशीर्वचनं महत्॥" इत्युक्तया पूज्यानां देवादीनां स्तवनं, तेषां पराभ्युदयार्थं चाशंसनं नान्दीसञ्ज्ञायां कारणम्। नान्दी हि नन्दनापरप-

र्यायस्यानन्दस्य लाभरूपा। इति अत एव—**मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी** मङ्गल्यं मङ्लहेतुभूत वस्तु च शङ्खश्च चन्द्रश्चाब्जं कमलं च कोकौ चक्रवाकौ च कैरवं कुमुदं चेति तानि शंसतीत्येवंशीलेति तथोक्ता। 'मङ्गले साधु' इति मङ्गल्यम् "तत्र साधु"। ४/३/९८ इति यत्। मङ्गल्यं च स्रक्चन्दनादीति बोध्यम्, तेन—'मध्याह्नार्क-मरीचिकास्विव पयः पूरो यदज्ञानतः खं वायुर्ज्वलनो जलं क्षितिरिति त्रैलोक्यमुन्मीलति। यत्तत्त्वं विदुषां निमीलति पुनः स्रग्भोगिभोगोपमं सान्द्रानन्द्रमुपास्महे तदमलं स्वात्मावबोधं महः॥' इत्यादौ स्रगादिपदविन्यासेन नान्दीत्व-मव्याहृतम्। वस्तुतस्तु—नायं निमयः, यत्—शङ्खादीनां शंसनेनैव नान्दीत्वमिति, किन्तु एतद्दिग्दर्शनम्, एतेन यथातथं सूत्रधारकर्तृकं स्तवनादिरूपं मङ्गलाचरणं नान्दीति दरमुकुलितनयनं सनयनैरवधेयम्। तथा—**द्वादशभि-र्द्वादशसङ्ख्याकैः**। **पदैर**वान्तरवाक्यरूपैः सुप्तिङन्तरूपैः पादरूपैर्वा शब्दैरित्यर्थः। तथोक्तं नाट्यप्रदीपकृता—"श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे। परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे॥" इति, "पदं शब्दे च वाक्ये च...श्लोकपादेऽपि च क्लीवम्..." इति मेदिनीकरेण च, 'शब्दे सुबन्ते तिङन्ते वा। वाक्येऽवान्तरवाक्ये।' इति विवृतिकृता च। **युक्ता**। **वा**ऽथवा। **अष्टाभिर**ष्टरसङ्ख्याकैः। **पदैर**वान्तरवाक्यैः सुप्तिङन्तैः पादरूपैर्वा। **युता**। 'उत' इति पाठान्तरम्। तदेवं षड्विधा नान्दा, तत्राद्या यथा—"नमोऽस्तु सर्वदेवेभ्यो १ द्विजातिभ्यस्ततो नमः २। जितं सोमेन देवेन (वै राज्ञा) ३ शिवं गोब्राह्मणाय च ४॥ ब्रह्मोत्तरं तथैवास्तु ५ हता ब्रह्मद्विषस्तथा ६। प्रशास्त्विमां महाराजः पृथिवीं च ससागराम् ७॥ राष्ट्रं प्रवर्धतां चैव ८ रङ्गस्याशा समृध्यतु ९। प्रेक्षाकर्तुर्महान् धर्म्मो भवतु ब्रह्मभाषितः १०॥ काव्यकर्तुर्यशश्चापि धर्म्मश्चापि प्रवर्धताम् ११। इज्यया चानया नित्यं प्रीयन्तां सर्वदेवताः १२॥" इति। द्वितीयोदाहृतैव ग्रन्थकृता। तृतीया यथा, मालतीमाधवे—"सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौ-मारबर्हिस्त्रासान्नासाऽग्ररन्ध्रं १ विशति फणिपतौ भोगसङ्कोचभाजि। २ गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणेर्वैयानक्यश्चिरं ३ वो वदनविधुतयः पान्तु चीत्कारवत्यः॥४ चूडापीडकपालसङ्कुलगलन्मन्दा किनीवारयो ५ विद्युत्प्रायललाटलोचनपुटज्योतिर्विमिश्रत्विषः ६। पान्तु त्वामकठोरकेतकशिखासन्दिग्धमुग्धेन्दवो ७ भूतेशस्य भुजङ्गवल्लिवलयस्तनद्धजूटाजटाः ८॥ पक्ष्मालीपिङ्गलिम्नः कण इवतडितां यस्य कृत्स्नः समूहो ९ यस्मिन् ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव। १० अर्चिर्निष्टप्तचूडाशशिगलितसुधासारझङ्कारिकोणं ११ तात्ता-यीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः॥" १२ इति। तुर्य्या यथा—"आनन्दं विदधातु पद्मवसतिः, १ शम्भुः शिवं यच्छतु २ श्रीनाथः श्रियमातनोतु ३ तनुतां स्रीतापतिर्वाञ्छितम् ४। हेरम्बः कुरुतामविघ्नमनघं ५ वाग्ब्रह्मवि-द्योततां ६ व्यासोक्तं तदुदेतु वस्तु ७ भरतो नाटयेऽस्तु नः कौतुकी ८॥" (पद्मवसतिब्रह्मा लक्ष्मीर्वा)। पञ्चमी यथा, महावीरचरिते—"अथ १ २ स्वस्थाय देवाय ३ नित्याय ४ हतपाप्मने ५। त्यक्तक्रमविभागाय ६ चैतन्यज्योतिषे ७ नमः ८॥" इति। (अत्र हतपाप्मतयाऽऽशीर्वचनम्)। षष्ठी पुनरुदाहृतैव ग्रन्थकता॥ ३२१॥ ३२२॥

दिङ्मात्रामुदाहर्त्तुमुपक्रमते—**अष्टपदे**त्यादिना।

**अष्टपदा**ऽष्टौ पदानि पादा यस्यां तथाभूता। 'नान्दी' ति प्रसङ्गानुप्रसक्तम्। **अनर्घराघवे** तदाख्ये श्रीमुरा-रिमिश्रकृते नाटके इत्यर्थः। **यथा**—(भगवतोलोचनाभ्याम्) "**याभ्याम्**। **अर्द्धविबोधमुग्धमधुरश्रीरर्द्धवि-**बोधोऽर्द्धविकासस्तेन मुग्धा रमणीया मधुराऽमृतवर्षिणी श्रीः शोभा यस्य तादृशः। सूर्य्याचन्द्रमसयोर्युगपदुदय इव ययोरेकदैव पाते इति भावः। अत एव—**अर्द्धनिद्रायितो**ऽर्द्धनिद्र इवावस्थितः। **नाभीपल्वलपुण्डरीकमुकुलो** नाभी पल्वलमिव तस्य पुण्डरीकं श्वेतकमलं तस्य मुकुलः कलिकेति तथोक्तः। **कम्बोः** शङ्खस्य। **सपत्नीकृतः** सदृशीकृतः। 'ते' इति शेषः। **भगवतः कौमोदकीलक्ष्मणः** कौमोदकी स्वनामधन्या गदैव लक्ष्म धार्य्यात्वेन सम्पद्यमानं चिन्हं यस्य तस्य तथोक्तस्य। गदाधरस्येति भावः। **कोकप्रीतिचकोरपारणपटुज्योतिष्मती** कोकयो-

श्चक्रवाकयोः प्रीतिराश्लेषसम्भवः प्रमोदः, सा च चकोरस्य तदाख्यस्य पक्षिणः पारणमुपवासनियमत्यागपुरः सरं भोजनं, तच्चेति तयोः पटुनी चतुरे क्षमे इति यावत् तादृशे ये ज्योतिषी प्रकाशौ ते विद्येते अनयोरिति तथोक्ते (सूर्य्यश्चक्रवाकयोः सङ्घट्टयिता, चन्द्रश्चन्द्रिकया च चकोरममृतं विधत्ते, चकोरश्चन्द्रिकया कृतार्थितश्चाङ्गारानपि भक्षयितुं प्रवर्त्तते, दिवोपवासं च जहातीति कविसमयमुपादायेदमभिहितम्) सूर्य्याचन्द्रमसरूप इति भावः । "कोकश्चकश्चक्रवाकः" इत्यमरः । **लोचने** नयनयुगलम् । **निष्प्रत्यूहं** निर्गतः प्रत्यूहो विघ्नो यस्मिन् कर्म्मणि तद् यथा तथेति भावः । 'विघ्नोऽन्तरायः प्रत्यूह' इत्यमरः । **उपास्महे** आराधयामः । अत्र शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं यथोक्तम्, सूर्य्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम् ॥ २२१ ॥" इति ॥ **"महाकल्पे** महाप्रलयावसरे । 'संवर्त्तः प्रलयः कल्प' इत्यमरः । **विरमति** निवर्त्तमाने सति । **नाभीपथैकनिकेतनो** नाभी तदाख्यमुदराङ्गं तस्याः पथः पन्था द्वारमिति यावत्, स एवैकं मुख्यं निकेतनं निवासभूमिर्यस्य तथोक्तः । 'वाटः पथश्च मार्गस्त्व' इतित्रिकाण्डशेषः । 'वेश्म सद्म निकेतनम् ।' इत्यमरः । **त्रिभुवनपुरस्त्रि**भुवनमेव पूर्नगरं तस्याः । 'पूः स्त्री पुरीनागर्यौ वा' इत्यमरः । **शिल्पी** रचनचतुरः । 'कारुः शिल्पी' इत्यमरः । समस्तपाठे तु त्रिभुवनस्य पुरः शिल्पी प्रथमनिर्म्माता प्रजापतीनां मुख्य इति भावः । **असौ । आत्मभूः** स्वयम्भूर्ब्रह्मेति यावत् । 'ब्रह्माऽऽत्मभूः' इत्यमरः । **कस्य । कीदृक्** कीदृशी । **किमधिकरणा** किमधिकरणमधिकार आधार इति यावत्, यस्यास्तादृशी । **व्यवस्थितिर्व्य**वस्था । **इति** इतिकृत्वेत्यर्थः । **प्रतिक्षणं** पुनःपुनः । **द्रष्टुं** नयनविषयीकर्त्तुं स्फुटं ज्ञातुमिति यावत् । **यस्य । उदरम् । अविशत्** प्रविवेश । **तस्मै । जगन्निधये** जगतां भूर्भुवःस्वरिति सञ्ज्ञितानां लोकानां निधिर्निधानं तस्मै तथाभूताय । कुक्षिस्थसमस्तलोकायेति भावः । **नमः** । अत्र हरिणीवृत्तम्, तथोक्तं "नसमरसला गः षड्वेदैर्हयैर्हरिणी मता ।' इति । इदं बोध्यम्—षष्ठीयं नान्दी, अत्र च कोकादीनामानन्दहेतुकताऽऽदिप्रदिपादनेनाशीराशंसनम् । **इति** । । २२२ ॥" **इति** । **द्वादशपदा** द्वादशपदानि सुप्तिङन्तरूपाः शब्दा यत्र तादृशी । 'नान्दी' ति प्रकृतम् । **यथा । मम । तातपादानां** पूज्यपितॄणां चन्द्रशेखराणाम् । 'कृता' विति शेषः । **पुष्पमालायां** तदाख्ये रूपके इत्यर्थः । "**शिरसि** मस्तके । **धृतसुरापगे** धृता सुरापगा देवनदी गङ्गेति यावत् येन तादृशे । सति सप्तमीयम् । **स्मरारौ** कामान्तके महेश्वरे इति यावत् । **अरुणमुखेन्दुरुचिररुणा** मुखमिन्दुरिवेति तस्य रुचिः कान्तिर्यस्यास्तथोक्ता (सुरापगायाः सपत्नीत्वाद् कान्तकर्त्तृकं शिरसा लालनमक्षममित्युक्तम्) । **अथ** सपदि तथा प्रियाप्रणयमानावगमानन्तरमिति भावः । **स्वकान्ते** स्वप्रेयसि तस्मिन् स्मरारावित्यर्थः । **चरणयुगानते** चरणयोर्युगं द्वन्द्वमानतस्तथाभूते । 'क्षन्तव्योऽयं ममापराध' इति चरणोपान्ते प्रणते सतीति भावः । **स्मितसरसा** स्मितेन मन्दहासेन सरसा प्रकटितप्रणयेति तथोक्ता । **गिरीन्द्रपुत्री** गिरीन्द्रस्य पर्वताधिराजस्य हिमालयस्येति यावत् पुत्रीति तथोक्ता, पार्वतीत्यर्थः । **भवतः** तव सभ्यजनस्येति यावत् । **भूतिहेतुर्भू**तीनां सम्पदां हेतुः तत्स्वरूपेति भावः । **अस्तु** भवतु । अशिषि लोट् । द्वितीयेयं नान्दी । अत्र च भगवतः स्मरारेरपि वशीकरणमहिम्ना देव्या अलौकिकसौन्दर्य्यद्योतनानुपदं सौभाग्यातिशयो ध्वनितः, तथा सति तस्याः स्वभावतोऽपि महनीयैश्वर्य्यायाः सम्पदर्थमाशीराशंसनं नितान्तमुपयुक्तम् । पुष्पिताग्रावृत्तम्, तथोक्तम् "पुष्पिताग्रा नौ र्यौ, न्जौ ज्रोग् ।" इति पिङ्गलाचार्य्यैः ॥" इति ॥ २३ ॥

उदाहरणान्तरविषये प्राह—**एवमित्यादि** ।

**एवं** यथाऽत्रोदाहृता तथेत्यर्थः । **अन्यत्र** 'मुद्राराक्षसादावपि नान्द्युदाहृता बोध्ये' ति शेषः ।

एवं यथात्रोदाहृता तथेत्यर्थः । अन्यत्र 'मुद्राराक्षसादावपि नान्द्युदाहृता बोध्ये' ति शेषः ।

एतन्नान्दीति कस्यचिन्मतानुसारेणोक्तम्। वस्तुतस्तु 'पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गम्' इत्यन्ये।

यदुक्तम्—

**'यस्मादभिनयो ह्यत्र प्राथम्यादवतार्यते।**

**रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम्॥' इति।**

उक्तप्रकारायाश्च नान्द्या रङ्गद्वारात्प्रथमं नटैरेव कर्तव्यतया न महर्षिणां निर्देशः कृतः।

कालिदासादिमहाकविप्रबन्धेषु च—

**वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी**

**यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः।**

**अन्तर्यस्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते**

**स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः॥**

एवमादिषु नान्दीलक्षणायोगात्। उक्तं च—'रङ्गद्वारमारभ्य कविः कुर्यात्—' इत्यादि। अत एव प्राक्तनपुस्तकेषु 'नान्द्यन्ते सूत्रधारः' इत्यनन्तरमेव 'वेदान्तेषु—' इत्यादि श्लोकले(लि)खनं दृश्यते। यच्च पश्चात् 'नान्द्यन्ते सूत्रधारः' इति ले(लि)खनं तस्यायमभिप्रायः—नान्द्यन्ते सूत्रधार इदं प्रयोजितवान्, इतः प्रभृति मया नाटकमुपादीयत इति कवेरभिप्रायः सूचित इति।

---

## विवृतिः

एतत् सूत्रधारादिक्रियमाणं मङ्गलम्। 'कस्यचित्' इत्यनेनास्वरसः सूचितः। तर्हि तस्य किं नामेत्यत आह—वस्तुतस्त्विति। रङ्गद्वाराभिधानं रङ्गद्वारनामकम्। 'अन्ये' इति बहुसंमतत्वेनात्र स्वस्यापि स्वरसः सूचितः। अत्र मुनेरपि स्वरसमाह—यदुक्तमिति। अत्र सूत्रधारक्रियमाणे मङ्गले प्राथम्यात् आरम्भं विधाय अवतार्यते क्रियते। रङ्गस्य रङ्गक्रियमाणाभिनयस्य द्वारमारम्भः। तस्य नान्दीत्वे मुनेरस्वरसमाह—उक्तप्रकारायाश्चेति। चशब्दो हेतौ। महर्षिणा भरतेन। निर्देशो नियमः। तथा च रङ्गद्वारात्पूर्वमेव नान्दी, सा निर्विघ्नं ग्रन्थसमाप्तये कविनापि क्रियत इति भावः। अव्याप्तिमप्याह—कालिदासादिमहाकवि प्रबन्धेषु चेति। नान्दीलक्षणायोगाच्चेति चकारस्यान्वयः। वेदान्तेष्विति। एकपुरुषमद्वितायं ब्रह्म। रोदसी द्यावापृथिव्यौ। अनन्यविषयस्तन्मात्रप्रतिपादकः। यथार्थक्षरो योगार्थः। अन्तर्मनसि नियमिताः प्राणाः प्राणायामः। आदिना ध्यानधारणादेर्ग्रहणम्। मृग्यते ज्ञायते। नान्दीलक्षणायोगादिति। अष्टपदत्वद्वादशपदत्वान्यतराभावादित्यर्थः। तथा च 'वेदान्तेषु—' इत्यादि रङ्गद्वारमेव, न नान्दीति। तत्र नान्दीलक्षणागमने दोषो नास्तीतिः भावः। ननु नान्द्याः कविकरणपक्षे नटकर्मत्वाभावात्कथं नाटकारम्भत्वमत आह—उक्तं चेति। 'महर्षिणा' इति पूर्वेणान्वयः। एतदनुकूलमाह—अत एवेति। तथा च यत्र नान्द्यस्ति, रङ्गद्वारं नास्ति, तत्र तन्त्रेण सैव रङ्गद्वारम्। यत्र रङ्गद्वारमेवास्ति, न नान्दी, तत्र सा फलबलानुमेया॥

यत्र त्वारम्भे बहवः श्लोकास्तत्र श्लोकद्वयं नान्दी । अपरे रङ्गद्वारमित्यवधेयम् । नान्द्यनन्तरं कर्तव्यमाह—पूर्वरङ्गमिति । काव्यं काव्यार्थम् ।

## विज्ञप्रिया

रङ्गद्वारस्याऽङ्गदर्शिकां कारिकां दर्शयति—यस्मादभिनयो ह्यत्रेति । प्राथम्यादित्याशीर्वचनतोऽपि प्राथम्यादित्यर्थः । वागङ्गेति । वागभिनयात्मकमङ्गाभिनयात्मकमित्यर्थः । अत्र प्राथम्यादित्यनेन पूर्वरङ्गाङ्गत्वं रङ्गद्वारस्य दर्शितम् । नतु नान्द्या इति भावः । तस्याः पूर्वरङ्गानङ्गत्वे महर्षेस्तथात्वाप्रदर्शनमपि साधकमित्याह । उक्तप्रकारया इति । द्वादशपदाष्टपदप्रकाराया इत्यर्थः । महर्षिणानान्दीमात्रस्यैवानिर्दिष्टत्वात् । उक्त काराया अपि तस्या अनिर्देशः नटैरेवेति । नाटयेऽवश्यं नान्दी कर्त्तव्या इति महर्षिभिन्नानां मतानुसारिभिर्नटैरेवेत्यर्थः । नतु महर्षिमतानुसारिभिरित्यर्थः । महर्षिणा तदनिर्देशात्तदाह—न महर्षिणेति । महर्षिणा तदनिर्देशे तस्या द्वादशपदत्वादिविशेषणव्यभिचारे हेतुरित्याह—कालिदासादीति ।

वेदान्तेषु इति । स स्थाणुर्महेशो वा युष्माकं श्रेयसेऽस्तु इति अन्वयः । एकपुरुषं प्रधानं पुरुषम् । रोदसी द्यावापृथिव्यौ । अभिन्नविषयोऽन्यत्राप्रवृत्तिः । अनर्न्तयविषय इति क्वचित् पाठः । अक्षरमत्र पदम् । वर्णस्यार्थाभावेन यथार्थाभावात् । अर्थश्च ईश ऐश्वर्य्ये इति कर्तृविहितवरप्रत्ययान्तः धात्वर्थः । प्राणादयः प्राणापानादयः पञ्चवायव इत्यर्थः । अन्तर्नियमितोक्तौ मुमुक्षुभिर्यो मृग्यते ध्यायते । नान्दीलक्षणेति । द्वादशत्वाष्टपदत्वाभावेन तल्लक्षणाभावादित्यर्थः ।

तथा च रङ्गद्वारमेव नान्दी । सैवावश्यं कर्तव्येति दर्शयति—उक्तञ्चेति । उक्तमत्र महर्षिणेति बोध्यम् । अत एव तत्र रङ्गद्वाररूपैव नान्दी महर्षेरभिमता । तस्या एवादौ सूत्रधारेण कर्तव्यत्वादेवेत्यर्थः । अत्र च नान्द्यन्ते रङ्गद्वाररूपनान्द्यन्त इत्यर्थः । यच्च पश्चादिति । वेदान्तेषु इत्यादिश्लोकस्य पश्चादित्यर्थः । नान्द्यन्ते रङ्गद्वाररूपनान्द्यन्ते सूत्रधार इदं वेदान्तेषु इत्यादि प्रयोजितवान् । इतः परं मया कविना नाटकमुपादीयते । इत्येवं कवेरभिप्रायो नान्द्यन्त इत्यादिना कविनैव सूचित इत्यर्थः ।

## लोचन

एतदिति । एतन्नाटकादेः प्रथमं पादम् । कस्यचित् कोलाहलादेः । नटैरेव नर्त्तकैरेव काव्यत्वान्तः पातित्वाभावात् इत्यर्थः ।

वेदान्तेति । यथार्थाक्षर ईश्वरशब्द ईशिधातोः सिद्धत्वादैश्वर्य्ययोगरूढरूपोऽर्थस्तस्मिन् एव तात्त्विक इत्यर्थः ।

नान्दीलक्षणं समनन्तरोक्तप्रकारम् । यच्च पश्चादिति । वेदान्तेषु इत्यादि पदानन्तरं ततः श्लोकात् ।

पूर्वरङ्ग इति । एवं प्रत्याहारमारभ्य कविकर्त्तव्यरूपरङ्गद्वारपर्य्यन्ताङ्गमध्यम् इति शेषः ।

## कुसुमप्रतिमा

यस्मादिति । यस्मात्, अत्र रङ्गालये प्राथम्यात् हि प्रथमत्व पुरस्कृत्यैव प्रथमरूप एवेत्यर्थः अभिनयः अवतार्य्यते नटैः प्रदश्यते । इति रङ्गद्वारसंज्ञां प्रति हेतुरुक्तः । अतः वाचा देवादीनां स्तुल्यादिरूपवाक्यं न अङ्गे

करशिरः संयोगादिरूपाभिरङ्गभङ्गिभिश्च यः अभिनयः, स एव, आत्मा स्वरूप यस्य तत्तादृशं रङ्गद्वारं ज्ञेयम्। अती नाट्याचार्य्ये ण महर्षिणां भरतेनैव रङ्गाराङ्गीकारादस्मन्मतमार्षमेवेति भावः।

"आशीर्वचनसंयुक्ता" इत्याद्युक्तलक्षणायां नान्द्यां नाट्याचार्य्यस्य भरतस्यापि न सम्मतिरिति दर्शयितुमाह उक्तेति। रङ्गद्वारात् उक्तंप्रकारपूर्वरङ्गाङ्गात्। महर्षिणा भरतेन। निर्द्देशः कर्त्तव्यतया आदेशः। अलङ्कारशास्त्रकृतां कविकर्त्तव्यतोपदेशस्यैव उद्देश्यत्वादिति भावः।

ननु तथापि "आशी र्वचनसंयुक्ता" इत्याद्युक्तरूपनान्दीलक्षणे को दोष इत्याह कालिदासादीति। एवमादिषु नान्दीलक्षणायोगादिति परेणान्वयः। महाकविपदेन तेषां प्रबन्धमात्रस्यैव महाप्रामाणिकत्वेन अलक्ष्यत्वाभिधानमसम्भवमिति सूचितम्।

वेदान्तेष्विति। कालिदासप्रणीतविक्रमोर्व शीत्रोटकस्य प्रथमश्लोकोऽयम्। वेदान्तेषु उपनिषत्सु रोदसौ स्वर्गमत्यौ व्याप्य स्थितं यम् एकपुरुषम् अद्वितीयं पुरुषम् आहुः, वेदान्तज्ञा इति शेषः। 'सर्वं खल्विदं ब्रह्म' 'एकमेवाद्वितीयम्' इत्यादिश्रुतेः। यस्मिन् ईश्वर इति अनन्यविषयः अनन्ववाचकः, शब्दः, यथार्थानि सर्वेषामेव ईशनशीलत्वात् यौगिकानि अक्षराणि वर्णा यस्य तादृशी वाचकतया वर्त्तत इति शेषः। नियमिताः प्राणायामप्रकारेण परिचालिताः प्राणादयः पञ्च वायवी येस्तादृशैः, मुमुक्षुभिर्जनैः वश्चन्तन्तःकरणेन मृग्यते अन्विष्यते। स्थिरया भक्त्या योगेन च सुलभः, स स्थापनहादेवः, वो युष्माकं निःश्रेयसाय मोचाय अस्तु।

एवमिति। आदिशब्दात् भवभूतिप्रमृतिप्रणीतमालतीमाधवादिषु केषुचित् पुस्तकेषु लिखितश्लोकचतुष्टयात्मकमङ्गलाचरणादीनां ग्रहणम्। नान्दीलक्षणस्य अयोगादव्याप्ते रित्यर्थः। "एतत् पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गमित्युच्यते" इति पूर्वोक्तमेवास्य हेतोः साध्यमिति बोध्यम्।

ननु वेदान्तेषु इत्यादीनां पूर्वरङ्गस्य रङ्गाद्वाराभिधानङ्गत्वे तस्य रङ्गविघ्नशान्तये कुशीलवैरेव कर्त्तव्यतया कथं कविना करणमित्याह उक्तञ्चेति। तथा च कविः स्वरचनाविघ्नशान्तये तस्य रङ्गद्वारात्मकं मङ्गलमाचरति; कुशीलवास्तु स्वाभिनयविघ्नशान्तये तदेव पठन्तीति न किञ्चिदसमाञ्जस्यमिति भावः।

अत इति। अतएव "वेदान्तेषु" इत्यादीनां कविलर्त्तव्यरङ्ग्यारत्वादेव; अथया "वेदान्तेषु" इत्यादीनां नान्दोत्वामावादेव। पश्चात् "वेदान्तरेषु" इत्यादीनां लिखनात् परम्। अयमभिप्रायः परवर्त्तिलेखकस्येति शेषः। नान्द्याः कविना अलिखिताया एव कस्याश्चिन्नान्द्याः न्ते पाठावसाने। इदं "वेदान्तेषु" इत्यादिरूपं—रङ्गद्वारम्। इतः प्रभृति वेदान्ते ष्वित्यादि, मया कविना, नाटकम् उपादीयते गृह्यते रचयितुमारभ्यत इत्यत्यर्थः। इति इत्यथम्। सूचित इति। वेदान्तेष्वित्यादिलिखन्नानन्तरं "नान्द्यन्ते सूत्रधारः" इति लिखित्वा परवर्त्तिलेखकेनेति शेषः। इत्थं व्याख्यानेनैव अभिप्रायशब्दस्य द्विरुक्तिः प्रयोर्जितवानीत्यतीतनिर्द्देशश्च सङ्गच्छत इति द्रष्टव्यम्।

अत्रेदमवधेयम्—कविकर्त्तव्यतोपदेशस्यैवालङ्कारिकाणामुद्देश्यत्वात् नान्द्याश्च कविकर्त्तकंप्रणयननियमाभावात् दर्पत्तणकृता स्वयं नान्दीलक्षणमुपेक्षितम्, "आशीर्व चनसंयुक्ता" इत्यादिकन्तु परमतानुसारेणोक्तम्। तेन यत्र "या सृष्टिः स्रष्टु राद्या" इत्यादौ नान्दीत्वस्य रङ्गद्वारत्वस्य च सम्भवः, तत्र तेनैकेनैव तयोरुभयोरपि निर्वाहः; यत्र च "वेदान्तेषु" इत्यादौ नान्दीत्वासम्भवस्तत्र तु तस्य रङ्गद्वारत्वमेव; सूत्रधारस्यावश्यकर्त्तव्यतवर नान्दीपाठस्तु तत्रानुमेय इति।

## विमला

अत्र मुनेरपि स्वरसमाह, यस्मादिति ।—यस्मात्—यतः, अत्र—सूचधारक्रियमाणे मङ्गले, प्राथम्यात्—आरम्भं विधाय, अभिनयः,—नाट्यव्यापारः, अवतार्य्यते—क्रियते इत्यर्थः, अतः वाक् च अङ्गश्च तयोरभिनयात्मकं (क्रियमाणं मङ्गलं) रङ्गद्वारं ज्ञेयम् ।

तस्य नान्दोत्वे मुनेरस्वरसतामाह, उक्तेति ।—उक्तप्रकारायाः,—आशीर्वचनमंयुक्तेतिलक्षणोक्तरूपायाः, चशब्दा हेतौ, महर्षिणा—भरतेन, निर्देशः,—नियमः । ग्रन्थारम्भात् सा नान्दी निर्विघ्नं ग्रन्थसमाप्तये कविनाऽपि क्रियंते इति भावः ।

वेदान्तेष्विति ।—वेदान्तेषु—उपनिषत्सु, यं—स्थाणुमिति भावः, रोदसी—द्याव्यापृथिवी, व्याप्य स्थितम्, एकम्—अद्वितीयं, पुरुषं—ब्रह्म, आहुः,—कथयन्ति, बुधा इति शेषः, यस्मिन्—स्थाणौ, अनन्यविषयः,—तन्मात्रप्रतिपादकः, ईश्वर इति शब्दः, यथार्थाक्षरः,—यथार्थानि—व्युत्पत्त्यनुकूलानि इत्यर्थः, अक्षराणियस्य तादृशः, योगार्थनिरूढ़ इत्यर्थः, यश्च स्थाणु, नियमिताः,—संयमिताः, प्राणादयः,—शरीरस्थाः पञ्च वायवः यैः तादृशैः, प्राणायामादिपरैरित्यर्थः, मुमुक्षुभिः,—भोक्तुमिच्छुभिः, योगिभिः इत्यर्थः, अन्तः,—अन्तःकरणमध्ये, मृग्यते—अन्विष्यते, चिन्त्यते इति यावत्, स्थिरा—निश्चला या भक्तिः तस्याः योगेन [व्यासवाक्ये त्वस्मिन् भक्तिशब्दे परेपुंवद्भावस्य विशदविधिनिषेधौ अस्मत्कृताभिज्ञानशकुन्तलध्याख्याने २१ केचित्] सुलभः,—सुदृढ़भक्तिमात्रलभ्य इत्यर्थः, सः स्थाणुः,—शिवः, वः,—युष्माकं, निःश्रेयसाय—मङ्गलाय, यद्वा कैवल्याय, ("निःश्रेयसन्तु कल्याणमोक्षयोः" इत्यमरः) अस्तु—निःश्रेयसदायी भवतु इत्यर्थः । विक्रमोर्वश्यां नान्दौरूपेण निबद्धोऽयं श्लोकः । शार्दूलविक्रीडितं वृत्तम् ।

## लक्ष्मी

उक्तार्थे प्राचां सम्मतिं दर्शयति—यदुक्तमिति । यस्मादभिनय इति । यस्मात् अत्र रङ्गशालायां प्राथम्यात्, आशीर्वचनतोऽपि प्राथम्यादित्यर्थः । आरम्भं विधायाभिनयः अवतार्यते नटः प्रदर्श्यते । अनेन रङ्गद्वाराभिहितत्वे हेतुः, प्रदर्शितः अतो वाचा देवादीनां स्तुव्यादिरूपवचनेन अङ्गः करशिरः संयोगादिरूपादिरूपाभिरवयवचेष्टाभिश्च यः अभिनयः स एवात्मा स्वरूपं यस्य तत्तथोक्तं रङ्गस्य रङ्गक्रियमाणस्याभिनयस्य द्वारमारम्भः पूर्वरङ्गाङ्गत्वं रङ्गद्वारस्य न तु नान्द्या इत्यर्थः । एवञ्च नाट्याचार्येण मुनिना भरतेनैव रङ्गद्वाराभ्युपगमान्ममतमेव समीचीनमिति भावः ।

नान्द्याः पूर्वरङ्गानङ्गत्वे महर्षेस्तथात्वाप्रदर्शनमपि साधकमिति दर्शयति—उक्तप्रकाराया इति । रङ्गद्वारात् उक्तप्रकारकपूर्वरङ्गाङ्गात् नटैरेव नर्त्तकैरेव काव्यत्वान्तःपातित्वाभावादित्यर्थः । महर्षिणा भरतेन निर्देशः कृतो निर्देशविधेयतया निर्दिष्टः आदेश इत्यर्थः । 'नान्दी शुष्कावकृष्टा च रङ्गद्वारं—तथैव च 'इत्यादिना पूर्वरङ्गाङ्गभूतरङ्गद्वारात्पूर्वमेव नान्द्या उद्देशः कृतः । तथा च रङ्गद्वारात्पुर्वमेव सा नान्दी निर्विघ्नं ग्रन्थसमाप्तये कविना क्रियते इति भावः । एवं च 'महर्षिणा नान्दीमात्रस्यैवानिर्दिष्टत्वात्' इत्यादिकेषाञ्चिदुक्तिरनादरणीयैव । द्वादशपदत्वादिविशेषणयुक्तायास्तस्या व्यभिचारं दर्शयितुमुत्थापयति—कालिदासादीति । एवमादिषु नान्दीलक्षणायोगाच्चेति चकारस्यान्वयः । न च तेषामलक्ष्यत्वमेवाभिधातुं शक्यते, महाकविपदेन तेषां प्रबन्धमात्रस्यैव महाप्रामाणिकत्वाभ्युपगमात् ।

वेदान्तेष्विति। कालिदासरचितविक्रमोर्वश्यां पद्यमिदम्। वेदान्तेषु उपनिषत्सु रोदसी द्यावापृथिव्यौ 'भूद्यावौ रोदस्यौ रोदसी च ते' इत्यमरः, व्याप्य स्थितं विद्यमानं यम् एकपुरुषम् 'सर्व खल्विदं ब्रह्म' 'नेह नानाऽस्ति किञ्चन' 'एकमेवाद्वितीयं ब्रह्म' इत्यादिश्रुतिप्रतिपादितमद्वितीयं ब्रह्म आहुः वेदान्तिन इति शेषः। यस्मिन् ईश्वर इति अनन्यविषयस्तन्मात्रप्रतिपादकः शब्दः यथार्थाक्षरः ईश्वरशब्दः 'ईश ऐश्वर्ये' इत्यस्माद्धातोः 'स्थेशभासपिसकसो वरच्' इति पा. सूत्रेण वररुचिकृते सिद्धत्वात् सर्वेषामेव ईशानशीलत्वात् ऐश्वर्ययोगरूपोऽर्थस्तस्मिन्नेव तात्त्विक इत्यर्थः। अन्तर्मनसि नियमिताः प्राणायामविधानेन परिचालिताः प्राणादयः प्राणापानादयः पञ्चवायवो यैस्तथोक्तैः, मुमुक्षुभिः मुक्तिमिच्छुभिर्जनैः यश्च मृग्यते अन्विष्यते, स्थिरया दृढया भक्त्या योगेन च सुलभः, स स्थाणुर्महेश्वरः वो युष्माकं निःनिश्चितं श्रेयो यस्मिन् तस्मै मोक्षायेत्यर्थः 'निःश्रेयसं तु कल्याणमोक्षयोः शङ्करे पुमान्' इति मेदिनी, अस्तु भवतु। शाददूर्लविक्रीडितं छन्दः।

एवमादिष्विति। आदिपदात् भवभूतिप्रभृतिरचितमालतीमाधवादिषु नान्दीलक्षणायोगात् द्वादशपदत्वाष्टपदत्वान्यतराभावेन तल्लक्षणाभावादव्याप्तेरित्यर्थः। तथा च 'वेदान्तेषु' इत्यादिरङ्गद्वारमेव, न नान्दीति, तत्र नान्दीलक्षणागमने न क्षतिरिति भावः। ननु नान्द्याः कविकरणपक्षे पूर्वरङ्गस्य रङ्गद्वाराभिधानाङ्गत्वे तस्य रङ्गविघ्नोपशान्तये नटकर्मत्वाभावात् कथं नाटकारम्भत्वमित्यत आह—उक्तं चेति। 'महर्षिणा' इति पूर्वेणान्वयः। एवञ्च कविः स्वरचनोपद्रवनिर्विघ्नाय नाटकस्य रङ्गद्वारात्मकं मङ्गलं विधत्ते, नटास्तु स्वाभिनयनिरुपद्रवाय तदेव पठन्तीति नाटकारम्भत्वे तस्या न काचिदनुपपत्तिरिति भावः। तथा च रङ्गद्वाररूपैव नान्दी महर्षेरभिमतेति बोध्यम्। अत एवेति। 'वेदान्तेषु' इत्यादौ कविकर्तव्यरङ्गद्वारत्वाभ्युपगमादेव, यद्वा उक्तस्थले नान्दीत्वाभावादेवेत्यर्थः। नान्द्यन्ते रङ्गद्वाररूपनान्द्यन्त इत्यर्थः। यच्च पश्चादिति। 'वेदान्तेषु' इत्यादिश्लोकस्य पश्चादित्यर्थः। अयमभिप्रायः परिवर्त्तिलेखकस्येति शेषः। नान्द्यन्ते रङ्गद्वाररूपनान्द्यन्ते सूत्रधारं इदं 'वेदान्तेषु' इत्यादिरूपम्। इतः प्रभृति'वेदान्तेषु' इत्यादि, मया नाटकम् उपादीयते गृह्यते विरचितुं प्रारभ्यत इत्यर्थः, इत्येवं सूचितः नान्द्यन्त इत्यादिना कविनैव द्योतित इत्यर्थः। तथा च यत्र नान्द्यस्ति रङ्गद्वारं नास्ति तत्र तन्त्रेण सैव रङ्गद्वारम्, यत्र रङ्गद्वारमेवास्ति न नान्दी तत्र सा फलबलादनुमेया। यथा—'वेदान्तेषु' इत्यादौ सूत्रधास्यावश्यकर्तव्यत्वेन नान्दीपाठस्तत्रानुमेयः, यत्र त्वारम्भे बहवः श्लोकास्तत्र श्लोकद्वयं नान्दी अपरे रङ्गद्वारमिति वागीशादयः। काव्येन्दुप्रकाशे तु—

**'नीली शुद्धेति भेदेन सा नान्दी द्विविधा भवेत्।**
**उपादानं वर्णनं वा भवेद्यत्रेन्दुसूर्ययोः।**
**सा नीली स्यात्तदन्या तु शुद्धेति परिगीयते॥'**

इति तद्भेदः प्रदर्शितः। तत्र पुष्पवदुपादानेन 'या सृष्टिः स्रष्टुराद्या' इति नीली। तद्वर्णनेन 'निष्प्रत्यूहम्' इत्यपि नीली। 'वेदान्तेषु' यमाहुरि'ति शुद्धेति ज्ञेयम्। अत्रेदं बोध्यम्—यथा 'आशीर्वचनयुक्ता' इत्यादिकं परमतानुसारेण नान्द्या लक्षणमभिधाय स्वयं तल्लक्षणमुपेक्षितम्, तत्र बीजन्तु कविकर्त्तव्यतोपदेशस्यैवालङ्कारिकाणामुद्देश्यत्वात् नान्द्याश्च कविकर्त्तकरचनायां नियमाभावादिति।

पूर्वरङ्गानन्तरं कर्तव्यमाह—पूर्वरङ्गमिति। सूत्रं धरतीति सूत्रधारः।

**'नाट्योपकरणादीनि सूत्रमित्यभिधीयते।**
**सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते॥'**

इत्युक्त्या सूत्रं प्रयोगानुष्ठानं धारयतीति सूत्रधारः। अन्यच्च—

**'नाटकीयकथासूत्रं प्रथमं येन सूच्यते।**

**रङ्गभूमि समाक्रम्य सूत्रधारः स उच्यते॥'** इति।

मातृगुप्ताचार्यस्तु लक्षणमेतस्येत्थमाह—

'चतुरातोद्यनिष्णातोऽनेकभूषासमावृतः। नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित्॥

**नानागतिप्रचारज्ञो रसभावविशारदः।**

**नाट्यप्रयोगनिपुणो नानाशिल्पकलान्वितः॥**

**छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः।**

**तत्तद्गीतानुबलयकलातालावधारणः॥**

**अवधाय प्रयोक्ता च योक्तृणामुपदेशकः।**

**एवं गुणगणोपेतः सूत्रधारोऽभिधीयते॥'** इति।

## रुचिरा

ननु रत्नावलीमालविकाग्निमित्रादौ इतोऽधिकपदा न्यूनपदा च नान्द्युपलभ्यते तत् कथमयं नियमः सङ्गच्छते इत्याशङ्क्य व्यवस्थां दर्शयति—एषेत्यादिना।

**एषा** "निष्प्रत्यूहमुपास्महे" इत्यादिनोदाहृतेत्यर्थः। 'एत' दिति पाठान्तरे तु "निष्प्रत्यूहमुपास्महे" इत्यादिपठनमित्यर्थः। **नान्दी। इति। कस्यचित्** नाट्यप्रदीपकाराद्यन्यतमस्येत्यर्थः। **मतानुसारेण** सिद्धान्तानुसारेण। **उक्तम्। वस्तुतस्तु। पूर्वरङ्गस्य। रङ्गद्वाराभिधानं** रङ्गद्वारं नाम। **अङ्गमवयवः।** अयम्भावः—"निष्प्रत्यूह मुपास्महे" इत्यादौ नान्दीलक्षणं सङ्गच्छते इत्येषैव नान्दीति न सर्ववादिसम्मतं मतम्, पूर्वरङ्गस्य रङ्गद्वारनाम्नोऽङ्गस्यात्र वस्तुतया सद्भावात्। अत एव—"एकैश्वर्य्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः, कान्तासम्मिश्रदेहोऽप्यविषयउदितो यः परस्ताद् यतीनाम्। अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः॥" इत्यादौ अष्टपदाद्वादशपदान्यतमायाः नान्द्या लक्षणासद्भावेऽपि न क्षतिः इति। इत्यन्ये, (इत्युच्यते) इति पाठाधिक्यं तु चिन्त्यम्।

तदेव प्राचां संवादेन सिद्धान्तयति—**यदित्यादिना। यत्** यतः। **उक्तम्।** किमित्याह—**"यस्मात्** 'कारणादि' ति शेषः। **अत्रास्मिन्नाटके** इति यावत्। 'सूत्रधारेण क्रियमाणे मङ्गले'इत्यन्ये। **प्राथम्यात्** प्रथमत इत्यर्थः। **अभिनयः। अवतार्य्यते** विधीयते। **अतः** तस्मात्। **वागङ्गाभिनयात्मकं** वागङ्गाभ्यां निष्पाद्योऽभिनय इति, स आत्मा स्वरूपं यस्य तथोक्तम्। मयूरव्यंसकादित्वान्मध्यमपदलोपः। **रङ्गद्वारं** रङ्गारम्भः। **ज्ञेयम्॥" इति।**

ननु किमर्थं दर्शितं नान्दीलक्षणमित्याशङ्क्याह—**उक्तेत्यादिना।**

**उक्तप्रकारायाः। च। नान्द्याः रङ्गद्वारात्** रङ्गारम्भात्। **प्रथमम्। नटैः** 'सूत्रधारादिभिः' इति शेषः। **एव कर्त्तव्यतया। महर्षिणा** भरताचार्य्येणेत्यर्थः। **निर्देशः। कृतः।** "नान्दी शुष्काऽवकृष्टा च रङ्गद्वारं तथैव च।" इत्यादिनेति शेषः। इदं तत्त्वम्—अष्टपदा द्वादशपदा वा या नान्दी सा तु 'नान्द्युत्तरं शुष्काङ्गं ततः परमवकृष्टाङ्गं, ततोऽप्यनन्तरं रङ्गद्वार' मित्याद्युक्तदिशा पूर्वमेव नटैः क्रियते न तस्याः प्रयोगः प्रत्याय्यते, अत एव रत्नावल्यादौ न

निरूक्ता लक्ष्यते, नान्दीलक्षणानुक्रान्ततया प्रतीयमानत्वं तु अनर्घराघवादौ रङअगद्वाराराङ्गभूतं मङ्गलम्, न पुनर्वस्तुतो नान्दी । इति ।

तदेव स्थूणानिखननन्यायेन द्रढ्यति—**कालिदासादिमहाकविप्रबन्धेषु**। आदिना श्रीहर्षादिग्रहणम्। च—

**"रोदसी** स्वर्गं पृथिवीं चेत्यर्थः। "भूद्यावौ रोदस्यौ रोदसी च ते।" इतयमरः। **व्याप्य। स्थितम्। यम्। वेदान्तेषु** वेदसिद्धान्तेषु। एकपुरुषमद्वितीयमात्मानमिति भावः। आहुः 'तत्त्वज्ञा' इति शेषः। **यस्मिन्। ईश्वर** ईशितुं शीलमस्यास्तीति तथोक्तः। 'स्थेशभासपिसकसो वरच्।' ३/२/१७५ इति वरच्। **इति** एवम्भूतः। यथाऽर्थाक्षरोऽर्थमनतिक्रम्य वर्त्तमानान्यक्षराणि पदघटका वर्णा यस्य तथोक्तः। **शब्दः। अनन्यविषयो** नान्यो विषयो यस्य तादृशः। य एवेश्वर इति भावः। **नियमितप्राणादिभि**र्नियमिता वशीकृताः प्राणादयो यैस्तैस्तथोक्तैः। आदिनेन्द्रियमनोग्रहणम्। **मुमुक्षुभिः** 'संसारकारागारा'दिति शेषः। **यः। च। अन्तरात्मनि**, नतु परत्र। **मृग्यते**ऽन्विष्यते चिन्त्यते इति यावत्। **सः। स्थिरभक्तियोगसुलभः**स्थिरोऽनन्यविषयतया परमां काष्ठां प्राप्त इति वा सुदृढो यो भक्तियोगो भक्तिरेव योग इति तथाभूतः तेन सुलभः। यः केवलं भक्त्या लभ्य इति भावः। **स्थाणु**रविक्रियमाणस्वरूपतया स्थायी शङ्कर इति यावत्। 'स्थो णुः (उ०)।' इतिणुः। **वो** युष्माकम्। **निःश्रेयसाय** कल्याणाय तत्सिद्धये इति यावत्। 'निःश्रेयसं तु कल्याणमोक्षयोः शङ्करे पुमान्।' इति मेदिनी। **अस्तु**। विक्रमोर्वशीयं पद्यमेतत्। अत्र शार्दूलविक्रीडितं वृत्तम् "सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम्।" इति च तल्लक्षणम्॥ २२४॥"

एवमादिषु 'इत्येवमादिषु'इति पाठान्तरम्। **नान्दीलक्षणायोगान्नान्द्या** लक्षणं तस्या योगोऽसम्बन्धस्तस्मात्। **'रङ्गद्वारम्। आरभ्य। कविः। कुर्य्यात्** मङ्गलामाचरेत् इति भावः।' **इत्यादि**।

ननु 'निष्प्रत्यूहमुपास्महे' इत्यादिर्न वस्तुतो नान्दी तत् कथं तत् पुरस्तात् 'नाद्यन्ते' इत्यादिग्रन्थः सङ्गच्छते। इत्यत आह—**अतः। एव। प्राक्तनपुस्तकेषु। 'नान्द्यन्ते। सूत्रधारो** नटेषु मुख्यः।' **इत्यनन्तरम्। एव** नतु ततः पूर्वमित्यर्थः। **"वेदान्तेषु..."इत्यादिश्लोकलेखनम्**। आदिना "निष्प्रत्यूहमुपास्महे" इत्यादीनां ग्रहणम्। 'लिखन'मिति पाठान्तरं तु पाणिनीयाननुगत्वादसाधु। नहि कुटादिष्वेतस्य पाठः। **दृश्यते**। अतः—आपाततो यत्र नान्दीलक्षणं प्रतीयतेऽपि न तत्र नान्दी, किन्तु रङ्गद्वाराङ्गभूतं मङ्गलाचरणमेवेति निष्कृष्टोऽर्थः।

ननु कथं पुनरर्वाचीनां एवें लिखन्ति कथं वा साम्प्रतं तथआ पाठ उपयुज्यते इत्याह—**यत्। च। पश्चात्** 'निष्प्रत्यूहमुपास्महे...' इत्याद्यनन्तरमित्यर्थः **"नान्द्यन्ते। सूत्रधारः।" इति। लेखनम्**। 'दृश्यते'इति शेषः। **तस्य** तथा लेखस्येति भावः। **अयम्। अभिप्रायः। "नान्द्यन्ते। सूत्रधारः** सूत्रं प्रयोगानुष्ठानं धारयति स्वतन्त्रतया सञ्चालयतीति ततोकतः प्रधानभूतो नटः। तथोक्तम्—"नाटयोपकरणादीनि सूत्रमित्यभिधीयते। सूत्रं धारयतीत्यस्मात्सूत्रधारो निगद्यते॥"इति। **इदं** पूर्वरङ्गाङ्गभूतं मङ्गलाचरणमिति भावः। **प्रयोजितवान्।"** इतीति शेषः। **"इतः प्रभृति। मया। नाटकम्। उपादीयते** सम्पाद्यते।"**इति। च** पुनः। **कवेः। अभिप्रायः**। 'सूचित' इति तु पाठाधिक्यमनर्थम्। अत्र तर्कवागीशाः प्राहुः—"तथा च यत्र नान्द्यस्ति, रङ्गद्वारं नास्ति यत्र तन्त्रेण सैव रङ्गद्वारम्। यत्र रङ्गद्वारमेवास्ति, नतु नान्दी; तत्र सा फलानुमेया। यत्र त्वारम्भे बहवः श्लोका स्तत्र श्लोकद्वयं (श्लोकत्रयं वा) नान्दी, अपरे रङ्गद्वारम्; इत्यवधेयम्।" इति। वयं त्वेवं प्रतीमः—नान्दीलक्षणं सम्भवतु, न वा सम्भवतु; "निष्प्रत्यूहमुपास्महे" इत्यादि, "वेदान्तेषु" इत्यादि "पादग्रस्थितया" इत्यादि च सर्वमेव रङ्गद्वारम्। नान्दी तु ततः पूर्वमेवानुष्ठिताऽनुमेयेति।

**पूर्वरङ्गं विधायैव सूत्रधारो निवर्तते।**

**प्रविश्य स्थापकस्तद्वत्काव्यमास्थापयेत्ततः ॥ २६ ॥**

**दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः।**

**सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा ॥ २७ ॥**

काव्यार्थस्य स्थापनात्स्थापकः। तद्वदिति सूत्रधारसदृशगुणाकारः। इदानीं पूर्वरङ्गस्य सम्यक्प्रयोगाभावादेक एव सूत्रधारः सर्वं प्रयोजयतीति व्यवहारः। स स्थापको दिव्यं वस्तु दिव्यो भूत्वा, मर्त्यं मर्त्यो भूत्वा, मिश्रं च दिव्यमर्त्ययोरन्यतरो भूत्वा सूचयेत्। वस्तु इतिवृत्तम्। यथोदात्तराघवे—

**रामो मूर्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरो-**
**स्तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम्।**
**तौ सुग्रीवविभीषणावनुगतौ नीतौ परामुन्नतिं**
**प्रोत्सिक्ता दशकंधरप्रभृतयो ध्वस्ताः समस्ता द्विषः ॥**

---

## विवृतिः

आस्थापयेत् सभापूजादिपुरः सरं सूचयेत्।

मिश्रं दिव्यादिव्यम्। तयोर्दिव्यादिव्ययोः ॥

वस्तुनः प्रथमोद्दिष्टत्वेन प्राधान्यात्तदेवादाय विवृणोति—दिव्यं वस्त्विति ॥ राम इति ॥ गुरोः पितुः। तद्भक्त्या रामभक्त्या। प्रोत्सिक्ता उद्रिक्तदर्पाः। ध्वस्ता विनाशिताः। उत्तरवाक्यद्वये रामेणेति कर्तृपदमूह्यम् ॥

## विज्ञप्रिया

पूर्वरङ्गानन्तरकृत्यमाह—पूर्वरङ्गमिति। स्थापकः सूत्रधारसदृशं नटान्तरम्। तद्वदिति। सूत्रधारवदित्यर्थः। काव्यमत्र नाटकरूपम्।

दिव्यमर्त्येषु इत्यादिकं स्वयमेव व्याख्यास्यति। दिव्यं मत्र्य चेति क्वचित् पाठः।

दिव्यमर्त्येषु इत्यादिकं स्वयमेव व्याख्यास्यति। दिव्यं मर्त्यं चेति क्वचित् पाठः।

वृत्तमिति—वृत्तमभिनेतव्यवृत्तान्तः। रामो मूर्ध्नि इत्यादिना रामो गुरोः पितुराज्ञां मूर्ध्नि निधाय काननमगादित्यन्वयः। तद्भक्त्या रामभक्त्यामात्रा जनन्या। तौ पुराणे श्रुतौ। प्रोत्सिक्ताः उद्धताः। दशकन्धरप्रभृतयः समस्ता द्विषः ध्वस्ताः। तेनेति शेषः। अत्राभिनेतव्यस्य समस्तवस्तुसूचकम्।

## लोचन

मिश्रं दिव्यमत्र्याभ्यामिति, वृत्ताभ्यामित्यर्थः।

प्रोत्सिक्ताः प्रकर्षेण दर्पिष्ठाः ।

## कुसुमप्रतिमा

पूर्वेति । "नाटकीयकथासूत्रं प्रथमं येन सूच्यते । रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते ॥" इत्युक्तलक्षणः प्रधाननटः सूत्रधारः । निवर्त्तते रङ्गालयान्निष्क्रामति । काव्यं तादृश्यकाव्यप्रतिपाद्यविषयम्, आस्थापयेत् सूचयेत् । दिव्यं स्वर्गीयश्च मर्त्य मर्त्य लोकीयश्चेति दिव्यमत्र्ये इति द्वितीयाद्विवचनान्तं पदम् । तथा च स स्थापकः, तदरूपः सन्, दिव्यं वस्तु बीजं मुखं पात्रं वा सूचयेत् मर्त्य-रूपश्च सन् मर्त्ययं वस्त्वादिकं सूचयेत्, तथा तयोर्दिव्यमत्र्ययो-रनन्तरः सन् मिश्रं दिव्यमर्त्योभयरूपं वस्त्वादिकं सूचयेदित्यर्थः ।

स्थापकशब्दस्य यौगिकत्वमाह काव्यस्येति । इतिवृत्तं तदृश्यकाव्यवृत्तान्तः ।

रामं इति । रामो गुरोः पितुराज्ञां मालामिव मूर्द्धि मस्तके निधाय काननं महारण्यमगात् । भरतेन तस्मिन् रामे भक्त्या मात्रा कैकय्या सहैव अखिलं राज्यम् अज्झितं परित्यक्तम् । अनुगतौ तो प्रसिद्धौ सुग्रीवविभीषणौ परामत्यन्तां सम्पदं राज्यलाभरूपां नीतौ प्रापितौ बालिं रावणश्च हत्वा रामेणेति शेषः । तथा प्रोत्सिक्ता दर्पान्धाः दशकन्धरप्रभृतयो रावणादयः समस्ता द्विषः शत्रवः ध्वस्ता रामेणै व विनष्टाः ।

अनेन समस्तमेव नाटकीयमितिवृत्तं स्थापकेन सामान्यतः सूचितम् ।

## विमला

पूर्वरङ्गमिति ।—सूत्रधारः,—सूत्र—प्रयोगानुष्ठानं, धारयति—प्रवर्त्तयः तीति सूत्रधारः । तथोक्तं—"नाट्योपकरणादीनि सूत्रमित्यभिधीयते । सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते ॥" इति । "चतुरातोद्यनि-ष्णातोऽनेकभाषासमन्वितः । नानाभाषणतत्तवज्ञो नीतिशास्त्रार्थतत्त्ववित् ॥ नानागतिप्रचारज्ञो रसभावविशारदः । नाट्यप्रयोगनिपुणो नानाशिल्पबलाऽन्वितः ॥ छन्दोविधानतत्त्वज्ञः । सर्वशास्त्रविचक्षणः । तत्तद्गीताऽनुगलयकला-तालावधारणः ॥ अवधाय प्रयोक्ता च योक्तृणामुपदेशकः । एवं गुणगणोपेतः सूत्रधारोऽभिधीयते ॥" इति । पूर्वरङ्गं विधाय—क्रत्वैव, निवर्त्तते । ततः स्थापकः,—तदाख्यः द्वितीयो नटः, प्रविश्य, रङ्गमिति शेषः, काव्यम् आस्थापर्येत्— प्रकटयेन, सभापूजादिपुरःसरं सूचयेत् इति सरलार्थः । "रूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥" इति अन्यत् स्पष्टम् ।

वस्तु उदाहरति, राम इति ।—रामः मालामिव [एतेन प्रमोदातिशयः सूच्यते] गुरोः,—पितुः ("गुरुर्ना जनके पूज्ये ज्येष्ठे महति तु त्रिषु" इति गोपालः) आज्ञां, मूर्ध्नि—शिरसि, निधाय—गृहीत्वा, काननं—वनं,("काननं गहनं वनम्" इत्यमरः) अगात्; भरतेन तङ्गभक्त्या—तस्मिन् रामे, या भक्तिः,—अनुरागविशेषः, तया; मात्रा—जनन्या, सहैव, अखिलं—समग्रं, राज्यम् उज्झितं—त्यक्तम्; तौ—प्रसिद्धौ, अनुगतौ—आश्रितौ, सुग्रीवविभीषणौ, परां—निरतिशयां, सम्पदं—राज्यमित्यर्थः, नीतौ—प्रापितौ, बालिदशाननवधात् रामेणेति शेषः, प्रोत्सिताः,—अति-गर्विताः, दशकन्धरप्रभृतयः समस्ताः, द्विषः,—शत्रवः, ध्वस्ताः,—विनाशिताः । अत्रापि रामेणेति शेषः । अत्र समस्तं रामायणवृत्तं प्राधान्येन सूचितम् । शार्दूलविक्रीड़ितं वृत्तम् ।

## लक्ष्मी

निवर्त्यते नाट्यशालान्निर्गच्छति। तद्वत् सूत्रधारवदित्यर्थः। काव्यं नाटकरूपम्, आस्थापयेत् सभापूजादिपुरस्सरं सूचयेत्। दिव्यं स्वर्गीयं मर्त्यं मर्त्यलोकीयच्चेति दिव्यमर्त्ये। तथा च सः स्थापकः तद्रूपो दिव्यरूपः सन्, दिव्यं वस्तु, बीजं मुखं पात्रं वा सूचयेत्, मर्त्यरूपो हि मर्त्यलोकीयं वस्तु बीजादिकं सूचयेत्। तथा तयोदिव्यमत्र्ययोरन्यतरः मिश्रं दिव्यं मर्त्यं च वस्तु बीजादिकं सूचयेत्।

स्थापकपदस्य योगलभ्यमर्थं दर्शयति—काव्यार्थस्येति। सूत्रधारसदृशगुणाकार इतति। तथा च भरतः—'स्थापकः प्रविशेत्तत्र सूत्रधारगुणाकृतिः' इति। इतिवृत्तम् अभिनेतव्यवृत्तान्तः।

वस्तुरूपं दर्शयति—राम इति। रामो गुरोः पितुर्दशरथस्येत्यर्थः आज्ञाम् आदेशं मालां स्रगिव मुर्ध्नि शिरसि निधाय काननं महावनम् अगात् गतवान्। भरतेन कैकेयिसूनुना तद्भक्त्या रामभक्त्या मात्रा कैकेय्या सहैव अखिलं समग्रं राज्यम् उज्झितं परित्यक्तम्। अनुं गतौ तौ प्रसिद्धौ पुराणे श्रुतौ सुग्रीवविभीषणौ परामत्यन्तां सम्पदं राज्यप्राप्तिरूपां रामेण बालिं रावणं च मारयित्वेति शेषः। तथा प्रोत्सिक्ता उद्धता दशकन्धरप्रभृतयो दशाननादयः समस्ताः समग्राः द्विषः रिपवो ध्वस्ता रामेणैव विनाशिताः। शार्दूलविक्रीडितं छन्दः।

अनेनाभिनेतध्यसमस्तवस्तुजालस्य स्थापकेन सामान्यतः सूचना कृता।

## रुचिरा

अथ नान्द्या अनन्तरं कत्तव्यं निर्दशति—३१८ **पूर्वरङ्ग**मित्यादिना।

३१८ **पूर्वरङ्गं** निरुक्तलक्षणं कर्म्मविशेषम्। **विधाय। एव सूत्रधारो** नटराजः। **निवर्त्तते** नेपथ्यान्तः प्रविशति। **ततस्त**दन्तरम्। **तद्वत्** सूत्रधारवत् 'कोऽपि नट' इति शेषः। **प्रविश्य** सभायामुपस्थायेत्यर्थः। **स्थापकः** स्थापयति कार्य्यमिति तथोकतः सन्निति भावः। यद्वा—'तद्वत् स्थापकः प्रविश्ये' त्यन्वयो बोद्धव्यः। **काव्यं** दृश्यकाव्यमुपचारात्तदीयं वस्तु इत्यर्थः। **आस्थापयेत्** सभापूजादिपुरःसरं प्रवर्त्तयेत्। कथमित्याह—**सः** स्थापकः सूत्रधारानुकारी नट इत्यर्थः। **दिव्यमत्र्ये** दिव्यं लोकोत्तरं च मत्र्यं लौकिकं चेत्यर्थः। 'वस्तुनी, बीजे, मुखे, पात्रे, चे'ति शेषः। **तद्रूपो** दिव्यरूपो मत्र्यश्चेत्यर्थः। 'सूचये'दिति पुरस्तात्। **तयोर्**दिव्यमर्त्ययोरित्यर्थः। **मिश्रम्। वस्तु** इतिवृत्तम्। **वा। बीजं** कारणविशेषम्। **अथापि। मुखम्। वा। पात्रम्। अन्यतरो** भिन्नो न दिव्यो न वा मत्र्यः, किन्तु तदुभयात्मेति भावः। 'भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि।'इत्यमरः। 'भूत्वे'ति शेषः। **सूचयेत्**॥ ३२३॥ ३२४॥

कारिकाऽर्थं सुगमयति—**काव्यार्थस्येत्**यादिना।

**काव्यार्थस्य** काव्यस्य रूपकस्यार्थः प्रतापादनीयं वस्तु तस्य। **स्थापनात्** स्थापकत्वादिति भावः। **स्थापकः। तद्वत्।** इत्यस्येति शेषः। **सूत्रधारसदृशगुणाकारः** सूत्रधारेण सदृशा गुणाकारा। यस्य तथोक्तः। गुणैराकारेण च सूत्रधारायमाण इत्यर्थः। गुणाश्च यथोक्ताः—"चतुरातोद्यनिष्णातोऽनेकभाषाविचक्षणः। नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित्॥ नानागतिप्रचारज्ञो रसभावविशारदः। नाट्यप्रयोगनिपुणो नानाशिल्पकलाऽन्वितः॥ छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः। तत्तद्गीतानुगलयकलातालावधारणः॥ अवधाय प्रयोक्ता च योक्तृणमुपदेशकः। एवं गुणगणोपेतः सूत्रधारोऽभिधीयते॥" इति मातृगुप्ताचार्य्यैः। ("पूर्वसदृश...।" २/१/३१ इति तृतीयासमासः।) 'इत्यर्थ' इति शेषः। ननु सूत्रधारः सूत्रधारायमाणश्चेति व्यवहारः कथं न तर्हि

साम्प्रतमुपलभ्यते ? इत्याशङ्क्याह—**इदानीमस्मिन्** समये इत्यर्थः। **पूर्वरङ्गस्य** निरुक्तलक्षणस्य कार्य्यस्येत्यर्थः। **सम्यक्** निरुक्तलक्षणानुगततयेति भावः। **प्रयोगाभावात्** प्रयोगाननुष्ठात्। **एकः**। **एव** 'नतु पृथग्भूतोऽपी'ति शेषः। **सूत्रधारः**। **सर्वं** स्वकर्त्तव्यं स्वानुकारिकर्त्तव्यं चेत्यर्थः। **प्रयोजयति**। **इति व्यवहारः**। तत्पदं व्याचष्टे—**सः**। **स्थापकः**। **दिव्यः**। **भूत्वा**। **दिव्यम्**। **वस्तु**। एतद्बीजादीनामुपलक्षणम्। **मर्त्यः**। **भूत्वा**। मर्त्यम्। 'वस्त्वादि' इति शेषः। दिव्यमत्र्ययोः। **अन्यतरः**। **भूत्वा**। **च**। **मिश्रम्** 'वस्त्वादि' इति शेषः। **सूचयेत्**। वस्तुपदं व्याचष्टे-**वस्तु**। **इतिवृत्तम्**।

उदाहरति-**यथा**। **उदात्तराघवे** तदाख्ये नाटके इत्यर्थः। "**रामो मूर्ध्नि...**" इत्यादौ।

"**रामः**। **गुरोः** पितुर्दशरथस्येत्यर्थः। 'गुरुस्त्रिलिङ्ग्यां महति....पित्रादौ सुरमन्त्रिमि ॥' इति मेदिनी। **आज्ञां** "वने चतुर्दसमा निवस, भरतश्च राज्यं प्रशास्तु"इत्यनुज्ञाम्। **मालां** पुष्पादिमालामित्यर्थः। **इव**। **मूर्ध्नि** मस्तके। **निधाय** स्थापयित्वा। **काननं** वनम्। "गहनं काननं वनम्" इत्यमरः। **अगात्** गतवान्। **तद्भक्त्या** तस्य तथा प्रथितयशसो रामस्य ज्येष्ठभ्रातुरित्यर्थः, भक्तिस्तया। **भरतेन** रामानुजेनेत्यर्थः। **मात्रा** कैकय्याख्यया जनन्या। **सह**। **एव**। **अखिलम**प्रतिहतचक्रं समस्तं वेत्यर्थः। **राज्यम्** 'मात्राग्रहात् पित्रा दीयमान' मिति शेषः। **उज्झितं** परित्यक्तम्। प्राप्तमपि न स्वस्वामित्वं तत्राभिमतमिति भावः। **अनुगतौ** शरणागतौ। **तौ** बन्धुबहिष्कृतावित्यर्थः। **सुग्रीवविभीषणौ** (कर्मपदमिदम्)। **पराम्**। **उन्नतिम्**। **नीतौ** प्राप्तौ 'रामेणे'ति शेषः। 'णीञ्' इति द्विकर्म्मको धातुः। **प्रोत्सिक्ता** अत्यन्तं दुर्म्मदाः। **दशकन्धरप्रभृतयो** दश कन्धरा ग्रीवा उपचारान्मस्तकानि यस्य स तथोक्तः, प्रभृतिर्येषां (बाल्यादीनाम्) ते तथोक्ताः। रावणादय इत्यर्थः। **समस्ताः**। **द्विषः** शत्रवः। **ध्वस्ताः** विनाशिताः। 'रामेणे'ति शेषः। शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं च यथा—"शार्दूलविक्रीडितं म्सौ ज्सौ तौ गादित्यऋषयः।" इति ॥ २२५ ॥"

इदम्बोध्यम्—अत्र रामस्य चरितं सर्वमेव प्रायः सङ्क्षेपेण बोधितम्, तथाहि—'मात्रे'त्यनेन कैकेय्या यद्यद्धटितं तेन तस्या दुष्टत्वं भरतस्य च तत्रासम्पर्कित्वम्, 'ध्वस्ताः'इत्यनेन 'उज्झितम्'इत्यनेन च दशाननादिनिहननपूर्वकं पुना राज्यग्रहणादि च। इति दिक्।

बीजं यथा रत्नावल्याम्—

**द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।**
**आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥**

अत्र हि समुद्रे प्रवहणभङ्गमग्नोत्थिताया रत्नावल्या अनुकूलदैवलालितो वत्सराजगृहप्रवेशो यौगंधरायणव्यापारमारभ्य रत्नावलीप्राप्तौ बीजम्।

---

## विज्ञप्रिया

बीजमिति—अभिनेतव्यार्थमूलमङ्कुरः। द्वीपादन्यस्मादिति। दूरस्थेनाऽपि वरेण स्वीयकन्यापरिणयस्य भावित्वेन निजपत्नीमाश्वासयतः स्थापकस्य सूत्रधारस्य च उक्तिरियम्। अन्यद्वीपादितोऽप्यानीयाभिमुखीभूतो विधिर्घटयतीत्यर्थः।

अत्रेति वहनं नौका। वहित्रेति क्वचित् पाठः। गृहप्रवेशो बीजमित्यन्वयः। श्लेषादिनेत्यत्र आदिपदादन्यापदेशपरिग्रहः।

## लोचन

यौगन्धरायणः अमात्यविशेषः।

## कुसुमप्रतिमा

द्वीपादिति। अभिमुखीभूतः प्रसन्नी विधिर्दैवम्, अन्यस्मात् द्वीपादपि जलनिर्धेमध्यादपि अन्तात् शेषभागादपि च अभिमतं वस्तु आनीय झटिति शीघ्रं घटयति संयोजयति।

अत्र बीजसूचनमुपपदायति अत्रेति। हि तथाहि। बहित्रस्य यानस्य भङ्गेन आदौ मया अनन्तरञ्चोत्थिता तस्याः, रत्नावल्यास्ताख्याया रत्नावलीनाटिकानायिकायाः, अनुकूलदैवेन लालितः सङ्घटितः, वत्सराजस्य उदयनस्य, गृहप्रवेश, यौगन्धरायणस्य तदाख्यस्य महामात्यस्य व्यापारं घटनाम्। रत्नावलीप्राप्तौ वत्सराजस्य रत्नावलीलाभं प्रति।

## विमला

द्वीपादिति।—अभिमुखीभूतः,—अनुकूलतां प्राप्तः, विधिः,—दैवं, ("विधिनां नियतौ काले विधाने परमेष्ठिनि" इति मेदिनी) अन्यस्मात्—निजावासभिन्नात्, द्वीपात्—सर्वतो जलवेष्टितभूभागात्, अपि जलनिधेः,—समुद्रस्य, मध्यात्, अपि दिशः अन्तादपि अभिमतम्—अभिलषितं वस्तु, आनीय, झटिति—शीघ्रं, घटयति—सङ्गमयति।

वह्नित्रम्—अर्णवयानन्। अनुकूलदैवलालितः,—अनुकूलदैववशात् सञ्जातः।

श्लेषादिना—शब्दानामनेकार्थकत्वादिना, [अत्रादिपदेन समासोक्त्यप्रस्तुतप्रशंसादेग्रहणम्।]

## लक्ष्मी

बीजम् अभिनेतव्यार्थमूलमङ्कुरः । द्वीपादन्यस्मादिति । दूरस्थेनाऽपि वरेण स्वीयकन्यापरिणयस्य भावित्वेन निजपत्नीमाश्वासयतः स्थापकस्य सूत्रधारस्य चोक्तिरियम् । अभिमुखीभूतः सम्मुखीभूत अनुकूल इति यावत्, विधिर्दैवम् 'दैवं दिष्टं भागधेयं भाग्यं स्त्रीनियतिर्विधिः' इत्यमरः । अन्यस्मात् द्वीपात् द्विर्गता आपो यस्मिन्निति द्वीपं 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इतीदादेशः । इतरस्मादन्तरीपादपि, जलनिधेः जलानि निधीयन्तेऽस्मिन्निति जलनिधिः 'कर्मण्यधिकरणे च' इति सूत्रेण कि प्रत्ययः, तस्य समुद्रस्य मध्यादपि, दिशःअन्ताच्छेषभागादपि च अभिमतम् इष्टं वस्तु आनीय झटिति घटयति शीघ्रं मेलयति । आर्याच्छन्दः । अत्र स्थापकनटो मर्त्यरूपो भूत्वा बीजं सू चयति ।

बीजसूचनं स्वयमेवोपपादयति—अत्रेति । हि तथाहि प्रवहणस्य यानस्य भङ्गेन नाशेन आदौ मग्नाः पश्चाच्चोत्थिता तस्यास्तथोक्तायाः । रत्नावल्यास्तन्नाम्न्याः रत्नावलीनाटिकानायिकायाः, अनुकूलदेवेन, अनुकूलविधिना लालितः संयोजितः, वत्सराजस्योदयनस्य गृहप्रवेशः, अस्य बीजमित्यत्रान्वयः । यौगन्धरायणस्य तन्नामकस्य महासचिवस्य, व्यापारं संयोजनम् । रत्नावलीप्राप्तौ उदयनस्य रत्नावलीप्राप्तिं प्रति ।

## रुचिरा

बीजमुदाहरति—**बीजम्। यथा। रत्नावल्यां** तदाख्यायां नाटिकायाम् ।"**द्वीपात्...**" इत्यादौ ।

"**अभिमुखीभूतो**ऽनुकूलतां प्राप्त इति भावः । **विधिर्दैव**मित्यर्थः । "विधिर्विधाने दैवेऽपि"इत्यमरः । **अन्यस्मात्** स्वसन्निहितद्वीपतो भिन्नादित्यर्थः । **अपि**"किं पुनस्तस्मादेव"इति शेषः । **द्वीपात्**। यथा—जम्बुद्वीपाद्भिन्नः शाककुशकौञ्चशाल्मलिप्लक्षपुष्करान्यतमः, शाकद्वीपात्पुनर्जम्बुकुशाद्यन्यतम इति दिक् । **जलनिधेः** समुद्रस्य । **मध्यात्। अपि** "किं पुनस्तन्निकटात्" इति शेषः । दिशः पूर्वाद्यन्यतमायाः काष्ठाया उपचारात्तदुपलक्षितस्य दविष्ठदेशस्येत्यर्थः । **अन्तात्। अपि**"किम्पुनर्निकटात्" इति शेषः । **आनीय** प्रापय्य । **झटिति** विना विलम्बम् । **अभिमतं** वाञ्छितमर्थमिति भावः । **घटयति** सङ्गमयति । अत्रार्य्याछन्दः "यस्याः प्रथमे पादे द्वादशमात्रास्तथ तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्य्या ॥" इति च तल्लक्षणम् । **इति**।। २२६ ॥"

लक्ष्यं स्फुटयति—**हि** यतः । **अत्रास्मिन्नुदाहृते** "द्वीपादन्यस्मात्" इति पद्ये इति भावः । **समुद्रे। प्रवहण भङ्गमग्नोत्थितायाः** प्रवहणं प्रवाहो जलौघस्य जवात्सञ्चार इति यावत् तस्य भङ्गस्तरङ्गस्तेन मग्नोत्थिता पूर्वं मग्नापश्चादुत्थिता तस्यास्तथोक्तायाः। 'प्रवहणे'त्यसय् स्थाने 'वहित्रे'ति पाठान्तरे तु बहित्रस्य जलयानस्य नौकादेरिति भावः, भङ्गो भेदस्तेन मग्नोत्थिता तस्या इत्यर्थः । "भङ्गस्तरङ्गे भेदे च रुग्विशेषे । पराजये । कौटिल्ये भयविच्छित्त्योः" इति हैमः । **रत्नावल्यास्**तदाख्याया नायिकाया इत्यर्थः । **अनुकूलदैवलालितो**ऽनुकूलं प्रतिकूलतापरित्यागपुरःसरं सहायकतां प्राप्तं यत दैवं भाग्यं तेन लालितोऽनुमोदित इति तथोक्तः । **वत्सराजगृहप्रवेशो** वत्सराजस्य तदाख्यस्योदयनोपनामकस्य गृहं तत्र प्रवेशः । **यौगन्धरायणव्यापारं** यौगन्धरायणस्य सूत्रधारस्य कनीयसा भ्रात्रा गृहीतनेपथ्यविशेषस्य तथा कल्पितनाम्नः कस्यचिद्रत्नावल्या वृत्तान्ताभिज्ञस्य व्यापारो यत्नस्तम् । **आरभ्य। रत्नावलीप्राप्तौ। बीजम्**। 'सूचित'मिति शेषः । अयम्भावः—रत्नावल्यां हि एवं दृश्यते—नट्या—स्वदुहितुर्दूरस्थितेन नायकेन कतं पाणिग्रहणं भविष्यतीत्युद्वेगावेदनानन्तरं सूत्रधारेण"द्वीपादन्यस्मा"दित्यादिनाऽऽश्वासनम् । अनन्तरं पुनः "नेपथ्ये । साधु एवमेतत् कः सन्देहः" इत्यनुमोदनं तदनु यौगन्धरायणस्य प्रवेशः । तेन च तदनुमोदनपुरः सरं रत्नवल्याः प्राप्तौ विध्यनुकूलताया बीजत्वमुद्घोषितम् । तथा च—तत्प्रभृति यद्यदनुष्ठितं तत्सर्वं तद्बीजाङ्कुरभूतमिति विदितं विदुषाम् । इति ।

मुखं श्लेषादिना प्रस्तुतवृत्तान्तप्रतिपादको वाग्विशेषः । यथा—

आसादितप्रकटनिर्मलचन्द्रहासः
**प्राप्तः शरत्समय एष विशुद्धकान्तिः ।**
**उत्खाय गाढतमसं घनकालमुग्रं**
**रामो दशास्यमिव संभृतबन्धुजीवः ॥**

पात्रं यथा शाकुन्तले—

**तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।**
**एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥**
**रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।**
**रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्तयेत् ॥ २८ ॥**

---

## विवृतिः

स्लेषादिनेत्यादिपदेन समासोक्त्यप्रस्तुतप्रशंसादेर्ग्रहणम् ॥ आसादितेति चन्द्रहासश्चन्द्रप्रकाशः, खड्गश्च । कान्तिर्नक्षत्रादिज्योतिः, शोभा च । उत्खाय हत्वा । तमो ध्वान्तम्, अज्ञानं च । घनकालं वर्षासमयम् । संभृताः पुष्पपूर्णा बन्धुजीवा बन्धूका यत्र । पक्षे—संभृतो बन्धुषु समरसुहृद्धतवानरेषु जीवो येन । अत्र नायकनामसूचनात्पात्रसूचनमपि संभवति । अस्य पात्रासंकीर्णोदाहरणं यथानर्घराघवे—'यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् । अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥' अत्र वानराणां रामसाहाय्यम्, विभीषणेन रावणत्यागश्च श्लेषेण सूचितः ॥ सारङ्गेण हरिणेन ॥

## विवृतिपूर्तिः

विशुद्धेति । 'विशुद्धकान्तः' इति पाठो रमणीयः । तथाहि—विशुद्धो निर्मलः कान्त उदकान्तो यत्र तादृक् । शरदि अगस्त्योदयेन जलाशयाः प्रसाद्यन्त इति भावः । रामपक्षे—वह्निप्रवेशेन विशुद्धा कान्ता जानकी यस्येति ॥

उग्रमिति । रावणपक्षे—उग्रः शिव उपास्यत्वेन यस्यास्तीति उग्रः । मत्वर्थीयोऽच् । तम् ॥

तवास्मीति । अस्मीत्यहमर्थकमव्ययम् ॥

## विज्ञप्रिया

तत्र श्लेषेणाह । आसादितेति—गाढतमसमतिशयान्धकारमुग्रं घनकालं प्रावृट्कालम् उत्खाय उन्मील्य शरत्समय एष प्राप्त आगतः । रामो दशास्यमिव दशास्योऽपि गाढतमो गाढमोह उग्रश्च । शरत्समयरामयोर्विशेषणान्याह—आसादितेत्यादीनि—शरत्पक्षे प्रकटो व्यक्तीभूतो निर्मलचन्द्र एव हासः । आसादितेति । रामपक्षे चन्द्रहासः खड्गः—रावणावधार्थं काले एव तदासादनं बोध्यम् । शरत्पक्षे विशुद्धश्चासौ कान्तः कमनीयश्चेति

विग्रहः । रामपक्षे वह्नौ विशुद्धा कान्ता पत्नी यस्य तादृशः । शरत्पक्षे संभृतं जनितं बन्धुजीवकुसुमं येन तादृशः, रामपक्षे सम्भृतो जनितो बन्धूनां रणपतितवानराणां जीवोऽमृतवृष्टया येन तादृशः । अत्र चन्द्रहासादिपदश्लेषवान् वाग्विशेषः । आदिपदग्राह्योऽन्यापदेशस्तु नोदाहृतः । तच्च मम तारावतीचन्द्रशेखरनाटके यथा—

**'उद्यते शशिनि पूर्वभूधरं राजितं कल्पचन्द्रशेखरम् ।**

**एष यास्यति शशी महार्णवं तातपादमिव वन्दनमिच्छुः ॥"**

अत्र हि चन्द्रस्य तातमहार्णवगमनान्यापदेशेन प्रस्तुतवस्तुनश्चन्द्रशेखरनृपस्य वने तपः प्रसक्तस्य तातपादवन्दनार्थगमनसूचकम् । एवमन्यत्राप्यनुसन्धेयम् ।

तवास्मीति—तव नट्याः । प्रसभं बलात् । हारिणा मनोहारिणा । एष पुराणेषु श्रुतः । अत्र पात्रं राजा ।

## लोचन

आसादितेति—चन्द्रहासः प्रभाखड्गश्च । कस्य जलस्य । अन्तं स्वरूपम् कान्ता वह्निप्रवेशशुद्धा सीता । तमोऽन्धकारः मोहश्च बन्धुजीवाख्यं कुसुमम् । बन्धूनां जीवाः प्राणाश्च ।

## कुसुमप्रतिमा

आसादितेति । आसादितो लब्धः प्रकटः सुस्पष्टी निर्म्मलश्च चन्द्रस्य हासो विकासो येन सः, रामपक्षे तु आसादितो धृतः प्रकटी विकटः निर्म्मलः शाणितश्च चन्द्रहासः असिर्ये न सः । विशुद्धा मेघापगमात् उज्ज्वला कान्तिर्नक्षत्रादिद्युतिर्यसः, रामपक्षे तु विशुद्धा शत्र विजयात् प्रफुल्ला कान्तिर्मुखादिशोभा यस्य सः । तथा सम्भृतानि धृतानि बन्धु जीवानि तदाख्यकुसुमानि येन सः, रांमपक्षे तु सम्भृता रावणपदेन संरक्षिताः बन्धूनां विभीषणादीनां जीवा जीवनानि येन सः । एष शरत्समयः, रामो दशास्यं रावणमित्र, गढ़तमसं मेवावरणद्गाढ़ान्धकारम्, प्रबलतमीनुणजनिताज्ञानञ्च, उग्रं भयङ्करम्, घनकालं मेघसमंय वर्षा कालं गाढ़कृष्णवर्णञ्च, उत्खाय अपसार्य्य निहत्य च प्राप्त आगतः ।

अत्र श्लेषेण प्रस्तुतरामचरित्ररूपो वृत्तान्तः सूचितः ।

तवेत । हारिणा मनोहरेण दूरमपहारिणा च तव गीतारागेण गानस्वरेण, अतिर हंसा अत्यन्तवेगशालिना सारङ्गेण हरिणेन एष राजा दुष्यन्त इव प्रसभं बलेन हृत आकृष्टः अस्मि । अनेन दुष्मन्तरूपपात्रप्रवेश सूचितः ।

## विमला

आसादितेति ।—शाद्वर्णनमिदम् । आसादितः,—प्राप्तः, प्रकटः—परिस्फुटः, निर्मलस्य—मेधाद्यावरणशून्यतया पूर्णप्रकाशस्य, चन्द्रस्य हासः,—विकासः, येन तथोक्तः, अन्यत्र—आसादितः,—प्राप्तः, रावणवधादिति भावः, प्रकटः,समुज्ज्वलः, निर्मलः,—शाणेऽवस्थाप्य तीक्ष्णधारतां नीत इत्यर्थः, चन्द्रहासः,—रावणस्य असिः येन तादृशः, विशुद्धा—समुज्ज्वला, कान्तिः,—नक्षत्रादीनां ज्योतिः, अन्यत्र—स्वस्य शोभा इति भावः, यस्य तथोक्तः, तथा सम्भृतानि—सम्यक् पोषितानि,विकासितानि इत्यर्थः, बन्धुजीवानि,—तदाख्यपुष्पाणि येन सः, [बन्धुजीवशब्दात् प्रसवार्थेअणि, "फले लक्" इति तद्धितलुकि "द्विहीनं प्रसवे सर्वम्" इत्यमरोक्तेः नपुंसकता बोध्या] **अन्यत्र—सम्भृताः,—संरक्षिता, बन्धूनां—विभीषणसुग्रीवादीनां, जीवाः,—प्राणाः राक्षसेभ्य इति भावः, येन तथा-**

भूत:, एष: शरत्समय:, दशास्यमिव—रावणमिव, उग्रं—भीषणं, गाढ़तमसं—निविडान्धकारम्, अन्यत्र—तमोगुणाच्छन्नं, घनकालं—मेघसमयं, वर्षाकालमित्यर्थ:, अन्यत्र—अतिकृष्णवर्णनम्, उत्खाय—उन्मूल्य, राम इव प्राप्त:,—उपस्थित: । अत्र श्लेषेण रामायणरूपप्रस्तुतवृत्तान्त: सूचित: । वसन्ततिलकं वृत्तम् । एवं नायकनामसूचनात् पात्रसूचनमपि सम्भवति । अस्य पात्रासङ्कीर्णोदाहरणं, यथाऽनर्घराघवे,—"यान्ति न्यायप्रवृत्तस्य तिर्य्यञ्चोऽपि सहायताम् । अपन्थानन्तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥" अत्र वानराणां रामसाहाय्यं, विभीषणेन रावणस्यागश्च श्लेषेण सूचित: ।

तवेति ।—अतिरंहसा—अतिवेगवता, हारिणा—चित्ताकर्षकेण, दूरसमाकर्षिणा वा, सारङ्गेण—मृगेण, एष इति आमुखनिर्वाहार्थमम् पुरतो निर्दिष्ट:, राजा दुष्यन्त इवु, अतिरंहसा—अति—अत्यन्त, रंह:,—वेग:, मनस: इति शेष:, यस्मात् तेन, मधुरतया श्रवणार्थम् अतीव मनोवेगकारिणा, हारिणा—मनोहरेण, तव वीतरागाणे—सङ्गीतरागेण, हृत:,—आकृष्ट:, राजपक्षे—सूदूरं प्रापित:, अस्मि, अहम् इति शेष: । पथ्यावक्तं वृत्तम् ।

## लक्ष्मी

मुखं श्लेषादिनेति । आदिपदेनान्यापदेशसमासोक्ताप्रस्तुतप्रशंसादे: परिग्रह: । प्रस्तुत: प्रकरणप्राप्तोऽसौ वृत्तान्तसाम्यप्रतिपादक इति तथोक्त: ।

आसादितेत्यादि । शरत्पक्षे रामपक्षे च क्रमशोऽर्थोऽवगन्तव्य: । तथाहि शरत्पक्षे—आसादित: प्राप्त: प्रकटो व्यक्तीभूतनिर्मलचन्द्र एव शशो येन स:, रामपक्षे तु—आसादितो रावणवधार्थं काले एव धृत: प्रकटो लक्षणया, निकट: निर्मल: शोणित: चन्द्रहास: खड्गो येन स: । 'चन्द्रहासोऽतिमात्रके । दशग्रीवकृपाणे च' इति हैम: । विशुद्धा घनव्यपगमात् उज्ज्वला कान्तिर्नक्षत्रादिज्योतिर्यत्र सस्तथोक्त:, 'विशुद्धकान्त:' इति पाठस्तु मनोहर: । तथाहि-विशुद्धो निर्मल: कान्त: कमनीयो य: स:, शरत्समये अगस्त्योदयेन जलाशया: स्वच्छा रमणीयाश्च भवन्तीति भाव: । रामपक्षे—विशुद्धा शत्रुक्षयात् विकसिता कान्तिर्मुख्यादिशोभा यस्य स:, 'शोभा कान्तिर्द्युतिश्छवि:' इत्यमर: । यद्वा-वह्नौ विशुद्धा कान्ता पत्नी यस्य तादृश:, तथा सम्भृता: पुष्पपूर्णा: बन्धुजीवा: बन्धूका यत्र तादृश:, पक्षे—सम्भृता जनिता बन्धूनां रणपतितवानराणां जीवा जीवनानि अमृतवृष्ट्या येन तादृश: । एष शरत्समय:, रामो दशास्यं दशाननमिव, गाढतमसं मेघाच्छन्नाद्गाढान्धकारम्, प्रकृष्टतमोगुणजनिताज्ञानं च, 'राहो ध्वान्ते गुणमिदि मौढये शोके तमो मतम्' इति गोपाल: । उग्रं भयदायकम्, घनकालं वर्षासमयम्, गाढश्यामवर्ण च, उत्खाय उत्पाटय उन्मील्य वा, हत्वा च प्राप्त आगत: । वसन्ततिलकाछन्द: । अत्र चन्द्रहासादिपदश्लेषेण प्रस्तुतरामचरित्ररूपो वृत्तान्त: सूचित: । परन्तु नायकनामसूचनात् पात्रसूचनमपि सम्भवति । तथा चास्य पात्रासङ्कीर्णोदाहरणं यथानर्घराघवे—

**'यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।**
**अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥'**

अत्र वानराणां रामसाहाय्यम्, विभीषणेन रामत्यागश्च श्लेषेण सूचित: । आदिपदग्राह्योऽन्यापदेशस्तूदाह्रियते, यथा तारावतीचन्द्रशेखरनाटके—

**'उद्यते शशिनि पूर्वभूधरं राजितं कल्पचन्द्रशेखरम् ।**
**एष यास्यति शशी महार्णवं तातपादमिव वन्दनमिच्छु: ॥'**

अत्र हि चन्द्रस्य तातमहार्णवगमनान्यापदेशेन प्रस्तुतवस्तुनश्चन्द्रशेखरनृपस्य वने तपः प्रसक्तस्य तातपादवन्दनार्थगमनसूचनम्। एवं समासोक्तयादावप्यनुसन्धेयम

सूत्रधारेणाभिनेतव्यं वस्तु विस्मृतं तत्र विस्मरणकारणं किमिति तत्प्रतिपादयति— तावास्मीति। हारिणा मनोहरेण चित्ताकर्षकेनेति यावत्, दूरमहारिणा च तव भवत्या (नटयाः) गीतरागेण गानस्वरेण, अतिरंहसा वेगातिशयशालिना सारङ्गेण हरिणेन हरिणेन 'चातके हरिणे पुंसि सारङ्गः' इत्यमरः। एष राजा दुष्यन्त इव प्रसभं हठात् हृत आकृष्ट अस्मि अहमर्थकाव्ययोऽयं शब्दः। राजपक्षे-दूरं प्राच्याचित इत्यर्थः। पथ्यावक्त्रं छन्दः। अनेन दुष्यन्तरूपपात्रप्रवेशः सूचितः।

## रुचिरा

मुखमुदाहर्तुं प्रवृत्तस्तल्लक्षयति—**मुखमित्यादिना**।

**मुखम्**। 'नामे'ति शेषः। **श्लेषादिना**। आदिना समासोक्त्याप्रस्तुतप्रशंसादेग्रहणम्। **प्रस्तुतवृत्तान्तप्रतिपादकः** प्रस्तुतः प्रकरणप्राप्तोऽसौ वृत्तान्तस्तस्य प्रतिपादक इति तथोक्तः। **वाग्विशेषः। यथा—'आसादित...'** इत्यादौ।

"**आसादितप्रकटनिर्म्मलचन्द्रहास** आसादितः सम्पादितः प्रकटं प्रत्यक्षं निर्म्मल (:) चन्द्र (स्य) हासो (विकाशो) येन रामपक्षे तु आसादितो बलादपहृत्य गृहीतः, प्रकटं निर्म्मलः (शाणोल्लिखितः) चन्द्रहासो रावणखड्गो येन) तथोक्तः। "चन्द्रहासोऽसिमात्रकगे। दशग्रीवकृपाणे चे"ति हैमः। **विशुद्धकान्तिः** विशुद्धा स्वच्छा घनापायेनानावृतेति यावत्। अन्यत्र तु पवित्रा कान्तिर्नक्षत्रादिज्योतिः (अन्यत्र शोभा) यत्र (अन्यत्र यस्य) इति तथोकतः। सम्भृत बन्धुजीवः सम्भृता पुष्टिं (विकाशं) नीता बन्धुजीवा बन्धूका उपचारात्तत्पुष्पाणि (अन्यत्र) तु **सम्भृतो** देवेन्द्रद्वाराऽमृत वर्षणेन बन्धुषुः सङ्ग्रामे हतेषु वानरभल्लेषु मित्रेषु जीवो जीवितं येन) तथोक्तः। **एषः। शत्समयः।** रामो रामचन्द्रः। **दशस्यं** रावणम्। **इव। गाढतमसं** गाढं निबिडं तमो ध्वान्तम् (अन्यत्र तमोगुणो ज्ञानं वा) यत्र (अन्यत्र यस्य तं) तथोक्तम्। "राहौ ध्वान्ते गुणभिदि मौढये शोके तमो मतम्।' इति गोपालः। अत एव—उग्रं पङ्काद्युत्पादनेन (अन्यत्र दुर्जेयतया भयङ्करम्)। **घनकालं** वर्षाकालम्। **उत्खाय** परिहृत्य (निहत्य वा)। **प्राप्तः**। वसन्ततिलकं वृत्तम्। तल्लक्षणं चोक्तं यथा—"उक्तं वसन्ततिलकं तभजा जगौ गः।" इति। अत्र श्लेषोत्थापितयोपमया नाटकीयस्यार्थस्य सूचनम्॥ २२७॥" **इति**।

पात्रमुदाहरन्नाह—पात्रमुदाहरन्नाह—**पात्रमित्यादि**।

**पात्रं** नायकरूपो योग्यः पुरुष इति भावः। **यथा। शाकुन्तले**ऽभिज्ञानशाकुन्तले—"**तवास्मि...**"इत्यादौ।

"**अतिरहंसा**ऽतिवेगवता। **हारिणा** दूरमाकृष्य प्रापकेण। **सारङ्गेण** मृगेण। 'सारङ्गः पुंसि हरिमे चातके च मतङ्गजे।'इति मेदिनी। **एषः। दुष्यन्त**स्तदाख्य इत्यर्थः। **प्रसभं** बलात्। **हृतः। राजा। इव। हारिणा** मनोहारिमा **तव** नट्या इत्यर्थः. **गीतरागेण** गीतस्वरेण। **अतिरहंसा**ऽतित्वरया **प्रसभम्**। हृतः। अस्मि। 'अह'मित्यर्थेऽव्ययमिदम्। सूत्रधारस्येयमुक्तिः। पथ्यावक्रं वृत्तम्, तल्लक्षणं तथोक्तम्—"यचतुर्थात्। पथ्या युजोज्।" इति। उपमानतया दुष्यन्तस्य राजर्षेः प्रस्तवानुपदं तथैवोपस्थितिरिति स्फुटमुपमानव्याजेन पात्रस्य वर्णनम्॥ २२८॥"**इति**।

**ऋतुं च कंचित्प्रायेण भारतीं वृत्तिमाश्रितः ।**

स स्थापकः । प्रायेणेति क्वचिदृतोरकीर्तनमपि । यथा—रत्नावल्याम् । भारतीवृत्तिस्तु—

**भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः ॥ २९ ॥**

संस्कृतबहुलो वाक्प्रधानो व्यापारो भारती ।

---

## विवृतिः

रङ्गं रङ्गस्थसामाजिकसमूहम् । प्रसाद्य प्रीणयित्वा । श्लोकैरिति बहुवचनमविवक्षितमाद्यार्थं वा, तेन गद्यस्यापि लाभः । रूपकस्य नाटकादेः ॥

प्रसङ्गाद्भारतीवृत्तिमाह-भारतीति ॥ तस्या भारत्याः ।

## विवृतिपूर्तिः

रङ्गमिति । अयमेवार्थो भङ्ग्यन्तरेण भावप्रकाशिकायां प्रतिपाद्यते—'इत्थं रङ्गविधानस्य संबन्धादिप्रसिद्धये । गोत्रं नाम च बध्नीयात्पूजावाक्यं सभासदाम् ॥ वाञ्छाकलापः प्रथमं कलाविधिरनन्तरम् । वाञ्छाशून्या न दृश्यन्ते व्यवहाराः कथंचन ॥ वाञ्छाकलापस्तु कवेरभीष्टार्थप्रकाशनम् । स्वाभिधेयगतत्वेन स द्विधा परिपठ्यते ॥ स्वगतं तु स्वगोत्रादिस्वीयकीर्तिप्रकाशनम् । अभिधेयगतं यत्तत्काव्यनाम्ना प्रकाशनम् ॥' इति ॥

भारतीति ऋग्वेदोत्पन्नाया भारतीवृत्तेः स्वरूपं किंचित्परिष्कृत्योक्तं नाट्यशास्त्रे—'या वाक्प्रधाना पुरुषप्रयोज्या स्त्रीवर्जिता संस्कृतवाक्ययुक्ता । स्वनामधेयैर्भरतैः प्रयुक्ता सा भारती नाम भवेत्तु वृत्तिः ॥' इति ॥

## विज्ञप्रिया

रङ्गं प्रसाद्येति—रङ्गमत्र वस्तु, एतत् सूचनरूपं नाट्यैकदेशम् । यथा रत्नावल्यामिति । तत्र वसन्तोत्सवस्य वर्णने वसन्तर्तोरपि वर्णनात् ।

भारतीति—नराश्रयः पुंप्रयोज्यः । स्त्रीवाचां प्राकृतत्वात् पुंसामप्यधनानां वचः प्राकृतत्वात् प्राय इत्युक्तम् ।

तस्या इति । भारत्या इत्यर्थः ।

## लोचन

तस्या भारतीवृत्तेः ।

## कुसुमप्रतिमा

रङ्गमिति । स स्थापकः भारतीं वृत्तिम् आश्रितः व्यवलम्बमानः सन्, काव्यार्थ सूचकैस्तदृश्या काव्यवृत्तान्तज्ञापकैः मधुरैः श्लोकैः । अत्र बहुवचनमविवक्षितम् । रङ्गं रङ्गप्राङ्गणस्थं सभ्यगणं प्रसाद्य सन्तोष्य, रूपकस्य

अभिनेयदृश्यकाव्यस्य तत्कवेश्च आख्यां नाम तथा तस्य कवेर्गोत्रम् आदि शब्दात् तदीयवासस्थानादिकञ्च, प्रायेण कञ्चिद्वसन्तादिकम् ऋतुञ्च, कीर्त्तयेत् प्रकाशयेत्। गोत्राद्यपीत्यपिशब्दादनास्थासूचनेन क्वचित् कविगोत्रादेरकीर्त्तनमपीति बोध्यम्।

भारतीति। नराश्रयः केवलमनुष्यविषयकः।

संस्कृतेति। संस्कृतबहुल इत्यनेन तत्राल्पाल्पप्राकृतादिभाषाया अपि स्थितिः सूचिता। वाक्प्रधान इत्यनेन च किञ्चित्किञ्चिदाङ्गिकाहार्य्यसात्विकभिनयप्रकारोऽपि सम्भवीतीति द्योतितम्। व्यापारः अभिनयः।

## विमला

**रङ्गमिति**—रङ्गं—रङ्गस्थसामाजिकसमूहमित्यर्थः, प्रसाद्यः—प्रीणयित्वा, श्लोकैरिति।—[बहुवचनमविवक्षितमाद्यार्थं वा, तेन गद्यस्यापि ग्रहणम्]। रूपकस्य—नाटकादेः। [एतदेव रहस्यं प्रकारान्तरेण भावप्रकाशिकाया सन्निबध्यते। तद्यथा—"इत्थं रङ्गविधानस्य सम्बन्धादिप्रसिद्धये। गोत्रं नाम च बध्नीयात्प्रजावाक्यं सभासदाम्॥ वाञ्छाकलापः प्रथमं कलाविधिरनन्तरम्। वाञ्छाशून्या न दृश्यन्ते व्यवहाराः कथञ्चन॥ वाञ्छाकलापस्तु कवेरभीष्टाद्यप्रकाशितम्। स्वाभिधेयगतत्वेन द्विधा परिपठ्यते॥ स्वगतन्तु स्वगोत्रादिस्वीयकीत्रिप्रकाशतम् अभिध्यगतं यत् यत् कार्य्यनाम्ना प्रकाशितम्॥" इति।

तस्या इति।—तस्याः,—भारत्याः वृत्तेः, प्ररोचना, वीथी तथा प्रहसनम्, एवम् आमुखम् इति चत्वारि अङ्गानि बोध्यानि।

## लक्ष्मी

रङ्गं प्रसाद्येति। स स्थापकः भारतीं वृत्तिम् आश्रितः अवलम्बमानः सन् काव्यार्थो दृश्यकाव्यवृत्तान्तः। तत्सूचकैः बोधकैः मधुरैः श्लोकैः रङ्गं नाट्यालऽधःस्थं सामाजिकगणप्रसाद्यं प्रीणयित्वा, रूपकस्य अभिनेयदृश्यकाव्यस्य तत्कवेश्च आख्यां संज्ञां तथा तस्य कवेर्गोत्रं कुलम् आदिपदात्त दीयनिवासस्थानादिकं च प्रायेण वसन्तादिकम् ऋतुं च कीर्त्तयेत् कथयेत्। अत्र श्लोकैरिति बहुवचनविवक्षितम् अविवक्षितत्वञ्च—अर्थबोधजनकत्वप्रकारकमूलकृदिच्छाविषतत्वाभावः। आद्यर्थं वा तेन गद्यस्यापि सङ्ग्रहः।

अत्रायमाशयः—प्रथमतोऽल्पं महद्वा सभाप्रशंसनं विधेयम्। अनन्तरं गद्येन पद्येन गद्यपद्योभयेन वा रूपकस्य नाम काव्यार्थसूचकेन कीत्रनीयम्। तथा च रूपकस्य तन्नाम्नैव तथाविधं कत्रव्यम्, येन तथा तद्बोधनीयं वस्तु सहृदयहृदयगोचरतां सम्पेद्येतेति फलितम्। तच्च रूपकं तेन कृतं तस्य कवेर्नाम तत्समयेऽप्रसिद्धौ गोत्रादि अन्यथा यथाकामं बोधनीयम्, अतएव शाकुन्तलादौ कविगोत्रादेरकीर्त्तनम्, उत्तररामचरितमुद्राराक्षसादौ च तत्कीर्त्तनं सङ्गच्छेते। अथ च तयोः कीर्त्तनं प्रायिकमित्यस्य स्फुटमुक्तत्वेनोत्तररामचरितादौ तदभावेऽपि न क्षतिः। एवमप्यद्येत्यादिना प्रायस्तस्य सूचनं सर्वत्र दृश्यते तद्यथा—उत्तररामचरिते—'अद्य खलु भगवतः कालप्रियानाथस्य यात्रायामार्यमिश्रान् विज्ञापयामि' इति। रत्नावल्यामपि—'अद्य वसन्तोत्सवे सबहुमानमाहूयनानादिग्देशागतेन राज्ञः श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तः' इति। प्रबोधचन्द्रोदये च—'तदद्य राज्ञः श्रीकीर्त्तिवर्मणः पुरस्तादभिनेतव्यं भवता' इति। एवमन्यात्राऽप्यूहनीयमिति तत्त्वविदः।

ननु का नाम भारतीवृत्तिरित्यत आह—भारतीवृत्तिस्त्विति। भारतीति। नटाश्रयः पुरुषविशेषप्रयोज्यः। स्त्रीवाचां प्राकृतत्वात् पुंसामप्यवधमानां वचः प्राकृतत्वात् कारिकायां प्रायपदोपादानम्।

संस्कृतबहुल इति। प्रायपदस्यार्थो बहुल इति। एवञ्चाल्पाल्पप्राकृतभाषासंयुताऽपि भवेदिति सूचिता। वाक्प्रधान इति। एतेनाल्पाल्पाङ्गिकाहार्यसात्त्विकाभिनयप्रकारोऽपि सम्भवितुमर्हतीति सूचितम्। व्यापारोऽभिनयः। इयं च भारती ऋग्वेदोत्पन्ना तथा च भरतः—'ऋग्वेदाद्भारतीवृत्ति'रिति। अस्याः स्वरूपं किञ्चिद्विशदीकृत्योक्तं तेनैव, तथाहि—

**'या वाक्प्रधाना पुरुषप्रयोज्या स्त्रीवर्जिता संस्कृतवाक्ययुक्ता।**

**स्वनामधेयैर्भरतैः प्रयुक्ता सा भारती नाम भवेत्तु वृत्तिः॥' इति।**

भारतीवृत्तेर्भेदं दर्शयति—तस्या इति। तस्या भारतीवृत्तेरित्यर्थः। प्ररोचना, वीथी, प्रहसनम्, आमुखञ्च एतान्यङ्गानि। अत्र एषु चतुर्षु अङ्गेषु मध्य इत्यर्थः। (क) प्रशंसातः कविकाव्यसभ्यादि प्रस्तुतार्थप्रशंसनेन, उन्मुखीकारः श्रोतृणामभिनयदर्शनादौ प्रवृत्त्यौपयिकेच्छाजननम्। प्ररोचना नाम प्रकर्षेण रुच्युत्पादनं यस्यां सेत्यन्वर्थेयं संज्ञा।

## रुचिरा

अथान्यदपि कर्त्तव्यं निर्दिशति—३१९ रङ्गमित्यादिना।

३१९ **भारतीं** भरतस्येयमिति तां तथोक्ताम्, भरतेन प्रवर्त्तितामत एव तथाख्यातामिति भावः। **वृत्तिं** रचना विशेषशैलीम्। **आश्रितोऽ**नुसृतः। **सः** स्थापकः सूत्रधारस्थानापन्नो नट इति यावत्। **रङ्गं** सभास्थानं तत्स्थाज्जनानिति यावत्। **प्रसाद्यानुमोद्य** प्रशंस्येति यावत्। **काव्यार्थसूचकैः** काव्यस्य रूपकस्य नाटकाद्यन्यतमस्येति भावोऽर्थः प्रतिपाद्यं वस्तु तं सूचयन्तीति, तस्य सूचका इति वा तैस्तथोक्तैः। **मधुरै**र्मृदुलपदरमणीयतया श्रुतिरमणीयैरिति भावः। **श्लोकैः** उपचारात् क्वचिद्गद्यैः क्वचिद्वा गद्यश्लोकैश्चेत्यर्थः। बहुवचनमविवक्षितम्। **रूपकस्य। कवेः** रूपकप्रणेतुः। **आख्यां** नाम। **गोत्रादि**। आदिना पित्रादिनामविद्याविशेषाभिज्ञत्वादि गृह्यते। **अपि** (एतत्स्वारस्येन गोत्रादेः प्रायिकत्वं सूच्यते)। **कश्चित्** कमपि। **च। ऋतुं** वसन्ताद्यन्यतममेकं तदानीन्तरनं समयमिति भावः। **प्रायेणा**धिक्येन। कीर्त्तयेत्॥ ३२५॥

कारिकाकठिनांशं सुगमयति—**स** इत्यादिना।

**सः** 'इत्यस्ये'ति शेषः। **स्थापकः**। 'इत्यर्थ' इति शेषः। **प्रायेण। इति** 'अभिहितेने'ति **क्वचित्** कस्मिंश्चिद्रूपके इत्यर्थः। **ऋतोः। अकीर्तनम्। अपि** 'न दोषावह'मिति शेषः। उदाहरति-**यथा। रत्नावल्याम्।**

इदम्बोध्यम्—सभायाः प्रशंसनमल्पं महद्वा प्रथमं विधेयम्, अनन्तरं रूपकस्य नाम पद्येन गद्येन तदुभयेन वा काव्यार्थसूचकेन कीर्त्तनीयम्, एवं च रूपकस्य तन्नामैव तथाविधं विधातव्यं, येन यथा तत्प्रतिपाद्यं वस्तु सहृदयहृदयगोचरतां प्रतिपद्येतेति लब्धम्। तच्च रूपकं येन विहितं तस्य कवेर्नाम तदानीमप्रसिद्धौ गोत्रादि अन्यथा यथाकामं सूचनीयम्। अत एव—अभिज्ञानशाकुन्तलादौ कविगोत्रादेरकीर्त्तनम्, उत्तररामचरितादौ च कीर्त्तनं सङ्गच्छेते इति हृदयम्। अथ—ऋतोः कीर्त्तनं प्रायिकमिति तु स्फुटमभिहितमेव ग्रन्थकृता, अत एव नोत्तररामचरिते। अथापि तस्य सूचनमद्येत्यादिना प्रायः सर्वत्र। यथा रत्नावल्यामपि 'अद्याहं वसन्तोत्सवे सबहुमानमाहूय नानादिग्देशागतेन राज्ञः श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तः' इति, उत्तररामचरिते 'अद्य खलु भगवतः

कालप्रियानाथस्य यात्रायामर्थ्य मिश्रान् विज्ञापयामि'इति, प्रबोधचन्द्रोदये च—'तदद्य राज्ञः श्रीकीर्त्तिवर्म्मणः पुरस्ता-दभिनेतव्यं भवता ।' इति । एवमन्यत्रापि इति । दिक् ।

अथ भारतीं वृत्तिं लक्षयितुमुपक्रमते—**भारती**त्यादिना ।

**भारती** भरतसम्बन्धिनी भरतेन प्रवतर्त्तितेति यावत् । **वृत्ति**र्व्यापारः । **तु** पुनः 'उच्यते' इति शेषः । ३२० **भारती**त्यादिना ।

३२० **नटाश्रयः** 'नराश्रय' इति 'जनाश्रय' इति वा पाठान्तरे नरजनशब्दाभ्यां नटस्यैव ग्रहणम् । **संस्कृतप्रायः** प्रायेण बाहुल्येन संस्कृतः । आहिताग्न्यादित्वात् विभाषया परनिपातात् साधु । संस्कृतेन वा प्रायः सदृशः एतेन विदूषकाद्याश्रयत्वे क्वचित् प्राकृतस्याप्युपयोगः सूचितः । **वाग्व्यापारो** 'न त्वङ्गव्यापारो न वा मनोव्यापारः' इति शेषः । **भारती** 'वृत्ति'रिति शेषः ॥ ३२६ ॥

तदेव समवगमयति—**संस्कृतबहुल** इत्यादिना ।

**तस्याः प्ररोचना वीथी तथा प्रहसनामुखे ।**

**अङ्गान्यत्रोन्मुखीकारः प्रशंसातः प्ररोचना ।। ३० ।।**

प्रस्तुताभिनयेषु प्रशंसातः श्रोतृणां प्रवृत्त्युन्मुखीकरणं प्ररोचना ।

यथा रत्नावल्याम्—

**श्रीहर्षो निपुणः कविः, परिषदप्येषा गुणग्राहिणी,**

**लोके हारि च वत्सराजचरितं, नाट्ये च दक्षा वयम् ।**

**वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं, किं पुन-**

**र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ।।**

**वीथीप्रहसने वक्ष्येते ।**

---

## विवृतिः

अभिनयदर्शनादौ प्रवृत्त्युन्मुखीकरणं प्रवृत्त्यौपयिकेच्छाजननम् ।।

श्रीहर्ष इति । हारि मनोहरम् । पदं कारणम् ।।

## विवृतिपूर्तिः

प्रशंसात इति । प्रशंसाया द्वैविध्यमाम्नातं सुधाकरे—'प्रशंसा तु द्विधा ज्ञेया चेतनाचेतनाश्रया । चेतनास्तु कथानाथकविसभ्यनटाः स्मृताः । अचेतनौ देशकालौ कालो मधुशरन्मुखः ।।' इति ।।

## विज्ञप्रिया

तत्र प्ररोचनालक्षणमाह—अत्रोन्मुखीकार इति ।

श्रीहर्ष इति । धावक एवात्र यद्यपि कविः तथापि राज्ञः श्रीहर्षस्य प्रीतये तत्रैव कवित्वारोपः कृतः । वस्त्वेकैकमपीहेति । इह एषु । निपुणकवि-परिषत्स्वीयनाट्यदक्षत्वात्तेषु वस्तुषु मध्ये । एकैकं वस्तु इत्यर्थः । किं पुनरिति । किं पुनर्वक्तव्यमित्यर्थः । गुणानां फलप्राप्तिहेतुत्वात् उपादेयानाम् । अत्राभिनेतव्यस्य वत्सराजचरितस्याऽभिनेतृणां नटानां परिषदश्च प्रशंसा । संस्कृतेनेति । तदङ्गता । वीथीप्रहसने इति । तद्द्वयमुखरूपकविशेषौ नाटकप्रभेदौ वक्ष्येते । तौ च संस्कृतेनैवेति तद्द्वयं भारत्या अङ्गम् ।

## लोचन

वीथी वीथ्यङ्गानि । प्रहसनं प्रहसनाङ्गानि वक्ष्यमाणानि ।

## कुसुमप्रतिमा

तस्या इति। प्ररोचना, वीथी, प्रहसनम्, आमुखञ्च, एतानि तस्या भारतीवृत्तेरङ्गानि। अत्र एषु चतुर्षु अङ्केषु मध्ये, प्ररोचना नाम प्रशंसातः कविकाव्यसभ्यादीनां मुख्यातिकरणात् उन्मुखीकारः श्रोतणामभिनयपदर्शने प्रवृत्ति-जननम्, प्रकर्षेण रुच्युत्पादनं प्ररोचनेति व्युत्पत्तेः।

श्रीहर्ष इति। श्रीहर्षस्तदाख्यः निपुणः काव्यरचनादक्षः कविरेतन्नाटिकाया रचयिता, एषा परिषत् सभापि गुणग्राहिणी, लोके वत्सराजस्य उदयनस्य चरितञ्च हारि मनोहरम्, व्यञ्च नाट्ये अभिनयकार्य्ये दक्षा निपुणाः। एषां मध्ये एकै कमपि कविनिपुणत्वादिकं वस्तु, इह अभिनयविषये वाञ्छितफलप्राप्तेः सभ्यप्रीतिजनरूपाभिलषितफ-ललाभस्य पदं हेतुः, किं पुनरधिकमुच्यत इत्याशयः, मम भाग्यस्य उपचयादाधिक्येनीदयात् अयं सर्वो गुणानां निपुणकवित्यादीनां प्रीतिजनकधर्म्माणां गणः समुदितः अद्य सम्मिलितः। सन् उपस्थितः।

अत्र सर्वेषां प्रशंसया प्रकृताभिनये श्रीतृणां रुच्युत्पादनात् प्ररोचना।

## विमला

अत्र—एषु चतुर्षु अङ्केषु मध्ये, प्रशंसातः,—सामाजिकादीनां गुणकीर्त्तनेन, उन्मुकीकारः,—उन्मुखीकर-णम्, उत्कण्ठोत्पादनमित्यर्थः, प्ररोचना नाम भारतीवृत्तिरित्यर्थः। सुधाकरे द्विप्रकारा प्रशंसा निरूपिता; यथा—"प्रशंसा तु द्विधा ज्ञेया चेतनाऽचेतनाश्रया चेतनास्तु कथानाथकविसभ्यनटाः स्मृताः। अचेतनौ देशकालौ कालो मधुशरन्मुखः॥" इति।

प्रवृत्त्युन्मुखीकरणं—प्रवृत्त्यौपयिकेच्छाजननम् इत्यर्थः।

श्रीहर्ष इति।—श्रीहर्षः निपुणः,—सुदक्षः, कविः,—काव्यरचयिता, एषा परिषत्—सभाऽपि, गुणग्रा-हिणी—गुणाग्रहणे तत्परा, न तु दोषग्रहणे इत्यर्थः, वत्सराजस्य—उदयनस्य, चरितं, लोके—जगति, हारि—मनो-हरञ्च, वयञ्च नाट्ये—अभिनयव्यापारे, दक्षाः,—निपुणाः, इह—अस्मिन् अभिनयव्यापारे, एकैकमपि, न पुनः सर्वमित्यर्थः, वस्तु—कवित्वादिकं, वाञ्छितस्य—सभासन्तोषरूपस्य फलस्य, प्राप्तेः,—इष्टसिड्द्यरित्यर्थः, पदं—स्थानं, यद्वा कारणम्; मम भाग्यस्य उपचयात्—अभ्युन्नतेः हेतोः, अयं सर्वः गुणानां—कवित्वनाट्यदक्षत्वादिरू-पाणामित्यर्थः गणः,—समूहः,—समुदितः,—सम्यक् उदयं प्राप्तः, अत्र किं पुनः, वक्तव्यमिति शेषः। अवश्यमेव मम भाग्यमेव अत्र कारणमिति भावः। अत्र कविप्रभृतीनां प्रशंसया सभ्यानामुन्मुखीकरणरूपा प्ररोचना। शार्दूल-विक्रीड़ितं वृत्तम्।

## लक्ष्मी

श्रीहर्ष इति। श्रीहर्षस्तत्संज्ञको निपुणः प्रवीणः 'प्रवीणे निपुणाभिज्ञः' इत्यमरः। कविरेतन्नाटिकाया निर्माता। यद्यपि धावक एवात्र कविस्तथापि राज्ञः श्रीहर्षस्य प्रीतये तत्रैव कवित्वारोपः कृतः। एषा परिषत् सभाऽपि, परिषदादिशब्दाः स्थलविशेषे तत्रत्यपुरुषविशेषे च, 'समज्या परिषद्गोष्ठी सभा समिति संसदः, 'चत्वारो वेदधर्मज्ञाः पर्षत्त्वैविद्यमेव वा' इत्युभयविधप्रयोगदर्शनात्। प्रकृते च तत्स्थाः पुरुषा ग्राह्याः, 'गुणग्राहिणी'ति विशेषणोपादा-नात्। गुणग्राहिणी गुणान् गृह्णाति तच्छीलेति ताच्छील्ये णिनिः। लोके जनसमाजे वत्सराजस्य उदयनस्य 'उदयनस्तुवत्सराजे' इति हैमः। चरितञ्च हारि मनोहरम्, मन आकर्षकमिति यावत् अस्तीति शेषः। वयं नाय्ये

अभिनयकार्ये दक्षा निष्णाताश्च, वयमिति 'त्यदादीनि' इत्येकशेषः । एषां मध्ये एकैकमपि कविनिपुणत्वादिकं वस्तु, एकैकमित्यत्र 'एकं बहुव्रीहिवत्' इत्यनेन बहव्रीहिवद्भावः । इह प्रकृतनाटिकाभिनयनविषये वाञ्छितफलप्राप्तेः सकलसभ्यजनप्रीत्युत्पादनरूपाभिलषितफललाभस्य पदं स्थानं 'पदं व्यवसितत्राण स्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । किं पुनरधिकमुच्यत इत्यभिप्राय:, मद्भाग्यस्य ममादृष्टस्य उपचयो वृद्धिस्तस्मात्तथोक्तात् अत्र हेतौ पञ्चमी । अयं सर्वो गुणानां निपुणवित्वादीनां प्रीत्युत्पादकधर्माणां गणः समूहः समुदितः अद्यैकत्रितः सन् प्राप्तः । शार्दूलविक्रीडितं छन्दः । अत्र सर्वेषां प्रशंसया प्रकृतनाटिकाभिनये श्रोतृणां प्रवृत्युन्मुखीकरणात् प्ररोचना ।

वीथीप्रहसने इति । तद्द्वयं मुखरूपकविशेषौ नाटकप्रभेदौ. स्वप्रसङ्गे वक्ष्येते प्रतीपादयिष्येते । तौ च संस्कृतेनैवेति तद्द्वयं भारत्या अङ्गम् ।

## रुचिरा

**संस्कृतबहुलः** संस्कृतेन बहुलः । **वाक्प्रधानः** । **व्यापारः** । **भारती** 'नाम वृत्ति'रिति शेषः ।

अस्या अङ्गान्याह—३२१ **तस्या** इत्यादिना ।

३२१ **तस्या** भारत्या वृत्तेरित्यर्थः । **प्ररोचना** । **वीथी** । **तथा** । **प्रहसनामुखे** प्रहसनं चामुखं चेति तथोक्ते । **अङ्गानि** मतानीति शेषः ।

तत्र तावत्प्ररोचनमाह—३२२ **अत्रेत्यादिना** ।

३२२ **अत्रैषु** प्ररोचनाऽऽदिष्वङ्गेष्वित्यर्तः । **प्रशंसातः** । **उन्मुखीकारः** 'सभ्याना'मिति शेषः । **प्ररोचना** ॥ ३२७ ॥

तदेव विवृणोति-**प्रस्तुताभिनयेष्वित्यादिना** ।

**प्रशंसातः** "प्रशंसा तु द्विधा ज्ञेया चेतनाचेतनाश्रया । चेतनास्तु कथानाथकविसभ्यनटाः स्मृताः ॥ प्रचेतनौ देशकालौ कालो मधुशरन्मुखः ॥" इत्यादिना सुधाकरकारादिनाऽऽस्नातद्वैविध्यात् प्रशंसनादिति भावः । **श्रोतृणाम्** । **प्रस्तुताभिनयेषु** । विषये सप्तमीयम् । **प्रवृत्त्युन्मुखीकरणं** प्रवृत्तौ उन्मुखीकरणम् उत्कण्ठीकरणम् । **प्ररोचना** 'नाम भारत्या वृत्तेरङ्ग'मिति शेषः ।

उदाहर्त्तुमुपक्रमते—**यथेत्यादिना** ।

**यथा** । 'प्ररोचने'ति प्रसङ्गानुप्रसक्तम् । **रत्नावल्यां** तदाख्यायां नाटिकायामित्यर्थः । **"श्रीहर्ष"**इत्यादौ ।

"**श्रीहर्ष**स्तन्नामा नृपतिरिति भावः **निपुणश्चतुरः** । **कविः** । 'प्रयोगस्यैतस्य रचयिते'ति शेषः । **एषा** 'श्रीहर्षकृतिं च द्रष्टुमुपस्थिते'ति शेषः । **परिषत्सभा** । 'समज्या परिषद्गोष्ठी सभासमितिसंसदः ।' इत्यमरः । **अपि** पुनः । **गुणग्राहिणी** । **वत्सराजचरितं** वत्सराजस्योदयनापरनामधेयस्य रत्नावलीनायकस्य नृपतेरिति भाव:, चरितं रत्नावल्यामभिनेयत्वेन प्रतिपादितं चरित्रमिति तथोक्तम् । **च** । **लोके** जगति । 'लोकस्तु भुवने जने ।' इत्यमरः । **हारि मनोहरं** चेतसि प्रसादसम्पादकमिति यावत् । **नाट्ये** नृत्यगीतवाद्यत्रयविषये इति भावः । 'तौर्य्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् ।' **इत्यमरः** । **च** । **दक्षा** निपुणाः । **वयं** 'नटा' इति शेषः । **इहास्मिन्** स्थाने । **एकैकमेकमेकमित्यर्थः** । **अपि** । **वस्तु** । **वाञ्छितफलप्राप्तेः** । **पदं** स्थानभूतम् । **किम्** । **पुनः** । **मद्भाग्योपचयात्** मम (सूत्रधारस्य) भाग्यं सुफलोन्मुखं प्रारब्धं कर्म्म तस्योपचय उदयस्तस्मात् । **अयम्** । **सर्वः** । **गुणानाम्** । **गणः**

समुदायः । **समुदितः** । सूत्रधारस्येयमुक्तिः । शार्दूलविक्रीडितं वृत्तम्, तल्लक्षम यथोक्तम्, "शार्दूलविक्रीडितं म्सौ ज्सौ तौ गादित्यत्रऋषयः ॥" इति ॥ अत्रेदं स्फुटम्, श्रीहर्षादीनां नैपुण्याद्यभिधानेन सर्वेषामुन्मुखीकरणात्प्ररोचना नाम भारत्या वृत्तेरङ्गम् । इति ॥ २२२९ ॥

अङ्गान्तरविषये प्राह—**वीथी**...इत्यादिना ।

**वीथीप्रहसने** वीथी प्रहसनं चेत्यर्थः । 'भारत्या अङ्गभूते' इति शेषः । **वक्ष्येते** । अत्रेदम्बोद्धव्यम्—यद्यपि वीर्थी प्रहसनं च रूपकविशेषणरूपेणैव निरूपयिष्यति, न तु प्ररोचनामिव स्वातन्त्र्येण, तथाऽपि तत्र तत्र प्रतिपाद्यमेवास्या अङ्गं विभावनीयम्, अत एवोक्तं कविराजैः—**वीथीप्रहसने वक्ष्येते** इति, दशरूपकृता "वीथी प्रहसनं वाऽपि स्वप्रसङ्गेऽभिधास्यते ।' इति च । तत्र यथोक्ता वीथी 'आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः ।' इति, प्रहसनं पुनः 'भवेत् प्रससनं वृत्तं निन्द्यानां कविकल्पितम् ।...'इति । तथा च—'चित्रे यत्रोक्तिप्रत्युक्ती स्यातामाकाशभाषितैः । कथञ्चिद्वाऽप्यनेकार्थसूचनं वीथिका च सा ॥ भवेत् प्रहसनं यत्र हास्याधानाय धृष्टता । विरुद्धवेंषवाक्केलिचेष्टितैर्वा प्रसादनम् ॥' इति तयोर्लक्षणे विविक्ते बोद्धव्ये । वीथी तावद् यथा बालरामायणे—"(आकाशे कर्णे दत्त्वा) किं ब्रूथ ? विलक्षणेन सता कर्णाटनटेन तेन निर्म्मर्य्यादामिदमुदितम् । यदुताखण्डप्रसरो हि पुरुषकाराः कर्णाटानाम् । तथाहि—'अहमेष हरिष्यामि परिणेतुः पुरोऽपि ताम् । नारीपरिभवं सोढुं दाक्षिणात्मा न शिक्षिताः ॥' (अञ्जलिं बद्धवा) तदिदं मयाऽपि निवेद्यते यदि हि परिणयामि—'अपि द्वीपान्तरादेष हृतां प्रत्याहरामि ताम् । कलत्रहरणे पुंसां कियदर्णवलङ्घनम् ॥ 'इति ।...(सहर्षम्) अनुकूलं हि दैवं सर्वस्मै स्वस्ति करोति, यत प्रस्तुतसंवादी देवादेशः ।...'इति । यथा वाऽनर्घराघवे—(आकाशे कर्णं दत्त्वा) किं ब्रूथ ? वैदेशिको भवान् असमग्रपात्रः कथमीदृशे कर्म्मणि प्रगल्भते ? (विहस्य सप्रश्रयमञ्जलिं बद्धवा) हन्त भोः ! किमेवमुदीर्य्यते ? भवद्विधानामाराधनी वृत्तिरेव मे पात्राणि समग्रयिष्यति । यतः—'यान्ति न्यायप्रवृत्तस्य तिर्य्यञ्चोऽपि सहायताम् । अपन्थानं तु गच्छन्त सोदरोपि विमुञ्चति ॥'(पुनराकाशे कर्णं दत्त्वा) किं ब्रूथ ? तर्हि प्रहितेयमस्माभिः पत्रिका । इति (प्रविश्य नटः पत्रिकां ददाति । सूत्रधआरो गृहीत्वा वाचयति)...इति । प्रसहनं यथा मृच्छकटिके—'अविदअविद भो ! चिरसंगीदोवासणेन सुक्खपोक्खरणालाइं विअ मे बुभुक्खाए मिलाणाइं अंगाई ता जाब गेहं गदुअ ज़ाणामि । अत्थि किं पि कुटुंबिणीए उबबादिदं ण वेत्ति । (१ 'कष्टंकष्टं भोः ! चिरसङ्गीतोपासनेन शुष्कपुष्करनालानीव मे बुभुक्षया म्लानान्यङ्गानि, तद् याबद्गृहं गत्वा जानामि । अस्ति किमपि कुटुम्बिन्या उपपादित न वेति ।' इति संस्कृतम्) ।...इति दिक् ।

**नटी विदूषको वापि पारिपर्श्विक एव वा।**
**सूत्रधारेण संहिताः संलापं यत्रकुर्वते ॥ ३१ ॥**
**चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।**
**आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥ ३२ ॥**

सूत्रधारसदृशत्वात्स्थापकोऽपि सूत्रधार उच्यते। तस्यानुचरः पारिपाश्विकः। तस्मात्किंचिदूनो नटः।

---

## विवृतिः

आमुख माह—नटीति। विदूषक उक्तलक्षणकः। संलापं सम्यग्भाषणम्। स्वकार्योत्थैरिति। स्वकार्य पात्रप्रवेशस्तदुपयुक्तैरित्यर्थः। प्रस्तुताक्षेपिभिः प्रस्तुतसूचकैः॥

आमुखभेदानाह—उद्घात्यक इति॥

## विवृतिपूर्तिः

नटीति। नट इत्युचितम्। 'तस्मात्किंचिदूनो नटः' इति वृत्तिदर्शनात्। मन्दारमरन्दे तु नटया अपि ग्रहणम्। तथा च तद्वाक्यम्—'नटी विदूषको वापि नटो वा पारिपाश्र्वकः।' इति। एवं च नट इति पाठे नटी, नटीति पाठे नट इति स्वरसाल्लभ्यते। 'नटौ' इत्येकशेषपाठस्तु निर्मूलः। तथा व्युक्रमेऽपि सूत्रधारसधर्मिणी न लभ्यत इति महद्वेषम्यम्॥

प्रस्तावनेति। सुधाकरे सदृष्टान्तमुक्तम्—'विधेर्यथैव संकल्पो मुखतां प्रतिपद्यते। प्रधानस्य प्रबन्धस्य तथा प्रस्तावना मता॥' इति॥

## विज्ञप्रिया

आमुखरूपमाह—नटीति।

## कुसुमप्रतिमा

तर्हि किं तावदामुखमित्याह नटीति। नटी सूत्रधारपत्नी, विदूषकः प्रागुक्तलक्षणः परिसमन्तात् सूत्रधारस्य पाश्र्वे चरतीति पारिपाश्र्विकः एते सूत्रधारेण सहिता मिलिताः सन्तः, स्वकार्य्यादुत्यर्निजनिजकर्त्तव्यविषयमवलम्ब्यैवीतपन्नैः प्रस्तुतं प्रकृतं दृश्यकाव्यविषयम् आक्षिपन्ति उत्थापयन्तीति तैः चिन्हैर्नानाविधैर्वाक्यैः यत्र मिथः परस्परं संलापम् आलापं कुर्वते तत्तु आमुखं विज्ञेयम्, प्रकृताभिनयस्य मुखे आद्ये कर्त्तव्यादिति भावः। तथा नाम्ना प्रसिद्धा सा प्रस्तावनापि विज्ञेया, प्रस्तावयति प्रकृतिविषय मुत्थापवतीति व्युत्पत्तेः।

ननु "पूर्वरङ्गं विधायैव सूत्रधारो निवत्र्तते। प्रविश्य ज्ञापकस्तवत् काव्यमास्थापर्वत्ततः॥" इत्यनेन पूर्वमेव सूत्रधारस्य रङ्गलयान्निर्गमोपदेशात् स्थापकस्य काव्यार्थसूचनोपदेशाच्च कथमत्र पुनः "सूत्रधारेण सहिताः" इत्यु-

च्यत इत्याह सूत्रेति । तथा चात्र सूत्रधारपदं तत्सदृशत्वात् स्थापकपरमिति भावः । तस्य सूत्रधारस्य । स च तस्मात् सूत्रधारादेव किञ्चिदूनः किञ्चिदूनगुणको नटो नटविशेष इत्यर्थः ।

## विमला

आमुखमाह, नटीति ।—नटी (अत्र "नटः" इति वक्तुमुचितं "तस्मात् किंचिदूनी नटः" इति वृत्तिनिबन्धनत्वात्, मन्दारमकरन्दे तु उभयोरपि नटीनटयोः, उपादानं दृश्यते, यथा हि,—'नटी विदूषको वाऽपि नटी वा पारिपार्श्विकः' इति) । विदूषकः,—"कुसुमवसन्ताद्यभिधः" इत्यादिनोक्तलक्षणकः, वाऽपि—अथवा, पारिपार्श्विकः,—पार्श्ववर्त्तिनटविशेषः; एते सूत्रधारेण सहिताः यत्र चित्रैः,— मनोज्ञैः, स्वाकार्य्यात्—स्वकर्त्तव्यव्यापारात्, उत्थैः,—-उद्भूतैः, यद्वा—स्वकार्य्यं—पात्रप्रवेशः, तदुपयुक्तैरित्यर्थः, प्रस्तुताक्षेपिभिः,—प्रकृतवृत्तमुत्थापयद्भिः, वाक्यैः, मिथः,—अन्योऽन्यं, संलापं—सम्यक् भाषणं, कुर्वते, तत् तु आमुखं विज्ञेयं, सा नाम्ना प्रस्तावनाऽपि, विज्ञेयेति शेषः । प्रस्तावनास्वरूपः सुधाकरे यथोक्तः,—"विधेर्यथैव सङ्कल्पो मुखतां प्रतिपद्यते । प्रधानस्य प्रबन्धस्य तथा प्रस्तावना अता ॥" इति ।

## लक्ष्मी

अथावशिष्टमामुखं किन्तावदित्यपेक्षायामाह—नट इति । 'तस्मात्किञ्चिदूनो नटः' इति विवरणात् । 'नटी विदूषको वापि नटी वा पारिपार्श्विकः' इति मन्दारमरन्दवचसा तु नटया अपि ग्रहणं विधेयम् । विदूषकः पूर्वोक्तस्वरूपः, परि समन्तात् सूत्रधारस्य पार्श्वे चरतीति पारिपार्श्विकः । एते सूत्रधारेण सहिता युक्ताः सन्तः स्वकार्योत्थैः स्वस्वकर्त्तव्यविषयमांश्रित्यैवोपयुक्ताः प्रस्तुतं प्रकृतं दृश्यकाव्यविषयम् आक्षिपन्ति सूचयन्तीति तैस्तथोक्तैः चित्रैर्बहुविधैर्वाक्यैः यत्र मिथः अन्योन्यम् संलापं सम्यग्भाषणं कुर्वते तत्तु आमुखं विज्ञेयम्, प्रकृताभिनयस्यं मुखे प्रारम्भे विधेयत्वादिति भावः । तथा नाम्ना प्रसिद्धया संज्ञया, प्रस्तावयति प्रकृताभिनयविषयं सूचयति या सा प्रस्तावनाऽपि विज्ञेया ।

ननु 'पूर्वरङ्गं विधायैव' इत्यादिना सूत्रधारस्य पूर्वमेव नाट्यशालातो निर्गमोपपादनात् स्थापकस्य काव्यार्थप्रतिपादनोपपादनाच्च पुनरत्र 'सूत्रधारेण सहिताः' इत्युक्तिः कथं सङ्गच्छत इत्यत आह—सूत्रधारसदृशत्वादित । एवञ्चात्र सूत्रधारपदं तत्तुल्यत्वात् स्थापकपरमित्याशयः । तस्य सूत्रधारस्य । तस्मात् सूत्रधारादेवेत्यर्थः किञ्चिदूनः किञ्चित्स्वल्पगुणको नटो नटविशेषः । तथा च 'नटो विदूषको वापि' इत्यत्र वृत्तिसमन्वयाय 'नट' इति पाठ एव ज्यायान् । तस्मान्नटी सूत्रधारपत्न्यपि व्याचक्षाणाः परास्ताः । वस्तुतस्तु 'स्त्री चेन्नटी' इत्यध्याहृत्य वृत्तिग्रन्थसमन्ववयो विधेयः । न च तस्मात् 'किञ्चिदूना नटी' इत्येव वृत्तौ कथन्न लिखितमति वाच्यम्, नटसामान्यलक्षणस्यावश्यं वक्तव्यत्वेन नटीलक्षणस्य साक्षादनुक्तावपि दोषाभावात्—

## रुचिरा

अथामुकं लक्षयति—३९३ **यत्र** यस्मिन् प्रस्तावे इत्यर्थः । **नटौ** नटी च नटश्चेति तथोक्तौ **[**"पुमान् स्त्रिया ।" १/२/६७ इत्येकशेषः**]** **वा**ऽथवा यद्वा नटीत्येव पाठः साधीयान्, नटी विदूषको वाऽपि पारिपाश्विक एव वा "इति भरतोक्तेः । एतेन 'नटः' इति पाठः साधुः, तस्मात् किञ्चिदूनो नटः इति वृत्तिदर्शनात् इति वदन्तः परास्ताः, वृत्तिग्रन्थस्य च "स्त्री चेन्नटी' इत्यध्याहृत्यापि योजनोपपत्तेः, न चैतस्मात् "किञ्चिदूना नटी" इत्येव वृत्तिः कुतो नेति चोद्यम्, नटसामान्यलक्षणस्यावश्यं वक्तव्यत्वात्, नटीलक्षणस्य च साक्षादनभिधआनेऽपि तथाऽभिधानात् ।

**विदूषकः । अपि ।** (समुच्चयार्थमिदम्) एतेन नटी नटो विदूषकश्चेति त्रय इति सूचितम् । **वाऽथवा** । यदि तेष्वेकतयो न स्यात् तदेति भावः । **पारिपार्श्विकः** । **एव** । एतेन तेष्वेकतमस्थानापन्नत्वमेतस्य सूचितम् । **सूत्रधा-रेणो**पचारेण तादृशेन स्थापकेन नटेनेति भावः । यद्वा-अत्र लिङ्गवचननिर्देशो न विवक्षितः । तथा सति,—सहिता सहितः सहिते सहितौ सहिता वा, सूत्रधारेण सहितो नटो विदूषकः परिपाश्विको वा, सहिता वा नटी, सहिते नटनटी वा, सहितौ नटविदूषकौ नटपारिपाश्विकौ नटीविदूषकौ नटीपारिपाश्विकौ विदूषकपारिपाश्विकौ वा, सहिता नटनटीविदूषका नटीविदूषकपारिपाश्विका नटविदूषकपारिपाश्विका नटनटीविदूषकप्रारपाश्विकाश्चेति निर्ग-लितोऽर्थः । अत एवोक्तम्—'नटो विदूषको वाऽपि नटी वा पारिपाश्विकः । एषु द्वौ वा त्रयो यत्र सर्वे वा स्थापकान्विताः । आमुखं तद्विजानीयान्नाम्ना प्रस्तावनां च ताम् ।' इति । **चित्रैरनेक**विधैः । **स्वकार्य्योत्थैः** स्वस्य स्वस्या वा कार्यं **कर्त्तव्यं** कर्म्म तस्मादुत्थानि तस्यानुकूलतयोपस्थतानि तैस्तथोक्तैः । अत एव-प्रस्तुताक्षेपिभिः प्रस्तुत स्वस्वप्रवेशाहतया प्रसङ्गानुप्रसक्तमाक्षिपन्तीति तथोक्तैः । **वाक्यैः** । **मिथः** परस्परम् । **संल्लापं** सम्भाष-णाम् । **कुर्वते** । **तत्** । **तु** 'चे'ति पाठान्तरम् । **आमुख** प्रारम्भद्वारमिति भावः । **विज्ञेयम्** । **नाम्ना** प्रसिद्धया । **सा** यच्छब्देन निर्दिष्टेति भावः । **प्रस्तावना** । **अपि** । 'मता इति शेषः ॥ ३२८ ॥ ३२९ ॥

कारिकाया दुर्बोधांशं स्पष्टयति—**सूत्रधारसदृशत्वात्** सूत्रधारेण सदृशः समानः सूत्रधारवत् कार्य्यकर्त्ता तस्य भावस्तत्त्वं तस्मात् तथोक्तात् कारणादित्यर्थः (३२२ पूर्वरङ्गं विधायैव सूत्रधारो निवर्त्तते । प्रविश्य स्थापक-स्तद्वत् काव्यमस्थापये'—दित्युक्तदिशा प्रकृते साक्षात् सूत्रधारस्यासम्भवादिदमुक्तम्) । **स्थापकः** । **अपि** । **सूत्रधारः** । **उच्यते** 'उपचारादि' ति शेषः । **तस्य** स्थापकनटस्येत्यर्थः । **अनुचरः** । **पारिपाश्विकः** परिपाश्र्वे वर्तते इति तथोक्तः । सहायकतया पार्श्ववर्ती नट इति भावः ['परिमुखं च ।' ४/४/२८ इति ठक्] इदं च बोध्यम्—अस्यानुचरत्वेपि मारिष इति पदेन सम्बोध्यत्वम् । इति । **तस्मात्** पारिपाश्र्वकादित्यर्थः । **किञ्चित्** । **ऊनो** हीनगुम इत्यर्थः । **नटः** । यद्वा—तस्मात् स्थापकात् किञ्चिदून इत्यर्थः । अतः—स्थापकनटस्य गृहिणी एव नटी, साऽपि नटवत्किञ्चिदूना भवतीति निगदव्याख्यातम् । विदूषकः पुनर्यथाऽर्तनामैवेति बोध्यम् ।

**उद्घात्य(त) कः कथोद्घातः प्रयोगातिशयस्तथा ।**

**प्रवर्तकावलगिते पञ्च प्रस्तावनाभिदाः ॥ ३३ ॥**

तत्र—

**पदानि त्वगतार्थानि तदर्थगतये नराः ।**

**योजयन्ति पदैरन्यैः स उद्घात्य(त) क उच्यते ॥ ३४ ॥**

यथा मुद्राराक्षसे सूत्रधारः—

**"क्रूरग्रहः संकेतुश्चन्द्रमसंपूर्णमण्डलमिदानीम् ।**

अभिभवितुमिच्छति बलात्—'

इत्यनन्तरम्—'(नेपथ्ये ।) आः, क एष मयि जीवति चन्द्रगुप्तमभिभवितुमिच्छति'इति ।

अत्रान्यार्थवन्त्यपि पदानि हृदयस्थार्थागत्या अर्थान्तरे संक्रमय्य पात्रप्रवेशः ।

---

## विवृतिः

पदानीति । अप्रसिद्धतया अगतोऽप्रतीतोऽभिप्रेतार्थो येभ्यस्तानि । तदर्थगतये अभिप्रेतार्थबोधाय । योजयन्ति अभिप्रेतार्थे संक्रमयन्ति । अन्यैरभिप्रेतार्थमात्रप्रतिपादकैः ॥

क्रूरोऽनिष्टफलदायी । स प्रसिद्धः । अत्र चन्द्रपदस्य चन्द्रगुप्तपदयोगेन क्रूरग्रहादिपदानामभिप्रेतार्थप्रत्ययो भवति । तथाहि—क्रूरो ग्रह आशयो यस्य सः । चन्द्रं चन्द्रगुप्तम् । (अ)संपूर्ण मण्डलं राज्यचक्रं यस्य । अर्थवन्त्यपि अभिप्रेतार्थप्रीतीतियोग्यान्यपि । हृदयस्थार्थागत्या अभिप्रेतार्थप्रत्ययेन उपलक्षितानि ।

## विवृतिपूर्तिः

उद्घात्यक इति । दशरूपके तु—'गूढार्थपदपर्यायमाला प्रश्नोत्तरस्य वा । यत्रान्योन्यं समालापो द्वेधोद्घात्यं तदुच्यते ॥' इति तल्लक्षणमुक्तम् । गूढार्थं पदं तत्पर्यायश्चेत्येवं माला, प्रश्नोत्तरं चेत्येवं वा माला । द्वयोरुक्तिप्रत्युक्तौ तद् द्विविधमुद्घात्यकम् । तत्राद्यं विक्रमोर्वस्यां यथा—'विदूषकः—भो वअस्स, को एसो कामो जेण तुमं पि दुमिज्जसे । सो किं पुरिसो आदु इत्थिअत्ति । राजा—सखे, मनोजातिरनाधीना सुखेष्वेव प्रवर्तते । स्नेहस्य ललतो मार्गः काम इत्यभिधीयते ॥ विदूषकः—एवं पि ण जाणे । राजा—व्यस्य, इच्छाप्रभवः सः । विदूषकः—किं जो जं इच्छदि सो तं कामेदित्ति । राजा—अथ किम् । विदूषकः—ता जाणिदं जह अहं सूअआरसालाए भोअणं इच्छामि ।' द्वितीयं यथा पाण्डवानन्दे—'का श्लाघा गुणिनां क्षमा, परिभवः को यः स्वकुल्यैः कृतः, किं दुःखं परसंश्रयो, जगति कः श्लाघ्यो य आश्रीयते । को मृत्युर्व्यसनं, शुचं जहति के यैर्निर्जिताः शत्रवः, कैर्विज्ञातमिदं विराटनगरे च्छन्नस्थितैः पाण्डवैः ॥'

क्रूरेति । सकेतुः सपातः क्रूरग्रहो राहुः इदानीमसंपूर्णमण्डलम् अपरिपूर्णबिम्बं चन्द्रं बलात् हठात् अभिभवितुमाक्रमितुमिच्छति प्रवणीभवति । शिलष्टार्थस्तु—सकेतुः मलयकेतुना सह । क्रूरे कर्मणि कूटव्यवहारे ग्रह

आसङ्गो यस्य तादृशः। अमात्यराक्षस इत्यर्थः। इदानीमसंपूर्णमण्डलमचिरराज्याभिषिक्ततया अव्याहताज्ञाभावेन अस्वाधीनप्रकृतिमण्डलं चन्द्रं चन्द्रगुप्तं बलाद् बलं सामर्थ्य मित्रादिसैन्यं वा आश्रित्य अभिभवितुं पराभवितुमिच्छति। 'बलात्' इति ल्यब्लोपे पञ्चमी। एतेन चन्द्रगुप्तं प्रति समलयकेतोरमात्यराक्षसाद्भयमाशङ्कमानस्य चाण्क्यस्य प्रवेशः। तुरीयपादस्तु 'रक्षत्येनं तु बुधयोगः' बुधेन सह चन्द्रस्य योगः एनं चन्द्रं रक्षति ग्रहाद्वारयति। तथा चोक्तं गर्गेण—'पञ्चग्रहसमायोगं दृष्ट्वा सौम्यविवर्जितम्। ग्रहणं तु वदेत्तत्र सबुधं न ग्रहं वदेत्॥' इति। वस्तुतस्तु गणितगोलविरुद्धत्वाचिन्त्यमेतत्। शिलष्टार्थस्तु—बुधश्चाणक्यः, तद्योगः, क्रियाकौशलमेनं चन्द्रगुप्तं रक्षतीति तदर्थः॥

## विज्ञप्रिया

ईदृशीं प्रस्तावनामुक्तत्वा तस्याः पञ्चभेदानाह—उद्घात्यक इति।

तत्र उद्घात्यकलक्षणमाह—पदानीति। अगतार्थानि इत्यत्रार्थोयोजकवक्तृहृदयस्थितोऽर्थः। तदर्थगतय इति। पदद्वयेऽवगतिपरोऽगमिः। तथा च वक्त्रा स्थापकेनानवगतादृशार्थानि स्वोच्चरितपदानि, तदर्थस्य योजकनरहृदयस्थितस्यार्थस्यावगतयेऽन्यैः स्थापकोच्चारितभिन्नैः पदैर्योजयन्ति। स्वहृदयस्थितार्थतां प्रतिपादयन्तीत्यर्थः।

क्रूरग्रहेति—चन्द्रग्रहणं भविष्यति इति प्रतिपादयतः स्थापकस्योक्तिरियम्। स क्रूरग्रहः केतू राहुरित्यर्थः। एषां पदानां चन्द्रगुप्तनृपतिमन्त्रिणा चाणक्यब्राह्मणरूपनरेण राक्षसरूपात् क्रूरग्रहात् क्रूरो ग्रहो यस्य तस्मात्। चन्द्रगुप्तनृपत्यभिभवरूपे स्वहृदयस्थितेऽर्थे संक्रमः कृतः। तादृशार्थता दर्शितेत्यर्थः। तदाह—अत्रार्थवन्त्यपीति। राहुचन्द्ररूपार्थवन्त्यपीत्यर्थः। हृदिस्थोऽर्थो राक्षसचन्द्रगुप्तरूपः। पात्रं चाणक्यः।

## लोचन

क्रूरग्रहेति—क्रूरो दारुणग्रहो राहुः, पक्षे-क्रूरो दारुणो ग्रह आग्रहः चन्द्रगुप्ताभिभवरूपः यस्य। चन्द्रं शशिनं चन्द्रगुप्ताख्यं राजानञ्च।

पदानि क्रूरग्रह इत्यादीनि। हृदिस्थः सूत्रधारस्येत्यर्थः। प्रकृतश्चन्द्रोपरागरूपस्तस्यागत्याऽबोधेन। अर्थान्तरे प्रकृतग्रन्थाभिधेये। अत्राह भाण्डिः—

**विस्मृतं न प्रतीतं वा यत्र वाक्यं प्रकाश्यते।**
**प्रश्नोत्तरमनोहारी स उद्घात्यक उच्यते॥**

यथा पाण्डवाभ्युदये—

**का श्लाघा गुणिनां क्षमापरिभवः कोऽक्षः सुकुल्यैः कृतः**
**किं दुःखं परसंश्रयो जगति कः श्लाघ्यो य आश्रीयते।**
**को मृत्युर्व्यसनं गुणं दधति के यैर्निर्जिता शत्रवः**
**केन ज्ञातमिदं विराटनगरे छन्नस्थितैः पाण्डवैः॥**

अतः सूत्रधारनिष्क्रान्तौ पाण्डवप्रवेशः।

## कुसुमप्रतिमा

उद्घात्यक इति । प्रवर्त्तकञ्च अवलगितञ्चेति प्रवर्त्तकावलगिते द्वे ।

पदानीति । नराः प्रवेशं करिष्यन्ती जनाः । अत्र बहुवचनविवक्षितम् । न गता अनेकतया नावधारिता अर्थाः स्वाभिप्रेतविषया येभ्यस्तानि आगतार्थानि पदानि तेषां स्वाभिप्रेतार्थानां गतये अवधारणाय. अन्यैः स्वाभिप्रेतार्थ-प्रतिपादकैः पदैः यत् योनयन्ति स्वाभिप्रेतार्थे संक्रामयन्ति, स उद्घात्यको नाम प्रस्तावनाभेद । प्रवेष्टु रभिप्रेतार्थेन वक्तु रभिप्रेतार्थ उदग्धन्वते तिरोधीयत इति उद्घात्यकः उत्पूर्वहनधातोः कर्म्मणि ध्वण् प्रत्ययात् स्वार्थे कप्रत्ययः ।

क्रूरेति । क्रूरः अशुमफलदातृतया हिं स्रस्वभावी ग्रहः क्रूरग्रहः पापग्रह इत्यर्थः, अन्यत्र तु क्रूरबुद्धिः । स प्रसिद्धः केतुरेकशरीरत्वेनाभेदात् राहुरित्यर्थः, अन्यत्र तु केतुना मलयकेतुना सहेति सकेतुः राक्षसः । इदानीं पूर्णमण्डलं चन्द्रमसं चन्द्रम्, अन्यत्र तु असम्पूर्णमण्डलम् अधिराधिष्ठितत्वात् असम्यंगजातराज्याधिपत्यम् चन्द्रं चन्द्रगुप्तम्, बलात् अभिभवितुं ग्रसितुं पराजेतुश् इच्छति ।

लक्ष्ये लक्षणं सङ्गमयितुमाह अत्रेति । अत्र सूत्रधारोकतौ, अन्वार्थवन्तयपि पापग्रह-राहु-पूर्णमण्डल चन्द्ररूपान् वक्तुरभिप्रेतान् अर्थान् यथाक्रमं बोधयन्त्यपि, पदानि "कूरूग्रहः" "सकेतुः" "चन्द्रमसम्पूर्णमण्डलम्" इत्येतान् शब्दान्, हृदयस्थानां चावक्यचित्तवर्त्तिनां चाणक्येन सम्भावितान-मित्यर्थः अर्थानां क्रूरबुद्धि-मलयकेतु-सहित राक्षससम्यगसम्पन्नराज्याधिपत्य चन्द्रगुप्तरूपाणां प्रतिपाद्यविषयाकाम् अगत्या वक्तुस्तात्पर्य्यसं शयाद-नवधारणेन, अर्थान्तरे वक्तुरभिप्रेतार्थभिन्नार्थऐ स्वाभिप्रेतक्रुरबुद्धिप्रभृत्यर्थे सङ्क्रमप्य चन्द्रगुप्तमिति गुप्तशब्दपर्य्यन्तोल्लेखेन सञ्चार्य्य पात्रस्य चाणक्यस्य प्रवेश

सूत्रेति । सूत्रधारस्य वाक्ये समादाय अविकलमेव सूत्रधारवाक्यमुच्चार्य्य, अथवा अस्य सूत्रधारवा-क्यस्य अर्थं प्रतिपाद्यविषयं समादाय सूत्रधाराभिप्रेतप्रकारेणैव विभाव्य, चेद्यदि पात्रस्य इतिवृत्तान्तर्गतजनस्यप्रवेसो भवेत्, तदा स कथोद्घाती नाम प्रस्तावनाभेद उच्यते । व्यथया सूत्रधारवाक्ये न उद्घातः पात्रोपस्थितिरिति कथोद्घातः ।

पूर्वत्र सूत्रधाराभिप्रतार्थस्य पात्रेणार्थान्तरे परिणमन्, अत्र तु सूत्रधाराभिप्रे तार्थस्यैव पात्रेण यथायथं ग्रहणमित्युभयोर्भेदः ।

क्रूरग्रह इति ।—क्रूरः,—अनिष्टफलदत्वेन निष्ठुरः, ग्रहः,—राहुः, सकेतुः,—सपातः, चन्द्रतुल्यक्रान्तिस्थ इत्यर्थः, इदानां—सम्प्रति, असम्पूर्णमण्डलम्—अपरिपूर्णबिम्बं, चन्द्रं, बलात्—हठात्, अभिभवितुम्—आक्रमितुं, ग्रसितुमिति यावत्, इच्छति—प्रवणीभवति ।

अत्रेति ।—अत्र अन्यार्थवन्ति यथा,—क्रूरः ग्रहः,—आशयः, यस्य तथोक्तः, अथवा—क्रूरे—क्रूरक-र्म्मणि, कूटव्यवहारे इत्यर्थः, ग्रहः,—आसङ्गो यस्य तथाविधः, सकेतुः,—मलयकेतुना सह वत्र्तमानः, राक्षसः इत्यर्थः, इदानीमसम्पूर्ण मण्डलम्—अचिरराज्याभिषिक्ततया स्वस्य सम्यगाज्ञाप्रचाराभावेन अस्वाधीनप्रकृतिमण्डलं, चन्द्र—चन्द्रगुप्तं, बलात्,—बलं सामर्थ्यं, मित्रादिसैन्यं वा, आश्रित्य (ल्यब्लोपे पञ्चमी) अभिभवितुं—पराभवितुम्, इच्छति ।

## विमला

प्रस्तावनाभेदानाह, उद्धघात्यक इति ।—स्पष्टम् ।

उद्घात्यकमाह, पादानीति ।—अगत:,—अप्रसिद्धतया अप्रतीत:, अर्थ:,—अभिप्रेतार्थ:, येभ्य: तानि अगतार्थानि—अबोधिताभीष्टार्थानि इत्यर्थ:, पदानि तदर्थओ गतये—तदर्थस्य—अभिप्रेतार्थस्य, गतये—बोधाय, नरा: (यत्र) अन्यै:,—अभिप्रेतार्थ मात्रप्रतिपादकैरित्यर्थ: पदै: योजयन्ति—अभिप्रेतार्थे सङ्क्रमयन्ति, स उद्घात्यक उच्यते ।

## लक्ष्मी

ईदृशीं प्रस्तावनामभिधाय तस्या: पञ्चभेदानाह—उद्घात्यक इति । प्रवर्त्तकञ्च अवगलितञ्चेति प्रवर्त्तकावगलिते द्वे ।

उद्देश्यक्रमप्राप्तमुद्घात्यकं प्रथमं निरूपयति—पदानि त्वगतार्थानीति । नरा: नाट्यशालायां प्रविशन्तो लोका: बहुवचनमत्राविवक्षितम्, अप्रसिद्धतया न गता न निश्चिता अर्था योजकवक्तृहृदयस्थविषया येभ्यस्तानि तथोक्तानि पदानि तेषां योजकवक्तृहृदयस्थविषयाणामर्थानां गतये निश्चयाय अन्यै: स्थापकोच्चारितभिन्नै: स्वाभिप्रेतार्थमात्रप्रतिपादकै: पदै: यत् योजयन्ति स्वहृदयस्थितां प्रतिपादयन्ति, स 'प्रवेष्टुरभिप्रेतार्थे स्थापकस्याभिप्रेतार्थ उद्धन्यत अन्तर्लीयत इत्युद्घात्यको नाम प्रस्तावनाभेद: ।

उदाहरति—यथेति । मुद्राराक्षसे तदाख्ये विशाखदत्तविरचिते नाटके इत्यर्थ: । सूत्रधार: 'नटीं प्रत्याह' इति शेष: । क्रूरग्रह इति । चन्द्रग्रहणं भविष्यतीति प्रतिपादयत: स्थापकस्योक्तिरियम् । क्रूर: अशुभफलदानेन दारुण: ग्रह: पापग्रह इत्यर्थ:, पक्षे क्रूरे कर्मणि कूटव्यवहारे ग्रह: आग्रह: चन्द्रगुप्ताभिभवरूप: यस्य स तथोक्त अमात्यराक्षस इत्यर्थ: । स प्रसिद्ध: केतुरेकशरीरत्वेनाभेदात् राहुरित्यर्थ: । पक्षे तु केतुना मलयकेतुना 'नामैकदेशे नाम ग्रहणम्' इति न्यायात् सत्यभामेतिवत्, सह सकेतु: राक्षस: । इदानीं पूर्णमण्डलं परिपूर्णबिम्बं चन्द्रमसे चन्द्रम्, पक्षे तु असम्पूर्णमण्डलम् अचिरराज्याधिरूढतया अव्याहताज्ञाभावेन अस्वाधीनप्रजामण्डलम् । 'मण्डलं परिधौ कोष्ठे देशे द्वादशराजसु । क्लोबेऽथ निवहे बिम्बे त्रिषु पुंसि तु कुक्कुरे ॥' इति मेदिनी ।

चन्द्रं चन्द्रगुप्तम्, बलात् हठात् पक्षे बलं सामर्थ्यं मित्रादिसैन्यं वा आश्रित्य अभिभवितुं ग्रसितुं पक्षे पराजेतुम्, इच्छति अभिलषति बलादिति ल्यवलोपे पञ्चमी । एतत्पद्यस्य चतुर्थपादस्तु—'रक्षत्येनं तु बुधयोग:' इति । तु किन्तु बुधेन स्वसुतेन सह चन्द्रस्य योग: एनं चन्द्रं चन्द्रमसं रक्षति, पक्षे बुधेन चाणक्येन सह चन्द्रस्य चन्द्रगुप्तस्य योग: क्रियाकौशलम् एनं चन्द्रगुप्तं रक्षयति दुष्टराक्षसाद्वारयति । बुधाचन्द्ररक्षा भवतीति चोक्तं गर्गाचार्येण—

'पञ्चग्रहसमायोगं दृष्ट्वा सौम्यविवर्जितम् । ग्रहणं तु वदेत्तत्र सबुधं न ग्रहं वदेत् ॥' इति ।

आर्याच्छन्दस्तल्लक्षणञ्चोक्तं प्राक् । अत्रेदमुक्तं भवति—चन्द्रोपरागनिमित्तं ब्राह्मणान् भोजयितुं पाक: सम्पद्यत इति नटया कथितं श्रुत्वा साङ्गे ज्योति:शास्त्रे निपुणोऽस्मि नाद्योपराग:, तत्केनाऽपि प्रतारिताऽसि इत्यभिधाय सूत्रधार:—'आ: साम्प्रतं चन्द्रमसं पूर्णमण्डलं सकेतु: क्रूरग्रहोऽभिभवितुं बलात् कामयते न पुन: प्रभावयिष्यति' इत्यभिहितम् ।

इत्यनन्तरमिति । नेपथ्ये वेषे उपचारात् भूमौ तत्स्थाने 'नेपथ्यं तु प्रसाधने । रङ्गभूमौ वेषभूमौ' इति हैम: । आ: क एष मयि(चाणक्ये) जीवति सति सप्तमीयम् । चन्द्रगुप्तं तत्संज्ञकप्रकृतनन्दात् सुरनाम्नयां दास्यामुत्पन्नं चाणक्य साहाय्येन योगानन्दं निहत्य तद्राज्येऽभिषिक्तं राजानमित्यभिप्राय: । अभिभवितुं राज्याद्भ्रंशयि तु म् इच्छति अभिलषतीति ।

लक्ष्ये लक्षणं सङ्गमयितुमाह—अत्रेति। सूत्रधारोक्तावित्यर्थः, अन्यार्थवन्त्यपि पापग्रह—राहुपूर्णमण्डल—चन्द्ररूपान् स्थापकस्याभिप्रेतानर्थान् प्रतिपादयन्त्यपि पदानि क्रूरग्रह' सकेतु—चन्द्रमसम्पूर्णमण्डलम् इत्येतान् शब्दान् हृदयस्थानां चाणक्यहृदयस्थितानाम् अर्थानां चन्द्रगुप्ताभिभवरूप—मलयकेतुसहितराक्षस,-**अस्वाधीनप्रजामण्डल—**चन्द्रगुप्तरूपाणां प्रतिपाद्यानाम्, प्रकृतश्चन्द्रोपरागरूपस्तस्यागत्याऽबोधेन अर्थान्तरे **प्रकृताभिनयग्रन्थाभिधेये चन्द्रगुप्ताभिभवरूपप्रभृत्यर्थे संक्रमय्य चन्द्रपदेन गुप्तान्तपदपर्यन्तल्लेखेन सञ्चार्य पात्रप्रवेशः चाणक्यप्रवेशः।**

## रुचिरा

अथामुखापरपर्य्यायायाः प्रस्तावनाया भेदनाह,—३२४ **उद्घात्यक** उद्घाते आरम्भे साधुरित्युद्घात्यः, स एवेति तथोक्तः ['तत्र साधुः।' ४/४/९८ इति यदि कृते स्वार्थे कः] ("स्यादभ्यादानमुद्घात आरम्भः" इत्यमरः)। कथोद्घातः कथाया उद्घात आरम्भइति तथोक्तः। **प्रयोगातिशयः** प्रयोगस्यातिशयो भावव्यञ्जकत्वेनोत्कर्षो यत्रेति तथोक्तः। तथा। **प्रवर्त्तकावलगिते** प्रवर्त्तकं चावलगितं चेति तथोक्ते। प्रवत्तयतीति प्रवत्तकम्। अवलग्यते स्म संसज्यते स्मेति अवलगितम्। इति—**पञ्च**। **प्रस्तावनाभिदाः** प्रस्तावनाया भिधा भेदाः [भिद्-क्विप्-टाप्]॥ ३३०॥

अथोद्घात्यकादीनां लक्षणं प्रदर्शयितुमाह—**तत्र** तेषूद्घात्यकादिषु मध्ये इति भावः। ३२५ **अगतार्थानां** नगतोऽऽवगतोऽर्थो येषां तथाभूतानाम्। **पदानाम्**। **अर्थगतये**ऽर्थावगमाय। **तानि** आगतार्थानि अनवगतार्थानि पदानि इत्यर्थः। 'यत्रे' ति शेषः। अन्यैः प्रस्तुतोपयुक्तार्थप्रत्यायकैरिति भआवः। पदैः (सहार्थेयं तृतीया)। नटाः (नरा इति पाठान्तरम्)। **योजयन्ति** सन्निधापयन्ति अभिप्रेतप्रस्तुतार्थतया समर्थयन्ते इति यावत्। **सः**। **उद्घातकः उच्यते**। अयम्भावः कथमपि केनापि शिलष्टार्थानि पदान्युच्चरितानि, तानि च निशम्य तदन्ये पुनः यत्र प्रकृतोपयुक्ततां प्रदर्शयन्ति, स उद्घात्यको नाम प्रस्तावनां। नटा इति बहुवचनं त्वविवक्षितम्। इति। ३३१॥

उदाहरति—**यथा**। **मुद्राराक्षसे**। तदाख्ये विशाखदत्तविरचिते नाटके इत्यर्थः। "**सूत्रधारः**। 'नटों प्रत्याहे ति शेषः"इदानीमस्मिन् समयो **सकेतुः** केतुनोत्पातग्रहेण सह वर्त्तते इति तथोक्तः। **क्रूरग्रहः** क्रूरो ग्रासवर्त्तृतयोत्पात—केतूदयकालिकतया भयङ्करोऽसौ ग्रहो राहुरिति तथोक्तः। यद्वा-स प्रसिद्धः। क्रूरग्रहो भयङ्करात्मा ग्रहविशेषः। केतुर्लक्षणा राहुरित्यर्थः। **पूर्णमण्डलं** सर्वाभिः कलाभिः परिपूर्णमित्यर्थः। चन्द्रमसं चन्द्रम्। **बलात्**। अभिभवितुं तिरस्कर्तुं ग्रसितुमिति यावत्। **इच्छति**।' [**इति** 'एवम्' इति शेषः। **अर्द्धोक्ते** अर्द्धमसम्पूर्णमुक्तं तत्र तथाभूते सतीत्यर्थः। असम्पूर्णत्वं च "राक्षत्येनं तु बुधयोगः॥" इत्यवशिष्टत्वादिति बोध्यम्] **नेपथ्ये** वेषोपकल्पनगृहे। 'केनापि उद्घोष्यते' इति शेषः। आः! कष्टं चित्रं वेत्यर्थः। 'आः स्मरणेऽपाकरमे कष्टे कोपविकासने।' इति गोपालः। 'केनापि उद्घोष्यते' इति शेषः। आः! कष्टं चित्रं वेत्यर्थः। 'आः स्मरणेऽपाकरणे कष्टे कोपविकासने।' इति गोपालः। **कः**। **एषः** 'सकेतुः क्रूरग्रहः' इति शेषः। **मयि** वक्तरि श्रोतरि वा (चाणक्ये) इति भावः। **जीवति** 'सती'ति शेषः। **चन्द्रगुप्तम्**। **अभिभवितुं** तिरस्कर्तुं राज्यात् पुनः प्रच्योतयितुमिति यावत्। **इच्छति** कामयते। अत्रार्य्याच्छन्दः। तुर्यपादोऽस्य "रक्षत्येनं तु बुधयोगः॥" **इति**।" इति। इदमुक्तम्—चन्द्रोपरागनिमित्तं ब्राह्मणान् भोजयितुं पाकः सम्पाद्यत इति नटयाऽभिहितमाकर्ण्य साङ्गे ज्योतिशास्त्रे निष्णातोऽस्मि नाद्योपरागः, तत् केनापि प्रतारिताऽसि। इत्युक्ता सूत्रधारः—"आः साम्प्रतं चन्द्रमसंपूर्णमण्डलं सकेतुः क्रूरग्रहोऽभिभवितुं बलात् कामयते, न पुनः प्रभविष्यति।" इत्युक्तम्। अत्र "रक्षत्येनं तु बुधयोगः॥" इत्यंशावशेषः। इति। [इति 'एव'मिति शेषः।

अर्द्धोक्तेऽर्द्धं लक्षणयाऽसम्पूर्णमुक्तं तथाभूते 'सती'ति शेषः] नेपथ्ये वेषे उपचारात् भूमौ तत्स्थाने। 'नेपथ्यं तु प्रसाधने। रङ्गभूमौ वेषभूमौ' इति हैमः। आः! कः। एषः। मयि (चाणक्ये) जीवति सतिसप्तदमीयम्। चन्द्रगुप्तं तदाख्यं प्रकृतनन्दासुरानाम्न्यां दास्यामुद्भूतं चाणक्यसाहाय्येन योगानन्दं निहत्य तद्राज्येऽभिषिक्तं राजानमिति भावः। अभिभवितुं राज्याद्भ्रंशयितुम्। इच्छतीति। अयम्भावः—'क्रूरग्रहः...बलात्' इत्येव निशम्य तस्य च सकेतुः केतुना मलयकेतुना सह वर्त्तते इति तथोक्तः। क्रूरग्रहः क्रूरे कूटव्यवहारे ग्रह आग्रहो यस्येति तथोक्तः। "अमात्यपदप्रतिष्ठितो राक्षसाख्यः पण्डित"इति शेषः। इदानीमभिषेकतः कलात्यन्तानत्ययावसरे इति भावः। अत एव—असम्पूर्णमण्डलं न सम्पूर्णं दस्यूपद्रवशान्त्यादिना पूर्णाधिकारं मण्डलं देशो राज्यमिति यावत् यस्य तथोक्ताम्। 'मण्डलं परिधौ कोष्ठे देशे द्वादशराजसु। क्लीबेऽथ निवहे बिम्बे त्रिषु पुंसि तु कुक्करे॥' इति मेदिनी। चन्द्रं चन्द्रगुप्तम्। अभिभवितुं राज्याद्भ्रंशयितुम्। बलाद्बलं मित्रादिसाहाय्यं प्राप्येत्यर्थः। ल्यब्लोपे पञ्चमी इच्छति।" इत्यर्थं चानुसन्धाय (नेपथ्यगहे स्थितेन) चाणक्येनाभिहितम् "आः! क एषः! मयि जीवति चन्द्रगुप्तमभिभवितुमिच्छती"ति। एवं च—तथाऽऽमर्षोदये चाणक्यस्य प्रादुर्भावः स्थाने। इति।

अत्र तात्पर्य्यं निर्दिशति—**अत्रेत्यादिना**।

**अत्रास्मिन्नुदाहृते**ऽशे इत्यर्थः। **अन्यार्थानि** अन्यश्चन्द्रोपरागसम्भवानवगमकतापरोऽर्थस्तात्पर्य्यं येषां तानि तथोक्तानि। **अपि**। **पदानि**। **हृदयस्यार्थगत्या** हृदये स्वमनसि तिष्ठतीति सोऽसायर्थस्तस्य गत्या सङ्गत्याऽऽनुकूल्येनेत्यर्थः। **अर्थान्तरे** द्वितीयेऽर्थे। **सङ्क्रमय्य** परिणमय्य। **पात्रप्रवेशः** पात्रस्य चाणक्यरूपस्य पुरुषस्य (नाटकीयात्मनाऽवस्थितस्य) प्रवेशः। अयम्भावः—"क्रूरग्रह..."इत्यादेः सूत्रधारेणोक्तस्य स्वानुकूल्येन तात्पर्य्यं निर्दिशन् चाणक्यः प्रविष्टः। अतः—अत्रास्फुटार्थानां क्रूरग्रहादिपदानामन्यथायोजनादुद्धात्यको नाम प्रस्तावना। इति।

३२६ **चेद्** यदि। **सूत्रधारस्य**। **वाक्यम्**। **वा**। अस्य वाक्यस्येत्यर्थः। **अर्थम्**। **समादाय** गृहीत्वा। **वा** (इदं च वाक्यालङ्कारे)। **पात्रप्रवेशः**। **भवेत्**। 'तर्हि' ति शेषः। **सः** प्रसिद्ध इति भावः। **कथोद्घातः** तदभिधेया प्रस्तावनेति भावः। **उच्यते**॥ ३३२॥

उदाहरति—**वाक्यमित्यादिना**।

**वाक्यं**। **यथा**। **रत्नावल्यां** तदाख्यायां श्रीहर्षनृपतिकृतायां नाटिकायामिति भावः। **"द्वीपा"**रित्यादौ।

**"अभिमुखीभूतः** अनुकूलतां आप्त इति भावः। **विधिर्दैवम्**। 'विधिर्विधघाने दैवेऽपि'इत्यमरः। **अन्यस्मात्** स्वसन्निहितद्वीपतो भिन्नादिस्यर्थः। **अपि** 'किं पुनस्तस्मादेवे'ति शेषः। द्वीपात्। यथा स्वसन्निहितो द्वीपो जम्बूनामा, तस्मात् भिन्नः प्लक्षाद्यन्यतम् इति बोध्यम्। **जलनिधेः** समुद्रस्य। **मध्यात्**। अपि किं पुनस्तन्निकटा'दिति शेषः।' **दिशः** पूर्वाद्यन्यत्तमायाः काष्ठाया उपचारात्तदुपलक्षितस्य दविष्ठस्य देशस्येत्यर्थः। **अन्तात्**। **अपि** 'किं पुनर्निकटात्' इति शेषः। **आनीय** प्रापय्य। **झटिति** विना विलम्बम्। **अभिमतं** वाञ्छितमर्थमिति भावः। **घटयति** सङ्गमयति। अत्रार्य्याछन्दः, "यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि अष्टादश द्वितीये चतुर्थके पञ्चदशसाऽऽर्य्या।" इति॥ २३०॥"

**सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा ।**

**भवेत्पात्रप्रवेशश्चेत्कथोद्धातः स उच्यते ।। ३५ ।।**

वाक्यं यथा रत्नावल्याम्—'द्वीपादन्यस्मादपि—' इत्यादि (२८१ पृ.) सूत्रधारेण पठिते—'(नेपथ्ये ।) एवमेतत् । कः संदेहः । द्वीपादन्यस्मादपि—' इत्यादि पठित्वा यौगंधरायणस्य प्रवेशः ।

वाक्यार्थो यथा वैण्याम्—

**निर्वाणवैरदहनाः प्रशमादरीणां**

**नन्दन्तु पाण्डुतनयाः सह माधवेन ।**

**रक्तप्रसाधितभुवः क्षतविग्रहाश्च**

**स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ।।**

इति सूत्रधारेण पठितस्य वाक्यास्यार्थ गृहीत्वा—'(नेपथ्ये) आः दुरात्मन् ! वृथामङ्गलपाठक, कथं 'स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः ।' ततः सूत्रधारनिष्क्रान्तौ भीमसेनस्य प्रवेशः ।

---

## विवृतिः

समादाय कथयित्वा । अस्य सूत्रधारवाक्यस्य ।।

निर्वाणेति । अरीणां दुर्योधनादीनाम् । प्रशमात् शान्त्यवलम्बात् । रक्तेन अनुरागेण प्रसाधिता वशीकृता भूर्यैस्ते । क्षतविग्रहा भग्नकलहाः । कुरुराजसुता धार्तराष्ट्राः ।

द्वितीयार्थस्तु—अरीणां प्रशमात् मरणात् । रक्तैः रुधिरैः प्रसाधिता मण्डिता भूर्यैः । क्षतविग्रहा विक्षतशरीराः । स्वस्थाः पारलौकिकसुखेन तृप्ताः । अत्र सूत्रधारवाक्यस्य कुरुराजसुतपदार्थमादाय पात्रस्य भीमस्य प्रवेशः । आर्याह्वानेन सूत्रधारभार्याह्वानेन ।।

## विवृतिपूर्तिः

कथोद्धात इति । काव्येन्दुप्रकाशे तु—'हृदिस्थानामर्थवतां पदानामन्यथाकृतेः । यः पात्रस्य प्रवेशः स्यात्स कथेद्धात इष्यते ।।' इति समाम्नातम् । तत्र पदभङ्गरूपमर्थभङ्गरूपमिति । द्विविधमन्यथाकरणम् । आद्यस्य 'द्वीपादन्यस्मात्—' इत्युदाहरणम्; द्वितीयस्य तु 'निर्वाणवैरिदहनाः—' इति ।।

स्वस्था इति । स्वस्थाः स्वर्गस्था इति पक्षे 'खपरे शरि वा विसर्गलोपो वक्तव्यः' इति वार्तिकेन विसर्गलोपे न वैरूप्यम् ।।

## विज्ञप्रिया

कथोद्धातलक्षणमाह—सूत्रधारस्येति । इदानीं स्थापककृत्याभावात् सूत्रधार एव स्थापककृत्यं करोतीत्यभिप्रायेणाह—सूत्रधारस्येति । वाक्यादानं वाक्यानुकरणम् । अर्थादानं वाक्यानुकरणं विना तदर्थानुशीलनम् ।

द्वीपादिति— अत्र यौगन्धरायणमन्त्रिरूपपात्रस्य तद्वाक्यं पुनरनुकृत्य प्रवेश:

निर्वाणेति— पाराडुतनया: निर्वाणवैराग्नय: सन्तो माधवेन सह नन्दन्तु। कुरुराजसुताश्च दुर्योधनादयोऽनुरक्तप्रसन्नीकृतभूमिष्ठलोका त्यक्तयुद्धाश्च सन्त: सभृत्या: । स्वस्था भवन्तु इत्यर्थ: । अर्थं गृहीत्वेति । एतद् वाक्यानुकरणं विना तदर्थानुशीलनेनैव आ इत्याद्युक्तवत: भीमस्य प्रवेश: ।

## लोचन

निर्वाणेति— शम: कोपाद्यभाव: विनाशश्च । रक्ता रञ्जिता प्रसाधिता प्रकर्षेणा साधिता, रक्तेन रुधिरेणा प्रसाधिता माणिडताश्च । विग्रहो युद्धं देहश्च । स्वस्था: कुशलिन: स्वर्गस्थाश्च ।

## कुसुमप्रतिमा

इत्यादीनि अभिप्रेतार्थप्रतिपादकानि, अपि पदानि हृदिस्थस्य—अभिमतस्य, [अलुक् समास:] अर्थस्य—द्वितीयायंरूपस्य, अगत्या—अबोधेन, द्वितीयार्थस्य प्रतिपादनं नासीदिति बुद्धया इत्यर्थ:, अर्थान्तरे—द्वितीयार्थे, सङ्गमय्यं—तत्तच्छब्दात् स्पष्टत: अभिधाय इत्यर्थ: चन्द्रगुप्तं प्रतिसमलयकेतो: अमात्यराक्षसात् भयमाशङ्कमानस्य पात्रस्य—नटस्य, चाणक्यनेपथ्यभूतस्य इत्यर्थ:, प्रवेश: ।

## विमला

वाक्यमिति ।—अयं भाव:,—काव्येन्दुप्रकाशकृता "हृदिस्थानामर्थवतां पदानामन्यथाकृते: । य: पात्रस्य प्रवेश: स्यात् स कथोद्घात इष्यते ॥" इत्युक्त: कथोद्घात:, तत्तान्यथाकरणं पदभङ्गार्थभङ्गभेदाभ्यां द्विप्रकारकम्, इति कथोद्धातोऽपि द्विविध: "सूत्रधारस्य वाक्यं वा" इत्यादिना लक्षित इति बोध्यम् । अत:,—प्रथमस्योदाहरणम्—"द्वीपादन्यस्मात्" इति; द्वितीयस्य "निर्वाण" इति ।

निर्वाणेति ।—पाण्डुतनया:,—पाण्डवा:, माधवेन—कृष्णेन, सह अरीणां—शत्रूणां, दुर्य्योधनादीनामित्यर्थ:, प्रशमात्—सन्धिकरणे शत्रुभावापगमात्, अन्यत्र—युद्धे निधनात्, निर्वाणं—निवृत्तं, वैरस्य—विद्वेषस्य, दहनं—तापी येषां तथाभूता: सन्त:, एकत्र शत्रुत्यव्यपगमात् अन्यत्र शत्रुणां समूलमुच्छेदात् तद्विषयकविद्वेषनिवृत्त्या प्रशमिततज्जन्यसन्तापा इत्यर्थ:, नन्दन्तु—आनन्दमनुभवन्तु; [अत्र अरिप्रशमनरूपहेतोरन्वयोपपत्तये पूर्व्वपदार्थप्रधान: वैरं दहन इवेति उपमितसमासो ग्राह्य:, न तु वैरमेव दहन इति रूपकसमास:, तस्य उत्तरपदार्थप्रधानतया उक्तहेतोरन्वयानुपपत्ते: । अङ्ग "नन्दन्तु" इति पदस्य दु:खाभावपरत्वं बोद्धव्यं, दु:खसत्त्वे आनन्दानुदयात्, तथा च उक्तरूपविग्रह एव साधोयान्, न तु रूपकार्थबोधक: वैरमेव दहन इति विग्रह:] । सभृत्या:,—सानुजीविन:, कुरुराजस्य—धृतराष्ट्रस्य, सुता:,—पुत्रा:,—पुत्रा: दुर्य्योधनादय इति यावत्, रक्तेन—अनुरागेण, प्रणयेनेत्यर्थ:, प्रसाधिता—आयत्तीकृता, भू:,—पृथिवी, यै: तादृश:, अन्यत्र—रक्तेन—स्वगात्ररुधिरेण, प्रसाधिता—अलङ्कृता, भू: यै: तथाभूता:, तथा क्षत:,—विनष्ट:, विग्रह:,—कलह:, सन्धिकरणादिति भाव:, येषां तादृशा:, अन्यत्र—क्षता:,—व्रणिता:, विग्रहा:,—शरीराणि येषां, युद्धप्रहारादिति भाव:, तथाभूता: सन्त:, स्वस्था:,—सुखिन:, अन्यत्र—स्वर्गस्था:, मृता इत्यर्थ: ("सुस्थिते च मृते स्वस्थ:" इति कोष:) भवन्तु । [अस्मिन् पक्षे "खर्परे शरि वा विसर्गलोपो वक्तव्य:" इति विसर्गलोप:] एतेन कुरुराजसुतपदार्थमादाय पात्रस्य प्रवेश: सूचित: । वसन्ततिलकं वृत्तम् ।

## लक्ष्मी

अथ द्वितीयं प्रस्तावनाभेदं प्रतिपादयति—सूत्रधारस्येति। सूत्रधारस्य वाक्यं समादाय समग्रमेव सूत्रधारवाक्यमुच्चार्य्य वा अथवा सूत्रधारवाक्यस्यार्थं समादाय सूत्रधआराभिप्रायेणैव विचार्य्य, पूर्वत्र वाक्यादानं वाक्यानुकरणम्, अत्रार्थादानं वाक्यानुकरणं विना तदर्थानुशीलनमिति भेदः। चेद्यदि पात्रस्य इति वृत्तान्तर्गतलोकस्य प्रवेशो भवेत्, तदा कथयासूत्रधारवाक्येन उद्घातः पात्रोपस्थितिर्यत्र स कथोद्घातो नाम द्वितीयः प्रस्तावनाभेदः कथ्यते। उद्घात्यके सूत्रधाराऽभिप्रेतार्थस्य पत्रेणार्थान्तरे संक्रमणम्, अत्र तु तदभिप्रेतार्थस्यैव पात्रेण तत्त्वतो ग्रहणमित्यनयोर्भेदो ज्ञेयः।

उदाहरति—वाक्यमिति। रत्नावल्यां तदाख्यायां श्रीहर्षनृपतिकृतायां नाटिकायामिति भावः। द्वीपादिति। व्याख्यातमिदं पूर्वम्। सूत्रधारेण स्थापकेन नटेनेति यावत्। पठिते तत्कृतपाठान्तरमित्यर्थः। साधु सम्यक्। एवं यथा भवानाह—'द्वीपादन्यस्मादपि' इत्यादि तथेत्यर्थः। एतत् विधिप्रसादवैलक्षण्यमिति शेषः। संदेहः संशयः। यौगन्धरायणस्य तदाख्यनगर रक्षकस्य श्रीवत्सराजमन्त्रिण इत्यर्थः। इदमत्राभिहितं भवति देशान्तरे दातुं प्रतिज्ञाताया: पुत्र्याः कथं परिणयो भविष्यतीत्यावेगनिवृत्तये नटीं प्रति सूत्रधारेण तथाऽऽश्वासितम्। अत्र यौगन्धरायणमन्त्रिरूपपात्रस्य सूत्रधारवाक्य पुनरनुकृत्य प्रवेशात् प्रथमःप्रकारः कथोद्घात इति ज्ञेयम्।

वाक्यार्थ समादाय पात्रप्रवेशमुदाहरति—वाक्यार्थ इति। वेण्यां सत्या, भामेतिवत् नामैकदेशेन वेणीसंहारे तदाख्ये नारायणभट्टकृते नाटके इत्यर्थः।

निर्वाणवैरदहना इति। वैरं दहन इवेति वैरदहनः निर्वाणः प्रलुप्तः वैरदहनो येषां ते तथोक्ताः, अरीणां शत्रूणां दुर्योधनादीनाम् 'रिपौ वैरि सपत्नारि इत्यमरः, प्रशमात् सन्धिविधानेन शान्त्यवलम्बनात् निर्वाणवैरदहने चाऽयं हेतुः, पाण्डुतनयाः युधिष्ठिरादयः माया लक्ष्म्या धवो पतिर्यः सः तेन श्रीकृष्णेन सह, 'इन्दिरा लोकमाता मा' इत्यमरः। नन्दन्तु आनन्दं प्राप्नुवन्तु, रक्तेन अनुरागेण (भावे क्तः) प्रसाधिता वशीकृता भूः पृथिवी यैस्ते तथोक्ताः, अत एव क्षतः सन्धिविधानेन भग्नो विग्रहः कलहो येषां ते तथोक्ताः 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः, सभृत्याः सानुचराः कुरुराजसुताः धार्त्तराष्ट्राः दुर्योधनादयश्च स्वस्थाः सुस्थिता भवन्तु सन्तु, सन्धिविधानफलमुभयपक्ष एव जायतामिति भावः। द्वितीयार्थस्तु—अरीणां शत्रूणां प्रशमात् मरणात् निर्वाणवैरदहनाः पाण्डुतनयाः माधवेन सह नन्दन्तु। रक्तैः रुधिरैः प्रसाधिता मण्डिता भूर्यैस्ते तथोक्ताः रुधिरव्याप्तभूमय इत्यर्थः, क्षतविग्रहाः विक्षतशरीराः 'शरीरं वर्ष्म विग्रहः' इत्यमरः, कुरुराजसुताः (क)स्वस्थाः स्वर्गस्थसुखेन तृप्ता भवन्तु 'हतो वा प्राप्स्यसि स्वर्गम्' इति वचनात्। अत्र पक्षे (खर्परेशरि वा विसर्गलोपो वक्तव्यः) इति वार्त्तिकेन विसर्गलोपे वैरूप्यशङ्का नास्थेया। वसन्ततिलका छन्दः। अस्य पूर्वार्ध एव लक्ष्यम् उत्तरार्द्धस्य पताकाघटकत्वात्, अतश्च द्वितीयार्थस्य तत्रैवोपयोगः। अत एव चोत्तरार्द्ध एव द्वितीयपताकास्थान के उदाहृतम्।

लक्ष्ये लक्षणं सङ्गमयितुमाह—इति सूत्रधारेणेति। अर्थ गृहीत्वेति। तात्पर्यं गृहीत्वेत्यर्थः। एतद्वाक्यानुकरणं विना तदर्थानुशीलनेनैव 'आः' इत्याद्युक्तवक्तुः भीमसेनस्य प्रवेश इत्यन्तरं प्रथमार्थमादाय इति शेषः। अत्र द्वितीयः प्रकारः कथोद्घातः।

## रुचिरा

**इति। सूत्रधारेण** सूत्रधारेण स्थापकेन नटेनेति यावत्। **पठिते** तत्कृतपाठान्तरमिति भावः। "**(नेपथ्ये) साधु भरतपुत्र! साधु** सम्यक्!! **एवं** यथा भवानाह—"**द्वीपादन्यस्मादपि**" इत्यादि तथेति भावः। **एतत्** 'विधि-प्रसादवैलक्षण्यमिति शेषः!! **कः। सन्देहः** संशयः। "**द्वीपादन्यस्मादपि...**" **इति। पठित्वा। यौगन्धरायणस्य** तदाख्यस्य नगररक्षकस्य श्रीवत्सराज-राजमात्यस्येति यावत्। **प्रवेशः**। इदमुक्तम्—देशान्तरे दातुं प्रतिज्ञातायाः पुत्र्याः कथं परिणयो भविष्यतीत्यावेगनिवृत्तये नटीं प्रति सूत्रधारकेण तथाऽऽश्वासितम्। अत्र यौगन्धरायणस्य सूत्रधारवाक्यमादाय प्रवेश इति वाक्यात् पात्रप्रवेशो नाम कथोद्धातः। इति।

वाक्यार्थं समादाय पात्रप्रवेशमुदाहरति—**वाक्यार्थ** इत्यादिना।

**वाक्यार्थो। यथा। वेणीसंहारे** तदाख्ये नारायणभट्टकृते नाटक इति भावः। 'वेण्या'मिति पाठान्तरम्।

"**अरीणां** शत्रूणां कौरवाणामिति यावत्। **प्रशमात्** कंसारेरुपदेशात् वैरमपहायावस्थानादिति भावः। **निर्वाणवैरदहना** निर्वाणः प्रशान्तो वैरदहनो दहनोपमितं वैरं येषां तथोक्ताः। वैरं दहन इवेति वैरदहनः। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे।' २/१/५६ इत्युपमितसमासः। **माधवेन** माया रमाया मायाया वा धवः स्वामी तेन। 'मा मायायां रमायां च'इति गोपालः। 'धवः पुमान्नटे धूर्त्ते पत्यौ वृक्षान्तरेऽपि च।" इति मेदिनी। **सह। पाण्डुतनयाः** पाण्डोस्तनयाः पुत्रा युधिष्ठिराद्या इति भावः। **नन्दन्तु** राज्यांशं प्राप्य भीष्मादिभीतिशून्याः सन्तः सुखमनुभवन्त्विति भावः। **कुरुराजसुताः** कुरुराजस्य धृतराष्ट्रस्य सुताः पुत्रा दुर्योधनादय इति भावः। **च। सभृत्याः** भृत्यैरुपलक्षणेना-नुयायिभिश्च सह वर्त्तन्त इति तथोक्ता इति भावः। **रक्तप्रसाधितभुवो** रक्तेन रागेणानुरागेणेति यावत् प्रसाधिता अलङ्कृता अनुरञ्जिता इति यावत् भुवः भूविभागा भूर्वा यैस्तथोक्ताः। 'नपुंसके भावे क्तः। ३/३/११४ इति क्तः **क्षतविग्रहाः** क्षतो विनष्टो निवृत्त इति यावद् विग्रहो युद्धं येषां तथाभूताः। 'विग्रहः कायविस्तारविभागे ना रणेऽस्त्रियाम्। इति मेदिनी। "सन्त" इति शेषः। **स्वस्था** अनुद्विग्नाः। **भवन्तु**। अत्र वसन्तीतिलकं वृत्तम्, तल्लक्षणं च यथोक्तम् "वसन्ततिलकं त्भौ ज्गौ ग्।" इति॥ २३२॥"

**इति** 'एव' मिति शेषः। **सूत्रधारेण** सूत्रधारकेणेत्यर्थः। **पठितस्य। वाक्यस्य। अर्थं** तात्पर्य्यम्। **गृहीत्वा "नेपथ्ये। आः। पाप!** दुरात्मन्! **वृथामङ्गलपाठक! शैलूषापसद** शैलूषेषु नटष्वपसदोऽधमः इति तत्सम्बुद्धौ तथोक्त! 'नटे बिल्वे च शैलूष' इति रभसः।

**लाक्षागृहानल-विषान्न-सभाप्रवेशैर्लाक्षाया** गृहा लाक्षया निर्म्मितं स्थानं तत्र दत्तोऽनलोऽग्निरिति स च, विषान्नं विषस्यान्नं विषण सम्पृक्तमन्नमिति तच्च, सभायां द्यूतस्थाने प्रवेशः साभिनिवेशमाहूय प्रवेशनं चेति तैस्तथोक्तैः। **नो**ऽस्माकम्। **प्राणेषु** जीवितेषु। **वित्तनिचयेषु** वित्तानां स्वर्णादीनां निचयास्तेषु तथोक्तेषु। **च** (इदं समुच्चयर्थम्) **। प्रहृत्य** प्रहारं कृत्वेत्यर्थः। **पाण्डववधूपरिधानकेशान्** पाण्डवानां युधिष्ठिरादीनां वधूस्तस्या द्रौपद्या इत्यर्थः। परिधानमुत्तरीयं च केशाश्चेति तान् तथोक्तान्। **आकृष्य। मयि** 'भीमसेने' इति शेषः। **जीवति।** सतिसप्तमीयम्। धार्त्तराष्ट्रा धृतराष्ट्रस्यापत्यानि पुमांस इति तथोक्ता दुर्योधनादय इति भावः। **स्वस्थाः** (अत्र काकुः) **। भवन्तु** कथं भवन्त्विति भावः। यद्वा—स्वः स्वर्गे तिष्ठन्तीति स्वस्था मृता इत्यर्थः। "खपरि शरि वा विसर्गलोपो वक्तव्यः" **इति** विसर्गलोपः। भवन्तु। अत्र वसन्ततिलकं छन्दः, तल्लक्षणं च यथोक्तम्—'उक्तं वसन्ततिलकं तभजा जगौ गः।'इति॥ २३२॥"

**इति । निशम्य श्रुत्वा । पारिपार्श्विकसूत्रधारौ** पारिपाश्विकस्थापकौ । **निष्क्रान्तौ । भीमसेनस्य** । च । प्रवेशः । अत्रेदम्बोध्यम्—वेणीसंहारे "सूत्रधारकः । मारिष ! ननु प्रतिहतं सर्वममङ्गलम् । स्वयं प्रतिपन्नदौत्येन कंसारिणा । तथा हि—निर्वाणवैरदहनाः... ॥ (नेपथ्ये) साधिक्षेपम् । आः पाप ! दुरात्मन् ! शैलूषापसद !लाक्षागृहनल... ॥ सूत्र... । (आकर्ण्य सभयम्—नेपथ्याभिमुखमवलोकयति) । पारि... । आः कुत एतत् । सूत्र... । (पृष्ठतोऽवलोक्य) अये कथमयं वासुदेवगमनात् कुरुसन्धानममृष्यमाणः पृथुलललाडटतटघटितभ्रुकुटिना दृष्टिपातेन आपिबन्निव नः सर्वान् सहदेवेनानुगम्यमानः क्रुद्धो भीम इत एवाभिवर्त्तते । तन्न युक्तमस्य पुरतः स्थातुम् । इति निष्क्रान्तौ ।"इति पूर्वापरः सन्दर्भः । अस्य च—"सूत्रधारकः पारिपाश्विकं प्रत्याह, हे मारिष ! आर्य्य ! 'आर्यस्तु मारिषः ।' इत्यमरः । ननु सर्वम् अमङ्गलं कौरवपाण्डवानां परस्परविमर्दमलं लोकक्षयरूपं पापं स्वयं प्रतिपन्नदौत्येन दौत्यं प्रतिपन्नस्तेन 'वाऽऽहिताग्न्यादिषु ।' २/२/३७ इति प्रतिपन्नशब्दस्य पूर्वदिशः । सन्धिं कारयतीति तादृशेन कंसारिण प्रतिहतं विनाशितम्,... ।" इत्यर्थः । "हे मारिष ! ननु स्वयं साक्षात् 'सत्यां सन्धित्सायां किन्न कलहः प्रशमयितुं शक्यते' इति साभिनिवेश प्रतिपन्नदौत्येन सन्धिकारिणा कंसारिणा कंसस्य तदाख्यस्य स्वमातुलस्यारिणा भगवता श्रीकृष्णचन्द्रेण (एतेन पक्षपातशून्यतया दुर्जनविनाशकत्वं सज्जनरक्षकत्वं च सूचितम्) सर्वं किंवदन्तीमूलं कथमपि वा भीष्मादिसाहाय्येन कौरवाणां जयसम्भावनामूलं चामङ्गलं प्रतिहतम् । अयम्भावः—भगवता स्वयं सन्धित्सया दौत्यं स्वीकृत्य 'न केनापि कौरवपाण्डवानां कलहनिमित्तं लोकक्षयो निवर्त्तित'इत्येकं किंवदन्तीमूलम्, 'तदानीं च श्रीमदान्धैः कौरवैः कृतमपकारं प्राप्य' भीष्मादिसाहाय्येन कौरवाः पाण्डवान् जेष्यन्ती'ति दुराशामात्रमूलं कौरवजीवितावशेषाशंसनरूपं द्वितीयम् अमङ्गलं प्रशमितम् । इति । तथाहि—अरीणां कौरवाणाम् प्रशमाद्विनाशं विधाय (ल्यबर्थेयं पञ्चमी) निर्वाणः प्रशान्तो वैरदहनो दहनोपमितं वैरं येषां तथोक्ताः । 'मरणान्तानि वैराणी'त्यभिमुक्तोक्त्या शान्तद्वेषा इति भावः । माधवेन सह पाण्डुतनयाः नन्दन्तु राज्यसुखमनुभवन्तु । सभृत्याः कुरुराजसुतास्तु रक्तेन नानाशस्त्रास्त्रक्षताङ्गतया निःसरता रुधिरेण प्रसाधिता भूयैस्तथाभूताः क्षता विग्रहः शरीराणि येषां तथोक्ताः सन्तः स्वः स्वर्गे तिष्ठन्तीति तथोक्ता मृता इति भावः । ('खर्परे शारि वा विसर्गलोपः' इति विसर्गलोपः) भवन्तु ।....' इति तु ३३७ "वचः सातिशयक्लिष्टं...' इति वक्ष्यमाणदिशा पताकारूप इति विभाव्यम् । अत्र च प्रायः "वृथामङ्गलपाठक ?" इत्यनन्तरं "शैलूषापसद !" इत्यारभ्य 'सूत्रधारौ'इति पाठो नोपलभ्यते, तत्स्थाने पुनः 'कथं स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः । ततः सूत्रधारनिष्क्रान्तौ भीमसेनस्य प्रवेशः' इति पाठः । एवं पाठेऽपि अत्र सूत्रधारस्य वाक्यार्थमादाय भीमसेनस्य प्रवेश इति वाक्यार्थादानमूलोऽयं कथोद्घातः । इति बोध्यम् ।

**यदि प्रयोग एकस्मिन्प्रयोगोऽन्यः प्रयुज्यते ।**

**तेन पात्रप्रवेशश्चेत्प्रयोगातिशयस्तदा ॥ ३६ ॥**

यथा कुन्दमालायाम्—'(नेपथ्ये ।) इति इतोऽवतरत्वार्या । सूत्रधारः—कोऽयं खल्वार्याह्वानेन साहायकमपि मे संपादयति । (त्रिलोक्य ।) कष्टमतिकरुणं वर्तते ।

**लङ्केश्वरस्य भवने सुचिरं स्थितेति**

**रामेण लोकपरिवादभयाकुलेन ।**

**निर्वासितां जनपदादपि गर्भगुर्वी**

**सीतां वनाय परिकर्षति लक्ष्मणोऽयम् ॥**

अत्र नृत्यप्रयोगार्थं स्वभार्याह्वानमिच्छता सूत्रधारेण 'सीतां वनाय परिकर्षति लक्ष्मणोऽयम्' इति सीतालक्ष्मणयोः प्रवेशं सूचयित्वा निष्कान्तेन स्वप्रयोगमतिशयान एव प्रयोगः प्रयोजितः ।

---

## विवृतिपूर्तिः

प्रयोगेति । दशरूपकादौ तु—'एषोऽयमित्युपक्षेपात्सूत्रधारप्रयोगतः । पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः ॥' इत्युक्तम् । 'एष राजेव दुष्यन्त' इत्युदाहृतं च ॥

## विज्ञप्रिया

प्रयोगातिशयलक्षणमाह—यदि प्रयोग इति । भूय इति । पुनरप्यन्य इत्यर्थः । प्रयोगोऽन्य इति क्वचित् पाठः ।

इतीति । अर्थ सूत्रधाराभिप्रेतमेव कुरुराजसुतानां सुस्थीभवनरूपमर्थम् । अतएवात्र द्वितीयप्रकारः कथोद्घातः ।

यदीति । एकस्मिन् प्रयोगे कस्यचिदेकस्य विषयस्य आलोचने प्रचरति सतीत्यर्थः, यदि अन्यः प्रयोगः प्रयुज्यते सूत्रधारेण तत्पूर्वविषयालोचनमतिक्रम्य अपरस्य विषयस्य आलोचनं क्रियते तेन च द्वितीयप्रयोगेण चेत् पात्रस्य इतिवृत्तान्तर्गतजनस्य प्रवेशो भवति; तदा प्रयोगातिशयो नाम प्रस्तावनाभेदो भवेत् । द्वितीयप्रयोगेण प्रथमप्रयोगस्य अतिशयः अतिक्रमः यत्र इति प्रयोगातिशयः ।

अथ तर्हि उद्घात्यकादिष्वन्येष्वपि चतुर्षु प्रस्तावनाभेदेषु प्रयोगातिशयप्रसङ्गः, तेषु च सर्वेष्वेव सूत्रधारेण स्वप्रयोगमतिक्रम्य प्रयोगान्तरेणैव पात्रप्रवेशस्य सूचितत्वात् । सत्यम्; पञ्चसु प्रस्तावनाभेदेषुमध्ये प्रयोगातिशयस्य सामान्यरूपत्वम् इतरेषां चतुर्णान्तु विशेषत्वमङ्गीक्रियते; तेन सामान्यस्य विशेषेतरपरत्वनियमात् यत्र यत्र उद्घात्यकादीनां विशेषप्रकाराणां न सम्भवस्तत्र तत्रेव प्रयोगातिशयो नाम प्रस्तावनाप्रकार इति सिद्धान्तः । अतएवास्माभिरुत्तररामचरित-मालतीमाधवयोः प्रस्तावना प्रयोगातिशयरूपैवेति तट्टीकायां प्रतिपादितम् ।

इत इतोऽवतरत्विति। सूत्रधारपत्न्या आह्वानेनागमनोपदेश कृतः। लङ्केश्वरस्येति। जनपदात् अयोध्यातो निर्वासितां निष्क्रामितां गर्भगुर्वीमित्यन्वयः। प्रयोगातिशयपदयोगार्थं घछयन् व्याचष्टे—स्वप्रयोगमतिशयान इति। एव प्रयोगः सूचित इति—सीतालक्ष्मणयोः प्रवेशरूपोऽन्यः प्रयोगः सूचित इत्यर्थः। सूचित इत्यत्र प्रयोजित इति क्वचित् पाठः।

## लोचन

इति इति। अत्रार्यपदार्थः सीतारूपो नेपथ्ये पात्राभिमतः। नटीरूपस्तु सूत्रधारेणावगतः स्वप्रयोगमतिशयानः प्रकृतार्थप्रतिपादनात्।

## कुसुमप्रतिमा

यथेति। आर्य्याया निजभार्य्याया नट्या आह्वानेन। साहायकं साहाय्यम्। स्वकर्त्तव्यस्थान्येन करणादिति भावः। अतिकरुणम् अत्यन्तशोकोद्दीपकम्।

सूत्रधारी निष्क्रान्त इति पाठान्तरम्।

लङ्केश्वरस्येति। सीता लङ्केश्वरस्य भवने सुचिरं दशमासात्मकं दीर्घ कालं स्थिता, अतस्तत् सतीत्वं प्रति संशय एवेति भावः; इति इत्थं लोकपरिवादभयादाकुलेन विह्वलान्तःकरणेन रामेण, गर्भेण गुर्वीमपि भारवतीमपि जनपदात् लोकालयाद्देशात् निर्वासिता सीताम्, वनाय वनगमनाय अयं लक्षणः परिकर्षति आकर्षति। तस्यैवेदम् आर्य्येति सीताया आह्वानमिति भावः।

उक्तलक्ष्ये लक्षणं सङ्क्रमयन् प्रयोगातिशयशब्दस्युत्पत्ति दर्शयति अत्रेति। नृत्यप्रयोगार्थं मित्यनेन सूत्रधारस्य नृत्यरूपः स्वप्रयोगः सूचितः। स्वभार्य्याया नटयाः आह्वानमामन्त्रम्। स्वप्रयोगं निजकर्त्तविषयं दृश्यम्, अतिशयान एव अतिक्रामन्नेव, प्रयोगः अपरी विषयः।

## विमला

प्रयोगातिशयमाह, यदीति।—यदि एकस्मिन् प्रयोगे अन्यः प्रयोगः प्रयुज्यते, तेन—द्वितीयेन प्रयोगेण, पात्रस्य—नटस्य, प्रवेशः चेत् भवति, तदा प्रयोगातिशयः, भवतीति शेषः।

आर्य्यापदेनात्र सूत्रधारः स्वभार्य्याऽऽह्वानं मन्यमानो वदति,—कोऽयमित्यादि।

लङ्केश्वरस्येति।—लङ्केश्वरस्य—रावणस्य, भवने—गृहे, लङ्कायामितियावत्, सुचिरं—दीर्घकालं, दशमासपर्य्यन्तं व्याप्य इत्यर्थः, [कालात्यन्तसंयोगेद्वितीया, क्रियाविशेषणत्वेन वा क्लीवत्वम्] स्थिता, सीतेति शेषः, इति—इत्य, लोकानां परिवादः,—दोषारोपणम्, अपवाद इति यावत् ("परिवादोऽपवादे स्यात्" इति मेदिनी) तस्मात् भयं, तेन आकुलः,—कातरः, तेन, रामेण जनपदात्—देशात्, निर्वासितां—निष्कासितां, गर्भेम गुर्वी—भारवती तां, गुरुगर्भभराक्रान्तामित्यर्थः, अपि सीताम् अयं लक्ष्मणः वनाय—वनं नेतुमित्यर्थः, परिकर्षति—आकर्षति। वसन्ततिलकं वृत्तम्। कुन्दमालायाः पद्यमिदम्।

अत्रेति।—अत्र—नृत्यप्रयोगे, प्रयोगः,—सीतालक्ष्मणयोः प्रवेशसूचनं, स्वप्रयोगं—नृत्यरूपम्, अतिशयानः,—अतिक्रामन्, प्रयोजितः।

## लक्ष्मी

तृतीयं प्रयोगातिशयलक्षणं निरूपयति—यदि प्रयोग इति। एकस्मिन् प्रयोगे एकस्य कस्यचिद्विषयस्य सूत्रधारेण विचार्यमाणे सति यदि अन्यः प्रयोगः प्रयुज्यते तेनैव हि तत्पूर्वविषयविचारस्यातिक्रमणं विधाय अन्यस्य विषयस्य विचारं विधीयते चेत् यदि तेन द्वितीयप्रयोगेण पात्रस्य प्रवेशोऽस्ति तदा द्वितीयप्रयोगेण प्रथमप्रयोगस्य अतिशयः अतिक्रमो यत्र सः प्रयोगातिशयो नाम तृतीयः प्रस्तावनाभेदः स्यात्।

लक्ष्ये लक्षणं सङ्गमयितुमाह-यथा कुन्दमालायामिति। एतन्नामिकायां नाटिकायामित्यर्थः। इत इतोऽवतरत्विति। अत्रार्यापदार्थः सीतारूपो नेपथ्ये पात्रभिमतः। नटीरूपस्तु सूत्रधारे णावगतः स्वप्रयोगमतिशयानः प्कृतार्थप्रतिपदिनात्। आर्यायाः स्वभार्याया नटया आह्वानेन आमन्त्रणेन साहायकं सहायतां स्वकर्त्तव्यस्यान्येन विधानादिति भावः। अतिकरुणम् अत्यन्तशोकोपोद्बलकम्।

लङ्केश्वरस्येति। सीता जनकनन्दिनी लङ्केश्वरस्य दशाननस्य भवने गृहे सुचिरं दशमासपर्यन्तं स्थिता, अतस्तस्याः सतीत्वे सन्देह एवेत्यभिप्रायः, इति अनेन प्रकारेण लोके यः परिवादः अपवादः तस्माद्यो भयस्तस्मात्तथोक्तात् आकुलेन विह्वलचित्तेन रामेण, गर्भे गुर्वी भारभूतामपि जनपदात् अयोध्यातो निर्वासितां निष्क्रामितां सीताम् अयं लक्ष्मणः परिकर्षति आकर्षति। वसन्ततिलकाच्छन्दः।

लक्ष्ये लक्षणं घटयन् प्रयोगातिशयपदयोगार्थं दर्शयति—अत्रेति। नृत्यप्रयोगार्थं सूत्रधारस्य नृत्यरूपः स्वप्रयोगस्तदर्थमित्यर्थः। स्वभार्याया नटया आह्वानम्। स्वप्रयोगं स्वकृत्य विषयं नृत्यम्, अतिशयान एव अतिक्रामन्नेव प्रयोगःप्रयोजितः सीतालक्ष्मणयोः प्रवेश रूपोऽन्यः प्रयोगः सूचित इत्यर्थः। नन्वेमपि अन्येष्वप्युद्घात्यकादिषु प्रस्तावनाभेदेषु चतुर्षु सूत्रधारेण स्वप्रयोगमतिक्रम्य प्रयोगान्तरेणैव पात्रप्रवेशस्य द्योतितत्वात् प्रयोगातिशयातिप्रसङ्गं इति चेत्? मैवम्, सामान्यविशेषाभ्युपगमात्। तथा च यत्र यत्र विशेषाणामुद्घात्यकादीनामसम्भवस्तत्र तत्रैव प्रयोगातिशय इत्याशयः। अत एव मालतीमाधवोत्तररामचरितयोः प्रस्तावनायामन्यासम्भवात्प्रयोगातिशय इत्याशयः। अत एव मालतीमाधवोत्तररामचरितयोः प्रस्तावनायामन्यासम्भवात्प्रयोगातिशयरूपैवेति सिद्धान्तविदः।

## रुचिरा

३२७ **यदि**। **एकस्मिन्**। **प्रयोगे**। **अन्यः प्रयोगः**। **प्रयुज्यते** प्रवर्त्यते। **तेना**न्येन प्रयोगेणेत्यर्थः।' **च**। **पात्रप्रवेशः**। 'स्यात्'इति शेषः। **तदा**। **प्रयोगातिशयः**। 'सम्पद्यतेइति शेषः। अयम्भावः—यदा किमपि प्रस्तूयान्यत् प्रस्तूयते, तेन च पात्रप्रवेशस्तथा प्रयोगातिशयो नाम प्रस्तावना। इति। ३३३॥

उदाहरति—**यथे**त्यादिना।

**यथा**। **कुन्दमालायां** तदाख्यायां केनापि कविना कृतायां नाटिकायामिति भावः। "**(नेपथ्ये)** । **इतइतः**। अत्र सम्भ्रमे द्विरुक्तिः। सम्भ्रमश्च स्वामिन्या आर्य्यायाः सञ्चारे युक्तः इति बोध्यम्। **आर्या** मान्या। 'आर्य्य' सज्जनसौविदौ।' इति धनदः। "कत्रव्यमाचरन् काममकत्रव्यमनाचरन्। यस्तिष्ठति सदाऽऽचारे स आर्य्य इति कथ्यते॥" इति स्मृतिश्च। स्त्री चेदार्य्या 'अजाद्यतष्टाप्।' ४/१/४ इति टाप्। **अवतरतु**। **सूत्रधारकः** सूत्रधारसदृश इत्यर्थः 'सूत्रधार' इति पाठे तु लक्षमया तथाऽर्थः। 'इवे प्रतिकृतौ॥'४/१/८६ इति कन्। 'आहे' ति शेषः।

कः । **अयम्** । **खलु** । **आर्य्याह्वानेनार्य्याया** नट्या आह्वाने तेन तद्द्वारेति भावः । मे मम । साहायकं साहाय्यम् । 'सहायाद्वा ।' इति वुञ् । **सम्पादयति ? (विलोक्य)** । **कष्टम्** । **अतिकरुणम्** (क्रियाविशेषणमिदम्) । वर्त्तते ।

(तदेव दर्शयति—**लङ्केश्वरेत्यादिना**—)

**लङ्केश्वरस्य** लङ्काया ईश्वरः पतितस्तस्य रावणस्येति भावः । **भवने** स्थाने । **सुचिरम्** चिरकालं व्याप्येत्यर्थः । **स्थिता** 'सीता । तां च रामः स्वीकृतवा' निति शेषः । **इति** । **लोकपरिवादभयाकुलेन** लोकैर्जनैः (कृतः) परिवाद इति तस्य भयं तेनाकुलस्तेन तथोक्तेन । 'तृतीया तत्कृतार्थेन गुणवचनेन ।' २/१/३० इति कृतेऽर्थे तृतीया समासः । **रामेण** । **जनपदात्** देशात् । **निर्वासिताम्** । **गर्भगुर्वी** गर्भेण गुर्वी भाराक्रान्तेति तां तथोक्ताम् । 'वोतो गुणवचनात् ।' ४/१/४४ इति ङीप् । **अपि** । यद्वा—-जनपदात्, अपि किं पुनः स्वप्रासादादेव (अन्यत्पूर्ववत्) इति योज्यम् । **सीताम्** । **अयम्** । पुरतो दृश्यमान इति भावः । **लक्ष्मणः** । **वनाय** वनं प्रापयितुमित्यर्थः । **परिकर्षति** 'दण्डयां राजपुरुष इवे'ति शेषः ॥ २३३ ॥"

**इत्यत्र** । **नृत्यप्रयोगार्थं** नृत्यस्य प्रयोगाय । **स्वभैर्य्याऽऽह्वानं** नट्या आह्वानम् । **इच्छता**ऽभिलषतेत्यर्थः । **सूत्रधारेणोपचारात्** तत्प्रतिनिधिना स्थापकेनेत्यर्थः । **"सीतां वनाय परिकर्षति लक्ष्मणोऽयम् ॥"** इति इत्येवमिति भावः । **सीतालक्ष्मणयोः** । **प्रवेशम्** । **सूचयित्वा** । निष्क्रान्तेन । स्वप्रयोगं स्वस्य प्रयोगो नटीमाहूय नृत्यकर्त्तव्यतारूपस्तम् । **अतिशयानः** । **एव** । **प्रयोगः** । **प्रयोजितः** । प्रयुज्य समर्थित इत्यर्थः । अयम्भावः—स्थापको नृत्यप्रयोगाय यावत् नटीमाह्वयितुमभिलषितवान्, तावत् नेपथ्ये 'इतइतोऽवतरत्वार्य्या' इति निशम्य 'कोऽयं मे साहाय्यं सम्पादयती'ति स्वाशयानुकूलं च सम्भावयन् एव रामाज्ञया सीतां वनं नयन्तं लक्ष्मणं दृष्टवान् । तदेव स्वनिष्क्रमणेन नृत्यप्रयोगापेक्षया प्रबन्धानुकूल्येन अतिशयितः प्रयोगः प्रयोजितः, स्फुटं चास्य प्रयोगातिशयितत्वम् । इति ।

**कालं प्रवृत्तमाश्रित्य सूत्रधृग्यत्र वर्णयेत्।**

**तदाश्रयश्च पात्रस्य प्रवेशस्तत्प्रवर्तकम्॥ ३७॥**

यथा—'आसादितप्रकट—' इत्यादि (२८२ पृ.)। ('ततः प्रविशति यथानिर्दिष्टो रामः।)'

---

## विवृतिः

प्रवृत्तं वर्तमानम्। तदाश्रयः प्रवृत्तकालवनासूचितः। यथानिर्दिष्टः प्रकटनिर्मलचन्द्रहासधरः॥

## विज्ञप्रिया

प्रवर्तके कालाश्रयेणाह—कालमिति। तदाश्रयस्य तत्सूचितस्य।

तवास्मीति। अत्र गीतप्रशंसारूपप्रयोगे सति राज्ञः प्रवेशरूपमन्यत्कार्य्यं साधितम्। प्रवर्तके कालाश्रयणमतो भेदकं बोध्यम्।

## लोचन

श्रुतं कस्यापि सन्मुखीनस्य मुखादितिवृत्तं प्रकृतग्रन्थाभिधेयम्। अस्य च प्रपञ्चनमर्थात् प्रत्रद्वारेणैव। यद्यपि नासूचितस्य पात्रस्य रङ्गभूमिषु प्रवेश इति वचनात् सर्वेषामपि पात्राणां सूचितानामेव रङ्गे प्रवेशस्तथापि प्रस्तावनानन्तरं प्रवेश्यपात्रामुक्तप्रकारेण विच्छित्तिभिः सूचनमिति शेषः। क्वचित्तु सम्भ्रमादियुक्तानां पात्राणां प्रवेशेन सूचनं न पटीक्षेपोऽपि। यथा चन्द्रकलायां प्रविश्याऽपटीक्षेपेण संभ्रान्त शबर इत्यादिः।

## कुसुमप्रतिमा

कालमिति। सूत्रधृक् सूत्रधारो यत्र प्रवृत्तं तदानीं वर्त्तमानं कालं वसन्तादिकालविशेषम् आश्रित्य अवलम्बा वर्णयत्, तदाश्रयश्च श्लेषादिद्वारा तद्वर्णनाप्रयोज्यश्च पात्रस्य इतिवृत्तान्तर्गतजनस्य पूर्वणां भवति, तत्प्रवर्त्तकं नाम आमुखं स्यात्। पात्रमभिनये प्रवर्त्तयतीति प्रवर्त्तकम्।

यां काश्चिदेव क्रियां कर्त्तुं वर्त्तमानकालस्य परिहार्य्यत्वासम्भवेन अवशअयमेव तत्कालश्रयसम्भवेऽपि यत् "कालं प्रवृत्तमाश्रित्य" इत्याभिहितम्, तत् साक्षाद्वाचकपदनिर्हिष्टवसन्तशरदादिकालविशेषप्रतिपत्यर्थम्। तेन "अभिभवितुमिच्छति बलात्" इत्युद्धात्यकादिस्थले तिङै वर्त्तमानकालनिर्द्देशेऽपि न प्रवर्त्तकत्वप्रसङ्गः। अतएव "आसादितप्रकटनिर्म्मलचन्द्रहासः प्राप्तः शरत्समय एष विग्रहकान्तिः॥" इति शरत्समयरूपकालविशेषबोधकभवोदाहृतम्।

## विमला

कालमिति।—यत्र प्रवृत्तम्—उपस्थितं, कालं—वसन्तादिकमित्यर्थः, आश्रित्य सूत्रधृक्—सूत्रधारः, वर्णयेत्, तव (यः) तदाश्रयः,—तदाश्रित्येत्यर्थः, पात्रस्य—नटस्य, प्रवेशः, भवति इति शेषः, तत् प्रवर्त्तृकम्।

## लक्ष्मी

तुरीयं प्रवर्त्तकलक्षणं निरूपयति—कालमिति। सूत्रधृक् सूत्रधारो यत्र प्रवृत्तं तत्समये विद्यमानं कालं वसन्तादिसमयविशेषाम्, आश्रित्य अवलम्बनं विधाय वर्णयेत्, तदाश्रयश्च श्लेषादिद्वारा प्रवृत्तकालवर्णनासूचितश्च पात्रस्य इति वृत्तान्तर्गतजनस्य प्रवेशो भवति। पात्रमभिनये प्रवर्त्तयतीति व्युत्पत्त्या प्रवर्त्तकं नाम तुरीयप्रस्तावनाभेदोऽवगन्तव्यः।

ननु 'कालं प्रवृत्तमाश्रित्य' इति यदुक्तं तत्र कालपदेन वर्त्तमानकालस्यापि प्रतीतौ यत्किञ्चिदपि कर्मविधाने वर्त्तमानकालस्यावश्यम्भावित्वेन तत्कालाश्रयसम्भवस्यावश्यं वक्तव्यत्वे उद्घात्यकाद्युदाहरणे 'अभिभवितुमिच्छति बलात्' इत्यादौ तिङौ वर्त्तमानकालनिद्र्देशात् प्रवर्त्तकत्वप्रसक्तिरिति चेत्? सत्यम्, अत्रत्यकालपदस्य साक्षाद्वाचकपदनिर्द्दिष्टवसन्तशरदादिकालविशेषबोधनार्थत्वोपगमेनाक्षतेः। अतएव—

'आसादितप्रकटनिर्मलचन्द्रहासः प्राप्तः शरत्समय एष विशुद्धकान्तिः।'

इति शरत्समयरूपकालविशेषप्रतिपादकमेवोदाहरणे प्रतिपादितम्।

लक्ष्ये लक्षणं घटयितुमाह—यथेति। यथानिर्द्दिष्टः प्रकटनिर्मलचन्द्रहासधरः।

## रुचिरा

३२८ **यत्र**। **सूत्रधृक्**। सूत्रधार उपचारात्तत्प्रतिनिधिरिति यावत्। इदमपि प्रायिकम्, वस्तुतस्तु अन्योऽपीति। **प्रवृत्तम्**। **कालं** समयम्। **आश्रित्य**। **वर्णयेत्**। **पात्रस्य**। नाटके नायकादिरूपं लक्षयितुः पुरुषस्येति भावः। च। तदाश्रयः तत्कालवर्णनामाश्रयो यस्य तादृशः। **प्रवेशः**। **तत्**। **प्रवर्तकम्**। 'प्रस्तावना' इति शेषः। अयम्भावः—यत्र कमपि ऋतुं प्रकृत्य यद्वर्णितं तदेवाश्रित्य पात्रं प्रवृष्टं स्यात्तत्प्रवर्त्तकं नाम प्रस्तावना। इति॥ ३३४॥

उदाहरति—**यथेत्यादिना**।

यथा।..."**आसादितप्रकटनिर्मलचन्द्रहासः। विशुद्धकान्तिः। सम्भृतबन्धुजीवः। एषः। शरत्समयः। गाढतमसम्। उग्रम्। घनकालम्। रामः। दशास्यम्। इव। उत्खाय। प्राप्तः॥ २३४॥" ततः। यथानिर्दिष्टं** 'रामोदशास्यमिवे'त्यादिना। यथा सूचितस्तथाभूत इति भावः रामः। प्रविशति। अयम्भावः—शरदं वर्णयतासूत्रधारकेण रामसादृश्यमुद्भाव्य शरद इव रामस्य प्रवेशः सूचित इति प्रवर्त्तकं नामेयं प्रस्तावना। यथा वा बालरामायणे तृतीयेऽङ्के गर्भाङ्के (नेपथ्ये गीयते) "प्रकटितरामाम्भोजः कौशिकवान् सपदि लक्ष्मणान्दी। सुरचापदमनहेतोरयमवतीर्णः शरत्समयः॥ कोहलः (तन्नामा नटः)—कथमुपक्रान्तं भरतपुत्रैः, यदियं रामलक्ष्मणानुगतस्य भगवतो विश्वामित्रस्य प्रावेशिकी ध्रुवा। तदहमनन्तरकरणीयाय सज्जो भवामि (इति निष्क्रान्तःप्रस्तावना)।" इति।

**यत्रैकत्र समावेशात्कार्यमन्यत्प्रसाध्यते ।**

**प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं बुधैः ॥ ३८ ॥**

यथा, शाकुन्तले— सूत्रधारो नटीं प्रति । "तवास्मि गीतरागेण" इत्यादि । ततो राज्ञः प्रवेशः ।

**योज्यान्यत्र यथालाभं वीथ्यङ्गानीतराण्यपि ।**

अत्र आमुखे । उद्घात्य(त) कावलगितयोरितराणि वीथ्यङ्गानि वक्ष्यमाणानि ।

---

## विवृतिः

एकत्रेति । प्रयोग इत्यनेनान्वितम् । समावेशात्सादृश्योद्‌भावनात् । कार्य पात्रप्रवेशरूपम् । प्रसाध्यते सूच्यते ॥

यथालाभं यथासंभवम् । पञ्चस्वेव वीथ्याङ्गानि । उद्घात्यावलगितयोरेव इतराणि ।

## विवृतिपूर्तिः

अवलगितमिति । दशरूपके तु—'यत्रैकत्र समावेशात्कार्यमन्यत्प्रसाध्यते । प्रस्तुतेऽन्यत्र वान्यत्स्यात्तञ्चावलगितं द्विधा ॥' इत्युक्तम् । तत्राद्यं यथोत्तरचरिते समुत्पन्नवनविहारगर्भदोहदायाः सीताया दोहदकार्ये अनुप्रविश्य जनापवादादरण्ये त्यागः । द्वितीयं यथा छलितरामे—'रामः—लक्ष्मण, तातवियुक्तामयोध्यां विमानस्थो नाहं प्रवेष्टुं शक्नोमि । तदवतीर्य गच्छामि । कोऽपि सिंहासनस्याधः स्थितः पादुकयोः पुरः । जटावानक्षमालां च चामरी च विराजते ॥' इति भरतदर्शनकार्यसिद्धिः । मन्दरमरन्देऽप्युक्तम्—'अन्यकार्यमिषादन्यकार्यस्य करणं तथा । द्विधावलगितं त्वन्यकार्याञ्च स्वार्थसाधनम् ॥' इति । काव्येन्दुप्रकाशे तु—'यः पात्रस्य प्रवेशस्तद्वलितं चान्यवर्णनात्' इति विशेषोऽभिहितः । अन्यपदार्थवर्णनेन पात्रप्रवेशो वलितमिति तदर्थः । प्रवृत्तकालवर्णनानुरूपपात्रप्रवेशलक्षणात्प्रवर्तकतो यत्किञ्चिद्वर्णनात्पात्रप्रवेशरूपवलितस्य भेदः स्पष्ट एव ॥

## विज्ञप्रिया

इत्थं प्रस्तावनारूपस्य उद्‌घातकादिपञ्चभेदमुक्त्वा तत्रैव प्रयोगे यथालाभं वीथ्याङ्गान्यपि प्रयोजनीयानीत्याह—योज्यान्यत्रेति । वीथ्याख्योपरूपात्मकनाटकप्रभेदस्य वक्ष्यमाणस्याङ्गम् । उद्‌घात्यकावलगितादीनि तयोर्दशाङ्गानि वक्ष्यन्ते आमुखप्रभेदतयापि उद्‌धात्यका वलगिते उक्ते। अतस्तद् भिन्नैकदेशे तदङ्गान्यप्यत्र योजनीयानीत्याह—उद्‌घात्यकावलगितयोरितराणीति ।

तवास्मीति । अत्र गीतप्रशंसरूपप्रयोगे सति राज्ञः प्रवेशरूपमन्यत्कार्य्यं साधितम् । प्रवर्तके कालाश्रयणमतो भेदकं बोध्यम् । इत्थं प्रस्तावनारूपस्य उद्‌घातकादिपञ्चभेदमुक्तवा तत्रैव प्रयोगे यथालाभं वीथ्यङ्गान्यपि प्रयोजनीयानीत्याह—योज्यान्यत्रेति । वीथ्याख्योपरूपात्मकनाटकप्रभेदस्य वक्ष्यमाणस्याङ्गम् । उद्‌घात्यकावलगितादीनि तयोर्दशाङ्गानि वक्ष्यन्ते । आमुखप्रभेदतयापि उद्‌घात्यकावलगिते उक्ते । अतस्तद् भिन्नैकदेशे तदङ्गान्यप्यत्र योजनीयानीत्याह—उद्‌घात्य कावलगितयोरितराणीति ।

## कुसुमप्रतिमा

यत्रेति। यत्र प्रयोगे आमुखे एकत्र एकस्मिन् विषये समावेशात् सादृश्योपन्यासात् हेतोः, अन्वत् उपमानभूतपात्रप्रवेशसूचनरूपं कार्य्यं प्रसाध्यते सूत्रधारेण निष्पाद्यते, बुधै स्तदासुखं नाम्ना अवलगितं ज्ञेयम्। अवलगति पात्रपवेशेन सह सुन्दरमवसजतीत्यवलगितम्।

ननु तादृश्योपन्यासेन उपमानभूतपात्रपवेशसूचकस्य अवलगितत्वे रामो दशस्यमिव सम्भृतबन्धुजीवः इत्युक्तप्रवर्त्तकस्थलेऽपि सादृश्योपन्यासेन उपमानभूतपात्रप्रवेशसूचनादबलगितत्वप्रसङ्ग इति चेन्न श्लेषादिसत्त्वे प्रवर्त्तकं तदसत्त्वेन तु अवलगितमिति ग्रन्थकारेणैवाभिप्रेतत्वात्। तथा च वृत्तावेव पूर्वमुक्तम्—"मुखं श्लेषादिना प्रस्तुतवृत्तान्तप्रतिपादको वाक् विशेषः। यथा —आसीदिते"त्यादि।

## विमला

यत्रेति। —यत्र—यस्मिन्, प्रयोगे, एकत्र—एकस्मिन् विषये, समावेशात्—सादृश्योद्भावनात्, अन्यत् कार्य्यं—पात्रप्रवेशरूपं प्रसाध्यते—सूच्यते, तत् बुधैः,—मण्डितैः, अवलगितम् (अव-लग्-क्तः। लग्-गती) इति नाम्ना ज्ञेयम्।

योज्यानीति। अत्र—आमुखे, यथालाभं—यथासम्भवम्, इतराणि—अन्यानि, वीथ्यङ्गानि अपि योज्यानि—प्रयोक्तव्यानि।

## लक्ष्मी

पञ्चममवगलिताख्यं प्रस्तावनाभेदलक्षणं निरूपयति—यत्रैकत्रेति। प्रयोग इत्यनेनान्यः। यत्र प्रयोगे प्रस्तावनायाम् एकत्र एकस्मिन् विषये समावेशात् तत्प्रयोगस्य समनिर्दिष्टत्वात् हेतोः अन्यद् उपमानभूतपात्रप्रवेश-सूचनरूपं कार्य प्रसाध्यते सूत्रधारेण सूच्यते बुधैस्तदामुखं अवगलति पात्रप्रवेशेन सह शोभनमवसजतीति नाम्ना अवगलितमिति कथितम्। ननु सादृश्योद्भावनेन उपमानभूतपात्रप्रवेशसूचकस्यावगलितत्वे प्रवर्त्तकोदाहरणेऽपि 'रामो दशास्यमिव सम्भृतबन्धुजीवः' इत्यत्र सादृश्यसद्भावेन उपमानभूतपात्रप्रवेशसूचनादवगलितत्वप्रसक्ति-रिति चेत्? मैवम्, 'मुखं श्लेषादिना प्रस्तुतवृत्तान्तप्रतिपादको वाग्विशेषः' यथा—'आसादिते'त्यादिपूर्वमेव वृत्तौ प्रदर्शितं तथा च श्लेषादिसत्त्वे प्रवर्त्तकं तदभावे तु अवगलितमित्यभ्युपगमात्।

लक्ष्ये लक्षणं सङ्घटयति—यथा शाकुन्लत इति। तवास्मीति व्याख्यातं प्राक् (३३३पृष्ठे) अत्र गीतप्रशं-सारूपप्रयोगे राज्ञः प्रवेशरूपमन्यत्कार्यं साधितम्।

इत्थं प्रस्तावनारूपस्य उद्घात्यकादिपञ्चभेदमभिधाय तत्रैव प्रयोगे यथालाभं वीथ्यङ्गान्यपि प्रयोजनीया-नीत्याशयेनाह—योजान्यत्रेति। अत्र प्रस्तावनायां यथालाभं यथासम्भवम् इतराण्यपि उद्घात्यकावगलितयोरेवे-तराणि, तथा च उद्घात्यकावगलितभिन्नान्यपीत्यर्थः। वीथ्या वक्ष्यमाणवीथ्याख्योपरूपनामकनाटकप्रभेदस्य अङ्गानि वक्ष्यमाणानि प्रपञ्चादीनि योज्यानि कविना निबद्धव्यानि। यथालाभमित्युक्त्या तेषामवश्यनिबद्धव्यत्वा-भावःप्रतिपादितः।

विवृणोति—अत्रेति। वीथ्याख्योपरूपात्मकनाटकलक्षणप्रस्तावे उद्घात्यकावगलितयोरपि तदङ्गत्वेन वक्ष्यमाणत्वादभिहितम्—'उद्वातकावगलितयोरितराणि' इति।

## रुचिरा

३२९. **यत्र** यस्मिन् **एकत्र** एकस्मिन् । **प्रयोगे** कार्य्योद्यमे । **समावेशात्** सादृश्योद्भावनात् । ल्यबर्थेयं पञ्चमी । **अन्यत् कार्य्यम्** । **प्रसाध्यते** सम्पाद्यते । **तत्** । 'कार्य्य'मिति शेषः । **नाम्ना** । **अवलगितं** तदाख्यः प्रस्तावनाविशेषः । **बुधैः** सहृदयैः **ज्ञेयम्** । खलु यस्य कस्यापि प्रस्तुतस्य कार्य्यस्य सादृश्यमुद्भाव्य यत्र पात्रप्रवेशरूपं कार्य्यं सम्पाद्यते तत्तत्रावलगितत्वात् अवलगितं नाम प्रस्तावनाऽङ्गमिति भावः ॥ ३३५ ॥

उदाहरति—**यथेत्यादिना** ।

**यथा** । **अभिज्ञानशाकुन्तले**ऽभिज्ञानेन शाकुन्तलं शकुन्तलासम्बन्धि चरितमिति तत्र, उपचारात् तदुपजीव्य श्रीकालिदासमहाकविना रचिते नाटके इति भावः । **सूत्रधारकः** । स्थापको नटः । **नटीम्** । **प्रति** । **"अतिरंहसा**ऽत्यन्तशालिनेत्यर्थः । **सारङ्गेण** मृगेण । **एषः** । **राजा** । **दुष्यन्तः** । इव । तव **हारिणा** मनोहारिणा । **गीतरागेण** । **प्रसभं** । **हृतः** । **अस्मि** ॥ २३६ ॥" इति ।

**ततः** तदनन्तरम् । **राज्ञो** दुष्यन्तस्येत्यर्थः । **प्रवेशः** । इदमुक्तम्—नटीकृतमृतुवर्णनमुपजीव्य गानं निशम्य तदभिनन्दता स्थापकेन सूत्रधारकेण 'एष राजवे'ति सादृश्यमुद्भाव्य 'एष'इति पात्रप्रवेशः सूचितः, तस्मात् प्रस्तावनेयमवलगिताख्या । यथा वा, मालविकाग्निमित्रे सूत्रधारकः—"शिरसा प्रथमगृहीतामाज्ञामिच्छामि परिषदः कर्त्तुम् । देव्या इव धारिण्याः सेवादक्षः परिजनोऽयम् ॥" इति । अत्र हि देव्याः सादृश्यमुद्भाव्य स्वनिष्क्रमणमभिलषता सूत्रधारकेण तत्प्रवेशः सूचितः । इति ।

एवं पञ्चविधां प्रस्तावनां लक्ष्यलक्षणाभ्यां निरूप्य चारुत्वातिशयाय कर्त्तव्यान्तरमुपदिशति ३३० **योज्यानीत्यादिना** ।

३३० **अत्रास्मिन्** प्रभेदे प्रस्तावनाऽपरपर्य्याये आमुके इति भावः । **इतराणि** उद्घात्यकावलगिताभ्यां भिन्नानीत्यर्थः । **अपि** 'किं पुनरुद्घात्यवलगिते एवे'ति शेषः । **यथालाभं** यथासम्भवम् । **वीथ्याङ्गानि** वीथ्या वक्ष्यमाणलक्षणस्य रूपविशेषस्याङ्गानि भागाः इति तथोक्तानि । **योज्यानि** । यद्यपि—उद्घात्यकावलगिते प्रस्तावनाविशेषात्मना निरूपितपूर्वे एव, तथाऽपि एते वीथ्यङ्गे एव, तस्मात्—परत्र कथोद्घातादौ प्रस्तावनाभेदत्रये ते सूचयितुं शक्ये, किन्तु—अत्रापि, उद्घात्यकेऽवलगिते वा प्रस्तावनाभेदे उद्घात्यकमवलगितं वा वीथ्यङ्गं, तथा, प्रपञ्च—त्रिगत—च्छलवाक्केल्य—धिबल—गण्डा—वस्यन्दित—नालिका—ऽसत्प्रलाप—व्याहार—मार्दवाख्यानि एकादशापराण्यपि वीथ्याङ्गानि यथासम्भवं सम्पद्यानि । कथोद्घातादौ तु उद्घातकावलगिते अपि, न चैषामवश्यकी स्थितिरपेक्षिता, यथालाभमित्यस्य तत एव स्वारस्यात् । एवं च—यत्र उद्घात्यकादौ उद्घात्यादिनिवेशः स्यात्तत्तस्य चारुत्वमतिशाययति, न तं विना स्वरूपच्युतिरित्यावेद्यते । इति ।

सूत्रस्थानं कठिनार्थानां पदानां दुर्बोधतां परिहरति—**अत्रेत्यादिना** । स्पष्टम् ।

अत्राचार्य्यान्तरमतं दर्शयितुमाह—**नखकुट्टस्त्वित्यादिना** ।

नखकुट्टस्तु—

**नेपथ्योक्तं श्रुतं यत्र त्वाकाशवचनं तथा ॥ ३९ ॥**

**समाश्रित्यापि कर्तव्यमामुखं नाटकादिषु ।**

**एषामामुखभेदानामेकं कंचित्प्रयोजयेत् ॥ ४० ॥**

**तेनार्थमथ पात्रं वा समाक्षिप्यैव सूत्रधृक् ।**

**प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रयोजयेत् ॥ ४१ ॥**

---

## विवृतिः

एषामुद्धात्यकादीनाम् । तेन प्रयुक्तामुखभेदेन ।

अर्थ वस्तु । समाक्षिप्य सूचयित्वा । ततः सूत्रधारगमनानन्तरम् ॥

## विवृतिपूर्तिः

नेपथ्येति । नेपथ्यं जवनिका तत्रोक्तम् । 'नेपथ्यं स्याज्जवनिका रङ्गभूमिः प्रसाधनम्' इत्यजयः ॥

## विज्ञप्रिया

पञ्चप्रभेदा आमुखस्यामी प्रविष्टापात्रसूचितपात्रान्तरप्रवेशघटिता उक्ताः । अप्रविष्टसूचितपात्रघटितोऽपि नखकुट्टाख्यः षष्ठप्रभेद इत्याह-नखकुट्टस्तु इति ।

तल्लक्षणामाह—नेपथ्येति । नेपथ्ये वेशरचनास्थले उक्तं पात्रं आकाशे वचनं यस्य तादृशं वा पात्रमाश्रित्य आमुखं कर्त्तव्यमित्यर्थः । इत्थमामुखस्य षड् भेदाः ।

तेनार्थमिति । सूत्रधृक् पात्रं तद्भिन्नमर्थं वा समाक्षिप्यैव सूचयित्वैव तादृशप्रस्तावनान्ते निर्गच्छेदित्यर्थः ।

## कुसुमप्रतिमा

नेपथ्योक्तमिति । तत्र तेषु तु नाटकादिषु रूपकेषु, केनचित् नेपथ्यादुक्तं वाक्यं श्रुतं सूत्रधारेण आकणितं समाश्रित्य विधाय, तथा आकाशवचनम् आकाशभाषितं श्रुतं समाश्रित्य विधअय वा आमुखं प्रस्तावना कर्त्तव्यम् । सूत्रधृक् सूत्रधारः, एषाम् उद्घात्यकादीनाम् आमुखभेदानां प्रस्तावनाविशेषाणां यं कञ्चिदेकं भेदं प्रयोजयेत् कुर्य्यात् । तेन आमुखप्रयोगेण अथ वृत्तान्तम् अथवा पात्रं समाक्षिप्यैव भूक्षयित्वैव प्रस्तावनाया अन्ते रङ्गालयात् निर्गच्छेत्, ततः परं वस्तु इतिवृत्तं प्रयोजयेत् अभिनेतुमारभेत ।

## विमला

नेपथ्योक्तमिति ।—तत्र—नाटकादिषु, तु श्रुतं नेपथ्योक्तं—नेपथ्यभाषितं, तथा आकाशवचनं समाश्रित्याऽपि आमुखं—प्रस्तावना, कर्त्तव्यम् । एषाम आमुखभेदानाम्—एतद्ग्रन्थोक्तानां, नखकुट्टोक्तानां वा, एकं

कञ्चित् प्रयोजयेत्—विदध्यात्। अथ सूत्रधृक्—सूत्रधारः, तेन अर्थं—वस्तु, वा—अथवा, पात्रं समाक्षिप्य—उपस्थाप्य, सूचयित्वा इति यावत्, एव प्रस्तावनाऽन्ते निर्गच्छेत्, रङ्गादिति शेषः, नेपथ्यान्तः प्रविशेदिति भावः। ततः—सूत्रधारगमनानन्तरं, वस्तु—इतिवृत्तं, प्रयोजयेत्—उपस्थापयेत्, प्रविष्टं पात्रमिति शेषः।

## लक्ष्मी

आमुखस्यामी पञ्चप्रभेदा प्रविष्टपात्रसूचिताः पात्रान्तरप्रवेशघटिता उक्ताः। अथाप्रविष्टसूचितपात्रघटितोऽपि नखकुट्टाख्यः षष्ठः प्रभेद इति दर्शयितुमाह—नखकुट्टस्त्विति।

तल्लक्षणं दर्शयति—नेपथ्योक्तमिति। यत्र येषु नाटकादिषु रूपकेषु नेपथ्यं जवनिका उक्तञ्चाजयेन—'नेपथ्यं स्याज्जवनिका रङ्गभूमिः प्रसाधनम्' इति, तस्मादुक्तं वाक्यं सूत्रधारेणाकर्णितं समाश्रित्य विधाय तथा आकाशे वचनं भाषितं यस्य तादृशं श्रुतं समाश्रित्य वा आमुखं समन्तान्मुखं द्वारमिति कर्त्तव्यम् इत्थमामुखस्य षड्भेदाः। सूत्रधृक् सूत्रधार एषाम् उद्घात्यकादीनाम् आमुखभेदानां प्रस्तावनाविशेषाणां यं कञ्चिदेकं भेदं प्रयोजयेत् विदध्यात्। तेन प्रयुक्तामुखभेदेन अर्थं वृत्तान्तम् अथवा पात्रं समाक्षिप्यैव सूचयित्वैव तादृशप्रस्तावनान्ते निर्गच्छेत् नाट्यशालातो निस्सरेत्, ततः सूत्रधारगमनानन्तरं वस्तु इति वृत्तं प्रयोजयेत्, नाटकं रचयितुमारभेत।

## रुचिरा

**नखकुट्टस्तदाख्य** आलङ्कारिकः। **तु**। **आह—"नेपथ्योक्तं..."** इत्यादिना।

"**तत्र** तेषु निरुक्तलक्षणेषु प्रसिद्धेषु वा। **नाटकादिषु**। **नेपथ्योक्तं** नेपथ्ये जवनिकाऽन्तरुक्तं तत्तथोक्तम्। "नेपथ्यं स्याज्जवनिका रङ्गभूमिः प्रसाधनम्।" इत्यजयः। **तथा**। **आकाशवचन**माकाशे वचनं तत्। श्रुतम्। **समाश्रित्य**। **अपि** 'अन्यथा तु निर्दिष्टदिशा क्रियत एव, किन्त्वि'ति शेषः। आमुखं समन्तान्मुखं द्वारमिति तथोक्तम्, प्रस्तावनेति भावः। **कर्त्तव्यम्**। यथाऽन्याः पञ्च तथेयमपि द्विविधा प्रस्तावना कार्य्या, एका नेपथ्यभाषितमूला, द्वितीयाऽऽकाशभाषितमूला च। इति भावः॥" **इति**।

एवं प्रस्तावना निर्दिश्यासां व्यवस्थां निर्दिशन् कर्त्तव्यान्तरमुपदिशति—३३१ एषामित्यादिना।

३३१ **एषां** निरुक्तलक्षणानाम्। **आमुखभेदानां** प्रस्तावनाभेदानां मध्ये। **एकम्**, 'न तु द्वौ ततो वाऽधिकान् आमुखभेदा'निति शेषः। **कञ्चित्**। **प्रयोजयेत्**। **अथ**। **सूत्रधृक्** उपचारात् तत्सदृशो नटः। **तेन** प्रयुक्तेनामुखेनेति भावः (साधने तृतीयेयम्)। **अर्थमितिवृत्तम्**। **पात्रम्**। **वा**। **समाक्षिप्य** सूचयित्वा। **एव**। **प्रस्तावनाऽन्ते**। **निर्गच्छेत्**। रङ्गभूमितो जवनिकान्तः प्रविशेदिति भावः। **ततस्तदनन्तरम्**। **वस्तु** वर्णनीयमिति वृत्तमिति भावः। **प्रयोजयेत्**। अयम्भावः—पञ्चस्वभिहितासु प्रस्तावनास्वेकामेव कामपि प्रस्तावनां विदध्यात्, यदि तु गर्भाङ्को विधेयः, तदा तु तस्मिन् अङ्के प्रस्तावना विधेयैव, अन्यथा गर्भाङ्कत्वानुपपत्तिः, यथा—बालरामायणे तृतीयेऽङ्के गर्भाङ्कः, तत्र च प्रस्तावना, तस्याश्च समाप्तौ विधीयमानायां कमप्यर्थं कस्यचिद्वा पात्रस्य प्रवेशं सूचयित्वा सूत्रधारादीनां निष्क्रमणं विधेयम्। एवं पुनस्तस्यां समापितायां प्रतिपाद्यमितिवृत्तं निरूपयेत्। इति॥ ३३६॥ ३३७॥

सूत्रं सुगमयितुं वस्तुपदं व्याचष्टे—**वस्तु** 'इत्यस्ये'ति शेषः। **इतिवृत्तम्** 'इत्यर्थः' इति शेषः।

इतिवृत्तस्य भेदद्वयमिदमित्याह—३३२ **इदमित्यादिना**।

वस्त्वितिवृत्तम् ।

**इदं पुनर्वस्तु बुधैर्द्विविधं परिकल्प्यते ।**

**आधिकारिकमेकं स्यात्प्रासङ्गिकमथापरम् ॥ ४२ ॥**

**अधिकारः फले स्वाम्यमधिकारी च तत्प्रभुः ।**

**तस्येतिवृत्तं कविभिराधिकारिकमुच्यते ॥ ४३ ॥**

फले प्रधानफले । यथा बालरामायणे रामचरितम् ।

---

## विवृतिः

अधिकारिज्ञानं तावदाधिकारिकज्ञानजनकम् । तच्चाधिकारज्ञानाधीनमित्यधिकारं निरूपयति—अधिकार इति ।

तत्प्रभुः फलत्वाम्यवान् । तस्याधिकारिणः ॥ प्रसङ्गेन निर्वृत्तं प्रासङ्गिकम् । ।

## विवृतिपूर्तिः

प्रासङ्गिकमिति । आनुषङ्गिकम् ॥

## विज्ञप्रिया

बालरामायणे रामचरितमिति । रामोऽहं रावणादिवधफले स्वामी, तस्य चरितमाधिकारिकमित्यर्थः ।

## लोचन

बुधैग्रन्थकारैः ।

## कुसुमप्रतिमा

इदमिति । बुधैः इदं नखकुट्टकारिकोक्तं वस्तु इतिवृत्तं द्विविधं परिकल्पयते । तयोरेकम् आधिकारिकम् अथ अपरं द्वितीयन्तु प्रासङ्गिकं स्यात् । फले प्रधानफले स्वाम्य प्रधानफलभोक्तृत्वम् अधिकारः, तत्प्रभुश्च तस्य प्रधानफलस्य भोक्ता च अधिकारी; कविभिः तस्य अधिकारिणः इतिवृत्तं वृत्तान्त आधिकारिकम् उच्यते; अधिकारिणा संसृष्टमिति व्युत्पत्तेः ।

## विमला

इदमिति ।—इदं वस्तु पुनः बुधैः द्विविधं परिकल्प्यते—विभज्यते, एकं—वस्तु आधिकारिकम्, अथ अपरं प्रासङ्गिकं स्यात् । अधिकारिज्ञानं तावदाधिकारिकज्ञानजनकं, तच्चाधिकारज्ञानाधीनम्, इत्यधिकारं निरूप-

यति, अधिकार इति ।—फले—कार्य्यस्य प्रधानफले, स्वाम्यं—स्वामित्वम्, अधिकारः, तस्य—स्वाम्यस्य, प्रभुश्च अधिकारी, तस्य—अधिकारिणः, इतिवृत्त, कविभिः,–विद्वद्‌भिः, अधिकारिकम् उच्यते ।

## लक्ष्मी

इतिवृत्तस्य भेदद्वयं दर्शयति—इदं पुनर्वस्त्विति । बुधैस्तत्त्वविद्‌भिः, इदं नखकुट्टकारिकोक्तं वस्तु इतिवृत्तं द्विविधं परिकल्पते । तयोरेकम् आधिकारिकज्ञानं तावदाधिकारेण निर्वृत्तम्, तच्चाधिकारज्ञानाधीनमित्यधिकारं निरूपयति—अधिकार इति । फले प्रधानफले स्वाम्यं फलभोक्तृत्वम् अधिकारः, तत्प्रभुश्च तस्य प्रधानफलस्य स्वामी च अधिकारी कविभिरालङ्कारिकैः तस्य अधिकारिणः इतिवृत्तं वृत्तान्त आधिकारिकम् उच्यते प्रतिपाद्यते ।

उदाहरति—यथा बालरामायणे तदाख्ये राजशेखरकृते महानाटके इत्यर्थः । रामचरितमिति । तत्र हि रामः रावणादिवधफले स्वामी तस्य चरितमाधिकारिकमिति तत्त्वम् ।

## रुचिरा

३३२ **बुधैः** । **इदं** प्रतिपाद्यमितिवृत्तिमिति यावत् । **वस्तु** । **पुनः** । **द्विविधम्** । **परिकल्प्यते** । तत्र—**एकम्** । **अधिकारिकम**धिकारे भवम् । 'अध्यात्मादेष्ठञिष्यते' इतिं ठञ् । **स्यात्** । अथ । अपरम् । **प्रासङ्गिकं** प्रसङ्गे भवम् ॥ ३३८ ॥

तत्राधिकारिकं लक्षयति—३३३ अधिकार इत्यादिना ।

३३३ **फले** कार्य्यस्य मुख्ये प्रयोजने इति भावः । **स्वाम्यं** प्रभुत्वम् । **अधिकारः** । **तत्प्र**भुस्तस्य स्वाम्यस्य प्रभुः । **च** पुनः । **अधिकारी** तन्नामा । **तस्य** । **इतिवृत्तम्** । **अधिकारिकम्** । **कविभिः** । **उच्यते** ॥ ३३९ ॥

सूत्रं सुगमयितुं फलपदं व्याचष्टे—**फले** 'इत्यस्ये'इति शेषः । **प्रधानफले** च यदुद्दिश्य सर्वमनुष्ठीयते तदिति बोध्यम् ।

उदाहरति—**यथा** । **बालरामायणे** तदाख्ये राजशेखररचिते महानाटके इत्यर्थः । **रामचरितम्** । बालरा-मायणे हि रावणवधादिचरितं रामस्येति तदाधिकारिकमिति तत्त्वम् ।

प्रासङ्गिकं लक्षयति—३३४ **अस्ये**त्यादिना ।

**अस्योपकरणार्थं तु प्रासङ्गिकमितीष्यते ।**

**अस्याधिकारिकेतिवृत्तस्य उपकरणनिमित्तं यच्चरितं तत्प्रासङ्गिकम् ।**

यथा सुग्रीवादिचरितम् ।

---

## विवृतिः

पताकास्थानमाह—अर्थे प्रयोजने ।

## विज्ञप्रिया

उपकरणनिमित्तमिति । उपकरणमुपकारः साहाय्यमित्यर्थः ।

## कुसुमप्रतिमा

अस्येति । अस्य तु आधिकारिकेतिवृत्तस्य उपकरणार्थं परिपुष्टिनिमित्तं यच्चरितं तत्प्रासङ्गिकम् इति कविभिरिष्यते ।

अस्येति । उपकरणनिमित्तं परिपुष्ट्यर्थम् । यथेति । सुग्रीवादिचरितस्य रामचरितपुष्टि निमित्तत्वात् प्रासङ्गिकत्वमिति भावः ।

## विमला

अस्येति ।—अस्य—आधिकारिकेतिवृत्तस्य, तु—पुनः, उपकरणार्थम्—उपकाराय प्रसङ्गेन निर्वृत्तं, वस्तु, प्रासङ्गिकम् इति इष्टते ।

## लक्ष्मी

अस्योपकरणार्थन्त्विति । अस्य तु आधिकारिकेतिवृत्तस्य उपकरणार्थं सहायतार्थम् (अर्थेननित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्) इति साधु । यच्चरितं तत् प्रसङ्गेन निर्वृत्तं प्रासङ्गिकम् आनुषङ्गिकम् इति कविभिरिष्यते ।

अस्याधीति । उपकरणनिमित्तम् उपकरणमुपकारः साहाय्यमित्यर्थः, तन्निमित्तं तदर्थमित्यर्थः ।

उदाहरति—यथेति । सुग्रीवादिचरितस्य रामचरितसाहाय्ये निमित्तत्वात् प्रासङ्गिकमिति भावः । आदिना प्रतिनायकादेर्ग्रहणम् ।

## रुचिरा

३३४ **अस्याधि**कारिकस्येतिवृत्तस्येत्यर्थः । **उपकरणार्थ**मुपकरणायेदमिति तथोक्तम् । 'अर्थेन (नित्य) समासो विशेष्यलिङ्गता चेति वक्तव्यम्' इति साधु । यदा—उपकरणमर्थो यस्य तदिति तथोक्तम् । तु पुनः । **प्रासङ्गिकं** प्रसङ्गानुप्सक्तमानुषङ्गिकमिति यावत् । **इति** । **इष्यते** ।

तदेव स्पष्टयति—**अस्ये**त्यादिना । स्पष्टम् ।

उदाहरति—**यथा** 'बालरामायणे' इति शेषः । **सुग्रीवादिचरितम्** । आदिना—प्रतिनायकादीनां ग्रहणम् ।

**पताकास्थानकं योज्यं सूविचार्येह वस्तुनि ॥ ४४ ॥**

इह नाट्ये ।

**यत्रार्थे चिन्तितेऽन्यस्मिंस्तल्लिङ्गोऽन्यः प्रयुज्यते ।**

**आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥ ४५ ॥**

---

## विवृतिः

तल्लिङ्गस्तत्सधर्मा । प्रयुज्यते । क्रियते । आगन्तुकेन अनभिसंहितेन । भावेन पदार्थेन ॥

## विज्ञप्रिया

नाटकस्यान्तरङ्गमाह—पताकास्थानकमिति । इह नाट्ये इति । आमुखे इति—वृत्तसाधारणे नाट्ये इत्यर्थः । तेनास्य आमुखे इतिवृत्ते च सम्भव इत्यग्रे व्यक्तीभविष्यति ।

तल्लिङ्ग इति । चिन्तितार्थसमानचिन्हं इत्यर्थः ।

## लोचन

आगन्तुकेन प्रकृतादितरेण ।

## कुसुमप्रतिमा

पताकेति । सूविचार्य्य कविना सम्यग्विविच्य इह नाट्ये वस्तुनि पदार्थे पताकास्थानकं योज्यं निबद्धव्यं विरचयितमित्यर्थः ।

किं नाम पताकास्थानमित्याह यत्रेति । यत्र स्थाने, अन्यस्मिन् अर्थे विषये चिन्तिते प्राकरणिकत्वेन ज्ञायमाने सति, आगन्तुकेन भविष्यता अतर्कि तेनेत्यर्थः भावेन प्रकारेण, तल्लिङ्गस्तत् स्वरूपः अन्योऽर्थः प्रयुज्यते उपस्थाप्यते, ततु पताकास्थानकम् । पताकावत् नाट्यस्य मुख्यातिजनकत्वात् तादृशबन्धोऽपि पताकेत्युच्यते ।

## विमला

पताकास्थानप्रयोगनियमाह, पताकेति ।—इह वस्तुनि—नाट्यरूपे इतिवृत्ते, सुविचार्य्य—सम्यक् विविच्य, पताकास्थानकं योज्यं—प्रयोक्तव्यम् ।

पताकास्थानमाह, यत्रेति । यत्र अन्यस्मिन् अर्थे—प्रयोजने, चिन्तिते, तल्लिङ्गः,—तस्य अर्थस्य लक्षणान्वितः, अन्यः,—अन्यार्थः, आगन्तुकेन—अतर्कितेन, भावेन—उपस्थापितेन वस्तुना, प्रयुज्यते—क्रियते, तत्—निरुक्तलक्षणम् इदं, तदिति शेषः, पताकास्थानकं, बोध्यमिति शेषः ।

## लक्ष्मी

नाटकस्यान्तरङ्गं पताकास्थानमाह—पताकेति। सुविचार्य्य कविना सम्यग्विचार्य्य इह नाटये वस्तुनि पदार्थे पताकास्थानकं योज्यं निबन्धनीयं रचनीयमित्यर्थः पताकास्थानकमिति सर्वत्र संज्ञायां कन् बोध्यः।

ननु किन्तत् पताकास्थानमिति जिज्ञासायां तल्लक्षणं दर्शयति—यत्रार्थे इति। यत्र स्थाने अन्यस्मिन् अर्थे प्रयोजने चिन्तिते पदार्थत्वेन बुध्यमाने सति आगन्तुकेन अनभिसंनिहितेन अतर्कितेनेत्यर्थः भावेन पदार्थेन तल्लिङ्गः चिन्तितार्थसमानचिह्नकः अन्योऽर्थःप्रयुज्यते क्रियते उपस्थाप्यत इति यावत् तत्तु पताकावत् नाटयस्य प्रसिद्ध्युत्पादकत्वात् तादृशबन्धोऽपि पताकास्थानकमित्यभिधीयते। तद्भेदान् वक्तुमुपक्रममाण आह—तद्भेदानिति।

## रुचिरा

रूपकेषु पताकास्थानकनिवेशस्यावश्यकतामाह—३३५ **पताके**त्यादिना।

३३५ **इहा**स्मिन् रूपके इति यावत्। **सुविचार्य्य** निपुणं विभाव्य रसव्यक्त्यनुकूलतामवधार्य्येति यावत्। **वस्तु**नि इतिवृत्ते। **पताकास्थानकं** पताकाया ध्वजस्य स्थानं तदिवेति तथोक्तम्। **योज्यम्**॥ ३४०॥

इहेति पदं व्याचष्टे, इहेत्यादिना। स्पष्टम्। 'नाटके' इत्यपि रूपकमात्रस्योपलक्षकम्। 'नाटये' इति पाठान्तरेऽप्ययमेवार्थः।

पताकास्थानकं लक्षयति—३३६ **यत्रार्थे** इत्यादिना।

तद्भेदानाह—

**सहसैवार्थसंपत्तिर्गुणवत्युपचारतः ।**

**पताकास्थानकमिदं प्रथमं परिकीर्तितम् ॥ ४६ ॥**

यथा रत्नावल्याम्—'वासवदत्तेयम्' इति राजा यदा तत्कण्ठपाशं मोचयति तदा तदुक्त्या 'सागरिकेयम्' इति प्रत्यभिज्ञाय 'कथम् । प्रिया मे सागरिका ।

**'अलमलमतिमात्रं साहसेनामुना ते,**

**त्वरितमयि ! विमुञ्च त्वं लतापाशमेतम् ।**

**चलितमपि निरोद्धुं जीवितं जीवितेशे !**

**क्षणमिह मम कण्ठे बाहुपाशं निधेहि ॥'**

इति फलरूपार्थसंपत्तिः पूर्वापेक्षयोपचारातिशयाद् गुणवत्युत्कृष्टा ।

---

## विवृतिः

सहसा अतर्कितकारणेन । अर्थसंपत्तिः प्रयोजनान्तरापत्तिः । उपचारतः प्रीत्यनुकूलव्यापारात् ॥

वासवदत्तेयमितीति । वासवदत्तारूपधारिणी सागरिका संकेतं प्राप्ता, वासवदत्तया तद्विज्ञातमिति सागरिका वासवदत्तापरिभवभयेन गले पाशं दत्त्वा तत्रैव मर्तुमारब्धा, इति राज्ञः सागरिकायां वासवदत्ताभ्रमः । तदुक्त्या सागरिकोक्त्या । अत्र वासवदत्ताया अनुनयपूर्वकं सुरतं राज्ञोऽभिप्रेतम् । तदन्यस्याः सागरिकाया अनुनयपूर्वकसुरतस्यानुष्ठानम् वासवदत्ता रुष्टेति विकलचित्तेन राज्ञा सागरिकाप्राप्तिरूपं कारणं तत्तर्कितं फलं सागरिकासुरतम् । पूर्वापेक्षया पूर्वसुरतस्वरूपापेक्षया ॥ नानाबन्धो विविधविशेषणसंबन्धः, तत्समाश्रयं तद्विषयकम् ॥

## विवृतिपूर्तिः

साहसेनेति । साहसेन प्राणत्यागरूपेणेत्यर्थः ॥

लतापाशमिति । प्राणत्यागार्थं गृहीतमेतं पुरोवर्तिनं लतापाशम् ॥

चलितमपीति । गन्तुं प्रवृत्तमपि ॥

जीवितेशे इति । 'जीवितेशे' इत्यामन्त्रणम् । प्राणस्वामिनीति तदर्थः ॥

## विज्ञप्रिया

सहसैवेति । उपचारतः क्रियातो गुणवती । अर्थसंपत्तिरुद्देश्यसंपत्तिः । सहसैवेत्यर्थः ।

वासवदत्तेयमिति । वासवदत्ता राजपत्नी । तद्वेशेन सागरिका आयास्यतीति कृतसङ्केते राज्ञि स्थिते तज्ज्ञात्वा वासवदत्तैव सागरिकाया आगमनात् पूर्वमागत्य सङ्केतभङ्गं कृत्वा राजानं हेपयित्वा गता । राजा च

तामनुनेतुं पश्चाद् चलितः। ततस्तद्वेशा सागरिका आगत्य राजानमनासाद्य निर्वेदाल्लतापाशेनात्मानं बद्ध्वा मर्त्तुमुद्यता। राजा च वासवदत्तामनुनेतुं चलितः। पथि तां दृष्ट्वा वासवदत्तैवायं म्रियत इति ज्ञात्वा पाशं मोचयन् सागरिकाया उक्त्या सागरिकेयमिति ज्ञात्वा गुणवतीमुद्देश्यफलसम्पत्तिमाप्तवान्। अत्र वासवदत्तामरणा-रूपेऽन्यस्मिन्नर्थे चिन्तिते आगन्तुकेन लतापाशेन वासवदत्तामरणाचिन्हायाद्यङ्कितम्रियमाणसागरिकारूपार्थप्रयोग इति पताकास्थानसामान्यलक्षणं बोध्यम्।

## लोचन

पूर्वपिक्षया पूर्वस्य वासवदत्ताज्ञानस्यापेक्षया।

## कुसुमप्रतिमा

सहसेति। यत्र सहसैव अतर्कितभावेनैव उपचारतः परमप्रीतिकरणात् गुणवती उत्कृष्टा अर्थसम्पत्तिः फलप्राप्तिः स्यात्; तदिदं प्रथमं पताकास्थानकं परिकीर्त्तितम्। पताकास्थानकमिति सर्वत्रैव संज्ञायां कप्रत्ययः।

वक्ष इति। सातिशयश्लिष्टम् अनेकार्थबोधकबहुतरशब्दोपेतम्, नानाबन्धसमाश्रयम् अनेकविशेषणस-म्बन्धविशिष्टम्, वचो वाक्यम्, इदं द्वितीयं पताकास्थानकं परिकीर्त्तितम्।

पताकास्थानमाह, यत्रेति। यत्र अन्धस्मिन् अर्थे— प्रयोजने, चिन्तिते, तल्लिङ्गः— तस्य अर्थस्य लक्षणान्वितः, अन्धः, —अन्धार्थः, आगन्तुकेन—अतर्कितन, भावेन— उपस्थापितेन वस्तुना, प्रयुज्यते—कियते, तत्—निरुक्तलक्षणम् इदं, तदिति शेषः, पताकास्थानकं, बोध्यमिति शेषः।

सहसेति।— उपचारतः,— अतकिंतआवीपनतत्वात्, सहसा एव गुणवती—परमप्रीतिकरौ, अर्थसम्पत्तिः,—अर्थसम्पत्तिः,—फललाभः, यत्र भवेदिति शेषः, दूढ तदिति शेषः, पताशास्थानकं, प्रथम्—आद्यं, परिकौर्त्तिंतम्।

## विमला

सहसेति।—उपचारतः,—अतर्कितभावोपनतत्वात्, सहसा एव गुणवतो—परमप्रीतिकरो, अर्थस-म्पत्तिः,—फललाभः, यत्र भवेदिति शेषः, इदं तदिति शेषः, पताकास्थानकं, प्रथमम्—आद्यं, परिकीर्त्तितम्।

वासवदत्तेयमिति।—वासवदत्तारूपधारिणी सागरिका सङ्केतं प्राप्ता, वासवदत्ताया तद्विज्ञातमिति साग-रिका वासवदत्तापरिभवभयेन गले पाशं दत्त्वा तत्रैव मर्त्तुमारब्धा, इति राज्ञः सागरिकायां वासवदत्ताभम इति बोध्यम्। तदुक्त्या—सागरिकोक्त्या।

अलमिति।—अतिमात्रं यथा भवति तता, ते तव, अमुना—उद्बन्धनद्वारा प्राणत्यागरूपेण, साहसेन—साहसिकव्यापारेण, हठान्मरणव्यापारेणेति यावत्, चलम् चलम्, (सम्भ्रमे द्विरुक्तिः)। अयि सागरिके! त्वम् एतं लतापाशं, त्वरितं—झटिति, विमुञ्च—परित्यज, हे जीवितेशे!—प्राणेश्वरि! चलितं—स्थानात् दूरं गतं, हृदयदेशं परित्यज्य बहिर्गन्तु प्रवृत्तमिति भावः, अपि जीवितं—मदीयान् प्राणान् निरोद्धुं क्षणम्, इह—अस्मिन्, मम कण्ठे, बाहुपाशं—पाशाकारं बाहुयुगलं, निधेहि—अर्पय। अत्र वासवदत्तायाः अनुनयपूर्वकं सुरतं राज्ञोऽभिप्रेतं, तदन्यस्य सागरिकायाः अनुनयपूर्वकसूरतस्यानुष्ठानम्। वासवदत्ता रुष्टा इति विकलचित्तेन राज्ञा तर्कितस्य सागरिकाप्राप्ति-रूपस्य कारणस्य फलं सागरिकासुरतम्। मालिनी वृत्तम्।

फलेति ।—फलरूपार्थसम्पत्तिः,—फलरूपस्य—सागरिकारूपस्य, अर्थस्य सम्पत्तिः,—लाभः । पूर्वापेक्षया—वासवदत्तालाभापेक्षया इत्यर्थः, उपचारातिशयात्—अतर्कितोपनतत्वातिशयात् ।

## लक्ष्मी

सहसैवेति । यत्र सहसैव अतर्कितकारणेनैव उपचारतः प्रीत्यनुकूलव्यापारात् गुणवती उत्कृष्टा अर्थसम्पत्तिःप्रयोजनसिद्धिः स्यात् तदिदं प्रथमम् आद्यं पताकास्थानकं परीकीर्त्तितम् ।

लक्ष्ये लक्षणं सङ्घटयितुमाह—यथा रत्नावल्यामिति । वासवदत्तेयमिति । वासवदत्ता वत्साराजोदयनस्य पत्नी । अत्र सन्दर्भश्चेत्थम्—(वासवेदत्तावेशेन सागरिका आयास्यतीति कृतसङ्केते राज्ञि स्थिते तज्ज्ञात्वा सागरिकाया आगमनात्पूर्व वासवदत्तैवागत्य सङ्केतभङ्गं विधाय राजानं हेपयित्वा प्रस्थिता । राजा च तामनुनेतुं पश्चाच्चलितः । ततस्तद्वेषा सागरिका आगत्य राजानमप्राप्य निर्वेदाल्लतापाशेनात्मानं वध्वा तत्रैव मर्त्तुमारब्दा । राजा च वासवदत्तामनुनेतुं चलितः । पथि तां दृष्ट्वा वासवदत्तैवेयं म्रियत इति सागरिकायां वासवदत्ताभ्रमे पाशं मोचयितुं प्रवृत्त इति) तदुक्त्या तस्या सागरिकाया उक्त्या 'सागरि केयम्' इति प्रत्यभिज्ञाय ज्ञात्वा कथमिति प्रश्ने प्रिया मे सागरिका इत्यनन्तरम् (इति कण्ठात्पाशमाक्षिप्य—कण्ठात्पाशं निष्कास्येत्यर्थः) इत्याक्षेपो विधेयः ।

सुरतार्थं तामनुनयति—अलमलमतिमात्रमिति । ते तव अमुना उद्बध्यमरणरूपेण अतिमात्रम् अत्यन्तम् इदञ्च साहसपदार्थाविमृश्यकारित्वक्रियाया विशेषणम्, साहसेन प्राणत्यागरूपेण विमृश्यकर्मणा अलमलमिति सम्भ्रमे द्विरुच्चारणम्, मा मा इत्यर्थः, अयि ! त्वं प्राणत्यागार्थं गृहीतमेनं पुरो वर्त्तिनं लतायाः पाशः लतापाशस्तं तथोक्तम्, त्वरितमाशु यथा स्यात्तथा विमुञ्च त्यज, जीवितस्य जीवनस्य ईशा स्वामिनी तत्संबोधने हे जीवितेशे !चलितमपि कंपितमपि 'चलिता कंपिता धुते' इत्यमरः, चञ्चलमित्यर्थः, यद्वा गन्तुमुद्यतमंपि इत्यर्थः । त्वद्वियोगेन निरोद्धुम् अवरोद्धुम् इह अस्मिन् देशे एकान्त इत्याशयः, मम कण्ठे गले क्षणं क्षणकालम्, अत्यन्तसंयोगे द्वितीया । 'अष्टादश निमेषास्तु काष्ठाः त्रिंशत्तु ताः कला । तास्तु त्रिंशत् क्षणः' इत्यमरः, बाहूरेव पाशः बाहुपाशः तं निधेहि स्थापय । निपूर्वाद्धाञो लोटि 'ध्वसोरेद्धावभ्यासलोपश्चेति' लोप एत्वं च । मालिनी छन्दः । अत्र वासवदत्ताया अनुनयपूर्वकं सुरतं राज्ञोऽभिलषितम्, तदन्यस्याः सागरिकायाः अनुनयपूर्वकसुरतस्यानुष्ठानमिति प्रतीयमानोऽर्थः ।

तथाच्चोदाहृते लक्षणसमन्वयव्याजेन तदर्थ दर्शयति—अत्रेति । फलरूपस्यं बहोः कालादुद्देश्यभूतस्य अर्थस्य सागरिकासुरतस्य सम्पत्तिः उपलब्धिः पूर्वापेक्षया पूर्वसुरतस्वरूपापेक्षया उपचारातिशयात् प्रीत्यतिशयोत्पादनात् गुणवती प्रशस्तगुणा ।

अत्र वासवदत्तामरणरूपेऽन्यस्मिन्नर्थे चिन्तिते आगन्तुकेन वासवदत्तामरणचिन्हाद्यङ्कित्रियमाणसागरिकारूपार्थप्रयोग इति पताकास्थानसामान्यलक्षणं बोध्यम् ।

## रुचिरा

३३६ यत्र यस्मिन् । **अन्यस्मिन्** । **अर्थे** । **चिन्तिते** 'सती ति शेषः **तल्लिङ्गश्चिन्ततसदृशः** । **अन्यः** । 'अर्थ'इति शेषः । **आगन्तुकेनानियमितोपस्थितिकेन** । **भावेन** तात्पर्य्येण । सहार्थेयं तृतीया । **प्रयुज्यते** । तत् । **तु** । **पताकास्थानकम्** । 'मत' मिति शेषः ॥ ३४१ ॥

तद्भेदान् वक्तुमुपक्रममाण आह—**तद्भेदा**नित्यादिना स्पष्टम् । ३३७ **सहसे**त्यादिना ।

३३७ **सहसा** । **एव** । **उपचारतो**ऽभेदाध्यवसायात् । गुणवती प्रशस्तगुणा । **अर्थसम्पत्ति**र्मनोरथसिद्धिः । **इदम्** (अत्र—'सर्वनाम्नामुद्देश्यविधेयलिङ्गभावत्वं पर्य्यायेण भवति' इति नयेन क्लीबत्वम्) । प्रथमं मुख्यमेकं वेति भावः । **पताकास्थानकम्** । **परिकीर्त्तितम्** ॥ ३४२ ॥

उदाहरति—**यथे**त्यादिना ।

**यथा** । **रत्नावल्यां** । 'तृतीयेऽङ्के' इति शेषः । '**वासवदत्ता** वत्सराज्य देवी । इयम् ।" इति 'उक्त्वे' इति शेषः । राजा । यदा । तत्कण्ठापाशं तस्या वासवदत्तावेषधारिण्याः सागरिकायाः कण्टस्तत्र पातितः पाशस्तम् । मोचयति । तदा । तदुक्त्या वासवदत्तात्वेनाध्यवसिताया रत्नावल्या उक्तिस्तया इत्यर्थः ("मुंचदु मुंचदु मं भट्टा पराहीणो क्खु अअं जणो ण पुणो ईदिशं अवसरं मरिदुं पावेदि, तुमं वि देवीए मा अप्पाणं अबराहिणं करेसि' इति च तदुक्तिः) । "इयं वासवदत्तावेषधारिणीत्यर्थः । सागरिका ।" इति । प्रत्यभिज्ञाय । "कथम् 'मत्त्रुमुपस्थिते' ति शेषः । मे । प्रिया । सागरिका रत्नावली ।" (इति । कण्ठात् । पाशम् । आक्षिप्य 'स्वकण्ठे तद्बाहुपाशं निदध' दिति शेषः) ।

"अतिमात्रम् । अमुनोद्बन्धनद्वारा प्राणत्यागार्थेन उद्यमरूपेणेति भावः । साहसेन कर्म्मणा । 'गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजके'ति नयेन तृतीया । ते । अलामलम् । (सम्भ्रमे द्विरुक्तिः) । अयि (इदं कोमलालापे) त्वरितम् । त्वम् । एतम् । लतापाशम् । विमुञ्च । हे जीवितेशे प्राणेश्वरि ! चलितं 'स्थानं त्यक्त्वा'इति शेषः । अपि । मम । जीवितम् । निरोद्धुम् । इह । कण्ठे । बाहुपाशम् । क्षणं 'यावत् पुनः प्रत्यागतं न स्यात्' इति शेषः । निधेहि । निर्गच्छतोऽवरोधाय यथा पाशो निक्षिप्यते, तथा मम जीवितस्यावरोधाय तव बाहुपाश एवालमिति भावः । मालिनीवृत्तम् । "मालिनी नौ म्यौ य् ।" इति (पि. सू.) "यदाऽष्टभिः सप्तभिश्च यतिः" इति (वृ.) ॥ २३७ ॥"

उदाहरणं सङ्गमयति—इत्यादीत्यादिना ।

इत्यादिफलरूपेत्यादिफलं वासवदत्तोद्बन्धनधिया तन्मोचनार्थं प्रवृत्तौ सागरिकालाभरूपं प्रयोजनं तदेव रूपं यस्यास्तथोक्ता । अर्थसम्पत्तिः । पूर्वापेक्षया वासवदत्ताऽपेक्षया । उपचारातिशयात् सादृश्यातिशयात् । गुणवती उत्कृष्टा । अयम्भावः—वासवदत्तायाः वेषं धृत्वा तस्याः सङ्केतस्थले मदनात्त्रा सागरिका राजानमुपगम्यापि वासवदत्ताभयेन पाशं कण्ठे धृत्वा जीवितं त्यक्तुमैच्छत्, राजा च वासवदत्तयाऽवहेलिस्तां मदनात्रोऽन्विच्छन् तथा सागरिकां दृष्ट्वा पाशमपनयन् तस्याः (सागरिकायाः) उक्त्या तां सागरिकामेवावगम्य 'क्षणमिह...' इत्युक्तवान्, तच्च तद्रक्षणं तत्सुरतार्थं वा चेष्टितमतर्कितो वासवदत्ताया लाभापेक्षया रत्नावलीलाभोऽतिशयित इति पताकास्थानकाधिकृतमिदम् । इति ।

**वचः सातिशयंश्लिष्टं नानाबन्धसमाश्रयम्।**

**पताकास्थानकमिदं द्वितीयं परिकीर्तितम्॥ ४७॥**

यथा वेण्याम्—

रक्तप्रसाधितभुवः क्षतविग्रहाश्च

स्वस्था भवन्तु कुरुराजसुताः सभृत्याः॥

अत्र रक्तादीनां रुधिरशरीरार्थहेतुकश्लेषवशेन बीजार्थप्रतिपादनान्नेतृमङ्गलप्रतिपत्तौ सत्यां द्वितीयं पताकास्थानम्।

---

## विवृतिः

रक्तेर्ति। सूत्रधारवचनमिदं रोषाद्भीमेनानूक्तम्। अत्र सामान्यलक्षणं संगमयति—अत्रेति। रक्तादीनां रक्तादिपदानाम्। आदिना प्रसाधितविग्रहपदयोग्रहणम्। रुधिर शरीरेति। अनयोर्मध्ये मण्डनमिति बोध्यम्। भीमक्रोधोपचितो युधिष्ठिरोत्साहो बीजम्, तस्यार्थः प्रयोजनं शत्रुमारणम्। प्रधानफलमिति यावत्।

## विज्ञप्रिया

रक्तप्रसाधितेति। रक्तेण रुधिरेण मण्डितभूमयः। क्षतशरीराः स्वर्गस्था भवन्त्विति श्लेषलभ्योऽर्थः। तदाह—अत्र रक्तादीनामिति। अत्रानुरक्ताद्यर्थे चिन्तिते शब्दरूपतल्लिङ्गोऽन्यो रुधिराद्यर्थ आगन्तुकेन शब्देन प्रयोगात् पताकास्थानसामान्यलक्षणसत्त्वम्। इदं पताकास्थानमामुखान्तर्गतं वक्ष्यमाणं च वृत्तान्तर्गतं बोध्यम्।

द्वितीयपताकास्थानमाह—वचः सातिशयमिति। नानाबन्धो बीजप्रकाशननायकमङ्गलसूचनादिरूपः।

## कुसुमप्रतिमा

रक्तेति। पूर्व मुद्ध तमस्य पूर्वार्द्धं पताकाघटकत्वाभावादगत्र पुनर्नोद्धृतम्। रक्तेन अनुरागेण प्रसाधिता आयत्तीकृता भूः पृथिवी यैस्ते, अन्यत्र तु रक्तैः गात्ररुधिरैः प्रसाधिता अलङ्कृताभूःपृथिवी यैस्ते, क्षतः सन्धिकरणाद्विलुप्तः विग्रहो युद्धं येषां ते, अन्यत्र तु क्षताः शस्त्रादिना विदीर्णा विग्रहा देहा येषां ते, सभृत्याः कुरुराजसुता दुर्य्योधनादयः, स्वस्थाः सन्धिकरणात् सुस्थचित्ताः, अन्यत्र तु युद्धे मरणात् स्वर्गस्था भवन्तु।

अत्रेति। रक्तादीनां शब्दानमित्यर्थः। रुधिरशरीररूपौ अर्थौ सन्दंशपातन्यायात् तत्मध्यवर्त्तिनौ मलङ्कृतविदीर्णरूपौ चार्थौ हेतू यस्य तादृशस्य श्लेषस्य वशेन तद्द्वारेत्यर्थः, बीजार्थस्य भीमसेन क्रोधोपक्षितयुधिष्ठिरोत्साहस्य प्रतिपादनात् सूचनात्, नेतुयुधिष्ठिरस्य मङ्गलप्रतिपत्तौ तदुत्साहजन्यशत्रु विनाशानन्तराज्यनाभरूपशुभज्ञाने। तथा च प्रतिनायकस्य दुर्य्योधनुस्य पृथिवीवशीकरणादिमङ्गलरूपे अर्थे चिन्तिते आगन्तुकेन भीमसेनक्रोधरूपभावेन युद्धं प्रति युधिष्ठिरोत्साहस्य प्रयुक्तया सामान्यपताकालक्षणस्यापि सङ्गतिः।

## विमला

वच इति ।—सातिशयम्—अतिमात्रं यथा तथा, श्लिष्टं—नानार्थं, नानाविधो यो बन्धः,—रचना, विविधविशेषणसम्बन्ध इति यावत्, तत्समांश्रयं—तद्विषयकं, वचः,—वचनं, द्वितीयम् इदं पताकास्थानकं परिकीर्त्तितम् ।

अत्र सामान्यलक्षणं सङ्गमयति, अत्रेति ।—रक्तादीनां—रक्तादिपदानम्, [आदिना प्रसाधितविग्रहपदयोग्रहणम्] । रुधिरशरीरेति ।—रुधिरशरीरयोर्मध्ये "मण्डितः" इति ज्ञेयम् । बीजार्थप्रतिपादनात्—भीमसेनक्रोधोपक्षितो युधिष्ठिरोत्साहः सन्दर्भस्य बीजं, तस्य अर्थः,—प्रयोजनं, फलमित्यर्थः,शत्रुनिपातनरूपमिति भावः, तस्य प्रतिपादनात्—सूचनात्, नेतुः,—नायकस्य, युधिष्ठिरस्य इत्यर्थः, मङ्गलप्रतिपत्तौ—मङ्गलानुष्ठाने निश्चिते, तथा च प्रतिनायकस्य दुर्योधनस्य मङ्गले चिन्तिते आगन्तुकेन भावेन (प्रधानफलसूचनेन इत्यर्थः) नेतृमङ्गलप्रतिपत्तिरिति द्वितीयैपताकास्थानकं बोध्यम् ।

## लक्ष्मी

द्वितीयं पताकास्थानलक्षणं दर्शयितुमाह—वचःसातिशयमिति । सातिशयं शिष्टम् अनेकार्थबोधकानेकतरशब्दसहितम्, नानाबन्धो बीजप्रकाशननायकमङ्गलसूचनादिरूपः तत्समार्थ्य तद्विशिष्टम्, वचो वाक्यम् इदं द्वितीयं पताकास्थानकं परिकीर्त्तितं कथितम् ।

रक्तप्रसाधितेति । सूत्रधारवचनमिदं क्रोधाद्भीमेनानूक्तम् । अस्य पूर्वार्द्धस्य 'निवाणवैरदहनाः' इत्यस्य पताकाघटकत्वाभावादत्र ग्रन्थकृता तदुत्तरार्द्धमेवोपात्तम् । अत्र श्लेषलभ्योऽर्थस्तु तद्व्याख्यानावसरे (३३७ पृष्ठे) दर्शितमेव । तदाह—अत्र रक्तादीनामिति । रक्तादिपदानामित्यर्थः आदिना प्रसाधितविग्रहयोः परिग्रहः । रुधिरशरीररूपौ अर्थौ हेतू यस्य तादृशस्य श्लेषस्य वशेन तद्द्वारा भीमक्रोधोपचितो युधिष्ठिरोत्साहो बीजं तस्या अर्थः प्रयोजनं शत्रुमारणं प्रधानफलमिति यावत् तस्य प्रतिपादनात्, सूचनात्, नेतुर्युधिष्ठिरस्य मङ्गलप्रतिपत्तौ नायकोत्साहजन्यशत्रुमरणानन्तरराज्यप्राप्तिरूपमङ्गलज्ञाने, तथा च प्रति नायकदुर्योधनमङ्गले चिन्तिते आगन्तुकेन प्रधानफलसूचने नायकमङ्गलज्ञानमिति द्वितीयं पताकास्थानकमिदम् । तथानुरक्ताद्यर्थे चिन्तिते शब्दरूपतल्लिङ्गोऽन्यो रुधिराद्यर्थ आगन्तुकेन शब्देन प्रयोगात् पताकास्थानसामान्यलक्षणसत्त्वमपि । इदं पताकास्थानमामुखान्तर्गतं वक्ष्यमाणं च वृत्तान्तर्गतमिति बोध्यम् ।

## रुचिरा

द्वितीयं भेदं लक्षयति—३३८ वच इत्यादिना ।

३३८ सातिशयम् । श्लिष्टं नानाऽर्थप्रत्यायकया सम्बद्धम् । नानाबन्धसमाश्रयम् नानाबन्धेन अनेकविधरचनाविशेषेण सम आश्रय उपजीव्यपदं यस्य तथोक्तम्, बिविधविशेषणानुयोगिविशेष्यार्थप्रतिपादनानुकूलरचनाशालीति भावः । वचः । इदम् । द्वितीयम् । पताकास्थानकम् । परिकीर्तितम् ॥ ३४३ ॥

उदाहरति—यथेत्यादिना ।

यथा वेणीसंहारे 'प्रथमेऽङ्के'इति शेषः ।

"अरीणां शत्रूणाम् । **प्रशमात्** शान्तत्वात् । **निर्वाणवैरदहनो** निर्वाणः प्रशान्तो वैरदहनो वैराग्निर्येषां तथोक्ताः । **पाण्डुतनया** युधिष्ठिरादयः । **माधवेन** श्रीकृष्णेन **सह** । **नन्दन्तु** । **कुरुराजसुताः** । कुरुराजो धृतराष्ट्र-

स्तस्य सुताः, दुर्योधनादय इत्यर्थः । **च** । **संभृत्याः** । **रक्तप्रसाधितभुवो** रक्तेनानुरागेण रुधिरेण वा प्रसाधिता भूर्यैर्येषां वेति तथोक्ताः । **क्षतविग्रहाः** क्षता नष्टा विग्रहा युद्धानि शरीराणि वा येषां तथोक्ताः । **स्वस्था** अनुद्विग्नाः स्वर्गस्था वेति भावः । **भवन्तु** ॥ ३३८ ॥"

उदाहरणं सङ्गमयति—**अत्रे**त्यादिना ।

**अत्रा**स्मिन्नुदाहृते पद्ये इति भावः । **रक्तादीनां** रक्तविग्रह स्व(:) शब्दानाम् । **रुधिरशरीराद्यर्थहेतुकश्लेषवशेन** रुधिरशरीरस्वर्गार्थहेतुश्लेषपारतन्त्रयेणेति भावः । **बीजार्थप्रतिपादनाद्बी**जं वेणीसंहाररूपस्य कार्य्यस्य कारणविशेषस्तदेवार्थस्तस्य प्रतिपादनं तस्मात् । **नेतृमङ्गलप्रतिपत्तौ** नेतुर्नायकस्य युधिष्ठिरस्येति यावन्मङ्गलं प्रतिनायकदुर्योधनाद्यमङ्गलप्रतिपत्तिपूर्वकमह्लादनं तस्य प्रतिपत्तिस्तस्याम् । **सत्याम्** । **द्वितीयम्** । **पताकास्थानकम्** । अयम्भावः—"निर्वाणवैरदहना..." इत्यादेः "रक्तप्रसाधितभुवः..." इत्यादौ रक्तादीनां पदानामनुरागद्यर्थश्चिन्तितः, अथापि तेषमनेकार्थकतया "आः ! दुरात्मन् ! वृथामङ्गलपाठक ! शैलूषाधम !" इत्याद्युक्तदिशा भीमसेनक्रोधोपचितस्य प्रधाननायकयुधिष्ठिरोत्साहस्य वेणीसंहारसन्दर्भकारणस्य सूचनान्नेतुर्मङ्गलं प्रतिनायकस्य चामङ्गलं प्रतिभासते । एवं च दुर्य्योधनादीनां मङ्गले चिन्त्यमाने युधिष्ठिरादीनां मङ्गलं दुर्य्योधनादीनां प्रतिभासते । इतीदं द्वितीयम् । इति ।

**अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत्।**

**श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥ ४८ ॥**

लीनमव्यक्तार्थम्, श्लिष्टेन संबन्धयोग्येनाभिप्रायान्तरप्रयुक्तेन प्रत्युत्तरेणोपेतम्, सविनयं विशेषनिश्चयप्राप्त्या सहितं संपाद्यते यत्ततृतीयं पताकास्थानम्।

यथा वेण्यां द्वितीयेऽङ्के—'कञ्चुकी—देव, भग्नम्। राजा—केन। कञ्चुकी—भीमेन। राजा—कस्य। कञ्चुकी—भवतः। राजा—आः, किं प्रलपसि। कञ्चुकी—(सभयम्।) देव, ननु ब्रवीमि। भग्नं भीमेन भवतः। राजा—धिग् वृद्धापसद, कोऽयमद्य ते व्यामोहः। कञ्चुकी—देव, न व्यामोहः। सत्यमेव।

**'भग्नं भीमेन भवतो मरुता रथकेतनम्।**

**पतितं किङ्किणीक्वाणबद्धाक्रन्दमिव क्षितौ ॥**

**अत्र दुर्योधनोरुभङ्गरूपप्रस्तुतसंक्रान्तमर्थोपक्षेपणम्।**

**द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।**

**प्रधानार्थान्तराक्षेपी पताकास्थानकं परम् ॥ ४९ ॥**

---

## विवृतिः

तस्य प्रति पादनात्सूचकात्। नेतृमङ्गलप्रतिपत्तौ नायकमङ्गलानुष्ठाने। तथा च प्रतिनायकमङ्गले चिन्तिते अप्रतिपत्तिसंहितेन प्रधानफलसूचनेन नायकमङ्गलानुष्ठानमिति द्वितीयं पताकास्थानकमिदमिति भावः। अर्थोपक्षेपकमिति। वक्ष्यमाणविष्कम्भकान्यतममित्यर्थः। संबन्धयोग्येन प्रस्तुतान्वयोपयुक्तेन। अभिप्रायान्तरप्रयुक्तेन अप्रस्तुतबोधाभिप्रायेण प्रयुक्तेन ॥ भग्नमिति कर्त्रादीनामव्यक्तत्वम्। भीमेनेति। भवत इति च प्रस्तुते ऊरुभङ्गेऽप्यन्वययोग्यम्। मंरुतेत्यादि विशेषनिश्चयः। अत्र रथकेतनभङ्गनिवेदनमभिमतम्, ऊरुभङ्गनिवेदनमुपपन्नम्। एतदेवोपपादयति—दुर्योधनेति। संक्रान्तं पर्यवसन्नम्।

## विवृतिपूर्तिः

किङ्किणीति। किङ्किणी क्षुद्रघण्टिका तस्याः क्वाणेन बद्धो जनित आक्रन्दः क्रन्दनं येन तदिव ॥

## विज्ञप्रिया

तृतीयमाह—अर्थोपक्षेपकमिति। अर्थोपक्षेपकं प्रस्तुतवस्तुसूचकं यत्तु वच इत्यर्थः। श्लिष्टेति व्याचष्टे। सम्बन्धयोग्येन इति उक्तवाक्यान्वयः सविनयमित्यत्र विनयो विशेषेण नयः निश्चयः तद् व्याचष्टे—विशेषेति।

भग्नमिति—

**भग्नं भीमेन मरुता भवतो रथकेतनम्।**

**पतितं किङ्किणीजालं बद्धाक्रन्दमिव क्षितौ ॥**

इति कञ्चुकिना वक्तव्ये सम्भ्रमात् खण्डश उक्तम्। दुर्योधनोरुभङ्गरूपार्थोपक्षेपकं भीमेनेत्यत्र भीमसेन-रूपेण स्वानुष्ठानयोग्येन केतनभङ्गातिरिक्ताभिप्राययुक्तेन दुर्योधनस्य प्रत्युत्तरेणोपेतम्। अत्र लीनादिकं स्पष्टार्थ-मवधेयम्।

अर्थोपक्षेपकत्वं व्याचष्टे—अत्रेति। अत्र केतुभङ्गरूपेऽन्यस्मिन् चिन्तिते ऊरुभङ्गरूपार्थप्रयोग आगन्तु-केन श्लिष्टशब्देनेत्यतः पताकास्थानसामान्यलक्षणसत्त्वम्।

## कुसुमप्रतिमा

अर्थोपेति। यत्तु स्थानम्, अर्थस्य प्रधानविषयविशेषस्य उपक्षेपकं सूचकं लीनम् अस्पष्टार्थम्, सविनयं सनिश्चयम्, श्लिष्टेन उपयुक्तेन प्रत्युत्तरेण उपेतञ्च भवेत् इदं तत् तृतीयं पताकास्थानम् उच्यते।

व्याचष्टे लीनमिति। अव्यक्तः अस्पष्टः अर्थो वक्तुरभिप्रेतविषयी यत्र तत्। सम्बन्धयोग्येन प्रस्तुताप्र-स्तुतयोरुभयोरेवान्वयसमर्थेन, अभिप्रायान्तरप्रयुक्तेन वक्त्वा प्रस्तुतान्वयाभिप्रायेणैव उक्तेन। विशेषनिश्चय-प्राप्त्याः परञ्च एकतरनिश्चसम्बन्धेन। तथा च विनयशब्दोऽत्र निश्चयपर इति भावः।

कञ्चुकेति। भीमेन भयानकेन भीमसेनेन च। उत्तरत्राप्येवम्। नन्वित्यवधारणे। वृद्धापसद ! तद्भा-धम् !। व्यामोहो वीभ्रम उपस्थित इति शेष.।

भग्नमिति। भीमेन भयानकेन मरुता वायुना भग्नं भवतो रथस्य केतनं ध्वजः किङ्किणीजालेन क्षुद्रवगि-टकासमूहशब्देन बद्धो विहित आक्रन्दः क्रन्धनध्वनिर्येन तत्तथोक्तमिव सत् क्षितौ भूमौ पातितम्। यथा समरे एकेन वीरेणाहत्य अपरो वीरः क्रन्दन् भूमौ पात्यते तथेति भावः।

अत्रेति। दुर्य्यधनोरुभङ्गरूपः अप्रस्तुतविषयः प्रस्तुते रथकेतुभङ्गरूपविषये संक्रान्तः पर्य्यवसितौ यस्मिन् तत् तादृशम अर्थस्य उपक्षेपणं सूचनम्। रथकेतुङ्गरूपप्रस्तुतविषये दुर्य्योधनोरुभङ्गरूपाप्रस्तुत विषयस्य सूचनं कृतमित्यर्थः। तथा च रथकेतुभङ्गरूपे अर्थे चिन्तिते आगन्तुकेन गदायुद्धभावेन दुर्य्योधनीरुभङ्गरूपार्थस्य प्रयुक्तया अस्य पताकास्थानत्वम्। तथा भग्नमित्यादिगद्यभागे विशेष्यानभिधानदर्थस्य अव्यक्तत्वम्, पद्यभागे च मरुतेत्य-नेन एकतारार्थनिश्चयः, भीमेनेत्यादेः प्रत्यत्तुरभागस्य च वायुभीमसेनयोः सम्बन्धात् प्रस्तुत रथकेतुभङ्गे अप्रस्तुतदु-र्य्योधनोरुभङ्गे सम्बन्धयोग्यत्वमित्यनुसन्धेयम्।

## विमला

अर्थोपक्षेपकमिति।—अर्थस्य—कार्य्यस्य, फलरूपस्य इति यावत्, उपक्षेपकम्—उपस्थापकं, वक्ष्य-माणविष्कम्भकादिपञ्चकान्यतमित्यर्थः। स्पष्टमन्यत्।

लीनमिति।—सम्बन्धयोग्येन—प्रस्तुतान्वयोपयुक्तेन, अभिप्रायान्तरप्रयुक्तेन—अप्रस्तुतोबोधाभिप्रा-येण प्रयुक्तेन इत्यर्थः।

वृद्धेति।—वृद्धापसद—वृद्धेषु अपसदः,—अधमः, तत्सम्बुद्धौ, वृद्धतयाऽपहतविवेकष्वधम इति भावः। व्यामोहः,—वैचित्र्यं, मदोद्रेक इति यावत्।

भग्गिमिति।—भीमेन—भयानकेन, मरुता—वायुना, भग्नं—खण्डितं, भवतः,—तव, रथकेतनं—रथ-ध्वजः, किङ्किण्यः,—क्षुद्रघण्टिकाः, तासां क्वाणः,—च शब्दः, तेन बद्धः,—कृतः, आक्रन्दः,—रोदनध्वनिर्येन तथाभूतमिव, क्षितौ—भूमौ, पतितम्। यथा कोऽपि शत्रुणा आहतः क्षितो पतन् रोदिति, तद्वदिति भावः। भवत् इति च प्रस्तुते ऊरुभङ्गेऽप्यवययोग्यम्; मरुता इति विशेषनिश्चयः, अत्र रथकेतनभङ्गनिवेदनमभिमतम्, ऊरुभङ्गनिवेदन-मुपपन्नम्। पथ्यावक्तं वृत्तम्।

एतदेवोपपादयति, अत्रेति।—सङ्क्रान्तं—पर्य्यवसन्नमित्यर्थः।

## लक्ष्मी

तृतीयं पताकास्थानं दर्शयति—अर्थोपक्षेपकमिति। यत्तु स्थानम् अर्थस्य प्रस्तुतवस्तुनउपक्षेपकं सूचकं लीनमस्फुटार्थम्, सविनयं सनिश्चयम्, शिलष्टेन उपयुक्तेन प्रत्युत्तरेण उपेतं युक्तञ्च वचो वचनं भवेदित्यर्थः, सविनयं सनिश्चयम्, शिलष्टेन उपयुक्तेन प्रत्युत्तरेण उपेतं युक्तञ्च वचो वचनं भवेदित्यर्थः, इदं तृतीयं पताकास्थानम् उच्यते।

विवृणोति—लीनमिनि। अव्यक्त अस्फुट अर्थो वक्तुरभिलषितविषतो यत्र तत् तथोक्म्, सम्बन्धयोग्येन प्रस्तुतान्वयोपयुक्तेन अभिप्रायान्तरप्रयुक्तेन वक्त्रा अप्रस्तुतबोधाभिप्रायेणैव उक्तेन। सविनयमित्यत्र विनयो विशेषेण नयो निश्चयस्तदाह—विशेषेति। विशेषनिश्चयप्राप्त्या अनन्तरञ्चान्यतरनिश्चयसम्बन्धेनेत्यर्थः।

यथेति। द्वितीयेऽङ्के—'राजा तत्किमिति अनास्तीर्ण कठिनं शिलातलमध्यास्ते देवी यतः—

**'लीलांशुकस्य पवनाकुलितांशुकान्तं त्वद्दृष्टि हारि मम लोचनबान्धवस्य।**

**अध्यासितुं तव चिरं जघनस्थलस्य पर्याप्तमेव करभोरु! ममोरुयुग्मम्॥'**

(प्रविश्यापटीक्षेपेण सम्भ्रान्तः) इत्यनन्तरमिति शेषः। कञ्चुकी—

**'अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः।**
**सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते॥'**

इत्युक्तलक्षणः पुरुषविशेषः। 'राजानं प्रत्याह' इति शेषः। देव राजन्! 'देवो मेघे सुरे राज्ञि स्यान्पुंस-कमिन्द्रिये' इति मेदिनी। भग्नमिति। 'जरावैक्लव्युक्तेन विषद्गात्रेण कञ्चुकी' इत्युक्त्याऽस्य झटिति समग्रं वाक्यमुच्चरितुमसमर्थतया केवलं भग्नं भग्नमित्युक्तम्। भीमेन भयावहेन भीमसेनेन चेत्यर्थः। एवमुत्तरत्रापि आ इति खेदे। किं प्रलपसि किमनर्थकं ब्रवीषि? वृद्धापसद वृद्धाधम! व्यामोहो विभ्रमआगत इति शेषः।

किं भग्नमित्याह—भग्नमिति। भीमेन भयावहेन पक्षे भीमसेनेन मरुता वायुना पक्षे मरुद्रूपेण 'आत्मा वै जायते पुत्रः' इति न्यायात् भीमसेनस्य मरुद्रूपत्वं बोध्यम्। भग्नं छिन्नं भवतो रथस्य स्यन्दनस्य केतनं ध्वजः किङ्किणी क्षुद्रघण्टिका तस्याः क्वाणेन रवेण बद्धो जनितः आक्रन्दः क्रन्दनं येन तत्तादृशमिव सतं क्षितौ भूमौ पतितम् अध आगतम्। दुर्योधनोरुभङ्गरूपार्थोपक्षेपकं भीमेनेत्यत्र भीमसेनरूपेण स्वानुष्ठानयोग्येन केतनभङ्गातिरिक्तकाभिप्रा-ययुक्तेन दुर्योधनस्य प्रत्युत्तरेणोपेतम्। भग्नमित्यादि गद्यभागे विशेष्यानभिधानादर्थस्यास्फुटत्वम्। एवं च रथकेतनभङ्गनिवेदनेऽभिमते ऊरुभङ्गनिवेदनमुपपन्नम्।

एतदेव दर्शयति—अत्रेति । दुर्योधनोरुभङ्गरूपः अप्रस्तुतविषयः प्रस्तुते रथकेतुभङ्गरूपविषये सङ्क्रान्तः पर्यवसन्नो यस्मिंस्तत्तथोक्तम् अर्थस्य उपेक्षणं बोधनम् । तथा चात्र रथकेतुभङ्गरूपे अन्यस्मिन्नर्थे चिन्तिते आगन्तुकेन गदायुद्धेन उरुभङ्गरूपार्थप्रयोग इत्यतः पताकास्थानसामान्यलक्षणम् ।

## रुचिरा

तृतीयं भेदं लक्षयति—३३९ **अर्थोपक्षेपक**मित्यादिना ।

३३९ **यत्** । **च** । 'त्वि'ति पाठान्तरम् । **अर्थोपक्षेपकं** प्रयोजनसूचकम् (इदं च वक्ष्यमाणविष्कम्भकाद्यन्यतममिति बोध्यम्) । **लीन**मव्यक्तार्थतया गूढम् । **सविनयं** विनयेन विशिष्टेन नयेन प्राप्त्या सह वर्त्तते इति तथोक्तम् । विशिष्टो नयश्च विशेषेण निश्चितो लाभः **भवेत्** । **इदम्** । 'त'दिति शेषः । **शिलष्टप्रत्युत्तरोपेतं** शिलष्टं यत्रत्युत्तरं तेनोपेतम् । **तृतीयम्** । पताकास्थानकम् । **उच्यते** । इदमुक्तम्—यत् प्रयोजनं सूचयत् अवश्यम्भावि शिलष्टप्रत्युत्तरशालितया गूढं वचः स्यात्ततृतीयं पताकास्थानकम् । इति ॥ ३४४ ॥

कारिकां सुगमयितुं तत्तत्काठिन्यं परिहरति—**लीन**मित्यादिना । स्पष्टम् ।

उदाहरति—**यथे**त्यादिना ।

**यथा—वेणीसंहारे** । **द्वितीये** । **अङ्के** "राजा तत्किमिति अनास्तीर्णं कठिनं शिलातलमध्यास्ते देवी । यतः—'लोलांशुकस्य पवनाकुलितांशुकान्तं त्वद्दृष्टिहारि मम लोचनबान्धवस्य । अध्यासितुं तव चिरं जघनस्थलस्य पर्य्याप्तमेव करभोरु ! ममोरुयुग्मम् ॥' (प्रविश्यापटाक्षेपेण सम्भ्रान्तः)" इत्यन्तरमिति शेषः । "कञ्चुकी "अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥" इत्युक्तलक्षणः पुरुषविशेषः । 'राजानं प्रत्याहे'ति शेषः । **देव** ! राजन्निति भावः । 'देवो मेघे सुरे राज्ञि स्यान्नपुंसकमिन्द्रिये ।' इति मेदिनी । **भग्नम्** ('जरावैक्लव्ययुक्तेन विषद्रात्रेण कञ्चुकी ।' इत्युक्त्याऽस्य सपदि समस्तं वाक्यमुच्चरितुमशक्त्या तावत् उच्चारममति बोध्यम्) । **(सर्वेऽन्तः** पुरजनाः । साकूतमभिप्रायजिज्ञासामुद्रयेति भावः । **पश्यन्ति)** । **राजा** । **केन** !'मग्न'मिति शेषः । **कञ्चुकी** । **भीमेन** भयङ्करेण । 'भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे ।' इति मेदिनी । **राजा** । **कस्य** ? 'भग्न'मिति पूर्वतोऽनुप्रसक्तम् । 'ऊरुयुग'मिति तु स्मृतिमारूढम् । कञ्चुकी । भवतः ('कि'मिति राज्ञः प्रशनानुदयात् 'रथकेतन'मिति ववक्षितमपि नोक्तवान्) । **राजा** । **आः** । **किम्** । **प्रलपसि** अनर्थकं ब्रवीषि ? **भानुमती** । 'अज्ज आर्य । **किं** किम् । **अणिट्ठं** अनिष्टम् । **मंत्तेसि** मन्त्रयसे ?' राजा । **वृद्धापसद** ! अत एव—**प्रलापिन्** ! **धिक्** 'त्वा'मिति शेषः । कः किन्नामा किंस्वरूपो वेति भावः । **अयम्** । भग्नं भीमेन भवत इत्युच्चारणरूप इत्यर्थः । **अद्य** । **ते** । **व्यामोहः** । **कञ्चुकी** । **देव** ! **न खलु** । **कश्चित्** । **व्यामोहः** । **सत्यम्** । **एव** । **ब्रवीमि**—तथाहि—'**भीमेन** । **मरुता** वायुना । **भवतः** । **रथकेतनं** रथस्य पताका 'केतनं ध्वजमस्त्रियाम् ।' इत्यमरः । भग्नम् । तच्च—**किङ्किणीक्वाणबद्धाक्रन्दमिव** किङ्किणीनां क्षुद्रघण्टिकानां क्वाणः शब्दविशेषस्तेन बद्धो य आक्रन्दो भञ्जनपतनयोः शब्दो यस्य तदिव । **क्षितौ** । **पतितम्** । अत्रेदम्बोध्यम्—"भग्नं भीमेन मरुता भवतो रथकेतनम् ।' इत्यभिधित्सुः कञ्चुकी यावत् 'भग्नम्' इत्यभिहितवान्, तावत्—ऊरुयुगमध्यासितुं भआनुमतीमभिदधानः-अत एव-'ऊरुयुग'मिति स्मरन्, तदेव श्रुतवान्, अत एव—"किमि"त्यपृष्टैव राजा 'केन कस्ये'ति पप्रच्छ, सोऽपि तथैवोत्तरितवान्, राजा च—'ऊरुयुग'मिति स्मरन् चुकोप, कुञ्चुकी च 'सर्वमश्रुत्वैव भवान् कुप्यती'ति 'न मे कश्चिद् व्यामोह'इति निवेदयाञ्चके ।" इति ॥ ३३९ ॥'

उदाहरणं सङ्गमयति—अत्रेत्यादिना । स्पष्टम् । अयम्भावः—'रथकेतनं भग्नम्'इति निवेदनरूपस्य अर्थ-स्योपक्षेपणं 'दुर्योधनोरुयुगं भग्नम्' इत्यत्र पर्य्यवसितम्, एवं च—भग्नमित्यव्यक्तार्थम्, कर्त्रादीनामनुच्चरित-त्वात्। भीमेन भवत इति च ऊरुभङ्गेऽन्वयोपयोगि, तदेवाभिप्रायान्तरप्रयुक्तेन प्रत्युत्तरेणोपेतम्। मरुता रथकेतनमिति च विशेषनिश्चयप्राप्तिरूपम् । इति ।

यथा रत्नावल्याम्—

**'उद्दामोत्कलिकाविपाण्डुररुचं प्रारब्धजृम्भां क्षणा-**

**दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः।**

**अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं**

**पश्यन्कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम्॥'**

अत्र भाव्यर्थः सूचितः।

---

## विवृतिः

सुश्लिष्टः सुसंबद्धः। काव्ययोजितः, न तु सभाभ्यन्तरतया काव्यप्रयोगा योग्यः। प्रधानं फलमेव अर्थान्तरं तदाक्षेपी तत्सूचकः॥ उद्दामेति। उत्कटाभिरुद्गताभिः कलिकाभिर्विपाण्डुररुचम्। पक्षे—उत्कटोत्कण्ठया विपाण्डुररुचम्। 'उत्कण्ठोत्कलिके समे' इत्यमरः। प्रारब्धजृम्भां प्राप्तप्रायप्रकाशाम्। पक्षे—विरहक्षीणतया लब्धजृम्भां। आयासमितस्ततो विक्षेपः, खेदं च। श्वसनस्य वायोः, निश्वासस्य च। उद्गमैरविरलैः, घनैर्वा। आतन्वतीं कुर्वतीम्, सूचयन्तीं च। मदनेन वृक्षविशेषेण, कामेन च सहिताम्। देव्या वासवदत्तायाः। यथा विरहक्लिष्टसागरिकादर्शनेन तस्यां क्रोधस्तथोद्यान(लता० दर्शनकृतकालविलम्बेनापीति भावः। अत्र भावी विरहक्लिष्टसागरिकासंगमः प्रधानमर्थः सूचितः। द्वितीये श्लेषवशेनैव प्रधानार्थसूचनम्। अत्र तु न तथेति भेदः। अत्र सागरिकाप्रसादे चिन्तिते देव्याः प्रसादोऽनुष्ठेयप्राय इति सामान्यलक्षणगमनम्॥

## विज्ञप्रिया

चतुर्थमाह—द्व्यर्थो वचनेति। सुश्लिष्टः अर्थद्वये शोभनश्लिष्टः। काव्यं श्लोकस्तत्र योजितः। प्रधानार्थान्तरस्य मुख्यतया प्रतिपाद्यार्थान्तरस्य सूचक इत्यर्थः।

उद्दामेति—राज्ञा परिगृहीतां माधवीलतामकालकुसुमितां वासवदत्तायाः पराजयशंसिनीं तस्यैव दर्शयतो राज्ञ उक्तिरियम्। समदनां विरहिणीम् अन्यां नारीमिव। इमामुद्यानलतां पश्यन्नहं देव्या वासवदत्ताया मुखं कोपविपाटलद्युतिं करिष्यामीत्यन्वयः। ममान्यनारीदर्शनेन इव तत्पराजयहेतुकुसुमितमाधवीलतादर्शनेनापि तस्याः कोपो भावीत्यर्थः। उद्यानलताया विरहिनार्यास्च विशेषणान्याह—उद्दामेत्यादीनि। उत्कलिका उद्गतकलिका उत्कण्ठा च। तयोरुद्दामत्वमतिशयः। विपाण्डुरं स्वभावाद् विरहाच्च। जृम्भा विकाशः श्वासविशेषश्च। श्वसनस्य बहिर्वायोर्निः श्वासस्य चोद्गमात् आयासं व्याकुलतां खेदञ्च आतन्वतीं कुर्वतीम्।

अत्र भाव्यर्थ इति। राज्ञा सागरिकादर्शनात् वासवदत्तायाः भावी कोपो मुख्यतया प्रतिपाद्य इति प्रधानं सूचितम्। अत्र कुसुमितलतादर्शनाद् भाविनि कोपे चिन्तिते सागरिकादर्शनात् तत्कोप आगन्तुकेन श्लिष्टशब्देन प्रतिपादितः। अतः पताकास्थानसामान्यलक्षणसत्त्वम्।

## लोचन

उद्दामेति—उद्गता कलिका कोरक उत्कण्ठा च। जृम्भा विकाशः सुखनिःश्वासविशेषश्च। श्वसनो निःश्वासः बाह्यपवनश्च।

## कुसुमप्रतिमा

अर्थ इति। द्वावर्थौ यस्य च ह्यर्थः, सुश्लिष्ट उभयपक्षेऽपि ससम्बद्धः काव्ययोजितः काव्यग्रन्थे निवेशितः न पुनरुद्रटरूप इत्यर्थः, तथा प्रधानार्थान्तराक्षेपो अपरप्रधानार्थ सूचकः, वचनविन्यासा काव्यग्रन्थे विन्यस्तं वाक्यम्, परं चतुर्थं पताकास्थानकं भवेत्।

उद्दामीदिति। अहम्, उद्दाममत्यन्तम् उद्गताः कलिकाः कोरका यस्यास्ताम्, पक्षान्तरे तु उद्दामा सातिशया उत्कलिका उत्कण्ठा यस्यास्ताम्। विपाण्डुररुचिम् एकत्र पुष्पविकासात् अन्यत्र विरहात् पाण्डुवर्णाम्। प्रारब्धा जृम्भा विकासो गात्रभङ्ग्यश्च यया ताम्। तथा अविरलैर्निरन्तरैः श्वसनोद्गमनैः निश्वासोद्गमैश्च क्षणात् आयामं मञ्चलनक्लान्तिं कामवेदनाञ्च आतन्वतीं प्रकटयन्तीम्, अन्यां समदनां सक्तानां नारीमिव, समदनां मदनवृक्षसंश्लिष्टाम्, इमाम उद्यानलतां पश्यन् दर्शनेन क्लिष्वं कुर्वन् अवलोक्यंश्च देव्या वासवदत्तया सुखं ध्रुवं निश्चितम्, कोपेन मद्विलम्बजनितरोषेण इतरनायिकादर्शनजनितरोषेम च विपटला रक्तवर्णा द्युतिर्यस्य तत्तादृसरं करिष्यामि।

अत्रेति। भाव्यर्थो भविष्यद्वेषयः उद्दामीतकलिकादिविशेषणविशिष्टां सागरिकां प्रति तत्परिग्रहानन्तरमेवमेव राज्ञः साग्रहदृष्टिपातेन वासवदत्तामुखस्य कोपपाटलीकरमरूपी भावी विषयः पूर्वमेव द्योतित इत्यर्थः। एवमत्र लतादर्शनजनितविलम्बेन वासवदत्तामुखस्य कोपपाटलीकरणरूपार्थे चिन्तिते आगन्तुकेन सागरिकापरिग्रहभावेन तां प्रति भाविकाले सकामदृष्टिपातादपि वासवदत्तामुखस्य कीपपाटलीकरणरूपार्थः प्रयुक्त इति पताकायाः सामान्यलक्षणसङ्गतिः। तथा उद्दामीत्कलिकामित्यादिविशेषणानां सश्लिष्टत्वादिना द्यर्थ इत्यादेर्विशेषलक्षणस्यापि सङ्गतिरनुसन्धेया।

न चात्र "वचः सातिशयश्लिटम्" इत्यादिपताकाद्वितीयलक्षणमतिव्याप्तमिति वाच्यम्, "प्रधानार्थान्तराक्षेपो" इत्यनेन प्रधानार्थविशेषसूचने चतुर्थे पताकास्थानकम्, अप्रधानार्थ सूचने तु द्वितीयमिति रन्थक्रतैवाभिप्रेतत्वात्। तथा च उद्देश्यतया फलभूतार्थः प्रधानः, तस्य हेतुभूतार्थस्तु अनुद्देश्यतया अप्रधानः, तेन "रक्तप्रसादितभुवः क्षतविग्रहाश्च" इत्यादौ राज्यलाभरुपफलं प्रति हेतुत्वादप्रधानस्य भीमसेनक्रोधोपचितयुधिष्ठिरोत्साहस्य सूचनात् द्वितीयपताकास्थानात्वम्; अत तु उद्देश्यत्वेन प्रधानस्यैव सागरिकापरिग्रहस्य सूचनाचतुर्थपताकास्थानत्वमिति सर्वं सूस्थितम्।

## विमला

ह्यर्थ इति।—ह्यर्थ-,—अर्थद्वयसहितः, सुश्लिष्टः—सुसम्बद्धः, काव्येषु योजितः,—प्रयोजितः, काव्यप्रयोगार्हः, न तु सभाऽभ्यन्तरतया काव्यप्रयोगायोग्य इत्यर्थ; सर्वत्रैव काव्ययोजितस्य विद्यमानत्वेन काव्ययोजितत्वविशेषणस्य निरर्थकत्वापत्तेरितिभावः। प्रधानं—फलम्, एव (यत्) अर्थान्तरम्—अर्थविशेषः, तत् अपेक्षते इति प्रधानार्थान्तरापेक्षी—मुख्यफलरूपस्य अर्थस्य सूचक इत्यर्थः, परं—चतुर्थ, पताकास्थानकम्।

उदाहरति, उद्दामेति ।—वत्सराजस्य विदूषकं प्रत्युक्तिरियम् । अह् उद्दामन्—उत्कटं यथा तथा, उत्— उद्गता:, कलिका:,—कीरका:, यस्यास्ताम्, अन्यत्र—उद्दामा—उत्कटा, उत्कलिका—कान्ताथमुत्कण्ठा, ("कलिका कोरक: पुमान्" "उत्कण्ठोत्कलिके समे" इति चामर:) यस्या:, तां, विपाण्डुरा—कुसुमविकासात् विशेषेण पाण्डु-वर्णा, रुचि:,—कान्ति: यस्या:, तथाभूताम, अन्यत्र—विरहेण पाण्डुकान्तिं, प्रारब्दजृम्भां—विकासोद्यताम्, अन्यत्र— जृम्भा—आलस्यभङ्ग:, आरब्दा जृम्भा यथा तादृशी, (कामाभिलाषव्यञ्जकमिदम्) अविरलै:,—घनै:, श्वसनोद्गमै:,—वात्याप्रसरै:, अन्यत्र—निश्वासमरुङ्गि:, क्षणात्—क्षणे क्षणे, मुहुर्मुहुरित्यर्थ:, आत्मन:,—स्वस्थ, आयासम्—इत:- तत: विक्षेपम्, अन्यत्र—क्लान्तिम्, आतन्वतीं—प्रकटयन्तीम्, समदनां—मदनवृक्षान्विताम्, अन्यत्र—कामार्त्ताम्, इमामुद्यानलताम्—उपवनव्रततिम्, अन्याम्—अपरा, नारीमिव अद्य, पश्यन्—अत्र लोकयन्, देव्या:,—महाराज्ञा:, वासवदत्ताया इति यावत्, मुखं ध्रुवं—निश्चितं, कोपेन विपाटला द्युति: यस्य तादृद्धं, करिष्यामि । साध्वी स्त्री भर्त्तरम् अपरामवलोकयन्तं दृष्ट्वा कुप्यति इति प्रसिद्धि:; यथा विरहक्लिष्टसागरिकाद-शनिन तस्या: क्रोध:, तथोद्यानलतादर्शनकृतकालविलम्बेनापीति भाव: । शार्दूलविक्रीडितं वृत्तम् । रत्नावल्या पद्यमिदम् ।

अत्र भावी अर्थ:,—राजानं सागरिकाऽऽसक्तं दृष्ट्वा वासवदत्ता कोपं करिष्यतीत्येवंरूपप्रधानार्थान्तर-मित्यर्थ:, तत्सूचकमिति बोध्यम्; यद्वा,—विरहक्लिष्टसागरिकासङ्गम:, प्रधानमर्थ: सूचित:; द्वितीये, स्लेषवशेनैव प्रधानार्थसूचनम्, अत्र तु न तथेति भेद: । इह सागरिकाप्रसादे चिन्तिते देव्या: प्रसादीऽनुष्ठेयप्राय प्रति सामान्यल-क्षणगमनम् ।

## लक्ष्मी

चतुर्थ पताकास्थानलक्षणमाह—द्व्यर्थो वचनेति । द्वावर्थौ यस्य स द्व्यर्थ: सुश्लिष्ट: अर्थद्वयेऽपि सुस-म्बद्ध: काव्यग्रन्थस्तत्र योजितो निवेशित: न तु सभाभ्यन्तरतया काव्यप्रयोगायोग्य: प्रधानान्तरार्थस्य मुख्यतया प्रतिपाद्यार्थान्तरस्य आक्षेपी सूचक: वचनविन्यास: काव्यग्रन्थे विन्यस्तवाक्यम् परं चतुर्थं पताकास्थानकं स्यादिति शेष: ।

उद्दामेति । राज्ञा परिगृहीतां माधवीलतामकालकुसुमितां वासवदत्ताया: पराजयशंसिनीं तस्यैव दर्शयतो राज्ञ उक्तिरियम् । अहम् उद्दामा बन्धरहिता: परिपूर्णा इति यावत् 'उद्दामो बन्धरहिता' इति मेदिनी । एतादृशा उद्गता बहिर्गता: कलिका: कोरका: यस्या: सा तादृशी तां 'कलिका कोरक: पुमान' इत्यमर: । नारीपक्षे-उद्दामा निष्प्रतिबन्धा, उत्कलिका प्रियविषयिणी उत्कण्ठा यस्या: सा तादृशी ताम्, 'उत्कण्ठोत्कलिके समे 'इत्यमर: । विशेषेण पाण्डुरा सर्वत्रपुष्पोद्गमाच्छुभ्रारुक्कान्तिर्यस्या: सा तथोक्ता, तां, पक्षेऽप्येवमेव । तत्र प्रियवियोगेन पाण्डुरकान्ति:, प्रारब्धा जृम्भा विकासो यया सा तथोक्ता तां, 'जृम्भा विकासजृम्भजयोस्त्रिषु' इति मेदिनी । पक्षे प्रारब्धा जृम्भा जृम्भणम् आलस्याख्यं सञ्चारिभावो यया सा तादृशी ताम् अविरलै: निरन्तरै: श्वसनानां वायूनां 'श्वसन: स्पर्शनो वायु:' इत्यमंर:, उद्गमैरुत्पत्तिभि: पक्षे नि:श्वासोद्गमैश्च आत्मन: स्वस्य क्षणात् आयासां भ्रमणजन्यक्लान्तिं पक्षे कामवेदनां च आतन्वतीं प्रकटयन्तीम् अन्यां समदनां मदनेन मन्मथेन सहितां सकामामित्यर्थ:, नारीमिव स्त्रीमिव, समदनां मदनवृक्षसंश्लिष्टाम् इमां सन्निकृष्टाम् उद्यानलताम् आक्रीडवल्लीमं, 'पुमानाक्रीड उद्यानम्' 'वल्ली तु व्रततिर्लता' इति चामर:, पश्यन् दर्शनेन विलम्ब कुर्वन्, पक्षे अवलोकयंश्च देव्या वासवदत्ताया मुखं वक्क्रंध्रुवं निश्चितम् कोपेन मद्विलम्बजनितक्रोधेन अन्यनायिकाऽवलोकजनितक्रोधेन च विशेषेण पाटला श्वेतरक्ता 'श्वेतरक्तस्तु

पाटलः' इत्यमरः, द्युतिः कान्तिर्यत्र तत्तथोक्तं 'शोभा कान्तिर्द्युतिस्छविः' इत्यमरः, करिष्यामि विधास्यामि। पत्युः समदान्यनारीमुखदर्शने स्वीयायाः क्रोधेन आताम्रमुखं भवति। एतेन पद्येन राज्ञौ नवमल्लिकादर्शने औत्सुक्यं प्रकटितम्। अत्र हि वत्सराजगृहीतनवमल्लिकापुष्पोद्गमेन स्वीयमाधवीलतायाः पुष्पोद्गमाभावेन च वासवदत्ताया मुखे पाटलिमोत्पत्तिरित्याशयः। शार्द्दूलविक्रीडितं छन्दः।

अत्र भाव्यार्थः सूचित इति। उद्दामोत्कलिकादिविशेषणविशिष्टां सागरिकां प्रति वासवदत्तातत्परिग्रहप-रिणयानन्तरमेव राज्ञः साभिलाषदृष्टिपातेन वासवदत्तामुखस्य कोपपाटलीकरणरूपो भावी विषयः प्रागेव प्रकटित इत्यर्थः। उद्दामोत्कलिकामित्यादिविशेषणानां सुश्लिष्टत्वादिना 'द्व्यर्थ' इत्यादेर्विशेषपताकास्थानलक्षणं बोध्यम्। तथा कुसुमितलतादर्शनजनितविलम्बेन भाविनि वासवदत्तामुखस्य कोपपाटलीकरणरूपार्थे चिन्तिते आगन्तुकेन सागरिका परिग्रहभावेन तां प्रति भाविकाले सकामदृष्टिपातादपि वासवदत्तामुखस्य कोपपाटलीकरण-रूपार्थः प्रयुक्त इति पक्षाकास्थानसामान्यलक्षणसत्त्वम्।

नन्वत्र द्वितीयपताकालक्षणमतिव्याप्तमिति चेत्! अस्मिल्लक्षणे प्रधानपदोपादानेन प्रधानार्थविशेषद्यो-तनं चेदम् अप्रधानार्थद्योतने तु तदित्याशयात्। एवं चोद्देश्यतया फलभूतार्थः प्रधानः तस्य हेतुभूतार्थस्तु अनुद्देश्य-तया अप्रधानः। प्रकृतोदाहरणे उद्देश्यत्वेन प्रधानस्यैव सागरिकापरिग्रहस्य द्योतनम्, द्वितीयपताकास्थानोदाहरणे 'रक्तप्रसाधित भुवः' इत्यादौ राज्यप्राप्तिरूपफलं प्रति हेतुत्वादप्रधानस्य भीमसेनरोषवृद्धयुधिष्ठिरात्साहसस्य द्योतनमिति स्पष्टं भेदः।

## रुचिरा

चतुर्थं लक्षयति—३४० द्व्यर्थ इत्यादिना।

३४० **द्व्यर्थः**। अतएव—**सुश्लिष्टः**। **काव्ययोजितः** काव्ये पद्यमयप्रबन्धे इति भावः। एतेन-गद्यस्य निरासः। अत एव—'भग्न'मिति प्रागुदाहृतदेतस्य भेद इति बोध्यम्। **प्रधानार्थान्तराक्षेपी** प्रधानं फलमेवार्थान्तर-मिति तदाक्षिपतीत्येवंशीलः। वचनविन्यासः। परमन्यत् पताकास्थानकम्॥ ३४५॥

उदाहरति—**यथा**—**रत्नावल्याम्**—"**उद्दामोत्कलिके**"त्यादौ।

"**अद्य**। **उद्दामोत्कलिकाविपाण्डुररुचमुद्दामात्यन्तमुद्गता** याः कलिकास्ताभिः, अन्यत्र—उद्दामात्यन्तं योत्कलिकोत्कण्ठा तया विपाण्डुरा रुच् कान्तिर्यस्यास्ताम्। 'उत्कण्ठोत्कलिके समे' इत्यमरः। **प्रारब्धजृम्भां** प्रारब्धा जृम्भा विकासः, अन्यत्र विरहाधिना कार्य्येषु विरतिसूचकं मुखव्यादानलक्षणं चेष्टितं यस्यास्ताम्। **क्षणात्**। **अविरलैः**। **श्वसनोद्गमैः** श्वसनस्य वायोः, अन्यत्र श्वास्योद्गमास्तैः। **आत्मनः**। **आयासं** कम्पारूपं खेदम्। **आतन्वतीम्**। **समदनां** मदनेन वृक्षविशेषेण, अन्यत्र कामदेवेन सह वर्त्तते इति तां तथाविधाम्। **इमाम्**। उद्यानलताम्। अन्यामपराम्। **नारीम्**। **इव**। **पश्यन्**। **अहम्**। **ध्रुवम्**। **देव्या** वासवदत्तायाः। **कोपविपाटलद्युति** कोपेन विपाटला विशेषेण पाटला श्वेतरक्ता द्युतिर्यस्य तत्तथाविधम्। **मुखम्**। **करिष्यामि**। नायिकायाः सपत्नी-दर्शनमसह्यमिति तथोक्तमिति बोध्यम्। अत्र शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक्॥ ३४०॥"

उदाहरणफलमाह—**अत्रे**त्यादिना।

**अत्राऽस्मिन्नुदाहृते पद्ये । भावी** भविष्यः । सागरिकायामनुनयं निदधानं राजानं विलोक्य वासवदत्तायाः कोप इति शेषः । **अर्थः । सूचितः ।** तथा चाऽत्र प्रधानं वासवदत्तायाः कुतूहलेन प्रणयकोपोद्भावनम्, अर्थान्तरं पुनः साक्षादेतदिति बोध्यम् ।

ननु कुत्र कविना किमर्थमेतानि निवेशनीयानि इत्याशङ्क्याह—**एतानी**त्यादिना ।

एतानि चत्वारि पताकास्थानानि क्वचिन्मङ्गलार्थं क्वचिदमङ्गलार्थं सर्वसंधिषु भवन्ति। काव्यकर्तुरिच्छावशाद् भूयो भूयोऽपि भवन्ति। यत्पुनः केनचिदुक्तम्—'मुखसंधिमारभ्य संधिचतुष्टये क्रमेण भवन्ति' इति, तदन्ये न मन्यन्ते। एषामत्यन्तमुपादेयानामनियमेन सर्वत्रापि सर्वेषामपि भवितुं युक्तत्वात्।

---

## विज्ञप्रिया

क्वचिन्मङ्गलार्थमिति। प्रथमे मर्तुं प्रवृत्तवासवदत्ताज्ञानादभिलषितसागरिकाप्राप्तेरुद्दामोत्कलिकामित्यत्र भाविन्याः सागरिकाप्राप्तेश्च बोधनात् मङ्गलार्थता। रक्तप्रसाधितेत्यादौ कुरूणां मरणस्य भग्नं भीमेनेत्यादौ दुर्योधनोरुभङ्गस्य च बोधनात् तेषाममङ्गलार्थता। भूयो भूयोऽपि इति। स्थाने स्थाने इत्यर्थः। सन्धि चतुष्टये इति। पताकास्थानस्य चतुष्कत्वात् प्रथमोपस्थितसन्दिचतुष्टये इत्यर्थः। सर्वत्राऽपीति। पञ्चसन्धिष्वपि इत्यर्थः। सर्वेषामिति सर्वपताकास्थानानामित्यर्थः।

## कुसुमप्रतिमा

एतानीति। मङ्गलार्थममङ्गलार्थञ्चैतद्द्वयमपि नायकस्यैवेति बोध्यम्। तत्र मङ्गलार्थान्युदाहृतानि चत्वारि। अमङ्गलार्थं यथोत्तररामचरिते रामः—"...यदि परमसह्यस्तु विरहः।" प्रविश्य प्रतिहारी—"देव! उवत्थिदो।" इति। अत्र विशेषस्त्वस्माभिरुत्तररामचरिततटीकायामुक्तो दृष्टव्यः। भूयोऽपि पुनरपि चतुर्थ्योऽधिकमपीत्यर्थः।

यदेति। उपादेयानामुत्कृष्टत्वेन ग्राह्याणाम्। सर्वत्रापि सर्वेषु सन्धिष्वपि।

## विमला

एतानीति।—भूयोऽपि—पुनः पुनरपि, भवन्ति, प्रयुक्तनीति शेषः। उपादेयानां—सहृदयमनोरत्याणमित्यर्थः अनियमेन—नियमं विनेत्यर्थः।

## लक्ष्मी

एतानीति। क्वचिन्मङ्गलार्थमिति। प्रथमे 'अलमलमतिमात्रम्' इत्यत्र मर्तुं प्रवृत्तवासवदत्ताज्ञानादभिषितसागरिकाप्राप्तेः उद्दामोत्कलिकामित्यत्र भाविन्याः सागरिकाप्राप्तेश्च बोधनान्मङ्गलार्थता। 'रक्तप्रसाधिते'त्यादौ तु कुरूणां मरणस्य 'भग्नं भीमेनेत्यादौ दुर्योधनोरुभङ्गस्य च बोधनात्तेषाममङ्गलार्थता। एतेन 'मङ्गलार्थान्युदाहृतानि चत्वारि' इति वदन्तोऽपास्ताः। भूयोऽपि स्थाने स्थाने इत्यर्थः।

यत्पुनरिति। सन्धिचतुष्टये पताकास्थानस्य चतुष्कत्वात् प्रथमोपस्थितमुखे प्रतिमुखे, गर्भे, विमर्शे चेति सन्धिचतुष्टये इत्यर्थः। उपादेयानामुत्कृष्टत्वेन ग्राह्याणामित्यर्थः। सर्वत्राऽपि पञ्चसन्धिष्वपीत्यर्थः। सर्वेषामिति। सर्वपताकास्थानानामित्यर्थः।

## रुचिरा

**एतानि** निर्दिष्टानि । **चत्वारि** । **पताकास्थानकानि** । **क्वचित्** कस्मिंश्चित् रूपके इत्यर्थः । मङ्गलार्थम् । **क्वचिद्** । **अमङ्गलार्थम्** । **अपि** । **सर्वसन्धिषु** सर्वे वक्ष्यमाणाः पञ्चविधाः सन्धयो विभागास्तेषु । **भवन्ति** 'इति बोध्य'मिति शेषः ।

नन्वैष एव नियम इत्याह—**काव्ये**त्यादिना ।

**काव्यकर्तु** रूपकनिर्मातुः कवेरित्यर्थः । **इच्छावशात्** । **भूयः** पुनः सन्धिमुल्लङ्घ्येति यावत् । **अपि** । **भवन्ति** । एतदेव परेषां मतं निराकृत्य समर्थयते-**यत्** । **पुनः** । **केनचिन्नतु** कैश्चित्, एतेनास्याश्रद्धेयत्वं सूचितम् । **उक्तम्** ।"**मुखसन्धि** मुखसञ्ज्ञकं सन्धिमित्यर्थः । **आरभ्य** । **सन्धिचतुष्टये** मुखे प्रतिमुखे गर्भे विमर्शे चेतिं चतुर्षु सन्धिष्विति यावत् । क्रमेण निर्देशानुपूर्व्या । **भवन्ति** । 'पताकास्तानकानी'ति शेषः । **इति** । तत् । अन्य । अस्मादादय इत्यर्थः । **न** । **मन्यन्ते** । हेतुं निर्दिशति—**एषां** पताकानामिति भावः । **अत्यन्तम्** । **उपादेयानाम्** । **अनियमेन** क्रमेण भवन्तीति नियमत्यागेन । **सर्वत्र** सर्वेषु'सन्धिषु' इति शेषः । **अपि** । **सर्वेषां** 'पताकास्थानकाना'मिति शेषः ! **अपि** । **भवितुम्** । **युक्तत्वात्** । मुखे सन्धौ प्रथममेव पताकास्थानकं स्यादिति नियमो न युक्तः, न वा सन्धिष्वेव पताकास्थानकनिवेशः स्यादित्यपि युक्त इति भावः ।

**यत्स्यादनुचितं वस्तु नायकस्य रसस्य वा।**
**विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत्॥ ५०॥**

अनुचितमितिवृत्तं यथा—रामस्य च्छद्मना वालिवधः। तच्चोदात्तराघवे नोक्तमेव। वीरचरिते तु वाली रामवधार्थमागतो रामेण हत इत्यन्यथा कृतः।

---

## विवृतिः

अन्यथा उचितं यथा भवति तथा पुराणादिविरुद्धमपि स्वेच्छया कल्पयेत्।

## विवृतिपूर्तिः

अन्यथा वेति। अत एव ध्वन्यालोके—'अपारे काव्यसंसारे कविरेव प्रजापतिः। यथास्मै रोचते विश्वं तथेदं परिवर्तते॥ श्रृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत्। स एव वीतरागश्चेन्नीरसं सर्वमेव तत्॥ भावानचेतनानपि चेतनवच्चेतनानचेतनवत्। व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया॥' इत्यादि राजानकानन्दवर्धनाचार्यैः प्रतिपादितम्॥

## लोचन

यत्स्यादिति। रामादेर्हि छद्मना वालिवधादेरभिधाने गूढतरतदभिप्रायपरिज्ञानानिपुणानां नाटककाव्यादिभिः रसास्वादमुखपिण्डद्वारेण कृत्याकृत्यप्रवृत्तिनिवृत्तियोज्यानां सुकुमारमतीनां राजपुत्रप्रभृतीनां श्रीरामचन्द्रादिमहापुरुषचरितमालोच्यानुचितासु कथासु प्रवृत्तिप्रसङ्गः स्यादिति। महापुरुषचरितमप्यनुचितमितिवृत्तम्। नाटकादौ परिहार्यमिति भावः। रसस्यानुचितत्वं वक्ष्यमाणव्यभिचारिभावादेः स्वशब्दवाच्यत्वम्॥

## कुसुमप्रतिमा

यदिति। यत् वस्तु इतिवृत्तं नायकस्य रसस्य वा अनुचितं विपरीतस्वभावप्रकाशत्वेन असङ्गतं विरुद्धं वा स्यात्; तदितिवृत्तं कविना परित्याज्यम्, अन्यथा वा पुराणादिविरुद्धमपि नायकस्य रसस्य वा सम्बन्धे उपयुक्तं वा कविः प्रकल्पयेत्। नायकोत्कर्षपुदर्शनस्य रसपुष्टिकरणस्य च कवेर्मुख्योद्देश्यत्वादिति भावः।

## विमला

यदिति।—यत् वस्तु नायकस्य वा रसस्य अनुचितं—स्वरूपच्युतिप्रत्यायकं, तत् विरुद्धं—प्रतिकूलं परित्याज्यं स्यात्, वा अन्यथा—उचितं यथा भवति तथा, पुराणादिविरुद्धमपि स्वेच्छया इति शेषः, प्रकल्प्येत्—रचयेत्। अत एवोक्तम्,—"अपारे काव्यसंसारे कविरेव प्रजापतिः। यथाऽस्मै रोचते विश्वं तथेदं परिवर्त्तते व श्रृङ्गारी चेत्, कविः काव्ये जातं रसमयं जगत्। स एव वीतरागश्चेन्नीरसं सर्वमेव तत्॥ भावानचेतनामपि चेतनवच्चेतनानचेतनवत्। व्यवहरति यथेष्टं सुकविः काव्ये स्वतन्त्रतया॥" इति ध्वन्यालोके।

## लक्ष्मी

काव्ये कवेर्न पारतन्त्रयं किं तु स्वातन्त्रयमेवेति दर्शयितुमाह—यत्स्यादनुचितमिति । यत् वस्तु इतिवृत्तं नायकस्य रसस्य वा अनुचितं विपरीतस्वभावद्योतकत्वेन सङ्गतिशून्यम् रसस्यानुचितत्वं वक्ष्यमाणव्यभिचारिभावादेः स्वशब्दवाच्यत्वम्, विरुद्धं वा स्यात् तत् इति वृत्तं कविना परित्याज्यम्, अन्यथा उचितं यथा भवति तथा पुराणादिविरुद्धमपि नायकस्य रसस्य वा सम्बन्धे उपयुक्तं वा स्वेच्छया कविः कल्पयेत् । कवेर्मुख्यतया नायकोत्कर्षप्रदर्शनस्य रसपुष्टिकरणस्य चोद्देश्यत्वादिति भावः । अत एव ध्वन्यालोके राजानकानन्दवर्धनाचार्यैः—

**'अपारे काव्यसंसारे कविरेकः प्रजापतिः । यथास्मै रोचते विश्वं तथेदं परिवर्त्तते ॥**
**शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत् । स एव वीतरागश्चेन्नीरसं सर्वमेव तत् ॥**
**भावानचेतनानपि चेतनवच्चेतनानचेतनवत् ।**
**व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया ॥'**

इत्युक्तम् । विश्वं काव्यसंसारम् ।

उदाहरणद्वारोक्तमर्थं किञ्चित् स्फुटीकरोति—अनुचितमिति । उदात्तराघवे नोक्तमेवमायुराजेनेति शेषः । अत्रेदम्बोध्यम्—रामादेर्हि छद्मना वालिवधादेरभिधाने गूढतरतदभिप्रायपरिज्ञानानिपुणानां नाटककाव्यादिभिः रसास्वादमुखपिण्डद्वारेण कृत्याकृत्यप्रवृत्तिनिवृत्तियोज्यानां सुकुमारमतीनां राजपुत्रप्रभृतीनां श्रीरामचन्द्रादिमहापुरुषचरितमालोच्यानुचितासु कथासु प्रवृत्तिप्रसङ्गः स्यात् । महापुरुषचरितमप्यनुचितमितिवृत्तं नाटकादौ परिहार्यमिति । वीरचरिते तु इतोऽग्रे—'रावणसौहृदेने'ति योज्यम् ।

फलितार्थमाह—एवञ्चेति । बहुसमयव्यापितया पुराणेतिहासादिषु प्रसिद्धानामपि वृत्तान्तानां स्वल्पसमयनिर्वर्त्येन वर्णनस्य नाट्यशास्त्रप्रवर्त्तकभरतादिमहर्षिसम्मतत्वे चेत्यर्थः ।

## रुचिरा

काव्ये च कवेरेव स्वातन्त्रयं, न तु तस्य पारतन्त्रयमिति दर्शयितुमाह—३४१ **यदित्यादि** ।

३४१ **यत्** । **नायकस्य** । सन्दर्भप्रधानस्येत्यर्थः । **अनुचितम्** । **वस्तु** इतिवृत्तमिति भावः । **स्यात्** । **वा** यद्वेत्यर्थः । **रसस्य** । **विरुद्धम्** । स्यादिति पूर्वतोऽन्वेति । **तत्** । **परित्याज्यम्** । **वा** । **अन्यथा** । **प्रकल्पयत्** यथा नायकस्य रसस्य चापकर्षो न भवेत्तथा कविर्यतेतेति भावः । अत एवाहुर्ध्वन्यालोककाराः—'अपारे काव्यसंसारे कविरेव प्रजापतिः । यथाऽसौ रोचते विश्वं तथेदं परिवर्त्तते'इति । विश्वं काव्यसंसारः । 'भावानचेतनानपि चेतनवच्चेतनानचेतनवत् । व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया'इति च ॥ ३४७ ॥

उदाहरणेनोक्तमर्थं किञ्चित्स्पष्टयति—**अनुचितमित्यादिना** ।

**अनुचितं** स्वरूपाऽपकर्षकम् । अत एव प्रसहनादौ धृष्टनायकादेः सत्त्वात्,—धीरोदात्ताद्यनुचितमप्युचितमेवेति बोध्यम् । **इतिवृत्तम्** । **यथा**—**रामस्य** रामकृतः । सम्बन्धसामान्यविवक्षया षष्ठी । **छद्मना** कपटेन । वालिवधः वालिहननम् । तद्वालिवधरूपमितिवृत्तमिति भावः । **च** । **उदात्तराघवे** नाटके । **उक्तम्** । **एव** । **न** । किन्तु परित्यक्तमिति भावः । **महावीरचरिते** भवभूतिकृतनाटके । **तु** 'पञ्चमेऽङ्के'इति शेषः । **वाली** । **रामवधार्थम्** । 'माल्यवत आग्रहा'दिति शेषः । **आगतः** । **रामेण** । **हतः** । **इतीत्येवम्** । **अन्यथाकृतो** विपरीतः कृतः । एवं प्रधानरसस्य विरुद्धमपि न वर्णनीयम् । इति बोध्यम् ।

**अङ्केष्वदर्शनीया या वक्तव्यैव च संमता ।**

**या च स्याद्वर्षपर्यन्तं कथा दिनद्वयादिजा ।। ५१ ।।**

**अन्या च विस्तरा सूच्या सार्थोपक्षेपकैर्बुधैः ।**

अङ्केषु अदर्शनीया कथा युद्धादिकथा ।

**वर्षादूर्ध्वं तु यद्वस्तु तत्स्याद्वर्षादधोभवम् ।। ५२ ।।**

उक्तं हि मुनिना—

**'अङ्कच्छेदे कार्यं मासकृतं वर्षसंचितं वापि ।**

**तत्सर्वं कर्तव्यं वर्षादूर्ध्वं न तु कदाचित् ।।'**

एवं च चतुर्दशवर्षव्यापिन्यपि रामवनवासे ये ये विराधवधादयः कथांशास्ते ते वर्षवर्षावयवदिनयुग्मादीनामेकतमेन सूचनीया न विरुद्धाः ।

**दिनावसाने कार्यं यद्दिने नैवोपपद्यते ।**

**अर्थोपक्षेपकैर्वाच्यमङ्कच्छेदं विधाय तत् ।। ५३ ।।**

---

## विवृतिः

अदर्शनीया निषिद्धा । वक्तव्यैव अवश्यं वक्तव्या ।

अनावश्यकत्वेन संमता वक्तुरभीष्टा च दिनद्वयादिजा दिनद्वयादिनिर्वर्त्या 'नानेकदिननिर्वर्त्यकथया संप्रयोजितः' इत्यनेन (२७५ पृ.) तस्य अङ्के निषिद्धत्वेऽपि 'वर्षपर्यन्तम्' इति नियमार्थं पृथगुपादानम् । अन्या एकदिननिर्वर्त्या ।

अनावश्यकत्वेन संमता वक्तुरभीष्टा च । दिनद्वयादिजा दिनद्वयादिनिर्वर्त्या 'नानेकदिननिर्वर्त्यकथया संप्रयोजितः' इत्यनेन (२७५ पृ.) तस्य अङ्के निषिद्धत्वेऽपि 'वर्षपर्यन्तम्' इति नियमार्थ पृथगुपादानम्. अन्या एकदिनिनिर्वर्त्या ।

अङ्कच्छेदे विष्कम्भकादौ । एवं च वर्षादूर्ध्वमिति प्रतिप्रसवाभिधाने च । दिनावसान इति ।

## विवृतिपूर्तिः

सेति । सा सर्वा सूच्या सूचनीया ।

## विज्ञप्रिया

या च स्याद्वर्षपर्यन्तमिति । तादृशी कथा दिनद्वयादिनाभिनेतव्या इत्यर्थः । अन्या चेति—अन्या विस्तरा बाहुल्यादभिनेतुमशक्या । सा कथा अर्थोपक्षेपकैर्वक्ष्यमाणाऽर्थोपक्षेपकपरिभावितैर्विष्कम्भकादिपञ्चभिर्बुधैः

सूच्येत्यर्थः। सूच्या इत्यत्र क्षेप्या इति क्वचित् पाठः। अङ्केष्वदर्शनीयेत्यादिकं पूर्वत्र अन्या इत्यत्रान्वितम्। तेन साप्यर्थोपक्षेपकैः सूच्येत्यर्थः।

वर्षादधोभवमुत्तरभवं द्वितीयवर्षादिनाऽपि निष्पाद्यम्। पूर्वत्र वर्षपर्यन्तत्वमिह तु वर्षादूद्ध्र्वत्वमिति भेदान्न पौनरुक्त्यम्। वर्षादूद्ध्र्वमिति। तत् सर्वं वर्षादूद्ध्र्वं न कर्तव्यम्। इदमुपलक्षणम्। किन्तु मासपर्यन्तमपि न कर्त्तव्यम्। किन्तु अङ्कविच्छेदे एव कार्यमित्यर्थः।

दिनावसाने इति। दिनावसानकार्यं यद्वस्तु दिनेनैवोपपद्यते क्रियाबाहुल्याभावात्। दिनेनैवाभिनेतुं शक्यत इत्यर्थः। दिनैकोपपादनीयं वस्तु कथं वाच्यभित्यत्राह—अर्थोपक्षेपकैरिति।

## लोचन

ननु यदि दुराह्वानादयोऽङ्केष्वदर्शनीयास्तत्कथं नाटकादवुपक्षेपणीया। एकदिनमात्रस्य च कथाया अङ्क-दर्शनीयत्वेन दिनद्वयादिकथायाः कथं परिग्रहः कथाविस्तारो वा रसविघ्नहेतुत्वात्कथमङ्के दर्शनीय इत्यत आह-अङ्केष्विति।

ननु एकवर्षकथैव यद्यर्थोपक्षेपेण वाच्या तदूद्ध्र्वं कथा किं परित्याज्या इत्यत आह—वर्षादिति.

अङ्कच्छेद इति। तदिति, प्रसिद्धम्। सर्वं माससञ्चितं वर्षसञ्चितं वाऽपि कार्यं कृत्यम् अङ्कच्छेदेऽपि कर्त्तव्यम्। अर्थादर्थोपक्षेपकैः सूच्यमित्यर्थः।

## कुसुमप्रतिमा

अङ्केष्विति। या दूराह्वानवधादिप्रकाशिका कथा वृत्तान्तः अङ्केषु अदर्शनीया "दूराह्वान' वधो युद्धम्' इत्यादिना निषिङ्गत्वेन कविना अरवनीया अथ वक्तव्यैव सम्भता अन्यथा पूर्वापरवृत्तान्तसंलग्न्त्वा। भावेन अवश्यवक्तव्यत्वेनाभिमता, या च कथा दिनद्वयादिजा वर्षपर्य्यन्तं व्याप्ता द्विविदिनावध्येकद्विप्रभृति यत् सरपर्य्यन्तनिष्पन्ने त्यर्थः अन्या विस्तरा च एकमात्रदिननिष्पन्नापि अतिविस्तृता च या कथा, सा तत्सर्वा अर्थोपक्षेप्रकैर्वक्ष्यमाणविष्कम्भकादिभिर्बुधैः कविभिः सूच्या प्रकाश्याः "नानेकदिलनिर्वर्त्यं कथया सम्प्रयोजितः" "नातिविस्तरः" इति पूर्वोक्ताभ्यामङ्कमध्ये तन्निर्म्माणनिषेधादिति भावः।

अथ वत्सराधिककालनिष्पवन्नया पुराणेतिहासादिषु प्रसिद्धानां वृत्तान्तानामर्थोपक्षेपवरपि किं तावत्कालनिष्पाद्यत्वेनैव वर्णनीयम्? आहोस्विदनरूपेणेत्याह वर्षादिति। यत् वस्तु वृत्तान्तः वर्षादूर्द्धं वत्सराधिककालनिष्पन्नतया पुराणादिषु प्रसिद्धम् तत् अर्थोपक्षेपकेष्वपि वर्षादधीभवं वत्सरन्धुभकालनिष्पाद्यतया वर्णनीयं स्यात्। एवञ्च मति वाञ्छितः संक्षेपः सूपपद्यत इति भावः।

अङ्केति। मानकृतम् एकमासादिना निष्पन्नम्, वर्षसञ्चितं संयत्सरपर्य्यन्तकालनिष्पन्नं वापि इतिवृत्तम्, अङ्कस्य च्छेदे समाप्तौ अर्थोपक्षेपके इत्यर्थः कार्य्यं कविना रचयितव्यम्। तु किन्तु कदाचि दङ्कच्छेदिऽपि तत्सर्वं मामकृतं वर्ष सञ्चितं वा इतिवृत्तम्, वर्षादूर्द्धं न कर्त्तव्यं वत्सराधिककालनिष्पन्नतया कविना न रचयितव्यम्।

एवञ्चेति। अधिककालव्यापितया पुराणादिषु, प्रसिद्धानामपि वृन्तान्तानां स्वल्पकालनिष्पन्नतया वर्णनस्य महर्षि भरतादिसम्मतत्वे चेत्यर्थः। वष वत्सरः, वर्षावयवी मासः, दिनयुग्मं दिवसद्वयम्, आदि शब्दात् एकदिनादिकञ्च, तेषामेकतमेन यथासम्भवेन कविना सूचनीयाः; किन्तु तथात्वेन मिथ्यात्वेऽपि न विरुद्धा नाटकादौ

न दोषावहाः; ख्यातवृत्तमूलस्यापि नाटकादेर्ज नमनोरञ्जनस्यैव मुख्योद्देश्यत्वात् नीरसशनां संक्षेपबन्धनेनैव जनमनोरञ्जनसम्भवदिति भावः ।

दिनेति । यत् कार्य्यम् इतिवृत्तम्, दिनेनैव उपपद्यते एकेनापि समयेणैव दिनेन निष्पन्नतया पुराणादिषु वर्ण्यते; तदपि कार्य्यम्, अङ्कस्य च्छेदं समाप्तिं विधाय दिनस्य अवसाने शेषभागे निष्पन्नतया अर्थोपक्षेपकैर्वाच्यं कविना वक्तव्यम् । एवञ्च सति नीरसः संक्षेपः सूपपद्यत इति भागः ।

## विमला

अङ्केष्विति ।—या—कथा, अङ्केषु, अदर्शनीया—निषेधनीया, सा सम्मता—वक्तुरभीष्टा चेत, वक्तव्या—कथया निर्वाह्या, एव, न तु कार्य्यत इति भावः; या—कथा, वर्षपर्य्यन्तं—संवत्सरसाध्येति भावः, सा दिनद्वयादिजा—दिवसद्वयादिभिः निर्वाह्या इत्यर्थः, स्यात् । ["नामकदिननिर्वर्त्यकथया सम्प्रयोजितः"इत्यनेन तस्य अङ्के निषिडद्यत्वेऽपि वर्षपर्य्यन्तम् इति नियमार्थं पृथगुपादानम्] । अन्या या विस्तरा—अतिबहुला यथा, सा—समस्ताऽपि कथा, बुधैः—मण्डितैः, अर्थोपक्षेपकैः,—अर्थसूचकैः वाक्यैः, वक्ष्यमाणैर्विष्कम्भकादिभिरित्यर्थः, सूच्या—प्रकाश्या ।

वर्षादिति ।—यत् वस्तु वर्षात् ऊर्द्ध—वत्सराधिकसम्पाद्यमित्यर्थः, तत् वर्षात् वृद्भोभवं—वर्षात् न्यूनकालेन निर्वाह्यमित्यर्थः, स्यात् ।

अङ्कच्छेद इति ।—अङ्कस्य छेदे—अवसाने, विष्कम्भकादावित्यर्थः, यत् कार्य्यं मासकृतं, वा, वर्षसञ्चितं—संवत्मरकृतमित्यर्थ, तत् सर्वं वर्षात् ऊर्द्ध्वं कदाचित् न तु—नैव, कर्त्तव्यम् ।

एकदिननिर्वर्त्यस्य कथाऽशब्दस्य निर्वर्त्तनीयत्वप्रकारमाह, दिनेति ।—यत् कार्य्यं दिनेन—सम्पूर्णेन दिनसेन, उपपद्यत—सङ्गच्छते, तत्—सम्पूर्णदिवस निर्वत्तर्त्य कार्य्यमित्यर्थः, अङ्कच्छेदम्—अङ्कविरामं, विधवाय—कृत्वा, दिनावसाने—दिवसावसानावसरे, अर्थोपक्षेपकैः,—वक्ष्यमाणैः विष्कम्भकादिभिः, वाच्यं—वक्तव्यम् ।

## लक्ष्मी

ननु यदि दूराह्वानादयोऽङ्केष्वदर्शनीयास्तत्कथं नाटकादावुपक्षेणीया । एकदिनमात्रस्य च कथाया अङ्कदर्शनीयत्वेन दिनद्वयादिकथायाः कथं परिग्रहः कथाविस्तारो वा रसविघ्नहेतुत्वात्कथमङ्के दर्शनीय इत्यत आह—अङ्केष्विति । या दूराह्वानवधिप्रकाशिका कथा वृत्तान्तः अङ्केषु अदर्शनीया 'दूराह्वानं बधो युद्धम्' इत्यादिनिषिद्धा, अथ वक्तव्यैव संमता अन्यथा पूर्वापरकथासंलग्नत्वाभावेन अवश्यवक्तव्यत्वेनाभीष्टा, या च कथा दिनद्वयादिजा दिनद्वयादिनिर्वर्त्त्या 'नानेकदिननिर्वर्त्त्यकथया संप्रयोजितः' इत्यनेन तस्य अङ्के निषिद्धत्वेऽपि 'वर्षपर्यन्तम्' इति नियमार्थं पृथगुपादानम् । अन्या एकदिननिर्वर्त्त्या विस्तरा अतिविस्तृता च या कथा सा तत् सर्वा अर्थोपक्षेपकैः वक्ष्यमाणार्थोपक्षेपकपरिभावितैर्विष्कम्भकादिपञ्चभिर्बुधैः कविभिः सूच्या प्रकाश्या, तस्या अपि 'नातिविस्तरः' इत्यनेनाङ्के निषिद्धत्वादिति भावः ।

अङ्केषु किमदर्शनीयमित्यत आह—अङ्केष्विति । स्फुटोऽर्थः ।

ननु एकवर्षकथैव यद्यर्थापक्षेपेण वाच्या तदूर्ध्वं पुराणेतिहासादिषु प्रसिद्धानां वृत्तान्तानां किं परित्यागः स्यादित्यत आह—वर्षादूर्ध्वमिति। यत् वस्तु वृत्तान्तं वर्षादूर्ध्वं वर्षातिरिक्तकालनिर्वर्त्त्यं पुराणादिषु प्रसिद्धम्, पूर्वत्र वर्षपर्यन्तत्वमिह तु वर्षादूर्ध्वमिति भेदान्न पौनरुक्त्याशङ्का, तत् अर्थोपक्षेपकेष्वपि वर्षादधोभवं वर्षाभ्यन्तरनिर्वर्त्त्यं यथा स्यात्तथा कल्पयेत्, तथा सति अभीष्टो नितरां सिध्यतीति भावः।

उक्तार्थे प्रमाणं दर्शयति—उक्तमिति। अङ्कच्छेद इति। मासकृतम् एकमासादिना निर्वर्त्त्यम्, वर्षसञ्चितं वा इति वृत्तम् अङ्कस्यच्छेदे समाप्तौ विष्कम्भकादावित्यर्थः, कार्यं कविना कर्त्तव्यम्। तु किन्तु कदाचित् अङ्कच्छेदेऽपि तत्सर्वं माससञ्चितं वर्षसञ्चितं वापि इति वृत्तम्, वर्षादूर्ध्वं न कर्त्तव्यं वर्षातिरिक्तकालनिर्वर्त्त्यं कविना न रचनीयम्।

वर्षो हायनः वर्षावयवो मासः दिनयुग्मं वासरद्वयम् आदिपदादेकदिनादिकं च तेषामेकतमेन कविना प्रकटनीयाः, किन्तु तथात्वेन मृषात्वेऽपि न विरुद्धाः नाटकादौ न दोषाधायकः। प्रसिद्धेतिवृत्तजन्यस्यापि नाटकादेः लोकमनोह्लादनस्यैव प्रधानोद्देश्यत्वात् रसरहितभागानां संक्षेपबन्धनेनैव लोकमनोह्लादनसम्भवादिति भावः।

यच्चरितमभिनीय प्रदर्शयितुमारब्धोऽङ्कस्तद्यद्यत्र न सर्वं तथोपपद्येत तदा किं कर्त्तव्यमित्याकांक्षायामाह—दिनावसान इति। यत् कार्य्यम् इतिवृत्तम्, दिनमवसानमन्तोऽन्त्याऽवधिर्यस्य तस्मिन् तथाभूतेऽङ्के इत्यर्थः, नैव उपपद्यते तदपि कार्य्यम् अङ्कस्य छेदं विष्कम्भादिवाच्यं विधाय अर्थोपक्षेपकैर्वाच्यं कविना वर्णनीयम्। तथा सति संक्षेपतया रसरहितोऽपि अनायासेनोपपद्यत इति भावः।

## रुचिरा

ननु युद्धादि अदर्शयित्वा कथं वीररसप्रधानः प्रबन्धः पूर्णो भवेदित्याशङ्क्य तदुपायमाह—३४२ अङ्केष्वित्यादिना।

३४२ **अङ्केषु**। **अदर्शनीया** दर्शयितुमनुचिता। **या** युद्धाधरपानादिस्वरूपा। 'कथे'ति शेषः। **सा**। **च**। **वक्तव्या**। **एव**। **मता**। सम्मतेति पाठान्तरे तु, सेत्यध्याहार्य्यम्। या। च। वर्षपर्यन्तं यावत्संवत्सरं 'सम्पादिते'ति शेषः। **स्यात्**। सा। **दिनद्वयादिजा**। द्वाभ्यां दिनाभ्यां त्रिभ्यश्चतुर्भ्यो वा दिनैः सम्पादिता दर्शनीयेति भावः। अन्या नायकस्वभावानुकूला रसागुणा एकदिनसम्पादितेति भावः। **च**। **सा**। **कथा**। **बुधैः**। **विस्तरात्**। **अर्थोपक्षेपकैः**-र्वक्ष्यमाणलक्षणैर्वाक्यैस्तद्द्वारेति यावत्। **सूच्या**। अर्थोपक्षेपकाश्च विष्कम्भकप्रभृतयः पञ्च वक्ष्यन्ते। इदमुक्तम्—युद्धादि साक्षाददर्शयित्वा केवलं वाचा दर्शयेत् वार्षिकं च कार्यं दिनाभ्यां दिनैर्वा त्रिभिर्निर्वर्तयेत्। दैनिकं रसस्य नायकस्य कार्यं चानुगतं यथावत् विष्कम्भकादिना प्रदर्शयेत् इति।। ३४८॥

अङ्केषु किमदर्शनीयमित्याशङ्क्याह—**अङ्केष्वित्यादिना**। स्पष्टम्।

ननु वर्षादधिककाले एव यन्निर्वर्यं तत्कथं सम्पादनीयमित्याशङ्क्याह—३४३ **वर्षादित्यादिना**।

३४३ **वर्षादूर्ध्यमूर्ध्वभवम्**। **तु**। **यत्**। **वस्तु**। **तत्**। **वर्षात्**। **अधोभवं** 'कर्तव्य'मिति शेषः। **स्यात्**॥ ३४८॥

उक्तमर्थं मुनिसम्मत्या द्रढयितुमाह **उक्तं हीत्यादिना**—

हि यतः । **मुनिना** भरतमुनिना । **उक्तम्** । किमिति तदाह—'मासकृतं मासभवम् । वर्षकृतमेकवर्षमात्र-भवम् । **अपि** । **वा** । **अङ्कच्छेदे** । विष्कम्भादौ अङ्कसमाप्तौ वा । **कार्य्यमभिनेयम्** । **वर्षात्** । **ऊर्ध्वम्** । **तु** । **तत्** । **सर्वं** । 'कृतमपी'ति शेषः । **न** । **कदाचित्** । अपि कर्त्तव्यम् अभिनेयम् । किन्तु वर्षान्तर्गतमिव प्रयुञ्जीतेत्यर्थः । यदि अनेकवर्षैरपि कृतं तदाऽपि तत्सर्वं मासिकम्, अन्ततः वार्षिक कृत्वाऽभिनयेत् । एतदपि यस्मिन्विष्कम्भकाद्यन्यतमे दर्शयितुमारब्धं तस्मिन्नेव तस्य वा अङ्कस्य समाप्तौ अवशयमभिनेयम् । तात्कालिकं हि यथा चमत्कुरुते न तथा कालान्तरसाध्यमिति भावः ।

फलमवगमयति—**एवं** चेत्यादिना ।

**एवं** निरूपितनयेन । **च** पुनः । **चतुर्दशवर्षव्यापिनि** चतुर्दशवर्षकालं यावत् सम्पादिते इति भावः । **अपि** । किं पुनस्ततो न्यूनेन कालेन निर्वर्तिते इति भावः । **वनवासे** । **ये ये** । विराधवधादयः । आदिना वालिनिग्रहणादीनां ग्रहणम् । **कथांशाः** कथाया अंशा विभागाः । तेते । सर्वं इति शेषः । वर्षवर्षावयवदिनयुग्मादीनां वर्षं च वर्षावयवः (मासर्त्वादिरूपः) दिनयुग्मं चेति तानि आदौ येषां (दिनत्रयादीनां) तेषाम् । **एकतमेन** । **सूचनीयाः** । ननु तर्हि प्रसिद्धेर्विरोधं इत्याशङ्क्याह—**न विरुद्धाः** । 'नाटके तथैवाऽभिनयत्वा'दिति शेषः ।

यच्चरितमभिनीय प्रदर्शयितुमारब्धोऽङ्कस्तच्चेदत्र न सर्वं तथोपपद्येत तर्हि किं कार्य्यमित्याह—३४४ **दिनावसान** इत्यादिना ।

३४४ **यत्** । **दिने** । 'निर्वृत्त' मिति शेषः । **कार्यं**'सर्व'मिति शेषः । **दिनावसाने** दिनमवसानमन्तोऽन्त्याव-धिर्यस्य तस्मिन् तथाभूतेऽङ्के इत्यर्थः । **न** । **एव** । **उपपद्यते** । **तत्** । **अर्थोपक्षेपकैस्तदभिन्नमिति** भावः । अभेदे तृतीया । **अङ्कच्छेदम्** । **विधाय** । **वाच्यम्** । अयम्भावः—एकस्मिन्दिने यन्नायकेन कृतं चरितं तदेकस्मिन्नेवाङ्के दर्शनीयम् । अथ यदि तदतिविस्तृतं स्यात्तेन चाङ्कस्य भूयस्त्वं सम्भावयेत्तदा किञ्चित्तस्याऽऽदौ विष्कम्भकादि विधाय वाच्यंतथाऽऽह भरतः 'एकदिवसप्रवृत्तः कार्यस्त्वङ्कोऽथ बीजमाश्रित्य । आवश्यककार्याणामविरोधेन प्रयोगेषु ॥ दिवसाऽवसानकार्यं यद्यङ्के नोपपद्यते सर्वम् । अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधेयं हि ॥' इति ॥ ३४९ ॥

कारिकार्थं समवगमयितुं स्वयमाह—**क** इत्यादि ।

के तेऽर्थोपक्षेपका इत्याह—

**अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ।**
**चूलिकाङ्कावतारोऽथ स्यादङ्कमुखमित्यपि ॥ ५४ ॥**

---

## विवृतिः

एकदिन निर्वर्त्यमपि यद्दिनावसानकार्यं समग्रदिननिर्वर्त्यं तदपि विषकम्भकादिभिर्वाच्य मित्यर्थः ॥

## कुसुमप्रतिमा

अर्थोपेति । अर्थान् सरसवृत्तान्तान् उपक्षिपन्ति उपस्थापयन्तीति अर्थोपक्षेपकाः । ते च पञ्च पञ्चप्रकाराः । यथः—निष्कम्भकः प्रवेशकः, चूलिका, अङ्कावतारः, अङ्कमुखञ्च ।

## विमला

अर्थेति ।—अर्थस्य—कार्य्यस्य, उपक्षेपकाः,—उपस्थापयितारः, पञ्च—पञ्चसङ्ख्यकाः । तान् नामती निर्दिशति,—विष्कम्भकः, प्रवेशकः, चूलिका, अङ्कावतारः, तथा अङ्कमुखम् इति ।

विष्कम्भकमाह, वृत्तेति ।—वृत्तवर्त्तिष्यमाणानां—वृत्तानाम्—अतीतानां, वर्त्तिष्यमाणानाम्—आगामिनां, कथांशानां निदर्शकः,—सूचकः, अङ्कस्य आदौ—प्रथमं, दर्शितः, सङ्घ्रिक्षप्तः,—सङ्क्षेपेणोक्तः, यः अर्थ,—कथाविभागः, स विष्कम्भः । स तु मध्येन—मध्यविधेन एकेन पात्रेण, वा मध्यमाभ्यां पात्राभ्यां सम्प्रयोजितः चेत् भवति, तदा शुद्धः स्यात् । नीचमध्यमाभ्यां, पात्राभ्यामिति शेषः, कल्पितश्चेत् सङ्कीर्णः,—विमिश्रः, त्रिष्कम्भको नाम अर्थोपक्षेपकः इति शेषः ।

## लक्ष्मी

कारिकार्थं स्पष्टयितुमाह—के त इति । अर्थोपक्षेपका इति । अर्थान् सरसवस्तून् उपक्षिपन्ति उपस्थापयन्ति ये ते तथोक्ताः । ते च पञ्चविधाः, यथा—विष्कम्भकः, प्रवेशकः, चूलिका अङ्कावतारः, अङ्कमुखञ्च ।

## रुचिरा

**ते** यैरङ्कयभूयस्तवनिवृत्तये कार्यं वाच्यमिति । **के** । **अर्थोपक्षेपका** अर्थमभिनेयं कार्यमुपक्षिपन्ति सूचयन्ति इति ते तथोक्ताः । **इत्याशङ्कायाम्** । **आह**—३४५ अर्थोपक्षेपका इत्यादिना ।

३४५ **विष्कम्भकप्रवेशकौ** विष्कम्भकः प्रवेशकश्चेति द्वावित्यर्थः । विष्कभ्नाति रुणद्धीति विष्कम्भः 'कर्मण्यण् ।' ३/२/१७० इत्यण् सञ्ज्ञायां कन् । प्रवेशयति निदधाति स्वान्तर्वाच्यविशेषमिति प्रवेशकः । **चूलिका** चूल्यते समुन्नीयतेऽनयेति तथोक्ता। तदाख्य एकः 'सञ्ज्ञायम् ।' ३/३/१०९ इति ण्डुल् । **अङ्काऽवतारोऽङ्केऽ**वतारो यस्य तथोक्तः । इत्येकः **अथ** । अङ्कमुखमङ्कस्य मुखं द्वारमिति तथोक्तम् । स्यात् । **इत्येकः** । एवं **पञ्च-अपि** । **अर्थोपक्षेपकाः** । 'भवन्ती'ति शेषः ॥ ३५० ॥

**वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।**

**संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥ ५५ ॥**

**मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः ।**

**शुद्धः स्यात्स तु संकीर्णो नीचममध्यमकल्पितः ॥ ५६ ॥**

तत्र शुद्धो यथा—मालतीमाधवे श्मशाने कपालकुण्डला । संकीर्णो यथा—रामाभिनन्दे क्षपणककापालिकौ ।

---

## विवृतिः

वृत्तानामतीतानां वर्तिष्यमाणानामागामिनाम् । कथांशानामवान्तरार्थानां निदर्शको ज्ञापकः रूपकांशविशेषः । मध्येन मध्यमेन ।

कपालकुण्डलादिविलक्षणपात्रदर्शनेनैवैतत्प्रयुक्तविष्कम्भकवैलक्षण्यदर्शनं भवतीति भावः । अनुदात्तोक्त्या नीचोक्त्या नीचेनैव नीचाभ्यां वा पात्राभ्यां प्रयोजितः । एवं कारणसंकीर्णविष्कम्भकव्युदासः । शेषं 'वृत्तवर्तिष्यमाण—' इत्यादिविशेषणं विष्कम्भकवदत्र ज्ञेयम् ।

## विवृतिपूर्तिः

मध्येनेति । नात्युच्चनीचं पात्रं मध्यमित्युच्यते ॥

नीचेति । अयमत्र निष्कर्षः—शुद्धसंकीर्णभेदेन द्विविधो विष्कम्भकः । तत्रैकद्विमध्यमपात्रप्रयुक्तः संस्कृतात्मकः शुद्धः, मध्यमनीचपात्रप्रयुक्तः संस्कृतप्राकृतात्मकः संकीर्ण इति ॥

## विज्ञप्रिया

विष्कम्भस्य द्वैविध्यमाह—मध्येनेति । उत्कृष्टाधमपात्रभिन्नं पात्रमध्यम् । कपालकुण्डलेति । तत्कृत्यमित्यर्थः । एवमुत्तरत्रापि ।

अङ्कद्वयेति । अङ्कद्वयपदस्य द्वितीयाद्यङ्कपरत्वमित्यभिप्रायः. शेषमिति । वृत्तवर्तिष्यमाणेत्यादिरूपम् ।

## लोचन

यथोद्देशलक्षणमाह—वृत्तेति । पात्रस्य मध्यत्वम् अतिमहतः श्रीरामचन्द्रादेर्न्यूनत्वेन । विष्कम्भके पात्राणां संस्कृतभाषित्वस्य लक्ष्येषु दर्शनात् । मध्यमयात्राणां हि प्राकृतभाषित्वम् । तदुक्तं भाषार्णवे—

**भाषामध्यमपात्राणां नाटकादौ विशेषतः ।**

**महाराष्ट्री सौरसेनीत्युक्ता भाषा द्विधा बुधैः ॥ इति ।**

## कुसुमप्रतिमा

वृत्तेति । वृत्त अतीता: वर्त्तिष्यमाणा भाविनश्च तेषाम्, कथाशानां वृत्तान्तभागानाम्, निदर्शक: प्रकाशक:, संक्षिप्तार्थ: अङ्कापेक्षया स्वल्पप्रसार:, अङ्कस्य आदौ प्रथमे दर्शित: प्रयोजितो रूपकांशविशेषो विष्कम्भ: स्यात् । विष्कम्भाति मध्यममागपुरणेन पूर्वापराङ्गतवृत्तान्तमुपपादयतीति विष्कम्भ:. स्कन्भधाती: कर्त्तरि वुण्प्रत्ययात् विष्कम्भक:, अच्प्रत्ययाञ्च विष्कम्भ इति नार्थवैषम्यम् । तत्र "आदावङ्कस्य दर्शित:" इत्यनेन प्रथमाङ्केऽप्यस्य सम्भव इति सूचितम् ।

स च द्विविध:—शुद्धो मिश्रश्चेति । तत्र मध्येन शिक्षगौरवादिना वृत्तान्ते, अप्रधानतया वा मध्यमश्रेणीभुक्तेन एकेन पात्रेण तादृशाभ्यां मध्यभाभ्यां द्वाभ्यां पात्राभ्यां वाशब्दान्मध्यमैर्बहुभि: पात्रैर्वा सम्प्रयोजितो विष्कम्भक: शुद्ध: स्यात् । नीचं शिक्षागौरवाद्यमवेन अधमम् उक्तप्रकारञ्च मध्यमं ताभ्य मुभाभ्यामेय पात्राभ्यां कल्पित: प्रयोजित: स विष्कम्भक: सङ्कीर्णो मिश्र: स्यात् । एकजातीयपात्रप्रयोजितत्वेन शुद्धत्वं नीचमध्यमतया विभिन्नजातीयपात्रप्रयोजितत्व न च मिश्रत्वमित्यवधेयम् ।

तत्रेति । कपालकुण्डलारूपपात्रप्रयोजित इत्यर्थ: । परत्राप्येकम् ।

## लक्ष्मी

यथोद्देशलक्षणं निरूपयति—वृत्तवर्तिष्येति । वृत्तानामतीतानाम्, वर्तिष्यमारणानाम् आगामिनाम्, कथांशानां वृतान्तभागानाम्, निदर्शक: ज्ञापक: रूपकांशविशेष:, संक्षिप्तार्थ: अङ्कापेक्षया स्वल्पप्रसार:, अङ्कस्य आदौ आरम्भे प्रयोजितो विष्कम्भ: स्यादित्यन्न सम्बन्ध: । विष्कभ्नाति मध्यमांशपूरणेन पूर्वापराङ्गतवृत्तान्तं प्रतिपादयति य: स तथोक्त: । स्कम्भेति सौत्रो धातुस्तस्मात् कर्तरि 'ण्वुल् तृचौ' इति ण्वुलि विष्कम्भक:, पचादित्वादचि तु विष्कम्भ इति स्वरूपभेदेऽपि नार्थभेद: । 'आदाव ङ्कस्य दर्शित:' इत्युक्त्याऽस्य प्रथमेऽङ्केऽपि सम्भव इति द्योतितम् ।

शुद्धसङ्कीर्णभेदेन द्विविधो विष्कम्भक: । तत्र मध्येन मध्यमेन 'नायुञ्चनीचपात्रं नाट्ये तु मध्यमित्यभिधीयते' इत्युक्तेन एकेन पात्रेण मध्यमाभ्यां द्वाभ्यां पात्राभ्यां वा मध्यमैर्बहुभि: पात्रैर्वा सम्प्रयोजित: सम्प्रयुक्त: कल्पित इत्यर्थ:, संस्कृतात्मक: शुद्ध: स्यात् । नीचम् अधमम्, मध्यमाभ्यां पात्राभ्यां कल्पित: प्रयोजित: संस्कृतप्राकृतात्मक: सङ्कार्णमिश्र: स्यात् । तथा चैकजातीयपात्रप्रयुक्तत्वेन शुद्धत्वम्, विभिन्नजातीयपात्रप्रबुक्तत्वेन सङ्कीर्णत्वमित्यवगन्तव्यम् । इदमत्र बोध्यम्—विष्कम्भके पात्राणां संस्कृतभाषित्वस्य लक्ष्येषु दर्शनात्, मध्यमपात्राणां हि प्राकृतभाषित्वम् । तदुक्तं भाषार्णवे—

> **'भाषामध्यमपात्राणां नाटकादौ विशेषत: ।**
> **महाराष्ट्री शौरसेनीत्युक्ता भाषा द्विधा बुधै: ।।'** इति ।

नाट्यदर्पणेऽपि भङ्ग्यन्तरेणोक्त:—

> **'अङ्कानर्हस्य वृत्तस्य त्रिकालस्यानुरञ्जिना ।**
> **संक्षिप्य संस्कृतेनोक्तिरङ्कादौ मध्यमैर्जनै: ।।**
> **शुद्धो विष्कम्भकस्तत्र सङ्कीर्णो नीचमध्यमै: ।**
> **अङ्कसन्धायक: शक्यसन्धानातीतकालवान् ।।'** इति ।

यथोक्तमुदाहर्त्तुमाह—तत्रेति। मालतीमाधवे प्रकरणरूपके। अघोरघण्टस्य कापालिका शिष्या तया प्रयोजित इति शेषः। अयमाशयः—मालतीमाधवे तृतीयङ्के 'ततः प्रविशति अकाशयानेन भीषणोज्ज्वलवेषा कपालकुण्डला (परिक्रम्याऽवलोक्य च गन्धमाघ्राय) इदं तावत्पुराणनिम्बतैलाक्तपरिभृज्यमानरसोनगन्धिमिश्रिता-धूमैः पुरस्ताद्विभावितस्य महतः श्मशानवटस्य नेदीयः करालायतनम्...(परिक्रम्य निष्क्रान्ता) इत्येवं कपालकुण्डलया मध्यमपात्रत्वाच्छुद्धो विष्कम्भः। एवमुत्तरत्रापि।

## रुचिरा

एवं नामतो निर्दिश्य स्वरूपतो निर्देष्टुमाह—३४६ **वृत्ते** इत्यादि।

१४६ **अङ्कस्य**। **आदावारम्भो**। **वृत्तवर्तिष्यमाणानां** वत्ता अतीता वर्तिष्यमाणा आगमिष्यन्तश्चेति तेषाम्। **कथांशानाम्**। **निदर्शको** निर्देशकारी। **सङ्क्षिप्तार्थः** सङ्क्षिप्तोऽर्थो यत्र तथोक्तः। तु। विष्कम्भः। **दर्शितः**। उपादेयत्वेन प्रतिपादितः। अस्योपादेयत्वं वदति यथा भरतः—'यत्रार्थस्य समाप्तिर्न भवत्यङ्के प्रयोगबा-हुल्यात्। विष्कम्भऽसौ स्वल्पः प्रवेशकैः सोऽभिधातव्यः॥' इति। स च—**मध्येन** 'पात्रेणे'ति शेषः। अस्य **वाऽथवा**। **मध्यमांभ्याम्**। **पात्राभ्याम्**। **प्रयोजितः**। **शुद्धः स्यात्**। नीचमध्यमकल्पितो नीचमध्यमाभ्यां विसदृ-शाभ्यां पात्रविशेषाभ्यां कल्पित इति तथोक्तः। **सः**। **तु सङ्कीर्णः**। तथा चायं द्विविधः शुद्धसङ्कीर्णभेदात्तत्र शुद्ध एकेन मध्यमेन पात्रेण द्वाभ्यां वा मध्यमाभ्यां पात्राभ्यां सम्प्रयोजितः सम्यक्त्वं च संस्कृतप्राकृतात्मकत्वान्नीचमध्य-भोभयविधपात्राभ्यां कल्पितः सङ्कीर्णः अत एवाऽत्र संस्कृतप्राकृतोभयभाषाप्राधान्यमिति निष्कृष्टोऽऽर्थः। यथाऽह भरतः—'शुद्धः सङ्कीर्णो वा द्विविधो विष्कम्भकोऽपि विज्ञेयः। मध्यमपात्रः शुद्धः सङ्कीर्णो नीचमध्यकृतः॥ मध्यमपुरुषैर्नित्यं योज्यो विष्कम्भकोऽपि तत्त्वज्ञैः। संस्कृतवचनानुगतः सङ्क्षिप्तार्थः प्रवेशकवत्॥ ३५१॥ ३५२॥

उदाहरति—**तत्रे**त्यादिना।

**तत्र** तयोः सुद्धसङ्कीर्णयोर्मध्ये। **शुद्धः**। **यथा**—**मालतीमाधवे** प्रकरणरूपके। श्मशाने। कपालकुण्डला अघोरघण्टस्य कापालिकाऽन्तेवासिनी तया प्रयोजित इति शेषः। अयम्भावः—मालतीमाधवे तृतीयेऽङ्के—"(ततः प्रविशति आकाशयानेन भीषणोज्ज्वलवेषा कपालकुण्डला) कपालकुण्डला—(परिक्रम्यावलोक्य च गन्धमाघ्राय) इदं तावत्पुराणनिम्बतैलाक्तपरिभृज्यमानरसोनगन्धिभिश्चिताधूमैः पुरस्ताद्विभावितस्य महतः श्मशानवटस्य नेदीयः करालायतनम्...(परिक्रम्य निष्क्रान्ता)' इत्येवं कपालकुण्डलाया मध्यमपात्रत्वाच्छुद्धो विष्कम्भकः। **सङ्कीर्णः**। **यथा**। **रामाभिनन्दे**। **क्षफणककापालिकौ**। ताभ्यां मध्यमजघन्यपात्राभ्यां प्रयोजित इति शेषः। यथा वा महावीरचरिते द्वितीयाङ्कादौ माल्यवता शूर्पणखया च कल्पित इति दिक्।

एवं सप्रभेदकं विष्कम्भकं लक्ष्यलक्षणाभ्यां निरूप्य प्रवेशकं लक्षयितुमाह—**अथे**त्यादि।

अथ प्रवेशकः—

**प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।**

**अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥ ५७ ॥**

अङ्कद्वयस्यान्तरिति प्रथमाङ्केऽस्य प्रतिषेधः । यथा—वेण्यामश्वत्थामाङ्के राक्षसमिथुनम् ।

---

## विवृतिः

प्रथमाङ्के, कर्तव्ये प्रथमाङ्कादावित्यर्थः । अस्य प्रवेशकस्य । अत्रापि पात्रवैलक्षण्यदर्शनेन विष्कम्भकादस्य वैलक्षण्यं दर्शितम् ॥ जवनिका नटानां वेषस्थानम् ।

## लोचन

नीचपात्रप्रयोजित इत्यत्र नीचत्वं हि असंस्कृतभाषित्वादेव । तेन सख्यादिभिश्च प्रवेशकस्य प्रयोजितत्वम् ।

## कुसुमप्रतिमा

प्रवेशक इति । अङ्कष्टयस्य अन्तर्मध्यै, अनुदात्तीक्ता संस्कृतेतरभाषया, नीचपात्रेति सामान्यश्रवणादेकेन नीचपात्रेणष्टाभ्यां नीयपात्राभ्यां बहुभिर्नीचपात्रै र्वा प्रयोजिती रूपकांशविशेषः प्रवेशकी विज्ञेयः । शेषमवशिष्टं विष्कम्भके यथा विष्कम्भकवद्विज्ञेयम् । तथा च वृत्तवत्तिष्यमाणकथांशनिदर्शकत्वं संक्षिप्तार्थत्वञ्चैतदृद्वयमत्राप्यवश्यकमित्यर्थः । प्रवेशयति परवत्तिपात्रप्रवेशं सूचयतीति प्रवेशकः ।

अङ्केति । अस्य प्रवेशकस्य । प्रथमाङ्कात् पूर्वमङ्कानन्तराभावेन अङ्कद्वयमध्यवत्तित्वासम्भवादिति भावः । वेण्यां वेणीसंहारनाटके, अश्वत्थामाङ्के अश्वत्थामप्रधानतृतीयाङ्के ।

## विमला

प्रवेशकमाह, प्रवेशक इति ।—नीचपात्रप्रयोजितः,—नीचानि—जात्या, न तु कर्मतो निकृष्टानि, यानि पात्राणि तैः प्रयोजितः, कृतप्रयोग इत्यर्थः, अनुदात्तया—प्राकृतया, उक्त्या—भाषया, रचितः कथाविभागः, इति शेषः, प्रवेशकः । ननु स कुत्र स्यात्? इत्याह, अङ्केति ।—स तु अङ्कद्वयान्तः,—द्वयोरङ्कयोर्मध्ये, विज्ञेयः,—विधातव्यः इत्यर्थः । ननु किमयमेतावत्स्वरूप एव ? इत्याह, शेषमिति ।—शेषं—सङ्क्षेपोक्तादि, विष्कम्भके यथा—विष्कम्भकवत्, ज्ञेयमिति भावः ।

---

## लक्ष्मी

द्वितीयमर्थोपक्षेपकं लक्षयति—प्रवेशक इति । अङ्कद्वयस्य अन्तर्मध्ये अनुदात्तोक्त्या संस्कृतेतरभाषया नीचेन नीचाभ्यां पात्राभ्यां नीचैर्वा पात्रैः प्रयोजित रूपकांशविशेषः अप्रत्यक्षानर्थान् सामाजिकहृदये प्रवेशयति सूचयतीति प्रवेशको विज्ञेयः । अत्र नीचत्वं हि संस्कृतेतरभाषित्वादेव, तेन सख्यादिभिश्च प्रवेशकस्य प्रयोजित-

त्वम्। शेषम् उक्तादन्यम् विष्कम्भके यथा विष्कम्भकवद्विज्ञेयम्। एवं च 'वृत्तिवर्त्तिष्यमाण' इत्यादिविशेषण-मत्राऽप्यवश्यं प्रयोक्तव्यमिति भावः।

अङ्कद्वयपदस्य द्वितीयाद्यङ्कपरत्वमिति स्पष्टयति—अङ्कद्वयास्यान्तरिति। प्रथमाङ्के प्रथमाङ्कादावित्यर्थः। कर्त्तव्ये विधेये अस्य प्रवेशकस्य। वेण्यां वेणीसंहारनाटके, अश्वत्थामाङ्के अश्वत्थामप्रधानतृतीयाऽङ्के। राक्षस-मिथुनमिति राक्षस्या राक्षसेन च नीचोक्त्या सिन्धुराजवधः, भाविदुःशासनवधश्च सूचित इति भावः। अत्र पात्रवैलक्षण्यप्रतिपादनेन विष्कम्भकादस्य वैलक्षण्यं प्रतिपादितम्।

## रुचिरा

**अथ** विष्कम्भकोदाहरणानन्तरम्। **प्रवेशकः**। 'लक्ष्यते' इति शेषः। ३४७ **प्रवेशक** इत्यादिना।

३४७ **अनुदात्तोक्त्या**ऽनुदात्ता संस्कृतेतरेति भावः, असावुक्तिस्तया तद्द्वारा। नीचपात्रैः। प्रयोजितः। **अङ्कद्वयान्तः** द्वयोरङ्कयोर्मध्ये इति भावः। अत एवाद्यन्ताब्यामन्यत्र सम्भवतीति भावः। **प्रवेशकः। विज्ञेयः।** अत्र च—**शेषम्। यथा। विष्कम्भके** 'तथा कथांशानां निदर्शनम्' इति शेषः॥ ३५३॥

अन्तःपदार्थं विवृणोति—**अन्तरित्यादिना**। स्पष्टम्।

एवं प्रवेशकमुदाहृत्य चूलिकां लक्षयितुमुपक्रमते—**अथेत्यादिना**।

अथ। **चूलिका** लक्ष्यते—३४८ **अन्तरित्यादिना**।

३४८ **अन्तर्जवनिकासंस्थैर्ज**वनिकायाः पटक्षेपस्याऽन्तरित्यन्तर्जवनिका तत्र सन्दिष्ठन्तीति तथोक्तैः। आहिताऽग्न्यादित्वात् परनिपातः। पात्रैरिति भावः। **अर्थस्य। सूचना चूलिका**। अत्र काव्येन्दुप्रकाशकाराः—"अनिर्गताप्रविष्टैश्च नेपथ्यान्तर्गतैस्तथा। प्रयोजिता मध्यपात्रैः सूचिका चूलिका भवेत्॥ कर्त्तव्याऽऽद्येताराङ्केषु स्यादादौ मध्य एव वा। सा खण्डाखण्डभेदेन द्विविधा परिकीर्तिता। आद्यान्तः स्याद् द्वितीया तु सप्रवेशविनि-र्गमा।" इति। तथा च चूलिका द्विप्रभेदा खण्डाऽखण्डा चेति, तत्राद्या पात्रप्रवेशरहिता, द्वितीया पुनः पात्रप्रवेशनिर्ग-मसहितेति तत्त्वार्थः।

उदाहरति—**यथेत्यादिना**।

**यथा। महावीरचरिते। चतुर्थाङ्कस्य। आदावारम्भे**। "(**नेपथ्ये** अन्तर्नटानां वेषपरिवर्तनस्ताने जवनिका-याम्) **भोभोः** (सम्भ्रमं द्विरुक्तिः)। **वैमानिका** विमानसञ्चारिणः। 'येन चरति।' ४/४/८ इति ठक्। रङ्गमङ्गलानि रङ्गस्य मङ्गलानीति तानि। **प्रवर्तन्ताम्।" इत्यादिना। रामेण** रामभद्रेण। परशुरामो जमदग्निनन्दनः। **जितः** पराजितः। **इति। नेपथ्ये। पात्रैः। सूचितम्**। अयम्भावः—तत्र हि प्रवर्तन्तां मङ्गलानीत्युद्घोषणानन्तरम्-'कृशा-श्वान्तेवासी जयति भगवान्कौशिकमुनिः सहस्रांशोर्वंशे जयति जगति क्षत्रमधुना। विनेता क्षत्रारेर्जगदभयदानव्र-तधनः शरण्यो लोकानां दिनकरकुलेन्दुर्विजयते।' इति पात्रैः पठित्वा 'रामेण परशुरामो जितः' इति सूचितं नतूक्तम्। इति।

एवं चूलिकामुदाहृत्याङ्कावतारं लक्षयति—**अथेत्यादिना**।

अथ चूलिका—

**अन्तर्जवनिकासंस्थैः सूचनार्थस्य चूलिका।**

यथा वीरचरिते चतुर्थाङ्कस्यादौ—'(नेपथ्ये)। भो भो वैमानिकाः, प्रवर्तन्तां रङ्गमङ्गलनि।' इत्यादि। 'रामेण परशुरामो जितः।' इति नेपथ्ये पात्रैः सूचितम्।

---

## विवृतिपूर्तिः

चूलिकेति। अत्र विशेषः काव्येन्दुप्रकाशे—'अनिर्गताप्रविष्टैश्च नेपथ्यान्तर्गतैस्तथा। प्रयोजिता मध्यपात्रैः सूचिका चूलिका भवेत्॥ कर्तव्याद्येतराङ्केषु स्यादादौ मध्य एव वा। सा खण्डाखण्डभेदेन द्विविधा परिकीर्तिता॥ आद्यान्तः स्याद्द्वितीया तु सप्रवेशविनिर्गमा॥' यस्यां प्रवेशविनिर्गमौ प्रत्यक्षसिद्धौ साङ्कबहिर्भूता द्वितीया चूलिका॥

## विज्ञप्रिया

अन्तर्जवनिका। वेशरचनास्थानवेष्टनपटः। अर्थस्य सूचनेत्यन्वयः।

## कुसुमप्रतिमा

अन्तरिति। अन्तर्जवनिकासंस्थैस्थिरस्किण्यां अन्तराले स्थितैः पात्रैः, अर्थस्य वृत्तान्तविशेषस्य सूचना चूलिका स्यात्। अत्र अन्तर्जवनिकासंस्थैरिति बहुवचनादेतत्सूचकानां सम्भाव्यमानानां सर्वेषामेव पात्राणां जवनिकान्तरालस्थितत्वं विवक्षित्वम्; तेन शाकुन्तलचतुर्थाङ्कविष्कम्भके जवनिकान्तरालस्थितेन दुर्वाससा शापसूचनेऽपि अनसूयाप्रियं वदाभ्यां वहिः स्थिताभ्यामेवार्थसूचनात्र चूलिकालक्षणातिव्याप्तिः। वृत्तान्तविशेषस्य शीर्षे स्थितत्वादियं चूलिका चूड़ास्वरूपा।

यथेति। वैमानिका विमानचारिणः। रङ्गमङ्गलानि अभिनयादिमहोत् सवाः।

## विमला

षूलिकामाह, अन्तरिति।—जवनिका—तिरस्करिणी, तस्याः अन्तः,—अभ्यन्तरे, आर्द्धस्यैः (जनैः) या अर्थस्य—कार्य्यस्य, सूचना सा चूलिका।

## लक्ष्मी

तृतीयमर्थोपक्षेपकं लक्षयति—अन्तर्जवनिकासंस्थैरिति। जवनिका नटानां वेशस्थानम्, तस्या अन्तराले संस्थैः संस्थितैः पात्रैः जवनिकान्तर्देशस्थायिभिरित्यर्थः, अर्थस्य कस्यचिद्वस्तुविशेषस्य सूचना सा चूडेव चूलिका रङ्गाभिनेयार्थस्य नेपथ्यपात्रोक्तैः शिखाकल्पत्वात्। अत्रान्तर्जवनिकासंस्थैरिति बहुवचनेनैतासूचकानां सम्भाव्यमानानां सर्वेषामेव पात्राणां जवनिकाऽन्तर्देशस्थितत्वं ग्रन्थकृदभिप्रेतम्, अत एव शाकुन्तलचतुर्थाङ्कविष्कम्भके

जवनिकान्तर्देशस्थितेन दुर्वाससा शापाभिव्यञ्जनेऽपि बाह्यस्थिताभ्यामेवानसूयाप्रियम्बदाभ्यामर्थसूचनान्नैतल्लक्षणातिव्याप्तिरिति बोध्यम्। तथा च यत्र प्रवेशविनिर्गमौ प्रत्यक्षसिद्धौ साङ्कबहिः स्थिता तत्र तृतीया चूलिका।

उदाहरति—यथेति। वैमानिकाः विमानचारिण इत्यर्थः। रङ्गमङ्गलानि नाट्यदिमहोत्सवाः। अयमाशयः—तत्र हि 'प्रवर्त्तन्तां मङ्गलानि' इत्युद्घोषानन्तरम्—

कृशाश्वान्तेवासी जयति भगवान् कौशिकमुनिः सहस्रांशोर्वंशे जयति जगति क्षत्रमधुना।

विनेता क्षत्रारेर्जगदभयदानव्रत धनः शरण्यो लोकानां दिनकरकुलेन्दुर्विजयते॥' इति पात्रैः पाठित्वा 'रामेण परशुरमो जित' इति सूचितं तूक्तम्।

## रुचिरा

**अथ** चूलिकायाः लक्ष्यलक्षणनिर्देशान्तरम्। **अङ्कावतारः**। 'लक्ष्यते' इति शेषः। ३४९ **अङ्कान्ते** इत्यादिना।

३४९ **यत्र** यस्मिन्। अङ्कान्तेऽङ्कसमाप्तौ सत्याम्। **पात्रैः**। सूचितस्तात्पर्येण निर्दिष्टस्वरूपः। **तदङ्कस्य** तस्याङ्कस्य। **अविभागतो** विभागमन्तरा इति भावः। यः—**अङ्कः**। **अवतरति**। एष स इत्यर्थः। **अङ्कावतारः**। **इति**। स्मृतः। यथाह वा भरतः—अङ्कान्तरेऽथवाऽङअके निपतति यस्मिन् प्रयोगमासादय। बीजाऽर्थयुक्तियुक्तो ज्ञेयो ह्यङ्कावतारोसौ।' इति॥ ३५४॥

उदाहरति—**यथेत्यादिना**।

**यथा**। **अभिज्ञानशाकुन्तले**। **पञ्चमाङ्के** लक्षणया तदन्ते। **पात्रैर्नागरिकादिनामधेयैः**। **सूचितः**। **षष्ठाङ्कः**। **तदङ्कस्य** पञ्चमाङ्कस्य। **अङ्कविशेष** इव। **अवतीर्णः**। अयम्भावः—अभिज्ञानशाकुन्तले पञ्चमङ्के समाप्ते महाराजस्य दुष्यन्तस्याङ्गुलीयकविक्रेतारं मत्स्याजीवितनं निबध्यानुगाभ्यां सहितस्य नागरिकस्य राजश्यालस्य प्रवेशः, तदनन्तरं ताडनभर्त्सनादि महाराजं प्रति च तस्य सर्वस्य तथा निवेदनम्, अङ्गुलीयकदर्शनेन शाकुन्तलापरिणयस्मरणं, मोचनपुरः सरं च तस्य मत्स्याजीविनः 'धीवर'! महत्तरो तुमं पिअवअस्सअ दाणिं मे संवुत्तो। कादंबरीसिक्ख् अह्मणं पठमसोहिदं इच्छीअदि ता सोडिआपणं एव्व गच्छामो इति नागरिकेणानुनयनम्। (ततः प्रविशति आकाशयानेन सानुमती नामाप्सरसः) इत्यारभ्यमाणस्य षष्ठाङ्कस्यादौ बीजभूतमुदन्तमनुभावयन्नङ्कोऽवतीर्णः। अतोऽस्याङ्कावतार इत्यार्थिकी सञ्ज्ञा। सुधाकरकारास्तु—'यन्नीचैः केवलं पात्रैर्भाविभूताऽर्थसूचनम्। अङ्कयोरुभयोर्मध्ये स विज्ञयः प्रवेशकः॥' इति प्रवेशकाऽपरापर्य्यायमेनमाहुरिति।

अथाङ्कावतारः—

**अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः ॥ ५८ ॥**

**यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ।**

यथा अभिज्ञाने पञ्चमाङ्के पात्रैः सूचितः षष्ठाङ्कस्तदङ्कस्याङ्गविशेष इवावतीर्णः ।

---

## विवृतिपूर्तिः

अङ्कावतार इति । मुनिनाप्येकोनविंशाध्याये उक्तम्—'अङ्कान्तरेऽथवाङ्के निपतति यस्मिन्प्रयोगमासाद्य । बीजार्थयुक्तियुक्तो ज्ञेयो ह्यङ्कावतारोऽसौ ॥' इति ॥

## विज्ञप्रिया

अङ्कान्त इति । अङ्कान्ते पात्रैः सूचितोऽर्थादपरः अङ्कः यदवतरति इत्यर्थः । तदङ्कस्याऽविभागत इति । विभागस्तद्भेदः, तदभिन्नत्वेन प्रयोजित इत्यर्थः । अत्र द्वितीयान्तात् तस् । अङ्कविच्छेदेऽपि तदङ्कोथापिताऽऽकाङ्क्षयैवाऽवतीर्णोऽपराङ्क इत्यर्थः । तदाह—तदङ्कस्याङ्गविशेष इवेति ।

## कुसुमप्रतिमा

अङ्केति । अङ्कान्ते यस्य कस्यचिदङ्कस्य अवसाने पात्रैः यत्रेत्यव्ययं य इत्यर्थः अङ्कः सूचितः प्रयोजितः तस्य अङ्कस्य अविमागतः अविमक्तत्वेन अङ्कभावेनेत्यर्थः अङ्कः अङ्कान्तरम् अवतरति आविर्भवति, एव स अङ्कावतार इति स्मृतः एतद्याख्यानमेव वृत्त्युदाहरणानुसारीति व्याख्यानान्तरं ज्ञेयम् । अह्कभावेन अङ्कः अङ्कान्तरम् अवतरत्यस्मिन्नित्यङ्कावतारः । अस्य च संक्षिप्तार्थत्वनियमो नास्तीति बोध्यम्.

यथेति । अभिज्ञाने अभिज्ञानशाकुन्तलनाटके, पञ्चमाङ्के पञ्चमाङ्कान्ते । तदङ्कस्य अङ्कावतारत्वेन विवक्षितस्य प्रसिद्धस्य वा अङ्कविशेष इवेति । तद्वृत्तान्तोपजीवित्वादिति भावः

## विमला

अङ्कावतारमाह, अङ्कान्ते इति ।—अङ्कस्य अन्ते—अवसाने, पात्रैः,—नाटकीयपुरुषैः, न तु कविना इति भावः, सूचितः,—सङ्क्षिप्य दर्शितः, अथ च तदङ्कस्य—यस्यान्ते पात्रैः सूचितः, तस्याङ्कस्य, अविभागतः,—अविच्छेदेन, यत्र—य इत्यर्थः, [अव्ययमेतत्] अङ्कः अवतरति, एषः अङ्कावतार इति स्मृतः,–कथितः ।

## लक्ष्मी

चतुर्थमर्थोपक्षेपकं लक्षयति—अङ्कान्त इति । यस्य कस्यचिदङ्कस्य अन्ते अवसाने पात्रैः अङ्कः सूचितः प्रयोजितः, यत्रेति य इत्यर्थे । तस्य अङ्कस्य विभागस्तद्भेदः तदभिन्नत्वेनेत्यर्थः अङ्कः अङ्कान्तरम् अवतरति आविर्भवति एष स अभिन्नत्वेन अङ्कावतारमवतरव्यस्मिन्नित्यङ्काऽवतार इति स्मृतः कथितः । संक्षिप्तार्थत्वनियमो नात्रेति ज्ञेयम् ।

उदाहरति—यथेति। अभिज्ञाने अभिज्ञानशाकुन्तलनाटक इत्यर्थः, पञ्चमाङ्के पञ्चमाङ्कान्त इत्यर्थः, षष्ठाङ्क इति। अङ्कविच्छेदेऽपि तदङ्कोत्थापिताऽऽकाङ्क्षयैवावतीर्णोऽपराङ्क इत्यर्थः, तदाह—तदङ्कस्याङ्गेति। अङ्गविशेष इवेति। तद्वृत्तान्तोपजीवित्वादिति भावः।

परे तु यत्राङ्केऽन्याङ्कानां बीजलक्षणोऽर्थोऽवतार्य्यते तमङ्कावतारमामनन्ति। यथा— रत्नावल्यां द्वितीयोऽङ्कः। तत्र हि (क)'इदि सस्स कन्नगारयणस्स ईदिसे य्येव वरे अहिला सेण भोदव्वं' इत्यादिकोऽनुरागलक्षणः सर्वाङ्कानामर्थ इति।

## रुचिरा

एवमङ्कावतारमुदाहृत्य अङ्कमुखं लक्षयितुमुपक्रमते—**अथे**त्यादिना।

अथाङ्कमुखम्—

**यत्र स्यादङ्क एकस्मिन्नङ्कानां सूचनाखिला ॥ ५९ ॥**

**तदङ्कमुखमित्याहुर्बीजार्थख्यापकं च तत्।**

---

## विवृतिः

अङ्कानामङ्कनिबन्धनीयवस्तूनां यत्केवलं बीजार्थस्य ख्यापनं सूचनं तदप्यङ्कमुखम्। भूमिका वेषरचना। परिक्षिप्तेति आकाङ्क्षेत्यर्थः ॥

## विवृतिपूर्तिः

अङ्केति। मुनिरप्याह—'विश्लिष्टमुखमङ्कस्य स्त्रिया वा पुरुषेण वा। यदुपक्षिप्यते पूर्वं तदङ्कमुखमुच्यते ॥' इति ॥

## विज्ञप्रिया

यत्र स्यादङ्क इति। अङ्कानां समस्ताङ्कवक्ष्यमाणानामर्थानामखिला सूचनेत्यर्थः। अङ्कावतारे तदङ्कमात्रसूचनम् अङ्कमुखे तु समस्ताङ्कसूचनेति भेदः। बीजार्थेति बीजभूतार्थख्यापनात्। बीजार्थख्यापकसंज्ञकञ्च तदित्यर्थः।

## कुसुमप्रतिमा

यत्रेति। यत्र, एकस्मिन्नङ्के अङ्कानाम् अखिला सूचना अखिलानामङ्कानां सूचना स्यादित्यर्थः, आलङ्कारिकास्तत् 'अङ्कमुखम्' इत्याहुः; तच्च बीजार्थस्य वक्ष्यमाणार्थ प्रकृतिविशेषस्य स्थापकं सूचकं भवेत्। सर्वेषामङ्कानां विषयसूचनद्वारा मुखतेषामाद्यमित्यङ्कमुखम्।

## विमला

अङ्कमुखामाह, यत्रेति।—यत्र एकस्मिन् अङ्के अङ्कानां—सर्वेषामङ्ककार्य्याणाम्, अखिला—समस्ता, सूचना स्यात्, तत् अङ्कमुखं, यत् केवलं बीजार्थस्य—मूलभूतस्य विषयस्य, स्थापकं—सूचकं, च तदप्यङ्गमुखम्। इत्याहुः।

## लक्ष्मी

अथ पञ्चममर्थोपक्षेपकं लक्षयति—यत्रेति। एकस्मिन्नङ्के अह्कानां समस्ताङ्कवक्ष्यमाणानामार्थानाम् अङ्कनिबन्धनीयवस्तूनामितियावत्। अखिला सूचना स्यात् कवयस्तम्'अङ्कमुखम्' इत्याहुः। सर्वेषामङ्कानां विषयसूचनद्वारा मुखे तेषां प्रथममित्यङ्कमुखम्। तच्च बीजार्थस्य ख्यापकं वक्ष्यमाणार्थप्रकृतिविशेषस्य सूचकं भवेत् अङ्कावतारे तदङ्कमात्रसूचनम्, अङ्कमुखे तु समस्ताङ्कसूचनेति भेदो ज्ञेयः।

## रुचिरा

अथाङ्कावतारोदाहरणानन्तरम्। **अङ्कमुखं** 'लक्ष्यते' इति शेषः। ३५० यत्रेत्यादिना।

३५० **यत्र** यस्मिन्। **एकस्मिन्** अङ्के। अङ्कानामन्येषामिति शेषः। अखिला। सूचना। तत्। अङ्कमुखम्। **इत्याहुः**। 'आचार्य्या' इति शेषः। यत्। च बीजार्थख्यापकं बीजार्थस्य मूलभूतविषयस्य ख्यापकमिति तथोक्तम्। 'आहुः' इति पूर्वतोऽन्वेति। यथाह भरतः—'विश्लिष्टमुखमङ्कस्य स्त्रिया वा पुरुषस्य वा। यदुपक्षिप्यते पूर्वं तदङ्कमुखमुच्यते ॥' इति।

**यथा—मालतीमाधवे प्रथमाङ्कादौ कामन्दक्यवलोकिते भूरिवसुप्रभृतीनां भाविभूमिकानां परिक्षिप्तकथाप्रबन्धस्य च प्रसङ्गात्संनिवेशं सूचितवत्यौ ।**

---

## विज्ञप्रिया

भाविभूमिकानां भाविप्रसङ्गानां परिक्षिप्तः संक्षिप्तः । सन्निवेशं स्थानेऽभिनेयम् ।

## कुसुमप्रतिमा

यथेति । प्रथमाङ्कस्य आदौ पुर्वम् । भाविन्यो भूमिकास्तत्तद्वेशरचना येषां तेषाम् । परिक्षिप्तकथाप्रबन्धस्य समस्ताङ्कसंक्षिप्तवृत्तान्तसमूहस्य । मालतीमाधवपुस्तकविशेषे तु यस्य विष्कम्भकाख्या दृश्यते ।

## लक्ष्मी

उदाहरति—यथेति । प्रथमाङ्कादौ प्रथमाङ्कस्य पूर्वमित्यर्थः । भाविन्यो भूमिकास्तद्वेशरचना येषां तेषां तथोक्तानाम् परिक्षिप्तकथाप्रबन्धस्य समग्राङ्कसंक्षिप्तवृत्तान्तनिकरस्य । इदानीं प्रचलितमालतीमाधवे तु तस्य विष्कम्भकसंज्ञेत्यवलोक्यते ।

अयमाशयः—भाविनीनां नेपथ्यरचनानामपि नाम तयोः कल्याणिनोर्भूरिवसुदेवरातापत्ययोर्मालतीमाधवयोरभिलषितः पाणिग्रहो भवेत् 'अयि किन्नु वेत्सि यदेकत्र नो विद्यापरिग्रहाय नानादिगन्तवासिनां साहचार्यमासीत्तदैव चास्मत्सौदामनीसमः । समक्षमनयोर्भूरिवसुदेवरातयोर्वृत्तेयं प्रतिज्ञा । अवश्यमावाभ्यामपत्यसम्बन्धः कर्त्तव्य इति तदिदानीं विदर्भराजमन्त्रेणासता देवराजेन माधवं पुत्रमान्विक्षिकिश्रवणाय कुण्डनपुरादिमां पद्मावतीं प्रहिण्वता सुविहितमित्यादिना कामन्दक्या भूरिवसुदेवरातमालतीमाधवादीनां तच्चरितानां च' (क) अज्ज माहदोवि कोदूहल मुप्पादिअ मए प्पउत्तमअणमहूसवं मअदणोज्जाणं पभादि अणुप्पेसिदो तर्हि किल मालदी गमिस्सदि तदो अण्णोण्णसंदंसणं भोडत्ति । तदो किं ति मालदीं अमच्चो माहवस्स अप्पणा ण पडिवा देहि जेण चोरिआविआहे भअवदी तुवरावेदि' इत्यादिनाऽवलोकितया च मदनोद्यानादीनां परिणयरहस्यादेश्च सूचना कृता तस्मात्स्पष्टमङ्कमुखत्वमेतस्येति ।

## रुचिरा

उदाहरति—**यथेत्यादिना** । **यथा** । **मालतीमाधवे** तदाख्ये प्रकरणे । **प्रथमाङ्कादौ** । **कामन्दक्यवलोकिते** कामन्दकी अवलोकिता चेत्यर्थः । **भूरिवसुप्रभृतीनाम्** । **च** । **भाविभूमिकानाम्** । **परिक्षिप्तकथाप्रबन्धस्य** । **प्रसङ्गात्** । **सन्निवेशम्** । **सूचितवत्यौ** । अयम्भावः—भाविनीनां वेषरचनानामपि नाम तयोः कल्याणिनोर्भूरिवसुदेवरातापत्ययोर्मालतीमाधवयोरभिमतः पाणिग्रहः स्यात् । "अयि किन्न वेत्सि यदेकत्र नो विद्यापरिग्रहाय नानादिगन्तवासिनां साहचर्य्यमासीत् तदैव चास्मत्सौदामिनीसमक्षमनयोर्भूरिवसुदेवरातयोर्वृत्तेयं प्रतिज्ञा । अवश्यमाभावाभ्यामपत्यसम्बन्धः कर्तव्य इति तदिदानीं विदर्भराजमन्त्रेणसता देवराजेन माधवं पुत्रमान्वीक्षिकिश्रवणाय कुण्डनपुरादिमां पद्मावतीं प्रहिण्वता सुविहितमित्यादिना कामन्दक्या भूरिवसुदेवरातमालतीमाधवादीनां तत्त्वरितानां च' अज्ज माहदो वि कोदूहलमुप्पादिअ मएप्पउत्तमअणमहूसवं मअदणोज्जाणं पभादि अणुप्पेसिदो तर्हि किल मालदी गमिस्सदि तदो अण्णोण्ण- संदंसणं भोडत्ति' । तदो किं ति मालदीं अमच्चो माहवस्स अप्पणा ण पडिवादेहि जेण चोरिआविआहे भअवदी तुवरावेदि ॥" इत्यादिनाऽवलोकितया च मदनोद्यानादीनां परिणयरहस्यादेश्च सूचना विहिता । तस्मात् स्फुटमेतस्याङ्कमुखत्वमिति ।

**अङ्कान्तपात्रैर्वाङ्कास्यं छिन्नाङ्कस्यार्थसूचनात् ॥ ६० ॥**

अङ्कान्तपात्रैरङ्कान्ते प्रविष्टैः पात्रैः । यथा वीरचरिते द्वितीयाङ्कान्ते—'(प्रविश्य ।) सुमन्त्रः—भगवन्तौ वसिष्ठविश्वामित्रौ भवतः सभार्गवानाह्वयतः । इतरे—क्व भगवन्तौ । सुमन्त्रः—महाराजदशरथस्यान्तिके । इतरे—तत्तत्रैव गच्छावः' इत्यङ्कपरिसमाप्तौ । '(ततः प्रविशन्त्युपविष्टा वसिष्ठविश्वामित्रपरशुरामाः ।)' इत्यत्र पूर्वाङ्कान्त एव प्रविष्टेन सुमन्त्रपात्रेण शतानन्दजनककथाविच्छेदे उत्तराङ्कमुखसूचनादङ्कास्यम्, इति । एतच्च धनिकमतानुसारेणोक्तम् । अन्ये तु—'अङ्कावतरणेनैवेदं गतार्थम्' इत्याहुः ।

---

## विवृतिः

प्रकारान्तरेणाङ्कमुखमाह—अङ्कान्तेति । छिन्नाङ्कस्य भिन्नाङ्कस्य विष्कम्भकस्य ।

## विज्ञप्रिया

अङ्कमुखस्य धनिकेनोक्तं लक्षणान्तरमाह—अङ्कान्तपात्रैरिति । छिन्नाङ्कस्य समाप्यमानाङ्कस्य सम्बन्धिभिस्तदङ्कान्ते प्रविष्टैः पात्रैरपराङ्कसूचनमित्यर्थः । पूर्वलक्षणे पूर्वप्रविष्टपात्रैः समस्ताङ्कार्थसूचनमत्र तु अङ्कान्तः प्रविष्टपात्रैस्तदुत्तराङ्कार्धमात्रसूचनमिति भेदः ।

इदं लक्षणं धनिकमत एव इत्याह—एतच्चेति । अङ्कावतारेणैवेति । तल्लक्षणाक्रान्तत्वादेतस्य आदावङ्कस्य दर्शित इत्यनेन ।

## कुसुमप्रतिमा

लक्ष्यविशेषव्यापनार्थं ध्वनिकमतेनाङ्कमुखलक्षणमाह अङ्कान्तेति । अङ्कान्तपात्रैरङ्कान्ते प्रविष्टैः पात्रविशेषैः, छिन्नस्य विभक्तस्य परवर्त्तिनः अङ्कस्य अर्थ सूचनात् विषयप्रकाशाद्वा अङ्कास्यम् अङ्कमुखं भवेत् । एतन्मतेऽपि भाविनोऽङ्कस्य अर्थसूचनद्वारा मुखमाद्यमित्यङ्कमुखमिति व्युत्पत्तिः ।

अन्येत्विति । अङ्कावतारेणैव अङ्कावतारलक्षणेनैव, इदम् उदाहृतवीरचरितस्थानम्, गतार्थं प्राप्तविषयम् । तथा चाङ्कावतारलक्षणव्यापनादिदमङ्कावतार एवेति न पुनरेतदर्थ मङ्कमुखलक्षणान्तरमावश्यकमिति तेषामाशयः । दर्पणकारमते तु विभिन्नप्रकारमङ्कमुखमेवेदम्, ध्वनिकसम्मतलक्षणोल्लेखातदनिराकरणाच्चेत्यवधेयम् ।

## विमला

अन्ये इति ।—अन्ये तु—काव्यप्रदीपकारादयस्तु, अङ्कावतारेण—अङ्गान्तरङ्गान्तरोपस्थितिस्वीकारेण, एव गतार्थं—कृतार्थम् । एवंविधस्याङ्कमुखस्य स्वीकारो निरर्थक इति भावः, इत्याहुः ।

## लक्ष्मी

लक्ष्यविशेषव्यापनार्थं धनिकेनोक्तमुखस्य लक्षणान्तरमाह—अङ्कान्तपात्रैरिति । अङ्कान्ते प्रविष्टैः पात्रविशेषैरित्यर्थः । छिन्नस्य भिन्नस्य परिवत्तिन अङ्कस्य अर्थसूचनात् विषयद्योतनाद्वा अङ्कास्यम् अङ्कमुखं स्यात् । पूर्वलक्षणे पूर्वं प्रतिष्टपात्रैः समस्ताङ्कार्थसूचनम्, अत्र तु अङ्कान्तःप्रविष्टपात्रैस्तदुत्तराङ्कार्धमात्रसूचनमिति भेदः ।

अङ्कान्तपात्रैरिति । अङ्कान्ते प्रविष्टानि पात्राणि तैः, मध्यमपदलोपिसमासः । उदाहरति—यथेति । वशिष्ठविश्वामित्राविति । अतिशयेन वशी जितेन्द्रिय इति वशिष्ठः, विश्वं मित्रमस्येति विश्वामित्रः 'मित्रे चर्षौ' इति पा० सूत्रेण दीर्घः, वशिष्ठश्च विश्वामित्रश्चेति तौ यथोक्तौ । भवतो युष्मान् । सभार्गवान् परशुरामजनकशतानन्दान् । इतरे परशुरामादयः । भगवन्तौ वशिष्ठविश्वामित्रौ । तत्र दशरथस्यान्तिके । अङ्कसमाप्तौ 'सत्याम्' इति शेषः, तृतीयाङ्कारम्भे इत्याशयः । पूर्वाङ्कान्ते तृतीयापेक्षया पूर्वोऽङ्को द्वितीयस्तदन्ते । उत्तराङ्कमुखसूचनात् तृतीयाङ्कद्वारस्य द्योतनात् । अङ्कास्यम् अङ्कमुखं 'ज्ञेय'मिति शेषः ।

एतल्लक्षणं धनिकमत एवेत्यत आह—एतच्चेति । धनञ्जयमतानुसारेण दशरूपककारमतमाश्रित्येति भावः । यदुक्तं तेन—'अङ्कास्यपात्रैरङ्कास्यभिन्नाङ्कस्यार्थसूचनात्' इति ।

अङ्कावतरोनैवेति । अङ्कावतारलक्षणेनैव इदम् उपरोक्तवीरचरितस्थानं गतार्थं लब्धविषयम् । एवं चात्राङ्कावतारलक्षणसत्त्वादयमङ्कावतार एवेत्येतदर्थं लक्षणान्तरमनावश्यकमेवेति तेषामभिप्रायः ।

वस्तुतस्तु—आहुरित्यनेनास्वरसः सूचितस्तद्बीजं तु स्वमतस्याप्रतिपादनमेव, तस्मादिदं विभिन्नप्रकारकमङ्कमुखमेवेति सुधीभिर्विभावनीयम् ।

## रुचिरा

दशरूपकारमतेनास्य लक्षणान्तरं दर्शयति—३५१ **अङ्कान्तपात्रै**रित्यादिना ।

३५१ **वायद्वा** । **अङ्कान्तपात्रै**रङ्कान्ते पात्राणि तैः । अङ्कान्ते प्रविष्टैः पात्रैरिति भावः । भिन्नाङ्कस्य । यत्राङ्कमुखं स्यात्ततो भिन्नसायाङ्कस्येत्यर्थः । छिन्नाङ्कस्येति पाठान्तरेऽप्ययमेवाऽर्थः । **अर्थसूचनात्** । **अङ्कास्यम**ङ्कमुखं 'कत्यते इति शेषः ॥ ३५६ ॥

कारिकां सुगमयितुमङ्कान्तपात्रैरिति पदं व्याचष्टे—**अङ्कान्तपात्रै**रित्यादिना ।

**अङ्कान्तपात्रै**रित्यस्येतिशेषः । **अङ्कान्ते** । **प्रविष्टैः** । **पात्रैः** एवं च—शाकपार्थिवादित्वान्मधअयमपदलोपस्तथा च अङ्कान्ते प्रविष्टानि पात्राणि तैरित्येव विग्रहः ।

उदाहरति—**यथे**त्यादिना ।

**यथा** । **महावीरचरिते** । **द्वितीयाङ्कान्ते** । "(प्रविश्य) । **सुमन्त्रः** । भगवन्तौ । विशिष्टविश्वामित्रौ अतिशयेन वशी जितेन्द्रिय इति वशिष्ठः स च, विश्वं मित्रस्येति स चेति तथोक्तौ । 'मित्रे चर्षौ । ६/३/१३० इति दीर्घः । भवतो युष्मान् । सभार्गवान्परशुरामजनकशतानन्दमिति भावः । आह्वयतः । इतरे परशुरामादय । क्व । भगवन्तो वशिष्ठविश्वामित्रावित्यर्थः । **सुमन्त्रः** । **महाराजदशरथस्य** । अन्तिके समीपे । 'अन्तिकं निकटे वाच्यलिङ्ग'मिति विश्वमेदिन्यौ । **इतरे** । तत् । तस्मात् **तत्र** दशरथस्यान्तिके । एव । गुरुवचनादिति पाठान्तरम् । गच्छाम ।" इति । अङ्कसमाप्तौ सत्यमिति शेषः । तृतीयाङ्कारम्भे इति भावः । "(ततः । **उपविष्टौ** । **वसिष्ठविश्वामित्रौ** । **जामदगन्य-**

**शतानन्दौ** । च । प्रविशतः)"इत्यत्र । **पूर्वङ्कान्ते** । तृतीयापेक्षया पूर्वोऽङ्को द्वितीयः तदन्ते । **एव । प्रविष्टेन सुमन्त्रपात्रेण** शतानन्दजनककथाविच्छेदे 'जायमाने इति शेषः । **उत्तराङ्कमुखसूचनादुत्तराङ्कस्तृतीयाङ्कस्तन्मुखस्य तद्द्वारस्य सूच-नात् । अङ्कमुख इति** 'ज्ञेयमितिशेषः ।

अत्र स्वारुचिं दर्शयति—**एतच्चेत्यादिना** ।

एतदङ्कमुखलक्षणमित्यर्थः । **च** । **धनञ्जयमतानुसारेण** । दशरूपककारमतमनुसृत्येति भावः । **उक्तम्** । यथाह धनञ्जयः—"**अङ्कास्यपात्रैरङ्कास्यं भिन्नाङ्कस्यार्थसूचना**"दिति ।

अथ—स्वाभिमतं मतं प्रकाशयति—**अन्येत्वित्यादिना** ।

**अन्येऽस्मदादय इत्यर्थः । तु । अङ्कावतरणेन । एव । इदम्** पूर्वोक्तलक्षणमङ्कास्यमित्यर्थः । **गतार्थम् । इति । आहुः** ।

अथ सिंहनिरीक्षणनयेन विष्कम्भकादेर्व्यवस्थामाह—५३ अपेक्षितमित्यादिना ।

**अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम्।**
**यदा संदर्शयेच्छेषमामुखानन्तरं तदा ॥ ६१ ॥**
**कार्यो विष्कम्भको नाट्य आमुखाक्षिप्तपात्रकः।**

यथा—रत्नावल्यां यौगंधरायणप्रयोजितः।

---

## विवृतिः

प्रथमाङ्कादावपि कर्तव्यतामाह—अपेक्षितमिति।

आमुखानन्तरं प्रस्तावनानन्तरमेव। आमुखाक्षेपसंश्रयः आमुखसूचितः। विष्कम्भकाद्यैरपीत्यर्थः। अधिकारिणः प्रधानफलप्रभोः।

## विज्ञप्रिया

विष्कम्भककरणमङ्कादावेवेति प्राग्दर्शितमिदानीं तस्यैव विशेषवशादामुखस्यान्तेऽपि करणमित्याह—अपेक्षितमिति। शेषमपेक्षितकार्य्यतः। शेषं नीरसं भिन्नं वस्तुविस्तरमित्यन्वयः। आमुखानन्तरं कार्य्यभित्यन्वयः। यौगन्धरायणप्रयोजित इति—विष्कम्भक इति शेषः। तत्र हि अपेक्षितो वत्सराजसागरिकयोर्वृत्तान्तः। तं परित्यज्यामुखानन्तरं स्वेच्छाचारी भीत एवास्मि भर्त्तुरिति नीरसं स्वभयं यौगन्धरायणेन दर्शितम्।

## कुसुमप्रतिमा

अपेक्षितमिति। यदा अपेक्षितम् एकवृत्तान्तगतत्वेनावश्यमाकाङ्क्षितम्, नीरसम् उद्देश्यरमविहीनम्, विस्तरं वस्तु दीर्घं तद्वृत्तान्तभागम्, परित्यज्य कविः शेषः सरसं तद्वृत्तान्तावशिष्टांशम्, सन्दर्शयेत् सन्दर्शयितुमिच्छेत् रक्षयितुमिच्छेदित्यर्थः, तदा तेन कविना आमुखानन्तरं प्रस्तावनारचनायाः परम् आमुखेन तया प्रस्तावनया आक्षिप्तम् आनीत सूचितं पात्रं यस्य स तादृशी विष्कम्भकः नाट्ये स्वरचयितव्यरूपके कार्य्यो रचयितव्यः। निष्कम्भक इति प्रवेशकादेरप्युपलक्षणम्।

## विमला

प्रथमाङ्कादावपि कर्त्तव्यमाह, अपेक्षितमिति।—नीरसं विस्तरं वस्तु परित्यज्य—विच्छिद्य, अपेक्षितम्—आकाङ्क्षितं, यदा सन्दर्शयेत्, तदा शेषं—सरसं वस्तु, सन्दर्शयितुमिति शेषः, नाट्ये आमुखानन्तरम्—आमुखात्—प्रस्तावनायाः, अनन्तरम्—पश्चात्, आमुखेन आक्षिप्तम्—आकृष्टं, पात्रं यत्र तादृशः, विष्कम्भकः कार्य्यः।

## लक्ष्मी

अथ विष्कम्भकादीनां व्यवस्थामाह नाटयदर्पणे—'आद्यौ सूच्यें बहावन्ये क्रमादाल्पेतरे तमे।'

बहौ बहुकाले च सूच्ये आद्यौ विष्कम्भक—प्रवेशकौ। अल्पे अल्पकाले अङ्कास्यम्, अल्पतरे अल्पतरकाले च चूलिका, अन्यतमे अन्यतमकाले च अङ्काऽवतार इति।

विष्कम्भककरणमङ्कादावेवेति प्राग्दर्शितम्, इदानीं तस्यैव विशेषवशादामुखस्यान्तेऽपि करणमित्याह— अपेक्षितमिति । यदा अपेक्षितम् एकवृत्तान्तगतत्वेनावश्यमाकाङ्क्षितं नीरसम् उद्देश्यरसशून्यम्, विस्तरं वस्तु बहुलं तद्वृत्तान्तांशम्, परित्यज्य विच्छिद्य कविः शेषं सरसं वस्तु सन्दर्शयेत् सन्दर्शयितुमभिलषेत् निर्मिमित्सेदिति यावत्, तदा तेन कविना आमुखानन्तरं प्रस्तावनानिर्मितेः परम् आमुखेन तया प्रस्तावनया आक्षिप्तं सूचितं पात्रं यस्य स तथोक्तो विष्कम्भको नाट्ये स्वनिर्मातव्यरूपके कार्यो निर्मातव्यः । विष्कम्भक इत्युपलक्षणम्, तेन प्रवेशकादेरपि **सङ्ग्रहो बोध्यः** ।

उदाहरति—यथेति । यौगन्धरायणप्रयोजित इति । विष्कम्भक इति शेषः । तत्र हि अपेक्षितो वत्सराज-सागरिकयोर्वृत्तान्तः, तं परित्यज्यामुखानन्तरं स्वेच्छाचारी भीत एवास्मि भर्त्तुरिति नीरसं स्वभयं यौगन्धरायणेन दर्शितम् ।

## रुचिरा

३५२ **यदा** । **अपेक्षित**माकाङ्क्षितम् । **नीरसं** चमत्कारशून्यम् । **विस्तरं** वाक्यम् । 'स च शब्दस्य विस्तर' इत्यमरः । **वस्तु** इतिवृत्तमिति भावः । **परिच्छिद्य** विच्छिद्य समाप्येति यावत् । **शेषं** शिष्टं सरसमल्पमिति-वृत्तमिति भआवः । सन्दर्शयेत् । तदा नाट्ये रूपके । **आमुखानन्तरम्** आमुखस्य प्रस्तावनाया अनन्तरम् । **आमुखाक्षिप्तपात्रक** आमुखेनाक्षिप्तं सूचितप्रवेशं पात्रं यत्र तादृशः । **विष्कम्भकः** । **कार्यः** ।

उदाहरति **यथे**त्यादिना ।

**यथा** । **रत्नावल्यां** नाटिकायाम् । **यौगन्धरायणप्रयोजितः** । 'विष्कम्भक' इति शेषः ।

ननु प्रस्तावनान्ते एव यत्राङ्कस्तस्य का गतिरित्याह ३५३ **यदात्वि**त्यादिना ।

**यदा तु सरसं वस्तु मूलादेव प्रवर्तते ॥ ६२ ॥**

**आदावेव तदाङ्के स्यादामुखाक्षेपसंश्रयः ।**

यथा—शाकुन्तले ।

---

## विवृतिः

आकाङ्क्षितमित्यर्थः । परित्यज्य विच्छिद्य । शेषं सरसं वस्तु ।

## विज्ञप्रिया

आदावङ्कस्य दर्शित इति यदुक्तं तद्विषयं दर्शयति—यदा त्विति । मूलादेव नीरसवस्त्वमिश्रणादेव । आमुखाक्षेपसंश्रय इति । आमुखेन यः पात्रस्याक्षेपः तमाश्रित्य प्रवृत्त इत्यर्थः । शाकुन्तलेति । तत्र हि मूलादेवानसूयया प्रवर्तितः स रस एव शकुन्तलाया विरहः ।

## कुसुमप्रतिमा

यदेति । यदा तु मूलादेव प्रथमाबध्यै व सरसं वस्तु वृत्तान्तः प्रवर्त्तते, तदा आमुखेन प्रस्तावनया न आक्षेपः पात्रप्रवेशसूचनं तं सश्रयति अवलम्बत इति स तादृशः अङ्कः आदावेव कविना रचयितव्यः स्यात् । न तत्र प्रथमं विष्कम्भकरवनाप्रयोजनमित्याशयः ।

## विमला

यदेति ।—यदा तु मूलादेव—मूलमारभ्यैव, सरसं वस्तु प्रवर्त्तते, तदा आदौ एव आमुखम् आधिपति इति तथोक्तः संश्रयो यस्य तथाभूतः, आमुखसूचितः इत्यर्थः, अङ्कः स्यात् ।

## लक्ष्मी

'आदावङ्कस्य दर्शितः' इति यदुक्तं तद्विषयं दर्शयति—यदात्विति । मूलादेव नीरसवस्त्वमिश्रणादेव सरसं वस्तु वृत्तान्तः प्रवर्तते, तदा आमुखेन प्रस्तावनया य आक्षेपः पात्रप्रवेशनसूचनं तं संश्रयति अवलम्बते तमाश्रित्य प्रवृत्त इत्यर्थः, यः स तथोक्तः अङ्कः आदावेवकविना निर्मातव्यः स्यात् । प्रथमं तत्र विष्कम्भकनिर्माणस्य नास्ति प्रयोजनमिति भावः ।

उदाहरति—यथेति । शाकुन्तल इति । अभिज्ञानशाकुन्तलनाटक इत्यर्थः । तत्र हि मूलादेवानुसूयया प्रवर्तितः स रस एव शकुन्तलाया विरहः ।

## रुचिरा

३५३ **यदा। तु। मूलादारम्भात्। एव। सरसं। वस्तु। प्रवर्तते। तदा। आदौ** प्रारम्भे। **एव। आमुखाक्षेपसंश्रयः**—आमुखेन प्रस्तावनया कृताक्षेपः संश्रयः पात्रप्रवेशेरूपो यत्र तथोक्तः। **अङ्कः। स्यात्।।** ३५८ ॥

उदाहरति **यथे**त्यादिना।

**यथा।** रत्नावल्यां नाटिकायाम्। **यौगन्धरायणप्रयोजितः।** 'विष्कम्भक' इति शेषः।

ननु प्रस्तावनान्ते एव यत्राङ्कस्तस्य का गतिरित्याह ३५३ **यदात्वि**त्यादिना।

३५३ **यदा। तु। मूलादारम्भात्। एव। सरसं। वस्तु। प्रवर्तते। तदा। आदौ** प्रारम्भे। **एव। आमुखाक्षेपसंश्रयः**—आमुखेन प्रस्तावनया कृताक्षेपः संश्रयः पात्रप्रवेशेरूपो यत्र तथोक्तः। **अङ्कः। स्यात्।** ३५८ ॥

उदाहरति **यथे**त्यादिना।

**यथा। अभिज्ञानशाकुन्तले** 'प्रस्तावनानन्तरमङ्क' इति शेषः।

**विष्कम्भकाद्यैरपि नो वधो वाच्योऽधिकारिणः ॥ ६३ ॥**

**अन्योन्येन तिरोधानं न कुर्याद्रसवस्तुनोः ।**

रसः शृङ्गारादिः । यदुक्तं धनिकेन—

**'न चातिरसतो वस्तु दूरं विच्छिन्नतां नयेत् ।**

**रसं वा न तिरोदध्याद्वस्त्वलंकारलक्षणैः ॥'** इति ।

---

## विवृतिः

वस्त्वलंकारलक्षणैः वस्त्वलंकारस्वरूपैः ॥

## विवृतिपूर्तिः

विष्कम्भकाद्यैरिति । यदुक्तं महर्षिणाष्टादशाध्याये—'अङ्के प्रवेशके वा प्रकरणमाश्रित्य नाटके वापि । न वधः कर्तव्यः स्याद्यस्तत्र स नायकः ख्यातः ॥ अवतरणमेव कार्यं संधिर्वा ग्रहणमेव वा नित्यम् । बहुभिः कार्यविशेषैः प्रवेशकैः सूचयेद्वापि ॥' इति ॥

## विज्ञप्रिया

अधिकारिण इति । मुख्यफलस्वामिन इत्यर्थः । तेन नायकवधः क्वापि न वर्णनीय इत्यर्थः ।

रसवस्तुनोरिति । वस्तु अलङ्कारभिन्नपदार्थः । लक्षणैर्ज्ञापकैः ।

## कुसुमप्रतिमा

विष्कम्भकेति । विष्कम्भकार्यरपि अधिकारिणः प्रधानफलभागिनी नायकादेर्वधो न वाच्यः कविना न वक्तव्यः । अपिशब्दादङ्कैस्तु न वाच्य एवेति सूचितम् । उभयत्रापि रसविच्छेदहेतुत्वादिति भावः तथा अयोन्येन परस्परद्वारा रसवस्तुनोः उद्देश्यरसवृत्तान्तयोः तिरोधानं व्यवधानं कविर्न कुर्य्यात् । तथा च रसमनुद्दीप्य केवलं वृत्तान्तं न वर्णयेत् न वा वृत्तान्तमवर्णयित्वा एकविषय एव केवलं रसमुद्दीपयेत्, अपि तु रससंश्लिष्टमेव क्रमिकं वृत्तान्तं वर्णयेदिति सरलार्थः ।

## विमला

विष्कम्भकाद्यैरिति ।—विष्कम्भकाद्यैः अपि इत्यपिना अङ्कैरपीत्यर्थः । अधिकारिणः,—प्रधानफलप्रभीः, वधः,—मारणं मरणं वा, नो वाच्यः,—न वर्णनीयः, किं पुनः साक्षाद्दर्शनीय इति भावः । इदमुक्तं भवति, नायको नायिकैव वा नाटकफलाधिदेवता भवति, तद्धर्थं वर्ण्यमाने नाटकफलस्यापि संहारः, अस्य तदायत्तत्वात्; तथा सति प्रकृते सर्वतो विप्लवापत्तिः इति । तथा रसस्य, वस्तुनः—इतिवृत्तस्य, च अन्योऽन्यन—परस्परेणेत्यर्थः, तिरोधानं न कुर्य्यात्, रसे इतिवृत्तयोगः, इतिवृत्ते रसयोगः यथा स्यात् तथा रचयितव्यमित्यर्थः, नैतयोः परस्परं विच्छेदः कार्य्य इति भावः । यथोक्तं भरतमुनिना,—"अङ्के प्रवेशके वा प्रकरणमाश्रित्य नाटके वाऽपि । न वधः कर्त्तव्यः स्याद

यस्तत्र स नायकः ख्यातः ॥ अवतरणमेव कार्य्यं सन्धिर्वा ग्रहणमेव वा नित्यम् । बहुभिः कार्य्यविशेषैः प्रवेशकैः सूचयेद् वाऽपि ॥" इति ।

धनिकमतेन समर्थयते, नेति । अतिरसतः,—अतिरसात्, रसस्यातिरेकेणेत्यर्थः, वस्तु—इतिवृत्तं, दूरम्—अन्यर्थं, विच्छिन्नतां—विच्छेदं, न च नयेत्—नैव प्रापयेत्; तथा वस्तुनः,—इतिवृत्तस्य, अलङ्कारलक्षणैः,—अलङ्कृतिरचनैः अनुप्रासोपमाऽऽदीनां विधानैरित्यर्थः, रसं वा न तिरोदध्यात्—न विच्छेदं गमयेदित्यर्थः । अतः यथा रसवस्तुनोः सम्बन्धोऽपि सम्पद्येत, परस्परञ्च तदन्यतरोत्कर्षेण एकस्य तिरोधानं न स्यात् तथा यतितव्यमिति भावः ।

## लक्ष्मी

विष्कम्भकाद्यैरपीति । विष्कम्भकाद्यैरपि विष्कम्भकप्रवेशकादिद्वाराऽपि अधिकारिणः मुख्यफलस्वामिनः नायकादेः वधो न वाच्यः तेन कविना नायकवधः क्वापि न वर्णनीय इत्यर्थः । अत्रापेरुपादानादङ्कैस्तु न वर्णनीय एवेति द्योतितम्, उभयत्रापि रसविच्छेदहेतुत्वादित्याशयः । तथा रसवस्तुनोः उद्देश्यरसवृत्तान्तयोः अन्योऽन्येन परस्परद्वारा तिरोधानं विच्छिन्नत्वम् कविः न कुर्यात् । एवं चोद्देश्यरसं तिरस्कृत्य केवलं वृत्तान्तं न वर्णयेत् वृत्तान्तमवर्णयित्वा वा नैकविषय एव केवलं रसं वर्णयेत् किं तु रससंयुक्तमेव यथाक्रमं वृत्तान्तं वर्णयेदिति भावार्थः ।

रसपदवाच्यं—प्रदर्शयति—रस इति । स्पष्टम् । उक्तार्थे प्राचां सम्मतिं दर्शयति—यदुक्तमिति । धनञ्जयेन दशरूपककृतेत्यर्थः ।

न चातीति । वस्तु वृत्तान्तं रसतो रससम्बन्धात् अतिदूरं विच्छिन्नतां तिरोधानत्वं न च नैव नयेत् कविः प्रापयेत् । प्रयोगवशेन तु किञ्चिद्दूरं नेतुं शक्यत इत्यतिना सूचयति । वस्त्वलङ्कारलक्षणैः वस्त्वलङ्कारस्वरूपैः वा रसं न तिरोदध्यात् न तदास्वादप्रतिबन्धमुत्पादयेदित्यर्थः ।

## रुचिरा

अधिकारिणो वधः सर्वथैव रूपके वुर्ज्य इत्याह—३५४ **विष्कम्भकाद्यै**रित्यादिना ।

३५४ **अधिकारिणः** प्रधाननायकस्येति भावः । **वधः । विष्कम्भकाद्यै**विष्कम्भकप्रवेशकादिद्वारेति भावः । **अपि** कुं पुनरङ्केनेति शेषः । **नो वाच्यः** किन्तु प्रवेशकादिद्वारा केवलं सूचनीय इति भावः ॥ ३५९ ॥

रसवस्तुनोरुद्भावनं योग्यतया कार्यमित्याशयेनाह—३५५ **अन्योऽन्येने**त्यादिना ।

३५५ **रसवस्तुनो** रसः श्रृङ्गाराद्यन्यतमः स च, वस्तु इतिवृत्तादि च तयोः । **अन्योऽन्येन** रसस्य वस्तुना वस्तुनश्च रसेनेत्यर्थः । **तिरोधानम् । न । कार्यम्** । कुर्यादिति पाठान्तरम् ।

रसपदवाच्यं निर्दिशति—**रस** इत्यादिना । स्पष्टम् ।

उक्तमर्थं स्पष्टयितुं प्राचां संवादं निर्दिशति—**यदुक्त**मित्यादिना ।

**यत्** यतः । **धनञ्जयेन** धनिकेनेति पाठान्तरम् । दशरूपककृतेत्यर्थः । **उक्तम्** । "**रसतो** रसात् । **वस्तु** इतिवृत्तादि । **अपि** । **दूर**मयन्तरम् । **विच्छिन्नतां** विच्छेदम् । **न च** । **नयेत्** । **वस्त्वलङ्कारलक्षणै** र्वस्त्वितिवृत्तमलङ्कारानुप्रासाद्यश्चेति तेषां लक्षणानि समुद्भावनानि तैस्तद्द्वारेति यावत् । **वा** । **रसम्** । **न** । **तिरोदध्यात्** । यथा स्थानं हि रसवस्तुनोरुद्भावनं स्थाने इति भावः ॥'

**बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ॥ ६४ ॥**

**अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ।**

**अर्थप्रकृतयः प्रयोजनसिद्धिहेतवः ।**

---

## विमला

बीजमिति ।—अर्थस्य—प्रयोजनस्य, प्रकृतयः,—सिद्धिहेतवः, पञ्च । ता नामतो निर्दशति,—बीजं बिन्दुः, पताका, प्रकरी, तथा कार्य्यम् इति । फलमाह,—(एताः बीजाद्याः अर्थप्रकृतीः) ज्ञात्वा यथाविधि, योज्याः,—प्रयोक्तव्या इत्यर्थः ।

## लक्ष्मी

'नाटकं ख्यातवृत्तं स्यातपञ्चसन्धिसमन्वितम्' इत्युक्तदिशा सन्धिलक्षणं प्रक्रान्तं तन्निरूपणायैव तद्घटकार्थप्रकृतीः निरूपयति—बीजमिति । प्रक्रियते प्रयोजनं साध्यते आभिरिति प्रकृतयो हेतवः । तथा च बीजम्, बिन्दुः, पताका, प्रकरी, कार्यञ्च, एताः पञ्च अर्थस्य प्रयोजनस्य प्रकृतयः सिद्धकारणानि ज्ञात्वा यथाविधि कवीनां विधिमनतिक्रम्य यथार्थेऽव्ययीभावः, योज्या दृश्ये कविना सन्निवेशनीयाः ।

## रुचिरा

बीजादीनां व्यवस्थां दर्शयितुमुपक्रमते—३५६ बीजमित्यादिना ।

३५६ **बीजम् । बिन्दुः । पताका । च । प्रकरी । कार्य्यम् । एव** । इत्येते इति शेषः । **पञ्च । अर्थप्रकृतयो**ऽर्थस्य प्कृतयो योनयस्तत्सिद्धिकारणानीति भावः । "प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । योनौ लिङ्गे पौरवर्गे" इति मेदिनी । **यथाविधि** यथा भरतादिशास्त्रम् । ज्ञात्वा योज्याः ॥ ३६० ॥

कारिकाया दुर्बोधमंशं स्पष्टयति—अर्थप्रकृतय इत्यादिना ।

**अर्थप्रकृतय** इत्यस्येति शेषः । **प्रयोजनसिद्धिहेतवः** प्रयोजनस्य सिद्धिर्निष्पत्तिस्तस्य हेतवः कारणानीति भावः ।

तत्र बीजम्—

**अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति ॥ ६५ ॥**

**फलस्य प्रथमो हेतुर्बीजं तदभिधीयते ।**

यथा—रत्नावल्यां वत्सराजस्य रत्नावलीप्राप्तिहेतुर्दैवानुकूल्यलालितो यौगंधरायणव्यापारः । यथा वा—वेण्यां द्रौपदीकेशसंयमनहेतुर्भीमसेनक्रोधोपचितो युधिष्ठिरोत्साहः ।

---

## विवृतिः

बहुधा विसर्पति सहकारियोगेनोपचितं सद्विविधावान्तरकार्याणि जनयति ।

फलस्य प्रधानफलस्य । प्रथमः प्रधानम् ॥

दैवानुकूल्यलालितो दैवानुगुण्योपचितः । द्रौपदीकेश संयमनं प्रधानफलम् । शत्रुवधादीन्यवान्तरफलानि ॥ उद्भेदकारणमनन्तररोथापनहेतुः ॥ कधमित्यादि । 'कथमेष स उदयननरेन्द्रः इति संस्कृतम् ॥ व्यापि निर्वहणपर्यन्तं स्थायि, पात्रान्तरनिष्पाद्यं प्रधानफलसाधनं प्रासङ्गिकम् । वृत्तं कर्म । व्यापीत्यस्य व्यावृत्तिमाह—पताकेति.

## विवृतिपूर्तिः

बीजमिति । अत्र वेशेषो मातृगुप्ताचार्यैरभिहितः—'फले यस्य हि संहारः फलबीजं तु तद्भवेत् । वस्तुबीजं कथा ज्ञेया अर्थबीजं तु नायकः ॥' इति पूर्वमल्पोद्दिष्टः पश्चाद् बहुधा विस्तारशाली कार्यफलको हेतुविशेषो बीजवद् बीजमित्युच्यते ॥

## विज्ञप्रिया

नाट्ये कर्त्तव्यान्तरमाह—स्वल्पमात्रमिति । युधिष्ठिरोत्साह इति तस्य बलोत्साह इत्यर्थः ।

## कुसुमप्रतिमा

अल्पेति । यत् अल्पमात्रं समुद्दिष्टं प्रथमङ्कुरितत्वमात्रेण प्रदर्शितं सत् बहुधा विसर्पति क्रमिकसहकारिकारणसम्पर्केण नानाविधावान्तरकार्य्यसाधनपुरः सरं क्रमशी विस्तारं गच्छति, तथा फलस्य नायकमुख्योद्देश्यस्य प्रथमो हेतुः प्रधानं कारणम्, तत् बीजम् अभिधीयते ।

यथेति । रत्नावलीप्राप्तिः फलं तस्य हेतुः । दैवानुकूल्येन लालितः सम्पादितः । द्रौपद्याः शंसयमनं फलं तस्य हेतुः । भीमसेनस्य क्रोधेन उपचित उत्पादितः ।

## विमला

बीजमाह, अल्पमात्रमिति ।—यत् अल्पमात्रं—यत्किञ्चित्, समुद्दिष्टं सत् बहुधा विसर्पति—विस्तारं गच्छति, सहकारियोगेनोपक्षितं सत् विविधावान्तरकार्य्याणि जनयति इत्यर्थः, तत् फलस्य—प्रधानफलस्य,

प्रथमः,—प्रधानं, हेतुः,—कारणं, बीजम् अभिधीयते—कथ्यते । अत्र विशेषो यथोक्तः मातृगुप्ताचार्य्यैः, "फले यस्य हि संहारः फलबीजन्तु तद्भवेत् । वस्तुबीजं कथा ज्ञेया अर्थबीजन्तु नायकः ॥"इति । प्रथमं स्तोकमुत्पन्नः, ततः परं बहुविधविस्तारवान् कार्य्यप्रयोजनः कारणविशेष : बीजवत् बीजमिति सारः ।

यथा रत्नावल्यामिति ।—रत्नावल्याः—सागरिकायाः, प्राप्तिहेतुः दैवस्य आनुकूल्यं—फलाभिमुखत्वं तेन लालितः,—अनुमोदितं इत्यर्थः, यौगन्धरायणस्य व्यापारः बीजं, रत्नावलीप्राप्तिश्च तत्फलं बोध्यमिति शेषः । वेण्यामिति ।—द्रौपदीकेशमंयमनहेतुः भीमसेनस्य क्रोधेन उपचितः,—वृद्धिं गतः, युधिष्ठरस्य उत्साहः वेणीसंहारनाटकस्य बीजं, द्रौपदीकेशसंयमनञ्च तत्फलं बोध्यमिति शेषः ।

## लक्ष्मी

बीजं निरूपयति—अल्पमात्रमित । यत् अल्पमात्रं समुद्दिष्टम् आदावङ्कुरितत्वमात्रेण प्रदर्शितं सत् बहुधा विसर्पयति क्रमिकसहकारियोगेनोपचितं विविधावान्तरकार्याणि जनयति, तथा फलस्य नायकमुख्योद्देश्यस्य प्रथमो हेतुः आदिकारणम्, तत् धान्यबीजवत् बीजम् अभिधीयते कविभिरिति शेषः । बीजं हि नाटकादेरितिवृत्तार्थस्योपायः. आमुखं तु रूपकप्रस्तावनार्थं नटस्यैव वृत्तमिति बोध्यम् ।

उदाहरति—यथेति । रत्नावलीप्राप्तिः फलं तस्य हेतुः । दैवानुकूल्येन लालितो दैवानुगुण्योपचितः । इदं च व्यापाररूपम् । उदाहरणान्तरं प्रदर्शयति—यथा वेति । वेण्यां वेणीसंहारनाटके । द्रोपद्याः केशसंयमनं प्रधानं फलं तस्य हेतुः । भीमसेनस्य क्रोधेन उपचितो जनितः, युधिष्ठिरोत्साहः युद्धार्थमभ्यनुज्ञानं बीजमित्यर्थः ।

## रुचिरा

बीजादीन् स्वरूपतो निर्देष्टुमाह—**तत्रे**त्यादि ।

तत्र तेषु बीजादिषु मध्ये । **बीजं** "लक्ष्यत" इति शेषः ॥ ३५७ । **अल्पमात्र**मित्यादिना ।

३५७ **यत्**। **अल्पमात्रम्**। **समुद्दिष्टं** सूचितम् । **बहुधा** । विसर्पति फलोद्भावने साहाय्यायोपयुज्यते । तत् । फलस्य । प्रथमं आरम्भिक इत्यर्थः । हेतुः । बीजम् । अभिधीयते ॥ ३६१ ॥

उदाहरति—यथेत्यादिना ।

**यथा रत्नावल्यां** रत्नावलीनाटिकायाम् । **वत्सराजस्यो**दयनापरनामधेयस्य नृपतेः । **रत्नावलीप्राप्तिहेतुः । दैवानुकूल्यलालितो** दैवस्यैनुकूल्यं प्रसादोन्मुखत्वं तेन लालितः । **यौगन्धरायणव्यापारः** । बीजमिति तु प्रसङ्गानुप्रसक्तम् । **यथा वा** । **वेणीसंहारे** । **द्रौपदीकेशसंयमनहेतुः** दौपद्याः केशास्तेषां संयमनं बन्धनं तस्य हेतुः । **भीमसेनक्रोधोपचितो** भीमसेनस्य क्रोधेनोपचितः सञ्जातो वृद्धो वा । **युधिष्ठिरोत्साहो** युधिष्ठिरस्योत्साहो युद्धार्थमभ्यनुज्ञानं बीजमिति भावः ।

**अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ॥ ६६ ॥**

यथा—रत्नावल्यामनङ्गपूजापरिसमाप्तौ कथार्थविच्छेदे सति 'उदयनस्येन्दोरिवोद्वीक्षते' इति सागरिका श्रुत्वा '(सहर्षम् ।) कधं एसो सो उदअणणरिन्दो'इत्यादिरवान्तरार्थहेतुः ।

---

## विवृतिपूर्तिः

अवेति । अवान्तरकथाविच्छेदे तत्संधानकारी बिन्दुः उद्भेदकारणमिति जले तैलबिन्दुवत्प्रसारित्वाद बिन्दुरिति व्यपदिश्यते ॥

उदयनस्येति । 'अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवावास्थानीं समये समं नृपजनः सायंतने संपतन् । संप्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितु प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ॥' इति तु समस्तम् ॥

## विज्ञप्रिया

बिन्दुरूपामर्थप्रकृतिमाह—अवान्तरेति । बिन्द्वविच्छेदेति परिभाषारूपभिदम् । बिन्दुपदं नपुंसकलिङ्गमिति ।

उदयनस्येन्दोरिव इत्यादिकं वन्दिवाक्यम् । कथमिति । कथं स एव उदयननरेन्द्र इति संस्कृतम् । वत्सराज एव उदयननामा । अवान्तरार्थे सागरिकाविरहे उदयननृपत्वेन ज्ञानात् हि तस्य विरहवर्णनप्रवृत्याऽविच्छेदः । किन्तु तत्सूचकं विनैव नृपदर्शनरूपकारणसत्त्वात् प्रवर्त्तते इत्यतोऽङ्कावतारादिभेदः । अङ्कावतारे तु पूर्वप्रविष्टपात्रैः सूचनेति ।

## लोचन

कथमिति । कथमेष स उदयननरेन्द्रः । रत्नावल्यामेव द्वितीयबिन्दुर्यथा देवीगमनानन्तरमेवान्तराविच्छेदे विदूषकं प्रति राज्ञा वचनम् । धिङ् मूख ! अलं परिहासेन आभिजात्येन गूढो देव्यास्त्वया न लक्षितः कोपः । तथा हि देवीमेव प्रसादयितुं गच्छाव इति ।

## कुसुमप्रतिमा

अवेति । अवान्तरार्थस्य समग्रवृत्तान्तैकभागस्य विच्छेदे समाप्तत्वेन विरामे प्राप्ते अच्छेद कारणं परवत्ति वृत्तान्तभागाकाङ्क्षीत्पादनेन अविरामहेतुयः स बिन्दुः ।

यथेति । कथार्थस्य तद्वृत्तान्तभागस्य विच्छदे समाप्तत्वेन विरामे प्राप्ते सति ।

"अस्तापास्तसमस्तभासि नभस, पारं प्रयाते रवौ आस्थानौ समये समं नृपजने सायन्तनः सम्पतन् । सम्मयेष सरोरुहद्युतिमुषः पादांस्तवामेवितुं प्रीत्युत्कर्षकृती दृशामुदयनस्येन्दीरिबोहीक्षते ॥" इति श्लोकसमुदायः ।"कथमेव स उदयननरेन्द्रः" इति संस्कृतानुवादः । अवान्तरार्थस्य तन्नाटिकागतवृत्तान्तभागान्तरस्य हेतुः, वत्सराजं प्रति सागरिकाया अनुरागज्ञापनेन तद्वृत्तान्तभागान्तराकाङ्क्षीतपादनादिति भावः ।

## विमला

बिन्दुमाह, अवान्तरेति ।—अवान्तरस्य—महावाक्यरूपसन्दर्भैकदेशस्य अर्थस्य—प्रयोजनस्य, विच्छेदे—समाप्तौ, अच्छेदस्य—अविरामस्य, कारणं बिन्दुः तथोक्तम्,—"अवान्तरकथाविच्छेदे तस्मान्धानकारी बिन्दुः । जले तैलबिन्दुवत् विस्तारित्वात् बिन्दुरिति व्यपदिश्यते ॥" इति ।

उदाहरति, यथेति ।—रत्नावल्याम् अनङ्गस्य—कामस्य, पूजा तस्याः परिसामाप्तौ सत्यां, कथायां,—प्रकृतसन्दर्भस्य, अर्थः,—तात्पर्य्यं, तस्य विच्छेदे सति "अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवावाष्थानीं समये समं नृपजनः सायन्तने सम्पतन् । सम्प्रत्येष सरोरुहद्यतिमुषः पादांस्तवासेवितं प्रीत्युत्कर्षकृतीदृशामुदयनस्येन्दोरिवोद्वीक्ष्यते ॥" इति श्रुत्वा सागरिका (सहर्षम्) कधमिति ।—["कथम् एषः स उदयननरेन्द्रः" इति संस्कृतम्] अवान्तरस्यार्थस्य हेतुः, अवान्तरार्थश्य सागरिकाया वत्सराजं प्रति अनुरागस्य अविराम इति बोध्यम् ।

## लक्ष्मी

बिन्दुरूपामर्थप्रकृतिं निरूपयति—अवान्तरेति । अवान्तरार्थस्य सकलवृत्तान्तभागान्तरस्य विच्छेदे समाप्तत्वेन लब्धविश्रामे अच्छेदस्य अविरामस्य कारणं हेतुर्बिन्दुः । जले तैलबिन्दुवत्प्रसारित्वात् बिन्दुरिति व्यपदेशः । केवलं बीजं मुखसन्धादावेव निबध्यते, बिन्दुस्तु तदनन्तरमिति भेदः ।

उदाहरति—यथेति । काव्यर्थस्य तद्वृत्तान्तभागस्य विच्छेदे समाप्तत्वेन लब्धविश्रामे सति । उदयनस्येति ।

**'अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा-**
**वास्थानीं समये समं नृपजनः सायन्तने सम्पतन् ।**
**सम्प्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं**
**प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ॥'**

इति समस्तपद्यम् । इदञ्च बन्दिवाक्यम् । कथमित्यादि 'कथमेष स उदयननरेन्द्रः' इति संस्कृतम् । वत्सराज एवोदयननामा । अवान्तरार्थस्य तन्नाटिकागतवृत्तान्तभागान्तरस्य हेतुः । उदयनं प्रति सागरिकाया अनुरागबोधनेन तद्वृत्तान्तभागान्तराकाङ्क्षाजननादिति भावः । अङ्काऽवतारे तु पूर्वप्रविष्टपात्रैः सूचनेति ततोऽस्य भेदः ।

रत्नावल्यामेव द्वितीयबिन्दुर्यथा—देवीगमनानन्तरमेवान्तराविच्छेदे विदूषकं प्रति राज्ञो वचनम् । 'धिङ् मूर्ख ! अलं परिहासेन आभिजात्येन गूढो देव्यास्त्वया न लक्षितः कोपः । तथाहि देवीमेव प्रसादयितुं गच्छाव इति ।

## रुचिरा

बिन्दुं लक्षयति—३५८ **अवान्तरार्थविच्छेद** इत्यादिना ।

**३५८ अवान्तरार्थविच्छेदेऽ**वान्तरो मुख्यातिरिकतः प्रसङ्गानुप्रसक्तेभ्योव्यतिरिक्तोऽर्थस्तस्य विच्छेदः समाप्तिस्तस्मिन्सतीत्यर्थः । **अच्छेदकारणम्** । 'तस्ये'ति शेषः । **बिन्दुः** ॥ ३६२ ॥

उदाहरति—**यथे**त्यादिना ।

**यथा रत्नावल्यां**। 'प्रथमेऽङ्के'ति शेषः। **अनङ्गपूजापरिसमाप्तौ** अनङ्गस्य कामस्य पूजा वावसदत्तया कृतमर्चनं तस्याः परितः समाप्तिस्तस्यां सत्याम्। **कथाऽर्थविच्छेदे** कथार्थस्यावान्तरार्थस्य विच्छेदस्मिन् जायमाने इत्यर्थः। **सति**। **अस्तापास्तसमस्तभासि** अस्ते अस्ताचले आपास्तानिक्षिप्ताः समस्ता भासो दीप्तयो येन तस्मिन्। **नभसः** आकाशस्य तद्रूपकस्यं गन्तव्यस्याध्वन इति भावः। पारम्। प्रयाते। रवौ सूर्ये सत। अत एव—सायन्तने सायङ्कालिके। **समये**। **आस्थानीं** सभाम्। 'आस्थानी क्लीबमास्थानं स्त्री नपुंसकयोः सदः।' इत्यमरः। समं युगपत्। **सम्पतन्**—आगच्छन्। **एषः**। **नृपजनः**। **सम्प्रति**। **सरोरुहद्युतिमुषः** सरोरुहाणां कमलानां द्युतिं शोभां विकाशं वा मुष्णाति वामुष्णन्तितां तान्वा। **प्रीत्युत्कर्षकृतः** प्रसादवर्धकान्। तव। **उदयनस्य**। **इन्दोः**। **इव**। **पादान्** चरणान् किरणान् वा। **आसेवितुम्**। **दशाम्**। **उद्वीक्षते**। अत्र चक्षुशअचकोरसदृशत्वं व्यज्यते। इदं च नेपथ्ये **वैतालिकैः पठितं** पद्यम्। अत्र शार्दूलविक्रीडितं वृत्तम्॥ ३४१॥'

**इति**। "**श्रुत्वा**। **सागरिका (सहर्षम्) कधं** कथम्। **एसो** एषः। **सो** सः। **उदअणणरिंदो** उदयननरेन्द्रः।" **इत्यादिः** 'पुनर्यस्तस्या वाक्यसन्दर्भ स' इति शेषः। **अवान्तरार्थहेतु**रवान्तरार्थस्य आनुषङ्गिकप्रयोजनस्य सागरि-काया वत्सराजविषयकानुरागेण तस्यतस्यानुष्ठानोद्भावनस्येति यावत् हेतुः कारणम्।

**व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते ।**

यथा—रामचरिते सुग्रीवादेः वेण्यां भीमादेः शाकुन्तले विदूषकस्य चरितम् ।

**पताकानायकस्य स्यान्न स्वकीयं फलान्तरम् ॥ ६७ ॥**

**गर्भे संधौ विमर्शे वा निर्वाहस्तस्य जायते ।**

यथा—सुग्रीवादेः राज्यप्राप्त्यादि । यत्तु मुनिनोक्तम्—

'आ गर्भादा विमर्शाद्वा पताका विनिवर्तते ।' इति ।

तत्र 'पताकेति । पताकानायकफलं । निर्वहणपर्यन्तमपि पताकायाः प्रवृत्तिदर्शनात्' इति व्याख्यातमभिनवगुप्तपादैः ।

---

## विवृतिः

फलान्तरे मुनेः पताकापदप्रयोगस्याभिनवगुप्तपादाचार्यव्याख्यानेन गौणत्वमुपपाद्य स्वोक्तविरोधं परिहर्तुमाह—यत्त्विति । तत्र मुनिवचने । पताका पताकापदम् । गौण्या वृत्त्या नायकफलं पताकानायकस्य फलान्तरम् । गौणत्वे हेतुमाह—निर्वहणेति ॥

पताकाया नायकस्य स्वामिनः स्वकीयं स्वमात्रोपकारि यत्फलान्तरं 'न पताका'— इत्यनुषङ्गेणान्वयः । अस्य व्यापकत्वाभावमुपपादयति—गर्भे इति । 'संधो' इति काकाक्षिन्यायेन उभयत्रान्वेति । निर्वाहः समाप्तिः । तस्य फलान्तरस्य ॥

## विवृतिपूर्तिः

व्यापीति । यदुक्तं भरतेन—'यद्वृत्तं हि परार्थं स्यात्प्रधानस्योपकारकम् । प्रधानवच्च कल्प्येत सा पताकेति कीर्तिता ॥' इति ॥

आ गर्भादिति । एतदुत्तरार्धं तु 'कस्माद्यस्मान्निबन्धोऽस्याः परार्थः परिकीर्त्यते ॥' इति ॥

## विज्ञप्रिया

पताकारूपामर्थप्रकृतिमाह—व्यापीति । वृत्तं नायकसहायस्या तच्च व्यापि अनेकालव्यापि । प्रासङ्गिकं नायकप्रसङ्गवृत्तम् ।

प्रकारान्तरमाह—पताकानायकस्यापीति । अनायकस्यापीत्यकारप्रश्लेषः । तथा चाऽनायकस्य सुग्रीवादेरपि स्वकीयराज्यलाभादिफलान्तरं यत्तदपि पताकान्तरमित्यर्थः । अपिशब्दात् नायकस्य रामस्य सेतुबन्धादि फलान्तरमपि पताकान्तरमिति बोध्यम् । गर्भे सन्धाविति । गर्भे विमर्षे वा सन्धौ इत्युभयत्र सन्धावित्यस्यान्वयः । गर्भविमर्शोपसंहृतिरूपा हि पञ्चसन्धयो वक्ष्यन्ते । तत्र गर्भविमर्शरूपसन्धिद्वये तस्य पताकासंज्ञकस्याऽनायकनायकद्वयफलान्तरस्य निर्वाहो निष्पत्तिरित्यर्थः ।

आगर्भादिति । मुनिवाक्ये पताकेत्युत्कीर्त्य व्याचष्टे-पताकानायकेति । अत्रापि अकारप्रश्लेषः । अनायकफलरूपा पताकैव आगर्भाद् आविमर्षाद् वा निवर्त्तते इत्यर्थः । अस्मिन्नभिनवगुप्तपादव्याख्याने हेतुमाह—

निर्वाहपर्य्यन्तमपीति। पताकाव्यापि प्रासङ्गिकरूपायाः अनायकस्य फलान्तररूपाया एव पताकाया आगर्भाद् वा आविमर्शाद्वा निवृत्तिरित्यर्थः।

प्रकरीरूपामर्थप्रकृतिमाह—प्रासङ्गिकमिति। प्रसङ्गादुपस्थितं प्रदेशस्थं प्रदेशविशेषे निष्पन्नमित्यर्थः।

## कुसुमप्रतिमा

व्यापीति। व्यापि उप संहारपर्य्यन्तस्थायि, प्रासङ्गिकं प्रसङ्गत उपस्थितम्, वृत्तं वृत्तान्तः पताका इत्यभिधीयते।

उक्तपताकाया निर्वाहणसन्धिपर्य्यन्तमपि व्यापित्वं प्रतिपादयितुमाह पताकेति। यस्य वृत्तान्तः पताकेयुय्यते स पताकानायकः सुग्रीवभीमसेनादिः। तथा च व्यापीत्याद्युक्तप्रकारा पताका, नायकस्य तत्पताक नायक य सुग्रीवभीमसेनादे, स्वकीयफलान्तरं निजप्रयोजनविशेषरूपं न स्यात्, अपि तु प्रकृतग्रन्थ नायकस्य रामयुधिष्ठिरादेः फलसाधिका स्यादित्यर्थः। एवञ्च तस्याः प्रासङ्गिकत्वमपि सङ्गच्छत इति भावः। ननु कथं स्वकीयफलान्तरं न स्यादित्याह गर्भ इति। येन हि गर्भे विमर्षे वा सन्धौ तस्य पताकानायकस्वकीयफलस्य निर्वाहः समाप्तिर्जायते। तथा च निर्वहणपर्य्यन्तस्थायिनः प्रकृतनायकफलस्य साधकत्वात् पताकयापि निर्वहणपर्य्यन्तं स्थातव्यमेव; तेन तस्याः स्वनायकफलविशेषरूपत्वं तत्फलस्य गर्भसन्धौ विमर्षसन्धौ वा सर्ववादि सिद्धा समाप्तिर्नोपपद्यत इत्याशयः। एतेनोक्तप्रकारपताकाया निर्वहणपर्य्यन्तमपि व्यापित्वं प्रतिपादितमिति द्रष्टव्यम्।

पताकानायकस्वकीयफलस्य प्रकृतनायचरितमध्यभागात्मके गर्भसन्धौ विमर्षसन्धौ वा समाप्तत्वं दर्शयितुमाह यथेति। तथा च पताकानायकस्य सुग्रीवस्य बालिराज्यप्राप्तिरूपं स्वकीयफलं रामचरितमध्यभाग पर एव समाप्तम्, अय च तस्यैव सुग्रीवस्य चरितं रामचरितफलभूतसीतीङ्गरपर्य्यन्तमपि तिष्ठतीति सुग्रीवचरितं रामचरिते पताकेति भावः।

ननु पताकाया निर्वहणपर्य्यन्तस्थायित्वं महर्षिभरतोक्तं तस्य गर्भविमर्षसन्धिमध्य एव समाप्यत्वं कथमुपपद्यत इत्याह यत्त्विति। मुनिना नाट्याचार्य्येण भरतेन। गर्भात् आ गर्भसन्दिसमाप्तेः पूर्वं विमर्षात् आ विमर्षसन्धिसमाप्तेः पूर्वं वा पताका विनिवर्त्तते समाप्तिं गच्छति। एतेन ग्रन्थकृन्मतस्य महर्षिमतेन सह विरोधो द्रष्टव्यः।

उक्तकारिकार्द्धस्य अभिनवगुप्तपादव्याख्यामुदाहृत्यैव तद्विरोधं परिहरति तत्रेति। तत्र मुम्भुक्ते, पत्राकेति पताकापदम्, पताकानायकफलं पताकानायकस्य सुग्रीवादेः स्वकीयराज्यप्राप्त्यादिरूपफलपरम्; निर्वहणपर्य्यन्तमपि उपसंहारसन्धिपर्य्यन्तमपि पताकायाः प्रवृत्तेः स्थायित्वस्य दर्शनात्। एतेनाभिनवगुप्तपादमतेऽपि पताकाया उपसंहारपर्य्यन्तमपि स्थायित्वमिति दर्शितम्।

## विमला

पताकामाह, व्यापीति।—व्यापि—व्यापकं, निर्वहणपर्य्यन्तं स्थायीत्यर्थः, प्रासङ्गिकं—प्रसङ्गतः आगतं, वृत्तं—चरितं, पताका इति अभिधीयते। ततोक्तं भरतेन,—"यद्वृत्तं हि परार्थं स्यात् प्रधानस्योपकारकम्। प्रधानवञ्च कल्प्येत सा पताकेति कीर्त्तिता॥" इति।

पताकेति।—पताका नायकस्य स्वकीयफलान्तरं—निजप्रयोजनविशेषोपयोगिनीत्यर्थः, न स्यात् ["पताकानायकस्य" इति समस्तपाठे—पताकायाः नायकस्य—स्वामिनः स्वकीयं—स्वमात्तीपकारि यत्फलान्तरं "न पताका" इत्यनुङ्गेणान्वयः]। अस्य व्यापकताभावमुपपादयति, गर्भे इति।—गर्भे सन्धौ, विमर्षे वा—विमर्षसन्धौ

वा, तस्य—फलान्तरस्य, निर्वाह,—समाप्तिः, जायते । रसगङ्गाधरे तूक्तं,—"नायकस्य फलं यत्तत् पताका परिकीर्त्यते । प्रतिनायकगं वाऽपि पताका यत् प्रयोजनम् ॥" इति ।

फलान्तरे मुनेः पताकापदप्रयोगस्याभिनवगुप्तपादाचार्य्यव्याख्यानानुसारेण गौणत्वमङ्गीकृत्य स्वोक्तिविरोधं परिहरति, यत्तु इति ।—मुनिना—भरतेन ।

आ गर्भादिति ।—यस्मात् कस्मात् हेतोः अस्याः,—तथाविधायाः पताकायाः, निबन्धः,—-रचना, सङ्कटनमित्यर्थः, परार्थः परिकीर्त्यते, तत आ गर्भात्—गर्भसन्धिपर्य्यन्तम्, आ विमर्षात्—विमर्षसन्धिपर्य्यन्तं वा पताका विनिवर्त्तते ।

तत्रेति । अत्र पताकाशब्देन पताकानायकफल बोध्यम् ।

## लक्ष्मी

पताकारूपामर्थप्रकृतिं निरूपयति—व्यापीति । व्यापि निर्वहणपर्यन्तं स्थायि पात्रान्तरनिष्पाद्यं प्रधानफलसाधनं प्रासङ्गिकम्, वृत्तं वृत्तान्तः पताका इत्यभिधीयते ।

उक्तपताकाया निर्वहणसन्धिपर्यन्तमपि व्यापित्वं बोधयितुमाह—पताकानायकस्येति । यस्य वृत्तान्तः पताकेत्यभिधीयते स पताकानायकः सुग्रीवभीमसेनादिः । एवं च व्यापीत्याद्युक्तस्वरूपायाः पताकाया नायकस्य तत्स्वामिनः सुग्रीवभीमसेनादेः स्वीकीयं स्वमाङ्गोपकारि यत्फलान्तरं स्वप्रयोजनविशेषरूपं न स्यात् किं तु प्रकृतग्रन्थनायकस्य रामयुधिष्ठिरादेः फलजनिका स्यादित्यर्थः । तथा च तस्याः प्रासङ्गिकत्वमपि भवत्येवेति भावः । पताकानायकस्यापीति पाठे तु अनायकस्यापीत्यकारप्रश्लेषः । तथा चानायकस्य सुग्रीवादे रपि स्वकीयराज्यलाभफलान्तरं यत्तदपि पताकान्तरमित्यर्थः । अपिशब्दात् नायकस्य रामस्य सेतुबन्धादिफलान्तरमपि पताकान्तरमिति बोध्यम् । अस्य व्यापकत्वाभावमुपपादयति—गर्भं इति । येन हि गर्भे विमर्शे वा सन्धौ सन्धावित्यस्य काकाक्षिगोलकन्यायेनोभत्रान्वयः । गर्भविमर्शोपसंहतिरूपा हि सन्धयो वक्ष्यन्ते । तत्र गर्भविमर्शरूपसन्धिद्वये तस्य पताकानायकस्वकीयफलस्य, निर्वाहो निष्पत्तिः जायते । एवं च निर्वहणपर्यन्तं वर्त्तमानस्य प्रकृतनायकफलस्य जनकत्वात् पताकाया अपि तत्पर्यन्तं वर्त्तमानत्वमेव, तेन तस्याः स्वनायकफलविशेषरूपत्वे तत्फलस्य गर्भसन्धौ विमर्शसन्धौ वा सर्ववादिसिद्धा निष्पत्तिर्न जायत इत्यभिप्रायः । तथा चैतेन निर्वहणपर्यन्तमपि व्यापित्वमुक्तस्वरूपपताकाया उक्तं भवतीति बोध्यम् ।

प्रकृतनायकचरितमध्यभागात्मके गर्भसन्धौ विमर्शसन्धौ वा पताकानायकस्वकीय फलस्य निष्पत्तित्वं बोधयितुमुदाहरति—यथेति । रामचरिते हि पताकानायकः सुग्रीवः, वेण्यादौ भीमसेनादिः, तस्य रामचरितमध्यभाग एव वालिराज्यप्राप्तिरूपं स्वकीयफलं निष्पन्नम्, अनन्तरं च तस्यैव सुग्रीवस्य चरितं रामचरितफलभूतसीतोद्धरणपर्यन्तमप्युपलभ्यते । रामचरिते सुग्रीवचरितं पताका । एवमन्यत्रापि सङ्गतिः कार्या ।

फलान्तरे मुनेः पताकापदप्रयोगस्याभिनवगुप्ताचार्यव्याख्यानेन गौणत्वमुपपाद्य स्वोक्तविरोधं निराकर्त्तुमाह—यत्त्विति । मुनिना नाटयाचार्येण भरतेनेत्यर्थः । आगर्भादिति । एतदुत्तरार्द्धं तु—कस्माद्यस्मान्निबन्धोऽस्याः परार्थः परिकीर्त्यते ।' इति ।

गर्भात् आ गर्भसन्धिसमाप्तेः पूर्वम्, अवध्यर्थकोऽत्राङ् । आ विमर्शात् विमर्शसन्धिसमाप्तेः पूर्वं वा पताका विनिवर्त्तते निष्पत्तिं प्राप्नोति । एतेन दर्पणकृतो महर्षिमतेन स्पष्टं विरोधः ।

उक्तविरोधं परिजिहीर्षुः अभिनवगुप्ताचार्यव्याख्यानमुद्धरति—तत्रेति। मुनिवचनमित्यर्थः। पताका पताकापदम् गौण्या वृत्त्या पताकानायकफलं पताकानायकस्य सुग्रीवभीमसेनादेः स्वकीयराज्यप्राप्त्यादिरूपप्रयोजनपरम्, निर्वहणपर्यन्तमपि उपसंहृतिसन्धिपर्यन्तमपि पताकायाः प्रवृत्तेः स्थिरत्वस्य दर्शनात्। तथा च न कपोलकल्पितं किन्त्वभिनववगुप्ताचार्यर्थमतमाश्रित्य पताकाया निर्वहणसन्धिपर्यन्तमपि स्थिरत्वं प्रतिपादितमिति भावः।

## रुचिरा

पताकां लक्षयति ३५९ **व्यापीत्यादिना**।

३५९ **व्यापि** निर्वहणसन्ध्यन्तमवस्थायीति भावः। **प्रासङ्गिकं** प्रसङ्गानुप्रसक्तम्। तत्र भवः ४/३/५३ इति ठञ्। **वृत्तं** चरितम्। **पाताका**। **इति**। **अभिधीयते**। तथोक्तं मुनिना—'यद्वृत्तं हि परार्थं स्यात्प्रधानस्योपकारकम्। प्रधघानवच्च कल्प्येत सा पताकेति कीत्र्यते॥' इति।

उदाहरति—**यथेत्यादनिना**। **स्पष्टम्**। महावीरचरिते इत्यत्र रामचरिते इति पाठान्तरे तु तत्प्रधाने महावीरचरितादादित्यर्थः।

व्यापीत्यनेन व्यावर्त्तनीयमर्थं द्योतयति—३६० **पताकानायकस्येत्यादिना**।

३६० **पताकानायकस्य** यस्य प्रासङ्गिकं व्यापि वृत्तं पताकेति प्रागुक्तं तस्येति भावः। **स्वकीयं** स्वमात्रोपकारि। **फलान्तरमन्यत्फलम्**। **न**। 'पताके' ति पूर्वतोऽनुप्रसक्तम्। **स्यात्**। अतः—**तस्य** फलान्तरस्येत्यर्थः। **गर्भे** तदाख्ये। **वा**ऽथवा। **विमर्शे** तदाख्ये। **सन्धौ**। **निर्वाहः** सन्निवेशः। **जायते**॥ ३६३॥

उदाहरति—**यथेत्यादिना**।

**यथा** 'महावीरचरितादा' विति शेषः। **सुग्रीवादेः**। **राज्यप्राप्त्यादि** राज्यदारलाभादि। अयम्भावः—सुग्रीवादे राज्याप्राप्त्यादि सुग्रीवादेरेवोपकारीत्यस्य निर्वहणान्तं व्यापित्वाभावान्न पताकात्वम्। यच्च तस्य तस्योत्साहादि तदेव पताकेति।

स्वमतं मुनिमताऽपर्तिकूलमिति सूचयितुमाह—**यत्त्वित्यादि**।

**यत्तु**। '**गर्भाद्गर्भसन्धेः**। 'पञ्चम्यापाङ्परिभिः।' २/३/१० इति पञ्चमी। 'आङ्मर्यादाऽभिविध्योः॥' २/१/१३ इति समासाभावश्च। **आ** तमवधीकृत्येत्यर्थः। 'आङीषदर्थेऽभिव्याप्तौ सीमार्थे धआतुयोगजे'इत्यमरः। वा **विमर्शाद्विमर्शसन्धेः**। अथवा इदं समुच्चयार्थम्। 'वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये'इति विश्वः। **पताकाः**। **विनिवर्तते** निवृत्तव्यापारा भवति। कुत इत्यत आह—**यस्मात्कस्मा**'दपि हेतो'रिति शेषः। **अस्याः** पताकायाः। **निबन्धः** सन्निवेशः समाप्तिरिति यावत्। **पदार्थः**। **परिकीर्त्यते**॥'

**इति**। **मुनिना** भरतेन। **उक्तम्**। **तत्र** तस्मिन्विषये। "**पताकेति** 'प्रतीकं कृत्वे'ति शेषः। **नायकफलं** पताकानायकफलमिति भावः। **पताका**। 'अत्रोच्यत'इति शेषः। कुत इत्याह—**निर्वहणपर्य्यन्तं** निर्वहणसन्ध्यन्तम्। **अपि** यथेष्टम्। 'अपि सम्भावनाप्रश्नसङ्कागर्हासमुच्चये। तथा युक्तपदार्थे च कामचारिक्रयासु चे'ति विश्वः। **पताकाया** वास्तविक्याः पताकाया इत्यर्थः। **प्रवृत्तिदर्शनात्**। **इति**।' **अभिनवगुप्तपादै**र्भरतमुनिकृतनाटयशास्त्रव्याख्यातृभिः। **व्याख्यातम्**। तथा च—यन्मुनिना पाताकापदं व्यवहृतम्, तल्लाक्षणिकं नतु वाचकम्, अन्यथा मूलव्याख्याग्रन्थयोर्विरोधापत्तेरिति निर्गलितोऽर्थः।

**प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता ॥ ६८ ॥**

यथा—कुलपत्यङ्के रावणजटायुसंवादः ।

**प्रकरीनायकस्य स्यान्न स्वकीयं फलान्तरम् ।**

---

## विवृतिः

प्रकरीमाह—प्रासङ्गिकमिति । प्रदेशस्थमेकदेशवृत्ति । प्रासङ्गिकपदव्यावृत्तिमाह—प्रकरीति । प्रकरीनायकस्य प्रकरीस्वामिनः । स्वकीयं फलान्तरं प्रकृतानुपयोगि । 'न प्रकरी' इत्यनुषङ्गेणान्वयः । यथा जटायोर्मोक्षादिप्राप्त्यादि ।

## विवृतिपूर्तिः

प्रकरीति । भावप्रकाशिकायां तु विशेषः—'शोभायै वैदिकादीनां यथा पुष्पाक्षतादयः । अथर्तुवर्णनादिस्तु प्रसङ्गे प्रकरी भवेत् ॥' इति । यथा शाकुन्तले षष्ठाङ्के—'ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी । अपरा च पृष्ठतस्तस्या ।' इत्यादिना 'नेपथ्ये' इत्यन्तेन ॥

## विज्ञप्रिया

रावणजटायुसंवाद इति । तस्याऽर्थप्रकृतित्वं तु रावणहृतसीतावर्णनप्राप्तिद्वारा ।

नायकस्यापि फलान्तरं पताका । प्रकरी तु न नायकस्य फलान्तरमित्यर्थः । नच रावणस्याऽनायकत्वात् फलं तत्फलकत्वात् अस्य पताकात्वप्रसाक्तिरिति । वाच्यम् अनायकत्वेन नायकसहायस्यैव विवक्षितत्वात्, नञः सदृशार्थकत्वात् ।

## कुसुमप्रतिमा

प्रासङ्गिकमिति । प्रासङ्गिकं नायकचरिते प्रसङ्गत उपस्थितम् प्रदेशस्थं एकदेशमात्रे स्थितं चरितं वृत्तान्तः प्रकरी मता । प्रासङ्गिकवृत्तान्तस्य बहुदेशवृत्तित्वे पताकात्वम् एकदेशवृत्तित्वे तु प्रकरीत्वमिति भेदः । प्रकरीति नायकचरितस्य प्रकर्षं जनयतीति प्रकरी अर्थप्रकृतिः ।

प्रकरीति । प्रकरी, नायकस्य तत्प्रकरीनायकस्य जटायुप्रभृतेः स्वकीयं फलान्तरं निजप्रयोजनविशेषरूपं न स्यात्; अपि तु तत्तदंशे नायकफलसाधिकेव स्यादिति पूर्ववदेवार्थः ।

## विमला

प्रकरीमाह, प्रासङ्गिकमिति ।—प्रासङ्गिकं—प्रसङ्गतः प्राप्तं, प्रदेशस्थम् एकदेशव्यापि, चरितं प्रकरी मता । सा तु नायकस्य स्वकीयं फलान्तरं—-फलविशेषः, न स्यात्—अन्ये तु—"शोभायै वैदिकादीनां यथा पुष्पाक्षतादयः । अर्थर्त्तुवर्णनादिस्तु प्रसङ्गे प्रकरी मता ॥" इत्याहुः । तत्रोहारणं पुनर्यथा शाकुन्तले षष्ठेऽङ्के,—"ततः प्रविशति चूताङ्कुरमालोकयन्ती चेटी तत्पृष्ठे अपरा च." इत्यारभ्य "नेपत्ये" इत्यन्तेन इति ।

## लक्ष्मी

प्रकरीरूपामर्थप्रकृतिं निरूपयति—प्रासङ्गिकमिति। प्रासङ्गिकं नायकचरिते प्रसङ्गादुपस्थितम्, प्रदेशस्थं प्रदेशविशेषे स्थितं चरितं वृत्तान्तः प्रकरोति नायकवृत्तान्तस्य प्रकर्षं जनयतीति प्रकरी मता। पताकायां प्रासङ्गिक-वृत्तस्य बहुदेशवृत्तित्वम्, अस्यान्तु प्रदेशविशेषवृत्तित्वमिति भेदः।

स्वयमुदाहरति—यथेति। रावणस्य जटायुसंवादः इति। तस्यार्थप्रकृतित्वं तु रावणाहतसीता-वर्णनमोक्षप्राप्तिद्वारा।

प्रकरीति। प्रकरी तत्परी नायकस्य जटायुप्रभृतेः स्वकीयं फलान्तरं स्वप्रयोजनविशेषरूपं न स्यात् किन्तु तत्तदंशे नायकफलोत्पादिकैव स्यादिति प्राग्देवार्थः।

उदाहरति—यथेति। जटायोर्मोक्षप्राप्तिरिति। अयमाशयः—जटायोर्मोक्षप्राप्तिर्वर्ण्यमाना न प्रकृतोपयो-गिनी किन्तु तस्यैव पुण्यजनिकेति तदिदमुदन्तं न पताका। यः खलु रावणेन संवादः स प्रकृतोपयोगीत्यस्य प्रकारणिकत्वात्प्रकरीत्वम्। एतदतिरिक्तस्य तु तदेकदेशवर्त्तित्वमात्रम्।

## रुचिरा

प्रकरीं लक्षयति—३६१ **प्रासङ्गिक**मित्यादिना।

३६१ **प्रासङ्गिकम्। प्रदेशस्य**मेकदेशवर्त्तीत्यर्थः। **चरितम्। प्रकरी** तत्पदवाच्यम्। **मता**। अत्र भावप्र-काशिकाकाराः 'शोभायै वैदिकादीनां यथा पुष्पाक्षतादयः। अथर्तुवर्णनादिस्तु प्रसङ्गे प्रकरी भवेत्। यथाऽभिज्ञाने शाकुन्तले षष्ठेऽङ्के—'ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी—अपरा च पृष्ठतस्तस्याः।' इत्यादिना 'नेपथ्ये' इत्यन्तेन।' इत्याहुः।

उदाहरति—**यथे**त्यादिना। **यथा। कुलपत्यङ्के** तदाख्ये रूपकविशेषे। **रावणजटायुसंवादः**।

प्रासङ्गिकमिति पेदन व्यवच्छेद्यं लक्षयति—३६२ **प्रकरीनायकस्ये**त्यादिना।

३६२ **प्रकरीनायकस्य** यद्वृत्तं प्रकरीत्यभिधीयते तस्येति भावः। **स्वकीयं** स्वमात्रोपकारीत्यर्थः। **फला-न्तर**मन्यत्फलम्। **न** 'प्रकरीति' पूर्वतोऽन्वेति। **स्यात्**।

उदाहरति—**यथे**त्यादिना।

**यथा। जटायोः। मोक्षप्राप्तिः**। अयम्भावः—जटायोर्मोक्षप्राप्तिर्वर्ण्यमाना न प्रकृतोपयोगिनी किन्तु तस्यैव श्रेयस्करीति तदिदं वृत्तं न पताका। यः पुना रावणेन संवादः स प्रकृतोपयोगीत्यस्य प्रासङ्गिकत्वात्प्रकरीत्वम्। अन्यस्य तु तदेकदेशवर्तित्वमात्रम्। इति।

यथा— जटायोः मोक्षप्राप्तिः ।

**अपेक्षितं तु यत्साधमारम्बो यन्निबन्धनः ॥ ६९ ॥**

**समापनं तु यत्सिद्ध्यै तत्कार्यमिति संमतम् ।**

यथा—रामचरिते रावणवधः ।

**अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः ॥ ७० ॥**

**आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ।**

---

## विवृतिः

कार्यमाह—अपेक्षितमिति । आकाङ्क्षितम् । न तु प्रासङ्गिकमित्यर्थः ।

आरम्भ उपाये प्रथमप्रवृत्तिः । यन्निबन्धनः यदृच्छाप्रयोज्यः । समापनं सामग्रीसमवधानम् ।

## विज्ञप्रिया

कार्य्यरूपार्थप्रकृतिमाह—अपेक्षितमिति । आरम्भो नाटकारम्भः । समापनमपि नाटकस्यैव । रावणवध इति । तत्सिद्धौ सत्यां हि नाटकसमापनम् ।

अस्य कार्य्यस्य पञ्चावस्था आह—अवस्था इति । निष्पादकनिष्पाद्यरूपा अवस्था इत्यर्थः । तत्रारम्भयत्न-प्राप्त्याशानियताप्तिरूपाः चतस्रोऽवस्था निष्पादिकाः । फलागमरूपा तु निष्पाद्या इत्यवधेयम् ।

## कुसुमप्रतिमा

अपेक्षितमिति । यत् अपेक्षितं कर्त्तुमाकाङ्क्षितम्, यत् साध्यं स्वशक्त्या शक्यम्, यन्निबन्धनी यदुद्देश्यकः आरम्भः प्रथमप्रवृत्तिः, यस्य च सिद्ध्यै समापनम् उपायसंग्रहः, तत्कार्य्यम् इति सम्मतम् ।

अवस्था इति । आरम्भः यत्नः, प्राप्त्याशा, नियताप्तिः, फलागमः—एताः पञ्च फलार्थिभिरुद्देश्यसिद्धिसुभिः प्रारब्धस्य कार्य्यस्य अवस्थाः सम्भवन्ति ।

## विमला

कार्य्यमाह, अपेक्षितमिति ।—यत् साध्यं—साधनीयम्, अपेक्षितम्—आकाङ्क्षितं न तु प्रासङ्गिकं, यन्निबन्धनं,—यदर्थः, आरम्भः, उपाये प्रथमप्रवृत्तिः, उद्योगः इति यावत्, तथा यस्य सिद्धैय—सिद्धयार्थं, समापनं—सामग्रीसमवधानं, तत्तु कार्य्यमिति सम्मतम् ।

कार्य्यस्य अवस्थाभेदानाह, अवस्था इति ।—फलार्थिभिः,—फललाभभिलाषिभिः, प्रारब्धस्य—कृतार-म्भस्य, कार्य्यस्य, पञ्च अवस्थाः,—कार्य्यस्य, पञ्च अवस्थाः,—अङ्गानि, परिकीर्त्यन्ते इति शेषः, ताश्च आरम्भः, यत्नः प्राप्त्याशा, नियताप्तिः तथा फलागम इति बोध्या इति भावः ।

## लक्ष्मी

कार्यरूपार्थप्रकृति निरूपयति—अपेक्षितन्त्विति। अपेक्षितम् आकाङ्क्षितं न तु प्रासङ्गिकमित्यर्थः। यत् साध्यं स्वशक्त्या शक्यम्, यन्निबन्धनो यदुद्देश्यक आरम्भ उपाये प्रथम प्रवृत्तिः यस्य च सिद्धयै समापनं सामग्रीसमवधानं तत्कार्यम् इति सम्मतम्।

उदाहरति—यथेति। रामचरिते तत्प्रधाने बालरामायणादावित्यर्थः। रावणवध इति। तत्सिद्धौ सत्यां नाटकसमापनम्।

अस्य कार्यस्य पञ्चावस्था भवन्तीति दर्शयति—अवस्था इति। आरम्भः, यत्नः, प्राप्त्याशा, नियताप्तिः, फलागमः, एताः पञ्च फलार्थिभिः उद्देश्यसिद्धिलब्धुमिच्छुभिः प्रारब्धस्य कार्यस्य अवस्था निष्पाद्यनिष्पादकरूपाः, ज्ञेया तत्रारम्भयत्नप्राप्त्याशानियताप्तिरूपाश्चतिस्रोऽवस्था निष्पादिकाः, फलागमरूपा तु निष्पाद्या इत्यवगन्तव्या।

## रुचिरा

कार्यमाह—३६३ **अपेक्षित**मित्यादिना।

३६३ **अपेक्षितं** न तु प्रासङ्गिकम्। **तु**। **यत्**। **साध्यं** साधनीयम्। **यन्निबन्धनो** यन्निबन्धनमुद्देशो यस्य तादृशः। यदृच्छाप्रयोज्य इत्यर्थः। **आरम्भः** प्रथमा प्रवृत्तिः। **यत्सिद्धयै** यस्य सिद्धये। **च**। **समापनं** समस्तानां सामग्रीणां समासादनम्। **तत्**। **कार्यम्**। **इति**। **सम्मतम्**॥ ३६५॥

उदाहरति—**यथे**त्यादिना। स्पष्टम्। रामचरिते इति पाठे तु तत्प्रधाने बालरामायणादावित्यर्थः।

अस्याङ्गान्याह—३६४ **अवस्थे**त्यादिना।

३६४ **फलार्थिनः**। **प्रारब्धस्य** कृतारम्भस्य। **कार्यस्य**। 'निरुक्तलक्षणस्ये'ति शेषः। **आरम्भयत्नपर्याशानियताप्तिफलागमास्तदाख्याः**। **पञ्च**। **अवस्थाः**। 'अङ्गानि इति ज्ञेय' इति शेषः॥ ३६६॥

अथारम्भादौ नाह—**तत्रे**त्यादिना।

तत्र—

**भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये ॥ ७१ ॥**

यथा—रत्नावल्यां रत्नावल्यन्तःपुरनिवेशार्थं यौगंधरायणस्यौत्सुक्यम् । एवं नायकनायिकादीनामप्यौत्सुक्यमाकरेषु बोद्धव्यम् ।

---

## विवृतिः

अवस्था अङ्गानि । औत्सुक्यमुत्कटरागः । 'नायकश्च नायिकादयश्च' इति विग्रहः । अतो नैकशेषः ॥

## विज्ञप्रिया

तत्रारम्भलक्षणमाह—भवेदिति । आकर इति तत्तन्नाटके इत्यर्थः ।

## कुसुमप्रतिमा

भवेदिति । मुख्यफलस्य नायकप्रधानोद्देश्यस्य सिद्धये यत् औत्सुक्यं नायकादेर्थस्य कस्यापि पात्रस्य प्रबलेच्छा स आरम्भी भवेत् ।

## विमला

आरम्भमाह, भवेदिति ।—मुख्यस्य—प्रधानस्य, फलस्य सिद्ध्ये यत् औत्सुक्यं, स आरम्भः भवेत् ।

उदाहरति, यथेति ।—अत्र रत्नावलीलाभ एव मुख्यं फलं बोध्यम्। नायकेति—[नायकश्च नायिकाऽऽदयश्च इति विग्रहः, अतो नैकशेषः] ।

## लक्ष्मी

तत्रारम्भलक्षणं दर्शयति—भवेदिति । मुख्यफलस्य नायकमुख्योद्देश्यस्य सिद्धये निष्पत्तये यत् औत्सुक्यम् उत्कटरागः स आरम्भो भवेत् ।

उदाहरति—यथेति । नायकनायिकान्दीनामिति । 'नायकश्च नायिकादयश्च' इति विग्रहः, अतो नैकशेषः, आकरेषु तत्तन्नाटकेष्वित्यर्थः ।

## रुचिरा

**तत्र** तास्ववस्थासु मध्ये । ३६५ **भवेदित्यादिना** ।

३६५ **यन्मुख्यफलसिद्धये** यस्य मुख्यं फलं तस्य सिद्धिः निष्पत्तिस्तस्यै । **औत्सुक्यम्**। **आरम्भः** तत्पदवाच्यं कार्यमित्यर्थः । **भवेत्** ॥ ३६७ ॥

उदाहरति—**यथेत्यादिना** । स्पष्टम् । आकरेषु महानिबन्धेषु इत्यर्थः ।

**प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः ।**

यथा रत्नावल्याम्—'तह वि ण अत्थि अण्णो दंसणउवाओत्ति जधा तधा आलिहिअ जधासमीहिदं करइस्सम्' इत्यादिना प्रतिपादितो रत्नावल्याश्चित्रलेखनादिर्वत्सराजसंगमोपायः । यथा च—रामचरिते समुद्रबन्धनादिः ।

---

## विवृतिः

तह वीति । 'तथापि नास्त्यन्यो दर्शनोपाय इति यथा तथा आलिख्य यथासमीहितं करिष्यामि ।' इति संस्कृतम् ॥

## विवृतिपूर्तिः

प्रयत्न इति । यदुक्तं नाट्यशास्त्रे—'अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति । परं चौत्सुक्यगमनं प्रयत्नः परिकीर्तितः ॥' इति ॥

## विज्ञप्रिया

तह वि इति । तथापि नास्त्यन्यो दर्शनोपाय इति यथा तथा आलिख्य यथासमीहितं करिष्यामीति संस्कृतम् । अङ्गुलिकम्पनान्तरं तथाप्युक्तिः । सङ्गमोपायः तदङ्गभूतो व्यापारः । व्यापारस्यैव यत्नत्वेनोक्तत्वात् ।

## लोचन

तथापि इति । तथापि नास्ति अन्यो दर्शनोपाय इति । यथा तथालिख्य यथासमीहितं करिष्यामि । यथा चन्द्रकलायां लक्ष्मीवरप्रदानरूपफलप्राप्तिसहितो राज्ञस्चन्द्रकलालाभः ।

## कुसुमप्रतिमा

प्रयत्न इति । फलप्राप्तौ नायकस्य नायिकाया वा मुख्यफललाभविषये अतित्वरान्विती व्यापारः पात्रमात्रस्य आग्रहः प्रयत्नो भवेत् । तुशब्द आरम्भभेदद्योतनार्थः ।

यथेति । "तथापि नास्ति अन्यो दर्शनोपाय इति यथा आलिख्य यथासमीहितं करिष्यामि ।" इति संस्कृतानुवाद । आलिख्य वत्सरजाप्रतिकृतिं चित्रयित्वा । यथासमीहितं प्राक्चन्तितानुरूपम् । चित्रलखनादिर्वत्सराजप्रतिकृतचित्रणादिः ।

## विमला

प्रयत्नमाह, प्रयत्न इति ।—फलस्य—प्रधानफलस्य, अवाप्तौ,—प्राप्तौ, तद्विषये इति यावत्, [विषये सप्तमीयम्] अतित्वरान्वितः,—अत्यन्तसाहसिकतया पुरस्कृतः व्यापारः,—चेष्टा, प्रयत्नः । तथोक्तम्, "अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति । परं चौत्सुक्यगमनं प्रयत्नः परिकीर्तितः ॥" इति भरतशास्त्रे ।

उदाहरति, यथेति।—तह वि इति।—["तथाऽपि नास्त्यन्ती दर्शनोपाय इति यथा तथा आलिख्य यतासमीहितं करिष्यामि" इति संस्कृतम्]। सागरिका वासवदत्ताभयेन राजानं पुनर्द्रष्टुमपि अपारयन्ती राजानमालिख्य "तदन्यो न कश्चित्तद्दर्शनोपाय इति चित्रे तथा राजानं पश्यन्ती कृतार्था भविष्यामि" इति चिन्तितवतीति भावः। वत्सेति।—वत्सराजस्य सङ्गमोपायः। अयं भावः,—साक्षात् सङ्गमे महाराज्ञाः प्रतिबन्धात् झटिति तद्धेतुः चित्रलिखनमिति।

## लक्ष्मी

यत्नलक्षणं दर्शयति—प्रयत्न इति। फलावाप्तौ नायकस्य नायिकाया वा प्रधानफलप्राप्तिविषये अतित्वरान्वितो व्यापारः पात्रमात्रस्य आग्रहः प्रयत्नो भवेत्। तु पदम् आरम्भभेदसूचनाय।

उदाहरति—यथेति। तहवीति। 'तथापि नास्त्यन्यो दर्शनोपाय इति यथा तथा आलिख्य यथा समीहितं करिष्यामि' इति संस्कृतम्। अङ्गुलिकम्पनानन्तरं तथाऽप्युक्तिः। आलिख्य उदयनप्रतिकृतिं चित्रयित्वा। यथा समीहितं पूर्वविचारितानुरूपम्। चित्रलेखनादिः उदयनप्रतिकृतिचित्रणादिः। सङ्गमोपायः तदङ्गभूतो व्यापारः, व्यापारस्यैव यत्नत्वेनोक्तत्वात्।

## रुचिरा

यत्नं लक्षयति—३६६ **प्रयत्ने**त्यादिना।

३६६ **फलावाप्तौ** फलस्याप्तिविषये। **तु**। **अतित्वरान्वितः**। **व्यापारः**। **प्रयत्नः**। तथोक्तम्—'अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति। परं चौत्सुक्यगमनं प्रयत्नः परिकीर्तितः॥' इति।

उदाहरति—**यथे**त्यादिना।

**यथा—रत्नावल्याम्**। 'द्वितीयेऽङ्के'इति शेषः। 'तहबि तथापि। **तस्स** तस्य। **जणस्स** जनस्य वत्सराजस्य। **अण्णो** अन्यश्चित्रफलकादिभिन्नः। **दंसणोवाओ** दर्शनोपायः। **णत्ति** नास्ति। **ता** तत्। **जहा** यथा **तहा** तथा। **आलिहि** आलिख्य। **एणं** एनम्। **पेक्खिस्से** प्रेक्षिष्ये। 'इदं बोध्यम्। सागरिका (फलकमवलोक्य) ता जावदिहण कोवि आअच्छदि, दाव आलिक्खसमपिदं तं अभिमदं जणं पैक्खिअ जहा समीहिदं तहा करिस्सं।' (सावष्टम्भमेकमना भूत्वा नाटयेन फलकं गृहीत्वा निःश्वस्य) "जइ वि मे अदिसद्धसेण वेवदि अअं अत्तित्तं अग्गहत्तो" इति पूर्वतनोऽयं पाठः। पुस्तकान्तरे तु अत्र सर्वं सम्मेल्य "तह वि णत्ति दंसणोवाओ त्ति जधा तधा आलिहिअ जधा समीहिदं करइस्सं" इति पाठो विहितो महानुभावैः। इति। **इत्यादिना**। **प्रतिपादितः**। **रत्नावल्याः** सागरिकायाः। **चित्रलेखनादिः** प्रियतमस्य वत्सराजस्येति शेषः। **वत्सराजसङ्गमोपायः**।

उदाहरणान्तरं दर्शयति—**यथेत्यादिना** स्पष्टम्।

**उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसंभवः ॥ ७२ ॥**

यथा—रत्नावल्यां तृतीयेऽङ्के वेषपरिवर्तनाभिसरणादेः संगमोपायाद्वासवदत्तालक्षणापायशङ्क्या चानिर्धारितैकान्तसगमरूपफलप्राप्ति प्रत्याशा । एवमन्यत्र ।

---

## विवृतिः

उपायश्च अपायस्य प्रतिबन्धकस्य शङ्का च ताभ्याम् । प्राप्तेः फलप्राप्तेः फलप्राप्तेः संभवः संभावना । संशय इति यावत् ।

## विज्ञप्रिया

प्राप्त्याशामाह—उपायेति । उपायापायशङ्काभ्यां प्राप्तिसम्भवः । उद्देश्यप्राप्तिसम्भावना प्राप्त्याशा ।

वेशपरिवर्त्तनं सागरिकाया वासवदत्तावेशकरणम् । तेन राज्ञः समीपे तस्या अभिसारः । सङ्गमोपायस्य राज्ञः सागरिकासङ्गमोपायस्य । वासवदत्ताया आगमनरूपापायस्य शङ्कयेत्यर्थः ।

## कुसुमप्रतिमा

उपायेति । उपायः फलसिद्धेः कारणसद्भावश्च अपायशङ्का । तत्फलसिद्धेर्विघ्नशङ्का च ताभ्याम्, प्राप्तिसम्भवः पलसिद्धेः पाक्षिकी सम्भावना प्राप्त्याशा भवेत् ।

यथेति । वासवदत्तालक्षणापायशङ्कया वासवदत्तास्वरूपप्रतिबन्धकशङ्कया । अनिर्द्धारिता अनिश्चिता संशयिता या एकान्ते रहसि वत्सराजसङ्गमरूपफलस्य प्राप्तिस्तस्याः प्रत्याशा । अन्यत्राप्येवमूह्यमित्यर्थः । यथा मम वङ्गीयप्रतापनाटके स्ववलोपवयात् दिल्लीशप्रतिबन्धकत्वाश्च संशयिता । राजत्वप्राप्तिप्रत्याशा ।

## विमला

प्राप्त्याशामाह, उपायेति ।—उपायापायशङ्काभ्याम्—उपायः,—उद्यम साधनम्, अपायशङ्का—उद्यमसिद्धौ विघ्नभयं, ताभ्यां प्राप्तौ, फलस्येति शेषः, सम्भवः,—सम्भावना, प्राप्त्याशा ।

## लक्ष्मी

प्राप्त्याशालक्षणं दर्शयति—उपायेति । उपायः फलसिद्धेः हेतुसद्भावश्च अपायस्य प्रतिबन्धकस्य शङ्का च ताभ्यां तथोक्ताभ्याम्, प्राप्तिसम्भवः उद्देश्यप्राप्तिसम्भावना प्राप्तेः प्रधानफललाभस्य आशा प्राप्त्याशा भवेत् ।

उदाहरति—यथेति । वेशपरिवर्त्तनं सागरिकाया वासवदत्तावेशकरणम् । तेन राज्ञः समीपे तस्या अभिसरणम् अभिसारः । सङ्गमोपायात् राज्ञः सागरिकासङ्गमोपायात् । वासवदत्तालक्षणापायशङ्कया वासवदत्तास्वरूपप्रतिबन्धकाशङ्कया । अनिर्द्धारिता अनिश्चिता संशयिता या एकान्ते निभृतौ उदयनसङ्गमरूपफलस्य प्राप्तिस्तस्या आशा । एवमन्यत्रेति । अन्यत्र वेणीसंहारादाविति भावः । यथा वेणीसंहारे तृतीयऽङ्के भीमः—

'कृष्टा येन शिरेरुहेषु पशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरान्तरगतः संरक्ष्यतां कौरवाः ॥'

इत्यत्र दुःशासनवधादशेषकौरववधसम्भावनेन युधिष्ठिरस्य राज्यप्राप्त्याशा ।

## रुचिरा

प्राप्त्याशां लक्षयति—३६७ **उपायेत्यादिना** ।

३६७ **उपायापायशङ्काभ्याम्**उपाय उद्यमश्चापायशङ्का विघ्नशङ्का च ताभ्याम् । सहार्य्येयं तृतीया । **प्राप्ति सम्भवः । प्राप्त्याशा** ॥ ३६८ ॥

उदाहरति—**यथेत्यादिना** ।

**यथा । रत्नावल्याम् । तृतीयेऽङ्के । वेशपरिवर्त्तनाभिसरणादे**स्तद्रूपादितियर्थः । **सङ्गमोपाया** 'द्वत्सराजस्ये'ति शेषः । **वासवदत्ताक्षणापायशङ्क्या** वासवदत्ता लक्षणं स्वरूपं यस्य तादृशो योऽपायो विघ्नास्तस्य शङ्का तया च । **अनिर्धारितैकान्तसङ्गमरूपफलप्राप्ति**रनिश्चितोऽसावेकान्तसङ्गमः सयस्य तद्रूपं फलं यस्य तस्य प्राप्तिः । **प्राप्त्याशा** । **एवम्**—अन्यत्राभिज्ञानशाकुन्तलादाविति भावः ।

**अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता ।**

अपायाभावान्निर्धारितैकान्तफलप्राप्तिः ।

यथा रत्नावल्याम्—'राजा—देवीप्रसादनं त्यक्त्वा नान्यमत्रोपायं पश्यामि ।' इति देवीलक्षणापायस्य प्रसादनेन निवारणान्नियतफलप्राप्तिः सूचिता ।

---

## विज्ञप्रिया

नियतफलप्राप्तिः सूचितेति । अत्र देव्याः कोपशान्तिरूपफलस्य नियताप्तिः । नचास्य कथं कार्यावस्थात्वं सागरिकासङ्गमनरूपकार्यस्य तेनाऽनिष्पादनात् इति वाच्यम् । तत्कोपस्य तत्प्रतिबन्धकत्वेन तदबावस्य तत्कारणत्वात् ।

## कुसुमप्रतिमा

अपायेति । अपायस्य विघ्नस्य अभावतां विलुप्तत्वात् निश्चिता प्राप्तिर्निर्द्धारिता फलप्राप्तिस्तु नियताप्तिर्भवेत् ।

यथेति । इति अनया उक्त्या । देवोलक्षणापायस्य वासवदत्तारूपविघ्नस्य ।

## विमला

नियताप्तिमाह, अपायेति ।—अपायस्य—विघ्नस्य, अभावतः,—अपगमात्, निश्चिता, प्राप्तिः,—फललाभः, नियताप्तिः ।

## लक्ष्मी

नियताप्तिलक्षणं दर्शयति—अपायाभाव इति । अपायस्य अन्तरायस्य अभावतो विलुप्तत्वात् निश्चिता प्राप्तिः निर्णीता फलप्राप्तिस्तु नियताप्तिर्भवेदिति शेषः । उदाहरति—यथेति । इति अनया उक्तञ्चा । देवीलक्षणापायस्य वासवदत्तारूपान्तरायस्य नियतफलप्राप्तिरिति । अत्र देव्याः कोपशान्तिरूपफलस्य नियताप्तिः ।

न चास्य कथं कार्यावस्थात्वं सागरिकासङ्गमनरूपकार्यस्य तेनाऽनिष्पादनादिति वाच्यम्, तत्कोपस्य तत्प्रतिबन्धकत्वेन तदभावस्य तत्कारणत्वात् ।

## रुचिरा

नियताप्तिं लक्षयति—३६८ **अपायाभावत** इत्यादिना ।

३६८ **अपायाभावतो** विघ्नराहित्येनेत्यर्थः । **च** । **निश्चिता** । नतु सम्भावितेत्यर्थः । **प्राप्तिः** । **नियताप्तिः** ।

तदेव विवृणोति—**अपायाभावादित्यादिना** स्पष्टम् ।

उदाहरति—**यथेत्यादिना**।

**यथा**। **रत्नावल्यां** 'तृतीयेऽङ्के'इति शेषः। **राजा** वत्सराजः। 'आहे'ति शेषः। **देवीप्रसादनं** देव्याः महाराज्ञीवासवदत्तायाः प्रसादनं कोपापनयपुरः सरमनुकूलीकरणं तत्। **मुक्त्वा** परित्यज्य। **अत्रास्मिन्** सागरिका-सङ्गमे इति यावत्। **अन्यम्**। **उपायम्**। **न**। **पश्यामि**। इति स्पष्टमन्यत्।

**सावस्था फलयोगः स्याद्यः समग्रफलोदयः ॥ ७३ ॥**

यथा—रत्नावल्यां रत्नावलीलाभश्चक्रवर्तित्वलक्षणफलान्तरलाभसहितः । एवमन्यत्र ।

---

## विवृतिः

सावस्थेति । समग्रस्यानेकफलस्य य उदयः सा फलयोगः फलागमो नायावस्था ।

अन्यत्र **वीरचरितादौ** सीतालाभादिसहितो रावणवधादिः ॥

## विज्ञप्रिया

फलागममाह—**सावस्थेति** । फलयोगः फलागमः समग्रफलोदयः समस्तोद्देश्यफलसिद्धिः । सामग्र्यञ्च मुख्योद्देश्यफलस्य उद्देश्यफलान्तरसाहित्यम् । तद्वक्ष्यति फलान्तरसहित इति । इयमवस्था पूर्वोक्तचतुरवस्थाभिर्निष्पाद्या ।

## कुसुमप्रतिमा

सेति । यः समग्राणां सर्वेषां फलानाम् उदय उत्पत्तिः सा फलयोगः फलागमो नाम अवस्था संप्रात् ।

यथेति । चक्रवर्त्तित्वलक्षणं साम्राज्यरूपं यत् फलान्तरं तस्य लाभेन सहितः । अन्वत्राप्येव मूह्यमित्यर्थः । यथा—शाकुन्तले सर्वदगमनाख्यपुत्रलाभसहितः शकुन्तलालाभः ।

## विमला

फलागममाह, सेति ।—यः समग्रस्य—अनेकस्य, फलस्य—प्रयोजनलाभस्य, उदयः,—सम्भावना, सा अवस्था फलयोगः,—फलागमः, स्यात् । पण्डितराजेन रसगङ्गाधरे तूक्तं,—"फलागमः समं यत्र नायकप्रतिनायकौ । सम्पत्तिञ्च विपत्तिश्च प्रपद्येतां कुतश्चन ॥" इति ।

एवमिति ।—अन्यत्र—वीरचरितादौ, सीता लाभादिसहितो रावणवधादिः इति ज्ञेयम् ।

## लक्ष्मी

फलागमलक्षणं दर्शयति—सावस्थेति । यः समग्रफलोदयः समस्तोद्देश्यफलसिद्धिः । सामग्रयञ्च मुख्योद्देश्यफलान्तरसाहित्यम् तदभिधास्यति—फलान्तरसहित इति । सा फलयोगः फलागमो नाम अवस्था स्यात् । इयमवस्था पूर्वोक्तचतुरवस्थाभिर्निष्पाद्या ।

उदाहरति—यथेति । चक्रवर्त्तिलक्षणं साम्राज्यरूपं यत् फलान्तरं तस्य लाभेन सहितो युक्तः । एवमन्यत्रेति । अन्यात्राऽप्येवमूहनीयमित्यर्थः । यथा वेणीसंहारे षष्ठेऽङ्के—

**भूमौ क्षिप्त्वा शरीरं निहितमिदमसृक् चन्दनाभं मया(मा) ङ्गे**

**लक्ष्मीराद्यें निषण्णा चतुरुदधिपयः सीमया सार्धमुर्व्या ।**

**भृत्या मित्राणि योधाः कुरुबलमनुजा दग्धमेतद्रणाग्नौ**

**नामैकं यद्ब्रवीषि क्षितिप ! तदधुना धार्त्तराष्ट्रस्य शेषम् ॥**

इत्यनेन दुर्य्योधनं हत्वा भीमसेनेन युधिष्ठिरराज्यसमर्पणफलयोगो दर्शितः। यथा वा शाकुन्तले—सर्वदमनाख्यपुत्रप्राप्तिसहितः शकुन्तलाप्राप्तिः।

## रुचिरा

फलागमं लक्षयति—३६९ **सेत्यादिना**।

३७० **यः। समग्रफलोदयः** समस्तफलानां सिद्धतया भानम्। **सा**। अत्र-'सर्वादीनां पर्यायेण उद्देश्यविधेय 'लिङ्गभाक्त्वम्'। इति स्त्रीलिङ्गत्वेन निर्देश इति बोध्यम्। **फलयोगः** फलस्य योग आगमः। **अवस्था** कार्याङ्गम्। **स्यात्**। 'फलागमं इति प्रोक्तो यः समग्रफलोदयः। इति सुपाठः ॥ ३६८ ॥

उदाहरति—**यथेत्यादिना**।

**यथा। रत्नावल्यां**। 'चतुर्थेऽऽङ्के' इति शेषः। अन्यस्पष्टम्। उदाहरणविषये आह—एवमन्यत्र महावीरचरितादौ सीतादिलाभपूर्वकं रावणवधादिरित्यूह्यम्।

---

**यथासंख्यमवस्थाभिराभिर्योगात्तु पञ्चभिः ।**

**पञ्चधैवेतिवृत्तस्य भागाः स्युः, पञ्च सन्धयः ॥ ७४ ॥**

तल्लक्षणमाह—

**अन्तरैकार्थसंबन्धः संधिरेकान्वये सति ।**

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनसंबन्धः संधिः ।

---

## विवृतिपूर्तिः

अन्तरेति । मन्दारमरन्देऽप्युक्तम्—'मुख्यप्रयोजनवशात्तथाङ्गानां समन्वये । अवान्तरार्थसंबन्धः संधिः संधानरूपतः ॥' इति ॥

## विज्ञप्रिया

यथासंख्यमिति । आभिः पञ्चावस्थाभिर्योगादिति वृत्तस्य पञ्चविधैव भागाः । पञ्चसन्धयो भवन्तीत्यर्थः ।

तल्लक्षणं सन्धिसामान्यलक्षणम् । कथाशानामित्यत्र एकान्वये सतीत्यस्य व्याख्या । एकेनेति । एकैनेन प्रयोजकेनेत्यर्थः अवान्तरेत्यादेर्व्याख्या अवान्तरेति ।

## लोचन

आभिरवस्थाभिरारम्भादिभिः ।

उपसंहृतिः निर्वहणापरपर्याया

## कुसुमप्रतिमा

यथेतिं । आभिः पूर्वोक्ताभिः पञ्चभिरवस्थाभिर्यथासंखयं योगात् इतिवृत्तसा रूपकीयवृत्तान्तस पञ्चधैव एव भागा अंशाः पञ्च सन्धयः स्यः ।

अन्तरेकेति । एकस्य मुख्यप्रयोजनस्य अन्वये घटकत्वसम्बन्धे सति, अन्तरैकार्यसम्बन्ध अवान्तरैकप्रयोजनसत्तासम्बन्धः सन्धिः । यथा—मालतीमाधवे प्रथमाङ्काद्द्वितीयाङ्कसमाप्ति यावदेकी मुखनामा सन्धिः । तत्र हि मालती माधवयोर्विवाहरूपमुख्यप्रयोजनं प्रति तयोः परम्परानुराग एष घटक इति मुख्यप्रयोजनघत्क च सम्बन्धसद्भावः, तदुभयानुरागरूपैकावान्तरप्रयोजनसत्तासम्बन्धसद्भावश्चेत्यनुसन्धेयम् । अत्र अन्तरैकार्थसम्बन्धः सन्धिरितिमात्रोक्तौ मूलवृत्तान्तसूचनरूपावान्तरैकप्रयोजनसत्तासम्बन्धात् सर्वत्र प्रस्तावनाया मतिव्याप्तिः स्यादत उक्तम्—"एकान्वये सति" इति ।

एकेनेति । एकेन प्रयोजनेन मुख्यफलवृत्तान्तेन, अन्वितानां घटकत्वसम्बन्धेन सम्बद्धानाम्, कथांशानां वृत्तान्तभागनाम्, अवन्तरै कप्रयोजनसम्बन्धः रूपकीययत्किञ्चिदेकप्रयोजनसत्तासम्बन्धः ।

## विमला

सन्धिमाह, यथेति ।—आभिः,—अनन्तरोक्ताभिः, पञ्चभिः अवस्थाभिः,—आरम्भप्रभृतिभिरङ्गैरित्यर्थः, यथासंङ्ख्य—निर्दिष्टक्रममनुल्लङ्घ्य, योगात्—समन्वयात्, इतिवृत्तस्य—सन्दर्भवस्तुनः, पञ्चधा एव—पञ्चप्रकारा एव, भागाः, पञ्च सन्धयः स्युः ।

सन्धिलक्षणमाह, अन्तरैकार्थसम्बन्ध इति ।—एक एव अन्वयः,—प्रयोजनं, तस्मिन् सति, अन्तरा—मध्ये, एकार्थसम्बन्धः,—एकेन अपरेणेत्यर्थः, अर्थेन सम्बन्धः,—संयोगः, सन्धिः । मन्दारमकरन्देऽप्युक्तं,—मुख्यप्रयोजनवशात् तथाऽङ्गानां समन्वये । अवान्तरार्थसम्बन्धः सन्धिः सन्धानरूपतः ॥" इति ।

## लक्ष्मी

सन्धिं लक्षयितुमवतारयति—यथासंख्यमिति । आभिरनन्तरपूर्वोक्ताभिः पञ्चभिरवस्थाभिः आरम्भादिभिः योगात् इतिवृत्तस्य रूपकीयवृत्तान्तस्य पञ्चधैव पञ्चप्रकारा एव भागा अंशाः पञ्चसन्धयः स्युः ।

को नाम सन्धिरिति जिज्ञासामपनुदति—तल्लक्षणमिति । तल्लक्षणं सन्धिसामान्यमित्यर्थः । अन्तरैकार्थेति । एकस्य प्रधानफलस्य अन्वये घटकत्वसम्बन्धे सति अन्तरैकार्थ सम्बन्धः अन्तरैकफलसत्तासम्बन्धः सन्धिः । सन्धीयत इति सन्धिः । यथा—मालतीमाधवे प्रथमाङ्काद् द्वितीयाङ्कपर्यन्तमेको मुखनामा सन्धिः । तथा हि तत्र मालतीमाधवयोः परिणयरूपप्रधानफलं प्रति तयोर्मिथोऽनुराग एव घटक इति प्रधानफलघटकत्वसम्बन्धस्य वर्त्तमानत्वम्, तदुभयानुरागरूपैकावान्तरफलसत्तासम्बन्धस्य वर्त्तमानत्वं चेति बोध्यम् । अत्रैकान्वये सतीत्यनुपादानेन यदि अन्तरैकार्थसम्बन्धः सन्धिरित्येतावन्मात्रमेव लक्षणं स्यात् तदा मूलवृत्तान्तसूचनरूपावान्तरैकफलसत्तासम्बन्धात् सर्वत्र प्रस्तावनायामति व्याप्तिः स्यात्तन्निरासाय तत्प्रतिपादितम् ।

## रुचिरा

अथ सन्धिं लक्षयितुमवतरणिकामुपस्थापयति—३७० यथासङ्ख्यमित्यादिना ।

३७० **आभिरु**क्तस्वरूपाभिः । **पञ्चभिः** । **अवस्थाभि**रङ्गैः समम् । **योगात्** समन्वयात् । **यथासङ्ख्यं** यथोद्देशम् । इतिवृत्तस्य । **पञ्चधा** । **एव** । **भागाः** । **स्युः** । त एव इति शेषः । **पञ्च** । **सन्धयः** । 'स्यु'रिति देहलीदीपकन्यायेनानुषज्यते ॥ ३७० ॥

ननु को.नाम सन्धिरित्याशङ्कामपनेतुं प्रतिजानीते—**तल्लक्षण**मित्यादिना ।

**तल्लक्षणं** तस्य सन्धेः लक्षणं तत् । **आह**—३७१ **अन्तरैकार्थ**सम्बन्धोऽन्तर एकोऽसाधारणोऽसत्वर्थः प्रयोजनं तस्य सम्बन्धः । **सन्धिः** । तथोक्तम्—'मुख्यप्रयोजनवशात्तथाङ्गानां समन्वये । अवान्तरार्थसम्बन्धः सन्धिः सन्धानरूपतः ॥' इति ।

एतदेव तात्पर्येणनिर्दिशति—**एकेने**त्यादिना । स्पष्टम् ।

एतस्य नामनिर्देशापुरःसरं भेदान् वक्तुं प्रतिजानीते—**तद्**भेदानित्यादिना ।

तद्भेदानाह—

**मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः ॥ ७५ ॥**

**इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते ।**

यथोद्देशं लक्षणमाह—

**यत्र बीजसमुत्पत्तिर्नानार्थरससंभवा ॥ ७६ ।**

**प्रारम्भेण समायुक्ता तन्मुखं परिकीर्तितम् ।**

यथा—रत्नावल्यां प्रथमेऽङ्के ।

---

## विवृतिः

संधिमाह—यथासंख्यमिति । आभिरनन्तरोक्ताभिः ॥ अस्य संधेः । क्रमादुद्देशक्रमात् ॥

अर्थो वस्तु, रसः शृङ्गारादिः, तयोः संभवो व्यञ्जनं यत्र ।

## विज्ञप्रिया

तद्भेदान् सन्धिभेदान् । क्रमादिति—उक्तपञ्चावस्थासाहित्येनैव सन्धिपञ्चकसिद्धेरुत्कत्वात् । तत्सहितमुखसन्ध्यादिक्रमेण इत्यर्थः । तथा चारम्भावस्थायुक्त इति । वृत्ताद्याभासो मुखसन्धिः । यत्नयुक्तः प्रतिमुखसन्धिः । प्राप्त्याशायुक्तो गर्भसन्धिः । नियताप्तियुक्तो विमर्शसन्धिः । फलागमयुक्तः उपसंहृतिः ।

यत्र बीजेति । बीजमितिवृत्तस्य । प्रारम्भेणेति । उत्साहरूपप्रारम्भावस्थायुक्ता इत्यर्थः । प्रथमेऽङ्के इति तत्र कन्दर्पपूजायां सागरिकाया राज्ञो दर्शनं विधिना आनीय घटितं बीजम् । तच्च सागरिकायास्तत्सङ्गमोत्साहसहितम् ।

मुखसन्धिनिवेशिन इति । बीजसमुत्पत्तिरूपमुखसन्धावुद्दिष्टस्य इत्यर्थः ।

## लोचन

नानार्थेति । नानाविधानामर्थानां वाच्यरूपाणां रसानाञ्च सम्भवो यस्यामित्यर्थः ।

## कुसुमप्रतिमा

मुखमिति । अस्यसन्धेः । पञ्चभेदाः प्रकाराः ।

यथेति । नामकीर्त्तनमुद्देशः, तमनतिक्रम्येति यथोद्देशम् "मुखं पतिसुखं गर्भः" इत्यादि नामकीत्र्तनक्रमेणेत्यर्थः ।

यत्रेति । यत्र सन्धौ, नाना बहुविधैः अर्थैर्वृत्तान्तैः रसैः शृङ्गारादिभिश्च सम्भवः सम्बन्धो यस्याः सा, तथा प्रारम्भेण प्रागुक्तलक्षणया आरम्भनामावस्थया समायुक्ता, बीजस्य प्रागुक्तलक्षणस्य समुत्पत्तिर्भवति, तत् मुखं मुखसन्धिः परिकीर्त्तितम् ।

## विमला

मुखसन्धिमाह, यत्रेति.—यत्र—अंशे, नाना अर्थाः,—प्रयोजनानि, रसाः,—शृङ्गारादयश्च, तेषां सम्भवः,—व्यञ्जनं यत्र तादृशी, प्रारम्भेण—प्रकृष्टयत्नेन, समायुक्ता, बीजस्य—सन्दर्भमूलकारणस्य, समुत्पत्तिः,—समुद्भवः, तत् मुखं—मुखसन्धिरित्यर्थः, परिकीत्र्तितम् ।

उदाहरति, यथेति ।—अत्र रत्नावलीवत्सराजयोरनुरागरूपस्य बीजस्य उत्पत्तिरिति लक्षणसमन्वयः ।

## लक्ष्मी

तात्पर्यमाह—एकेनेति । एकेन प्रयोजेन प्रधानफलवृत्तेन अन्वितानां घटकत्वसम्बन्धेन युक्तानाम्, कथांशानां वृत्तान्तभागानाम् अवान्तरैकप्रयोजनसम्बन्धः नाटकीयः यत्किञ्चिदेकफलसत्तासम्बन्धः । तद्भेदान् सन्धिभेदान् । मुखमिति । अस्य सन्धेः पञ्चभेदाः पञ्चप्रकाराः । अथैषां लक्षणानि यथा क्रममुपपादयितु प्रतिजानीते—क्रमादिति । उक्तपञ्चावस्थासाहित्येनैव सन्धिपञ्चकसिद्धेरुक्तत्वात् तत्सहितमुखसन्ध्यादिक्रमेणेत्यर्थः । तथाचारम्भावस्यायुक्तः इतिवृत्ताद्याभासो मुखसन्धिः, यत्नयुक्तः प्रतिमुखसन्धिः, प्राप्त्याशायुक्तो गर्भसन्धिः, नियताप्तियुक्तो विमर्शसन्धिः, फलागमयुक्तः उपसंहृतिः निर्वहणसन्धिरित्यर्थः ।

**यथोद्देशमिति** । उद्देशमनतिक्रम्य यथोद्देशम् यथार्थेऽव्ययीभावः । उद्देशश्च नामकीर्त्तनम् । तथा च यथोद्देशमित्यस्य 'मुखं प्रतिमुखं गर्भः' इत्यादिनामकीर्त्तनक्रमश इत्यर्थः ।

यत्र बीजेति । यत्र सन्धौ नाना अनेकैः अर्थैः वृत्तान्तैः रसैः शृङ्गारादिभिश्च सम्भवो व्यञ्जनं यस्याः सा तथोक्ता, तथा प्रारम्भेण समायुक्ता उत्साहरूपप्रारम्भावस्था युक्ता इत्यर्थः, बीजस्य प्रागुक्तलक्षणस्य समुत्पत्तिर्भवति तत् मुखमिव मुखं मुखसन्धिः परिकीर्त्तितं कथितम् ।

यथोद्देशमिति । उद्देशमनतिक्रम्य यथोद्देशम् यथार्थेऽव्ययीभावः । उद्देशश्च नामकीर्त्तनम् । तथा च यथोद्देशमित्यस्य 'मुखं प्रतिमुखं गर्भः' इत्यादिनामकीर्त्तनक्रमश इत्यर्थः ।

यत्र बीजेति । यत्र सन्धौ नाना अनेकैः अर्थैः वृत्तान्तैः रसैः शृङ्गारादिभिश्च सम्भवो व्यञ्जनं यस्याः सा तथोक्ता, तथा प्रारम्भेण समायुक्ता उत्साहरूपप्रारम्भावस्था युक्ता इत्यर्थः, बीजस्य प्रागुक्तलक्षणस्य समुत्पत्तिर्भवति तत् मुखमिव मुखं मुखसन्धिः परिकीर्त्तितं कथितम् ।

## रुचिरा

**तद्भेदां**स्तस्य सन्धेर्भेदास्तानाह—३७२ **मुख**मित्यादिना ।

३७२ **अस्य** सन्धेः । **मुखम् । प्रतिमुखम्** । गर्भः । विमर्शः । तथा—उपसंहृतिः निर्वहणम् । इति । पञ्च । **भेदाः । स्युः** । इदम्बोध्यम्—३७० यथासङ्ख्यमित्युक्तदिशा कार्यस्यारम्भावस्था मुखं, यत्नः प्रतिमुखम्, प्राप्त्याशा गर्भः, नियताप्तिर्विमर्शः, फलागमो निर्वहणश्चेति सन्धिपञ्चकम् । भेदहेतुश्च ३७१ इत्यनेन दर्शितपूर्वः । इति ।

अथैषां लक्षणानि क्रमाल्लक्षयितुं प्रतिजानीते—३७३ **क्रमादित्यादिना**।

३७३ **क्रमादुद्देशक्रममनुसृत्य। लक्षणमेषामिति** शेषः। **उच्यते**। वक्ष्यते सामान्यभविष्यत्त्वमादाय वर्तमानत्वेन निर्देशः।

तत्र तावन्मुखमाह—३७४ **यत्रेत्यादिना**।

३७४ **यत्र** यस्मिन्निति भावः। **नानार्थरससम्भवा** नाना अर्थरसास्तेषां सम्भवो यत्र तादृशी। **प्रारम्भेण** तदाख्यया कार्यावस्थया। **समायुक्ता। बीजसमुत्पत्तिः। तत्। मुखं। परिकीर्तितम्**।। ३७२ ॥

उदाहरति—**यथेत्यादिना**। अत्र हि सागरिकावत्सराजयोरनुरागोत्पत्तिः। अन्यत् स्पष्टम्।

**फलप्रधानोपायस्य मुखसंधिनिवेशिनः ।। ७७ ।।**

**लक्ष्यालक्ष्य इवोद्‌भेदो यत्र प्रतिमुखं च तत्।**

यथा—रत्नावल्यां द्वितीयेऽङ्के वत्सराजसागरिकासमागमहेतोरनुरागबीजस्य प्रथमाङ्कोपक्षिप्तस्य सुसंगता-विदूषकाभ्यां ज्ञायमानतया किंचिल्लक्ष्यस्य वासवदत्तया चित्रफलकवृत्तान्तेन किंचिदुन्नीयमानस्योद्देशरूप उद्‌भेदः ।

---

## विवृतिः

लक्ष्यालक्ष्य इव किंचिल्लक्ष्य इत्यर्थः । उद्‌भेद उद्देशः, अनुरागरूपबीजस्य ॥ सुसंगता सागरिकाया वयस्या ॥

## विज्ञप्रिया

वासवदत्तया चित्रफलकेति । सागरिकालिखितेन राज्ञा स्वेन च युक्तं चित्रफलकं राज्ञा प्राप्तम् । वसन्तकहस्तात् स्खलितं वासवदत्तया तत् प्राप्य तत्र लिखितस्य तदुभयानुरागबीजमुन्नीतम् । तादृशो भेदरूपः प्रतिमुखसन्धिश्च वासवदत्तायामागतायां सुसङ्गतावसन्तकयोर्व्यापाररूपो यत्नसहितः ।

## कुसुमप्रतिमा

फलेति । यत्र सन्धौ, मुखसन्धौ निविशते उत्पत्त्या प्रवर्त्तत इति तसा, फलसःमुख्यप्रयोजनस्य यः प्रधानीपायो मुख्यहेतुस्तसः, लक्ष्यालक्ष्य ईषद्विज्ञेय इव उद्‌भेदः प्रकाशी भवति; तत् प्रतिमुखं प्रतिमुखनामा सन्धिः ।

यथेति । वत्सराजसागरिकयोः समागमः सङ्गभरूपं मुख्यप्रयोजनं तसः हेतोः प्रधानोपायभूतस्य, अनुरागस्तयोः परस्परासक्तिरेव बीजं तस्य, प्रथमाङ्के उपक्षिप्तसः कविना उपन्यस्तसः उन्नीयमानस्य अनुमीयमानस्य । उद्देशरूपः प्रकाशस्वरूपः ।

## विमला

प्रतिमुखसन्धिमाह, फलेति ।—यत्र मुखसन्धिनिवेथिन,—मुखसन्धौ स्थितस्य, फलप्रधानोपायस्य—फलस्य—प्रधानफलस्य, यः प्रधानोपायः तस्य, बीजस्येत्यर्थः, लक्ष्यालक्ष्य इव—ईवल्लक्ष्य इव, उद्‌भेदः,—प्रकाशः, उद्देश इति यावत्, तत् प्रतिमुखं—प्रतिमुखं नाम सन्धिरित्यर्थः ।

उदाहरति, यथेति—सागरिकावत्सराजसमागमः प्रधानफलम् अनुरागबीजस्य—अनुरागरूपबीजस्येत्यर्थः । सुसङ्गता—सागरिकायाः वयस्या । अन्यत् स्पष्टम् ।

## रुचिरा

प्रतिमुखं लक्षयति—३७५ फलेत्यादिना ।

३७५ **यत्र** यस्मिन्वाक्ये। **च। मुखसन्धिनिवेशितः** मुखसन्धौ निविशते इति तस्य तथोक्तस्य। **फलप्रधानोपायस्य फलस्य** मुख्यप्रयोजनस्य लाभे यः प्रधानोपायस्तस्य बीजस्येत्यर्थः। **लक्षालक्ष्यइव।** किञ्चिलक्ष्य इव। उद्‌भेदोऽङ्कुरितो भूत्वाऽवस्थानम्। **तत्। प्रतिमुखम्।**। ३७२ ॥

उदाहरति—**यथे**त्यादिना। अनुरागबीजस्येत्यर्थः। स्पष्टमन्यत्।

गर्भं लक्षयति—३७६ **फलप्रधानोपायस्ये**त्यादिना।

३७६ **यत्र** यस्मिन्वाक्ये इति भावः। **किञ्चन। प्राक्** पूर्वम्। **उद्‌भिन्नस्य** प्रकटितस्य। **फलप्रधानोपायस्य** फलस्य मुख्यफलस्य प्रधानोपायो मुख्यफलस्तस्य। **मुहुः। ह्रासान्वेषणवान्** ह्रासः स्थगनमन्वेषमुत्कण्ठयाऽनुसन्धानं चेति ते अत्रास्तीति, तथोक्तः। **समुद्‌भेदः। गर्भः।**। ३७४ ॥

गर्भव्याख्यामुदाहरति—**फलस्ये**त्यादिना। स्पष्टम्।

उदाहरति—**यथे**त्यादिना।

**यथा। रत्नावल्यां। द्वितीयेऽङ्के। "सुसङ्गता।** सागरिकां प्रत्याहेति शेषः। **सहि** सखि! **अदक्खिणा** अदक्षिणाऽचतुरा। **असि** असि। **तुमं** त्वम्। **दाणीं** इदानीम्। **जा** या। **एवं** एवम्। **भट्टिणा** भर्त्रा। **हत्थेण** हस्तेन। **गहिदा** गृहीता। **वि** अपि। **कोवं** कोपम्। **ण** न। मुंचसि मुञ्चसि।" **इत्यादौ**। समुद्‌भेदो 'विकाशोऽनुरागस्ये' ति शेषः। **पुनः। वासवदत्ताप्रवेशे** वासवदत्तायाः प्रवेशे सतीत्यर्थः। **ह्रासः**। सागरेकायामनुरागस्य तिरोभावः इत्यर्थः। अथ—**तृतीयेऽङ्के। राजा। "प्रेषितः। च। मया। तद्वार्तान्वेषणाय** तद्वार्त्तया अन्वेषणायानुसन्धानार्थम्। **कथम्। चिरयति। वसन्तकस्तदाख्यः** सखा।" **इति। अन्वेषणम्। "वसन्तकः** "प्रविश्ये"ति शेषः। **(सपरितोषम्) हीही** (इति हास्यद्योतकमव्ययम्) भो **कौसम्बीरज्जलंभेणाचि** कौशाम्बीराज्यलाभेनापि। **कौशाम्बी** काचिद्राजधानी। **पिअवअस्सस्स** प्रियवयस्यस्य वत्सराजस्येति यावत्। **ण** न। **तादिसो** तादृशः। **हिअपरितोसो** हृदयपरितोषः। **आसी** आसीत्। **जदिसो** यादृशः। **मम। सआसादो** सकाशाद्। **अज्ज** अद्य। **पिअवअणं** प्रियवचनं सागरिकावृत्तान्तनिवेदनरूपं प्रियं वाक्यम्। **सुणिअ** श्रुत्वा। **भविस्सदि** भविष्यति।" **इत्यादौ। उद्‌भेदः** अन्यत्स्पष्टम्। एवं मुहुः सागरिकायामनुरागस्योद्‌भेदानुद्‌भेदाभ्यां लक्ष्यालक्षत्वेन गर्भ इति भावः।

**फलप्रधानोपायस्य प्रागुद्भिन्नस्य किंचन ॥ ७८ ॥**

**गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः ।**

फलस्य गर्भीकरणाद् गर्भः । यथा रत्नावल्यां द्वितीयेऽङ्के—'सुसंगता—सहि, अदक्खिणा दाणि सि तुमं जा एवं भट्टिणा हत्थेण गहिदा वि कोवं ण मुञ्चसि ।' इत्यादौ समुद्भेदः । पुनर्वासवदत्ताप्रवेशे ह्रासः । तृतीयेऽङ्के—'तद्वार्तान्वेषणाय गतः कथं चिरयति वसन्तकः ।' इत्यन्वेषणम् । 'विदूषकः—ही ही भोः, कोसम्बीरज्जलाभेणावि ण तादिसो पिअवअस्सस्स परितोसो जादिसो मम सआसादो पियवअणं सुणिअ भविस्सदि ।' इत्यादावुद्भेदः । पुनरपि वासवदत्ताप्रत्यभिज्ञानाद् ह्रासः । सागरिकायाः संकेतस्थानगमनेऽन्वेषणम् । पुनर्लतापाशकरणे उद्भेदः ।

---

## विवृतिः

प्रागुद्भिन्नस्य प्रतिमुखोद्दिष्टस्य । ह्रासस्तिरोभावः ॥

सहीति । 'सखि, अदक्षिणेदानीमसि त्वं या एवं भर्त्रा हस्तेन गृहीतापि कोपं न मुञ्चसि ।' इति संस्कृतम् । ही हीति । 'कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य (हृदय) परितोषो यादृशो मम सकाशादद्य प्रियवचनं श्रुत्वा भविष्यति ।' इति संस्कृतम् ॥

## विवृतिपूर्तिः

फलेति । नाट्यशास्त्रेऽपि— 'उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा । पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ॥' इति ॥

## विज्ञप्रिया

प्रागुद्भिन्नस्येति । प्रतिमुखसन्धावुद्भिन्नस्येत्यर्थः । मुहुर्ह्रासान्वेषणवान् समुद्भेद इत्यन्वयः । ह्रासेत्यत्र त्रासेत्यपि क्वचित् पाठः ।

सहीति । सखि ! अदक्षिणा इदानीमसि त्वम् । या एव भर्त्रा हस्ते गृहीताऽपि कोपं न मुञ्चसीति संस्कृतम् । ही हीति । ही हीत्याश्चर्ये । भो भोः कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य परितोषः यादृशो मम सकाशात् प्रियवचनं श्रुत्वा भविष्यतीति संस्कृतम् । उद्भेदः सागरिकासङ्गमोपायस्य । वासवदत्ताप्रत्यभिज्ञानादिति सङ्केतभङ्गार्थमागतां तां दृष्ट्वेत्यर्थः । पुनः सागरिकाकर्त्तृकम् । उद्भेदः फलप्रधानोपायस्य । लतापाशकरणाद्धि राज्ञः सागरिकादर्शनं ततो गर्भसन्धेः प्राप्त्याशायोगरूपावस्थायोगः ।

गर्भतोऽधिक इति । गर्भसन्धौ किञ्चिदुद्भिन्नो ह्रासान्वेषणवाँश्च उद्भेदः ।अत्र ततोऽधिको ह्रासराहित्यात् । सान्तरायः सविघ्नः ।

## लोचन

सहीति । सखि ! अदक्षिणेदानीमसि त्वम् । या एवं भर्त्रा हस्तेऽपि गृहीताऽपि कोपं न मुञ्चसि । ही ही भो परितोषे । कौशाम्बीराज्यलाभेनापि न तादृसः प्रियवयस्यस्य परितोषः यादृशं मम सकाशात् प्रियवचनं श्रुत्वा भविष्यति ।

## कुसुमप्रतिमा

फलेति । प्राक् पूर्वसन्धिदाये किञ्चन उद्ग्निस्य किञ्चित्प्रकाशं प्राप्तस्य, फलप्रधानोपायसा मुख्यप्रयोजनं प्रति प्रधानसाधनसा, यत्र सन्धौ, मुहुः पुनः ह्रासान्वेषणवान् क्षीमभावानुसन्धानवान् समुद्भेदः प्रकाशो भवति ह्रासः अन्वेषणं प्रकाशय भवतीत्यर्थः स गर्भो गर्भनामा सन्धिः ।

गर्भशब्दस्यान्वर्थमाह फलस्येति । फलस्य मुख्यप्रयोजनस्य गर्भीकरणादभ्यन्तरीकरमात् । "सखि ! अदक्षिणा इदानीमसि त्वम्, या एव भर्त्रा हस्तेन गृहीतापि कोपं न मुञ्चसि ।" इति संस्कृतानुवादः । समुद्भेदः प्रकाशः अनुरागस्येति शेषः । "ही ही भोः ! कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्वस्य परितोषः, यादृशी मम सकाशात् प्रवचनं श्रुत्वा भविष्यति ।" इति संस्कृतानुवादः ।

## विमला

गर्भमाह, फलेति ।—यत्र फलस्य—प्रधानप्रयोजनस्य, यः प्रधानोपात्रः तस्य, प्राक्—पूर्वं, किञ्चन—कथञ्चन, ईषदित्यर्थः, उद्भिन्नस्य—उद्भेदं गतस्य, प्रतिमुखोद्दिष्टस्य किञ्चिल्लक्ष्यतया प्रकाशितस्य बीजस्येति भावः, मुहुः,—पुनः पुनः, ह्रासान्वेषणवान्,—क्वचित् तिरोभाववान् क्वचिद्वा अनुसन्धानवान्, समुद्भेदः,—सम्यक् प्रकाशः, स गर्भः,—गर्भनामा सन्धिरित्यर्थः । यथोक्तं नाट्यशास्त्रकारैः,—"उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा । पुनश्चान्वेषणं यत्र गर्भ इति संज्ञितः ॥" इति.

फलस्येति ।—गर्भीकरणात्—अन्तर्गतकरणादित्यर्थः ।

सहीति ।—["सकि ! अदक्षिणा इदानीमसि त्वं, या एवं भर्त्रा हस्तेन गृहीताऽपि कोपं न मुञ्चसि" इति संस्कृतम्] ।

ही हीति ।—-["कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य परितोषः, यादृशी मम सकाशात् प्रियवचनं श्रुत्वा भविष्यति" इति संस्कृतम्] ।

## लक्ष्मी

गर्भसन्धिं निरूपयति—फलप्रधानोपायस्येति । प्रागुद्भिन्नस्य पूर्वसन्धिद्वये किञ्चित्प्रकाशं नीतस्य मुखप्रतिमुखसन्धावुद्भिन्नस्येत्यर्थः । फले प्रधानप्रयोजने प्रधानोपायस्य मुख्यसाधनस्य यत्र सन्धौ मुहुर्वारं ह्रासान्वेषणवान् तिरोभावानुसन्धानवान् समुद्भेदः अभिव्यक्तिर्भवति सा गर्भोगर्भनामा सन्धिः ।

गर्भशब्दस्यार्थं दर्शयति—फलस्येति । फलस्य प्रधानफलस्य गर्भीकरणात् अन्तःकुक्षिनिवेशात् । 'सखि ! अदक्षिणेदानीमसि त्वया एवं भर्त्रा हस्तेन गृहीताऽपि कोपं न मुञ्चसि' इति संस्कृतम् । इदानीं भर्त्रा करग्रहणकाले अदक्षिणा अकुशला भर्त्रा प्रियेण हस्तेन गृहीताऽपि करेण धृताऽपि । अन्या मानिन्यः प्रियहस्ताव-

लम्बनपर्यन्तमेव मानं कुर्वन्ति त्वं तु हस्तावलम्बनानन्तरमपि कोपं न मुञ्चसि एतेनाति निष्ठुरत्वं तवेति । व्यज्यते । समुद्भेदः प्रकाशः सागरिकासङ्गमोपायस्येति शेषः । तद्वार्त्तान्वेषणेति । तस्याः सागरिकाया वार्त्ता उदन्तः तस्या अन्वेषणाय गवेषणाय । वसन्तको विदूषकः गतः प्रेषितः । तत्तस्माद्धेतोः । कथमिति प्रश्ने । 'ही ही भोः कौशाम्बी-राज्यलाभेनापि न तादृशः प्रियवयस्यस्य परितोषः यादृशो मम सकाशात् प्रियवचनं श्रुत्वा भविष्यति' इति संस्कृतम् । होहीति । आश्चर्ये भो भोः । प्रियवयस्य वत्सराजस्य मत्सकाशात् अद्य प्रियवचनम् इष्टभाषणं श्रुत्वा यादृशो यत्प्रकारको हृदयाभिलाषो मनोरथः भविष्यति उत्पत्स्यते तादृशस्तथाविधः कौशाम्ब्या एतत्संज्ञकनगर्याः यद्राज्यम् आधिपत्यं तस्य लाभेनापि प्रियवयस्यस्य हृदयाभिलाषः नासीदिति तर्कयामीत्यर्थः । वासवदत्ताप्रत्यभि-ज्ञानादिति सङ्केतभङ्गार्थमागतां तां दृष्टेत्यर्थः । पुनः सागरिकाकर्तृकम् । उद्भेदः अनुरागस्येति शेषः. लतापाशकर-णाद्धि राज्ञः सागरिकादर्शनं ततो गर्भसन्धेः प्राप्त्याशायोगरूपावस्थायोगः ।

## रुचिरा

विमर्शं लक्षयितुं प्रतिजानीते—**अथे**त्यादिना ।

**अथ** गर्भसन्ध्युदाहरणानन्तरम् । **विमर्शः** 'लक्ष्यते' इति शेषः । ३७७ **यत्रे**त्यादिना ।

३६७ **यत्र** यस्मिन्वाक्ये । **गर्भतो** गर्भसन्ध्यपेक्षया । **अधिकः** । **उद्भिन्नः** प्रकटीभूतः । **च** पुनः । **शापाद्यैः** । **सान्तरायो** विघ्नितः । 'विघ्नोऽन्तरायः प्रत्यूह'इत्यमरः । **मुख्यफलोपायः** । स्यादिति शेषः । **सः** विमर्शः । **इति** । **स्मृतः** ॥ ३७५ ॥

अथ विमर्शः—

**यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः ॥ ७९ ॥**

**शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः ।**

यथा शाकुन्तले चतुर्थाङ्कादौ—'अनसूया—पिअंवदे, जइ वि गन्धव्वेण विवाहेण णिव्वुत्तकल्लाणां पिअसही सउन्तला अणुरूबभत्तुभाईणी संवुत्तेति निव्वुदं मे हिअअम्, तह वि एत्तिअं चिन्तणिज्जम्' इत्यत आरभ्य सप्तमाङ्कोपक्षिप्ताच्छकुन्तलाप्रत्यभिज्ञानात्प्रागर्थसंचयः शकुन्तलाविस्मरणरूपविघ्नालिङ्गितः ।

---

## विवृतिः

शापाद्यैरित्याद्यपदेन भयादिग्रहणम् । सान्तरायो विघ्नाश्लिष्टः । भयेन सान्तरायो यथा—रत्नावल्यां सागरिकासंगमोपायः, वत्सराजानुरागो वासवदत्ताभयालिङ्गितः ॥ पिअंवदे इति । 'प्रियंवदे, यद्यपि गान्धर्वेण विवाहेन निर्वृत्तकल्याणा प्रियसखी शकुन्तला अनुरूपभर्तृभागिनी संवृत्तेति निर्वृत्तं मे हृदयम्, तथाप्येतावच्चिन्तनीयम् ।' इति संस्कृतम् ॥

## विवृतिपूर्तिः

यत्रेति । नाट्यशास्त्रेऽपि—'गर्भान्निर्भिन्नबीजार्थो विलोभनकृतोऽपि वा । क्रोधव्यसनजो वापि स विमर्श इति स्मृतः ॥' इति ॥

## विज्ञप्रिया

अनसूयेति । वक्त्रया उत्कीर्त्तनम् । प्रियंवदे इत्यादिकम् उक्तिः । "प्रियंवदे ! यद्यपि गान्धर्वेण विवाहेन निवृत्तकल्याणा प्रियसखी शकुन्तला अनुरूपभर्तृगामिनी संवृत्ता इति निर्वृत्तं मम हृदयम्" इति संस्कृतम् । षष्टाङ्क इति । तत्पूर्वं दुर्वाससः शापेन राज्ञः शकुन्तलासमागमरूपप्रधानफलस्य उपायः प्रतिरुद्धः । विस्मरणरूपेति ।

"विचिन्तयन्तीं यमनन्यमानसा तपोधनं वेत्सि न मामुपस्थितम् ।

स्मरिष्यति त्वां न स बोधितोऽपि सन् कथां प्रमत्तः प्रथमोदितामिव । इति ।

दुर्वाससः शापेन विस्मरणम् । अयं शापप्रतिबन्धकप्रधानफलोपायरूपःविमर्शसन्धिः शकुन्तलाया राजसमागमप्रत्याशारूपावस्थासहितः ।

## लोचन

पिअंवदे इति ।.प्रियंवदे यद्यपि गान्धर्वेण विधिना निवृत्तकल्याणा प्रियसखी शकुन्तला अनुरूपभर्तृगामिनी संवृत्तेति निवृत्तं मे हृदयम् ।

## कुसुमप्रतिमा

यत्रेति । यत्र सन्धौ मुख्यफलस्य प्रधानप्रयोजनस्य उपायी हेतुः, गर्भतो गर्भसन्ध्यपेक्षया अधिक उद्भिन्नः प्रकाशितो भवति, अथ च शापाद्यैः आद्यशब्दाद्विपक्षकृतवाधादिभिश्च सान्तरायो व्याहव्यमानो भवति; स विमर्षो विमर्षी नामा सन्धिरिति स्मृतः विमृष्यते पात्रैः कर्त्तव्यं विविक्ष्यते अस्मिन्निति व्युत्पत्तेः ।

यथेति । "प्रियंवदे ! यद्यपि गान्धर्वेण विवाहेन निर्वृत्तकल्याण प्रियसखी शकुन्तला, तथापि अनुरूपभर्तृभागिनो संवृत्तेति निर्वृत्तं मे हृदयम्, तथापि एतावच्चिन्तनीयम् ।" इति संस्कृतानुवादः । सप्तमाङ्के उपक्षिप्तात् कविना उपन्यस्तात् । अर्थसञ्चयो व्यापारसमूहः शकुन्तलाविस्मरणरूपेण विघ्नेन आलिङ्गितः संसृष्टः ।

## विमला

विमर्शसन्धिमाह, यत्रेति । यत्र मुख्यफलस्य—प्रधानफलस्य, उपायः गर्भतः,—गर्भसन्धिमपेक्ष्य इत्यर्थः, अधिकः,—स्पष्ट इत्यर्थः, उद्भिन्नः,—प्रकाशितः, शापाद्यैः,—अभिसम्पातप्रभृतिभिः, [आद्यशब्देन भयादिग्रहणं] सान्तरायश्च—सविघ्नश्च, स विमर्ष इति स्मृतः,—कथितः । भयेन सान्तरायो यथा,—रत्नावल्यां सागरिकासङ्गमोपायः वत्सराजस्यानुरागः वासवदत्ताभयेन संस्पृष्टः । तथोक्तम्;—"गर्भानिर्भिन्नबीजार्थो विलोभनकृतोऽपि वा । क्रोधव्यसनजो वाऽपि स विमर्ष इति स्मृतः ॥" इति ।

हला पिअंवदे इति ।—["हला पियंवदे ! यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा प्रियसखी शकुन्तला अनुरूपभर्तृभागिनी संवृत्ता, तथाऽपि मे न निर्वृत्तं हृदयम्" इति संस्कृतम्] ।

सप्तमेति ।—सप्तमाङ्कोपक्षिप्तात्—सप्तमाङ्के उपक्षिप्तम्—उपसंहृतम्, तस्मात्, शकुन्तलायाः प्रत्यभिज्ञानात् प्राक्—पूर्वम्, अर्थसञ्चयः,—फलसमुदायः ।

## लक्ष्मी

विमर्शसन्धिं निरूपयति—यत्र मुख्यफलोपायस्येति । यत्र सन्धौ मुख्यफलस्य प्रधान फलस्य उपायः कारणम्, गर्भतोऽधिकः गर्भसन्ध्यपेक्षयाधिकः उद्भिन्नः प्रकाशितो भवति । गर्भसन्धौ किञ्चिदुद्भिन्नो ह्रासान्वेषणवांश्च उद्भेदः, अत्र ततोऽधिकः, ह्रासराहित्यादिति भावः । तथा शापाद्यैः आदिपदेन क्रोधभयदैवतव्यसनानां परिग्रहः, सान्तरायो विघ्नाश्लिष्टः, स विमृष्यते पात्रैः कर्त्तव्यं विविच्यते अस्मिन्निति विमर्शस्तन्नामा सन्धिरिति स्मृतः ।

उदाहरति—यथेति । अनसूयेति वक्त्र्या उत्कीर्त्तनम् । 'प्रियंवदे ! यद्यपि गान्धर्वेण विवाहेन निर्वृत्तकल्याणा प्रियसखी शकुन्तला, तथापि अनुरूपभर्तृभागिनी संवृत्तेति निर्वृत्तं मे हृदयम्, तथाऽप्येतावच्चिन्तनीयम् इति संस्कृतम् प्रियंवदे ! इत्यादिकम् उक्तिः । गान्धर्वेण—

'इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च । गान्धर्वः स तु विज्ञेयः.... ॥"

इत्यनेन वधूवरयोः मिथः स्वीकारपूर्वकेण विवाहेन परिणयेन निर्वृत्तं निष्पन्नं कल्याण मङ्गलं यस्याः सा तथोक्ता जातविवाहमङ्गलेत्यर्थः 'कल्याणं मङ्गलेऽपि च' इति विश्वः । अनेन निरतिशयमिथोऽनुरागः राज्ञः सर्वदा धर्मापेक्षित्वं च व्यज्यते । प्रियसखी शकुन्तले त्यनेन अनुरागाधिक्य द्योत्यते । अनुरूपं योग्यं भर्त्तारं स्वामिनं भजते या सा अनुरूपभर्तृभागिनी संवृत्ता जाता, निर्वृत्तं सुस्थीभूतं मे हृदयं मनः, तथापि शकुन्तलाया अनुरूपभर्तृभागि-

नीत्वेऽपीत्यर्थः। सप्तमाऽङ्केति। सप्तमाङ्केउपक्षिप्तात् कविना उपस्थापितात्। तत्पूर्वं दुर्वाससः शापेन राज्ञः शकुन्तलासमागमरूपप्रधानफलस्य उपायः प्रतिरुद्ध इति बोध्यम्। अर्थसञ्चयः व्यापारसमूहः शकुन्तलाविस्मरण-रूपेण विघ्नेन आलिङ्गितः संश्लिष्टः विस्मरणं चात्र दुर्वाससः शापेन, तथाहि—

**'विचिन्तयन्ती यमनन्यमानसा तपोनिधिं वेत्सि न मामुपस्थितम्।**

**स्मरिष्यति त्वां न स बोधतोऽपि सन् कथां प्रमत्तः प्रथमोदितामिव॥' इति।**

अयं शापप्रतिबन्धकप्रधानफलोपायरूपः विमर्शसन्धिः शकुन्तलाया राजसमागमप्राप्तयाशारूपावस्ता-सहितः।

क्रोधाद्यथा—वेणीसंहारे षष्ठऽङ्के सिद्धकल्पेऽपि कार्ये क्रोधातिशयादपर्युषितां प्रतिज्ञामास्थितवति भीमसेने दुर्योधने चान्तर्जलं निमग्ने यत्नान्वेषणैरप्यनुपलभ्यमाने युधिष्ठिरे निर्वेदाद् विमृन्नाह—

**'तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते**

**कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम्।**

**भीमेन प्रियसाहसेन रभसात् स्वल्पाऽवशेषे जये**

**सर्वे जीवितसंशयं वयममी वाचा समारोपिताः॥'**

एष भीमक्रोधात् कार्यनिपाते सति जात इति क्रोधजप्रतिज्ञा विघ्नात्मा विमर्शः। भयाद् यथा—रत्नावल्यां सागरिकासङ्गमोपायः, वत्सराजानुरागो वासवदत्ताभयालिङ्गितः। दैवतो यथा विधिविलसिते पञ्चमेऽङ्के—'कञ्चुकी हा! धिक् कष्टेनैवोल्लङ्घ्यः प्राक्तनः कर्मविपाकः।'

**'वार्त्ताऽपि नैव यदिहास्ति स राजचन्द्रः तेनोज्झिता विधिविमोहितचेतनेन।**

**देवा वने त्रिदशनाथविलासिनीभिः कर्त्तुं गता जगति सख्यमिति प्रवादः॥'**

अत्र सूदावारविलम्बिनि नले दैवत्यक्तदमयन्ती—राज्यप्राप्तिविघ्नजो विमर्शः।

**व्यसनाद् यथा रामाभ्युदये पञ्चमेऽङ्के रामः—**

**'प्रत्याख्यानरुषः कृतं समुचितं क्रूरेण ते रक्षसा**

**सोढं तच्च तथा त्वया कुलजना धत्ते यथोच्चैः शिरः।**

**व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा**

**रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये! नोचितम्॥'**

## रुचिरा

उदाहरति—**यथेत्यादिना**।

**यथा। अभिज्ञानशाकुन्तले। चतुर्थाङ्कादौ।** "**अनसूया** (नेयमत्रिपत्नी किन्तु कापि सखी, कण्वाश्रमे तस्या असम्भवात्) प्रियंवदा प्रत्याहेति शेषः। **पिअंवदे** प्रियंवदे! **जइवि** यद्यपि। **गंधव्वेण** गान्धर्वेण "इच्छयाऽन्योन्य-संयोगः कन्यायाश्च वरस्य च। गान्धर्वः स तु विज्ञेयः।" इत्युक्तेनेति यावत्। **विहिणा** विधिना। **णिवित्तकल्लाणा**

निर्वृत्तकल्याणा । **पिअसही** प्रियसखी । **सउंदला** शकुन्तला । **अणुरूपभत्तुगामिणी** अनुरूपभर्तृगामिनी । **संवुत्तेति** संवृत्तेति । **णिव्वुदं** निर्वृत्तम् । **मे** मम । **अअं हृदयम्** । **तहवि** तथाऽपि **एत्तिअं** एतावत् । **चितणिज्जं** चिन्तनीयम् ।"**इत्यतः** । **आरभ्य** । **सप्तमाङ्कोपक्षिप्तात्** सप्तमाङ्के उपक्षिप्त उपसंहृतस्तस्मात् । **शकुन्तलाप्रत्यभिज्ञानात्** शकुन्तलायाः दुर्वाससः शापाद्विस्मृतपरिणयसम्बन्धायाः प्रत्यभिज्ञामङ्गुलीयकदर्शनोत्तरं दुष्यन्तकर्तृकं स्मरणं तस्मात् । **प्राक्** । **शकुन्तलाविस्मरणरूपविघ्नालिङ्गितः** शकुन्तलाया विस्मरणं तद् रूपयति निरूपयति असौ विघ्नस्तेन आलिङ्गितः । **अर्थसञ्चयः** । फलसमुदायः । तथा च-अत्र शकुन्तलायामनुराग उद्भिन्नोऽपि दुर्वाससः शापेन कियन्तं समयं विघ्नित इति तथावर्णनाद्विमर्श इति बोध्यम् ।

अथ निर्वहणम्—

**बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्॥ ८०॥**

**एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत्।**

यथा वेण्याम्—'कञ्चुकी—(उपसृत्य सहर्षम्।) महाराज, वर्धसे। अयं खलु भीमसेनो दुर्योधनक्षतजारुणीकृतसर्वशरीरो दुर्लक्ष्यव्यक्तिः।' इत्यादिना द्रौपदीकेशसंयमनादिमुखसंध्यादिबीजानां निजनिजस्थानोपक्षिप्तानामेकार्थयोजनम्।

यथा वा—शाकुन्तले सप्तमाङ्केशकुन्तलाभिज्ञानादुत्तरोऽर्थराशिः।

---

## विवृतिपूर्तिः

बीजेति। सुधाकरेऽप्युक्तम्—'मुखसंध्यादयो यत्र विकीर्णा बीजसंयुताः। महाप्रयोजनं यान्ति तन्निर्वहणमुच्यते॥' इति॥

मुखादीत्यादिना प्रतिमुख-गर्भ-विमर्शानां ग्रहणम्। मुखादयोऽर्था इति वृत्तभागाः। विप्रकीर्णा उपक्षिप्ताः। यथायथं स्वस्वस्थाने। एकार्थमेक प्रयोजनम्।

## विज्ञप्रिया

ऐकार्थ्यमुपनीयन्त इति। एकोद्देश्यनिर्वाहादेकार्थता। स्पष्टमपरम्।

अयं प्रकीर्णार्थैकात्मतोपनयनरूपो निर्वहणसन्धिः। उद्देश्यशकुन्तलासमागमरूपफलागमावस्थासहितः। एषामिति पञ्चसन्धानामित्यर्थः।

## कुसुमप्रतिमा

बीजेति। यथायथं यथानियम विप्रकीर्णाः कविना यथास्थानमुपनिबद्धाः, बीजवन्तः, प्रागुक्तलक्षणबीजार्थशालिनः, सुखादीनां चतुर्णां सन्धीनामर्था विषयाः, यत्र सन्धौ, एकार्थं केवलमुख्यफलनिमित्तम् उपनीयन्ते केवलमुख्यपयोजनसाधनीपकरणमभावं कविनैव प्राप्यन्ते, तत् हि निर्वहणम् उपसंहारसन्धिः निर्वहति मुख्यफल सम्पद्यते अस्मिन्नति व्युत्पत्तेः। निर्वहणम् उपसंहार उपसंहतिरिति च नार्थान्तरम्।

यथेति। दुर्य्योधनस्य क्षतजेन ऊरुभङ्गादिजातरुधिरेण अरुणीकृतं सर्वं शरीरं यस्य सः, अतएव दुर्लक्ष्य व्यक्तिः सोऽयं भीमसेन इति दुष्परिचेयस्वभावः। द्रौपद्याः केशसंयमनादीनां केशबन्धन शत्रुनिपात-राज्यलाभानां मुखसन्ध्यादिषु यानि बीजानि भीमसेनक्रोधोपचितयुधिष्ठिराद्युत्साहरूपाणि तेषां निजनिजस्थानेषु उपक्षिप्तानां कविना उपनिबद्धानाम्, एकस्य मुख्यफलस्य द्रौपदीकेशसंयमनादेरर्थे निमित्ते योजनम् उपकरणभावेन संश्लेषणम्।

प्रकारान्तरेणोदाहरणमाह यथा वेति। अर्थराशिर्विषयसमूहः।

## विमला

निर्वहणसन्धिमाह, बीजेति ।—यत्र यथायथं—यथाप्रदेशं, विप्रकीर्णा:,—विनिवेशिता:, बीजवन्त:,—मूलकारणसमन्विता:, मुखाद्यर्था:,—मुखादय:, मुखसन्दिप्रभृतिरूपा इति यावत्, अर्था:,—कार्य्याणि, इतिवृत्तभागा: इति यावत्, एकार्थम्—एकप्रयोजनम्, उपनीयन्ते—प्राप्यन्ते, [ऐक्यार्थम् इति पाठे—एकवाक्यत्वार्थसुपनीयन्ते—प्रतिपाद्यन्ते इत्यर्थ:] तत् हि निर्वहणं—निर्वहणसन्धि:, उपसंहार इत्यर्थ: । यथोक्तं सुधाकरकारै:,—"मुखसन्ध्यादयो यत्र विकीर्णा बीजसंयुता: । महाप्रयोजनं यान्ति तन्निर्बहममुच्यते ॥" इति ।

उदाहरति, यथेति ।—दुर्लक्ष्यव्यक्ति:,—दुर्लक्ष्या—दु:खेन लक्षणीया, व्यक्ति:,—प्रकाश: यस्य तादृश:, स एवायमिति निश्चेतुमशक्य इत्यर्थ: । द्रौपदीकेशसंयमनादीन्येव मुखसन्ध्यादयश्च बीज़स्य इति तेषामिति विग्रह: । शकुन्तलाऽभिज्ञानात्—"शकुन्तलेयम्"इति प्रत्यभिज्ञानात्, उत्तर:,—अनन्तरोक्त इत्यर्थ:, अर्थराशि:,—कार्य्यसमुदाय: ।

## लक्ष्मी

अत्र रावणेन यन्मायारूपसीताव्यापादनं कृतं तद्रूपेण व्यसनेन सीताप्राप्तिविघ्नजो विमर्श: । एवमनेकहेतुजो विमर्श इति बोध्यम् ।

निर्वहणसन्धि निरूपयति—बीजबन्त इति । यथायथं यथानियमं विप्रकीर्णा: कविना यथास्थानमुपन्यस्ता:, बीजवन्त: पूर्वोक्तलक्षणबीजार्थयुक्ता:, मुखादयोऽर्था: इति वृत्तिभागा:, आदिपदेन प्रतिमुखगर्भविमर्शाणां ग्रहणम्, यत्र सन्धौ एकार्थं केवलप्रधानप्रयोजननिमित्तम्, उपनीयन्ते केवलप्रधानप्रयोजनसाधनोपकरणभावं कविनैव उपस्थाप्यन्ते तत् हि निर्वहति प्रधानप्रयोजनं जायते अस्मिन्निति निर्वहणम् उपसंहारसन्धि: । निर्वहणम् उपसंहार उपसंहृतिरिति च पर्यायवाचका इति नार्थान्तरम् ।

उदाहरति—यथेति । दुर्योधनस्य क्षतजेन ऊरुभङ्गादिजातशोणितेन अरुणीकृतं रक्तीकृतं सर्वं शरीरं यस्य स तथोक्त: । अत एव दुर्लक्ष्यव्यक्ति: स एवायं भीमसेन इति परिचेतुमशक्यस्वरूप:, द्रौपद्या: पाञ्चाल्या: केशसंयमनादीनां मुखसंन्ध्यादिषु यानि बीजानि भीमसेनक्रोधोपचितयुधिष्ठिराद्युत्साहरूपाणि तेषां तथोक्तानाम्, केशसंयमनादीत्यादिपदेन शत्रुनिपात—राज्यप्राप्त्यो: परिग्रह: । निजनिजस्थानेषु स्वस्वस्थानेषु उपक्षिप्तानां कविना उपस्थापितानाम्, एकस्य प्रधानप्रयोजनस्य द्रौपदीकेशसंयमनादे: अर्थे निमित्ते योजनं संश्लेषणम् । उदाहरणान्तरं दर्शयति—यथा वेति । अर्थराशि: विषयसमूह: ।

केचित्तु मुखादय: सन्धयोऽवस्थाश्च यत्र पृथक् पृथक् संक्षेपत: पुनरुल्लिख्यन्ते तत्रापि निर्वहणसन्धिरित्याहु: । यथा सत्यहरिश्चन्द्रो षष्ठेऽङ्के देव:—

> **'आखेटो मुनिकन्यका कुलपति: कीर: श्रृगालोऽध्वगा**
> **विप्रो म्लेच्छपतिर्मनुष्यमरणं लम्बस्तनी मान्त्रिक: ।**
> **उद्बद्ध: पुरुषो वियच्चरवधूर्गोमायुनाद: फणी**
> **सर्वं सत्त्वपरीक्षणोत्सुकरसैरस्माभिरेतत्कृतम् ॥' इति ।**

## रुचिरा

अथ निर्वहणं लक्षयितुं प्रतिजानीति—**अथेत्यादिना**।

**अथ** विमर्शोदाहरणानन्तरम्। **निर्वहणं** 'लक्ष्यते' इति शेषः। ३७८ **बीजवन्त** इत्यादिना।

३७८ **यत्र** यस्मिन्वाक्ये। **हि**। **बीजवन्तः** प्रधानफलसहिताः। **यथायथम्**। **विप्रकीर्णाः** अनेकत्र सूचिताः। **मुखाद्यर्था** मुखादीनां मुखप्रतिमुखादिसन्धीनामर्थाः। **एकार्थं** समुदितप्रयोजनरूपताम्। **उपनीयन्ते तत्**। **निवर्हणम्**। सुधाकरेणाप्युक्तम्—'मुखसन्ध्यादयो यत्र विकीर्णा बीजसंयुताः। महाप्रयोजनं यान्ति तन्निर्वहणमुच्यन्ते' इति ॥ ३७६ ॥

उदाहरति—**यथेत्यादिना**। **क्षतजं** रुधरम्—स्पष्टमन्यत्।

एवं सन्धीन् लक्ष्यलक्षणाभ्यां निरूप्यैषामङ्गानि लक्षयितुं प्रतिजानीते-**एषाभित्यादिना**।

**एषां** मुखादिपञ्चसन्धीनाम्। **अङ्गानि**। **आह**। ३७८ **अपक्षेप** इत्यादिना।

एषामङ्गान्याह—

**उपक्षेपः परिकरः परिन्यासो विलोभनम् ॥ ८१ ॥**

**युक्तिः प्राप्तिः समाधानं विधानं परिभावना ।**

**उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे ॥ ८२ ॥**

---

## विवृतिः

उपनीयन्ते युज्यन्ते । 'ऐक्यार्थम्' इति पाठे एकवाक्यत्वार्थमुपनीयन्ते । प्रतीपाद्यन्त इत्यर्थः ॥ मुखसंध्यादयश्च बीजं चेति विग्रहः ॥

एषां मुखादीनाम् । द्वादशमुखसंध्यङ्गान्याह—उपक्षेप इति । समुत्पत्तिः संक्षेपेण उपक्षेपणम् । क्वचित् 'समुत्क्षिप्ततिः' इति पाठः ॥

## विज्ञप्रिया

तत्र मुखसन्देर्द्वादशाङ्गान्याह—उपक्षेप इत्यादि ।

## कुसुमप्रतिमा

एषामिति । मुखादीनां पञ्चानामेव सन्धीनामित्यर्थः ।

उपेति । वैशब्दः पादपूरणे । मुखे मुखसन्धौ । एतानि द्वादशेत्यर्थः ।

## विमला

एषामिति ।—एषां—मुखादीनाम् ।

द्वादश मुखसन्ध्याङ्गान्माह, उपक्षेप इति ।—स्पष्टम् ।

उपक्षेपमाह, काव्येति ।—काव्यार्थस्य—सन्दर्भप्रतिपाद्यस्य, समुत्पत्तिः—संक्षेपेण उत्थापनमित्यर्थः, [क्वचित्—"समुत्क्षिप्तिः" इति पाठः] उपक्षेप इति स्मृतः ।

## लक्ष्मी

'आखेट' इत्यादिना मुखसन्धिनिबद्धाः, 'कीर' इत्यादिना प्रतिमुखसन्धिभाविनः, 'अध्यवगे'त्यादिना गर्भसन्धिग्रथिताः, मनुष्येत्यादिना च विमर्शसन्धिसूत्रिता यथासंख्यं प्रारम्भाद्यवस्थानुगताः फलवन्तोऽर्थनिर्वहण-सन्धावेकवाक्यतापादनार्थं संक्षेपतः पुनरुपात्ता इति । एषां मुखादीनामेव पञ्चसन्धीनामित्यर्थः । एवं लक्ष्यलक्षणाभ्यां सन्धीन् निरूप्यैषामङ्गानि निरूपयितुं प्रतिजानीते—एषामिति ।

अत्र मुखसन्धेद्वादशाङ्गान्याह—उपक्षेप इत्यादि । वैशब्दः पादपूरणे मुखे मुखसन्धा वित्यर्थः एतानि द्वादशसंख्याकानि भवन्तीति शेषः ।

एवं सामान्यतः प्रतिपाद्य विशेषाकांक्षायामाह—यथेति । यथोद्देशम् उद्देशं कारिकाया निर्द्देशमनतिक्रम्य लक्षणम् उपक्षेपादीनां स्वरूपम् ।

काव्यार्थस्येति । काव्यार्थस्य तत्तद्दृश्यकाव्याभिधेयवृत्तान्तस्य समुत्पत्तिः संक्षेपेण प्रथमोपस्थितिः, उपक्षेप इति स्मृतः ।

## रुचिरा

३७८ **मुखे** मुखसन्धौ । **उपक्षेपः** । **परिकरः** । **परिन्यासः** । **विलोभनम्** । **युक्तिः** । **प्राप्तिः** । **समाधानम्** । **विधानम्** ॥ **परिभावना** । **उद्भेदः** । **करणम्** । तथा-**भेदः** । **एतानि** । द्वादशसंख्यकानि । **अङ्गानि** । **वै** । 'स्यु'रिति शेषः ॥ ३७७ ॥ ३७८ ॥

एवं सामान्यतोऽभिधाय विशेषजिज्ञासायामाह—**यथेत्यादि** ।

यथोद्देशं लक्षणमाह—

**काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः ।**

**काव्यार्थ इतिवृत्तलक्षणप्रस्तुताभिधेयः ।**

यथा वेण्याम्—'भीमः—

**लाक्षागृहानल-विषान्न-सभाप्रवेशैः**

**प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।**

**आकृष्य पाण्डववधूपरिधानकेशान्**

**स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ।।'**

---

## विवृतिः

लाक्षेत्यादि । अत्र वैरप्रकाशनेनात्मसंभावनया च वैरोद्धारप्रकारस्येतिवृत्तस्य सूचनम् ।।

## विवृतिपूर्तिः

लाक्षेति । लाक्षया निर्मितं गृहं लाक्षागृहं तत्र दत्तोऽनलो वह्निः । विषेण मिश्रितमन्नम् । द्यूतक्रीडार्थं सभायां प्रवेशः । एतैः ।

## विज्ञप्रिया

लाक्षागृहानलेति—"स्वस्था भवन्तु कुरुराजसुताः सभृत्याः" इति सूत्रधारस्योक्तिं श्रुत्वा प्रविष्टस्य भीमस्योक्तिरियम् । लाक्षेत्यादिभिः प्राणेषु वित्तनिचयेषु च येऽस्मान् प्रहृत्य धार्तराष्ट्रा मयि जीवति सति स्वस्था भवन्ति ? इति । अत्र काकुध्वनिना न स्वस्था भविष्यन्तीत्यर्थः । लाक्षेत्यादिना प्राणेषु प्रहारप्रवेशेन वित्तनिचयेषु च प्रहारः । परिधानकेशानित्यत्र द्वन्द्वः । अत्र काव्यार्थस्य कुरुकुलवधप्रतिपादनस्योत्पत्तिः ।

## लोचन

समुत्पत्तिः समुत्पत्तिमात्रम् ।

## कुसुमप्रतिमा

काव्येति । काव्यार्थस्य तत्तदृश्यकाव्यप्रतिपाद्यवृत्तान्तस्य, समुत्पत्तिः संक्षेपेण प्रथमोपस्थितिः, उपक्षेप इति नाम्ना स्मृतः; उपक्षेपणं कविना प्रथममुपस्थापनं मत्युपक्षेप इति व्युत्पत्तेः ।

काव्यार्थस्येत्यर्थशब्दस्य अभिधेयार्थपरतामभिप्रेत्य व्याचष्टे काव्यार्थं इति । इतिवृत्तलक्षणो वृत्तान्तस्वरूपश्चासौ प्रस्तुताभिधेयः प्रकृतप्रतिपाद्यश्चेति सः ।

लाक्षेति । धार्त्तराष्ट्रा दुर्योधनादयो धृतराष्ट्रपुत्रा, लाक्षागृहानलो जतुगृहेऽग्निसंयोजनम्, विषान्नं विषमयखाद्यपदानम्, सभाप्रवेशो द्यूतसमायामुपस्थापन तैः, प्राणेषु जीवनविषयेषु वित्तनिचयेषु स्थावरास्थावरसमस्तप्रका-

रधनसमूहेषु च नः अस्मान् प्रहत्य जतुगृहदाह-विषमयान्नदानाभ्यां प्राचनाशचेष्टां विधाय द्यूतक्रीड़या सर्वप्रकार-धनान्वपहृत्य चेत्यर्थः, तथा पाण्डववध्वा द्रौपद्याः परिधानकेशान् वसनकुन्तकान आकृष्य च, मयि भीमसेने जीवति सति, संस्था भवन्ति भविष्यन्तीति भविष्यत् सामीप्ये वर्त्तमाना अपि तु कथमपि नेत्यर्थः ।

अत्र वेणीसंहारनाटकीययुद्धवृत्तान्तरूपकार्व्यर्थस्य प्रथमीपस्थितेरुपक्षेपः ।

## विमला

उदाहरति, लाक्षेति ।—धार्त्तराष्ट्राः,—धृतराष्ट्रसुताः दुर्य्योधनादयः, लाक्षागृहानलविषान्नसभाप्रवेशैः,—लाक्षानिर्म्मित गृहमिति लाक्षागृहं, तत्र दाहाय दत्तः अनलः,—अग्निः,तेन—लाक्षागृहानलेन, विषेण मिश्रितमन्नं विषान्नं तेन, विषान्नप्रयोगेण इत्यर्थः, सभायां प्रवेशः,—प्रवेशनं तेन, द्यूतक्रीड़ार्थम् आह्वानेन इत्यर्थः, प्राणेषु वित्तनिचयेषु—धनसमुदायेषु, च नः,—अस्मान्, प्रधूत्य—प्रथमद्वितीयायां द्वाभ्यामुपायाभ्यां प्राणनिधनार्थं चेष्ट-यित्वा, तृतीयेनोपायेन च धनानि हृत्वा इत्यर्थः पुनश्च तृतीयेन पाण्डवानां या वधूः,—पाञ्चाली, तस्याः परिधानं—वस्त्रं, केशांश्च आकृष्य, मयि—भीमे, जीवति स्वस्था भवन्ति ? [अत्र भविष्यात्सामीप्ये लट्] अत्र "स्वस्थाः" इति काकुः, तथा च न स्वस्था भविष्यन्तीति निष्कृष्टोऽर्थः । अत्र द्रौपदीकेशसंयमनरूपस्य काव्यार्थस्य अथवा वैरप्रकाशनेनात्मसम्भावनया च वैरीड्द्यारप्रकारस्येतिवृत्तस्य समुत्थापनम् । वसन्ततिलकं वृत्तम् ।

## लक्ष्मी

काव्यार्थस्येत्यत्रार्थपदस्य अभिधेयार्थपरत्वमिति बोधयितुं विवृणोति—काव्यार्थ इति । इतिवृत्तं वृत्तान्त-स्तल्लक्षणं तत्स्वरूपश्चासौ प्रस्तुताभिधेयः प्रकृतप्रतिपाद्यश्चेति सः तथोक्तः । उदाहरति—यथेति । वेण्यां वेणीसंहारे लाक्षागृहानलेति । 'स्वस्था भवन्तु कुरुराजसुताः सभृत्याः' इति सूत्रधारस्योक्ति श्रुत्वा प्रविष्टस्य भीमस्योक्तिरियम् । धार्त्तराष्ट्राः धृतराष्ट्रपुत्रा दुर्योधनादयः, लाक्षया निर्मितं गृहं लाक्षागृहं मध्यमपदलोपिसमासः । तत्र दत्तोऽ नलोऽग्निः, पुनरपि मध्यमपदलोपः, विषेण मिश्रितमन्नं विषान्नम् अत्रापि मध्यमपदलोपि समासः, सभाप्रवेशः द्यूतार्थमिति शेषः एषां द्वन्द्वः तत्तथोक्तः वित्तनिचयेषु धनसमूहेषु प्राणेषु असुषु च नोऽस्मान् प्रहृत्य जतुगृहदाहविषसम्पृक्तभोजनदानाभ्यां प्राणापहरणं विधाय द्यूतार्थं सभाप्रवेशेन सर्वप्रकारधनान्यपहृत्य चेत्यर्थः, तथा पाण्डववध्वाः पाञ्चाल्याः परिधानकेशान् वस्त्रकचान् आकृष्य च मयि भीमसेने जीवति प्राणान् धारयति सति स्वस्था सुस्थिता भवन्ति भविष्यन्ति भवन्तीति (वर्त्तमानसामीप्ये वर्त्तमानवद्वा) इति पा. सूत्रेण वर्त्तमानसामीप्ये लट्. अत्र नाटकीयवृत्तान्तकुरुकुलवधप्रतिपादनस्य काव्यार्थस्य प्रथमोपस्थितेरुक्षेपः । वसन्ततिलकाच्छन्दः ।

## रुचिरा

**यथोद्देशमु**द्देशं कारिकाया निर्देशमनतिक्रम्य । **लक्षणमु**पक्षेपादीनां स्वरूपम् । **आह**—३८० **काव्यार्थस्ये** त्यादिना ।

३८० **काव्यार्थस्य** सन्दर्भप्रतिपाद्यस्य प्रयोजनस्य । **समुत्पत्ति** 'वर्ण्यमाने'ति शेषः । **उपक्षेपः । इति । स्मृतः** ।

कारिकार्थं सुगमयितुं काव्यार्थपदं विवृणोति—**काव्यार्थ** इत्यादिना । स्पष्टम् ।

उदाहरति—**यथे**त्यादिना । व्याख्यातपूर्वमिदं पद्यम् ॥ ३४३ ॥

**समुत्पन्नार्थबाहुल्य ज्ञेयः परिकरः पुनः ॥८३॥**

यथा तत्रैव—

**'प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभिर्न**

**र्न तत्रार्यो हेतुर्न भवति किरीटी न च युवाम्।**

**जरासंधस्योरः स्थलमिव विरूढं पुनरपि**

**क्रुधा भीमः संधिं विघटयति यूयं घटयत ॥'**

---

## विवृतिः

बाहुल्यमतिशयेन सूचनम् ॥ मम भीमस्य क्रुधा। शिशुत्वेनात्मनिर्देशः। आर्यो युधिष्ठिरः। युवां नकुलसहदेवौ। विरूढं निश्चितं विशालं च। अत्र संधिविघटनेन वैरोद्धरणप्रकारस्याधिकसूचनम्। अस्याधिकसूचितस्य निष्पत्तिर्निश्चयापत्तिः ॥

## विवृतिपूर्तिः

जरेति। जन्मकाले मगधराजस्य शरीरं द्विखण्डमासीत्, तत्पुनर्जरानामिकया राक्षस्या योजितम्, तस्माज्जरासंध इति नाम जातम् ॥

## विज्ञप्रिया

परिकरलक्षणमाह—समुत्पन्नेति।

प्रवृद्धं यद्वैरमिति—सन्धिकरणविमुखस्य भीमस्य सहदेवं प्रर्युक्तिरियम्। शिशोरेवेति—मम यौवनापेक्षापि तैर्न कृता, शिशुकाल एव विषदानात्। आर्यो युधिष्ठिरः। किरीटी अर्जुनः। युवां नकुलसहदेवौ। विरूढं कृष्णदौत्येन जातं, सन्धिमित्यन्वयः। अत्र समुत्पन्नलाक्षागृहादिकथनरूपार्थबाहुल्यम्।

## कुसुमप्रतिमा

समुत्पन्नेति। समुत्पन्नस्य अर्थस्य तत्तद्दृश्यकाव्यवृत्तान्तस्य बाहुल्यं पूर्वापेक्षया अतिरेकेणीपस्थितिः पुनः परिकरो नाम अङ्गं ज्ञेयः; परिकरणं बाहुल्येन काव्यार्थस्यीपस्थापनं परिकर इति व्युत्पत्तेः।

प्रवृद्धमिति। शिशोरेव मम कुरुभिर्दुर्य्योधनादिभिः सह यत् खलु वैरं शत्रुता प्रवृद्धं क्रमशः प्रकर्षेण वृद्धिमापन्नम्, तत्र वैरे आर्य्यो युधिष्ठिरो हेतुर्न भवति न भूत इत्यर्थः, किरीटी अर्जुनोऽपि हेतुर्नं भवति, युवां नकुलसहदेवावपि हेतू न भवथ इति शेषः। किन्तु तत्र अहमेव हेतुरिति सन्धिना मम शान्तिर्न स्यादिति भावः। अतएव भीमः क्रुधः, क्रोधेन, विरूढं जरायश्चेष्टया संयुक्तं जरासन्धश्य मगधराजस्य उरः स्थलं वक्षोदेशमिव, विरुद्धं कृष्णादीनां चेष्टया समुत्पन्नं सन्धिं पुनरपि विघटयति विश्लेषयति; यूयं समर्थाश्चेत् घटयत संयोजयत उपपादयत च। जरासन्धस्य जन्मनिधनवृत्तान्तो महाभारते सभापर्वणि अनुसन्धेयः।

अत्र पूर्वोत्पन्नस्य युद्धवृत्तान्तरूपकार्व्यस्य सन्धिविघटनादतिरेकेणोपस्थितेः परिकरः ।

## विमला

परिकरणाह, समुत्पन्नेति ।—समुत्पन्नस्य—समुत्थिस्य, अर्थस्य—काव्यार्थस्य, बाहुल्यं—विस्तारः, अतिशयेन सूचनमित्यर्थः, परिकरः ज्ञेयः ।

उदाहरति, प्रवृद्धमिति ।—सन्धिकरणार्थमुद्यतस्य राज्ञः सन्देशं श्रावयन्तं सहदेवं प्रति भीमसेनस्य उक्तिरियम् । कुरुभिः,—धार्त्तराष्ट्रैः, शिशोरेव मम—भीमस्य, (यद्वा मम—भीमस्य, शिशोः,—शिशुकालम् आरभ्य एव) यत् वैरं—विद्वेषः, प्रवृद्धं खल, [शिशुत्वेनात्मनिर्देशः वैरस्याविस्मरणीयत्वाज्ञापकः] तत्र—वैर आर्य्यः,—गुरुत्वात् माननीयः, युधिष्ठिरः इति यावत्, न हेतुः,—न कारणं, किरीटी—अर्जुनः,—च न हेतुरिति शेषः, युवामपि—नकुलसहदेवावपीत्यर्थः, न हेतुः, भवति इत्यनेन सर्व्वत्रानुषङ्गः, अहमेव विद्वेषकारमं कुरूणामिति भावः, तस्मात भीमः क्रुधा—कोपेन, विरूढ़ं—संयोजितं, जरासन्धस्य उरः स्थलमिव सन्धिं पुनरपि विघटयति—विच्छेदयति, यूयं घटयत—योजयत् । भवद्भिः कृतमपि सन्धिमहं भेत्स्यामीत्यर्थः, युष्माकं सन्ध्युत्पादनप्रयासः वृथेति भावः । (पुरा किल वृहद्रथ नामधेयेन राज्ञा यज्ञशेषं पायितयोः धर्म्मपत्न्योः गर्भद्वयात् समाद्र्धाद्र्धशरीरेम विनिर्गतस्य श्मशानपातितस्य शिशीः शरीरे जराऽभिधानराक्षस्या संहिते "जरासन्धः" इति तन्नामाभूत् । तद्धि प्रथमसंहितं जरासन्धस्य उरः भीमेन विपाटितम्, इति महाभारते) । अत्र सन्धिविघटनेन वैरनिर्य्यान्तस्य समधिकं सूचनम् । शिखरिणी वृत्तम् ।

## लक्ष्मी

परिकरलक्षणं दर्शयति—समुत्पन्नेति । समुत्पन्नस्य अर्थस्य तत्तदृश्यकाव्यवृत्तान्तस्य बाहुल्यं पूवपिक्षया अतिशयेन सूचनं पुनः परिकरणं बाहुल्येन काव्यार्थस्य सूचनं परिकरस्तन्नामकाङ्गं ज्ञेयः ।

उदाहरति—यथेति । तत्रैव वेण्यामेवेत्यर्थः । प्रवृद्धमिति । सन्धिकरणविमुख्य भीमस्य सहदेवं प्रत्युक्तिरियम् । मम भीमस्य शिशोरेव बालकस्यैव 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । यत् खलु कुरुभिर्दूर्योधनादिभिः सह वैरं विरोधः मम यौवनापेक्षापि तैर्न कृता शिशुपाल एव विषं दत्तमतो विरोध इति भावः तत्र विरोधे आर्यो युधिष्ठिरो हेतुर्न भवति न भूत इत्यर्थः, किरीटी अर्जुनोऽपि हेतुर्न भवति युवां नकुलसहदेवावपि हेतू न भवथ इति शेषः । किन्तु तत्राहमेव हेतुरिति मम शान्तिसन्धिकरणेन न स्यादिति भावः । अत एव भीमः क्रोधेन रुषा जरासन्धस्य एतन्नामकस्य राज्ञः विरूढं जरायाश्चेष्टया संयुक्तम् उरः स्थलं वक्षः स्थलमिव 'उरो वत्सं च वक्षस्य' इत्यमरः । विरूढं कृष्णादीनां चेष्टया समुत्पन्नं सन्धिं संश्लेषं पुनरपि भूयोऽपि विघटयति वियोजयति यूयं युधिष्ठिरादयः समर्थाश्चेत् घटयत संयोजयत युष्माभिः कृतमपि सन्धिं भेत्स्यामीति भावः । 'जन्मकाले जरासन्धस्य शरीरं द्विखण्डमासीत् । प्रकृतिविरुद्धत्वात्परित्यक्तोऽपि जरानामिकया राक्षस्या भागद्वयं योजितं तस्माज्जरासन्ध इति नामजातं पुनरपि श्रीकृष्णसङ्केतेन भीमसेनेन द्विधाकृतम्' इति वृत्तान्तं शान्तिपर्वणि महाभारते वर्त्तत इत्यनुसन्धेयम् । शिखरिणीछन्दः ।

अत्र पूर्वोत्पन्नस्य विषदानादिरूपकाव्यार्थस्य सन्धिविघटनादतिरेकेणोपस्थितेः परिकरः । यथा वा रत्नावल्याम्—'अन्यथा क्व सिद्धादेशे प्रत्ययप्रार्थितायाः सिंहलेश्वरदुहितुः समुद्रे प्रवहणभङ्गमग्नोत्थितायाः फलकासादनम्' इत्यादिना 'सर्वथा स्पृशन्ति स्वामिनमभ्युदयाः' इत्यन्तेन बीजोत्पत्तेरेव बहूकरणात्परिकरः ।

## रुचिरा

परिकरं लक्षयति—३८१ **समुत्पन्नार्थे**त्यादिना ।

३८१ **समुत्पन्नार्थबाहुल्यम्** समुत्पन्नः समुद्भूतोऽसावर्थः प्रयोजनं तस्य बाहुल्यम् । **पुनः** । **परिकरस्त**-दाख्यसन्ध्यङ्गमित्यर्थः । **ज्ञेयः** ॥ ३०९ ॥

उदाहरति—यथेत्यादिना ।

**यथा** । **तत्र** । वेणीसंहारे इत्यर्थः । **एव** । "**कुरुभि**र्धार्तराष्ट्रैरिति भावः । सहार्थे तृतीया । **मम** भीमसेनस्य । **शिशोः** । **एव** । **यत्** । **वैरम्** । **खलु** निश्चितमनिवार्य्यमिति यावत् । **प्रवृद्धम्** । **तत्र** तस्मिन्वैरे । **न** । **आर्यः** पूज्यो युधिष्ठिर इति यावत् । **हेतुः** कारणम् । **न** । **किरीटी** अर्जुनः । 'न हेतु'रिति पूर्वतोऽन्वेति । **भवति** । **न** । **च** । **युवाम्** । नकुलसहदेवौ सम्बोध्याविति भावः । अत्र वचनविपरिणामेन "हेतू" इति पूर्वतोऽनुषज्यते । कुरूणां मम च यद्वैरं जन्मान्तरीणं सम्प्रति प्रवृद्धमिति भावस्तस्मात् । **भीमः** । अयमिति शेषः । **क्रुधा** क्रोधेन । **जरासन्धस्य** जराराक्षस्या संहितशरीरतया तथाख्यातस्येत्यर्थः । **उरः** **स्थलमिव** । **विरूढं** विरुद्धत्वेन सञ्जातम् । **सन्धिम्** । **विघटयति** विभिनत्ति । **यूयमार्यप्रभृतयः** । सर्वे भवन्त इत्यर्थः । **पुनरपि** पुनः । **घटयत** सङ्घटयत । युष्माभिः कृतमपि सन्धि भैत्स्यामीति भावः । सन्ध्यर्थमुध्यतं राजानमवगम्यसर्वानुद्दिश्य भीमसेनस्येयमुक्तिः । शिखरिणीवृत्तम् । 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी'इति तल्लक्षमम् । अत्र समुत्पन्नस्य वैरस्य सन्धिनिवत्त्रनद्वारा विपुलतापादनम् ॥ ३४३ ॥"

**तन्निष्पत्तिः परिन्यासः—**

यथा तत्रैव—

**'चञ्चद्भुजभ्रमितचण्डगदाभिघात-**
**संचूर्णितोरुयगलस्य सुयोधनस्य।**
**स्त्यानावनद्धघनशोणितशोणपाणि-**
**रुत्तंसयिष्यति कचांस्तव देवि! भीमः॥'**

**अत्रोपक्षेपो नामेतिवृत्तलक्षणस्य काव्याभिधेयस्य संक्षेपेणोपक्षेपणमात्रम्। परिकरस्तस्यैव बहुलीकरणम्। परिन्यासस्ततोऽपि निश्चयापत्तिरूपतया परितो हृदये न्यसनम् इत्येषां भेदः। एतानि चाङ्गानि उक्तेनैव पौर्वापर्येण भवन्ति। अङ्गान्तराणि त्वन्यथापि।**

---

## विवृतिः

स्त्यानेति। स्त्यानेन समूहेन अवनद्धं संबद्धं यद् घनं निबिडं शोणितं तेन शोणः पाणिर्यस्य सः। उत्तंसयिष्यति विभूषियिष्यति। अत्रात्यन्तसूचितस्य निश्चयोपादानम्॥

## विवृतिपूर्तिः

स्त्यानेति। स्त्यानं स्निग्धम्। 'स्त्यानं स्निग्धे प्रतिध्वानने घनत्वालस्ययोरपि' इति मेदिनी। अवनद्धं लग्नं यद् घनं सान्द्रं शोणितं रक्तं तेन शोणौ रक्तवर्णौ पाणी यस्य सः॥

## विज्ञप्रिया

परिन्यासलक्षणमाह—तन्निष्पत्तिरिति। काव्याभिधेयरूपस्येतिवृत्तस्य निष्पत्तिः—भावनिष्पत्तिकथन-मित्यर्थः। चञ्चदिति—द्रौपदीं प्रति भीमस्योक्तिरियम्। हे देवि द्रौपदि! तव कचान् केशान् वेणीबद्धान् कुर्वन् भीम उत्तंसयिष्यति। उत्तंसनेन दुर्योधनोरुरूपालङ्कारेण विशिष्टान् करिष्यतीत्यर्थः। भीमः कीदृशः? सुयोधनस्य स्त्यानावनद्धेन प्रवृद्धसम्बद्धेन घनशोणितेन शोणपाणिः। सुयोधनस्य कीदृशस्य? चञ्चता चलता भुजेन भ्रमितया गदयाभिघातेन संचूर्णितमूरुयुगलं यस्य तादृशस्य। अत्र भाविन्या ऊरुभङ्गनिष्पत्तेः कथनम्।

उक्तत्रयाणां भेदं विचिन्त्य दर्शयति-अत्रेति। ततोऽपि निश्चयापत्तिरूपतया इति निश्चयस्य भाविकर्त्त-व्यनिश्चयस्यापत्तिरपादानं बोधनमिति यावत्। हृदये बोद्धृहृदये।

## लोचन

स्त्यानेति—स्त्यानः सन् अवनद्धः दृढीभूत इत्यर्थः।

## कुसुमप्रतिमा

तदिति । तस्य काव्यार्थस्य निष्पत्तिर्निश्चयेन मनस्युपस्थितिः परिन्यासः निरूयापत्तिरूपतया परितो हृदय व्यसनमिति व्युत्पत्तेः ।

चञ्चदिति । हे देवि ! महिषि ! द्रौपदि ! भीमः, लक्षणा सञ्चलता सजेन भमिता घूर्णिता चण्डा कराला या गदा तस्या अभिधानेन आधातेन सञ्चूर्णितम् ऊमयुगलं यस्य तस्य तथोक्तस्य सुयोधनस्य दुर्य्योधनस्य, स्त्यानेन बहुलीभूतेन अनबद्धेन संलग्नेन घनेन गाढ़ न शोणितेन रुधिरेण शीणीरक्तवर्णः पाणिः करो यस्य स तादृशः सन्, तव कचान् दुःशासनाकर्षणावधिस्खलितान् कुन्तलान् उत्तंसयि—ष्यति भूषयिष्यति । तादृशपाणिना बन्धनेन तच्छोणितसंक्रमादिति भावः ।

अत्र दुर्य्योधनोरुभङ्गात्मकयुद्धवृत्तान्तरूपकाव्यार्थस्य निश्चयेनोपस्थितेः परिन्यासः ।

ननु उक्तानां त्रयाणामेवाङ्गनां क्रमिककाव्यार्थोपस्थितिमात्ररूपतया ऐक्यापत्तिरित्याह अत्रेति । इति वृत्तलक्षणस्य वृत्तान्तस्वरूपस्य, काव्याभिधेयस्य तत्तदृश्यकाव्यप्रतिपाद्यस्य । उपक्षेपणमात्रम् उपस्थापनमात्रम् । मात्रपदेन बहुलीकरणपरिन्यासनयोर्व्यवच्छेदः । निश्चयापत्तिरूपतया निश्चयेनोपस्थितिरूपत्वेन । न्यसनमुपस्थापनम् । तथा च एकस्या अपि काव्यार्थोपस्थितेरवस्थाभेदादेयामीषामङ्गानां भेद इति भावः ।

एतानीति । एतानि उपक्षेपादीनि । प्रथममुपक्षेपः पंर परिकरः अन्तरञ्च परिन्यास इति क्रमेणैव सम्भवन्तीत्यर्थः; एकस्य एव काव्यार्थोपस्थितेरवस्थामात्रभेदेनेवामीषां भेदात् तादृशावस्थाया द्योक्तक्रमावश्यम्भावादित्याशयः । अङ्गान्तराणि वक्ष्यमाणविलोभनादीनि तु अन्यथापि वक्ष्यमाणक्रमेतरक्रमेणापि, अपिशब्दात् वक्ष्यमाणक्रमेणापि भवतीत्यर्थः तेषां परस्परभिन्नलक्षणत्वेन परस्परनिरपेक्षत्वादित्यभिप्रायः ।

## विमला

परिन्यासमाह, तन्निष्पत्तिरिति ।—तस्य—अधिकसूचितस्य काव्यार्थस्य निष्पत्तिः,—निश्चयेन सङ्कीर्त्तनं, परिन्यासः.

उदाहरति, चञ्चादिति ।—हे देवि !—पाञ्चाणि ! भीमः चञ्चता—स्फुरता, भुजेन, भमिता—घूर्णिता, या चण्डा—भीषणा, गदा तस्याः अभिघातेन—प्रहारेण सञ्चूर्णितम् ऊरुयुगलं यस्य तथाविधस्य सुयोधनस्य—दुर्य्योधनस्य, स्थानं—स्निग्धं, ("स्त्यागं स्निग्धे प्रतिध्वाने घनत्वालस्योरपि" इति मेदिनी) तथा अवनद्धं—संसक्तं, षत—गाढं, शोणितं तेन शोणः,—रक्तः, पाणिर्यस्य तथाभूतः सन्, तव कचान्—केशान्, उत्तसयिष्यति—अलङ्करिष्यति, रक्ताक्तहस्तेन संयमनादिति भावः । अत्रात्यन्तसूचितस्य गदाप्रहारादिना दुर्य्योधनोरुविघटनादिपूर्वकं द्रौपदीकेशसंयमनस्य निश्चयेन कर्त्तव्यत्वाभिधानम् । वसन्ततिलकं वृत्तम् ।

अत्रेत्यादि ।—उपक्षेपममात्रम्—उत्थापनमात्रम । बहुलीकरणं—विस्तरेण सूचनम् । उक्तेनैव—कवितेनैव । अन्यथा वैपरीत्येन, अधिकारात् क्रमेण अपीत्यर्थः ।

## लक्ष्मी

परिन्यासलक्षणं दर्शयति—तन्निष्पत्तिरिति । तस्य काव्याभिधेयरूपस्येतिवृत्तस्य निष्पत्तिः निश्चयापत्तिः तद्रूपतया परितो हृदये न्यसनमुपस्थितिः परिन्यास इति ।

उदाहरति—यथेति। तत्रैव वेण्यामेवेत्यर्थः। चञ्चदिति। द्रौपदीं प्रति भीमस्योक्तिरियम्। हे देवि महिषि द्रौपदि !भीमः, चञ्चता चलता भुजेन भ्रमिता घूर्णिता चण्डा कठोरा या गदा तस्या अभिघातेन ताडनेन सञ्चूर्णितम् ऊरुयुगलं जङ्घाद्वयं यस्य तस्य तादृशस्य मुखेन घात इति सुयोधनस्तस्य दुर्योधनस्येत्यर्थः, स्त्यानेन स्निग्धेन 'स्त्यानं स्निग्धे प्रतिध्वाने घनत्वालस्ययोरपि' इति मेदिनी, अवनद्धं सम्बद्धं धन निबिडं शोणितं रुधिरं तेन शोणौ रक्तवर्णौ पाणी करौ यस्य स तथोक्तः सन् तव कचान् केशान् दुःशासना कर्षणेन स्खलितानित्यर्थः, उत्तंसयिष्यति विभूषयिष्यति। वसन्ततिलकाच्छन्दः।

अत्र भाविन्या दुय्यर्धोनोरुभङ्गात्मककाव्यार्थस्य निश्चयेनोपस्थितेः परिन्यासः।

उक्तत्रयाणामुपेक्षादीनां भेदं स्पष्टयति—अत्रेत्यादिना। इतिवृत्तिलक्षणस्य वृत्तान्तस्वरूपस्य काव्याभिधेयस्य काव्यप्रतिपाद्यस्य उपक्षेपणम् उपस्थापनं तन्मात्रम् मात्रपदोपादानेनेतरयोः बहुलीकरणपरिन्यसनयोः व्यावृत्तिः। निश्चयापत्तिरूपतया निश्चयस्य भाविकर्त्तव्यनिश्चयस्य आपत्तिरापादनम् उपस्थितिरिति यावत्। हृदये बोद्धुश्चित्ते। न्यसनम् उपस्थापनम्। एतानीति उपेक्षादीनि त्रीणि इत्यर्थः। पौर्वापर्य्येण भवन्तीति अङ्गान्तराणि प्रतिपाद्यमानविलोमादीनि तु अन्यथापि प्रतिपाद्यमानक्रमभिन्नक्रमेणापि भवन्तीत्यत्र पूर्वेण सम्बन्धः। तेषामन्योन्यभिन्नस्वरूपत्वेनान्योन्यनिरपेक्षत्वादिति भावः।

## रुचिरा

परिन्यासं लक्षयति—३८२ **तन्निष्पत्तिरि**त्यादिना।

३८२ **तन्निष्पत्ति**स्तस्य काव्यार्थस्य निष्पत्तिर्निश्चितमभिधानम्। **परिन्यासः**। तथाऽह भरतः—'भविष्यद्वस्तुकथनं परिन्यासं प्रचक्षते' इति।

उदाहरति—**यथे**त्यादिना।

**यथा तत्र** वेणीसंहारे **एव**—"हे **देवि** राजसूये कृताभिषेके द्रौपदि ! **चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितरुयुगलस्य** चञ्चन् स्फुरन्। यो भुजो बाहुस्तेन भ्रमिता घूर्णिता चण्डा भयङ्करा गदा तस्या अभिघाताः प्रहारस्तेन सञ्चूर्णितमूरुयुगलं यस्य तादृशस्य। **सुयोधनस्य** न तु दुर्योधनस्य एतेन तस्य निरायासवध्यत्वं सूचितम्। **स्त्यानावनद्धघनशोणितशोणपाणिः** स्त्यानं स्निग्धं यदवनद्धं संसक्तं तथाभूतं घनं गाढं यत् शोणितं रुधिरं तेन शोणो रक्तवर्णः पाणिर्यस्य तथाभूतः 'स्त्यानं स्निग्धे प्रतिध्वानेघनात्वालस्ययोरपि। इति मेदिनी। **भीमः**। तवकचान् केशान्। "चिकुरः कुन्तलो बालः कचः केशः शिरोरुह" इत्यमरः। उत्तंसयिष्यति संस्करिष्यति। वसन्ततिलकं वृत्तम्॥ ३४४॥"

सिंहनिरीक्षणन्यायेन उपक्षेपादीनां परस्परं भेदं दर्शयति—अत्रेत्यादिना। स्पष्टम्।

विलोभनं लक्षयति—३८३ **गुणाख्यान**मित्यादिना।

गुणाख्यानं विलोभनम्।

यथा तत्रैव—'द्रौपदी—णाध, किं दुक्करं तए परिकुविदेण'। यथा वा मम चन्द्रकलायां चन्द्रकलावर्णने—'सेयम्, तारुण्यस्य विलासः—' इत्यादि (१३० पृ.)। यत्तु शाकुन्तलादिषु 'ग्रीवाभङ्गाभिरामं—' इत्यादि मृगादिगुणवर्णनं तद्वीजार्थसंबन्धाभावान्न संध्यङ्गम्। एवमङ्गान्तरामामप्यूह्यम्।

---

## विवृतिः

उपक्षेपादीनां त्रयाणां भेदं स्पष्टयति—अत्रेत्यादिना। किमिति। 'किं दुष्करं त्वया परिकुपितेन।' इति संस्कृतम्॥ हा (विला)सः प्रकाशः बीजार्थस्य कार्यस्य। एवमङ्गान्तराणामिति। बीजार्थसंबन्धेऽङ्गत्वम्। नान्यथेत्यर्थः॥

## विवृतिपूर्तिः

ग्रीवेति। 'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्। दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मापश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्या प्रयाति॥' इति तु समस्तम्॥

## विज्ञप्रिया

विलोभनलक्षणमाह—गुणाख्यानमिति। किमिति। किं दुष्करं त्वया कुपितेन इति संस्कृतम्। इदं भीमस्य बलाधिक्यरूपगुणकथनम्। तारुण्यस्येति। अत्र विलासहासपदे तज्जनकपरे सारोपया लक्षणया प्रयुक्ते। अत्र चन्द्रकलासौन्दर्य्याख्यानम्। मृगादिगुणवर्णनमिति। गुणः—स्पृहणीयो धर्म्मः, अत्र क्रियारूपः। बीजार्थः—शकुन्तलाप्राप्तिबीजरूपोऽर्थः। मृगक्रियावर्णनस्य तदसम्बन्धत्वात्।

## कुसुमप्रतिमा

गुणेति। गुणानां पात्रविशेषगतशौर्य्यसौन्दर्य्यादीनाम् आख्यानमुक्तिः विलोभनं नामाङ्गम्। विशेषेण कर्त्तव्ये लोभजननं विलोभनमिति व्युत्पत्तेः।

यथेति। "नाथ! कि दुष्करं त्वया कुपितेन।" इति संस्कृतानुवादः। अत्र भीमस्य शौर्य्य प्रशंसया दुर्य्योधनादिनिधने लोभजननादिलोभनम्। तारुण्यस्येत्यादौ च नायिकायामात्मनो लोभप्रतिपादनाहिलोभनम्।

यत्त्विति। बीजार्थ सम्बन्धाभावात् शकुन्तला प्रति दुष्मन्तानुरागरूपबीजार्थ सम्पर्काभावात्। एवं बीजार्थ सम्बन्धाभावे सन्ध्यङ्गत्वराहित्यम्।

## विमला

विलोमनमाह, गुणाख्यानमिति ।—गुषानाम् आख्यानं—कथनं, विलोभनं—विशेषेण लोभप्रदर्शनमित्यर्थः, उत्तेजनं वा ।

उपक्षेपादीनां त्रयाणां भेदं स्पष्टयति, यथा तत्रेत्यादिना ।—णाधेति ।—["नाथ ! किं दुष्करं त्वया परिकुपितेन ?" इति संस्कृतम्] । विलासः,—प्रकाशः । बीजार्थस्य—कार्य्यस्य । एवमङ्गान्तराणामियत्र बीजार्थसम्बन्धेऽङ्गत्वं,

## लक्ष्मी

विलोभनलक्षणं निरूपयति—गुणाख्यानमिति । गुणानां पात्रविशेषगतवदनसौन्दर्य्यादीनाम् आख्यानं कथनं विशेषेण कर्त्तव्यविषये लोभोत्पादनं विलोभनं नामाङ्गम् ।

उदाहरति—यथेति । 'नाथ ! किं दुष्करं त्वया कुपितेन' इति संस्कृतम् । 'चञ्चद्भुज' इति श्लोकानन्तरं द्रौपद्या उक्तिरियम् । अत्र भीमस्य बलाधिक्यरूपगुणकथनेन सुयोधनादिवधे लोभोत्पादनाद्विलोभनम् । तारुण्यस्येत्यत्र च नायिकायां चन्द्रकलायां सौन्दर्य्यख्या पनेन स्वस्य लोभजननाद्विलोभनम् । यथा च रत्नावल्याम्—'अस्तापास्तसमस्तभासिनभसः'—इत्यादिवैतालिकमुकेन चन्द्रतुल्यवत्सराजगुणवर्णनया सागरिकायाः समागमहेत्वनुरागबीजानुगुण्येनैव लोभप्रतिपादनाद्विलोभनम् । ग्रीवाभङ्गेति । सम्पूर्ण तु—

> **'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः ।**
> **पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।**
> **दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंसिभिः कीर्णवर्त्मा**
> **पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यो प्रयाति ॥'**

मृगादिगुणवर्णनमिति । गुणः स्पृहणीयो धर्मः, अत्र क्रियारूपः । बीजार्थः शकुन्तलाप्राप्तिरूपबीजोऽर्थः, मृगक्रियावर्णनस्य तदसम्बन्धात् सम्पर्काभावात् । न सन्ध्यङ्गं सन्ध्यङ्गत्वराहित्यम् । एवं बीजार्थसम्बन्धाभावे ऊह्यं सन्ध्याङ्गत्वराहित्यमूहनीयमित्यर्थः ।

## रुचिरा

३८३ **गुणाख्यानं** गुमानामाख्यानं कीर्तनम् । **विलोभनम्** । तथाह भरतः—'गुणनिर्वर्णनं तज्ज्ञैर्विलोभनमिति स्मृतम् ।' इति ।

उदाहरति—**यथेत्यादिना** ।

**यथा तत्र** वेणीसंहारे । **एव** । '**द्रौपदी** भीमं प्रत्याहे'ति शेषः । **णाध** ! नाथ **किं** किन्नामेत्यर्थः । **तुए** त्वया । **परिकविदेण** परिकुपितेन । **दुष्करं** दुष्करम् ।' तारुण्यस्येति व्याख्यातपूर्व पद्यम् ॥ ३४५ ॥

भ्रमापनोदायाह—**यत्तु** । **अभिज्ञानशाकुन्तलादिषु**—"**अनुपतति** पश्चादाधावनं कुर्वामे । **स्यन्दने** रथे । **बद्धदृष्टिर्द-**ग्रीवाभङ्गाभिरामं ग्रीवाया भङ्गः । किञ्चिद्विक्रीकरणं तेनाभिरामो यस्मिन्कर्मणि तद्यथा भवेत्तथा । **मुहुः** । **बद्धदृष्टिर्द-** ... **भूयसा**ऽधिकेन । **पश्चार्धेन** अर्धेङ्गेन । **प्रविष्टः** । त्तनेत्रः । **पूर्वकायम्** । **शरणतनभयात्** शरपातजनितभीत्या ।

**अर्घावलीढैरर्धभक्षितैः**। **श्रमविवृतमुखभ्रंशभिः** श्रमेण धआवनायासेन विवृतं व्यात्तंयन्मुखंतस्माद्भ्रस्यन्तीति तथोक्तैः। **दर्भैः**। कीर्णवर्त्मा कीर्णमितस्ततो दर्भक्षेपेण व्याप्तिं नीतं वर्त्म मार्गो येन तथोकतः। **उदग्रप्लुतत्वादुद-ग्रमुत्कटं** प्लुतस्तस्य भावस्तत्त्वं तस्मात्। **वियति** आकाशे। **बहुतरमत्यधिकम्**। **उर्व्यां** पृथ्वीतले। पुनरिति शेषः। 'वसुधोर्वी वसुन्धरा' इत्यमरः। **स्तोकमल्पम्**। 'स्तोकाल्पक्षुल्लकाः श्लेक्ष्ण' मित्यमरः। मृग इति पूर्वतोऽऽनुष-ज्यते। **प्रयाति**। **पश्य**। "सूत ! दूरममुना सारङ्गेण वयमाकृष्टाः। अयं पुनरिदानीमपि" इत्युक्त्वा मृगधावनं दर्शयतो महाराजदुष्यन्तस्य सूतं प्रत्युक्तिरियम्। स्रग्धरावृत्तम्। स्रग्धरा म्रौ भ्रौ यौ य् त्रिःसप्तकैरिति तल्लक्षणम्॥ ३४६॥

**इत्यादिमृगादिगुणवर्णन**मित्यादिना मृगादीनां गुणवर्णनम्। **तद्बीजार्थसम्बन्धाभावात्**तद्बजार्थस्य मुख्या-र्थस्य सम्बन्धस्तस्यभावस्तस्मात्। **सन्ध्यङ्गम्**। **न**। ज्ञेयमिति शेषः। **एवं** यथा नेदं विलोभनसन्ध्यङ्गं तथेति भावः। **अङ्गान्तराणामन्येषां** सन्ध्यङ्गानामिति भावः। **अपि**। **ऊह्यम्**।

**संप्रधारणमर्थानां युक्तिः—**

यथा—वेण्यां सहदेवो भीमं प्रति—'आर्य, किं महाराजसंदेशोऽयमव्युत्पन्न इवार्येण गृहीतः ।' इत्यतः प्रभृति यावद्भीमवचनम् ।

**'युष्मान्ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः ।**

**न लज्जयति दाराणां सभायां केशकर्षणम् ॥'** इति ।

---

## विवृतिः

युक्तिः कर्तव्यत्वनिश्चयः । अव्युत्पन्नोऽविचार्यः ॥

ह्रेपयति लज्जयति । णाधेति ।

## विज्ञप्रिया

युक्तिलक्षणमाह—सम्प्रधारणमिति । उद्देश्यार्थोपपादकयुक्तिप्रदर्शनम् ।

## कुसुमप्रतिमा

सम्प्रेति । अर्थानां कर्त्तव्यविषयाणां सम्प्रधारणम् अवधारणं युक्तिर्नामाङ्गम्; सिद्धान्तबुद्ध्या योगो युक्तिरिति व्युत्पत्तेः ।

यथेति । महाराजस्य युधिष्ठिरस्य सन्देशी मयि विन्यस्तं वाचिकम् अव्युत्पन्न एव सदसत्तया अविचारित एव, आर्य्येण भवता ।

युष्मानिति । क्रोधात्, शत्रुकुलस्य क्षयी विनाशः लोकसमाजे युष्मान् ज्ञेपयति लज्जयति; किन्तु सभायां दाराणां भार्य्यायाः केशकर्षणं कर्त्तृ युष्मान् न लज्जयति एतन्महदेवाश्चर्य्यमिति भावः ।

अत्र शत्रु कुलक्षयस्य कर्त्तव्यताधारणाद्युक्तिः ।

## विमला

युक्तिमाह, सम्प्रधारणमिति ।—अर्थानां—कर्त्तव्यानां, सम्प्रधारणं—निश्चयः, युक्तिः ।

उदाहरति, यथेति ।—अव्युत्पन्नः,—अनवहितः, अविचार्य्य इति यावत्,

युष्मानिति ।—क्रोधात् शत्रुणां कुलक्षयः युष्मान् लोके—जगति, ज्ञेपयपि—लज्जयति, सभायां द्वाराणां—पत्नया इत्यर्थः, केशकर्षणं न लज्ज्यति ? अत्त शत्रुकुलक्षयस्य कार्य्यस्य निश्चयेन कर्त्तव्यतासूचनम् । पथ्यावक्त वृत्तम् ।

## लक्ष्मी

युक्तिलक्षणं निरूपयति—संप्रधारणमिति। अर्थानां कर्त्तव्यविषयाणां सम्प्रधारणम् उद्देश्यार्थोपपादक-युक्तिप्रदर्शनम्, सिद्धान्तबुद्धया योगो युक्तिर्नामाङ्गम्।

उदाहरणं दर्शयति—यथेति। आर्य !

**कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन्।**

**तिष्ठति प्रकृताचारे यः स आर्य इति स्मृतः॥**

इत्युक्तगुणसंपन्न ! महाराजस्य युधिष्ठिरस्य सन्देशः मयि स्थितं वाचिकं 'सन्देशवाग्वाचिकं स्या' दित्यमरः। अव्युत्पन्न एव तात्पर्य्याविषय एव आर्य्येण भवता गृहीत अवगतः, तत्तात्पर्य्यानभिज्ञो भवानित्यर्थः।

युष्मानिति। क्रोधात् रोषात् शत्रुकुलस्य वैरिवंशस्य क्षयो विनाशः लोके संसारे युष्मान् सन्ध्यर्थे यतमानान् पाण्डवान् ह्रेपयति लज्जयति। सभायां परिषदि न तु रहसि दाराणां स्त्रीणाम्, केशाकर्षणं कचाकर्षणम्, (कर्त्तृ) युष्मान् न लज्जयति ह्रेपयति। सभायां द्रौपदीकेशाकर्षणतोऽधिकं न किञ्चिदपि लज्जाजनकमिति न लज्जयतीत्येतन्महदाश्चर्य्यमिति भावः। पथ्यावक्त्र छन्दः। अत्र वैरिवंशविनाशस्य कर्त्तव्यतोपपादकाद् युक्तिः।

## रुचिरा

युक्तिं लक्षयति—३५० **सम्प्रधारण**मित्यादिना।

३५० **अर्थानां** सन्दर्भप्रयोजनानाम्। **सम्प्रधारणं** कर्तव्यरूपेण निश्चयम्। **युक्तिः**।

उदाहरति—**यथे**त्यादिना।

**यथा। वेणीसंहारे। सहदेवः। भीमं 'प्रत्याहे**'ति शेषः। **'आर्य्य !** "कर्तव्यमाचरन् काममकर्तव्यममाचरन्। तिष्ठति प्रकृताचारे यः स आर्य इति स्मृतः।" इत्युक्तगुणसम्पन्न। **किं** प्रश्नार्थभिदम्। **महाराजस्य** युधिष्ठिरस्य। **अयं** युद्धे कुलक्षयो भविष्यति इति सन्धिरेव कर्तव्य इत्यभिप्रायावेदनरूपः। **सन्देशः आर्येण** पूज्येन भवता। **अव्युत्पन्नो**ऽनिर्धारितः। **इव। गृहीतः। 'इत्यतः प्रभृत्यारभ्य** (इदमव्ययम्)**' युष्मान्सन्ध्यर्थं** यतमानान् पाण्डवानिति भावः। **लोके** संसारे। **क्रोधात्। शत्रुकुलक्षयः** शत्रूणां कुरूणां कुलक्षयः। **ह्रेपयति** लज्जां नयति। **सभायां** न तु रहसि। **दाराणां** द्रौपद्याः। अत्र "दाराः पुम्भूम्नी"त्यमरोक्त्या बहुवचनम्। **कैशकर्षणं** शत्रुकृतमिति शेषः। **न** "पुन"रिति शेषः। **लज्जयति** लज्जायुक्तान्करोति॥ ३४७॥ **इति** भीमवचनं **यावत्पर्यन्तम्**।

**प्राप्तिः सुखागम ॥ ८४ ॥**

यथा तत्रैव—'मथ्नामि कौरवशतं समरे न कोपात्—' इत्यादि (२४२ पृ.)। 'द्रौपदी—(श्रुत्वा। सहर्षम्।) णाध, अस्सुदपुव्वं वक्खुतु एदं वअणम्। ता पुणो पुणो भण।'

---

## विवृतिः

'नाथ, अश्रुतपूर्वं खल्विदं वचनम्। तत्पुनः पुनर्भण।' इति संस्कृतम्। आगमनं प्रधाननायकाभिमतत्वेन ज्ञानम्॥

## विवृतिपूर्तिः

प्राप्तिरिति। नाट्यशास्त्रेऽप्युक्तम्—'सुखार्थस्याभिगमनं प्राप्तिरित्यभिधीयते॥' इति॥

## विज्ञप्रिया

प्राप्तिलक्षणमाह—प्राप्तिरिति। णाधेति। नाथ! अश्रुतपूर्वं खलु ईदृशं वचनम्, तत्पुनः पुनर्भण इति संस्कृतम्।

## कुसुमप्रतिमा

प्राप्तिरिति। सुखागमः पात्रविशेषस्य सुखलाभः प्राप्तिर्नामाङ्गम। अत्र व्युत्पत्तिः स्पष्ट।

प्राप्तिरिति। सुखागमः पात्रविशेषसा सुखलाभः प्राप्तिर्नामाङ्गम्। अत्र व्युत्पत्तिः स्पष्टा।

यथेति। "नाथ! अश्रुतपूर्वं खल्वे तद्वचनम्, तत् पुनः पुनर्भण।" इति संस्कृतानुवादः। अत्र मथ्नामीत्यादिभीमवाक्यश्रवणेन द्रौपद्या सुखलाभात् प्राप्तिः।

## विमला

प्राप्तिमाह, प्राप्तिरिति।—मुखस्य आगमः,—उदयः, लाभ इत्यर्थः, प्राप्तिः। यथोक्तं नाट्यशास्त्रकारैः,—"सुखार्थस्याभिगमनं प्राप्तिरित्यभिधीयते।" इति।

णाधेति।—["नाथ! अश्रुतपूर्वं खल्विदं वचनं, तत् पुनः पुनर्भण इति संस्कृतम्]। अत्र भीमवाक्यस्य सुखहेतुता पुनः पुनरिति सोत्कण्ठश्रवणावेदनेन द्रौपद्याः प्रतीयते।

## लक्ष्मी

प्राप्तिलक्षणं निरूपयति—प्राप्तिरिति। सुखागमः पात्रविशेषस्य आनन्दावाप्तिः प्राप्तिर्नामाङ्गम्।

उदाहरति—यथेति। तत्रैव वेण्यामेव। मथ्नामीति। व्याख्यातं प्राक् (२८४ पृ.) णाहेति। 'नाथ! अश्रुतपूर्वं खल्विदं वचनम्, तत्पुनर्भण' इति संस्कृतम्। अनेन भीमक्रोधबीजान्वयेनेव सुखप्राप्त्या द्रौपद्याः प्राप्तिः।

यथा च रत्नावल्याम्—'सागरिका (श्रुत्वा सहर्ष परिवृत्य सस्पृहं पश्यन्ती) 'कधं अ ओ' इत्यारभ्य 'बहुमदं संजादम्' इत्यन्तेन सागरिकायाः सुखागमात्प्राप्तिः ।

## रुचिरा

प्राप्तिं लक्षयति—३५१ **प्राप्तिरित्यादिना** ।

३५१ **सुखागमः** सुखस्यागमः केनापि कार्येण लाभः । **प्राप्तिः** । ३९९ ॥

उदाहरति—**यथेत्यादिना** ।

**यथा** । **तत्र** वेणीसंहारे । एव '**मथनामीति**'व्याख्यात्पूर्वम् ॥ ३४८ ॥ **इति** । **श्रुत्वा** भीमप्रतिज्ञावचनमाकर्ण्य । **द्रौपदी** । **(सहर्षम्) जनान्तिकं** । सर्वेषां समक्षमिति भावः । 'अन्योन्यामन्त्रणं यस्यात्तज्जानान्ते जनान्तिक'-मिति भरतः । "**णाह** । नाथ ! **दे** तव । **एदिसं** ईदृशम् । **वअणं** वचनम् । **अस्सुदपूण्वं** अश्रुतपूर्वम् । **क्खु** **खलु** । **ता** तस्मात् । **पुणोपुणो** पुनःपुनः । **दाव** तावत् । **भणाहि** भण ।" अत्र हि भीमस्य वचनाकर्णनाद् द्रौपाद्याः सुखागमः ।

**बीजस्यागमनं यत्तु तत्समाधानमुच्यते ।**

यथा तत्रैव—'(नेपथ्ये ।) भो भो विराटद्रुपदप्रभृतयः, श्रूयताम्—

**यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं**

**यद्विस्मर्तुमपीहितं शमवता शान्ति कुलस्येच्छता ।**

**तद् द्यूतारणिसंभृतं नृपसुताकेशाम्बराकर्षणैः**

**क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते ॥'**

अत्र 'स्वस्था भवन्तु मयि जीवति— इत्यादि (२८६ पृ.) बीजस्य प्रधाननायकाभिमतत्वेन सम्यगाहितत्वात्समाधानम् ।

---

## विवृतिः

द्यूतमक्षक्रीडैवारणिर्निर्मन्थनकाष्टं तेन संभृतमुत्पादितम् ॥

## विवृतिपूर्ति

महदिति । नृपसुताकेशाम्बराकर्षणैर्महदिति योजना ॥

## विज्ञप्रिया

समाधानलक्षणमाह—बीजस्येति । उक्तस्य उद्देश्यबीजस्य प्रधाननायकसम्मतत्वेन कथनं तत् ।

यत्सत्येति । यत् यौधिष्ठिरं क्रोधज्योति इति सर्वत्र विशेषणम् । द्यूतारणीति । द्यूतरूपायामरण्यां मन्थनकाष्ठे नृपसुताया द्रुपदसुताया द्रौपद्याः केशस्याऽम्बरस्य चाकर्षणात् सम्भृतक्रोधज्योतिरग्निः । अन्यदपि हि ज्योतिररण्यामाकर्षणात्सम्भृतं भवति ।

समाधानपदस्य योगार्थमत्रोपपादयति—अत्रेति । अत्र भीमोक्त बीजस्य प्रधाननायकयुधिष्ठिरसम्मत-तत्वकथनम् ।

## कुसुमप्रतिमा

बीजस्येति । बीजस्य "अस्यमात्रं समुद्दिष्टम्" इत्यादिप्रागुक्तलक्षणस्य मूलकारणस्य यत् आगमनं प्रधानपात्रागतत्वेन पुनरुपस्थितिः, तत्तु समाधानं नामाङ्गमुच्यते, बीजस्य सम्यक् स्थापनं समाधानमिति व्युत्पत्तेः ।

यदिति । सत्यव्रतस्य सत्यपालनरूपनियमस्य भङ्ग्याद्भीरु मनो यस्य तेन युधिष्ठिरेण कर्त्रा यत्रेण कोलावेगस्य दुर्निवारतया यत्रक्रमेण यत् मन्दीकृतम् अल्पोकृतम्, शमवता स्वभावत एव शान्तिगुणशालिना अतएव कुलस्य वंशस्य शान्तिमिच्छता युधिष्ठिरेण यत् विस्मर्त्तुमपि ईहितं चेष्टितम्, द्यूतम् अक्षक्रीडैव अरणिर-ग्न्युत्पादनकाष्ठं तेन सम्भृतम् उत्पादितम्, नृपसुताया दुपदराजनन्दिन्याः केशस्य अम्बरस्य वचनस्य च आकर्षणैः

तत्स्वरूपवातैः सन्धु क्षितमिति तात्पर्य्यम्, तदिदं युधिष्ठिरस्येदमिति यौधिष्ठिरं महत् क्रोधज्योतिः क्रोधवह्निः, कुरुः कुरुकुलमेव वनं तस्मिन् जृम्भते प्रसरति ।

उदाहृते लक्षणं सङ्गमयन् समाधआनशब्दस्य व्युत्पत्तिमाह अत्रेति । आदिबीजस्य क्रोधोहीपितभीमसेनोत्साहस्य । सम्यगाहितत्वात् यथायथं कविना नाटके स्थापितत्वात् ।

## विमला

समाधानमाह, बीजस्येति ।—बीजस्य—मूलकारणस्य, आगमनं—प्रधान लक्ष्यगतत्वेन कीर्त्तुन, प्रधाननायकाभिमतत्वेन ज्ञानं वा इत्यर्थः, यत् तत् तु समाधानम् उच्यते ।

उदाहरति, यदिति ।—सत्यव्रतस्य—सत्यरक्षणरूपनियमस्य, द्वादशवर्षवनवासरूपस्य एकवर्षाज्ञातवासरूपस्य चेत्यर्थः, भङ्गात् भीरु मनः यत्र तादृशेन, यत्नेन यत्—क्रोधज्योतिरित्यर्थः, एवमुत्तरत्रापि, मन्दीकृतं—खर्वीकृतं, कुलस्य शान्तिम्—अक्षयतामित्यर्थः, इच्छता शमवता—शान्तेन मनसा, यत् विस्मर्त्तुमपि ईहितं—चेष्टितं, द्यूतमेव अरणिः,—अग्निमन्थनदारुविशेषः, तेन सम्भृतं—समुत्पादितं, नृपसतायाः,—द्रौपद्याः, केशानाम् अम्बरस्य—वस्त्रस्य, च आकर्षणैः,—आकर्षणैः,—आकर्षणरूपैर्वायुभिरिति भावः, उद्दीपितमिति शेषः, तत् महत् इदं, युधिष्ठिरस्य इदं यौधिष्ठिरं, क्रोधज्योतिः, कोपाग्निरित्यर्थः, कुरुवने—कुरव एव वनं, दाह्यत्वादिति भावः, तस्मिन जृम्भते—परिस्फुरति । शार्दूलविक्रीडितं वृत्तम् ।

अत्रेति ।—आदिबीजस्य—भीमसेनात्साहरूपस्य इत्यर्थः, सम्यगाहितत्वात्—सम्पूर्णतया उत्तेजितत्वादित्यर्थः ।

## लक्ष्मी

समाधानाङ्गलक्षणं निरूपयति—बीजस्येति । बीजस्य 'अल्पमात्रं समुद्दिष्टम्' इत्यादिपूर्वोदितस्वरूपस्य आदिकारणस्येत्यर्थः, यदागमनं प्रधाननायकाभिमतत्वेन पुनरुपस्थितिः, तत्तु बीजस्य सम्यगासमन्तात् धानं पोषणं समाधानं नामाङ्गमुच्यते ।

उदाहरति—यथेति । तत्रैव वेण्यामेव । भो भोः सम्भ्रमे द्विरुक्तिः । द्रुपदविराटवृष्ण्यन्दकसहदेवप्रभृतयः—द्रुपदश्च विराटश्च वृष्णयश्च अन्धकाश्च सहदेवप्रभृतयश्चेति तत्सम्बुद्धौ तथोक्ताः । अत्र वृष्णयो वृष्णिवंश्या अन्धका अन्धकवंश्या इति लक्षणाऽर्थो विधेयः । अन्यत्तु स्पष्टमेव । अस्मदक्षौहिणीपतयः पाण्डवाक्षौहिणीस्वामिनः, अक्षौहिणी च—

अक्षौहिण्यामित्यधिकैः सप्तत्या ह्यष्टभिः शतैः । संख्या युक्ता सहस्राणि गजानामेकविंशतिः ॥

एवमेव रथानां तु संख्यानं कीर्त्तितं बुधैः । पञ्चषष्टिः सहस्राणि षट् शतानि दशैव तु ॥

संख्यातास्तुरगास्तज्ज्ञैर्विना रथतुरगमैः । नृणां शतसहस्रं तु सहस्राणि नवैव तु ॥

शतानि त्रीणि चान्यानि पञ्चादश पदातयः ॥

गजाः......२१८७०

अश्वाः......६५६१० एतेऽक्षौहिणीपदवाच्याः ।

पदातयः......१०९३५०

कौरवचमूप्रधानयोधाः कौरवचमूमुख्ययोद्धारः। चम्बश्च—

एके भैकरथाः त्र्यश्वा पत्तिः पञ्चपदातिका। पत्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम्।

सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः। अनीकनी........इत्यमरः।

गजाः.......७२९

अश्वाः.......२१८७

पदातयः.......३६४५

यत्सत्यव्रतेति। सत्यमेव व्रतं सत्यव्रतं तस्य सत्यपालनरूपनियमस्य भङ्गात् विच्छेदाद् भीरु भीतं मनो यस्य तेन तथोक्तेन युधिष्ठिरेण (कर्त्रा) यत्नेन क्रोधावेगस्य दुर्निवारतया आयासेन यत् क्रोधज्योतिः क्रोधाग्निज्वाला मन्दरीकृतम् अल्पीकृतं न तु विनाशितमिति भावः, क्रोधमन्दो यदि न भवेत्तदा सत्यभङ्गः स्यादित्येवं भीरुरित्याशयः। शमवता स्वभालषत एव शान्तिगुणशालिना अत एव कुलस्य अन्वयस्य शान्ति शमनम् इच्छता अभिषलता मया युधिष्ठिरेण यत् विस्मर्त्तुमपि ईहितम् चेष्टितम्, द्यूतम् अक्षक्रीडैव अरणिः वह्नि मन्थनदारु इव तेन सम्भृतम् उत्पन्नम्, नृपसुतायाः द्रुपदपुत्र्याः केशस्य कचस्य अम्बरस्य वस्त्रस्य च आकर्षमैः तत्स्वरूपवातैः सन्धुक्षितमित्याशयः। तदिदं यौधिष्ठिरं युधिष्ठिरे भवं महत् क्रोधज्योतिः ज्योतिरिव क्रोध इत्युपमितसमासः, कोपवह्निरित्यर्थः। कुरुवने वन इव कुरुराजे जृम्भते प्रकाशते। शार्द्दूलविक्रीडितं छन्दः।

समाधानपदस्य योगार्थमत्रोपपादयति—अत्रेति। बीजस्य क्रोधोद्दीपितभीमसेनोत्साहस्येत्यर्थः। सम्यगाहितत्वात् यथाक्रमं कविना नाटके उपन्यासादित्यर्थः।

## रुचिरा

समाधानं लक्षयति—३८६ **बीजस्येत्यादिना**।

३८६ **यत्**। **च**। त्विति पाठान्तरम्। **बीजस्य** प्रधानकरणस्य। **आगमनं** प्रधानतया कीर्तनम्। **तत्**। **समाधानम्**। **उच्यते**।

उदाहरति—**यथेत्यादिना**।

**यथा**। **तत्र** वेणीसंहारे। **एव**। **"(नेपथ्ये कलकलानन्तरम्) भोभोः** सम्भ्रमे द्विरुकितः। **अस्मदक्षौहिणीपतयः** अस्माकं पाण्डवानामक्षौहिण्यः सेनाविशेषास्तेषां पतयः! **द्रुपदविराटवृष्ण्यन्धकसहदेवप्रभृतयः** द्रुपदश्च विराटश्च वृष्णयश्च अन्धकारश्च सहदेवप्रभृतश्चेति तत्सम्बुद्धौ तथोक्ताः! वृष्णयो वृष्णिवंश्या अन्धका अन्धकवंश्या इति लक्ष्योऽर्थः। अन्यत्स्पष्टम्। **च तथा**। **कौरवचमूप्रधानयोधाः** कौरवाणां चम्बः सेनाविशेषास्तेषां प्रधानाः प्रधानभूता योद्धार इति तत्सम्बुद्धौ तथोक्ताः! 'एकेभैकरथा त्रयश्वा पत्तिः पञ्चपदातिका। पत्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्यां यथोत्तरम्। सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः। अनीकिनी' त्यमरः। **भवन्तः**। **शृण्वन्तु**। **सत्यव्रतभङ्गभीरुमनसा** सत्यमवश्यमनुष्ठेयं यद्व्रतं नियमस्तस्य द्वादशाब्दान्तं वने न्यूष्य पुनरेकाब्दं यत्र क्वाप्यज्ञाता निवत्स्याम इत्यात्मिकायाः प्रतिज्ञाया इति भावः भङ्गस्तेन भीरु भीतं मनो यस्य तेन। 'मये'ति शेषः। **यत्नेन**। **यत्**। **मन्दीकृतम्**। **तत्**। **द्यूतारणिसम्भृतं** द्यूतमेवारणिरग्न्युद्भावनदारु तेन सम्भृतमुत्पाद्य प्रत्यक्षतां नीतम्। **नृपसुता-**

**केशाम्बराकर्षणे** नृपो द्रुपदराजस्तस्य या सुता तस्याः केशाश्चाम्बरं च तेषामकर्षणानि तैः । **महत्प्रदीप्तमिति भावः । इदम् । यौधिष्ठिरं** युधिष्ठिरस्य (मम) इदमिति तथोक्तम् । **क्रोधज्योतिः** क्रोधाग्निज्वाला । **कुरुवने** 'कुरुकुले' इति पाठान्तरम् । **जृम्भते** । अत्र शार्दूलविक्रीडितं वृतम् ॥ ३४९ ॥"

इत्यत्र **"स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः" इत्यादिबीजस्य** भीमसेनोत्साहबीजस्या **प्रधाननायकाभिमतत्वेन** प्रधाननायकस्य युधिष्ठिरस्याभिमतत्वं तेन । **सम्यक् । आहितत्वात्** स्थापितत्वात् । **समाधानम्** ।

**सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम् ॥ ८५ ॥**

यथा बालचरिते—

**'उत्साहातिशयं वत्स ! तव बाल्यं च पश्यतः ।**

**मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः ॥'**

यथा वा मम प्रभावत्याम्—'नयनयुगासेचनकम्—'इत्यादि (२०४ पृ.) ।

---

## विवृतिः

उत्साहातिशयमिति । श्रीरामं प्रतिभार्गवस्योक्तिरियम् । बाल्यमविचारितं कर्म हरकार्मुकभङ्गरूपम् । यद्वा बाल्यं बालकत्वम् । बालकेन सह समरः कर्तव्यं इति दुःखम् । अत्र भार्गवस्य श्रीरामपराभवोद्यमरूपोऽर्थः सुखदुःखाभ्यां विहितः ॥

## विज्ञप्रिया

विधानरूपाङ्गलक्षणमाह—सुखदुःखाभ्यां कृतोऽर्थ इत्यर्थः । उत्साहेति । इदं रामं प्रति जनकस्य वाक्यम् । अत्र उत्साहेन सुखम् । बाल्येन च दुःखम् । नयनयुगेत्यत्र यथोक्तार्थेन सुखम् । तद्विरहाद् दुःखम । नयनयुगेत्यत्र यथोक्तार्थेन सुखम् । तद्विरहाद् दुःखम् ।

## कुसुमप्रतिमा

सुखेति । सुखेन च कृतो विहिती योऽर्थो विषयस्तद्विधानमिति नाम्ना अङ्कं स्मृतम्, विधीयत इति व्युत्पत्ते उत्साहेति । श्रीरामं प्रतिपरशुरामेणोक्तमिदम् । हे वत्स ! तव उत्साहातिशयं बाल्यं शैशववयश्च पश्यतो मम मनो युगपत् हर्षविषादाभ्याम् आक्रान्तम् । तथा च उत्साहातिशयदर्शनेन बाल्य एव महावीरत्वावधारणात् हर्षः, शैशववथोदर्शनेन च हन्तव्यत्वे वात्सल्योदयाद्विषाद इत्याशयः ।

अत्र मनस आक्रमणस्य सुखदुःखाब्यामुभाभ्यमेव कृतत्वाद्विधानम् ।

प्रकारान्तरेणोदाहरणमाह यथा वेति । अत्र चान्दनसन्तापाभ्यां हृदयस्य सम्बन्धकरमाद्विधानम् ।

## विमला

विधानमाह, मुखेति ।—सुखदुःखाभ्यां कृतः,—विमिश्रित इत्यर्थः, यः अर्थः,—कार्य्यं, तद्विधानमिति स्मृतम् । यथाऽऽहुः,—"विधानं दुःखसुखघोर्विमिश्रं यदि वर्णनम्" इति ।

विधानमाह, सुखेति ।—सुखदुःखाभ्यां कृतः,—विमिश्रित इत्यर्थः, यः अर्थः,—कार्य्यं, तद्विधानमिति स्मृतम् । यथाऽऽहुः,—"विधानं दुःखसुखयोर्विमिश्रं यदि वर्णनम्" इति ।

उदाहरति, उत्साहातिशयमिति ।—श्रीरामं प्रति परशुरामस्योक्तिरियम् । हे वत्स ! तव उत्साहातिशयं, बाल्यम्—अविचारितं कर्म, हरकार्मुकभङ्गरूपमित्याशयः, यद्वा,—बाल्यं—शैशवं, च पश्यतः नम मनः हर्षविषा-

दाभ्यां युगपत् आक्रान्तम्। तव उत्साहदर्शने भविष्यन्महावीरत्वसम्भावनया हर्षः, बाल्यदर्शनेन, "अहं कथमनेन सह योत्स्ये?" इति विषादः, इत्युभयोर्विमिश्रणं बोध्यम्।

अत्र भार्गवस्य रामपराभवोद्ययमरूपोऽर्थः सुखदुःखाभ्यां विहितः।

## लक्ष्मी

विधानाङ्गलक्षणं निरूपयति—सुखदुःखकृत इति। सुखदुःखाभ्यां कृतो विहितोऽर्थः विषयस्तद्विधीयत इति विधानं तन्नामाङ्गं स्मृतम्।

उदाहरति—यथेति। बालचरिते बालरामचन्द्रचरितप्रधाने कस्मिंश्चिद्रूपके परशुरामः 'रामं प्रत्याह' इति शेषः।

उत्साहेति। हे वत्स राम! तव उत्साहातिशयं बाल्यं शैशववयश्च पश्यतोऽवलोकयतः मम मनो युगपत् हर्षविषादाभ्याम्। सुखदुःखाभ्याम् आक्रान्तं संयुक्तम्। तथा चोत्साहातिशयावलोकनेन महावीरत्वनिश्चयात् सुखम्, शैशवावस्थायां हरकार्मुकभङ्गरूपाविचारितकर्मकरणेन तेन सह समरः कर्त्तव्य इति दुःखमिति भावः। अत्र परशुरामस्य श्रीरामपराभवोद्यमरूपोऽर्थः सुखदुःखाभ्यामुभाभ्यामेव विहितत्वाद्विधानम्।

एवं मालतीमाधवे प्रथमङ्के माधवः—

**'यान्त्या मुहुर्वलितकन्धरमाननं तदावृत्तवृत्तशतपत्रनिभं वहन्त्या।**

**दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षम्॥**

**यद्विस्मयस्ति-मितमस्तमितान्यभावमानन्दमन्दममृतप्लवनादिवाभूत्।**

**तत्सन्निधौ तदधुना हृदयं मदीयमङ्गारचुम्बितमिव व्यथमानमास्ते॥'**

इत्यनेन मालत्यवलोकनस्यानुरागस्य समागमहेतोर्बीजानुगुण्येन च माधवस्य सुखदुःखकारित्वाद्विधानम्।

प्रकारान्तरेणोदाहरति—यथा वेति। नयनयुगेत्यत्र (२३६ पृ.) यथोक्तार्थेन सुखम्, तद्विरहाद्दुःखम्, तथा च सुखदुःखाभ्यां मनसः सम्बन्धविधानाद्विधानम्।

## रुचिरा

विधानं लक्षयति—३८७ यः। **सुखदुःखकृतः** सुखदुःखाभ्यां कृतो मिश्रितः। **अर्थः। तत्। विधानम्। इति। स्मृतम्।** । ३८१॥

उदाहरति-**यथा। बालचरिते** बालस्य रामचन्द्रस्य चरितं बाल्यं नाट्यम् इति यावत्, तत्र तत्प्रधाने कस्मिंश्चिद् रूपके। '**परशुरामः** "रामचन्द्रं प्रत्याहे"ति शेषः। **वत्स! तव। उत्साहातिशयं** मयाऽपि समं योद्धुं हर्षस्यातिशयस्तम्। **बाल्यम् चापश्यतः। मम। मनः। हर्षविषादाभ्याम्। युगपत्। आक्रान्तं** योद्धुं तवोत्साहं पश्यतो ममान्तर्हर्षः, बाल्येनाज्ञात्वैव पतङ्गस्येवाग्नौ मम परशौ जीवितं त्यक्तुं तव प्रवृत्तिं पश्यतो मम विषादश्चेति भावः॥ ३४९॥'

उदाहरणान्तरं दशयति,—**यथा । वा मम । प्रभावत्यां** प्रभावतीनामिकायां नाटिकायाम् । **'नयनयुगासेचनकम्** (इति व्याख्यातपूर्वम्) उदाहरणान्तरं निर्दिशति—अत्र हि रूपस्य मनोहरतया हर्षाधायकत्वं मदनोद्दीपकतया च विषादाधायकत्वं चेति लक्षणसमन्वयः ॥ ३५० ॥'

कुतुहलोत्तरा वाचः प्रोक्ता तु परिभावना ।

यथा—वेण्यां द्रौपदी युद्धं स्यान्न वेति संशयाना तूर्यशब्दानन्तरम् 'णाध, किं दाणिं एसो पलअजलहरत्थणिमन्थरो खणे खणे समरदुन्दुभी ताडीअदि ।'

---

## विवृतिः

कुतूहलोत्तराः कौतुकबहुलाः ॥

## विज्ञप्रिया

भावनालक्षणमाह—कुतूहलेति । णाधेति । नाथ किमिदानीम् एष प्रलयजलधरस्तनितमांसलः क्षणे क्षणे समरन्दुन्दुभिस्ताडयते । इति संस्कृतम् । अत्रयुद्धेच्छा द्रौपद्याः कुतूहलोत्तरा एता वाचः ।

## लोचन

णाधेति । नाथ किमिदानीम् एष प्रलयजलधरः स्तनितमांसलः क्षणे क्षणे समरदन्दुभिस्ताडयते ।

## कुसुमप्रतिमा

कूतूहलेति । कुतूहलोत्तराः कौतुपूर्विका वाची वाक्यानि तु परिभावना नाम अङ्गं प्रोक्ता, परितो भावना वाचा सर्वतः कुतूहलद्योतनेति व्युत्पत्तेः । वाच इति बहुवचनमविवक्षितम् ।

यथेति । "नाथ ! किमिदानीमेष प्रलयजलदरस्तनितमन्दथरः समरदुन्दुभिस्ताद्यते ।" इति संस्कृतानुवादः । प्रलयजलधरस्य प्रलयकालीनमेघस्य यत् स्तनित गर्जित तहत् मन्थरी गम्भौरी गम्भौरशब्दकारीत्यर्थः ।

अस्य द्रौपदीवाक्यस्य कौतुकपूव कत्वादत्त परिभावना ।

## विमला

परिभावनामाह, कुतूहलेति ।—कुतूहलम्—औत्मुक्यं, तदुत्तराः,—तद्भूश्रिष्ठा इत्यर्थः, वाचः,—वाक्यानि, परिभावना प्रोक्ता—कथिता ।

णाधेति ।—["नाथ ! किमिदानीमेव प्रलयजलधरधनस्तनितमांसलः क्षणे क्षणे समरदुन्दुभिस्ताद्यते ?" इति संस्कृतम्] । घनस्तनितं—निरन्तगर्जितं, तदिव मांसलः,—गभीर इत्यर्थः । अत्र समरदुन्दुभिताड़नं किमर्थमिदानीमित्यौत्सुक्यावेदनम् ।

## लक्ष्मी

भावनालक्षणं निरूपयति—कुतूहलेति । कुतूहलोत्तराः कौतूहलपूर्विकाः वाचां वचनानि तु परितः सर्वतो भावना कुतूहलद्योतना परिभावना नामाङ्गं प्रोक्ता कथिता । वाच इत्यत्र बहुत्वमविवक्षितम् ।

उदाहरति—यथेति । संशयाना संदेहं कुर्वणा । 'नाथ ! किमिदानीमेषप्रलयजलधरस्तनितमन्थरः क्षणे क्षणे समरदुन्दुभिस्ताडयते' इति संस्कृतम् । प्रलयजलधरस्य प्रलयकालीनमेघस्य यत् स्तनितं गर्जितं तद्वत् मन्थरो धीरः । समरदुन्दुभिः युद्धकालीनभेरी । अत्र द्रौपदीवचनस्य कुतूहलपूर्वकत्वात् परिभावना ।

## रुचिरा

परिभावनां लक्षयति—३८८ **कुतूहलोत्तराः** कुतूहलमौत्सुक्यमुत्तरस्मिन् यासां ताः । **वाचः** । वचनानि । **तु** । **परिभावना** । तन्नामुमुखसन्धेरङ्गम् । **प्रोक्ता** ।

उदाहरति—**यथा** । **वेण्यां** वेणीसंहारे । **'युद्धम्** । स्यात् । **न** । **वा** ।' **इति** । **संशयाना** संशयं कुर्वाणा । **द्रौपदी** । **तूर्यशब्दानन्तरं** तूर्यवाद्यस्य शब्दश्रवणान्तरं तूर्येत्यत्र दुन्दुभीति सुपाठः । **'णाह** नाथ । **किंदाणीं** किमिदानीम् । **एसो** एषः । **पलअजलहरघणत्थणिदमंसलो** प्रलयजलधरघनस्तनितमांसलः । प्रलये ये जलधरा मेघास्तेषां घनं यत्स्तनितं गर्जितशब्दस्तद्वन्मांसलः पुष्टः । **चण्डघोसो** चण्डघोषः । तन्नामेतिभावः । **समरदुन्दुही** समरदुन्दुभिः । **क्खणेक्खणे** क्षणेक्षणे । **ताडीअदि** ताडयते ('घने स्यात्कांस्यतालादिवाद्यमध्यमनृत्ययोः । नामुस्ताब्दौघदाढर्येषु' इति मेदिनी । 'स्तनितं गर्जितं मेघनिर्घोषो रसितादि चे'त्यमरः) । अत्र हि द्रौपद्या झटिति समरौत्सुक्यार्था वाचः ।'

**बीजार्थस्य प्ररोहः स्यादुद्भेदः—**

यथा तत्रैव—'द्रौपदी—णाध, पुणो वि तए समासासइदव्वा ।

भीमः—

**भूयः परिभवक्लान्तिलज्जाविधुरिताननम् ।**

**अनिःशेषितकौरव्यं न पश्यसित वृकोदरम् ।।**

---

## विवृतिः

णाध किमिति । 'नाथ, किमिदानीमेष प्रलयजलधरस्तनितमन्थरः क्षणे क्षणे समरदुन्दुभिस्ताड्यते ।' इति संस्कृतम् ।। प्ररोहो भवत्प्रायत्वेनोद्भावनम् ।।

णाधेति । 'नाथ, पुनरपि त्वया समाश्वासयितव्या ।' इति संस्कृतम् ।। विधुरिताननं नतमुखम् ।।

## विज्ञप्रिया

अद्भेदलक्षणमाह—बीजार्थस्येति । प्ररोह उत्पाद्यतानिश्चयः । णाधेति । नाथ पुनरपि समाश्वासयितव्याऽहम् इति संस्कृतम् । अहमिति द्रौपद्या आत्मनिर्देशः । भूय इति । बन्धुरितं नामितं भूयो न पश्यसीत्यन्वयः । भाविष्यत् सामीप्ये वर्त्तमाना अत्र भीमस्य कौरववधोत्पाद्यतानिश्चयः ।

## लोचन

णाधेति । नाथ पुनरपि त्वया समाश्वासयितव्याहम्

## कुसुमप्रतिमा

बीजेति । वौजार्थस्य "अल्पमात्र समुद्दिष्टम्" इत्यादिमागुक्तलक्षणस्य मूलकारणस्य प्ररीहः पुनरुत्त्तिरुद्भेदःस्यात् । यत्रापि व्युत् पत्तिः स्पष्टा ।

यथेति. । "नाथ !पुनरपि त्वय समासादयित्व्यौ ।" इति संस्कृतानुवादः । समासादयिव्या अहं प्राप्तव्या भत्समीपमागन्तव्यमित्यर्थः

भूय इति. परिभवेन शत्रुकृतापमानेन या क्लान्तिः कष्ट लज्जा च तया विधुरितं विक्लवीकृतम् आननं मुखं यस्य तम्, तथा अनिःशेषिता निःशेषमनिहता कौरव्या दुर्य्योधनादयो येन तम्, वृकोदरं भीमं भूयः पुनर्नशपस्यसि न द्रक्ष्यसि भविष्यत् सामीप्ये वर्त्तमाना ।

अत्र सत्रुविजयोत्साहरूपबीजार्थस्य पुनरुत्पत्तेरुद्भेदः ।

## विमला

उद्भेदमाह, बीजेति ।—बीजार्थस्य—मूलीभूतविषयस्य, प्ररोहः,—अङ्कुरोदयः, भवत्प्रायत्वेनोद्भावनमित्यर्थः, उद्भेदः स्यात् ।

णाधेति ।—["नाथ ! युष्माभिः पुनरपि समरादागत्य अहम् आश्वासयितव्या" इति संस्कृतम्] । अत्र केशसंयमनार्थस्य बीजं समरोद्योजनम् ।

भूय इति ।—परिभवेम—शत्रुभ्यः अवमानेन, या क्लान्तिः, ततो या लज्जा तया विधुरितम्—अवनतमित्यर्थः, [बन्धुरितेति पाठे—व्याप्तम्] आननं यस्म तम, अनि शेषिताः,—निःशेषतामनीताः, कौरव्याः येन तादृशं, वृकोदरं—भीमं, भूयः,—पुनः, न पश्यसि—न द्रक्ष्यसीत्यर्थः [भविष्यत्सामीप्ये लट्] । अत्र बीजार्थस्य वैरनिर्य्यातनार्थमुत्पन्नस्य क्रोधस्य प्ररोहः ।

## लक्ष्मी

उद्भेदलक्षणं निरूपयति—बीजार्थस्येति । बीजार्थस्य 'अल्पमात्रं समुद्दिष्टम्' इत्याद्युक्तस्वरूपस्य आदिकारणस्य प्ररोहः पुनरुद्भव उद्भेदः स्यात् ।

उदाहरति—यथेति । तत्रैव वेण्यामेव ।

'अन्यच्च नाथ ! पुनरपि युष्माभिः समरादागत्याहं समाश्वासयितव्या' इति संस्कृतम् ।

समासादयितव्या प्राप्तव्या मत्सन्निधावागन्तव्येत्यर्थः ।

भीम इति । 'द्रौपदीं प्रत्याह' इति शेषः । पाञ्चालराजतनये द्रुपदराजपुत्रि ! अघ, अलीकाश्वासनया असत्याश्वासनया किं, न किमपीत्यर्थः । यतः—

भूय इति । परिभवेन शत्रुजनितापमानेन या क्लान्तिः हर्षक्षयस्तेन लज्जा त्रपा तया विधूरितं विच्छायम् आननं मुखं यस्य तं तथोक्तम् 'आननं लपनं मुखम्' इत्यमरः । तथा अनिःशेषिताः समूलमविनाशिताः कौरव्याः दुर्योधनादयो येन तं तथोक्तम्, वृकोदरं भीमं भूयः पुनः न पश्यसि नावलोकयसि । वर्त्तमानसामीप्ये भविष्यति लट् ।

अत्र शत्रुविजयोत्साहरूपबीजार्थस्य पुनरुद्भ्वादुद्भेदः ।

अन्ये तु गूढभेदनमुद्भेदमामनन्ति । यथा रत्नावल्याम्—वत्सराजस्य कुसुमायुधव्यपदेशगूढस्य वैतालिकवचसा 'अस्तापास्त' इत्यादिना 'उदयनस्य' इत्यन्तेन बीजानुगुण्येनैवोद्भेदनादुद्भेदः ।

## रुचिरा

उद्भेदं लक्षयति—३८९ **बीजार्थस्य** मुख्यप्रयोजनस्य । **प्ररोहः** सिद्ध्यमानत्वम् । **उद्भेदः** । **स्यात्** ।

उदाहरति—यथा । तत्र वेणीसंहारे । एव । 'द्रौपदी' भीमं प्रत्याहे'ति शेषः । णाह नाथ ! अण्णच्च अन्यच्च 'वक्तव्य'मिति शेषः । **पुणोवि** पुनरपि । **तुम्हेहिं** त्वया । **समरादौ** समरतः सङ्ग्रामभूमेरिति यावत् । **आअच्छिअ** आगत्या **अहं** अहम् । **समासासइदव्वा** समाश्वासयितव्या तेषां संहननवृत्तान्तनिवेदनामृतसिञ्चनेन सञ्जीवनीयेति

यावत्। **भीमसेनः** 'द्रौपदीं प्रत्याहे'ति शेषः। **ननु। पाञ्चालराजतनये** पाञ्चालदेशस्य राजा द्रुपदस्तस्य तनयेति तत्सम्बुद्धौ तथोक्ते ! **किम्। अद्य। अलीकाशवासनया** व्यर्थया आश्वासनया तावदकृतकार्यत्वादलीकत्वमाश्वासनाया इति बोध्यम्। किं तु—

**परिभवक्लान्तिलज्जाविधुरिताननं** परिभवस्तिरस्कारस्तेन क्लान्तिः हर्षक्षयस्तेनलज्जा तया विधुरितं विच्छायं माननं यस्य तम्। **अनिःशेषितकौरव्यं** न निःशेषिता मारिताः कौरव्या दुर्योदनादयो येन तम्। 'कुरुनादिभ्योण्यः।' ४/१/१७२ इति ण्यः। **वृकोदरम्। न। पश्यसि** द्रक्ष्यसि। 'वर्तमानसामीप्ये वर्तमानवद्वा।' ३/३/१३१ इति लट्। अत्र हि कुरुविनाशनार्थस्य प्ररोहः ॥ ३५१ ॥'

**करणं पुनः ॥ ८६ ॥**

**प्रकृतार्थसमारम्भः—**

यथा तत्रैव—'देवि, गच्छामो वयमिदानीं कुरुकुलक्षयाय।' इति।

---

## विवृतिः

प्रकृतार्थस्य सम्यगारम्भः ॥

## विज्ञप्रिया

करणलक्षणमाह—करणमिति। स्पष्टम्।

## कुसुमप्रतिमा

करणमिति। प्रकृतार्थस्य प्रस्तुतविषयस्य समारम्भः पुनः करण करणं नामङ्गम्, करणं क्रियेति व्युत्पत्तेः।

यथेति। अत्र प्रकृतार्थस्य युद्धोद्योगस्य समारम्भात् करणम्।

## विमला

करणमाह, करणमिति।—प्रकृतस्य—प्रस्तुतस्य, अर्थस्य—विषयस्य, समारम्भः,—सम्यक् आरम्भः, उद्योग इत्यर्थः, पुनः,—तु, करणम्। तथोक्तम्,—"आरम्भः प्रकृतार्थस्य करणं नाम तन्मतम्" इति।

## लक्ष्मी

करणलक्षणं निरूपयति—करणमिति। प्रकृतार्थस्य प्रस्तुतविषयस्य समारम्भः सम्यगारम्भः पुनः करणमिति यावत् करणं नामाङ्गम्।

उदाहरति—यथेति। तत्रैव वेण्यामेव। अत्र प्रस्तुतार्थस्य युद्धोद्योगस्य समारम्भात् करणम्।

## रुचिरा

करणं लक्षयति—३९० **प्रकृतार्थसमारम्भः** प्रकृतार्थस्य प्रस्तुतस्य कार्यस्य समारम्भः सम्यगापादनम्। पुनः। करणम्। 'मत' मिति शेषः ॥ ३८२ ॥

उदाहरति—**यथा**। **तत्र** तस्मिन् वेणीसंहारे। **एव**। **"भीमसेनः"** 'द्रौपदीम्प्रत्याहे'ति शेषः। **तत्** यदेतत्कर्त्तव्यं तस्मात् कारणात्। हे **पाञ्चालि** पञ्चालराजपुत्रि! **इदानीम्**। **वयं** 'वीरा' इति शेषः। **कुरुकुलक्षयाय** कुरुक्षयं कर्त्तुम् [तुमर्थे चतुर्थीयम्] **गच्छामः** समराङ्गणे प्रविशाम इति भावः।

**भेदः संहतभेदनम् ।**

यथा तत्रैव—'अत एवाद्य प्रभृति भिन्नोऽहं भवद्धः ।' केचित्तु 'भेदः प्रोत्साहना' इति वदन्ति ।

---

## विवृतिः

संहतानामविरुद्धकर्मत्वेन मिलितानां भेदनं संगाताच्चालनम् ॥

## विवृतिपूर्तिः

भेद इति । ऋषिणाप्युक्तम्—'संघातभेदनार्थो यः स भेद इति कीर्तितः ॥' इति ॥

केचिदिति । दशरूपककारादयः ॥

## विज्ञप्रिया

भेदलक्षणमाह—भेद इति । अद्य प्रभृतीति सहदेवे भीमस्योक्तिः ।

## कुसुमप्रतिमा

भेद इति संहते सम्मेलनस्य भेदनं पृथक्करण भेदः भेदो नाणङ्कम् । अत्रापि व्युत्पत्तिः स्पष्टा ।

यथेति । अत्र भीमेनात्मनो युधिष्ठिरादिसंहतेः पृथक्करमाद्‌भेदः ।

केचिदिति । प्रोत्साहना कर्त्तव्य प्रति प्रकर्षेणोत्साहजननं भेदः ।

एतन्मते उदाहरणं यथा मम वङ्गीयप्रतापनाटके—

**"कश्चित् प्रतापः किल पथिमोद्गतः परः प्रतापीऽस्युदितोऽस्तु पूर्वतः ।**
**द्वयोः प्रतापाद्युगपत् प्रवर्त्तितात् चिरं प्रतापो एवनस्य नश्यतु ॥"**

## विमला

भेदमाह, भेद इति ।—संहतेः,—सङ्घातस्य, भेदनं—पृथक्करणं, भेदः, स्यादिति शेषः । ["संहतभेदनम्" इति पाठे,—संहतानाम्—अविरुद्धकर्मत्वेन मिलितानां, भेदनं—सङ्घातात् चालनमित्यर्थोऽवसेयः इति] ।

उदाहरति, यथेति ।—भवद्भ्यः भिन्नः,—पृथम्भूतः, युष्माकं नानुमन्ये इति हृदयम् । केचित्तु—दशरूपक रसगङ्गादरकाराधयस्तु इत्यर्थः ।

## लक्ष्मी

भेदलक्षणं दर्शयति—भेद इति संहतानां सम्मिलितानां भेदनं विश्लेषणं पृथक्करणमिति यावत्, भेदः भेदो नामाङ्गम् । उक्तं च मुनिनाऽपि—

'संघातभेदनाथो यः स भेद इति कीर्त्तितः' इति.

उदाहरति—यथेति । तत्रैव वेण्यामेव अत्र भीमेन युधिष्ठिरादिसङ्घातादात्मनो विश्लेषाद्‌भेदः । प्रकारान्तरेण लक्षयतां मतं दर्शयति—केचित्त्विति । दशरूपककारादय इत्यर्थः । 'कर्त्तव्यं प्रति प्रकर्षेणोत्साहोत्पादनं भेदः' इति वदन्ति । उदाहरणं यथा वेण्यामेव—'णाध ! मा क्खु जणसेणी परिभवुद्दीविदकोवा अणवेदक्खिसरीरा परिक्कमिस्सध । जदोअप्पमत्तसंचरणीयाई—सुणीयन्ति रिपुवलाई । 'नाथ ! मा खलु याज्ञसेनी परिभवोद्दीपितकोपा अनवेक्षितशरीराः परिक्रमिष्यथ । यतोऽप्रमत्तसञ्चरणीयानि श्रूयन्ते रिपुबलानि ।' भीमः—अयि ! सुक्षत्रिये ?

**अन्योन्यस्फालभिन्नद्विपरुधिरबसासान्द्रमस्तिष्कपङ्के**

**मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ ।**

**स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे**

**संग्रामैकार्णवान्तः पयसि विचरितुं पण्डिताः पाण्डुपुत्राः ॥**

इत्यनेन विषण्णाया द्रौपद्याः क्रोधोत्साहबीजानुगुण्येनैव प्रोत्साहनाद्‌भेदः ।

## रुचिरा

भेदं लक्षयति—३९१ **संहतभेदनं** संहतानां सम्मिल्य किञ्चित् कार्यं कर्त्तुं प्रवृत्तानामिति यावत् मेदनं द्वैधीकरणम् । **भेदः** ।

उदाहरति—**यथा । तत्र** तस्मिन् वेणीसंहारे । **एव । भीमसेनः** 'सहदेवादीन् प्रत्याहे'ति शेषः । **एवमिदम् ।** यथा ब्रूथ तथैवास्ति । **अत एव । अहम् । अद्यप्रभृति** अद्यारभ्य । **भवद्भयो** भवत उपेक्ष्य । **भिन्नः** पृथक्त्या प्रवृत्तो भवामीति भावः ।

परेषां मतं निर्दिसति—**केचित्** दशरूपकारादयः । '**प्रोत्साहनो**त्साहं प्रत्यानयनम् । **भेदः । इति । वदन्ति ।** एतन्मते—"अन्योन्यास्फालभिन्नद्विपरुधिरवसासान्द्रमस्तिष्कपङ्के मग्नानां स्यन्दनानामुपरि कृतपदन्यासविकान्तपत्तौ । स्फीतासृकपानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे सङ्ग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः ॥' इत्युदाहरणं बोध्यम् ।

उदाहरति—**यथे**त्यादिना ।

अथ प्रतिमुखाङ्गानि—

**विलासः परिसर्पश्च विधुतं तापनं तथा ॥ ८७ ॥**

**नर्म नर्मद्युतिश्चैव तथा प्रगमनं पुनः ।**

**विरोधश्च प्रतिमुखे तथा स्यात्पर्युपासनम् ॥ ८८ ॥**

**पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि ।**

---

## विवृतिः

त्रयोदश प्रतिमुखाङ्गान्याह—विलास इति । तदर्था तदुपभोगार्था । समीहा स्पृहा ॥

## विज्ञप्रिया

प्रतिमुखसन्धेस्त्रयोदशाङ्गान्याह-विलास इति ।

## कुसुमप्रतिमा

विलास इति । विलासदीनि त्रयोदशाङ्गानि प्रतिमुखे सन्धौ साः । एतानि तु प्रायेण श्रृङ्गाररसप्रधान एव दृश्यकाव्ये सम्भवन्ति, तथैव लक्षणोदाहरणदशनात् । न चैतैरवश्यमेव समस्तदृश्यकाव्येष्वेव स्थातव्यमिति नियमः "रसयक्तिमपेक्ष्यैषामङ्गानां सन्निवेशनम् । न तु केवलया शास्त्रस्थितिसम्पादनेच्छया ॥" इति वक्ष्यमाणेन ग्रन्थकृतैव अनियमाभिधानम् ।

## विमला

प्रतिमुखाङ्गान्याह, विलास इति ।—विलासादयस्तयोदश प्रतिमुखस्य अङ्गानि इति वर्त्तुलोऽर्थः ।

## लक्ष्मी

अत्रेदम्बोध्यम्—एतानि द्वादशमुखाङ्गानि बीजारम्भद्योतकानि साक्षात्पारम्पर्येण वा नाटके कविनावश्यमुपन्यसनीयानि ।

प्रतिमुखसन्धेगेस्त्रयोदशाङ्गानि दर्शयति—विलास इति । विलासादीनि त्रयोदशाङ्गानि प्रतिमुखे सन्धौ स्युरित्यर्थः । अत्रेदमाकूतम्—प्रायेण श्रृङ्गाररप्रधान एव दृश्यकाव्ये ह्येतानि सम्भवन्ति ग्रन्थकृता तथैव लक्षणोदाहरणानि प्रतिपादितानि । अवश्यमेव सकलदृश्यकाव्येषु चेतैः स्थातव्यमिति नैष नियमः—

रसव्यक्तिमपेक्ष्यैषामाङ्गानां सन्निवेशनम् । न तु केवलया शास्त्रस्थितिसम्पादनेच्छया ॥ इत्यग्रे स्वयमेव मूलकृतानियमेनोक्तत्वात् ।

## रुचिरा

इदानीं मुखसन्धेरङ्गानि दर्शयितवा प्रतिमुखसन्धेरङ्गान्यभिधातुं प्रतिजानीते—**अथेत्यादिना** ।

**अथ । प्रतिमुखाङ्गानि** प्रतिमुखस्य सन्धेरङ्गानि । उच्यन्ते इति शेषः ॥ ३९२ **विलास** इत्यादिना । ३९२ प्रतिमुखे विलासादयस्त्रयोदशाङ्गानि सम्भवन्तीति वर्तुलार्थः स्पष्टः ॥ ३८३ ॥ ३८४ ॥

क्रमाद्विलासादींल्लक्षयितुमुपक्रमते—**तत्रेत्यादिना** ।

**तत्र** तेषु । विलासो लक्ष्यते इति शेषः । ३९३ **समीहा** इत्यादिना ।

तत्र—

**समीहा रतिभोगार्था विलास इति कथ्यते ॥ ८९ ॥**

रतिलक्षणस्य भावस्य यो हेतुभूतो भोगो विषयः प्रमदा पुरुषो वा तदर्था समीहा विलासः । यथा शाकुन्तले—

**'कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनायासि ।**
**अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥'**

---

## विवृतिः

तस्याः प्रियायाः भावः सुरतचेष्टा च दर्शनं च ते आयासयति वाञ्छति रतिं प्रीतिम् । अकृतार्थे अकृतकार्ये । उभयोः प्रियाभावदर्शनयोः प्रार्थना कामना ॥

## विवृतिपूर्तिः

अकृतेति । मनसिजेऽकृतार्थेऽप्युभयप्रार्थना स्वस्वाभिलाषो रतिं रागं यतः कुरुते प्रीतिमुत्पादयति । अहं तत्र गमिष्यामि, तामेवं वक्ष्य इत्यात्माभिलाषः । एवं मां प्रति तस्या अप्यभिलाषो मनसिजेऽकृतार्थे संभवति ॥

## विज्ञप्रिया

रतिभोगार्थेति । रतिरनुरागः, तद्भेदोगस्तद्विषयो नायिकादिः, तत्र समीहा इच्छा । यद्यपि रतिर्निधूवनम् तद्भोगाय इच्छेत्येवमर्थ एव उदाहरणानुसारी युज्यते । तथापि ग्रन्थकृद्व्याख्यानुरोधादित्थं व्याख्यातम् ।

कामं प्रियेति । शकुन्तलालिप्सोर्दुष्मन्तस्य उक्तिरियम्—अकृतार्थेऽपीति । कामिन उद्देश्यसिद्धिरेव मनसिजस्य कृतार्थता, तद्रहितेऽपि मनसिजे इत्यर्थः । उभयप्रार्थना उभयस्य रतिमनुरागाधिक्यम् कुरुत इत्यर्थः । प्रकृते च शकुन्तलाया भावदर्शनात् तत्प्रार्थनाप्रार्थितस्य दुष्मन्तस्य रतिं कुरुत इत्यर्थः ।

## लोचन

काममिति । मनसिजेऽकृतार्थेऽपि स्त्रीपुंसयुगलस्य सम्भोगं विनाऽपि उभयप्रार्थना अन्योऽन्यप्रार्थना रतिं प्रीतिं कुरुते इत्यर्थः । नायिकाया नायके नायकस्य नायिकायां यदि प्रार्थना दृश्यते तदा उपभोगाभावेऽपि तयोः प्रीतिर्भवति तेन तस्या भावदर्शनेन प्रार्थना मयि अभिव्यक्तेति मनः समाश्वासि इति ।

## कुसुमप्रतिमा

समीहेति । रतिभोगार्था अनुरागपात्रीभूतस्योपुरुषैकतरविषया समीहा लिप्सा विलास इति नाम्ना अङ्ग कथ्यते । विहारात्मकविलसनविषयकत्वाद्विलासाख्यमिदमङ्गम् ।

रतीति । रतिलक्षणसा अनुरागस्वरूपसा । भीमो विषय इति । एवञ्च भुज्यते अनुरागकाले मनसा सर्व्वदैवानुभूयते य, स भोग इति कर्म्ममि वञ् । प्रमदा स्त्री । तदर्था तयोरेकतरविषया ।

काममिति । दुष्मन्तयोक्तिरियम् । प्रिया शकुन्तला कामं यथेष्टं यथेष्टं न सुलभा; तु किन्तु तथापि मम मनः तस्याः शकुन्लया भावदर्शनेन मां प्रति कटाक्षपातादिभङ्गेविशेषदशनेनैव आश्वासि आश्वासिःभिलाषि जातम् । मर्नायजे कामे अकृतार्थेऽपि सम्भोगाप्रतिपादनेन अकृताकार्य्येऽपि सति, उभयप्रार्थना नायकनायिकयोरुभयोरपि परस्परप्राप्तीच्छा रतिमनुरागं कुरुते ।

अत्र दुष्मन्तस्य शकुन्तलालिप्सा रूपी विलासः ।

## विमला

विलासमाह, समीहेति—तत्र—तेपु मध्यं, रतिभोगार्था—सरत सम्भोगविषयिणी, समीहा—चेष्टा, स्पृहा वा, विलास इति कथ्यते ।

तदर्था—तदुपभोगार्था । अन्यत् स्पष्टम् ।

उदाहरति, काममिति ।—प्रिया—शकुन्तला, कामं—सम्यक्, न सुलभा—न सुप्रापा, यद्वा,—[सा इत्यध्याहार्य्य] शकुन्लता कामम्—अत्यर्थं, प्रिया—प्रियतमा, तर्हि तूष्णीं स्थीयतां, किं वृथा खेदेन ? इत्याह, न सुलभा इति ।—न सुखेन लभ्या, गुरुजनाधीनत्वात्, गुरोरपि दूरवर्त्तित्वादिति भावः । यद्येवं दुर्लभा, तर्हि किं प्रयत्नेन ? इत्याह,—तु—किन्तु, मनः,—चित्तवृत्तिः, तस्याः,—शकुन्तलायाः, भावदर्शनेन—मयि अनुरागव्यञ्जकतादृशचेष्टाविशेषदर्शनेन, आश्वासि—आश्वस्तं, प्रियां लभ्येति आशास्ते, ["तड्भभावदर्शनायासि" इति पाठे,—-तल्लावदर्शने—तच्चेष्टाऽवलोकने, आयाति—प्रयासयुक्तं, प्रयत्नपूर्वकं लालसमित्यर्थः] यद्वा,—तस्याः प्रियायाः, भावः सुरतचेष्टा च, दर्शनञ्च ते आयसति वाञ्छसि इत्यर्थः । (अस्मिन् पाठे तु-शब्दः, खेदातिशयद्योतकः) तथाहि,—मनसिजे—कामे, अकृतार्थे—असङ्गत्या अकृतकार्य्ये, अपि, उभयोः,—स्त्रीपुंसयोः, प्रियायाः प्रयिस्य मम च इत्यर्थः, यद्वा,—प्रियाभावदशनयोः, प्रार्थना—कामना, रतिम्—अनुरागम्, "अहं तत्र गमिष्यामि, तामेवं वक्ष्ये" इत्यभिलाषजनितसन्तोषमिति यावत्, कुरुते—जनयति । अत्र नायिकासम्भोगविषयिणी स्पृहा प्रदर्शिता । आर्य्या जातिः ।

## लक्ष्मी

विलासलक्षणं निरूपयति—समीहेति । रतिभोगार्था रतिरनुरागः तद्भोगार्था पात्रीभूतस्त्रीपुरुषान्यतरविषया समीहा इच्छा । यद्यपि रतिर्नुधुवनं तद्भोगाय इच्छेत्येवमर्थ एव उदाहरणानुसारी युज्यते तथापि ग्रन्थकृद्व्याख्यानुरोधादित्थं व्याख्यातम् ।

स्वयमेव स्फुटीकरोति—रतिलक्षणस्येति । रतिलक्षणस्य अनुरागस्वरूपस्य । भोगो विषयः । तथा च भुज्यते रतिसमये चेतसा सर्व्वदैवानुभवविषयीक्रियते यः स भोग इति । प्रमदा नारी । तदर्था तयोरेकतरविषया ।

उदाहरति—यथेति । काममिति । शकुन्तलालिप्सोर्दुष्यन्तस्योक्तिरियम् । प्रिया शकुन्तला कामं यथेष्टं न सुलभा न सुखलभ्या, अस्वतन्त्रत्वात्तस्या गुरोरपि असन्निधित्वाच्चेति भावः । अनेन बह्वायासलभ्या भवेदिति सूचितम् । ननु तर्हि त्यज्यतामलमायासेनात आह—त्विति । तु किन्तु तथापि मम मनश्चित्तम्, तस्याः शकुन्तलयाः

ये भावाः । अनुरागव्यञ्जकस्निग्धकटाक्षविक्षेपादिचेष्टाविशेषाः तेषां दर्शनेन अवलोकनेन आश्वासि आश्वासाभिलाषि जातम्, नन्वभिलाषिताया असम्भवे मनसः कथमाश्वासितेत्याशयेनाह—अकृतार्थेऽपीति । मनसिजे कामे अकृतार्थेऽपि सम्भोगाप्रतिपादनेनाचारितार्थ्ये सत्यपि कामिन उद्देश्यसिद्धिरेव मनसिजस्य कृतार्थतेति बोध्यम् । उभयप्रार्थना नायकनायिकयोरन्योन्यप्राप्तीच्छा रतिं सम्भविष्यत्सम्मेलजन्यमनुरागं कुरुते उत्पादयति । तथा च नायिकाया नायके नायकस्य नायिकायां यदि प्रार्थना दृश्यते तदा उपभोगाभावेऽपि तयोरनुरागो भवति, प्रकृते च शकुन्तलाया भावदर्शनेन प्रार्थना मयि अभिव्यक्तेति मनः समासश्वासीत्याशयः । आर्या छन्दस्तल्लक्षणं चोक्तं प्राक् ।

अत्र दुष्यन्तस्य शकुन्तलायां समीहाकरणात् विलासः ।

अत्रेदं बोध्यम्—प्रतिमुखस्य चादावेवेदमङ्गं निबन्धनीयम् । य एव मुखे रस उपक्षिप्यते तस्यैव स्थायी विभावानुभावव्यभिचारिभिः पोषणीयः । कामफले च रूपके मुखसन्धादावुपक्रान्तः शृङ्गारः प्रतिमुखे विलासेन स एव विस्तार्यते, विलासप्रकाशकान्येव चेतराण्यङ्गानि निबन्धनीयानि । एवं सति वेणीसंहारे भानुमत्या सह दुर्योदनस्य दर्शितो रत्यभिलाषरूपो विलासः सः, नायकस्य तादृशेऽवसरेऽनुचित इति ।

## रुचिरा

**३९३** समीहा । **रतिभोगार्था** रतिभोगार्था रतिभोगायेयमिति तथोक्ता । अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यमिति नित्यसमासः । **विलासः । इति । कीर्तितः** । । ३८५ ॥

तदेव विवृणोति—रति**लक्षणस्ये**त्यादिना ।

**रतिलक्षणस्य** रतिर्मनोनुकूलेऽर्थे मनसः प्रवणायितमित्यस्य । स्पष्टमन्यत् ।

उदाहरति—**यथे**त्यादिना ।

**यथा । अभिज्ञानशाकुन्तले** 'द्वितीयेऽङ्के राजा' इति शेषः ।

"**काममत्यन्तं** सेति शेषः । **प्रिया । न सुलभा । मनः । तु** पुनः । **तद्भावदर्शनायासि** तस्याः शकुन्तलाया भावदर्शने सव्याजमवलोकनादिना अभिप्रायावेदने आयासि तत्परम् । तद्भावदर्शनास्वातीति पाठे तु तस्या भावः सव्याजमलवकोनादिनाऽऽवेद्यमानो मय्यनुरागावेदनार्थ इङ्गितविशेषस्तस्य दर्शनं ज्ञानं तेनाश्वासीत्यर्थः । 'दर्शनं नयनस्वप्नबुद्धिधर्म्मोपलब्धिषु' इति मेदिनी । तथा हि **मनसिजे** कामे । **अकृतार्थे** भोग्यालाभादसम्पन्नकार्ये । **अपि । उभयप्रार्थना** उभयोर्मम तस्याश्चान्योन्यं प्रार्थना । **रतिम् । कुरुते** । आर्या वृत्तम् ॥ ३५२ ॥"

परिसर्पं लक्षयति—३८४ **इष्टे**त्यादिना ।

**इष्टनष्टानुसरणं परिसर्पश्च कथ्यते ।**

यथा शाकुन्तले—'राजा—भवितव्यमत्र तया । तथा हि ।

**अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।**

**द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥'**

---

## विवृतिः

इष्टस्य अभीष्टस्य नष्टस्य अदृष्टस्य अनुसरणमन्वेषणम् ॥ अवगाढा अतिनिम्ना । पदपङ्क्ति पदचिन्ह-श्रेणी ॥

## विवृतिपूर्तिः

अभ्युन्नतेति । पुरस्तात्पादाग्रभागेऽभ्युन्नता । उन्नतत्वं च पश्चाद्भागापेक्षया । पश्चात्पार्ष्णिदेशे ॥

## विज्ञप्रिया

परिसर्पलक्षणमाह—दृष्टनष्टेति । नष्टेति णश अदर्शने इति धात्वर्थानुसाराद् दृष्टस्यानर्थक्यम् । तथा च पूर्वदृष्टस्य पश्चाददृष्टस्य वस्तुनोऽनुसरणमित्यर्थः ।

भवितव्यमत्र तयेति राज्ञः उक्तिरियम् । तया शकुन्तलया भवितव्यं स्थातव्यमिति । तत्र हेतुमाह—अभ्यु-न्नतेति । यतोऽस्य लतागृहस्य पाण्डुसिकते द्वारेऽभिनवा पदपङ्क्तिर्दृश्यते । कीदृशी पुरस्तात् पदस्य पूर्व-भागेऽभ्युन्नता । पश्चाद्भागे जघनगौरवादगाढ़ा । अत्र पूर्वदृष्टशकुन्तलानुसरणम् ।

## कुसुमप्रतिमा

इष्टेति । इष्टस्य अभीष्टपदार्थस्य नष्टस्य अदर्शनं प्राप्तस्य सतः अनुसरणमन्वेषणञ्च परिसर्पो नामाङ्गं कथ्यते, परिसर्पणं सर्वतोऽन्वेषणं परिसर्प इति व्युत्पत्तेः ।

यथेति । अत्र लतारण्डपे । तथा शकुन्तलया ।

अभ्युन्नतेति । पाण्डवः, पाण्डुवर्णाःसिकता बालुका यस्य तस्मिन् तथोक्ते अस्य लतामण्डपस्य द्वारे, पुरस्तादग्रतः अभ्युन्नता किञ्चिदुञ्चा, जघनगौरवात् नितम्ब्योर्भारवत्त्वात् पश्चात् भागे अवगाढ़ा किञ्चिद्भीरा, अभिनवा अचिरजाता पदपङ्क्तिः पदक्षेपपत्तिङ्गश्चेणी दृश्यते । अतएवात्र लतामण्डपे तया भवितव्यमिति भावः ।

अत्र दुष्मन्तेन अदर्शनप्राप्ताभीटशकुन्तलाया अन्वेषणात् परिसर्पः ।

## विमला

परिसर्पमाह, इष्टेति ।—इष्टस्य—अभिलषितस्य,नष्टस्य—अदर्शनं गतस्य, अनुरसणम्—अन्वेषणं, च परिसर्पः कथ्यते ।

उदाहरति, अभ्युन्नतेति ।—अस्य—लतामण्डपस्य, पाण्डुसिकते—पाण्डुवर्णासिकता—बालुका यत्र तथाभूते, द्वारे—प्रवेशमार्गे, पुरस्तात्—अग्रतः, पादाग्रभागे इत्यर्थः(पश्चाद्भागापेक्षया) अभ्युन्नता, पश्चात्—पार्णिदेशे इति भावः, जघनस्य—श्रोणिपुरोभागस्य, गौरवात्—भारवत्त्वात्, अवगाढ़ा—अवनता, अतिनिम्ना इति यावत्, अभिनवा—अधिराङ्किता इत्यर्थः, पदपङ्क्तिः,—पदन्यासपद्धतिः, दृश्यते । अत अभिलषितान्वेषणं ज्ञेयम् । आर्य्या जातिः ।

## लक्ष्मी

परिसर्पलक्षणं निरूपयति—इष्टनष्टेति । नष्टेति 'णश् अदर्शने' इति धात्वर्थानुसारात् अदर्शनमर्थः । तथा च इष्टस्य अभीष्टस्य नष्टस्य अदर्शनं गतस्य सतः अनुसरममन्वेषणं परितः सर्वतः सर्पणमन्वेषणं परिसर्पस्तन्नामाङ्गं कथ्यते ।

उदाहरति—यथेति । अत्र लतामण्डपे । तया शकुन्तलया सन्निहितया भवितव्यं भाव्यम् ।

उक्तार्थं समर्थयति—अभ्युन्नतेति । पाण्डवः पाण्डुवर्णाः सिकता वालुका यस्मिस्तस्मिंस्तथोक्ते अस्य लतामण्डपस्य द्वारे प्रवेशमार्गे पुरस्तात् पादाग्रभागे अभ्युन्नता पश्चाद्भागापेक्षया किञ्चिदुच्चा तथा पश्चात् पार्ष्णिदेशे गुल्फनिक्षेपस्थाने इत्यर्थः, जघनगौरवात् नितम्बयोर्भारवत्वात् अवगाढा अग्रभागाङ्गुल्याद्यपेक्षया किञ्चिन्निम्ना अभिनवा अचिरजाता पदपङ्क्तिः पदचिन्हश्रेणी दृश्यते अवलोक्यते अन्यासां स्त्रीणामनुसूयाप्रियंवदयोर्वा तादृशजघनगुरुत्वासम्भवात्प्रियतमायाः शकुन्तलायाः एवेयं पदपङ्क्तिरित्यतो लतामण्डपेऽवश्यं तया भवितव्यमिति भावः । आर्याच्छदः । अत्र दुष्यन्तेन अदर्शनप्राप्ताभिलषितशकुन्तलायाः अन्वेषणात् परिसर्पः ।

## रुचिरा

३८४ **इष्टष्टानुसरणं** इष्टं यन्नष्टमदृष्टं तस्यानुसरणमन्वेषणम् । **च** । **परिसर्पः** । **कथ्यते** ।

उदाहरति—**यथा** । **अभिज्ञानशाकुन्तले** तृतीयेऽङ्के इति शेषः । '**राजा** (परिक्रम्यावलोक्य) **अस्मिन् वेतसपरिक्षिप्ते लतामण्डपे** । तया शकुन्तलया । **सन्निहितयाऽवस्थितया** । **भवितव्यम्** । **तथा** हि (**अधो विलोक्य**)

"**पुरस्तात्** पादाग्रभागे । **अभ्युन्नता** । शकुन्तलायाः—**पश्चात्** पार्ष्णिभागे । **जघनगौरवान्नितम्बभारात्** "जघनं कटौ । स्त्रियाः श्रोणिपुरोभागे" इति हैमः । **अवगाढा** निम्ना । **अस्य** लतामण्डपस्य । **पाण्डुसिकते** पाण्डुः सिकता यत्र तादृशे । **द्वारे** । **अभिनवा** । **पदपङ्क्तिः** । **दृस्यते** । अतोऽत्र शकुन्तलाया अन्वेषणम् । आर्याच्छन्दः ॥ ३५३ ॥"

**कृतस्यानुनयस्यादौ विधुतं त्वपरिग्रहः ॥ ९० ॥**

यथा तत्रैव—'अलं वो अन्तेउरविरहपज्जुस्सुएण राएसिणा उवरुद्धेण। केचित्तु 'विधुतं स्यादरतिः' इति वदन्ति।

---

## विवृतिः

अलं वो इति। 'अलं वोऽन्तःपुरविरहपर्युत्सुकेन राजर्षिणा उपरुद्धेन।' इति संस्कृतम्। सख्या कृतस्य राजावस्थानानुनयस्य राज्ञा अपरिग्रहः॥

## विवृतिपूर्तिः

केचिदिति। दशरूपककारादयः। काव्येन्दुप्रकाशकारा अपि 'इष्टानवाप्तिरचितारतिर्विधुतमुच्यते।' इति तल्लक्षणं वदन्ति। 'श्यामां श्यामलिमानमानयत भोः! सान्द्रैर्मषीकूर्चकैर्मत्रं तत्रमथ प्रयुज्य हरत श्वेतोपलानां श्रियम्। चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्रमुद्राङ्किताः॥' इत्युदाहरन्ति च॥

## विज्ञप्रिया

विधूतलक्षणमाह—कृतस्येति। आदौ कृतस्यानुनयस्य प्रीतेः पश्चादपरिग्रह आहार्य्य इत्यर्थः।

तत्रैवेति। शाकुन्तल एव इत्यर्थः। अलमिति—अलं वोन्तः-पुरिकाविरहपर्युत्सुकेन राजर्षिणा उपरुद्धेनेति संस्कृतम्। अत्र सख्या उपरोधवशात् शकुन्तलाया आदौ प्रीतिर्लभ्यते। उपरोधनिषेधाच्चाहार्यस्तदपरिग्रहः। केचिदिति—-आहार्यादीदृशनिषेधादरत्यवगमादत्र अस्वरसः।

## कुसुमप्रतिमा

कृतस्येति। आदौ प्रथमतः कृतस्य अनुनयस्य प्रसादनस्य अपरिग्रहः अस्वीकारस्तु विधृतं नामाङ्गम्, धृतादात्मनि परिगृहीत द्विपरीतमिति व्युत्पत्तेः।

यथेति। "अलं वः दन्तःपुरविरहपर्य्युत्मुकेन राजर्षिणा उपरूद्धेन।" इति संस्कृतानुवादः। अन्तःपुराणां तत्रत्यस्त्रीणां विरहेण पर्य्युत्सूक उत्कण्ठितस्तेन राजर्षिणा दुष्मन्तेन वो युष्माकं युष्माभिरित्यर्थः उपरुद्धेन मदर्थमनुनीतेन अलम् वरवर्णिनीषु उत्कण्ठितचित्ते दुष्मन्ते तपस्विन्वर्थमनुनयो विफल एव भवेदिति स न कर्त्तव्य इति भावः।

अत्र शकुन्लया आदौ मनसि कृतस्य अनुनयस्य इदानीं सखीभिः कारयितुमखीकारात् विधृतम्।

केचिदिति। दशरूपककारादय इत्यर्थः अरतिररुचिः। यथा मम जानकीविक्रमनाटके—"राजा। स्वैरसि ह! परलोकेऽपि वत्सदशाननशासने शमनस्य का नाम शक्तिः।" इत्यादि। मन्त्रिमते राज्ञो रुच्यभावादत्र विधृतम्।

## विमला

विधृतमाह, कृतस्येति ।—आदौ—अग्रतः, कृतस्य अनुनयस्य अपरिग्रहः,—अवधीरमं, विधृतम् ।

अलमिति ।—["अलं वोऽन्तःपुरविरहपर्य्युत्सुकेन राजर्षिणा उपरुद्धेन?" इति संस्कृतम्]। अन्तःपुरस्य—अन्तःपुरवर्त्तिनः महिलाजनस्य, विरहेण पर्य्युत्सुकः,—उत्कण्ठितः तेन, राजर्षिणा, वः,—युष्माकम्, उपरुद्धेन—अनुनीतेन, अलम्—व्यर्थम्, अस्यानुनयी न कर्तव्य इत्यर्थः । अत्र सख्या कृतस्य राजावस्थानानुनयस्य शकुन्तलया अपरिग्रहः सूचितः । केचित्तु—दसरूपककारादयः, अरतिः,—असन्तोषः ।

## लक्ष्मी

विधृतलक्षणं निरूपयति—कृतस्येति । आदौ प्रथमतः कृतस्य अनुनयस्य प्रसादनस्य अपरिग्रहः अनङ्गीकारः, धृतमात्मनि धारिताद्विपरीतमिति विधृतं नामाङ्गम् ।

उदाहरति—यथेति । तत्रैव शाकुन्तल एव । 'अलं वः अन्तःपुरविरहपर्युत्सुकेन राजर्षिणा उपरुद्धेन' इति संस्कृतम् । अन्तःपुराणां तत्रत्यनारीणां विरहेण वियोगेन पर्युत्सुक उत्कण्ठितस्तेन तथोक्तेन राजर्षिणा दुष्यन्तेन वो युष्माकं युष्माभिरिति यावत् उपरुद्धेन मदर्थमनुनीतेन अलम्, अन्तःपुरस्त्रीषु उत्कण्ठितहृदये दुष्यन्ते तपस्विन्यर्थमनुनयोनिष्फलएव भवेदिति स न विधातव्य इति भावः । अत्र शकुन्तलया प्रथमं चेतसि त्रिहितस्यानुनयस्याधुना सखीभिः कारयितुमनङ्गीकारात् विधृतम् ।

मतान्तरलक्षणं बोधयितुमाह—केचित्त्विति । दशरूपककारादय इत्यर्थः । अरतिररुचिः । मन्दारमरन्देऽपि—

**नायकानामीप्सितानामर्थानामनवाप्तितः ।**

**अरतिर्या भवेत्सा तु विद्वद्भिर्विधृतं मतम् ॥ इति ।**

उदाहरणं यथा—

**श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-**

**र्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोपलानां श्रियम् ।**

**चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके**

**येन द्रष्टुमहं क्षमे दशदिशस्तद्वक्त्रमुद्राङ्किताः ॥ इति ।**

## रुचिरा

विधुतं लक्षयति—३९५ कृतस्येत्यादिना ।

**३९५ विधुतम् । तु पुनः । आदौ प्रथमम् । कृतस्य । अनुनयस्य । अपरिग्रहः** ॥ ३८६ ॥

उदाहरति—**यथा । तत्राभिज्ञानशाकुन्तले । एव । "शकुन्तला** प्रियंवदां प्रत्याह—हला सखि ! 'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः । **अंतेउरविरहपज्जुसुएणा** अन्तः पुरविरहपर्युत्सुकेन अन्तपुरविरहो-

त्कण्ठितेन । **उवरुद्धेण** उपरुद्धेनाग्रहेण सन्निधापितेनेति यावत् ।**राएसिणा** राजर्षिमा । **अलम्** । **वो** पुष्माकमिति यावत् ॥ ३५४ ॥"

अत्र परमतं दर्शयति—**केचित्त्वित्यादिना** ।

**केचित्** दशरूपकारादयः । '**अरतिर्वैरस्यम्** । **विधुतम्** । **स्यात्** ।' **इति वदन्ति** । तत्कृतस्यानुनयस्यादौ ह्यपरिग्रह' इति मुनिवचनविरोधादुपहेयमिति शेषः ।

**उपायादर्शनं यत्तु तापनं नाम तद्भवेत्।**

यथा रत्नावल्याम्—'सागरिका—

**दुल्लहजणाणुराओ लज्जा गुरुई परव्वसो अप्पा।**
**पियसहि विसमं पेम्मं मरणं सरणं णवरि एक्कम्॥'**

---

## विवृतिः

अरतिरवज्ञा॥ दुल्लहेति। 'दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा। प्रियसखि विषमं प्रेम मरणं शरणं केवलमेकम्॥' इति संस्कृतम्।

## विवृतिपूर्तिः

तापनमिति। दशरूपके तु तापनस्थले शमो निर्दिष्टः। तथा च तद्वाक्यम्—'तच्छमः शमः' इति। तच्छब्देन पूर्वनिर्दिष्टा अरतिर्गृह्यते तस्या उपशमः शम इति तदर्थः। यथा रत्नावल्याम्—'राजा—वयस्य, अनया लिखितोऽहमिति यत्सत्यम्, आत्मन्यपि मे बहुमानः। तत्कथं न पश्यामि। इति प्रक्रमे 'सागरिका—(आत्मगतम्।) हिअअ, समस्सस। मणोरहो वि दे एत्तिअं भूणिं ण गदो।' इति किंचिदरत्युपशमाच्छम इति तदुदाहरणम्। काव्येन्दुप्रकाशेऽपि 'शमोऽरतिसमो ज्ञेयः' इति तथैव लक्षणम्। शाकुन्तले—"शकुन्तलायामनुरक्तस्य राज्ञो ब्राह्मणकन्यात्वेनारतौ पुनः 'असंशयं क्षत्रपरिग्रहक्षमा—'इत्यादिनारतेरुपशमाच्छमः" इत्युदाहरणमात्रे भेदः। मन्दारमरन्देऽप्येवमेव तल्लक्षणं विहितम्॥

## विज्ञप्रिया

तापनलक्षणमाह—उपायेति। उद्देश्याऽर्थोपायः।

दुल्लहेति—

**"दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा।**
**प्रियसखि! विषमं प्रेम मरणं शरणं केवलमेकम्॥" इति संस्कृतम्।**

दुर्लभजनो राजा। णवरीति केवले देशी, एवं प्रधानं शरणमित्यन्वयः.

## कुसुमप्रतिमा

उपायेति। यत्तु उपायादर्शनं कष्टनिवारणकारणनवधारणं तत् तपनं नामाङ्गं भवेत्, तापयतीति व्युत्पत्तेः।

दुल्ल इति। "दुर्लभजनानुरागः लज्जा गुर्वी परवश आत्मा। प्रियसखि! विषमं प्रेम मरणं शरणं केवलमेकम्॥" इति संस्कृतानुवादः नवरीशब्दो देशीयः। हे प्रियसखि! दुल्लभे मादृशजनेन दुष्प्रापे जने उदयने मम अनुरागी वर्त्तते, तदनायासेन लाभान्नास्ति मदनकष्टनिवारणसम्भावनेति भावः। लज्जा गुर्वी सत्कुलजातत्वादिशाला, अतः स्वयं गत्वापि कामवेदना उपशमयितुं न शक्यत इत्याहः। आत्मा परवशः पराधीनः, अतएव लज्जां

विहायापि तत्रात्मसमर्पणं न सम्भवतीत्यभिप्रायः। प्रेम विषमम् उदयनं प्रति ममानुरागस्त्वातिमहान्, अत स्तल्यकु-मपि न शक्यत इति भावः। अतश्च एकं मरणमेव केवलं ममेदानीं शरणम्, अन्योपायाभावादित्याशयः।

अत्र सागरिकया मदनवेदनानिवारणीपायादर्शनात् तापनम्।

## विमला

तापनमाह, उपायेति।—यत्तु उपायस्य अदर्शनं, तत् तापनं नाम भवेत्। दशरूपककारास्तु तापनस्थले शमः इति व्यवहरन्ति। [तथाहि,—"तच्छमः शमः" इति; तस्याः,—पूर्वं निरुक्ताया अरतेः, शमः शम उच्यते इति च तदर्थः]।

उदाहरति, दुल्लहेति।—["दुर्लभजनानुरागी लज्जा गुर्वी परवश आत्मा। प्रियसखि ! विषमं प्रेम मरणं शरणं केवलमेकम्॥" इति संस्कृतमं]। णवरिशब्दः केवलार्थी देशीयः। दुर्लभे—दुष्प्रापे जने, अनुरागः, लज्जा, गुर्वी—महती, आत्मा परवशः,—पराधीनः। हे प्रियसखि ! प्रेम विषमम्—उत्कट, तस्मात् केवलं मरणम् एकं शरणम्—आश्रयः. अत्र इष्टलाभे उपायाभावेन सन्तापः। आर्य्या छन्दः। दशरूपककारमते तु उदाहरणं यथा रत्नावल्याम्;—राजा। वयस्य ! अनया लिखितोऽहमिति यत् सत्यम्, आत्मन्येव बहुमानः; तत् कथं न पश्यामि ? इत्तिप्रक्रमे "सागरिका (आत्मगतम्) हिअअ ! समस्सस समस्सस। मणोरही विरहे वृत्तिश्चं भूमिं ण गदो।' इति किञ्चिदरत्युपशमाच्छमः। ["हृदय ! समाश्वसिद्धिसमाश्वसिद्धि, मनोरथोऽपि ते एतावतीं भूमिं न गतः" इति संस्कृतम्]।

## लक्ष्मी

तापनलक्षणं निरूपयति—उपायेति। यत्तूपायादर्शनं क्लेशनिवारणहेत्वनवधारणम् तत् तापनं नामाङ्गं भवेत्।

**दुल्लह इति। दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा।**

**प्रियसखि ! विषमं प्रेम मरणं शरणं केवलमेकम्॥**

इति संस्कृतम्। णवरिशब्दः केवलार्थो देशीयः। प्रियसखि ! दुर्लभे मादृशाधमेन दुष्प्रापे ज़ने वत्सराजे मम अनुरागः प्रीतिः विद्यते तदनायासेनालब्धत्वान्नास्ति मनसिजक्लेशापाकरणसम्भावनेति भावः। लज्जा त्रपा गुर्वी सद्वंशोत्पन्नत्वाद्विपुला अतः स्वयं प्राप्यापि मदनव्यथामुपशात्वयितुं न शक्यत इति भावः। आत्मा परवशः अस्वन्त्रः तस्मात्त्रपां परित्यज्याऽपि तत्रात्मसमर्पणं न युज्यत इत्याशयः। प्रेम विषमं वत्सराजं प्रति मम रतिश्चा-तिविशालः, अतो विहातुमपि न सम्भवतीत्यभिप्रायः। अतो ह्येकं मम मरणमेव केवलं शरणम् उपायान्तरादर्शना-दिति भावः। अत्र सागरिकाया कामव्यथापाकरणोपायादर्शनात् तापनम्।

## रुचिरा

तपनं लक्षयति—३९६ **उपायेत्यादिना**।

३९६ **यत्। च। उपायादर्शनमुपायाभावः। तत्। तपनम् नाम। भवेत्।**

उदाहरति—**यथारत्नावल्याम्**। द्वितीयेऽङ्के। "**सागरिका**। 'सुसङ्गतां प्रत्याहे'ति शेषः।

**दुल्लहजणणुराओ** दुर्लभजनानुरागो। वत्सराजे ममानुरागः स च दुर्लभ इति भावः। **लज्जा**। **गुरुई** गुर्वी। अतः—**अप्पा** आत्मा। **परवसो** परवशः। लज्जाऽतिशयेन स्वयमपि स्वात्मानं समर्पयितुं न शक्नोमीति भावः। **पिअसहि** प्रियसखि! **विसमं** विषमम्। अननुरक्ते तत्रानुरक्तत्वान्मम वा दीनत्वात्तस्य च राजेन्द्रत्वादसमानभूमिकमिति यावत्। **पेम्मं** प्रेम। एवं सति एवं **एकम्**। **णवरि** केवलम्। **मरणं**। **सरणं** शरणम्। मरणमन्तरा नेदं दुःखं निवर्त्स्यते इति भावः। आर्य्यावृत्तम्। अत्र हि स्फुटं सागरिकाया अन्तःसन्तप्तत्वम्। अत्रेदम्बोध्यम्—येषां मते अरतेः शमनाच्छमस्तन्मते "असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः। सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः॥"इत्यभिज्ञानशाकुन्तलीयं पद्यमुदाहरणीयम्। दुष्यन्तस्य शकुन्तलायां मुनिदुहितृत्वेन रतेरुपशमः। इति ॥ ३५४ ॥

**परिहासवचो नर्म—**

यथा रत्नावल्याम्—'सुसंगता—सहि, जस्स किदे तुमं आअदा सो अअ दे पुरदो चिट्ठदि। सागरिका—(साभ्यसूयम्।) कस्स किदे अहं आअदा। 'सुसंगता—अलं अण्णसंकिदेण। णं चित्त-फलअस्स।'

---

## विवृतिः

णवरिअ शब्दः केवलार्थो देशी। सहीति। 'सखि, यस्य कृते त्वमागता सोऽयं ते पुरतस्तिष्ठति।' इति संस्कृतम्।

## विज्ञप्रिया

नर्मलक्षणमाह—परिहासेति। सहीति. "सखि! यस्य कृते त्वमायाता सोऽयं ते पुरतस्तिठती"ति संस्कृतम्। कस्सेति। "कस्य कृतेऽहमागता" इति संस्कृतम्। अयीति "अयि अन्यशङ्किते ननु चित्रफलकस्य" इति संस्कृतम्।

## कुसुमप्रतिमा

परीति। परिहासवच उपहासवाक्यं नर्म्म नामाङ्गम्। नर्म्मशब्दसक्तिरपि तत्रैव।

यतेति। "सखि! यस्य कृते त्वमागता, सोऽयं ते पुरतस्तिष्ठति। कस्य कृते अहमागता?। अयि अन्यशङ्किते! ननु चित्रपलकस्य।" इति संस्कृतानुवादः।

अत्र सखीवाक्ये परिहासप्रकाशात् नर्म्म।

धृतिरिति। परिहासना हरिहासे सत्यपि जाता धृतिर्धैर्य्यन्तुव नर्म्मद्यतिर्नामाङ्गम्, नर्म्मो द्योतनं धृत्वा धारणात् प्रकाशनमित व्युत्पत्तेः।

## विमला

नर्माह, परिहासेति।—परिहासवचः,—परिहासवाक्यं, नर्म। नाट्यशास्त्रकारा अप्याहुः,—"क्रीड़ाऽर्थं विहितं यत्र हास्यं नर्म्मेति तत् स्मृतम्" इति।

सहीति।—["सखि! यस्य कृते त्वमागता, सोऽयं ते पुरतः तिष्ठति!....। कस्य कृते अहमा-गता?......अयि! अन्यशङ्किते? नु चित्रफलकस्य" इति संस्कृतम्]।

## लक्ष्मी

नर्मलक्षणं निरूपयति—परिहासेति। परिहासवचः उपहासवाक्यं नर्म नामाङ्गम्। शक्तिरपि नर्मशब्दस्य तत्रैव।

उदाहरति—यथेति। 'सखि। यस्य कृते त्वमागता सोऽयं ते पुरस्तिष्ठति। कस्य कृते अहमागता? अयि अन्यशङ्किते! ननु चित्रफलकस्य' इति संस्कृतम्।

अत्र सखीवचने परिहासद्योतनात् नर्म। यथा च वेणीसंहारे—(दुर्योधनश्चेटीहस्तादर्धपात्रमादाय देव्यै समर्म्पयति। पुनः) भानुमतौ (अर्ध दत्वा) हला उवणेहि मे कुसुमाई जाव अवराणं पि देवाण सवरिणअंणिवत्तेमि। (हस्तौ प्रसारयति) [दुर्योधनः पुष्पाण्युपनयति। भानुमत्यास्तत्पस्पर्शजातकम्पाया हस्तात्पुष्पाणि पतन्ति] इत्यनेन नर्मणः दुःस्वप्नदर्शनोपशमार्थं देवतापूजाविघ्नकारिणां बीजोद्घाटनात्परिहासस्य प्रतिमुखाङ्गत्वं समीचीनम्।

## रुचिरा

नर्म लक्षयति—३९७ **परिहासेत्यादिना**। स्पष्टम्.

उदाहरति—**यथा। रत्नावल्याम्। 'सुसंगता** 'रत्नावलीं प्रत्याहे'ति शेषः। हे **सहि** सखि। **जस्स** यस्य। **किदे** कृते प्रसादनायेति यावत्। **तुम** त्वम्। **आअदा** आगता। **सो** सः। **अयं** वत्सराज इत्यर्थः। **दे** ते रत्नावल्या इति भावः। **पुरदो** पुरतः। **चिट्ठदि** तिष्ठति। **सागरिका** रत्नावली 'सुसङ्गतां प्रत्याहे'ति शेषः। **(साभ्यसूयम्) कस्स** कस्य। **किदे** कृते। **अहं** अहम् **आअदा** आगता। **सुसंगता** 'उत्तरयती'ति शेषः। **अण्णसंकिदेण** अन्यशङ्कितेनान्य (सपत्न्यादि)—शङ्कयेति यावत्। **अलं** अलं पर्याप्तमिति यावत्। **णं** ननु। **चित्तपलअस्स** चित्रफलकस्य। इदं केवलं नर्मवचः नायकार्थागमनस्यापह्नवनात्। इति लक्षणसमन्वयः।

**द्युतिस्तु परिहासजा ॥ ९१ ॥**

**नर्मद्युतिः—**

यथा तत्रैव—'सुसंगता—सहि, अदक्खिणा दाणिं सि तुमं जा एव्वं भट्टिणा हत्थावलम्बिदावि कोवं ण मुञ्चसि। सागरिका—(सभ्रूभङ्गमीषद्विहस्य।) सुसंगदे, दाणिं वि कीलिदं न विरमसि। केचित्तु—'दोषस्याच्छादनं हास्यं नर्मद्युतिः' इति वदन्ति।

---

## विवृतिः

'सखि, अदक्षिणेदानीमसि त्वं या एवं भर्त्रा हस्तावलम्बितापि कोपं न मुञ्चसि।' इति संस्कृतम्। 'सुसंगते, इदानीमपि क्रीडितं न विरमसि।' इति संस्कृतम्॥ उत्तरमुत्कृष्टतरमुत्तरं यस्य तत्॥ 'जयतु जयतु महाराजः।' इति संस्कृतम्॥ व्यसनस्य विपदः प्राप्तिः॥ 'भोः, मा कुप्य। एषा हि कदलीगृहान्तरं गता।' इति संस्कृतम्॥ एषा सागरिका॥ विशेषस्य प्रकर्षस्य वचनम्॥

## विवृतिपूर्तिः

परीति। नाट्यशास्त्रेप्युक्तम्—'क्रीडार्थं विहितं यत्र हास्यं नर्मेति तत्स्मृतम्।' इति॥

दोषेति। तथा च भरतः—'दोषप्रच्छादनार्थं तु नर्मद्युतिरिति स्मृतम्।' इति। काव्येन्दुप्रकाशकारोऽपि 'नर्मद्युतिः कोपगुप्तिः' इति तल्लक्षणं चकार॥.

## विज्ञप्रिया

नर्मद्युतिलक्षणमाह—धृतिरिति। परिहाससहिष्णुता इत्यर्थः। सहीति। सखि अदक्षिणा इदानीमसि त्वम्। या एवं भर्त्रा हस्तावलम्बिताऽपि इत्यर्थः। न मुञ्चसीति। सुसङ्गते! इदानीमपि न विरमसि। अत्र सागरिकायाः सुसङ्गताकृतपरिहाससहिष्णुता। नर्मणि तस्याऽसूयताप्रदर्शनाद् असहिष्णुता इति भेदः। केचिदिति। अत्र दोषा-च्छादनाप्रतीत्या अस्वरसः।

## कुसुमप्रतिमा

यथेति। "सखि! अदक्षिणेदानीमसि त्वम्, या एव भर्त्रा हस्तावलम्बितापि कोपं न मुञ्चसि। सुसङ्गते! इदानीमपि क्रीड़ितं न विरमसि।" इति संस्कृतानुवादः।

अत्र सुसङ्गतया परिहासे कृतेऽपि सागरिकया धैर्य्यावलम्बनान्नर्म्मद्युतिः।

केचिदिति। दोषस्य आच्छादनम् आवरणकरं यत् हास्यं तत् नर्म्मद्युतिः। ऊह्यमुदाहरणम्।

## विमला

नर्मद्युतिमाह, द्युतिरिति।—परिहासजा—परिहासेन जाता, द्युतिः,—शोभा, नर्मद्युतिः।

सहीति—["सखि ! अदक्षिणा इदानीमसि त्वं, या एवं भर्त्रा हस्तावलम्बिताऽपि कोपं न मुञ्चसि ।.....सुसङ्गते । इदानीमपि क्रीड़ितं न विरमसि ?" इति संस्कृतम्] ।

केचित्त्विति ।—तथा हि भरतः,—"दोषप्रच्छादनार्थस्तु नर्म्मद्युतिरिति स्मृतम्" इति । "नर्म्मद्युतिः कोपगुप्तिः" इति काव्येन्दुप्रकाशकारश्च ।

## लक्ष्मी

नर्मद्युतिलक्षणं दर्शयति—धृतिस्त्विति । परिदासजा परिहासे उपहासे सत्यपि जाता धृतिर्धैर्य्यन्तु नर्मणो द्योतनं नर्मद्युतिर्नामाङ्गम् ।

उदाहरति—यथेति । तत्रैव रत्नावल्यामेवेत्यर्थः । 'सखि ! अदक्षिणेदानीमसि त्वं, या एवं भर्त्रा हस्तावलम्बितापि कोपं न मुञ्चसि । सुसङ्गते ! इदानीमपि क्रीडितुं न विरमसि ।' इति संस्कृतम् । अत्र सुसङ्गतया उपहासे विहितेऽपि सागरिकया धैर्यावलम्बनान्नर्म्मद्युतिः । अत्र च सागरिकायाः सुसङ्गताकृतपरिहाससहिष्णुत्वम्, नर्मणि तस्याऽसूयता प्रदर्शनादसहिष्णुत्वमिति भेदः । मतान्तरं दर्शयति—केचित्त्वति दोषस्याच्छादनम् आवृतकरं यत् हास्यं तन्नर्म्मद्युतिः । उदाहरणं यथा रत्नावल्याम्—

विदूषकः—भो, अज्जावि एषा चउव्वेउवियवंभणोरिआउ । 'भोः अद्याप्येषा चतुर्वेदीय ब्राह्मण ऋचः पठितुं प्रवृत्ता' राजा-वयस्य ! किमप्यन्यचेतसा मया नावधीरितम्, तत्किमनयोक्तम् ।

विदूषकः—भो एदं एदाए पढिदं (भो एतदेतया पठितम्)—

दुल्लहजणाणुराओ, इत्यादि (१६८ पृष्ठे) गतं समस्तं पद्यं द्रष्टव्यम् ।

राजा—भो महाब्राह्मण ! कोऽन्य एवं ऋचामभिज्ञः ?' इति । अत्र मौर्ख्यदोषं प्रच्छादनार्थं यद्विदूषकेणोच्यते तद्राज्ञो हास्यहेतुत्वान्नर्म्मद्युतिः ।

## रुचिरा

नर्मद्युतिं लक्षयति—३८९ **परिहासजा** परिहासकृता । **द्युतिः** शोभा । **तु । नर्मद्युतिः** ॥ ३८७ ॥

उदाहरति—**यथा । तत्र** तस्यां रत्नावल्याम् । **अदक्खिणा**ऽदक्षिमा मूढेति यावत् । **दाणिं** इदानीं परसङ्कटावसरे इति यावत् । स्पष्टमन्यत् ।

भरतानुयायिनाम्मतं दर्शयति—**केचित्** 'दोषप्रच्छादनार्थन्तु नर्मद्युतिरिति स्मृतम् ।' इति भरतमतानुमन्तारः । **तु** ! स्पष्टमन्यत् । एतन्मते—उदाहरणं तु यथा रत्नावल्याम् 'विदूषकः ण किदो कहं पसादो, ज अज्जबि अक्खदसरीरा चिट्ठह्म (न कृतः कथं प्रसादः, यदद्यापि अक्षतशरीरास्तिष्ठामः)' इति ।

**प्रगमनं वाक्यं स्यादुत्तरोत्तरम्।**

यथा विक्रमोर्वश्याम्—"उर्वशी—जअदु जअदु महाराओ। राजा—मया नाम जितं यस्य त्वया जय उदीर्यते।" इत्यादि।

---

## विवृतिपूर्तिः

प्रगमनमिति। मन्दारमरन्देऽप्युक्तम्—'तस्यानुरागबीजस्य चोत्तरोत्तरभाषणैः। प्रकाशनं प्रगमनमितिं नाट्यविदो विदुः॥' इति॥

## विज्ञप्रिया

प्रशंसनरूपाङ्गस्य लक्षणमाह—प्रशंसनमिति। प्रशस्यतेऽनेन इति प्रशंसनम्, उत्तरोत्तरं, तादृशं वाक्यमेव प्रशंसननामाङ्गमित्यर्थः।

## कुसुमप्रतिमा

प्रगमनमिति। उत्तरोत्तरम् उत्कृष्टतरोत्तरस्वरूपं वाक्यं प्रगमनं नाम अङ्गं स्यात्, प्रकर्षेण उत्कर्षरूपेण गमनं ज्ञानं यस्य तदिति व्युत्पत्तेः।

यथेति। "जयतु जयतु महाराजः।" इति संस्कृतानुवादः।

अत्र मयेत्यादेरुत्कृष्टतरोत्तरस्वरूपवाक्यत्वात् प्रगमनम्।

## विमला

प्रगमनमाह, प्रगमनमिति।—उत्तरोत्तरम्—उत्तरम्—उत्कृष्टतरम्, उत्तरं यस्य तत् वाक्यं प्रगसनं स्यात्।

जअदु इति।—["जयति जयति महाराजः" इति संस्कृतम्]। मयेति।—यस्य (मम) त्वया जयः उदीर्य्यते—कीर्त्यते, (तेन) मया, जितं नाम—जितमेव। नामशब्दोऽत्र अवधारणार्थः।

## लक्ष्मी

प्रगमनलक्षणं निरूपयति,—प्रगमनमिति। उत्तरोत्तरम् उत्कृष्टतरोत्तरस्वरूपं वाक्यं प्रकर्षेण उत्कृष्टरूपेण गमनं ज्ञानं यस्य तत् प्रगमनं नामाङ्गं स्यात्।

उदाहरति—यथेति। 'जयतु जयतु महाराजः' इति संस्कृतम्।

अत्र मया नामेत्यादेरुत्कृष्टतरोत्तरवाक्यत्वात्प्रगमनम्।

## रुचिरा

प्रगममनं लक्षयति—३९० **उत्तरोत्तरमुत्तरादुत्कृष्टादुत्तरमत्कृष्टम्। वाक्यम्। प्रगमनं** तदाख्यं सन्ध्यङ्गम्।

उदाहरति—**यथेत्यादिना**। स्पष्टम्। अत्र उर्वश्या उक्तयपेक्षया पुरूरवस उक्तिरुत्कृष्टा॥ ३५४॥

**विरोधो व्यसनप्राप्तिः—**

यथा चण्डकौशिके—'राजा—नूनमसमीक्ष्यकारिणा मया अन्धेनेव स्फुरच्छिखाकलापो ज्वलनः पभ्द्यां समाक्रान्तः ।'

---

## विज्ञप्रिया

विरोधलक्षणमाह—विरोध इति । राजा हरिश्चन्द्रः । स्फुरदर्चिः-समूहोज्ज्वलनो विश्वामित्रः ।

## कुसुमप्रतिमा

विरोध इति । व्यसनप्राप्तिर्विपत्प्राप्तिर्विरोधो नामाङ्गम् । सम्पत्प्राप्ते र्विरोधितत्वाविरोध इति संज्ञा ।

यथेति । स्फुरन् प्रदीप्यमानः शिखाकलापो ज्वालासमूहो यस्य स तादृशो ज्वलनो वह्निः । अत्र हरिश्चन्द्रस्य विश्वामित्राद्विपत्प्राप्तेर्विरोधः ।

## विमला

विरोधमाह, विरोध इति ।—व्यसनस्य—विग्रहः, प्राप्तिः विरोधः । दशरूपककारस्तु विरोधमेव निरोधमाह; तथाहि,—"अथ निरोधः । द्वितरोधः" इति । यथा रत्नावल्याम्,—"राजा । धिङ्मुर्ख ! प्राप्ता कथ मपि दैवात्, कण्ठमनीतैव सा प्रकटरागा । रत्नावलीव कान्ता मम हस्ताद् भंशिता भवता ।" इत्यनेन वत्सराजस्य सागरिकासमागमरूपहितस्य वासवदत्ताप्रवेशसूचकेन विदूषकवचसा निरोधात् निरोधनम्" इति ।

उदाहरति, यथेति ।—असमीक्ष्यकारिणा—अविवेचकेन, मया अन्धेनैव—दृष्टिहीनेनेव, स्फुरन्—विराजन् शिखाकलापः,—अर्चिः समूहः, यस्य तथाभूतः, ज्वलनः,—अग्निः, पद्भ्यां, समाक्रान्तः,—दलितः । अत्राग्निकल्यस्य कौशिकस्य कोपात् राज्ञः व्यसनप्राप्तिः ।

## लक्ष्मी

विरोधलक्षण दर्शयति—विरोध इति । व्यसनप्राप्तिर्विपत्प्राप्तिः सम्पत्प्राप्तेर्विरोधित्वाद्विरोधो नामाङ्गम् ।

उदाहरति—यथेति । राजा हरिश्चन्द्रः । असमीक्ष्यकारिणा अविचारितविधायिना । स्फुरद्देदीप्यमानः शिखाकलापः अर्चिः समूहो यस्य स तथोक्तो ज्वलनोऽग्निः । अत्र विश्वामित्राद्धरिश्चन्द्रस्य विपत्प्राप्तेर्विरोधः । यथा वा सत्यहरिश्चन्द्रे—'राजा—देवि ! अवलम्बस्वमद्वचनम् । अत्रैव तिष्ठ । अशिक्षितपदचारा न शक्ष्यति भवती क्रमितुं दर्भाङ्कुरविधुरासु वनवसुन्धरासु ।

सुतारा—जं भोदि तं भोदु । अहं गमिस्सं । 'यद् भवति तद् भवतु अहं गमिष्यामि ।

राजा—(कुलपतिं प्रति) भगवन् !

**त्यजन् हेम्नो लक्षं (क्षां) चतुरुदधिकाञ्चीं च वसुधां**
**सुधाम्भोमिः स्नानादपि समधिकां प्रीतिमभजम् ।**

**सवत्सामेतां तु प्रवसनपरां वीक्ष्य दयिता-**
**मिदानीं मन्येऽहं ज्वलदनललीढं वपुरदः ॥ इति ।**

## रुचिरा

विरोधे लक्षयति—४०० **व्यसनप्राप्तिर्यतो** व्यसनं स्यात् सः । विरोधः ।

उदाहरति—**यथा । चण्डकौशिके । राजा** हरिश्चन्द्रः । 'अन्तः शोचती'ति शेषः । **नूनं** निश्चितम् । **असमीक्ष्यकारिणा** कर्त्तव्याकर्त्तव्यमसमीक्ष्य तत्कर्त्रा । **मया । अन्धेनेव । स्फुरच्छिखाकलापः** स्फुरन् जाज्वल्यमानः शिखाकलापो ज्वालापुञ्जो यस्य तथोक्तः । **ज्वलनो**ऽग्निस्तद्रूपः कौशिको मुनिः । **पद्भ्यां** चरणाभ्यां तद्रूपेणातिथ्येन । **समाक्रान्तो** दलितः तथाऽङ्गीकृत इति यावत् । प्रज्वलतोऽग्नेः पुद्भयामाक्रमणमिव मयाऽऽतिथ्येनाभ्यर्थितः कौशिक इति भावः । स्फुटाऽत्र तथा व्यसनप्राप्तिः ।

**कृद्धस्यानुनयः पुनः ॥ ९२ ॥**

**स्यात्पर्युपासनं—**

यथा रत्नावल्याम्—'विदूषकः—भो, मा कुप्य । एसा हि कदलीघरन्तरं गदा ।' इत्यादि ।

---

## विवृतिपूर्तिः

कृतस्येति । नाट्यशास्त्रेऽपि—'क्रुद्धस्यानुनयो यस्तु भवेत्तत्पर्युपासनम्'।' इति ॥

## कुसुमप्रतिमा

कृतस्येति । कृतस्य दोषस्य क्षालनाय पुनरनुनयः प्रसादनं पर्य्युपासनं नामाङ्गं स्यात् । अत्र व्युत्पत्तिः स्पष्टा ।

यथेति । "भोः ! सा कुप्य, एषा हि कदलीगृहान्तरंगता । इति संस्कृतानुवादः । अत्र कृतस्य च विवेचन-दोषस्य क्षालनाय पुनरनुनयात् पर्य्युपासनम् ।

## विमला

पर्य्युपासनमाह, कृतस्येति ।—कृतस्य—जातस्यापराधस्य, पुनः अनुनयः,—विनयोक्त्याऽनुसन्धानं प्रशमनमिति यावत्, पर्य्युपासनं स्यात् । नाट्यशास्त्रेऽप्युक्तम्;—"क्रुड्द्यस्यानुनयो यस्तु भवेत् तत् पर्य्युपासनम्" इति ।

भो ! मा कुप्पेति ।—["भो ! मा कुप्य, एषा हि कदलीगृहान्तरं गता" इति संस्कृतम्] ।

पुष्पमाह, पुष्पमिति ।—विशेषस्यं—प्रकर्षस्य, वचनम्—अनुरागजनक वाक्यमित्यर्थः, पुष्पं मतम् ।

भो वअस्मेति ।—["भो वयस्य ! एषा अपूर्वा श्रीस्त्वया समासादिता" इति संस्कृतम्] ।

## लक्ष्मी

अत्रापि विश्वामित्राद्विपत्प्राप्तेर्विरोधः ।

पर्युपासनलक्षणं निरूपयति—क्रुद्धस्येति । क्रुद्धस्य कुपितस्य शान्तये पुरनुनयः प्रसादनं पर्युपासनम् ।

उदाहरति—यथेति । 'भोः मा कुप्य । एषा हि कदलीगृहान्तरं गता' इति संस्कृतम । अत्र विहितस्यावि-चारितकर्मणः शान्तये पुनरनुनयात्पर्युपासनम् । यथा वा तत्रैव राजा—

> **प्रसीदेति ब्रूयामिदमसति कोपेन घटते**
> **करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।**
> **न मे दोषोऽस्तीति त्वमिदमपि हि ज्ञास्यसि मृषा**
> **किमेतस्मिन् वक्तुं क्षममिति न वेद्मि प्रियतमे ! ॥**

इत्यनेन चित्रगतयोर्नायकयोर्द्दर्शनात् कुपिताया वासवदत्ताया अनुनयनं नायकयोरनुरागोद्घाटनान्वयेन पर्युपासनमिति ।

## रुचिरा

पर्युपासनं लक्षयति—४०१ **कृतस्य** 'अपराधस्ये'ति शेषः । **अनुनयः** समापनम् । **पुनः । पयुपासनम् । स्यात्** । । ३८८ ॥

उदाहरति—**यथे**त्यादिना । स्पष्टम् । अत्र हि सागरिकाऽपयापनापराधस्य क्षमापणम् ।

**पुष्पं विशेषवचनं मतम् ।**

यथा तत्रैव—'(राजा हस्ते गृहीत्वा स्पर्श नाटयति ।) विदूषकः—भो बअस्स, एसा अपुव्वा सिरी तए समासादिदा । राजा—वयस्य, सत्यम् । श्रीरेषा, पाणिरप्यस्याः पारिजातस्य पल्लवः ।
कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः ॥'

---

## विवृतिः

'भो वयस्य, एषा अपूर्वा श्रीस्त्वया समासादिता ।' इति संस्कृतम् ॥

## विवृतिपूर्तिः

विशेषेति । रागजनकमित्यर्थः ॥

## विज्ञप्रिया

पर्युपासनाङ्गलक्षणमाह—कृतस्येति । कृतस्य कोपहेतोरित्यर्थः । पुनरनुनयः कोपाकरणहेतुप्रदर्शनमित्यर्थः । भो इति । भो व्यस्य मा कुप्य । एषा हि कदलीगृहान्तरं गतेति संस्कृतम् । एषेति—कदलीगृहान्तरप्रवेशस्य प्रदर्शनम् ।

पुष्पनामाङ्गलक्षणमाह—पुष्पामिति । अयं विशेषो विलक्षण पदार्थ इत्येवमर्थकं वचनमित्यर्थः ।

भो इति । "भो वयस्य एषाऽपूर्वा श्रीस्त्वया समासादिता" इति संस्कृतम् । श्रीरेषेति । स्वेदच्छद्म घर्मव्याजः । पारिजातपल्लवाद् अमृतदृवस्रवणात् ।

## कुसुमप्रतिमा

पुष्पमिति । विशेषवचनम् उत्कर्षविशेषशोधकं वाक्यं पुष्पं नामाङ्गं मतम् । पुष्पवच्चित्ताकर्षणादियं समाख्या ।

यथेति । "भो वयस्य ! एषा अपूर्वा श्रीस्त्वया समासादिता ।" इति संस्कृतानुवादः ।

श्रीरिति । एषा नायिका श्रीः साक्षाल्लक्ष्मीः, अस्याः पाणिरपि पारिजातस्य देवतरोः पल्लवः । अन्यथा कुतः कथम्, स्वेदः सात्त्विकविशेषो घर्म्म एव च्छद्म च्छलं यस्य तादृशः, एष अमृतद्रवः सुधारसः स्रवति पाणितो विगलति, पारिजातादिदेवतरुभ्य एव अमृतस्रवणदर्शनादिति भावः ।

अत्र सागरिकायाः सौन्दर्य्याद्युत्कर्षबोधनात् पुष्पम् ।

## विमला

श्रीरिति ।—एषा—स्त्री, श्रीः,—लक्ष्मीस्वरूपा, अस्याः पाणिरपि—हस्तोऽपि, पारिजातस्य—देवतरुविशेषस्य, पल्लवः, अन्यथा कुतः,—कथम्, स्वेदच्छन्ना—घर्मव्याजः, एषः अमृतद्रवः स्रवति—निःसरति ।

एतत्सर्वमनुरागहेतुकत्वात् विशेषवचनम् । धनिकेनाप्युक्तम्—"इत्यनेन नायकयोः साक्षादन्योऽदर्शनादिना अविशेषानुरागोद्घाटनात् पुष्पम्" इति । पथ्यावक्त्रं वृत्तम् ।

## लक्ष्मी

पुष्पलक्षणं निरूपयति—पुष्पमिति । विशेषवचनम् उत्कर्षविशेषबोधकं वाक्यम् अयं विशेषो विलक्षणपदार्थ इत्येवमर्थकं वचनमित्यर्थः, पुष्पवच्चित्तापकर्षणात् पुष्पं नामाङ्गम् ।

उदाहरति—यथेति । तत्रैव रत्नावल्यामेवेत्यर्थः । 'भो वयस्य ! एषा अपूर्वा श्रीस्त्वया समासादिता ।' इति संस्कृतम् ।

श्रीरेषेति । एषा नायिका श्रीः साक्षाल्लक्ष्मीः 'लक्ष्मीः पद्मासना देवी कमला श्रीर्हरिप्रिया' इत्यमरः, अस्या नायिकायाः पाणिः हस्तोऽपि पारिजातस्य मन्दारवृक्षस्य 'मन्दारः पारिजातकः' इत्यमरः, देवतरोरित्यर्थः पल्लवः किसलयः । अन्यथा कुतः कथं स्वेदच्छद्मधर्मव्याजः तादृश एष अमृतद्रवः सुधारसः स्रवति पाणितश्च्यवति । पारिजातादिदेववृक्षेभ्य एवामृतश्रवणदर्शनान्नूनमस्याः पाणिः पारिजातपल्लव इति भावः ।

अत्र सागरिकायाः सौन्दर्याद्युत्कर्षबोधनात् पुष्पम् ।

उदाहरति—यथेति । तत्रैव रत्नावल्यामेवेत्यर्थः ।

'न केवलं त्वं समं चित्रफलकेन । तद्यावद्गत्वा देव्यै निवेदयिष्यामि' इति संस्कृतम् ।

अत्र राजानं प्रति 'देव्यै निवेदयिष्यामि' इति वचनस्य साक्षात् कठोररू पत्वाद्वज्रम् ।

## रुचिरा

पुष्प लक्षयति ४०२ **विशेषवचनं** विशेषस्यानुरागस्याद्यात्मकबीजोद्भावकत्वरूपस्योत्कर्षस्य वचनम् । **पुष्पम् । मतम् ।**

उदाहरति—**यथा । तत्र** रत्नावल्याम् । **एव । "राजा (सहर्षम्)** 'सुसङ्गतां प्रत्याहे'ति शेषः । **यथाभवती** सुसङ्गता । **आह** । सागरिकायाः यादृशाः गुणा अभिहितास्तादृशा एवास्यामुपलभ्यन्ते इति भावः । स्पष्टमन्यत् । **विदूषकः** 'राजानं प्रत्याहे'ति शेषः । **भो । वअस्स** व्यस्य । **एसा** एषा सागरिका । **क्खु तुए** खलु त्वया । **अपव्वा सिरी** अपूर्वा श्रीः । **समासाहिदा** समासादिता । **राजा । वयस्य । सत्यम् ।**

**एषा** सागरिका । **श्रीर्लक्ष्मीः । अस्याः । पाणिः । अपि । पारिजातस्य** देववृक्षविशेषस्य । **पल्लवः** कोमलपत्रम् । **अन्यथा** तथाऽस्वीकारे । **एषः । स्वेदच्छद्मामृतद्रवः** स्वेदश्छद्म यस्य तादृशोऽमृतद्रवः । **कुतः । स्रवति ।** अत्र हि रत्नावल्यामनुरागरूपस्य बीजस्य रत्नावल्याः श्रीत्वाद्यभिधानेन विशेषोऽभिहितः ॥ ३५५ ॥"

**प्रत्यक्षनिष्ठुरं वज्रम्—**

यता तत्रैव—'राजा—कतमिहस्थोऽहं त्वया ज्ञातः । सुसंगता—ण केवलं तुमं समं चित्तफलएण । ता जाव गदुअ देवीए णिवेदइस्सम् ।'

---

## विवृतिः

प्रत्यक्षं साक्षान्निष्ठुरं परुषवचनम् । वज्रवद्दुःखदत्वाद् वज्रम् ॥ 'न केवलं त्वं समं चित्रफलकेन । तद्यावद्गत्वा देव्यै निवेदयिष्यामि' इति संस्कृतम् ॥

## विवृतिपूर्तिः

प्रत्यक्षेति । नाटयशास्त्रे महर्षिणाप्युक्तम्—'विरुक्षवचनप्रायं वज्रमित्यभिधीयते ।' इति ॥

## विज्ञप्रिया

वज्ररूपाङ्गलक्षणमाह—प्रत्यक्षेति । न केवलमिति । न केवलं त्वं समं चित्रफलकेन । तद्यावद्गत्वा देव्यै निवेदयिष्यामि । इति संस्कृतम् । इदं सुसङ्गतावाक्यं राज्ञः साक्षान्निष्ठुरम् ।

उपन्यासलक्षणमाह—उपन्यास इति । प्रसादनं प्रसादन प्रार्थना ।

## कुसुमप्रतिमा

प्रत्यक्षेति । प्रत्यक्षनिष्ठुरं साक्षात् परुषवाक्यं वज्रम् । वज्रतुयकष्टकरत्वादियं संज्ञा ।

(क) यथेति । "न केवलं त्वम्, समचित्रफलकेन । तद्यावङ्गत्वा देव्यै निवेदयिष्यामि ।" इति संस्कृतानुवाद । अत्र राजानं प्रति "देव्यै निवेदयिष्यामि" इति वाक्यस्य प्रत्यक्षनिष्ठुररूप वाद्वज्रम् ।

उपेति । प्रसादनं प्रसन्नताजननम् उपन्यासी नामाङ्गम्, प्रसन्नताया उपन्यसनमुपस्थापनमुपन्यास इति व्युत्पत्तेः ।

## विमला

वज्रमाह, प्रत्यक्षेति ।—प्रत्यक्षं—साक्षात्, निष्ठुरं—परुषवचनं, वज्रवत् दुःखदत्वाद् वज्रम् । नाट्यशास्त्रेऽप्युक्तं,—"विरुक्षवधनप्रायं वज्रामित्यभिधीयते" इति ।

ण केवलमिति ।—["न केवलं देवः, चित्रफलकेन सह सर्वोऽपि वृत्तान्तो मया विज्ञातः, तद् देव्यै गत्वा निवेदयिष्यामि" इति संस्कृतम्] ।

## रुचिरा

वज्रं लक्षयति—४०३ प्रत्यक्षनिष्ठुरमित्यादिना । स्पष्टम् ।

**यथा**। **तत्र** रत्नावल्याम्। **एव**। **राजा**। 'सुसङ्गतां प्रत्याहे'ति शेषः। स्पष्टम्। **सुसङ्गता** 'राजानं प्रत्याहे'ति शेषः। **ण** ना **केवलं** केवलम्। **देवो** भवानिति यावत्। किन्तु—**चित्तफलएण** चित्रफलकेन। 'सागरिका तत्रभवतो'—रिति शेषः। **समम्**। **सव्वो** रत्नावल्यां देवस्यानुरागादिरूपः। **वि** अपि। **वुत्तंती** वृत्तान्तः। **विण्णादो** विज्ञातः। **ता** तत्। **गदुअ** गत्व। **देवीए** देव्यै वासवदत्तायै इति यावत्। **णिव्वेदइस्सं** निवेदयिष्ये।' अत्र हि सुसङ्गताया वत्सराजं प्रति प्रत्यक्षं प्रतिकूलं वचनम्।

**उपन्यासः प्रसादनम् ॥ ९३ ॥**

यथा तत्रैव—'सुसंगता—भट्टुण, अलं सङ्काए। मए वि भट्टिणीए पसादेण कीलिदं ज्जेव एदिहिं। ता किं कण्णाभरणेण। अंदो वि मे गरुअरो पसादो एसो, जं तुए अहं एत्थ आलिहिदत्ति। कुविदा मे पिअसही साअरिआ। एसा ज्जेव पसादीअदु।' केचित्तु—'उपपत्तिकृतो ह्यर्थ उपन्यासः स कीर्तितः।' इति वदन्ति। उदाहरन्ति च, तत्रैव—'अदिमुहरा क्खु सा गब्भदासी' इति।

---

## विज्ञप्रिया

भर्तः ! अलं शङ्कया मयापि भर्त्र्याः प्रसादेन क्रीडितमेव एतैः। तत् किं कर्णाभरणेन ? अतोऽपि मे गुरुतरः प्रसाद एष यत्त्वयाऽहमत्रालिखितेति कुपिता मे प्रियसखी सागरिका। एषैव प्रसाद्यतामिति संस्कृतम्। तैः कर्णाभरणैः किं त्वयेत्यादिः सागरिकोक्तेरनुवादः। अत्र सागरिकाप्रसादनप्रार्थना उपपत्तिकृत इति युक्त्युपपादसत्वादुक्तेत्यर्थः। अदीति। अतिमुखरा खल्वेषा गर्भदासीति संस्कृतम्। गर्भदासी अन्तः पुरदासी। अत्र समं चित्रफलकेनेत्यादि निष्ठुरं सुसङ्गतया पूर्वमुक्तं वचनं विदूषकोक्त्युपपादकम्।

## विमला

उपन्यासमाह, उपन्यास इति।—प्रसादनं—प्रसन्नतासम्पादनम् उपन्यासः।

पसणो इति।—["प्रसन्नो मे भर्त्ता, अलं शङ्कया। एतेन भर्त्तुः प्रसादेन नया क्रीड़ितमेव, तत् किं कर्णाभरणेन ? अतोऽपि मे गुरुकः प्रसाद एषः, यत् त्वया अहम् अत्र आलिखिता इति कुपिता मे प्रियसखी सागरिका, एषैव प्रसाद्यताम्" इति संस्कृतम्]।

भरतादीनां मतमाह, केचित्त्विति।—केचित्—नाट्यशास्त्रानुयायिनः, बाहुः इति शेषः। उपपत्तिः,—युक्तिः, हेतुरित्यर्थः, तया कृतः यः अर्थः,—वस्तु, स उपन्यासः कीर्त्तितः इति। उदाहरति पुनस्ते एव; तत्रैव—रत्नावल्यां द्वितीयेऽङ्के; विदूषकः]। अदीति।—["अतिमुखरा खन्तु एषा गर्भदासौ" इति संस्कृतम्]। एषा—सुसङ्गता, अतिमुखरा—अत्यन्तं वाचाला, गर्भदासी—गर्भेण—जन्मना, दासीत्यर्थः।

## लक्ष्मी

उपन्यासलक्षणं निरूपयति—उपन्यास इति। प्रसादनं प्रसन्नताजननम् उपन्यसनमुपस्थापनमुपन्यासो नामाङ्गम्।

उदाहरति—यथेति।'भर्त्तः ! अलं शङ्कया। मयापि भर्त्र्याः प्रसादेन क्रीडितमेव एतैः। तत्किं कर्णाभरणेन अतोऽपि मे गुरुतरः प्रसाद एषः, यत्त्वया अहमांलिखितेति कुपिता मे प्रियसखी सागरिका। एषैव प्रसाद्यताम्' इति संस्कृतम्।

अत्र राज्ञ आत्मानं प्रति प्रसन्नताजननादुपन्यासः।

भरतमतोपन्यासलक्षणं दर्शयितुमाह—केचित्विति । यः अर्थः पदार्थः उपपत्त्या युक्त्या कृत उपपादितः स उपन्यास इति कीर्त्तित इति । मतेऽस्मिन् विषयविशेषस्य युक्त्या उपन्यासादुपस्थापनादुपन्यास इति विशेषः । 'अतिमुखरा खलु गर्भदासी' इति संस्कृतम् दासीगर्भाज्जाता दासी गर्भदासी अन्तःपुरदासीत्यर्थः ।

अत्र यतः सा गर्भदासी अत्यन्ताधमा, अत एवातिमुखरेति युक्त्या अतिमुखरत्वस्योपन्यासादुपन्यासः ।

## रुचिरा

उपायं लक्षयति—४०४ **प्रसादनं** प्रसन्नतां प्रत्यानयनम् । **उपन्यासः** ॥ ३८९ ॥

**यथा । तत्र** रत्नावल्याम् । **एव । 'सुसङ्गता** (राजानं प्रत्याह) । **भट्टण** भर्तः ! **संकाए** शङ्कया देव्यै वासवदत्तायै ममानुरागं सूचयिष्यतीयमिति भीत्येति भावः । **अलम्** । स्पष्टमन्यत् । वत्सराजस्य चित्र पश्यन्त्याः सागरिकाया हस्तादाच्छिद्य तत्समीपे राज्ञश्चित्रं सुसङ्गतया लिखितमिति कुपितेति पूर्वतः प्रसक्तमप्यज्ञावधेयम् ।

मतान्तरं दशयति—**केचित्त्वित्यादिना** ।

**केचित्तु** पुनः । **'यः । उपपत्तिकृतः** उपपत्त्या कारणेन कृतः । **अर्थः । सः । उपन्यासः । कीर्तितः ।' इति । वदन्ति । उदाहरन्ति । च । तत्र** रत्नावल्याम् । **एव । 'विदूषकः** । 'राजानं प्रत्याहेति शेषः । **एसा** एषा सुसङ्गता । **गब्भदासी** गर्भदासी । दास्या गर्भाज्जाता दासी न तु कर्मत इति भावः । स्पष्टमन्यत् ।

**चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते ।**

यथा महावीरचरिते तृतीयङ्के—

**'परिषदियमृषीणामेव वीरो युधाजित्,**

**सह नृपतिरमात्यैर्लोमपादश्च वृद्धः ।**

**अयमविरतयज्ञो ब्रह्मवादी पुराणः**

**प्रभुरपि जनकानामङ्ग भो याचकस्ते ॥'**

इत्यत्र ऋषिक्षत्त्रादीनां वर्णानां मेलनम् ।

अभिनवगुप्तपादास्तु—'वर्णशब्देन पात्राण्युपलक्ष्यन्ते । संहारो मेलनम्' इति व्याचक्षते । उदाहरन्ति च रत्नावल्यां द्वितीयेऽङ्के—'अदो वि मे अअं गुरुअरो पसादो—' इत्यादेरारभ्य 'णं हत्थे गेण्हिअ पसादेहि णम् । राजा—क्वासौ क्वासौ ।' इत्यादि ।

---

## विवृतिः

भर्तः, अलं शङ्कया । मयापि भत्रर्याः प्रसादेन क्रीडितमेव एतैः । तत्किं कर्णाभरणेन अतोऽपि मे गुरुतरः प्रसाद एषः, यत्त्वया अहमत्र आलेखितेति कुपिता मे प्रियसखी सागरिका । एषैव प्रसाद्यताम् ।' इति संस्कृतम् ॥ उपपत्तिर्हेतुः, तया कृतः ॥ 'अतिमुखरा खल्वेषा(सा) गर्भदासी ।' इति संस्कृतम् । दासीगर्भाज्जाता दासी गर्भ-दासी ॥

## विवृतिपूर्तिः

उपेति । नाट्यशास्त्रे त्विदमेवोपन्यासलक्षणमुंपलभ्यते ॥

ऋषीणामिति । ऋषति वेदं पश्यतीति ऋषिः । गत्यर्थकानां ज्ञानार्थकत्वाद् धातूनामनेकार्थकत्वाद्वेह ऋषेर्दर्शने वृत्तिः । यास्कोऽपि ऋषिशब्दस्य प्रवृत्तिनिमित्तं वेदसंबन्धिदर्शनमेव निर्णीतवान् । दर्शनं च प्रत्यक्षीकरणं चाक्षुषज्ञानमिति ॥

युधाजिदिति । युधाजित्कैकेयीभ्राता ॥

लोमपादेति । लोमपादोऽङ्गदेशाधिपतिः ॥

## विज्ञप्रिया

वर्णसंहाराङ्गलक्षणमाह—चातुर्वर्ण्येति । ब्राह्मणाद्यनेकवर्णानां मेलनकथनमित्यर्थः ।

परिषदियमिति । मिलितब्राह्मणाद्यनेकवर्णसभाप्रदर्शनमिदम् । इयमृषीणां परिषद् सभा । युधाजित् । केकयदेशपतिरपि ऋषिभिरमात्यैश्च समम् एष वृद्धो राजा लोमपादः । अयमपि जनकानां जनकवंशस्य प्रभुः सरिध्वजः अविरतयज्ञो ब्रह्मवादी च । अद्रुहः द्रोहशून्यास्ते प्रसिद्धा याजकाः एते इति शेषः ।

पात्राणीति । नाट्यपात्राणीत्यर्थः । अदोवीति । अतोऽपि मे अयं गुरुतरः प्रसाद इत्यादेरारभ्य इत्यर्थः । इत्यादेरित्यवधौ पञ्चमी । जं किण अहं तत एत्थ आलिहि देत्यादिकमादवित्याद्यवधिरूपेत्यर्थः । णं हत्थेति । ननु हस्ते गृहीत्वा प्रसादय एनामित्यर्थः । क्वासौ क्वासाविति हर्षे वीप्सा । अत्र राजा सुसङ्गता सागरिकाश्च पात्राणि, एषां मेलनम् ।

## विमला

वर्णसंहारमाह, चातुर्वर्ण्येति ।—चतुर्णां वर्णानां—ब्राह्मणक्षत्रियवैश्यशूद्राणां समाहारः, चत्वारो वर्णाः वा चातुर्वर्ण्यं, तस्य उपगमनं—मेलनं, वर्णसंहारः इष्यते ।

उदाहरति, परिषदिति ।—अङ्गेत्यामन्त्रणे । भो अङ्ग ! भो जामदग्न्य !—इयम् ऋषीणाम् [ऋषन्ति—वेदं पश्यन्ति इति ऋषयः तेषां, गत्यर्थधातूनाज्ञानार्थकत्वस्वीकारात् धातूनामनेकार्थवत्त्वसिद्धेर्वा ऋषतेर्दर्शनार्थे वृत्तिः यास्कमताम् रूपा ज्ञेया; प्रत्यक्षीकरणमेव अत्र दर्शनं, न चाक्षुषज्ञानमिति] परिषत्—सभा समूह ज्ञेया; प्रत्यक्षीकरणमेव अत्र दर्शनं, न चाक्षुषज्ञानमिति] परिषत्—सभा समूह इति यावत्, एष वीरी युधाजित्—कैकेयीभ्राता, अमात्यैः सह नृपतिः,—दश रथः, वृद्धो लोमपादश्च, अयम् अविरतयज्ञः,—सततयज्ञानुष्ठायी, पुराणः,—स्थविरः ब्रह्मवादी—वेदनिरतः, जनकानां—विदेहवंशीयानां, प्रभुः,—सीरध्वजः इति भावः, अपि ते—तव, याचकारच, एते सर्वे समवेता इति शेषः । अत्र मालिनी छन्दः ।

एसो एब्ब इति ।—["एष एव मे अयं गुरुतरः प्रसादः" इति, "ननु हस्तेगृह्य प्रसादय एनाम्" इति च संस्कृतम्] । अत्र राजविदूषकसागरिकासूसङ्गता रूपाणां पात्राणां मेलनम् । ["हस्तेगृह्य" इति समस्तत्वात् ल्यप्] ।

## लक्ष्मी

वर्णसंहारलक्षणं निरूपयति—चातुर्वर्ण्यमिति । चत्वारो वर्णा एव चातुर्वर्ण्यम् 'गुणवचनब्राह्मणादिभ्य' इति स्वार्थे ष्यञ् प्रत्ययः । तस्य चातुर्वर्ण्यस्य ब्राह्मणक्षत्रियविट्शूद्रस्य 'वर्णाः स्युर्ब्राह्मणादयः' इत्यमरः, उपगमनम् उपस्थितिरेकत्रमेलनमिति यावत्, वर्णानां संहारो मेलनं यत्र स वर्णसंहारो नामाङ्गमिष्यते ।

उदाहरति—यथेति । परिषदियमिति । मिलितब्राह्मणाद्यनेकवर्णसभाप्रदर्शनमिदम् ।

अङ्ग ! भो जामदग्न्य ! इयम् ऋषीणां मुनीनां परिषत् सभा, ऋषति वेदं पश्यतीति ऋषिः 'ये गत्यर्थास्ते दर्शनार्थाः' इति नियमाद् गत्यर्थकानां धातूनां ज्ञानार्थकत्वात्, धातूनामनेकार्यद्वेह ऋषेर्दर्शने वृत्तिः । निरुक्तावपि ऋषिशब्दस्य प्रवृत्तिनिमित्तं दर्शनमेव निर्णीतम् । दर्शनं चात्र न चाक्षुषज्ञानं किन्तु प्रत्यक्षीकरणमेवेति ज्ञेयम् । एष वीरो युधाजित् कैकयी भ्रातापि अमात्यैः सचिवैः सह एष च वृद्धो लोमपादो नामाङ्गदेशाधिपतिः नृपतिः अयमपि जनकानां जनकवंशीयानां प्रभुः सीरध्वजो नाम अविरतयज्ञः सर्वदा यागासक्तः पुराणः प्राचीनो ब्रह्मवादी वेदवक्ता एते सर्व एव ते तव समीपे याचकाः शान्तिप्रार्थिन आगता इति शेषः । मालनीछन्दः । अत्र अमात्यैरिति बहुवचनोपन्यासाद्यथासम्भवं तत्साहित्येन विट्शूद्रावपि ग्राह्यौ । एतच्च विवरणकृता 'ऋषिक्षत्रियादीनाम्' इत्यत्रादिपदोपदानादेव स्फुटीकृतम्, ततश्च चातुर्वर्ण्यस्य मेलनाद्वर्णोपसंहारः ।

वर्णपदं पात्रोपलक्षकमिति व्याचक्षतां मतं दर्शयति—अभिनवगुप्तपादा इति । एतैर्हि भरतसूत्रे 'अभिनवभारती' नामकव्याख्या विहिता पात्राणि नाटकीयव्यक्त्यः । 'अतोऽपि मे अयं गुरुतरः प्रसाद' इति संस्कृतम् । इत्यादेरित्यवधौ पञ्चमी 'ननु हस्ते गृहीत्वा प्रसादय एनाम्' इति च संस्कृतम् । क्वाऽसौ क्वासाविति हर्षे वीप्सा । अत्र राज-विदूषक-सागरिकासुसङ्गतासंज्ञकानां पात्राणां मेलनाद्वर्णसंहारः । नाट्यदर्पणकृताऽपि 'वर्णानां नायकप्रतिनायकनायिकासहायादिपात्राणां संहार एकत्रकरणमित्युक्तम् । उक्तरीत्यैवोदारणञ्चापि दर्शितम् । एके तु वर्णितार्थतिरस्कारं वर्णसंहारमामनन्ति । उदाहरन्ति च यथा वेणीसंहारे कञ्चुकिना रथकेतनपतने निवेदिते भानुमती—'अन्तरी अदु ताव एदं समत्थवंभणाणं वेयज्झुणिमंगलुग्घोसेण' 'अन्यरीयतां तावदेतत् समर्थः ब्राह्मणानां वेदध्वनिमङ्गलोद्घोषेण ।' इति संस्कृतम् ।

## रुचिरा

वर्णसंहारं लक्षयति—४०५ **चातुर्वर्ण्येति** ।

४०५ **चातुर्वर्ण्योपगमनं** चत्वार एव वर्णाश्चातुर्वर्ण्यं तस्योपगमनं समुपस्थितिः । चतुर्वर्ण्यादीनां स्वार्थे उपसङ्ख्यानमिति ष्यञ् । **वर्णसंहारः । इष्यते ।**

**यथा । महावीरचरिते । तृतीयङ्के ।** वसिष्ठो जामदग्न्यंम प्राह—"**इयं ऋषीणां** सत्यवचसां दिव्यज्ञानानामिति भावः । **परिषत्** सभा । अथास्यां सभायाम्—**एषः । वीरः । युधाजित्** कैकेयाभ्राता । **च** तथा **अमात्यैर्मन्त्रिभिः । सह । वृद्धः रामपादस्तदाख्यः । नृपतिः । अयं** दशरथ इति भावः । **अविरतयज्ञो**ऽविरतो यज्ञो यस्य स तादृशः । **ब्रह्मवादी** वेदतत्त्वोपदेष्टा । **पुराणः जनकानाम् । प्रभुः । अपि** 'अत्रेत्येष' इति शेषः । **भो अङ्ग** प्रिय ! [अङ्ग प्रिये प्रतीके चे'ति गोपालः । **ते** तव । **याचकः** । मालिनीच्छन्दः ॥ ३५६ ॥"

लक्ष्यं सङ्गमयते—**इत्यत्रे**त्यादिना ।

**इत्यत्र । ऋषिक्षत्त्रियादीनाम् । वर्णानाम् । मेलनम् ।** ऋषयो ब्राह्मणनृपयः क्षत्त्रिया अमात्याः पुनः सर्वे ज्ञानिन इति चातुर्वर्ण्यं बोध्यम् ।

आचार्यान्तरमतं दर्शयति—**अभिनवगुप्तपादे**त्यादिना ।

**अभिनवगुप्तपादाः** नाटयालोकप्रणेतारः । **तु । 'वर्णशब्देन । पात्राणि । उपलक्ष्यन्ते ।** वर्णसंहार इत्यत्र—तत्संहारस्तेषां संहार इति । **मेलनम् ।' इति । व्याचक्षते । 'एसो** एषः । **एव्व** एव । **मे** मम । **गुरुओ पसादो** गुरुः प्रसादः । **ता** तद् । **गदुअ** गत्वा । **एसा** एषा । **पसादीअदु** प्रसाद्यताम् ।' इति सुसङ्गतावचः श्रुत्वेति शेषः । **राजा** 'सागरिकां प्रत्याहे'ति शेषः । **असौ** सागरिका । **क्वास्तीति** शेषः । **दर्शयदर्शय ।' इत्यारभ्य 'सुसङ्गता । भट्टाभर्तः ! अतिकोवणा** अतिकोपना । **क्खु** खलु । **एसा** एषा । **अग्गहत्थेण** अग्रहस्तेन **गेहिणअ** गृहीत्वा । **णं** एनाम् । **प्रसादेहि** प्रसादय ।' **इत्यादि । उदाहरन्ति । च** । अत्र हि सुसङ्गताया राज्ञो विदुषकस्य सागरिकायाश्चेति त्रयाणां पात्राणां सम्मेलनम् । एवं च विदूषकस्य ब्राह्मणस्य राज्ञः क्षत्रस्य सुसङ्गतायाः शूद्रायाश्चेति त्रयाणामेव वर्णनामपि मेलने वर्णसंहार इति द्योतितम् ।

एवं प्रतिमुखाङ्गानि निरूप्य गर्भाङ्गानि निरूपयितुमुपक्रमते—**अथे**त्यादिना ।

अथ गर्भाङ्गानि—

**अभूताहरणं मार्गो रूपोदाहरणे क्रमः ॥ ९४ ॥**

**संग्रहश्चानुमानं च प्रार्थना क्षिप्तिरेव च ।**

**त्रो (तो) टकाधिबलोद्वेगा गर्भे स्युर्विद्रवस्तथा ॥ ९५ ॥**

---

## विवृतिः

चत्वारो वर्णाश्चातुर्वर्ण्यम्, तस्योपगमनं मेलनम् ॥ 'अतोऽपि मे अयं गुरुतरः प्रसादः ।' इति संस्कृतम् । 'ननु हस्ते गृहीत्वा प्रसादय एनाम् ।' इति संस्कृतम् । अत्र राज-विदूषक-सागरिका-सुसंगता-पात्राणां मेलनम् ॥

अत्र त्रयोदशगर्भाङ्गान्याह—अभूताहरणमिति ।

## विज्ञप्रिया

गर्भसन्धेर्द्वादशाङ्गान्याह—अभूतेति । अभूताहरणलक्षणमाह—-तत्र व्याजेति । अश्वत्थामा हत इति युधिष्ठिरस्य व्याजाश्रयवाक्यम् ।

## कुसुमप्रतिमा

अभूतेति । अभूताहरणादीनि गर्भसन्धे रङ्गानि त्रयोधश ।

तत्रेति । तत्र तेषु त्रयोदशविधेषु अङ्गेषु मध्ये, व्याजाश्रयं कपटतायुक्तं वाक्यम् अभूताहरणं नाम अङ्गं मतम्, अभूतस्य असत्यस्व आहरणं भङ्गोविशेषेणाविर्भावनमिति व्युत्पत्तेः ।

## लक्ष्मी

गर्भसन्धेस्त्रयोदशाङ्गनीति प्रतिपादयितुमाह—अभूतेति । अभूताहरणादिविद्रवान्तास्त्रयोदश गर्भसन्धे-रङ्गानीत्यर्थः ।

## रुचिरा

**अथ । गर्भाङ्गानि** गर्भस्य सन्धेरङ्गानि उच्यन्ते इति शेषः । ४०६ **गर्भे** तदाख्ये सन्धौ । **अभूताहरणं** मभूतस्याहरणम् । **मार्गः । रूपोदाहरणे** । रूपं चोदाहरणं चेत्यर्थः । **सङ्ग्रहः । क्रमः । च** तथा । **अनुमानम् । च । प्रार्थना । क्षिप्तिः । एव । च । तोटकाधिबलोद्वेगा**स्तोटकमधिबलमुद्वेगश्च । **तथा । विद्रव** 'इत्येते त्रयोदशा-ङ्गानी'ति शेषः । **स्युः** ॥ ३९० ॥ ३९१ ॥

क्रमादेतानि लक्षयितुं प्रवृत्तोऽभूताहरणं लक्षयति—४०७ **तत्रे**त्यादिना ।

तत्र व्याजाश्रयं वाक्यमभूताहरणं मतम् ।

यथा अश्वत्थामाङ्के—

**'अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा**
**स्वैरं शेषे गज इति पुनर्व्याहृतं सत्यवाचा ।**
**तच्छ्रुत्वासौ दयिततनयः प्रत्ययात्तस्य राज्ञः**
**शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच ॥'**

---

## विवृतिः

व्याजाश्रयं छलसंबद्धम् ॥

## विवृतिपूर्तिः

लोमपादेति । लोमपादोऽङ्गदेशाधिपातिः ॥

पृथासूनुनेति । पृथासूनुना युधिष्ठिरेण ॥

## कुसुमप्रतिमा

यथेति । अश्वत्थामाङ्के अश्वत्थामप्रधानाङ्के वेणीसंहारनाटकस्य तृतीयाङ्क इत्यर्थः । अन्यताप्येवम् ।

अश्वेति । "तच्छ्रुत्वासौ दयिततनयः प्रत्ययात्तस्य राज्ञः शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुनीच ॥" इति द्वितीयार्द्धम् । सत्यवाचा सर्वदा सत्यवादिना पृथासूनुना कुन्तीपुत्रेण युधिष्ठिरेण, अश्वथामा हत इति स्पष्टं सर्वश्रव्यं यथा स्यात्तथा उक्त्वा, शेषे पुनस्तत परन्तु, स्वैरं मन्दम् अश्रव्यं यथा स्यात्तथा गज इति व्याहृतमुक्तम् । दयिततनयः प्रियपुत्रः असौ द्रोणाचार्य्यः, तत् स्पष्टं वाक्यं श्रुत्वा, तस्य राज्ञो युधिष्ठिरस्य प्रत्ययात् सत्यवादित्वविश्वासात् आजौ युद्धे शस्त्राषि नयनसलिलञ्चापि तुल्यं युगपदेव मुमोच तत्याज ।

अत्र कपटतायोगादभूताहरणम् ।

## विमला

उदाहरति, यथेति ।—अश्वत्तामेति ।—अश्वत्थामा इतः,—विनाशितः इति पृथा—कुन्ती, तस्याः सूनुः,—सुतः तेन, युधिष्ठिरेणेत्यर्थः, सत्यवाचा—सत्यवादिना सता, स्पष्टं—सुप्यक्तम्, उक्त्वा, शेषे—वाक्यावसाने, पुनः स्वैरं—मन्दं, यथा स्यात् तथा, ["पुनः" इत्यत्र "किल" इति पाठान्तरम्] गज इति व्याहतम्—उक्तम् । अत्र युधिष्ठिरस्य द्रोणाचार्य्यं श्रावयितुम् "अश्वत्थामा हतः" इत्युर्थः, "गजः" इति तु वाक्यावसाने तत्रापि नीचैरिति स्फुटं कैतवपूर्णमिदं वचनम् ।

## लक्ष्मी

तत्राभूताहरणलक्षणं निरूपयति—तत्र व्याजेति । तत्र तेषु त्रयोदशप्रकारेषु अङ्गेषु मध्य इत्यर्थः, व्याजाश्रये छलसंबद्धं वाक्यम् अभूतस्य असत्यस्य आहरणमाविष्करणं यत्र तत् अभूताहरणं नामाङ्गम् ।

द्रोणाचार्यस्य शस्त्रत्यागे कारणं दर्शयति—अश्वत्थामा हत इति । सत्यवाचा सर्वदा तथ्यवादिना पृथासूनुना कुन्तीतनयेन युधिष्ठिरेण 'अश्वत्थामा हत' इति स्पष्टं परश्रवणयोग्यं यथा स्यात्तथा उक्तत्वा कथयित्वा शेषे वचनसमाप्तौ स्वरं मन्दम् परश्रवणायोग्यमित्यर्थ इदमपि गज इति इति शब्दः स्वरूपप्रदर्शनार्थः, व्याहृतमुक्तम् । तत् 'अश्वत्थामा हत' इति वाक्यं श्रुत्वाऽऽकर्ण्य तस्य सत्यवाचः राज्ञो युधिष्ठिरस्य प्रत्ययाद्विश्वासात् दयितः प्रियस्तनयः पुत्रो यस्य स असौ द्रोणाचार्यः आजौ सङ्ग्रामे शस्त्राणि नयनसलिलं नेत्रजलञ्चापि तुल्यं युगपदेव मुमोच तत्याज । भीमसेनेन जवेन सङ्ग्रामान्निः सारितेऽश्वत्थाम्नि सङ्ग्रामे अश्वत्थामा हत इति कोलाहले सति दीर्घजीविनस्तस्य मरणासम्भवात् द्रोणाचार्येण मा पृष्टः सत्यावादी युधिष्ठिरः श्रीकृष्णमन्त्रणया अश्वत्थामानामकगजमरणच्छलेनोक्तवान् अश्वत्था' हत इति, ततः पुत्रशोकाकुलो द्रोणाचार्यः शस्त्रं मुमोचेति भावः । मन्दाक्रान्ता छन्दः । मन्दाक्रान्ताम्बुधिरभनगौ मो भनो गौ च युग्ममिति तल्लक्षणात् । अत्र छलसम्बद्धत्वादभूताहरणम् ।

## रुचिरा

४०७ **तत्र** तेषु त्रयोदशस्वङ्गेसु मध्ये इत्यर्थः । **व्याजाश्रयं** व्याजश्छलमाश्रयो यस्य तादृशम् । छलेनोच्चरितमिति भावः । **वाक्यम्** । **अभूताहरणम्** । **मतम्** ।

उदाहरति—**यथा** । **अश्वत्थामाङ्के** अश्वथामचरितप्रधाने वेणीसंहारस्य तृतीयेऽङ्के इति भावः ।

"**अश्वत्थामा** । **हतो** नष्टः । **इत्येवम्** । **सत्यवाचा** । **पृथासुनुना** । पृथायाः कुन्त्याः सुनुस्तेन युधिष्ठिरेण । **स्पष्टम्** । **उक्त्वा** कथयित्वा । **शेषे**ऽन्ते **स्वैरं** मन्दम् । 'स्वैरः स्वच्छन्दमन्दयो'रिति मेदिनी । **गजः** । **इति** । **व्याहृत**मुच्चरितम् । **तत्**सत्यवाचा स्पष्टमुक्तमित्यर्थः । **श्रुत्वा** । **असौ** । **पुनः** । **दयिततनयः** प्रियपुत्रः । **द्रोणाचार्य** इत्यर्थः । **तस्य** सत्यवकतुर्युधिष्ठिरस्येति यावत् । **राज्ञः** । **प्रत्ययात्** विश्वासात् । **आजौ** सङ्ग्रामे । **शस्त्राणि** । **नयनसलिलं** पुत्रमरणशोकोत्थमश्रु । **च** । **अपि** । **तुल्यम**ेककालवच्छेदेन । **मुमोच** । अयम्भावः—यावदश्वत्थामा तावदहं योत्स्ये इति प्रतिज्ञाय योद्धुं प्रवत्ते शत्रूंश्च संहरति अश्वत्ताम्नश्च चिरजीवित्वे तदसम्भवोऽसम्भवएवेति, अथापि सन्त्रस्ताः पाण्डवाः—'अश्वत्थामा हत' इति मुहुरुज्जुगः, किन्तु भगवता द्रोणेन शस्त्रण्यमोचयित्वा सर्वे यूयं मिथ्या वादिनो नाहं युष्माकं वच आददे अथ यदि युधिष्ठिर एवं वदेत्तदा विरमिष्यामि इति प्रत्युक्तास्ते अश्वत्थामानं गजं निहत्य युधिष्ठिरं कथमपि तथा वक्तुं प्रोत्साहितवन्तः । राजा च सत्यवागपि च्छलेन अश्वत्थामा हत इत्युच्चैरुच्चार्यावस्थितः पाण्डवेषु च हर्षनादेन रोदसी प्रतिनादयमानेषु मन्दं स्वं सत्यवाक्यत्वं साधयितुं गज इत्येवं युधिष्ठिर उच्चारितवान् । 'अश्वत्थामा गजो हत'इति वाक्यं सङ्गमयन्निव तथोवाच अजातशत्रुरिति तात्पय्यम् । वस्तुतस्तु तथात्वाभावात् व्याजादेवेदमुक्तमिति । मन्दाक्रान्ता छन्दस्तल्लक्षणं यथा—'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतोताद् गुरू चे'दिति ॥ ३५८ ॥'

**तत्त्वार्थकथनं मार्गः—**

**यथा चण्डकौशिके—'राजा—भगवन्,**

**गृह्यतामर्जितमिदं भार्यातनयविक्रयात्।**

**शेषस्यार्थे करिष्यामि चण्डालेऽप्यात्मविक्रयम्॥'**

---

## विवृतिः

तत्त्वार्थकथनं यथार्थकथनम्॥

## विवृतिपूर्तिः

शेषे इति। शेषे वाक्यसमाप्तौ॥

असाविति। असौ द्रोणः॥

गृह्यतामिति। कौशिकं प्रति राज्ञो हरिश्चन्द्रस्योक्तिरेषा॥

## विज्ञप्रिया

मार्गरूपाङ्गलक्षणमाह—तत्त्वार्थेति। अव्याजकथनमित्यर्थः। गृह्यतामिति-विश्वामित्रं प्रति हरिश्चन्द्रनृपतेरुक्तिरियम्। भार्य्यायास्तनयस्य विक्रयणादर्जितमिदं वित्तं गृह्यतामित्यन्वयः। शेषस्य वित्तस्याप्यर्थे निमित्तमात्मविक्रमं करिष्यामि। तत्र राज्ञः आपद्यपि अव्याजकथनम्।

## कुसुमप्रतिमा

तत्त्वेति। तत्त्वार्थस्य यथार्थकर्त्तव्यविषयस्य कथनं मार्गो नामाङ्गम्, मृग्यते सत्यतया धार्म्मिकैरन्विष्यत इति मार्ग इति व्युत्पत्तेः।

गृह्यतामिति। स्पष्टोऽर्थः।

अत्र हरिश्चन्द्रस्य यथार्थ कर्त्तव्यविषयकथनान्मार्गः।

## विमला

मार्गमाह, तत्त्वेति।—तत्त्वार्थस्य कथनं मार्गः।

उदाहरति,—गृह्यतामिति।—विश्वामित्रं प्रति राज्ञः हरिश्चन्द्रस्येयमुक्तिः। भार्य्या च तनयश्च तयोः विक्रयात्—मूल्यग्रहणपूर्वकार्पणात्, अर्जित—लब्धम्, इदं धनं गृह्यतां, शेषस्य—अविशिष्ट, देयस्य इत्यर्थः, अर्थे—निमित्तं, चाण्डालेऽपि आत्मविक्रयं—दास्यमित्यर्थः, करिष्यामि। अत्र राज्ञः तत्त्वार्थभाषणम्।

## लक्ष्मी

मार्गलक्षणं दर्शयति— तत्त्वार्थेति । तत्वार्थस्य यथार्थकर्त्तव्यविषयस्य कथनं मृग्यते यथार्थतया धार्मिकैरन्विष्यत इति मार्गो नामाङ्गम् ।

उदाहरति—यथेति । राजा हरिश्चन्द्रः । गृह्यतामिति । विश्वामित्रं प्रति हरिश्चन्द्रनृपतेरुक्तिरियम् । भार्यायाः तनयस्य च विक्रयात् अर्जितमिदं वित्तं गृह्यतां स्वीकुरुताम् । शेषस्य विशिष्टस्याऽप्यर्थे निमित्तं चण्डालेऽऽत्मविक्रयं करिष्यामि विधास्यामि ।

अत्र हरिश्चन्द्रस्य यथार्थकर्त्तव्यविषयप्रतिपादनान्मार्गः । यथा वा मुद्राराक्षसे राजा—(प्रविश्य स्वगतमाह) राज्यं हि नाम राजधर्मानुवृत्तिर्दुःखितस्य नृपतेर्ममहदप्रीतिस्थानम् । कुतः ?— परार्थानुष्ठाने जडयति नृपं स्वार्थपरता परित्यक्तस्वार्थो नियतमयथार्थः क्षितिपतिः ।

**परार्थश्चेत्स्वार्थादभिमततरो हन्त !**

**परवान् परायत्तः प्रीतेः कथमिव रसं वेत्ति पुरुषः ? ॥**

अपि च दुराराध्या लक्ष्मीरात्मवद्भी राजभिः । कुतः ?—

**'तिक्तादुद्विजते मृदौ परिभवत्रासान्न सन्नितष्ठते ।**

**मूर्खं द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्सु च ।**

**शूरेभ्योऽभ्यधिकं विभेत्युपहसत्येकान्तभीरूरहो !**

**श्रीर्लब्धप्रसरेव वेशवनितादुःखोपचर्या भृशम् ॥' इति ।**

## रुचिरा

मार्ग लक्षयति—४०८ **तत्त्वार्थे**त्यादिना ।

४०८ **तत्त्वार्थकथनं** यथार्थवचनं । **मार्गः** ।

उदाहरति—**यथे**त्यादिना ।

**यथा** । **चण्डकौशिके** । आर्यक्षेमीश्वरविरचितनाटके तृतीयेऽङ्के । '**राजा हरिश्चन्द्रः** । 'विश्वामित्रं प्रत्याहे'ति शेषः । **भगवन् ! अन्यथा सम्भावितेन** । **अलं** पर्याप्तम् । **भार्य्यातनयविक्रयात्** भार्य्यां शैव्यां तनयं रोहिताश्वं च विक्रीय तन्मूल्यादिति भावः । **इदम्** । **अर्जितं** सङ्गृहीतं धनमिति शेषः । **गृह्यताम्** । **शेषस्य** प्रतिज्ञातदानावशेषस्य । **अर्थे** निमित्तम् । **चण्डाले** चण्डालकुले । **अपि** । **आत्मविक्रयम्** । **करिष्यामि** । अत्र हि देयधनस्य निष्पत्तये यत् स्वानुष्ठेयं तत्सत्यमभिहितम् ॥ ३५८ ॥'

**रूपं वाक्यं वितर्कवत् ॥ ९६ ॥**

यथा रत्नावल्याम्—'राजा—

**मनः प्रकृत्यैव चलं दुर्लक्ष्यं च तथापि मे ।**

**कामेनैतत्कथं विद्धं समं सर्वैः शिलीमुखैः ॥'**

---

## विवृतिपूर्तिः

रूपमिति । नाट्यशास्त्रेऽप्युक्तम्—'चित्रार्थसमवायो यस्तद्रूपमिति कीर्तितम् ।' इति ॥

## विज्ञप्रिया

रूपात्मकमङ्गमाह—रूपमिति । वितर्कोऽसम्भविवस्तुहेत्वनुसन्धानम् । मनः प्रकृत्यैवेति—-सागरिका-विरहिणो राज्ञोऽयं वितर्कः । दुर्लक्ष्यं लक्षितुं द्रष्टुमशक्यम् ।

## कुसुमप्रतिमा

रूपमिति । वितर्कवत् वितर्कयुक्तं वाक्यं रूपं नामाङ्गम्, रूप्यते वितर्कान्वितत्वेन ज्ञायत इति व्युत्पत्तेः ।

मन इति । प्रकृत्या स्वभावेनैव मनश्चलं चञ्चलम्, रूप्यते वितर्कान्वितत्वेन ज्ञायत इति व्युत्पत्तेः ।

मन इति । प्रकृत्या स्वभावेनैव मनश्चलं चञ्चलम्, अतएव दुर्लक्ष्यं सर्वेषामेव लक्षयितुं शरव्यीकर्तुमश-क्यम्; तथापि कामेन मदनेन मे मम एतन्मनः कथं सर्वैः शिलीमुखैर्बाणैः समं युगपदेव विद्धम् ? ।

अत्र राज्ञो वितर्कयोगात् रूपम् ।

## विमला

रूपमाह, रूपमिति ।—वितर्कवत् वाक्यं रूपम् । नाट्यशास्त्रेऽप्युक्तं,—"चित्रार्थसमवायोः यस्तद्रुप-मिति कीर्त्तितम्" इति ।

## लक्ष्मी

अत्रापि यथार्थकथनान्मार्गः ।

रूपात्मकमङ्गं निरूपयति—रूपमिति । वितर्केऽसम्भविवस्तुहेत्वनुसन्धानं तद्वत् वाक्यं रूपं नामाङ्गम् ।

उदाहरति—यथेति । मनः प्रकृत्यैवेति । सागरिकाविरहिणो राज्ञोऽयं तर्कः । प्रकृत्या स्वभावेनैव मन-श्चलं चञ्चलम् अत एव दुर्लक्ष्यं सर्वेषामेव लक्षितुं शरसन्धातुमशक्यम्, ततापि कामेन मनसिजेन मे मम एतन्मनः कथं शिलीमुखैः शरैः समं समकालमेव विद्धम् । अत्रासम्भविवस्तुहेत्वानुसन्धानाद्रूपम् ।.

## रुचिरा

रूपं लक्षयति—४०९ **रूपमित्यादिना** ।

४०९ **वितर्कवत्** तर्क्यमाणमिति भावः । **वाक्यम्** । **रूपम्** ॥ ४९२ ॥

उदाहरति—**यथा** । रत्नावल्यां तृतीयेऽङ्के । '**राजा** । सागरिकां चिन्तयन्निति शेषः । **मनः** । **प्रकृत्या** स्वभावेन 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । योनौ लिङ्गे पौरवर्गे' इति मेदिनी । एवं **चलमस्थिरम्** । **दुर्लक्ष्यं** दुर्भेद्यम् । **च** । **तथाऽपि** पुनरपि । **मे** मम । **एतन्मन** इति शेषः' । **सममेकदा** । **सर्वैः** पञ्चभिः । **शिलीमुखैर्वाणैः** (करणे तृतीया) । 'अलिवाणे शिलीमुखा'वित्यमरः । **कामेन** मदूनेन (कर्त्रर्थे तृतीया) । **कथम्** । **विद्धम्** । अत्र हि नसो मदनकर्तृकवेधने वितर्कः ॥ ३५९ ॥'

**उदाहरणमुत्कर्षयुक्तं वचनमुच्यते।**

यथा अश्वत्थामाङ्के—

**'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां,**
**यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।**
**यो यस्तत्कर्मसाक्षी, चरति मयि रणे यश्च यश्च प्रतीपः**
**क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्॥'**

---

## विवृतिः

गर्भशय्या जरायुः। जगतामन्तकस्य यमस्य॥

## विवृतिपूर्तिः

प्रतीप इति। मयि रणे चरति सति यो यः प्रतीपः प्रतिकूलो भवेदित्यर्थः।

## विज्ञप्रिया

उदाहरणरूपस्याङ्गस्य लक्षणमाह—उदाहरणमिति। उत्कर्षयुक्तं स्वाहाङ्कारयुक्तम्।

यो यः शस्त्रमिति। क्रुद्धस्याश्वत्थाम्न उक्तिरियम्। मयि रणे चरति सति पाण्डवीनां चसूनां मध्ये स्वभुजगुरुमदः सन् यो यः शस्त्रं बिभर्ति एवं यो यः पाञ्चालगोत्र इत्यादि। एवं यो यस्तर्त्कम इत्यादि। तत्कर्म मृतस्य मम पितुशिरश्छेदनरूपम्। एवं यश्च यश्च मम प्रतीपः क्रोधघान्धोऽहं जगतामन्तकस्य तस्य तस्यान्तक इत्यर्थः। तैर्जगदन्तकस्य क्रोधोद्दीपनाद् एव जगदन्तक इत्यर्थः।

## कुसुमप्रतिमा

उदेति। उत्कर्षयुक्तम् आत्मनः परस्य वा उत्कर्षसूचकं वचनं वाक्यम् उदाहरणं नामाङ्कमुच्यते, उदाहरणमुत्कर्षस्योल्लेखनमिति व्युत्पत्तेः।

## लक्ष्मी

उदाहरणलक्षणं निरूपयति—उदाहरणमिति। उत्कर्षयुक्तं स्वस्य परस्य वा उत्कर्ष सूचनं वाक्यम् उत्कर्षस्योल्लेखनमुदाहरणं नामाङ्गम् उच्यते।

उदाहरति—यथेति। यो यः शस्त्रमिति। क्रुद्धस्याश्वत्थाम्न उक्तिरियम्। मयि अश्वत्थाम्नि रणे सङ्ग्रामे चरति भ्रमति सति पाण्डवानामिमा इति पाण्डव्यस्तासां पाण्डवसम्बन्धिनीनां चमूनां सेनाविशेषाणां मध्ये स्वभुजगुरुमदात् स्वस्वबाहुबलस्यातिदर्पात् यो यः शस्त्रम् आयुधं बिभर्ति धारयति, एवं पाञ्चालगोत्रे द्रुपदराजवंशे यो यः शिशुर्बालकः अधिकवयाः युवा वृद्धश्च बालकापेक्षयाधिकवयस्त्वादत्र तरुणवृद्धयोग्रहणम्, गर्भशय्यां

शयनीयं तां गतः मातुर्गर्भशय्यां गतो वा तिष्ठति । यो यो जनः तत्कर्म मृतस्य मम पितुः शिरश्छेदनरूपं तस्य साक्षी द्रष्टा यश्च यश्च मम प्रतीपः प्रतिकूलः, क्रोधान्धोऽहम् इह सङ्ग्रामे स्वयम् एकाकी जगतां लोकानाम् अन्तकस्यापि यमस्यापि सतः तस्य तस्य अन्तको यमो विनाशकः अस्मि इति शेषः । रणे सर्वान् पूर्वोक्तान् विनाशयिष्यामीति भावः । स्रग्धराच्छन्दस्तल्लक्षणन्तु—'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् । इति । अत्र स्ववीरत्वोत्कर्षसूचनादुदाहरणम् ।

## रुचिरा

उदाहरणं लक्षयति—४१० **उदाहरणमित्यादिना** ।

४१० **उत्कर्षयुक्तं** स्वातिशयार्थम् । **वचनम्** । **उदाहरणम्** । **उच्यते** ।

उदाहरति—यथा । **अश्वत्थामाङ्के** तत्प्रधाने वेणीसंहारस्य तृतीयेऽङ्के अश्वत्थामा कर्णं सम्बोध्याहेति शेषः ।

**'पाण्डवीनां** पाण्डवसम्बन्धिनीनाम् । **चमूनां** सेनानाम्मध्ये । **यो यः** । **स्वभुजगुरुमदात्** स्वभुजयोर्गुरुमदस्तस्मात् । **शस्त्रम्** । **बिभर्ति** । **पाञ्चालगोत्रे** द्रुपदवंशे । **योयः** । **शिशुः** । **अधिकवया** अधिकं वयोऽवस्था यस्य तादृशः । **वा**ऽथवा । **गर्भशय्यां** गर्भरूपां शय्यां गतः । **यो यः** । **तत्कर्मसाक्षी** तत्कर्ममस्तन्निहमनरूपस्य धृष्टद्युम्नकर्तृकस्य (मन्मरणस्य मृषासम्भावनया त्यक्तशस्त्रं समाहितं केशेषु प्रहृत्य) नृशंसकार्यस्य साक्षी **यः** । **च** । **यः** । **च** । **मयि** अश्वत्थाम्नि । **रणे** सङ्ग्रामात् । **चरति** सति । **प्रतीपः** प्रतिकूलः स्यादिति शेषः । **तस्यतस्य** तेषां सर्वेषामिति भावः । **जगताम्** । **अन्तकस्यापि** इति शेषः । **इहास्मिन्** रणक्षेत्रे **अहम्** । **क्रोधान्धः** । **अन्तको**ऽन्तकर्ता । स्रग्धराच्छन्दः । 'स्रग्धरा म्नौ भ्रौ यौ य् त्रिःसप्तकैः' इति च तल्लक्षणम् ॥ ३६० ॥

भावतत्त्वोपलब्धिस्तु क्रमः स्यात्—

यथा शाकुन्तले—'राजा—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि। तथाहि।

**उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः।**

**पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन॥'**

**संग्रहः पुनः॥ ९७॥**

**सामदानर्थसंपन्नः—**

यथा रत्नावल्याम्—'राजा—साधु वयस्य, इदं ते पारितोषिकम्। (इति कटकं ददाति।)'

---

## विवृतिः

'निर्विकारात्मके चित्ते भावः प्रथमविक्रिया' इत्युक्तलक्षणस्य भावस्य (१२८ पृ.) तत्त्वोपलब्धिर्याथार्थ्यानुभवः॥ पदानि व्यवसितानि। अत्र यद्यपि 'भ्रूनेत्रादिविकारैस्तु संभोगेच्छाप्रकाशकः। भाव एवाल्पसंलक्ष्यविकारो हाव इष्यते॥ सामेति।प्रियवचनं साम, तेन दानेन चार्थस्य संपत्तिरित्यर्थः॥ इद्मिति। अत्र सामदानाभ्यां दूतपरितोषद्वारा सागरिकासंघटनादिरूपार्थ संपादनम्॥

## विवृतिपूर्तिः

उन्नमितेति। यैवैका भ्रूलतोन्नमिता तद्दिक्स्थकपोलस्यैव पुलकाञ्चितत्वमित्येक वचनम्। मयीति स्वस्याधिकरणत्वेन धन्यतां सुभगंमन्यतां च ध्वनयति। रतेःषष्ठयवस्थानुरागः। उक्तं च सुधाकरे—'अङ्कुरपल्लवकलिकाप्रसूनपरिभोगभागियं क्रमशः। प्रेमा मानः प्रणयः स्नेहो रागोऽनुराग इत्युक्तेः॥' इति॥

## विज्ञप्रिया

क्रमरूपाङ्गलक्षणमाह—भावेति। भावस्यानुरागस्य तत्त्वेनोपलब्धिरित्यर्थः उन्नमितेति—पदानि श्लोकघटपदानि रचयन्त्याः अस्या आननं कर्तृपुलकाञ्चितेन कपोलेन मयि अनुरागं कथयति इत्यर्थः। कीदृशमाननम्? उन्नमितैकभ्रूलतम्।

सामदानेति। साम्ना प्रीत्या दानेन च संप्रदानस्य दीयमानधनसंपत्तिरित्यर्थः। साध्विति—अत्र दीयमानकटकरूपधनसंपत्तिर्विदूषकस्य।

## कुसुमप्रतिमा

यो य इति। पाण्डवानामिमा इति पाण्डवव्यस्तासां अमूनां सेनानां मद्ये यो यो जनः स्वभुजगुरुमदात् निजनिजबाहुबलस्यात्यन्तदर्पात् शस्त्रं बिभर्त्तिः पाञ्चालगोत्रे द्रुपदराजकुले यो यो जनः शिशुर्वालकः अधिकवया युवादिः गर्मशय्यां मतुर्गभ देशं गतो वा तिष्ठति; यो यो जनः तस्य कर्म्मणी मतिपतृवधरूपमहापातककार्य्यस्य साक्षी

द्रष्टा; तथा मयि अश्वत्थामि रणे चरति सति यश्च यश्च जनः प्रतीपः प्रतिकूलो भवेत्; क्रोधान्धः अहम्, इह रणे स्वयं जगतामन्तकस्यपि यमस्यापि सतः तस्य तस्य अन्तको यमो विनाशयिता भवेयम् ।

अत्र निजवीरत्वोत्कर्षसूचनादुदाहरणम् ।

भावेति । भावस्य चेष्टाविशेषस्य तत्त्वोपलब्धिर्मर्म्मानुभवस्तु क्रमो नामाङ्गं स्यात्, क्रमणं बुद्धया विषयीकरणं क्रम इति व्युत्पत्तेः ।

यथेति । विस्मृतनिमेषेण निर्निमेषेण अक्ष्णु, यत् प्रियां शकुन्तलामवलोकयामि, तत् स्थाने खलु युक्तमेव ।

उन्नेति । पदानि सुप्तिङन्तरूपाणि रचयन्त्या मयि मदनलेखसम्पादनार्थं संगृह्णत्याः अस्याः शकुन्तलायाः, उन्नमिता एक भ्रूलता यस्य तादृशमाननं सुखं कत्र, पुलकाञ्चितेन रोमाञ्चितेन कपोलेन गण्डेन मयि अनुरागं कथयति स्पष्टं सूचयति । अत्र पदरचनारूपचेष्टाया अनुरागरूपमर्म्मानुभवात् क्रमः ।

संग्रह इति । पुनः शब्दस्त्वथ । साम्ना प्रियवचनेन यद्दानं तेन अर्थसम्पन्नो धनादिप्राप्तिरूपो विषयः संग्रहो नामाङ्गम्, संग्रहः, प्रतिग्रह इति व्युत्पत्तेः ।

यथेति. अत्र प्रियवचनन राज्ञा कटकदानात् विदूषकेण च तत्संग्रहणात् संग्रहः ।

## विमला

उदाहरति, मन इति ।—मनः,—चित्तं,—प्रकृत्यैव—स्वभावेनैव, चलं—अचलं, दुर्लक्ष्यञ्च—लक्षयितुं—शरव्यीकर्त्तुम्, अशक्यञ्च, तथाऽपि कामेन मे—मन, एतत्—मनः, समं—युगपत्, सर्वैः शिलीसुखैः,—शरैः, कथं विद्धम् ? अत्र राज्ञः सवितर्कं वचनम् ।

उदाहरणमाह, उदाहरणमिति ।—उत्कर्षयुक्तं वचनं—वाक्यम्, उदाहरणम् उच्यते—ऋष्यते । काव्यप्रदीपकृता तु,—"परस्योद्वेगजनकं स्वात्मविक्रम"कीर्त्तनम् । उदाहरणमित्युक्तं परिणामे मृषाऽर्थकम् ॥" इति लक्षयित्वा यथा कंसबधे,—"कंसः । अहो ! कोऽर्थ नन्दगोपस्य बालः ? सत्यमहं प्रतिजाने तमहं तृणमिव धक्ष्यामि । [सक्रोधम्] हन्त ! को नाम मत्प्रतीपमाचरन् सुखं शयिता, यदि साक्षात्, श्वमृत्युरापतितः स्यात्" इत्युदाहृतम् ।

उदाहरति, यो य इति ।—पितरि द्रोणे अन्यायतः पाञ्चालसुतेन धृष्टद्युम्नेन निहते क्रुद्धस्य अश्वत्थाम्न उक्तिरियम् । पाण्डवीनां चमूनां—सेनानां मध्ये, यः यः स्वभुजगुरुमदात्—निजबाहुबलस्यातिदर्पादित्यर्थः, ["स्वभुजगुरुबलः" इति पाठे—आत्मबाहुमात्रसहाय इत्यर्थः] शस्त्रं विभर्त्ति—धरति, पाञ्चालगोत्रे—द्रुपदवंशे, यः यः शिशुः, अधिकवयाः,—प्रवयाः, वा गर्भशय्यां—जरायुं गतः, मातृजठरस्थिना इत्यर्थः, यः यः तस्य कर्मणः,—मत्पितृनिधनरूपस्येति भावः, साक्षी—साक्षात् द्रष्टा, द्रष्टाऽपि प्रतीकारार्थ यत्नाभावेन उदासीन इव स्थित इत्यर्थः, तथा यश्च यश्च मयि रणे—सङ्ग्रामाध्यापारे, चरति—भ्रमति सति, प्रतीपः,—प्रतिकूलो भविष्यतीत्यर्थः, अहं—द्रोणपुत्रः, अश्वत्थामेति यावत्, क्रोधेन—पितृनिधनजनितेन इति भावः, अन्धः,—कर्त्तव्याकर्त्तव्यविविक्तशून्यः सन्, स्वयं—साक्षात्, (न तु अन्यसहायः) जगताम् अन्तकस्य—यमस्य अपि, सकललोकोच्छेदनसमर्थस्यापीत्यर्थः, इह—रणभूमौ, (न तु अन्यत्र) तस्य तस्य अन्तकः,—विनाशकः, भविष्यामीति शेषः । स्रग्धरा वृत्तम् ।

क्रममाह, भावेति ।—भावस्य—निर्विकारचित्तस्य, प्रथमविकृतिरूपस्य ("निर्विकारात्मके चित्ते भावः प्रथमविक्रिया" इति पूर्वोक्तलक्षणात्) तत्त्वोपसन्धिः,—याथार्थ्यानुभवः, क्रमः स्यात् ।

उदाहरति, उन्नमितैकभ्रूलतमिति ।—उन्नमिता—उत्क्षिप्ता, एका भ्रूलता यत्र तादृशं, पदानि—सुप्तिङन्तरूपाणि, व्यवसितानि वा, रचयन्त्याः अस्याः,—शकुन्तलायाः, आननं—मुखं, पुलकाञ्चितेन—पुलको रोमाञ्चो नाम सात्त्विकभावः, स जातोऽस्य तादृशेन, कपोलेन, (यद्दिक्स्थभ्रूलतोन्नमनं तद्दिक्स्थकपोलस्यैव पुलकाञ्चितत्वमिति एकवचनस्वरसः) मयि [पुण्यवत्त्व सुभगम्मन्यत्वं ध्वनयितुं, स्वस्याधिकरण्यम्] अनुरागं—रतेः षष्ठ्यावस्थां, [निरूपितञ्च सुधाकरे—"अङ्कुरपल्लवकलिका प्रसूनफलभोगभागियं क्रमशः । प्रेमा मानः प्रणयः स्नेही रागोऽनुराग इत्युक्ते" ॥ इति । कथयति—प्रकटयति, इव । अत्र शकुन्तलायाः प्रथमविकृतिरनुभवः । अत्र यद्यपि भावस्य अल्पसंलक्ष्यविकरत्वात् हावत्वप्रतीतिः, तथापि अत्र भावस्य एव विशेषतया स्थितिः इति नानुपपत्तिः । शाकुन्तलस्येदं पद्यम् । आर्य्या जातिः ।

सङ्ग्रहमाह, सङ्ग्रह इति । —साम्ना प्रियवाक्येन, दानेन च अर्थस्य सम्पत्तिः, समाधानमित्यर्थः, सङ्ग्रहः ।

उदाहरति, साध्विति ।—स्पष्टम् । अत्र प्रियवचनदानाभ्यां दूतपरितषद्वारा सागरिकासङ्घटनारूपस्य अर्थस्य समाधानम् ।

## लक्ष्मी

क्रमं निरूपयति—भावतत्त्वेति । 'निर्विकारात्मके चित्ते भावः प्रथमविक्रिया' इत्युक्तलक्षणस्य भावस्य तत्त्वोपलब्धिर्याथार्थ्यानुभवः क्रमणं बुध्या विषयीकरणमिति क्रमो नामाङ्गं स्यात् ।

उदाहरति—यथेति । स्थाने खलु युक्तमेव 'युक्तं द्वे साम्प्रतं स्थाने' इत्यमरः, विस्मृतः निमेषो येन तेन तथोक्तेन निर्निमेषेमेत्यर्थः, प्रियां शकुन्तलाम् अवलोकयामि पश्यामि । तथा च निमेषरहितेन लोचनेन प्रियां यदवलोकयामि तद्युक्तमेवेति भावः ।

तदेवोपपादयति—तथाहीति । उन्नमितैकेति । पदानि श्लोकघटकसुप्तिङन्तरूपाणि रचयन्त्याः मयि मदनलेखसम्पादनार्थम् ऊहापोहाभ्यां निवेशयन्त्याः अस्याः शकुन्तलायाः उन्नमिता उदञ्चिता एका भ्रूलता यत्र तत्तथोक्तम् आननम् अनति जीवति अनेनेतित्यन्वर्थं मुखं (कर्तृ) पुलकाञ्चितेन रोमाञ्चितेन कपोलेन गण्डेन अत्रैकवचनेन यैवेका भ्रूलतोन्मिता तद्दिगस्थकपोलस्यैव पुलकाञ्चितत्वमिति ध्वन्यते । मयि मद्विषये अनुरागं कथयति स्पष्टं सूचयति । मयीति आत्मनोऽधिकरमणत्वेन धन्यतां सुभगं मन्यतां च व्यञ्जयति । रतेरेव षष्ठयवस्थानुरागः । उक्तञ्च सुधाकरे—

**अङ्कुरपल्लवकलिकाप्रसूनपरिभोगभागियं क्रमशः ।**
**प्रेमा मानः प्रणयः स्नेहो रागोऽनुराग इत्युक्तः ॥ इति ।**

अनुरागलक्षणमपि तत्रैव—

**राग एव स्वसंवेद्यदशाप्राप्त्या प्रकाशितः ।**
**यावदाश्रयवृत्तिश्चेदनुराग इतीरितः ॥ इति**

आर्याच्छन्दः । अत्र पदरचनारूपचेष्टाया अनुरागरूपयाथार्थ्यानुभवात् क्रमः । अत्र च यद्यपि—

**भ्रूनेत्रादिविकारैस्तु सम्भोगेच्छाप्रकाशकः ।**

**भाव एवाल्पसंलक्ष्यविकारो हाव इष्यते ॥**

इत्युक्तलक्षणो हाव एव तथापि विशेषतया तत्र स्थितिरिति नानुपपत्तिरिति ध्येयम् ।

सङ्ग्रहलक्षणं निरूपयति—सङ्ग्रह इति । साम्ना प्रियवचनेन तेन दानेन च अर्थसम्पन्नो धनादिलाभविषयः सङ्ग्रहो नामाङ्गम् । अत्र सामदाने, भेददण्डयोर्मायेन्द्रजालादेरप्युपलक्षणम् ।

तत्र सामदानाभ्यामर्थसम्पत्तिमुदाहरति—यथेति । अत्र प्रियवचने राज्ञा कटकदानात् सागरिकासमागमकारिणा विदूषकेण च तत्संग्रहणात्संङ्ग्रहः । भेदेन यथा रघुविलासे पञ्च मेऽङ्के क्रमात् पवनवेषो राक्षसः प्राहः—'प्रसीदतु देवः । रावणः—गृहाण प्रसादम् । (पुनः प्रतीहारीं प्रति) वराहतुण्ड ! समादिश कुमारं कुम्भकर्णं यथा-पवनं किष्किन्धाराज्ये त्वरितमभिषिञ्च' । एष दौत्यार्थमागतवतो वालितनयस्य क्षोभार्थं कृतको हनुमत्पितुः सुग्रीवादभेदः । दण्डेन यथाऽत्रैव चतुर्थेऽङ्के 'रावणः—

**यायावरेण किमनेन वनेचरेण मां स्थावरं वरमुपास्व कुरङ्गकाक्षि ! ।**

**किं वा स्तुवे तव पुरश्चतुरस्थितीनां वैदग्ध्यसौरभवती भवती प्रकाण्डम् ॥**

सीता—कोवि वा जाजावरो कोवि वा थावरुत्ति विवेगं लक्खवानाराय पद्धई वाचि करिस्सई । रावणः—(सरोषं चन्द्रहासं परामृश्य)

प्रेमावनद्धहृदयः सर्वं लङ्केश्वरः सुदति सोढा । सोढा न चन्द्रहासः पुनरयमुल्लुण्ठवृत्तानाम् ॥

एष सीताक्षोभार्थं रावणेन दण्डः प्रयुक्तः. मायाप्रयोगश्चात्रैव कृतकलक्ष्मण-सुग्रीवानयन—रावण-सीताघटनादिको निबद्ध इति ।

## रुचिरा

क्रमं लक्षयति—४११ **भावे**त्यादिना ।

४११ **भावतत्त्वोपलब्धिः** भावस्याभिप्रायस्य तत्त्वं यथार्थज्ञानं तस्योपलब्धिर्निष्पित्तिः । 'भावः सत्तास्वभावाभिप्रायचेष्टाऽऽत्मजन्मसु' इति मेदिनी । **तु** । **क्रमः** । **स्यात्** ।

उदाहरति—**यथा** । **अभिज्ञानशाकुन्तले** तृतीयेऽङ्के । **राजा** दुष्यन्तः । शकुन्तलां पश्यन्नन्तराहेति शेषः । **स्थाने** युक्तम् । 'युक्ते द्वे साम्प्रतं स्थाने'इत्यव्ययवर्गेऽमरः । **खलु** । **विस्मृतनिमेषेण** विस्मृतनिमेषोन्मीलनेनेत्यर्थः । **चक्षुषा** दृष्टया (अत्रैकवचनं द्वयोरप्यभेदचेष्टितत्वद्योतनार्थम्) । **प्रियां** शकुन्तलाम् । **अवलोकयामि** ।'

कोऽत्र हेतुरित्याह—**यतः**—**पदानि** सुप्तिङन्तरूपाणि । **रचयन्त्या** अस्याः शकुन्तलाया इत्यर्थः । **उन्नमितैक भ्रूलतं** उन्नमिता उत्क्षिप्ता एका भ्रूलता यस्य तादृशम् । **आननं** मुखम् (कर्तृपदम्) । **पुलकाञ्चितेन** कण्टकितेन रोमाञ्चितेन । **कपोलेन** (साधने तृतीयेयम्) । **मयि** । **अनुरागम्** । **कथयति** । आर्य्या वृत्तम् अत्र हि शकुन्तलाभावस्य यथार्थतयोपलब्धिः ॥ ३६१ ॥'

सङ्ग्रहं लक्षयति—४१२ **सङ्ग्रह** इत्यादिना ।

४१ **सामदानार्थसम्पत्तिः** । साम सान्त्वनम् दानं चेति ताभ्यामर्थसम्पत्तिः । सम्पन्न इति पाठान्तरे तु भावे क्तो बोध्यः । **पुनः सङ्ग्रहः** ॥ ३९३ ॥

उदाहरति—**यथा** । रत्नावल्यां तृतीयङ्के । **राजा** वत्सराजः । विदूषकं प्रत्याहेति शेषः । स्पष्टमन्यत् । अत्र हि सागरिकायाः कुशमुपलब्धिं च सूचयितुं प्रवृत्तं वसन्तकनामानं विदूषकं प्रति कटकदानेन राज्ञोऽर्थसम्पत्तिः ।

**लिङ्गादूहोऽनुमानता ।**

यथा जानकीराघवे नाटके—'रामः—

**लीलागतैरपि तरङ्गयतो धरित्री-**

**मालोकनैर्नमयतो जगतां शिरांसि ।**

**तस्यानुमापयति काञ्चनकान्तिगौर-**

**कायस्य सूर्यतनयत्वमधृष्यतां च ॥'**

---

## विवृतिः

लिङ्गाद् व्याप्तिपक्षधर्मताभ्यां साधनज्ञानात् । ऊहो व्यापकतानुभवः । 'अनुमानता' इति ताप्रत्ययः स्वार्थे ॥ तरङ्गयतः कम्पयतः । तस्य लक्ष्मणस्य ( ?) । अनुमान (प)यति अनुमानविषयीकरोति । अत्र लीलागमंनप्रयुक्तपृथ्वीकम्पनादिकं साधनम् ॥

## विवृतिपूर्तिः

लिङ्गादिति । नाट्यशास्त्रेऽप्युक्तम्—'रूपानुरूपगमनमनुमानमिति स्मृतम् ।' इति ॥ अत्र 'अनुमा मता' इति पाठः सुगमः ॥

तरङ्गयत इति । तरङ्गयत इति षष्ठयन्तं पदम् । एवं नमयत इत्यपि ॥

## विज्ञप्रिया

अनुमानरूपाङ्गलक्षणमाह—लिङ्गादिति । अनुमानता अनुमानम् । लीलेति । परशुरामवर्णनमिदम् । तस्य लीला व्यवसायः । सूर्य्यतनयत्वं सूर्य्यतुल्यतेजस्वित्वेन सूर्य्यपुत्रवमधृष्यत्वं चानुमापयति । तस्य कीदृशस्य गतैर्गमनैरपि धरित्रीं तरङ्गयतः चालयतः । आलोकनैर्जगतां शिरांसि नमयतस्तद्दृष्टमात्रैः सर्वैः प्रणम्यमानवत्वात् । काञ्चनकान्तिवद् गौरकायस्य ।

## कुसुमप्रतिमा

लिङ्गादिति । लिङ्गात् नियतसाध्यसमानाधिकरणात् साधनात्, ऊहः साध्यज्ञानम्, अनुमानता अनुमानम् । स्वार्थे तप्रत्ययः ।

लीलेति । लीलागर्तरपि सविलासगमनैरपि धरित्री तरङ्गयतः कम्पयतः कम्पयतः, अलोकनैदृष्टिपातैरपि जगतां शिरांसि स्वसमीपे नमयतः, तथा काञ्चनकान्तिवत् सुवर्णद्युतिवत् गौरः कायी देहो यस्य तस्य, तस्य लक्ष्मणस्य सूर्य्यतनयत्वं सूर्य्यवं शजातत्वम् अधृष्यताम् अन्वैरनभिभवनीयताञ्च अनुमापयति तादृशं लीलागतमालोकनञ्च कर्तृ इति लोकानिति च शेषः ।

अत्र धरित्रीकम्पतः जगच्छिरोनमनरूपात् साधनद्वयात् सूर्यतनयत्व धृष्यत्वरूपसाध्यद्वयस्य ज्ञानादनुमानम् ।

## विमला

अनुमानमाह, लिङ्गादिति ।—लिङ्गात्—पञ्चकत्व सपक्षसत्त्व विपक्षव्यावृत्तत्वविशिष्टात् साधनज्ञानात्, ऊहः,—साध्यज्ञान, व्यापकताऽनुभव इत्यर्थः, अनुमानता—अनुमानमित्यर्थः । [स्वार्थे ताप्रत्ययः] । नाट्य-शास्त्रेऽप्युक्तम्,—"रूपानुरूपगमनमनुमानमिति स्मृतम्" इति ।

उदाहरति, लीलागतैरिति ।—लीलागतैः,—सविलासगमनैः, धरित्री—पृथिवीं, तरङ्गयतः,—कम्पयतः, आलीकनैः,—दृष्टिभिः, जगतां शिरासि नमयत्—नतानि कुर्वतः, काञ्चनस्य—स्वर्णस्य, या कान्तिः तद्वत् गौरः कायो यस्य तादृशस्य, तस्य—लक्ष्मणस्य, सूर्य्यतनयत्वं—सूर्य्यवंशीयत्वम्, अधृष्यतां—दुरासदत्वं च, अनुमापयति—अनुमानविषयीकरोति । [लीलागतमालोकनञ्चेति कर्तृपदमध्याहार्य्यम्] । अत्र लीलागमनादिप्रयुक्तधरित्रीकम्प-नादिरूपात् साधनात् साध्यस्य सूर्य्य तनयत्वस्य अधृष्यत्वस्य च अनुमानम् । वसन्ततिलकं वृत्तम् ।

## लक्ष्मी

अनुमानाङ्गलक्षणं निरूपयति—लिङ्गादिति । लिङ्गात् व्याप्तिविशिष्टपक्षधर्मताज्ञानाभ्यां साधनज्ञानात् ऊहो व्यापकतानुभवः साध्यज्ञानमिति यावत् अनुमानता अनुमानम् । स्वार्थे तल्प्रत्ययः.

उदाहरति—यथेति । जानकीराघवे जानकीराघवनामकनाटके ।

लीलागतैरपीति । परशुरामवर्णनमिदम् । लीलागतैरपि सविलासगमनैरपि धरित्रीं पृथिवीं तरङ्गयतः चाल-यतः षष्ठयन्तमेतत् एवं नमयत इत्यपि । आलोकनैः दृष्टिपातैरपि जगतां लोकानां शिरांसि स्वसन्निधौ नमयतः दृष्टिमात्रैः सर्वैः प्रणम्यमानत्वादिति भावः । तथा काञ्चनकान्तिवत् सुवर्णच्छविवत् गौरः शुभ्रः कायः शरीरं यस्य तथोक्तस्य तस्य लक्ष्मणस्य सूर्यतनयत्वं सूर्यतुल्यतेजस्वित्वेन सूर्यपुत्रत्वम् अप्रधृष्यतां परैरनभिभवनीयतां च अनुमापयति अनुमानविषयीकरोति लोकानिति शेषः । तथाविधं लीलागतमालोकनं च (कर्तृ) । वसन्ततिलका-च्छन्दः । अत्र लीलागमनालोकनप्रयुक्तपृथ्वीकम्पनजगच्छिरोनमनरूपात् साधनद्वयात् सूर्यतनयत्वाधृत्वाधृष्यत्व-रूपसाध्यद्वयस्य ज्ञानादनुमानम् ।

## रुचिरा

अनुमानं लक्षयति—४१३ लिङ्गादित्यादिना ।

४१३ **लिङ्गात्** व्याप्तिपक्षधर्मताभ्यां साधनताज्ञानात् । **ऊह** उहापोहव्यापकतावगमः । **अनुमानिता**ऽनुमा-नम् । यत्तु तर्कवागीशैरनुमानतेति पाठं स्वीकृत्य ताप्रत्ययः स्वार्थे इत्युक्तं तद्‌भ्रान्तिमूलं स्वार्थे ताप्रत्ययविधाय-कसूत्रानुपलम्भात् ।

उदाहरति—**यथेत्यादिना** ।

**यथा जानकीराघवे** जानकीराघवनामके । **नाटके** । **रामः** । **लीलागतैर्ली**लया गमनैः । भावे क्तः । **अपि** किं पुनरुद्धतगमनैरिति शेषः । **धरित्रीं** पृथिवीम् । **तरङ्गयतः** कम्पयतः कम्पितां कुर्वाणस्येति यावत् । **आलोकनैर्दृ**-ष्टिपातद्वारेति भावः । **जगतां** लक्षणया तदन्तर्वर्तिनामित्यर्थः । **शिरांसि** । **नमयतो**ऽवनतानि कुर्वाणस्येत्यर्थः । **काञ्चनकान्तिगौरकायस्य** सुवर्णसदृशशरीरस्य । **तस्य** लक्षमणस्येत्यर्थः । **सूर्यतनयत्वं** सूर्यवंशभवत्वम् । **अधृ-ष्यतां** धर्षणीयताशून्यत्वम् । **च** । **अनुमापयति** । अत्र वसन्ततिलकं वृत्तम् । अत्र लीलागमनदृष्टिपातप्रयुक्धरित्री-कम्पनजगच्छिरोनमनं साधनम् ॥ ३६२ ॥

**रतिहर्षोत्सवानां तु प्रार्थनं प्रार्थना भवेत्॥ ९८॥**

यथा रत्नावल्याम्—'प्रिये सागरिके,

**शीतांशुर्मुख मुत्पले तव दृशौ, पद्मानुकारौ करौ,**

**रम्भास्तम्भनिभं तथोरुयुगलं, बाहू मृणालोपमौ।**

**इत्याह्लादकराखिलाङ्गि! रभसान्निःशङ्कमालिङ्ग्य मा-**

**मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय॥'**

इदं च प्रार्थनाख्यमङ्गम्। यन्मते निर्वहणे भूतावसरत्वात्प्रशस्तिनामाङ्गं नास्ति तन्मतानुसारेणोक्तम्। अन्यथा पञ्चषष्टिसंख्यत्वप्रसङ्गात्।

---

## विवृतिः

प्रार्थनं भिक्षा॥ पद्मानुकारौ पद्मतुल्यौ॥ भूतावसरत्वात् प्रार्थनायां प्राप्तविषयत्वात्। अन्यथा निर्वहणे प्रशस्तिसत्त्वे पञ्चषष्टिसंख्यत्वे को दोष इति चेत्, संप्रदायविरोध इति॥

## विवृतिपूर्तिः

इतीति। चन्द्रादिसादृश्येन अङ्गानां मदनानलतापनिर्वापणक्षमत्वं दर्शितम्॥

## विज्ञप्रिया

प्रार्थनाङ्गरूपाङ्गलक्षणमाह-रतीति। रत्यर्थ यो नायिकाया हर्षो नायकसस्य तादृशोत्सवानां प्रार्थनेत्यर्थः। शीतांशुरित्यादि। शीतांशुरूपत्वादिना आह्ललादकराखिलाङ्गि! एहि एहि रभसात् बलात् मदङ्गानि निःशङ्कमालिङ्ग्य अनङ्गतापविधुराणि तानि निर्वापय! तापशून्यानि कुरु इत्यर्थः.

अत्रालिङ्गनाधीनोत्सवप्रार्थना।

अत्रैतदंशस्य निर्वहणसन्धेः प्रशस्तिनामाङ्गस्य वैकल्पिकी स्थितिः। अनयोर्मिलितस्थितसत्त्वे तु वक्ष्यमाणचतुःषष्टिसंख्यासन्ध्यङ्गानां न भवति। पञ्चषष्टित्वापत्तेः। तथा हि अत्र गर्भसन्धौ एतदङ्गसत्त्वे एतान्यङ्गानि त्रयोदश भवन्ति, मुखसन्ध्यङ्गानि च द्वादशोक्तानि, अन्यसन्धिद्वयाङ्गानि च त्रयोदश त्रयोदश। निर्वहणसन्ध्यङ्गानि चतुर्दशेति। पञ्चषष्टित्वं प्रसजति। अतो यन्मते निर्वहणसन्धौ प्रशस्तिनामकं चरमाङ्गं नास्ति तन्मते एवात्रेदम् अङ्गमन्यथा तु नेत्याह—इदञ्चेति। तत्र प्रशस्तिनामाङ्गसत्त्वे हेतुमाह—भूतावसरत्वाभावादिति भूतानि प्राणिनो नाट्यपात्रणि तदवसरत्वं तद्वत्वम्। अङ्गनाम् इत्यङ्गानि भूतावसराण्युच्यन्ते। प्रशस्त्यङ्गस्य सदस्याशीर्वादत्वेन तथात्वाभावादित्यर्थः।

## कुसुमप्रतिमा

रतीति। रतिः सुरतम्, हर्षः प्रीतिः उत्सव आमोदकरपव्यापारस्तेषां प्रार्थनं तत्तत्करणय याधनं प्रार्थना नामाङ्गं भवेत्। अत्रापि व्युतपत्तिः स्पष्टा.

शीतांशुरिति। तव मुखं शीतांश्वः साक्षाच्चन्द्रः दृशी चक्षुषी उत्पले नीलोत्पलयुगलम्, करौ हस्तद्वयं पद्ममनुकूरुत इति पद्मानुकारी कर्म्मण्यम्। तथा ऊरुयुगलं रम्भास्तम्भनिभम्, वह्नि भुजद्वयश्च मृणालोपमौ; इति इत्यम् आह्लादकराणि अखिलानि अङ्गानि यस्यास्तत्सम्बोधनम्, त्वं रभसात् वेशात् शीघ्रमित्यर्थः एहि एहि, निःशङ्कं मामालिङ्ग्य, अनङ्गतापेन कामसन्तापेन विधुराणि विह्वलानि मम अङ्गानि निर्वापय शीतलीकुरु।

अत्र रतेः प्रार्थनात् प्रार्थना। हर्षोत्सवयोः प्रार्थने उदाहरणमुह्यम्।

इदमिति। निर्वहणे उपसंहारख्यवरमसन्धौ। इह गर्भ सन्धौ भूतावसरत्वात् प्राप्तस्थानत्वात् अन्यथा अत्रापि प्रार्थनाख्याङ्गान्तरस्वीकारे, अङ्गानां पञ्चषष्टिसंख्वप्रसङ्गात् "चतुः षष्टिविधं ह्येतदङ्ग प्रोकतं मनीषिभिः" इति वक्ष्यमाणं नोपपद्यत इति शेषः। तथा च निर्वहणे प्रशस्तिनामाङ्गस्य मया अङ्गीकरिष्यमामत्वादत्र प्रार्थनाख्यमङ्गं परमतानुसारेणैवोक्तमिति भावः।

## विमला

प्रार्थनामाह, रतीति।—रतेः,—अनुरागात्, हर्षाञ्च उत्सवानां प्रार्थनं—याञ्चा, प्रार्थना भवेत्।

उदाहरति, यथेति। शीतांशुरिति।—तव मुखं शीतांशः,—चन्द्रः, दृशो—मेवे, उत्पले—नीलोत्पले इत्यर्थः, करौ—हस्तौ, पद्मानुकारी—पङ्कजोपमौ, ऊरु युगलं रम्भास्तम्भनिभं—कदलीगर्भस्तम्भदण्डसदृशं, तथा वाहू—भुजौ, मृणालोपमो। इत्यम् आह्लादकराणि—आनन्दतृणि, अखिलानि—सर्वाणि, अङ्गानि यस्यास्तत् सम्बुद्धौ, [शीतांश्वादिसमानत्वेनावयवानामनङ्गतनलतापनिर्वापणपटुत्वं सूचितम्] त्वं रभसात्—वेशात्, हर्षाद्वा, ("रभसो वेगहर्षयोः" इत्यमरः) निःशुङ्कं यथा स्यात् तथा, माम् आलिह्य अनङ्गतापविधुराणि—मदनसन्तापविक्लवानि, मम अङ्गानि निर्वापय—शीतलय, एहि एहि—आगच्छ, आगच्छ [आमीक्षेय द्विरुक्तिः]।

यन्मते इति।— निर्वहणे—निर्वहाणाख्ये सन्धौ, भूतावसरत्वात्—प्रार्थनायां प्राप्तविषयत्वात्, अन्यथा—निर्वहणे प्रशस्तिसत्त्वे, पञ्चषष्टि सङ्ग्यत्वे को दोषः ? इति चेत् सम्प्रदायविरोध इति। महर्षिप्रतिपादितः। सम्प्रदायो यथा,—"चतुःषष्टि—र्बुधैर्ज्ञेयान्येतान्यङ्गानि सन्धिषु" इति।

## लक्ष्मी

प्रार्थनारूपमङ्गं निरूपयति—रतिहर्षेति। रतिः सुरतम्, तदर्थ यो नायिकाया हर्षः नायकस्य तादृशोत्सवानां यद्वा रतिः सुरतम्, हर्षः प्रीतिः उत्सवः प्रमोदजनकव्यापारः तेषां तथोक्तानां प्रार्थना तत्तद्विधानाय भिज्ञा प्रार्थनानामाङ्गं भवेत्।

उदाहरति—तथेति। शितांशुरिति। तव मुखम् आननं शीतांशुः साक्षाच्चन्द्रः दृशौ नेत्रे उत्पले नीलोत्पलद्वयम्, करौ पाणि पद्मानुकारौ पद्मतुल्यौ, तथा ऊरुयुगलं जङ्घाद्वयं रम्भास्तम्भनिभं कदलीस्तम्भसदृशम्, बाहू भुजौ मृणालोपमौ विसतन्तुसदृशौ चन्द्रादि सादृश्येन मदनामलतापशमनक्षमत्वं व्यञ्जितम्। शीतांशुकत्वादिना आह्लादकराणि प्रमोदाधायकानि अखिलानि समग्राणि अङ्गानि अवयवा यस्या स्तत्सम्बुद्धौ, त्वं रभसात् जवात् त्वरितमित्यर्थः, एहि एहि आगच्छ आगच्छ निश्शङ्कं निःसन्देहं मामालिङ्ग्य आश्लिष्य, अनङ्गतापेन कामसन्तापेन विधुराणि व्याकुलानि ममाङ्गानि निर्वापय प्रशमय तापशून्यानि कुरु इत्यर्थः। शार्दूलविक्रीडितं छन्दः। अत्रालिङ्गनाधीनोत्सवप्रार्थनाकरणात् प्रार्थना।

अत्रैतदंशस्य निर्वहणसन्धेः प्रशस्तिनामाङ्गस्य वैकल्पिकी स्थितिः, अनयोर्मिलितस्थिति सत्त्वे तु—'चतुःषष्टिविधं ह्येतदङ्गं प्रोक्तं मनीषिभिः' इत्यनेन वक्ष्यमाणचतुःषष्टिसंख्यासन्ध्यङ्गानां न भवति पञ्चषष्टित्वापत्तेः। तथा हि—अत्र गर्भसन्धौ एतदङ्गसत्त्वे एतान्यङ्गानि त्रयोदश भवन्ति मुखसन्ध्यङ्गानि च द्वादशोक्तानि अन्यसन्धिद्वयाङ्गं च त्रयोदशनिर्वहणसन्ध्यङ्गानि तु चतुर्दशेति पञ्चषष्टित्वं प्रसजति अतो यन्मते निर्वहणसन्धौ प्रशस्तिनामकं चरमाङ्गं नास्ति तन्मत एवात्रेदमङ्गम्, नान्यथेत्यत आह—इदञ्चेति। निर्वहणे उपसंहाराख्यचरमसन्धौ। इह गर्भसन्धौ। तत्र प्रशस्तिनामाङ्गसत्त्वे हेतुं दर्शयति—भूतावसरत्वादिति। प्रार्थनायां प्राप्तविषयत्वादित्यर्थः। अन्यथा अत्रापि प्रार्थनाख्याङ्गान्तराभ्युपगमे। एवं च प्रशस्तिनामाङ्गस्य मया निर्वहणे स्वीकरिष्यमाणत्वादत्र प्रार्थनाख्यमङ्गं मतान्तरानुसारेणैव प्रतिपादितमिति भावः।

## रुचिरा

प्रार्थनां लक्षयति—४१४ **रतिहर्षेत्यादिना**।

४१४ **रतिहषोत्सवानां** रतिः रमणं च हर्षः प्रमोद आनन्द इति यावत् चोत्सवश्च तेषाम्। **तु। प्रार्थनं** भिक्षा। **प्रार्थना। भवेत्**।। ३९४ ॥

प्रार्थनां लक्षयति—४१४ रतिहर्षेत्यादिना।

४१४ **रतिहषोत्सवानां** रतिः रमणं च हर्षः प्रमोद आनन्द इति यावत् चोत्सवश्च तेषाम्। **तु। प्रार्थनं** भिक्षा। **प्रार्थना। भवेत्** ॥ ३९४ ॥

उदाहरति—**यथेत्यादिना**।

**यथा। रत्नावल्यां** तृतीयेऽङ्के। 'राजा। (**उपसृत्य** सागरिका समीपं प्राप्य) **प्रिये! सागरिके! तव। मुखम्। शीतांशुश्चन्द्रः**। **दृशौ** नेत्रे। **उत्पले** कमले। **करौ** हस्तौ। **पद्मानुकारौः**पद्मेऽनुकारोऽनुकरणं **ययोस्तौ। तथा। ऊरुयुगलं** जङ्घायुगम्। **रम्भास्तम्भनभं** कदलीस्तम्भसदृशम्। **बाहू। मृणालोपमौ** मृणाले कमलमूले उपमा ययोस्तौ तथोक्तौ। **इत्यस्मात्। आह्लादकराखिलाङ्गि**आह्लादकराण्यखिलान्यङ्गानि यस्यास्तादृशि! **एह्येहि** आगच्छागच्छ (अत्राभीक्ष्ण्ये द्विर्भावः)। **माम्। रससाद्वेगात्**, हर्षाद्वा। **निःशङ्कम्। आलिङ्ग्य। अनङ्गतापविधुराणि** अनङ्गतापः कामकृतसन्तपस्तेनविधुराणि दुःखितानि यान्यङ्गानि तान्। ममेति शेषः। **निर्वापय** प्रशमितततापानि विधेहि। शार्दूलविक्रीडितं वृत्तम् ॥ ३६३ ॥

निर्वहणाङ्गभूतप्रशस्त्यस्वीकार एव प्रार्थनाख्यस्याङ्गस्य स्वीकार इति व्यवस्थापयति—**इदंमित्यादिना**।

**यन्मते। निर्वहणे** तदाख्यसन्धौ। **भूतावसरत्वाभावात्** भूतो जातोऽवसरो यस्यास्तस्या भावास्तत्त्वं' तस्याभावस्तस्मात् प्राप्ताधिकारत्वाभावादिति भावः। अभूतावसरत्वादिति पाठान्तरेऽप्ययमेवार्थः **प्रशस्तिनामाङ्गम्। नास्ति। तन्मतानुसारेण। इदम्। च। प्रार्थनाख्यम्। अङ्गं** गर्भसन्ध्यम्। **उक्तम्। अन्यथैवमस्वीकारे**। पञ्चषष्टिसङ्ख्यत्वप्रसङ्गात्। अङ्गानां पञ्चषष्टिसङ्ख्याकत्वमापद्येत। पञ्चषष्टिसङ्ख्याकत्वे को दोष इत्याशङ्क्याह**सम्प्रदायविरोधः**। सम्प्रदायश्च 'चतुःषष्टिर्बुधैर्ज्ञेयान्येतान्यङ्गानि सन्धिषु।' इति मुनिना निर्दिष्टः।

**रहस्यार्थस्य तूद्‌भेदः क्षिप्तिः स्यात्—**

**यथाश्वत्थामाङ्के—**

**'एकस्यैव विपाकोऽयं दारुणो भुवि वर्तते ।**

**केशग्रहे द्वितीयेऽस्मिन्नूनं निःशेषिताः प्रजाः ॥'**

---

## विवृतिः

एकस्य द्रौपदीकेशग्रहस्य । द्वितीये द्रोणसंबन्धिनि ॥

## विज्ञप्रिया

क्षिप्तिरूपमङ्गमाह—रहस्यार्थस्येति । रहस्यार्थोऽभिनेतव्यार्थ इतिवृत्तरूपोऽर्थस्तस्य भेद उत्पत्तिसूचनम् । एकस्येति । एकस्य द्रौपदीकेसग्रहणस्य । द्वितीये मृतद्रोणस्य धृष्टद्युम्नेन केशग्रहेऽत्र सर्वसंहाररूपस्य रहस्यस्य उत्पत्तिसूचनम् ।

## कुसुमप्रतिमा

रहस्यति । रहस्यार्थस्य गुप्तविषयस्य उद्‌भेदः प्रकाशनन्तु क्षिप्तिर्नामाङ्गं स्यात्, क्षिप्तिरुत्क्षिप्तिः प्रकाशनमिति व्युत्पत्तेः ।

एकस्येति । एकस्यैव द्रौपद्वीकेशाकर्षणस्य अयं कुरुपाण्डवयुद्धे असंक्यलोकक्षयरूपो दारुणो विपाकः परिणामः भुवि जगति वर्त्तते, एतद्युद्धं प्रति तस्यैव केशाकर्षणस्य हेतुत्वादिति भावः । अस्मिन् द्वितीये केशग्रहे धृष्टद्युम्नेन द्रोणाचार्य्यस्य केशाकर्षणे कृते तु नूनं निश्चितमेव प्रजा लोकाः निःशेषिता विधिना साकल्येन विनाशिताः, सर्वसन्धिहीर्षोरश्वत्थाम्न एव तत्र हारीभावत्वादिति भावः ।

अत्र दैवकर्त्तव्यसमस्तप्रजानाशख्यपरहस्यार्थस्य वाचा प्रकाशनादुद्‌भेदः ।

## विमला

क्षिप्तिमाह, रहस्येति ।—रहस्यस्य—गुप्तस्य अर्थस्य, उद्‌भेदः,—प्रकटनं, क्षिप्तिः स्यात् ।

उदाहरति, यथेति ।—एकस्येवेति ।—भुवि—पृथिव्याम्, एकस्य—द्रौपदीकेशग्रहस्य इत्यर्थः, एव अयं दारुणो विपाकः,—दुष्परिणामः, वर्त्त, अस्मिन् द्वितीये केशग्रहे–द्रोणकेशाकर्षणे, नूनं—मन्ये, प्रजाः निशेषिताः, भविष्यन्तीति शेषः । केशानाकृत्य द्रोणं निहतवान् धृष्टद्युम्न इति पुराणम् ।

## लक्ष्मी

क्षिप्तिरूपमङ्गं निरूपयति—रहस्यार्थस्येति । रहस्यार्थोऽभिनेतव्यार्थ इतिवृत्तिरूपोऽर्थस्तस्य उद्‌भेद उत्पत्तिसूचनन्तु क्षिप्तिर्नामाङ्गं स्यात् ।

उदाहरति—यथेति । एकस्येवेति । एकस्यैव द्रौपदीकेशग्रहणस्य अयं कुरुपाण्डवसङ्ग्रामे अगणितजनक्षत्र्यरूपो दारुणो उत्कटो विपाकः फलं तावत् भुहव जगति वर्त्तते, एतत्सङ्ग्रामं प्रति तस्यैव केशग्रहस्य कारणत्वादिति भावः । द्वितीये अस्मिन् केशप्रहे धृष्टद्युम्नेन मृतद्रोणाचार्यस्य केशाकर्षणे कृते तु नूनं निश्चितमेव प्रजा जनाः निःशेषिताः साकल्येन विनष्टाः भविष्यन्तीति शेषः । सर्वसंहारेच्छोरश्वत्थाम्न एव तत्र द्वारभूतत्वादिति भावः । पथ्यावक्त्रं छन्दः ।

**द्वितीये मृतद्रोणस्य धृष्टद्युम्नेन केशग्रहेऽत्र** सर्वसंहाररूपस्य रहस्यार्थ वाचा उत्पत्तिसूचनात्क्षिप्तिः ।

## रुचिरा

क्षिप्तिं लक्षयति—४१५ **रहस्यार्थस्ये**त्यादिना ।

४१५ **रहस्यार्थस्य** गोप्यस्य कारणस्य । **तु** । **उद्भेदः** प्रकटनम् । **क्षिप्तिः** । **स्यात्** ।

उदाहरति—**यथे**त्यादिना ।

**यथा** । **अश्वत्थामाङ्के** वेणीसंहारतृतीयेऽङ्के । "**कृपः** । **(सोद्वेगं निःश्वस्य) —एकस्य** एकवारं जातस्य द्रौषदिसम्बन्धिनः दुःशासनकर्तृकस्य केशग्रहस्येत्यर्थः । **तावत्** । **अयम्** । कुरुपाण्डवसंहननरूपः । **दारुणः** । **पाकः** । **फलम्** । **वर्तते** । एकस्य विपाकोऽयमिति पाठान्तोऽप्ययमेवार्थः । **द्वितीये** द्वितीयवारं कृते । **अस्मिन्** द्रोणाचार्यसम्बन्धिनि धृष्टद्युम्नकर्तृक इति भावः । **केशग्रहे** । सत्यर्थेयं सप्तमी । **नूनं** निश्चितम् । **प्रजाः** प्राणिनः । **निःशेषिताः** निरवशेषत्वं गता इति भावः । अत्र हि द्रौपदीकेशग्रहरूपस्य रहस्यार्थस्योद्भेदः ॥ ३६४ ॥"

**त्रो(तो) टकं पुनः ।**

**संरब्धवाक**

यथा चण्डकौशिके—'कौशिकः—आः, पुनः कथमद्यापि न संभूताः स्वर्णदक्षिणाः ।'

---

## विवृतिः

संरब्धस्य रुष्टस्य वाक् ॥

## विवृतिपूर्तिः

संरब्धेति । उक्तं च नाट्यशस्त्रे—'संरम्भवचनप्रायं तोटकम्' इति ॥

संप्रदायेति । संप्रदायस्तु 'चतुः षष्टिर्बुधैर्ज्ञेयान्येतान्यङ्गानि संधिषु' इति महर्षिणा निर्दिष्टः ॥

## विज्ञप्रिया

त्रोटकरूपाङ्गलक्षणमाह—त्रोटकं पुनरिति । संरब्धवाक् सक्रोधवाक् । आः पापेति । हरिश्चन्द्रं नृपं प्रति पृथिवीदानदक्षिणादानार्थं विश्वामित्रस्य सक्रोधवाक्ः ।

---

## कुसुमप्रतिमा

तोटकमिति । सरन्धस्य क्रुद्धस्य वाक् वाक्यं क्रोधव्यञ्जकावाक्यमित्यर्थः । त्रोटकं नामाङ्गं स्यात्, त्रोटयति परिचित्तस्वास्थ्य क्षपयतीति व्युतपत्तेः । पुनः सब्दन्दस्त्यर्थे ।

यथेति । सम्भृताः सम्पन्नाः । अत्र विश्वामित्रस्य क्रोधव्यञ्जकवाक्यत्वात् त्रोटकम् ।

## विमला

त्रोटकमाह, त्रोटकमिति ।—संरब्धा—सकोपा, वाक् पुनः त्रोटकम् ।

उदाहरति, यथेति ।—सम्भृताः,—सम्प्राप्ताः इत्यर्थः । [भूधातोः प्राप्तयर्थत्वमत्र बोध्यम्] ।

## लक्ष्मी

त्रोटकं निरूपयति—त्रोटकमिति । पुनस्त्वर्थे । संरब्धस्य रुष्टस्य वाक् वचनं क्रोधव्यञ्जकवचनमित्यर्थः, त्रोटयति तोटयति वा परचित्तस्वास्थ्यं भेदयतीति । त्रोटकं नामाङ्गम् ।

उदाहरति—यथेति । कौशिको विश्वामित्रः । 'हरिश्चन्द्रं प्रत्याह' इति शेषः । सम्भूताः सम्पन्नाः । स्वर्णदक्षिणाः अवशिष्टा इति शेषः अत्र हरिश्चन्द्रं नृपं प्रति पृथिवीदानदक्षिणादानार्थं विश्वामित्रस्य क्रोधव्यञ्जक-वचनत्वात् त्रोटकम् ।

## रुचिरा

तोटकं लक्षयति—४१६ **तोटकमित्यादिना**।

४१६ **संरब्धवाक** संरब्धस्य क्रुद्धस्य या (क्रुद्धा क्रोधविषया) वाक् सा। **पुनः**। **तोटकम्**।

उदाहरति—**यथेत्यादिना**।

**यथा**। **चण्डकौशिके** तृतीयऽङ्के। '**कौशिको** विश्वामित्रः। 'हरिश्चन्द्रं प्रत्याहे'ति शेषः। **कथम्**। **अद्यास्मिन्**। दिने। **अपि**। **सुवर्णदक्षिणाः**। अवशिष्टा इति शेषः। **न**। **मे** मह्यम्। **सम्भूताः**। कुतोऽप्यनीय सम्पूर्णतां नीता इति भावः। अत्र हि स्फुटा विश्वामित्रस्य कोपोक्तिः।

**अधिबलमभिसंधिच्छलेन यः ॥ ९९ ॥**

यथा रत्नावल्याम्—'काञ्चनमाला—भट्टिणि, इयं सा चित्तसालिआ। वसन्तअस्स सण्णं करोमि।' इत्यादि।

---

## विवृतिः

अभिसंधिरभिप्रायानुसंधानम् ॥

## विवृतिपूर्तिः

अधिबलमिति। अत्र विशेषः—'यद्वेष्टजनसंधानं बुधा अधिबलं विदुः। तोटकस्यान्यथाभावं केचिच्चाधिबलं जगुः ॥' इति ॥

भट्टिणीति। 'भर्त्रि, इयं सा चित्रशालिका। वसन्तकस्य संज्ञां करोमि।' इति संस्कृतम्। आदिपदेन 'किं पद्मस्य रुचिं न हन्ति—' इत्यादिश्लोकपर्यन्तस्य परिग्रहः। अत्र काञ्चनमाला-वासवदत्ता-वेषधारिण्योः सुसंगता-सागरिकयोश्छलेन काञ्चनमाला वासवदत्ताभ्यां राज-विदूषकयोरभिप्रायज्ञानम् ॥

## विज्ञप्रिया

अधिबलाङ्गलक्षणमाह-अधिबलमिति। अभिसन्धिरुद्देशघटनार्थं छलेनानुसन्धानम्।

भट्टिणि इति। हे भर्त्रि! इयं चित्रशालिका। तावद् वसन्तकस्य संज्ञां करोमीति संस्कृतम्। चित्रशालिकायां राज्ञः समीपे वासवदत्तावेशेन सागरिकामानेतुं तया सह वसन्तकेन संकेते कृते काञ्चनमालया तज्ज्ञात्वा वासवदत्तामेवानीय वसन्तकस्थाने सागरिकाऽऽगता इत्यङ्गुलिसंज्ञां कर्तुं वासवदत्तायामुक्तिरियं तस्याः।

## कुसुमप्रतिमा

अधीति। छलेन यः अभिसन्धिरभिप्रायपरिज्ञानम्, तद्धिबलं नामाङ्गं स्यात्, बलं बुद्धि बलमधिकृत्य जातमिति व्युत्पतेः।

यथेति। "भर्त्रि! इयं सा चित्रशालिका, तत् यावद्वसन्तकस्य संज्ञां करोमि।" इति संस्कृतानुवादः। चित्रशालिका चित्रनिर्म्माणगृहम्। संज्ञां सङ्केतम् आदिपदेन "किं पद्मस्य रुचिम्" इत्यादिपद्यग्रहणम्।

अत्र काञ्चनमाला वासवदत्तया च छलेन राजविदूषकयोरभिप्रायपरिज्ञानादधिबलम्।

## विमला

अधिबलामाह, अधिबलमिति।—छलेन—कपटेन, अभिसन्धिः—अभिप्रायानुसरणम्, अधिबलम्। अन्ये त्वाहुः—"यथेष्टजनसन्धानं बुधा अधिबलं विदुः। त्रोटकस्यान्यथाभावं केचिच्चाधिबलं जगुः ॥" इति।

उदाहरति, यथेति।—भट्टिणीति।—["भर्त्रि! इयं सा चित्रशालिका, तत् इहैव तिष्ठ, अहमपि वसन्तकस्य संज्ञां ददामि" इति संस्कृतम्]। चित्रशालिका—आलेख्यगृहं, संज्ञां—सङ्केतम्। आदिशब्देन "किं पद्मस्य

रुचिं न हन्ति"इत्यादि श्लोकपर्य्यन्तस्य परिग्रहः । अत्र काञ्चनमाला-वासवदत्ताधेयधारिण्योः सुसङ्गता-सागरिकयोः छलेन काञ्चनमाला-वासवदत्ताभ्यां राजविदूषकयोरभिप्रायज्ञानम् ।

## लक्ष्मी

अधिबलं निरूपयति—अधिबलमिति । छलेन व्याजेन य अभिसन्धिः अभिप्रायपरिज्ञानं बलं बुद्धिबलमधिकृत्योत्पन्नं यत्तत् अधिबलं नामाङ्गम् ।

उदाहरति—यथेति । 'भर्त्रि ! इयं सा चित्रशालिका, तद्यावद्वसन्तस्य संज्ञां करोमि' इति संस्कृतम् । चित्रशालिकायां राज्ञः समीपे वासवदत्तावेशेन सागरिकामानेतुं तया सह वसन्तकेन सङ्केते कृते काञ्चनमालया तज्ज्ञात्वा वासवदत्तामेवानीय वसन्तकस्थाने सागरिकाऽऽगता इत्यङ्गुलिसंज्ञा कर्त्तुं काञ्चनमालायाः वासवदत्तायामुक्तिरियम् । चित्रशालिका चित्ररचनास्थानम् । संज्ञां सङ्केतम् । इत्यादीत्यादिपदेनात्रैव—

**किं पद्मस्य रुचं न हन्ति नयनानन्दं विधत्ते न वा**

**वृद्धिं वा झपकेतसनस्य कुरुते नालोकमात्रेण किम् ? ।**

**वक्त्रेन्दौ तव सत्ययं यदपरः सीतांशुरभ्युद्भुतो**

**दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥ इति ।**

इदं पद्मं ग्राह्यम् । अत्र काञ्चनमालावासवदत्तावेषधारिण्योः सुसुङ्गतासागरिकयोर्व्याजेन काञ्चनमालावासवदत्ताभ्यां राजविदूषकयोराशयपरिज्ञानादधिबलम् ।

## रुचिरा

अधिबलं लक्षयति—४१७ **अधिबलमित्यादिना** ।

४१७ **यः । छलेन । अभिसन्धिरनुसन्धानादिः** । 'स' इति 'तदिति' वा शेषः । **अधिबलम्** ॥ ३९५ ॥

उदाहरति—**यथेत्यादिना** ।

**यथा । रत्नावल्यां** तृतीयेऽङ्के । **'काञ्चनमाला** 'वासवदत्तां प्रत्याहे'ति शेषः । **भट्टिणि** भर्त्रि ! स्वामिनीति यावत् । **इअं** इयम् । **सा । चित्तसालिआ** चित्रशालिका । **ता** तत । **इध** इह । **जेव्व** एव । **चिट्ठ** तिष्ठ । **अहं वि** अहमपि **वसंतअस्स** वसन्तकस्य । **सण्णं** सञ्ज्ञामनुसन्धानमिति यावत् । **देमि** ददामि ।' **इत्यारभ्य । वासवदत्ताया** देव्याः । **परिचयान्तम्** । 'राजा (दृष्ट्वा सवैलक्ष्यम्) हा धिक् कथं कष्टं देवी वासवदत्ता ?वयस्य ! किमेत'दिति राज्ञोऽपि विस्मयपर्यन्तमिति भावः । अत्रेदं बोद्धव्यम्—कञ्चनमाला वासवदत्ताया वेषेण सुसङ्गतासागरिकाभ्यां चेष्टितस्य सुसङ्गतासागरिकावेषेणैव च्छलेन काञ्चनमालावासवदत्ताभ्यां वसन्तक (विदूषक) वत्सराजयोरभिप्रायस्य चानुसन्धानम् । इति ।

**नृपादिजनिता भीतिरुद्वेगः परिकीर्तितः ।**

यथा वेण्याम्—

**'प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः ।**

**स कर्णारिः स च क्रूरो वृककर्मा वृकोदरः ॥'**

---

## विवृतिः

कर्णारिः अर्जुनः । वृकस्य व्याघ्रविशेषस्येव कर्म यस्य सः । अत्र दुर्योधनस्य भीमार्जुनजनिता भीतिः ।

## विवृतिपूर्तिः

नृपादिति । आदिशब्देन अरिचौरयोर्ग्रहणम् ॥

त्वामिति । त्वां दुर्योधनम् ॥

## विज्ञप्रिया

नृपादिजनितेति । नृपादौ केनापि जनिता भीतिरित्यर्थः । प्राप्तावेकरथेति । स कर्णारिरर्जुनः स च क्रूरकर्म्मा क्रूरो वृकोदरो भीमः । एतावेकरथारूढौ भ्रातरौ प्राप्तावागतावित्यर्थः । कर्णारित्वेन क्रूरकर्म्मत्वेन च दुर्य्योधनस्य भीतिजननम् ।

## कुसुमप्रतिमा

नृपेति । नृपेण आदिपदात् शत्रुप्रभृतिभिश्च जनिता भीतिर्भयम् उद्वेगो नामाङ्गं परिकीर्त्तितः, उद्विज्यते मनोऽनेनेति व्युत्पत्तेः ।

प्राप्ताविति । स कर्णारिरर्जुनः सक्रूरो हि स्वस्वभावः वृककर्म्मा व्याघ्राविशेषवन्निषु रकार्यकारी वृकोदरो भीमसेनश्च एतौ इतस्ततस्त्वां पृच्छन्तौ दुर्य्योधनः, क्वास्ते इति जिज्ञासमानौ एकरथारूढौ सन्तौ प्राप्तौ उपस्थितौ ।

अत्र दुर्य्योदनस्य शत्रुभूतभीमार्जुनजनितभीतेरुद्वेगः ।

## विमला

उद्वेगमाह, नृपादीति ।—नृपादेः,—विपक्षनृपचौरादिना, जनिता—उत्पादिता, भीतिः,—भवम्, उद्वेगः परिकीर्त्तितः ॥

उदाहरति, प्राप्तविति ।—दुर्य्योदनं प्रति तदीयपुरुषस्य उक्तिरियम् । च कर्णारिः,—कर्णशत्रुः, अर्जुनः इत्यर्थः, स च क्रूरः,—निष्ठुरः, वृककर्म्मा—वृकः,—व्याघ्रविशेषः, तद्वत् कर्म्म यस्य तादृशः, दुःशासनोरःस्थलात् रुचिरपानादिति भावः, वृकोदरः,—भीमः, एकः,—अभिन्नः, रथः तमारूढौ इतस्ततः त्वां पृच्छन्तौ प्राप्तौ—आगतवन्तौ । अत्र दुर्य्योधनस्य भीमार्जुनाभ्यां जनिता भीतिः । पश्यावक्तं वृत्तम् ।

## लक्ष्मी

उद्वेगं निरूपयति—नृपादिजनितेति। नृपादौ केनापि जनिता भीतिर्भयम् उद्विज्यते हृदयमनेनेति उद्वेगो नामाङ्गं परिकीर्त्तितः। नृपादीत्यादिपदेन शत्रुप्रभृतेः परिग्रहः।

उदाहरति—यथेति। वेण्यां वेणीसंहारे प्राप्ताविति। सः कर्णारिरर्जुनः क्रूरः क्रूरप्रकृतिः, वृकस्य व्याघ्रविशेषशस्येव निष्ठुरकर्म यस्य स तथोक्तः वृकोदरो भीमश्च एतौ इतस्ततस्त्वां पृच्छन्तौ दुर्योधनः क्व तिष्ठतीति त्वद्विषयप्रश्नं कुर्वन्तौ, एकरथारूढौ एकरथोपविष्टौ भ्रातरौ प्राप्तावागतावित्यर्थः। अनुष्टुप् छन्दः। अत्र कर्णारित्वेन क्रूरकर्मत्वेन च दुर्योधनस्य शत्रुभूतभीमार्जुनजनितभीतेरुद्वेगः।

## रुचिरा

उद्वेगं लक्षयति—४१८ **नृपदि...**इत्यादिना।

४१८ **नृपादिजनिता**। आदिपदेन प्रबलप्रतिपक्ष्यन्तरादिग्रहणम्। **भीतिर्भयम्**। **उद्वेगः**। **परिकीर्तितः**।

उदाहरति—**यथा**। **वेणीसंहारे** 'पञ्चमाङ्के' इति शेषः। '**सूतः**' इत्यादिना।

'**सूतः** सारथिः। **आयुष्मन्** प्रशस्तजीवित !

**त्वां** दुर्योधनम्। **इतस्ततः** सर्वत इत्यर्थः। **पृच्छन्तौ**। **एकरथारूढौ** एकस्मिन् रथे स्थितौ। **प्राप्तौ** ('कश्च कश्चेति राज्ञः पृच्छाऽनन्तरं सूत उत्तरयती'ति शेषः) **स** प्रसिद्धपराक्रमः। **कर्णारिः** कर्णस्य निहन्ताऽर्जुन इति भावः। **स** भवतां प्रसिद्धः शत्रुरिति भावः। अत एव—**क्रूरो** निष्ठुरः। **वृककर्मा** वृको व्याघ्रविशेषस्तद्वत् कर्मकारीत्यर्थः। **वृकोदरो** भीमसेनः। अत्र हि भीमार्जुनयोरागमनजन्या भीतिरिति लक्षणसमन्वय इति बोध्यम्॥ ३६५॥

**शङ्काभयत्रासकृतः संभ्रमो विद्रवो मतः ॥ १०० ॥**

**'कालान्तककरालास्यं क्रोधोद्भूतं दशाननम्।**
**विलोक्य वानरानीके संभ्रमः कोऽप्यजायत ॥'**

---

## विवृतिः

शङ्का अनिष्टाशंसा। त्रासो भयानुकूलव्यापारः। संभ्रमस्त्वरा ॥

## विज्ञप्रिया

विद्रवरूपाङ्गमाह—शङ्काभयेति। शङ्कया अनिष्टशङ्कया भयत्रासौ तत्कृतो यः संभ्रमः व्याकुलता विद्रवो मत इत्यर्थः। भाव्यनिष्टद्वेषो भयम्। आकस्मिकानिष्टोत्पत्त्या कर्त्तव्यमूढता तु त्रासः।

कालान्तकेति। क्रोधोद्धूतं क्रोधकम्पितं दाशाननं विलोक्य वानरानी के कोऽपि संभ्रमोऽजायत इत्यर्थः।

## कुसुमप्रतिमा

शङ्केति। अनिष्टसम्भावना शङ्का, अप्रतीकार्य्यत्वप्रकारक्रमविष्यदनिष्टज्ञानं भयम्, उपस्थितानिष्टज्ञानं त्रासः तैः कृतः सम्भ्रमंश्चित्तादिव्यस्तता विद्रवो नामाङ्गं मतः, विशेषेण द्रवणं कम्पनमिति व्युत्पत्तेः।

कालेति। कालान्तकस्य संहारकालीनयमस्येव करालानि भयङ्कराणि आस्यानि वदनानि यस्य तम्, क्रोधेन उद्गतम् उत्कम्पितदेहम्, दशाननं रावणं विलोक्य वानराणाम् आनीके सेनायां कोऽपि अनिर्वचनीयः सम्भ्रमो व्यस्तता अजायत।

अत्र वानरानीकस्य शङ्कात्रासकृतसम्भ्रमाद्विद्रवः।

## विमला

विद्रवमाह, शङ्केति।—शङ्कया—अनिष्टाशंसया, भयेन—त्रासेन, भयानुकूलव्यापारेण, च सम्भ्रमः,—आवेगः, विद्रवः मतः,—कथितः।

उदाहरति, कालान्तकेति।—कालान्तकः,—प्रलयकालीनो यमः तस्यैव करालानि—भीषणानि, आस्तानि—मुखानि यस्य तादृशं, क्रोधोद्भुतं—कोपपूर्ण, दशाननं—दशमुखं रावणं, विलोक्य—दृष्ट्वा, वानराणाम् अनोके—सैन्ये, कोऽपि—अनिर्वचनीय इत्यर्थः, सम्भ्रमः,—आवेगः, अजायत—अभूत्।

## लक्ष्मी

विद्रवं निरूपयति—शङ्काभयेति। शङ्कया अनिष्टासम्भावनया अनिष्टवासवत्कृतो यः सम्भ्रमः व्याकुलता चित्तादिव्यग्रतेति यावत्, विशेषेण द्रवणं कम्पनं यत्र स विद्रवो नामाङ्गं मतः। भाव्यनिष्टद्वेषोऽत्र भयम्,

अतर्किताનિष्टोत्था कर्तव्यमूढता तु त्रासः। उदाहरति—कालान्तकेति। कालान्तकस्य संहारकालीनकृतान्तस्येव करालानि भयङ्करामि आस्यानि मुखानि यस्य तं तथोक्तम्, क्रोधेन रुषा उद्धृतम् उत्कम्पितशरीरम्, दशाननं लङ्केशं विलोक्य वानराणां कपीनाम् अनीके सैन्ये, कोऽपि विलक्षणसम्भ्रमो व्यग्रता अजायत उत्पन्नोऽभूत्। अत्र वानरसेनायाः शङ्कात्रासजनितसम्भ्रमाद्विद्रवः।

## रुचिरा

विद्रवं लक्षयति—४१९ **शङ्के** इत्यादिना।

४१९ **शङ्काभयत्रासकृतः**। त्रास उद्वेगः। **सम्भ्रमः** किम्मयाऽद्य प्रतिकर्त्तव्यमिति चाञ्चल्यविशेषः। **विद्रवः। मतः** ॥ ३९६ ॥

उदाहरति—'**कालान्तक...**' इत्यादिना।

'**कालान्तककरालास्यं** कालेन (प्राप्तः) अन्तकस्तद्वत्करालमास्यं मुकं यस्य तम् तादृशम्। ननु कुत इत्याह—**क्रोधोद्भूतं** प्रवृद्धकोपम्। **दशाननं** रावणम्। **विलोक्य**। 'स्थिते' इति शेषः। **वानरनीके** वानरसेनायाम्। **कोऽपि** अनिर्वचनीयः। **सम्भ्रमः** वानराणां सन्त्रासः। **अजायत** ॥ ३६३ ॥'

एवं गर्भाङ्गानि दर्शयित्वा विमर्शाङ्गानि दर्शयितुमुपक्रमते—**अथे**त्यादिना।

अथ विमर्शाङ्गानि—

**अपवादोऽथ संफेटो व्यवसायो द्रवो द्युतिः।**
**शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनम्॥ १०१॥**
**प्ररोचना विमर्शे स्यादादानं छादनं तथा।**

---

## विवृतिः

अथ त्रयोदशविमर्शाङ्गान्याह—अपवाद इति।

## विज्ञप्रिया

विमर्शसन्धेस्त्रयोदशाङ्गान्याह—अपवाद इत्यादि।

## कुसुमप्रतिमा

अपेति। विमर्षे सन्धौ अपवादीनि त्रयोदशाङ्गानि सम्भवन्ति।

## विमला

विमर्षाङ्गाण्याह, अथेति।—अपवादादीनि त्रयोदश विमर्षाख्यस्य सन्धेअङ्गानि।

## लक्ष्मी

विमर्शसन्धेस्त्रयोदशाङ्गानीति दर्शयति—अपवाद इति। विमर्शसन्धौ अपवादादिछादनान्तानि त्रयोदशाङ्गानि सम्भवन्तीत्यर्थः।

## रुचिरा

**अथ। विमर्शाङ्गानि।** विमर्शस्य तन्नाम्नः सन्धेरङ्गानि उच्यन्ते—४२० **अपवाद** इत्यादिना।

४२० **अपवादः। अथ। सम्फेटः। व्यवसायः। द्रवः। द्युतिः। शक्तिः। प्रसङ्गः। खेदः। च** तथा। **प्रतिषेधः। विरोधनम्—प्ररोचना। आदानम्। तथा छादनम्। विमर्शे। स्यात्।** विमर्शे अपवादमारभ्य च्छादनान्तमुक्तानि त्रयोदशानि अङ्गानि भवन्तीति भावः॥ ३९७॥

तत्र तावदपवादं लक्षयति। ४२१ **दोषे**त्यादिना।

**दोषप्रख्यापवादः स्यात्—**

यथा वेण्याम्—'युधिष्ठिरः—पञ्चालक, क्वचिदासादिता तस्य दुरात्मनः कौरव्यापसदस्य पदवी । पाञ्चालकः—न केवलं पदवी, स एव दुरात्मा देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः ।'

---

## विवृतिः

तस्य दुर्योधनस्य पदवी उपलब्धा । मरुत्तनय भीम ।

## विवृतिपूर्तिः

दोषेति । दोषप्रख्या दोषप्रख्यापनम् ॥

## विज्ञप्रिया

दोषप्रख्या दोषप्रख्यापनम् । कौरवापसदस्य कौरवाधमस्य पदवी पादचिन्हम् । सोऽपि दुरात्मा दुर्योधनः । अत्रोक्तयामेव दोषप्रख्यापनम् ।

## कुसुमप्रतिमा

दोषेति । दोषस्य प्रख्या आख्यानम् अपवादो नामाङ्गं स्यात्, अपकृष्टविषयकी वाद इति व्युत्पत्तेः ।

यथेति । तस्य दुर्य्योदनस्य । पदवी पन्थाः । देव्या द्रौपद्याः केशपाशस्य स्पर्शो धारणमेव पातकं तस्य प्रधानहेतुरादेशकत्वादिति भावः, उपलब्धः प्राप्तः ।

अत्र दुर्य्योधनस्य दोषाख्यानादपवादः ।

## विमला

अपवादमाह, दोषेति ।—दोषस्य प्रख्या—कथनम्, अपवादः स्यात् ।

उदाहरति, पाञ्चालकेति ।—आसादिता—प्राप्ता, दुरात्मनः,—दुष्टस्वभावस्य, तस्य—दुर्य्योधनस्य, देवीति ।—देव्याः,—द्रौपद्याः,—द्रौपद्याः, केशपाशस्य स्पर्शात् यत् पातकं तस्य प्रधानहेतुः—मुख्यकारणं, दुर्य्योधन इत्यर्थः, उपलब्धः,—प्राप्तः अत्र दुर्य्योधनस्य दोषकथनम् ।

## लक्ष्मी

तत्रापवादं लक्षयति—दोषप्रख्येति । दोषस्य प्रख्या कथनम् अपकृष्टविषवको वाद अपवादो नामङ्गम् ।

उदाहरति—यथेति । वेण्यां वेणीसंहारनाटके । तस्य दुर्योधनस्य कौरवापसदस्य कौरवाधमस्य । पदवी पन्थाः 'पन्थानं पदवी सृतिः' इत्यमरः, दरात्मा दुर्य्योधनः । देव्या द्रौपद्याः केशपाशस्य स्पर्शो धारणमेव पातकं तस्य प्रधानहेतुः आदिकारणमाज्ञापकत्वादिति भावः, उपलब्धः प्राप्तः । अत्र दुर्योधनस्य दोषकथनादपवादः ।

## रुचिरा

४२१ **दोषप्रख्या** दोषस्य प्रख्यानम्। **अपवादः। स्यात्।**

उदाहरति—**यथे**त्यादिना।

**यथा। वेणीसंहारे** षष्ठाङ्के। **'युधिष्ठिरः** 'प्राहे' ति शेषः। **पाञ्चालक** धृष्टद्युम्न! **कच्चित्** किन्नु। 'कच्चित् कामप्रवेदने' इत्यमरः। क्वचिदिति पाठान्तरम्। **तस्याकीर्तनीयनाम्नः। दुरात्मनः। कौरवापसदस्य** कौरवेपसदस्तस्य। दुर्योधनस्येति भावः। **पदवी** मार्गः। **आसादिता। पाञ्चालकः** 'प्राहे' ति शेषः। **न। केवलम्।** तस्य **पदवी।** 'किन्त्वि'ति शेषः। **सः** एव न त्वन्यः। **दुरात्मा। देवीकेशपाश**...द्रोपद्याः केशस्पर्शरूपपापस्य कारणभूत दुर्योधनः। **उपलब्धः।** अत्र हि दुर्योधनस्य दोषप्रख्यानम् स्पष्टम्।

**संफेटो रोषभाषणम् ॥ १०२ ॥**

यथा तत्रैव—'राजा—अरे रे मरुत्तनय, वृद्धस्य राज्ञः पुरतो निन्दितमप्यात्मकर्म श्लाघसे । श्रृणु रे !

**कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा**
**प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी ।**
**तस्मिन्वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा**
**बाह्वोर्वीर्यातिभारद्रविणगुरुमदं मामजित्वैव दर्पः ॥**

भीमः—(सक्रोधम् ।) आः पाप । राजा—आः पाप ।' इत्यादि ।

---

## विवृतिः

वृद्धस्य राज्ञो धृतराष्ट्रस्य ॥

## विवृतिपूर्तिः

रोषेति । रोषग्रथितवाक्यमित्यर्थः ॥

तवेति । तव भीमस्य । तव च पशोरर्जुनस्य । तस्य राज्ञो युधिष्ठिरस्य । तयोर्नकुलसहदेवयोः ॥

वीर्येति । वीर्यस्यातिभार उद्रेक एव द्रविणं वसु तेन गुरुर्महान्मदो यस्य तादृशम् । पराक्रमातिशयशालिनमिति । यावत् ॥

## विज्ञप्रिया

सम्फेटरूपमङ्गमाह—अरे रे इत्यादि । दुर्योधनस्य भीमं संबोध्य उक्तिरियम् । वृद्धस्य राज्ञः धृतराष्ट्रस्य । कृष्टा इति—तव भीमस्य तव अर्जुनस्य तस्य राज्ञो युधिष्ठिरस्य वा पशोस्तयोर्नकुलसहदेवयोर्वा पश्वोर्भार्या, भुवनपतेर्मम आज्ञया नृपतीनां समक्षं द्यूतदासी केशेषु कृष्टा । ये नरेन्द्रा युष्माभिर्हतास्तैस्तादृशे वैरानुबन्धे किमपकृतं तद्वद् । तान् जित्वा यो दर्पः स किं मामजित्वेति काकुध्वनिविशेषवशाज् जित्वैव दर्प इति गम्यते । मां कीदृशम् ? बाह्वोर्वीर्यातिभाररूपेण द्रविणेन धनेन गुरुमदम् । आःपापेति । भीमदुर्योधनयोः परस्परं प्रति उक्तिः । राजा दुर्योधनः । अत्र द्वयोरेव रोषभाषणम् ।

## कुसुमप्रतिमा

सम्फेट इति । रोषेण भाषणं सम्फेटनामाङ्गम् । डित्थादिवत् सम्फेट इति रोषभाषणार्थे आलङ्कारिकेषु रूढः ।

## विमला

सम्फेटमाह, सम्फेट इति।—रोषेण—क्रोधेन, भाषणं—कथनं, सम्फेटः। क्रोधवस्थायासुक्तं वचनं सम्फेटो विमर्षाङ्गमिति भावः।

उदाहरति, यथेति।—मरुत्तनय!—वायुपुत्र! भीम इत्यर्थः, वृड्द्धस्य राज्ञः,—धृतराष्ट्रस्य, पुरतः,—अग्रतः, निन्दितं—लोकगर्हितमपि, आत्मनः कर्म माघसे—प्रशंससिः

उदाहरति, कृष्टेति।—भीमार्ज्जुनो प्रति दुर्य्योधनवचनम्, भुवनपतेः,—समस्तपृतिवीश्वरस्य, मम—दुर्य्योधनस्य, आया भूपतीनां—राज्ञां, प्रत्यक्षं द्यूतेन निर्जिता दासी—किङ्करी, द्यूतेन जितत्वात् दासीव अपमानयथेष्टाचरणयोग्यत्वात् इति भावः; अत एव तव (इति भीमं प्रति उक्तिः) पशोः,—पशुतुल्यस्य इत्यर्थः, तव च (इति अर्ज्जुनं प्रति उक्तिः) तस्य राज्ञः,—युधिष्टिरस्य, तयोः,—नकुल सहदेवयोर्वा, (वाशब्दोऽत्र आक्षेपे अनादरे वा) भार्य्या—द्रौपदी, केशेषु कृष्टा—गृहीता, दुःशासनेनेति शेषः, तस्मिन् वैरस्य—विद्वेषस्य, अनुबन्धे—कारण, जाते अतीति शेषः, ये नरेन्द्राः,—राजानः, हताः, युष्माभिरिति शेषः, तेः किम् अपकृतम्। वद। वाह्वोः,—भुजयोः, वीर्य्यातिभारः,—अतिवीर्य्यं, तद एव द्रविणं—धर्म, तेन गुरुः, महान्, मदः,—गब्वंः, यस्य तादृशं, माम् अजित्वैव दर्पः,—अहङ्कारः, क्रियते युष्माभिरिति शेषः। अत्र क्रोधेन भीमदुर्य्योधनयोर्भाषणम्। स्रग्धरा वृत्तम्।

## लक्ष्मी

सम्फेटं लक्षयति—सम्फेट इति। रोषेण भाषणं सम्फेटनामाङ्गम्। सम्फेट इति गोमण्डलादिवत् रोषभाषणार्थेऽत्र रूढः।

उदाहरति—यथेति। तत्रैव वेण्यामेवेत्यर्थः। अरे रे इत्यादि—दुर्य्योधनस्य भीमाऽर्जुनो प्रति सम्बोध्य उक्तिरियम्। मरुत्तनय! अनेन जारज इति सूचितम्। वृद्धस्य राज्ञो धृतराष्ट्रस्य। आत्मकर्म बन्धुवधादिरूपं स्वकार्य्यं श्लाघसे विकत्थसे प्रसंशसीत्यर्थः।

निरपराधिनां तेषां वधाद्गर्वो वृथेत्याह—कृष्टेति। मम भुवनपतेर्जगदीश्वरस्य आज्ञया एतेनाज्ञापालकत्वं तेषां धर्म इति व्यञ्जितम्। द्यूतेन लब्धा प्राप्ता दासी द्यूतदासी अत एवापमानयोग्या, पशोः अधुनाऽपि मां जेतुमसर्थतया पशुसदृशस्य तव भीमस्य तव अर्जुनस्य च भीमार्जुनयोः सम्बोध्यत्वात् तव द्वयोपादानम्। तस्य राज्ञो युधिष्ठिरस्य वा तयोर्नकुलसहदेवयोर्वा भार्या द्रौपदी। अनेन कस्याश्चिदेकः पतिः, विपत्तौ प्रतीकारासमर्थोऽपि न तथा उपालम्भनीयः, भवन्तस्तु द्रौपद्याः पञ्च स्वामिन सन्तोऽपि अधुनाऽपि यथार्थप्रतीकारासमर्थत्वादत्यन्तकातरा एवेति द्रौपदी च गणिकासदृशीति सूचितम्। भूपतीनां तत्र त्यनृपतीनां प्रत्यक्षमेव केशेषु कृष्टा तस्याः केशग्रहणं कृतमित्यर्थः। तस्मिन् केशग्रहरूपे वैरानुबन्धे वैरजनके ये नरेन्द्रास्तैः युष्माकं किमपराद्धं ये नरेन्द्रा नृपतयो युष्माभिर्घातिता इति वद, अपकर्त्ता त्वमेवेति भावः, एवं च अन्यापराधेन अन्येषां दण्डविधानादविचार्यकारित्वेन भवन्तः पशुसदृशा एवेत्याशयः। बाह्वोः स्वभुजयोः वीर्यातिरेकः पराक्रमाधिक्यमेव द्रविणं धनं तेन गुरुर्महान् मदो गर्वो यस्य तं तादृशं मां दुर्योधनम् अजित्वैव जयमप्राप्यैव युष्माकं दर्पः, साम्प्रतं ते गर्वो न युक्त इति भावः। स्रग्धराच्छन्दस्तल्लक्षन्तूक्तं प्राक्।

भीम इति। आः पापेति भीमदुर्योधनयोः परस्परं प्रत्युक्तिः। राजा दुर्योधनः अत्र द्वयोरेव रोषभाषणात् सम्फेटः।

## रुचिरा

सम्फेटं लक्षयति—४२२ **सम्फट** इत्यादिना ।

४२२ **रोषभाषणं** रोषेण भाषणं । **सम्फेटः** (पृषोदरादित्वात्साधुः) ॥ ३९८ ॥

उदाहरति—**यथा** । **तत्र** तस्मिन्वेणीसंहारे पञ्चमाङ्के । **एव** । **दुर्योधनः** राजा इति पाठान्तरम् । **अरे रे** । **मरुत्तनय** मरुतो वायोस्तनयस्तत्सम्बुद्धौ तथोक्त ! (एतेन वायुप्रकृतिकत्वात्तथाप्रलपसीति सूचितम्) । **किमेवम्** । **वृद्धस्य** । **राज्ञो** धृतराष्ट्रस्येति भावः । **पुरतः**—पुरस्तात् । **निन्दितव्यम्** । **अपि** । **आत्मकर्म** । **श्लाथसे** । **रे ऋणु**

**तव** भीमस्य (भीमं प्रति सम्बन्धोक्तिः) **तवार्जुनस्य** । **च** । **पशोः** (अर्जुनं सम्बोध्येयमुक्तिः) । **तस्य** युधिष्ठिरस्य । **राज्ञः** (इति युधिष्ठिरमभिसन्धायोक्तिः) **तयोर्न**कुलसहदेवयोः (इति माद्रेयावभिसन्धायोक्तिः) **वा** । **भूपतीनां** राज्ञाम् । (इति सभ्यानभिसन्धायोक्तिः) । **प्रत्यक्षम्** । **भुवनपतेः** । **मम** । **आज्ञया** । **द्यूतदासी** द्यूतेन जिता दासी द्रौपदी । 'युष्माक'मिति शेषः । **केशेषु** । **कृष्टा** । **अस्मिन्** । **वैरानुबन्धे** वैरप्रकरणे । 'सती'ति शेषः । **ये** । **नरेन्द्राः** । **हताः** । **तैः** । **किम्** । **अपकृतम्** । 'तवे'ति शेषः । **वद** 'त्वमेवे'ति शेषः । **वाहोर्भुजयोः** । **वीर्यातिरेकद्रविणगुरुमदं** वीर्यस्यातिरेकोऽतिशयः स एव द्रविणं धनं तेन गुरुमदो यस्य तादृशम् । **माम्** । **अजित्वा एव** । **दर्पोऽ**भिमानः । अत्र हि हतबान्धवस्यापि दुर्योधनस्य भीमवचोऽसहमानस्य रोषोक्तिः । स्रग्धरावृत्तम् ।॥ ३६७ ॥'

**व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसंभवः ।**

यथा तत्रैव—'भीमः—

**चूर्णिताशेषकौरव्यः क्षीबो दुःशासनासृजा ।**

**भङ्क्ता दुर्योधनस्योर्वोर्भीमोऽयं शिरसा नतः ॥'**

---

## विवृतिः

प्रतिज्ञा कार्यस्य निर्देशः, हेतुः साधननिर्देशः, तयोः संभवो मेलनम् । भङ्क्ता । भजनकर्ता । अत्र दुर्योधनोरुभञ्जनं कार्यं भीमत्वं साधनम् ।

## विवृतिपूर्तिः

क्षीब इति । क्षीबत्वसंपादनेन असृजो मधुत्वारोपणं व्यङ्ग्यम् ॥

दुःशासनेति । दुःशासनस्य कोष्णमभिनवत्वात्कदुष्णं शोणितमेव मधु मद्यं तेन क्षीबं मत्तम् ॥

## विज्ञप्रिया

व्यवसायरूपमङ्गमाह—व्यवसायश्च इति । प्रतिज्ञाहेतोः प्रतिज्ञार्थस्य संभवो निष्पत्तिः, तत्कथनमित्यर्थः । निहतेति । क्षीबो मत्तः । असृजा शोणितेन । भङ्क्ता भङ्गकर्त्ता ।

## विमला

व्यवसायामाह, व्यवसाय इति ।—प्रतिज्ञायाः,—कार्य्यनिर्देशस्य, हेतोः,—साधननिर्देशस्य, च सम्भ-वः,—सम्मेलनं, व्यवसायः विज्ञेयः ।

उदाहरति, निहतेति ।—पूर्णप्रतिज्ञस्य भीमस्य धृतराष्ट्रं प्रति प्रणाति वचनम् । निहत,—विनाशिताः, अशेषाः,—समस्ताः, कौरव्याः,—कुरुवंशीयाः, येन तादृशः, दुःशासनस्य असृजा—रक्तेन, रक्तपानेनेत्यर्थः, क्षीरुः,—मत्तः, तथा दुर्य्योधनस्य ऊर्वीः, ऊरुद्वयस्य भङ्क्ता—भञ्जनकर्त्ता, अयं भीमः शिरसा नतः,—शिरसा प्रणमतीत्यर्थः । अत्र कार्य्यस्य कौरवहननादिकस्य क्षीवत्वहेतोश्च दुःशसन रुधिरपानस्य सम्मेलनम् ।

## लक्ष्मी

व्यवसायं लक्षयति—व्यवसायश्चेति । कार्य्यस्य निर्द्देशः प्रतिज्ञा हेतुः साधननिर्द्देशः कारणनिर्द्देश इति यावत् तयोः सम्भवो मेलनम्, तादृश उद्योग इति शेषः, व्यवसायो नामाङ्गम् ।

उदाहरति—यथेति । तत्रैवेति । वेण्यां तु नेदानीमुपलभ्यते । निहतेति । निहता विनाशिता अशेषाः समग्राः कौरव्याः कुरुकुलोद्भवा येन स तथोक्तः, दुःखेन शास्यतेऽसौ दुश्शासनस्तस्य असृजा शोणितेन क्षीबो मत्तः क्षीबत्वसम्पादनेन असृजो मधुत्वारोपणं व्यज्यते । तथा दुःखेन युध्यत इति दुर्य्योधनस्तस्य ऊर्वोः जङ्घाघद्वयस्य

**भङ्क्ता खण्डयिता अयं भीमो भवन्तं शिरसा मूर्ध्ना नतः। अत्र द्रौपदीकेशाकर्षणादिहेतोस्तत्तत्प्रतिज्ञाश्चास्योद्योगस्य सम्भवाद्व्यवसायः।**

## रुचिरा

व्यवसायं लक्षयति—४२३ **व्यवसायेति**।

४२३ **प्रतिज्ञाहेतुसम्भवः** प्रतिज्ञैव हेतुः सम्भवो यस्य तथोक्तः। **च**। **व्यवसायः विज्ञेयः**।

उदाहरति—**यथा**। **तत्र**। **एव** वेणीसंहारस्य पञ्चमाहे। '**भीमः**। **निहताशेषकौरव्यः** निहता अशेषाः कोरव्याः कौरवा येन तादृशः। **दुःशासनासृजा** 'पीतेन'ति शेषः। दुःशासनरुधिरापानेनेति भावः। **क्षीबो** मत्तः। **दुर्योधनस्य**। **ऊर्वोः** ऊरूयुगलस्य। शेषे षष्ठी। **भङ्क्ता** खण्डयिता। **अयम्**। **भीमः**। **शिरसा** ज्येष्ठतातमिति शेषः। **नतः** प्रणतः। अत्र दुःशासनादिहननादिव्यवसायः प्रतिज्ञाहेतुकः॥ ३६८॥'

**द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसंभवा ॥ १०३ ॥**

यथा तत्रैव—'युधिष्ठिरः—भगवन् कृष्णाग्रज सुभद्राभ्रातः,

**ज्ञातिप्रीतिर्मनसि न कृता, क्षत्रियाणां न धर्मो,**

**रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन।**

**तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः**

**कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयि त्वम् ॥'**

---

## विवृतिः

गुरोः पूज्यस्य व्यतिक्रान्तिरादरलङ्घनम् ॥

ज्ञातिप्रीतिरिति। बलदेवयुधिष्ठिरयोश्चन्द्रवंशभवत्वाज्ज्ञातित्वम्। धर्मो न गणित इत्यग्रेणान्वयः। युद्धे प्रणयिनी पक्षपातो नास्तीति क्षत्रियाणां धर्मः। रूढं प्रसिद्धम्। अनुजस्य कृष्णस्य शिष्ययोर्भीमदुर्योधनयोः। असि भवसि। अत्र शोकाविष्टचित्तेन युधिष्ठिरस्यादरलङ्घनम् ॥

## विवृतिपूर्तिः

हराविति। कृष्णे ॥

## विज्ञप्रिया

द्रवरूपमङ्गमाह—द्रव इति। गुरोर्व्यतिक्रान्तिः भर्त्सनमित्यर्थः। भगवन् इत्यादि। युधिष्ठिरस्य दुर्योधनानुरागक्रुद्धबलभद्रभर्त्सनमिदम्। कृष्णाग्रजेति सुभद्राभ्रातरिति च द्वयं स्वपक्षानुरागौचित्याय सम्बन्धप्रदर्शनम्। ज्ञातिप्रीतिरिति। ज्ञातयो वयम्। क्षत्रियाणां धर्मः। वयं ह्ययुध्यमानाः। तवानुजस्य श्रीकृष्णस्य अर्जुनेन सह रूढं तत्सख्यमपि न गणितम्। शिष्ययोर्भीमदुर्योधनयोस्तुल्यः स्नेहानुबन्धः। कामं यथेष्टम्। भवतु वरम्। यन्मन्दभाग्ये मयि त्वं विमुखः। कोऽयं पन्थाः इत्यर्थः। अत्र गुरोर्बलभद्रस्य युधिष्ठिरेण भर्त्सनम्।

## कुसुमप्रतिमा

ज्ञातीति। दुर्य्योधनेन साईमन्वायेन युध्यमानं भीमं प्रति बलरामस्य क्रोधावसरे उक्तिरियम्। ज्ञातिप्रीतिः एकचन्द्रवंशोत्पत्तिनिबन्धनः प्रणयः, मनसि न कृता, "हीनपक्षं प्रपूरयेत्" इत्येवं क्षत्रियाणां धर्म्मोऽपि मनसि न कृत इत्यन्वयः, तथा अनुजस्य श्रीकृष्णस्य अर्जुनेन सह तत् प्रसिद्धं रूढं बद्धमूलं सख्यमपि न गणितम्। सर्वत्र भवतेति शेषः। शिष्ययोर्भीमंदुर्य्योधनयोरुभयरेव विषये भवतः स्नेहबन्धः स्नेहनिबन्धनचित्ताकर्षणम्, कामं पर्याप्तं यथा ख्यातथा तुल्यी भवतु। किन्तु मन्दभाग्ये मयि त्वं यत् विमुखो भीमं प्रति क्रुद्धत्वादेव प्रतिकूलः असि, अयं कः पन्था का रीतिः।

अत्राविवेचकत्वसूचनद्वारा युधिष्ठिरेण गुरुपर्य्यायगतबलराममर्य्यादालङ्घनात् द्रवः।

## विमला

द्रवमाह, द्रव इति ।—शोकावेगादिना—शोकः,—पुत्रादिवियोगदुःखम्, आवेगः,—भयादिजनितमनसः सम्भ्रमः, तदादिना, सम्भवा—सम्भृता, गुरूणां—पूज्यानां, व्यतिक्रान्तिः,—व्यतिक्रमः, समादरलङ्घनमिति यावत्, द्रवः, कथ्यते इति शेषः ।

उदाहरति, ज्ञातीति ।—ज्ञातिप्रीतिः—एकवंशणत्वनिबन्धनः प्रणायः इत्यर्थः, युधिष्ठिरबलदेवयोरेकचन्द्रवंशप्रभवत्वात् ज्ञातित्वमिति भावः, मनसि न क्कता— न गणिता इत्यर्थः, क्षत्रियाणां धर्मः,—संग्रामे ग्रणायिनि पक्षपाती नास्ति इत्येवंष्प इति भावः, "न गणितः" इत्यगेणन्वयः; अर्जुनेन, सममिति शेषः, अनुजस्य कुशस्य, रूढं—बड्द्यं, असिड्द्यमिति यावत्, सख्यं—मित्रता, यत् तदपि, न गणितं— तुच्छीक्वतं, भवतेति सर्व्ववाध्याहार्य्यम् । भवतः—तव, शिष्ययोः,—गदायुड्घेऽन्तेवासिनी: भीमदुर्य्योधनयोः, स्नेहबन्धः, कामं—सम्यक्, तुल्यः,—समानः, भवतु, स्नेहतुल्यत्वे एकस्य साहाय्यकरणमनुचितमिति भावः । अर्थ कः पन्थाः,—नयः, यत् मन्दभाग्ये—भाग्यहोने, मयित्वं विमुखः,— प्रतिकूलः, असि ?—भवसि ? अत्र बलदेवं प्रति अनादरसूचकवचनात् गुरुव्यतिक्रमः । मन्दाक्रान्ता वृत्तम् ।

## लक्ष्मी

द्रवं लक्षयति—द्रव इति । शोकावेगात् आदिपदेन क्रोधावेगादेश्च सम्भवा गुरोः पूज्यस्य व्यतिक्रान्तिः, आदरलङ्घनं द्रवणं कर्त्तव्याच्च्यवनं द्रवो नामाङ्गम् ।

उदाहरति—यथेति । युधिष्ठिरस्य दुर्योधनानुरागक्रुद्धवलभद्रभर्त्सनमिद्म् ।

अत्र बलरामस्योक्तिरियमित्युक्तिः कस्यचिन्न समीचीना 'युधिष्ठिरः'—इत्युपक्रमे कथनादिति सुधियो विभावयन्तु । भगवन्निति सम्बोधनेनादरप्रदर्शनम् । कृष्णाग्रजेति, सुभद्राभ्रातरिति च द्रयं स्वपक्षानुरागौचित्याय सम्बन्धप्रदर्शनम् । ज्ञातयो वयमिति प्रीतिः प्रणयो मनसि न कृता भवतेति शेषः, एवमग्रेऽपि क्षत्रियाणां धर्मोऽपि मनसि न कृत इत्यर्थः । अयुध्यमांनवधवैमुख्यं हि क्षत्रियाणां धर्मः, वयञ्चायुध्यमानाः । तथा अनुजस्य श्रीकृष्णस्य अर्जुनेन सार्द्धं तत् प्रसिद्धं रूढं बद्धमूलं सख्यमपि न गणितम्, शिष्ययोर्भीमदुर्योधनयोर्विषये भवतः स्नेहबन्धः स्नेहनिबन्धनहृदयाकर्षणं कामं यथेष्टं क्रियाविशेषमिदम्, तुल्यो भवतु वरम् । मन्दभाग्ये मयि त्वं यद्विमुखो भीमं प्रति क्रुद्धत्वादेव प्रतिकूलः असि अयं कः पन्था को मार्गः ? शार्दूलविक्रीडितं छन्दः । अत्र शोकाविष्टचित्तेन युधिष्ठिरेण गुरोर्बलभद्रस्यादरलङ्घनाद्द्रवः ।

दशरूपककारस्तु—द्रवातिरिक्तं विद्रवमपि मन्यन्ते । तथाहि 'विद्रवो वधबन्धादिः' इति तल्लक्षणम् । छलितरामे—

**येनावृत्य मुखानि सामपठतामत्यन्तमायासितं**
**बाल्ये येन हृताक्षसूत्रवलयप्रत्यर्पणैः क्रीडितम् ।**
**युष्माकं हृदयं स एष विशिखैरापूरितांशस्थलो**
**मूर्च्छा घोरतमः प्रवेशविवशो वध्वा लवो नीयते ।। इत्युदाहरन्ति च ।**

## रुचिरा

द्रवं लक्षयति—४२४ द्रव इत्यादिना।

४२४ **शोकावेगादिसंभवा** शोकस्यावेगोऽत्यन्तं वृद्धिः स आदिसम्भव आदिकारणं यस्यास्तथोक्ता। **गुरुव्यतिक्रान्तिर्गुरूणां** व्यतिक्रान्तिर्व्यतिक्रमः। **द्रवः**।। ३९९ ॥

उदाहरति—**यथा**। तत्रैव वेणीसंहारस्य षष्ठाङ्के। **युधिष्ठिरः**। **अस्मद्भागधेयानि** अस्माकं भागधेयानि। **धिक्** (**आकाशम्**। **अवलोकयन्**) हे **भगवन्**! **कृष्णाग्रज**! **सुभद्राभ्रातः** सुभद्राया भ्रातः!

**ज्ञातिप्रीतिः**। **मनसि**। **न**। **कृता**। **क्षत्रियाणाम्**। **धर्मः**। न 'गणित'इति शेषः (युद्धे पक्षपातित्वाभावात्मको**धर्मः**; ज्ञातिप्रीतिश्च यादवानां पाण्डवानां च चन्द्रवंश्यत्वात् प्रेम) **अनुजस्य** कृष्णस्य। **अर्जुनेन**। सहार्थे तृतीया। **सख्यं** मित्रत्वम्। **रूढं** प्रसिद्धम्। 'यदि'ति शेषः। **तदपि**। **न**। **गणितम्**। **शिष्ययो**र्भीमसेनदुर्योधनयोरुभयोरपि कनिष्ठत्वात् गदायुद्धे च शिक्षणीयत्वाद्वा शिष्यभूतयोरिति भावः। स्नेहन्बधः। तुल्यः समानः। कामं यथेष्टम्। **भवतः**। **भवतु** 'न तुविषम'इति शेषः। अथ—**अयम्**। **कः**। **पन्था** मार्गः। **यत्** यतः। **मन्दभाग्ये**। **मयि**। **इत्थं** श्रीकृष्णस्य सन्निधिदूरीकरणेनेति भावः। **विमुखः**। **असि** अत्र हि मायाबिनोर्मुनिवेषधारिणो राक्षसस्य वचसा भीममरणदुर्योधनार्जुनसमरबलदेवकृतकृष्णापनयनजन्यशोकेन युधिष्ठिरस्य बलदेवादरोल्लङ्घनम्। मन्दाक्रान्ता वृत्तम्॥ ३६९ ॥'

**तर्जनोद्वेजने प्रोक्ता द्युतिः—**

यथा तत्रैव दुर्योधनं प्रति भीमेनोक्तम्—

**'जन्मेन्दोर्विमले कुले व्यपदिशस्यद्यापि धत्से गदां,**

**मां दुःशासनकोष्णशोणितमधुक्षीबं रिपुं मन्यसे।**

**दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे,**

**त्रासान्मे नृपशो विहाय समरं पङ्केऽधुना लीयसे॥'**

---

## विवृतिः

तर्जनं भर्त्सनम्। उद्वेजनं भयोत्पादनम्॥ व्यपदिशसि अयुक्तं ख्यापयसि। अत्र भर्त्सनम्। उद्वेजनं यथा—'भो लङ्केश्वर! दीयताम्—' इत्यादि॥

## विज्ञप्रिया

द्युतिरूपाङ्गलक्षणमाह—तर्ज्जनेति। कुमारेणेति। भीमेनेत्यर्थः। क्वचित् कुमारवृकोदरेणेत्येव पाठः। जन्मेति। विमलेन्दोः कुले जन्म व्यपदिशसि। अद्यापि गदां धत्से दधासि। दुःशासनस्य कोष्णेनाऽल्पोष्णेन शोणितमधुना क्षीबं मत्तं मां रिपुं भाषसे। न तु कार्येण प्राणदातारं भाषस इत्यर्थः। मधुकैटभद्विषि श्रीकृष्णेऽपि दर्पान्धः उद्धतं साहङ्कारं चेष्टसे। हे नृपशो! मे मत्तस्त्रासात् समरं विहायाधुना स त्वं कथं पङ्के लीयसे इत्यर्थः। अत्र कथमिति काकुगम्यम्।

## कुसुमप्रतिमा

तर्त्रेति। तर्जनाद्धेजने यस्य कस्यचित् भर्तृसनम् उद्वेगजननं वा द्युतिर्नामाङ्गं प्रोक्ता, शङ्काजनकत्वेन द्योतनं प्रकाशनं द्युतिरिति व्युत्पत्तेः।

जन्मन्दीरिति। विमले निद्दोंष इन्द्राः कुले चन्द्रस्य वंशे जन्म आत्मन उत्पत्तिं व्यदिशासि ब्रवीषि; अद्यापि गदां धत्से दधासि; दुशासनस्य कीष्णेन अल्पोष्णेन, शोणितमधुना रक्तरूपमद्येन चीवं मत्तं मां रिपुं मन्यसे तथा दर्पान्धः अहङ्कारेण कर्त्तृव्याकर्त्तृव्यविमूढः सन्, मधुकैटभाद्विषि मधुकैटभाख्ययीरसुरयोरपि निहन्तरि हरौ कृष्णेऽपि विषये उद्धतं दर्पप्रयुक्तं तथा स्यात्तथां चेष्टसे व्यवहरति बद्धमुद्यतत्वादिति भावः। किन्तु हे नृपशो! मनुष्यरूप-धारिपशो! मे मम वासाङ्ग्यात् समरं विहाय अधुना पङ्केद्वैपायनङ्गदस्य कद्दमे लीयसे लुकायितस्तिष्ठसि। इदन्तु पूर्व पूर्वाचरणवैषम्यादतीव घृणितमाचरणमिति भावः।

अत्र तर्जनादुद्धेजनाच्च द्युतिः।

## लक्ष्मी

द्युतिं लक्षयति—तर्जनेति। यस्य कस्यचित् तर्जनं भर्त्सनम् उद्वेजनं भयोत्पादनं वा सन्देहजनकत्वेन द्योतनं प्रकाशनं द्युतिर्नामाङ्गं प्रोक्ता।

उदाहरति—यथेति। तत्रैव वेण्यामेवेत्यर्थः जन्मेन्दोरिति। विमले दोषरहिते, इन्दोश्चन्द्रस्य कुले वंशे जन्म स्वस्योत्पत्तिं व्यपदिशसि प्रख्यापयसि चन्द्रवंशीयोऽहमिति व्यपदिशसि सङ्ग्रामभयान्निलीनश्च भवसीत्युक्तमित्याशयः। अद्यापि अधुनापि गदाम्, अस्त्र विशेषं धत्से दधासि, दुःशासनस्य कोष्णेन मन्दोष्णेन 'कोष्णं कवोष्णं मन्दोष्णम्' इत्यमरः, शोणितमधुना रुधिररुपमद्येन क्षीबं मत्तं मां वृकोदरं रिपुं शत्रुं मन्यसे न तु कार्येण प्राणदातारं मन्यस इत्यर्थः। शान्तोऽहं कथं योत्स्य अत आह—दर्पान्ध इति। तथा दर्पान्धः गर्वेण कर्त्तव्याकर्त्तव्य-विमूढः सन्, मधुकैटभद्वि, षिमधुकैटभौ तन्नामासुरौ तयोरपि निहन्तरि श्रीकृष्णेऽपि विषये उद्धतम् उच्छृङ्खलं यथा स्यात्तथा चेष्टसे व्यापारं करोषि यो ह्येतादृशबलवन्तं श्रीकृष्णमपि बद्धुमद्यतः स कथं सङ्ग्रामाद्विरतो भवेदिति भावः। किन्तु हे नृपशो! मनुष्येषु पशुतुल्य! मे दुर्योधनस्य त्रासाद्भयात् समरं युद्धं विहाय त्यक्त्वा अधुना पङ्के द्वैपायनह्रदस्य कर्द्दमे लीयसे प्रच्छन्नो भवसि। अत्र कथमिति काकुगम्यम्। इदन्तु पूर्वपूर्वाचरणप्रतिकूलादत्यन्तं घृणितमनुष्ठानमित्यभिप्रायः। शार्द्दूलविक्रीडितं छन्दः। अत्र तर्ज्जनोद्वेजनाभ्यां द्युतिः।

एवं 'भो लङ्केश्वर! दीयतां जनकजा' इत्यत्रापि द्युतिरिति बोध्यम्।

## विमला

द्युतिमाह, तर्ज्जनेति —मर्त्सब्रम्, उड्द्येणनं—भयप्रदर्शनेन उड्द्यगजननञ्च, द्युतिः, प्रीक्ता—कथिता।

उदाहरति, अनेति।—इन्दीः,—चन्द्रस्य, विमले—निर्मले, निर्दोषे इत्यर्थः, कुले जन्म व्यपदिशसि—कथयसि, अयुक्तं ख्यापयसौत्यर्थः, ननु सक्षया भावात् कथं यीत्स्ये? इत्याशड्याह—अद्यापि गदां धत्से—गदासहायस्यान्धसहायापेक्षा नेति भावः, अथवा भावादिवधेन निर्वेदि गदात्याग एवीचितः, स च न त्वया क्वतः, अथवा भावादिवधेन निर्वे गदात्याग एवीचितः, स च न त्वया क्वतः, इत्यतोऽद्यापि युड्यष्ठाड्याऽस्तीति गम्यते इति भावः। मां दुःशासनस्य यत् कोष्णम्—ईषदूष्णं, अत्यग्रहतत्वात् तदानीमिव निःसरदिति यावत्, शोणितं—रुधिरं, तदेव मधु—सुरेति यावत्, तेन— तत्पानेनेत्यथंः, क्षीबः,— मत्तः, सं, रिपुं—शत्रुं, मन्वसे—गणयसि, यहा,—मत्ततयाऽवज्ञायसे इत्यर्थ; तथा दपांन्धः सन्, मधुकेटभहिषि—मधुदेत्य-कैटभदेत्यध्वसिनि, हरौ—कृष्णे, अपि उद्धतं यथा स्यात तथा, चेष्टसे, तस्य बन्धने कृतीद०योगत्वादिति भावः। हे नृपशी!—वृषु—नरेषु, पशुः,—पशुरिव, तयक्रमनुष्यधर्मा, तत्सम्बड्द्यौ तथौक्तः, हिपदपशी इत्यथंः, नराधम इति यावत, में—मम, वासात्— भयात्, समरं—सङ्गमं, विहाय—त्यक्त्वा, अधुना, पङ्के जीयसे—लौनः सन् तिष्ठसि। अत्र तर्ज्जनरूपा द्युतिः। उद्वेजनरूपा यथा,—"भी लङ्केश्वर! दौयताम्" इत्यादि। शार्दूलबिक्रौड़ितं उत्तम्।

## रुचिरा

द्युतिं लक्षयति—४२५ **तर्जनेत्यादिना**। स्पष्टम्।

उदाहरति—**यथा**। **तत्र**। वेणीसंहारे षष्ठेङ्के। **एव**। **'भीमेन**। **दुर्योधनम्**। मध्येसरः शयानमिति शेषः। **प्रति**। **उक्तम्**। यथा—हे **नृपशो** जनाधम! सम्बुद्धौ। **इन्दोः**श्चन्द्रमसः। **विमले** पवित्रे। **कुले**। **जन्म** 'स्वस्ये'ति

शेषः । **व्यपदिशसि** प्रख्यापयसि । **अद्य** 'मरणसूचके'इति शेषः । **अपि** । **गदाम्** । **धत्से** । **दुःशासनकोष्णशोणितमधुक्षीबं** दुःशासनस्य कोष्णमीषदुष्णं यच्छोणितं तदेव मधु तेन तत्पानेन क्षीबो मनस्ता दृशम् । **रिपुम्** । **मन्यसे** । **दर्पान्धः** 'सन्नि'ति शेषः । **मधुकैटभद्विषि** मधुकैटभयोरपि निहन्तरि । **हरौ** कृष्णे । **अपि** । **उद्धतं** प्रागल्भ्यम् । **चेष्टसे** दर्शयितुमिच्छसीति भावः । **मे** मम । **त्रासाद्** भयात् । **समरं** सङ्ग्रामम् । **विहाय** । **अधुना** । **पङ्के** कर्दमे । **लीयसे** । अत्र हि भीमकर्तृकं दुर्योधनस्य तर्जनम् । शार्दूलविक्रीडितं वृत्तम् ॥ ३७० ॥'

उद्वेजनं यथा—'भो लङ्केश्वरः दीयतां जनकजा रामः स्वयं याचते कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किञ्चिद्गतम् । नैवं चेत् खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः ।' इत्यत्र हि रामकृतं रावणस्य ।

**शक्तिः पुनर्भवेत्।**

**विरोधस्य प्रशमनं—**

यथा तत्रैव—

**'कुर्वन्त्वाप्ता हतानां रणशिरसि जना वह्निसाद्देहभारा-**

**नश्रून्मिश्रं कथंचिद्ददतु जलममी बान्धवा बान्धवेभ्यः।**

**मार्गन्तां ज्ञातिदेहान्हतनरगहने खण्डितान्गृध्रकङ्कै-**

**रस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि॥'**

---

## विवृतिः

आप्ता बान्धवाः। गुरोः पित्रादेः कीर्तनम्॥

## विवृतिपूर्तिः

शक्तिरिति। विरोधप्रशमः शक्तिरित्यर्थः।

मार्गन्तामिति। चौरादिकस्य 'मार्ग अन्वेषणे' इति धातोर्लोटि रूपम्॥

हतेति। व्यापादितमनुष्यारण्ये इत्यर्थः॥

कङ्कैरिति। कङ्को नाम लोहपृष्ठापरपर्याय पक्षिविशेषः॥

## विज्ञप्रिया

शक्तिरूपमङ्गमाह—शक्तिरिति। विरोधस्य प्रशमनं समापनकथनमित्यर्थः। कुर्वन्त्वप्ता इति। रणशिरसि हतानां देहभारान्। आप्ता बान्धवाः वह्निसात् कुर्वन्त्वित्यर्थः। तथा अमी बान्धवाः कथञ्चित् अस्रैर्मिश्रं जलं बान्धवेभ्यो ददतु। तथा हतनरगहने गृध्रकाकैः खण्डितान् ज्ञातिदेहान् मार्गन्ताम्। रिपुभिः सहायं भास्वानस्तं प्रयातः, बलानि संह्रियन्तामित्यर्थः।

## कुसुमप्रतिमा

शक्तिरिति। विरोधस्य विवादस्य प्रशमनं निवारणं पुनः शक्तिर्नामाङ्गं भवेत्, शक्तिसाध्यत्वात् शक्तिः, देहमारान् शरीरसमूहान् भस्मसात् कुर्वन्तु; अमी बान्धवः, बान्धवेभ्यः समरनिहतेभ्यो बन्धुभ्यः अक्षुन्मिश्रं नयनत्रलयुक्तं जलं तर्पणवारि कथञ्चिदतिकष्टे न ददतु; तथा गृध्रकङ्कैः पक्षिविशेषैः खण्डितान् खादिसमांसान् ज्ञातीनां देहान्, इतनरगहने निहतमनुष्यदेहस्तूपमध्ये मार्गन्ता दग्धुमन्विष्यन्ताम्। भास्वान् सूर्य्यः रिपुभिः सह अस्तं प्रयातो गतः, अतएव बलानि स्वस्वसैन्यानि संङ्क्रियन्तां सङ्कोच्यन्तां युद्धान्निवर्त्यन्ताम्।

अत्र सैन्यसङ्कोचनोपदेशेन तात्कालिकविरोधप्रशमनात् शक्तिः।

## विमला

शक्तिमाह, शक्तिरिति। —विरीधस्य—विहेषस्य, प्रशमनं पुनः शक्ति भवेत्।

उदाहरति, कुर्वन्त्विति। —आप्ता:,—पूज्या:, मान्धा वा, जना:,—वस्वुजना इति भाव:, रणशिरसि—उड्द्यतरूपेण वर्त्तमाने सङ्गमे इत्यर्थ:, इतानां दिहभारान्—प्ररोरचयान्, भस्मसात्—कात्स्र्नोन बह्निसात, कुर्व्वन्तु—दहन्तु इत्यर्थ:, "वङ्किसाल्" इति पाठान्तरम्। कार्त्सोन बङ्किसात, कुव्वन्तु—दहन्तु इत्यर्थ:, कात्मोंन देये अर्थें सात्प्रत्यय: तथा अभी बन्धवा:, —सपिण्डा:, बान्धवेभ्य:,—सपिण्डेभ्य:, रणहतेभ्य: इति शेष:, अश्रून्धिश्रं—नेवजलमंवलितं, जलं कथञ्चित् ददतु, तथा हतनगहने—हते:, —मारितै:, नरै:,—वीरपुरुषै:, गहने—निविड़े अस्मिन् क्षेवे इति शेष:, गृधै:, कङ्कै:,—पक्षिविशेषैरिति यावत, खण्डितान् ज्ञातिदेहान्— बान्धवशरीराणि, मार्गन्ताम्,—अन्विष्यन्तां, तानि अन्विष्यान्विष्य तेषामन्त्यं संत्कारं यथेष्टं विदधतु इति भाव:, चयं आस्तान्—सूर्य्य:, रिपुभि:,—शत्रुभि:, मन्त्यं संस्कारं यथेष्टं विदधतु इति भाव: भयं भास्वान्—सूर्य्य:, रिपुभि:,—शत्रभि:, सह, अस्तं—चरमाचलं, प्रयात:,—प्राप्त:, (वर्त्तमाने क्तप्रत्यय:) बती बलानि—सैन्धानि, संङ्ग्नियन्तां—निवर्त्त्यत्तम्। यत्र सह रिपुभिरित्युक्त्या अहीक्तिरलङ्कार:, तथा शचूणां निधनेन विरोधशान्तिरिति ध्येयन्। सग्धरा द्वत्तम्।

## लक्ष्मी

शक्ति लक्षयति—शक्तिरिति। विरोधस्य विवादस्य प्रशमनं समापनं पुन: शक्तिसाध्यत्वात् शक्तिर्नामाङ्गं भवेत्।

उदाहरति—यथेति। तत्रैव वेण्यामेव। कुर्वन्त्वाप्ता: इति। आप्ता आत्मीयत्वेन विश्वस्ता जना बान्धवा:, रणशिरसि युद्धक्षेत्रोपरि हतानां जनानां देहभारान् शरीरसङ्घान् वह्निसात् कात्स्र्न्येन वह्निदेयान् कुर्वन्तु 'विभाषा सातिकात्स्र्न्ये' इति पा: सूत्रेण सातिप्रत्यय:, तथा अमी बान्धवा: अश्रून्मिश्रं नेत्रजलमीलितं जलं कथञ्चिदतिक्लेशेन बान्धवेभ्यो युद्धे मृतेभ्यो ददतु 'अदभ्यस्तादि'ति पा० सूत्रेण झस्यात्। तथा गृध्रकङ्कै: मांसभक्षकपक्षिविशेषै: खण्डितान् भक्षितमांसान् ज्ञातिदेहान् बान्धवशरीणानि हतनरा निहतमनुष्यदेहा एव गहनं वनं तस्मिंस्तथोक्ते, मार्गन्तां दग्धं गवेषन्ताम्। अयं भास्वान् सूर्य: रिपुभि: सह अस्तं प्रयात: सूर्यास्तमिव शत्रोरस्तजातमिति भाव:। अत एव बलानि स्वस्वसैन्यानि संहियन्तां सङ्कोच्यन्तां रणात्परावर्त्यन्तामिति यावत्। स्रग्धराच्छन्द:। अत्र सैन्यसङ्कोचपदेशेन तदानीन्तनविरोधप्रशमनात् शक्ति:।

## रुचिरा

शक्ति लक्षयति—४२६ **शक्तिरित्यादिना**।

४२६ **विरोधनस्य. प्रशमनम्। पुन:। शक्ति:। भवेत्।।**

उदाहरति—**यथा। तत्रैव** वेणीसंहारे षष्ठोङ्के। **उभौ** भीमार्जुनौ। 'युधिष्ठिरं प्रत्यूचतु'रिति शेष:। **यथा। आर्य्या:** पूज्य:। **आज्ञापयति** (**पुनस्तदनन्तरमित्यर्थ:। नेपथ्ये**।) आप्ता: सदाचारनिष्ठा:। **जना:। रणशिरसि** सङ्गरस्य मूर्धभागे। **हतानाम्। देहभारान् वह्निसाद**ग्न्यधीनान्। 'तदधीनवचने।'५/४/५४ इति साति:। **कुर्वन्तु। बान्धावा:। बान्धवेभ्य:। अश्रून्मिश्रम**श्रुभिरुन्मिश्रं युक्तम्। **जलम्। कथञ्चित्** 'शोकावेगं निरुध्य'ति शेष:। **ददतु** तद्दानं रणशिरसीति पूर्वतोऽनुवृत्तम्। **कङ्कगृध्रै:** कङ्कै: गृध्रैश्च। **हतनरगहने। खण्डितान्** चञ्चुभिर्विदार्य्य विकृतिं नीतानिति भाव:। **ज्ञातिदेहान्। मार्गन्ता**मनुसन्दधतु। **अयम्। भास्वान्** सूर्य:। **रिपुभि:। सह। अस्तम्। प्रयात:।** अतो **बलानि** सैन्यानि। **संह्रियन्ताम्**। अत्र विरोधशमनाभिधानं नाटकाङ्गम्। स्रग्धरावृत्तम्॥ ३७१॥'

**प्रसङ्गो गुरुकीर्तनम् ॥ १०४ ॥**

यथा मृच्छकटिकायाम्—'चाण्डालः—एसो क्खु सागलदत्तस्स' सुओ अज्जविस्सदत्तस्स णत्तिओ चालुदत्तो वावादितुं वज्झट्ठाणं णिज्जइ। एदेण किल गणिआ वसन्तसेणा सुअण्णलोहेण वावादिदत्ति।

चारुदत्तः—

**मखशतपरिपूतं गोत्रमुद्भासितं**

**यत्सदसि निबिडचैत्यब्रह्मघोषैः पुरस्तात्।**

**मम निधनदशायां वर्तमानस्य पापै-**

**स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ॥'**

इत्यनेन चारुदत्तवधाभ्युदयानुकूलप्रसङ्गाद् गुरुकीर्तनमिति प्रसङ्गः।

---

## विवृतिः

'एष खलु सागरदत्तस्य सुत आर्यविश्वदत्तस्य नप्ता चारुदत्तो व्यापादयितुं वध्यस्थानं नीयते। एतेन किल गणिका वसन्तसेना सुवर्णलोभेन व्यापादितेति।' इति संस्कृतम् ॥ निबिडं सामाजिकैर्व्याप्तं चैत्यमायतनं येषां तैर्ब्रह्मघोषैर्वेदपाठकैः। असदृशेति। अयोग्येत्यर्थः। घोषणायामंपवादवाद्यध्वनौ ॥

## विवृतिपूर्तिः

प्रसङ्ग इति। नाट्यशास्त्रे तु 'प्रसङ्गश्चैव विज्ञेयो वाक्यैरामर्षयोजितैः' इत्युक्तम् ॥

## विज्ञप्रिया

प्रसङ्गरूपाङ्गमाह—प्रसङ्ग इति। चाण्डालक इति। हन्तुं नीयमानं चारुदत्तं दृष्ट्वा चाण्डालक आह इत्यर्थः। एष इति। एष सागरदत्तस्य सुत आर्यविश्वदत्तस्य नप्ता चारुदत्तः व्यापादयितुं वध्यस्थानं नीयते। एतेन किल गणिका वसन्तसेना सुवर्णलोभेन व्यापादितेति (संस्कृतम्)। एतच्छ्रुत्वा चारुदत्तः स्वीकयप्रशस्तकुलकीर्त्तनात् लज्जया आह—मखशतेति। यन्मम गोत्रं परिपूतं तथा पुरस्तात् पूर्वकाले निबिडैश्चैत्यैरुद्भटैर्ब्राह्मघोषैः सदसि उद्भाषितं सभायामुच्चैः स्वरेण ब्राह्मणैः प्रशस्तमित्यर्थः। निधनदशायां वर्त्तमानस्य मम तद्गोत्रं पापैः चारुदत्तस्य वधरूपो यो घातकानामभ्युदयस्तदनुकूल इत्यर्थः। तत्कुलघातकस्यैव घातकानाम् इष्टत्वात् गुरुकीर्त्तनम्। वध्यस्य पितृपितामहादिकीर्त्तनम्।

## कुसुमप्रतिमा

प्रसङ्ग इति । गुरोः पित्रादिगुरुजनस्य कीर्त्तनं विषयविशेषस्यातिशयकीर्त्तनं वा प्रसङ्गी नामाङ्गम्, प्रसङ्गेन सञ्चात्वात् ।

यथेति । मृच्छकटिकायां मृच्छकटिकावृत्तान्तसम्बद्धदृश्यकाव्ये मृच्छकटिकनामकप्रकरणे इत्यर्थः । "एष खलु सागरदत्तस्य सुतः आर्य्यविश्वदत्तस्य नप्ता चारुदत्तो व्यापादयितुं नीयते; एतेन किल गणिका वसन्तसेना सुवर्णलोभेन व्यापादिता । इति संस्कृतानुवादः ।

मस्वेति । मखशतैर्बहुतरयज्ञानुष्ठानैः यदस्माकं गोत्रं वंशः, निविड़े वेदज्ञजनाकीर्णे चैत्ये आयतने ब्रह्मघोषैर्वे दपाठध्वमिभिः पुरस्तात् पूर्वम् उद्भासितं यशोभिः प्रकाशितम् आसीत्, निधनदशायां मरणावस्थायां वत्त मानस्य मम तद्गोत्रम्, असदृशमनुष्यैर्मङ्गीत्रघोषणायोग्यवजनैश्चाण्डालैः कर्तृभिः पापैः पापवृत्तान्तैः "सुवर्णलोभेन गणिका व्यापादिता" इति कुत्सितवृत्तान्तैरित्यर्थः घोषणायां घोषणास्थाने घष्यते उच्चैः प्रख्यायते । इदमतीवदुःखकरमिति भावः ।

लक्ष्ये लक्षणं सङ्गमयितुमाह इतीति । अनेन गद्यांशेन पद्येन च, चारुदत्तस्य वधाभ्युदशययीरनुकूलप्रसङ्गात् वधप्रसङ्गेन "एसो क्खु" इत्यादि गद्यांशकीर्त्तनात् आत्मनिद्दोंषत्वसूचनाय गोत्रनिद्दोंषत्वरूपाभ्यु दयप्रकाशप्रसङ्गेन मखशतेत्यादिकीर्त्तनाच्चेत्यर्थः, गद्यांशे गुर्वीः पितृपितामहयोः पद्ये तु गोत्रपदेनैव गुरूणां पित्रादीनां कीर्त्तनम् इति हेतोः प्रसङ्गो नामाङ्गम् ।

## विमला

प्रसङ्गमाह, प्रसङ्ग इति ।—गुरु—अत्यर्थन, अमर्षप्रयुक्ततयीङ्घतमिति यावत्, कौर्तनं—दीषादिख्यापनं, प्रसङ्गः । अत एवोक्तं नाट्यशास्त्रकारैः,—प्रसङ्गं श्रैव विज्ञेयो काव्यैरामर्षयीजितैः" इति ।

यथेति ।—("एष खलु सागरदत्तस्य सुत आर्य्यविश्वदत्तस्य नप्ता चारुदत्तो व्यापादयितुं बध्यस्थानं नोयते । एतेन किल गणिक्ता वसन्तसेना सुवर्णलोभेन व्यापादिता" इति संस्कृतम्) नप्ता—पौत्रः । स्पष्टमन्यत् ।

उदहरति, मखेति ।— मखानां—यज्ञानां, (सप्ततन्तुर्मखः क्रतुः" इत्यमरः) शतैः,—शतशोऽनुष्ठानैरित्यर्थः, परिपूतं—विशुद्द्यं, यत् गीत्रं—मदोयं कुलं, पुरस्तात्—पूर्वं, सदसि—सभायां, निविड़ाकन—लोकैः आकीर्णनि, यानि चैत्यानि—पूजाद्यायतनस्थानानि ("चैत्यमायतनं तुल्ये" इत्यमरः) तेषु ये ब्रह्मघीषाः,— वेदवादाः, वेदपाठज्ञाः वा तैः, उद्भासितं—समुज्ज्वलीक्वतम् इत्यर्थः, आसौदिति शेषः, (इदानीं) निधनदशायां—मृत्युदशायां, वर्त्तमानस्य—बध्यस्थानं प्रति नीयमानस्य, तथा कलङ्कितस्येति यावत्, मम तत्—गोत्रं, यापैः,— नीचैः, असदृशमनुष्यैः,—स्पर्शमात्रस्याप्यनर्हौरिति यावत्, घोषणायाम्—उपवादवाद्यध्वनौ, घुष्यते—विख्याम्यत्ते, किमतःपरमक्षिपकरम् ? इति भावः । मालिनौ वृत्तम् ।

## लक्ष्मी

प्रसङ्गं लक्ष्यति—प्रसङ्ग इति । गुरोः पित्रादिगुरुजनस्य, पूज्यस्येति यावत्, कीर्त्तनं विषयविशेषस्यातिशयसंशब्दनं प्रसङ्गेन सञ्जाततवात् प्रसङ्गो नामाङ्गं भवतीति शेषः ।

उदाहरति—यथेति । मृच्छकटिकायां मृच्छकटिकोदन्तसम्बद्धदृश्यकाव्ये मृच्छकटिकसंज्ञकप्रकरण इत्यर्थः । चाण्डालक इति । हन्तुं नीयमानं चारुदत्तं दृष्ट्वा चाण्डालक आह इत्यर्थः । 'एषु खलु सागरदत्तस्य सुतः आर्यविश्वदत्तस्य नप्ता चारुदत्तो व्यापादयितुं नीयते । एतेन किल गणिका वसन्तसेना सुवर्णलोभेन व्यापादिता' इति संस्कृतम् । व्यापादयितुं मारयितुम् ।

एतच्छ्रुत्वा चारुदत्तः स्वीयप्रशस्तकुलकीर्तनात् लज्जया आह—मखशतेति । यदस्माकं गोत्रं कुलं मखशतैर्बहुतरयज्ञानुष्ठानैः परिपूतं पवित्रम् तथा निविडे वैदिकजनव्याप्ते चैत्ये गृहे उद्भटैर्ब्रह्मघोषैः वेदपाठध्वनिभिः पुरस्तात् पूर्वकाले सदसि उद्भासितं सभाया उच्चैः स्वरेण ब्राह्मणद्वारा यशोभिः प्रशस्तम् आसीत् निधनदशायां मरणावस्थायां वर्त्तमानस्य विद्यमानस्य मम तद्गोत्रम् असदृशमनुष्यैः मद्गोत्रघोषणाधिकारिजनैश्चाण्डालः (कर्तृभिः) पापैः पापोदन्तैः 'सुवर्णलोभेन गणिका व्यापादिता' इति गर्हितोदन्तैरित्यर्थः, घोषणायाम् अपवादवाद्यध्वनौ घुष्यते तारस्वरेण, प्रख्याप्यते इदञ्चातीव क्लेशजनकमिति भावः । मालिनीच्छन्दः ।

लक्ष्ये लक्षणं सङ्गमयितुमाह-इतीति । अनेन गद्यभागेन पद्येन च चारुदत्तस्य यो घातकानामभ्युदयस्तदनुकूलप्रसङ्गात् वधप्रसङ्गेन 'एसो क्खु' इत्यादि गद्यभागकथनात् स्वनिरपराधत्वद्योतनया गोत्रनिष्कलङ्कत्वरूपाभ्युदयसूचनाप्रसङ्गेन 'मखशत' इति पद्यकथनाच्चेत्यर्थः । गुरकीर्तनमिति । गद्यभागे गुर्वोः पितृपितामहयोः पद्ये तु गोत्रपदेनैव गुरूणां पितृपितामहादीनां कीर्त्तनं कथनमतः प्रसङ्गो नामाङ्गम् । केचिदप्रस्तुतार्थवचनं प्रसङ्गमिच्छन्ति । यथा वेणीसंहारे षष्ठेऽङ्के—'युधिष्ठिरः—(द्रौपदीं प्रति)

**स कीचकनिषूदनो बकहिडिम्बकिर्मीरहा मदान्धमगधाधिपद्विरदसन्धिभेदाशनिः ।**
**गदापरिघशोभिना भुजयुगेन तेनान्वितः प्रियस्तव ममानुजोऽर्जुनगुरुर्गतोऽस्तं किल !।।**

अत्र मायया तपस्विना राक्षसेन व्यलीकभीमवधकथनात् युधिष्ठिरस्याप्रस्तुतः शोकः प्रसङ्गः ।

## रुचिरा

प्रसङ्गं लक्षयति—४२७ प्रसङ्ग इत्यादिना ।

४२७ गुरुकीर्तनं गुरूणां पित्रादीनां कीर्तनम् । प्रसङ्गः ॥ ४०० ॥

उदाहरति—**यथा । मृच्छकटिके** शूद्रकविरचितप्रकरणविशेषे । '**उभौ द्वौ चाण्डालौ । अज्जा** आर्य्याः ! **सुणाध** २ शृणुत २ **एसो** एषः । **क्खु** खलु । **सागलदत्तस्य** सागरदत्तस्य । **सुदो** सुतः । **अज्जविस्सुदत्तस्स** आर्यविश्वदत्तस्य **णत्तिओ** नप्ता । **चालुदत्तो** चारुदत्तः । **वावादितुं** व्यापादयितुम् । **णिज्जइ** नीयते । **एदेण** एतेन । **अकज्जकालिणा** अकार्यकारिणा । **किल । वसंतसेणा** वसन्तसेना **गणिआ** गणिका । **सुअण्मलोहेण** सुवर्णलोभेन । **वावादिता** व्यापादिता । **चारुदत्तः (सनिर्वेदनम् स्वगम्)** यत्—**निबिडचैत्यब्रह्मघोषैः** निबिडानि सभ्यंजनैर्व्याप्तानि यानि चैत्यानि पूजाद्यायतनानि तेषु ब्रह्मघोषाः ब्रह्मणां वेदानां वा घोषा अन्योन्यं विचारहेतुका वादास्तैः । **सदसि** सभायाम् । **पुरस्तात्** । **उद्भासितम्** । **मखशतपरिपूतं** मखानां यज्ञानां शतं तेन परिपूतं परितः पवित्रम् ।

**असदृशमनुष्यैः** असदृशा ये मनुष्यास्तैः। **पापैः** पापप्रधानै 'श्चण्डालै'रिति भावः। **निधनदशायां**-निधनं मरणं तस्य तशाऽवस्था तस्याम्। **वर्तमानस्य**। **मम**। **तत्**। **गोत्रम्**। **घोषणायाम्**। **घुष्यते**। मालिनीच्छन्दः ॥ ३७२ ॥'

कथमुदाहरणसङ्गतिरित्याह—**इत्यनेनेत्यादिना**।

**चारुदत्तवधाभ्युदयानुकूलप्रसङ्गा**च्चारुदत्तस्य वधः स एवाभ्युदयस्तस्यानुकूलप्रसङ्गस्तस्मात्तमधिकृत्येति भावः। ल्यबर्थे पञ्चमी। **गुरुकीर्तनं** गुरूणां नामघोषणम्। **इत्यत** इत्यर्थः। **प्रसङ्ग**स्तदाख्यं विमर्शाङ्गमिति भावः।

**मनश्चेष्टासमुत्पन्नः श्रमः खेद इति स्मृतः ।**

मनः समुत्पन्नो यथा मालतीमाधवे—

**'दलति हृदयं गाढोद्वेगो, द्विग्वधा न तु भिद्यते**

**वहति विकलः कायो मोहं, न मुञ्चति चेतनाम् ।**

**ज्वलयति तनूमन्तर्दाहः, करोति न भस्मसा-**

**त्प्रहरति विधिर्मर्मच्छेदी, न कृन्तति जीवितम् ॥'**

**एवं चेष्टासमुत्पन्नोऽपि ।**

---

## विवृतिः

मनसा चेष्टया च समुत्पन्नः ॥ दलति स्फुटति ।

## विवृतिपूर्तिः

ज्वलयतीति । ज्वलयति उद्दीपयति ॥

## विज्ञप्रिया

खेदरूपमङ्गमाह—मनश्चेष्टेति । दलतीति । कपालकुण्डलापहृतमालतीशोकात् माधवस्योक्तिरियम् । न विदीर्यते न तु द्विखण्डं भवतीत्यर्थः । विकलः कायो मोहं वहतीत्यन्वयः । न कृन्तति न छिनत्ति । एवं चेष्टेति ।

**स्रस्तांशावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-**

**दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।**

**बद्धं कर्णशिरीषरोधिवदने घर्माम्भसां जालकम्**

**बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्द्धजाः ॥**

इति घटोत्क्षेपणचेष्टया शकुन्तलायाः श्रमः ।

## कुसुमप्रतिमा

मन इति । मनसा शोकादिमानसिकव्यापारेण चेष्टया युद्धादिदैहिकव्यापारेण वा समुत्पन्नः श्रम आयासः खेद इति नाम्ना अङ्गं स्मृतः स्वद्यते अनेनेति व्युत्पत्तेः ।

दलतीति । गाढद्वेगो दृढ़तर प्रियाविच्छेददुखावेगः हृदयं दलति, तु किन्तु द्विधा न भिद्यते तेन गाढ़ीद्वेगेन न विदार्य्यते । विकलः शोकविह्वलः कायो देहः मोहं मूर्च्छा वहति भजते, किन्तु चेतनां चैतन्वं न मुञ्चति न परित्यजति । अन्तर्दाहः अन्त करणशोकसन्तापः तनूं शरीरं ज्वलयति किन्तु सम्पूर्णतो भस्मसात् न करोति । तथा

**ईप्सितार्थप्रतीघातः प्रतिषेध इतीर्यते ॥ १०५ ॥**

यथा मम प्रभावत्यां विदूषकं प्रति प्रद्युम्नः—'सखे, कथमिह त्वमेकाकी वर्तसे। क्व नु पुनः प्रियसखीजनानुगम्यमाना प्रियतमा मे प्रभावती। विदूषकः—असुरवइणा आआरिअ कहिं वि णीदा।

प्रद्युम्नः—(दीर्घ निःश्वस्य।)

**हा पूर्णचन्द्रमुखि ! मत्तचकोरनेत्रे !**

**मामानताङ्गि ! परिहाय कुतो गतासि।**

**गच्छ त्वमद्य ननु जीवित ! तूर्णमेव**

**दैवं कदर्थनपरं कृतकृत्यमस्तु ॥'**

---

## विवृतिः

'असुरपतिना आकार्य कुत्रापि नीता।' इति संस्कृतम्। आकार्य आहूय। 'हूतिराकारणाह्वानम्' इत्यमरः। कार्यात्ययस्य उपगमनं ज्ञापनम् ॥

## विवृतिपूर्तिः

प्रतीघात इति। 'प्रतीघातः' इत्यत्र 'उपसर्गस्य धञ्मनुष्ये बहुलम्' इति सूत्रेण घञन्ते घातशब्दे परे प्रतेर्दीर्घः।

## विज्ञप्रिया

प्रतिषेधरूपमङ्गमाह—ईप्सितेति। असुरवइणेति—असुरपतिना आकृष्य कुत्रापि नीता इति संस्कृतम्। हा पूर्णचन्द्र इति पूर्वार्धे प्रियां सम्बोध्य शोचित्वापरार्द्धे जीवितं सम्बोध्य आह गच्छ त्वमद्येति। तत्र एव कदर्थनपरं दैवं कृतकृत्यमस्तु इत्यर्थः। अत्रेप्सितस्य प्रभावतसिमागमस्य प्रतिघातः।

## कुसुमप्रतिमा

ईप्मतेति। ईस्मितार्थस्य अभिलषितविषयस्य प्रतीघातः प्राप्तिप्रतिबन्धः प्रतिषेध इति नाम्ना अङ्गमिष्यते। प्रतिषेधो बाध इति नार्थान्तरम्।

ईप्सतेति। ईप्सितार्थ-स्व अभिलषितविषयस्य प्रतीघातः प्राप्तिप्रतिबन्धः प्रतिषेध इति नाम्ना अङ्गमिष्यते। प्रतिषेधो बाध इति नार्थान्तरम्।

यथेति। "असुरपतिना आकार्य्य कस्मिन्नपि नीता।" इति संस्कृतानुवादः। आकार्य्य आहूय।

हा पूर्णेति। हा पूर्णचन्द्रमुखि ! हा मत्तवक्रीरनेत्रे ! हा आनताङ्गि ! स्तनभारेण अवगतदेहे ! मां परिहाय त्वं कुतः कुत्र गतासि। ननु जीवित ! हे जीवन ! तूणमेव त्वमद्य गच्छ। तथा च सति कदर्थनपरं दुःखदानपरायणं दैवं कृतकृत्यमस्तु।

अत्र ईप्सितायाः प्रभावत्याः प्राप्तिप्रतिबन्धात् प्रतिषेधः।

## विमला

प्रतिषेधमाह, ईप्तितार्थेति।—ईप्सितार्थस्य—अभीष्टविषयस्य, प्रतीधातः प्रतिषेध इति दूष्यते।

प्रतिषेधमाह, ईप्सितार्थेति।—ईप्सितार्थस्य—अभीष्टविषयस्य, प्रतीघातः प्रतिषेध इति इष्यते।

असुरवइणा इति।—["असुरपतिना आकार्य्य कुत्रापि नीता" इति संस्कृतम्]। आकार्य्य—आहूय, ("इतिराकारणाह्वानम्" इत्यमरः)।

हा इति।—हा—इति खेदे, पूर्णचन्द्रमुखि !—पूर्णचन्द्र इव मुखं यस्यास्तत्सम्बुद्धौ तथोकते ! मत्तचकोरनेत्रे !—मत्तौ चकीरौ, यद्वा,—मत्तचकोरस्य इव नेत्रे यस्यास्तत्सम्बोधने; आनताङ्गि !—आनतानि—पयोधरभरक्लान्तानि, अङ्गानि यस्यास्तत्सम्बुद्धौ, मां परिहाय—त्यक्त्वा, कुतः गताऽसि ?—गता त्वम् ? नतु जीवित ! त्वम् अद्य तूर्णं—शीघ्रम्, एव गच्छ, कदर्थनपरं—क्लेशदानतत्परं, दैवं—विधि, कृतकृत्यं—कृतार्थम्, अस्तु—भवतु। अत्र ईप्सितस्य प्रतीघातः। वसन्ततिलकवृत्तम्।

## लक्ष्मी

प्रतिषेधं लक्षयति—इप्सितार्थेति। ईप्सितार्थस्य अभिलषितविषयस्य प्रतीघातः प्राप्तिप्रतिबन्धः प्रतिपूर्वकाद्धन्तेर्घञि 'उपसर्गस्य घञ् मनुष्ये बहुलम्' इत्यनेन व्यञ्न्ते घातशब्दे परे प्रतेर्दीघः, प्रतषेध इति नाम्नाङ्गम् इष्यते आलङ्कारिकैरिति शेषः। प्रतिषेधो बाध इति नार्थान्तरम्।

उदाहरति—यथेति। 'असुरपतिना आकार्य कुत्रापि नीता' इति संस्कृतम् आकार्य आहूयेत्यर्थः। 'हूतिराकरणाह्वानम्' इत्यमरः।

हा पूर्णचन्द्रेति। हा पूर्णचन्द्रमुखि ! पूर्णचन्द्रस्य मुखमिव मुखं यस्याः तत्सम्बुद्धौ शशिवदनीत्यर्थः' हा मत्तचकोरनेत्रे ! मत्तो यश्चकोरश्चक्रवाकस्तस्य नेत्रे लोचने इव नेत्रे यस्यास्तसम्बुद्धौ, हा आनताङ्गि ! कुचभारेण अवनतदेहे ! मां प्रद्युम्नं विहाय त्यक्त्वा कुतः कुत्र गतासि, एवं पूर्वार्द्धेन प्रियां सम्बोध्य शोचित्वा उत्तरार्द्धेन जीवितं सम्बोध्य आह—गच्छ त्वमद्येति। ननु जीवित हे प्राण ! तूर्णमेव त्वरितमेव त्वमद्य गच्छ व्रज, एवं च सति कदर्थनपरं दुःखदानतत्परं दैवं कृतकृत्यमस्तु। वसन्ततिलकाच्छन्दः। अत्रेप्सितस्य प्रभावतीसमागमप्रतिबन्धस्य सत्त्वात्प्रतिषेधः।

## रुचिरा

प्रतिषेधं लक्षयति—४२९ **ईप्सितार्थे**त्यादिना।

४२९ **ईप्सितार्थप्रतीघातः** ईप्सित आकाङ्क्षितो योऽर्थो वस्तु तस्य प्रतीघातो विघातः। 'उपसर्गस्यघञ्‌मनुष्येबहुलम्। ६/३/१२२ 'इति प्रतेरिको दीर्घत्वम्। **प्रतिषेधः। इति। ईरितः** कथितः ॥ ४०१ ॥

मर्म्मच्छेदौ हृदयबिदारी विधिर्दैव प्रहरति ताड़यति, किन्तु जीवितं न कृन्तति छिनत्ति न विनाशयतीत्यर्थः। अयं श्लोको मालतीमाधवे उत्तररामचरिते च रामेण पठितः।

अत्र प्रियाविच्छेददुःखावेगेन वक्तुः क्रमात् खेदः।

एवमिति। एवमूह्य इत्यर्थः। यथा मम वङ्गीयप्रतापनाटके—

**"आशीविषस्य विषदन्तक्षये विनष्टे गात्राणि जर्जरयते वत कुर्क्कुरोऽपि।**

**सिंहस्य दैववशती विशतश्च जालम् आकर्षति स्फुटजटां हरिणोऽपि श्रृङ्गैः॥"**

अत्र वक्तुर्दुर्जनसिंहस्य युद्धश्रमात् खेदः।

## विमला

खेदमाइ, मन इति।—मनसा, चेष्टया वा, समुत्पन्नः,—जातः, अमः खेदः इति स्मृतः।

उदृहरति, दलतीति।—मम हृदयं गाढ़ीडेगं—गुरुपीडम, अत एव दलति—खयं दलितं भवति, न तु द्विधा भिद्यते—हिखण्डं नैव भवतीत्यर्थः; विकलः, अवशः, कायः, शरीरमिति यावत्, मीहं—मूर्च्छां, वहति, चेतनां न मुञ्चति—न त्यजति; अन्तर्दाहः,—अभ्यन्तरे वर्त्तमानः शीकाग्निरित्यर्थ, तनू—शरीरं, ज्वलयति—उद्दीपयति, भस्मसात् न करोति; मर्मच्छेदीविधिः प्रहरति, जीवितं न क्वन्तति— न नाशयति। अत्र विरोधाभासालङ्कारः। उत्तरचरितेऽपि श्लोकोऽयं सीताशोकसन्तप्रचेतसो रामस्याक्रौ दृश्यते। हरिणौ वृत्तम्।

## लक्ष्मी

खेदं लक्षयति—मनश्चेष्टेति। मनसा शोकादिमानसिकव्यापारेण चेष्टायां शरीरिकव्यापारेण वा समुत्पन्नः श्रमः परिश्रमः खिद्यतेऽनेनेति खेद इति नाम्नाङ्ग स्मृतः।

तत्राद्यमुदाहर्त्तुमाह—मनः समुत्पन्न इति। दलतीति। कपालकुण्डलापहृतमालतीशोकात् माधवस्योक्तिरियम्। गाढोद्वेगो दृढतरः प्रियाविरहक्लेशावेगः हृदयं दलति स्फुटति तु किन्तु द्विधा द्विखण्डं न भिद्यते तेन गाढो द्वेगेन न विदीर्यते। विकलः शोकाकुलः कायः शरीरं मोहं मूर्च्छों वहति प्राप्नोति, किन्तु चेतनां चैतन्यं न मुञ्चति न त्यजति। अन्तर्द्दाहः अन्तःकरणशोकसन्तापः तनुं देहं ज्वलयति किन्तु समग्रतः भस्मसात् वह्नयधीनं न करोति न विदधाति, तथा मर्म्मच्छेदी मर्म्मनिकृन्तनो विधिर्नियतिः 'विधिविधाने दैवे च भाग्यं स्त्री नियतिर्विधिः' इत्यमरः, प्रहरति ताडयति, किन्तु जीवितं प्राणं न कृन्तति न छिनत्ति नोत्क्रामयतीत्यर्थः। हरिणीछन्दः। अयं चोत्तररामचरिते रामेणापि पठितः। अत्र प्रियाविरहक्लेशावेगेन माधवस्य श्रमात् खेदः।

एवमिति। चेष्टासमुत्पन्नेऽपि ऊह्य इत्यर्थः। तद्यथा शाकुन्तले प्रथमेऽङ्के राजा—

**स्रस्तांशावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा—**

**दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः।**

**बद्धं कर्णशिरीषरोधिवदने धर्माम्भसा जालकं**

**बन्धे स्त्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजः॥**

अत्र शकुन्तलाया घटोत्क्षेपणचेष्टया श्रमः।

## रुचिरा

खेदं लक्षयति—४२८ **मनश्चेष्टे**त्यादिना ।

३२८ **मनश्चेष्टासमुत्पन्नः** मानसिकः शारीरिकश्च । **श्रमः । खेदः । इति । स्मृतः** । स्पष्टो भावः ।

उदाहरति—**मनः समुत्पन्न** इत्यादिना ।

**यथा । मनः समुत्पन्न** 'खेद' इति शेषः । '**मालतीमाधवे** नवमेऽङ्के । '**गाढोद्वेगं** गाढ उद्वेगो यत्र तादृशम् । **हृदयम् । दलति** विदीर्यते इति भावः । **नतु । द्विधा । भिद्यते** । यदि द्विधा दलितमभविष्यत्तदा गाढोद्वेगमप्येतन्ना-भविष्यदिति भावः । **कायः** शरीरम् । **विकलः** कर्तव्यताशून्यः सन्निति भावः । **मोहम् । वहति । चेतनां** जीवित-त्वम् । **न । मुञ्चति । अन्तर्दाहो**ऽन्तर्नतु वहिः अतएवासावचिकित्स्यो दाहः । **तनुं** शरीरम् । **ज्वलयति** सन्तापयति । **भस्मसात्** कात्स्न्र्येन भस्मरूपम् । **न । करोति । मर्मच्छेदी** मर्माणि च्छिनत्तीति तथोक्तः । **विधिर्दैवम् । प्रहरति । जीवितम् । न । कृन्तति** च्छिन्ति । अत्र यद्दलति तस्य द्विधाभवनं युक्तं नच तद्भवतीत्येवं विरोधः, किन्तु शोकादिना हृदयादेर्वस्तुतो दलनाद्यसम्भवात्तथा तर्कणमात्रमिति तस्याभासः । मालतीमनुपलभ्यान्तः खिद्यतो माधवस्य मकरन्दं सम्बोध्य आवेगोद्भावनमिदम् । अत एवात्र मालत्या अलाभे खिन्नस्य माधवमनसः श्रमः । हरिणीप्लुतं छन्दः ॥ ३७३ ॥'

चेष्टासमुत्पन्नः खेदस्त्वन्वेषणीय इत्याह—**एवमित्यादिना** । स्पष्टम् । स यथा वेणीसंहारे षष्ठाङ्के—'अरे रे मारुते ! किं भयेन प्रलीनं दुर्योधनं मन्यते भवान् मूढ ! अनिहतपाण्डुपुत्रः प्रकाशं लज्जमानो विश्रमितुमध्यवसि-तवानस्मि पातालम्' इत्यत्र दुर्योधनस्य ।

## विमला

विरोधनमाह, कार्य्येति ।—कार्य्यस्य अत्ययः,—ध्वंसः, तस्य उपगमनं—प्राप्तिः, ज्ञापनम् इति यावत्, विरोधनमिति स्मृतम् ।

उदाहरति, तीर्णे इति ।—भीष्म एव महोदधिः,—महासमुद्रः, [महार्णव इति पाठान्तरम्] तस्मिन्, तीर्णे—गतपारे सति, परास्तै इति भावः, द्रोण एव अनलः तस्मिन् कथमपि—केनापि रूपेण, निर्वृते—निर्वाणतां नीते, (स्वयमस्त्र त्यागेन शान्ते, न तु जयादिना, अत एव "कथमपि" इत्युक्तम्) कर्ण एव आशीविषभोगौ—आश्यां—दंष्ट्रायां, विषं—हालाहलं, यत्र तादृशः, भोगः,—देहः विद्यते यस्य, सविषदन्तपन्नगः इति यावत्, ("भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः) तस्मिन् प्रशमिते—प्रकर्षेण शान्तिं नीते, हते इति भावः, शल्ये च दिवं—स्वर्गं, याते, युद्ध्य निधनादिति भावः, इत्थं जये अल्पावशेषे—केवलं दुर्य्योधनवधमात्रावशिष्टे इत्यर्थः, प्रियसाहसेन—अतिसाहसवता, भीमेन रभसात्—वेगात्, वाचा—"अद्येव यदि दुर्य्योदनं न हन्मि तदाऽग्निं प्रवेक्ष्यामि" इत्येवंरूपेण वाक्यनेति भावः, सर्वे अमी वयं जीवितसंशयं—जीवनं स्थास्यति न वा एवं सन्देहं, मरणसम्भावनामिति यावत्, समारोपिताः,—गमिताः । तत्प्रतिज्ञाश्रवणेन अदर्शनं गतस्य दुर्य्योधनस्यादर्शने युद्धा-भावेन भीमस्यग्निप्रवेशे अस्माभिरपि मर्त्तव्यमिति भावः । शार्दूलविक्रीड़ितं वृत्तम् ।

## लक्ष्मी

विरोधं लक्षयति—कार्यात्ययेति । कार्ये कर्त्तव्ये अत्ययोपगमनं विघ्नप्राप्तिः विरोधनं नामाङ्गं स्मृतम् ।

उदाहरति—यथेति । तीर्णे इति । सनिर्विण्णयुधिष्ठिरस्योक्तिरियम् । भीष्मो गाङ्गेय एव महोदधिः सागरस्तस्मिस्तथोक्ते तीर्णे उत्तीर्णे शरशय्यां प्रापित इत्यर्थः । द्रोण एव अनलो वह्निस्तस्मिस्तथोक्ते कथमपि 'अश्वत्थामा हत इति' व्याजोक्तिद्वारा शस्त्रत्यागेन निर्वृते निर्वाणतां गते स्वर्गं प्राप्ते सतीत्यर्थः । कर्णो राधेय एव आशीविषभोगी विषोद्गारी सर्पः तस्मिंस्तथोक्ते 'आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति' इति । आशीविष इत्यत्र पृषोदरादित्वाद्दीर्घसलोपौ । केचित्त्वीकारान्तमाशीशब्दं मन्यन्ते, तथा च राजशेखरः—'आशीमिव कला-मिन्दोः' इति । प्रशमिते वधेन शान्तिं प्रापिते तथा शल्यो मद्रराज एव शल्यं तस्मिंश्च दिवं स्वर्गं याते गते च सति अत एव जये अल्पावशेषे सति प्रियं साहसो यस्य स तेन तथोक्तेन भीमेनेत्यर्थः, रभसात् वेगात् 'रभसो वेगहर्षयो'रिति विश्वः, वाचा अस्माकं मध्ये येन साकं तुभ्यं रोचते तेनैव साकं युध्यस्व इति वचनेन अमी सर्वे वयं पाण्डवाः जीवितसंशयं प्राणसन्देहं यथा स्यात्तथा समारोपिताः प्रापिताः । अद्य दुर्योधनं हनिष्यामीति भीमकृताया प्रतिज्ञाया विफले अहनने स्वयं प्राणांस्त्यक्ष्यामीति अपरप्रतिज्ञां सफलयितुं नूनं भीमः प्राणांस्त्यक्ष्यतीति तथा च तदनु वयमपि सर्वे प्राणांस्त्यक्ष्याम इत्याशयः । शादर्दूलविक्रीडितं छन्दः । अत्र युद्धविजयरूपकार्ये भीमवचनेन विघ्नप्राप्तेर्विरोधनम् ।

## रुचिरा

विरोधनं लक्षयति—४३० **कार्यात्ययेत्यादिना** ।

४३० **कार्यात्ययोपगमनं** कार्यस्यात्ययो वृथा यापनं तस्योपगमनं सूचनम् । **विरोधनम्** । **इति** । **स्मृतम्** ।

उदाहरति—**यथा। वेणीसंहारे षष्ठेऽङ्के। युधिष्ठिरः। विचिन्त्य** 'राक्षसचरितमि'ति शेषः। अत एव तत्कृतवृथासन्तापेन **निःश्वस्य। च। कथम्। अपि। भीष्ममहोदधौ** भीष्मरूपे महासागरे। **तीर्णे** उत्तीर्णे सति। **द्रोणानले** द्रोणाचार्यरूपेऽग्नौ। कथमपीति पूर्वतोऽनुषज्यते। **निर्वृते** शान्तिमुपगते सतीत्यर्थः। **कर्णशीविषभोगिनि** कर्ण एव आशीविषभोगी विषोद्गारी सर्पस्तस्मिन्। आशीस्तालुगता दंष्ट्रा तया दष्टो न जीवतीत्युक्तायां दंष्ट्रायां विषमस्येति आशीविषः। कथमपीति पूर्वतोऽन्वितम्। **प्रशमिते। शल्ये। च। दिवं** स्वर्गम्। **याते** गते सतीति भावः। **प्रियसाहसेन** प्रियं साहसं दुःशासनरुधिरपानादिनृशंसं कर्म यस्य तादृशेन। **भीमेन। रभसात्।** झटिति। **स्वल्पावशेषे** स्वल्पो दुर्योधनस्यावशिष्टत्वादवशेषो यस्य तादृशे। **जये** तद्विषये इति भावः। **अमी वयम्। सर्वे। वाचा** न तु कर्मणा। **जीवितसंशयं** जीवितसन्देहावस्थाम्। **समारोपिताः**। शार्दूलविक्रीडितं वृत्तम्॥ ३७५॥'

उदाहरति—**यथेत्यादिना** ।

**यथा** । **मम** 'कृता'विति शेषः । **प्रभावत्याम्** । **'प्रद्युम्नः** । **विदूषकं प्रत्या**'हे'ति शेषः । स्पष्टमन्यत् । **विदूषकः** । **असुरवइणा** असुरपतिना । **आअरिअ** आकार्य आहूयेति यावत् । **कहिं वि** । कुत्रापि । **नीदा** नीता । **प्रद्युम्नः** । (**दीर्घम्** । **निःश्वस्य** शोकं नाटयित्वेति भावः) **हा कष्टम्** । **पूर्णचन्द्रमुखि** पूर्णचन्द्रवन्मुखं यस्यास्ताहशि ! **मत्तचकोरनेत्रे** मत्तो यश्चकोरस्तस्य नेत्रे इव नेत्रे यस्यास्तथोक्ते । शाकपार्थिवादित्वान्मध्यमपदलोपः । **आनताङ्गि** आनतानिं लज्जयाऽवनतानि अङ्गानि भ्रुकुटयादीनि यस्यास्तादृशि ! **माम्** । **परिहाय** परित्यज्य । **कुतः** कुत्र । **गता** । **असि** । तदप्राप्तौ खिन्नः सन्नाह—हे **जीवित ! त्वम्** । **अद्य** । **गच्छ** निर्गच्छ । **ननु** । मम गमनात् किं भविष्यतीति आशङ्क्य जीवितं प्रत्याह—**कदर्थनपरं** सन्त्रासनपरायणम् । **तूर्णम्** झटिति । **एव दैवं** प्रारब्धम् । **कृतकृत्यम्** । **अस्तु** । अत्रेप्सितायाः प्रभावत्या असुरपतिकर्तृके हरणे व्याघातः । वसन्ततिलकं वृत्तम् ॥ ३७४ ॥'

**कार्यात्ययोपगमनं विरोधनमिति स्मृतम्।**

**यथा वेण्याम्—'युधिष्ठिरः—**

**तीर्णे भीष्ममहादधौ, कथमपि द्रोणानले निर्वृते**

**कर्णाशीविषभोगिनि प्रशमिते, शल्ये च याते दिवम्।**

**भीमेन प्रियसाहसेन रभसादल्पावशेषे जये**

**सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥'**

---

## विवृतिपूर्तिः

निर्वृत इति। निर्वृते निर्वाणतां प्राप्ते इत्यर्थः ॥

कर्णेति। कर्णो राधेय एव, आशिषि दंष्ट्रायां विषमस्य तादृशो भोगी भुजगस्तस्मिन्, 'आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति'इति। पृषोदरादित्वाद्दीर्घसलोपौ। केचित्त्वीकारान्तमाशीशब्दमाहुः। 'आशीमिव कलामिन्दोः' इति राजशेखरः ॥

कृष्णेति। कृष्णा द्रुपदात्मजा ॥

## विज्ञप्रिया

निरोधरूपमङ्गमाह—कार्य्यात्ययेति। उद्देश्यकार्य्यस्यात्ययोपगमनं भावनमित्यर्थः। तीर्णे इति। दुर्य्योधनेन समं गदायुद्धे भीमेनोक्तम्। मत्पराजये सर्वेषां भ्रातृणां पराजय इति। इदं श्रुत्वा युधिष्ठिरस्य स्वजयरूपकार्य्यस्यात्ययो भावनमिदम्। अल्पावशेषे जये प्रियसाहसेन भीमेन सर्वे वयं जीवितसंशयं प्रापिता इत्यन्वयः। जयस्याल्पावशेषत्वं दर्शयति—तीर्ण इति। निर्वृते शान्ते। कर्णाशीविषेति। आशीदन्तस्तत्र विषं यस्य कर्णरूपे तादृशे भोगिनि सर्पे इत्यर्थः।

## कुसुमप्रतिमा

कार्य्येति। कार्य्ये कर्त्तृव्यकर्म्मणि अत्ययोपगमनं विघ्नप्राप्तिः विरोधनमिति नाम अङ्गं स्मृतम्, विरोधनं वाधनमिति व्युत्पत्तेः।

तीर्णं इति। भीष्म एव महोदधिस्तस्मिन् तीर्णे उत्तीर्णे निहते इत्यर्थः; द्रोण एव अनलस्तस्मिन् निर्वृते निर्वृति निर्वाणतां गते मृते इति तात्पर्य्यम्; कर्ण एव आशीविषयभोगौ तीक्ष्णविषसर्पः तस्मिन् प्रशमिते वधेन शान्ति प्रापिते तथा शल्यो मद्रराज एव शल्यं तस्मिंश्च दिवं स्वर्गं यता, अतएव जये अल्पावशेषे सति प्रियसादृशेन भीमेन रभसाद्वेगात् बाधा "अस्माकं मध्ये येन सार्द्धं ते रोचते तेनैव सार्द्धं युध्यस्व" इति वाक्येन अमी सर्वे वयं भ्रातरः जीवितसंशयं समारोपिताः प्रापिताः।

अत्र युद्धजयरूपकार्य्ये भीमवाक्येन विघ्नप्राप्तेर्विरोधनम्।

## रुचिरा

प्ररोचनां लक्षयति—४३१ **प्ररोचनेत्यादिना**।

४३१ **प्ररोचोना। तु संहारार्थप्रदर्शिनी** संहारः कार्यसमाप्तिः स एवार्थः। प्रयोजनं तस्य प्रदर्शिनी प्रदर्शिका। **विज्ञेया**॥ ४०२ ॥

उदाहरति—**यथा। वेणीसंहारे** षष्टेङ्के। '**पञ्चालको** धृष्टद्युम्नः। 'युधिष्ठिरं प्रत्याहे'ति शेषः।...**अहम्। देवेन** चक्रपाणिना देवसकाशमनुप्रेषितः। आह च देवो देवकीनन्दन इति शेषः। **इत्युपक्रम्यारभ्य। सन्देहेन। कृतं** पर्य्याप्तम्। "कृतं युगेऽलमर्थे स्याद्विहिते हिंसिते त्रिषु" इति मेदिनी। **ते**। तव। **राज्याभिषेकाय। सलिलेन** जलेन। 'चतुर्णां समुद्राणा'मिति शेषः। **रत्नकलशा** रत्नघटिता कलशाः। **पूर्य्यन्ताम्। अत्यन्तचिरोज्झिते** अत्यन्तचिरेणोज्झितस्त्यक्तस्तादृशे। **कबरीबन्धे** कबर्याः केशानां बन्धो बन्धनं तत्र। **तु** पुनः। **क्षणमुत्सवमभिलाषम्। कृष्णा** द्रौपदी। **करोति**। ननु यावद्दुर्योधनं तावत् किमेवमुच्यते इत्याशङ्क्याह—**शातकुठारभास्वरकरे** शातस्तीक्ष्णो यः कुठारः परशुस्तेन भास्वरः करो यस्य तादृशे। **क्षत्रद्रुमोच्छेदिनि। रामे** जमदग्निनन्दने। **क्रोधान्धे। च** पुनः। **वृकोदरे** भीमे। **आजौ** सङ्ग्रामे। **परिपतति। कुतः** कथम्। **संशयो** जयादौर्लभ्यमिति भावः। अत्र हि युद्धकार्येऽसमाप्तेऽपि समाप्तप्रायत्वद्योतनम्। शार्दूलविक्रीडितं वृत्तम्॥ ३७६ ॥'

**कार्यसंग्रह आदानं—**

यथा वेण्याम्—'भो भोः स्यमन्तपञ्चकसंचारिणः,

**नाहं रक्षो, न भूतो, रिपुरुधिरजलाह्लादिताङ्गः प्रकामं**

**निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि।**

**भो भो राजन्यवीराः ! समरशिखिशिखाभुक्तशेषाः, कृतं व-**

**स्त्रासेनानेन, लीनैर्हतकरितुरगान्तर्हितैरास्यते यत्॥'**

अत्र समस्तरिपुवधकार्यस्य संगृहीतत्वादादानम्।

---

## विवृतिः

कृतं व्यर्थम्। क्षणमुत्सवम्॥

यद् यस्मात् त्रासात्॥

## विवृतिपूर्तिः

कार्येति। महर्षिमाप्युक्तम्—'बीजकार्योपगमनमादानमिति संज्ञितम्।' इति॥

भवतीति। भवतीत्यामन्त्रणम्॥

## विज्ञप्रिया

आदानरूपाङ्गलक्षणमाह—कार्य्यसंग्रह इति। उद्देश्यकार्य्यस्य संग्रहः प्राप्तिरित्यर्थः। नाहं भूत इति। देवयोनिप्राणिविशेषो भूतो नाहमित्यर्थः। अत एव पुंलिङ्गता। भूतोऽमी देवयोनय इति कोषात्। तर्हि कस्त्वमिति अत्राह—रिपुरुधिरेति। क्रोधनः सन् रिपुरुधिरजलेन क्लेदिताङ्गः प्रीणिताङ्गः सन् प्रकामं यथेष्टं निस्तीर्णः महाप्रतिज्ञारूपे जलनिधित्वं वनत्वं च रूपितं बोध्यम्। भो भोः समररूपाग्निशिखया भुक्तशेषा राजन्यवीराः! वो युष्माकमनेन त्रासेन कृतमलम्। अयं त्रासो व्यर्थः। मया यूयं न हन्तव्या इत्यर्थः। त्रासः कथं ज्ञात इत्यत्राह—हतेति। यद् यद् हतकरितुरगान्तर्हितैर्युष्माभिरास्यते स्थीयते। अत्रेति। समस्तरिपुवधरूपस्य कार्य्यस्य संगृहीतत्वात् प्राप्तत्वादित्यर्थः।

## कुसुमप्रतिमा

कार्य्येति। कार्य्याणां कर्म्मणां संग्रहः सङ्कलनम् आदानं नामाङ्गं स्यात्। अत्र व्युत्पत्तिः स्पष्टा।

यथेति। समन्तात् इदानां पञ्चकमिति सपन्तपञ्चकं कुरुक्षेत्रान्तर्गतदेशविशेषः, तस्मिन् युद्धार्थं चरन्तीति ते तथोक्तास्तत्सम्बोधनम्।

**प्ररोचना तु विज्ञेया संहारार्थप्रदर्शिनी ॥ १०६ ॥**

यथा वेण्याम्—'पाञ्चालकः—अहं देवेन चक्रपाणिना सहितः। (इत्युपक्रम्य।) कृतं संदेहेन।

**पूर्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते,**
**कृष्णात्यन्तचिरोज्झिते तु कबरीबन्धे करोतु क्षणम्।**
**रामे शातकुठारभास्वरकरे क्षत्त्रद्रुमोच्छेदिनि,**
**क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः॥'**

---

## विवृतिः

संहारार्थस्य उपसंह्रियमाणप्रयोजनस्य प्रदर्शिनी प्रतिपादिका प्रोत्साहना। प्ररोचनेत्यर्थः॥

## विवृतिपूर्तिः

क्षणमिति। अधिवासनमाल्यग्रथनरूपमुत्सवमित्यर्थः॥

शातेति। शातः शाणादिना तीक्ष्णीकृतो यः कुठारः परशुस्तेन भास्वरो देदीप्यमानः करो यस्य तादृशे॥

परिपततीति। परिपतति साटोपं भ्रमति। सप्तम्यन्तमेतत्॥

## विघ्नप्रिया

प्ररोचनारूपमङ्गमाह—प्ररोचना त्विति। संहारार्थप्रदर्शिनीति। कार्य्योपसंहारप्रदर्शिनी वाक् इत्यर्थः। पूर्य्यन्तामिति। गदायुद्धे भीमजयजिज्ञासार्थं कृष्णेन प्रहितस्य पाञ्चालकस्य युधिष्ठिरं प्रति उक्तिरियम्। ते तव राज्याभिषेकाय पूर्य्यन्ताभित्यन्वयः। अत्यन्तचिरोज्झितेऽपि कबरीबन्धे कृष्णा द्रौपदी क्षणमुत्सवं करोतु इत्यन्वयः। भीमस्य जयसंशये कथमेतत् स्यादित्याह। राम इति। शातकुठारेण भासुरकरे क्षत्ररूपद्रुमोच्छेदिनि रामे परशुरामे वृकोदरे च क्रोधान्धे आजौ परिपतति गच्छति सति कुतो जयसंशय इत्यर्थः।

## कुसुमप्रतिमा

प्ररोचनेति। सहारार्थप्रदर्शिनौ तु उपसंहाररूपविषयज्ञापिका उक्तिस्तु प्ररोचना नामाङ्गं स्यात्, प्ररोचयति विश्रामाय रुचिं जनयतीति व्युत्पत्तेः।

पूर्य्यन्तामिति। ते तव राज्ये अभिषेकाय सलिलेन रत्नकलशाः पूर्य्यन्तां किङ्करैरिति शेषः। कृष्णा द्रौपदी तु अत्यन्तविरोज्झिते अति बहुकालपरित्यक्ते कवरीबन्धे क्षणम् उत्सवं करोतु कवरीगन्धाय उद्युज्यतामित्यर्थः। शातेन पाषाणे घर्षणात् सुधारीकृतेन कुमारेण परशुना भास्वरी दीप्तिमान् करो हस्तो यस्य तस्मिन्, तथा क्षत्राः क्षत्रियजातय एव द्रुमा वृक्षास्तान् छिनत्तौति तस्मिन् रामे परशुरामे क्रोधान्धे वृकोदरे बीमे च आजौ युद्धे परिपतति आगच्छति सति, कुतः संशयः युद्धजये सन्देहः अपि तु कुतोऽपि नेत्यर्थः।

अत्र पूर्य्यन्तामित्यादिवरणद्वयरूपाया युद्धोपसंहार ज्ञापकीक्तेः प्ररोचना।

## विमला

प्रोचनामाह, प्रोचनेति ।—संहारस्य—उपसंहारस्य, अर्थः,—विषयः, उपसंङ्ग्रियमामप्रयोजन इति यावत्, तं प्रदर्शयति या सा, उक्तिरिति शेषः, प्रोचना विज्ञेया ।

उदाहरति, पुर्य्यन्तामिति ।—["हे राजन् !" इत्यध्याहार्य्यम्] ते—तव, राज्याभिषेकाय रत्नकलसाः सलिलेन पूर्य्यन्ताम्; कृष्णा—द्रौपदी, अत्यन्तचिरीज्झिते—अतिचिरपरित्यक्ते, कवरीबन्धे—केशबन्धने, क्षणम्—अधिवासनामाल्यपथनरूपमुत्सवं, ("क्षण उद्धर्षो मह उद्ध्व उत्सवः" इत्यमरः) करोतु, शातेन—शाणितेन, ["घोर इति पाठान्तरे—घोरेण—भीषणेन इत्यर्थः] कुठारेण—परशुना, भास्वरः,—देदीप्यमानः, ["भासुर" इति पाठे—समुज्ज्वलः] करो यस्य तादृशे, क्षत्रवाः,—क्षत्रियाः, एव द्रुमाः,—वृक्षाः, तेषां छेदिनि रामे—भार्गवे, तथा क्रोधान्धे—अतिक्रुद्धे, वृकोदरे—भीमे, च आजौ—युद्धे, ("समित्याजिसमिद्युधः" इत्यमरः) परिपतति—प्रवृत्ते सति इत्यर्थः, संशयः,—सन्देहः, जये इति शेषः, कुतः ?—न कुतोऽपीत्यर्थः । अत्र महावाक्यस्य उपसंहारदर्शनम् । शार्दूलविक्रीड़ितं वृत्तम् ।

## लक्ष्मी

प्रोचनां लक्षयति—प्रोचनेति । संहारार्थस्य उपसंह्रियमाणप्रयोजनस्य प्रदर्शिनी प्रतिपादिका प्रोत्साहना प्रोचयति विश्रामाय रुचिमुत्पादयतीति प्रोचना नामाङ्गं स्यात् । मन्दारमरन्दे तु—'सिद्धवद्भाविनोऽर्थस्य सूचना स्यात्प्ररोचनम्' इति ।

उदाहरति—यथेति । पाञ्चालकः—गदायुद्धे भीमजयजिज्ञासार्थं कृष्णेन प्रहितो दूतः चक्रं पाणौ यस्य तेन चक्रपाणिना सन्देहेन संशयेन विजयः स्यान्नवेत्याकारकेण कृतम् अलम् ।

कथं न संदेह इत्यत आह—पूर्यन्तामिति । ते तव युधिष्ठिरस्य राज्ये अभिषेकाय अभिषेचनाय सलिलेन वारिणा रत्नैः मणिभिः जटिताः कलशाः रत्नकलाशाः शाकपार्थिवादित्वात्समासः । 'रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्' इति मेदिनी पूर्यन्तां भ्रियन्तां किङ्करैरिति शेषः । कृष्णा द्रौपदी तु अत्यन्तचिरोज्झिते अतिबहुकालेन परित्यक्ते कबरीबन्धे केशवेशबन्धने च क्षणम् उत्सवं 'कालविशेषोत्सवयोः क्षणः' इत्यमरः, करोतु कबरीबन्धाय सामग्रीसञ्चयं करोत्वित्यर्थः । ननु यदि भीमस्य विजयो न भवेत्तदा सर्वमनर्थकं भविष्यतीत्यत आह—राम इति । शातः शाणादिना घर्षणेन तिक्ष्णीकृतो यः कुठारः परशुः तेन भास्वरो देदीप्यमानः करो हस्तो यस्य तादृशे, तथा क्षत्राणि घृतपत्राण्येव द्रुमाः वृक्षास्तांश्छिनत्तीति तस्मिंस्तथोक्ते भार्गविण त्रिःसप्तकृत्वः क्षत्रिया विनाशिता इति भावः । रामे भार्गवे परशुराम इत्यर्थः, क्रोधान्धे रोषाकुले वृकोदरे भीमे च आजौ रणे परिपतति साटोपं भ्रमति सति संशयः रणजये सन्देहः कुतः कुतोऽपि नेत्यर्थः, विजये सन्देहो नास्तीति भावः । यथा भार्गवेण स्वप्रतिज्ञापूर्त्तिर्ननं विहिता तथा तत्तुल्यो भीमोऽपि प्रतिज्ञापूर्त्तिमवश्यं विधास्यतीति सारार्थः । शार्द्दूलविक्रीडितं छन्दः । अत्र पूर्यन्तामित्यादिचरणद्वयरूपाया सङ्ग्रामोपसंहारोक्तेः प्ररोचना । अन्ये तु सत्कारादेशनं प्ररोचनामाहुः-यथा वेणीसंहारे युधिष्ठिरः (पुरुषमवलोक्य) भद्र ! उच्यतामित्यारभ्य प्रत्युपकारे वर्त्तिष्यन्ते दुर्योधनप्रतिलम्भवातर्तीयै' इत्यन्तम् ।

**तदाहुश्छादनं पुनः ।**

**कार्यार्थमपमानादेः सहनं खलु यद्भवेत् ।। १०७ ।।**

यथा तत्रैव—'अर्जुनः—आर्य,

**अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा ।**

**हतभ्रातृशतो दुःखी प्रलोपैरस्य का व्यथा ।।'**

---

## विवृतिः

एष दुर्योधनः ।।

## विज्ञप्रिया

अपमानादेरित्यादि पदाद् ह्युरुक्तिपरिग्रहः । अप्रियाणीति । एष दुर्य्योधनः ।

## कुसुमप्रतिमा

तदिति । कार्य्यार्थं कर्त्तव्यविशेषसम्पादनार्थम्, यत् खलु अपमानस्य आदिशब्दादपकारादेव सहनं सह्या भवेत्, तत् पुनश्छादनं नाम अङ्गमाहुरालङ्कारिकाः, छादनं सम्वरणमिति व्युत्पत्तेः ।

अप्रियाणीति । हतं भातृशतं यस्य सः अतएव दुःखी नितान्तशोकार्त्तः एष दुर्य्योधनः, वाचा वाक्यमात्रेण अप्रियाणि करोतु कटु वाक्यानि वदत्वित्यर्थः, किन्तु कर्म्मणा कार्य्येण अप्रियाणि कर्त्तुं न शक्तः शक्यभावादिति भावः; अतएव अस्य दुर्य्योधनस्य प्रलापैरुस्मत्तस्येवानर्थकवाक्यैरस्माकं का व्यथा ? अपि तु कापि नेत्यर्थः ।

अत्रदुर्योधनकटूक्तिकृतापमांनसहनात् छादनम् ।

## विमला

छादनमाह, तदाहरिति ।—कार्य्यार्थं यत् खलु अपमानादेः सहनं भवेत्, तत् पुनः छादनम् आहुः । काव्यप्रदीपकारास्तु,—"छलेन छादनं यत् स्यादर्थस्य छादनं तु तत्" इत्याहुः ।

उदाहरति, अप्रियाणीति ।—हतं—विनाशितं, भ्रातृणां—दुःशासनादीनां, शतं यस्य तादृशः, अत एव दुःखी—अतिशोकार्त्त इत्यर्थः, एषः,—दुर्योधनः, वाचा अप्रियामि करोतु—कटुवाक्यं वदतु, कर्मणा न शक्तः, अपकर्त्तुमिति शेषः, कार्य्येम किमपि अपकर्त्तु न शक्नोति इति भावः; अस्य—दुर्य्योधनस्य, प्रलापैः,—अनर्थकैः वाक्यैः, व्यथा—वेदना, का ?—न काऽपीत्यर्थः । यथा विकाररोगवतः प्रलापाः, एवं शतभातृवधव्यसनविकारवतस्तेनास्य कार्य्यासामर्थ्यं ध्वनितम् । अत्र दुर्य्योधनस्य वाक्येन अपमानस्य कार्य्यकारित्वात् सहनम् ।

## लक्ष्मी

छादनं लक्षयति—तदाहुरिति। कायार्थं कर्त्तव्यविशेषसम्पादनाय यत् खलु अपमानस्य आदिपदाद् द्युरुक्तिपरिग्रहः सहनं भवेत् तत्पुन, छाद्यते संक्रियतेऽनेनेति छादनं नामाङ्गमाहुः कवयः, भरतोऽपि—'अवमानत्कृतं वाक्यं कार्यार्थं छादनं भवेत्' इति।

उदाहरति—यथेति। अप्रियाणीति। हतं बिनष्टं भ्रातृशतं यस्य स तथोक्तः अत एव दुःखी अत्यन्तशोकाकुलः एष दुर्योधनः वाचा वचनमात्रेण अप्रियाणि अपकारिणि करोति कटुवचनानि वक्तीत्यर्थः। किन्तु कर्मणा कार्येण अप्रियाणि कर्तुं विधातुं न शक्तः समर्थः शक्त्यभावादिति भावः। अत एवास्य दुर्योधनस्य प्रलापैः विरुद्धवचनैः अस्माकं पाण्डवानां का व्यथा ? किं दुःखम् एतद्वचनेन दुःखं न विधातव्यम् अत एव ते कोपो न युक्त इति भावः। अत्र दुर्योधनकटूक्तिविहितापमानसहनात् छादनम्।

## रुचिरा

छादनं लक्षयति—४३३ **तदाहुरित्यादिना**।

४३३ **यत्**। **कार्यार्थं** कार्यसिद्धये। **अपमानादेः सहनम्**। **भवेत्**। **तत्**। **खलु पुनः-छादनम्**। **आहुः** ॥ ४०४ ॥

उदाहरति—**यथा**। **तत्र** वेणीसंहारे पञ्चमेऽङ्के। **एव अर्जुनः** 'दुर्योधनवचः श्रवणेन कुपितं भीमसेनं प्रत्याहे'ति शेषः। **आर्य ! प्रसीद** प्रसन्नो भव। **किम्**। **अत्रा**स्मिन् हतप्राये दुर्योधने इति भावः। **क्रोधेन**। मरणासन्ने क्रोधो न कर्तव्य इति भावः।

तदेवाह—**हतभ्रातृशतो** हतं भ्रातृशतं यस्य तथोक्तः। अत एव-**दुःखी**। **एष** दुर्योधन इत्यर्थः। **वाचा**। **शक्तः** वाङ्मात्रेणाप्रियाणि कर्तु समर्थः। **अप्रियाणि**। **करोति**। **कर्मणा** पुनरीति शेषः। **न**। करोतीति पूर्वतोऽन्वेति। अतः—**अस्य**। **प्रलापैः**। **का**। **व्यथा** न काऽपिव्यथेति भावः॥ ३७८ ॥'

नाहमिति । अहं रक्षो राक्षसो न, भूतः स्वनामख्यातो देवयोनिविशेषोऽपि न; किन्तु रिपूणां रुधिराण्येव जलानि तैराह्लादितानि आमोदितानि सिक्तानि अङ्गानि यस्य सः, तथा प्रकामं पर्य्यप्तं यथा स्यात्तथा निस्तीर्णं उत्तीर्णं उरुर्महान् प्रतिज्ञाजलनिधियेन सः अतएव गहनी दुर्द्धर्ष; क्रोधनः क्रोधशीलः कश्चित् क्षत्रियोऽस्मि । अतएव भो भोः समरी युद्धमेव शिख बिव्धंसकतया वह्निस्तस्य शिखया ज्वालया भुक्तेभ्यो लौढ़ेभ्यो निहतेभ्य इत्यर्थः शेषा अवशिष्टाः ! राजन्वीराः ! राजन्यवीराः ! हतैः करिभिस्तुरगैस्च अन्तर्हितास्तेषामन्तरालस्थित्या लुक्कायितास्तैः अतएव लीनैर्लयप्राप्तैरिव स्थितैर्युष्माभिः यद्यस्मात् त्रासादास्यते अवस्थीयते, अनेन वो युष्माकं त्रासेन कृतम् अलम् ।

लक्ष्ये लक्षणं बीजयितुमाह अत्रेति । संगृहीतत्वात् निस्तीर्णोरुप्रतिज्ञेत्यादिविशेषणेन मुखतः सङ्कलित-त्वात् ।

## विमला

आदानमाह, कार्य्येति ।—कार्य्याणां सङ्ग्रहः,—सम्यक् ग्रहणम्, उपपादनं, संहारो वेति भावः, आदानम् । तथोक्तं मुनिना,—"बीजकार्य्योपगमनमादानमिति संज्ञितम्" इति । अभिनवगुप्ताचार्य्यास्तु,—"अर्थसंहार आदा-नम्" इति व्याचक्रुः अत एव कविराजाः,—उपगमनसंहारोभयार्थतयाऽऽदानपदं प्रयुक्तवन्त इति बोध्यम् ।

उदाहरति, यथेति ।—समन्तपञ्चकचारिणः,—समन्तात् पञ्चकं—ह्रदपञ्चकं, कुरुक्षेत्रवस्थतीर्तविशेषः इति यावत्, यत्र कुरुपाण्डवसङ्ग्रामः समभवत् इति भावः, यच तथोक्तं, तत्र चारिणः, योद्धवगां इति शेषः ।

नाहमिति ।—भीमसेनं रिपुरुधिराक्तदेहं धावन्तं दृष्ट्वा भयात् निहतपतितगजाश्वगणान्तराले गोपित-कलेवरान् सङ्ग्रामवर्तिनः योधान् प्रति भीमसेनोक्तिरियम् । अहं न रथः,—राक्षसो नाहमित्यर्थः न भूतः,—देवयो-निविशेषः न, रिपूणां रुधिरजलैः,—शोणितवारिभिः, आह्लादितानि—आप्यायितानि, विराजितानीत्यर्थः, [प्लावित इति पाठे—प्लावितानि—संसिक्तानि

अङ्गानि—अवयवाः यस्य तथोक्तः, क्रोधनः, प्रकामं—सम्यक् यथा तथा, निस्तीर्णः—उत्तीर्णः, उरुः—महान्, प्रतिज्ञा एव जलनिधिः,—समुद्रः येन सः, अत एव गहनः,—निविडः, दुरासद इत्यर्थ, क्षत्रियः, अस्मि—भवामि; भो भो राजन्यवीराः !—क्षत्रियेषु शौर्य्यशालिनः ! यूयं समरशिखिनः,—रणाग्रेः, शिकाभिः,—ज्वालाभिः,—भुक्तेभ्यः,—दग्धेभ्यः इत्यर्थः, शेषाः,—अवशिष्टाः, नाधुना रणाग्निर्युष्मान् धक्ष्यतीति भावः, अतः वः,—युष्माकम्, अनेन, त्रासेन—भीत्या, कृतम्—अलं त्रासकारण किमपि नास्तीत्यर्थः यत्—यस्मात्, वासादित्यर्थः,—अन्तर्द्धानं गतैः, तिरोहितैरित्यर्थः, अत एव लीनैः,—विलयं प्राप्तैरिव स्थितैरिति भावः, सद्भिः आस्यते—स्थीयते, युष्माभि-रिति शेषः । अत्र भ्रान्तापन्हुतिरिति कुवलयानन्दकाराः, "भ्रान्तापह्नुतिरन्यस्य शङ्कातस्तथ्यवारणे इति तदुक्तल-क्षणात् । स्रग्धरा वृत्तम् ।

## लक्ष्मी

आदानं लक्षयति—कार्यसंग्रह इति । कार्याणां कर्मणां सङ्ग्रहः सङ्कलनम् आदानं नामाङ्गम् ।

उदाहरति—यथेति । समन्तात् ह्रदानां पञ्चकमिति समन्तपञ्चकं कुरुक्षेत्रान्तःपातिदेशविशेषः । तत्र युद्धार्थ चरितुं शीलं येषान्ते तादृशास्तत्सम्बुद्धाविदम् ।

नाहमिति । अहं भवता दृश्यमानः रक्षो राक्षसो न, देवयोनिप्राणिविशेषः पिशाचादिर्न, अत एव पुंस्त्वम् 'भूतोऽमी देवयोनयः' इत्यमरः, किन्तु रिपूणां शत्रूणां रुधिराणि शोणितान्येव जलानि सलिलानि तैराह्लादितानि आमोदितानि सिक्तानि अङ्गानि अवयवा यस्य स तथोक्तः, तथा प्रकामं यथेष्टं यथा स्यात्तथा निस्तीर्ण उत्तीर्णः ऊरुविषयिणीप्रतिज्ञाजलनिधिर्येन सः, अत एव गहनो दुर्द्धर्षः क्रोधनः क्रोधशीलः नन्द्यादित्वाल्ल्युप्रत्ययः, कश्चित् क्षत्रियोऽस्मि । अत एव भो भोः समरो युद्धमेव शिखिशिखा विनाशकतया वह्निज्वाला तया भुक्तेभ्यो [लीढेभ्यो दग्धेभ्य ] इत्यर्थः, शेषा अवशिष्टास्तत्सम्बोधने तथोक्ते राजन्यवीराः क्षत्रियशूराः हतैः करिभिर्हस्तिभिस्तुरगैरश्वैश्च अन्तर्हितास्तेषामन्तरालस्थितत्वेन लुक्कायितास्तैस्तथोक्तैः अत एव लीनैः प्रच्छन्नैः युष्माभिः यद्यस्मन्त्रसाद् भयादास्यते उपविश्यते अनेन वे युष्माकं त्रासेनालम् अहं युष्मान्न किमपि विधास्यामि वृथैव त्रासो मत्त इति त्वदीयोऽहं भीमसेन एवेति भावः । स्रग्धराच्छन्दः ।

लक्ष्ये लक्षणं सङ्गमयितुमाह—अत्रेति । संगृहीतत्वात् निस्तीर्णेत्यादिविशेषणेन समस्तरिपुवधकार्यस्य मुखतः सङ्कलितत्वादित्यर्थः ।

## रुचिरा

आदानं लक्षयति—४३२ **कार्येत्यादिना** ।

४३२ **कार्यसंग्रहः** कार्यस्य मुख्यतयानुष्ठेयस्य कर्मणः सङ्ग्रहः समाप्त्यनन्तरं फलात्मना सङ्ग्रहणम् । **आदानम्** ।

उदाहरति—**यथा । वेणीसंहारे** 'षष्ठेऽङ्के' इति शेषः । **'भीमसेनः । उद्धतम् । (परिक्रामन्** परिभ्रमन्) । **भोभोः स्यमन्तपञ्चकसञ्चारिणः** स्यमन्तपञ्चकं कुरुक्षेत्रान्तर्वर्ती तीर्थविशेष उपचारात्तत्प्रान्तदेशस्तत्र सञ्चरन्तीति तत्सम्बुद्धौ तथोक्ताः ! **अहम् । रक्षो** राक्षसः । **नास्मीत्यर्थः । भूतः** प्रेतः । **न** । किन्तु-**प्रकामं** यथेष्टम् । **रिपुरुधिरजलाह्लादितः** । रिपूणां दुर्योधनादीनां रुधिरमेव जलं तेनाह्लादितमासिक्तमङ्गं यस्य तादृशः । **निस्तीर्णोरुप्रतिज्ञाजलनिधिगहमः** निःशेषं कृत्वा तीर्णो उरुर्महान् प्रतिज्ञाजलनिधिःप्रतिज्ञारूपः सागरो येन अत एव गहनो दुरासदः । **क्रोधनो** क्रोधशीलः । **क्षत्रियः । अस्मि** । अन्यतो दृष्टिं निक्षिप्येति शेषः । **भोभो राजन्यवीराराजन्येषु** क्षत्रियेषु वीरास्तत्सम्बुद्धौ तथोक्ताः ! **समरशिखिरशिखामुक्तशेषाः** समरः सङ्ग्राम एव शिखी अग्निस्तस्य शिखा ज्वाला तया मुक्तः शेषोऽवशेषो येषां तत्सम्बुद्धौ तथोक्ताः । समराग्नौ पतित्वा मृतास्तेब्योऽवशिष्टा इति भावः । **अनेन** निलीयवस्थानतो व्यज्यमानेनेति भावः । **वो** युष्माकम् । **त्रासेन । कृतमलम्** । कथं त्रासो लक्षित इत्याह—**यत् लीनैः । हतकरितुरगान्तर्हितै** हता ये करितुरगा नागाश्वास्तेष्वन्तर्हितास्तैः । **आस्यते** स्थीयते । स्रग्धरा वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ ३७७ ॥"

लक्ष्यं सङ्गमयति—**अत्रेत्यादिना** । स्पष्टम् ।

अथ निर्वहणाङ्गानि—

**संधिर्विबोधो ग्रथनं निर्णयः परिभाषणम्।**
**कृतिः प्रसाद आनन्दः समयोऽप्युपगूहनम्॥ १०८॥**
**भाषणं पूर्ववाक्यं च काव्यसंहार एव च।**
**प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामतः॥ १०९॥**

---

## विवृतिः

अथ चतुर्दशप्रकाराणि निर्वहणाङ्गान्याह—संधिरिति। बीजस्योपगमनमुद्भावनम्। मुखे मुखसंधौ॥

## विवृतिपूर्तिः

विबोध इति। नाट्यशास्त्रेऽप्युक्तम्—'कार्यस्यान्वेषणं युक्त्या विबोध इति कीर्तितः॥' इति॥

## विज्ञप्रिया

निर्वहणसन्धेश्चतुर्दशाङ्गान्याह—सन्धिर्विबोध इत्यादि।

## कुसुमप्रतिमा

सन्धिरिति। सहारे निर्वहणापरपर्य्यायीपसंहारसन्धौ सन्धिप्रभृतीनि चतुर्द्दशाङ्गानि नामतो ज्ञेयानि।

## विमला

निर्वहणाङ्गान्याह, अथेति।—सन्ध्यादीनि चतुर्द्दशप्रकाराणि निर्वहणाख्यस्य सन्धेरङ्गानीत्यर्थः।

## लक्ष्मी

निर्वहणसन्धेश्चतुर्द्दशाङ्गानीति दर्शयति—सन्धिर्विबोध इत्यादि। संहारे निर्वहणाख्यापरनामकोपसंहारसन्धौ सन्धिर्विबोध इत्यादीनि प्रशस्तिरित्यन्तानि चतुर्दशाङ्गानि नामतो बोध्यानीत्यर्थः।

## रुचिरा

विमर्शाङ्गानि निरूप्य निर्वहणाङ्गानि निरूपयितुमुपक्रमते—**अथेत्यादिना**।

**अथ** विमर्शाङ्गनिरूपणानन्तरम्। **निर्वहणाङ्गान्युच्यन्ते**—४३४ **सन्धिरित्यादिना**।

४३४ **संहारे** निर्वहणे सन्धावित्यर्थः। **सन्धि** रित्यारभ्य **प्रशस्तिः**। **इति** (इत्यन्तमुक्तानि) चतुर्दश इति शेषः। **अङ्गानि नामतः**। **ज्ञेयानि**। स्पष्टमन्यत्। ४०५॥ ४०६॥

क्रमात्सन्ध्यादीन् लक्षयितुकाम आह—**तत्र** तेषु मध्ये। 'सन्धिर्लक्ष्यते इति शेषः। ४३५ **बीजोपगमनमित्यादिना**।

तत्र—

**बीजोपगमनं संधिः—**

यथा वेण्याम्—'भीमः—भवति यज्ञवेदिसंभवे, स्मरति भवती यन्मयोक्तम्—'चञ्चद्भु' इत्यादि (३०२ पृ.)।

अनेन मुखे क्षिप्तबीजस्य पुनरुपगमनमिति संधिः।

---

## विज्ञप्रिया

तत्र सन्धिरूपाङ्गमाह—बीजोपगमनमिति। प्रतिज्ञातार्थरूपस्य बीजस्य सिद्धया तत्स्मरणमित्यर्थः।

कौरवशतं हत्वा भवति यज्ञेत्यादिकं भीमस्योक्तिः। चञ्चद्भुजेत्यादिकं प्राग् व्याख्यातम्। अनेनेति। मुखे प्रथमतः क्षिप्तमुपन्यस्तं प्रतिज्ञया बोधितं बीजं प्रतिज्ञातार्थरूपं पुनरुपगतं ज्ञापितमित्यर्थः।

## कुसुमप्रतिमा

बीजेति ! बीजस्य मुखसन्धावुपक्षिप्तस्य बीजार्थस्य उपगमनं पुनरुपस्थितिः सन्धिर्नामाङ्गं स्यात्, पुनः सन्धानं सन्धिरिति व्युत्पत्तेः।

लक्ष्ये लक्षणं योजयति अनेनेति। मुखे मुखसन्धौ।

## विमला

सन्धिमाह, बीजेति।—बीजस्य (पूर्वोक्तस्य) उपगमनम्—उद्भावनं, सन्धिः। वृत्तिवात्तिकेऽप्ययदीक्षितैस्तु,—"दोषारोपेण नष्टस्य कार्य्यस्योन्नतये पुनः।

अन्वेषणं भवेत् सन्धिः" इत्युक्तम्।

उदाहरति, यथेति।—भवति ! इत्यामन्त्रणम् यज्ञवेदिसम्भवे !—याज्ञसेनि ! द्रौपदि ! इत्यर्थः। मुखे—मुखाख्यसन्धौ, क्षिप्तस्य—उद्भूतस्य, बीजस्य—कार्य्यस्य, पुनरुपगमनं—पुनः सम्पादनम्, इति—अस्मात् हेतोः।

## लक्ष्मी

तत्र यथोद्देशे सन्धिरूपाङ्गं लक्षयति—बीजोपगमनमिति। बीजस्य मुखसन्धावुपक्षिप्तस्य बीजार्थस्य उपगमनं पुनः प्राप्तिः प्रतिज्ञातार्थस्य बीजस्य सिद्धया तत्स्मरणमित्यर्थः, पुनः सन्धानं सन्धिर्नामाङ्गं भवेत्।

उदाहरति—यथेति। तत्रैव वेण्यामेवेत्यर्थः, एवमग्रेऽपि। कौरवशतं हत्वा 'भवति यज्ञे'—त्यादिकं भीमस्योक्तिः। भवतीत्यामन्त्रणम्। चञ्चद्भुजेत्यादिकं प्राग् व्याख्यातम्। लक्ष्ये लक्षणं सङ्घटयति—अनेनेति। मुखे प्रथमतः क्षिप्तमुपन्यस्तं प्रतिज्ञया बोधितं बीजं प्रतिज्ञातार्थरूपं पुनरुपगतं ज्ञापितमित्यर्थः। यथा च रत्नावल्याम्,

'वसुभूतिः—(अग्निविद्रवानन्तरं सागरिकां निर्वर्ण्य) बाभ्रव्य ! सुसदृशीयं राजपुत्र्याः। बाभ्रव्यः-ममाऽप्येवमेव मनसि' इत्यनेन नायिकाबीजोपगमात् सन्धिः।

## रुचिरा

४३५ **बीजोपगमनं** बीजस्य प्रधानकारणस्योपगमनं समन्वयः। **सन्धिः**।

उदाहरति—**यथा। वेणीसंहारे** षष्ठेऽङ्के। '**भीमः** 'द्रौपदीं प्रत्याहे'ति शेषः। **यत्। चञ्चद्भुज...इत्यादि। मया। उक्तम्**। तत्—**भवती** याज्ञसेनीत्यर्थः। **स्मरति।' इत्यनेन। मुखे** युद्धारम्भे। **क्षिप्तबीजस्य** रोपितस्य कारणस्य। **पुनरुपगम नं** फलात्मनोद्भवनम्। **इति। सन्धिः**।

**विबोधः कार्यमार्गणम्।**

यथा तत्रैव—'भीमः—मुञ्चतु मामार्यः क्षणमेकम्। युधिष्ठिरः—किमपरमवशिष्टम्। भीमः—सुमहदवशिष्टम्। समाप(संयम)यामि तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम्। युधिष्ठिरः—गच्छतु भवान्, अनुभवतु तपस्विनी वेणीसंहारम्।' इति।

अनेन केशसंयमनकार्यस्यान्वेषणाद्विबोधः।

---

## विवृतिपूर्तिः

केशहस्तमिति। केशहस्तं केशपाशम्। 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे।' इत्यमरः॥

## विज्ञप्रिया

विबोधरूपमङ्गमाह—विबोध इति। कार्य्यमार्गणं कार्य्यस्यान्वेषणम्। केशहस्तमिति। केशकलापं "पाशश्च पक्षश्च हस्तश्च कलापार्थाः। कचात् परे।"इति कोषः।

## कुसुमप्रतिमा

विबोध इति। कार्य्यमार्गणं कर्त्तव्यविषयान्वेषणं विबोधो नामाङ्गं स्यात्। कर्त्तव्यत्वप्रकारेण विशेषबोधविषयत्वाद्विबोध इति संज्ञा।

यथेति। केशहस्तं केशपाशम्। तपस्विनी शोच्या द्रौपदी। वेणीसंहारं दुःशासनाकर्षणेन स्वलितायाः वेण्याः पुनर्बन्धनम्।

## विमला

विबोधमाह, विबोध इति।—कार्य्यस्य—कर्त्तव्यस्य, मार्गणम्—अन्वेषणं, विबोधः। नाट्यशास्त्रकारेणप्युक्तं—"कार्य्यस्यान्वेषणं युक्त्या विबोध इति कीर्त्तितः" इति।

उदाहरति, यथेति।—संयमयामि—बध्नामि। केशहस्तं—केशसमूहं, ("पात्रो हस्तश्च पक्षश्च कलापार्थाः कणात् परे" इत्यमरः)। तपस्विनी—वराकी।

## लक्ष्मी

विबोधरूपमङ्गं लक्षयति—विबोध इति। कार्यमार्गणं कर्त्तव्यविषयस्य गवेषणम्, विधेयत्वप्रकारेण विशेषबोधविषयत्वाद्विबोधो नामाङ्गं भवेत्। भरतोऽपि—'कार्यस्यान्वेषणं युक्त्या विबोध इति कर्त्तितः' इति।

उदाहरति—यथेति। तत्रैव वेण्यामेव। मुञ्चतु त्यजतु क्षणमिति 'कालाध्वनोरत्यन्तन्तसंयोगे' इति द्वितीया। सुमहत् अत्यधिकम्। सुयोधनस्य यत् शोणितं तेनोपक्षितेन लिप्तेन पाणिना करेण दुःशासनावकृष्टं दुःशासनेनाकृष्टम्, केशहस्तं केशपाशम्। 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः, संयमयामि वध्नामि। तपस्विनी शोच्या द्रौपदी। वेणीसंहारं दुःशासनाकर्षणेन विक्षिप्ताया वेण्याः पुनः संयमनम्। लक्ष्ये लक्षणं

सङ्गमयति—अनेनेति । यथा वा रत्नावल्याम्—वसुभूतिः—(निरूप्य) देव ! कुत इयं कन्यका । राजा—देवी जानाति । वासवदत्ता—अज्जउत्त ! एसा सागरादो पावि अत्तिभणिअ अमच्च जोगन्धराअणेण मम हत्थे णिहिदा । अदो ज्जेव सागरिअत्ति सद्दावी अदि । (आर्य्यपुत्र ! एषा सागरात्प्राप्तेति भणित्वा अमात्ययौगन्धरायणेन मम हस्ते निहितः । अत एव सागरिकेति शब्द्यते) राजा (आत्मगतम्) यौगन्धरायणेन न्यस्ता । असौ मामनिवेद्य करिष्यति' इत्यनेन रत्नावलीलक्षणकार्यमार्गणाद्विबोधः ।

## रुचिरा

विबोधं लक्षयति—४३६ **विबोध** इत्यादिना ।

४३६ **कार्यमार्गणं** कार्यस्य मार्गणमन्वेषणम् । **विबोधः** ।

उदाहरति—**यथा** । **तत्र** वेणीसंहारे षष्ठेऽङ्के । **एव ।) भीमः** 'युधिष्ठिरं प्रत्याहे'ति शेषः । **आर्य ! सः** । यस्तवानुजः—इति शेषः । **एव** । **अहम्** । **तत्**तस्मात् । **आर्यः** भवान् । **माम्** । **एकम्** । **क्षणम्** । **मुञ्चतु** । **युधिष्ठिरः** । **किम्** । **अपर**मन्यत्कार्यमित्यर्थः । **अवशिष्टम्** । **भीमसेनः** । **सुमहत्** कार्यमिति शेषः । **अवशिष्टम्** । किन्तदित्याह—**तावत्** कात्स्न्र्येन **अनेन** । **सुयोधनशोणितोक्षितेन** सुयोधनस्य रुधिरलिप्तेन । **पाणिना** हस्तेन । **पाञ्चाल्याः** द्रौपद्याः । **दुःशासनावकृष्टं** दुःशासनेनावकृष्टं बलादाकृष्टम् । **केशहस्तं** केशपाशम् । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । **संयमयामि** । बध्नामि । **युधिष्ठिरः** । **भवान्** । **गच्छतु** । **तपस्विनी द्रौपदी** । **वेणीसंहारं** वेण्याः केशपाशस्य संहारः संयमनं तम् । **अनुभवतु** ।**' इत्यनेन** । **केशसंयमनकार्यस्य** । **अन्वेषणात्**सम्भावनात् । **विबोधः** ।

**उपन्यासस्तु कार्याणां ग्रथनं-**

यथा तत्रैव—'भीमः—पाञ्चालि, न खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेणिरात्तपाणिभ्याम्। तिष्ठ स्वयमेवाहं संहरामि।' इति।

**अनेन कार्यस्योपक्षेपाद् ग्रथनम्।**

---

## विवृतिः

केशहस्तं केशसमूहम्॥

## विवृतिपूर्तिः

वेणीति। वेणीसंयमनम्॥

## विज्ञप्रिया

उपन्यासरूपमङ्गमाह–उपन्यास इति। ग्रथनं करिष्यमाणकार्य्यकथनम्। विलुलिता विशकलीकृता। उपक्षेपात् करिष्यमाणतयोपन्यासात्।

## कुसुमप्रतिमा

उपेति। कार्य्याणां कर्त्तव्यविषयाणाम् उपन्यास उल्लेखः ग्रथनं नामाङ्गं स्यात्, अयनं प्रकृतसन्दर्भे बीजनमिति व्युत्पत्तेः।

यथेति। संहतर्त्तव्या बद्धव्या। दुःशासनेन विलुलिता विश्लेषिता। संहरामि बध्नामि। कार्य्यस्य कर्त्तव्यवेणीबन्धनस्य उपक्षेपादुल्लेखात्।

## विमला

ग्रथनमाह, उपन्यास इति।—कार्य्याणाम् उपन्यासः,—कीर्त्तनं, ग्रथनम्।

उदाहरति, यथेति।—दुःशासनविलुलिता—दुःशासनेन विपर्य्यासिता, आकर्षणेन बन्धनात् च्याविता इत्यर्थः।

## लक्ष्मी

ग्रथलरूपाङ्गं लक्षयति—उपन्यास इति। कार्याणां कर्त्तव्यविषयाणाम् उपन्यासः उपक्षेपणम् प्रकृतसन्दर्भे योजनं ग्रथनं नामाङ्गं मतम्।

उदाहरति—यथेति। सदृर्त्तव्या बद्धव्या। दुःशासनेन विलुलिता विशकलीकृता। संहरामि बध्नामि॥

लक्ष्ये लक्षणं योजयति—अनेनेति। कार्यस्य कर्त्तव्यवेणीबन्धनस्य उपक्षेपात् उपन्यासात्। यथा च रत्नावल्यम्—'यौगन्धरायणः—देव ! क्षम्यतां यद्देवस्यानिवेद्य मयैतत्कृतम्' इत्यनेन वत्सराजस्य रत्नावलीप्रापणकार्योपक्षेपाद् ग्रथनम्।

## रुचिरा

ग्रथनं लक्षयति—४३७ **उपन्यास** इत्यादिना।

४३७ **कार्याणा**माधिकारिकाणां प्रासङ्गिकानाञ्च कर्तव्यानाम्। **उपन्यासः** समाप्य विश्रमणम्। **तु**। **ग्रथनम्**।

उदाहरति—**यथा**। **तत्र** वेणीसंहारे षष्ठेऽङ्के। **एव**। '**भीम** आहेति शेषः। स्पष्टमन्यत्।

लक्ष्यं सङ्गमयति—**इत्यनेन**। **कार्यस्य** कौरवकुलसंहारणानुपदं द्रौपदीकेशसंहरणरूपस्य कर्तव्यस्य। **उपक्षेपात्** समाप्य ततो निवर्तनात्। **ग्रथनम्**।

**निर्णयः पुनः ॥ ११० ॥**

**अनुभूतार्थकथनं—**

यथा तत्रैव—'भीमः—देव अजातशत्रो, अद्यापि दुर्योधनहतकः । मया हि तस्य दुरात्मनः

**भूमौ क्षिप्तं शरीरं, निहितमिदमसृक् चन्दनाभं निजाङ्गे,**
**लक्ष्मीरार्ये निषिक्ता चतुरुदधिपयः सीमया सार्धमुर्व्या ।**
**भृत्या मित्राणि योधाः कुरुकुलमनुजा दग्धमेतद्रणाग्नौ,**
**नामैकं यद् ब्रवीषि क्षितिप ! तदधुना धार्तराष्ट्रस्य शेषम् ॥'**

---

## विवृतिः

मया हीति । तस्य धार्तराष्ट्रस्य ॥

## विवृतिपूर्तिः

निहितमिति । निहितमर्पितम् ॥

चन्दनाभमिति । चन्दनाभं रञ्जनप्रभम् ॥

## विज्ञप्रिया

निर्णयरूपमङ्गमाह—निर्णय इति । अजातसत्रो इति युधिष्ठिरस्यापरं नाम । भूमौ क्षिप्तमिति । तस्य दुरात्मनो दुर्य्योधनस्य शरीरं मया भूमौ क्षिप्तं पातितम् । तस्येदमंसृक् निजाङ्गं चन्दनाभं चन्दनवन्निहितम् । चतुरुदधि पयः सीमया उर्व्या सार्द्धम् । आर्य्ये ! त्वयि लक्ष्मीर्नियुक्ता । रणाग्नावेतद्दग्धम् । तदेव किमितीत्याह— भृत्या इत्यादि । भृत्याद्याः कुरुकुलमनुजाः इत्यन्वयः । हे क्षितिप ! धार्त्तराष्ट्रस्य यन्नाम ब्रवीषि अधुना तदेव शेषमित्यर्थः ।

## कुसुमप्रतिमा

निर्णय इति । अनुभूतार्थस्य प्रत्यक्षादिना प्रागवगतविषयस्व कथनं पुनर्निर्णयो नामाङ्गं स्वात् । निर्णीत-विषयकत्वान्निर्णय इति समाख्या ।

भूमाविति । मया हि तस्य दुरात्मनो दुर्य्योधनहतकस्य शरीरं भूमौ क्षिप्तं निष्प्राणीकृत्यभूतले पातितम्, चन्दनाभं रक्तचन्दनतुल्यम् इदम् असृक् तस्यैव दुर्य्योदनस्य रक्तं निजाङ्गे निहितं स्थापितम्, चतुर्णाम् उदधीनां पयांसि जलप्रवाहाः सीमानी यस्यास्तया तथोक्त्या उर्व्या पृथिव्या सार्द्धं सह लक्ष्मीः राजश्रीः आर्य्ये त्वयि निषिक्ता स्थापिता । भृत्या भृतिभोगिनः अमात्यादयः मित्राणि सुहृदः योधा योद्धारः तथा कुरुकुलस्य मनुजा दुःशासनादयः एतत् सकलं रणाग्नौ दग्धं विनाशितमित्यर्थः । हे क्षितिप ! एकं यत् नाम दुर्य्योधनेति संज्ञां ब्रवीषि, धार्त्तराष्ट्रस्य अधुना तत् नाममात्रं शेषमवशिष्टं स्थितम् ।

अत्र स्वकृतत्वात् प्रत्यक्षेणैवानुभूतविषयस्य कथनान्निर्णयः ।

## विमला

निर्णयमाह, निर्णय इति ।—अनुभूतस्य—भुक्तस्य, कृतस्य इत्यर्थ अर्थस्यं—कार्य्यस्य, कथनं निर्णयः ।

उदाहरति, देव इति । भूमाविति ।—तस्य धार्त्तराष्ट्रस्य—दुर्य्योधनस्य इत्यर्थः, शरीरं भूमौ—पृथिव्यां, क्षिप्तं—पातितं, भूमिसात् कृतमित्यर्थः, इदम् असृक्—रुधिरम्, एव चन्दनं, भीमगात्रे—भयङ्करशरीरे, निहितम्—अर्पितम्, चतुर्णाम्, उदधीनां—समुद्राणां, पयांसि—जलानि, ("पयो दुग्धं पयस्तोयम्"इति मेदिनी) सीमानी यस्यास्तादृश्या, उर्व्या,—पृथिव्या, सार्द्धं लक्ष्मीः आर्य्ये—ज्येष्ठे भ्रातरि, भवतीत्यर्थः, निषिक्ता—अर्पिता; (तस्य) भृत्याः,—दासाः, मित्राणि बान्धवाः, किं बहूना, कुरुकुलेषु ये मनुजाः,—मानवाः, योधाः,—युद्ध्यार्थमुपस्थिता इत्यर्थः, एतत् सर्वं, रणाग्नौ—सङ्ग्रामरूपायामग्निज्वालायमित्यर्थः, दुग्धं—भस्मीकृतं, निहतमित्यर्थः, हे क्षितिप !—राजन् ! यत् एकं नाम, दुर्य्योधनेति शेषः, ब्रवीषि—कथयसि, धार्त्तराष्ट्रस्य—धृतराष्ट्रपुत्रस्य, दुर्य्योधनस्येति यावत्, अधुना तत्—तन्मात्रमेव, शेषं, नामशेषः कृतो धार्त्तराष्ट्र इति भावः । अत्र कृतकार्य्यस्य कथनम् । स्रग्धरा वृत्तम् ।

## लक्ष्मी

निर्णयरूपमङ्गं लक्षयति—निर्णय इति । अनुभूतार्थस्य प्रत्यज्ञादिना पूर्वं ज्ञातविषयस्य कथनं पुनः निर्णीतविषयकत्वान्निर्णयो नामाङ्गं भवेत् । मन्दारमरन्देऽपि—'पश्चाञ्च स्वानुभूतार्थकथनं निर्णयो मतः' इति ।

उदाहरति—यथेति । अजातशत्रोः इति । युधिष्ठिरस्येदमपरं नाम । भूमाविति । मया तस्य दुरात्मादुर्योधनहतकस्य शरीरं भूमौ क्षिप्तं निष्प्रमाणीकृत्य पृथिव्यां पातितम् । चन्दनस्य रक्तचन्दनस्याऽऽभेवाऽऽभा यस्य तत् रक्तचन्दनसदृशमित्यर्थः । इदम् असृक् शोणितं तस्य दुर्योधनस्य निजाङ्गे स्वावयवे निहितम् उपन्यस्तं स्थापितमित्यर्थः, चतुर्णाम् उदधीनाम् समुद्राणां पयांसि जलानि सीमा यस्याः सा तथोक्त्या उर्व्या पृथिव्या सार्द्धं साकं लक्ष्मीः राज्यश्रीः आर्ये भवति निषिक्ता स्थापिता, भृत्याः सचिवादयः मित्राणि सखायः योधा योद्धारः, तथा कुरुकुलस्य मुनुजा दुःशासनप्रभृतयः एतत् समग्रं रणमेवाग्निरिति रूपकसमासः, तस्मिंस्तथोक्ते दग्धं विनाशितम्, क्षितिमवनिं पातीति क्षितिपस्तत्सम्बोधने हे क्षितिप ! एकं नाम यत् दुर्योधनेति संज्ञां ब्रवीषि धात्त्रराष्ट्रस्य दुर्योधनस्य तत् नाममात्रशेषमवशिष्टं वर्त्तते नामैवावशिष्टं सर्वाणिम विनाशितानीति भावः । स्रग्धराच्छन्दः अत्रात्मना विहितत्वात् प्रत्यक्षेणैवानुभूतविषयस्य कथनान्निर्णयः ।

## रुचिरा

निर्णयं लक्षयति—४३८ **निर्णय** इत्यादिना ।

४३८ **अनुभूतार्थकथनं** अनुभूतार्थस्यः स्वात्मना सम्पाद्य कृतप्रत्यक्षस्य कार्यार्थस्य कथनम् । **पुनः** । **निर्णयः** । । ४०७ ॥

उदाहरति—**यथा** । **तत्र** वेणीसंहारे षष्ठेऽङ्के । **एव** । **'भीमः** 'युधिष्ठिरं प्रत्याहे'ति शेषः । **हे अजातशत्रो** न जातः सर्वत्र शान्ततया शत्रुर्यस्य तत्सम्बुद्धौ **देव** राजन् ! **अद्य** । **अपि** । **दुर्योधनहतकः** पापात्मा दुर्योधन इति भावः । **क्व** कुत्रास्ति ? न कुत्रापि जीवन्नवस्थित इति भावः । तदेव द्रढयति—**हि** यतः । **मया** । **तस्य** । **दुरात्मनः** दुर्योधनहतकस्येत्यर्थः । **शरीरम्** । **भूमौ** पृथिव्याम् । **क्षीप्तं** गदयोरू विदार्येति शेषः । **इदम्** । **चन्दनाभं** रक्तच-

न्दनसदशम्। **असृक्** रुधिरम्। **निजाङ्गे** स्वशरीरे। भीमगात्रे क्रोधोद्भूतभयंकरेऽस्मिनङ्गे इति भावः। **निहितं** सिक्तम्। **आर्ये** पूज्ये भवतीति यावत्। **चतुरुदधिपयःसीमया** चत्वार उदधयः समुद्रास्तेषां पय सीम्नि सीमा वा यस्यास्तया। **उर्व्या** पृथिव्या। **सार्धम्! लक्ष्मी** राज्यलक्ष्मीः। **निषिक्ताऽ**भिषिक्ता। **भूत्या** किङ्करा अनुजीविन इति यावत्। **मित्राणि** प्रेम्णा वशंवदाः। **योधा** योद्धारः। तथा-**एतत् अखिलम्। कुरु कुम्। रणाग्नौ। दग्धम्।** हे **क्षितिप** राजन्! **यद्। ब्रवीषि। तत्।** दुर्योधन इत्याकारम्। **एकम्। अधुना। धार्तराष्ट्रस्य** दुर्योधनस्य। **नाम। शेषं** शिष्टम्। शेषशब्दोऽयं कर्मण्यजन्तः, नतु घञन्त इति वाच्यलिङ्गः। अत्र हि साक्षादनुभूतार्प्यवर्णनम्। शार्दूलविक्रीडितं वृतम्॥ ३७९॥'

↔

**वदन्ति परिभाषणम्।**

**परिवादकृतं वाक्यं–**

यथा शाकुन्तले—'राजा—आर्ये, अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी। तापसी—को तस्स धम्मदारपरिट्ठाइणो णामं गेण्हिस्सदि।'

---

## विवृतिः

'कस्तस्य धर्मदारपरित्यागिनो नाम ग्रहीष्यति।' इति संस्कृतम्॥

## विज्ञप्रिया

परिभाषणरूपमङ्गमाह—वदन्तीति। परिवादेति परिवादेनार्थेन कृतं वाक्यं परिवादार्थकं वाक्यमित्यर्थः। आर्य्ये! अथ सेत्यादिपृच्छा दुर्वाससः शापाधीनविस्मरणकृतशकुन्तलापरित्यागस्य पश्चात्तां स्मृत्वा तामनासाद्य विरहिणः स्वर्गादागच्छतस्तापसीमुखात् तत्प्रसङ्गं श्रुत्वा दुष्यन्तस्य। को तस्सेति। कस्तस्य धर्म दारपरित्यागिनो नाम ग्रहीष्यतीति।

## कुसुमप्रतिमा

वदन्तीति। परिवादकृतम् अपवादपुरस्कृतं वाक्यं परिभाषिणं नाम अङ्गं वदन्ति आलङ्कारिका इति शेषः। परिवादसूचकं भाषणं परिभाषणमिति व्युत्पत्तेः।

यथेति। "कस्तस्य धर्म्मदारपरित्यागिनी नाम ग्रहीष्यति।" इति संस्कृतानुवादः। अत्र दुष्यन्तस्य परिवादसूचनात् परिभाषणम्।

## विमला

परिभाषणमाह, वदन्तीति।—परिवादः,—कुत्सा, तेन कृतं वाक्यं परिभाषणं वदन्ति। उद्योतकारास्तु,—"प्रेमणाद्वेषाच्छलाद्वाऽपि भाषणं परिभाषणम्" इत्याहुः।

तापसीति।—["कस्तस्य धर्म्मदारपरित्यागिनी नाम ग्रहीष्यति?" इति संस्कृतम्]। अत्र कुत्साजनितवाक्यकथनम्।

## लक्ष्मी

परिभाषणरूपमङ्गं लक्षयति-वदन्तीति। परिवादेन अपवादेन कृतं पुरस्कृतं वाक्यं वचनं परिवादसूचकं भाषणं परिभाषणं नामाङ्गं वदन्ति तत्त्ववेत्तारः कवय इति शेषः।

उदाहरति—यथेति। शाकुन्तले शकुन्तलानाटकदृश्यकाव्ये इत्यर्थः। आर्ये! अथ सेत्यादिपृच्छा दुर्वाससः शापाधीनविस्मरणकृतशकुन्तलापरित्यागस्य पश्चात्तां स्मृत्वा तामनासाद्य विरहिणः स्वर्गादगच्छतस्तापसी-

मुखात् तत्प्रसङ्गं श्रुत्वा दुष्यन्तस्य प्रश्नः। तापसी 'राजानं प्रत्याह' इति शेषः। को तस्स इति—'कस्तस्य धर्मदारपरित्यागिनो नाम ग्रहीष्यति' इति संस्कृतम्। अत्र दुष्यन्तस्य परिवादसूचनात्परिभाषणम्।

## रुचिरा

**परिभाषणं** लक्षयति—४३९ **वदन्तीत्यादिना**।

४३९ **परिवादकृतं** परिवादेन निन्दया कृतं सम्पादितम्। **वाक्यम्। परिभाषणम्। वदन्ति** 'विद्वांस' इति शेषः।

उदाहरति—**यथा। अभिज्ञानशाकुन्तले** सप्तमेऽङ्के। '**राजा** दुष्यन्तः। (**प्रकाशं** तापसीं पृच्छतीति शेषः) **अथ** (प्रश्नसूचकमव्ययम्) प्राप्येति, पाठान्तरम्। **सा**। 'यैनामिह प्रसूतवती'ति शेषः। **तत्रभवती** पूज्या (तदवधि स्वभार्यात्वेन तस्या अपरिचयात्)। **किमाख्यस्य** किन्नामधेयस्य। **राजर्षेः। पत्नी। तापसी**। 'राजानं प्रत्याहे'ति शेषः। **को** कः। **तस्स** तस्य। **धम्मदारपरिट्टाइणो** धर्मदारपरित्यागिनो धर्मेण (गृहीता) ये दारास्तान् परित्यजतीति तस्य। **णामं** नाम। **गेह्णिस्सदि** ग्रहीष्यति। कीर्तयिष्यतीत्यर्थः।

**लब्धार्थशमनं कृतिः ॥ १११ ॥**

यथा वेण्याम्—'कृष्णः—एते भगवन्तो व्यासवाल्मीकिप्रभृतयोऽभिषेकं धारयन्तस्तिष्ठन्ति ।' इति ।

अनेन प्राप्तराज्याभिषेकमङ्गलैः स्थिरीकरणं कृतिः ।

---

## विवृतिः

लब्धैरर्थैः शमनं शोकादिनाशनम् । स्थिरीकरणं शोकादिकृतास्थैर्यादिनाशनम् ।

## विज्ञप्रिया

कृतिरूपमङ्गमाह—लब्धानुगमनमिति । अनुगमनं स्थिरीकरणम् । अभिषेकं धारयन्तः प्रापयन्तः । धारयन्तीति क्वचित् पाठः ।

## कुसुमप्रतिमा

लब्धार्थेति । लब्धार्थेन उपलब्धविषयेण ज्ञातविषयेणेति यावत् शमनं शोकादिनिवारणं शोकादिं निवार्य्य मनसः स्थिरीकरणमित्यर्थः कृतिर्नामाङ्गम्, कृतिः करणं स्थिरीकरणमिति व्युत्पत्तेः ।

यथेति । अभिषेकमभिधेकसामग्रीं धारयन्त उपसंगृह्णन्तः ।

लक्ष्ये लक्षणं योजयितुमाह अनेनेति । प्राप्तराजस्येति स्वम्बन्धे षष्ठौ, प्राप्तराज्ये इत्यर्थः । स्थिरीकरणं राज्यप्राप्तिज्ञापनेन हृदयस्य स्थैर्य्यजननम् ।

## विमला

कृतिमाह, लब्धेति ।—लब्धस्य—प्राप्तस्य, अर्थस्य—विषयस्य, आगमनं—प्राकाश्येन स्थिरीकरणं, ["लब्दार्थशमनम्" इति पाठे—लब्दैरर्थैः शमनं—शोकादिनाशनमित्यर्थः] कृतिः ।

अनेनेति ।—स्थिरीकरणं—शोकादिकृतास्थैर्य्यादिनाशनमित्यर्थः ।

## लक्ष्मी

कृतिरूपमङ्गं लक्षयति—लब्धार्थेति । लब्धैरर्थैः उपलब्धविषयैरित्यर्थः शमनं शोकादि नाशनं शोकादिं निवार्य चेतसः स्थिरीकरणमित्यर्थः, कृतिर्नामाङ्गं स्यात् ।

उदाहरति—यथेति । अभिषेकम् अभिषेकसामग्रीं धारयन्तः प्रापयन्तः । धारयन्तीति क्वचित् पाठः । लक्ष्ये लक्षणं सङ्गमयितुमाह—अनेनेति । प्राप्तराज्यस्येत्यस्य प्राप्तराज्ये इत्यर्थः । षष्ठी तु सम्बन्धे । स्थिरीकरणं राज्यलाभसूचनेन चेतसः स्थैर्योत्पादनम् । अन्ये पुनरस्य स्थाने प्राप्तस्त प्रतिकूल्यशमनं द्युतिमाहुः । यथा मुद्राराक्षसे—'चाणक्यः—अमात्यराक्षस ! अपीष्यते चन्दनदासस्य जीवितम्' इत्यादिना 'का गतिरेष गृह्णामि' इत्यनेन लब्धस्य राक्षसस्य साचिव्यग्रहणावामताप्रशमनात् द्युतिः ।

## रुचिरा

कृतिं लक्षयति—४४० **लब्धेत्यादिना**।

४४० **अर्थे** प्रयोजने। **लब्धे** सिद्धे सति। **शमनं** शान्तिः। **कृतिः** ॥। ४०८ ॥

उदाहरति—**यथा**। **वेणीसंहारे** षष्ठेऽङ्के। **कृष्णः** 'युधिष्ठिरं प्रत्याहे' ति शेषः। स्पष्टामन्यत्। अत्र कृष्णः—महाराज युधिष्ठिर ! व्यासोऽयं भगवानमी च मुनयो वाल्मीकिरामादयो धृष्टद्युम्नमुखाश्च सैन्यपतयो माद्रीसुताधिष्ठिताः। प्राप्ता मागधमत्स्ययादवकुलैराज्ञाविधेयैः समं स्कन्धोत्तम्भिततीर्थवारिकलशा राज्याभिषेकाय ते। इति प्रायः। पाठः स्पष्टश्चार्थः।

**शुश्रूषादिः प्रसादः स्याद्—**

यथा तत्रैव भीमेन द्रौपद्याः केशसंयमनम् ।

---

## विवृतिः

'विस्मृतमेनं व्यापारं नाथस्य प्रसादेन पुनरपि शिक्षिष्ये ।' इति संस्कृतम् । एनं व्यापारं केशसंयमनरूपम् ॥

## विवृतिपूर्तिः

शुश्रूषादिरिति । तदुक्तं भरतेन—'शुश्रूषाद्युपसंपन्ना प्रसादः प्रीतिरुच्यते ।' इति ॥

## कुसुमप्रतिमा

श्वश्रुषेति । हस्तादिना परिचर्य्या शुश्रुषा आदिशब्दाच्चामरव्यजनादिश्च प्रसादौ नामाङ्गं स्यात्, प्रसीदत्यनेनेति व्युत्पत्तेः ।

## विमला

प्रसादमाह, शुश्रूषादिपरिति ।—शुश्रूषादिः,—सेवादिः, प्रसादः स्यात् ।

## लक्ष्मी

प्रसादरूपमङ्गं लक्षयति—शुश्रूषादितरिति । शुश्रूषा करादिना सेवा आदिपदाच्चामरव्यजनादिश्च, प्रसीदत्यनेनेति प्रसादो नामाङ्गं स्यात् । उक्तं च भरतेन—'शुश्रूषाद्युपसंपन्ना प्रसादः प्रीतिरुच्यते' इति । मन्दारमरन्देऽपि—'स्नाच्छुश्रूषादिसम्भूता प्रसादस्तु प्रसन्नता' इति ।

उदाहरति—यथेति । स्पष्टम् । यथा वा रत्नावल्याम्—'देव ! क्षम्यताम्' इत्यादि ।

## रुचिरा

प्रसादं लक्षयति—४४१ **शुश्रूषादिरित्यादिना** ।

४४१ **शुश्रूषादिः** शुश्रूषा आदिर्यत्र (तदनुकूलकर्ममात्रे) सः । **प्रसादः** । **स्यात्** ।

लक्ष्यं दर्शयति—**यथा तत्र** वेणीसंहारे षष्ठेऽङ्के । **एव** । **भीमेन** भीमकर्तृकम् । **द्रौपद्याः** । **केशसंयमनं** केशानां दुर्योधनरुधिरेणाभिषिच्य बन्धनम् ।

**आनन्दो वाञ्छितागमः ।**

यथा तत्रैव—'द्रौपदी—विसुमरिदं एदं वावारं णाधस्स पसादेण पुणो वि सिक्खिस्सम् ।'

**समयो दुःखनिर्याणं—**

यथा रत्नावल्याम्—'वासवदत्ता—(रत्नावलीमालिङ्ग्य ।) समस्सस बहिणीए, समस्सस ।'

---

## विवृतिः

'समाश्वसितु भगिनी समाश्वसितु ।' इति संस्कृतम् ॥

## विवृतिपूर्तिः

दुःखेति । दुःखस्य निर्याणमपगमः ॥

## विज्ञप्रिया

आनन्दरूपाङ्गमाह—आनन्द इति । विसुमरिदं इति । विस्मृतमिमं व्यापारं नाथस्य प्रसादेन पुनरपि शिक्षिष्ये इति संस्कृतम् । व्यापारः केशसंयमनरूपः ।

समयरूपमङ्गमाह—समय इति । समस्सस इति । समाश्वसिहि भगिनि ! समाश्वसिहीति संस्कृतम् । इयं सागरिकायाः मातुलकन्यकात्वेन परिचये सति वासवदत्ताया उक्तिः ।

## कुसुमप्रतिमा

आनन्द इति । वाञ्छितागमः प्रार्थितमप्राप्तिजन्या प्रीतिः आनन्दो नामाङ्गंस्यात् ।

यथेति । "विस्मृतमेतं व्यापार नाथस्य प्रसादेन पुनरपि शिक्षिष्ये ।" इति संस्कृतानुवादः । व्यापारं केशबन्धनम् । प्रसादेन बन्धनरूपेण ।

अत्र वेणीबन्धनरूपवाञ्छितलाभजन्यप्रीतेरानन्दः ।

समय इति । दुःखस्य निर्याणम् अवसानं समयो नामाङ्गं स्यात् । सुसमय एव दुःखनिर्याकसम्भवात् समय इति संज्ञा ।

यथेति । "समाश्वसिहि भगिनि ! समाश्वसिहि ।" इति संस्कृतानुवादः । अत्र रत्नावल्या विरहदुःखनिर्याणात् समयः ।

## विमला

आनन्दमाह, आनन्द इति ।—वाञ्छितस्य—अभीष्टस्य, आगमः,—तज्जनिता प्रीतिरिति भावः, आनन्दः ।

उदाहरति, यथेति ।—[विस्मृतमेतं व्यापारं, नाथस्य प्रसादेन पुनरपि शिक्षिष्ये" इति संस्कृतम् ।] एतं व्यापारं—केशबन्धनकार्य्यमित्यर्थ ।

समयमाह, समय इति ।—दुःखस्य निर्याणम्—अपगमः, समयः ।

समस्मसेति ।—[“समाश्वसिद्धि भगिनि ! समाश्वसिद्धि” इति संस्कृतम ।]

## लक्ष्मी

आनन्दरूपमङ्गं लक्षयति—आनन्द इति । वाञ्छितागमः अभिलषितप्राप्तिजन्या प्रीतिः आनन्दो नामाङ्गं भवेत् । तदुक्तं भरतेन—‘समागमस्तु योऽर्थानामानन्दः स तु कीर्त्तितः’ इति । मन्दारमरन्देऽपि—‘अभीप्सितार्थ-संप्राप्तिरानन्दः परिकीर्त्तितः’ इति.

उदाहरति—यथेति । ‘विस्मृतमेनं व्यापारं नाथस्य प्रसादेन पुनरपि शिक्षिष्ये’ इति संस्कृतम् । एनं व्यापारं केशसंयमनरूपम् । प्रसादेन बन्धनरूपेण ।

अत्र वेणीसंयमनरूपाभिलाषितप्राप्तिजन्यप्रीतिरानन्दः यथा च रत्नावल्याम्—‘राजा—यथाह देवि ! इति (रत्नावलीं गृह्णाति) । अत्रेप्सितरत्नावलीप्राप्तत्वादानन्दः ।

समयरूपमङ्गं लक्षति—समय इति । दुःखस्य निर्याणम् अपगमः विसर्जनमिति यावत् । समयो नामाङ्गं भवेत् । मन्दारमरन्दे तु—‘समयः स्यात्सुखावाप्तिर्दुखप्रशनं च वा’ इति ।

उदाहरति—यथेति । ‘समाश्वसिहि भगिनि ! समाश्वसिहि ।’ इति संस्कृतम् । इयं सागरिकायाः मातुलकन्यकात्वेन परिचये सति वासवदत्ताया उक्तिः । अत्र रत्नावल्या दुःखापगमात् समयः ।

## रुचिरा

आनन्दं लक्षयति—४४२ **आनन्द** इत्यादिना । स्पष्टम् ।

४४२ उदाहरति—**यथा** । तत्र वेणीसंहारे षष्ठाङ्के । **एव** । **‘द्रौपदी** ‘भीमं प्रत्याहे’ति शेषः । **णाह नाथ !’** **एदं** एनम् । केशसंयमनरूपम् । **विसुमरिदं** विस्मृतम् । **वावारं** व्यापारम् । **णाहस्स** नाथस्य । **पसादेण** प्रसादेन प्रसन्नतयेति यावत् । **पुणोबि** पुनरपि । **सिक्खिस्सं** शिक्षिष्ये । एतावन्तं कालं केशा न मया बद्धा अतस्तद्बन्धनं विस्मृतम् । अथैनं तद्व्यापारं निरूप्य भवान् दर्शयतु—अथाहं प्रत्यभिज्ञास्यगीति भावः । अत्र द्रौपद्या अभिलषितार्थलाभः ।

समयं लक्षयति—४४३ **समय** इत्यादिना ।

४४३ **दुःखनिर्याणं** दुःखस्य निर्याणं विसर्जनम् । **समयः** ।

उदाहरति—**यथा रत्नवल्यां** चतुर्थेऽङ्के । **‘वासवदत्ता (रत्नावलीमालिङ्ग्य आहेति शेषः ।) वहिणि** भगिनि ! **समस्ससिहि** समाश्वसिहि । **समस्ससिहि** समाश्वसिहि ।’

**तद्भवेदुपगूहनम् ॥ ११२ ॥**

**यत्स्याददद्भुतसंप्राप्तिः—**

यथा मम प्रभावत्यां नारददर्शनात्प्रद्युम्न ऊर्ध्वमवलोक्य—

**'दधद्विद्युल्लेखामिव कुसुममालां परिमल-**

**भ्रमद्भृङ्गश्रेणीध्वनिभिरुपगीतां तत इतः ।**

**दिगन्तं ज्योतिर्भिस्तुहिनकरगौरैर्धवलय-**

**न्नितः कैलासाद्रिः पतति वियतः किं पुनरिदम् ॥'**

---

## विज्ञप्रिया

उपगूहनरूपमङ्गमाह—तद्भवेदिति। अद्भुतसंप्राप्तिः अद्भुतदर्शनम्। दधदित्यादि। कैलासाद्रेरित्यपाये पञ्चमी। तथा च कैलासाद्रेरपेतो वियतो वियतोऽवधेः पतति कश्चित् पदार्थ इति शेषः। कैलासाद्रिरिति क्वचित् प्रामादिकः पाठः। तस्य कुसुममालाधारणाभावात्। कीदृशः पदार्थः? विद्युल्लेखामिव कुसुममालां दधत्। मालां कीदृशीं? परिमलेन तत इतो भ्रमन्तीनां भृङ्गश्रेणीनां ध्वनिभिरुपगीताम्। पदार्थश्च कीदृशः? तुहिनकरगौरैर्ज्योतिर्भिर्दिगन्तं शबलयन्। दिगन्तस्यापि श्यामत्वेन धवलज्योतिर्मिश्रणात् शवलता। अतः किं पुनरिदमित्यर्थः।

## कुसुमप्रतिमा

तदिति। यत् अद्भुतस्य सम्प्राप्तिरुपलब्धिः स्यात्, तदुपगूहनं नामाङ्गं भवेत्, उपगूहन मालिङ्गनं बुद्ध्या अद्भुतप्राप्तिरिति व्युत्पत्तेः।

दधदिति. परिमलेन गन्धेन भ्रमन्त्या भृङ्गश्रेष्ठा भ्रमरसमूहस्य ध्वनिभिः उपगीतामुपशब्दिताम्, तथा विद्युल्लेखामिव उज्ज्वलामिति शेषः, कुसुममालां दधत् धारयन् यथा तुहिनकरगौरै रुन्द्रतुल्यशुभ्रवर्णैः ज्योतिर्भः शरीरद्युतिभिः तत इतः सर्वतः दिगन्तं दधवलयन् धवलीकुर्वन् कैलासाद्रिः वियती गमनात् इतः अस्मिन् देशे पतति। इदं पुनः किमाश्चर्य्यमित्यर्थः।

अत्र प्रद्युम्नस्य अद्भुतप्राप्तेरुपगूहनम्।

## विमला

उपगूहनमाह, तदिति।—यत् अद्भुतस्य—आश्चर्यस्य, सम्प्राप्तिः,—समागमः तत् उपगूहनं भवेत्।

उदाहरति, यथेति। दधदिति।—परिमलेन—सौरभेण हेतुना, भ्रमता—सञ्चरतां, भृङ्गाणां याः श्रेण्याः,—समूहाः, तासां ध्वनिभिः,—गुनगुनस्वनेः, उपगीता—शब्दितां, विद्युल्लेखामिव—तडित्पुञ्जमिव, कुसुममालां—पुष्पमालां, दधत्—धारयन्, तत् इतः,—समन्तात्, तुहिनकरः,—चन्द्र, तद्वत् गौरैः,—शुभ्रैः ज्योतिर्भिः,—देहप्रभाभिः,

दिगन्तं—दिशां पर्य्यन्तं, धवलयन्—श्वेतोकुर्व्वन्, वियतः,—आकाशात, इतः,—अस्मिन् प्रदेशे, कैलासाद्रिः, पतति ! ! इदं पुनः किम् ?—आश्चर्य्यमेतदित्यर्थः अत्र अद्भुतप्रतिपत्तिः । शिखरिणी वृत्तम् ।

## लक्ष्मी

उपगूहनरूपमङ्गं लक्षयति—तद्भवेदिति । यत् अद्भुतस्य विस्मय स्थायिभावात्मकाद्भुतरसस्य संप्राप्तिः उपलब्धिः तत् उपगूहनं नामाङ्गं भवेत् ।

उदाहरति—यथेति । ऊर्ध्वम् आकाशे, अवलोक्य अवतरन्तं नारदमिति शेषः ।

दधद्विद्यदिति । परिमलेन पुष्पविमर्दनादुत्थितसुगन्धेन 'विमर्द्दोत्थे परिमलो गन्धो जनमनोहरे' इत्यमरः, भ्रमन्तीनां भृङ्गश्रेणीनां भ्रमरपंक्तीनाम् 'वीथ्यालिरावलिः पंक्तिः श्रेणीलेखास्तु राजयः' इत्यमरः, ध्वनिभिः झंकृतिभिः उपगीताम् उपशब्दिताम्, तथा विद्युल्लेखामिव विद्युतपंक्तिमिव देदीप्यमानामिति शेषः, कुसुममालां पुष्पमयीमालां, दधत् धारयन्, तथा तुहिनकरगौरः शशीतुल्यस्वच्चवर्णैः ज्योतिर्भिः शरीरकान्तिभिः तत इतः सर्वतः दिगन्तं धवलयन् वलक्षयन् कैलासाद्रेरपेतो वियत आकाशादवधेः पतति कश्चित्पदार्थ इति शेषः । कैलासाद्रेरित्यपाये पञ्चमी कैलासाद्रिरिति प्रामादिकः पाठः, तस्य कुसुममालाधारणाभावात् । इदं पुनः किमाश्चर्यमित्यर्थः । शिखरिणी-च्छन्दः । अत्र नारदस्याद्भुतप्राप्ते रूपगूहनम् ।

## रुचिरा

उपगूहन लक्षयति—४४४ **तद्भवेदित्यादिना** ।

४४४ **यत्** यतः । **अद्भुतसम्प्राप्तिरद्भुतार्थलाभः** । **स्यात्** । **तत्** । **उपगूहनम्** । **भवेत्** ॥ ४०९ ॥

उदाहरति—**यथा** । **मम** । **प्रभावत्यां** नाटिकायाम् । **नारददर्शनात्** । **प्राक्** प्रथनम् । **प्रद्युम्नः** (ऊर्ध्वमाकाशे । **अवलोक्य** अवतरन्तं 'नारद'मिति शेषः) **विद्युल्लेखामिव** विद्युतपङ्क्तिमिव । **परिमलभ्रमद्भृङ्गश्रेणी ध्वनिभिः** परिमलः पुष्पाणां विमर्दनादुत्थितो यः सुगन्धस्तेन तल्लोभेन भ्रमन्तो ये भृङ्गा भ्रमरास्तेषां श्रेणी तस्याः ध्वनयो झङ्कतयस्तैः । **उपगीताम्** । **कुसुममालां** पुष्पमयीं मालाम् । **दधत्** । **इत** इतः । **तुहिनकरगौरैः** तुहिनकरश्चन्द्रस्तद्वद्गौराणितैः **उपगीताम्** । **कुसुममालां** पुष्पमयीं मालाम् । **दधत्** । **इत** इतः । **तुहिनकरगौरैः** तुहिनकरश्चन्द्रस्तद्वद्गौराणि तैः । **ज्योतिर्भिः** **दिगन्तम्** । **धवलयन्** **अयम्** **कैलासाद्रिः** कैलासपर्वतः । **इतो**ऽस्मात् । **वियत** आकाशात् । **किम्** पुनः किन्नुः । **पतति** ॥ ३८० ॥'

**सामदानादि भाषणम्।**

यथा चण्डकौशिके—'धर्मः—तदेहि धर्मलोकमधितिष्ठ।'

---

## विवृतिः

तदेहीति प्रियवाक्यं धर्मलोकस्य दानं च॥

## विवृतिपूर्तिः

सामेति। महर्षिणाप्युक्तम्—'सामदानादिसंपन्नं भाषणं समुदाहृतम्।' इति॥

## विज्ञप्रिया

भाषणरूपमङ्गमाह—सामदानेति। सम्प्रदानस्य शान्तत्वं साम तेन दानम्। आदिपदाद् दातुर्मुक्तिर्वा इति। यत्तु संग्रहरूपस्य गर्भसन्ध्यङ्गस्य सामदानार्थसम्पत्तिरिति लक्षणम्, तत्र दातुरेव सामप्रीतिरर्थश्च धनमीति भेदः। धर्म लोकं धर्म्मार्जितं लोकम्।

## कुसुमप्रतिमा

सामेति। साम सन्तोषकरं वाक्यं दानादि च भाषणं नामाङ्गं भवेत्. अत्र व्युत्पत्तिः स्पष्टा.

यथेति। अत्र सन्तोषकरवाक्याद्भाषणम्।

## विमला

भाषणमाह, सामेति।—साम—प्रियभाषणं, दानादि च, तत् भाषणम्। भरतेनाप्युक्तम्;—"सामदानादि-सम्पन्नं भाषणं समुदाहृतम्" इति।

उदाहरति, यथेति।—स्पष्टम्. अत्र एहीति धर्म्यस्यं प्रियवाक्यं, धर्म्म शोकमाधितिष्ठ इति धर्म्मलोकस्य दानञ्च।

## लक्ष्मी

भाषणरूपमङ्गं लक्षयति—सामदानेति। साम सन्तोषजनकं वचनं दानादि च आदिपदेन प्रियहितादिपरिग्रहः भाषणं नामाङ्गं स्यात्।

उदाहरति—यथेति। स्पष्टम्। अत्र तदेहीति सन्तोषजनकवचनाद् धर्मलोकस्य दानाञ्च भाषणम्।

## रुचिरा

भाषणं लक्षयति—४४५ **सामेत्यादिना**। स्पष्टम्।

४४५ उदाहरति—**यथा। चण्डकौशिक** पञ्चमाङ्के। '**धर्म्मः** 'हरिश्चन्द्रं प्रत्याहे'ति शेषः। स्पष्टमन्यत्। तदेहि धर्मलोकमधितिष्ठेति पाठस्तु ग्रन्थानवलोकभूतः।

⟷

**पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थोपदर्शनम् ॥ ११३ ॥**

यथा वेण्याम्—'भीमः—बुद्धिमतिके, क्व सा भानुमती । परिभवतु संप्रति पाण्डवदारान् ।'

---

## विवृतिः

बुद्धिमतीत्यादि दुर्योधनपत्न्योक्तं भीमेनोपदर्शितम् ॥ सर्वत्र नाटकादौ ।

## विज्ञप्रिया

पूर्ववाक्यरूपमङ्गमाह—पूर्ववाक्यं त्विति । यथोक्तार्थोपदर्शनम् परेण यथोक्तकटुवाक्यस्य स्मरणमित्यर्थः । भानुमती दुर्य्योधनस्य पत्नी तया दासीद्वारा प्राक् कटूक्तिः कृता ।

## कुसुमप्रतिमा

पूर्वेति । यथोक्तस्य उक्तानुरूपस्य अर्थस्य विषयस्य उपदर्शनं प्रदर्शनन्तु पूर्ववाक्यं नामाङ्गं विज्ञेयम् । पूर्ववाक्याश्रितत्वात् पूर्ववाक्यमिति संज्ञा ।

यथेति । भानुमती दुर्य्योधनभार्य्याः । अत्र "मथ्नामि कौरवशतं समरे न कोपात् ?" इत्याद्युक्तानुरूपस्य भानुमतीकर्तृक-पाण्डवदारपरिभवासम्भवरूपार्थस्य प्रदर्शनात् पूर्ववाक्यम् ।

## विमला

पूर्ववाक्यमाह, पूर्ववाक्यमिति—यथोक्तस्य अर्थस्य उपदर्शनं—समुचितोत्तरदानं, पूर्ववाक्यं विज्ञेयम् ।

उदाहरति, यथेति ।—भानुमती—दुर्य्योधनपत्नी । पूर्वं भानुमत्या पाञ्चालो प्रति परिहसितम्, इदानीं दुर्य्योधने निहते भीमसेनेन तस्य प्रत्युत्तरमभिहितम् ।

## लक्ष्मी

पूर्ववाक्यरूपमङ्गं लक्षयति—पूर्ववाक्यन्त्विति । यथोक्तार्थोपदर्शनं परेण यथोक्तकटुवाक्यस्य स्मरणं मुखसन्ध्याद्युक्तवाक्यदर्शनं वा पूर्ववाक्यं नामाङ्गं विज्ञेयम् । उक्तं च महर्षिणा-'पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थप्रदर्शनम्' इति ।

उदाहरति—यथेति । बुद्धिमतिके ! (एतदाख्येयं चेटी) भानुमती दुर्योधनस्य पत्नी तया दासीद्वारा प्राक् कटूक्तिः कृतेति पूर्ववाक्यम् ।

## रुचिरा

पूर्ववाक्यं लक्षयति—४४६ पूर्ववाक्यमित्यादिना ।

**४४६ यथोक्तार्थोपदेशनं यथोक्तार्थस्य ज्ञापनम्। तु पूर्ववाक्यं। विज्ञेयम्॥ ४१०॥**

उदाहरति—**यथा। वेणीसंहारे। षष्ठाङ्के। 'भीमः...बुद्धिमतिके?** (तदाख्येयं चेटी)। **सा भानुमती दुर्योधनभार्या। क्व कुत्रास्ते। सम्प्रति। पाण्डवदारान्। परिभवतु** अत्र हि भानुमतीकर्तृकस्य द्रौपदीपरिभवस्य भीमकर्तृकं ज्ञापनम्।

**वरप्रदानसंप्राप्तिः काव्यसंहार इष्यते ।**

यथा सर्वत्र—'किं ते भूयः प्रियमुपकरोमि ।' इति ।

---

## विज्ञप्रिया

काव्यसंहाररूपमङ्गमाह—वरप्रदानेति । वरप्रदानार्थं संप्राप्तिस्तत्कालोपस्थितिरित्यर्थः । सर्वत्रेति । सर्वनाटकान्ते इत्यर्थः । किन्ते इत्यादिना हि वरप्रदानार्थं तत्कालोपस्थितिर्लभ्यते ।

## कुसुमप्रतिमा

वरेमि । वरप्रदानस्य अभीष्टविषयदानेच्छायाः सम्प्राप्तिरुपस्थितिः प्रतीतिरिति यावत् काव्यसंहारो नामाङ्गम् इष्यते, तत्र तत्रैव तत्तद्दृश्यकाव्यस्योपसंहारात् ।

यथेति । सर्वत्र प्रायेण दृश्यकाव्ये । अत्र ग्रहोत्रे अभीष्टविषयदाने वक्तुरिच्छाया प्रतीत्या काव्यसंहारः ।

## विमला

काव्यसंहारमाह, वरेति ।—वरस्य—अभीष्टस्य, यत् प्रदानं तस्य सम्प्राप्तिः, काव्यस्य संहार इष्यते ।

उदाहरति, यथेति ।—सर्वत्र—नाटकप्रभृतिषु ।

## लक्ष्मी

काव्यसंहाररूपमङ्गं लक्षयति—वरप्रदानेति । वरप्रदानस्य अभिलषितविषयदानेच्छायाः सम्प्राप्तिरुपस्थितिः तत्र सति सर्वस्मिन्नेवेप्सिते सम्पन्ने प्रस्तुतकाव्यमेव संह्रियत इति काव्यसंहारो नामाङ्गम् इष्यते । मन्दारमरन्दे—'उपसंहार इत्युक्तः कार्यार्थस्योपसंहृतिः' इति ।

उदाहरति—यथेति । सर्वत्रेति प्रायेण दृश्यकाव्ये । स च प्रतिगृहीते वरेऽप्रतिगृहीते च वरे काव्योपसंहारः यथा कृत्यारावणे—सीतारक्षणे रामस्य प्रिये हिते च महति कर्मणि कृतेऽप्यसन्तुष्यन्नग्निराह—'वत्स ! उच्यतां किं ते भूयः प्रियमनुकरोमि' 'रामः भगवन् ! अतः परमपि प्रियमस्ति ?' इति ।

## रुचिरा

काव्यसंहारं लक्षयति—४४७ **वरप्रदानेत्यादिना** । स्पष्टमन्यत् ।

प्रशस्तिं लक्षयति—४४८ **नृपेत्यादिना** ।

**नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते ॥ ११४ ॥**

यथा प्रभावत्याम्—

**'राजानः सुतनिर्विशेषमधुना पश्यन्तु नित्यं प्रजा**

**जीयासुः सदसद्विवेकपटवः सन्तो गुणग्राहीणः ।**

**सस्यस्वर्णसमृद्धयः समधिकाः संन्तु क्षमामण्डले**

---

## विवृतिः

नृपदेशादीत्यादिना विद्वद्ब्राह्मणादीनां ग्रहणम् । शान्तिरनिष्टनिवारणमिष्टप्राप्तिश्च ॥

## विज्ञप्रिया

प्रशस्तिरूपमङ्गमाह—नृपदेशादीति ।, नृपस्य देशादेः शान्तिः स्वस्त्ययनमाशीर्वाद इत्यर्थः । राजान इत्यादि । अधुना सुतनिर्विशेषं यथा स्यात् तथा राजानः प्रजाः पश्यन्तु । गुणग्राहिणः सन्तः शिष्टा जीयासुः उत्कर्षभाजो भवन्तु, यतस्ते सदसद्विवेकपटवः । क्षमामण्डले शस्यानां सुवर्णानाञ्च समृद्धयः समधिकाः सन्तु । नारायणे चाव्यभिचारिणी अकादाचित्की भक्तिः । त्रिजगतां भूयादिति नृपदेशादिशान्तिः । अत्र चेति—काव्यसंहाररूपमङ्गोपसंहारः । अन्ते नाटकान्ते उपसंहारप्रशस्त्योर्निर्दिष्टक्रमणैवोपस्थितिरित्यर्थः ।

## कुसुमप्रतिमा

नृपेति । नृपस्य देशस्य आदिशब्दादेवताादीनाञ्च शान्तिः शान्तिविधानशसा प्रशंस्तिर्नामाङ्गमभिधीयते, प्रशस्तिः प्रशंसा उक्तिरिति व्युत्पत्तेः । सम्बन्धस्य सामान्यरूपत्वात् नृपस्येत्यादि कर्त्तृत्वसम्बन्धषष्ठ्याः देशस्येति च अधिकरणत्वसम्बन्धषष्ठ्याः समास इति नानुपपत्तिः ।

राजान इति । अधुना राजानः नित्यं सर्वदैव प्रजा जनान् सुतनिर्विशेषं पश्यन्तु; सदद्विवेके पटवः समर्थाः गुणग्राहिणश्च सन्तो जनाः जीयासुः सर्वोत्कर्षेण वर्त्तन्ताम्; क्षमामण्डले भूमण्डले समाधिकाः शस्यानां स्वर्णानाञ्च समृद्धयः सन्तु । अत्र स्वर्ण पदं धनसामान्योपलक्षणम् ! त्रिजशंतस्विजगहासिनी जनस्य नारायणे अन्यभिचारिणी चिरस्थायिनौ भक्तिश्च भूयात् ।

## विमला

प्रशस्तिमाह, नृपेति ।—नृपस्य देसादेश्च, [अत्रादिपदेन विद्वद्ब्राह्मणादीनां ग्रहणम्] । शान्तिः,—अनिष्टवाारणमिष्टप्राप्तिश्च, प्रशस्तिः अभिधीयते । साहित्यकौमुदीकाराः पण्डितराजास्तु—"प्रशंसनं प्रसस्तः स्याद् यशसः पृथिवीभृताम्" इत्याहुः ।

उदाहरति, राजान इति ।—अधुना—साम्प्रतं, राजानः सुतनिर्विशेषं,—पुत्रवदित्यर्थः, प्रजाः,—लोकान् ("प्रजा लोके च सन्ताने" इति मेदिनी) नित्यं—सततं, पश्यन्तु—अवलोकयन्तु, सदसतां विवेके पटवः,—समर्थाः, गुणग्राहिणः सन्तः,—साधवः, जीयासुः,—जययुक्ता भूयासुः, क्षमामण्डले—पृथिवीतले, समधिकाः,—प्रचुराः,

शस्यानां स्वर्णानाञ्च समृद्ध्यः;—सम्पदः, सन्तु—भवन्तु, तथा त्रिजगतः;—तिलोक्याः, नारायणे—परमात्मनि, अव्यभिचारिणी—अचला, भक्तिः भूयात् शार्दुलविक्रीड़ितं वृत्तम् ।

## लक्ष्मी

प्रशस्तिरूपाङ्गं लक्षयति—नृपादेशादीति । नृपस्य, देशस्य, आदिपदाद्देवतादीनां च शान्तिः स्वस्त्ययनम् आशीर्वाद इत्यर्थः, प्रशंसा उक्तिः प्रशस्तिर्नामङ्गम् अभिधीयते । नृपस्येति देशस्येति च कर्त्तृत्वसम्बन्धषष्ठ्याः अधिकरणत्वसम्बन्धषष्ठयाश्च समासो ज्ञेयः । मन्दारमरन्देऽपि—'शुभप्रशंसनं धीरैः प्रशस्तिरिति कथ्यते' इति ।

उदाहरति—यथेति । राजान इति । अधुना राजानः नित्यं सर्वदैव प्रजाः जनान् 'प्रजाः स्यात् सतन्तौ जने' इत्यमरः । सुतनिर्विशेषं पुत्रानिवेति तात्पर्यम्, यथा स्यात्तथा पश्यन्तु । सदसद्विवेके पटवः समर्थाः गुणग्राहिणः परेषां दोषानगृहीत्वा गुणान् ग्रहीतारः सन्तः, शिष्टा जना जीयासुः जयन्तु उत्कर्षभाजो भवन्त्वित्यर्थः । क्षमामण्डले पृथ्वीमण्डले शस्यानां धान्यानां स्वर्णानां सुवर्णानां च समृद्धयः सम्पदः समधिकाः सन्तु । स्वर्णानामितिपदमुपलक्षणं तेन धनसामान्यस्य ग्रहणम् । नारायणे परमात्मनि त्रिजगतो भुवनत्रयवासिनो जनस्य अव्यभिचारिणी अनैकान्तिकी अकदाचित्कीत्यर्थः, भक्तिश्च भूयात् । भक्तिर्नाम—

**द्रुतस्य भगवद्धर्माद्धारावाहिकतां गतः ।**
**सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते ॥**

शाद‍्र्दूलविक्रीडितं छन्दः अत्र नृपादेशादिशान्त्यादेराशंसनात् प्रशस्तिः ।

## रुचिरा

४४८ **नृपदेशादिशान्तिः** नृपाणां राज्ञां देशानां प्रजानां च निरुपद्रुततया भवनमिति भावः । **तु** । **प्रशस्तिः** । **अभिधीयते** । इयं च गर्भसन्ध्यङ्गभूतां प्रार्थनामस्वीकुर्वद्भिरेव मतेति बोध्यम् ॥ ४११ ॥

उदाहरति—**यथेत्यादिना** ।

**यथा** । **मम** । **प्रभावत्याम्** । **भरतवाक्यम्** । '**राजानः** । **अधुना** । **सुतनिर्विशेषं** सुतेभ्यो निर्विशेषम् । निर्गतो विशेषो यत्र (कर्मणि) तन्निर्विशेषम् । पुत्रानिवेति भावः । **प्रजाः** । **नित्यम्** । **पश्यन्तु** । **सदसद्विवेकपटवः** । सन्तश्चासन्तस्तेषां विवेकस्तत्र पटवश्चतुराः । अत एव—**गुणग्राहिणः** परेषां दोषानगृहीत्वा गुणान् ग्रहीतार इति भावः । अत एव—**सन्तः** । **जीयासुर्जयन्तु** । **क्षमामण्डले** पृथ्वीमण्डले । **समधिका** अत्यन्तमुन्नताः । **सस्यस्वर्ण-समृद्धयः** । सस्यानि धान्यादिक्षेत्राणि स्वर्णानि चेति तेषां समृद्धयः । **सन्तु** । **त्रिजगतस्त्रिलोक्याः** । **भक्तिः** । **च** । **नारायणे** परमात्मनि । **अव्यभिचारिणी** कामं निरता । **भूयात्** । शार्दूलविक्रीडितं वृत्तम् ॥ ३८१ ॥' यद्यपि रूपके सन्ध्यङ्गानां न स्थितिनियमः किन्तु काव्यसंहारप्रशस्त्योरन्ते निर्वेशनियम एवेत्याह—**अत्रेत्यादिना** । **स्पष्टम्** ॥

**भूयादव्यभिचारिणी त्रिजगतोभक्तिश्च नारायणे ॥'**

अत्र चोपसंहारप्रशस्त्योरन्त एकेन क्रमेणैव स्थितिः । 'इह च मुखसंधौ उपक्षेपपरिकरपरिन्यासयुक्त्युद्भेदसमाधानानां, प्रतिमुखे च परिसर्पणप्रगमनवज्रोपन्यासपुष्पाणां, गर्भेऽभूताहरणमार्गत्रो (तो) टकाधिबलक्षेपाणां, विमर्शेऽपवादशक्तिव्यवसायप्ररोचनादानानां प्राधान्यम् । अन्येषां च यथासंभवं स्थितिः ।' इति केचित् ।

---

## विवृतिः

इह चेति । निर्वहणे चेत्यर्थः । तयोः काव्यसंहारप्रशस्त्योः । 'प्राधान्यम्' इत्यग्रेणान्वयः । एवमग्रेऽपि । प्राधान्यख्यापनमं तत्तदङ्गानामावश्यकस्थित्यर्थम् ॥

## विवृतिपूर्तिः

सस्येति । सस्यानां स्वर्णानां च समृद्धयः संपदः ॥

अव्यभिचारिणीति । अव्यभिचारिणी निश्चला ॥

## विज्ञप्रिया

सन्धिषु यान्याङ्गान्युक्तानि तेषु कतिचित् अङ्गान्येव आवश्यकत्वेन प्रधानानीति केचिदाहुः । सन्धौ सन्धौ च तानि दर्शयति । इह चेति । केचिदिति अस्वरसः । सर्वेषामङ्गानामनियमे नानावश्यकत्वदर्शनादुपसंहारप्रशस्त्योरेवावश्यकत्वदर्शनात् ।

## विमला

इह चेति ।—निर्वहणे चेत्यर्थः । तयोः काव्यसंहारः प्रशस्त्योः "प्राधान्यम्" इत्यग्रेणान्वयः । एवमग्रेऽपि । प्राधान्यख्यापनं तत्तदङ्गानामावश्यकस्थित्यर्थम् ।

## लक्ष्मी

लक्ष्ये लक्षणं योजयितुमाह—अत्र चेति । काव्यसंहाररूपमङ्गोपसंहारः । अन्ते नाटकान्ते उसंहारप्रशस्त्योरेकेन निर्दिर्दष्टक्रमेणैव स्थितिरुपस्थितिरित्यर्थः ।

अत्राहुर्नाटयदर्पणकाराः—'सर्वसन्धीनां चाङ्गानीतिवृत्ताविच्छेदार्थमुपादीयन्ते । इतिवृत्तस्याविच्छेश्च रसपुष्टयर्थः । विच्छेदे हि स्थाय्यादेस्त्रुटितत्वात् कुतस्त्यो रसास्वादः? ततो रसविधानैकतानचेतसः कवेः प्रयत्नान्तरानपेक्षं यदङ्गमुज्जृम्भते तदेवोपनिबद्धं सहृदयानां हृदयमानन्दयति । अङ्गानि च स्थायिविभावानुभावव्यभिचारिरूपाणि द्रष्टव्यानि । अमीषां च स्वसन्धौ सन्ध्यन्तरे च योग्यतया निबन्धः । योग्यतां च रसनिवेशैकव्यवसायिनः प्रबन्धकवयो विदन्ति न पुनः शब्दार्थग्रथनवैचित्र्यमात्रोन्मदिष्णवो मुक्तकव्यः । तेनैकमप्यङ्गं रसपोष्कत्वादेकस्मिन्नपि सन्धौ द्विस्त्रिर्वा निबध्यते । यथा वेणीसंहारेसम्फेटविद्रवौ पुनः पुनर्दर्शितौ वीररौद्ररसा-

वुद्दीपयतः। रत्नावल्यां विलासः पुनः पुनरुक्तः श्रृङ्गारमुल्लासयति। अतः परमपि निबन्धस्तु वैरस्यमावहतीति। तथाङ्गद्वयेन साध्यं यदेकेनैव सिध्यति तदेकमेव निबध्ते। यथा श्रीभीमदेवसूनोर्वसुनागस्य कृतौ प्रतिमानिरुद्धे परिकरार्थस्योपक्षेपेणैव गतार्थत्वान्न तन्निबन्धः। एवमङ्गत्रयेणापि। यथा भेज्जलविरचिते राधाविप्रलम्भे रासकाङ्के परिकरपरिन्यासयोरुक्षेपेणैव गतार्थत्वान्न तन्निबन्धः' इति।

## रुचिरा

"**इहैषु** रूपकेषु मध्ये इति यावत्। **मुखसन्धौ** निरूप्यमाणे इति शेषः...**प्राधान्यमावश्यकत्वम्। अन्येषा**-मुपक्षेपादिभ्यो व्यतिरिक्तानां विलोभनादीनामिति भावः। स्पष्टमन्यत्।" **इति। च। केचित्। आहुः।**

एवं सन्ध्यङ्गानि निर्दिश्येषां सङ्ख्यानिर्देशपूर्वकं निवेशविधिं दर्शयति—**४४९ चतुः षष्ठिविधमित्या**-दिना।

**चतुःषष्टिविधं ह्येतदङ्गं प्रोक्तं मनीषिभिः ।**

**कुर्यादनियते तस्य संधावपि निवेशनम् ॥ ११५ ॥**

**रसानुगुणतां वीक्ष्य रसस्यैव हि मुख्यता ।**

यथा वेणीसंहारे तृतीयाङ्के दुर्योधनकर्णयोर्महत्संप्रधारणम् । एवमन्यत्रापि । यत्तु रुद्रटादिभिः 'नियम एव' इत्युक्तं तल्लक्ष्यविरुद्धम् ।

---

## विवृतिः

अनियत इति । अन्यसंधह्गस्य प्रकृतरसानुकूलस्यान्यसंधावपि निवेशनम् ।

संप्रधारणं युक्तिः । सा च मुखसंध्यङ्गम् ।

## विवृतिपूर्तिः

चतुरिति । द्वादशमुखाङ्गानि, त्रयोदश प्रतिमुखाङ्गानि, तावन्ति गर्भाङ्गानि, तावन्ति विमर्शाङ्गानि, तावन्त्येव निर्वहणाङ्गानि, संकलनया चतुः षष्टिरिति निर्वहणाङ्गभूतप्रशस्तिप्रत्याख्यानवादिनः । येषां मते प्रशस्तिसद्भावस्तत्र गर्भाङ्गभूतायाः प्रार्थनाया अस्वीकारः । एवं पक्षद्वयेपि चतुः षष्टिसंख्याकान्यङ्गानि ॥

## विज्ञप्रिया

चतुःषष्टिरिति । प्रार्थनाप्रशस्त्योर्मतभेदेन वैकल्पिकत्वस्योक्तत्वात् । समुच्चये तु पञ्चषष्टित्वापत्तेरित्युक्तं प्रागेव । सन्धीनामुक्तान्यङ्गानि । प्रायिकत्वाभिप्रायेणैवोक्तानि । रसानुगुणानुरोधेन तु एकसन्धेरङ्गानि अन्यसन्धावपि कुर्य्यादित्याह—कुर्य्यादनियते इति । अनियते सन्धावपि तस्याङ्गस्य निवेशनं कुर्य्यात् इत्यन्वयः । संप्रधारणमिति । मुखसन्धेर्युक्तिरूपमङ्गसंप्रधारणं तच्च गर्भसन्धावपि कृतमित्यर्थः । तत्र दुर्य्योधनकर्णाभ्यां युक्तिकरणात् । तल्लक्ष्यविरुद्धमिति । लक्ष्येषु उदाहरणनाटकेषु अनियमदर्शनात् विरुद्धमित्यर्थः ।

## कुसमप्रतिमा

अथ तर्हि किन्तावदगवन्तमित्याह चतुरिति । मुखसन्धेरङ्गानि द्वादश, प्रतिमुखादीनां चतुर्णान्तु प्रत्येकत एव त्रयोदशति मिलिता चतुः षष्टिविधम् अङ्गं मनीषिभिः प्रोक्तम् । रसस्य अनुगुणताम् आनुकूल्यं वीक्ष्य कविः त्वा अनियते अनिर्दिर्द्दिष्टेऽपि सन्धौ तस्य अङ्गस्य निवेशन कुर्य्यात् । तथा च रसानुकूल्यसम्भवे मुख सन्ध्य दिनिर्दिर्द्दिष्टविभनादीन्यङ्गानि प्रतिमुखादेसन्धावपि कविः कर्त्तुमर्हतीति भावः । हि यस्मात् रसस्यैव मुख्यता शब्दार्थाङ्गादिमध्ये प्राधान्यम् । अतः प्रधानपुष्ट्यनुरोधेन अप्रधानानां विपर्य्ययोऽपि सङ्गच्छत एवेति भावः ।

यथेति । गर्भसन्ध्यन्तर्भूते तृतीयाङ्के इत्यर्थः । सम्प्रधारणं कर्त्तव्यविषये युक्तिरूपं सम्प्रधाराणाख्यं मुखमन्धेरङ्गम् । एवमिति । यथा मम वङ्गीयप्रतापनाटके—

**"वङ्गदेशपतिरेष सर्वता यस्य याचकतया समाकुलः ।**

तत्तु रत्नमभिभाति यद्ग्रहे तस्य सम्भवति किं दरिद्रतां ॥"

इति गर्भसन्धौ विलासो नाम प्रतिमुखसन्धेरङ्गम्

यत्त्विति। नियम एव उक्तैरङ्गैरुक्तेष्वेव सन्दिषु स्थातव्यमित्थ नियम एवेत्यर्थः। लक्ष्य विरुद्दं प्रसिद्ध-नाटकादिप्रयोगविरुद्धम्। यथा दर्शितं महत् सम्प्रधारणमिति।

## विमला

चतुःषष्टिविधमिति।—एतत् चतुःषष्टिविधम् अङ्गं, सन्धेरिति शेषः, मनीषिभिः,—विद्वद्भिः, प्रोक्तम् (सुखस्य द्वादशावयवाः, प्रतिमुखस्य त्रयोदश, तावन्तः गर्भावयवाः, तावन्तः, विमर्षावयवाः, चतुर्दश निर्वहणावयवाः, इति सम्मेलनेन पञ्चषष्टित्वेऽपि, केचित् इति निर्वहणावयवस्वरूपप्रशस्तिममन्वानाः, प्रशस्तिमत्तां स्वीकुर्वन्तस्तु केचित् गर्भावयवस्वरूपायाः प्रार्थनाया अनङ्गीकारमाहुः, इत्युभयपक्षेऽपि चतुःषष्टिसङ्ख्या अव्याहता इति)। अनियते—अनिर्द्धारिते, उक्तरीत्या इति भावः, सन्धौ—मुखगर्भाद्यन्यतमसन्धौ, अपि रसानुगुणतां—शृङ्गाराद्यन्य-तमरसपोषकत्वं, वीक्ष्य तस्य—चतुःषष्टिविधस्य अङ्गस्य, निवेशनं—समावेशं, कुर्य्यात्; नियताङ्गेऽपि मुखगर्भा-दिसन्धौ रसानुकूल्यविवेचनया अन्यसन्ध्यङ्गान्यपि निवेशयेदिति भावः; हि—यतः, रसस्यैव मुख्यता—प्राधान्यम्।

उदाहरति, यथेति।—सम्प्रधारणं—युक्तिः, सा तु मुखसन्धेरङ्गम्। अन्यत्रापि—सन्धौ तहर्णनं दृश्यते। नियम इति। यद्वङ्गं यस्य, तदङ्गं तस्यैव, नान्यस्य कदाऽपीति निश्चय इति भावः। लक्ष्यविरुद्धं—महाकवीनां प्रयोगस्य विरुद्धम्; महाकवीनां निबन्धेषु न नियतं तथा विधानं दृश्यते इति नियमाभिधघानं न सङ्गच्छते इति भावः।

## लक्ष्मी

सन्धिषु यान्यङ्गान्युक्तानि तेषु, कतिचिदङ्गान्येव आवश्यकत्वेन प्रधानानीति केचिदाहुः। सन्धौ सन्धौ च तानि दर्शयति—इह चेति। नाटकादौ दृश्यकाव्ये चेत्यर्थः। प्राधान्यमिति प्राधान्यात् तत्तसन्धावश्यंकर्त्तव्यत्वेन स्थितिः। अन्येषां विलोभनादीनामित्यर्थः।

स्वसिद्धान्तमुपन्यस्यति—चतुःषष्टिविधमिति। प्रार्थनाप्रशस्त्योर्मतभेदन वैकल्पिकस्योक्तत्वात्। मुख-सन्ध्यादेरङ्गानि मिलित्वा एतच्चतुषष्टिविधम् अङ्गं मनीषिभिः प्रोक्तम्। प्रार्थनाप्रशस्त्योः समुच्चये तु पञ्चषष्टित्वा-पत्तेरित्युक्तं प्रागेव।

रसानुगुणानुरोधेन तु एकसन्धेरङ्गानि अन्यसन्ध्यादावपि कुर्यादित्याह—कुर्यादनियते इति। रसस्यानु-गुणताम् आनुकूल्यं वीक्ष्य कविः अनियते अकथितेऽपि सन्धौ तस्याङ्गस्य निवेशनं कुर्यात्। एवं च सति हि रसानुकूल्ये मुखसन्ध्यादिकथितविलोभनादीन्याङ्गानि प्रतिमुखसन्ध्यादावपि कविः प्रयोक्तुं शक्नोतीति भावः। तत्र हेतुः—रसस्यैवेति। हि यतः रसस्यैव मुख्यता शब्दार्थाङ्गादिमध्ये प्राधान्यम्। अतो मुख्यपुष्ट्यनुरोधेन गौणानां व्यत्यासोऽपि युज्यत एवेति भावः।

उदाहरति—यथेति। तृतीयाङ्के गर्भसन्ध्यन्तर्भूते इत्यर्थः। सम्प्रधारणमिति मुखसन्धेर्युक्तिरूपमङ्गसम्प्र-धारणं तच्च गर्भसन्धावपि कृतमित्यर्थः। तत्र दुर्योधनकर्णाभ्यां युक्तिकरणात्। एवमन्यत्रापीति, तद्वर्णितमिति भावः। अत्र मतान्तरं दूषयितुमुथापयति—यत्त्विति। रुद्रटादिभिरिति। काव्यालङ्कारादिप्रणेतृभिः नियम एव

यथोक्तैरङ्गैर्यथोक्तास्वेव सन्धिषु उपन्यसनीयमेतादृशनियम एवेत्यर्थः। तल्लक्ष्यविरुद्धमिति। लक्ष्येषु उदाहरण-नाटकेषु अनियमदर्शनाद्विरुद्धमित्यर्थः। यथोदाहृतं महत्संप्रधारणमिति।

## रुचिरा

**४४९ एतदङ्गम्**। अत्र जात्यभिप्रायेणैकवचनम्। **चतुः षष्ठिविधम्**। **मनीषिभिः प्रोक्तम्**। तथाहि— मुखाङ्गानि द्वादशप्रतिमुखाङ्गानि त्रयोदश (चतुर्दश) चेति। अयं विशेषः—गर्भाङ्गभूतायाः प्रार्थनायाः निवर्हमाङ्गभू-तायाः प्रशस्तेश्चैकस्या एव ग्रहणम्—अन्यस्यास्तत एव गतार्थत्वात्। **तस्य** तत्तत्सन्धिसम्बन्धितयाऽभिहि-तस्याङ्गस्येति भावः। **रसानुगुणताम्**। **वीक्ष्य**। **अनियते**। **अपि**। **सन्धौ**। **निवेशनं**। **कुर्यात्**। कविरिति शेषः। ननु कोऽत्र हेतुरित्याह—**हि** यतः। **रसस्य एव** न त्वङ्गस्य न वा सन्धेरिति शेषः। **मुख्यता** प्राधान्यम्॥ ४११॥

उदाहरति—**यथेत्यादिना**। स्पष्टम्। **सम्प्रसारणं** युक्तिः।

सन्ध्यङ्गानां नियतत्वेन स्वीकारे दोषं दर्शयति—**यत्त्वित्यादिना**।

**लक्ष्यविरुद्धं** महाकविसम्प्रदायाननुगतम्। स्पष्टम्। रुद्रटाभिरिति त्वधिकः पाठः प्रतीयते। रुद्रटग्रन्थे तदनुपलम्भात्। यदि स्यादुद्भटादिभिरिति पाठान्तरं तदा स्यात्कदाचित्—उद्भटादीनां ग्रन्थानां प्रायो लुप्त-त्वात्।

**इष्टार्थरचनाश्चर्यलाभो वृत्तान्तविस्तरः ॥ ११६ ॥**
**रागप्राप्तिः प्रयोगस्य गोप्यानां गोपनं तथा ।**
**प्रकाशनं प्रकाश्यानामङ्गानां षड्विधं फलम् ॥ ११७ ॥**
**अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो भवेत् ।**
**अङ्गहीनं तथा काव्यं न प्रयोगाय युज्यते ॥ ११८ ॥**

---

## विवृतिः

अन्यत्रापि तद्वर्णितमिति भावः । नियम इति । तत्संध्यङ्गस्य तत्संधावेव निवेश इत्येवंरूपः । लक्ष्यविरुद्धं महाकविप्रयोगविरुद्धम् ॥ अङ्गानां फलमाह—इष्टार्थेति ।

रागप्राप्तिरनुरागलाभः । प्रयोगस्य प्रेक्षकस्य । अङ्गप्रशंसामाह—अङ्गहीनमिति । काव्यं रूपकम् । प्रयोगाय प्रेक्षकानुरागाय ।

## विज्ञप्रिया

इदानीमुक्ताङ्गानां यथासम्भवं षट् फलान्याह । इष्टानुसरणेति । इष्टस्यार्थस्यानुसरणमित्यर्थः । इष्टार्थरचनेति । इष्टानुहरणेति क्वचित् पाठः । आश्चर्य्यलाभोऽद्भुतवस्तुलाभ इत्यर्थः । वृत्तान्तस्य विस्तरेण ज्ञानम् । रागप्राप्तिरनुरागलाभः । गोप्यानामर्थानां संगोपनम् । प्रकाश्यानामर्थानां प्रकाशनच्चेति प्रयोगस्य मुखसन्ध्यादि प्रयोगस्य अङ्गनामुपक्षेपाद्यङ्गानां षट् फलानीत्यर्थः । यथा काव्यार्थोत्पत्तिरूपस्यउपक्षेपरूपस्य मुखसन्ध्यङ्गस्य इष्टानुसरणं फलम् । एवमन्याङ्गानामन्यानि पञ्चफलानि यथासम्भवं नाटकेषु अनुसन्धेयानि ।

नाट्ये प्रयोगेऽङ्गनामावश्यकत्वमाह—अङ्गहीन इति ।

## लोचन

यद्वस्तु गोपयितुमिष्टं तदङ्गस्वरूपविज्ञापनेन सुखेन गोपयितु एवं प्रकाश्यानां प्रकाशश्चेत्यर्थ ।

## कुसुमप्रतिमा

ननूक्तानामङ्गानां किं नाम प्रयोजनमित्याह इष्टार्थेति । इष्टार्थस्य अभिप्रेतविषयस्य रचना, आश्चर्य्यलाभो द्रष्टुर्विस्मयप्राप्तिः, वृत्तान्तविस्तर उपाख्यानस्य विशालता, प्रयोगस्य सम्बन्धे रागप्राप्तिद्रष्टुरिच्छोत्पत्तिः, गोप्यानां विषयाणां गोपनम्, तथा प्रकाशानां विषयाणां प्रकाशनम् एतत् षड्विधम् अङ्गानां फलं प्रयोजनम् । यद्वत् हस्तपदाद्यङ्गहीनो नर आरम्भक्षमः कार्य्यकरणसमर्थो न भवेत्, तथा अङ्गैरुक्तैः सन्ध्यङ्गैर्हीनं काव्यं रूपकं प्रयोगाय अभिनयाय न युज्यते मोपयोगि भवति ।

## विमला

अङ्गानां फलान्याह, इष्टेति ।—अङ्गानां—सन्ध्यङ्गानां, फलं—निवेशप्रयोजनमिति भावः, षड्विधम् । ता एव षड्विधा आह,—इष्टार्थरचना—अभिलषितार्थस्य विधानम्, आश्चर्यलाभः;—अलौकिकार्थप्राप्तिः, वृत्तान्तविस्तरः;—इतिवृत्तस्पष्टीकरणं, रागप्राप्तिः;—अनुरागस्य लाभः, प्रयोगस्य—निबन्धस्य, अभिनयप्रेक्षकस्य वा, [प्रेक्षकस्येत्यर्थे (५/२/१२७ पा० इति अर्श आदित्वादच्) गोप्यानां—रहस्यार्थानां,

गोपनं—गुप्ततया संरक्षणं, तथा प्रकाश्यानां—प्रकटनेनैव चमत्काराधायकानाम्, अङ्गानां प्रकाशनं—प्रकटनम् इति । ननु अङ्गानामविधाने का हानिः ? इत्याशङ्क्याह,—अङ्गेति ।—अङ्गहीनः;—करचरणादिविकलः, नरः, यद्वत् आरम्भक्षमः;—कार्य्यक्षमः, नैव भवेत्, तथा अङ्गहीनः;—करचरणादिविकलः, नरः, यद्वत् आरम्भक्षमः;—कार्य्यक्षमः, नैव भवेत्, तथा अङ्गहीनः;—करचरणादिविकलः, नरः, यद्वत् आरम्भक्षमः;—कार्य्यक्षमः, नैव भवेत्, तथा अङ्गहीनं—मुखगर्भादिसन्धिरुपाङ्गशून्यं; काव्यं प्रयोगाय—व्यवहाराय, अभिनयाय, प्रेक्षकानुरागाय वा; न युज्यते—न प्रयोगार्द्धं भवतीत्यर्थः ।

## लक्ष्मी

इदानीमुक्तानामङ्गानां यथासम्भवं षट्फलान्याह—इष्टार्थरचनेति । इष्टार्थस्य ईप्सितविषयस्य रचना आश्चर्यलाभोद्द्रष्टुरद्भुतवस्तुप्राप्तिः, वृत्तान्तविस्तरः उपाख्यानस्य विस्तरेण ज्ञानम्, प्रयोगस्य अभिनयस्य विषये रागप्राप्तिः द्रष्टुरनुरागोत्पत्तिः गोप्यानां विषयाणां गोपनम्, तथा प्रकाश्यानां विषयाणां प्रकाशनम् एतत् षड्विधम् अङ्गानाम् उपेक्षादीनां फलं प्रयोजनम् । यथा काव्यार्थोत्पत्तिरूपस्य उपक्षेपरूपस्य मुखसन्ध्यङ्गस्य इष्टानुसरणं फलम्, एवमन्याङ्गानामन्यानि पञ्च फलानि यथासम्भवं नाटकेषु अनुसन्धेयानि ।

नाट्ये प्रयोगे अङ्गानामावश्यकत्वं दर्शयति—अङ्गहीन इति । यद्वत् अङ्गहीनो नेत्राद्यङ्गविकलो नरो न आरम्भक्षमः कार्यारम्भसमर्थो न भवेत्, तथा अङ्गैरुक्तैः सन्ध्यङ्गैर्हीनं काव्यं नाटकं प्रयोगाय प्रेक्षकानुरागाय न युज्यते नोपयोगि भवति । सम्पादयेतामिति । नायकप्रतिनायकौ सन्ध्यङ्गं सम्पादयेतां वचसा विधेयाताम् । अनेन सन्ध्यङ्गसम्पादकौ प्रथमतस्तावेवेत्युक्तम् । तदभावे ताभ्यां सन्ध्यङ्गसम्पादनासम्भवे पताका आद्यपदात्कार्यप्रभृतीरर्थप्रकृतीः सम्पादयेताम्, पताका च 'व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते' इत्यनेन नायकस्य वृत्तं पताकेत्युक्तम्, तस्याऽप्यभावे तथा इतरत् बीजं बिन्दुं वा सम्पादयेताम् ।

## रुचिरा

अङ्गानां फलमाह—४५० **इष्टार्थे**त्यादिना । ४५० **अङ्गानां** निरुक्तलक्षणानांमुखादिसन्ध्यङ्गानामिति भावः । **इष्टार्थ रचना** अभीप्सितार्थोद्भावनम् । **आश्चर्यलाभ** आश्चर्यजनको लाभ इति भावः । **वृत्तान्तविस्तर** इतिवृत्तस्य रसानुकूलतया समुद्भाव्यत्ववर्णनाम् । **रागप्राप्तिरनुरागलाभः च** । **प्रयोगश्च** प्रयोगसम्बन्धित्वमिति भावः । **गोप्यानां** गोपनीयानामर्थानाम् । **गोपनम्** । **तथा** । **प्रकाश्यानां** सुस्पष्टमुद्भावनीयानामर्थानाम् । **प्रकाशनम्** । इत्येवम् अङ्गानां सन्ध्यङ्गानाम् । **षड्विधम्** । **फलम्** ॥ ४१३ ॥ ४१४ ॥

अङ्गप्रशंसामाह ४५१ **अङ्गहीन** इत्यादिना।

४५१ **यद्वत्**। **अङ्गहीनो** नेत्राद्यङ्गविकल **नरः** इति भावः। **आरम्भक्षम** आरम्भे कार्योद्यमे क्षमः। **नैव**। **भवेत्**। **तथा**। **अङ्गहीनं** सन्ध्याङ्गशून्यम्। **काव्यं** दृश्यमिति शेषः। **प्रयोगाय** प्रयोक्तुमिति भावः। **न युज्यते** ॥४१५ ॥

**संपादयेतां संध्यङ्गं नायकप्रतिनायकौ।**

**तदभावे पताकाद्यास्तदभावे तथेतरत्॥ ११९॥**

प्रायेण प्रधानपुरुषप्रयोज्यानि संध्यङ्गानि भवन्ति। किंतु प्रक्षेपादित्रयं बीजस्याल्पमात्रसमुद्दिष्टत्वादप्रधानपुरुषप्रयोजितमेव साधु।

**रसव्यक्तिमपेक्ष्यैषामङ्गानां संनिवेशनम्।**

**न तु केवलया शास्त्रस्थितिसंपादनेच्छया॥ १२०॥**

तथा च यद्वेण्यां दुर्योधनस्य भानुमत्या सह विप्रलम्भो दर्शितः, तत्तादृशेऽवसरेऽत्यन्तमनुचितम्।

**अविरुद्धं तु यद् वृत्तं रसादिव्यक्तयेऽधिकम्।**

**तदप्यन्यथयेद्धीमान्न वदेद्वा कदाचन॥ १२१॥**

अनयोरुदाहरणं सत्प्रबन्धेष्वभिव्यक्तमेव।

---

## विवृतिः

तदभावे संध्यङ्गभावे।

पताकाद्या अर्थप्रकृतीः 'संपादयेताम्' इत्यन्वयः। आद्यपदेन प्रकरीकार्ययोग्रहणम्। इतरद्बीजम्। प्रायेणेत्यस्य व्यावृत्तिमाह—किंत्विति। आदिपदेन परिकरपरिन्यासयोर्ग्रहणम्॥

प्रायेणेत्यस्य व्यावृत्तिमाह—किंत्विति। आदिपदेन परिकरपरिन्यासयोर्ग्रहणम्॥ अधिकमनुपयोगि। रसोपयोगि यथा स्यात्तथा वर्णयेत्॥ अनयोरन्यथाकरणाकरणयोः॥

## विवृतिपूर्तिः

रसेति। ध्वनिकृताप्युक्तम्—'संधिसंध्यङ्गघटनं रसादिव्यक्तयपेक्षया। न तु केवलया शास्त्रस्थितिसंपादनेच्छया॥' इति॥

अवसर इति। अवसरे संग्रामलक्षणे॥

## विज्ञप्रिया

नारम्भक्षमः न कार्य्यारम्भक्षमः। सम्पादयेतामिति। अनेन सन्ध्यङ्गनिर्वाहकौ: प्रथमतो नायकप्रतिनायकावेवेति उक्तम्। तदभावे क्वचित् ताभ्यामनिवहि पताकाद्यास्तन्निर्वाहकाः। पताका च 'व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते।' इत्यनेन नायकस्य वृत्तं पताकेत्युक्तम्। अत्र च तत्सम्बन्धात् नायकसहाय एव तत्त्वेनोक्तः। तदाद्यास्तन्निर्वाहकाः। आद्यपदात् नायिकासहायाः, तैरप्यनिर्वाह्यं यत्। इतरोऽपि तन्निर्वाहक इत्यर्थः।

उपक्षेपाद्यङ्गत्रयस्य च प्रधाननायकेतरेण समुद्दिष्टत्वे एव साधुता इत्याह—किन्तूपक्षेपेति। तत्र हेतुमाह—बीजस्येति। प्रधानेतिवृत्तरूपस्य काव्यार्थस्य यन्मूलं तद्बीजं तस्याल्पमात्रसमुद्देशस्योपक्षेपकाद्यङ्गत्रयेण कृतत्वाद-प्रधानपुरुषभीमसेनादिसमुद्दिष्टत्वमेव साध्वित्यर्थः। प्रधानपुरुषस्य धीरोदात्तत्वेन कर्तव्येति वृत्तबीजसमुद्देशस्य अल्पस्यापि तेन करणानौचित्याद् इति भावः। तथा हि काव्यार्थस्य समुत्पत्तिरूपं यदुपक्षेपरूपमङ्गं तेन वेण्यां लाक्षा गृहानलेत्यादि भीमोक्त्या कुरुकुलवधरूपकाव्यार्थस्य तस्य बीजसमुत्पत्तिः प्रतिपादिता। समुत्पन्नार्थबाहुल्यं यत्परिकरात्मकमङ्गं तेन 'प्रवृद्धं यद्वैरं मम' इत्यादि भीमोक्त्या तद् बाहुल्यं प्रतिपादितम्। काव्यार्थनिष्पत्तिकथनरूपं यत् परिन्यासात्मकमङ्गं तेन 'चञ्चद् भुजे'त्यादिभीमोक्त्या निष्पत्तिः प्रतिपादिता। एतत् त्रयञ्च प्रधाननायकोक्तं तदधीरतापादकं स्यात्। नच समुत्पन्नार्थबाहुल्यकाव्यार्थनिष्पत्त्योः कथं बीजस्याल्पसमुद्दिष्टत्वमिति वाच्यम्। असमस्तोद्दिष्टस्यैवाल्पोद्दिष्टत्वमित्यभिप्रायात्। बीजोद्देशमात्रादेव नायकस्य धीरोदात्तत्वभङ्ग इत्यत्र एव तात्पर्य्यात्।

निवेशनं न तु नाट्यशास्त्रोक्तिस्थितिसम्पादनेच्छया इत्यर्थः। यद्यपीदं प्रागप्युक्तं तथापि रसव्यक्तयन-पेक्षया करणे दोषत्वप्रतिपादनाय पुनरुक्तम्। तदाह—तथा चेति। रसव्यक्तयनपेक्षया निवेशनं तु नोचितमेवे-त्यर्थः। तादृशेऽवसरे इति। वीररसे इत्यर्थः। न चाङ्गसन्निवेशनानौचित्ये दर्शयितव्ये रसनिवेशनानौचित्य-प्रदर्शनमिदमसम्बद्धमिति वाच्यम्। अङ्गहीनरसाभावेन विप्रलम्भप्रदर्शनादेव तदङ्गस्यापि प्रदर्शनात्।

रसव्यक्तिमिति। तत्सन्धीनां यान्यङ्गान्युक्तानि। तानि तत्रैवेति नियमः। किन्तु रसव्यञ्जनापेक्षया एव एषां निवेशनं न तु नाट्यशास्त्रोक्तिस्थितिसम्पादनेच्छया इत्यर्थः। यद्यपीदं प्रागप्युक्तं तथापि रसव्यक्त्यनपेक्षया करणे दोषत्वप्रतिपादनाय पुनरुक्तम्। तदाह—तथा चेति। रसव्यक्त्यनपेक्षया निवेशनं तु नोचितमेवेत्यर्थः। तादृशेऽवसरे इति। वीररसे इत्यर्थः। न चाङ्गसन्निवेशनानौचित्ये दर्शयितव्ये रसनिवेशनानौचित्यप्रदर्शनमिदम-सम्बद्धमिति वाच्यम्। अङ्गहीनरसाभावेन विप्रलम्भप्रदर्शनादेव तदङ्गस्यापि प्रदर्शनात्।

स्वविरुद्धमिति। स्वस्योपक्रान्तवृत्तस्य विरुद्धमधिकं यद् वृत्तं वृत्तान्तः तदपि रसाभिव्यक्त्येऽन्यथयेदु-पक्रान्तरसाविरुद्धतया प्रतिपादयेत्। तदसम्भवे तु न वदेदित्यर्थः।

## कुसुमप्रतिमा

सम्पेति। नायकप्रतिनायकौ सभ्यङ्गं सम्पादयेतां वाचा कूर्य्याताम्, तदभावे सन्ध्यङ्गसम्पादना सम्भवे पताका आद्यशब्दात् कार्य्यप्रभृतीरर्थकृतीः सम्पादयेताम्, तस्याप्यभावे तथा इतरत् नाट्यलक्षणादिकं सम्पादयेतम्।

व्याचष्टे प्रायेणति। प्रधानेति। एतेन नायकादिपदद्वयं प्रधानपात्रमात्रोषलक्षणमिति दर्शितम्।

रसेति। रसस्य व्यक्ंति प्रकासम् अपेक्ष्य कविः एषामङ्गानां सन्निवेशनं कुर्य्यात्, किन्तु केवलया शस्त्रस्थितिसम्पादनेच्छया एतन्नाट्यशास्त्रोक्तिरक्षणेच्छया न अङ्गानां सन्निवेशनं कुर्य्यादित्यर्थः। एतेन प्रकृतर-सव्यक्तेरसम्भवे नाट्यशास्त्रनिर्दिर्ष्टमप्यङ्गं कविः परिहरेदिति दर्शितम्।

तथा येति। विप्रलम्भः शृङ्गारः। दर्शित इति। केवलनाट्यशास्त्रस्थितिसम्पादनेच्छया प्रतिमुखसन्धे रङ्गसमूहसन्निवेशनार्थं कविना उपनिबद्ध इत्यर्थः। तादृशेऽवसरे उबयक्षस्य तुमुलसंग्रामसमये, अत्यन्तमनुचितम्, प्रकृतवीररसविरोधित्वादिति भावः।

अविरुद्धमिति । यत् वृत्तं वृत्तान्तस्तु रसादिव्यक्त्ये रसभावादिप्रकाशाय अविरुद्धम् अप्रतिकूलम्, अथ च अधिकम् अतिरिक्तम् अनावश्कं भवति; धीमान् कविः तदपि अन्ययेत् अन्यथा कुर्य्यात् रसोपयोगीकृत्य रचयेत्, वा अथवा कदाचनापि न वदेत् तदुपेक्ष्यैव रसोपयोगि वृत्तान्तान्तरं वर्णयेदित्यर्थः ।

अनयोरिति । अनयो रसानुयोगिद्वत्तस्य अन्यथाकरणाकथनयीः सत्प्रबन्धेषु शाकुन्तलाद्युत्कृष्टदृश्यकाव्येषु । यथा शाकुन्तले—"तस्मात्त्वं सर्वदा भर" इति महाभारतवर्णित तदैववाण्या शकुन्तलापरिग्रहवृत्तान्तं विहाय विशेषेण विप्रलम्भाभिव्यक्तये शकुन्तलाया अन्तर्धानमेव निबद्धमित्यन्वथाकरणम् । यथा वा वेणीसंहारे कर्णपवींराजहंस-काकवृत्तान्तादीनां सर्वथैवाकथनम् ।

## विमला

सन्ध्यङ्गानि केन सम्पादनीयानीत्याशंसायामाह, सम्पादयेतामिति ।—नायकप्रतिनायकौ—नायकः तत्रतिद्वन्द्वौ च, सन्धेः अङ्गं सम्पादयेतां—प्रयुञ्जीयातां, प्रायस्तु तत्रापि नायक एवेति बोध्यम् । ननु यदि सन्ध्यङ्गनिवेशो न सम्पद्येत, तदा किं कार्य्यमित्याह, तदिति ।—तस्य—सन्ध्यङ्गस्य, अभावे—अनिवेशे, पताकाद्याः,—अर्थप्रकृतीः, पताकाप्रकर्य्यादीनि अङ्गानीति यावत्, सम्पादयेताम्; तदभावे—पताकाद्यभावे, इतरत्—अन्यत् बीजमिति यावत् सम्पादयतेतामित्यन्वयः ।

प्रायेण इत्यस्य व्यावृत्तिमाह, किन्त्विति ।—उपक्षेपादीति ।—[अत्रादिपदेन परिकरपरिन्यासयोग्रहणम्] ।

रसेति ।—रसव्यक्ति—रसस्य प्रकटतामपेक्ष्य, एषाम् अङ्गानां सन्निवेशनं—प्रयोगः, कार्य्यमिति शेषः, न तु—न पुनः, केवलया शास्त्रस्थितिसम्पादनेच्छया, सन्निवेशनमिति शेषः, रसव्यक्तिर्भवतु, न वा भवतु, शास्त्रमर्य्यादारक्षणार्थमेव नैषा प्रयोगार्हेतेति भावः । तथोक्तं मुनिना,—"सन्धिसन्ध्यङ्गघटनं रसादिव्यक्त्यपेक्षया न तु केवलया शास्त्र-स्थितिसम्पादनेच्छया ॥" इति ।

भानुमत्येति ।—भानुमत्या—तन्नाम्ना स्वपत्न्या सह, विप्रलम्भः,—शृङ्गाररसभेदः । तादृशे—तथा प्रवर्त्तमाने सङ्ग्रामे, अनुचितं—न युक्तं, वीरस्यैव तदानीं युक्तत्वादिति भावः ।

अविरुद्धमिति ।—धीमान्—अभिनेता जनः अविरुद्दम्—अनुकूल, रसाद्युपकारकतयोपादेयमिति यावत्, यत् वृत्तं—चरितं, रसादीनां व्यक्त्ये,—प्रकाशय, तदपि अदिकं यथा तथा अन्यथयेत्—विपर्य्यासयेत्, अन्यथा कुर्य्यात् इति यावत्, वा—यद्वा, कदाचन न वेद्त् । रसगङ्गाधरस्याभिनवगुप्तकृतायां मर्म्मप्रकासव्याख्यान्तुक्तम्,—"अविरुद्ध्य रसादीनामधिकं नापि वर्णयेत् । विपरीतन्तु सङ्क्षिप्य विस्तरेण न च क्वचित् ॥" इत्यादि ।

अनयोरिति ।—अनयोः,—अन्यथाकरणाकरणयोः, उदाहरणं सत्प्रबन्धेषु—महाकाव्येषु, अभिव्यक्तं—स्पष्टम् एव ।

## लक्ष्मी

विवृणोति—प्रायेणेति । प्रधानेति । एतेन नायकप्रतिनायकावितिपदद्वयं प्रधानपात्रमात्रोपलक्षणमिति प्रकटितम् । अत्र तातः—'उपक्षेपाद्यङ्गत्रयस्य च प्रधाननायकेतरेण समुद्दिष्टत्वे एवं साधुता इत्यत आह—किन्तूपक्षेपादीति । तत्र हेतुमाह—बीजस्येति । प्रधानेति वृत्तिरूपस्य काव्यार्थस्य यन्मूलं तद्बीजं तस्याल्पमात्रसमुद्देशस्यो-

पक्षेपकाद्यङ्गत्रयेण कृतत्वादप्रधानपुरुषभीमसेनादिसमुद्दिष्टत्वमेव साध्वित्यर्थः। प्रधानपुरुषस्य धीरोदात्तत्वेन कर्त्तव्येतिवृत्तबीजसमुद्देशस्याल्पस्यापि तेन करणानौचित्यादिति भावः। तथाहि काव्यार्थस्य समुत्पत्तिरूपं यदुपक्षेपरूपमङ्गं तेन वेण्यां 'लाक्षागृहानले'त्यादिभीमोक्त्या कुरुकुलवधरूपकाव्यार्थस्य तस्य बीजसमुत्पत्तिः प्रतिपादिता। समुत्पन्नार्थबाहुल्यं यत्परिकरात्मकमङ्गं तेन 'प्रवृद्धं यद्वैरं मम' इत्यादिभीमोक्त्या तद्बाहुल्यं प्रतिपादितम्। काव्यार्थनिष्पत्तिकथनरूपं यत् परिन्यासात्मकमङ्गं तेन 'चञ्चद्भुजे' त्यादिभीमोक्त्या निष्पत्तिः प्रतिपादिता। एतत् त्रयञ्च प्रधाननायकोक्तं तदधीरतापादकं स्यात्। न च समुत्पन्नार्थबाहुल्यंकाव्यार्थ निष्पत्त्योः कथं बीजस्याल्पसमुद्दिष्टत्वमिति वाच्यम्, असमस्तोद्दिष्टस्यैवाल्पोद्दिष्टत्वमित्यभिप्रायात्। बीजोद्देशमात्रादेव नायकस्य धीरोदात्तत्वभङ्ग इत्यत्र एव तात्पर्यात् इत्याह।

सर्वत्र रसव्यक्तिमपेक्ष्यैवाङ्गानां सन्निवेशः कर्त्तव्यः न त्वेतन्नाटयशास्त्रोक्तरक्षणेच्छयेत्यभिप्रायेणाऽऽह—रसव्यक्तिमिति। रसस्य व्यक्तिं व्यञ्जनम् अपेक्ष्य कविः एषामङ्गानां सन्निवेशनं संस्थापनं कुर्यादिति शेषः। तु किन्तु केवलया शास्त्रस्थितिसम्पादनेच्छया एतन्नाट्यशास्त्रोक्तिरक्षणाभिलाषया अङ्गानां सन्निवेशनं न कुर्यादित्यर्थः। नाटकीयरसव्यक्तेरसम्भवे प्रधानाभावेनाप्रधानं नाट्यशास्त्रोक्तमङ्गमपि नोपन्यसनीयमिति भावः। उक्तञ्च ध्वनिकृता—

'सन्धिसन्ध्यङ्गघटनं रसादिव्यक्त्यपेक्षया। न तु केवलया शास्त्रस्थितिसम्पादनेच्छया॥' इति।

यद्यपीदं प्रागप्युक्तं तथापि रसव्यक्तयनपेक्षया करणे दोषत्वप्रतिपादनाय पुनरुक्तम्।

तथा चेति। विप्रलम्भः शृङ्गारः। दर्शित इति। केवलनाटयशास्त्रस्थितिसम्पादनेच्छया प्रतिमुखसन्धेरङ्गसमूहसन्निवेशनार्थं कविना उपस्थापित इत्यर्थः। तादृशेऽवसरे सङ्ग्राम लक्षणे वीररसे इत्यर्थः। अत्यन्तमनुचितम् रसव्यक्तयनपेक्षया निवेशनं तु नोचितमेवेत्यर्थः। न चाङ्गसन्निवेशनानौचित्ये दर्शयितव्ये रसनिवेशनानौचित्यप्रदर्शनमिदमसम्बद्धमिति वाच्यम्, अङ्गहीनरसाभावेन विप्रलम्भप्रदर्शनादेव तदङ्गस्यापि प्रदर्शनात्।

अविरुद्धन्त्विति। यद्वृत्तं वृत्तान्तस्तु रसादिव्यक्तये रसभावादिव्यञ्जनाय अविरुद्धम् अनुकूलम्, अपि च अधिकम् अनुपयोगि भवति, धीमान् कविः तदपि अन्यथयेत् प्रकारान्तरं नयेत् उपक्रान्तरसाविरुद्धतया प्रतिपादयेदित्यर्थः। वा अथवा तदसम्भवे तु कदाचनापि न वदेत् तदुपेक्ष्यैव रसोपयोगि यथा स्यात्तथा वृत्तान्तरं वर्णयेदित्यर्थः।

अनयोरिति। अन्यथाकरणाकरणयोरित्यर्थः। सत्प्रबन्धेषु शकुन्तलाद्युत्कृष्टनाटकेष्वित्यर्थः। यथा शाकुन्तले विशेषेण विप्रलम्भादिव्यञ्जनाय 'तस्मात्त्वं सर्वदा भर' इति महाभारतोपवर्णिताकाशवाण्या शकुन्तलापरिग्रहोदन्तं त्यक्त्वा शकुन्तलाया अन्तर्धानमेव कविना उपन्यस्तमित्यन्यथाकरणम्। वेणीसंहारे तु कर्णपर्वीयराजहंस—काकोदन्तादीनां सर्वथैवानुपन्यासः।

## रुचिरा

सन्ध्याङ्गादि कस्य सम्पाद्यमित्याशङ्क्याह—४५२ **सम्पादयेतामि**त्यादिना।

४५२ **नायकप्रतिनायकौ** सन्ध्यङ्गं मुखादिसन्धीनामुपक्षेपाद्यङ्गमात्रम्। **सम्पादयेताम्। तदभावे** सन्ध्यङ्गनामसम्पादनीयत्वावसरे **पताकाद्याः** पताकाप्रकरीकार्याद्या अर्थप्रकृतीः सम्पादयेतामिति भावः। तदभावे पताका-

द्यानामर्थप्रकृतीनां सम्पादनावसरे इति भावः । **तथा पूर्ववत्** । **इतरद्बीजं** बिन्दुं वा । 'सम्पादेयता'मिति पूर्वतोऽनुसक्तम् ॥ ४१६ ॥

अत्र विशेषं निर्दिशति—**प्रायेणेत्यादिना** ।

**प्रायेण** प्रायः सति सम्भवे **प्रधानपुरुषप्रयोज्यानि** प्रधानपुरुषौ नायकप्रतिनायकौ 'नायिका प्रतिनायिकाश्वे' त्येतद्वयं तु अत्रैव गतार्थम् ताभ्यां प्रयोज्यानि । **सन्ध्यङ्गानि । भवन्ति । किन्तु** (स्वारस्येनेदमाह) **उपक्षेपादित्रयमु**पक्षेपपरिकरपरिन्यासाख्यसन्ध्यङ्गत्रयं न तु तद्भिन्नान्यन्यान्यपि सर्वाणीति भावः । **बीजस्य** अल्पमात्रमित्यादिना निरुक्तस्यकारणविशेषस्य । **अल्पमात्रसमुद्दिष्टत्वात्** । तस्य चैतदर्थमात्रत्वादिति शेषः । **अप्रधानपुरुषप्रयोजितं** नायकप्रतिनायकेतरप्रयोज्यम् । एव न तु नायकप्रतिनायकप्रयोज्यमिति शेषः । **साधु** अयं भावः—बीजं तावदल्पमात्रं समुद्दिष्टं बहुधा यत्प्रसर्पतीत्युक्तः कारणविशेषः । उपक्षेपाद्यङ्गत्रयं पुनः बीजमात्रोपकारि बीजस्य चाप्रधानपुरुषप्रयोज्यत्वे सम्प्रदायानुकूलत्वमिति' तदप्यप्रधानपुरुषप्रयोज्यमेव साध्विति ।

न च सर्वाण्येवाङ्गानि यत्र न यदि लभ्येरन् । तत्र रूपकत्वन्न सम्भवेदिति न मन्तव्यमित्यभिप्रायेणाह ४५३ **रसव्यक्तिमित्यादिना** ।

४५३ **रसव्यक्ति**—रसोद्भावनम् । **अपेक्ष्य । एषां** निरुक्तानामुपक्षेपादीनामिति भावः । **अङ्गनाम् सन्निवेशनम्** । येन येनाङ्गनिवेशनेन रसाभिव्यंक्तिः स्यात्तदेवाङ्गं निवेशनीयमिति भावः । रसानुगुणशास्त्रोपदेश स्याप्यकिञ्चित्करत्वामित्याह—**नतु । केवलया** रसव्यक्तिहीनया । **शास्त्रस्थितिसम्पादनेच्छया** शास्त्रमर्यादारक्षणमात्राभिप्रायेणेति भावः ॥ ४१६ ॥

एतेन किं सिद्धमित्याशङ्कायामाह—**तथा चेत्यादिना** ।

**तथा । च । वेणीसंहारे** तृतीयेऽङ्के इति शेषः । स्पष्टमन्यत् । अयमभावः—सङ्ग्रामे वीरस्यैवौचित्यं तदन्तश्च श्रृङ्गारस्योद्भावनेन प्रधानरसाभिव्यक्तौ सर्वता तिरोभाव आपततीति रसस्यैवमनौचित्यं किं पुनस्तदा सन्ध्यङ्गादीना निवेशे । तस्मात् यथा प्रधानरसः समभिव्यज्येत यथा वा तस्यौचित्यं सम्भवेत् तथैव सन्ध्यङ्गादिनिवेशः साधीयान्प्रतिभासते । उक्तं—च "अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्" इति । 'सन्धिसन्ध्यङ्गघटनं रसादिव्यक्तपेक्षया । नतु केवलया शास्त्रस्थितिसम्पादनेच्छया ॥' इति च ।

पुनस्तदेव प्रकारान्तरेण विवृणोति—४५४ **अविरुद्धमित्यादिना** ।

४५४ **अविरुद्धम**नुकूलताऽनालिङ्गतप्रतिकूलताविरहितम् । **तु** अपीत्यर्थः । **यत् । वृत्तम् । अधिक**मनुपयोगि अनुकूलताशून्यमिति यावत् । **तत् । अपि । धीमान् । सहृदयः । रसाभिव्यक्तये** रसभावतदाभसादिव्यक्तये इति भावः । अन्यथयेत—प्रकारान्तरं नयेत् । **वा (इदं पक्षान्तरम्) कदाचन । न वदेत्** । अयं भावः यदविरुद्धं सदनुपयोगि तद्यथोपयोगि स्यात्तथा सङ्क्षिप्य वर्णयेत् यच्च सङ्क्षिप्य वर्णमानमपि नोपयोगि तद्यदि सर्वथाऽपि न वर्ण्येत तदाऽपि न क्षतिः । प्रत्युत युज्यत एव काव्यसंसारे कवेः स्वतंत्रविधातृत्वादिति ॥ ४१८ ॥

नन्वेवं क्व दृष्टमित्याशङ्क्याह—**अनयोरित्यादि** ।

**अनयो** रसानुपयोगित्वे वृत्तस्य सङ्क्षेपेण वर्णनस्य सर्वथा वा तदवर्णनस्येति भावः । **उदाहरणम् । सत्प्रंबन्धेषु** महाकविप्रबन्धेषु **अभिव्यक्तम् । एव** । अयं भावः महाभारतादिषु यथोपलभ्यते न तथा सर्वथा नाटकेषु किमपीतिवृत्तं न वा सङ्क्षिप्तमपि सर्वमिति वेणीसंहारबालरामायणादि दृष्टवतां प्रत्यक्षमिति ।

अथ वृत्तयः—

**श्रृङ्गारे कैशिकी वीरे सात्त्वत्यारभटी पुनः।**
**रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती ॥ १२२ ॥**
**चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः।**
**स्युर्नायकादिव्यापारविशेषा नाटकादिषु ॥ १२३ ॥**

---

## विवृतिः

नाटकवृत्तीराह—अथेति। वर्तते रसोऽनयेति वृत्तिर्नायकादिचेष्टा। श्रृङ्गार इति। श्रृङ्गारप्रतिपादिका वृत्तिः कैशिकी। एवमन्यत्रापि सर्वत्रेति 'रसे' इत्यनुषज्यते। मातृका मातृवदुपजीव्याः। तासां सामान्यस्वरूपमाह—स्युरिति।

आदिना नायिकादीनां ग्रहणम्। नाटकादिष्वित्यादिपदेन प्रकरणभाणादीनां ग्रहणम्। तत्र प्रसिद्धा इत्यर्थः ॥

## विवृतिपूर्तिः

कैशिकीति। एषा सामवेदोत्पन्ना। तदुक्तं भरतेन—'ऋग्वेदाद्भारती वृत्तिर्यजुर्वेदात्तु सात्त्वती। कैशिकी सामवेदाच्च शेषा चाथर्वणी तथा ॥' इति ॥ 'कौशिकी' इति चतुर्दशस्वरघटितो बहुत्रोपलभ्यमानोऽपि पाठः प्रामादिकः ॥

## विज्ञप्रिया

अथ वृत्तय इति। श्रृङ्गार इति। नायकादीनां व्यापारविशेषाश्चतस्रो वृत्तयो नाटकादिषु नाटकप्रकरणादिदशरूपकेषु नाटिकाद्यष्टादशोपरूपकेषु च सर्वनाट्यस्य मातृका मूलभूताः जनन्य इत्यर्थः। नायकादीत्यादिपदात् समस्तपात्रपरिग्रहः। तेन वक्ष्यमाणोदाहरणेषु पात्रान्तरकृत्यं नानुपपन्नम्। तत्र रसविशेषेषु वृत्तिविशेषानाह—श्रृङ्गार इत्यादि। वीरे सात्त्वतीत्यन्वयः।

## कुसुमप्रतिमा

श्रृङ्गार इति। श्रृङ्गारे रसे कौशिकी नाम वृत्तिः, वीरे रसे सात्त्वतो नाम वृत्तिः, रौद्रे बीभत्से च रसे पुनरारभटी नाम वृत्तिः, सर्वत्र अपरेषु सर्वेषु रसेषु भारती नाम वृत्तिः स्यात्। नायिकाया आदिशब्दान्नायकप्रतिनायकादीनां पात्राणां व्यापारविशेषाश्चेष्टाविशेषरूपाः, सर्वनाट्यस्य सकलप्रकारामिनयस्य मातृका मातृवदुत्पादिकाः, एताश्चतस्रो वृत्तयो नाटकादिषु दृश्यकाव्येषुस्युः। एतासां मध्ये कविः कौशिकी वृत्तिमवलम्बा श्रृङ्गाररसप्रधान नाटकादिकं रचयेदित्यर्थः। एवमन्यत्रापि। तत्र वर्त्तते रसोऽनयेति व्युत्पत्तेर्नायकादिव्यापारविशेषो वृत्तिरिति वृत्तलक्षणम्। तद्विशेषे कोशिक्यादिशब्दास्तु डित्थादिवद्रूढा। आदिरसश्रृङ्गारसम्बन्धिवृत्तेरेवादौ बुद्धिवेषयन्वान्नायिकायाश्च तत्प्रयोजकत्वात् नायिकादिव्यापारेत्युक्तम्।

## विमला

नाटकवृत्तीराह, अथेति ।—वृत्तयः,—वर्त्तते रस आभिरिति तथोक्ताः, नायकादिचेष्टा इति यावत् । ता वृत्तयः चतस्रः,—चतुर्व्विधाः । अथासामुपयोगस्थाननिर्देशपूर्वक नामानि निर्दिशति,—श्रृङ्गारे कौशिकी, वीरे सात्त्वती, रौद्रे बीभत्से च रसे पुनः आरभटो । सर्वत्र— एतद्व्यतिरिक्ते, भारती; एताः चतस्रः वृत्तयः सर्वनाट्यस्य मातृकाः,—जनन्यः । एतासामन्यतरया यथोक्त्या यथोक्तरूपाणि नाटकानि रचयितव्यानीति भावः । व्यक्तिविवेककारास्त्वाहुः,—"कौशिक्यारभटौ चैव सात्त्वती भारती तथा । वृत्तयः स्युश्चतस्रस्ता नाट्यशास्त्रस्य मातृकाः ॥ श्रृङ्गारे कौशिकी रौद्रे रसे त्वारभटी पुनः । वीरे स्यात् सात्त्वती वृत्तिः भारती तु समन्ततः ॥ न तस्या रसनिर्देशः सर्वत्र यदसौ मता । श्रृङ्गारे वाऽपि हास्ये वा रौद्रे वीरेऽपि वा बुधैः ॥" इति ।

तासां स्वरूपमाह, स्युरिति ।—नाटकादिषु—नाटकप्रकरणभाणादिषु रूपकेषु, नाटिकादिषूपरूपकेषु चेत्यर्थः, नायकादीनाम्, [अत्रादिपदेन नायिकादेग्रहणं] व्यापारविशेषाः,—चेष्टाभेदाः । वृत्तय इति शेषः, स्युः,—भवेयुः ।

## लक्ष्मी

नाटकवृत्तीः प्रदर्शयितुमाह—अथेति । श्रृङ्गार इति । श्रृङ्गारे रसे कौशिकीनामवृत्तिः श्रृङ्गारप्रतिपादिका वृत्तिः कौशिकीत्यर्थः । वीरे रसे सात्त्वतीनामवृत्तिः वीरप्रतिपादिकावृत्तिः सात्त्वतीत्यर्थः । रौद्रे बीभत्से च रसे पुनरारभटीनामवृत्तिः, रौद्रबीभत्सप्रतिपादिकावृत्तिरारभटीत्यर्तः । सर्वत्र अन्येषु रसेषु भारतीनामवृत्तिः । स्यात नायिकादीत्यत्रादिपदेन नायकप्रतिनायकादिसमस्तपात्रपरिग्रहः तथा च नायिकादीनां पात्राणां व्यापारविशेषाश्चेष्टाविशेषरूपाः, सर्वनाटयस्य सकलप्रकाराभिनयस्य मातृका मातृवदुपजीव्या मूलभूता जनन्य इति यावत्, एताश्चतस्रो वृत्तयो नाटकादिषु नाटकप्रकरणादिदशरूपकेषु नाटिकाद्यष्टादशोपरूपकेषु च स्युः । आसां मध्ये कविः श्रृङ्गाररसप्रधानं नाटिकादिकं कौशिकीं वृत्तिमाश्रित्य वर्णयेदित्यर्थः । एवमन्यत्रापि । कौशिकीवृत्तिश्च सामवेदोत्पन्ना तदुक्तं भरतेन—'ऋग्वेदाद्भारतीवृत्तिर्यजुर्वेदात्तु सात्त्वती । कौशिकी सामवेदाच्च शेषा चाथर्वणी तथा ॥' इति ।

## रुचिरा

**अथ** वृत्तीरभिधातुं प्रतिजानीते—**अथेत्यादिना** ।

**अथ** । **वृत्तय** 'उच्यन्ते' इति शेषः । ४५५ **श्रृङ्गार** इत्यादिना ।

४५५ **श्रृङ्गारे कौशिकी** वृत्तिरिति परतोऽध्याहृत्य योज्यम् । एवं-**वीरे** । **सात्त्वती** । **रौद्रे रसे** । **च** तथा । **बीभत्से** । पुनः आरभटी । **सर्वत्र** सर्वेषु 'अन्येषु' इति शेषः हास्यकरुणाद्भुतभयानकशान्तेषु इति भावः । **भारती** । **वृत्तिः** । एताः कौशिक्याद्याते **हि** । **चतस्रो** । **वृत्तयः** । **सर्वनाट्यस्य** सर्वेषां रूपकाणामिति भावः । **मातृका** उपकारिकाः । अत एव—**नाटकादिषु** । **नायकादिव्यापारविशेषाः** । **स्युः** । । ४१९ ॥ ४२० ॥

तत्र कैशिकी—

**या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसंकुला पुष्कलनृत्यगीता।**
**कामोपभोगप्रभवोपचारा सा कैशिकी चारुविलासयुक्ता॥ १२४॥**
**नर्म च नर्मस्फूर्जो नर्मस्फोटोऽथ नर्मगर्भश्च।**
**चत्वार्यङ्गान्यस्या—**

---

## विवृतिः

तासां विशेषलक्षणान्याह—तत्रेति। श्लक्ष्णेन मनोरमेण नेपथ्यविशेषेण नायकादिभूषणविशेषेण चित्रा शोभातिशयशालिनी।

पुष्कला संपूर्णेत्यर्थः। कामोपभोगः शृङ्गारस्तस्य प्रभवा उपचारा अङ्गानि यस्याः सा उपचारोऽनुष्ठानं वा अङ्गानि भेदाः॥ अस्याः कैशिक्याः॥

## विज्ञप्रिया

या श्लक्ष्णेति—श्लक्ष्णमुत्तमम्। नेपथ्यं वेशः। स्त्रीसंकुला स्त्रीव्यापारविमिश्रिता। पुष्कलं बहुलम्। अस्या अङ्गानि चत्वारि इत्याह—नर्म चेति।

## लोचन

कामेन मदनेन हेतुना य उपभोगः सम्भोगस्तत्कारणानि उपचाराश्चन्द्रचन्दनघनसारादयो यस्याम्।

कामेन मदनेन हेतुना य उपभोग सम्भोगतत्कारमानि उपचाराश्चन्द्रचन्दनघनसारादयो यस्याम्।

## कुसुमप्रतिमा

येति। श्लक्ष्मेन सूक्ष्मेण नेपत्थविशेषेण नायिकादीनां वेशविशेषेण चित्रा आरुर्य्या, स्वसङ्कुला योषिद्ब-हुला, पुष्कलानि नृत्यगीतानि यस्या सा, कामोपभोगाय प्रभवा उत्पन्ना उपचारा व्यवहारा यस्यां सा, तथा चारुभिर्षिलासैः प्रागुक्तलक्षणैर्युक्ता या वृत्तिः, सा कौशिकी स्यात्।

नर्म्मेति। नर्म्म, नर्म्मस्फूर्जः, नर्म्मस्फोटः, नर्म्मगर्भश्च—एतानि चत्वारि अस्याः कौशिकीवृत्तेरङ्गानिस्युः।

## विमला

तत्रेति।—तत्र, प्रसिद्घा इति शेषः, [इयञ्च सामोद्भवा, तथा हि भरतः,—"ऋग्वेदात् भारती वृत्तिर्यजु-र्वेदात् तु सात्त्वती। कौशिकी सामवेदात् तु शेषा चाथर्वणौ तथा॥" इति।

कौशिकीमाह, येति।—या श्लक्ष्णेन—मनोहरेण, नेपथ्यविशेषेण—नायिकादीनां भूषणविशेषेण, चित्रा—मनोज्ञा, शोभाऽतिशयवतीत्यर्थः, स्त्रीसङकुला—नारीभूयिष्ठा, पुष्कलनृत्यगीता—पुष्कलानि—प्रचुराणि,

नृत्यगीतानि—नृत्यानि गानानि चेत्यर्थः, यस्यां तादृशी, कामोपभोगप्रभवोपचारा—कामोपभोगः, शृङ्गारः, तस्य अभवः,—उत्पत्तिर्येभ्यः, एवंविधाः उपचारा,—प्रयीज्यपदार्थाः, अङ्गानि इति यावत्, यस्याः तादृशी, तथा चारुविला-सयुक्ता—चारुभिः,—मनोरमैः विलासैः,—मुखनेत्रगंत्यादिचेष्टाविशेषव्यञ्जकवाक्यैः इत्यर्थः, युक्ता च, सा वृत्तिः कौशिकी।

एवमस्याः स्वरूपमभिधाय विशेषजिज्ञासायां भेदानाह, नर्म्मेति।—अस्याः, कौशिक्याः, चत्वारि अङ्गानि—भेदाः; नर्म्म, नर्म्मस्फूर्जः, नर्म्मस्फोटः तथा नर्म्मगर्भः इति.

## लक्ष्मी

तत्र वर्त्तते रसोऽनयेति नायिकादिचेष्टाविशेषो वृत्तिलक्षणम्। कौशिक्यादिशब्दास्तु गोमण्डलादिवत्त-द्विशेषे रूढाः। कैशीकीति पाठे तु अतिशायिनः केशाः सन्ति आसामिति केशिकाः स्त्रियः 'स्तनकेशवतीत्वं' हि स्त्रीणां लक्षणम्। तत् प्रधानत्वात् तासामियं कैशिकीति व्युत्पत्तिर्ज्ञेया सर्वप्रथमश्रृङ्गाररससम्बन्धिवृत्तेरेव प्रथमं बुद्धिविषयत्वात् नायिकायाश्च तत्प्रयोजकत्वात् नायिकादिव्यापारेत्यभिहितम्। ध्वन्यालोके अभिनवगुप्तपा-दास्तु—वर्त्तन्ते अनुप्रासभेदा आसु इति वृत्तयः।

**'सरूपव्यञ्जनन्यासं तिसृष्वेतासु वृत्तिषु।**

**पृथक् पृथगनुप्रासमुशन्ति कवयस्तदा॥'**

पृथक् पृथगिति परुषानुप्रासः, उपनागरिकानुप्रास इति वृत्तयोऽनुप्रासजातय एव, इत्याहुः। सरस्वतीक-ण्ठाभरणे तु—

**या विकासेऽथ विक्षेपे सङ्कोचे विस्तरे तथा।**

**चेतसो वर्त्तयित्री स्यात् सा वृत्तिः साऽपि षड्विधा॥**

**कौशिक्यारभटी चैव सात्त्वती भारती तथा।**

**मध्यमारभटी चैव तथा मध्यमकौशिकी॥ इति।**

तासां यथाक्रमं विशेषलक्षणान्यभिधातुमाह—तत्रेति।

या श्लक्ष्णेति। श्लक्ष्णेन मनोरमेण नेपथ्यविशेषेण नायिकादिभूषणविशेषेण चित्रा शोभातिशयशालिनी स्त्रीसंकुला स्त्रीबहुला पुष्कलानि विपुलानि नृत्यगीतानि यस्यां सा तथोक्ता कामेन मदनेन हेतुना य उपभोगः सम्भोगस्तत्प्रभवाः कारणानि उपचाराश्चन्द्रचन्दनघनसारादयो यस्यां सा तथोक्ता तथा चारुभिर्विलासैः पूर्वोक्त-स्वरूपैर्युक्ता या वृत्तिः सा कौशिकी स्यात्। नाट्यशास्त्रेऽपि—

**'या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसंयुता वा बहुनृत्यगीता।**

**कामोपभोगप्रभवोपचारा तां कौशिकीं वृत्तिमुदाहरन्ति॥' इति।**

## रुचिरा

तत्र तावत् कौशिकीं वृत्तिं लक्षयितुं प्रतिजानीते—तत्रेत्यादिना।

**तत्र** तासु चतसृषु वृत्तिषु मध्ये इति भावः। **कौशिकी** लक्ष्यते इति शेषः ४५६ **येत्यादिना**।

४५६ **या श्लक्ष्णनेपथ्यविशेषचित्रा** श्लक्ष्णमरूक्षम्मृदुलमिति यावत्। यन्नेपथ्यं नायकादीनां वेषस्तेन चित्राद्भुतः शोभातिशयाधायितनीति यावत्। **स्त्रीसङ्कुला**। **पुष्कलनृत्यगीता**। **कामोपभोगप्रभवोपचारा** कामोपभोगः श्रृङ्गारस्तस्मात्प्रभवतीति तथोक्त उपचारोऽनुष्ठानविशेषो यत्र। **चारुविलासयुक्ता**। वृत्तिरिति शेषः। **सा**। **कौशिकी**।।४२१॥

अस्या भेदानाह—४५७ **नर्म** चेत्यादिना। स्पष्टम्।

तत्र—

**वैदग्ध्यक्रीडितं नर्म ॥ १२५ ॥**

**इष्टजनावर्जनकृत्तच्चापि त्रिविधं मतम् ।**

**विहितं शुद्धहास्येन सशृङ्गारभयेन च ॥ १२६ ॥**

तत्र केवलहास्येन विहितं यथा रत्नावल्याम्—'वासवदत्ता—(फलकमुद्दिश्य सहासम् ।) एसा वि अवरा तव समीवे जधा लिहिदा एदं किं अज्जवसन्तस्स विण्णाणम् ।

सश्रृङ्गारहास्येन यथा शाकुन्तले—राजानं प्रति 'शकुन्तला—असंतुट्ठो उण किं करिस्सदि । राजा—इदम् । (इति व्यवसितः । शकुन्तलावक्त्रं ढौकते)'

सभहास्येन यथा रत्नावल्याम्—आलेख्यदर्शनावसरे 'सुसंगता जाणिदो मए एसो वुत्तन्तो समं चित्तफलएण । ता देवीए गदुअ निवेदइस्सम् ।'

एतद्वाक्यसंबन्धि नर्मोदाहृतम् । एवं वेषचेष्टासंबन्ध्यपि ।

---

## विवृतिः

वैदग्ध्येन क्रीडितम् । इष्टजनस्य सामाजिकादेरावर्जनकृत् प्रीतिकारकम् । तच्च नर्म च । सशृङ्गारभयेने-त्यस्य हास्येनेति समासविश्लेषादन्वयः ॥

एषाप्यपरा तव समीपे यथालिखिता इदं किमार्यवसन्तकस्य विज्ञानम् ।' इति संस्कृतम् ॥ 'असंतुष्टः पुनः किं करिष्यति ।' इति संस्कृतम् । असंतुष्टो मधुकर इति पूर्वोक्तेनान्वयः । इदमिति कमलमिति । व्यवसितः कृतनिश्चयः । ढौकते प्रविशति । 'व्यवसितम्'इति पाठे निश्चितमित्यर्थः । । 'ज्ञातो मया एष वृत्तान्तः समं चित्रफ-लकेन । तद् देव्यै गत्वा निवेदयिष्यामि ॥' इति संस्कृतम् ॥ वेषसंबन्धिसभयहास्यकृतं नर्म यथा रत्नावल्याम्—'सुसंगता—(दृष्ट्वा विहस्य ।) अह कादरे, मा भाआहि । ण होइ एसो वानरो । अज्जवसन्तओ क्खु एसो ।' 'अयि कातरे, मा बिभीहि । न भवत्येष वानरः । आर्यवसन्तकः खल्वेषः ।' इति संस्कृतम् नर्मस्फूर्ज इति । सुखमारम्भो यस्य । भयमन्तो यस्य ॥

## विवृतिपूर्तिः

नर्मेति । मुनिनाप्युक्तं विशाध्याये—'नवसंगमसंभोगो रतिसमुदयवेषवाक्यसंयुक्तः ।

## विज्ञप्रिया

अत्र नर्मलक्षणमाह—वैदग्ध्येति । वैदग्ध्येन क्रीडितमित्यर्थः । तत्फलमाह—इष्टेति । इष्टजनस्यावर्जन-मनुरागेण नम्रता तत्कृद् इत्यर्थः । तच्च नर्म त्रिविधम् इत्याह । तच्चेति । त्रैविध्यमाह—शुद्धहास्येनेति । शुद्धेन सश्रृङ्गारेण सभयेन च हास्येन विहितमिति त्रैविध्यम् । भयञ्च हास्यविषयं बोध्यम् ।

एसाविति । एषाप्यपरा तव समीपे या आलिखिता एतत् किमार्यवसन्तकस्य विज्ञानम् ? (संस्कृतम्) । चित्रफलके सागरिकया लिखितं राजानं दृष्ट्वा सुसङ्गतया तत्समीपे सागरिकाऽपि लिखिता । तत्र लिखितं राजानं दृष्ट्वा वासवदत्तया पृष्टं केन त्वमत्र लिखिता इति । ततो राज्ञोक्तं शिल्पविज्ञानार्थं समुल्लिखितमिदमिति । ततस्तदन्तिके सागरिकां लिखितां दृष्ट्वा "एषा सा अवरे" त्याद्या: वासवदत्तायाः पृच्छाः । अत्र शुद्धहास्येन विहितं नर्म, अन्तः क्रोधेन तस्याः श्रृङ्गाराभावात् । प्रबन्धरसस्तु श्रृङ्गार इति तत्रेयं वृत्तिः

असंतुट्ठो उणेति । असंतुष्टः पुनः किं करिष्यति ? इति (संस्कृतम्) ननु कमलस्य मधुकरः सन्तुष्यति गन्धमात्रेण इति राज्ञ उक्त्यनन्तरं शकुन्तलाया इयं पृच्छा । ढौकते चुम्बनार्थम् । वक्त्रमाननम् आच्छादयति ।

जाणिदो इति । ज्ञातो मयैष वृत्तान्तः । समं चित्रफलकेन । तद्देव्यै गत्वा निवेदयिष्यमीति (संस्कृतम्) । अत्र राज्ञो भीतियुक्तेन सुसङ्गताया हासेन विहितं नर्म वैदग्ध्यक्रीडितम् ।

वाचा इव वेशचेष्टाभ्यामपि संभवतीत्याह—एवमिति । तत्र सागरिकायाः सङ्केतभङ्गार्तं तद्वेशाया वासवदत्ताया आगमने वेशेन बोध्यम् । क्वचित् नायिकायाश्च पलायमानादिचेष्टया अपि तद्बोध्यम् ।

## कुसुमप्रतिमा

वैदग्ध्येति । इष्टलनस्य दयितजनस्य आवर्जनकृत् सन्तोषकरं वैदग्ध्यक्रीड़ितं नैपुण्येन क्रीड़नं नर्म्म स्यात् । तच्चापि नर्म्म, शुद्धं केवलं यत् हास्यं तेन, श्रृङ्गारभयाभ्यां सहेति तेन च विहितं सत् त्रिविधं मतम् । तथा च केवलहास्येन विहितम्, सश्रृङ्गारहास्येन विहितम्, सभयहास्ये विहितञ्चेति ।

तत्रेति ।"एषाप्यपरा तव समीपे या लिखिता, एतत् किमार्य्यवसन्तस्य विज्ञानम् ।" इति संस्कृतानुवादः । विज्ञानं शिल्पनैपुण्यम् ।

अत्र श्रृङ्गारभयाभ्याममिश्रितेन हास्येन विहितं वासवदत्ताया नर्म्म ।

सश्रृङ्गारेति । "असन्तोषे पुनः किं करोति ।" इति संस्कृतानुवादः । इदं करोतीत्यन्वयः । व्यवसितश्चुम्बितुं प्रवृत्तः ढौकते परावर्त्तयति ।

अत्र सश्रृङ्गारहास्येन विहितं शकुन्तलाया नर्म्म ।

सभयेति । "ज्ञातो मया एष वृत्तान्तः ममं चित्रफलकेन । तद्देव्यै गत्वा निवेदायिष्यामि ।" इति संस्कृतानुवादः ।

अत्र सभयहास्येन विहितं सुसङ्गताया नर्म्म ।

एवमिति । ऊह्यमिति शेषः । वेशसम्बन्धि नर्म्म यथा—शकुन्तले द्वितीयाङ्के विदूषकस्य । चेष्टासम्बन्धि यथा—मृच्छकटिके शकारस्य पदपरिवर्त्तनादिकम् ।

## विमला

तस्य भेदानाह, तच्चेति ।—तच्चापि—निरुक्तमपि, कौशिक्या वृत्तेः, नर्म्मनामकमङ्गमिति यावत्, त्रिविधं मतम्; शुद्धहास्यविहितं, सश्रृङ्गारहास्यविहितं, सभयहास्यविहितञ्चेति । काव्यप्रदीपकारास्त्वाहुः,—"रहस्यार्थस्य

कथनं क्रीड़ितन्यदेशतः । नर्म्मेति गदितं तस्य त्रयो भेदाः पुनः स्मृताः ॥ प्रेमपात्रं कोपपात्रं प्रेमकोपास्पदं तथा ॥" इति । व्यक्तिविवेकारेण तु,—"औदासीत्याश्रयं नर्म्म चतुर्थ अपि दृश्यते' इत्युप्युक्तम् ।'

रत्नावल्यामिति ।—["एषाऽप्यपरा तव समीपे यथा लिखिता, इदं किमार्य्यवसन्तकस्य विज्ञानम् ?" इति संस्कृतम् ।] वासवदत्ता—वत्सराजस्य महाराज्ञी ।

शकुन्तलेति ।—["असन्तुष्टः पुनः किं करिष्यति ?" इति संस्कृतम्] । असन्तुष्टी मधुकर इति पूर्वोक्ते-नान्वयः । व्यवसितः,—प्रवृत्तः इत्यर्थः, उद्यत इति यावत्, चुम्बितमिति शेषः । ढौकते—अपसारयति, आच्छादयति वा.

सुसङ्गतेति ।—["ज्ञातो मया एष वृत्तान्तः समं चित्रफलकेन, तत् देव्यै गत्वा निवेदयिष्यामि" इति संस्कृतम्] । वेसम्बन्धिसभयहास्यकृतं नर्म्म यथा,—"सुसङ्गता । [दृष्ट्वा विहस्य] अयि कातरे ! मा विभीहि, न भवत्येष वानरः, आर्य्यवसन्तस्यः खल्वेषः" ।

## लक्ष्मी

अस्या अङ्गानि चत्वारि इति दर्शयति—नर्मं चेति । नर्म, नर्मस्फूर्ज-नर्मस्फोट-नर्मगर्भश्च-इत्येतानि चत्वारि अस्याः कौशिकीवृत्तेरङ्गानि ।

नर्मलक्षणं निरूपयति—वैदग्ध्येति । इष्टजनस्य प्रियजनस्य सामाजिकादेरिति यावत्, आवर्जनं प्रीत्याधानं तत्करोतीति तथोक्तम्, प्रीतिकारकमित्यर्थः । वैदग्ध्येन नैपुण्येन क्रीडनं नर्म स्यात् । तच्चापि नर्म, शुद्धं केवलं यत् हास्यं तेन श्रृङ्गारभयाभ्यां सहेति तेन च विहितं सत् एवं च केवलहास्येन विहितम्, सश्रृङ्गारहास्येन विहितम्, सभयहास्येन विहितश्चेत्यर्थः ।

उदाहरति—तत्रेति । रत्नावल्यां द्वितीयेऽङ्के । वासवदत्ताफलकं रत्नावलीचित्रपटमिति भावः । सहासं वत्सराजं 'प्रत्याह' इति शेषः । एसाविति । 'एषाऽप्यपरा तव समीपे यथा लिखिता, एतत् किमार्यवसन्तकस्य विज्ञानम्' इति संस्कृतम् । चित्रफलके सागरिकया लिखितं राजानं दृष्ट्वा सुसङ्गतया तत्समीपे सागरिकापि लिखिता । तत्रलिखितं राजानं दृष्ट्वा वासवदत्तया पृष्टे केन त्वमत्र लिखिता इति । ततो राज्ञोऽर्थंशिल्पविज्ञानार्थं समुल्लिखितमिदमिति । ततस्तदन्तिके सागरिकालिखितं दृष्ट्वा 'एषा सा अवरे' त्याद्या वासवदत्तायाः पृच्छा । विज्ञानं शिल्पनैपुण्यम् । अत्र केवलहास्येन विहितं वासवदत्ताया नर्म, अन्तः क्रोधेन तस्याः श्रृंङ्गाराभावात् । प्रबन्धरसस्तु श्रृङ्गार इति तत्रेयं वृत्तिः । सश्रृङ्गारेति । असंतुट्ठो उणेति । 'असन्तुष्टः पुनः किं करिष्यति' इति संस्कृतम्. 'ननु कमलस्थमधुकरः सन्तुष्यति गन्धमात्रेण' इति राज्ञ उक्त्यनन्तरं शकुन्तलाया इयं पृच्छा । असन्तुष्टो मधुकर इति पूर्वोक्ते नान्वयः । व्यवसितश्चुम्बितुं प्रवृत्तः । वक्त्रमाननं ढौकते आच्छादयति । अत्र सश्रृङ्गारहास्येन विहितं शकुन्तलाया नर्म । सभयहास्येनेति । जाणिदो इति । 'ज्ञातो मया एववृत्तान्तः, समं चित्रफलकेन । तद्देव्यै गत्वा निवेदयिष्यामि' इति संस्कृतम् । अत्र राज्ञो भीतियुक्तेन सुसङ्गता ह्यसेन विहितं नर्म । एतदिति । एवमिति । ऊह्यमिति शेषः । वेषसम्बन्धिसभयहास्यकृतं नर्म यथा रत्नावल्याम्—'सुसङ्गता (दृष्ट्वा विहस्य) अयि कादरे ! मा भाआहि ण होइ एसो वानरो अज्ज वसन्तओ क्कु एसो । अयि कातरे ! मा विभीहि न भवत्येष वानरः आर्यवसन्तकः खल्वेष' इति संस्कृतम् । यथा च शाकुन्तले द्वितीयेऽङ्के विदूषकस्य ।

## रुचिरा

क्रमादेताल्लंक्षयितुमुपक्रममाण आह—**तत्र तेषु** नमीदिषु मधअये ४५८ **वैदग्ध्यक्रीडितं** वैदग्ध्यं चातुर्यं तेन क्रीडितं तथा-**इष्टजनावर्जनकृत** इषटजनस्य सामाजिकस्यावर्जनं प्रीत्याधानं करोतीति तथोक्तम्। **नर्म** तदाख्यम् ॥ ४२ ॥

अस्थापि भेदानाह—४५९ **तच्चेत्यादिना**।

४५९ **तन्नर्म अपि** पुनः। **शुद्धहास्येन** केवलेन हास्येन। **विहितम्। च। सशृङ्गारभयेन** श्रृङ्गार सहिते भवसहितेन चे। विहितमिति पूर्वतोऽनुप्रसक्तम्। **त्रिविधं। मतम्** ॥ ४२३ ॥

उदाहरति—**तत्रे**त्यादिना।

**तत्र** तेषु त्रिविधेषु मध्ये इत्यर्थः। **केवलहास्येन। विहितं** 'नर्मे'ति शेषः। **यथा रत्नावल्यां** द्वितीयेऽङ्के। **वासवदत्ता फलकं** रत्नावली चित्रपटमिति भावः। **उद्दिश्य सहास्सं** 'वत्सराजं प्रत्याहे'ति शेषः। **अज्जउ** आर्यपुत्र ! **एसा** एषा। **वि** अपि। **अवरा** अपरा। **तव** तव। **समीवे** समीपे **जधा** यथा। **आलिहि** आलिखिता। **एवं** एवम्। **वि** अपि। **अवरा**। अपरा। **अज्जवसंतस्स** आर्य्यवसन्तकस्स (तदाख्यविदूषकस्य) **विण्णा** विज्ञानम् ? स्पष्टमन्यत्। **श्रृङ्गारहास्येन**। नर्म **यथा। अभिज्ञानशाकुन्तले। राजानं** दुष्यन्ताम्। **प्रति** 'आहे'ति शेषः। **असंतुट्टो** असन्तुष्टः। **उण** पुनः। **किंकरिष्यदि** किंकरिष्यति। **राजा** 'शकुन्तलाया मुखं चुम्बित प्रवृत्त आहे'ति शेषः। **इदम्** एतच्चुम्बनम्। स्पष्टमन्यत्।

**'सुसङ्गता'** राजानं प्रत्याहे'ति शेषः। जाणिदो ज्ञातः। **मए** मया। **एसो** एष रत्वावल्याश्चित्रदर्शनेन तस्यामनुरागोद्भावनरूप इति भावः। **चित्तफलएण** चित्रफलकेन रत्नावल्याचित्रपटेनेति भावः। **समं** समम्। **वुत्तंतो** वृत्तन्तः। **ता** तत्। **गदुए**। मत्वा। **देवीए** देव्यै वासवदत्तायै इत्यर्थः। **णिवेदिस्सं** निवेदयिष्ये कथयिष्यामीति भावः।' **एतत्। वाक्यसम्बन्धि** वाक्यमात्रावष्टम्भम्। **नर्म** क्ष्येलितम्। उदाहृतम्। **एवम्। वेषचेष्टासम्बन्धि। अपि**। 'नर्मोदाहर्त्तव्यमि'ति शेषः। यथा—रत्नावल्याम् 'सुसङ्गता—(दृष्ट्वा विहस्य) अइ कादरे ! मा भाआइ, ण होइएसी वाणरो, अज्जवसंतओ क्खु एसो (अयि कातरे मा विभेहि न भवति एष वानरः, आर्यवसन्तकः खल्वेष) इत्यत्र वेषजभयसम्बन्धि। एवमन्यदिति) दिक्।

**नर्मस्फूर्जः सुखारम्भो भयान्तो नवसंगमः ।**

यथा मालविकायाम्—संकेतनायकमभिसृतायां 'नायकः—

**विसृज सुन्दरि ! संगमसाध्वसं**

**ननु चिरात्प्रभृति प्रणयोन्मुखे.**

**परिगृहाण गते सहकारतां**

**त्वमतिमुक्तलताचरितं मयि ॥**

**मालविका**—'भट्टा, देवीए भएण अप्पणो वि पिअं कउं ण पारेमि ।' इत्यादि ।

---

## विवृतिः

'भर्तः, देव्या भयेनात्मनोऽपि प्रियं कर्तुं न पारयामि ।' इति संस्कृतम् ॥

## विवृतिपूर्तिः

ज्ञेयो नर्मस्फूर्जो ह्यवमानभयात्मकश्चैव ॥' इति ॥

सहकारतामिति । सहकारतामतिसौरभरसालताम् ॥

अतिमुक्तेति । शौक्लथान्मुक्तामतिक्रान्ताऽतिमुक्ता, सा चासौ लता चातिमुक्तलता वासन्ती तस्याश्चरितं वेष्टनरूपम् । स्वच्छन्दं मामलिङ्गेति परमार्थः ॥

## विज्ञप्रिया

नर्म स्फूर्जमाह—नर्मस्फूर्ज इति । मालविकायामिति । मालविकानामनाटिकायामित्यर्थः । सङ्केतनायकं सङ्केतस्थलगतं नायकम्, नायिकायां मालविकायाम् । विसृजेति । सुन्दरि ! सङ्गमे साध्वसं भयं विसृज । ननु भोश्चिरात् प्रणयोन्मुखे मयि अतिमुक्तलतायाः माधवीलतायाश्चरितं गृहाण । मयि कीदृशे ? सहकारतां चूतवृक्षतां गते, माधविकया चूतालिङ्गनात्, तद्वत् मामालिङ्गेत्यर्थः । भट्टा इति । हे भर्त्तः ! देव्याः भयेन आत्मनोऽपि प्रियं कर्त्तुं न पारयामि (संस्कृतम्) । आत्मनः प्रियमपीत्यन्वयः । अत्र सुखेन सङ्गमरूपनर्मारम्भो भयान्तः ।

## कुसुमप्रतिमा

नर्मेति । सुखमारम्भे यस्य सः, भयमन्ते यस्य सः तादृशी नवसङ्गमः नर्मस्फूर्जः स्यात्, नर्मणा स्फूर्जति प्रकाशत इति व्युत्पत्तेः ।

यथेति । सङ्केतस्थाने विद्यमानो नायकः सङ्केतनावकलन् ।

विसृजेति। ननु सुन्दरि ! हे मालविके ! सङ्गमयिषये साध्वसं भयं विसृज परित्यज। चिरात्प्रभृति बहुकालादवधि प्रणयोन्मुखे तव प्रेमाभिलाषिणि सहकारतां गते आम्रतरुत्वं प्राप्ते मयि, त्वम् अतिमुक्तलताया माधवीलताया आचरितं व्यवहारं प्रतिगृहाण स्वीकुरु, सहकारतरुं माधवीलतेव त्वं मामालिङ्गेत्यर्थः।

मालेति। "भर्त्तः ! देव्या भयेन आत्मनोऽपि प्रियं कर्त्तुं न पारयामि।" इति संस्कृतानुवादः।

अत्र प्रियतमाग्निमित्रसन्दर्शनेन सुन्दरीति सम्बोधनेन च सुखारम्भात् अन्ते भयाच्च पद्यमारभ्य गद्यांशे मालविकाया नर्म्मस्फूर्जः।

## विमला

नर्म्मस्फूर्जमाह, नर्म्मस्फूर्ज इति।—सुखारम्भः,—प्रथमसुखकरः, भयान्तः,—भयावसानः, नवः सङ्गमः नर्म्मस्फूर्जः,—नर्म्मणः,—परिहासस्य, स्फूर्जः,—भयावहः, शब्दः, लक्षणया तादृशाभिनयवर्णनमिति यावत्। मुनिनाऽप्युक्तं, "नवसङ्गमसम्भोगी रतिसमुदयवेशवाक्यसंयुक्तः। ज्ञेयो नर्म्मस्फूर्जो ह्यवसानभयात्मकश्चैव॥" इति।

उदाहरति, विसृजेति।—हे सुन्दरि ! सङ्गमे साध्वसं—भयं, विसृज—त्यज, चिरात् प्रभृति तव प्रणयोन्मुखे—प्रणयार्थिनि, अत एव सहकारताम्—अत्यन्तसुगन्धशालिरसालभावं, गते—प्राप्ते, मयि, नायके इति शेषः, त्वम् अतिमुक्तलतायाः,—[शौक्ल्यान्मुक्ताम् अतिक्रान्ता इति अतिमुक्ता, सा चासौ लता च तस्याः] माधवीलतायाः, ("अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवीलता" इत्यमरः) चरितं परिगृहाण; यथा अतिमुक्तलता सहकारमालिङ्गति, तथा त्वं मामालिङ्गस्वेति भावः। द्रुतविलम्बितं वृत्तं, "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात्।

मालविकेति।—["देव्या भयेनात्मनोऽपि प्रियं कर्त्तुं न पारयामि" इति संस्कृतम्]।

## लक्ष्मी

अथ द्वितीयं नर्मस्फूर्जभेदं लक्षयति—नर्मस्फूर्ज इति। सुखमारम्भे यस्य सः तथोक्तः भयं भीतिरन्तेऽवसाने यस्य सः तथोक्तः यः सङ्गमः, नर्मणा स्फूर्जते देदीप्यते इति नर्मस्फूर्जः स्यात्। उक्तं च महर्षिणा विंशाध्याये—

**'नवसङ्गमसंभोगी रतिसमुदयवेशवाक्यसंयुक्तः।**

**ज्ञेयो नर्मस्फूर्जो ह्यवमानभयात्यकश्चैव॥' इति।**

उदाहरति यथेति। मालविकायामिति। मालविकानामकनाटिकायामित्यर्थः। सङ्केते सङ्केतस्थाने आगतो नायकसङ्केतनायकः मध्यमपदलोपिसमासः, तं तथोक्तम्। अभिसृतायां मालविकायामिति शेषः।

विसृजेति। ननु सुन्दरि हे मालविके ! सङ्गमे सङ्गमविषये साध्वसं भयं विसृज परित्यज चिरात्प्रभृति बहुसमयादवधि प्रणयोन्मुखे भवत्याः प्रेमाभिलाषुके सहकारताम् अतिसौरभरसालताम् 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः, गते प्राप्ते मयि, त्वं शौक्लयान्मुक्तामतिक्रान्तामतिमुक्ता सा चासौ लता चातिमुक्तालता माधवी तस्याश्चरितं वेष्टनरूपं प्रतिगृहाण अङ्गीकुरु माधविकया चूतालिङ्गनात् तद्वत्स्वच्छन्दं मामालिङ्गेति भावार्थः। द्रुतविलम्बितं छन्दस्तल्लक्षणन्तूक्तं प्राक्।

मालविकेति। भट्टा इति। 'भर्त्तः! देव्या भयेन आत्मनोऽपि प्रियं कर्तु न पारयामि' इति संस्कृतम्। आत्मनः प्रियमपीत्यन्वयः। अत्र सुन्दरीति सम्बोधनेन सुखारम्भात् अबसाने भयाच्च पद्यमारभ्य गद्यांशे मालविकाया नर्मस्फूर्जः। सरस्वतीकण्ठाभरणे तु—

**'प्राप्ताऽसौ वृषपर्वणः प्रियसुता सङ्केतखण्डे नवे**

**वृष्टिः सेयमनम्बुदाऽमृतमयी गात्राणि मे सिञ्चति।**

**किं जानासि विनोदयिष्यति मनः सन्तप्तमेवाद्य मे**

**दुर्वात्येव निवर्त्तयिष्यति न भोस्तां देवयानीं प्रति॥'** इत्युदाहरणम्।

## रुचिरा

नर्मस्फूर्ज लक्षयति—४६० **नर्मस्फूर्ज** इत्यादिना।

४६० **सुखारम्भः** सुखमारम्भे यस्य तादृशः। **भयान्तो** भयमन्ते यस्य सः। **नवसङ्गमः**। **नर्मस्फूर्जः**। 'उच्यते' इति शेषः। तथोक्तम्—'नवसङ्गमसम्भोगो रतिसमुदयवेषवाक्यसंयुक्तः। ज्ञेयो नर्मस्फूर्जो ह्यवमानभयानकश्चैव॥' इति।

उदाहरति—**यथा**। **सङ्केतनायकम्**। **अभिसृतायां** लक्ष्मीकृत्य प्राप्तायाम्। **मालाविकायाम्** (सति सप्तमीयम्)। **'नायकः**। (मालविकां प्रत्याह)।

**हे सुन्दरि! सङ्गमसाध्वसं** प्रसङ्गे भयम्। **विसृज**। **ननु** (इदं वाक्यालङ्कारे) **चिरात् प्रभृति** वहोः कालात्। **प्रणयोन्मुखे** तव प्रणयाभिलाषिणि। अत एव—**सहकारता**मतिसुगन्धिताम्ररूपत्वं सहकारित्वं च। **गते** प्राप्ते। **मयि**। **त्वम्**। **अतिमुक्तलताचरित**मतियुक्ता वासन्ती एव लता तस्याश्चरितं तत्, अतिशयेन मुंक्तं यल्लतं रतं (रलयोः सावर्ण्यम्) तस्याचरितामाचरणं पुनः सम्पादनं तदिति वा। **परिगृहाणा**देहि आधेहि वा। द्रुतविलम्बितं वृत्तम्॥ २८३॥

**मालविका** (नायकं प्रत्याह) **भट्टा** भर्त्तः। **देवीए** देव्या महाराज्ञया इति यावत्। **भएण** भयेन। **अप्पणो** आत्मनः **वि** अपि। **पिअं** प्रियम्। कउं कर्त्तुम्। **ण** न। **पारेमि** पारयामि। **इत्यादि**। एवं चात्र स्फुटो लक्षणसमन्वयः।

**अथ नर्मस्फोटः—**

**नर्मस्फोटो भावलेशैः सूचिताल्परसो मतः ॥ १२७ ॥**

यथा मालतीमाधवे—

**'गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं**

**श्वसितमधिकं किं न्वेतत्स्यात्किमन्यदितोऽथवा ।**

**भ्रमति भुवने कंदर्पाज्ञा विकारि च यौवनं**

**ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ।**

अलसगमनादिभिर्भावलेशैर्माधवस्य मालत्यामनुरागः स्तोकः प्रकाशितः ।

---

## विवृतिः

भावलेशैरीषत्प्रकाशितैर्भावैः । अल्पं सूचितः सूचिताल्पः रसः शृङ्गारो यत्र स व्यापारो नर्मस्फोट इत्यर्थः । गमनमिति । माधवस्य पूर्वरागविप्रलम्भवर्णनमिदम् । विकारि चित्तविकारकारि । ललितमधुरा अतिरमणीयाः । 'वलितमधुराः' इत्यपि पाठः । भावाः सुरतचेष्टाः ॥

## विवृतिपूर्तिः

नर्मेति । मुनिनाप्युक्तम्—'विविधानां भावानां लवैर्लवैर्भूषितो बहुविशेषैः । असमग्राक्षिप्तरसो नर्मस्फोटस्तु विज्ञेयः ॥' इति ॥

शून्येति । शून्यदृष्टिलक्षणमुक्तं महर्षिणाष्टमाध्याये—'समतारा समपुटा निष्कम्पा शून्यदर्शना । बाह्यार्थग्राहिणी मध्या शून्या दृष्टिः प्रकीर्तिता ॥' इति ॥

किं न्विति । एतत्किं नु स्यात्, एतदलसगमनत्वादिकं रोगकृतं कामकृतं वेति वितर्कः । अथवा इतः कामात्किमन्यत् । नान्यदित्यर्थः ॥

## विज्ञप्रिया

नर्मस्फोटमाह—नर्मस्फोट इति । गमनमलसमित्यादि । माधवस्य मालत्यां भावसूचिकेयमुक्तिः । अलसगमनादिकम् एतत् किन्नु तस्याः, ननु भोः किं स्यात् इतोऽन्यत्, अथ वा कियत्स्यादित्यर्थः । अधिकाधिकस्यापि सम्भावनीयत्वादिति भावः । अधिकाधिकस्य सम्भावनीयं हेतुमाह—भ्रमति भुवन इति । ते ते भावा वसन्तनवेन्द्वादयः । अत्रोत्तरोत्तराधिकाधिकसम्भावनायां पूर्वोक्तैः सूचितस्य भावस्य लेश एवेत्याह—अलसेत्यादि· अलसगमनादिभिरित्यत्र अलसगमनादिभिः सूचितैरित्यर्थः । अनुरागो विप्रलम्भरसः । सम्भोगरूपनर्मेच्छावत्त्वात् अत्र नर्म ।

## कुसुमप्रतिमा

नर्मेति। भावलेशैः कुतोऽपि प्रकाशितैर्मानसिकप्रथमसूक्ष्मविकारैः सूचितो द्योतितः, अल्पो रसः श्रृङ्गारो यस्मिन् स तादृशो व्यापारो नर्म्मस्फोटो मतः, नर्म्मणः मतः, नर्म्मणः स्फोटः प्रकाशो यस्मिन्निति व्युत्पत्तेः।

गमनमिति। माधवमागच्छन्तमवलोक्य मकरन्दस्योक्तिरियम्। माधवस्य गमनम् अलसं मन्थरम्, दृष्टिः शून्या चिन्ताविष्टत्वान्निर्विषयाः, शरीरम् असौष्टवम् अङ्गसंस्काराभावादगागन्तुकसौन्दर्य्यरहितम्; श्वसितं निश्वासः अधिकं स्वाभाविकाद्दीर्घम्; एतत् किन्नु स्यात्? अथवा इती मदनावेशात् अन्यत् किं स्यात् भवितुमर्हति अपि तु किमपि नेत्यर्थः। येन हि भुवने कन्दर्पस्य आज्ञा आसक्त्यादेशः भ्रमति सर्वान् प्रत्येवाप्रतिहता सती प्रवर्त्तते यौवनञ्च विकारि मनोविकारजननशीलम्; ललितमधुराः कोमलसुन्दराः ते ते प्रसिद्धाः भावाश्चन्द्रचन्दनादयः पदार्थाश्च धीरतां धैर्य्यं क्षिपन्ति निरस्यन्ति।

लक्ष्ये लक्षणं सङ्गमति, अलसेति. अलसमगमनादिभिरलसगमनादिसूचितैः। प्रकाशित इति। अतएवात्र नर्म्मस्फोट इति भावः।

## विमला

नर्म्मस्फोटमाह, नर्म्मस्फोट इति।—भावलेशैः,—ईषत्मुचितैः भावैरित्यर्थः, सूचितः,—प्रकाशितः, अत एव अल्परसः,—मनाक् प्रतीयमानः स्वादात्मकः श्रृङ्गारः, ["सूचिताल्परसः" इति पाठान्तरे—अल्पं सूचितः सूचिताल्पः, रसः,—श्रृङ्गारो यत्र तादृशः] नर्म्मस्फोटो मतः। मुनिनाऽप्युक्तम्;—"विविधानां भावानां लवैलंर्वैर्भूषितो बहुविशेषैः। असमग्राक्षिप्तरसो नर्म्मस्फोटस्तु विज्ञेयः॥" इति।

उदाहरति, गमनमिति।—माधवस्य पूर्व्वरागविप्रलम्भवर्णनमिदम्। गमनम् अलसम्—आलस्ययुक्तं, मन्दमित्यर्थः, दृष्टिः—दृष्टिपातः, शून्या—नावहिता कुत्रापि पततीत भावः, शरीरम् असौष्ठव—सौष्ठवरहितम्, आहार्य्यशोभादिवर्जनात्मलाद्यपनयनाभावाच्च अरमणीयम् इति भावः, श्वसितं—निश्वासः, अधिकं—दीर्घमित्यर्थः, एतत्—अलसगमनादिकं सर्वं, किं नु?—किं खलु? अथवा इतः,—अस्मात्, अन्यत्—भिन्नं, किं स्यात्? भुवने—जगति, कन्दर्पस्य आज्ञा भ्रमति, यौवनञ्च विकारि—[विकरीति—विकृतं करोति, इत्येवं शीलमिति तथोक्तं, न तु विकारोऽस्यास्तीति, अस्मिन्नस्तीति वेति ततोक्तमिति वाच्यम्; तता सति वक्तव्यस्वारस्यानुदयः] चित्तविकारकारणं, ते ते ललितमधुराः,—ललितेन—"वाग्वेरायोः मधुरता तद्वत् श्रृङ्गारचेष्टितं ललितम्" इति लक्षणोक्तेन भावविशेषेण, मधुराः,—अतिमनोहराः, भावाः,—प्रकाराः, धीरतां—धैर्य्यं, क्षिपन्ति—च्यावयन्ति च। हरिणी वृत्तम्।

## लक्ष्मी

नर्मस्फोटं लक्षयति—नर्मस्फोट इति। भावलेशैः ईषत्प्रकाशितैर्भावैः सूचितो द्योतितः अल्पो रसः श्रृङ्गारो यत्र स तथोक्तो व्यापारो नर्मणः स्फोटः अभिव्यक्तिर्यत्र सनर्मत्र सनर्म स्फोटो मतः।

यथेति। आगमिष्यन्तं माधवं दृष्ट्वा मकरन्दस्योक्तिरियम्। माधवस्य गमनम् अलसम्, दृष्टिः शून्या—

**'समतारा समपुटा निष्कम्पा शून्यदर्शना।**
**बाह्यार्थग्राहिणी मध्या शून्या दृष्टिः प्रकीर्त्तिता॥'**

इति भरतोक्तलक्षणरूपा, शरीरम् असौष्ठवम् अङ्गसंस्कारा भावाद्भाविसौन्दर्यशूम्यम्, श्वसितं निश्वासः अधिकं प्राकृतिकाद्बहुलम्, एतत् किंनु स्यात्। एतदलसगमनत्वादिकं रोगकृतं मदनकृतं वेति वितर्कः। अथवा इतो मदनावेशात् अन्यत् किं स्यात् भवितुं शक्नोति अपि तु न किमप्यन्यदित्यर्थः। येन हि भुवने कन्दर्पस्य कामस्य आज्ञा आशक्त्यादेशः भ्रमति अविफला सत्येव हि सर्वान् प्रवर्त्तते यौवनं तारुण्यञ्च विकारि चित्तविकारकारि ललितमधुरा अतिरमणीयाः ते ते प्रसिद्धाः भावाः सुरतचेष्टाः चन्द्रचन्दनादयः पदार्थाश्च धीरतां धैर्य्यं क्षिपन्ति निराकुर्वन्ति। हरिणीप्लुत छन्दस्तल्लक्षणन्तूक्तं प्राक्।

लक्ष्ये लक्षणं योजयति—अलसगमनेति। अलसगमनादिभिरित्यत्र अलसगमनादिभिः सूचितैरित्यर्थः अनुरागो विप्रलम्भरसः। सम्भोगरूपनर्मेच्चावत्वात् अत्र नर्म।

## रुचिरा

नर्मस्फोटे लक्षयितुमाह—**अथ**। **नर्मस्फोटः**। लक्ष्यते—४६१ **नर्मे**त्यादिना।

४६१ **भावलेशै**रीषत्प्रकटितैरभिप्रायैः। **सूचिताल्परसः** सूचितोऽल्परसः किञ्चिदास्वादो यत्र सः। **नर्मस्फोटः**। मतः॥ ४२४॥

उदाहरति—**यथा—मालतीमाधवे**। '**अलसमा**लस्ययुक्तम्। **गमनम्**। शून्या 'समतारा समपुटा निष्कम्पा शून्यदर्शना। बाह्यार्थग्राहिणी मध्या शून्या दृष्टिः प्रकीर्तिता॥' इत्युक्तस्वरूपा **दृष्टि**र्दर्शनव्यापारः। **असौष्ठवं** मलाद्यनपाकरणादिनाऽशोभमानम्। **शरीरम्**। **अधिकम्**। **श्वसितं** श्वाससञ्चारः। **किन्नु**। **एतत्**। **स्यात्**। अलसगमंनादीदं कि रोगजन्यं कामकृतं वेति संशयः। अथ निर्धायाह—**अथवा**। **इतो** वक्ष्यमाणात्कारणात्। **अन्यत्**। **किम्**। निर्धारितं प्रकटति **कन्दर्पाज्ञा** कामदेवस्याज्ञा। **भुवने** संसारे। **भ्रमति**। **यौवनं** यूनामवस्था धर्मो वा। **विकारि**। ननु किमेतेनेत्याह—**ललितमधुराः**। **तेते**। **भावाः**। सुरतचेष्टाः। **च**। **धीरतां** धैर्यम्। **क्षिपन्ति** हरन्ति। हरिणीप्लुतं छन्दः॥ २२४॥'

लक्षणसङ्गतिं सूचयति—**अलसे**त्यादिना। स्पष्टम्।

**नर्मगर्भो व्यवहृतिर्नेतुः प्रच्छन्नवर्तिनः ।**

यथा तत्रैव सखीरूपधारिणा माधवेन मालत्या मरणव्यवसायवारणम् ।

---

## विवृतिपूर्तिः

नर्मगर्भ इति । एतदुक्तमृषिणा विंशाध्याये—'विज्ञानरूपसंभावनादिभिर्नायको गुणैर्यत्र । प्रच्छन्नैर्व्यवहरते कार्यवशान्नर्मगर्भोऽसौ ॥' इति ॥

## विज्ञप्रिया

नर्मगर्भमाह—नर्मगर्भ इति । प्रच्छन्नवर्त्तिनः प्रच्छन्नीभूय तिष्ठतः नेतुर्नायकस्य इत्यर्थः । व्यवहृतिर्व्यवसायः । सखीरूपेति । मालत्याः सखी लवङ्गिका । पित्रा राजाज्ञया जरते नन्दनाय दातुं कृतनिश्चया मालतीति देवतागृहेस्वमरणं प्रार्थयन्ती लवङ्गिकायाः पादे पतिता मालती । स्तम्भान्तरितस्थितो माधवश्च लवङ्गिकावेशेन आगत्य लवङ्गिकाम् अपसार्य तत्स्थाने स्वपादं दत्त्वा स्थितः । ततो मालती उत्थाय लवङ्गिकाबुद्ध्या तमालिङ्ग्य पश्चाद् दृष्ट्वा परिचीयमाना व्यवसायात् निववृते इत्यर्थः ।

## कुसुमप्रतिमा

नर्म्मेति । प्रच्छन्नवर्तिनी गुप्तभावेन विद्यमानस्य नेतुनांयकस्य व्यवहृतिर्व्यवहारो नर्म्मगभ इत्युच्यते, नर्म्म गर्भे यस्येति व्युत्पत्तेः

यथेति । सखीरूपधारिंणा लवङ्गिकास्थाने विद्यमानेनेत्यर्थः । अयं वृत्तान्तस्तु मालतीमाधवषष्ठाङ्के द्रष्टव्यः ।

## विमला

नर्मगर्भमाह, नर्मगर्भ इति ।—प्रच्छन्नवर्त्तिनः,—गूढ़चारिणः, नेतुः,—नायकस्य, व्यवहृतिः,—व्यवहारः, नर्मगर्भः,—नर्म—क्रीड़ायां रहस्यार्थकथनं, गर्भे यस्य तथोक्तः ।

## लक्ष्मी

नर्मगर्भं लक्षयति—नर्मगर्भ इति । प्रच्छन्नवर्त्तिनः प्रच्छन्नीभूय तिष्ठतः नेतुर्नायकस्य व्यवहृतिव्यवहारः नर्म गर्भे यस्य स नर्म गर्भः स्यात् ।

उदाहरति—यथेति । सखीरूपेति । सखीरूपधारिणा लवङ्गिकास्थाने विद्यमानेनेत्यर्थः । अत्रत्योदन्तस्तु—सखी लवङ्गिका, पित्रा राजाज्ञया जरते नन्दाय दातुं कृतनिश्चया मालतीति देवतागृहे स्वनिधनं याचयन्ती लवङ्गिकायाः पादे पतिता मालती । स्तम्भान्तरतः स्थितो माधवश्च लवङ्गिकावेशेनागत्य लवङ्गिकामपसार्य तत्स्थाने स्वपादं दत्वा स्थितः । ततो मालती उत्थाय लवङ्गिकाबुद्ध्या तमालिङ्ग्य पश्चादवलोक्य परिचीयमाना व्यवसायान्निववृते इति मालतीमाधवे द्रष्टव्यः । एवं 'दृष्ट्वैकासनसंस्थिते' इत्यादावपि बोध्यम् ।

## रुचिरा

नर्मगर्भं लक्षयति—**४६२ नर्मेत्यादिना** ।

४६२ **प्रच्छन्नवर्त्तितः** । नेतुर्नायकस्य । **व्यवहतिर्व्यवहारः** । **नर्मगर्भः** । तथोक्तम् 'विज्ञानरूपसम्भावनाऽऽदिभिर्नायको गुणैर्यत्र । प्रच्छन्नो व्यवहरते कार्य्यवशान्नर्मगर्भोऽसौ ॥' इति ।

उदाहरति—**यथेत्यादिना** । **तत्रैव** मालतीमाधवे एव । स्पष्टमन्यत् ।

अथ सात्त्वती—

**सात्त्वती बहुला सत्त्वशौर्यत्यागदयार्जवैः ॥ १२८ ॥**
**सहर्षा क्षुद्रशृङ्गारा विशोका साद्भुता तथा ।**
**उत्थापकोऽथ सांघात्यः संलापः परिवर्तकः ॥ १२९ ॥**
**विशेषा इति चत्वारः सात्त्वत्याः परिकीर्तिताः ।**

---

## विवृतिः

सात्त्वतीति । एषा परिष्कृत्योक्ता नाट्यशास्त्रे—'या सत्त्वजेनेह गुणेन युक्तान्यायेन वृत्तेन समन्विता च । हर्षोत्कटा संहृतशोकभावा सा सात्त्वती नाम भवेत्तु वृत्तिः ॥ वागङ्गाभिनयवती सत्त्वोत्थानवचनप्रकरणेषु । सत्त्वाधिकारयुक्ता विज्ञेया सात्त्वती वृत्तिः ॥ वीराद्भुतरौद्ररसा निरस्तश्रृङ्गारकरुणनिर्वेदा । उद्धतपुरुषप्राया परस्पराघर्षणकृता च ॥' इति ॥

नेतुर्नायकस्य ॥ बहुला । 'वृत्तिः' इति शेषः । उत्तेजनमुत्साहातिशयजनकम् । शत्रोः प्रतिनायकस्य । वागित्यन्वयः ॥

## विवृतिपूर्तिः

सात्त्वतीति । एषा परिष्कृत्योक्ता नाट्यशास्त्रे—'या सत्त्वजेनेह गुणेन युक्ता न्यायेन वृत्तेन समन्विता च । हर्षोत्कटा संहृतशोकभावा सा सात्त्वती नाम भवेत्तु वृत्तिः ॥ वागङ्गाभिनयवती सत्त्वोत्थानवचनप्रकरणेषु । सत्त्वाधिकारयुक्ता विज्ञेया सात्त्वती वृत्तिः ॥ वीराद्भुतरौद्ररसा निरस्तशृङ्गारकरुणनिवेदा । उद्धतपुरुषप्राया परम्परा धर्षणकृता च ॥' इति ॥

## विज्ञप्रिया

सात्त्वतीं वृत्तिमाह—अथेति । सत्त्वादिभिः समस्तव्यस्ताल्पतरैर्बहुला तद्वैशिष्ट्यात् बाहुल्यवती हर्षाद्यन्यतरयुक्ता वृत्तिश्च सात्त्वतीत्यर्थः । विशोका विगतशोका । वीरे रसे श्रृङ्गारस्यानुषङ्गिकत्वेन क्षुद्रत्वम् । अत्र क्षुद्रश्रृङ्गारत्वेन स्त्रीसंकुलत्वकामोपभोगराहित्येन वीररसत्वेन च कौशिकीतो विशेषः । अस्याः प्रभेदचतुष्टयमाह—उत्थापक इत्यादि ।

## कुसुमप्रतिमा

सात्त्वतीति । सत्त्वमध्यवसायः, शौर्य्यं बलम्, त्यागी दानशक्तिः, दया अनुकम्पा, आर्जवं सरलता तैः बहुला प्रायेण पूर्णा, सहर्षा, क्षुद्रश्रृङ्गारा, विशोका शोकविहीना, तथा साद्भुता या वृत्तिः सा सात्त्वती । तस्याः सात्त्वत्याः—उत्थापकः, संलापः, परिवर्त्तकश्चेति चत्वारी विशेषा भेदाः परिकीर्त्तिताः ।

## विमला

सात्त्वतीमाह, अथेति ।—सत्त्वेन—महानुभावतया, शौर्य्येण—बलेन, त्यागेन—दानशक्त्या, दयया आर्जवेन च बहुला—पूर्णा, सहर्षा—सानन्दा, क्षुद्रश्रृङ्गारा—अल्पश्रृङ्गारभावा, विशोका—शोकरहिता, तथा साद्-

भुता—सचमत्कारा, वृत्तिः इति शेषः, सात्त्वती। एषा परिष्कृत्य यथोक्ता मुनिना,—'या सत्त्वजेनेह गुणेन युक्ता न्यायेन वृत्तेन समन्विता च। हर्षोत्कटा संहृतशोकभावा सा सात्त्वती नाम भवेत् तु वृत्तिः॥ वागङ्गाभिनयवती सत्त्वीत्थानवचनप्रकरणेषु। सत्त्वाधिकारयुक्ता विज्ञेया सात्त्वती वृत्तिः॥ वीराङ्भुतरौद्ररसा निरस्तशृङ्गारकरुणनिर्वेदा। उद्धतपुरुषप्राया परस्पराघर्षणकृता च॥'इति।

एवं स्वरूपतो निर्दिश्य अस्या भेदनाह, उत्थापक इति।—तस्याश्चत्वारो विशेषाः,—भेदाः, उत्थापकः, सङ्घात्यः, संलापः, परिवर्त्तकश्च।

## लक्ष्मी

सात्त्वतीवृत्तिं निरूपयितुमाह—अथेति। कौशिकीवृत्तिनिरूपणानन्तरमित्यर्थः। सात्त्वती निरूप्यते इति शेषः।

सात्त्वतीति। सत्त्वमध्यवसायः, शौर्यं बलम्, त्यागो दानसामर्थ्यम्, दबा कृपा, आर्जवम् अकौटिल्यम्, तैर्बहुला तद्वैशिष्ट्यात् बाहुल्यवती, सहर्षा सानन्दा, क्षुद्रश्रृङ्गारा वीरे रसे श्रृङ्गारस्यानुषङ्गिकत्वेन क्षुद्रत्वम्, विशोका विगतशोका तथा साद्भुता या वृत्तिरिति शेषः। सा सात्त्वती सत् सत्त्वं प्रकाशस्तद्यत्रास्ति तत्सत्त्वं मनस्तत्र भवा सात्त्वती संज्ञा शब्दत्वेन बाहुलकात् स्त्रीत्वम्। तथा च शोकहीनः सत्त्वशौर्यत्यागदयार्जवहर्षादिभावोत्तरो नायकव्यापारः सात्त्वतीवृत्तिरित्यर्थः। अत्र क्षुद्रश्रृङ्गारत्वेन स्त्रीसंकुलत्वकामोपभोगराहित्येन वीररसत्वेन च कौशिकीतो भेदोऽवगन्तव्यः। नाट्यशास्त्रे चैषा परिष्कृत्योक्ता—

**'या सत्त्वजेनेह गुणेन युक्ता न्यायेन वृत्तेन समन्विता च।**

**हर्षोत्कटा संहृतशोकभावा सा सात्त्वतीनाम भवेत्तु धृत्तिः॥**

वागङ्गाभिनयवती सत्त्वोत्थानवचनप्रकरणेषु। सत्त्वाधिकारयुक्ता विज्ञेया सात्त्वतीघृत्तिः॥

**वीराद्भुतरौद्ररसा निरस्तशृङ्गारकरुणनिर्वेदा।**

**उद्धतपुरुषप्राया परस्पराधर्षणकृता च॥' इति.**

अस्याश्चत्वारो भेदा इति दर्शयति—उत्थापक इत्यादिना। तस्याः सात्त्वत्या उत्थापकः, सांघात्यः, संलापः, परिवर्त्तकश्चेति चत्वारो विशेषा भेदाः परिकीर्त्तिताः कथिता नाट्यशास्त्रविद्भिरिति शेषः।

## रुचिरा

सात्त्वतीं वृत्तिं लक्षयतुमाह—**अथ**। **सात्त्वती**। निरूप्यते—४६३ **सात्त्वतीत्यादिना**।

४६३ **सत्त्वशौर्यत्यागदयाऽऽर्जवैः**। सत्त्वं धैर्यम्। आर्जनं सरलता। **बहुला** विचित्रा **सात्त्वती** तदाख्या वृत्तिः। स्पष्टमन्यत्॥ ४२५॥

अस्या भेदान् कीर्त्तयति—४६४ **उत्थापक** इत्यादिना। स्पष्टम्। ४२६॥ उत्थापकं लक्षयति—४६५ **उत्तेजनकरीत्यादिना**। स्पष्टम्॥ २४७॥

उर्दाहरति—**यथा**। **महावीरचरिते**। वाली श्रीरामं प्रत्याह—**'आनन्दाये** त्यादिना।

**उत्तेजनकरी शत्रोर्वागुत्थापक उच्यते ॥ १३० ॥**

य़ता महावीरचरिते—

**'आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा**

**वैतृष्ण्यं तु कुतोऽद्य संप्रति मम त्वद्दर्शने चक्षुषः ।**

**यन्माङ्गल्यसुखस्य नास्मि विषयः किं वा बहुव्याहृतै-**

**रस्मिन्विस्मृतजामदग्न्यविजये बाहौ धनुर्जृम्भताम् ॥'**

---

## विवृतिः

आनन्दाय चेति । वालिनं प्रति श्रीरामस्योक्तिरियम् । मन्त्रो मन्त्रणा, अर्थो धनम्, दैवमदृष्टम्, संघभेदनं सहायानां भेदः ॥

## विवृतिपूर्तिः

उत्तेजनेति । एतदेव विशिष्यामनातं महर्षिणा—'अहमप्युत्थास्यामि त्वं तावद्दर्शयात्मनः शक्तिम् । इति संघर्षसमाश्रयमुत्थितमुत्थापको ज्ञेयः ॥' इति ॥

## विज्ञप्रिया

उत्तेजनेति—शत्रुं जेतुं मित्रस्य उत्तेजनम् ।

आनन्दाय चेति—परशुरामागमे रामं प्रति जनकस्य वाक्यमिदम् । धनुर्भङ्गेन प्रतिज्ञातार्थसिद्धया योग्य-वरप्राप्त्या चानन्दः । वीर्य्यातिशयदर्शनाद् विस्मयः । रामं हन्तुं परशुरामागमनात् दुःखम् । अतोऽद्य त्वद्दर्शने सम्प्रति एतत् क्षणे चक्षुषः कुतो वैतृष्ण्यम् । उत्कण्ठाबाहुल्यात् क्षणान्तरेऽनिष्टनिवृत्तौ तु उत्कण्ठानिवृत्त्या वैतृष्ण्यं स्यादिति सम्प्रति पदभावार्थः । बहुव्याहृतैर्वा किं, यतो वैवाहिकमाङ्गल्यसुखस्य न विषयोऽस्मिन् अतोऽस्यिन विस्मृतस्य जामदग्न्यस्य विजयनिमित्तं तव बाहौ धनुर्जृम्भतामित्यर्थः । अत्र परशुरामं जेतुमुत्तेजनम् । अत्र विस्मयवशाद् रामशौर्य्येणानन्दादिना च वैशिष्ट्यं वीरो रसः ।

## कुसुमप्रतिमा

उत्तेजनेति । शत्रोः प्रतिपक्षस्य उत्तेजनकरौ कोपोत्पादिनी वाग् वाक्यम् उत्थापको नाम सात्त्वती भेद उच्यते, उत्थापयति उद्यमयतीति व्युत्पत्तेः ।

आनन्दायेति । रावणनियुक्तेन बालिना रामायोक्तमिदम् । मया त्वं प्रियदशंनत्वादानन्दाय, अलौकिक-सौन्दर्यात् विस्मयाय च, हन्तव्यत्वात् दुःखाय वा दृष्टोऽसि । तु किन्तु सम्प्रति तव विनाशकाले त्वद्दर्शने मम चक्षुषो वैतृष्णां तृष्णानिवृत्तिः कुतः स्यात् अपि तु कुतोऽपि नेत्यर्थः, अधिककालस्तायित्वाभावा निति भावः । तव साङ्क्त्येन सङ्गतत्वेन सम्मेलनेन यत रुख तस्य विषयो भाजनं नास्मि शत्रुत्वादित्याशयः, ततस्मात् वृथा व्याङ्ततैरीदृशैरनर्थ-

कजल्पितैः किं प्रयोजनम् ? अपि तु किमपि नेत्यर्थः । अस्मिन् दृश्यमाने, विश्रुतं महावीरत्वेन विख्यातं जामदग्न्यं परशुरामं दमयतीति तस्मिन् तव पणौ धनुर्जृम्भतां युद्धाय प्रकाशताम् ।

अनेन रामस्योत्तेजनकरणादत्र उत्थापको नाम सात्त्वतीभेदः ।

## विमला

उत्थापकमाह, उत्तेजनकरोति ।—शत्रोः,—प्रतिनायकस्य, उत्तेजननकरी—क्रोधोद्दीपनौ, उत्साहातिशय्यप्रवर्तिनी इति यावत्, वाक् उत्थापकः,—उत्थापयति—प्रथमं निवर्त्य युद्धार्थमुद्योजयति शत्रुं योऽभिनयः स तथोक्तः, उपचारात् तत्प्रयोजिका वागपीति । यावत्, उच्यते । अयमेव विशिष्याभिहितो मुनिना,—"अहमप्युत्थास्यापि त्वं तावद्दर्शयात्मनः शक्तिम् । इति सङ्घर्षसमाश्रयमुत्थितमुत्थापको ज्ञेयः ॥"इति ।

उदाहरति, आनन्दायेति ।—श्रीरामं प्रति वालिन उक्तिरियम् । आनन्दाय—प्रीतये, विस्मयाय—लोकोत्तरचरितरूपदर्सनजनितचमत्काराय, वा—पक्षान्तरे, दुःखाय—एतादृशोऽपि हन्तव्य इति विषादायेत्यर्थः, सम्प्रति मया दृष्टोऽपि, तु—किन्तु, तव दर्शने मम चक्षुषः वैतृण्यमपि—तृष्णाऽभावोऽपि, तृप्तिरपीति यावत्, कुतः ?—नैव तृप्तिरस्तीत्यर्थः, पुनः पुनस्तव दर्शनेच्छा मम वर्त्तते इति भावः । त्वत् साङ्गत्यसुखस्य—तव साङ्गत्य—सङ्ग इत्यर्थः, [सङ्गतिरेव साङ्गल्यम्, अत्र स्वार्थेयण्] तेन यत् सुखं—प्रमोदः, तस्य विषयः,—पात्रं, न अस्मि—अहं तव मैत्री सुखभाजनं न इति भावः, तत्—तस्मात् हेतोः, वृथा—निरर्थकैरित्यर्थः, व्याहृतैः,—भाषितैः, किम् ?—न किमपि प्रयोजनमित्यर्थः, अस्मिन् विश्रुतं—प्रसिद्धं, प्रख्यातमित्यर्थः, आमदग्न्यस्य—भार्गवस्य, दमनं येन तादृशे, ["विस्मृतजामदग्न्यविजये" इति पाठस्तु चिन्त्यः] पाणौ धनुः,—शरासनं, जृम्भतां—राजताम्; धनुर्गृहाणेति भावः । शार्दूलविक्रीड़ितं वृत्तम् ।

## लक्ष्मी

तत्रोत्थापकं लक्षयति—उत्तेजनेति । शत्रोः प्रतिपक्षस्य प्रतिनायकस्येत्यर्थः, उत्तेजनकरी उत्साहातिशयजनकक्रोधोत्पादिनी वाग् वचनम् उत्थापयति उद्योगयतीति उत्थापको नाम सात्त्वतीभेद उच्यते । इदमपि परिष्कृत्य महर्षिणाम्नातम्—

**'अहमप्युत्थास्यामि त्वं तावद्दर्शयात्मनः शक्तिम् ।**

**इति संङ्घर्षसमास्रयमुत्थितमुत्थापको ज्ञेयः ॥' इति.**

उदाहरति—यथेति । आनन्दाय चेति । श्रीरामं प्रतिरावण प्रेरितस्य वालिन उक्तिरियम् । मया त्वं प्रियदर्शनत्वादानन्दाय विलक्षणसौन्दर्यातिशयात् विस्मयाय च मारयित व्यत्वात् दुःखाय क्लेशाय वा दृष्टोऽसि । तु किन्तु अद्य सम्प्रति तव विनाशहेतौ त्वद्दर्शनेऽवलोकने मम चक्षुषो नेत्रस्य चैतृष्णायं तृष्मानिवृत्तिः कुतो भवेत् अपि तु न कुतोऽपीवैयर्थः, बहुकालस्थितेरसम्भवादिति भावः । तव माङ्गल्येन मङ्गलत्वेन सम्मेलनेन यत् विलक्षणं सुखं तस्य विषय आश्रयो नाऽस्मि प्रतिपक्षित्वादिति भावः । तत्तस्मात् वृथा व्याहृतैः ईदृशैर्व्यर्तकथनैः किं प्रयोजनम् ? अपि तु न किमपीत्यर्थः । अस्मिन् अवलोक्यमाने विश्रुतं महावीरत्वेन प्रसिद्दं जामदग्न्यं परशुरामं विजयत इति तस्मिन् तथोक्ते तव बाहौ धनुर्जृम्भतां सङ्ग्रामाय प्रवत्रततामिति । अन्ये तु—परशुरामागमे रामं प्रति धनुर्भङ्गेन प्रतिज्ञातार्थसिद्धया योग्यवरप्राप्तया चानन्दः । वीर्य्यातिशयदजनकस्य वाक्यमिदमित्याहुः; तथाहि—

र्शनाद्विस्मयः । रामं हन्तु परशुरामागमनात् दुःखम् । अतोऽद्य त्वद्दर्शने सम्प्रति एतत्क्षणे चक्षुषः कुतो वैतृष्ण्यम् । उत्कण्ठाबाहुल्यात् क्षणान्तरेऽनिष्टनिवृत्तौ तु उत्कण्ठानिवृत्त्या वैतृष्ण्यं स्यादिति सम्प्रतिपदभावार्थः । बहुव्याहृतैर्वा किं यतो वैवाहिकमाङ्गल्यसुखस्य न विषयोऽस्मि अतोऽस्मिन् विस्मृतस्य जामदग्न्यस्य विजयनिमित्तं तव बाहौ धतुर्जृम्भतामित्यर्थः । अत्र विस्मयवशादूरामसौन्दर्य्येणानन्दादिना च वैशिष्टयं वीरोर सः । शादर्दूलविक्रीडितं छन्दः । अनेन रामस्य जेतुमुत्तेजनकरणादत्र उत्थापकः ।

## रुचिरा

'**आनन्दाय । च । विस्मयायाश्चर्योद्भावनाय । च । दुःखाय** । एतादृशस्य तव विनाशभाविने क्लेशाय **वा । मया** वालिना । **दृष्टः । असि । तु** किन्तु । **अद्य । सम्प्रति । मम । चक्षुषः । त्वद्दर्शने** । (विषये सप्तमीयम्) । **वैतृष्ण्यम**ननुरक्तत्वम् । **कुतः** । ननु पुरस्तात् स्थिते शत्रौ क्रोधौचित्ये चक्षुर्वैतृष्ण्यं युक्तमेवेति पुनः किं पुनस्तथा शोचसे इत्याशङ्क्याह—**यत् माङ्गल्यसुखस्य** रमणीयतैकभाजनस्य तव दर्शनतो जायमानस्य अलौकिकाह्लादस्य । **विषयः । न । अस्मि** भवानि न तत् सुचिरमनुभवितुं चक्षुरवतिष्ठते इति भावः । ननु किं त्वं योद्धुं समागतः किं वा द्रष्टुमिति विमृश्याह—**किं वा । बहुव्याहृतैः । अस्मिन् । विस्मृतजामदग्न्यविजये** विस्मृतो जामदग्न्यस्य परशुरामस्य विजयो येन तथोक्ते । वाहौ । **धनुः जृम्भतां** बाणप्रक्षेपार्थमुद्यतं स्यात् । शार्दूलविक्रीडितं वृत्तम् ॥ २८५ ॥'

**मन्त्रार्थदैवशक्त्यादेः सांघात्यः संघभेदनम्।**

मन्त्रशक्त्या यथा मुद्राराक्षसे राक्षससहायानां चाणक्येन स्वबुद्धया भेदनम् अर्थशक्त्यापि तत्रैव। दैवशक्त्या यथा-रामायणे रावणाद्विभीषणस्य भेदः।

---

## विवृतिः

रामायणे रामचन्द्रवर्णनानाटकादौ ॥

## विवृतिपूर्तिः

मन्त्रेति। उक्तं च मुनिना—'मन्त्रार्थवाक्यंयुक्त्या दैववशादात्मदोषयोगाद्वा। संघातभेदजननस्तज्ज्ञैः सांघात्यको ज्ञेयः ॥' इति ॥

वालिनमिति। श्रीरामं प्रति वालिन उक्तिरियमित्युचितम् ॥

## विज्ञप्रिया

संहात्यमाह—मन्त्रार्थेति। मन्त्रस्य मन्त्रणार्थस्य धनस्य दैवस्यादृष्टस्य वा शक्तेः शक्तिहेतोः संघस्य सैन्यसमूहस्य भेदनमित्यर्थः। राक्षसः शत्रुमन्त्री; चाणक्यो राजमन्त्री; स्वबुद्धया स्वमन्त्रणया। अत्र चाणक्यस्य सत्त्वदानानेकसत्त्वं संघभेदनवशाद् वीरो रसः।

## कुसुमप्रतिमा

मन्त्रेति। मन्त्रस्य मन्त्रणायाः अर्थस्य धनस्य देवस्य नियतेर्वा शक्तिः आदिशब्दात् सहायशक्तिप्रभृतिश्च तस्माद्धेतोः सङ्घभेदनं सम्मिलितानां पृथककरणं सांघात्यो नाम सात्त्वतीभेद उच्यते। संघात एव सांघात्यः स च "उपकृतं बहु तत्र" इत्यादिवत् रूढ़िवशाद्विपरीतलक्षणया संघातभेदेऽपि वर्तते।

## विमला

सङ्घात्यमाह, मन्त्रेति।—मन्त्रः,—मन्त्रणावलम्, अर्थः,—दनं, दैव शक्तिः,—दैवौ क्षमता, [आदिपदेन कौशलादिग्रहणम्] एतस्मात् कारणात्, सङ्घस्य—समवायस्य, भेदनं—पृथक्करणं, सङ्घात्यः। तथोक्तं भरतमुनिना,—"मन्त्रार्थवाक्ययुक्त्या दैववशादात्मदोषयोगाद्वा। सङ्घातभेदजनस्तजज्ञैः सङ्घात्यको ज्ञेयः ॥" इति।

## लक्ष्मी

साङ्घात्यलक्षणं निरूपयति—मन्त्रार्थेति। मन्त्रस्य मन्त्रणायाः, अर्थस्य वित्तस्य, दैवस्य अदृष्टस्य वा शक्तिः, आदिपदात्सहायशक्त्यादयश्च तस्माद्धेतोः सङ्घभेदनं सैन्यसमूहादिसहायानां पृथक्करणं साङ्घात्यो नाम सात्त्वतीभेदः स्यात्। संघात एव सांघात्यः, तथा च रूढिवशाद्विपरीतलक्षणया सङ्घातभेदेऽपि स्थितिरस्यावगन्तव्या।

उदाहर्तुमाह—मन्त्रशक्त्येति। राक्षसो मलयकेतुमन्त्री।चाणक्यो राजमन्त्री स्वबुद्धया स्वमन्त्रणया। अर्थशक्त्याऽपि तत्रैव यथा पर्वतकाभरणस्य राक्षसहस्तगमनेन मलयकेतुसहोत्थायिभेदनम्। रामायणे रामचन्द्र-वर्णननाटकादौ। अत्र चाणक्यस्य सत्त्वदानाद्यनेकसत्वं संघभेदनवशात् साङ्घात्यः।

## रुचिरा

साङ्घात्यं लक्षयति—४६६ **मन्त्रार्थेत्यादिना**।

४६६ मन्त्रार्थदैवशक्त्यादेर्मन्त्रो विचारोऽर्थो धनं दैवं प्रारब्धं तेषां शक्त्यादिस्तस्मात्। आदिना-परत्र तत्तद्वैपरीत्यादेर्ग्रहणम्। **सङ्घभेदेनं** सङ्घस्य सहायकसमाजस्य भेदनं भेदः। **साङ्घात्यः**।

उदाहरति—**मन्त्रशक्त्येत्यादिना**। स्पष्टम्।

**संलापः स्याद्गभीरोक्तिर्नानाभावसमाश्रया ॥ १३१ ॥**

यथा वीरचरिते—'रामः—अयं स यः किल सपरिवारकार्तिकेयविजयावर्जितेन भगवता नीललोहितेन परिवत्सरसहस्रान्तेवासिने तुभ्यं प्रसादीकृतः परशुः। परशुरामः—राम दाशरथे, स एवायमार्यपादानां प्रियः परशु।' इत्यादिः।

---

## विवृतिः

आवर्जितेन प्रीणितेन। अत्र देवविषयरतिमतिवीररसानां समाश्रयत्वम् ॥

## विज्ञप्रिया

संलापमाह—संलाप इति। कार्त्तिकेयविजयावर्जितेनेति। तद् विजये नम्रीभूतेनेत्यर्थः। अत्र कौतुकेनेव विजयो न तु वास्तव इति तत्पितृप्रसादगम्यम्। तथापरप्रसादलब्धेन परशुना कोऽयं गर्व इति रामस्य गभीरात्मिका उक्तिः। परशुरामोक्तौ तत्प्रियवस्त्वपि मह्यं दत्तमिति स्वमहत्त्वख्यापनमेव गभीरता।

## कुसुमप्रतिमा

संलाप इति। नानाभावानां बहुविधाभिप्रायाणां समाश्रयो व्यञ्जकवासम्बन्धेनाश्रयीभूता नानाबावव्यञ्जि-केत्यर्थः गभीरा निपुणोन्नेयार्था उक्तिः संलापो नाम सात्त्वतीभेदः स्यात्।

यथेति। सपरिवारस्य समहायस्य कार्त्तिकेयस्य विजयेन आवर्जितः प्रीतस्तेन नीललोहितेन महादेवेन। परिवत्सरसहस्रान्तैवासिने सहस्रसंख्यकवत्सर्वपर्य्यन्तं रात्रत्वं गताय। प्रसादीकृतः। अनुग्रहेण दत्तः। आर्य्यपा-दानां गुरोः शिवस्य।

अत्र सपरिवारेत्यादिना त्वं महावीर इति परिवत्सरेत्यादिना महाध्यवसायीति प्रिय इत्यनेन च परशुरती-वोत्कृष्ट इति सूचिमिति संलापः।

## विमला

संलापमाह, संलाप इति।—नानाभावानां—नानाविषयाणां, समाश्रया—आश्रयरूपा, गभीरा—अर्थ-गुर्वी, उक्तिः संलापः स्यात्।

उदाहरति, यथेति।—सपरिवारेति।—सपरिवारस्य—सानुचरस्य, कार्त्तिकेयस्य विजयेन, परशुरामक-र्त्तृकेणेति भावः, आवर्जितः,—वशीकृतः, प्रीणित इत्यर्थः, तेन, भगवता—अणिमाऽऽद्यैश्वर्य्यशालिना, नीललोहि-तेन—महादेवेल, ("धूर्जटिर्नीललोहितः" इत्यमरः) प्रसादीकृतः,—दत्तः। स्पष्टमन्त्। अत्र देव विषयरतियुक्तेन वीररसस्य समाश्रयेण उक्तेर्गभीरता।

## लक्ष्मी

संलापलक्षणं निरूपयति—संलाप इति। नानाभावानाम् अनेकविधाशयानां समाश्रयः व्यञ्जकतासम्बन्धेनाश्रयीभूत अनेकविधभावप्रकाशक इत्यर्थः। गभीरा परिपक्वबुद्धिभिरुन्नेयार्था उक्तिर्व्याहारः 'व्याहर उक्तिर्लपितम्' इत्यमरः, संलापो नाम सात्त्वतीभेदो भवेत्।

उदाहरति—यथेति। सपरिवारस्य ससहायस्य कार्त्तिकस्य कुमारस्य विजयेन आवर्जितेन प्रीणितेन। अत्र कौतुकेनेव विजयो न तु वास्तव इति तत्पितृप्रसादगम्यम्। परिवत्सर सहस्रं सहस्रसंख्यकवत्सरपर्यन्तं अन्तेवासिने शिष्यत्वं गतायेत्यर्थः। आर्यपादानां पूज्यानां महादेवानाम्। इत्यादीत्यादिपदेन—

**शस्त्रप्रयोगखुरलीकलहे गणानां सैन्यैर्वृतो विजित एव मया कुमारः।**

**एतावतापि परिरभ्य कृतप्रसादः प्रादादमुं प्रियगुणो भगवान् गुरुर्मे॥**

इत्यस्य परिग्रहः। तथा चापरप्रसादलब्धेन परसुना कोऽयं गर्व इति रामस्य गभीरात्मिका उक्तिः। परशुरामोक्तौ तत्प्रियवस्त्वपि मह्यं प्रदत्तमिति स्वमहत्त्वख्यापनमेव गभीरता। अत्र सपरिवारेत्यादिना त्वं महावीर इति परिवत्सरेत्यादिना अतिशयोद्यमीति प्रिय इत्यनेन च परशुः नितान्तमुत्कृष्टमिति च द्योतनात् संलापः।

## रुचिरा

संलापं लक्षयति—४६७ **संलाप** इत्यादिना। स्पष्टम्॥ ४२८॥

उदाहरित—**यथा। वीरचरिते** महावीरचरिते। **'रामः** श्रीरामचन्द्रः (परशुरामं प्रत्याह) **सपरिवारकार्तिकेयविजयावर्जितेन** सपरिवारो यः कात्रिकेयोऽर्जुनस्तस्य विजयस्तेनावर्जितः संतोषितस्तेन। **भगवता। नीलकण्ठेन** महादेवेन। **परिवत्ससहस्रान्तेवासिने** परिवत्सराणां संवत्सराणां सहस्रेणान्तेवासी शिष्यस्तस्मै। **तुभ्यम्। यः। किल। प्रसादीकृतः** प्रत्तः। **सः। अयम्।** परशुः। **परशुरामः राम! दाशरथे!** दशरथनन्दन! **सः। एव। अयम्। आर्यपदानां** पूज्यानां महादेवानाम्। **प्रियः। परशुः।' इत्यादि।** अत्र हि—महादेवविषयरतिमत्युत्साहानामाश्रयः।

**प्रारब्धादन्यकार्याणां का (क) रणं परिवर्तकः ।**

यथा वेण्याम्—'भीमः—सहदेव, गच्छ त्वं गुरुमनुवर्तस्व । अहमप्यस्त्रागारं प्रविश्यायुधसहायो भवामीति । अथवा आमन्त्रयितव्यैव मया पाञ्चाली ।' इति ।

---

## विवृतिः

गुरं युधिष्ठिरम् ॥

## विवृतिपूर्तिः

प्रारब्धादिति । उक्तं च भरतेन—'उत्थानसमारब्धानार्थानुत्सृज्य योऽर्थयोगवशात् । अन्यानर्थान्भजते स चापि परिवर्तको ज्ञेयः ॥' इति ॥

## विज्ञप्रिया

परिवर्त्तकमाह—प्रारब्धादिति । सहदेवेति—अत्र प्रारब्धं कार्य्यं युद्धम् । ततोऽन्यत् पाञ्चाल्यामन्त्रणम् ।

## कुसुमप्रतिमा

प्रारब्धादिति । प्रारब्दादारब्धकार्य्यात् अन्यानि यानि कार्य्याणि तेषां करणे विधानं परिर्त्तकी नाम सात्वतीभेदः स्यात्, परिर्त्तयति कर्त्तरमिति व्यत्पत्तेः ।

यथेति । अत्र अथेत्यादिना अन्थकार्यकवणीपक्रमात् पविवर्त्तक ।

## विमला

परिवर्त्तकमाह, प्रारब्धादिति ।—प्रारब्दात्—कर्त्तुमुपकान्वा कार्य्यात्, अन्धकार्य्याणा—तद्भिन्नानां कार्य्याणामित्यर्थः, करणं—विधानं, परिवर्त्तकः ।

उदाहरति, यथेति ।—गुरुं—युधिष्ठिरम्, अनुवर्त्तस्व—सेवस्व । अन्यत् स्पष्टम । अत्र आयुधागारप्रवेशरूपात् आरब्धात् पाञ्चालीसमामन्त्रणरूपस्य अन्य कार्य्यस्य करणम् ।

## लक्ष्मी

परिवर्त्तकलक्षणं निरूपयति—प्रारब्धादिति । प्रारब्धात् प्रस्तुतकार्यात् अन्यानि यानि कार्याणि तेषां करणम् आचरणम्, परिवर्त्तयति कर्त्तारमिति परवर्त्तको नाम सात्त्वतीभेदो भवेत् ।

उदाहरति—यथेति । गुरुं युधिष्ठिरम्, अनुवर्त्तस्व अनुसर । अस्त्रागारम् आयुधगृहं प्रविश्य गत्वा आयुधसहायो गृहीतशस्त्रः । आमन्त्रयितव्यैव विचारयितव्यैव । पाञ्चाली द्रौपदी, तया सह विचारः कर्त्तव्य इत्यर्थः । अत्र प्रारब्धं कार्यं युद्धं ततोऽन्यत्, अथवेत्यादिना पाञ्चाल्यामन्त्रणकार्यकरणात् परिवर्त्तकः । यथा च वीरचरिते—

**हेरम्बदन्तमुसलोल्लिखितैकभित्ति वक्षो विशाखविशिखव्रणलाञ्छनं मे ।**

**रोमाञ्चकञ्चुकितमद्भुतवीरलाभात् यत्सत्यमद्य परिरब्धुमिवेच्छति त्वाम् ॥**

रामः—भगवन् ! परिरम्भणमिति प्रस्तुतप्रतीपमेतत्' इत्यादि. आरभटीं लक्षयितुमाह—अथेति । क्रमशः सात्त्वतीनिरूपणानन्तरमित्यर्थः ।

मायेन्द्र इति । माया 'असतो वस्तुनो माया सद्रूपोद्भावना तथा' इत्युक्तलक्षणः, इन्द्रजालः परस्परविरुद्धनानावस्तुप्रदर्शनं च विस्मयजनकव्यापारविशेष इति यावत् । उक्तं च तल्लक्षणम्—

**इन्द्रजालः स्थितार्थस्य मन्त्रचूर्णौषधादिभिः ।**

**अदर्शनमपारोक्ष्यमन्यथाकृतिरुच्यते ॥** इति ।

## रुचिरा

परिवर्त्तकं लक्षयति—४६८ **प्रारब्धेत्यादिना**। प्रारब्धं कार्यं परिहायान्यस्य करणं परिवर्त्तकः । इति वर्त्तुलार्थः ।

उदाहरति—**यथेत्यादिना** स्पष्टोऽर्थः । अत्र हि शस्त्रं गृहीतुं प्रवृत्तेद्रौपद्या सममामन्त्रणावश्यकतया परित्यागः ।

अथारभटी—

**मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ॥ १३२ ॥**

**संयुक्ता वधबन्धाद्यैरुद्धतारभटी मता ।**

**वस्तूत्थापनसंफेटौ संक्षिप्तिरवपातनम् ॥ १३३ ॥**

**इति भेदास्तु चत्वार आरभटयाः प्रकीर्तिताः ।**

---

## विवृतिः

उद्धता । 'वृत्तिः' इति शेषः । मायादीत्यादिना इन्द्रजालग्रहणम् ॥

## विवृतिपूर्तिः

मायेति । 'असतो वस्तुनो माया सद्रूपोद्भावना तथा । इन्द्रजालः स्थितार्थस्य मन्त्रचूर्णौषधादिभिः । अदर्शनमपारोक्ष्यमन्यथाकृतिरुच्यते ॥' इत्युक्तौ मायेन्द्रजालौ ।

आरभटीलक्षणं भट्टरुद्रेणाप्युक्तम्—'या चित्रयुद्धभ्रमशस्त्रपातमायेन्द्रजालप्लुतिसङ्कुिताढया । ओजस्विगुर्वक्षरबन्धगाढा ज्ञेया बुधैः सारभटीति वृत्तिः ॥' इति ॥

## विज्ञप्रिया

अथारभटीति । मायेति । माया विद्याविशेषस्तया इन्द्रजालं परस्परविरुद्धनानावस्तुप्रदर्शनम्, संग्रामो युद्धम्, क्रोधेन उद्भ्रान्तचेष्टितम्—स्वपरज्ञान राहित्येन चेष्टा. एतैर्युक्ता इत्यर्थः । अस्याः प्रभेदचतुष्टयमाह—

## कुसुमप्रतिमा

मायेन्द्रेति । माया कुहलम्, इन्द्रजालं [मायाजनकव्यापारविशेषः, संग्रामी युद्धम्, क्रोधेन उभ्रान्तम् अधीरतया कार्य्यकरणम्, आदिशब्दात् साहसप्रभृति च तादृशैश्चेष्टितैर्व्यापारैः वधबन्धाद्यैश्च व्यापारैः संयुक्ता समन्विता, उद्गता रौद्रा वृत्तिः आरभटी नाम सता । अस्या आरभय्याः वस्तूथापनम्, सफेटः, संक्षिप्तिः, अवपातनञ्च, इति चत्वारो भेदाः प्रकीर्त्तिताः ।

## विमला

मायेति ।—माया—चलविशेषः, इन्द्रजालन—अद्भुतप्रदर्शकविद्याविशेषः, ("असतो वस्तुनो माया सद्रूपोद्भावना तथा ।" इति "इन्द्रजालं स्थितार्थस्य मन्त्रचूर्णीवधादिभिः । अदर्शनमपारीक्ष्यमन्यथाकृतिरुध्यते ॥" इति चोक्तरूपे मायेन्द्रजाले इति सारः) सङ्ग्रामः—युद्धं, क्रोधेन उद्भ्रान्ततवादि, इत्येवं चेष्टितैः—व्यापाकैः, तथा वधबन्दनाद्यैश्च संयुक्ता उद्धता—दारुणा, वृत्तिः इति शेषः, आरभटी ।

तद्भेदनाह, वस्त्वित्यादि ।—वस्तूत्थापनं, सम्फेटः, सङ्क्षिप्तिः, अवपातन च इत्येते चत्वारः आरभद्याः भेदाः प्रकीर्तिताः ।

## लक्ष्मी

सङ्ग्रामो युद्धम्, क्रोधेन कोपेन उद्भ्रान्तम् अधीरतयाकार्यसम्पादनम्, आदिपदात् साहसादयश्च तथोक्तैश्चेष्टितैर्व्यापारैः वधबन्धाद्यैश्च चेष्टितैः संयुक्ता सहिता, उद्धता उग्रा वृत्तिः, आरभेण प्रतोदेन तुल्या भटा उद्धताः पुरुषा आरभटास्ते सन्त्यस्यामिति 'ज्योत्स्नादित्वा' दपि ङीपि आरभटी नाम । एतल्लक्षणं रुद्रटेनाप्युक्तम्—

**या चित्रयुद्धभ्रमशस्त्रपातमायेन्द्रजालप्लुतिलङ्घिताढ्या ।**
**औजस्विगुर्वक्षरबन्धगाढा ज्ञेया बुधैः सारभटीति वृत्तिः ॥ इति ।**

## रुचिरा

आरभटीं लक्षयतिमाह—**अथ । आरभटी** । लक्ष्यते—४६९ **मायेन्द्रेत्यादिना** ।

४६९ **मायेन्द्र..** । मायाऽसतो वस्तुनः सद्रूपेमोद्भावनम् । इन्द्रजालः सतोऽप्यर्थस्यासत्ताविधानम् । तथा बन्धाद्यैः । आद्यपदेन मोहनादीनां ग्रहणम् । **संयुक्ता । आरभटी** तदाख्या वृत्तिः । **मता** । स्पष्टमन्यत् ॥ ४२९ ॥

अस्या भेदान् गणयति—४७० **वस्तूत्थापनसम्फेटानित्यादिना** । स्पष्टम् ॥ ४३० ॥

**मायाद्युत्थापितं वस्तु वस्तूत्थापनमुच्यते ॥ १३४ ॥**

यथोदात्तराघवे—

**'जीयन्ते जयिनोऽपि सान्द्रतिमिरव्रातैर्वियद्व्यापिभि-**

**र्भास्वन्तः सकला रवेरपि कराः कस्मादकस्मादमी ।**

**एते चोग्रकबन्धकण्ठरुधिरैराध्मायमानोदरा**

**मुञ्चन्त्याननकंदरानलमुचस्तीव्रान् रवान् फेरवाः ।' इत्यादि ।**

---

## विवृतिः

जीयन्ते परिभूयन्ते आध्मायमानोदरा ईषद्दह्यमानजठराः । पीयमानरुधिराणां मुखानलेनोष्णत्वाज्जठर-दाहः । फेरवाः शृगालाः अत्र मायोत्थापितं वस्तु ॥

इन्द्रजालोत्थापितं वस्तु यथा—'एष ब्रह्मा सरोजे, रजनिकरकलाशेखरः शंकरोऽयं, दौर्भिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः । एषोऽप्यैरावतस्थस्त्रिदशपतिरमी देवि ! देवास्तथान्ये, नृत्यन्ति व्योम्नि चैताश्च-लचरणरणन्नूपुरा दिव्यनार्यः ॥

इन्द्रजालोत्थापितवस्तुकथनमात्रमेवेदं नारभटीभेदः रौद्रबीभत्सान्यतरसूचकत्वाभावात् ॥

## विज्ञप्रिया

वस्तूथापनलक्षणमाह—मायेति । जीयन्त इत्यादि । जयिनोऽपि वीरा वियद्व्यापिभिर्निशीथतिमिरैः समूहैर्जीयन्ते आच्छाद्यन्ते । रवेरपि अमी भास्वन्तः सकलाः कराः अकस्मादकाले कस्मादाच्छाद्यन्ते । उग्रकबन्दकण्ठ-रुधिरैराध्मायमानम् उत्फुल्लमानमुदरं येषां तादृशाः । आननरूपाभ्यः । कन्दराभ्योऽनलमुच एते फेरवाः श्रृगालाश्च तीव्रान् रवान् मुञ्चन्तीत्यर्थः । अत्र परस्परविरुद्धालीकतिमिररविरश्म्यादिप्रदर्शनरूपमिन्द्रजालरूपवस्तु माययोत्था-पितम् । रौद्रो रसः ।

## कुसुमप्रतिमा

मायेति । मायया अतिशब्ददिन्दजालेन श्व वस्तु पदार्थः यत् उत्थापितम् आविष्कृतं भवति तदस्तूत्था-पनमं नाम आरभटीभेद उच्यते । अत व्युत्पत्तिः स्पष्टा ।

जीयन्त इति । अकस्मात् सहसा कस्माद्धेतो विग्रह्यापिभिः सान्द्रतिमिरव्रातैर्घनान्धकार समूहैः जयिनोऽपि सर्वाभिभावनोऽहि, भास्वर्णो दीप्तिमन्तः, सकलाः समस्ताः अमी रवैः कराः किरणा अपि जीयन्ते अभिभूयन्ते ? । उग्राणां भयङ्कराणां कषन्धानां मस्तकहीनकलेवराणां कण्ठरुधिरैः बाह्यामानानि पूर्य्यभाषाणि उदराणि येषां ते, तया आननानि मुखान्येव कन्दराः गुहास्ताभ्यः अनलानग्रीन् मुञ्चन्ति आविकुर्वन्ति ये ते, एते फेरवाः श्रृगालाह तीव्रान् रयान् मुञ्चन्ति कुर्वन्तीत्यर्थः ।

अत्र मायया घनान्धकारादीनां वस्तूनामुत्थापितत्वाद्वस्तृत्थापनम् ।

## विमला

तत्र वस्तूत्थापनमाह, मायेति ।—मायादिना [आदिना तपःप्रभावादेग्रर्हणम्] उत्थापितं वस्तु, वस्तूत्थापनम् उच्यते ।

उदाहरति, जीयन्ते इति ।—अमी—प्रत्यक्षीभूताः, जयिनः,—सर्वोत्कर्षःशालिनः, भास्वन्तः,—द्रीप्यमानाः, सकलाः,—समग्राः, रवेः,—सूर्य्यस्य, कराः,—मयूखाः अपि, कस्मात्—कथम, अकस्मात्—सहसा, वियद्व्यापिभिः,—गगनाच्छादिभिः, नितान्ततिमिरव्रातैः,—गाढ़ान्धकारनिचयैः, जीयन्त ?— पराभूयन्ते ? आच्छाद्यन्ते इत्यर्थः; एते च फेरवाः,—"फे"इत्यव्यक्तो रयो येषां ते तथोक्ताः, श्रृगालाः इत्यर्थः [“फेरवः” इति पाठान्तरेऽप्ययमेवार्थः । अस्मिन् पक्षे फेरुशब्दः, “फे” इत्यव्यक्तं रौतीति फेरुः । “रु शब्दे,” ततो डुः] उग्राणां—भीषणानां, कबन्धानाम्—अशिरस्ककलेवराणां, ("कपन्धोऽस्त्री क्रियायुक्त-व्यपमूर्द्धकलेवरे" इति मेदिनो) कण्ठरुधिरैः आधायमानं—पूर्य्यमाणम्, अतवा ईषद्दह्यमानम्, उदरं येषां तादृशः, तथा आननं—मुखम एव, कन्दरा—गुहा, गर्त्तविशेष इत्यर्थः, तस्याः अनलम्—अग्निं, मञ्चन्ति—त्यजन्ति, कठोरं शब्दायत्ते इत्यर्थः । अत्र मायया अन्धकारकबन्धघादीनां वस्तूनाम् उत्थापनम् । शार्दूलविक्रीडितं वृत्तम् । इन्द्रजालोत्थापितं वस्तु यथा—"एव ब्रह्मा सरोजे रजनिकरकलाशेखरः शङ्करोऽयं, दोर्मिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिन्हैश्तुर्भिः । एषोऽप्यैरावतस्थस्तिदरापतिरमी देवि ! देवास्तथाऽन्ये नृत्यन्ति व्योम्नि चैताश्चलक्षरणरणन्नूपुरा दिव्यनार्य्यः ॥" इन्द्रजालोत्थापितवस्तुकथनमात्रमेवेदं, नारभटौभेदः, रौद्रबीभत्सान्यतरसूचकत्वाभावात् ।

## लक्ष्मी

तस्या आरभटयाः वस्तूत्थापनम्, सम्फेटः, संक्षिप्तिः, अवपातनञ्च इति चत्वारो भेदाः प्रकीर्त्तिताः ।

तत्र वस्तूत्थापनं लक्षणं निरूपयति—मायेति । मायया उक्तलक्षणया आदिपदादिन्द्रजालेन च वस्तुपदार्थः, यत् उत्थापितं प्रकटितं भवति तद्वस्तूत्थापनं नाम आरभटीभेद उच्यते ।

आद्यमुदाहरति—यथेति—जीयन्त इति । मायाप्रभावं दृष्टवतो मायिकस्य कस्यचिदुक्तिरियम् । अकस्मात् प्रकटकारणं विना वियद्व्यापिभिः सान्द्रतिमिरव्रातैः निशीथान्धकारैः जयिनोऽपि सर्वाभिभाविनोऽपि वीराः, भास्वन्तो देदीप्यमानाः सकलाः समग्रा अमी रवेः दिनकरस्य करा हस्ता अपि 'वलिहस्तांशवः कराः' इत्यमरः, जीयन्ते परिभूयन्ते आच्छाद्यन्त इति यावत् । उग्राणां रौद्राणां कबन्धानां शिरोहीनशरीराणाम्, कणठरुधिरैः आध्मायमानानि उत्फुल्लमानानि उदराणि येषां ते आध्मायमानोदराः ईषद्दह्यमानजठरा इत्यर्थः, पीयमानरुधिराणां मुखानलेन उष्णत्वाज्जठरदाह इति वागीशाः । तथा आननानि वदनान्येव कन्दरा गुहास्ताभ्य अनलान् मुञ्चन्ति त्यजन्ति ये ते तथोक्ता एते फेरवा जम्बूकाश्च तीव्रान् रवान् शब्दान् मुञ्चन्ति कुर्वन्ति । शार्दूलविक्रीडितं छन्दः । अत्र परस्परविरुद्धालीकतिमिररविकिरणादिप्रदर्शनरूपमिन्द्रजालादीनां वस्तूनां माययोत्थापितम् । रौद्रो रसः । केवलमिन्द्रजालोत्थापितं वस्तु यथा—

**एष ब्रह्मा सरोजे रजनिकरकलाशेखरः शङ्करोऽयं**
**दोर्भिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिन्हैश्चतुर्भिः ।**
**एषोऽप्यैरावतस्थस्त्रिदशपतिरमी देवि ! देवास्तथान्ये**

**नृत्यन्ति व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्यः ॥**

## रुचिरा

वस्तूत्थापनं लक्षयति—४७१ **मायेत्यादिना** । निगदव्याख्यातम् ॥ ४३१ ॥

उदाहरति—**यथा** । **उदात्तराघवे** । '**जीयन्ते**'इत्यादौ ।

'**जयिनो** जेतारः । **अपि** । **अमी** । **कस्मात्** । **अकस्मात्** प्रकटकारणं विना । **भास्वन्तः** प्रकाशनशीला । **रवेः** सूर्यस्य । **अपि** 'किम्पुनरन्यस्ये'ति शेषः । **वियद्व्यापिभिः**राकाशे व्याप्तैः । **सान्द्रतिमिरव्रातैः** सान्द्रा निबिडा ये तिमिरव्रातास्तैः **जीयन्ते** पराभूयन्ते । **एते** । **उग्र...**उग्रा भयङ्करा ये कबन्धाः छिन्नशिरस्का अपि युद्धाय प्रवृत्तास्तेषां कण्ठरुधिरैः । **आध्मायमानोदरा** आध्मायमानानि परिपूर्यमाणान्युदरणि येषां ते । **आननकन्दराऽनलमुच** आननान्येव कन्दरास्ताभ्योऽनलमुचोऽग्निवर्षणशीलाः । **फेरवाः** श्रृगालाः । **च** । **तीव्रान्** । **रवान्** । 'कस्मादकस्मा'दिति पूर्वतोऽनुवृत्तम् । **मुञ्चन्ति** । असौ मायिकस्य मायाप्रभावं दृष्टवत उक्तिरियम् । अत्र शार्दूलविक्रीडितं वृत्तम् ॥ २८६ ॥' **इत्यादि** । अत्रादिपदेन 'एष ब्रह्मा सरोजे रजनिचरकलाशेखरः शङ्करोऽयं दोर्भिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिन्हैश्चतुर्भिः ॥' एषोऽप्यैरावतस्थस्त्रिदशपतिरमी देवि देवास्तथाऽन्ये नृत्यन्ति व्योम्निश्चैताश्चलचरमरणन्नूपुरा दिव्यनार्यः ॥' इत्यादीन्युदाहरणान्यूह्यानि ।

**संफेटस्तु समाघातः क्रुद्धसत्वरयोर्द्वयोः**

**यथा मालत्यां माधवाघोरघण्टयोः ।**

---

## विज्ञप्रिया

सम्फेटलक्षणमाह—सम्फेटस्त्विति । समाघातः प्रहारोक्तिः । क्रुद्धेति । क्रुद्धौ च तौ सत्वरौ चेति कर्मधारयः । माधवाघोरेति । तत्र द्वयोः क्रुद्धता । सत्वरता परस्परप्रहारोक्तिश्च ।

## कुसुमप्रतिमा

सम्फेट इति । क्रुद्धौ च तौ सत्वरौ त्वरान्वितौ चेति तयोस्तादृशयोर्द्वयोरेव परस्परं समाघात सम्प्रहारस्तु सम्फेटो नामारभटोभेदः ।

यथेति । मालत्यां मालतीमाधवपञ्चमाङ्के ।

## विमला

सम्फेटमाह, सम्फेट इति ।—क्रुद्धसत्वरयोः—क्रुद्धस्य शीघ्रं कार्य्यकारिणश्च, समाघातः,—सम्यक् प्रहारः, सम्फेटः ।

## लक्ष्मी

सम्फेट लक्षणं निरूपयति—सम्फेटस्त्विति । क्रुद्धौ च तौ सत्त्वरौ शीघ्रयुक्तौ चेति कर्मधारयः तयोस्तथोक्तयोर्द्वयोरेवान्योन्यं समाघातः प्रहारोक्तिस्तु सम्फेटो नाम आरभटीभेदः.

उदाहरति—यथेति । मालत्यां मालतीमाधवपञ्चमाऽङ्के । माधवाघोरेति । तत्राहि मालतीं चण्डिकायै वलीकर्त्तुमुद्यतमघोरघण्टं समीक्ष्य माधवस्य त्वरितम्—'अलं दुरात्मन् । अपेहि प्रतिहतोऽसि कापालिकापसद' इति प्रवेशः । तथात्र—द्वयोः क्रुद्धता सत्त्वरता परस्परप्रहारोक्तिश्च स्फुटैव । यथा च इन्द्रजिल्लक्ष्मणयोश्च रामायणप्रतिबद्धवस्तुषु ।

## रुचिरा

सम्फेटं लक्षयति—४७२ **क्रुद्धसत्वरयोः** क्रुद्धः कुपितः । सत्वरो झटिति तत्प्रतिकर्त्तुम व्यग्रस्तयोः **द्वयोः** । 'कथोश्चित्' इति शेषः । **समाघात** एकत्र सङ्घटः । **तु** । सम्फेटः ।

उदाहरति—**यथा** । **मालत्याम्**मालतीमाधवाख्ये प्रकरणे । **माधवाघोरघण्टयोः** । अयम्भावः—माधवी चण्डिकायै वलीकर्त्तुम्प्रवृत्तमघोरघण्टमवलोक्य माधवस्य सत्त्वरम् । 'अलं दुरात्मन् अपेहि प्रतिहतोऽसि कापालिकापसद इति प्रवेशः । एवं च स्फुटस्तयो परस्परं समाघातः । इति ।

**संक्षिप्ता वस्तुरचना शिल्पैरितरथापि वा ॥ १३५ ॥**

**संक्षिप्तिः स्यान्निवृत्तौ च नेतुर्नेत्रन्तरग्रहः ।**

यथोदयनचरिते कलिङ्गहस्तिप्रयोगः । द्वितीयं यथा वालिनिवृत्त्या सुग्रीवः । यथा वा परशुरामस्यौद्धत्यनिवृत्त्या शान्तत्वापादनम्—'पुण्या ब्राह्मणजातिः—' इति ।

---

## विवृतिः

इतरथा शिल्पेतरेण । नेत्रन्तरत्वं व्यक्तिभेदाद्धर्मभेदाच्च भवति । धर्मभेदान्नेत्रन्तरत्वमाह—यथा परशुरामस्येत्यादि ॥

## विवृतिपूर्तिः

इतरथेति । इतरथा यथा विद्धशालभञ्जिकायां शालभञ्जिकादौ प्रतिफलनम् ॥

निवृत्ताविति । एकराजनिवृत्तावन्यराजस्थापनं संक्षिप्तिरिति. ॥

कलिङ्गेति । काष्ठघटितहस्तिप्रयोगः ॥ अत्र कथासरित्सागरीयकथामुखलम्बकस्य चतुर्थतरङ्गता एते श्लोका द्रष्टव्याः—"अत्रान्तरे स वत्सेशप्रदूतीतस्तदब्रवीत् । गत्वा प्रतिवचश्चण्डमहासेनायभूभृते ॥ सोऽपि चण्डामहासेनस्तच्छुत्वैव व्यचिन्तयत् । स तावदिह नायाति मानी वत्सेश्वरो भृशम् ॥ कन्या हि तत्र न प्रेष्या भवेदेवं हि लाघवम् । तस्माद्बद्धैव तद्युक्त्या नृपमानाययाम्यहम् ॥ इति संचिन्त्य संमन्त्रय स राजा मन्त्रिभिः सह । अकारयत्स्वसदृशं महान्तं यन्त्रहस्तिनम् ॥ तं चान्तर्वीरपुरुषैः कृत्वा छन्नैरधिष्ठितम् । विन्ध्याटव्यां स निदधे राजा यन्त्रमयं गजम् ॥ तत्र तं चारपुरुषाःपश्यन्ति स्म विदूरतः । गजबन्धरसासक्तवत्सराजोपजीविनः ॥ तेच त्वरितमागत्य वत्सराजं व्यजिज्ञपन् । देव ! दृष्टो गजोऽस्माभिरेको विन्ध्यवने भ्रमन् ॥ अस्मिन्नियति भूलोके नैव योऽन्यत्र दृश्यते । वर्ष्मणा व्याप्तगगनो विन्ध्याद्रिरिव जङ्गमः ॥ ततश्चारवचः श्रुत्वा वत्सराजो जहर्ष सः । तेभ्यः सुवर्णलक्षं च प्रददौ पारितोषिकम् ॥ तं चेद्गजेन्द्रं प्राप्स्यामि प्रतिमल्लं नडागिरेः । ततश्चण्डमहासेनो वश्यो भवति मे ध्रुवम् ॥ ततो वासवदत्तां तां स स्वयं मे प्रयच्छति । इति संचिन्तयन् सोऽथ राजा तामनयन्निशाम् ॥ प्रातश्च मन्त्रिवचनं न्यक्कृत्वा गजतृष्णया । पुरस्कृत्यैव तांश्चारान् ययौ बिन्ध्याटवीं प्रति ॥ प्रस्थानलग्नस्य फलं कन्यालाभं सबन्धनम् । यदूचुर्गणकास्तस्य तस्स नैव व्यचारयत् । प्राप्य विन्ध्याटवींतस्य गजस्य क्षोभशङ्कया । वत्सराजः स सैन्यानि दूरादेव न्यवारयत् ॥ चारमात्रसहायस्तु वीणां घोषवतीं दधत् । निजव्यसनविस्तीर्णा तां विवेश महाटवीम् ॥ विन्ध्यस्य दक्षिणे पार्श्वी दूराच्चारैः प्रदर्शितम् ।गजं सत्यगजाभासं तं ददर्स स भूपतिः ॥ एकाकी वादयन् वीणां चिन्तयन् बन्धनानि सः । मधुरध्वनि गायँश्च शनैरुपजगाम तम् ॥ गान्धर्वदत्तचित्तत्वात्संध्याधध्वान्तवशाच्च सः । न तं वनगजं राजा मायागजमलक्षयत् ॥ सोऽपि हस्ती तमुत्कीर्णतालो गीतरसादिव । उपेत्योपेत्य विचलन् दुरमाकृष्टवान्नृपम् ॥ ततोऽकस्माच्च निर्गत्य तस्माद्यन्त्रमयाद्गजात् । वत्सेश्वरं तं संनद्धाः पुरुषाः पर्यवारयन् ॥" इति ।

## विज्ञप्रिया

संक्षिप्तिलक्षणामाह— संक्षिप्तेति। नेतुर्नृत्यपात्रस्य एकस्य निवृत्तौ नेत्रन्तरस्य ग्रह एव संक्षिप्तवस्तुरचना। सा च शिल्पैराशिल्पैर्वेत्यर्थः। शिल्पं विलक्षरावस्तु निर्माणाकौशलम्। किलिञ्जहस्तिप्रयोग इति। तत्र वास्तवहस्तिरूपपात्र निवृत्रो शिल्पे किलिञ्जनामहस्तिरूपपात्रप्रदर्शनम्। अशिल्पैराह—द्वितीयामिति। औद्धत्यनिवृत्येति। अत्र धर्मनिवृत्त्या धर्मिणि निवृतिर्बोध्या। औद्धत्यकालीनश्च रौद्रो रसः। एव सुग्रीवकिलिञ्जहस्तिनोः पूर्वं रौद्रो रसो बोध्यः।

## कुसुमप्रतिमा

संक्षिप्तरिति। शिल्पैः इतरथा अन्यप्रकारेणापि वा वस्तुनः पदार्थविशेषस्य रचना निर्म्माणं संक्षिप्तिः स्यात्; तता नेतुरेकस्य पात्रस्य निवृत्तौ सत्यां नेत्रन्तरग्रहः पात्रान्तरत्वेन ग्रहणं ज्ञानञ्च संक्षिप्तिः स्यात् पात्रान्तरत्वेन ग्रहणञ्च द्विधा सम्भवति—व्यक्तिभेदात् धर्म्मभेदाञ्च।

यथेति। किलिञ्चहस्तिप्रयोगः काष्ठमयहस्तिन आविर्भावनम्।

अत्र शिल्पेन काष्ठमयहस्तिचनया संक्षिप्तिः।

द्वितीयमिति। अत्र वालिरूपस्य पात्रस्य। निवृत्तौ व्यक्तिभेदेन मुग्रीवरूपपात्रस्य ज्ञानात् संक्षिप्तिः।

तृतीय प्रकारमुदाहरति यथावेति। अत्र औद्धत्यनिवृत्तौ शान्तत्वप्रतिपापनेन धर्म्मभेदात् परशुरामस्य नेत्रन्तरत्वेन ग्रहणात् संक्षिप्तः।

## विमला

सङ्क्षिप्तिमाह, सङ्क्षिप्तेति।—शिल्पैः इतरथाऽपि—शिल्पैतरेणापि, सङ्क्षिप्ता वस्तूनां रचना सङ्क्षिप्तिः; च—किञ्च, नेतुः—नायकस्य, निवृत्तौ, स्वव्यापारात्, इति भावः, नेत्रन्तरस्य—अन्येनायकस्य, ग्रहः—ज्ञानमित्यर्थः, संङ्क्षिप्तिः।

उदाहरति, यथेति।—किलिञ्जहस्तिप्रयोगः—काष्ठनिर्मितहस्तिप्रयोगः, अत्र शिल्पेन रचना। नेत्रन्तरत्वं व्यक्तिभेदाद्धर्मभेदाञ्च भवति; व्यक्तिभेदात् यथा—बालि इत्यादि। धर्मभेदान्नेत्रन्तरत्वमाह, यथा—परशुरामस्य औद्घत्यस्य—उद्धतस्वभावस्य, निवृत्त्या—अपगमेन, शान्तत्वस्य आपादनं—ग्रहण, तद्वचनं निदर्गियति, घुणया इति। महावीरचरिते स्पष्टमिदम्।

## लक्ष्मी

संक्षिप्तिलक्षणं निरूपयति—संक्षिप्तिरिति। शिल्पैः विलक्षणवस्तुनिर्म्माणकौशलैः इतरथा शिल्पेतरेण प्रकारेणापि वा वस्तुनः पदार्थविशेषस्य संक्षिप्ता रचना निर्म्माणं संक्षिप्तिः भवेत् तथा नेतुरेकस्य नृत्यपात्रस्य निवृत्तौ सत्यं नेत्रन्तरग्रहः भिन्नपात्रत्वेन ग्रहणं बोधश्च संक्षिप्तिर्भवेत् भिन्नपात्रत्वेन ग्रहणं च व्यक्तिभेदाद्धर्मभेदाञ्च द्विधा भवति।

उदाहरति—यथेति। (क)कलिञ्जहस्तिप्रयोगः। तत्र वास्तवहस्तिरूपपात्रनिवृत्तौ शिल्पेन काष्ठमयहस्तिन आविर्भावनम्। अत्र शिल्पेन काष्ठमयहस्तिरचनया संक्षिप्तिः। द्वितीयमिति। अत्र वालिरूपस्य पात्रस्य

निवृत्तौ व्यक्तिभेदेन सुग्रीवरूपपात्रस्यावगमात् संक्षिप्तिः । धर्मभेदान्नेत्रन्तरत्वमाह—यथा वेति । औद्धत्यनिवृत्त्या स्तब्धत्वनिवृत्तौ शान्तत्वापादनं तपस्वितया भवनं तथा सति 'पुण्या ब्राह्मणजाति' रिति । तथा च—

**'पुण्या ब्राह्मणजातिरन्वयगुणः शास्त्रं चरित्रं च मे**
**येनैकेन हतान्यमूनि हरता चैतन्यमात्रामपि ।**
**एकः सन्नपि भूरिदोषगहनं सोऽयं त्वया प्रेयसा**
**वत्स ! ब्राह्मणवत्सलेन शमितः क्षेमाय दर्पामयः ॥'**

इति कथयतः परशुरामस्य शान्तत्वम् । औद्धत्यनिवृत्तौ शान्तत्वकथनेन धर्मभेदात् परशुरामस्य नेत्रन्तरत्वेन ज्ञानात् संक्षिप्तिः । औद्धत्यकालीनश्चात्र रौद्रो रसः । एवं सुग्रीवकलिङ्गहस्तिनोरपि पूर्वं रौद्रो रसो बोध्यः ।

## रुचिरा

सङ्क्षिप्ति लक्षयति—४७३ **शिल्पैः । अथ** । (इदं पक्षान्तरे) । **इतरथा**ऽन्यथा प्रकारान्तरेणेति यावत् । **अपि । वा** (इदं समुच्चये) । **सङ्क्षिप्ता । वस्तुरचना** पदार्थनिर्माणम् । **च** तथा । **नेतुर्नायकस्य । निवृत्तौ** आत्मना सत्त्वे स्वभावतो वाऽतथाभूतन्ये इति भावः । **नेत्रन्तरग्रहो** नेत्रन्तरस्यान्यस्य नायकस्य ग्रह उपादानम् । इदं तत्त्वम्—यदि नायको हतस्तदाऽन्यस्य नायकस्योपासनम्, यदि च सतोऽपि नायकस्य स्वभावपरिवृत्तिस्तर्हीति । सङ्क्षिप्तिः । स्यात् । ४३२ ॥

उदाहरति—**यथा । उदयनचरिते** रूपकविशेषे । **कलिङ्गहस्तिप्रयोगः** । कलिङ्गहस्तिनः काष्ठनिर्मितगजस्व प्रयोगः । (इदं शिल्पोदाहरणम्) **द्वितीयं** नेत्रन्तरग्रहणम् । **यथा । वालिनिवृत्त्या** वालिनो मरणानन्तरम् । **सुग्रीव** 'स्ताराया उपास्यत्वेन संवृत्त' इति शेषः । **यथा वा । परशुरामस्य । औद्धात्यनिवृत्त्या** स्तब्धत्वनिवृत्तौ । **शान्तत्वापादनं** तपस्वितया भवनम् । तथा सति—**'पुण्या ब्राह्मणजातिः'** इति । इदं बोध्यम्—'पुम्यब्राह्मणजातिरन्वयगुणः शास्त्रं चरित्रं च मे येनैकेन हतान्यमूनि हरता चैतन्यमात्रामपि । एकः सन्नति भूरिदोषगहनं सोऽयं त्वया प्रेयसा वत्स ! ब्राह्मणवत्सलेन शमितः क्षेमाय दर्पामयः ॥' इत्युच्चरतः परशुरामस्य शान्तत्वमिति । इदं च बोध्यम्—शिल्पेतरेण वस्तुरचना कविप्रतिभोत्थापितैव भवति, यथाऽभिज्ञानशाकुन्तले भ्रमरबाधोद्भावनेन कविना शकुन्तलाया आननं कमलात्मनोद्भावितमिति ।

**प्रवेशत्रासनिष्क्रान्तिहर्षविद्रवसंभवम् ॥ १३६ ॥**

**अवपातनमित्युक्तं—**

यथा कृत्यरावणे षष्ठेऽङ्के—'(प्रविश्य खड्गहस्तः पुरुषः ।') इत्यतः प्रभृति निष्क्रमणपर्यन्तम् ।

---

## विवृतिः

विद्रवः पलायनम् । प्रवेशादिसंभवं वस्तु अवपातनमित्यर्थः ॥

## विज्ञप्रिया

अवपातलक्षणमाह—प्रवेशेति । प्रवेशादिविद्रवान्तानां सम्भव उत्पादनमवपातनमित्यर्थः । विद्रवः पलायनम् । मिलितानामेषामुत्पादनम् । प्रविश्येति । तेन पुरुषेण सर्वमिदं कृतम् । क्रोधवशात् एतत् कारणात् रौद्रो रसः ।

## कुसुमप्रतिमा

प्रवेशेति । प्रवेशः, त्रासो भयम्, निष्क्रान्तिनिर्गमनम् हर्षं उत्सवः, विद्रवः पखायनञ्च तेभ्यः सम्भवतीति तत्ततोक्तं सङ्घर्शणमिति शेषः, अवपातनं नाम आरभटीप्रकारान्तमुक्तमालङ्कारिकैरिति शेषः ।

## विमला

अवपातनमाह, प्रवेशेति ।—विद्रवः—पलायनम् । प्रवेशादिसम्भवं वस्तु अवपातनमित्यर्थः ।

## लक्ष्मी

अवपातलक्षणं निरूपयति—प्रवेशेति । प्रवेशः, त्रासो भीतिः, निष्क्रान्तिर्निष्क्रमणम्, हर्ष उत्सवः, विद्रवः पलायनञ्च तेभ्यः सम्भवति यत्तत्तथोक्तं स्पर्द्धनमिति शेषः, अवपातनं नाम आरभटीभेदान्तरमभिहितं नाट्यविद्भिरिति शेषः ।

उदाहरति—यथेति । प्रविश्येति । तेन पुरुषेण सर्वमिदं कृतम् । क्रोधवशादेतत्करणाद्रौद्रो रसः । यथा च रत्नावल्याम्—

**'कण्ठे कृत्वावशेषं कनकमयमधः श्रृङ्खलादामकर्षन्**
**क्रान्त्वा द्वाराणि हेलावलचरणवलत्किङ्किणीचक्रवालः ।**
**दत्तातङ्को गजानामनुसृतसरणिः सम्भ्रमादश्वपालैः**
**प्रभ्रष्टोऽयं प्लवङ्गः प्रविशति नृपतेर्मन्दिरं मन्दुरातः ॥'**

इत्यादिना 'नष्टं वर्षवरैः' इत्यन्तम् ।

## रुचिरा

अवपातनं लक्षयति—४७४ **प्रवेशत्रासनिष्क्रान्तिहर्षविद्रवसम्भवं** प्रवेशः पात्रान्तरप्रवेशस्तेन त्रासः, स च निष्क्रान्तिः पात्रान्तरनिष्क्रमणं तथा हर्षश्च, तयोर्विद्रवो झटिति कार्यात्मना परिणामनं स सम्भव उत्पत्तिस्थानं यस्य तथोक्तम्। **अवपातनम्। इत्युक्तम्**।।४३३॥

उदाहरति—**यथेत्यादिना**। स्पष्टोऽर्थः। इदं तु बोध्यम्—कृत्यरावणो नाम कस्यचिद्रूपकस्य षष्ठोऽङ्कः, सच रामं सीतां वा मोहयितुं रावणनिर्मितां सीताप्रतिकृतिं रामप्रतिकृतिं वा निर्दिश्य रामस्य सीताया वा त्रासहर्ष-योरुद्भावनार्थः। एतच्च श्रीरामायणं दृष्टवतामतिरोहितम्। इति।

**पूर्वमुक्तैव भारती।**

अथ नाटयोक्तयः—

**अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्॥ १३७॥**

**सर्वश्राव्यं प्रकाशं स्यात्तद् भवेदपवारितम्।**

**रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते॥ १३८॥**

**त्रिपताकरेणान्यानपवार्यान्तरा कथाम्।**

**अन्योन्यामन्त्रणं यत्स्यात्तज्जनान्ते जनान्तिकम्॥ १३९॥**

**किं ब्रवीषीति यन्नाटये विना पात्रं प्रयुज्यते।**

**श्रुत्वेवानुक्तमप्यर्थं तत्स्यादाकाशोभाषितम्॥ १४०॥**

यः कश्चिदर्थो यस्माद् गोपनीयस्तस्यान्तरत ऊर्ध्वसर्वाङ्गुलिनामितानामिकं त्रिपताकलक्षणं करं कृत्वान्येन सह यन्मन्त्रयते तज्जनान्तिकम्। परावृत्यान्यस्य रहस्यकथनमपवारितम्। शेषं स्पष्टम्।

---

## विवृतिः

पूर्वं स्थापककर्तव्यकथनावसरे॥

अश्राव्यं परस्य श्रवणायोग्यम्। परावृत्य स्थानान्तरं गत्वा।

अन्तरा कथां कथामध्ये।

अन्योन्यस्य यदामन्त्रणं गुह्यभाषणम्। जनान्ते जनसमीपे। किं ब्रवीषीत्युक्त्वा। पात्रं श्रोतृनटम्। श्रुत्वा श्रवणाभिनयं कृत्वा॥

## विवृतिपूर्तिः

स्वगतमिति। इहात्मवाची स्वशब्दः॥

त्रिपताकेति। मुनिरपि नवमाध्याये चतुःषष्टिकरलक्षणप्रतिपादनावसरे—'प्रसारिताः समाः सर्वा यस्याङ्गुल्यो भवन्ति हि। कुञ्चितश्च तथाङ्गुष्ठः स पताक इति स्मृतः॥' इत्युक्त्वा 'पताके तु यदा वक्रानामिका त्वङ्गुलिर्भवेत्। त्रिपातकः स विज्ञेयः' इत्यनेन त्रिपताकलक्षणं दर्शितवान्। संगीतरत्नाकरेऽपि पताकलक्षणमभिधाय। 'स एव त्रिपताकः स्याद्वक्रितानामिकाङ्गुलिः' इति त्रिपताकलक्षणमभिहतम्। मन्दारमरन्दे तु किंचिद्विशेषः—'तर्जनीमूलसंलग्नकुञ्चिताङ्गुष्ठकः करः। गण्डगः संहताकारप्रसारिततलाङ्गुलिः॥ पताकः स्यादथ यदि वक्रितानामिकाङ्गुलिः। स एव श्रोत्रगस्तर्हि त्रिपताक इतीर्यते॥' इति॥

## विज्ञप्रिया

भारतीवृत्तिस्तु पूर्वमुक्तैवेत्याह—पूर्वमिति । भारती संस्कृतप्रायो वाग्व्यापारो नराश्रय इति । स्थापक-कृत्यप्रसङ्गेन प्रागुक्तेत्यर्थः । सा च सर्वसाधारण्येनेत्युक्तम् । रसे सर्वत्र भारती ।

नाट्योक्त्य इति । नाट्ये परिभाषाविशेषा इत्यर्थः । तद्भवेदित्यादेः परत्रान्वयः । त्रिपताकेत्यादिकं जनान्तिकलक्षणम् । त्रिपताकलक्षणमग्रेवक्ष्यति । अन्तरा कथां कथामध्ये । तादृशेन करेणान्यमपवार्य्याच्छाद्य जनस्यान्ते अन्तिके यत् अन्योन्यामन्त्रणं कथनं, तज्जनान्तिकमित्यर्थः ।

विना पात्रमिति । रङ्गप्रविष्टमुद्दिश्य इत्यर्थः । त्रिपताकेत्यादिकं व्याचष्टे—यः कश्चिदिति । तस्यान्तरत इति । तद्भिन्ने जने इत्यर्थः । इयं जनान्ते इत्यस्य व्याख्या । ऊद्ध्र्वं सर्वेति त्रिपताकव्याख्यानम् । अपवारितं व्याचष्टे—परावृत्त्येति ।

## कुसुमप्रतिमा

पूर्वमिति । "भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः ।" इत्यनेनेत्यर्थः ।

आश्राव्यमिति । यत् खलु वस्तु वाक्यम् अश्राव्यम् अन्यैः श्रोतुमशक्यम्, इह नाट्यशास्त्रे तद्वाक्यं स्वगतं मतम्; स्वस्मिन्नात्ममात्रे गतं प्रत्यक्षत्वेन स्थितमिति व्युत्पत्तेः । आत्मगतमिति चास्यैव संज्ञान्तरम् । सर्वैः श्राव्यं श्रोतुं शक्यं वाक्यं प्रकाशं स्यात् । सर्वेषु प्रकाशते प्रत्यक्षीभवतीति व्युत्पत्तेः । परावृत्य अन्यं जनं पृष्ठतः कृत्वा अन्यस्य तङ्भिन्नस्य जनस्य समीपे यत्तु रहस्यं गोपनीयं वस्तु प्रकाश्ते उच्यते, तदपवारितं नाम भवेत्; अपवारितं पृष्ठवर्त्तिजनस्य श्रवणे बाधितमिति व्युत्पत्तेः । तिसृणां पताकानाम् उत्तोलितपताकादण्डानां समाहार इति त्रिपताकं तद्वत् करस्तेन उत्तोलिताङ्गुलीत्रयेण, हस्तेनेत्यर्थः अन्यान् जनान् अपवार्य्य आवृत्य वाधित्वा कथामन्तरा यस्य कस्यचित् प्रस्तावस्य मध्ये, जनान्ते पात्रगणमध्य एव यत् अन्योन्थामन्त्रणं परस्परमालापः, तत् जनान्तिकं स्यात् । नाट्ये अभिनये पात्रं जनं विना अनुक्तमपि अर्थे विषयं श्रुत्वेव श्रवणाभिनयं कृत्वा 'कि' ब्रवीषि ? इति इत्यर्थकं यत् प्रयुज्यते उच्यते, तत् आकाशभाषितं स्यात् आकाशे लक्ष्यपात्राभावात् शून्ये भाषितमिति व्युत्पत्तेः ।

विवृणीति य इति । अर्थो विषयः । यस्माज्जनात् । तस्य जनस्य अन्तरती व्यवधाने । ऊर्द्धम् उत्तोलित-मिति करमित्यस्य विशेषणं सर्वासामङ्गुलीनां लीनां मध्ये नामिता अनामिका नाम अङ्गलौ यस्य तम् अतएव त्रिपताकलक्षणम् उत्तोलितपताकादण्डत्रयस्वरूपम् । मन्त्रयते आलम्बते । शेषम् अवशिष्टम् अश्राव्यमित्यादिकं स्पष्टम्, अतो न व्याख्यात इति भावः ।

## विमला

पूर्वमिति ।—पूर्वं—स्थापककर्त्तव्यकथनावसरे, भारती—तदाख्या वृत्तिः ।

नाट्य श्राव्यमिति ।—अश्राव्यं—पात्रान्तरैः श्रोतुमनर्हमित्यर्थः । अन्यस्य परावृत्त्य—पश्चात् कृत्वा, पराङ्मुखीबूय वा स्थानान्तरं भूत्वा वा, यत् रहस्यं—गुप्त वस्तु, प्रकाश्यते—कथ्यते, तत् अपवारितं भवेत् । ज़नान्ते—जन समीपे, तिस्त्रः पताकाः यस्य तादृसेन, उत्क्षिप्ताहुलित्रयेणेत्यर्थः, करेण अन्यात् जनान् अपवार्य्य—आच्छाद्य, कथाम् अन्तरा—कतामध्ये, यत् अन्योऽन्यामन्त्रणं—परस्परं गुह्यालापः, स्यात्, तत् णतान्तिकम् । नाट्ये

पात्र—व्यक्तिं, वक्तनटमित्यर्थः, विना अनुक्तमपि, अर्थं—विषयं, श्रुत्वेव—श्रवणाभिनयं कृत्वेवेत्यर्थः, किं ब्रवीषीति यत् प्रयुज्यते, तत् आकाशभाषितं स्यात् ।

## लक्ष्मी

भारतीवृत्तिस्तु पूर्वमुक्तैवेत्याह—पूर्वमिति । 'भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः' इत्यनेनेत्यर्थः । स्थापककृत्यप्रसङ्गेन प्रागुक्तेत्यर्थः । सा च सर्वसाधारण्येनेत्युक्तं रसे सर्वत्र भारतीति । अथ नाटयोक्तय इति । नाट्यपरिभाषाविशेष इत्यर्थः ।

अश्राव्यमिति । यत् खलु वस्तु वाक्यम् अश्राव्यम् अन्यस्य श्रवणायोग्यम् इह दृश्यकाव्ये तद्वाक्यं स्वस्मिन्नात्ममात्रे गतं प्रत्यक्षत्वेन स्थितमिति स्वगतं मतम् । आत्मात्मीयज्ञातिधनवाचिनोऽपि स्वशब्दस्येहात्मवाचित्वमेव ग्रहणं बोध्यम् । तथा च आत्मगतमित्यस्यैव नामान्तरमिदम् । सर्वैः श्राव्यं श्रवणयोग्यं यद्वस्तु तत् सर्वेषु प्रकाशते प्रत्यक्षीभवतीति प्रकाशं स्यात्, परावृत्य स्थानान्तरं गत्वा अन्यस्य परस्य जनस्य समक्षे यत्तु रहस्यं गोपनीयम् अन्यैरकथनीयमित्यर्थः, वस्तु प्रकाश्यते प्रतिपाद्यते तत् अपवारितं स्थानान्तरं गत्वान्यजनस्य श्रवणो वाधिकमिति अपवारितं नाम भवेत् परावृत्त्यान्यस्य श्रवणयोग्यं रहस्यकथनमपवारितमित्यर्थः । तिसृणां पताकानाम् उत्तोलितपताकादण्डानां समाहारस्त्रिपताकं तद्वत् करो हस्तस्तेन तथोक्तेन । महर्षिणा त्रिपताकलक्षणमित्थभिहितम्—

'प्रसारिताः समाः सर्वा यस्याङ्गुल्यो भवन्ति हि ।

कुञ्चितं च तथाङ्गुष्ठः स पताक इति स्मृतः ॥ इत्यभिधाय पताके तु यदावक्राऽनामिका त्वङ्गुलिर्भवेत्

त्रिपताकः स विज्ञेयः' । इत्याह

मन्दारमरन्दे तु किञ्चिद्विशेषेण प्रतिपादितम्—

**'तर्जनीमूलसंलग्नकुञ्चिताङ्गुष्ठकः करः ।**

**गण्डगः संहताकारप्रसारिततलाङ्गुलिः ॥**

**पताकः स्यादथ यदिग वक्रितानामिकाङ्गुलिः ।**

**स एव श्रोत्रगस्तर्हि त्रिपताक इतीर्यते ॥"**

अन्यान् जनान् अपवार्य आच्छाद्य कथामन्तरा यस्य कस्यचित् कथामध्ये जनान्ते पात्रसमूहमध्य एव यत् अन्योन्यस्य परस्परस्य आमन्त्रणं गुह्यभाषणं तत् जनान्तिकं स्यात् । नाट्ये अभिनये पात्रं विना जनं विना अनुक्तमपि अकथितमपि अर्थं विषयं श्रुत्वेव श्रवणाभिनयं कृत्वा 'किं ब्रवीषि ?' इति इत्यर्थकं यत् प्रयुज्यते प्रतिपाद्यते तत् आकाशे शून्ये लक्ष्यपात्राभावात् भाषितम् आकाशभाषितं स्यात् ।

त्रिपताकेत्यादिकं विवृणोति—यः कश्चिदिति । अर्थो विषयः । यस्माज्जनात् तस्यान्तरतः तद्भिन्ने जने इत्यर्थः । इयं जनान्तं इत्यस्य व्याख्या । ऊर्ध्वम् उत्तोलितमिति करमित्यस्य विशेषणम्, सर्वासामङ्गुलीनां मध्ये नामिता नम्रीभूता अनामिका नाम मध्यकनिष्ठिकाङ्गुल्यन्तराला अङ्गुली यस्य तं तथोक्तम् । अत एव त्रिपताकलक्षणम् उत्तालितपताकादण्डत्रयस्वरूपम् । मन्त्र्यते गुह्यमुच्यते । ऊर्ध्वं सर्वेत्यादिकं त्रिपताकव्याख्यानम् । अपवारितं विवृणोति—परावृत्येति । शेषमवशिष्टम् अश्राव्यमित्यादिकं स्फुष्टं सुगमम् अतो न विव्रियते इति भावः ।

## रुचिरा

अथ भारतीवृत्तेर्निरूपणस्य क्रमप्राप्तत्वेऽपि तदनावश्यकत्वममन्वान आह—४७५ **पूर्वमित्यादि**। **पूर्वं** स्थापककर्त्तव्यप्रस्तावे। स्पष्टमन्यत्।

एवं वृत्तीर्दशयित नाटयोक्तीर्लक्षयितुमाह—**अथ। नाटयोक्तयः**। लक्ष्यन्ते—४७६. **अश्राव्यमित्या-**दिना।

४७६ **यत्। अश्राव्यं** परस्य श्रवणानर्हम्। **खलु। वस्तु** इतिवृत्तम्। **तत् इह** रूपके। **स्वगतम्**। अत्र स्वशब्द आत्मशब्दस्याप्युपस्थापकः, तेन-क्वचित्- 'आत्मंगत'मित्यप्यभिहितं सङ्गच्छते। **मतम्। सर्वश्राव्यम्**। पुनः—**प्रकाशं** तत्सञ्ज्ञम्। **स्यात्। यत्। तु** पुनः। **परावृत्यान्यत्र** गत्वा। **अन्यस्य। रहस्यम्। प्रकाश्यते। तत्। अपवारितम्। भवेत्। त्रिपताककरेण** पताकात्रयसदृशेन हस्तेन। **अन्यान्। अपवार्य** निवर्त्तर्य। कथाम्। **अन्तरा** मध्ये। **जनान्ते** कस्यापि जनस्य सन्निधौ। **यत्। अन्योऽन्यामन्त्रणम्। स्यात्। तत्**। जनान्तिकम्। **यत्। नाटये** रूपके। **पात्रे प्रष्टव्यम्। विना। प्रयुज्यते**। तत्-**किम्। ब्रवीषि**। इति 'कीर्त्यते' इति शेषः। यच्चैवम्—**अनुक्तम्। अपि। अर्थम्। श्रुत्वेव**। 'प्रयुज्यते' इति शेषः। **तत्। आकाशभाषितम्। स्यात्**॥ ४३४-४३७॥

अश्राव्यं कथं श्रावणीयमित्याशङ्क्याह—**यः। कश्चित्। अर्थः। यस्मात्। गोपनीयाः। सः—तस्य। अन्तरतो** व्यवहितत्वे भवतीत्यर्थः। त्रिपताककरेणोत्यस्याऽर्थ लक्षयन् जनान्तिकपदार्थमाह—**ऊर्ध्वसर्वाङ्गुलिना-मितानामिकमूर्द्ध** (कृताः) सर्वाङ्गुलयो यत्र सोऽसौ नामिताऽधः कृताऽनामिका यत्र तादृश इति तं तथोक्तम्। **करं** हस्ताम्। **कृत्वा अन्येन। सह। यत्। मन्त्रयते** विचार्य्यते **तत्। जनान्तिकम्**। सिंहनिरीक्षण,न्यायेनापवारितपदार्थं दर्शयति—**परावृत्य** स्थानान्तरं गत्वा। स्पष्टमन्यत्।

**दत्तां सिद्धां च सेनां च वेश्यानां नाम दर्शयेत्।**

**दत्तप्रायाणि वणिजां चेटचेटयोस्तथा पुनः ॥ १४१ ॥**

**वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद् भवेत्।**

वेश्या यथा वसन्तसेनादिः । वणिग्विष्णुदत्तादिः । चेटः कलहंसादिः । चेटी मन्दारिकादिः ।

---

## विवृतिः

दत्तामित्यादि नाम्नश्चरमाञ्चलम् । तेन दत्तान्तादिनाम् ।

दत्तप्रायाणि दत्तान्त बहुलानि । वसन्तादि, षुवर्ण्यस्य कलहंसादेर्यन्नाम तच्चेटस्य चेट्याश्च स्यादित्यर्थः । एकशेषाभावश्चिन्त्यः ।

## विवृतिपूर्तिः

दत्तामित्यादि । अत्र विशेषः—'ब्रह्मक्षत्रस्य नामानि गोत्रकर्मानुरूपतः । काव्ये कार्याणि कविभिः शर्मवर्म-कृतानि च ॥ दत्तप्रायाणि नामानि वणिजां तु प्रयोजयेत् । शौर्योदात्तानि नामानि तथा शूरेषु योजयेत् ॥ विजयार्थानि नामानि राजस्त्रीणां च कारयेत् । दत्ता मित्राथ सेनेति वेश्यानामानि कारयेत् ॥ विजयार्थानि नामानि राजस्त्रीणां च कारयेत् । दत्ता मित्राथ सेनेति वेश्यानामानि कारयेत् ॥ नानाकुसुमनामानः प्रेष्याः कार्यास्तु नाटके । मङ्गलार्थानि नामानि चेटानामपि कारयेत् ॥' इति ॥

## विज्ञप्रिया

पात्राणां नामान्याह—दत्तामिति । वसन्तादिषु वर्णनीयस्य वस्तुनो यन्नाम भवेत् चेटचेटयोस्तथा नाम इत्यर्थः ।

## कुसुमप्रतिमा

दत्तामिति । वेश्यानां नाम दत्तां दत्ताशब्दान्तम्, सिद्धां सिद्धाशब्दान्तम्, सेनां सेनाशब्दान्तञ्च दर्शयेत् नाटकादौ कविरिति शेषः । वणिजां नामानि दत्तप्रायाणि बाहुल्येन दत्तशब्दान्तानि दर्शयेत् । प्रायपदोपादानात कदाचित् कविर्भूत्यादिशब्दान्तमपि वणिजां नाम दर्शयितुमर्हतीति सूचितम् । तथा वसन्तादिषु कालेषु वर्ण्यस्य वर्णनायोग्यस्य वस्तुनः कलहंसादिपदार्थस्य यद्यादृशानुपूर्वीकं नाम भवेत्, चेटचेटयोर्दासदास्योः पुनस्तादृशानुपूर्वीकं नाम भवेदित्यर्थः ।

वेश्येति । वसन्तकाले कलहं सस्य वर्णनीयतया मालतीमाधवे माधवभृत्यस्य कलहंसेति नाम । मन्दार-पुष्पस्य शीतकाले विकासितया वर्णनीयत्वात् मालतीमाधवे विहारदास्या मन्दारिकेति नाम ।

## विमला

दत्तामिति ।—वेश्यानां दत्तां सिद्ध्यां सेनाञ्च नाम—नाम्नश्चरमाञ्चलं, तेन दत्तान्तादिनाम इत्यर्थः, दर्शयेत्; यथा,—कामदत्ता मदनसेना इत्यादि । तथा वणिजां दत्तप्रायाणि—दत्तान्तबहुलानि, नामानि दर्शयेत्; यथा,—धर्म्म-

दत्तो नाम वणिगित्यादि। प्रायशब्देन क्वचित् तद्व्यभिचारोऽपि द्रष्टव्यः। यथा शाकुन्तले—"धनवृद्धिर्नाम वणिक्" इति। तथा वसन्तादिषु वर्ण्यस्य—वर्णनीयस्य, वस्तुनः यत् नाम भवेत्, यथा कलहंसादिः तत् चेटचेटयोः,—चेटस्य चेट्याश्च, प्रदर्शयेत् इति शेषः। अत्र एकशेषाभावश्चिन्त्यः।

## लक्ष्मी

पात्राणां नामानि दर्शयितुमाह—दत्तामिति। वेश्यानां नाम दत्तां दत्ताशब्दान्तं तेन दत्तान्तादिनाम, सिद्धां सिद्धशब्दान्तम्, सेनां सेनाशब्दान्तं च दर्शयेत् नाटकादौ रचयितेति शेषः। वणिजां वैश्यानां नामानि दत्तप्रायाणि दत्तान्तबहुलानि दर्शयेत् प्रायपदोपन्यासात् वणिजां नाम भूत्याद्यन्तमपि कदाचित् दर्शयितुं कविः शक्नोतीति द्योतितम्। तथा वसन्तादिषु समयेषु वर्ण्यस्य वर्णनायोग्यस्य वस्तुनः कलहंसादेः यत् यादृशानुपूर्वीकं नाम भवेत्, चेटस्य दासस्य चेट्या दास्याश्च पुनस्तथा तादृशानुपूर्वीकं नाम भवेदित्यर्थः। मूले 'पुमान् स्त्रिया' इत्यनेन चेटचेटयोरित्यत्रैकशेषाकरणं चिन्त्यम्।

वेणीसंहारादौ बुद्धिमतिका सुसङ्गताऽऽदिसंज्ञाकरणात् कल्पिते निवृत्ते एव रूपकेऽयं नियम इत्यवगन्तव्यम्।

अत्र विशेषः कश्चिदाह—

**'ब्रह्म क्षत्रस्य नामानि गोत्रकर्मानुरूपतः। काव्ये कार्याणि कविभिः शर्मवर्मकृतानि च॥**

**दत्तप्रायाणि नामानि वणिजां तु प्रयोजयेत्। शौर्योदात्तानि नामानि तथा शूरेषु योजयेत्॥**

**विजयार्थानि नामानि राजस्त्रीणां च कारयेत्। दत्तामित्राय सेनेति वेश्यानामानि कारयेत्॥**

**नानाकुसुमनामानः प्रेष्याः कार्यास्तु नाटके।**

**मङ्गलार्थानि नामानि चेटानामपि कारयेत्॥' इति।**

उदाहरति—वेश्येति। वसन्तसमये कलहंसस्य वर्णनीयतया मालतीमाधवे माधवदासस्य कलहंसेति नाम। मन्दारकुसुमस्य शीतसमये प्रस्फुटिततया वर्णनीयत्वात् तत्रैव विहारदास्या मन्दारिकेति नाम।

## रुचिरा

पात्राणां सञ्ज्ञां लक्षयति—४७७ दत्तामित्यादिना।

४७७ यदा—**वेश्यानाम्**। **नाम**। दर्शयेत् प्रयुञ्जीत। तदा-**दत्तां** दत्तान्तम्। **च**। **सिद्धां** सिद्धान्तम्। **सेना** सेनान्तम्। **च**। 'कृत्वे'ति शेषः। 'दर्शये'दिति पूर्वतोऽन्वेति, एवम्परत्र। **वणिजां** वेश्यानाम्। **च**। यदा नामदर्शयेत् तदा। **दत्तप्रायं** प्रायेण दत्तान्तं कृत्वेति भावः। **तथा**। **चेटचेटयोः**। **पुनः**। नाम यदा दर्शयेत् तदा **वसन्तादिषु** 'ऋतुषु'इति शेषः। **वर्ण्यस्य**। **वस्तुनः**। **नाम**। **यत्**। **भवेत्**। 'तत् कृत्वे'ति शेषः। इदं त्ववधेयम्—अयं नियमः कल्पितेतिवृत्ते एव रूपके, अत एव—वेणीसंहारादौ बुद्धिमतिकासुसङ्गताऽऽदिसञ्ज्ञा सङ्गच्छते यत्तूक्तं 'ब्रह्मक्षत्रिययोः सञ्ज्ञा गोत्रकर्मानुरूपतः। शर्मान्ता चैव वर्मान्ता कार्या काव्ये विचक्षणैः॥' इत्यादि, तदपि न नियतम्। 'पुरूरवाश्चारुदत्तः' इत्याद्यप्रयोज्यत्वपपत्तेः। इति दिक्॥ ४३८॥

**नाम कार्यं नाटकस्य गर्भितार्थप्रकाशकम् ॥ १४२ ॥**

यथा रामाभ्युदयादिः ।

**नायिकानायकख्यानात्संज्ञा प्रकरणादिषु ।**

यथा मालतीमाधवादिः ।

**नाटिकासट्टकादीनां नायिकाभिर्विशेषणम् ॥ १४३ ॥**

यथा रत्नावली-कर्पूरमञ्जर्यादिः ।

**प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते ।**

यथा शाकुन्तले-ऋषी 'गच्छावः' इत्यर्थे 'साधयावस्तावत्' ।

---

## विवृतिः

गर्भितो गर्भसंधिना सूचितो योऽर्थः प्रयोजनं तत्प्रकाशक मित्यर्थः । नायिकया सहितो नायको नायिका-नायकः । अन्यथैक-(शेष)प्रसङ्गात् । प्रकरणादिष्वित्यादिपदेन भाणादिपरिग्र ।

एतत्प्रायिकं तेन सौगन्धिकाहरणादिसंज्ञापि ॥ प्रायेणेति । 'सुहं चिट्ठउ अज्जउत्तो । अहं गमिस्सम् ।' इत्युत्थाय गच्छतीति रत्नावल्यां गमेः प्रयोगोऽपि । राजा वाच्यः-इत्यन्वयः । स राजा ।

## विज्ञप्रिया

गर्भितार्थ इति । नाटके गर्भितः प्रतिपाद्यो योऽर्थस्तत्प्रकाशकं नाटकस्य नाम कार्य्यमित्यर्थः । सूचितार्थेति क्वचित् पाठः ।

नायिकानायकेति । प्रकरणभाणादयो ये रूपकप्रभेदास्तेषु । संज्ञा नायकनायिकयोराख्यानं संज्ञानामैवे-त्यर्थः । नाटिकासट्टकादीनामिति ।

नाटिकादीन्यष्टादशोपरूपकाणि यान्युक्तानि तेषां विशेषणं नाम नायिकाभिर्नायिकानाम्नैवेत्यर्थः ।

प्रायेणेति—कलापमते कारितम्, पाणिनिमते णिच्. तदन्तः साधधातुः गमेः स्थाने प्रायेण प्रयुज्यते इत्यर्थः । ऋषि इति । शार्ङ्गरवशारद्वतयोर्वक्त्रोर्निर्देशः ।

## कुसुमप्रतिमा

नामेति । नाटकस्य नाम, गर्भितार्थस्य उपाख्यानान्तर्गतविषयविशेषस्य प्रकाशकं सूचकं कार्य्यं कविना कर्त्तव्यम् ।

नामेति । नाटकस्य नाम, गर्भितार्थस्य उपाख्यानान्तर्गतविषयविशेषस्य प्रकाशकं सूचकं कार्य्यं कविना कर्त्तव्यम् ।

नायिकेति । प्रकरणं वक्ष्यमाणलक्षणम् आदिशब्दात् अङ्गाख्यरूपकविशेषादयश्च तेषु, नायिकानायकाख्यानां तत्तदुपाख्यानान्तर्गतनायिकानायकोभयमिलितसंज्ञानां समाना संज्ञा कार्य्येत्यर्थः । एतत्तु प्रायिकम्, वसन्तसेनाचारुदत्तसम्बन्धिदृश्यकाव्यस्य प्रकरणत्वेऽपि नाटकवन्मृच्चकटिकेति गर्भितार्थप्रकाशक संज्ञादर्शनात् ।

नाटिकेति । नाटिकासट्टकयोवक्ष्यमाणलक्षणयोः आदिशब्दात् नाट्यरासकादीनाञ्च नायिकाभिर्नायिकानामभिः विशेषणम् अपरदृश्यकाव्येभ्यो व्यवच्छेदनं कार्य्यं नायिकानाम्नैव नाम कर्त्तव्यमित्यर्थः ।

प्रायेणेति । गमेर्गमनार्थकधातोः स्थाने प्रायेण बाहुल्येन ण्यन्तकः कलापमते तु इदन्तः साधिः साधधातुः कविभिः प्रयुज्यते । एतत्तु प्रकरमाद्दृश्यकाव्यपरमेव । तेन श्राव्यकाव्ये गमेः स्थाने तादृशसाधेः प्रयोगेअवाचकत्वदोष एवेति बोध्यम् ।

## विमला

नामेति—नाटकस्य नाम गर्भितस्य—सन्दर्भसूचकव्युत्पत्तिलभ्यस्य, अर्थस्य प्रकाशकं—सूचकं, कार्य्यम् ।

नायिकेति ।—प्रकरणादिषु [आदिपदेन भाणादिपरिग्रहः] नायिकानायकाख्यानां—नायिकयां सहिती नायकः नायिकानायकः, तदाख्यानां—तन्नाम्नां, संज्ञा—नाम, कार्य्या इति शेषः । एतदुक्तं भवति—नायिकानायकयोरुभयोरेव नाम्ना प्रकरणादेः नाम कर्त्तव्यमिति । [एतत् प्रायिकं, तेन सौगन्धिकाहरणादि संज्ञाऽपि] ।

नाटिकेति ।—नाटिकासट्टकादीनां, प्रयोगाणां, नायिकाभिर्विशेषणं—विशिष्य व्यवस्थापनं, संज्ञाकरणमित्यर्थः, तेषां नायिकाप्रधानत्वादिति भावः ।

प्रायेणेति ।—णयन्तकः साधिः,—साधधातुः, गमेः,—गमधातोः, स्थाने प्रायेण प्रयुज्यते, न तु सर्वत्रेति भावः; तेन अन्यदपि तत्समानार्थकं प्रयोज्यम् । यथा,—"सुहं चिट्टउ अज्जउत्तो ! अहं गमिस्सं" इत्युत्थाय गच्छतीति रत्नावल्या गमेः प्रयोगः, यथा वा उत्तरचरिते—"तदेहि हरिणप्लुतैः पलायामहे" इति ।

## लक्ष्मी

नाटकस्य कीदृशं नाम कार्यमिति दर्शयितुमाह—नामेति । नाटकस्य नाम, गर्भितो गर्भसन्धिना सूचितो योऽर्थः प्रयोजनं तस्य प्रकाशकं सूचककार्यं कविना विधातव्यम् । उदाहरति—यथेति । स्पष्टम् ।

नायिकेति । नायिकासहितो नायको नायिकानायकः मध्यमपदलोपिसमासः, अन्यथैकशेषप्रसङ्गात् । नायिकानायकाख्यानां तत्तत्सन्ध्यन्तर्गतनायिकानायकोभयमिश्रितसंज्ञानां तुल्या संज्ञा प्रकर्णानां वक्ष्यमाणस्वरूपम् आदिपदाद् भाणादयश्च तेषु विधेयेति शेषः । प्रायिकमेतद् वसन्तसेनाचारुदत्ताश्रयदृश्यकाव्यस्य सत्यपि प्रकरणत्वे नाटकवन्मृच्छकटिकेति गर्भितार्थप्रकाशकसंज्ञाकरणात् । तथा सौगन्धिकाहरणदिसंज्ञाकरणाच्च ।

नाटिकेति । नाटिकासट्टकयोः वक्ष्यमाणस्वरूपयोः आदिपदात् नाटयरासकादेश्च नायिकाभिः नायिकासंज्ञाभिः विशेषणम् अन्यदृश्यकाव्येभ्यो व्यावर्त्तनं कार्यं नायिकासंज्ञयैव नाम कार्यमित्यर्थः । उदाहरति—यथेति । स्पष्टम् ।

प्रायेणेति । गमेः गत्यर्थकगमधातोः स्थाने प्रायेण बाहुल्येत ण्यन्तकः साधिः साधधातुः प्रयुज्यते कविभिरिति शेषः । एतत्तु नाटकप्रकरणात् नाटक एव । तदितरत्र तु गमेः स्थाने ण्यन्तसाधेः प्रयोगे अवाचकत्वदोष एव स्यादित्यवगन्तव्यम् ।

उदाहरति—यथेति । ऋषीति शाङ्र्गरवशारद्वतयोर्वक्त्रोर्निर्देशः । प्रायपदोपादानात् 'सुहं चिट्ठउ अज्जउत्तो । अहं गमिस्सम् ।' इत्युत्थाय गच्छतीति रत्नावल्यां गमेः प्रयोगोऽपि ।

## रुचिरा

रूपकसञ्ज्ञाप्रकारमाह—४७८ **गर्भितार्थप्रकाशकं** गर्भितो रूपके निरूप्य दर्शिष्यमाणो योऽर्थस्तस्य प्रकाशकं सूचकम् । **नाटकस्य । नाम । कार्यम् ।** । ४३९ ॥

उदाहरति—**यथे**त्यादिना । स्पष्टम् ।

प्रकारणादेः सञ्ज्ञाविधानप्रकारं दर्शयति—४७९ **नायिकानायकाख्यानात्** नायिकानायकयोराख्यानं नाम तदत्ततीति तथोक्ता । **प्रकरणादिषु** । आदिपदेन भाणादीनां ग्रहणम् । **सञ्ज्ञा** 'कार्ये'ति शेषः । एषोऽपि न नियमः । सौगन्धिकाहरणादौ व्यभिचारात् ।

उदाहरति—**यथे**त्यादिना । स्पष्टम् ।

नाटिकाऽऽदीनां सञ्ज्ञाविधानं लक्षयति—४८० **नाटिके**त्यादिना । आदिपदेन । त्रोटकनाट्यरासकादीनां ग्रहणम् । स्पष्टमन्यत् ॥ ४४० ॥

उदाहरति—**यथे**त्यादीना । स्पष्टम् ।

प्रकरणादेः सञ्ज्ञाविधानप्रकारं दर्शयति—४७९ **नायिकानायकाख्यानात्** नायिकानायकयोराख्यानं नाम तदत्ततीति तथोक्ता । **प्रकरणादिषु** । आदिपदेन भाणादीनां ग्रहणम् । **सञ्ज्ञा** 'कार्ये'ति शेषः । एषोऽपि न नियमः सौगन्धिकाहरणादौ व्यभिचारात् ।

उदाहरति—**यथे**त्यादिना । स्पष्टम् ।

नाटिकाऽऽऽदीनां सञ्ज्ञाविधानं लक्षयति—४४० **नाटिके**त्यादिना । आदिपदेन । त्रोटकनाट्यरासकादीनां ग्रहणम् । स्पष्टमन्यत् ॥ ४४० ॥

उदाहरति—**यथे**त्यादिना । स्पष्टम् ।

अथ कविसमयसाम्राज्यं दर्शयति—४८१ **प्रायेण । गमेः** गच्छतेर्धातोः । **स्थाने** प्रयोक्तव्यत्वे । **ण्यन्तकः साधिः । प्रयुज्यते** । एवं च—एतादृशप्रयोगे न च्युतसंस्कृतत्वं शङ्क्येत, प्रत्युत तथा सहृदयत्वं । **दृश्येते** । प्रायेणेति तु गमेः प्रयोगोऽपि युज्यते इति निष्कृष्टम् ।

उदाहरति—**यथे**त्यादिना । स्पष्टम् ।

राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः ॥ १४४ ॥
राजर्षिभिर्वयस्येति तथा विदूषकेण च ।
राजन्नित्यृषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च ॥ १४५ ॥
स्वेच्छया नामभिर्विप्रैर्विप्र आर्येति चेतरैः ।
वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः ॥ १४६ ॥
वाच्यो नटीसूत्ररावार्यनाम्ना परस्परम् ।
सूत्रधारं वदेद् भाव इति वै पारिपार्श्विकः ॥ १४७ ॥
सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः ।
वयस्येत्युत्तमैर्हहो मध्यैरार्येति चाग्रजः ॥ १४८ ॥
भगवन्निति वक्तव्याः सर्वैर्देवर्षिलिङ्गिनः ।
वदेद्राज्ञीं च चेटीं च भवतीति विदूषकः ॥ १४९ ॥
आयुष्मन् रथिनं सूतो वृद्धं तातेति चेतरः ।
वत्सपुत्रकतातेति नाम्ना गोत्रेण वा सुतः ॥ १५० ॥
शिष्योऽनुजश्च वक्तव्योऽमात्य आर्येति चाधमैः ।
विप्रैरयममात्येति सचिवेति च भण्यते ॥ १५१ ॥
साधो इति तपस्वी च प्रशान्तश्चोच्यते बुधैः ।
स्वगृहीताभिधः पूज्यः शिष्याद्यैर्विनिगद्यते ॥ १५२ ॥
उपाध्यायेति चाचार्यो महाराजेति भूपतिः ।
स्वामीति, युवराजस्तु कुमारो भर्तृदारकः ॥ १५३ ॥
भद्रसौम्यमुखेत्येवमधमैस्तु कुमारकः ।
वाच्या प्रकृतिभी राज्ञः कुमारी भर्तृदारिका ॥ १५४ ॥
पतिर्यथा तथा वाच्या ज्येष्ठमध्याधमैः स्त्रियः ।
हलेति सदृशी, प्रेष्या हञ्जे वेश्याज्जुका तथा ॥ १५५ ॥
कुट्टन्यम्बेत्यनुगतैः पूज्या च जरती जनैः ।
आमन्त्रणैश्च पाषण्डा वाच्याः स्वसमयागतैः ॥ १५६ ॥
शकादयश्च संभाष्या भद्रदत्तादिनामभिः ।

**यस्य यत्कर्म शिल्पं वा विद्या वा जातिरेव वा ॥ १५७ ॥**

**तेनैव नाम्ना वाच्योऽसौ ज्ञेयाश्चान्ये यथोचितम् ।**

---

## विवृतिः

अपत्यप्रत्ययेन च । अपत्यत्यान्तपदेन चेत्यर्थः ।

यथा—दाशरथे, पौरव, पाण्डव इत्यादि । एतच्च पुत्रादिसंबन्धिपदोपलक्षणम् । तेन रघुनन्दन इत्यादिनापि । स्वेच्छयेति ।

अपत्यप्रत्ययेन नामभिर्वा विप्रैर्विप्रो वाच्यः । इतरैः क्षत्रियादिभि रार्येति विप्रो वाच्य इत्यर्थः ।

तेनानर्घराघवादौ विश्वामित्रेति कौशिकेति कुशिकनन्दनेत्यादिना शतानन्देन विश्वामित्र उक्तः ।

आर्यनाम्ना आर्यशब्देन नाट्ययोग्यत्वादार्याशब्देनाह्वानम् । तं पारिपार्श्विकम् ।

समा आत्मतुल्याः । उत्तमैः समा वयस्येति वाच्याः ।

मध्यमैर्हंहो इति समा वाच्याः । सर्वैरार्येत्यग्रजो वाच्यः ।

इतरो युवा बालश्च । गोत्रेण अपत्यप्रत्ययान्तेन । अयममात्यः । प्रशान्तो वीतरागः ।

पूज्यो जनः शिष्याद्यैः स्वगृहीताभिधो विनिगद्यते इत्यन्वयः । स्वगृहीता स्वेच्छया प्रयुक्ता अभिधा पूज्यत्वप्रकाशकनाम भगवन्निति महाभागेत्यादि वा यस्य सः ।

महाराजेति स्वामीति वा भूपतिर्विनिगद्यते इत्यन्वयः । युवराजः कुमारो भर्तृदारको वा वाच्यः ।

कुमारको युवराजः । पतिर्यथेति । उत्तमेनोत्तमा स्त्री वयस्येति, मध्येन मध्यमा हंहो इति, अधमेन अधमा हण्डे इति वाच्येत्यर्थः । सदृशी आत्मतुल्या ।

कुट्टिनी तथा अज्जुका वाच्या । अनुगतैः सेवकैः पूज्या अम्बेति वाच्या । जरती वृद्धाजनैरम्बेति वाच्या ।

आमन्त्रणैः संबोधनपदैः, स्वसमयागतैः स्वसंकेतप्राप्तैः कापालिकेत्यादिभिः । शंकादयोऽन्तः पुरसहायाः प्रागुक्ताः । कर्म मालाकणादि ।

शिल्पं कलादिकर्म । विद्या मीमांसादिः ।

## विवृतिपूर्तिः

राजेति । अत्र विशेषः—'राजपत्न्यस्तु संभाष्याः सर्वाः परिजनेन तु । भट्टिनी स्वामिनी देवी इत्येवं नाटके बुधैः ॥ देवीति महिषी वाच्या राज्ञा परिजनेन तु ।भोगिन्य इति शेषास्तु स्वामिन्य इति वा पुनः ॥' इति ॥

हण्डे इति । हण्डे इत्यामन्त्रणद्योतकमव्ययम् ॥

भगवन्निति । उक्तं च मुनीन्द्रेण सप्तदशाध्याये—'देवानामपि ये देवा महात्मानो महर्षयः । भगवन्निति ते वाच्याः यास्तेषां योषितस्तथा । देवाश्च लिङ्गिनश्चैव नानाश्रुतधराश्च ये । भगवन्निति ते वाच्याः पुरुषैः स्त्रीभिरेव च ॥' इति ॥

स्वगृहीतेति । सुगृहीताभिध इति पाठस्तु साधीयान् ॥

हलेति हञ्जे इति च । हला हञ्जे उभे अव्यये ॥

अज्जुकेति । जकारद्वयघटितमध्योऽज्जुकाशब्दः । नाट्यशास्त्रे तु—'अज्जुकेति भवेद्वाच्या वेश्या परिजनेन तु । या त्वत्र वृद्धा सा त्वम्बा भाष्या परिजनेन तु ॥' इत्युक्तम् ॥

कुट्टिनीति । परनारीं पुंसा संयोजयित्री शंभल्यपरपर्याया योषित् ॥

पाषण्डेति । पापं सनोति ददातीति पापण्डः । ञमन्ताड्डः । पृषोदरादिः । कवर्गद्वितीयमध्यस्तु शं खण्डयन्ति । 'खडि भेदने' । अच् । उक्तं च—'पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते । तं खण्डयन्ति ते यस्मात्पाखण्डास्तेन हेतुना ॥' इति ॥

शकादय इति । शक इति तु तत्र न दृश्यते (१०३ पृ.) ॥

अन्ये इति । शाक्यभिक्षुर्भदन्तेति भगिनीपतिरावुत्तेति जनक आवुकेति राजश्यालो राष्ट्रियेति वाच्य इति यथाशास्त्रमनुसंधेयम् ॥

## विज्ञप्रिया

राजर्षिभिरिति । विदूषकेण च वयस्येति राजर्षिर्वाच्य इत्यर्थः ।

राजन्निति । स राजा ऋषिभिः राजन्निति अपत्यप्रत्ययेन च वाच्य इत्यर्थः । यथानर्घराघवे ऐन्दुमतेयेति विश्वामित्रेण दशरथः । विप्रस्तु विप्रैः स्वेच्छया नामभिर्वाच्यः । इतरैस्तु आर्य्येति ।

वयस्येत्यथवेति । विदूषको राज्ञा वयस्येति वाच्यः, अथवा नाम्नैव इति । वाच्यौ नटीसूत्रधाराविति । आर्य्यनाम्ना इति । एकदेशे समस्तद्वयकीर्त्तनम् । तेन नट्या आर्य्यपुत्र इति । सूत्रधारेणार्य्येति वाच्यावित्यर्थः ।

मारिषेति पारिपार्श्विकं वदेत् । हण्डे इति समास्तुल्यजनाः । अधमैर्हण्डेति वाच्या ।

समा उत्तमैस्तु वयस्येति । मध्यमैस्तु हंहो इति वाच्या इत्यर्थः । अग्रजः सानुजैरार्य्येत्यर्थः । भगवन्निति । देवर्षयो लिङ्गिनः परिव्राजकाश्च सर्वैरेव भगवन्निति वाच्याः ।

रथिनं वृद्धसूत आयुष्मान्निति इतरस्तु तातेति वदेदित्यर्थः ।

वत्स पुत्रकेति । सुतः शिष्योऽनुजश्च वत्सेत्यादिभिर्वक्तव्य इत्यर्थः ।

प्रशान्तश्चेति—शान्तो जन इत्यर्थः ।

भूपतिर्महाराजेति । युवराजस्तु स्वामिति सम्बोधने वाच्य इत्यर्थः । एवमुत्तरत्रापि । कुमारो युवराजेतरः । पतिर्यथेति । ज्येष्ठ उत्तमस्तथा चोत्तममध्यमाधमैः स्वस्त्रियः स्त्रीभिः पतिर्यथा तथा वाच्य इत्यर्थः । तथा चार्य्यपुत्रेति पत्युरुच्यमानत्वात् आर्य्येति पत्या स्त्रियो वाच्या इत्यर्थः ।

वेश्या सम्बोधने अज्जुकेत्युच्यते इत्यर्थः। भट्टिन्यम्बेति। अनुगतैर्जनैरर्थादनुगम्यमानस्त्रीभिर्भट्टिनीत्यम्बेति चोच्यते। इतरैर्जनैः पूज्या वृद्धा जरतीति वाच्येत्यर्थः।

पाषण्डाश्च स्वसमयागतैरामन्त्रणैश्च वाच्या इत्यर्थः। शाक्यादयो बौद्धादयः।

## लोचन

अपत्यप्रत्ययेन यथा—हे राघव! हे दाशरथे! इत्यादि।

गोत्रेण यथा—हे कौशिक! हे आत्रेय! इत्यादि।

पतिर्यथेति। पतिर्येन स्वामिन्नित्युच्यते तेन तद्भार्य्या स्वामिनीति। येन भर्त्तेति तेन भट्टिणीति।

हे चार्वाक! हे कोलिकेय! इत्यादि।

## कुसुमप्रतिमा

राजेति। भृत्यैरमात्यादिभिः राजा स्वामीति देवेति वा वाच्यः स्वामिशब्देन देवशब्देन वा सम्बोध्यो विशेषणीयो वेत्यर्थः। एवमन्त्रापि। अधमैर्निकृष्टपात्रैः भट्टेति वाच्यः। तथा राजषि भिरपरैराजभिर्विदूषकेण च राजा वयस्येति। वाच्यः। ऋषिभिः स राजा राजन्निति अप्रत्यप्रत्ययेन "पाण्डव! दशरथे!" इत्थमपत्यप्रत्ययान्तशब्देन वा वाच्यः। विप्रैर्विप्रः स्वेच्छया अप्रत्यप्रत्यान्तशब्दादिना सङ्केतितनामभिर्वा वाच्यः। इतरैः क्षत्रियादिभिश्च विप्र आर्य्येति वाच्यः। राज्ञा विदूषकः वयस्येति अथवा नाम्ना वाच्यः। नटीसूत्रधारी परस्परम् आर्य्यनाम्ना वाच्यौ। परि समन्तात् सूत्रधारस्य पार्श्वे 'चरतीति पारिपार्श्वि' कः सूवधारूदूनगुणी नअविशेषः। सूवधार भाव इति वदेत्। पारिपार्श्विकं मारिषेति वदेत्, मा रेषति न हिनस्ति न नाशयति सभ्यानां शान्तिमिति मशब्दोपपदात् रिषधातोर्नास्युपधत्वात् कप्रत्ययः। अधमैर्जनैः समाः स्वतुल्या अधमाः, हण्डे इति वक्तव्याः। उत्तमैर्जनैः स्वसमा जना वयस्येति वक्तव्याः। मध्यैजनैः स्वसमा जनाः ईहो इति वक्तव्याः। कनिष्ठेन भ्राता अग्रणो भ्रात्रा आर्य्येति वक्तव्यः। सर्वैजनैः, देवाश्च ऋषयश्च लिङ्गिनो दण्डमण्डलुप्रभृतितपस्विषङ्गधारिणश्च ते, भगवन्निति वक्तव्याः सम्बोध्याः। विदूषको राज्ञोञ्च चेटो दसीञ्च भवतीति वदेत्। सूतः मारथिः रथिनम्, आयुष्मन्निति वदेत्। इतरो युवा बालकश्च वृद्धं जनं तातेति वदेत्। पित्रा सुतः पुत्रः गुरुणा शिष्यः अग्रजेन अनुजश्च वत्स! इति, पुत्रक! इति, तात! इति वा राम! इत्यादिना नाम्ना वा गोत्रेण "राघव!" इत्थमपत्याप्रत्ययान्तशब्देन वा वक्तव्यः। अधमैर्जनैः अमात्य आर्य्येति वक्रव्यः। विप्रैस्तु अयममात्यः अमात्येति सचिवीति च मण्यते सम्वीध्यते। बुधैरभिज्ञेर्जनैः तपस्वी च प्रशान्तो ब्रह्मविज्जनश्च साधी इति उच्यते। शिष्याद्यैर्जनैः पूज्यो जनः न गृहीता उच्चारिता अभिधा सङ्केतितं नाम यस्य स तादृशः कृत्वा विनिगद्यते यथासम्भवं महाभागेत्यादिना नाम्ना सम्बोध्यते इत्यर्थः। मानवकैराचार्य्यश्च उपाध्यायेति वाच्यः। प्रजाभिर्भूपतिः महाराजेति अथवा स्वामीति वाच्यः। युवराजस्तु उत्तममध्यमैर्जनैः; कुमारो भर्त्तृदारको वा वाच्यः। अधमेर्जनैस्तु कुमारकी युवराजः "सौम्य! अथवा भद्रमुख!" इत्येवं वाच्यः। प्रकृतिभिः प्रजाभिः राज्ञः कुमारी कन्या भर्त्तृदारिकेति वाच्या। ज्येष्ठमध्याधर्मरुत्तममध्यमाधमैः सर्वैरेव जनैः पतिर्यथा यादृशसम्बोधनादिना वाच्यस्तथा तस्य स्त्रियोऽपि वाच्याः। राजेवं राज्ञौ स्वामिनीति देवीति भट्टिनीति च सम्बोध्येत्यर्थः। एवमन्यत्रापि। सदृशी स्वसमाना प्रेष्या सेविका हलेति वाच्या। वेश्या हञ्जे इति वाच्या। कुट्टिनी अज्जुकेति वाच्या। तथा अनुगतैर्जनैः पूज्या गुरुपत्नीप्रभृतिः स्त्री अजरत्यपि अम्बेति वाच्या, तथा जरती वृद्धा स्त्री अपूज्यापि अन्वेति वाच्या पाषण्डाः कापालिकादयश्च स्वसमयागतैअम्बंति वाच्या, तथा जरती वृद्धा स्त्री अपूज्यापि अण्वेति वाच्या। पाषण्डाः

कापालिकादयश्च स्वसमयागतैर्निजव्याहाराप्राप्तैः आमन्त्रणैः कापालिक इत्यादि सम्बोधनपदैर्वाच्या। शकाद-यश्च शक यवनप्रभृतिजातयस्तु भद्र दत्तादिनामभिः सम्भाष्याः। यस्य तत् ताम्बूलविक्रयादिकं कर्म्म, यद्वा शिल्पम्, या वा विद्या या च वा जातिः, असौ सः तेनैव तदनुसारिणैव नाम्ना वाच्यः; ''ताम्बूलिक ! चैत्रिक ! वैयाकरण ! रजक !" इत्यादिना सम्बोध्य इत्यर्थः। अन्ये यथोचितं ज्ञेयाः। यथा सखिजनः—"हे सखे !" इत्यादि।

## विमला

राजेति।—राजा, भृत्यैः स्वामी इति, देवइति वा, अधमैः,—नीचैः जनैः भट्टा इति, राजर्षिभिः, अन्यैरिति शेषः, तथा विदूषकेण च वयस्य इति, ऋषिभिः राजन् इति, अपत्यप्रत्ययेन—अपत्यप्रत्ययान्तपदेन च इत्यर्थः, यथा,—दाशरथे ! पौरव ! पाण्डव ! इत्यादिरूपेण, सः,—राजाः, वाच्यः, एतञ्च पुत्रादिसम्बन्धिपदोप, लक्षणं तेन रघुनन्दन ! इत्यादिनाऽपीति ज्ञेयम्। विप्रः विप्रैः स्वेच्छया—अपत्यप्रत्ययेन इत्याशयः, नामभिर्वा, इतरैः,—क्षत्रियादिभिः, आर्य्य इति वाच्यः, तेन अनर्घराघवादौ विश्वामित्रेति कौशिकेति कुशिकनन्दनेत्यादिना शतानन्देन विश्वामित्रः उक्तः विदूषकः राज्ञा वयस्य इति, नाम्ना वा वाच्यः। नटीसूत्रधारौ परस्परम् आर्य्यनाम्न—नट्या सूत्रधारः आर्य्य इति, सूत्रधारेण नटी आर्य्या इति रूपेणेत्यर्थः, वाच्यो पारिपार्श्विकः,—सूत्रधारादवरो नटः, सूत्रधारं भाव इति वै वदेत् सूत्रधारः पारिपार्श्विकं मारिष इति वदेत्। अधर्मः,—नीचैः जनैः, समाः,—आत्मतुल्याः, हण्डे इति वाच्याः। ["हण्डे" इत्यामन्त्रणद्योतकव्ययम्] उत्तमैर्जनैः समाः वयस्य इति, मध्यैः समाः हंही इति च वाच्याः। अग्रजः,—ज्येष्ठः भ्राता, आर्य्यः। इति वाच्यः, सर्वैः देवर्षिलिङ्गिनः,—देवलिङ्गिनः ऋषिलिङ्गिनश्च, भगवन् इति वक्तएयाः, विदूषकः राज्ञीञ्च, चेटीञ्च—राज्ञया: सहचरीञ्चेत्यर्थः, भवतीति वदेत्। अत्रैव बोध्यम्;—"राजपत्रास्तु सम्भाव्याः सर्वाः परिजनेन तु। भट्टिनी स्वामिनी देवी इत्येवं नाटके बुधैः॥ देवीति महिषी वाच्या राज्ञा परिजनेन तु। भोगिन्य इति शेषास्तु स्वामिन्य इति वा पुनः॥" इति। सूतः,—सारथिः, रथिनम् आयुष्मन् इति वदेत्, वृद्धो जनः इतरैः,—कनिष्ठैः, तात इति, सूतः—पुत्रः, शिष्यः, अनुजः,—कनिष्ठश्च, वत्स पुत्रक तात इति नाम्ना, गोत्रेण—अप्रत्यप्रत्ययान्तेन इत्यर्थः, वा वाच्यः। अमात्यः अधमैः जनैः, आर्य्य इति वक्तव्यः, विप्रैः अयम् अमात्य इति, सचिव इति च भण्यते। तपस्वी च, प्रशान्तः,—वीतरागश्च जनः, बुधैः साधी इति उच्यते। शिष्याद्यैः,—शिष्यप्रभृतिभिः, [आद्यशब्देन भ्रातृपुत्रादीनां ग्रहणम्] पूज्यः,—पूजनीयी जनः, अगृहीताभिधः,—अगृहीत्वा अभिधा यस्य तादृशः, नाम अगृहीता सम्मानसूच-केन सम्बोधनेन इति भावः, विनिगद्यते—कथ्यते, ["स्वगृहीताभिधः" इति पाठे—स्वगृहीता—स्वेच्छया प्रयुक्ता, अभिधा—पूज्यत्वप्रकाशकनाम, भगवन्निति महाभागेत्यादि वा यस्य स इति विग्रहः]। आचार्य्यः,—वेदाध्याप-यिता, ("उपनीय ददद् वेदमाचार्य्यः स उदाहृतः" इति वचनात्) गुरुर्वा उपाध्याय इति, भूपतिः (प्रजाभिः) महाराज इति, स्वामी इति वा वचनात्) गुरुर्वा, उपाध्याय इति, भूपतिः (प्रजाभिः) महाराज इति, स्वामी इति वा विनिगद्यते इत्यन्वयः। युवराजस्तु कुमारः, भर्तृदारको वा, वाच्यः। अधमैस्तु कुमारकः,—कुमारः, राजकुमार इति यावत्, सौम्य ! भद्रमुख ! इत्येवं वाच्यः प्रकृतिभिः,—अमात्यादिभिः, राज्ञः कुमारी भत्तृदारिका वाच्या। यत् तु नाटकादे-रन्यत्र कादम्बर्य्यां तरलिकया महाश्वेतासम्बोधने "भर्तृदारिके !" इत्युक्तं, तत् प्रयोगमधुरत्वख्यापनाय इति बोद्धव्यम्। पतिर्यथा ज्येष्ठमध्याधर्मः,—उत्तमः, उत्तमेन वयस्य इति, मध्यमेन मध्यमः हंहो इति, अधमेन अधमः हण्डे इति वाच्यः, तथा स्त्रियः वाच्याः,—ज्येष्ठया स्त्रिधा ज्येष्ठा स्त्री वयस्येति, मध्यमया स्त्रिया मध्यमा स्त्री हंहो इति, अधमया स्त्रिया अधमा स्त्री हण्डे इति वाच्येत्यर्थः। सदृशी—श्वसमाना स्त्री, हलेति वाच्या; प्रेष्या—किङ्करी, हञ्ज इति, वेश्या अज्जुका इति वाच्या। ["हला" इति "हञ्जे" इति आमन्त्रमद्योतके उभे अव्यये] कुट्टिनी अनुगतैः,—सेवकैः, अम्ब इति, पुज्या तथा जरती—वृद्धा स्त्री, च जनैः अम्ब इति वाच्या; यद्वा,—कुट्टिनी

तथा—अज्जुका इति वाच्या। अनुगतैः, जनैरिति शेषे:, पूज्या जरती च अम्ब इति वाच्या, पाषण्डाः,—शकारादयः, स्वसमयागतैः,—स्वसङ्केतानुसारिभिः, कापालिकेत्यादिभिरित्यर्थः, आमन्त्रणैः,—सम्बोधनपदैः, वाच्याः। शकादयः,—शकयवनकिरातप्रभृतयः, भद्रदत्तादिनामभिः सम्भाष्याः। यस्य यत् कर्म—मालाकरणादि, शिल्पं—कलाविज्ञानं वा, विद्या—मीमांसादिः वा, जातिः,—ब्राह्मणादि, वा, तेनैव—तदनुगतेनैव, नाम्ना असौ—मालाकारादिः, वाच्यः। अन्ये—एभ्यो भिन्नाः, यथोचितं (सम्भाषणे) ज्ञेयाः।

## लक्ष्मी

पात्राणां सम्बोध्यत्वप्रकारमुपपादयति—राजेति। राजा वाच्य इत्यग्रिमेणान्वयः। भृत्यैः सचिवादिभिः राजा स्वामीति देवेति, वाच्यः स्वामिपदेन देवपदेन सम्बोधनीयो विशेषणीयो वेत्यर्थः। अधमैः नीचपात्रैः भट्टेति वाच्यः भट्टपदेन सम्बोधनीयो विशेषणीयो वेत्यर्थः। एषमन्यत्रापि। तथा राजर्षिभिरन्यैर्नृपतिभिः विदूषकेण च राजा वयस्येति वाच्यः ऋषिभिः स राजा राजन्निति अपत्यप्रत्ययेन पौरव ! दाशरथे ! इत्थमपत्यप्रत्ययान्तपदेन च वाच्यः। एतच्च पुत्रादिसम्बन्धिपदोपलक्षणम्, तेन रघुनन्दन ! इत्यादिनापि वाच्यः। अत्र विशेषः—

**राजपत्न्यस्तु सम्भाष्यः सर्वाः परिजनेन तु।**
**भट्टिनी स्वामिनी देवी इत्येवं नाटके बुधैः॥**
**देवीति महिषी वाच्या राज्ञा परिजनेन तु।**
**भोगिन्य इति शेषास्तु स्वामिन्य इति वा पुनः॥ इति॥**

विप्रैस्तु स्वेच्छया अपत्यप्रत्ययेन सङ्केतितनामभिर्वा वाच्यः। इतरैः क्षत्रियादिभिश्च विप्र आर्येति वाच्यः। तेनानर्घराघवादौ विश्वामित्रेति कौशिकेति कुशिकनन्दनेत्यादिना शतानन्देन विश्वामित्र उक्तः। विदूषकः राज्ञा वयस्येति वाच्यः। नटीसूत्रधारौ परस्परम् आर्यनाम्ना एकदेशे समस्तद्वयकीर्त्तनम्, तेन नटया आर्यपुत्र इति सूत्रधारेणार्येति वाच्यावित्यर्थः। परि समन्तात् सूत्रधारस्य चरतीति पारिपार्श्विकः उक्तलक्षणो नटविशेषः सूत्रधारं भाव इति वदेत्। सूत्रधारश्च पारिपार्श्विकं मारिषेति न हिनस्ति नाशयति सामाजिकानां शान्तिमिति मारिषस्तसम्बोधने मारिषेति वदेत्। अधमजनैः समा आत्मतुल्या अधमाः हण्डे इति वक्तव्या। हण्डे इत्यामन्त्रणद्योतकमव्ययम्। उत्तमैर्जनैः आत्मतुल्या जना वयस्येति वक्तव्याः। मध्यैर्जनैः आत्मतुल्या जना हंहो इति वक्तव्याः। अनुजेन भ्रात्रा अग्रजो भ्राता आर्येति वक्तव्यः। देवाश्च ऋषयश्च लिङ्गिनो दण्डकमण्डलुधारिणो ब्रह्मचारिपरिव्राजकप्रभृतयश्च तैः सर्वैर्जनैः भगवन्निति वक्तव्याः। तथा चोक्तं मुनिना—

**देवानामपि ये देवा महात्मानो महर्षयः।**
**भगवन्निति ते वाच्या यास्तेषां योषितस्तथा॥**
**देवाश्च लिङ्गिनश्चैव नानाश्रुतधराश्च ये।**
**भगवन्निति ते वाच्याः पुरुषैः स्त्रीभिरेव च॥ इति॥**

विदूष, को राज्ञीं चेटीं दासीं भवतीति च वदेत्। वृद्धं सूतः सारथिः रथिनम् आयुष्मन्निति वदेत्। इतरो युवाबालकश्च वृद्धं जनं तातेति वदेत्। सुतः पुत्रः पित्रा जनकेन शिष्योऽन्तेवासी गुरुणा अनुजः अग्रजने च वत्स इति तात ! इति वा राम ! इत्यादिना नाम्ना गोत्रेण रघुनन्दन ! इत्यपत्यप्रत्यान्तेन वा वक्तव्यः सम्बोध्यः। अधमैर्जनैः अमात्यः सचिवः आर्येति वक्तव्यः। अयममात्यो विप्रैस्तु अमात्येति सचिवेति च भण्यते कथ्यते। तपस्वी च

प्रशान्तो वीतरागश्च बुधैर्ज्ञानिभिर्जनैः साधो ! इति उच्यते सम्बोध्यत इत्यर्थः । पूज्यो जनः शिष्याद्यैजनैः स्वगृहीता स्वेच्छया प्रयुक्ता अभिधा भगवन्निति महानागेत्यादिना पूज्यत्वद्योतकनाम यस्य स तथोक्तः कृत्वा विनगद्यते अभिधीयते । आचार्यश्च माणवकैः उपाध्यायेति वाच्यः सम्बोध्य इत्यर्थः भूपतिः पृथिवीपतिः प्रजाभिः महाराजेति स्वामीति वा वाच्यः सम्बोध्यः । युवराजस्तु उत्तमैर्मध्यमैर्जनैः कुमार भर्तृदारक इति वा वाच्यः सम्बोध्यः । अधमजनैस्तु कुमारको युवराजः सौम्य ! वा भद्रमुख ! इत्येवं वाच्यः । राज्ञः कुमारी सुता प्रकृतिभिः प्रजाभिः भर्तृदारिकेति वाच्या सम्बोध्या । पतिः यथा यादृशसम्बोधनादिना वाच्यस्तथा तस्य स्त्रियोऽपि ज्येष्ठमध्याधमैरुत्तममध्यमाधमैः सर्वैरेव जनैः वाच्याः सम्बोध्याः राजेव राज्ञी स्वामिनीति देवीति भट्टिनीति वाच्येत्यर्थः । सदृशी आत्मतुल्या प्रेष्या सेविका हलेति वाच्या । वेश्या हञ्जे इति वाच्या । हला हञ्जे उभे अव्यये । परनारी पुंसा संयोजयित्री शंभल्यपरपर्याया स्त्री कुट्टिनी अज्जुकेति वाच्या सम्बोध्येत्यर्थः । जकारद्वयमध्यघटितोऽज्जुका शब्दः । अत्र विशेष उक्तो महर्षिणा—

**'अज्जुकेति भवेद्वाच्या वेश्या परिजनेन तु ।**

**या त्वत्र वृद्धा सा त्वम्बा भाष्या परिजनेन तु ॥'**

तथानुगतैः सेवाकैर्जनैः पूज्या गुर्वङ्गनाप्रभृतिस्त्री अजरत्यपि अम्बेति वाच्या, तथा जरती परिणतवयस्का वृद्धा स्त्री अपूज्यानि अम्बेति वाच्या पापानि सन्वन्ति ददते इति पाषण्डाः कापालिकादयश्च अमन्ताड्डुप्रत्ययः पृषोदरादित्वात्साधु । यस्तु कवर्गद्वितीयमध्यस्सः शंखण्डयन्तीति 'खडि भेदने' चुरादिस्तस्मादच्प्रत्ययेन साधनीयः । उक्तञ्च—

**'पालनाच्च त्रयी धर्मः पाशब्दन निगद्यते ।**

**तं खण्डयन्ति ते यस्मात्पाखण्डास्तेन हेतुना ॥ इति ।'**

स्वसमयागतैः स्वसंकेतप्राप्तैः आमन्त्रणैः कापालिक इत्यादिसम्बोधनपदैः वाच्या सम्बोध्याः शकादयश्च शकयवनादिजातय शाक्येति पाठे शायादयो बौद्धप्रभृतयश्च भद्र-दत्तादिनामभिः सम्भाष्या । यस्य तत् मालाकरणादिकर्म यद्वा शिल्पं कलादिकर्म या वा विद्या मीमांसादिः, या च वा जातिः ब्राह्मणत्वादिः, असौ सः मालाकारादिः तेनैव तत्कर्मादिप्रकाशकेन मालाकारादिपदेनैव नाम्ना वाच्यः—मालाकार ! तार्क्किक ! चार्वाक ! इत्यादि सम्बोधनं कार्य इत्यर्थः । अन्ये च मित्रादयो यथोचितं ज्ञेया तथा च शाक्यभिक्षुर्भदन्तेति, भगिनीपतिरावुत्तेति, जनक आवुकेति, राज्यश्यालो राष्ट्रिय इति तत्तत्पदेन यथाशास्त्रं ज्ञातव्यम् ।

## रुचिरा

पात्राणां सम्बोध्यत्वप्रकारं लक्षयति—४८२ राजेत्यादिना । **स** राजा । **अपत्यप्रत्ययेनापत्यसूचकपदेन** । यथ पौरवरधुनन्दनेत्यादि । **इतरो** युवा बालस्च । **गोत्रेणापत्यसूचकेन** पदेन । **अयममात्यः** । **प्रशान्तो** विरक्तः **स्वगृहीताभिधः** स्वेन (स्वेच्छया) गृहीताभिधा पूज्यत्वसूचिका सञ्ज्ञा यस्य तथोक्तः । यथा—'भगवन् महात्यादि । सुगृहीतेति पाठे तु शोभना गृहीताऽभिधा ख्यातिर्येन तादृश इत्यर्थः । **कुमारको** राजकुमारः । **प्रकृतिभिरमात्या**दिभिः प्रजाभिश्चेत्यर्थः । **अनुगतैर्वेश्यावशंवदैः** । **पाषण्डा** धूर्त्ताः । **स्वसमयागतैः** । स्वेच्छया कल्पितैः सङ्केतैः । यथा—"अघोरघण्टकापालिके'त्यादि । **शकादयो** म्लेच्छाऽऽभीरादयः । **कर्म** मालाकरणादि । **शिल्पं** चित्ररचनादि । **विद्या** ज्योतिःपुराणादिज्ञानम् । स्पष्टमन्यत् ॥ ४४१-४५४ ॥

अथ भाषाविभागः—

**पुरुषाणमनीचानां संस्कृतं स्यात्कृतात्मनाम्॥ १५८॥**

**सौरसेनी प्रयोक्तव्या तादृशीनां च योषिताम्।**

**आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत्॥ १५९॥**

**अत्रोक्ता मागधी भाषा राजान्तः पुरचारिणाम्।**

**चेटानां राजपुत्राणां श्रेष्ठानां चार्धमागधी॥ १६०॥**

**प्राच्या विदूषकादीनां, धूर्तानां स्यादवन्तिजा।**

**योधनागरिकादीनां दाक्षिणात्या हि दीव्यताम्॥ १६१॥**

**शबराणां शकादीनां शाबरीं संप्रयोजयेत्।**

**बाह्लीकभाषोदीच्यानां द्राविडी द्रविडादिषु॥ १६२॥**

**आभीरेषु तथाभीरी चाण्डाली पुक्कसादिषु।**

**आभीरी शाबरी चापि काष्ठपात्रोपजीविषु॥ १६३॥**

**तथैवाङ्गारकारादौ पैशाची स्यात्पिशाचवाक्।**

**चेटीनामप्यनीचानामपि स्यात्सौरसेनिका॥ १६४॥**

**बालानां षण्डकानां च नीचग्रहविचारिणाम्।**

**उन्मत्तानामातुरुणां सैव स्यात्संस्कृतं क्वचित्॥ १६५॥**

**ऐश्वर्येण प्रमत्तस्य दारिद्र्योपद्रुतस्य च।**

**भिक्षुवल्कधरादीनां प्राकृतं संप्रयोजयेत्॥ १६६॥**

**संस्कृतं संप्रयोक्तव्यं लिङ्गिनीषूत्तमासु च।**

**देवीमन्त्रिसुतावेश्यास्वपि कैश्चित्तथोदितम्॥ १६७॥**

**यद्देश्यं नीचपात्रं तु तद्देश्यं तस्य भाषितम्।**

**कार्यतश्चोत्तमादीनां कार्यो भाषाविपर्ययः॥ १६८॥**

**योषित्सखीबालवेश्याकितवाप्सरसां तथा।**

**वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा॥ १६९॥**

एषामुदाहरणान्याकरेषु बोद्धव्यानि। भाषालक्षणानि मम तातपदानां भाषार्णवे।

## विवृतिः

जातिर्ब्रह्मणत्वादिः । तेनैव तत्कर्मादिप्रकाशकेन मालाकारादिपदेन ।

असौ मालाकारादिः । ज्ञेयाश्चेति अन्ये मित्रादयो मित्रादिपदेन वाच्या इत्यर्थः । अनीचानामुत्तममध्यमानाम् ॥

कृतात्मनां पण्डितानां चेत्यर्थः । तादृशीनां गाथासु श्लोकेषु । अत्र नाटकादौ ।

राजान्तः पुरचारिणां वामनादीनाम् ।

चेटानां मृत्यानाम् । प्राच्या गौडीया ।

धूर्तानामक्षदेविम् ।दक्षिणात्या वैदर्भी ।

पिशाचवाक् चेटानामपीत्यन्वयः ।

सैव सौरसेनी एव । प्राकृतं सौरसेन्यादिद्राविडीपर्यन्तानामन्यतमं महाराष्ट्रीं वा ।

लिङ्गिनीषु संन्यासादिचिन्हधारिणीषु । कार्यत इति ।

उत्तमस्य राजान्तः पुरचारित्वे मागधी न तु संस्कृतम् । एवमन्यत्रापि ।

अत एवानर्घराघवादौ राजपुत्रस्यापि राम चन्द्रादेरुत्तमकार्यकारित्वेन संस्कृतेनैव व्यवहारो वर्णितः न त्वर्धमागध्या ।

वैदग्ध्यार्थं वैदग्ध्यज्ञापनार्थम् ।

## विवृतिपूर्तिः

भाषाविभाग इति । सामान्यतो भाषा संख्याता रुद्रटेन—'प्राकृतसंस्कृतमागधपिशाचभाषाश्च सूरसेनी च । षष्ठोऽत्र भूरिभेदो देशविशेषादपभ्रंशः ॥' इति । नाट्यशास्त्रे तु विशेषः—'मागध्यवन्तिजा प्राच्या सूरसेन्यर्धमागधी । बाह्लीका दाक्षिणात्या च सप्त भाषाः प्रकीर्तिताः ॥' इति ॥

पुक्कसेति । पुक्कसश्चाण्डालः ॥

अङ्गारेति । अङ्गारकारो लोहादिधातुजीवी ॥

## विज्ञप्रिया

अथ भाषेति । वक्तृविशेषस्य भाषाविशेष इत्यर्थः । पुरुषाणा मिति । नीचेतरेषां कृतात्मनां शुद्धानां पुरुषाणामित्यन्वयः । शौरसेन्यादयो बह्वयो भाषाः प्राकृतविशेषाः प्राकृतवृत्तौ अनुसन्धेयाः ।

तादृशानामनीचानाम् । गाथा गीतयः । अत्रेति । गाथास्वित्यर्थः ।

चेटानामिति । श्रेष्ठिनां राजपुत्रचेटानामित्यर्थः ।

अहिदीव्यतां सर्पखेलकानां तेषां चेत्यन्वयः । शकारो राजशालकः । शकानां पार्वतीयम्लेच्छविशेषाणणाम् ।

पुक्कसश्चण्डालविशेषः ।

तथोदितं संस्कृतोक्तिः ।

यद्देश्यं यद्देशीयम् ।

## कुसुमप्रतिमा

पुरुषाणामिति अत्र दृस्यकाव्ये, अनीचानामुत्तमानां मध्यमानाञ्च, कृतात्मनां शास्त्रादिषूत्पादितज्ञानानां शिक्षितानामित्यर्थः पुरुषाणां संस्कृतं नाम भाषा स्यात् । तेन उत्तमानां कृतात्मनां दुष्मन्तादीनां मध्यमानां कृतात्मनां तत्सारथिप्रभतीनाञ्च शाकुन्तलादौ संस्कृतम् । तत्पञ्चमाङ्के राजपुरुषस्य शिक्षितत्वेऽपि नीचत्वान्न संस्कृतम्, मम वङ्गीयप्रतापे पञ्चमाङ्के केशवस्य अनीचत्वेऽपि अशिक्षितत्वान्न संस्कृतम् । एवमन्यत्रापि । तादृशीनाम् अनीचानां कृतात्मनाञ्च योषितां शौरसेनी नाम भाषा प्रयोक्तव्या । आसामुक्तविधानां योषितामेव तु गाथासु गीतबन्धेषु कविर्महाराष्ट्रीं भाषां प्रयोजयेत् । राज्ञः अन्तःपुर चारिणां वामनषण्डादीनां मागधी भाषा उक्ता । चेटानां राजभृत्यानां राजपुत्राणां श्रेष्ठिनां राजवणिनाञ्च अर्द्धमागधी भाषा । विदूषकस्य आदिशब्दात् राजसुताधात्रेयीप्रभृतीनां प्राच्या भाषा । धूर्तानामक्षक्रीड़ाकारिणाम् अवन्तीज आवन्ती भाषा । दीव्यतां क्रीड़ासक्तानां योधनागरिकादीनां योद्धनागरिक पौरप्रभृतीनां दाक्षिणान्या वैदर्भी भाषा । शबराणां म्लेच्छविशेषाणां शकयवनादीनाञ्च शावरीं भाषां कविः सम्प्रयोजयेत् । उदीच्यानां नागप्रभृतिजातीनां बाह्लीकभाषा । द्रविड़ादिषु द्राविड़प्रभृतिपात्रेषु द्राविड़ो भाषा । आभीरेषु जातिविशेषेषु आभीरौ भाषा । पुक्कसादिषु जातिषु चाण्डाली भाषा । काष्ठोजीविषु आभीरौ भाषा, पत्रोपजीविषु चापि शावरी भाषेति यथासख्यम् । अङ्गारकारजातौ आदिशब्दात् चर्म्मकारजात्यादौ च तथैव आबीरौ शावरी वा भाषा । पिशाचानां वाग्भाषा पैशाची स्यात् । अनीचानामुत्तममध्यमानां चेटीनां दासीनामपि शौरसेनिका भाषा स्यात् । बालानां शिशूनां षण्डकानां क्लीवानां नीचग्रहविचारिणां निकृष्टदैवज्ञानाम् उन्मत्तानाम् आतुराणाञ्च सा शौरसैनिकैव भाषा स्यात्, क्वचित्त्वमीषां संस्कृतमपि । ऐश्वर्य्येण प्रमत्तस्य धनमदेन मत्तस्य, दारिद्रेयण उपस्कृतस्य विकृतीकृतस्य, भिक्षोः परिव्राजकस्य, वरकधरस्य वृक्षवरकलधारिणः सन्यासिनः, आदिशब्दात् बौद्धसन्यासिप्रभृतेश्च प्राकृतं नाम वाक्यं कविः सम्प्रयोजयेत् लिङ्गिनीषु दण्डकमण्डत्वादितपस्विचिन्हधारिणीषु, उत्तमासु उत्कृष्टजातीयासु च नारीषु संस्कृतं कविना यथेच्छं सम्प्रयोक्तव्यम् । कैश्चिदालङ्कारिकैः देवौ महिषी, मन्त्रिसुता वेश्या च तास्वपि, तथा संस्कृतं सम्प्रयोक्तव्यमित्युदितमुक्तम् । नीचपात्रं तन्तुवायादिकं यद्देश्यम्, यस्मिन् देशे उत्पन्नम्, तस्य भाषितं तद्देश्यं तद्देशीयम् । किञ्च कार्य्यतः प्रयोजनविशेषवशात् उत्तमादीनां नायिकादीनां स्त्रीणां भाषाविपर्य्ययः प्राङ्लदि्र्दष्टभाषेतरभाषाप्रयोगः कार्य्यः कविना कर्त्तव्यः । यथा मम वङ्गीयप्रतापे "शौरसेनौ प्रयोक्तव्या तादृशीनाञ्च योषिताम्" इत्यनेन शौरसेनौप्रयोगे कर्त्तव्येऽपि रौद्रादिरससौकर्य्यर्थं कल्याणीदेव्याः संस्कृत प्रयोगः । तथा वैदग्धार्थं वैचित्र्यविशेषप्रतिपादनार्थं कविना योषिन्नायिका, सखी नायिकाया वयस्या, बाली राजादेः कुमारः वेश्या उत्तमगणिका, कितवो धूर्तः अप्सरसश्च तासाम् अन्तरान्तरा मध्ये मध्ये संस्कृतं प्रदातव्यम् । तत्र योषिती यथा मालतीमाधवे मालत्याः "ज्वलतु गगने" इत्यादि । सख्या यथा तत्रैव लवङ्गिकायाः "वयं तथा नाम" इत्यादि । बालस्य यथा अनर्घराघवे रामस्य । वेश्याया यथा मृच्छकटिके वसन्तसेनायाः "गज वा वर्षं वा" इत्यादि । कितवाप्सरसान्तह्यम् ।

एषामिति । आकरेषु शाकुन्तलादिमूलग्रन्थेषु । भाषालक्षणानि बोद्धव्यानीत्यन्वयः ।

## विमला

भाषाविभागानाह, अथेति ।—अनीचानाम्—उत्कृष्टानाम्, उत्तममध्य मानामित्यर्थः, कृतात्मनां—विदुषां, भाषा संस्कृतं स्यात् । तादृशीनाम्—उत्कृष्टमध्यमानामित्यर्थः, योषितां शौरसेनी भाषा प्रयोक्तव्या । आसामेव—उत्कृष्टानां नारीणांमेव, गाथासु—श्लोकेषु, सङ्गीतेषु वा, महाराष्ट्रीं प्रयोजयेत् । अत्र—नाट्ये, राज्ञः अन्तःपुरचारिणां—वामनादीनां, भाषा मागधी । चेटानां—भृत्यानां राजपुत्राणां, श्रेष्ठिनां—धनवतां वैश्यानाञ्च, अर्द्धमागधी—मागधीं स्वदेशभाषां आन्तरान्तराश्रित्य वदतीति भावः, तथोक्तं साहित्यकौमुंद्याम्;—"राजपुत्रादिभाषा तु मागध्या स्वानुरूपतः" इति । ("स्वानुरूपतः,—स्वस्य यस्मिन् देशे जन्मादि, तदनुरूपतामाश्रित्य" इति तद्व्यायाख्यायां पण्डितराजैश्च व्याख्यातम् ।) विदूषकादीनां भाषा प्राच्या—गौड़ीया । धूर्त्तानाम्—अक्षदेविनां, भाषा अवन्तिका । दीव्यतां—क्रीड़तां, योधनागरिकादीनाञ्च, दाक्षिणात्या—वैदर्भी भाषा । शकाराणां—राजश्यालकानां, ("सोऽयमनूढ़ाभ्राता राज्ञः श्यालः शकार इत्युक्तः") शाकारीं—शकारदेशसम्बन्धिनी, ["शवराणां शकादीनां शाबरीम्" इति पाठान्तरे तु—"राज्ञः श्यालाः शकावाऽपि शाकाय्यां प्रपठन्ति ते" इति रसगङ्गाधरादिविरोधापत्तिर्बोध्या] भाषां सम्प्रयोजयेत् । दिव्यानां—दैवप्रभावसम्पन्नानां, वाह्लीकभाषा—वाह्लीकदेशीया भाषा, बाह्लीकदेशभवानां नराणां या भाषा साऽभिनेतव्येति यावत्, वाह्लीकदेशश्च गान्धारदेशतः उत्तरपश्चिमदिग्गतः । ["वाह्लीकभाषीदीच्यानाम्" इति पाठे—उदीच्यानाम्—उत्तरदेशवासिनाम्] द्रविड़ादिषु द्राविड़ी भाषा, प्रयोज्या इति शेषः । आभीरेषु आभीरौ, पुक्कसादिषु (आदिपदेन तत्सदृशादीनां ग्रहणम्) चाण्डाली, काष्ठपत्रोपजीविषु—काष्ठजीविषु—तक्षकेषु, पत्रजीविषु—पत्रावलीविक्रयशीलेषु च, आभीरौ शाबरौ च भाषा । अङ्गारकारादौ—अङ्गारकारः,—लोहपात्रादिनिर्माणोपजीवी, तदादौ, तथैव—आभीरौ वा शाबरी भाषा । पिशाचानां वाक् पैशाची । अनीचानाम्—उत्कृष्टानाम्, उत्तममध्यमानामित्यर्थः, चेटीनामपि शौरसेनिका—शौरसेनी भाषा । बालानां षण्डकानां—वर्षवराणां, नीचानां ग्रहविचारिणां—दैवज्ञानामित्यर्थः, उन्मत्तानाम् आतुराणाञ्च सैव—शौरसेनिका एवेत्यर्थः, क्वचित् संस्कृतञ्च प्रयोज्यम् । ऐश्वर्य्येण प्रमत्तस्य, दारिद्र्येण उपस्कृतस्य—अभिभूतस्य, भिक्षूणां तथा बन्धधरादीनां—जैनबौद्धादीनां, ["भिक्षुवल्कधरादीनाम्" इति पाठान्तरे तु—भिक्षवः,—सन्न्यासिनः, याचका वा, वल्कधराः,—वानप्रस्थाः, वनमानुषा वा, आदिपदेन असभ्यान्तरस्यापि ग्रहणम्] प्राकृतं वचनं—शौरसेन्यादिद्राविड़ीपर्य्यन्तानामन्यतमं, महाराष्ट्रीं वेत्यर्थः, सम्प्रयोजयेत् । लिङ्गिनीषु—सत्रयासादिचिन्हाधारिणीषु, उत्तमासु—उत्कृष्टासु नारीषु च, संस्कृतं प्रयोक्तव्यम् । कैश्चित्—अन्यैराचार्य्यैः, देवीमन्त्रिसुतावेश्यासु अपि तथा—संस्कृतमित्यर्थः, उदितम्—उपदिष्टम् । नीचपात्रं—नीचं यत्पात्रं—नाटकीयपुरुष इति तथोक्तं, तु—पुनः, यद्देश्यं—यद्देशीयं, तस्य भाषितं—भाषा, तद्देश्यं—तद्देशोचितं, प्रयोक्तव्यम् इत्यर्थः । उत्तमादीनां कार्य्यतः,—कर्मानुसारेणेत्यर्थः, भाषाविपर्य्ययः,—देशानुरूपा भाषेत्यर्थः, कार्य्यः; तेन उत्तमस्य राजान्तःपुरचारित्वे मागधी, न तु संस्कृतम्; एवमन्यत्रापि । अत एवानर्घराघवादौ राजपुत्रस्यापि रामचन्द्रादेः उत्तमकार्य्यकारित्वेन संस्कृतेनैव व्यवहारो वर्णितः, न त्वर्द्धमागध्या इति सङ्क्षेपः । योषित्प्रभृतीनाम् अन्तरान्तरा—मध्ये मध्ये, तत्तद्भाषाणां मध्ये इत्यर्थः, वैदग्ध्यार्थं—वैचित्र्यार्थं, विलासितार्थं, वैदग्ध्यज्ञापनार्थं वा, संस्कृतं प्रदातव्यम् ।

## लक्ष्मी

यस्य या भाषा स्यात्तस्य तां दर्शयितुमाह—अथ भाषेति । वक्तृविशेषस्य भाषाविशेष इत्यर्थः । महर्षिणा चात्र विशेषो दर्शितः । तथा च—

'मागध्यवन्त्यजा प्राच्या सूरसेन्यर्धममागधी ।

बाह्लीका दाक्षिणात्या च सप्तभाषाः प्रकीर्त्तिताः ॥' इति ।

अत्र रुद्रटस्तु—'प्राकृतसंस्कृतमागधपिशाचभाषाश्च सूरसेनी च ।

षष्ठोऽत्र भूरिभेदो देशविशेषादपभ्रंशः ॥' इत्याह ।

पुरुषाणामिति । अत्र दृश्यकाव्ये अनीचानां नीचेतरेषामुत्तममध्यमानाम्, कृतात्मनां पण्डितानां शिक्षितात्मनामित्यर्थः, पुरुषाणां संस्कृतं नाम भाषा भवेत् । अत एव शकुन्तलादौ कृतात्मनां दुष्यन्तादीनामुत्तमानां कृतात्मनां तत्सारथ्यादीनां च मध्यमानां संस्कृतम् । तत्रैव राजपुरुषस्य शिक्षितत्वेऽपि नीचत्वान्न संस्कृतम् । तादृशीनाम् अनीचानां कृतात्मनां च योषितां स्त्रीणां शौरसेनी नाम भाषा कार्या आसामुक्तप्रकाराणां योषितामेव तु गाथासु श्लोकेषु महाराष्ट्रीं भाषां प्रयोजयेत् कविरिति शेषः । राजान्तःपुरचारिणां वामनादीनां मागधी भाषा । उक्ता नाट्यविद्भिरिति शेषः । चेटानां राजसेवकानां राजपुत्राणां श्रेष्ठिनां राजवैश्यानां च अर्धमागधीभाषा उक्तेत्यत्रान्वयः । एवमग्रेऽपि । विदूषकस्य आदिपदात् राजसुतोपमात्रादीनां प्राच्या गौटीया भाषा । धूर्तानामक्षदेवानाम् अवन्तिजा भाषा अवन्तदेशोत्पन्ना भाषा । दीव्यतां खेलनतत्पराणां योधनागरिकादीनां योद्धनागरिक-पौरादीनां दाक्षिणात्य वैदर्भीभाषा । शबराणां पर्वतीर्थभिल्लानां किरातानामित्यर्थः, शक-यवनादीनां च शाबरीं भाषां सम्प्रयोजयेत् । उदीच्यानां नागप्रभृतिजातीनां बाह्लीकभाषा । द्राविडादिषु तत्पात्रेषु द्राविडीभाषा । आभीरेषु ब्राह्मणादुग्रकन्या यामुत्पन्नेषु जातिविशेषेषु आभीरीभाषा । पुक्कसादिषु चाण्डालविशेषेषु चाण्डालीभाषा । काष्ठोपजीविषु तक्षकादिषु आभीरीभाषा पत्रोपजीविषु चापि शाबरी भाषेति यथाक्रममन्वयः । अङ्गारकारजातौ लोहादिधातुजीवजातौ आदिपदात् चर्मकारजात्यादौ च तथैव आभीरी शाबरी वा भाषा । पिशाचानां देवयोनिविशेषाणां वाग् भाषा पैशाची भवेत् । अनीचानामुत्तममध्यमाधमानां चेटीनां सेविकानामपि शौरसेनिका भाषा भवेत् । बालानां बालकानां षण्डकानां नपुंसकानां नीचग्रहविचारिणाम् अधमदैवज्ञानाम् उन्मत्तानां विक्षिप्तानाम् आतुराणाञ्च सा शौरसेनी एव भाषा भवेत् क्वाचित्कं संस्कृतमप्यमीषाम् । ऐश्वर्येण धनमदेन प्रमत्तस्य उन्मत्तस्य दारिद्रयेण उपस्कृत्य वैकृत्यमापन्नस्य भिक्षोः लिङ्गिनः वल्कलधरस्य वृक्षत्वग्धारिणः परिव्राजकस्य आदिपदात् बौद्धपरिव्राजकादेश्च प्राकृतं सौरसेन्यादिद्राविडीपर्यन्तानाममन्यतमं महाराष्ट्रीं वा संप्रयोजयेत् । लिङ्गीनिषु संन्यासादिचिन्हधारिणीषु उत्तमासु उच्चजातीयासु च नारीषु कविः स्वेच्छया संस्कृतं सम्प्रयोक्तव्यम् । कैश्चित् नाट्यविद्भिः देवी महिषी मन्त्रिसुता अमात्यपुत्री वेश्या च तास्वपि तथा संस्कृतं सम्प्रयोक्तव्यमित्युदितम् अभिहितम् । नीचपात्रं तन्तुवायादिकं यद्देश्यं यद्देशीयम्, तस्य भाषितं तद्देश्यं तद्देसीयम् । अपि च कार्यतः प्रयोजनविशेषवशात् उत्तमादीनां नायिकादीनां नारीणां भाषाविपर्ययः पूर्वोक्तभाषाव्यत्यासः कार्यः कर्त्तव्यः उत्तमस्य राजान्तः पुरचारित्वे मागधी न तु संस्कृतम् अत एव अनर्घराघवादौ राजपुत्रस्यापि रामचन्द्रादेरुत्तमकार्यविधायित्वेन संस्कृतेनैव व्यवहारो वणितः न त्वर्धमागध्या । तथावैदग्ध्यार्थ वैचित्र्यविशेषज्ञापनार्थं कविना योषिन्नायिका सखीनायिकायाः सहचरी बालो राजपुत्रादिः वेश्या उत्कृष्टवारयोषित् कितवो धूर्तः, अप्सरसश्च तासां तथोक्तानाम् अन्तरा अन्तरा तत्तद्भाषाणां मध्ये मध्ये संस्कृतं प्रदातव्यम् । तत्र मालतीमाधवे मालत्या योषितो यथा—'ज्वलतु गगने रात्रिः' इति । तत्रैव सख्युः लवङ्गिकाया यथा 'वयं तथा नाम' इत्यादि । अनर्घ्यराघवे यथा बालस्य रामस्य मृच्छकटिके वसन्तसेनाया वेश्याया यथा 'गर्ज वा वर्ष वा' इत्यादि । अन्ययोरूह्यम् ।

एषामिति । भाषाविशेषाणामित्यर्थः । आकरेषु महाकविप्रबन्धेषु बोद्धव्यानि ज्ञेयानि भाषालक्षणानि, भाषार्णवे तन्निर्मितस्वप्रबन्धे बोध्यानि अवगन्तव्यानि ।

## रुचिरा

यस्य या भाषा रूपके स्यात्तस्य तां निर्देष्टुमाह—**अथ । भाषाविभागः ।** दृश्यते—४८३ **पुरुषाणामि-**त्यादिन्ता स्पष्टम् ॥ ४५५-४६६ ॥

आसामाकरेषु (महाकविप्रबन्धेषु) उदाहरणानि दृष्टचराणि, लक्षणानि च भाषार्णवे (स्वप्रबन्धे निरूपितानि) द्रष्टव्यानीत्याह—**आसामित्यादिना** । स्पष्टम् । 'एषा'मिति पाठस्तु सामान्याभिप्रायेण ।

**षट्त्रिंशल्लक्षणान्यत्र, नाट्यालंकृतयस्तथा।**

**त्रयस्त्रिंशत्प्रयोज्यानि वीथ्यङ्गानि त्रयोदश॥ १७०॥**

**लास्याङ्गानि दश यथालाभं रसव्यपेक्षया।**

यथालाभं प्रयोज्यानीति संबन्धः। अत्रेति नाटके।

तत्र लक्षणानि—

**भूषणाक्षरसंघातौ शोभोदाहरणं तथा॥ १७१॥**

**हेतुसंशयदृष्टान्तास्तुल्यतर्कः पदोच्चयः।**

**निदर्शनाभिप्रायौ च प्राप्तिर्विचार एव च॥ १७२॥**

**दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा।**

**विशेषणनिरुक्ती च सिद्धिर्भ्रंशविपर्ययौ॥ १७३॥**

**दाक्षिण्यानुनयौ मालार्थापत्तिर्गर्हणं तथा।**

**पृच्छा प्रसिद्धिः सारूप्यं संक्षेपो गुणकीर्तनम्॥ १७४॥**

**लेशो मनोरथोऽनुक्तसिद्धिः प्रियवचस्तथा।**

---

## विवृतिः

अन्तरा अन्तरा तत्तद्भाषाणां मध्ये। एषां भाषाविशेषाणाम्। आकरेषु नाटकादिषु।

भाषार्णवे बोध्यानीति पूर्वेणान्वयः। यथालाभं यथायोग्यम्।

रसव्यपेक्षया रसाकाङ्क्षया। यस्मिन्रसे। यदाकाङ्क्षितं योग्यं च भवति तत्तस्मिन्वर्णनीयमिति भावः॥

## विज्ञप्रिया

षट्त्रिंशदिति। अत्र नाटकलक्षणानि सकलानि षटत्रिंशद्धर्माणि प्रयोज्यानि इत्यर्थः। तथा च त्रयः त्रिंशत् नाट्यालङ्कृतयः। त्रयोदश वीथ्याङ्गानि, दश लास्याङ्गानि यथालाभं प्रयोज्यानि। तत्र षट्त्रिंशल्लक्षणानि उद्दिश-तिभूषणेति।

लक्षणानीति। एतानि लक्षणसंज्ञकानि षट्त्रिंशत् इत्यर्थः।

## कुसुमप्रतिमा

षड़िति। अत्र नाटके षटत्रिंशत् लक्षणानि, त्रयस्त्रिंशत् नाट्यालङ्कृतयः, त्रयोदश बोध्यङ्गानि, तथा दश लास्याङ्गानि—एतानि रसव्यपेक्षया रसानुकूल्यमपेक्ष्य यथालाभं यथासम्भवं कविना प्रयोज्यानि। रसानुकूल्ये सम्भवत्येवामीषां प्रयोगो न पुनः प्रयोज्यान्थेवेति नियम इति भावः।

भूषणेति । भूणम्, अक्षरसंघातः, शोभा, उदाहरणम्, हेतुः, संशयः, दृष्टान्तः, तुल्यतर्कः, पदोच्चयः, निदर्शनम्, अभिप्रायः, ज्ञप्तिः, विचारः, दिष्टम्, उपदिष्टम्, गुणातिपातः, गुणातिशयः, विशेषणम्, निरुक्तिः, सिद्धिः, भ्रंशः, विपर्य्ययः, दाक्षिण्यम्, अनुनयः, माला, अर्थापत्तिः, गर्हणम्, पृच्छा, प्रसिद्धिः, सारूप्यम्, संक्षेपः, गुणकीर्त्तनम्, लेशः, मनोरथः, अनुक्तसिद्धिः, प्रियवचश्च—एतानि षट्त्रिंशत् लक्षणानि इत्युक्ष्यन्ते, लक्ष्यते नाटकस्वरूपं ज्ञायते एभिरिति व्युत्पत्तेः ।

## विमला

नाट्यालङ्कृतीराह, षट्त्रिंशदिति ।—अत्र—नाटके, लक्षणानि षट्त्रिंशत् तथा नाट्यालङ्कृतयः त्रयस्त्रिंशत्, वीथ्यङ्गानि त्रयोदश, लास्याङ्गानि दश यथालाभ—यथोचितं, रसव्यपेक्षया—रसानुगुण्यमपेक्ष्य, रसाकाङ्क्षया वेत्यर्थः, प्रयोज्यानि यस्मिन् रसे यदाकाङ्क्षितं योग्यञ्च भवति, तत्तस्मिन् वर्णनीयमिति भावः ।

लक्षणान्याह, तत्रेति ।—तत्र—तेषु मध्ये, लक्षणानि—वक्ष्यमाणाभूषणादीनि, षट्त्रिंशत्सङ्ख्यकानि, भवन्ति ।

## लक्ष्मी

नाटकीयवस्तुनो मनोहरताऽतिशयं प्रदर्शयितुं विधेयमुपपादयति—षट्त्रिंशदिति । अत्र नाटके षट्त्रिंशत् लक्षणानि, सकलानि षट्त्रिंशद्धर्माणीत्यर्थः त्रयस्त्रिंशत् नाट्यालङ्कृतयः, त्रयोदश वीथ्याङ्गानि तथा दश लास्याङ्गानि, एतानि रसव्यपेक्षया रसाकाङ्क्षाया यथालाभं यथायोग्यम् कविप्रयोज्यानि यस्मिन् रसे यदाकांक्षितं योग्यं च भवति तत्तस्मिन् वर्णनीयानीत्यर्थः । तथा च रसाकांक्षासत्त्व एवामीषां प्रयोगो न पुनः केवलं तदाभावेऽपि वर्णनीयान्येवेति नियम इति भावः । यथालाभमिति । यथायोग्यमित्यर्थः ।

अत्र षट्त्रिंशल्लक्षणानि उद्दिशति—भूषणेति । भूषणम्, अक्षरसङ्घातः, शोभा, उदाहरणम्, हेतुः, संशयः, दृष्टान्तः, तुल्यतर्कः, तदोच्चयः, निदर्शनम्, अभिप्रायः, प्राप्तिः, विचारः, दिष्टम्, उपदिष्टम्, गुणातिपातः, गुणातिशयः, विशेषणम्, निरुक्तिः, सिद्धिः, भ्रंशः, विपर्ययः, दाक्षिण्यम्, अनुनयः, माला, अर्थापत्तिः, गर्हणम्, पृच्छा, प्रसिद्धिः, सारूप्यम्, सङ्क्षेपः गुणकीर्त्तनम्, लेशः, मनोरथः, अनुक्तसिद्धिः, प्रियवचश्च, एतानि षट्त्रिंशत् लक्ष्यते नाटकस्वरूपमेभिरिति लक्षणानि इत्युच्यन्ते लक्षणानीत्युत्तरस्यापकर्षोऽत्र कारिकायाम् । पादपूरणार्था च तत्रोक्तिः ।

यथाक्रमं लक्षणान्यभिधातुं प्रथमं भूषणमभिधत्ते—लक्षाणानीति । अथ संख्यातानां लक्षणानां लक्षणानि अभिधीयन्त इत्यर्थः, । सालङ्कारैः यमकोपमाद्यलङ्कारसहितैः गुणैर्वक्ष्यमाणमाधुर्य्यौजः प्रसादैः योगो मिथो मेलनं भूषयति नाट्यं यत्तत् भूषणं नाम नाटकालङ्करणम् ।

उदाहरति—यथेति । आक्षिपन्तीति । हे मुग्धे ! सुन्दरि ! 'मुग्धः सुन्दरमूढयोः' इति विश्वः, अरविन्दानि पद्मानि (कर्तृणि) 'वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्' इत्यमरः, तव मुखश्रियम् वदनशोभाम् आक्षिपन्ति अभिभावनाय निन्दन्ति स्पर्द्धन्ते वा । नन्वेषां वदनशोभाया अभिभवने किं सामर्थ्यमित्यत आह—कोषदण्डेति । कोषो बीजकोषो भण्डागारश्च, दण्डो नालचतुर्थोपायश्च ताभ्यां समग्राणि सकलानि तेषां तथोक्तानाम्, एषामरविन्दानां किं कार्यं दुष्करं कठिनमस्ति ? अपि तु न किमपीत्यर्थः, अर्थश्लेषमूलोऽर्थान्तरन्यासोऽलङ्कारः । तत्र प्रथमे चरणे माधुर्यगुणः तदन्यत्र तु प्रसादगुण इत्येतेषां मिथो मेलनाद्भूषणम् ।

## रुचिरा

नाटकीयवस्तुनो रमणीयताऽतिशयं प्रतिपादयितुं कर्त्तव्यं निर्दिशति—४८४ षट्त्रिंशदित्यादिना। यत्र यदाकाङ्क्षितं योग्यं वा स्यात् तस्मिन् रसे तदेव लक्षणाद्यन्यतमं योज्यमिति भावः। स्पष्टमन्यत्॥ ४६७॥

कारिकाऽर्थ सुगमयितुमाह—**यथालाभमित्यादि**। स्पष्टम्।

अथ लक्षणादीनि विभज्य लक्षयितुमाह—**तत्र** तेषु रसव्यपेक्षया प्रयोज्येषु लक्षणादिषु मध्ये। **लक्षणानि** नामतो निर्दिश्यन्ते—४८५ **भूषणेत्यादिना**। लक्षणानि षट्त्रिंश'द्भूषणे'त्यारभ्य 'प्रियवच'इत्यन्तमभिहिताभिधानानीति भावः॥ स्पष्टमन्यत्॥ ४६८-४७१॥

तत्र—

**लक्षणानि गुणैः सालंकारैर्योगस्तु भूषणम् ॥ १७५ ॥**

यथा—

**'आक्षिपन्त्यरविन्दानि मुग्धे ! तव मुखश्रियम् ।**
**कोषदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥'**

---

## विवृतिः

गुणैर्माधुर्यौजः प्रसादैर्यमकोपमाद्यलंकारसहितैर्योगः परस्परमेलकः ॥

आक्षिपन्ति निन्दन्ति । कोषो बीजकोषो भाण्डागारश्च । दण्डोनालं चतुर्थोपायश्च । अत्रारविन्दानामचेतनतया निन्दा न संभवतीत्युपमा कल्प्यत इति निदर्शना । एवं च निदर्शनार्थान्तरन्यासश्लेषालंकारसहिताभ्यां माधुर्यप्रसादाभ्यां योगः ॥

## विवृतिपूर्ति

'गुणैरिति । षोडशध्याये भरतेनाप्युक्तम्—'अलंकारैर्गुणैश्चैव बहुभिः समलंकृतम् । भूषणैरिव विन्यस्तैस्तद्भूषणमिति स्मृतम् ॥' इति ॥

## विज्ञप्रिया

अत्र भूषणसंज्ञकस्य लक्षणस्य लक्षणमाह—तत्र गुणैरिति । आक्षिपन्तीति । अरविन्दानि कर्त्तृणि । आक्षिपन्ति अधिक्षिपन्ति स्पर्द्धन्ते वा । कोषः कुड्मल एव कोषो धनम् । दण्डो नालमेव दण्डः शास्तिः । अर्थश्लेषमूलोऽर्थान्तरन्यासोऽलङ्कारः । माधुर्यं च गुणः ।

## लोचन

आक्षिपन्तीति—कोष,: कुड्मलः द्रव्यौघश्च । दण्डो नालं दुष्टनिग्रहश्च ।

## कुसुमप्रतिमा

लक्षणानीति । अथ गणितानां लक्षणानां लक्षणानि निरूप्यन्त इत्यर्थः । एतदुक्तिस्तु छन्दःपूरणार्था । अलङ्कारै रूपमाद्यन्यमैः सहेति तैः गुणैर्वक्ष्यमाणमाधुर्य्यौजः प्रसादैः योगः परस्परमेलनन्तु भूषणं नाम लक्षणम् । भूषयति नाटयमिति व्युत्पत्तेः ।

आक्षिपन्तीति । हे मुग्धे ! अरविन्दानि पद्मानि कर्त्तृणि, तव मुखश्रियं वदनशोभाम् आक्षिपन्ति अभिभावनाय निन्दन्ति । अथैषां मुखशोभाया अभिभवने का शक्तिरित्याह कोषेति । कोषो बीजकोष एव कोषो धनागारम्,

दण्डो नालमेव दण्डश्चतुर्थोपायस्ताभ्यां समग्राणि परिपूर्णानि तेषाम्, एषामरविन्दनां किं कार्य्यं दुष्करमस्ति अपि तु किमपि नेत्यर्थः ।

अत्र श्लेषानुप्राणिता भेदे अभेदाध्यवसायमूला अतिशयोक्तिः कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः अर्थापत्तिश्चालङ्कारः, तथा प्रथमे पादे माधुर्य्यगुणः अन्यत्र तु प्रसादगुण इत्येतेषां सम्मेलनाद्भूषणम् ।

## विमला

भूषणमाह, लक्षणानीति ।—सालङ्कारैः,—आलङ्काराः, वक्ष्यमाणा अनुप्रासोपमादयः, तैः सहितैः, गुणैः,—माधुर्य्यौजः प्रसादैः, योगस्तु—परस्परमेलनमेव, भूषणम् ।

उदाहरति, आक्षिपन्तीति ।—हे मुग्धे !—सुन्दरि ! अरविन्दानि—पद्मानि, तव मुखस्य श्रियं—कान्तिम्, आक्षिपन्ति—निन्दति । तथा हि,—कोषदण्ड समग्राणां,—कोषः,—बीजकोषः, धनागारञ्च, दण्डः,—मृणालं, चतुर्तोपायश्च, तैः समग्राणां—सम्पूर्णानाम्, उक्तैश्वर्य्यशालिनाम् इति भावः, एषाम्—अरविन्दानां किं दुष्करम्—असाध्यम्, अस्ति ?—सर्वमेव सुकरमित्यर्थः । अत्र अरविन्दानामचेतनतया निन्दा न सम्भवतीति उपमा कल्प्यते इति असम्भवहस्तुसम्बन्धरूपा निदर्शना, तथा अर्थान्तरन्यासः, श्लेषस्य, एते अलङ्काराः माधुर्य्यप्रसादाभ्यां गुणाभ्यां सहकृताः काव्यं भूषयन्तीति भूषणम् ।

## रुचिरा

अथेतानि क्रमाल्लक्षयितुमाह **तत्र** भूषणं तावल्लक्ष्यते—४८६ **गुणैरित्यादिना** ।

४८६ **सालङ्कारैरनुप्रासादितसहितैः** । **गुणैर्माधुर्यादिभिः** । **तु** पुनः । **योगः** परस्परम्मिश्रणम् । **भूषणं** तन्नाम लक्षणमित्यर्थः ॥ ४७२ ॥

उदाहरति—**यथा**—'**आक्षिपन्ती**'त्यादौ ।

**'हे मुग्धे !' अरविन्दानि** कमलानि । **तव** । **मुखश्रियम्** । **आक्षिपन्ति** निन्दन्ति । ननु किमितमित्याशङ्क्याह—**कोषदण्डसमग्राणां** कोषैः (बीजकोषैः, निधिभिश्च) दण्डैः (नालेः, चतुर्थोपायैश्च) च समग्राणि परिपूर्णतया समृद्धानि तेषाम् । **एषामरविन्दानाम्** । **किम्** । **दुष्करम्** । **अस्ति** । न किमपीति भावः । अत्र च-अरविन्दानामचेतनतयाऽऽक्षेपकत्वासम्भवात्सादृशयं कल्प्यत इति निदर्शनाऽलङ्कारेण माधुर्यप्रसादयोर्योग इति लक्षणसमन्वयो बोध्यः ॥ २८७ ॥'

**वर्णनाक्षरसंघातश्चित्रार्थैरक्षरैर्मितैः ।**

यथा शाकुन्तले—'राजा—कच्चित्सकीं वो नातिबाधते शरीरसंतापः । प्रियंवदा—संपदं लधोसहो उअसमं गमिस्सदि ।'

---

## विवृतिः

चित्रो विदग्धमनोरमोऽर्थोयेषां तैरक्षरैः पदैः ॥ वो युष्माकं सखीं शकुन्तलां शरीरसंतापः स्मरज्वाला । 'सांप्रतं लब्धौषधमुपशमं गमिष्यति ।' इति संस्कृतम् ॥

## विज्ञप्रिया

अक्षरसङ्घातमिति । वर्णनेति । चित्रार्थैर्मितैरक्षरैर्वर्णनेत्यर्थः । सम्पदमिति । साम्प्रतं लब्धौषध उपशमं गमिष्यतीति (संस्कृतम्) । अत्र त्वत्प्राप्तिरेवौषधप्राप्तिरिति भङ्ग्या कथ्यमानोऽर्थश्चित्रः । अक्षराणि चाल्पानि ।

## कुसुमप्रतिमा

वर्णनेति । चित्रो विचित्रः अर्थो येषां तैः नितैरल्पैः अक्षरैर्वर्णैः वर्णना यत् किञ्चित् कथनम् अक्षरसंघातो नाम लक्षणम्, अक्षराणां संघातो मेलनमिति व्युत्पत्तेः ।

यथेति । कच्चित् वेदितुमिच्छामीत्यर्थः । "साम्प्रतं लब्धौषध उपशमं गमिष्यति" इति संस्कृतानुवादः । लब्धम् औषधं भवद्रूपं येन सः ।

अत्र ईदृशैरल्पा : "भवतैवास्याः स्मरसन्ताप उपशमनीयः" इति विचित्रार्थबोधनादक्षरसंघातः ।

## विमला

अक्षरसङ्घातमाह, वर्णनेति ।—चित्रार्थैः,—विदग्धमनोहरार्थसूचकैः, मितैः,—अल्पैः, अक्षरैः वर्णना—रचना, अक्षरसङ्घातः ।

उदाहरति, यथेति ।—वः—युष्माकं, सखीं—शकुन्तलां, शरीरसन्तापः,—शरीरे वर्त्तमानः स्मरकृतः सन्तापः, कच्चित्—स्वाभिप्रायसूचकमव्ययं, ("कच्चित् कामप्रवेदने" इत्यमरः) न अतिबाधते—सन्तापयति । ["साम्प्रतं लब्दौपक्ष उपशनं गमिष्यति" इति संस्कृतम्] । अत्र "संपदम्" इत्यादिचित्रार्थाल्पवर्णैः रचना ।

## लक्ष्मी

अक्षरसङ्घातं लक्षयति—वर्णनेति । चित्रो विदग्धमनोरमोऽर्थो येषां तैस्तथोक्तैः, मितैरल्पैः, अक्षरैः वर्णैः वर्णना यत्किञ्चित् प्रतिपादम् अक्षराणां सङ्घातो मिश्रणमिति अक्षरसङ्घातो नाम लक्षणम् । तथा च भरतः—

यत्राल्पैरक्षरैः श्लिष्टैर्विचित्रमुपवर्ण्यते । तमप्यक्षरसङ्घातं विद्यालक्षणसंज्ञितम् ॥ इत्याह ।

उदाहरति—यथेति। राजा दुष्यन्तः। वो युष्माकं सखीं शकुन्तलां शरीरसंतापः स्मरज्वाला कच्चित्! ज्ञातुमिच्छामीत्यर्थः। 'साम्प्रतं लब्धौषधमुपशमं गमिष्यति' इति संस्कृतम्। साम्प्रतम् अधुना लब्धं प्राप्तं औषधं भवद्रूपं येन तं तथोक्तम् उपशमं गमिष्यति अभीष्टलाभेन शान्तिं प्राप्स्यति।

अत्र त्वत्प्राप्तिरेवौषधप्राप्तिरिति भङ्ग्या प्रतिपाद्यमानोऽर्थश्चित्रः अक्षराणि मितानि। तेनाक्षरसङ्घातलक्षणसमन्वयः।

## रुचिरा

अक्षरसङ्घातो लक्ष्यते—४८७ **चित्रार्थैः** रमणीयार्थैः। **मितैः** कतिपयैः। **अक्षरैः**। **वर्णना**। **अक्षरसङ्घातः** स्तन्नाम लक्षणम्।

उदाहरति—**यथा**। **शाकुन्तले**ऽभिज्ञानशाकुन्तले। '**राजा दुष्यन्तः**। (प्रियंवदामनुसूयां च पृच्छति) **कच्चित्**। **वो** युष्माकम्। **सखीम्**। **शरीरसन्तापः**। शरीरे वर्त्तमाना पीडा। **न**। **अतिबाधते**। **प्रियंवदा** (उत्तरयति) **संपदं** साम्प्रतम्। **लधोसहो** लब्धौषधो लब्धमौषधं यस्य तादृशः शरीरसन्ताप इत्यर्थः। **उअसमं** उपशमम्। **गमिस्सदि** गमिष्यति। इदं तत्त्वम्—राज्ञा अशरीर (काम) सन्तापः शकुन्तलां कच्चिन्नातिबाधते इत्यभिप्रायानुकूलं पृष्टया प्रियंवदयोत्तरितमिदानीं तस्यौषधरूपो भवानुपलब्ध इति। एवं च साकूतोक्त्या स्फुटं चित्रार्थत्वमिति।

**सिद्धैरर्थैः समं यत्राप्रसिद्धोऽर्थः प्रकाशते ॥ १७६ ॥**

**श्लिष्टश्लक्षणचित्रार्था सा शोभेत्यभिधीयते ।**

यथा—

**'सद्वंशसंभवः शुद्धः कोटिदोऽपि गुणान्वितः ।**

**कामं धनुरिव क्रूरो वर्जनीयः सतां प्रभुः ।**

---

## विवृतिः

सिद्धैः साधयितुमारब्धैः । शिलष्ट (श्लक्षण) श्चित्रोऽर्थो यस्याः सा वर्णना ॥

## विज्ञप्रिया

शोभालक्षणमाह—सिद्धैरिति । सिद्धैरुपमानभूतैरर्थैः सममेकवाक्येनैव अप्रसिद्ध उपमेयभूतोऽर्थो विधेयान्वयार्थं प्रकाशते । सा शोभा कीदृशी, शिलष्टशब्दचिन्हचित्रार्थेत्यर्थः ।

सद्वंशेति । धनुरिव क्रूरः प्रभुः कामं यथेष्टं सतां वर्जनीयः । आवर्जनहेतुसत्त्वेऽपि क्रौर्यात् वर्जनीय इत्यर्थः । द्वयोरेवावर्जनहेतून् श्लेषादाह—सद्वंशेति । सद्वंशः सद्वेणुः सत्कुलं च । शुद्धः कीटाविद्धो निष्पापश्च । कोटिं कोटिसंख्यकं धनं ददाति तथा कोट्याद्यतिगुणो ज्या शौर्यादिश्च । अत्र सिद्धेन धनुषा समं प्रसिद्धः क्रूरः प्रभुः विधेयवर्जनान्वयार्थं प्रकाश्यते । शिलष्टशब्देन च चित्रोऽर्थः ।

## लोचन

सद्वंशेति । वंशोन्वयः वेणुश्च । शुद्धो निष्पापः कीटवेधादि रहितश्च । कोटिः संख्याविशेषः अटनी च । गुणः शौर्यादिः मौर्वी च । क्रूरो दारुणाः कर्कशश्च ।

## कुसुमप्रतिमा

सिद्धैरिति । सिद्धैः प्रसिद्धैः स्पष्टं प्रतीयमानैरर्थैः, समं सह यत्र अप्रसिद्धो निगूढः कश्चिदर्थः प्रकाशते बुद्धिविषयीभवति, शिलष्टलक्षणी द्विविधस्वरूपः चित्रो विचित्री अर्थो यस्याः सा तथोक्ता, सा शोभा नाम लक्षणमभिधीयते, नाट्यशोभनात् शोभेति व्युत्पत्तेः ।

सदिति । सतो वंशात् कुलात् वेणुदण्डाश्च सम्भवः सञ्जातः शुद्धो निद्दोंषः श्लक्षणश्च, कोटिं कोटिसंख्यकधनानि ददातीति सः, तंथा कोटिसंख्यकशत्रूंश्चद्यति क्षिप्तबाणैः खण्डयति छिनत्तीति स च, तथा गुणैर्विद्यादाक्षिण्यादिभिः शिञ्चिन्वा च अन्वितोऽपि; क्रूरो निष्ठुरहृदयो वक्रश्च प्रभुः धनुरिव कामं यथेष्टं सतां वर्जनीयः; क्रूरत्वे नैव सकलगुणापमद्दर्नादिति भावः । मृतामिति कर्त्तरि षष्ठी ।

## विमला

शोभामाह, सिद्धैरिति ।—यत्र सिद्धैः,—साधयितुमारब्धैः, अर्थैः, समं मह, असिद्धः,—अनभिमतः, अर्थः, प्रकाशते, सा श्लिष्टेन—श्लेषालङ्कृतेन, लक्षणेन, चित्रार्था—विदग्धमनोरञ्जार्था, रचना इति शेषः, शोभा इति अभिधीयते कथ्यते.

उदाहरति, संद्वंशेति ।—सत्—साधुः, वंशः,—अन्ववायः, अन्यत्र—वेणुविशेषः, तत्र, पक्षान्तरे,—तस्मात्, सम्भवो यस्य तादृशः; शुद्ध्य इति—उभयत्र समानम्; कोटिद इति—कोटिः,—सङ्ख्याविशेषः, अन्यत्र,—अग्रभागः; गुणान्वितः—गुणः,—शौर्य्यगाम्भीर्य्यादिः, अन्यत्र,—मौर्वी, तेन युक्तः, क्रूरः,—निष्ठुरः, निर्दयकार्य्यकारित्वादिति भावः, उभयत्र समानं, वक्रं इति वा । अत्र साधयितु मारब्धैरन्वयादिभिः समं श्लेषेण एकदैवासिद्धानभिमतवेण्वाद्यर्थप्रकाशनात् शोभा ।

## लक्ष्मी

शोभालक्षणं लक्षयति—सिद्धैरर्थैरिति । सिद्धैः साधयितुमारब्धैः स्पष्टं व्यज्यमानैरुपमानभूतैरित्यर्थः । अर्थैः सममेकवाक्येनैव यत्र अप्रसिद्धौ निगूढः कश्चिदुपमेयभूतोऽर्थः विधेयान्वयार्थं प्रकाशते बुद्धिविषयीभवति श्लिष्टश्लक्षणश्चित्रो विदग्धमनोरमोऽर्थो यस्याः सा तादृशी नाटयशोभनात् शोभेति शोभा नाम लक्षणम् ।

उदाहरति—सद्वंशेति । सतो वंशात् अन्वयात् वेणोश्च सम्भवः समुत्पन्नः शुद्धो निष्पापः कीटवेधादिरहितश्च, कोटिं कोटिसंख्यकं धनं ददातीति सः, तथा कोटिसंख्याकरिपूंश्च द्यति प्रहृताशुगैः खण्डयति भिनत्तीति स चाग्रभाग इत्यर्थः, गुणः शौर्यादिः मौर्वी च, क्रूरः कुटिलहृदयः कर्कशश्च प्रभुः धनुरिव सतां वर्जनीयः सतामिति, कर्त्तरि षष्ठी आवर्जनहेतु गुणादिसत्त्वेऽपि क्रौर्यात् वर्ज्जनीय इति भावः ।

अत्र सिद्धेन सद्वंशादिना सममेकदैव प्रसिद्धो वेण्वादिरर्थो विधेयवर्जनान्वयार्थं प्रकाशनात् श्लिष्टशब्देन विचित्रार्थवत्वाच्च शोभा ।

## रुचिरा

शोभां लक्षयति—४८८ **यत्र । सिद्धैः** सम्पन्नैः । **अर्थैः । समम् । अप्रसिद्धो**ऽसम्पन्नः । **अर्थः । प्रकाशते । सा । श्लिष्टलक्षणचित्रार्था** श्लिष्टमभिप्रायान्तरगर्भितं लक्षणं स्वरूपं यस्य अतएव चित्रो रमणीयोऽर्थो यत्र सा । **शोभा । इति । अभिधीयते** ॥ ४७३ ॥

उदाहरति—**यथा**—'**सद्वंशप्रभवः** सन् साधुर्यो वंशः कुलं वेणुर्वा तस्मात्प्रभवतीति तथोक्तः । **शुद्धः** पूतः क्रीटदंशजरन्ध्ररहितश्च । **कोटिदो** बहुधनप्रदः कोटयाऽग्रभागेन द्यतीति वा । **गुणान्वितः** शौर्यादिसम्पन्नो मौर्व्योपस्कृतो वा । **क्रूरः । प्रभुः । सताम् । कामं** यथेष्टम् । **धनुरिव** चाप इव । 'धनुश्चापौ' इत्यमरः । **वर्जनीयाः** । अत्र सिद्धैरन्वयादिभिः सममेव धनुषोऽप्यन्वयादिसद्भावः ॥ २८८ ॥'

**यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ॥ १७७ ॥**

**साध्यतेऽभिमतश्चार्थस्तदुदाहरणं मतम् ।**

यथा—

**'अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतम् ।**

**का दिनश्रीर्विनार्केण का निशा शशिना विना ॥'**

---

## विवृतिः

वंशोऽन्ववायो वेणुश्च । कोटिः संख्याविशेषोऽग्रं च । गुणः शौर्यादिः मौर्वी च । क्रूरः कुटिलः कठिनश्च । अत्र सिद्धैरन्वयादिभिः सममेकदैव प्रसिद्धो वेण्वादिरर्थो भासते ॥

अभिप्रदर्शनाद् वक्तुरभिप्रायात् । साध्यते ज्ञाप्यते । अभिमतो बोधयितुमिष्टः ॥ अनुयान्त्येति । कान्तमरणेन दुःखमनुभवन्त्या उक्तिरियम् । अत्रार्कं विना दिनश्रीरिव शशिनं विना निशेव कान्तं विना योषिदशोभैवेति प्रतीयते ॥

## विज्ञप्रिया

उदाहरणलक्षणमाह—यत्र तुल्यार्थेति । प्रक्रान्तार्थतुल्यावबोधकेन वाक्येन प्रक्रान्तार्थस्यातिशयित्वप्रदर्शनात् अभिमतोऽतिशयितत्वरूपोऽर्थः साध्यते इत्यर्थः ।

अनुयान्त्येति । राममनुयान्तीं सीतां प्रति अनसूयाया उक्तिरियम् । जनातीतं जनेभ्यो निर्गतं वनगमनोन्मुखम् इत्यर्थः । विनार्केण इति । मेघाच्छन्नदिनश्रियोऽर्काभावो बोध्यः । अत्र सीतातुल्यार्थे दिनश्रीनिशे । सीतायाश्च प्रशंसारूपोतिशयोऽभिमतस्तदुक्तवाक्येन साधितः । अत्र वाक्यभेदात् उपमानोपमेययोः समं प्रकाशनाभावात् श्लेषाभावाच्च पूर्वस्माद् भेदः ।

## कुसुमप्रतिमा

यत्रेति । यत्र तुल्यार्थ युक्तेन समानविषयबोधकेन वाक्येन अभिप्रदर्शनात् अभिप्रायज्ञापनात् अभिमतोऽर्थः साध्यते प्रतिपाद्यते; तदुदाहरणं नाम लक्षणं मतम्; उदाह्रियते अस्मिन्नति व्युत्पत्तेः ।

अन्विति । जनातीतं लोकोत्तरगुणशालिनं कान्तं भर्त्तरम् अनुयान्त्या त्वया साधु कृतम् । तथा च अर्केण सूर्य्येण बिना का नाम दिनश्रीर्दिवसशोभा ? शशिना च विना का नाम निशा ? अपि तु कपि नेत्यर्थः ।

अत्र समानार्थबोधकेन द्वितीयार्द्धगतवाक्यद्वयेन स्वाभिप्रायमभिज्ञाप्य "चिरमेव भर्तृसंसर्गेणैव भार्य्या शोभते" इत्यभिमतार्थसाधनादुदाहरणम् ।

## विमला

उदाहरणमाह, यत्रेति ।—यत्र तुल्यार्थयुक्तेन वाक्येन अभिप्रदर्शनात्—दृष्टान्तरूपेण प्रदर्शनात्, वक्तुरभिप्रायात् हेतोः इति यावत्, अभिमतः,—बोधायितुमिष्टः, अर्थः साध्यते—ज्ञाप्यते, प्रकाश्यते इत्यर्थः, तत् उदाहरणं मतम् ।

उदाहरति, अनुयान्त्येति ।—सीतां प्रति लोपमुद्राया उक्तिरियम् । अनातीतम्—अलोकसामान्य, कान्तं—श्रीराममित्यर्थः, अनुयान्त्या—अनुगच्छन्त्याः, त्वया साधु कृतं—सदाचरितम् । तथा हि,—अर्केण—सूर्य्येण, बिना—विरहिता इति भावः, दिनश्रीः,—।दवसशोभा, का ? शशिना—चन्द्रेण, बिना—विरहितता भावः, निशा—रजनी, का ? शशिना—चन्द्रेण, बिना—विरहितेति भावः, निशा—रजनी, का ? अत्र तुल्यार्थयुक्तवाक्येन पतिविहीना योषिन्न शोभते इत्येवमभिमतार्थसाधनम् । बाल्मीकीयरामायणस्यारण्यकाण्डे पद्यमिदम् ।

## रुचिरा

उदाहरणं लक्षयति—४८९ **यत्र** । **तुल्यार्थयुक्तेन** समानाभिप्रायकेण । **वाक्येन** । अत्र साधने तृतीया । **अभिप्रदर्शनादा**भिप्रायदर्शनरूपाल्लिङ्गात् । **अभिमतः** । **अर्थः** । **साध्यते** । **तत्** । **उदाहरणम्** । **मतम्** ॥ ४७४ ॥

उदाहरति—यथा—'**जनातीतं** जनेभ्यो लोकेभ्योऽतीतोऽऽसदृशतया व्यतिरिक्तो मृततया वा त्यक्तस्तम् । **कान्तम्** । **अनुपान्त्या** । **त्वया** । **साधु** । **कृतम्** । यतः—**अर्केण** सूर्येण । विना । दिनश्रीः । का । न काऽपि । **शशिना** चन्द्रमसा । **विना** । **निशा** रात्रिः । **का** । इदं हि पतिं विपन्नामपि सेवमानां प्रति कस्या अपि साध्व्याः, परलोके वा पत्या सह स्वर्गं प्राप्तां प्रति वा कस्याश्चिद्देवाङ्गनाया वचनमिदम् ॥ २८९ ॥'

**हेतुर्वाक्यं समासोक्तमिष्टकृद्धेतुदर्शनात् ॥ १७८ ॥**

यथा वेण्यां भीमं प्रति 'चेटी—एवं मए भणिदं भाणुमदि, तुह्याणं अमुक्केसु केसेसु कहं देवीए केसा संजमिअन्तित्ति ।'

---

## विवृतिः

समासेन संक्षेपेण उक्तम् । इष्टकृदभीष्टार्थबोधकरम् ॥ 'एवं मया भणितं भानुमति, युष्माकममुक्तेषु केशेषु कथं देव्याः केशाः संयम्यन्ते' इति संस्कृतम् । अत्र द्रौपदीकेशासंयमनस्य हेतुर्भानुमतीकेशामोक्षणं तद्दर्शनेन दुर्योधनवधे सत्येव देव्याः केशबन्धनं भविष्यतीत्यभिमंतार्थबोधः ।। अज्ञाततत्त्वस्य अज्ञातविशेषस्य । 'यत्' इत्यव्ययं 'यः' इत्यर्थे ॥

## विवृतिपूर्तिः

हेतुरिति । नाट्यशास्त्रेऽप्युक्तम्—'बहूनां भाषमाणानामनेकार्थविनिर्णयात् । सिद्धौ समानवचनं हेतुरित्यभिसंज्ञितः ॥' इति ॥

## विज्ञप्रिया

हेतुसंज्ञकलक्षणमाह—हेतुरिति । समासः संक्षेपः । इष्टकृत् प्रतिपाद्यस्याभिमतकृद् । हेतुप्रदर्शनात् पृष्टार्थस्य हेतुदर्शनात् ।

एवं मए इति । "एवं मया भणितम् । भानुमति ! युष्माकममुक्तेषु केशहस्तेषु कथं देव्याः केसाः संयम्यन्ते इति" (संस्कृतम्) । अत्र द्रौपद्याः केशासंयमनहेतौ भानुमत्या पृष्टे सभ्रातृकदुर्योधनवधाभावे हेतौ प्रदर्शयितव्ये वैधव्यचिन्हस्य भानुमत्याः केशमोचनस्य अभावो हेतुः संक्षेपेण प्रदर्शितः, स एव च भीमस्याभिमतकृत् ।

## कुसुमप्रतिमा

हेतुरिति । हेतुदर्शनात् उपयुक्तं कारणं प्रदश्र्य समासेन संक्षेपेणोक्तम्, इष्टकृत् अभप्रेतार्थ बोधकं वाक्यं हेतुर्नामं लक्षणम् । अएस्य तु हेतुसम्बन्धात् हेतुर्नामं ।

हेतुरिति । हेतुदर्शनात् उपयुक्तं कारणं प्रदर्श्य समासेन संक्षेपेणोक्तम्, इष्टकृत् अभिप्रेतार्थबोधकं वाक्यं हेतुर्नाम लक्षणम् । अंस्य तु हेतुसम्बन्धात् हेतुर्नाम ।

यथेत । "एव मया मणितम्—भानुमति ! युष्माकम् अमुक्तेषु केशेषु कथमस्माकं देव्याः केशाः संयम्यन्त इति" इति संस्कृतानुवादः ।

अत्र भानुमत्याः केशमोक्षणरूपं द्रौपदीकेशसंयमनहेतु प्रदर्श्य दुर्य्योधनिधनरूपाभिप्रेतार्थबोधक संक्षेपोक्तवाक्योपन्थासात् हेतुः ।

## विमला

हेतुमाह, हेतुरिति ।—हेतुदर्शनात्—कारणाप्रदर्शनात्, इष्टकृत्—अभिमतार्थप्रकाशनं, समासोक्ते—सङ्क्षिप्तं, वाक्यं हेतुः ।

उदाहरति, यथेति ।—एवमिति ।—["एवं मया भणितम्,—भानुमति ! युष्माकम् अमुक्तेषु केशहस्तेषु कथमस्माकं देव्याः केशाः संयम्यन्ते ?" इति संस्कृतम्] । केशहस्तेषु—केशपाशेषु । अत्र देव्याः केशासंयमनस्य हेतुः भानुमत्याः केशसंयमः, तत्प्रदर्शनेन दुर्योधनवधे सत्येव देव्याः केससंयमनं भविष्यतीत्येवमभिमतार्थः प्रकाशते ।

## लक्ष्मी

उदाहरणलक्षणं लक्षयति—यत्र तुल्यार्थेति । यत्र तुल्यार्थयुक्तेन प्रक्रान्तसमानविषयावबोधकेन वाक्येन अभिप्रदर्शनात् प्रक्रान्तार्थस्याभिप्रायबोधनात् अभिमतोऽभिप्रेतोऽर्थः साध्यते ज्ञाप्यते यत् तत् उदाह्रियत अस्मिन्निति उदाहरणं नाम लक्षणं मतम् ।

उदाहरति—अनुयान्त्या इति । श्रीराममनुयान्तीं सीतां प्रति अनसूयाया उक्तिरियम् । जनातीतं जनेभ्यो निर्गतं वनगमनोन्मुखमित्यर्थः, यद्वा विलक्षणालौकिकगुणशालिनम् कान्तं स्वामिनम् अनुयान्त्या अनुगच्छन्त्या त्वया भवत्या साधु समीचीनं कृतं विहितम् । तथा च अर्केण सूर्येण विना का नाम दिनश्रीर्वासरशोभा ? मेघाच्छन्नदिनश्रियोऽर्काभावो बोध्यः । शशिना चन्द्रेण च विना का नाम निशा ? अपि तु न कापीत्यर्थः । अत्रार्कं बिना दिनश्रीरिव शशिनं विना निशेव कान्तं विना योषिदशोभैवेति व्यज्यते । प्रकृते सीतायाश्च प्रशंसारूपोऽर्थोऽभिमतस्तदुक्तवाक्येन साधनात् उदाहरणम् । अत्र च वाक्यभेदात् उपमानोपमेययोः सहैव प्रकाशनाभावात् श्लेषाभावाच्च पूर्वस्माद्भेदः ।

हेतुसंज्ञकलक्षणं लक्षयति—हेतुरिति । हेतुदर्शनात् पृष्टार्थस्योपयुक्तं कारणं दर्शयित्वा समासेन संक्षेणोक्तम्, इष्टकृत् प्रतिपाद्यस्याभीष्टार्थबोधकरं वाक्यं हेतुसम्बन्धात् हेतुर्नाम लक्षणम् ।

एवमित्यादि । एवं मया भणितं भानुमति ! युष्माकममुक्तेषु केशेषु कथं देव्याः केशाः संयम्यन्ते ? । इति संस्कृतम् । अत्र—द्रौपद्याः केशासंयमनहेतौ भानुमत्या पृष्टे सभ्रातृकदुर्योधनवधाभावे हेतौ प्रदर्शयितव्ये वैधव्यद्योतकभानुमतीकेशमोचनाभावहेतोः प्रदर्शनात् तस्यैव च भीमस्याभिमतत्वात्संक्षेपवाक्योपन्यासेन हेतुः ।

## रुचिरा

हेतुं लक्षयति—४९०. **हेतुदर्शनात्** कारणज्ञानात् । **इष्टकृत्** स्वार्थसम्पादकम् । **समासोक्तं** सङ्क्षिप्तमभिहितम् । **वाक्यम्** । **हेतुः** । । ४७५ ॥

उदाहरति—**यथा** । **वेण्यां** वेणीसंहारे । **भीमम्** । (प्रति) '**चेटी** । (प्राह) **एवं** एवम् । **मए** मया । **भणितं** कथितम् । हे **भाणुमदि** भानुमति ! **तुम्हाणं** युष्माकम् । **अमुक्तेषु** । **केसेसु** केशेषु सत्सु । **कहं** कथम् । **देवीए** देव्याः । **केसा** केशाः । **सञ्झमिअंतित्ति** संयम्यन्ते इति । अत्र द्रौपदीकेशासंयमंनस्य हेतुर्भानुमतीकेशसंयमनं तद्दर्शनेन् **दुर्योधनवधोत्तरमेव** देव्याः केशसंयमनम्भविष्यतीत्यमिमतार्थो भीमस्य सम्पन्नः ।

**संशयोऽज्ञाततत्त्वस्य वाक्ये स्याद्यद् निश्चयः ।**

यथा ययातिविजये—

**'इयं स्वर्गाधिनाथस्य लक्ष्मीः किं यक्षकन्यका ।**

**किं चास्य विषयस्यैव देवता, किमु पार्वती ॥'**

---

## विवृतिः

विषयस्य देशस्य ॥

## विवृतिपूर्तिः

संशय इति । उक्तं च मुनिना—'अपरिज्ञाततत्त्वार्थं यत्र वाक्यं समाप्यते । अनेकत्वाद्विचाराणां संशयः परिकीर्तितः ॥' इति ॥

देवतेति । एतद्विषयाधिष्ठात्रीत्यर्थः ॥

## विज्ञप्रिया

संशयाख्यं लक्षणमाह—संशयेति । अज्ञाततत्त्वस्य जनस्य वाक्ये श्रृण्वता यदनिश्चयः स इत्यर्थः । यदित्यनिश्चयक्रियाविशेषणमव्ययम् । इयमिति । काञ्चिद् दिव्यकन्यकां दृष्ट्वा तत्त्वमजानतो वितर्कोऽयम् । स्वर्गाधिनाथस्य इन्द्रस्य लक्ष्मीः सम्पत् किम् ? किं यक्षकन्यकेत्युभयत्र किंपदार्थान्वयः । अस्य विषयस्य संसारस्य । अत्र श्रोतुरनिश्चयः ।

## कुसुमप्रतिमा

संशय इति । अज्ञातं तत्त्वं येन तस्य तादृशस्य जनस्य वाक्ये यदनिश्चयः स्यात्, तत् संशयो नाम लक्षणम् । अनिश्चय एव संशयोत्पत्तेः संशयो नाम ।

इयमिति । इयं किं स्वर्गाधिनाथस्य इन्द्रस्य लक्ष्मीः राजश्रीः ? कि वा यक्षकन्यका ? । किञ्च वा अस्यैव विषयस्य देशस्य देवता ? किमु वा पार्वती ?

अत्र अज्ञाततत्त्वस्य ययातेर्वाक्य कनथ्कातत्वनिश्चयाभावात् संशयः ।

## विमला

संशयमाह, संशय इति ।—अज्ञाततत्त्वस्य—विशेषमजानतो जनस्येत्यर्थः, वाक्ये यत् [यदित्यव्ययं य इत्यर्थे] अनिश्चयः,—अनिर्द्धारणं, स संशयः स्यात् ।

उदाहरति, यथेति ।—ययातिविजये—राजानकमम्मटाभट्टरचिते नाटक विशेषे ।

इयमिति।—देवयानीं कूपे दृष्टवती राज्ञ उक्तिरियम्। इयं—देवयानी, स्वर्गाधिनाथस्य—इन्द्रस्य, लक्ष्मीः?—सम्पत्तिः? किमिति शेषः। किं च—किं वा, विषयस्य—देशस्य। किमु—उत, वेति भावः। अत्र नायिकायां ययातेरनिश्चयः।

## लक्ष्मी

संशयाख्यं लक्षणं लक्षयति—संशय इति। अज्ञाततत्त्वस्य अज्ञातं तत्त्वं येन तस्य तथोक्तस्य अज्ञाततत्त्वविशेषस्य जनस्येत्यर्थः, वाक्यं श्रृण्वतो यदनिश्चयोऽनिर्णयः स्यात् तत् अनिश्चय एव संशयजननात् संशयो नाम लक्षणम्। यदित्यनिश्चयक्रियाविशेषणं बोध्यम्।

उदाहरति—यथेति। इयमिति। काञ्चित् दिव्यकन्यकामवलोक्य तत्त्वमजानतो ययातेः वितर्कोऽयम्। इयं किं स्वर्गाधिनाथस्य स्वर्गस्य त्रिदशालयस्य अधिनाथः स्वामी तस्य तथोक्तस्य इन्द्रस्येत्यर्थः, लक्ष्मीः राज्यश्रीः? किं वा यक्षकन्यका? उभयत्र काकाक्षिगोलकन्यायेन किं पदार्थान्वयः। किञ्च वा अस्यैव विषयस्य देशस्य देवता अधिष्ठात्री? किमु वा पार्वती? अत्राज्ञाततत्त्वस्य ययातेर्वाक्ये श्रोतुः किमप्यनिश्चयात् संशयः।

## रुचिरा

संशयं लक्षयति—४९१ **अज्ञाततत्त्वस्य। वाक्ये यत्** यः। (इदमव्ययम्)। **अनिश्चयः**। सः—**संशयः** उच्यते।

उदाहरति—**यथा—ययातिविजये** तदाख्ये रूपके। '**इयम्। स्वर्गाधिनाथस्येन्द्रस्य। लक्ष्मीः** 'मूर्त्तिमती'ति शेषः। **किम्** 'वे'ति शेषः। **यक्षकन्यका। किंच** किंवा। **अस्य। विषयस्य** देशस्य। एव। **देवता** 'काऽपी'ति शेषः। **किमु** किमुत। **पार्वती**। अत्र हि स्फुटस्तत्त्वानिर्णयः॥ २९०॥'

**दृष्टान्तो यस्तु पक्षेऽर्थसाधनाय निदर्शनम्॥ १७९ ॥**

यथा वेण्याम्—'सहदेवः—आर्य, उचितमेवैतत्तस्या यतो दुर्योधनकलत्रं हि सा' इत्यादि।

---

## विवृतिः

दृष्टान्त इति। पक्षेऽर्थस्य साध्यस्य साधनाय ज्ञापनाय निदर्शनं हेतुदर्शनम्॥

तस्या भानुमत्याः। सा भानुमती॥

## विवृतिपूर्तिः

दृष्टान्त इति। मुनिनाप्युक्तम्—'सिद्धौ पूर्वोपलब्धौ यः समत्वमुपपादयेत्। निदर्शनकृतस्तज्ज्ञैः स दृष्टान्त इति स्मृतः॥' इति॥

## विज्ञप्रिया

दृष्टान्ताख्यं लक्षणमाह—दृष्टान्त इति। पक्षार्थस्योपन्यस्तार्थस्य साधनाय निदर्शनं हेतुप्रदर्शनम्। आर्य इत्यादि। अत्र द्रौपद्या उपन्यस्तस्य भानुमत्या दौर्जन्यस्य दुर्योधनकलत्रत्वं हेतुः।

## कुसुमप्रतिमा

दृष्टान्त इति। वक्षे अर्थस्य साध्यस्य साधघनाय यत्तु निदर्शनं हेतुप्रदर्शनम्, तत् दृष्टान्तो नाम लक्षणम्, दृष्टः अन्तः साध्यस्वरूपं यस्मादर्थादिति व्युत्पत्तेः।

यथेति। तस्या भानुमत्याः। एतत् परिहासकरणम्। अत्र भानुमतीरूपपक्षे परिहास करणौचित्यरूपसाध्यस्य दुर्य्योधनकलत्रत्वरूपहेतुप्रदर्शनात् दृष्टान्तः।

## विमला

दृष्टान्तमाह, दृष्टान्त इति।—पक्षे अर्थस्य—साध्यस्य, साधनाय—ज्ञापनाय, यः,—यदित्यर्थः, निदर्शनं—हेतुप्रदर्शनं, स दृष्टान्तः।

उदाहरति, यथेति।—तस्याः—भानुमत्याः। सा—भानुमती। अत्र द्रौपद्यां भानुमतीकर्त्तृकः परिहासः दुर्य्योधनकलत्रसम्बन्धित्वेन निदर्शित इति बोध्यम्।

## लक्ष्मी

दृष्टान्ताख्यं लक्षणं लक्षयति—दृष्टान्त इति। पक्षे अर्थस्य साध्यस्य साधनाय बोधनाय यस्तु निदर्शनं हेतुप्रदर्शनम्, स दृष्टः अन्तः साध्यस्य रूपं यस्मादर्थादिति दृष्टान्तः तत्संज्ञको लक्षणम्।

उदाहरति—यथेति। सहदेवः (भीमं प्रति) तस्या भानुमत्याः। एतत् परिहासविधानम्। सा भानुमती। अयि! जण्णसेणि! पञ्चगगामा पत्थीअतित्ति सुणिअति ता किमदाणीं वि दे केशाण संजमी अन्ति? 'अयि!

याज्ञसेनि ! पञ्चग्रामाः प्रार्थ्यन्त इति श्रूयते तत् कस्मादिदानीमपि 'ते केशा न संयम्यन्ते' ? इति संस्कृतम् । अत्र भानुमतीरूपपक्षे परिहासविधानौचित्यरूपसाध्यस्य दुर्योधनकलत्रत्वरूपहेतुप्रदर्शनात् दृष्टान्तः ।

## रुचिरा

दृष्टान्तं लक्षयति—४९२ **यत्**। **तु**। **पक्षे**। **अर्थसाधनाय** साध्यस्य साधनाय । समस्तापाठेऽप्ययमेवार्थः । **निदर्शनं** हेतुप्रदर्शनम् । तत्—**दृष्टान्तः** ॥ ४७६ ॥

उदाहरति—**यथा**। **वेण्यां** वेणीसंहारे । '**सहदेवः** (भीमं प्रति) **आर्य ! तस्या** भानुमत्याः **एतत्** साभिमानं विकत्थनम् । **उचितम्**। **एव**। **यतः सा** भानुमती । **दुर्योदनकलत्रम्**। **हि** एव ।' 'अइ जण्ण सेणि ! पंच ग्गामा पत्थीअतित्ति सुणीअति ता कीम दाणीं वि दे केसा ण संजमीअंति ? (अयि याज्ञसेनि । पञ्च ग्रामाः प्रार्थ्यन्त इति श्रूयते तत् कस्ममादिदानीमपि ते केशा न संयंम्यन्ते ?)' इति च तद्वाक्यम् ।

**तुल्यतर्को यदर्थेन तर्कः प्रकृतिगामिना ।**

यथा तत्रैव—

**'प्रायेणैव हि दृश्यन्ते कामं स्वप्नाः शुभाशुभाः ।**
**शतसंख्या पुनरियं सानुजं स्पृशतीव माम् ॥'**

---

## विवृतिः

अर्थेन वस्तुना तर्को भाव्यर्थसूचनम् । प्रकृतिगामिना प्रकृतेन, न तु प्रकृतिविपर्यासरूपेण अद्भुतेन ॥

प्रायेणैवेति । स्वप्नदर्शनस्य प्रकृतत्वज्ञापनायेदम् ॥ संचयः समूहः । अर्थानुरूपोभिधेयसदृशः । सुकुमारार्थे सुकुमारपदसंचयस्य, उद्भटार्थे उद्भटपदसंचयस्य प्रयोग इत्यर्थः ॥

## विज्ञप्रिया

तुल्यतर्काख्यं लक्षणमाह—तुल्यतर्क इति । प्रकृतोऽत्र वक्ता तद्गामिनार्थेन यत्तर्क आशङ्केत्यर्थः । अत्रापि यदित्यव्ययम् । प्रायेणैव हीति । नकुलेनाहिशतं हत्वा भानुमत्याः स्तने क्षत इति भानुमत्या दृष्टे स्वप्ने कथिते दुर्योधनस्येयमाशङ्का ।

## कुसुमप्रतिमा

तुल्येति । प्रकृतिगामिना प्रस्तुतेन अर्थेन विषयेण द्वारा यत् तर्को भाविविषयानुसन्धान भवति स तु तुल्यतर्को नाम लक्षणम् । द्वारद्वारिमीर्विषययोः समानतर्कमात्तुल्यतर्क इति नाम ।

प्रायेणेति । प्रायेणैव शुभाशुभाः स्वप्नाः कामं हि पर्य्याप्तमेव दृश्यन्ते । इयमीदृशी पुनः स्वप्नानां शतसंख्या सानुजं दुःशासनादिभिः सहितं मां स्पृशतीव प्रत्येकं सम्बन्धनातीव, अस्माकमपि शत संख्यकत्वादिति भावः ।

अत्र प्रस्तुतानेकभ्रातृनिधनतर्कणद्वारा भविष्यदात्मादिनिधनतर्कणात्तुल्यतर्कः ।

## विमला

तुल्यतर्कमाह, तुल्यतर्क इति ।—प्रकृतगामिना—प्रस्तुतानुसारिणा, प्रकृतेनेति यावत्, न तु प्रकृतिविपर्य्यासरूपेण अद्भुतेनेत्यर्थः, अर्थेन—वस्तुनः, यत्—यः, [इदमव्ययं] तर्कः,—भाव्यर्थस्य सूचनं, च तुल्यतर्कः ।

उदाहरति, यथेति ।—-प्रायेणेति ।—कामम्—अकामम्, अनभिमतरूपमिति यावत्, अथवा,—कामं—यथेष्टमित्यर्थः, ("अकामानुमतौ कामम्" इति कोषः) शुभाः,—मङ्गलोदर्काः, कदाचिदिति शेषः, अशुभाः,—अनिष्टोदर्काः वा, कदाचिदिति शेषः, स्वप्नाः प्रायेण दृश्यन्ते, जनैरिति शेषः । इयं—स्वप्नावस्थायां भानु मत्या दृष्टेन नकुलेन हन्यमानाहिसम्बन्धिनी इत्यर्थः, शतसङ्ख्या सानुजं मां स्पृशति—विषयीकरोति इव, तेषामिव अस्माकमपि

शतसङ्ख्यावत्त्वादित्यर्थः; एतेन दुर्य्योधनादीनां शतभ्रातृणां भाविनिधनरूपार्थस्य सूचनम् । अत्र तु शतसङ्ख्यायाः सादृश्यम् आत्मनि सम्भावना तुल्यतर्कं इति । पथ्यावक्त्रं वृत्तम् ।

## लक्ष्मी

तुल्यतर्काख्यं लक्षणं लक्षयति—तुल्यतर्कं इति । प्रकृतगामिना प्रस्तुतेन न तु प्रकृति विपर्यासरूपेण अद्‌भुतेन, अर्थेन वस्तुना यत् तर्को भाव्यर्थानुसन्धानं स तु द्वारद्वारिणोर्वस्तुनोः समानतर्कणात्तुल्यतर्को नाम लक्षणम् । अत्रापि यदित्यव्यम् ।

महर्षिणा त्वत्रेत्थमभिहितम्—

'रूपकैरुपमानैर्वा तुल्यार्थाभिः प्रयोक्तृभिः । अप्रत्ययार्थसंस्पर्शस्तुल्यतर्कः प्रकीर्त्तितः ॥' इति ।

उदाहरति—यथेति । तत्रैवेत्यस्य वेण्यामेवेत्यर्थः । प्रायेणेति । नकुलेनाहिशतं हत्वा भानुमत्याःस्तने क्षत इति भानुमत्या दृष्टे स्वप्ने कथितदुर्योधनस्याशङ्केयम् । हि यतः प्रायेणैव शोभते एभिरिति शुभाः (करणे घञ्) शुभाश्चाशुभाश्चेति शुभाशुभाः स्वप्नाः शयन समयेऽन्तःकरणपरिणामविशेषाः कामं यथेष्टम् दृश्यन्ते अवलोक्यन्ते । इयम् ईदृशी अहिगता पुनः स्वप्नानां शतसंख्या सानुजं दुःशासनादिभिः सहितम्, मां दुर्योधनम्, स्पृर्शशतीव प्रत्येकं सम्बन्धातीव । अस्माकमपि शतसंख्यकत्वात् सर्पाणामपि तथात्वात् उभयोस्तुल्यसंख्यकत्वेन मम चेतसि महद्भ्यमित्यर्थः । पथ्यावक्त्रं छन्दः । अत्र प्रस्तुतानेकभ्रातृमरणतर्कणद्वारा-भविष्यत्स्वकीयादिमरणतर्कणातुल्यतर्कः ।

## रुचिरा

तुल्यतर्कं लक्षयति—४९३ **प्रकृतगामिना** प्रकृतात्मना परिणमिष्यमाणेन । **अर्थेन** वस्तुना । **यत्** यः (इदमव्ययम्) **तर्को** भाव्यर्थसूचनम् । स **तुल्यतर्कः** ।

उदाहरति—**यथा** । तत्र वेणीसंहारे । **एव** । (दुर्योधनो भानुमत्याः स्वप्रवृत्तान्तं श्रुत्वाऽऽह) **'प्रायेण । एव । हि । शुभाशुभाः** शोभना अशोभनाश्च । **स्वप्नाः । कामम् । दृश्यन्ते । इयम्** 'सहि सुमरिदं अज्ज किल षमदवणे आसीणाए मह अग्गदो एव्व दिव्वरूविणा णउलेण अहिसद् वावादितं (सखि ! स्मृतम्, अद्य किल प्रमदवने आसीनाया ममाग्रत एव दिव्यरूपिणा नकुलेनाहिशतं व्यापादितम्)' इति वाक्यश्रवणेन प्रतिबोधितेति भावः । **शतसङ्ख्या । पुनः । सानुजम् । माम् । स्पृशतीव** । अत्र स्वप्रदर्शनं प्रकृतार्थे परिणामि ॥ २२९१ ॥

**संचयोऽर्थानुरूपो यः पदानां स पदोच्चयः ॥ १८० ॥**

यथा शाकुन्तले—

**'अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।**
**कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥'**

अत्र पदपदार्थयोः सौकुमार्यं सदृशमेव ।

---

## विवृतिः

अधर इति । विटपानुकारिणौ शाकासदृशौ । यथा वा—'प्रागप्राप्तनिशुम्भशांभवधनुर्द्वेधाविधाविर्भवत्क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात् । उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथिर्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥'

प्रागप्राप्तनिशुम्भेति । प्रागप्राप्तनमनेत्यर्थः । अत्र शब्दार्थयोरुद्भटत्वं सदृशम् ॥

## विवृतिपूर्तिः

अधर इति । अधरोऽधरोष्ठः किसलय इव रागो यस्य सः । बाहू विटपौ स्कन्धोर्ध्वशाखे तदनुकारिणौ तत्सदृशौ । 'स्कन्धादूर्ध्व तरोः शाखा कटप्रो विटपो मतः' इति कात्यः । कोमलशब्देन तयोरग्रजत्वं व्यज्यते । अङ्गेषु संनद्धं संनाहं प्रापितम् । अत्युत्कटमिति यावत् । अत्राङ्गेष्विति बहुवचनेन वदने कान्तिमत्ता, नेत्रयोस्तरलता, कण्ठे कम्बुत्रिरेखावत्त्वम्, वक्षसि स्तनोज्जृम्भणम्, नाभौ गभीरता, नितम्बे मध्यनिम्नत्वम्, उभयभागे चतुरस्रत्वम्, जघनजङ्घाजानुमण्डलोरुदेशानां मांसलत्वम्, गतौ सविलासत्वमित्यादि ध्वनितम् । संनद्धशब्दः प्रकृते बाधितमुख्यार्थः सन् यः संनद्धो भवत्युत्साहेन प्रकटो भवतीति प्राकट्यसंबन्धेन यौवनं लक्ष्यंस्तद्गतमतिशयं व्यनक्ति । यौवनं कुसुममिव लोभनीयं लोभनीयं चित्तापकर्षकम् । अङ्गेषु संनद्धमित्यत्रापि योजनीयम् । लताङ्गेषु संनद्धमित्यर्थः ॥

## विज्ञप्रिया

पदोच्चयाख्यं लक्षणमाह—सञ्चय इति । पदानां सञ्चय इति । पदानां सञ्चयः समूहो योऽर्थानुरूपः स इत्यर्थः । अनुरूपं चार्थस्य कोमलत्वे पदानामपि तथात्वम् । अधर इत्यादि राज्ञः शकुन्तलावर्णनमिदम् । अर्थो यथा कोमलस्तथा शब्दोच्चयोऽपि कटुवर्णविरहात् कोमल इत्याह—अत्र पदपदार्थयोरिति ।

## कुसुमप्रतिमा

सञ्चय इति । अर्थानुरूपः अभिधेयसमानः कोमलार्थे कोमलः विकटार्थे च विकट इत्यर्थः, यः पदानां सञ्चयः समूहः, स पदोच्चयो नाम लक्षणम् । अत्र व्युत्पत्तिः स्पष्टा ।

अधर इति । अधरः किशलयस्य पल्लवस्येव रागो रक्तिमा यस्य सः । बाहू भुजद्वयम्, कोमलविटपानुकारिणौ सुकुमारशाखासदृशौ । अङ्गेषु कुसुममिव लोभनीयं युवजनलोभजनकं यौवनं सन्नद्धं विधिना योजितम् ।

लक्ष्ये लक्षणं सङ्गमयति—अत्रेति। सदृशमेव, अतः पदोच्चय इति भावः। विकटार्थे विकटपदाच्चयो यथा उत्तररामचरिते—"झण्झणितकङ्कणे"त्यादि।

## विमला

पदोच्चयमाह, सञ्चय इति।—पदानाम् अर्थानुरूपः,—अभिधेय सदृशः, यः सञ्चयः,—समूहः, स पदोच्चयः। अर्थानुरूपः इत्यनेन सुकुमारार्थे सुकुमारार्थ सूचकपदप्रयोगः, उद्भटार्थे तत्सूचकपदप्रयोग इति बोध्यम्।

उदाहरति, अधर इति।—अधरः,—अधरोष्ठः, किशलयस्येव रागः,—लौहित्यं यस्य तथाभूतः, बाहू, कोमलविटपौ—मृदुस्कन्धोर्द्धशाखे, तदनुकारिणौ तत्सदृशौ, ("स्कन्धादूर्द्ध्वं तरोः शाखा कटप्रो विटपो मतः" इति कात्यः) अङ्गेषु—अवयवेषु सन्नद्धं—कृतसन्नाद्धम्, अत्युत्कटमिति यावत्, [प्रकृते बाधितसमुख्यार्थः सन्नद्धं शब्दः, सन्नद्धम् उत्साहान्विती भवति इति अन्वितत्वसम्बन्धेन यौवनं लक्षयंस्तङ्गतमातिशय्यं व्यञ्जयति] यौवनं—तारुण्यं, कुसुममिव लोभनीयं—चित्ताकर्षकं, द्रष्टुणामिति भावः। आर्य्या वृत्तम्। अत्र प्रस्तुतार्थानाम् अधरादीनां तत्सदृशपल्लवादिभिः पदसञ्चयैरूपमानं पदोच्चयः। यथा वा,—"प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वैधाविधाऽऽविर्भवत्क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविङ्घः क्षणात्। उज्जवालः परशुभंवत्विशथिलस्वत्कण्ठपीठातिथिर्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते॥" अत्र शब्दार्थयोरुद्भटत्वं सदृशम्।

## लक्ष्मी

पदोच्चयाख्यं लक्षणं लक्षयति—सञ्चय इति अर्थानुरूपः। अभिधेयतुल्यः सुकुमाराथ सुकुमारः उद्भटार्थे च उद्भट इत्यर्थः, यः पदानां सञ्चयः समूहः स पदोच्चयो नाम लक्षणम्।

उदाहरति—यथेति। अधर इति। राज्ञा शकुन्तलावर्णनमिदम्। अधरोऽधरोष्ठः किसलयस्य पल्लवस्येव 'पल्लवोऽस्त्री किसलयम्' इत्यमरः, रागो लौहित्यं यस्य स तथोक्तः, रागेण किसलयसदृश इति भावः। बाहू भुजौ 'भुजबाहू प्रवेष्टो दोः' इत्यम्रः, कोमलौ मृदुलौ विपटपौ स्कन्धोर्ध्वशाखे तदनुकारिणौ तत्सदृशावित्यर्थः। 'स्कन्धादूर्ध्वं तरोः शाखाकटप्रो विटपो मतः' इति कात्यः। कोमलपदोपादानात्तयोरग्रजत्वं प्रतीयते। तथा अङ्गेषु शरीरावयवेषु कुसुममिव पुष्पमिव लोभनीयं चित्तापकर्षकम् यौवनं तारुण्यम्, सन्नद्धं सञ्जातं (सम्बद्धं) स्वात्मना आविर्भूतमित्यर्थः। अङ्गेष्विति बहुवचनोपादानात् मुखे सुन्दरत्वम्, लोचनयोश्चञ्चलत्वम् कण्ठे त्रिरेखावत्वं कम्बुसाम्यं च, वक्षसि कुचयोरौन्नत्यम्, नाभौ निम्नत्वम्, नितम्बे मध्यनिम्नत्वं च उभयभागे चतुरस्रत्वम्, जघनजङ्घाजानुषु मांशलत्वम्, ऊर्वोर्विशालत्वं शीतलत्वं मृदुलत्वं च गतौ सविलासत्वमित्यादि व्यज्यते। मुख्यार्थबाधितः सन्नद्धशब्दो जहल्लक्षणयार्थान्तरं लक्षयति तद्गतातिशयश्च प्रयोजनम्।

लक्ष्ये लक्षणं संयोजयति—अत्रेति। अर्थो यथा कोमलस्तथा पदोच्चयोऽपि कटुवर्णविरहात् कोमल इत्यर्थः। सदृशमेवेति। अतः पदोच्चय इति भावः।

उद्भटपदोच्चयो यथा उत्तररामचरिते—

**प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वैधाविधाविर्भवत्**

**क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात्।**

**उज्जवालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि**

**येंनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥ इति ।**

अत्र शब्दार्थयोरुद्भटत्वं सदृशमेवातः पदोच्चयः ।

## रुचिरा

पदोच्चयं लक्षयति—२९४ **यः । अर्थानुरूपोऽयभिधेयसदृशः । पदानाम् । सञ्चयः । सः । पदोच्चयः ।** । ४७७ ॥

उदाहरति—**यथा । शाकुन्तले**ऽभिज्ञानशाकुन्तले । 'अधर'इत्यादौ ।

'**अधरोऽधरौष्ठः । किसलयरागः** किसलयस्य रागो रक्तिमा तद्रूप इति यावत् । **बाहू । कोमलविटपानुकारिणौ** कोमलौ अभिनवोद्भवौ यौ विटपौ स्कन्धोर्ध्वशाखौ तदनुकारिणौ । **यौवनम् । लोभनीयं** स्पृहणीयम् । **कुसुममिव । अङ्गेषु** अवयवेषु । **सन्नद्धं** संलग्नम् । 'अत्राङ्गेष्विति बहुवचनेन वदने कान्तिमत्ता, नेत्रयोस्तरलता । कम्ठे कम्बुत्रिरेखावत्त्वम्, वक्षसि स्तनोज्जृम्भणम्, नामौ गभीरता, नितम्बे मध्यनिम्नत्वम्, उभयभागे चतुरस्रत्वम्, जघनजङ्घाजानुमण्डलोरुदेशानां मांसलत्वम्, गतौ सविलासत्वमित्यादि ध्वनितम्' इति टिप्पणीकाराः । गतेरङ्गत्वाभावात् तत्र तथा सविलासत्वध्वनिश्चिन्त्यः । शकुन्तलां दृष्टवतो दुष्यन्तस्येयमुक्तिः, अत्र स्फुटः प्रतिपाद्यायाः कोमलाङ्गयाः शकुन्तलाया अनुरूपः कोमलपदविन्यासः ॥ २९२ ॥'

लक्ष्यं समर्थऐयते—**अत्रे**त्यादिना । पदार्थः प्रतिपाद्यः शकुन्तलरूपोऽर्थः । स्पष्टम् ।

**यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम्।**

**परपक्षव्युदासार्थं तन्निदर्शनमुच्यते ॥ १८१ ॥**

यथा—

**'क्षात्रधर्मोचितैर्धर्मैरलं शत्रुवधे नृपाः।**

**किंतु वालिनी रामेण मुक्तो बाणः पराङ्मुखे ॥'**

---

## विवृतिः

यत्रार्थानामिति। पक्षो मतम् ॥ किंत्विति यथेत्यर्थे। पराङ्मुखे अभ्यासक्ते। अत्र क्षत्रधर्मव्युदासार्थं परासक्ते वालिनि श्री रामस्य बाणमोक्षः प्रसिद्धोऽर्थः कीर्तितः ॥

## विवृतिपूर्तिः

व्युदासार्थमिति। व्युदासो निरासः।

खण्डपरशुरिति। 'खण्डयतीति खण्डः सर्वच्छेदकः परशुर्यस्य सः खण्डपरशुः' इति लिङ्गपुराण-व्याख्या ॥

## विज्ञप्रिया

निदर्शनाख्यं लक्षणमाह—यत्रार्थानामिति सूत्रार्थः स्पष्टः। क्षात्रेति। अत्राधर्मयुद्धेन शत्रुमारणार्थं प्रसिद्धस्य रामेणाऽन्यायेन वालिवधस्य निदर्शनम्।

## कुसुमप्रतिमा

यत्रेति। यत्र परपक्षस्य भ्युदासार्थं प्रत्याख्यानार्थं प्रसिङ्गानामर्थानां विषयाणां परिकीर्त्तनं क्रियते, तत् निदर्शनं नाम लक्षणमुच्यते। दृष्टान्तनिदर्शनान्निदर्शनमिति समाख्या।

क्षत्रेति। नृपाः क्षत्रधर्म्मोचितैः क्षत्रियजातियोग्यैः धर्म्मैर्नियमैः सम्मुखयुद्घादिभिः यदि शत्रुवधधे अल समर्था इत्युच्यत इति शेषः। तदा रामेण पराङ्मुखे सुग्रीवाभिमुखत्वादिति भावः, वालिनि वानरराजे वाद्यः किन्तु मुकतो निक्षिप्तः।

अत्र प्रथमार्द्धार्थरूपस्य परपक्षस्य व्युदासार्थं परार्द्धार्थरूपप्रसिद्धार्थ कीर्त्तनान्निदर्शनम्।

## विमला

उदाहरति, क्षात्रेति।—हे नृपाः! क्षत्र एवेति क्षात्रः, तस्य क्षात्रस्य धर्मः,—स्वभावः, तस्य उचिताः,—योग्यः तैः, धर्मैः,—"शौर्य्य तेजो धृतिदार्ढ्यं युङ्गे चाप्यपलायनम्। दानमीश्वरभावश्च चात्रं कर्म स्वभावजम् ॥" इत्यादिना प्रदर्शितेः कर्मविशेषैः, अलं—समर्थाः, ("अलं व्यर्थसमर्थयोः" इत्यमरः) किन्तु [इति यथेत्यर्थे अव्ययः] मुक्तः,—

व्यक्तः, पराङ्मुखे—अन्यासक्ते । अत्र क्षत्रियधर्मरूपस् परपक्षस्य निराकरणाय प्रसिद्धस्य रामकर्तृकवालिहनन-रूपस्य अर्थस्य कीर्त्तनम् ।

## लक्ष्मी

निदर्शनाख्यं लक्षणं लक्षयति—यात्रार्थानामिति । यत्र परपक्षव्युदासार्थं परमतनिरासार्थम् प्रसिद्धानाम् अर्थानां विषयाणाम्, परिकीर्त्तनं विधीयते तत् दृष्टान्तनिदर्शनात् निदर्शनं नाम लक्षणमुच्यते नाट्यविद्भिरिति शेषः ।

उदाहरति—यथेति । क्षात्रधर्मेति । नृपा राजानः क्षात्रधर्मोचितैः क्षत्रियजात्युचितैः, धर्मैः धर्मनियमैः सम्मुखसङ्ग्रामादिभिः शत्रुवधे रिपूच्छेदें अलं समर्था भवन्तीति शेषः । किन्त्विति यथार्थे । तथा च यथा रामेण पराङ्मुखे सुग्रीवेण साकं योधने व्यग्रे वालिनि सुग्रीवभ्रातरि बाणेन मुक्तः प्रक्षिप्तः ।

अत्र प्रथमार्द्धार्थक्षत्रधर्मनिरासार्थे परासक्ते वालिनि श्रीरामस्य बाणमोक्षः प्रसिद्धोऽर्थ उरार्द्धेनार्थेन कीर्त्तनान्निदर्शनम् ।

## रुचिरा

निदर्शनं लक्षयति—४९५ **यत्र । परपक्षव्युदासार्थं** परपक्षनिरसनाय । **प्रसिद्धानां** स्वपक्षसाधकतया ख्यातानाम् । **अर्थानाम् । परिकीर्त्तनम् । क्रियते । तत् । निदर्शनम् । उच्यते** ॥ ४७८ ॥

उदाहरति—**यथा—'हे नृपाः वीराः । शवुवधे** 'कर्त्तव्ये' इति शेषः । **क्षात्वधर्मोन्वितैः । धर्मैं** 'अनुष्ठीय-मानै, रिति शेषः । **अलं** पर्याप्तम् । **न** तत्र धर्मविचारः कर्त्तव्य इति भावः । **किंतु** यतः (अव्यवानामनेकार्थत्वादिद-मुक्तम्) । **पराङ्मुखे** सुग्रीवेण समं योधने व्यग्रे । **वालिनि । रामेण । बाणः । मुक्तः** प्रहतः ॥ २८३ ॥'

**अभिप्रायस्तु सादृश्यादभूतार्थस्य कल्पना ।**

यथा शाकुन्तले—

**'इदं किलाव्याजमनोहरं वपुस्तपः क्लमं साधयितुं य इच्छति ।**
**ध्रुवं स नीलोत्पलपत्रधारया समिल्लतां छेत्तुमृषिर्व्यवस्यति ॥'**

---

## विवृतिः

अभूतार्थस्य असंभविनो वस्तुनः । अव्याजेन स्वभावेन मनोहरम् । ऋषिः कण्वः । व्यवस्यति इच्छति । उत्पलपत्रधारया समिल्लताच्छेदनमिव शकुन्तलाशरीरेण तपः साधनमसंभवि ।

## विवृतिपूर्तिः

समिल्लतामिति । क्वचित् 'शमीलताम्' इति पाठः । तस्या अतिकाठिन्येनोपमेयेऽत्यन्तासंभावनीयत्वं व्यज्यत इति प्रकृतपद्यव्याख्याने राघवभट्टः ॥

## विज्ञप्रिया

अभिप्रायाख्यं लक्षणमाह—अभिप्रायस्त्विति । अभूतार्थस्य असम्भाविनोऽर्थस्य कल्पना आपादनम् । इदं किलेति । तपस्योचितवेशां शकुन्तलां दृष्ट्वा दुष्यन्तस्योक्तिरियम् । किल निश्चितमिदम् । अव्याजमनोहरम् अकृत्रिमरम्यं वपुः यः ऋषिः कण्वः तपः क्षमं साधयितुमिच्छति । ध्रुवमुत्प्रेक्षते । स ऋषिनीलोत्पलपत्रधारया शमीलतां छेत्तुं व्यस्यतीत्यर्थः । अत्र लतारूपसादृश्यात् असम्भविनो नीलोत्पलपत्रधारया शमीलताछेदनस्यापादनम् ।

## कुसुमप्रतिमा

अतीति । सादृश्यादद्भुतार्थस्य असम्भवविषयस्य कल्पना अभिप्रायो नाम लक्षणम् । अभिप्रायविशेषण कल्पनादस्य अभिप्राय इति संज्ञा ।

इदमिति । य इदम् अव्याजमनोहरं स्वभावसुन्दरं वपुः शकुन्तलादेहं तपःक्रमं तपस्या क्लेशं साधयितुं कारयितुम् इच्छति, स ऋषिः कण्वः नीलोत्पलत्रस्य धारया अग्रभागेन ध्रुवं निश्चितम्, शमीलतामतिकठिनं लताविशेष छेत्तुं व्यवस्यति उद्रयच्छति ।

अत्र नीलोत्पलपत्रधारया असम्भवशमीलताच्छदनव्यवसायकल्पनादभिप्रायः ।

## विमला

अभिप्रायमाह, अभिप्राय इति ।—सादृश्यात्—साम्यात्, अद्भुतस्य—असम्भाविनः, ["अभूतार्थस्य" इति पाठे,—स एवार्थः] अर्थस्य—वस्तुनः, कल्पना अभिप्रायः ।

उदाहरति, इदमिति ।—यः अव्याजनमनोहरं—स्वभावमनोरमम्, अकृत्रिममनोरञ्जनम् इति यावत्, इदं—पुरी दृश्यमानमनुपमं, वपुः,—शकुन्तलाशरीरमित्यर्थः, तपः क्रमं—तपश्चरणक्लेशसहं, साधयितुं—कर्त्तुम्, इच्छति, सः ऋषिः—कण्वः इत्यर्थः, ध्रुवं—निश्चितं, नीलोत्पलपत्रधारया—नीलकमलपत्राग्रभागे, शमीलतां—शम्याख्य तरुमित्यर्थः, (उपमेये शकुन्तलावपुषि कोमलसौभाग्यवत्त्वादिमाधारणधर्मसद्भावसूचनार्थं तरुपदोपादाने लिङ्गव्यत्ययेन अनौचित्यदोषप्रसङ्गाय शम्यां लतात्वारोप इति भाष्यम्) छेत्तुं—द्विधाकर्त्तुं, व्यवस्यति–उद्वयङ्क्ते इच्छतीत्यर्थः. अत्र नीलोत्पलपत्रधारया शमीलताच्छेदनमि व शकुन्तलाशरीरेण् तपश्चरणं न सम्भवति। अनेन च शमीलतासादृश्योद्भावनात् अभिप्रायनामकं नाटकलक्षणमुपन्यस्तम्। अत्र निदर्शनाऽलङ्कारः । वंशस्थविल वृत्तम् ।

## लक्ष्मी

अभिप्रायाख्यं लक्षणं विधत्ते—अभिप्रायस्त्विति। सादृश्यात् अद्भुतार्थस्य असम्भविनोऽर्थस्य कल्पना आपादनम्, तु अभिप्रायविशेषेण कल्पनात् अभिप्रायो नाम लक्षणम् ।

उदाहरति—यथेति । इदं किलेति । तपस्योचितवेशां शकुन्तलामवलोक्य दुष्यन्तस्योक्तिरियम् । यः ऋषिः कण्वः, इदं पुरो दृश्यमानं शाकुन्तलीयमिति भावः । अव्याजेन स्वभावेन न त्वलङ्कारणादिनेत्यर्थः, मनोहरं सुन्दरम् अकृत्रिमरम्यमित्यर्थः, वपुः शरीरम्, किलेतिनिश्चयेन, अनुकम्पायामसहने वा किलशब्दः । तपः क्लमं तपस्याक्लेशतत्परम्, साधयितुं कारयितुम्, इच्छति अभिलषति । स ऋषिः कण्वः, ध्रुवं निश्चितम्, नीलोत्पलपत्रस्य इन्दीवरदलस्य धारया अग्रभागेन निशितमुखेनेत्यर्थः, 'खड्गादीनां च निशितमुखे धारा प्रकीर्त्यते' इति विश्वः, नीलोत्पलपत्रधारयेति कथनेन सौकुमार्यं खड्गादिसादृश्यं च व्यज्यते, शमीलताम् अतिकठिनं लताविशेषं छेत्तुं कर्त्तितुम्, व्यवस्यति प्रयतते । उत्पलपत्रधारया शमीलताच्छेदनमिव शकुन्तलाशरीरेण तपः साधनमसम्भवीत्यर्थः । अत्र लतारूपसादृश्यात् नीलोत्पलपत्रधारया असम्भविनः शमीलताछेदनस्यापादनादभिप्रायः ।

## रुचिरा

अभिप्रायं लक्षयति—४९६ **अभिप्राय** इत्यादिना । अभूतार्थोऽसम्भवोऽर्थऐः । स्पष्टमन्यत् ।

उदाहरति—**यथा** । **शाकुन्तले**ऽभिज्ञानशाकुन्तले । '**इदामि**'त्यादौ ।

'**यः** कण्वः । **इदम्** । **किल** । **अव्याजमनोहरम**व्याजेन वस्तुतया मनोहरम् । **वपुः** शकुन्तलायाः शरीरम् । **तपःक्लमं** तपश्र्योऐपयोगि । **साधयितुम्** । **इच्छति** । **सः** । **ऋषिः** । **ध्रुवम्** । **नीलोत्पलधारया** नीलकमलाग्रभागेन । **शमीलतां** शमीवृक्षरूपां लताम् । 'समिल्लता'मिति पाठे तु काष्ठमांत्रस्वरूपां लताम् । **छेतुम्** । **व्यवस्यति** चेष्टते । नीलकमलाग्रभागेन शमीछेदनमिव शकुन्तलायाः शरीरेण तपश्चर्या न सम्भवतीति भावः । इदं शकुन्तलां तपस्विकन्यावेषेण नाटयन्तीं पश्यतो दुष्यन्तस्य वचः । अत्र वंशस्थं छन्दः तल्लक्षणं च प्रागुक्तम् ॥ २९४ ॥'

**प्राप्तिः केनचिदंशेन किंचिद्यत्रानुमीयते ॥ १८२ ॥**

**यथा मम प्रभावत्याम्—'अनेन खलु सर्वतश्चरता चञ्चरीकेणावश्यं विदिता भविष्यति प्रियतमा मे प्रभावती ।'**

---

## विवृतिः

प्राप्तिरिति । अंशेन विशेषेण ॥ चञ्चरीकेण भ्रमरेण । अत्र सर्वतश्चरतेति विशेषणेन भ्रमरस्य स्वप्रियतमांज्ञानं नायकेनानुमीयते ॥

## विज्ञप्रिया

प्राप्त्याख्यं लक्षणमाह—प्राप्तिरिति । अनेनेति—चञ्चरीको भ्रमरः । अत्र सर्वतश्चरणांशेन प्रभावतीदर्शनानुमानम् ।

## कुसुमप्रतिमा

ज्ञप्तिरिति । यत्र केनचित् अशेन वाक्यभागेन कश्चिदनुमीयते तज्ज्ञप्तिर्नाम लक्षणम् । आत्मनी ज्ञापनाज्ज्ञप्तिरिति समाख्या ।

यथेति । चञ्चरीकेण भ्रमरेण । अत्र सर्वतश्चरता इत्यंशन भ्रमरकर्तृकप्रभावतीज्ञानानुमानाञ्ज्ञप्तिः ।

## विमला

ज्ञप्तिमाह, ज्ञप्तिरिति ।—केनचित् अंशेन—प्रकारेण, विशेषणत्यर्थः, यत्र किञ्चित् अनुमीयते—ज्ञाप्यते, सा ज्ञप्तिः ।

उदाहरति, यथेति ।—चञ्चरीकेण—भ्रमरेण । अत्र सर्वतश्चरता इति विशेषणरूपेण अंशेन भ्रमरस्य स्वप्रियतमाज्ञानानुमानं नायकेन क्रियते ।

## लक्ष्मी

प्राप्तयाख्यं लक्षणं निरूपयति—प्राप्तिरिति । यत्र केनचित् अंशेन विशेषणेन वाक्यभागेनेत्यर्थः, किञ्चिदनुमीयते तत् आत्मनः प्राप्तेः प्राप्तिर्नाम लक्षणम् ।

उदाहरति—यथेति । अनेनेति । चञ्चरीकेण द्विरेफेण । अत्र 'सर्वतश्चरते'ति विशेषणेन भ्रमरकर्तृकप्रभावतीदर्शनानुमानात्प्राप्तिः ।

## रुचिरा

प्राप्ति लक्षयथइ—४९० प्राप्तिरित्यादिना । अंशेन विशेषणेन । स्पष्टमन्यत् ॥ ४७९ ॥

उद्दाहरति—यथा । मम । प्रभावत्याम् । 'अनेनैत्यादौ । चञ्चरीको भ्रमरः । स्पष्टमन्यत् । 'अत्र हि सर्वतः सौरभलोभेन भ्रमणेनांशेन सुरभितवदनायाः प्रभावत्या दर्शनं निश्चितम् । इति ग्रन्थस्य हृदयम् ।

**विचारो युक्तिवाक्यैर्यदप्रत्यक्षार्थसाधनम्।**

यथा मम चन्द्रकलायाम्—'राजा—नूनमियमन्तः पिहितमदनविकारा वर्तते। यतः।

**'हसति परितोषरहितं निरीक्ष्यमाणापि नेक्षते किंचित्।**
**सख्यामुदाहरन्त्यामसमञ्जसमुत्तरं दत्ते॥'**

---

## विवृतिः

विचार इति। युक्तिवाक्यैर्हेतुबोधकवाक्यैः। अप्रत्यक्षस्य साधनं ज्ञापनम्॥ असमञ्जसमयोग्यम्॥

## विज्ञप्रिया

विचारलक्षणमाह—विचार इति। हसतीति—अन्येन निरीक्ष्यमाणापि किञ्चिन्नेक्षते। असमञ्जसं सख्या आकाङ्क्षानिवर्त्तकम्। सर्वमिदं मदनाकुलमनस्त्वात्। अत्र समस्तयुक्तिवाक्यैरप्रत्यक्षमदनविकारसाधनम्। पूर्वोक्तमनुमानं त्वंशेन इति भेदः।

## कुसुमप्रतिमा

विचार इति। युक्तवाक्यैर्युक्तिसङ्गतवचनैः अप्रत्यक्षार्थस्य परोक्षविषयस्य यत् साधनं निरूपणं स विचारो नाम लक्षणम्। विचारविषयत्वाद्विचार इति संज्ञा।

यथेति। अन्तः पिहितमदनविकारा हृदयावरुदङ्गधकामवेगा।

हसतीति। परितोषरहितं यथा स्यात्तथा हसति, निरीक्ष्यमाणापि किञ्चिन्न ईष्यते। सख्याम् उदाहरन्त्यां यत् किञ्चिद्वदन्त्यां सत्याम् असमञ्जसम् अयुक्तम् उत्तरं दत्ते।

अत्र नूनमित्यादिस्लोकान्ताभागे अप्रत्यक्षस्य परहृयवर्त्तिमदनविकारस्य हसतीत्यादियुक्तवाक्यैः साधनाद्विचारः।

## विमला

विचारमाह, विचार इति।—युक्तैः—युक्तियुक्तैः, हेतुबोधकैरित्यर्थः, वाक्यैः,—वचनैः, यत् अप्रत्यक्षस्य—अदृष्टस्य, अर्थस्य साधनं—ज्ञापनं, च विचारः।

उदाहरति, हसतीति।—परितोषरहितम्—असन्तोषं यथा तथा हसति, निरीक्ष्यमाणाऽपि किञ्चित् न ईक्षते—न पस्यति, तथा सख्या—वयस्यायाम् उदाहरन्त्याम्—आलपन्त्याम, असमञ्जसम्—अयोग्यम, उत्तरं दत्ते—ददाति अत्र अपरितोषहासादिरूपैर्हेतुमद्वचनैः अप्रत्यक्षस्य मनोविकारस्य साधनम्।अयं भावः,—चन्दकलाऽन्तर्मदनविकारेति—माध्यम्, अपरितो,हासादिमत्त्वादिति हेतुः, तथा च यत्र यत्र अपरितोषहासादिमत्त्वं, तत्र तत्रान्तर्भदनादिविकारत्वमिति युक्तिरन्तर्मदनादिविकारसाधिकेति।

## लक्ष्मी

**विचाराख्यं लक्षणं** निरूपयति—विचार इति। युक्तिवाक्यैः हेतुबोधकवाक्यैः अप्रत्यक्षार्थस्य परोक्षव-**स्तुनः यत् साधनं ज्ञापनम्, स** विचारविषयत्वाद्विचारो नाम लक्षणम्।

उदाहरति—**यथेति**। राजेति। अन्तः पिहितो हृदयेऽवरुद्धो मदनविकारः कामवेगो यस्याः सा तथोक्ता। हसतीति। परितोषः सन्तोषस्तद्रहितं यता स्यात्तथा हसति, अन्येन निरीक्ष्यमाणावलोक्यमानापि किञ्चिन्नेक्षते, सख्यां वयस्यायां प्रियसहचर्यामित्यर्थः, उदाहरन्त्यां यत्किञ्चित् कथयनत्याम्, असमञ्जसम् अयोग्यम् आकाङ्क्षानिवर्त्त-कमित्यर्थः, उत्तरं दत्ते। अत्र नूनमित्यादि पद्यान्तभागे अप्रत्यक्षस्यान्यचित्तस्थितमदनविकारस्य 'हसती'त्यादिसम-स्तयुक्तिवाक्यज्ञापनाद्विचारः। पूर्वोक्तमनुमानन्त्वंशेनेति ततोऽस्य भेदः।

## रुचिरा

विचारं लक्षयति—४९८ **युक्तिवाक्यै**र्नीतिपूर्णैर्वाक्यैः। **यत्। अप्रत्यक्षार्थसाधनं** परोक्षस्यार्थस्य नि-र्णयः। **विचारः**।

उदाहरति—**यथा। मम। चन्द्रकलायां** तदाख्यायां नाटिकायाम्। **'राजा-नूनम्** असंशयम्। **इयं** चन्द्र-कलाऽभिधेया प्रेयसी। **अन्तः पिहितमदनविकारा**ऽन्तर्ज्वलतकामाग्निना पुटपाकसदृशी। **वर्त्तते**। यतः—

**परितोषरहितमु**दासीनतया। **हसति। निरीक्ष्यमाणा** परैरवलोकविषयीक्रियमाणा। **अपि। किञ्चित्। न ईक्षते** पश्यति। **सख्यां** प्रियसहचर्याम्। **उदाहरन्त्यां** क्ष्वेलितं कथयन्त्याम्। **असमञ्जस**मप्रियम्। **उत्तरम्**। दत्ते॥ २९५॥'

**देशकालस्वरूपेण वर्णना दिष्टमुच्यते ॥ १८३ ॥**

यथा वेण्याम्—'सहदेवः'—

**यद्वैद्युतमिव ज्योतिरार्ये क्रुद्धेऽद्य संभृतम् ।**

तत्प्रावृडिव कृष्णेयं नूनं संवर्धयिष्यति ॥'

---

## विवृतिः

देशकालेति । देशकालयोः स्वरूपेण साधर्म्येण ॥

प्रावृडिव वर्षाकाल इव ॥ शुश्रूषस्वेति । पतिगेहं गच्छन्तीं शकुन्तलां प्रति कण्वस्योपदेशोऽयम् ॥ गुणान् प्रतीति । गुणानामित्यर्थः ॥

## विज्ञप्रिया

दिष्टाख्यं लक्षणमाह—देशेति । यद्वैद्युतमिति । आर्य्ये त्वयि भीमे ज्योतिः क्रोधजनितं स्वतेजः सम्भृतमाविष्कृतम् ।वैद्युतं विद्युत्सम्बन्धि. तत्प्रावृडिवेति । प्रावृषा वैद्युततेजसः सम्बर्द्धनात् । अत्र क्रोधोचितकाले तदर्णनम् ।

## कुसुमप्रतिमा

देशेति । देशकालयोः स्वरूपेण समानधर्म्मवत्तया वर्णना दिष्टं नाम लक्षणमुच्यते. देशकालयोः स्वरूपेणोद्दिष्टत्वाद्दिष्टिमिति नाम ।

यदेति । अद्य क्रुद्धे आर्य्ये भीमसेने विद्युत इदमिति वैद्युतमिव यत् ज्योतिस्तेजः सम्भृतमुत्पन्नम्, इयं कृष्णा द्रौपदी प्रावृट् वर्षासमय इव नूनं निश्चितं तज्जयोतिः संवर्द्धयिष्यति ।

अत्र कालस्य समानधर्म्मवत्तया भीमक्रोदद्रौपद्योवर्णनात् दिष्टम् ।

## विमला

दिष्टमाह, देशेति ।—देशकालस्वरूपेण—देशकालयोः साधर्म्येण, वर्णना—रचना, दिष्टम् उच्यते ।

उदाहरति, यदिति ।—अद्य क्रुडद्ये आर्य्ये—भीमसेने इति भावः, वैद्युतमिव—ताडितमिव, यत् ज्योतिः,—तेजः, सम्भृतं—समुत्थितं, तत् इयं कृष्णा—द्रौपदी, प्रावृट्—वर्षाकालः इव, नूनं—निश्चितं, संवर्द्धयिष्यति । अत्र देशकालानुरूपवर्णनम् ।

## लक्ष्मी

दिष्टाख्यं लक्षणं निरूपयति—देशकालेति । देशाकालयोः स्वरूपेण साधर्म्येण वर्णना देशकालयोः स्वरूपेणोद्दिष्टात्वात् दिष्टं नाम लक्षणमुच्यते ।

उदाहरति—यथेति । यद्वैद्युतमिति । अद्य इदानीम् क्रुद्धे कुपिते, आर्ये भीमसेने, विद्युतो भावो वैद्युतमिव तडिद्भवतुल्यम्, यत् ज्योतिः क्रोधजनितं स्वतेजः सम्भृतम् आविष्कृतम्, इयं कृष्णा द्रौपदी, प्रावृट् वर्षाकाल एव नूनं निश्चयं तज्ज्योतिः संवर्धयिप्यति संवर्धनं करिष्यति । यथा प्रावृट्कालो विद्युत्तेजः संवर्द्धयति तथैव द्रौपदीयं भीमक्रोधं संबर्धयिष्यतीत्यर्थः । अत्र कालस्य साधर्म्येण भीमक्रोधद्रौपद्योर्वर्णनाद्दिष्टम् ।

## रुचिरा

दिष्टं लक्षयति—४९९ **देशकालानुसारेण** देशकालानुरूपतयाय । **वर्णना** । **दिष्टम्** । **उच्यते** ॥ ४८० ॥

उदाहरति—**यथा** । **वेण्यां** वेणीसंहारे । '**सहदेवः** 'नेयथ्याभिमुखमवलोक्यात्मगत'मिति शेषः । **क्रुद्धे** । **आर्ये** ज्येष्ठे भीमसेने इति यावत् । **यत्** । **वैद्युतमिव** विद्युत्सम्बन्धीव । **ज्योतिस्तेजः** क्रोधाग्निरिति यावत् । **सम्भृतं** स्थितम् । **तत्** तेजः (कर्म) **प्रावृडिव** वर्षा इव । **इयम्** । **कृष्णा** द्रौपदी । **नूनम्** । **संवर्धयिष्यति** । । २९६ ॥'

**उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः।**

यथा शाकुन्तले—

**'शुश्रूषस्व गुरून्, कुरु प्रियसखीवृत्तिं सपत्नीजने,**

**भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः.**

**भूयिष्ठं भव दक्षिणा परिजने, भाग्येष्वनुत्सेकिनी,**

**यान्त्येवं गृहिणीपदं युवतयो, वामाः कुलस्याधयः ॥'**

---

## विवृतिपूर्तिः

शुश्रूषस्वेति। अत्र समासेन वात्स्यायनोक्तमेकचारिणीवृत्तं संगृहीतं कविकुलगुरुणा ॥

विलसदिति। अलिसंघातेन केशपाशोऽभिप्रेतः ॥

## विज्ञप्रिया

उपदिष्टाख्यं लक्षणमाह—उपदिष्टमिति। शास्त्रमत्र नीतिशास्त्रम् शुश्रूषस्व इति। पतिगृहे प्रेष्यमाणां शकुन्तलां प्रति कण्वस्योक्तिरियम्। विप्रकृता तिरस्कृतापि रोषणतया भर्तृः प्रतीपं मा स्म गमः। भूयिष्ठमतिशयं दक्षिणा यथोचितव्यवहारिणी। वामा उपदिष्टे तद् विपरीतकारिण्यः कुलस्याधयो मनसः व्यथाकारिण्यः। शुद्धसा-रोपात्रलक्षणा। कुलस्याधमा इति क्वचित् पाठः। इदं नीतिशास्त्रानुसारि वाक्यम्।

## कुसुमप्रतिमा

उपेति। शास्त्रानुसारतः प्रयुक्तम् अथ च मनोहारि वाक्यम् उपदिष्टं नाम लक्षणम्। अत्र व्युत्पत्तिः स्पष्टा. यथेति। "भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सिकनी

यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्यादयः ॥"

इति श्लोकपरार्द्धम्। गुरुन् श्वश्रूप्रभृतीन् शुश्रूषस्व, सपत्नीजने प्रियसख्या वृत्तिं व्यवहारं कुरु, विप्रकृतापि भर्त्रैव आक्रुष्टापि रोपणतया तं प्रति कोपनतया तस्य भर्तुः प्रतीपं प्रतिकूल्यं नाट्य यमः न प्राप्नुहि। परिजने दासदास्यादौ भूयिष्ठमन्यन्तं दक्षिणा उदारस्वभावा भव, यथा भोगेषु अनुत्सेविनी अगर्विता भवेत्यन्वयः। एवं कृते युवतयो गृहिणीपदं यान्ति, वामा एतत्प्रतिकूलस्वभावास्तु स्त्रियः कुलस्य आधयो मनोव्यथास्तज्जनिका इत्यर्थः।

अत्र स्मृतिशास्त्रानुसारिमनोहरवाक्यत्वादुपदिष्टम्।

## विमला

उपदिष्टमाह, उपदिष्टमिति।—शास्त्रानुसारतः,—यथाशास्त्रं, मनोहारि—मनोरञ्जनकृत्, वाक्यम् उपदि-ष्टम्—उपदेशवचनमित्यर्थः।

उदाहरति, शुश्रूषस्वेति ।—पतिगेहं गच्छन्तीं शकुन्तलां प्रति कण्वस्योपदेशोऽयम् । गुरून्—पुज्यान् जनान्, श्वश्रूश्वशुरादीनिति यावत्, शुश्रूषस्व—सेवस्व; सपत्नीजने प्रियसखीवृत्तिं—प्रियवयस्याव्यवहारं, कुरु विप्रकृताऽपि—अपमानिताऽपि, भर्त्रेति शेषः, रोषणतया—कोपनतया, भर्त्तुः प्रतीपं—प्रतिकूलभावमित्यर्थः, मा स्म गमः;—न गच्छ, प्रतिकूलवर्त्तिनौ मा भवेत्यर्थः, परिजने—पोष्यवर्गे, भूयिष्ठम्—अत्यर्थं, दक्षिणा—सरला, भव; तथा भोगेषु—सुखसम्पदां लाभेषु इत्यर्थः, अनुत्सेकिनी—अगर्विणौ, भवेति शेष; अथवा,—भोगेषु—विषयजसुखेषु, अनुत्सेकिनौ—उत्साहाभाववती, अगर्विता वा सती, परिजने दक्षिणा भव इति पूर्वेणान्वयः । एवम्—इत्थम् अनुष्ठिते सति, युवतयः;—तरुण्यः, न केवलं त्वम्, अपि तु स्त्रीमात्रम् इति भावः, गृहणीपदं—"गृहिणी" इति अधिकारं, यान्ति—लभन्ते; वामाः;—एतत्प्रतिकूलवर्त्तिन्ध इत्यर्थः, कुलस्य—पितृश्वशुरवंशयोः इत्यर्थः, आधयः;—मनस्तापकारिण्यः, मनः पीड़ा इव इत्यर्थः, भवन्तीति शेषः । इह सङ्क्षेपेण वाक्यायनकथितमेवचारिणीवृत्तं सङ्कलितं कालिदासेन । एतेन हि स्वामिसकासावस्थानरूपसुभसम्भावनया मनोहारिवाक्येन शास्त्रानुसारतः प्रयोजनम् उपदिष्टमिति । अत्र गुरुशुश्रूषादिकं शास्त्रानुसारि मनोहारि वचनम् । शार्दूलविक्रीड़ितं वृत्तम् ।

## लक्ष्मी

उपदिष्टाख्यं लक्षणं निरूपयति—उपदिष्टमिति । शास्त्रानुसारतः प्रयुक्तम्, शास्त्रमत्र नीतिशास्त्रं तथा मनोहारि रमणीयम्, वाक्यम् उपदिष्टं नाम लक्षणम् ।

उदाहरति—यथेति । शुश्रूषस्वेति । पतिगृहे प्रेष्यमाणां शकुन्तलां प्रति कण्वस्योपदेशोऽयम् । गुरून् श्वश्रूश्वशुरादिपूज्यजनान् शुश्रूस्व सेवस्व अनलसा सती सभावं पादसंवाहनादिरूपां सेवां विधेहीत्यर्थः, श्रृणोतेः सन्नन्तात् 'ज्ञाश्रुस्मृदृशां सनः' इति पाणिनीयसूत्रेणात्मनेपदम् । विध्यर्थे लोट् प्रयोगो ज्ञेयः । उक्तं च—

**'भर्त्तृशुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया ।**

**तद्बन्धूनां च कल्याणि ! प्रजानां चानुपोषणम् ॥'इति ।**

परत्र चेह च श्रेयः साधनतया प्राधान्यात्तत्सूचनाय गुरुशुश्रूषणस्य प्रथमोपादानम्, उत्तरत्राप्येवं क्रमो ज्ञेयः । सपत्नीजने समान एकः पतिर्यस्याः सेति विग्रहे समासे 'नित्यं सपत्न्यादिषु' इति पाणिनीयसूत्रेण निपातनात् नकारादेशो ङीप्, समानस्य सादेशश्च सपत्नीति सा एव जनस्तस्मिन् तथोक्ते भर्त्तुः पाणिगृहीतद्वितीयस्त्रीजने इत्यर्थः, प्रियसखी वृत्तं, प्रियसहचरीव्यवहारं कुरु विधेहि । इयमस्मत्प्रियसहचरीति यथा चेतसि उदियात्तथा तदाचरणमनुतिष्ठेत्यर्थः । विप्रकृताऽपि भर्त्रैव तिरस्कृताऽपि अपिना आदृता तु किं वक्तव्यम्, रोषणतया क्रोधनतया भर्त्तुः स्वामिनः प्रतीपं प्रतिकूलं मा स्म गमः न प्राप्नुहि तदनुकूलवत्तिन्येव सदा भवनप्रतिकूलवर्त्तिनीत्यर्थः, अन्यथा पातिवत्यं भज्येत इति भावः । परिजने सेवकसेविकादौ भूयिष्ठमत्यन्तं दक्षिणा उदारस्वभावा भव यथा सेवकादयस्त्वयि बद्धप्रेमाः भवन्ति तथा तन्मनोरथपूर्त्तिद्वारा उदारहृदया भवेत्यर्थः । तथा भोगेषु महादेव्यादिस्थानलब्धसुखेषु सत्स्वपीत्यर्थः । जन्मप्रभृतिवनवासिन्याः सहजदुर्भगायाः तथाविधं चक्रवर्त्तिविभवं लब्ध्वाऽहङ्कारस्यावश्यं भावित्वादिति भावः । एवमनेन प्रकारेण विद्यमाना इति शेषः, युवतयस्तरुण्यो गृहिणिपदं गृहीणीति व्यपदेशं गृहिण्याः स्थानं वा यान्ति लभन्ते किन्तु वामा उपदिष्टिविपरीतकारिण्यो युवतयः कुलस्य पत्युः पित्रोश्चान्वयस्य आधयो मनव्यथास्तदुत्पादिका भवन्तीति शेषः । तस्मादुपदिष्टप्रतिकूल स्वभावा मा भवेति भावः । शार्दूलविक्रिडितं छन्दः । अत्र समासेन वात्स्यायनोक्तं नीतिशास्त्रानुसारिमनोहरवाक्यत्वादुपदिष्टम् ।

## रुचिरा

उपदिष्टं लक्षयति—५०० **शास्त्रानुसारतो** यथाशास्त्रं सदिति भावः। **मनोहारि**। **वाक्यम्**। **उपदिष्टम्**।

उदाहरति—**यथा**। **शाकुन्तले**। (कण्वः शकुन्तलां प्रत्याह)—'**गुरून्** श्वश्रूप्रभृतीन् पूज्यजनान्। **शुश्रूषस्व** सेवस्व। **सपत्नीजने** पत्युर्नायिकान्तरे। **प्रियसखीवृत्तिं** प्रियसख्युच्चितं व्यवहारं प्रकट्य। **विप्रकृता** तिरस्कृता। **अपि**। **रोषणतयेर्ष्यया**। **भर्त्तुः**। **प्रतीपं** प्रतिकीलताम्। **मास्म** नैव। **गमो** याहि। **परिजने** सेवकजने। **भूयिष्ठमतिशयेन**। दक्षिणा चतुरा सर्वतोऽनुकूलताऽऽपादनशीलेति यावत्। भव। भाग्येषु सपत्नीनामैश्वर्येषु। अनुत्सेकिन्यनुत्कण्ठिता भव। **एवं** मदुपदिष्टमार्गेण प्रवर्त्तमानाः। **युवतयः**। स्त्रियः। **गृहिणीपदं** गृहाधीश्वरीत्वम्। **यान्ति**। इतः—**वामाः** प्रतिकूलशीलाः 'पुनः' इति शेषः। **कुलस्य**। **आधयः** शोककारणभूता भवन्ति। यद्वावामाः सुन्दर्यः। कुलस्याधय उज्जीवनाशारूपा भूत्वा गृहिणीपदं यान्तीत्यर्थः। 'वामौ वल्गुप्रतीपौ द्वौ' इत्यमरः। 'आधिमानसपीडायां प्रत्याशायां च बन्धने। व्यसने चाप्यधिष्ठाने' इति विश्वः। अत्र—शार्दूलविक्रीडितं वृत्तम्॥ २९७॥'

**गुणातिपातः कार्यं यद्विपरीतं गुणान्प्रति ॥ १८४ ॥**

यथा मम चन्द्रकलायां चन्द्रं प्रति—

**'जइ संहरिज्जइ तमो घेप्पइ सअलेहि ते पाओ ।**

**वससि सिरे पसुबइणो तहवि ह इत्थीअ जीअणं हरसि ॥'**

---

## विवृतिः

जइ इति । 'यदि संह्रियते तमो गृह्यते सकलैस्ते पादः । वससि शिरसि पशुपतेस्तथापि हा स्त्रिया जीवनं हरसि ॥' इति संस्कृतम् । अत्र चन्द्रस्य स्त्रीवधस्तमोहरणादिगुणविपरीतं कार्यम् ॥

## लोचन

अस्यार्थः—तमोऽन्धकारः अज्ञानं च । पादो रश्मिश्चरणश्च ।

## कुसुमप्रतिमा

गुणेति । गुणान् प्रति विपरीतं गुणविरोधि यत् कार्य्यम्, तद्गुणातिपातो नाम लक्षणम् । गुणस्य अतिपत-नादतिक्रमणादियं समाख्या ।

यथेति । "यदि संह्रियते तमो धार्य्यते सकलैस्ते पादः । वससि शिरसि पशुपतेस्तथापि हास्त्रियो जीवनं हरसि ॥" इति संस्कृतानुवादः । यद्यपि त्वया तमोऽन्धकारः स क्रियते विनाश्यते, यद्यपि च सकलैर्जनैले तव पादः किरणश्चरमश्च शिरसा धार्य्यते । यद्यपि वा त्वं पशुपतेदेवदेवस्य शिवस्यापि शिरसि वससि । तथापि, हा खेदे । स्त्रियो विरहिण्या जीवनं हरसि कामोद्दीपनेन नाशयसि.

अत्र महत्त्वगुणविरोधिस्त्रीजीवनहरमरूपनिकृष्टकार्य्याद्रगुणातिपातः ।

## विमला

गुणातिपातमाह, गुणातिपात इति ।—गुणान् प्रति यत् विपरीतं कार्य्यं—गुणाविरोधिकार्य्यमित्यर्थः, स गुणातिपातः ।

उदाहरति, जइ इति ।—["यदि संह्रियते तमी गृह्यते सकलैस्ते पादः । वससि शिरसि पशुपतेस्तथाऽपि हा ! ! स्त्रीजीवनं हरसि ॥" इति संस्कृतम्] । अत्र चन्द्रस्य तमोहरमादिगुणानां विपरीतं स्त्रीजनजीवनहरणम् ।

गुणातिशयमाह, य इति ।—यः सामान्यगुणेभ्यः,—उपमानोपमेयवृत्ति साधारणधर्मेभ्यः, उद्रेकः,—आधिक्यम् उपमेयस्येति शेषः, स गुणातिशयः मतः,—कथितः ।

## लक्ष्मी

गुणातिपाताख्यं लक्षणं निरूपयति—गुणातिपात इति। गुणाः स्ववृत्त्यार्जवादिगुणास्तान् प्रति तेषां गुणानामित्यर्थः, तथा च स्ववृत्तिगुणानां विपरीतं विरोधि यत् स्वकार्यं तत् गुणस्यातिपतनादतिक्रमणात् गुणातिपातो नाम लक्षणम्।

उदाहरति—यथेति। 'चन्द्रं प्रति कान्तविरहिता चन्द्रकला प्राह' इति शेषः। जइ संहरिज्जइ इति।

**'यदि संह्रियते तमो गृह्यते सकलैस्तव पादः।**
**वससि शिरसि पशुपतेस्तथापि स्त्रीणां जीवनं हरसि॥'**

इति संस्कृतम्। यद्यपि त्वया भवता तमोऽन्धकारं संह्रियते अपाक्रियते तथापि सकलैः समग्रैर्लोकैस्तव ते पादो मयूखचरणश्च शिरसा धार्यते, संहर्त्तुश्चरमोपासनं विरुद्धन्तथापि सम्प्रति सम्भवतीति भावः। यद्यपि वा त्वं पशुपतेरीशस्यापि 'शम्भुरीशः पशुपतिः' इत्यमरः, शिरसि मूर्ध्नि वससि तिष्ठसि तथापि स्त्रियः मत्सदृशप्रोषितभर्तृकाया जीवनं हरसि कामातिशयेन घातयसि। अत्रैतादृशमहत्वगुणयुक्तोऽपि तद्विरोधिस्त्रीजीवनहरमरूपाधर्मकार्यात् गुणातिपातः।

## रुचिरा

गुणातिपातं लक्षयति—५०१ **यत्**। **गुणान्**। **प्रति**। **विपरीतं** प्रतिकूलम्। **कार्यम्**। सत्स्वपि गुणेषु दुष्टात्मना भवनरूपमित्यर्थः। **गुणातिपातः** ॥ ४८१ ॥

उदाहरति—**यथा**। **मम**। **चन्द्रकलायाम्**। **चन्द्रम्**। **प्रति** 'नायकविरहिता चन्द्रकला आहे'ति शेषः। '**जइ** यदि। **तमो** तमः। **संहरिज्जइ** संह्रियते 'त्वये'ति शेषः। तर्हि—**ते** तव। **पाओ** पादः किरणः। 'चरण'मिति श्लेषः। **सअलेहिं** सकलैः। **घेप्पइ** गृह्यते। संहर्तुश्चरणोपासनं विरुद्ध, मथाप्यद्य सम्भवतीति भावः। **पसुवइणो** पशुपतेर्देवदेवस्य महेश्वरस्येति यावत्। **सिरे** शिरसि। **वससि** निवससि। **तहवि** तथोऽपि तत्पुनरिति यावत्। **इत्थीअ** स्त्रियाः मादृश्या वियोगिन्या इति यावत्। **जीअणं** जीवनम्। **हरसि**। महादेवेन यदा शिरसि स्थापितः तत्पुनस्त्वं स्त्रिया नतु कस्यचिद्वीरस्य प्राणान् हर्तु प्रवृत्त इति भावः॥ २८९ ॥'

**यः सामान्यगुणोद्रेकः स गुणातिशयो मतः ।**

यथा तत्रैव—'राजा—(चन्द्रकलाया मुखं निर्दिश्य ।)

**असावन्तश्चञ्चद्विकचनवनीलाब्जयुगल-**

**स्तलस्फूर्जत्कम्बुर्विलसदलिसंघात उपरि ।**

**विना दोषासङ्गं सततपरिपूर्णाखिलकलः**

**कुतः प्राप्तश्चन्द्रो विगलितकलङ्कः सुमुखि ! ते ॥'**

---

## विवृतिः

सामान्यगुणेभ्य उपमानोपमेयवृत्तिसाधारणधर्मेभ्य उद्रेक आधिक्यमुपमेयस्य ॥ तले अधोभागे स्फूर्जन् देदीप्यमानः कम्बुः कण्ठरूपो यस्य सः । दोषासङ्गं विना । दोषरहित इत्यर्थः ।

अथ च दोषा रात्रिस्तस्याः सङ्गं विना । कलाः कलाशास्त्राणि षोडशभागश्च । अत्राह्लादकत्वादिसाधारणधर्मेभ्यो नीलाब्जयुगलादिसंबन्धाधिक्यं मुखस्य ॥

## विज्ञप्रिया

गुणातिपाताख्यं लक्षणमाह—गुणातिपात इति । गुणाः स्वनिष्ठगुणाः । तान् प्रति इति तेषामित्यर्थः । तथा च स्वनिष्ठगुणानां विरोधि यत् स्वकार्य्यं तदित्यर्थः । तह संहरिज्जइ इति ।

**त्वया संह्रियते तमो गृह्यते सकलैस्तव पादः ।**

**वससि शिरसि पशुपतेस्तथापि स्त्रीणां जीवनं हरसि ॥ (इति संस्कृतम्)**

तमः तिमिरमेव तमोगुणः । पादो रश्मिरेव चरणः । अत्र एतादृशगुणविरुद्धमुक्तकार्य्यम् ।

## कुसुमप्रतिमा

य इति । यः सामान्यगुणादुपमानोपमेययोः साधारणधर्म्मात् उद्रेक उपमेयगतस्य कस्यचिद्धर्म्मस्य आधिक्यम्, स गुणातिशयो नाम लक्षणं मतः; गुणं सामान्यधर्म्ममंतिशेत इति व्युत्पत्तेः ।

असाविति । हे सुमुखि ! अन्तर्मध्यभागे चञ्चद्विलसत् विकचं प्रस्फुटं नवं नूतनं लीला युगलं नयनद्वयरूपं विहारपद्मद्वयं यस्य सः, तले अधोदेशे स्फुरन् शोभमानः कम्बुग्रीवारूपः शङ्खो यस्य सः, उपरिभागे विलसन् विचरन् अलिसंघातो भ्रूद्वयरूपो भ्रमरसमूहो यस्य सः, सततं परिपूर्णा अखिला कला यस्य सः, तथा विगलितकलङ्कः कलङ्कशून्यः असौ मुखरूपश्चन्द्रः दोषासङ्ग्वं रात्रिसम्पर्कं विनापि ते तव समीपे कुतः प्राप्त उपस्थितः ? ।

अत्रोपमानभूतचन्द्रापेक्षया उपमेयभूतमुखस्य विगलितकलकत्वरूपधर्म्माधिक्याद्रगुम्प्रातिशयः ।

## विमला

उदाहरति, असाविति ।—हे सुमुखि ! ते—त्वया, अन्तः—अभ्यन्तरे चञ्चत्—स्फुरत्, विकचं—विकसितं, नवनीलाञ्जयुगलं—नीलकमलद्वयं यस्य तादृशः, तले—अधोभागे, स्फूर्जन्—विकसन्, कम्बुः—शङ्खः, कण्ठरूप इति भावः, यस्य तथाविधः, उपरि—तदूर्ध्वदेशे, विलसन्तः—विचरन्तः, अलीनां—भ्रमराणां, सङ्घाताः—समूहाः यस्य तथाभूतः, सततं—निरन्तरं, पौर्णमासीव्यतिरिक्तेऽपि काले इत्यर्थः, परिपूर्णाः अखिलाः—समग्राः, कलाः—कलाशास्त्राणि, षोडशभागश्च यस्य तथोक्तः, विगलितकलङ्कः—निष्कलङ्कः, असौ चन्द्रः—मुखचन्द्र इति भावः, दोषासङ्गं विना—दोषरहित इत्यर्थः, अथ च दोषा—रात्रिः, ("दोषा रात्रौ भुजेऽपि च" इति मेदिनी) तस्याः सङ्गं—सम्पर्कं, विना—रात्रिमन्तरेणेत्यर्थः, कुतः—कस्मात्, प्राप्तः ? अत्र कलाशब्देन चतुःषष्टिविद्याया अपि गम्यमानत्वात् दोषाणामासङ्गं विना सकलविद्यालाभः असम्भव इति ध्वनिः । इह आह्लादकत्वादिसाधारणधर्मेभ्यः नीलाब्जयुगलादिसम्बन्धात् उपमेयस्य मुखस्य चन्द्रादाधिक्यम्; चन्द्रे तु नीलाब्जादिसम्बन्धाभावान्न आधिक्य-मिति बोध्यम् ।

## लक्ष्मी

गुणातिशयाख्यं लक्षणं निरूपयति—यः सामान्येति । सामान्यगुणेभ्य उपमानोपमेयवृत्तिसाधारण- धर्मेभ्यः उद्रेकः उपमेयगतस्य कस्यचिद्धर्मस्य आधिक्यम्, गुणं सामान्यधर्ममतिशेत इति गुणातिशयो नाम लक्षणं मतः ।

उदाहरति— यथेति । असाविति । चन्द्रकलाया मुखमवलोक्य राज्ञ उक्तिरियम् । शोभनं मुखं यस्यास्तत्सम्बुद्धौ हे सुमुखि सुवदने ! इत्यर्थः, अन्तर्मध्यभागे चञ्चत् चञ्चलं विकचं विकसितं नवं नूतनं लीलाब्ज-युगलं नयन- द्वयरूपं नीलोत्पलद्वयं यस्य स तथोक्तः । तथा तलेऽधोभागे स्फूर्जत् देदीप्यमानः कम्बु कण्ठरूपो यस्य स तथोक्तः, श्लोषाञ्च स एव कम्बुः शङ्खः । तथा उपरि उपरिभागे विलसन् शोभमानः अलिसङ्घातः भ्रमरसमूहो यस्य स तथोक्तः, अत्र केशा एवालिसङ्घातः । तथा दोषाया रात्रेरासङ्ग एव दोषाणामासङ्गस्तं विना दोषरहित इत्यर्थः, सततमनारतमेव परिपूर्णाखिलकलः कला शास्त्राणि षोडशभागस्व विगलितकलङ्कः कलङ्करहितः, असौ दृश्यमानः मुखरूपश्चन्द्रः ते तव समीपे कुतः प्राप्तः, उपस्थितः । सम्बन्धविवक्षया निष्ठासंयोगेऽपि षष्ठी । शिखरिणीच्छन्दः । अत्राह्लादकत्वादिसाधारणधर्मवतश्चन्द्रापेक्षया उपमेयभूतमुखस्य विगलितकलङ्कत्वरूपसम्बन्धाधिक्याद् गुणा-तिशयः ।

## रुचिरा

गुणातिशयं लक्षयति—**५०२ यः । सामान्यगुणोद्रेकः** सामान्यगुणेभ्य उपमानोपमेयवृत्तिसाधारणधर्मेभ्य उद्रेक अतिशयितत्वप्रतिपादनम् । **सः । गुणातिशयः । मतः ।**

उदाहरति—**यथा । तत्र** चन्द्रकलायाम् । **एव** । 'राजा (चन्द्रकलायाः मुखं निर्दिश्य)—हे **सुमुणि । असौ । अन्तश्चञ्च**...अन्तर्गभे चञ्चत्स्फुरत् यत् विकवं प्रफुल्लं नवलीलाब्जयुगलं तद्रूपं नेत्रद्वयं यस्य सः । **तलस्फूर्जत्क-म्बुस्तलेऽ**धीभागे स्फूर्जन् कम्बुः कण्ठरूपः शङ्खो यस्य सः । **उपरि । विलसदलिसङ्घातो** विलसन्नलीनां भ्रमराणां सङ्घातो वालपुञ्जरूपो यस्य सः । **दोषासङ्गं** रात्रेः सम्बन्धम् । अन्यत्र दूषणानां सम्पर्कम् । **विना । सततपरिपूर्णा-खिलकलः** सततं निरन्तरं परिपूर्णा अखिलाः कलाः षोडशभागाः कलाशास्त्राणि वा यस्य तथोक्तः । विगलितक-लङ्को दूरीकृतलाञ्छनः **चन्द्रः । कुतः । प्राप्तः** । अत्र साधारणधर्मामातिशय उपमेयगतः । एवमन्यत् । अत्र शिखरिणीवृत्तम् ॥ २९९ ॥'

**सिद्धानर्थान्बहूनुक्त्वा विशेषोक्तिर्विशेषणम् ॥ १८५ ॥**

यथा—

**'तृष्णापहारी विमलो द्विजावासो जनप्रियः ।**

**ह्रदः पद्माकरः किंतु बुधस्त्वं स जलाशयः ॥'**

---

## विवृतिः

अर्थानिति । सिद्धान् प्रसिद्धान् । विशेषोक्तिर्भेदकथनम् ॥ तृष्णेति । ह्रदस्त्वं चैतादृशः । किं तु त्वं बुधः, स ह्रदो जलाशयः सलिलवान्, जाड्ययुक्तश्च । तृष्णा धनेच्छा, पिपासा च । मलः पापं, पङ्कश्च । द्विजा विप्राः, पक्षिणश्च । लक्ष्मीकरः, पद्मानामाधारश्च । अत्रान्त्यपादे विशेषकथनम् । व्यतिरेकालंकारोऽयम् ॥

## विज्ञप्रिया

गुणातिशयाख्यं लक्षणमाह—योऽसामान्येति । असामान्यस्य अन्यावृत्तेर्गुणस्य यो निर्दिश्यमाने वस्तुनि उद्रेक इत्यर्थः ।

असाविति । हे सुमुखि ! निर्दिश्यमानमुखरूपश्चन्द्रः कुतस्ते प्राप्तः । त्वया प्राप्त इत्यर्थः । सम्बन्धविवक्षया निष्ठासंयोगेऽपि षष्टी । यद्वा ते तुभ्यं तव स्थाने वा कुतः प्राप्तः कुत आगत इत्यर्थः । कीदृशः अन्तर्मध्ये चञ्चत् चञ्चलं विकचनवनीलोत्पलयुगलं यस्य तादृशः । नयनद्वयमत्र नीलाब्जम् । तथा तलेऽधोभागे स्फूर्जत् दीप्यमानः कम्बुः रेखात्रयं यस्य तादृशः । कणलेखात्रयं कम्बुः । श्लेषाञ्च स एव कम्बुः शंखः । तथा उपरि विलसन् अलिसङ्घातो यस्य तादृशः । अत्र केशा एव अलिसङ्घातः । तथा दोषाणात्रेरासङ्ग एव दोषामामासङ्गस्तं विना सततमेव परिपूर्णाखिलकलो विगलितकलङ्कश्च । अत्रैषामंन्यचन्द्रावृत्तिगुणानां मुखात्मकचन्द्रे उद्रेकः ।

विशेषणाख्यलक्षणमाह—अर्थानिति । सिद्धान् उपमानोपमेय साधारणान् बहून् उत्कर्षहेतूनर्थान् धर्मान् इत्यर्थः । विशेषोक्तिः उपमेये उपमानव्यवर्त्तकधर्मोक्तिरित्यर्थः ।

तृष्णापहारीति—अत्र त्वं चेत्यर्थवशात् लभ्यम् । तथा च ह्रदः सरः त्वं च तृष्णापहारी तृष्णा पिपासा धनाकाङ्क्षा च । विमलः स्वच्छजलः निष्पापश्च । द्विजानामावासोऽधिकरणम्; द्विजानां विप्राणामाश्रयश्च । जनानां प्रियः हितकारित्वात् । पद्मानां पद्मायाश्च आकरो निवासस्थानम् । इत्थमुभयसाधारणानुकूलधर्मान् उक्त्वा व्यावर्त्तकर्धममाह—किन्त्विति । बुधः पण्डितः त्वं स तु ह्रदो जलाशयो जलयुक्तः ख्यात एव । जडाशयः निर्बुद्धिचित्तः डलयोरेकत्वं, जलाशयः शीतलः ख्यात इति वा ।

## लोचन

तृष्णेति—द्विजाः ब्राह्मणाः पक्षिणश्च । पद्माकरो लक्ष्मीविधाता पद्मानामाकरश्च । जलाशयो जलस्याशयो जडाशयश्च ।

## कुसुमप्रतिमा

अत्र तृष्णापहारित्वप्रभृतीन् बहून् सामान्यधर्म्मानुक्ता बुधत्वजलाशयत्वरूपभेदकधर्म्मोक्तेर्विशेषणम् ।

सिद्धानिति । सिद्धान् विख्यातान् बहून् अर्थान् सामान्यधर्म्मान् उक्त्वा विशेषस्य यस्य कस्यचिद्भेदकधर्म्मस्य उक्तिर्विशेषणं नाम लक्षणम्, विशिष्यते अनेनेति व्युत्पत्तेः ।

सिद्धानिति । सिद्धान् विख्यातान् बहून् अर्थान् सामान्यधर्म्मान् उक्त्वा विशेषस्य यस्य कस्यचिद्भेदकधर्म्मस्य उक्तिर्विशेषणं नाम लक्षणम्, विशिष्यते अनेनेति व्युत्पत्तेः

तृणेति । ह्रदः पुष्करिण्यादिरूपोः गर्त्तः त्वञ्च, तृष्णां जलपिपासां धनाकाङ्क्षाञ्च अपहरति जलदानेन धनदानेन च नाशयतीति तृष्णापहारी, विमलः स्वच्छो निष्पापश्च द्विजाः पक्षिणो ब्राह्मणाश्च आवसन्त्यस्मिन्निति द्विजावासः, जनानां प्रियः सुशीतलत्वान्मधुरभाषित्वाञ्च सन्तोषकरः तथा पद्मानां नलिनानां पद्मायाः लक्ष्माञ्च आकरः । एतत् सर्वं समानमिति भावः । किन्तु त्वं बुधी विद्वान् स ह्रदस्तु जलानां सलिलानासाशय आधार एव जड़ाशयी मूढबुद्धिः, डलयोरेकत्वात् ।

## विमला

विशेषणमाह, अर्थानिति ।—सिद्धान्—प्रसिद्धान्, वहून् अर्थान् उक्ता विशेषेण उक्तिः,—भेदकथनमित्यर्थः, विशेषणं—विशिष्यते—विभिद्यतेऽनेनेति तथोक्तम् । [करणे ल्युट्] ।

उदाहरति, तृष्णेति ।—विहांसं धनिनं प्रति उक्तिरियम् । ह्रदः त्वञ्च, तुल्य इति शेषः; तथा हि,—तृष्णा—जलपानेच्छा, धनाशा च; ("तृष्णा स्यात्तर्षलिप्सयोः" इति मेदिनी) तस्याः अपहारौ—नाशकः, जलदानेन धनदानेन च इति भावः, विमलः,—स्वच्छः, निर्दोषश्च; द्विजावासः,—द्विजानां—पक्षिणां, जलचराणां हंसादीनामिति यावत्, ब्राह्मणाञ्च; ("द्विजः पक्षिद्विजन्मनोः" इति गोपालः) आवासः,—आश्रयः, जनानां प्रियः,—सन्तोषकरः, पद्माकरः,—पद्मानां—कमलानाम्, आकरः,—उत्पत्तिस्थानं, पद्मायाः,—लक्ष्म्याः, ("लक्ष्मीः पद्मालया पद्मा" इत्यमरः) आकरः,—आवासः, धनवासित्यर्थश्च, किन्तु त्वं बुधः,—विद्वान्, सः,—ह्रदः, जडासयः,—जड़स्य—जलस्य, जाड्यगुणस्य च, [डलयीः सावर्ण्यमङ्गीकृत्येदमुक्तम्] आशयः,—स्थानम् । ["जलाशयः" इति पाठेऽपि स एवार्थः] अत्र बहून् समानधर्मानुक्ता बुधत्वजड़ासयत्वाभ्याम् अन्त्यपादे भेदकथनम् । व्यतिरेकालङ्कारोऽयम् ।

## लक्ष्मी

विशेर्षणाख्यं लक्षणं निरूपयति—निरूपयति—सिद्धानिति । सिद्धान् उपमानोपमेयभूतत्वेन प्रसिद्धान् बहून् उत्कर्षतून् अर्थान् सामान्यधर्मान् उक्त्वा अभिधाय विशेषस्य यस्य कस्यचिद् भेदकधर्मस्य उक्तिः कथनम् उपमेये उपमानव्यावर्त्तकधर्मोक्तिरित्यर्थः, विशिष्यते अनेनेति विशेषणं नाम लक्षणम् ।

उदाहरति—यथेति तृष्णापहारीति । अत्र त्वं चेत्यर्थवशाल्लभ्यते । हृदः सरपुष्करिण्यादिरूपो गर्त इति यावत्, त्वं च, तृष्णां जलपिपासां धनाकाङ्क्षाञ्च अपहरसि जलदानेन धनधानेन च निवर्तयसीति तृष्णापहारी, विमलः स्वच्छजलः पापरहितश्च द्विजानां पक्षिणां 'दन्ता विप्राण्डजा द्विजाः' इत्यमरः, विप्राणाञ्च आवासोऽधिकरममाश्रयश्च, जनानां प्रियः हितकारित्वात् सन्तोषदायकः, तथा पद्मानां पद्मायाश्च आकरो. निवासस्थानम् । इत्थमुभयसाधारमानुकूलधर्मानभिधाय भेदकधर्ममभिदधाति—किन्त्विति । त्वं बुधः पण्डितः स तु हृदः जलानां

सलिलानामाशय आधारः ख्यात एव जडाशयो मन्दबुद्धिः डलयोरेकत्वात्। अत्र तृष्णापहारित्वादीन् बहून् सामान्यधर्मानभिधाय बुधत्वजलाशयत्वरूपव्यावर्त्तकधर्माभिधानात् विशेषणम्।

## रुचिरा

विशेषणं लक्षयति—५०३ **सिद्धान्** प्रसिद्धान्। **बहून्**। **अर्थान्** वस्तूनि। **उक्त्वा**। **विशेषोक्तिर्भेदाभिधानम्**। **विशेषणम्**॥ ४८२॥

उदाहरति—**यथा**। '**तृष्णाऽपहारी** जलदानेन धनदानेन च परस्य तृषां लिप्सां वाऽपहरतीति तथोक्ताः। **विमलोऽ**नुत्थितरजस्कः। पूतश्च। **द्विजावासो** द्विजानां पक्षिणां ब्राह्मणानां वाऽऽवास आश्रयो यत्र यस्माद्वा सः। **जनप्रियः**। **पद्माकरः** कमलानामाकरभूतः पद्माया लक्ष्म्या वाऽकरः। **ह्रदः**। **किंतु**। हे राजन्—**त्वं** भवान्। **बुधः**। **स** ह्रदः। पुनः—**जडाश्रयो** जलाश्रय इति तु श्लिष्टाऽर्थः॥ ३००॥'

**पूर्वसिद्धार्थकथनं निरुक्तिरिति कीर्त्यते ।**

यथा वेण्याम्—

'निहताशेषकौरव्यः—' इत्यादि । (३१४ पृ०)

---

## विज्ञप्रिया

निरुक्त्याख्यं लक्षणमाह—पूर्वसिद्धेति । स्वयं पूर्वकृतार्थकथनमित्यर्थः । निहतेति । प्रतिज्ञाहेतुसम्भवरूपस्य विमर्शसन्ध्यङ्गस्य अपीदमुदाहरणमुपाधिभेदात् अविरुद्धम् ।

## कुसुमप्रतिमा

पूर्वेति । पूर्वं सिद्धानां निष्पन्नानाम् अर्थानां विषयाणं कथनं निरुक्तिरिति नाम लक्षणं कीर्त्यते पूर्व सिद्धत्वादेव निश्चयेनोक्तिर्निरुक्तिरिति व्युत्पत्तेः ।

यथेति । अत्र पूर्व सिद्धाशेषकौरव्यादिहननकथनान्निरुक्तिः ।

## विमला

निरुक्तिमाह, पूर्णेति ।—पूर्वसिद्धानां—पूर्वं निष्पन्नानां, पूर्वं कृतानां, जातानां वेति यावत्, अर्थानां—कार्य्याणां, कथनं—पुनः प्रतिपादनं, निरुक्तिरिति कीर्त्यते ।

उदाहरति, निहतेति ।—धृतराष्ट्रं प्रति भीमस्योक्तिरियम् । निहताः,—विनाशिताः, अशेषाः,—समग्राः, कौरव्याः,—कौरवाणाम् इमे इति तथोक्ताः, कुरुपक्षीययोधा इत्यर्थः, येन सः, दुःशासनस्य असृजा—शोणितेन, वक्षोरक्तपानेन इत्यर्थः, क्षीबः,—मत्तः, उन्मत्त इत्यर्थः, दुर्य्योधनस्य ऊर्वीः,—ऊरुयुगस्य, भङ्क्ता—भाविभञ्जनकारो, [भविष्यदर्थे तृन्] अयम्—उपस्थितः भीमः, शिरसा नतः,—प्रणतः, भवन्तमिति शेषः । ["शिरसाऽञ्चति" इति पाठे—अञ्चति—पूजयति, शिरोन्नमन पूर्वकं प्रणमतीत्यर्थः] । अत्र पूर्वं कृतस्य कौरव्यादिहननरूपस्य कार्य्यस्य निर्वचनात् निरुक्तिरिति बोध्यम् ।

## लक्ष्मी

निरुक्त्याख्यं लक्षणं निरूपयति—पूर्वसिद्धेति । पूर्वसिद्धानां जातानाम् अर्थानां वस्तूनां कथनं पूर्वसिद्धत्वादेव निश्चयेनोक्तिः निरुक्तिर्नामं लक्षणम् ।

उदाहरति—यथेति । निहतेति । प्रतिज्ञाहेतुसम्भवरूपस्य विमर्शसन्ध्यङ्गस्यापीदमुदाहरणमुपाधिभेदादविरुद्धम् । अत्र पूर्वसिद्धसमस्तकौरव्यादिदहनकथनान्निरुक्तिः ।

## रुचिरा

निरुक्ति लक्षयति—५०४ **पूर्वसिद्धार्थकथनं** पूर्वतः सम्पन्नानामर्थानां प्रतिपादनम्। **निरुक्तिः। इति।** कीर्त्यते।

उदाहरति—**यथा। वेण्यां** वेणीसंहारे (भीमः कृतकार्यो युधिष्ठिरचरणान्तिकं प्रतिपद्याह) **'निहिताशेष-कौरव्यो** निहता अशेषाः कौरव्या दुर्योधनादयो येन सः। **दुःशासनासृजा** दुःशासनरुधिरेण लक्षणया तद्रूपमधुपानेन। **क्षीबो** मतः। **दुर्योधनस्य। ऊर्वाः। भङ्क्ता** हन्ता **अयम्। भीमः। शिरसा। नतः** 'स्वा' मिति शेषः॥ ३०१॥'

**बहूनां कीर्तनं सिद्धिरभिप्रेतार्थसिद्धये ॥ १८६ ॥**

**यथा—**

**'यद्वीर्यं कूर्मराजस्य यश्च शेषस्य विक्रमः ।**
**पृथिव्या रक्षणं राजन्नेकत्र त्वयि तत्स्थितम् ॥'**

---

## विवृतिः

बहूनामिति । एतदनेकोपलक्षणम् । तेन नोक्तोदाहरणासंग्रहः । एकस्मिन्बहूनां गुणकथनमित्यर्थः ॥

## विज्ञप्रिया

सिद्धयाख्यं लक्षणमाह—बहूनामिति । अभिप्रेतार्थः स्तुतिः स्तुत्यर्थं बहुधर्मिकीर्त्तनमित्यर्थः । यद्वीर्य्य-मिति । अत्र कूर्मराजाद्यनेकधार्मिकीर्त्तनम् ।

## कुसुमप्रतिमा

बहूनामिति । अभिप्रेतार्थसिद्धये बहूनामनेकेषां कीर्त्तनं कथनं सिद्धिर्नाम लक्षणम् । अभिप्रेतार्थसिद्धिनि-मित्तकीर्त्तनादेवास्य सिद्धिरिति समाख्या ।

यथेति । हे राजन् ! कूर्म्मराजस्य अनन्तनागभारवहस्य कच्छपपतेः वद्वीर्य्यं बलम्, शेषस्य पृथिवीभार-वहस्य अनन्तनागस्य च यो विक्रमः अतिशक्तिः, पृथिव्या रक्षणे एकत्र त्वयि तदुभयमेव स्थितं विद्यनाम् ।

अत्राभिप्रेतराजसन्तोषसिद्ध्ये कूर्म्मरालानन्तबलयोरनेकयोः कीर्त्तनात् सिद्धिः ।

## विमला

सिद्दिमाह, बहूनामिति ।—अभिप्रेतस्य—इष्टस्य, अर्थस्य—कार्य्यस्य, सिद्धये—निष्पत्तये, बोधनाये-त्यर्थः, (एकमधिकृत्य) बहूनाम् (एतदनेकोपलक्षण, तेन नोक्तोदाहरणासङ्ग्रहः) कीत्र्तनं—गुमकथनमित्यर्थः, सिद्धिः ।

उदाहरति, यदिति ।—हे राजन् ! कूर्मराजस्य—कूर्मावतारस्य विष्णोः यत् वीर्य्यं—बलं, यश्च शेषस्य—अनन्तस्य, विक्रमः,—वीर्य्यमित्यर्थः, तत्—उभयोः कूर्मशेषयोः सामर्थ्यं, पृथिव्याः रक्षणे—पालनविषये, एकत्र—एकस्मिन् त्वयि स्थितम् । अत्र अभिप्रेतस्य राज्ञः पृथ्वीपालनभारसहिष्णुतातिशयबोधनाय तदुभयकीर्त्त-नम् ।

## लक्ष्मी

सिद्धयाख्यं लक्षणं निरूपयति—बहूनमिति । अभिप्रेतार्थसिद्धये इष्टवस्तु सिद्धये बहूनाम् अनेकेषां कीर्त्तनं कथनं अभिप्रेतार्थसिद्धिनिमित्तकथनादेव सिद्धिर्नामलक्षणम् । बहूनामित्यनेकोपलक्षणं तेन यद्वीर्यमित्युदा-हरणस्य नासङ्ग्रहः । तथा चैकस्मिन् बहूनां गुणकथनं सिद्धिरित्यर्थः ।

उदाहरति—यद्वीर्यमिति । हे राजन् ! कूर्मराजस्य शेषनागभारवहनकर्त्तुः कच्छपपतेः यद्वीर्यं यत् सामर्थ्यम्, शेषस्य पृथिवीभारकर्त्तुः शेषनागस्य च यो विक्रमः पराक्रमः पृथिव्या रक्षणे पालने एकत्र त्वयि तदुभयमेव स्थितं वर्त्तमानम् अस्तीति शेषः । अत्र राज्ञः पृथिवीपालनभारसहिष्णुतातिशयरूपाभिप्रेतार्थसिद्धये कूर्मराजशेषनागवलयोरुभयोः कीर्त्तनात् सिद्धिः ।

## रुचिरा

सिद्धिं लक्षयति—५०४ **अभिप्रेतार्थसिद्धये**ऽभिमतस्यार्थस्य निष्पत्त्यर्थम् । **बहूनामेकव्यतिरिक्तानामि**त्यर्थः । अत्रापि बहुवचनविवक्षितम् । **कीर्त्तनम्** । **सिद्धिः** ॥ ४८३ ॥

उदाहरति—**यथा**—'**यद्वीर्य** मित्यादौ । स्पष्टोऽर्थः । अत्र हि पृथिवीपालनभारासहिष्णुत्वातिशयं बोधयितुं राज्ञि कूर्मशेषयोर्गुणसद्भावकथनम् ॥ ३०२ ॥

दृप्तादीनां भवेद् भ्रंशो वाच्यादन्यतरद्वचः ।

वेण्याम्—कञ्चुकिनं प्रति 'दुर्योधनः—

**सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।**
**स्वबलेन निहन्ति संयुगे नचिरात्पाण्डुसुतः सुयोधनम् ॥'**

---

## विवृतिः

दृप्तादीनामित्यादिपदेन हृष्टदुःखितादीनां ग्रहणम् । वाच्याद्वक्तुमिष्टादन्यतरद्विपरीतम् ॥ नचिरादिति । चिरान्न हन्तीति वक्तुमिष्टम्, अचिराद्धन्तीत्यन्यथा जातम् ॥

## विवृतिपूर्तिः

"न चिरात्पाण्डुसुतं सुयोधनः' इत्येवं वक्तव्ये 'नचिरात्पाण्डुसुतः सुयोधनम्' इति विपरीतमुक्तम्' इत्युचितम् ॥

## विज्ञप्रिया

भ्रंशाख्यलक्षणमाह—दृप्तादीनामिति । वाच्याद् वक्तुमिष्टादन्यद् यत् दृप्तानां वचो भवेदित्यर्थः । वाच्यादन्यतरद् वच इति अप्रामाणिकः पाठः । सहभृत्यगणमिति । अत्र वक्ता दुर्य्योधनो दृप्तः । पाण्डुसुतं सुयोधन इति वक्तव्ये वैपरीत्येन अन्यदभिहितः ।

## लोचन

पाण्डुसुतं सुयोधन इति वक्तव्ये पाण्डुसुतः सुयोधनभिति वचनम् ।

## कुसुमप्रतिमा

दृप्तेति । दृप्तस्य गर्वितस्य् आदिशब्दात् आनन्दितदुःखितादेश्च वाच्याद्वक्तव्यात् अन्यतरद्वयौ वाक्यं भ्रंशो नाम लक्षणं भवेत् । अत्र व्युत्पत्तिः स्पष्टा ।

सहेति । पाण्डुसुतो युधिष्ठिरः स्वबलेन निजविक्रमेण सहभृत्यगणं सबान्धवं सहमिवं ससुतं महानुजञ्च सुयोधनं दुर्य्योधनम्, न चिरात् शीघ्रमेव संयुगे युद्धे निहन्ति नाशयिष्यतीति भविष्यत्सामीप्ये वर्त्तमाना ।

अत्र "पाण्डुसुतं सुयोधनः" इति वक्तव्ये वक्तुर्दुर्य्योधनस्य दृप्तत्वेन "पाण्डुसुतः सुयोधनम्" इत्यभिधा-नात् भ्रंशः ।

## विमला

भंशमाह, दृप्तादीनामिति ।—दृप्तादीनाम्—[आदिपदेन हृष्टदुःखितादेग्रहणम्] अहङ्कृतहृष्टदुःखिता-दीनामित्यर्थः, वाच्यात्—विवक्षितादित्यर्थः, अन्यतरत्—भिन्नं, विपरीतमिति यावत्, वचः भ्रंशः भवेत् ।

उदाहरति, सहभृत्यगणांमिति—सहमृयाण भृत्यगणैः,—अनुचरजनैः सह वर्त्तमानमित्यर्थः, सबान्धवं—बान्धवैः,—अनुजव्यतिरिक्तैः ज्ञातिभिः सह वर्त्तमानं, सहमित्रं—मित्रैः सह वर्त्तमानं, ससुतं—समुतं—सपुत्रं, सहानुज—कनिष्ठभ्रातृभिः सहितं, सुयोधनं—दुर्य्योधनं, पाण्डुसुतः,—भीमसेनः, स्वबलेन—स्वपराक्रमेण, न चिरात्—अविलम्बेन, संयुगे—सङ्ग्रामे, निहन्ति—विनाशयति। अत्र "चिरादपि न हन्ति" इति विवक्षितम्; किन्तु न चिरात हन्तीति कथनेन भ्रंशाख्यं नाटकाङ्क्षं बोध्यमिति। सुन्दरी वृत्तं,—"विषमे ससजा गुरुः समें सभरा ग्लौ यदि सुन्दरी तदा" इति लक्षणात्।

## लक्ष्मी

भ्रंशाख्यं लक्षणं निरूपयति—दृप्तादीनामिति। दृप्तस्य साहङ्कारस्य आदिपदात् दृष्टदुखितादेश्च, वाच्यात् वक्तुमिष्टात्, अन्यतरद्विपरीतं वचो वाक्यं भ्रंशो नाम लक्षणं भवेत्।

उदाहरति—यथेति। स्वप्रशंसाकर्णनादहङ्कारेण ज्ञानशून्यो दुर्योधनो विपरीतमुक्तवान् सहभृत्यगणमिति। पाण्डुसुतो युधिष्ठिरः स्वबलेन स्वपराक्रमेण सहभृत्यगणं भृत्यगणेन सहितम्, सहस्य सादेशाभावे चेदम्, सबान्धवं बन्धुजनसहितम्, सहमित्रं कर्णादिसहितम्, ससुतं लक्ष्मणादिपुत्रवर्गसहितं, सहानुजं दुर्योधनादिसहितम्, सुयोधनं दुर्योधनं न चिरात् द्रुतमेव संयुगे सङ्ग्रामे निहन्ति घातयिष्यन्ति; वर्त्तमानसामीप्ये लट्। ललिताच्छन्दः 'ससजा विषमे यदा गुरुः समरा स्याल्ललिता समे लगौ' इति लक्षणात्। केचित्तु—सुन्दरीवृत्तमित्याहुः।

अत्र 'न चिरात्पाण्डुसुतं सुयोधनः' इत्येवं वक्तव्ये वक्तुर्दुर्योधनस्य गर्वितत्वेन 'पाण्डुसुत'मिति कर्मपदस्थाने 'पाण्डुसुत' इति कर्त्तृपदस्य, 'सुयोधन' इति कर्त्तृपदस्थाने कर्मपदस्य विपरीताभिधानात् भ्रंशः।

## रुचिरा

भ्रंशं लक्षयति—५०६ **दृप्तादीनाम्**। आदिपदेन—हृष्टदुःखितोद्विग्नादीनां ग्रहणम्। **वाच्याद्वक्तुं** युक्तात्। **अन्यतरद्**भिन्नम्। **वचः**। **भ्रंशः**। **भवेत्**।

उदाहरति—**वेण्यां** वेणीसंहारे। '**दुर्योधनः**। **कञ्चुकिनम्**। **प्रति**। 'आहे'ति शेषः।

**पाण्डुसुतो** युधिष्ठिरः। **स्वबलेन** निजपराक्रमेण नतु परसाहाय्येन। **सहभृत्यगण**मनुचरसहितम्। **सबान्धवं** बन्धुजनसहितम्। **सहमित्रं** कर्णादिसहितम्। ससुतं सलक्ष्मणादिपुत्रवर्गम्। **सहानुजं** दुर्योधनादिसहितम्। **सुयोधनम्**। **न चिरात्** झटिति। **संयुगे** सङ्ग्रामे **निहन्ति**। अत्र 'पाण्डुसुतं सुयोधन' इति वक्तव्यम्, किन्तु प्रमादात्तथा विपरीतमुक्तमिति भ्रंशः। अत्र सुन्दरीवृत्तम्, तल्लक्षणं च यथोक्तम्, 'विषमे ससजा गुरुः समे सभरा ल्गौ यदि सुन्दरी तदा।' इति ॥ ३३० ॥'

**विचारस्यान्यथाभावः संदेहात्तु विपर्ययः ॥ १८७ ॥**

**यथा—**

**'मत्वा लोकमदातारं संतोषे यैः कृता मतिः ।**

**त्वयि राजनि ते राजन्न तथा व्यवसायिनः ॥'**

---

## विवृतिः

विचारस्य तत्त्वनिश्चयस्यान्यथाभावोऽभावः ।

संतोषे धनतृष्णागमजन्यसुखे । न तथा व्यवसायिनः दातृत्वनिश्चयवन्तः । अत्र भवद्विधे दातरि दातृत्वनिश्चयाभाव एव विचाराभावः ॥

## विज्ञप्रिया

विपर्य्ययाख्यलक्षणमाह—विचारस्येति । सन्देहानन्तरं यो विचारो निर्णयस्तस्यान्यथात्वमित्यर्थः । मत्वा लोकमिति । अयाचनेनापि सन्तुष्टत्वे त्वयि अन्यथा व्यवसायिनो याचन्ते इत्यर्थः । अत्रार्थप्राप्त्यप्राप्तिसन्देहानन्तरं याचनवैमुख्यनिर्णयस्य उपश्लोक्ये राजनि अन्यथाभावः ।

## कुसुमप्रतिमा

विचारस्वेति । सन्देहात् विचारस्य पूर्ववधारमस्य अन्यथा भावो विपर्य्यायो नाम लक्षणम् । अत्रापि व्युत्पत्तिः स्पष्टा ।

मत्वेति । यैर्जनैः लोकम् अदातारं मत्वा, सन्तोषे प्रार्थनया धनलाभं विनैव तुष्टौ, मतिः कृत्वा । हे राजन् ! त्वयि राजनि सति ते जनाः तथा व्यवसायिनः प्रार्थनया धनलाभं दिनैव सन्तोषावलम्धितः वर्त्तन्ते । किन्तु भवन्तमत्यन्तदातारं मत्वा प्रार्थयन्तीति भावः ।

अत्र लोकसामान्यस्यैवादातृत्वावधारणस्य "अयं राजा दाता न वा" इति संशयेन अन्यथाभावात् विपर्य्ययः ।

## विमला

विपर्य्ययमाह, विचारस्येति ।—सन्देहात्—संशयात्, विचारस्य—तत्त्वनिर्णयस्य, अन्यथाभावः,—विपरीततया ग्रहणं, स्वरूपस्यान्यथाकरणमित्यर्थः, विपर्य्ययः,—तन्नामकाव्यलक्षणविशेषः ।

उदाहरति, मत्वेति ।—लोकं—जगतीस्थम्, अदातारम्—अवदान्यं, मत्वा—विचार्य्य, यैः सन्तोषे—धनतृणाऽपगमजन्यमुखे, मतिः,—विचारः, कृता—स्थापिता इत्यर्थः, सन्तुष्टैरेव स्थितं, न कुत्रापि याचितुं गतमिति भावः; हे राजन् ! त्वयि राजनि—नृपे सति, ते तथा व्यवसायिनः,—तादृशाचारवन्तः, अदगतृत्वनिश्चयवन्त इत्यर्थः,

न, भवन्तीति शेषः, सन्तोषमवलम्ब्य न तिष्ठन्तीति भावः। अत्र पूर्वं दातृत्वाभावस्य निश्चयी जातः इदानीं त्वयि राज्ञि तन्निश्चयाभाव एव विचारस्य अन्यथाभावः इति बोध्यम्।

## लक्ष्मी

विपर्ययाख्यं लक्षणं निरूपयति—विचारस्येति। सन्देहात् संशयात् विचारस्य तत्त्वनिश्चयस्य अन्यथाभावः विपर्ययो नाम लक्षणम्। सन्देहानन्तरं यो निर्णयस्तस्यान्यथात्वमित्यर्थः।

उदाहरति—यथेति। मत्वेति। यैः पुरुषैः लोकम् अदातरं मत्वा, सन्तुष्टे, याचनया धनप्राप्तिं विनैव प्रसन्ने, मतिः कृता। हे राजन्! त्वयि राजनि राजति विद्यमाने सति ते पुरुषाः तथा व्यवसायिनः याचनया धनलाभं विनैव सन्तोषावलम्बिनः 'न विद्यन्त' इति शेषः, किन्तु अत्यन्तदानशीलं भवन्तं बुध्वा याचयन्तीति भावः। अत्र 'लोकमदातारम्' इत्यनेन सामान्यतया सर्वलोकादातृत्वनिश्चयस्य 'अयं राजा दाताऽस्ति न वा' इति सन्देहेन पूर्वविचारत्यागाद्विपर्ययः।

## रुचिरा

विपर्ययं लक्षयति—५०७ **सन्देहात्**। **तु** पुनः। **विचारस्य** चिन्तितार्थस्य। **अन्यथाभावः**। **विपर्ययः**॥ ४८४॥

उदाहरति—**यथा—यैः**। **लोकं** संसारम्। **अदातारं** कृपणम्। **मत्वा**। **सन्तोषे**। **मतिर्निश्चयः**। **कृता**। **हे राजन्! त्वयि राजति** विराजमाने सति। **न**। **तथा**। 'यथापूर्वं सर्वं लोकं कृपणं ज्ञातवन्त' इति शेषः। **व्यवसायिनः**। अत्र त्वादृशेऽदातृत्वस्य विचाराभावः किन्तु दातृत्वैवेति पूर्वविचारत्यागः॥ ३०४॥'

**दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्तनम् ।**

**वाचा यथा—**

**'प्रसाधय पुरीं लङ्कां राजा त्वं हि विभीषण !**
**आर्येणानुगृहीतस्य न विघ्नः सिद्धिमन्तरा ॥'**

**एवं चेष्टयापि ।**

---

## विवृतिः

परचित्तस्यानुवर्तनम् ॥ आर्येण श्रीरामेण । अन्तरा मध्ये ॥ चेष्टया यथा शाकुन्तले—'तदहमेनामनृणां करोमि । इत्युङ्गुलीयकं ददाति ।' अत्राङ्गुलीयदानरूपचेष्टया शकुन्तलाचित्तप्रीणनम् ॥

## कुसुमप्रतिमा

दाक्षिण्यमिति । चेष्टया कायिकव्यापारेण वाचा वाक्येन वा परचित्तस्य, अनुवर्त्तनमनुरञ्जनं दाक्षिण्यं नाम लक्षणम्, दक्षिणस्य कर्म्मेत्तिं व्युत्पत्तेः ।

प्रसाधयेति । हे विभीषण ! लङ्का पुरीं प्रसाधय अधिष्ठानेनालङ्कुरु, हि यस्मात् त्वं तस्या राजा । आर्य्येण रामचन्द्रेण अनुगृहीतस्य जनस्य सिद्धिमन्तरा कार्य्यसिद्धिमध्ये विघ्नो न स्यात् ।

अत्रे दृशवाक्येन विभीषणचित्तानुवर्त्तनात् दाक्षिण्यम् ।

एवमिति । यथा शाकुन्तले—"राजा । कर्णोत्पलसन्निकर्षादौक्षणमूढोऽस्मि । मुग्धमारुतेन चक्षः सेवते ॥"

अत्र चक्षुः सेवनरूपचेष्टया शकुन्तलाचित्तानुवर्त्तनाद्दाक्षिण्यम् ।

## विमला

दाक्षिण्यमाह, दाक्षिण्यमिति ।—चेष्टया—शारीरव्यापारेण, वाचा—वचनेन च, परचित्तस्य—अन्यदीयस्य मनसः, अनुर्त्तनम्—अनुसरणम्, अनुरञ्जनमित्यर्थः दाक्षिण्यम् ।

उदाहरति, प्रसाधयेति ।—विबीषणं प्रति लक्ष्मणम्योक्तिः । हे विभीषण ! लङ्कां पुरीं प्रसाधय—अलङ्कुरु, हि—यतः, त्वं राजा, इदानीमिति शेषः, आर्य्येण—श्रीरामेण, अनुगृहीतस्य, जनस्य इति शेषः, सिद्धि—फलनिष्पत्तिम्, अन्तरा—विना, मध्ये वा, न विघ्नः, स्यादिति शेषः । अत्र वाचा विभीषणचित्तानुवर्त्तनं दाक्षिण्यम् ।

चेष्टया यथा शाकुन्तले,—"तदहमेनामनृणां करोमि [इत्यङ्गुलीयकं ददाति]" । अत्राङ्गुलीयदानरूपया चेष्टया शकुन्तलाचित्तप्रीणनं दाक्षिण्यम् ।

## लक्ष्मी

दाक्षिण्याख्यं लक्षणं निरूपयति—दाक्षिण्यमिति। चेष्टया शारीरिकव्यापारेण वाचा वचनेन वा परचित्तस्, अनुवर्त्तनं प्रीणानं, दक्षिणस्य भावः दाक्षिण्यं नाम लक्षणम्।

उदाहरति—प्रसाधयेति। विभीषणचित्तप्रीणनार्थं लक्ष्मणस्योक्तिरियम्। हे विभीषण! लङ्कां पुरीं नगरीं प्रसाधय अधिष्ठानेन शोभय, हि यतः त्वं तस्या लङ्काया राजा। कथमित्याह—आर्येणेति। आर्येण श्रीरामभद्रेण अनुगृहीतस्य रक्षितस्य जनस्य सिद्धिमन्तरा कार्यसिद्धिं विना विघ्न अन्तरायो न स्यात् न भवेत्। अत्रैतादृशवचनेन विभीषणचित्तप्रीणनात् दाक्षिण्यम्।

एवं चेष्टयापीति। तद्यथा शाकुन्तले—

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे तन्वी स्थिता कतिचिदेव पदानि गत्वा।

आसीद्विवृत्तवदना च विमोचन्ती शाखासु वल्कलमसक्तमपि द्रुमाणाम्॥

अत्र शकुन्तलायाश्चेष्टया दुष्यन्तस्य प्रीणनम्।

यथा च तत्रैव—'तदहमेनामनृणां करोमि (इत्यङ्गुलीयकं ददाति')। अत्राङ्गुलीयक् दानरूपचेष्टया शकुन्तलाचित्तप्रीणनम्।

## रुचिरा

दाक्षिण्यं लक्षयति—५०८ **चेष्टया**। **वाचा**। च—**परचित्तानुवर्त्तनं** सेवनीयजनाभिप्रायानुकूलतया भवनमिति भावः। **दाक्षिण्यम्**।

उदाहरति—**वाचा** 'परचित्तानुवर्त्तन'मिति शेषः। **यथा**—(लक्ष्मणो विभीषणं प्रत्याह) 'हे **विभीषण लङ्काम्**। **पुरीम्**। **प्रसाधय**ालङ्कुरु। **हि** यतः। **त्वम्**। **हि**। अस्याः **राजा**। कथमहमित्यत आह—**आर्येण** श्रीरामेण। **अनुगृहीतस्य**। **सिद्धिम्**। **अन्तरा** विना। **न**। **विघ्नः** किंतु-सिद्धिर्भवत्येवेति भावः॥ ३०५॥'

**एवम्**। **चेष्टया**। **अपि**। 'ऊह्यमुदाहरण'मिति शेषः। तद् यथाऽभिज्ञानशाकुन्तले 'तदहमेनामनृणां करोमि' इत्यङ्गुलीयकं ददाति।' इत्यत्र हि—अङ्गुलीयकदानेन शकुन्तलायाः प्रीणनम्।

**वाक्यैः स्निग्धैरनुनयो भवेदर्थस्य साधनम्॥ १८८॥**

यथा वेण्याम्—अश्वत्थामानं प्रति 'कृपः—दिव्यास्त्रग्रामकोविदे भारद्वाजतुल्यपराक्रमे किं न संभाव्यते त्वयि।'

---

## विवृतिः

वाक्यैरिति। अर्थस्य प्रयोजनस्य॥ भारद्वाजो द्रोणः॥

## विज्ञप्रिया

'दाक्षिण्याख्यं लक्षणमाह—दाक्षिण्यमिति। परचिन्तानुवर्त्तनं परचित्तप्रीणानम्। प्रसाधयेति। विभीषण-चित्तप्रीणनमिति लक्ष्मणस्य वाक्यम्। सिद्धिमन्तरा सिद्धेर्मध्ये। एवं चेष्टयापीति।

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे तन्वी स्थिता कतिचिदेव पदानि गत्वा।

आसीद् विवृत्तवदना च विमोचयन्ती शाखासु वल्कलमसक्तमपि द्रुमाणाम्॥

इति शाकुन्तलायाश्चेष्टया दुष्मन्तस्य चित्तप्रीणनम्।

अनुनयाख्यं लक्षणमाह—वाक्यैः स्निग्धैरिति। अर्थः स्वाभीष्टम्। दिव्यास्त्रेति, अत्र युद्धप्रवर्त्तनमेव स्वाभीष्टम्।

## कुसुमप्रतिमा

वाक्यैरिति। स्निग्धैः स्नेहसूचकैर्वाक्यैः अर्थस्य कार्य्यस्य साधनं सम्पादनम् अनुनयो नाम लक्षणं भवेत्। अनुमयसम्बन्धादनुनय इति संज्ञा।

यथेति। दिव्यास्त्रग्रामकोविदे उत्कृष्टास्त्रसमूहाभिज्ञे, भारद्वाजस्य द्रोणस्य तुल्यः पराक्रमो यस्य तस्मिन्।

अत्रे दृशस्नेहसूचकवाक्यैः समुत्तेजनारूपकार्य्यसाधनादनुनयः।

## विमला

अनुनयमाह, वाक्यैरिति।—स्निग्धैः,—स्नेहयुक्तैः, वाक्यैः अर्थस्य—कार्य्यस्य, प्रयोजनस्येत्यर्थः, साधनं—करणम्, अनुनयः भवेत्।

उदाहरति, दिव्येति।—दिव्यास्त्राणां ग्रामः,—समूहः, तस्मिन् कोविदः,—विचक्षणः तस्मिन्, भारद्वाजः,—भरद्वाजस्य अपत्यं पुमान्, द्रोण इत्यर्थः, तस्य तुल्यः पराक्रमः यस्य तादृशे। अत्र स्निग्धवाक्येन अश्वत्तथाम्तः सन्तोषरूपस्य कार्य्यस्य साधनम्।

## लक्ष्मी

अनुनयाख्यं लक्षणं निरूपयति—वाक्यैः स्निग्धैरिति. प्रेमद्योतकैः वाक्यैर्वचनैः अर्थस्य प्रयोजनस्य साधनं सम्पादनम् अनुनयसम्बन्धादनुनयो नाम लक्षणं भवेत् ।

उदाहरति—यथेति । दिव्यास्त्रग्रामकोविदे उत्कृष्टास्त्रसमूहविदुषे भारद्वाजो द्रोणस्तस्य तुल्यः सदृशः पराक्रमो यस्य तस्मिन् तथोक्ते । अत्रैवंविध प्रेमद्योतकवचनैः युद्धप्रवर्त्तनरूपप्रयोजकसादनादनुनयः ।

## रुचिरा

अनुनयं लक्षयति—५०९ **स्निग्धैः** । **वाक्यैः** । **अर्थस्य** कार्यस्य । **साधनं** सम्पादनम् । **अनुनयः** ॥ ४८५ ॥

उदाहरति—**यथा** । **वेण्यां** वेणीसंहारे । **अश्वत्थामानम्** । **प्रति** । '**कृपः** (आह) । **दिव्यास्त्रग्रामकोविदे** दिव्यानि यान्यस्त्राणि तेषां ग्रामः साकल्यं तस्य कोविदश्चतुरस्तस्मिन् । **भारद्वाजतुल्यपराक्रमे** द्रोणातु रूपपराक्रमशालिनि । **त्वयि** अश्वत्थाम्नि । **किम्** । **न** । **सम्भाव्यते** किंतु सर्वं सम्भाव्यते इति भावः ।'

**माला स्याद्यदभीष्टार्थं नैकार्थप्रतिपादनम्।**

यथा शाकुन्तले—'राजा—

**किं शीकरैः क्लमविमर्दिभिरार्द्रवातं**

**संचारयामि नलिनीदलतालवृन्तम्।**

**अङ्के निवेश्य चरणावुत पद्मताम्रौ**

**संवाहयामि करभोरु! यथासुखं ते॥'**

---

## विवृतिः

मालेति। अभीष्टार्थं स्वाभीष्टसिद्धये। नैकार्थप्रतिपादनमनेककार्यस्य ज्ञापनम्॥

शीकरैरम्बुकणैः आद्रः शीतलो वातो यस्य तत्। संचारयामि व्यापारयामि। नलिनीदलमेव तालवृन्तम्। 'वृन्तैः' इति पाठे शीकरैः सह नलिनीदलतालवृन्तैरार्द्रवातं संचारयामि, स्मरतप्तशरीरं प्रापयामि। अत्र दुष्यन्तस्य सुरतरूपस्वाभीष्टसिद्धयर्थं शकुन्तलायां समीरसंचारपादसंवाहनकार्ययोर्ज्ञापनम्॥

## विज्ञप्रिया

मालाख्यं लक्षणमाह—माला स्यादिति। नैकार्थस्य नानाविधार्थस्य प्रतिपादनमित्यर्थः। नञर्थस्यात्र नशब्दस्य नाक्षरविपर्ययः। किं शीकरैरिति। शकुन्तलां प्रति दुष्मन्तस्य वाक्यमिदम्। तालवृन्तं व्यजनम्। शीकरैराद्रवातमित्यन्वयः। संवाहयामि पीडयामि। अत्र शकुन्तलासम्भोगरूपस्वाभीष्टार्थं तालवृन्तचालनाद्यनेकप्रतिपादनम्।

## कुसुमप्रतिमा

मालेति। अभीष्टार्थं मभीष्टसम्पादनार्त यत् नैकार्थप्रतिपादनम् अनेकविषयप्रकाशनं सा माला नाम लक्षणं स्यात्। अनेकार्थं प्रकाशविषयत्वादेव मालेति संज्ञा.

किमिति। क्तनविमर्दिभिर्म्लानिनाशिभिः शीकरैर्जलबिन्दुभिः, आद्री वातो वायुर्यस्य तत्, नलिनीदलं. पद्मपत्रमेव तालवृन्तं व्यजनं तत् किं सञ्चारयामि विधुनोमि? उत किं वा पद्मताम्रौ पद्मवत्ताम्रववर्णौ ते तव चरणौ अङ्के क्रीडे निवेश्य संस्थाप्य यथासुखं स्यात्तथा सवाहयामि।

अत्रात्मानं प्रति शकुन्तलाया अनुरागरूपाभीष्टसम्पादनार्थं व्यजनसञ्चालनचरणसंवाहनरूपानेकार्थप्रकाशनान्माला।

## विमला

मालामाह, नालेति।—अभीष्टार्थं—स्वाभीष्टसिद्ध्ये इत्यर्थः, यत् नैकार्थ प्रतिपादनम्—अनेककार्य्यस्य ज्ञापनं, मा माला स्यात्।

उदाहरति, किमिति ।—हे करभोरु !—करभवत्—करस्य बाह्यभागवत्, ("करस्य करभो वहिः" इत्यमरः) ऊरु यस्याः तत्सम्बुद्धौ तथोक्ते ["ऊरुत्तरपदादौपम्ये" (४/१/६९ पा.) इत्यूङ्] क्रमविमर्दिभिः,—श्रान्तिहरैः, शीकरैः,—अम्बुकणैः, आर्द्रः,—सिक्तः, शीतल इत्यर्थः, वातो यस्य तादृशं, नलिन्याः,—कमलिन्याः, दलं—पत्रं, तदेव तालवृत्तं—व्यजनम् इति तथोक्तं, ("व्यजनं तालवृन्दकम्" इत्यमरः) किं सञ्चालयामि ?—मन्दं मन्दं चालयामीति भावः; ["वृन्तैः" इति पाठे,—शीकरैः सह नलिनीदलतालवृन्तैः आर्द्रवातं सञ्चालयामि ?—स्मरतप्तशरीरं प्रीणयानि ? इत्यन्वयोऽवगन्तव्यः] उत—अथवा, पद्मतासौ—पद्मे इव ताम्रौ—आरक्तौ, ते—तव, श्चरणौ अङ्के—क्रोड़े, निधाय—निवेश्य, यथासुखं संवाहयामि ?—मन्दविमर्दनेन खेदम् अपनयामि ? अत्र अभीष्टस्य शकुन्तलापरितोषस्य (सुखसाधकस्येत्यर्थः) साधनाय वातसञ्चालनादीनामनेकार्थानां प्रतिपादनम्। वसन्ततिलकं वृत्तम् ।

## लक्ष्मी

मालाख्यं लक्षणं निरूपयति—मालेति । अभीष्टार्थं स्वाभीष्टसिद्धये यत् नैकार्थस्य प्रतिपादनम् । अनेकविषयस्य ज्ञापनम्, सा अनेकार्थज्ञापनविषयत्वादेव माला नामलक्षणं भवेत् ।

उदाहरति—यथेति । राजा दुष्यन्तः । शकुन्लतासम्भोगरूपस्वाभीष्टसिद्धयर्थं शुश्रूषाप्रकारं विकल्पयति—किं शीकरैरिति । करभाविव मणिबन्धादाकनिष्ठाङ्गुलिपर्यन्तप्रदेशविव 'मणिबन्धादगाकनिष्ठं करस्य करभो बहिः' इत्यमरः, ऊरू जङ्घे यस्याः तत्सम्बुद्धघौ हे करभोरु ? क्लमविमर्दिभिः शरीरतापनाशिभिः शीकरैः जलबिन्दुभिः, आर्द्रः क्लिन्नः शीतलो वातः वायुर्यस्य तत्तथोक्तम्, नलिन्याः कमलिन्याः दलमेव पत्रमेव तालवृन्तं व्यजनं 'व्यजनं तालवृन्तं स्यात्' इत्यमरः, तत् किं सञ्चालयामि व्यापारयामि ? उत किं वा पद्मे कमले इव ताम्रौ अरुणौ रक्तवर्णावित्यर्थः, ते तव चरणौ पादौ अङ्के मदीये उत्सङ्गे 'उत्सङ्गचिन्हयोरङ्कः' इत्यमरः, निधाय स्थापयित्वा सुखमनतिक्रम्य यथासुखम् यथार्थेऽव्यीभावः, मन्दं मदम्, येन विधिना ते सुखं भवेत्तेनैव विधिनेत्यर्थः, संवाहयामि मर्द्दयामि 'संवाहनं मर्द्दनं स्यात्' इत्यमरः, मर्द्दनेन खेदमपनयामीत्यर्थः । तथाचात्र शुश्रूषा विधानाय मयि विद्यमाने सख्योर्गमनेऽपि न काचिदनुपपत्तिरिति अलमावेगेनेति तत्रत्याशयः । वसन्ततिलकं छन्दः अत्रात्मानं प्रति शकुन्तलायां सम्भोगरूपस्वाभीष्टसिद्धयर्थं दुष्यन्तस्य व्यजनसञ्चालनपादसंवाहनरूपानेकार्थज्ञापनान्माला ।

## रुचिरा

मालां लक्षयति—५१० **यत्**। **अभीष्टार्थ**मभिप्रेतार्थसिद्धये । **नैकार्थप्रतिपादन**मनेकोपायानुष्ठानम् । **माला** । **स्यात्** । । ४८६ ॥

उदाहरति—**यथा** । शाकुन्तले '**राजा**-**शीतलैः** सन्तापहरणक्षमैः । अत एव—**क्लमविमर्दिभिः** क्लमं ग्लानि विमर्दयन्तीत्येवंशीलैः । **नलिनीदलतालवृन्तैः** कमलिनीदलरूपव्यजनैः । **किम्** । **आर्द्रवातं** शीतलं पवनम् । **सञ्चारयामि** । **उता**थवा । हे **करभोरु** ! **अङ्के** उत्सङ्गे । **निधाय** । **पद्मताम्रौ** रक्तकमङ्कसदृशौ । **ते** । **चरणौ** । **यथासुखं** यथा क्लेशो न भवेत्तथेति भावः । **संवाहयामि** प्रापयामि । अत्र दुष्यन्तस्य सुरतार्थं वायुसञ्चारणाद्युपात्यालम्बनम् । अत्र वसन्ततिलकं वृतम् ॥ ३०६ ॥'

**अर्थापत्तिर्यदन्यार्थोऽर्थान्तरोक्तेः प्रतीयते ॥ १८९ ॥**

यथा वेण्याम्—द्रोणोऽश्वत्थामानं राज्येऽभिषेक्तुमिच्छतीति कथयन्तं कर्णं प्रति 'राजा—साधु अङ्गराज, साधु । कथमन्यथा ।

**दत्त्वाभयं सोऽतिरथो वध्यमानं किरीटिना ।**

**सिन्धुराजमुपेक्षेत नैवं चेत्कथमन्यथा ॥'**

---

## विवृतिः

अर्थापत्तिरिति ॥ अङ्गराज इति कर्णसंबोधनम् । कथमन्यथेति । भवता वक्तव्यम् । इति शेषः ॥

स द्रोणः । सिन्धुराजं जयद्रथम् । एवं पुत्राभिषेकाभिप्रायः । अन्यथा प्रकारान्तरेण । अत्र सिन्धुराजोपेक्षारूपार्थान्तरोक्त्या द्रोणस्य पुत्राभिषेकाभिप्रायः प्रतीयते ॥

## विज्ञप्रिया

दत्त्वाभयमिति । किरीटिनार्जुनेन सिन्धुराजम् । नैवं चेदिति । राज्ये स्वपुत्राभिषेकेच्छा न चेदित्यर्थः । अत्र सिन्धुराजोपेक्षारूपान्यार्थोक्तिवशात् निर्दिष्टाया द्रोणस्य तादृशेच्छाया निश्चय इत्यर्थः ।

## कुसुमप्रतिमा

अर्थेति । अर्थान्तरोक्तेरन्वार्थकथनात् यदन्वार्थः प्रतीयते तदर्थापत्तिर्नाम लक्षणम्; अर्थस्य आपत्तिर्बुड्द्यावुपस्थितिरिति व्युत्पत्तेः ।

दत्त्वेति । एवं त्वया यदुक्तं तद्रूपमन्यथा न चेत्, तदा अतिरथः स द्रोणः, सिन्धुराजायैव अर्जुनादभयं दत्त्वा, तेनैव भिरीटिना अर्जुनेन वध्यमानं सिन्धु राजं जयद्रथं कथमुपेक्षेत ।

अत्र सिन्धु राजं कथनुपेक्षेतेत्यर्थान्तरोक्तेद्रौणस्य राज्ये अश्वत्थामाभिषेकेच्छारूपान्यार्थप्रतीतेरर्थापत्तिः । दूषणेति । दूषणोद्घोषणायां दोषकीर्त्तनवेलायां या तु भर्त्तना तत्तु गर्हणं नाम लक्षणम् । अत्र व्युत्पत्तिः स्पष्टा ।

## विमला

अर्थापत्तिमाह, अर्थापत्तिरिति ।—अर्थान्तरस्य उक्तेः हेतोः यत्—य इत्यर्थः, अन्यार्थः प्रतीयते, सा अर्थापत्तिः ।

उदाहरति, दत्त्वाऽभयमिति ।—अतिरथः [अनेन विशेषणेन तस्य सामर्थ्येऽपि उपेक्षा अभिसन्धिसूचिकेति बोध्यम्] सः,—द्रोणः, अभयं—पूर्वेद्युः "मा त्वाम् अर्जुनः वधीत्" इत्येवंरूपमिति यावत्, दत्त्वा किरीटिना—अर्जुनेन, बध्यमानं—हन्यमानं, सिन्धुराजं—जयद्रथम्, उपेक्षेत; एवं—त्वदुक्तप्रकाराश्वत्थामाभिषेकरूपाभिसन्धिः, चेत्—यदि, न, स्यादिति शेषः, तर्हि अन्यथा—जयद्रथरक्षणरूपप्रतिज्ञापालने औदासौन्यं,

कथम् ?—किमर्थम् ? न किमपि उपेक्षणे हेतुरित्यर्थः, अत्र सिन्धुराजोपेक्षारूपार्थान्तरप्रकटनेन द्रोणस्य स्वपुत्राभिषेकाभिप्रायः प्रतीयते ।

## लक्ष्मी

अर्थापत्तिर्नाम लक्षणं निरूपयति—अर्थापत्तिरिति । अर्थान्तरोक्तेः अन्यार्थप्रतिपादनात् यदन्यार्थः प्रतीयते तत् अर्थस्यापत्तिर्बुद्धावुपस्थितिरर्थापत्तिर्नाम लक्षणम् ।

उदाहरति—यथेति । अङ्गराज ! इति कर्ण संबोधनम् । एवं त्वदुक्तं सत्यम्, अन्यथा न चेत् राज्ये स्वपुत्राभिषेकेच्चा न चेदित्यर्थः तदा अतिरथः अगणितैः सह योद्धा स द्रोणः तेनैव किरीटिना अर्जुनेन वध्यमानं सिन्धुराजं जयद्रथं कथमुपेक्षेत तद्विमोचनायार्जुनं हन्तुमवश्यमेव यतेत यतस्तन्न कृतमतः स्वपुत्राभिषेक एकं नूनं तद्धृदि आसीदित्यवगम्यते । अत्र सिन्धुराजोपेक्षारूपार्थान्तरोक्त्या द्रोणस्य स्वपुत्राभिषेकाभिप्रायरूपान्यार्थप्रतीतेरर्थापत्तिः ।

## रुचिरा

अर्थापत्ति लक्षयति—५११ **यत्** यदि । **अर्थान्तरोक्तेरन्यार्थ**कथनेन । **अन्यार्थ**स्तद्भिन्नोऽभिप्रायः । **प्रतीयते** । तर्हि—**अर्थापत्ति** ॥ ४८६ ॥

उदाहरति—**यथा । वेण्यां** वेणीसंहारे । '**द्रोणः...अङ्गराजा**ङ्गदेशाधिराज कर्ण ।...**स** द्रोणः । **अतिरथोऽ**मितरथिभिः सममेकः सन् योद्धुं प्रत्युत तांश्च पराजेतुं समर्थः । **किरीटिना**ऽर्जुनेन ।...**सिन्धुराजं** जयन्द्रथम् । **अन्यथा** किरीटी तं कथं हन्तुं प्रभवेदिति भावः । स्पष्टमन्यत् अत्र हि द्रोणेन जयद्रथवधापेक्षयाऽश्वत्थाम्नोऽभिषेक एवाभिमत इति स्थिरीकरणम् ॥ ३०७ ॥'

**दूषणोद्घोषणायां तु भर्त्सना गर्हणं तु तत्।**

यथा तत्रैव—कर्णं प्रति 'अश्वत्थामा—

**निर्वीर्यं गुरुशापभाषितवशात्किं मे तवेवायुधं**
**संप्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्स्वं यथा।**
**जातोऽहं स्तुतिवंशकीर्तनविदां किं सारथीनां कुले**
**क्षुद्रारातिकृताप्रियं प्रतिकरोम्यस्त्रेण नास्त्रेण यत्॥'**

---

## विवृतिः

दूषणोद्घोषणायामिति कृतायामिति शेषः॥

## विवृतिपूर्तिः

स्तुतिवंशेति। स्तुतिवंशयोः कीर्तनं विदन्ति ये तेषां सारथीनां सूतानाम्॥

अस्त्रेणेति। अस्त्रेण नयनाम्भसा॥

## विज्ञप्रिया

गर्हणाख्यं लक्षणमाह—दूषणेति। दूषणोद्घोषणायां सत्यां तयैव उद्घोषणया दूष्यमाणस्य भर्त्सनेत्यर्थः। निर्वीर्यमिति। कर्णस्य गुरुः परशुरामः। तस्य शापरूपं भाषितं तद्वशात् निर्वीर्यमेव तवायुधं किं मे करिष्यतीत्यर्थः। एवकारश्चात्र दर्शितक्रमेण योज्यः। अत्र शस्त्रस्य निर्वीर्यत्वरूपदूषणोद्घोषणया दूष्यमाणस्य कर्णस्य भर्त्सनाप्रतीतिः।

## कुसुमप्रतिमा

निर्वीर्य्यमिति। तव इव मे ममापि आयुधमस्त्रं गुरोः शिक्षकस्य शापभाषितवशात् अभिसम्पातवाक्यवशात् किं निर्वीर्य्यं क्लीहन्तम्? अहं स्तुतिं राजस्तुतिं वंशकीर्त्तनं राजवंशवालीगुणकीर्त्तनञ्च विदन्तीति तेषां तादृशानां सारथीनां कुले किं जातः?। क्षुद्रेण अरातिना कृतमप्रियं वैरम् अस्त्रेण अश्रुजलेन किं प्रतिकरोमि? अपि तु कथमपि नेत्यर्थः अस्त्रेण किं न प्रतिकरोमि? अपि तु अस्त्रेणैव प्रतीकरोमीत्यर्थः।

अत्रं दृशभर्त्तसनालं गर्हणम्।

## विमला

गर्हणमाह, दूषणेति।—दूषणस्य उद्घोषणायां, कृतायामिति शेषः, या भर्त्सना, तत् गर्हणम्।

उदाहरतिं, निर्वीर्य्यमिति।—गुरोः,—परशुरामस्य, शापभाषितवशात्शापोक्त्या, तव आयुधम् इव मे, आयुधमिति शेषः, किं निर्वीर्य्यम्?—अकिञ्चित्करम्? त्वं यथा भयात् समरं विहाय अत्रागतः, तथा इति शेषः,

**सम्प्रत्येव**—अधुनैव, **भयात्** भ्रमरं **विहाय**—त्यक्त्वा, **प्राप्तोऽस्मि**—आगतोऽहं, **किम्**? **स्तुतिवंशकीर्त्तनविदां**—स्तुत्यै—राज्ञां स्तवाय, मनोरञ्जनायेति यावत्, यत् वंशकीर्त्तनं—राज्ञां पूर्वपुरुषाणां नामगुणाद्युद्घोषणं, तत् विदन्तीति तेषां तथाविधानां, **सारथीनां**—सूतानां, **कुले**—वंशे, त्वमिवेति शेषः, किमहं **जातः**?—उत्पन्नः? **क्षुद्रारातिकृताप्रियं**—क्षुद्राः—नगण्याः, ये अरातयः—भीमार्जुनादिशत्रवः, तैः कृतः—अनुष्ठितः, यः अप्रियः—दुष्टव्यवहारः, मत्पितृनिधनरूप इत्यर्थः, तं, किम् **अस्त्रेण**—नेत्रवारिणा, अश्रुवर्षणेनेति यावत्, **प्रतिकरोमि**?—प्रतिविदधामि? मत्पितृबधरूपवैरतायाः प्रतिकारं किं केवलम् अश्रुजलेनैव सम्पादयामि? इत्यर्थः, अस्त्रेण न? करोमीति पूर्वतोऽनुवृत्तम्। द्रोणपुत्रस्य महावीरस्य ममाश्नत्थाः अस्त्रेणैव प्रतीकार्य्योऽयं विषयः, न पुनः समरपराङ्मुखस्य निर्वीर्य्यास्त्रयस्य नीचस्य सूतपुत्रस्य तव इव अस्त्रेण इति भावः अत्र अश्वत्तामकर्त्तृका कर्णभर्त्सना।

## लक्ष्मी

गर्हणाख्यं लक्षणं निरूपयति—दूषणेति। दूषणोद्धोषणायां दोषोद्धाटनवेलायां या तु भर्त्सना तत्तु गर्हणं नाम लक्षणम्।

उदाहरति—यथेति। तत्रैव वेण्यामेवेत्यर्थः। निर्वीर्यमिति। तव इव मे **ममापि** आयुधम् अस्त्रम् गुरुः परशुरामस्तस्य शापरूपं भाषितं वाक्यं तद्वशात्तदधीनात् किं निर्वीर्यं बलहीनमेव किं करिष्यतीत्यर्थः। अयमत्र शापहेतुः—(कर्णो हि सूतजातमात्मानं संगोप्य स्वस्य विप्रत्वं प्रसिद्धीकृत्य परशुरामाच्छस्त्रविद्यां लब्धवान्। अनन्तरश्च क्षत्रियोऽयमिति ज्ञातस्तेन तस्मै 'तवायुधं निर्वीर्यं स्यादिति शप्त इति)। त्वं यथा त्वमिव अहमपि किं सम्प्रत्येव भयात् भीतेः समरं सङ्ग्रामं विहाय परित्यज्य प्राप्तः शिविरे उपस्थितोऽस्मि! अहं स्तुतिं राजस्तुतिं राजवंशावलीगुणोद्घोषणाञ्च विदन्तीति तेषां तथोक्तानां सारथीनां कुले वंशे किं जात उत्पन्नः? नेति भावः। क्षुद्रेण अरातिना शत्रूणा कृतं जनितं वैरमपकारम् अस्त्रेण नयनाम्भसा किं प्रतिकरोमि प्रतिक्रियां सम्पादयामि? अपि तु कथमपि नेत्यर्थः। अस्त्रेण आयुधेन किं न प्रतिकरोमि? अपि तु आयुधेनैव प्रतिक्रियां करोमीत्यर्थः शार्द्दूलविक्रीडितंछन्दः। अत्र रास्त्रादेनिर्वीर्यत्वादिरूपदूषणोद्धोषणया कर्णस्य भर्त्सनात् गर्हमम्।

## रुचिरा

गर्हणं लक्षयति—५१२ **दूषणोद्घाषणायामित्यादिना**। **भर्त्सना** तिरस्कारः। स्पष्टमन्यत्।

उदाहरति-**यथा**। **तत्र** वेणीसंहारे। **एव**। **कर्णम्**। **प्रति**। **अश्वत्थामा** (आह)

**किम्**। **तवेव**। **मे** मम। आयुधं शस्त्रम्। **गुरुशापभाषितवशात्** गुरोः शापमहिम्ना। **निर्वीर्यमकिञ्चित्करम्**। **किम्**। **यथा**। **त्वम्**। **सम्प्रतीदानीम्**। **एव**। **भयात्**। **समरं** सङ्ग्रामम्। **विहाय** प्राप्तः। तथा—अस्म्यहम्। 'प्राप्त' इति पूर्वतोऽन्वेति। **किम्**। **अहम्**। त्वमिवेति शेषः। **स्तुतिवंशकीर्त्तनविदां** स्तुतिः प्रशंसा वंशकीर्त्तनं चेति ते विदन्ति जानन्तीति तेषाम्। **सारथीनाम्**। **कुले**। **जातः**। अहम्। **यत्**। **क्षुद्रारातिकृताप्रियं** क्षुद्रा येऽरातयः शत्रयः तैः कृतमप्रियम्। **अस्त्रेणाश्रुपातेन**। **प्रतिकरोमि**। **अस्त्रेण**। **न**। 'प्रतिकरोमी'ति पूर्वतोऽन्वेति। अत्र शार्दूलविक्रीडितं वृत्तम्॥ ३०८॥'

**अभ्यर्थनापरैर्वाक्यैः पृच्छार्थान्वेषणं मता ॥ १९० ॥**

यथा तत्रैव—'सुन्दरकः—अज्जा, अवि णाम सारधिदुदिओ दिट्ठो तुम्हेहिं महाराओ दुर्योधणो वेत्ति।'

---

## विवृतिः

अभ्यर्थनापरैः सविनयैः ॥ अज्जा इति। 'आर्याः, अपि नाम सारथिद्वितीयो दृष्टो युष्माभिर्महाराजो दुर्योधनो न वेति।' इति संस्कृतम् ॥

## विज्ञप्रिया

पृच्छाख्यं लक्षणमाह—अभ्यर्थनेति। अभ्यर्थनापरैर्वाक्यैरर्थस्यानुसन्धीयमानस्यार्थस्यान्वेषणं पृच्छेत्यर्थः। सुन्दरको दुर्य्योधनस्यानुचरः। अज्ज इति। आर्य, आर्य, अपि नाम सारथिद्वितीयो दृष्टो युष्माभिर्महाराजो दुर्य्योधनो न वेति। (इति संस्कृतम्)

## कुसुमप्रतिमा

अभ्यर्थनेति। अभ्यर्थनापरैः ससम्मानप्रार्थनाबोधकैर्वाक्यैः अर्थानां विषयाणाम् अन्वेषणं पृच्छा नाम लक्षणं मतम्। अन्वेषणविशेषे पृच्छाया आवश्यकत्वात् पृच्छेति समाख्या।

यथेति। "आर्य्याः! अपि नाम सारथिद्वितीयो दृष्टो युष्माभिर्महाराजो दुर्य्योधनो न वेति।" इति संस्कृतानुवादः। सारथिर्द्वितीयो यस्य सः।

अत्र आर्य्या इति ससम्मानप्रार्तनासूचकवाक्येन दुर्य्योधनान्वेषणात् पृच्छा।

## विमला

पृच्छामाह, अभ्यर्थनेति।—अभ्यर्थनापरैः;—प्रार्थनासूचकैः सविनयरित्यर्थः, वाक्यैः अर्थानाम् अन्वेषणं, पृच्छा इति मतम्।

उदाहरति, यथेति।—अज्जेति।—["आर्य्याः! अद्य अपि नाम सारथि द्वितीयो दृष्टो युष्माभिः महाराजो दुर्य्योधी न वेति!" इति संस्कृतम्] अत्र प्रार्थनासूचकवाक्येन दुर्य्योधनान्वेषणम्।

## लक्ष्मी

पृच्छाख्यं लक्षणं निरूपयति—अभ्यर्थनेति। अभ्यर्थनापरैः सत्कारप्रार्थनासूचकैः वाक्यैर्वचनैः अर्थानां विषयाणाम्, अन्वेषणं पृच्छा नाम लक्षणम्।

उदाहरति—यथेति। अज्जा इति। सुन्दरकौ कर्णसारथिः। 'आर्याः, अपि नाम सारथिद्वितीयो दृष्टो युष्माभिर्महाराजो दुर्योधनो न वेति' इति संस्कृतम्। अत्र आर्या इति सत्कारप्रार्थनाद्योतकवचनेन दुर्योधनमार्गणात् पृच्छा।

## रुचिरा

पृच्छां लक्षयति—५१३ **अभ्यर्थनापरैः** सविनयैः । **वाक्यैः** । **अथोन्वेषणं** कार्यगवेणम् । **पृच्छा** । **मता** ॥ ४८७ ॥

उदाहति—**यथा** । तत्र वेणीसंहारे । **एव** । '**सुन्दरकः** कर्णसारथिः । **अज्जा** आर्याः । **अवि** अपि । **णाम्** । नाम । **सारधिदुदिओ** सारथिद्वितीयः । **महाराओ** महाराजः । **दुय्योधणो** दुर्योधनः । **तुह्मेहिं** युष्याभिः । **दिट्ठो** दृष्टाः । **ण वेत्ति** न वेति ।'

**प्रसिद्धिर्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधनम् ।**

यथा विक्रमोर्वश्याम्—'राजा—

**सूर्याचन्द्रमसौ यस्य मातामहपितामहौ ।**

**स्वयं कृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः ॥'**

---

## विवृतिः

लोकसिद्धार्थैः लोकख्यातवस्तुभिः । अर्थसाधनं पदार्थपरिचयः ॥ सूर्याचन्द्रमसाविति । अत्र सूर्यादिभिः । प्रसिद्धार्थैः पुरूरवसः परिचयः ॥

## विज्ञप्रिया

प्रसिद्धाख्यं लक्षणमाह—प्रसिद्धिरिति । लोकसिद्धार्थैरुत्कृष्टैरर्थाप्यमाणैरर्थस्य स्वाभीष्टार्थस्य साधनमित्यर्थः । सूर्याचन्द्रमसौ इति । द्वाभ्याम् उर्वश्याभुवा चेत्यन्वयः । सोऽहं पृच्छामीति । शेषः । अत्र लोकसिद्धार्थसूर्यादिकुलोद्भवत्वादिः तदुक्त्या स्वाभीष्टार्थस्य पृष्टार्थकथनरूपस्य साधनम् ।

## कुसुमप्रतिमा

प्रसिद्धिरिति । उत्कृष्टेर्लोकेषु सिद्धैः प्रसिद्धैरर्थैर्विषयैः अर्थस्य विषयविशेषस्य साधनं सम्पादनं प्रसिद्धिर्नाम लक्षणम् । प्रसिद्धार्थैः साधनादेवास्य प्रसिद्धिरिति संज्ञा ।

सूर्य्येति । स्पष्टोऽयं श्लोकार्थः । अत्र उत्कृष्टायां लोकप्रसिद्धाभ्याञ्च सूर्य्याचन्द्रभोग्यामात्मनः परिचयसाधनात् प्रसिद्धि ।

## विमला

प्रसिद्धिमाह, प्रसिद्धिरिति ।—उत्कृष्टैः लोकसिद्धैः,—लोकप्रसिद्धैः, अर्थैः,—लोकख्यातवस्तुभिरित्यर्थः, अर्थस्य—कार्य्यस्य, साधनं—पदार्थपरिचय इति यावत्, प्रसिद्धिः ।

उदाहरति, सूर्य्येति ।—पुरूरवस इयमुक्तिः । यस्य—पुरूरवसः, सूर्य्याचन्द्रमसौ मातामहपितामहौ—सूर्य्यः मातामहः, चन्द्रमाः पुनः पितामहः, यश्च उर्वश्या, भुवा—पृथिव्या च, द्वाभ्यां स्वयम्—आत्मनैव, स्वेच्छया एव इति यावत्, पतिः,—स्वामिरूपेण इत्यर्थः, वृत्तः । [पुरा किल स्वायम्भुवमनुपुत्रः सूर्य्यनप्ता सुद्युम्नापरनामा इली नाम राजा मृगयाप्रसङ्गेन हरनिवारितपुरुषान्तरप्रवेशमुपवनं प्रविष्टः स्त्रीभामाजगाम; अतस्तस्यैव इला नामाभूत्; ताञ्च तत्र परिभ्रमन्तीं चन्द्रतनयो बुधश्चक्रमे, सा च तं, तयोः पुत्र ऐलापरनामधेयः पुरूरवा आसीत्; तेन पुरूरवसः सूर्य्यो मातामहः, चन्द्रश्च पितामहः इति कथानकमनुसन्धेयम्] । एवञ्च अत्र लोकप्रसिद्धैः सूर्य्यचन्द्रवंशीयत्वादिभिः आत्मपरिचयरूपस्य अर्थस्य साधनम् ।

## लक्ष्मी

प्रसिद्धाख्यं लक्षणं निरूपयति—प्रसिद्धिरिति। उत्कृष्टैः लोकसिद्धार्थैः लोकप्रसिद्धवस्तुभिः अर्थस्य पदार्थविशेषस्य साधनं परिचयः प्रसिद्धार्थैः साधनत्वात् प्रसिद्धिर्नाम लक्षणम्।

उदाहरति—यथेति। सूर्याचन्द्रमस विति। स्वपरिचयवर्णनमिदम्। यस्य पुरूरवसः सूर्यस्य चन्द्रश्चेति तौ सूर्याचन्द्रमसौ माता महपितामहौ मातुः पिता पितुः पिता च 'स्त' इति शेषः. यो द्वाभ्याम् उर्वश्या भुवा च पतिः स्वयं वृत इत्यर्थः। सोऽहं पृच्छामीति शेषः। अत्रेदमवगन्तव्यम्—सूर्यपौत्रस्य मानवस्य सुद्यम्नस्य (पुरूरवस्य) 'इतः प्रभृतीह य आगमिष्यति स स्त्री भविष्यतीति शिवेन शप्ते प्रदेशे प्रविष्टस्य स्त्रीत्वप्राप्तिः' इति सूर्यो मातामहः पुरूरवस्य राज्ञः। तथा चन्द्रात्मजस्य बुधस्यात्मज इति चन्द्रो ह्यस्य पितामहः। (यद्यपि सूर्यस्योक्तिरीत्याप्तमाता-महत्वमवगम्यते तथाऽप्युपचारात्तथाप्रयोगो ज्ञेयः)। अत्रोत्कृष्टाभ्यां लोकप्रसिद्धाभ्यां सूर्याचन्द्रमसोभ्यां स्वस्य परिचयसाधनात् प्रसिद्धिः।

## रुचिरा

प्रसिद्धिं लक्षयति—५१४ **उत्कृष्टैः लोकसिद्धार्थैः**लोकप्रसिद्धैः कार्यैः। **अर्थसाधनम्। प्रसिद्धिः।**

उदाहरति—**यथा। विक्रमोर्वश्याम्।** 'राजा सोऽय'मिति शेषः। **यस्य। सूर्याचन्द्रमसौ** सूर्यश्चन्द्रश्च। **मातामहपितामहौ** मातुः पिता, पितुः पिता च। **यः**। च। **स्वयम**ात्मना। **उर्वश्या** तदाख्यया तेवाङ्गनया। **भुवा** पृथिव्या। **च**। इति—**द्वाभ्याम्। पतिः। कृतः**। (इदम्बोध्यम्) पुरूरवाश्चन्द्रपुत्रस्य बुद्धस्य पुत्र इति चन्द्रस्तस्य पितामहः। सूर्यपौत्रस्य मानवस्य सुद्युम्नस्य 'इतः प्रभृतीह य आगन्ता स स्त्री भविष्यती'ति रुद्रेण प्रशप्ते देशे प्रविष्टस्य स्त्रीत्वे उत्पन्न इति सूर्यो मातामहः। यद्यपि तथा प्रमातामहत्वं तथाऽप्युपचारात्तथा प्रयोगाः। इति॥ ३०९॥'

**सारूप्यमनुरूपस्य सारूप्यात्क्षोभवर्धनम् ॥ १९१ ॥**

यथा वेण्याम्—दुर्योधनभ्रान्त्या भीमं प्रति 'युधिष्ठिरः—दुरात्मन्, दुर्योधनहतक—' इत्यादि ।

---

## विवृतिः

अनुरूपस्य सदृशस्य सारूप्यात् सादृश्यजनितभ्रमात् । 'अनुभूतस्य' इति पाठे सादृश्यादनुभूतस्य भ्रमविषयस्येत्यर्थः ।

## विज्ञप्रिया

सारूप्याख्यं लक्षणमाह--सारूप्यमिति । अनुभूतविशेषभिन्नेऽनुभूतार्थसादृश्यात् आत्मनः क्षोभवर्द्धनमित्यर्थः । दुरात्मन् इत्यादि । अत्रानुभूतदुर्योधनसादृश्यात् भीमदर्शने क्षोभवर्द्धनमित्यर्थः । दुरात्मन् इत्यादि । अत्रानुभूतदुर्योधनसादृश्यात् भीमदर्शने क्षोभवृद्धिः ।

## कुसुमप्रतिमा

सारूप्यमिति । अभिभूतस्य पराभवं प्राप्तस्य जनस्य, सारूप्याद्विरोधिजनस्य समानरूपदर्शनात् क्षोभेण मविषादाधैर्य्येण वत्र्तनमाचरणं सारूप्यं नाम लक्षणम् । सारूप्यप्रयोज्यत्वात् सारूप्यमिति नाम ।

यथेति । "दुर्य्योधनेन भीमो हतः" इति चार्वाकवाक्येन अभिभूतस्य युधिष्ठिरस्य दुर्य्योधनं हत्वा आगच्छति भीमे दुर्य्योधनसारूप्यदर्शनेन दुरात्मन्नित्यादिक्षोभप्रयुक्ताकरणात् सारूप्यम् ।

## विमला

सारूप्यमाह, सारूप्यमिति ।—सारूप्यात्—समानरूपत्वात्, रूपसादृश्यादिति यावत्, अभिभूतस्य—अभिभवं प्राप्तस्य, वैचित्रयं गतव्य इत्यर्थः, समानरूपत्वेन सोऽयं, न वा ? इति तत्त्वविमूढस्य, जनस्येति शेषः, ["अनुभूतस्य' इति पाठे—सादृश्यादनुभूतस्य, भ्रमविषयस्येत्यर्थोऽवगन्तव्यः; "अनुरूपस्य" इति पाठे—सादृश्य वस्तुन इति शेषः, सारूप्यात्—सादृश्यजनितभ्रमात्, उभयत्र द्रष्टुरित्यध्याहार्य्यं] यत् क्षोभेण वर्त्तनं—व्यवहारः, तत् सारूप्यम् ।

उदाहरति, यथेति ।—अत्र दुर्य्योधनस्य सादृश्येनाभिभूतस्य युधिष्ठिरस्य क्षोमवर्त्त नम् सङ्क्षेपमाह, सङ्क्षेप इति ।—सङ्क्षेपात्—साधारण्यात्, अविशेषादित्यर्थः, अन्यार्थे—अन्यस्य अर्थे, परकार्य्ये इति यावत्, अर्थान्तरस्थाने वा, यत् आत्मा—स्वयं, आत्मशब्दप्रयोगो वा, प्रयुज्यते—नियुज्यते, निर्दिश्यते, निर्दिश्यते वा, स तु सङ्क्षेपः ।

## लक्ष्मी

सारूप्याख्यं लक्षणं निरूपयति—सारूप्यमिति। अनुरूपस्य सदृशस्य सारूप्यात् सादृश्यजनितभ्रमात् अनुभूतस्य इति पाठे सादृश्यात् भ्रमविषयस्येत्यर्थः। क्षोभेण सविषादधैर्येण वर्तनमाचरणं सादृश्यप्रयोज्यत्वात्सारूप्यं नाम लक्षणम्।

उदाहरति—यथेति। 'दुर्योधनेन भीमो हत' इति कस्यचनवचनेन भ्रमविषयस्य युधिष्ठिरस्य दुर्योधनं हत्वा उपस्थिते भीमसेने दुर्योधनसदृसावलोकनेन दुरात्मन्नित्यादिक्षोभप्रयुक्ताचरणात् सारूप्यम्।

## रुचिरा

सारूप्यं लक्षयति—५१५ **अभिभूतस्य।** तिरस्कृतस्य। 'अनुरूपस्ये'ति पाठान्तरे सदृशास्येत्यर्थः। स्पष्टमन्यत्॥ ४८८॥

उदाहरति—**यथा। वेण्यां** वेणीसंहारे। स्पष्टमन्यत्।

**संक्षेपो यत्तु संक्षेपादात्मान्यार्थे प्रयुज्यते।**

यथा मम चन्द्रकलायाम्—'राजा—प्रिये,

**अङ्गानि खेदयसि किं शिरीषकुसुमपरिपेलवानि मुधा।**

(आत्मानं निर्दिश्य।)

**अयमीहितकुसुमानां संपादयिता तवास्ति दासजनः॥'**

---

## विज्ञप्रिया

संक्षेपाख्यं लक्षणमाह—संक्षेपेति। अन्यजनस्यार्थे प्रयोजननिमित्तम् आत्मा प्रयुज्यते नियुज्यते इत्यर्थः। अङ्गानि खेदयसीति—कुसुमापचयार्थमिति शेषः। अत्र प्रियायाः कुसुमापचयनिमित्तं राज्ञा आत्मा नियुक्तः।

## कुसुमप्रतिमा

संक्षेप इति। संक्षेपात् वाक्यसंक्षेप कृत्वेति ल्यब्लोपे पञ्चमी संक्षिप्तवाक्येनेत्यर्थः यत्त अन्वार्थे अन्यजनस्थाने आत्मा प्रयुज्यते नियुज्यते, तत् संक्षेपो नाम लक्षणम्। अस्यापि संक्षिप्तवाक्यप्रयोज्यत्वादेव संक्षेप इति नाम।

अङ्गानीति। शिरीषकुसुमवत् परिपेलवानि सर्वथा सुकमाराणि अङ्गानि किं कस्मात् मुधा अनर्थकं खेदयसि पुष्पचयनेन परिश्रमयसि?। अयमहं दासजनः तव ईहितकुसुमानां चतमिष्टानां पुष्पाणां सम्पादयिता चयनकर्त्त अस्मि।

अत्रेदृशसंक्षिप्तवाक्येन राज्ञ आत्मनो नायिकादासस्थाने नियोगात् संक्षेपः।

## विमला

उदाहरति, अङ्गानीति।—शिरीषकुसुमवत् परिषेलवानि—परितः पेलवानि, सर्वतोभावेन विरलानीति यावत्, सुकोमलानीति भावः, ("पेलवं विरलं तनु" इत्यमरः) अङ्गानि, किं—कथं, मुधा—मृषा, खेदयसि?—क्लेशयसि? अयं दासजनः,—किङ्करः, तव—कोमलाङ्गः इत्यर्थः, ईहितकुसुमानाम्—अभीष्टपुष्पाणां, सम्पादयिता—कर्त्ता, विकासयिता च, कुसुमपदसामर्थ्यात् इति बोध्यम्, अस्ति; यत्ते अभीष्टं, तत् अर्थ दास एव सम्पादयति, किं तव आयासेन? इति भावः। अत्र चन्द्रकलापरिचर्य्यार्थे राज्ञ आत्मनियोगः।

## लक्ष्मी

संक्षेपाख्यं लक्षणं निरूपयति—संक्षेप इति। संक्षेपात् अविशेषात् ल्यप् लोपे पञ्चमी। यत्तु अन्यार्थे अर्थान्तरस्थाने आत्मा प्रयुज्यते निर्दिर्दश्यते तत् सङ्क्षिप्तवाक्यप्रयोजकत्वासङ्क्षेपो नाम लक्षणम्।

उदाहरति—यथेति। अङ्गानीति। शिरीषकुसुमवत् परिपेलवानि सर्वतातिमृदुलानि अङ्गानि मुधा व्यर्थं किं कुतः खेदयसि कुसुमापचयार्थम् आयासमुत्पादयसि! अयं दासजनः सेवकः तव ईहितकुसुमानां चेतुमभिलषितानां पुष्पाणां सम्पादयिता पुष्पचयनकर्त्ता अस्ति। अत्रायमित्यनेन आत्मा अन्यो वेति न विशेषकथनम्, अत एवार्थान्तरस्थाने आत्मनः संक्षेपप्रयोगात् सङ्क्षेपः।

## रुचिरा

सङ्क्षेपं लक्षयति—५१६ **यत्** यतः। **तु**। **अन्यार्थे**। **सङ्क्षेपाल्लघूकृत्य**। **आत्मा**। **प्रयुज्यते**। सः—**सङ्क्षेपः**।

उदाहरति—**यथा**। **मम**। **चन्द्रकलायाम्**। '**राजा**। (कुसुमावचयं कुर्वन्तीं प्रत्याह)। **हे प्रिये**! मुधा व्यर्थम्। **शिरीषकुसुमपेलवानि** शिरीषपुष्पाणीव कोमलानि। **अङ्गानि**। **किम्**। **खेदयसि**। ननु कस्तर्हि पुष्पाण्यवचिनुयादित्याह—(**आत्मानम्**। **निर्दिश्य** लक्षयित्वा) **अयम्**। **तव**। **दासजनः** सेवकः। **ईहितकुसुमानामभिलषितानां** पुष्पाणाम्। **सम्पादयिता** सङ्ग्रहिताऽवतिष्ठते। अत्रात्मनो दासत्वेनोद्भावनम्। आर्या छन्दः॥ ३१०॥'

**गुणानां कीर्तनं यत्तु तदेव गुणकीर्तनम् ॥ १९२ ॥**

यथा तत्रैव—

'नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि—' इत्यादि (११० पृ.)।

---

## विज्ञप्रिया

गुणकीर्त्तनाख्यं लक्षणमाह—गुणानामिति। नेत्रे खञ्जनगञ्जने इत्यादि प्रागुक्तम्।

## कुसुमप्रतिमा

गुणानामिति। सुगमम्।

यथेति। यत्र नायिकायाः सौन्दर्य्यगुणकीर्त्तनाद्गुणकीर्त्तनम्।

## विमला

गुणकीर्त्तनमाह, गुणानामिति।—स्पष्टम्।

उदाहरति, यथेति।—तत्रैव—चन्द्रकलायामेव। अत्र नायिकाया रूपगुणानां कथनम्।

## लक्ष्मी

गुणकीर्त्तनाख्यं लक्षणं निरूपयति—गुणानामिति। गुणादीनां सौन्दर्यादीनमित्यर्थः। कीर्त्तनं कथनम्।

उदाहरति—यथेति। नेत्रे इति। प्राग्व्याख्यातमेव। अत्र कामिन्याः सौन्दर्यगुणकीर्त्तनम्।

## रुचिरा

गुणकीर्त्तनं लक्षयति—५१७ **गुणानामित्यादिना**। स्पष्टम् ॥ ४८९ ॥

उदाहरति—**यथा**। **तत्र** तस्यां चन्द्रकलायाम्। **एव**। **'नेत्रे...'** इत्यादि। व्याख्यातपूर्वमिदम्।

**स लेशो, भण्यते वाक्यं यत्सादृश्यपुरःसरम्।**

यथा वेण्याम्—'राजा—

**हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम्।**
**या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति ॥'**

---

## विवृतिः

संक्षेपात् अविशेषात्। अन्यार्थे अर्थान्तरस्थाने। प्रयुज्यते निर्दिश्यते ॥ अयमिति। अत्रायमित्यनेन आत्मा अन्यो वेति न विशेषकथनम्। अत एवार्थान्तरस्थाने आत्मनः प्रयोगः ॥ सादृश्यपुरः सरं सादृश्यतात्पर्यकम् ॥

गाङ्गेये भीष्मे। सैवेति तत्तुल्यश्लाघायां तात्पर्यम्। यथा वृद्धस्य छलेन श्लाघानुपयुक्ता तथा अस्माकमपि बालकस्यैकाकिनोऽभिमन्योर्बहुभिर्हनने भविष्यतीति भावः ॥

## विज्ञप्रिया

लेशाख्यं लक्षणमाह—सलेश इति। सादृश्यपुरः सरं सादृश्योक्तिपूर्वकम्। हते जरतीति। सा श्लाघा अभिमन्युवधात् इति शेषः।

## कुसुमप्रतिमा

स इति। सादृश्यपुरः सरं सादृश्यप्रदर्शनाभिप्रायकं यद्वाक्यं भण्यते स लेशो नाम लक्षणम्। सादृश्यसूचनलेशसम्बन्धालेश इति संज्ञा।

हत इति। शिखण्डिनं पुरस्कृत्य जरति हर्षीयसि गाङ्गेये भीष्मे अर्जुनेन हते सति, पाण्डपुत्राणां या श्लाघा प्रशंसा, अस्माकमपि बहुभिरभिमन्युवधे सैव तत्तुल्यैव श्लाघा भविष्यते।

अत्र सादृश्यप्रदर्शनाभिप्रायकवाक्यकथनाल्लेशः।

## विमला

लेशमाह, स इति।—सादृश्यपुरः सरं—सादृश्यतात्पर्य्यकं, यत् वाक्यं भण्यते—कथ्यते, स लेशः।

उदाहरति, हते इति।—शिखण्डिनं—तन्नामानं द्रुपदपुत्रं, पुरस्कृत्य—संश्लेषकृत्य, जरति—वृद्धे, ("जरन् वृद्धोऽधिकवयाः प्रवया जीर्ण इत्यपि" इति गोपालः) गाङ्गेये—गङ्गानन्दने, भीष्मे इति यावत्, हतें, अर्जुनेनेति शेषः, पाण्डुपुत्राणां—युधिष्ठिरादीनां, या श्लाघा—विकत्थना, प्रशंसेति यावत्, अभूदिति शेषः, अस्माकं—कौरवाणां, सैव—तादृशी एव, श्लाघा भविष्यति, अभिमन्युवधे इति शेषः। यथा तेषां वृद्धस्य छलेन हनने श्लाघाऽनुपयुक्ता, तथा अस्माकमपि बालकस्यैकाकिनोऽभिमन्योर्बहुभिर्हनने भविष्यतीति भावः। अत्र अभिमन्युवधः भीष्मबधतुल्य इति सादृश्यम्।

## लक्ष्मी

लेशाख्यं लक्षणं निरूपयति—न लेश इति। सादृश्यपुरःसरं सादृश्यतात्पर्यकम्, यद्वाक्यं यद्वचनं भण्यते सः सादृश्यप्रकाशनसम्बन्धाल्लेशो नाम लक्षणम्।

उदाहरति—यथेति। हत इति। शिखण्डिनं द्रुपदात्मजं नपुंसकम्, पुरस्कृत्य अग्रे कृत्वा, जरति वृद्धे गाङ्गेये गङ्गापुत्रे भीष्मे, हते अर्जुनेन पातिते सति पाण्डुपुत्राणां युधिष्ठिरादीनां या श्लाघा प्रशंसा अस्माकं धार्त्तराष्ट्राणामपि अभिमन्युवधे सैव तत्सदृशैव श्लाघा भविष्यति। यदि वृद्धस्य कपटेन व्यापादनाद् पाण्डुपुत्रा न प्रशंसनीयाः तर्हि वयमपि बालकस्यासहायस्याभिमन्योर्व्यापादने न प्रशंसनीयाः यदि ते प्रशंसनीयास्तर्हि वयमपीति दुर्योधनाभिप्रायः। अत्र सादृश्याभिद्योतकवाक्यप्रयोगाल्लेशः।

## रुचिरा

लेशं लक्षयति—५१८ **यत्**। **सादृश्यपुरः सरं** सादृश्यतात्पर्यकम्। **वाक्यम्**। भण्यते उच्चार्यते। **सः**। **लेशः**।

उदाहरति—**यथा वेण्यां** वेणीसंहारे। '**राजा** दुर्योधनः (विनयन्धरं कञ्चुकिनं प्रत्याह) **शिखण्डिनं** स्त्रीप्वैत्वात् दत्ताभयं द्रुपदपुत्रम्। **पुरस्कृत्य**। **जरति** वृद्धे। 'जीनो जीर्णो जरन्नपी'त्यमरः। **गाङ्गेये** गङ्गानन्दने भीमे। **हते** निधनं प्रपिते। **या**। **पाण्डुवपुत्राणाम्**। **श्लाघा**ऽपयश इति भावः। **सा**। **एव**। **अस्माकमे**काकिनमशस्त्रं बालमभिमन्युं निहतवताम्। **भविष्यति**। अत्र हि पाण्डवकर्तृकभीष्महननस्य सादृश्योद्भावनम्॥ ३११॥'

**मनोरथस्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण यत्॥ १९३॥**

**यथा—**

**'रतिकेलिकलः किंचिदेष मन्मथमन्थरः।**

**पश्य सुभ्रु! समालम्भात्कादम्बश्चुम्बति प्रियाम्॥'**

---

## विवृतिः

उक्तिर्ज्ञापनम्। भङ्ग्यन्तरेण। सदृशदर्शनादिना॥ रतिकेलिं कलयति सः। यद्वा रत्यै केलिकला यस्य सः। समालम्भादादराधिक्यात्। कादम्बः कलहंसः। अत्र प्रियायै कादम्बस्य प्रियाचुम्बनं दर्शयता नायकेन स्वस्य प्रियाचुम्बनाभिप्रायः सूचितः॥

## विज्ञप्रिया

मनोरथाख्यं लक्षणमाह—मनोरथस्त्विति। स्वाभिप्रायस्थवृत्तान्ततुल्यस्य अन्यदीयवृत्तान्तस्य प्रदर्शनं भङ्गिः। रतिकेलीति, रति-केल्यर्थं किञ्चित् कलः मधुरास्फुटाल्पध्वनिः। मन्मथेन मन्थरः। अन्यत्र उड्डीयागच्छन्। आश्वस्तामनुद्विग्राम्। अत्र स्वाभिप्रायस्थाया रतेस्तुल्यायाः कादम्बरतेः प्रदर्शनभङ्ग्या उक्तिः।

## कुसुमप्रतिमा

मनोरथ इति। भङ्ग्यन्तरेण भङ्गिविशेषेण अभिप्रायस्य यदुक्तिः उक्तिवत् स्पष्टं सूचनं स तु मनोरथो नाम लक्षणम्, मनोरथविशेषेणोक्तत्वात्।

## विमला

मनोरथमाह, मनोरथ इति।—भङ्ग्यन्तरेण—भङ्गिविशेषेण, सदृशदशनादिना इत्यर्थः, यत्—या, [अव्ययमिदम्] अभिप्रायस्य उक्तिः,—ज्ञापनं, स मनोरथः।

उदाहरति, रतीति।—नायिकां प्रति कस्यचिदुक्तिः। हे सुभ्र! पश्य, एषः मन्मथमन्थरः,—मदनपरवशः, कामेन व्याकुलीकृत इति यावत्, अत एव रतिकेलौ—सुरतविहारे, कलः,—मधुरवाक्, यद्वा,—रतिकेलिं कलयति—आचरितुमिच्छति यः सः, कादम्बः,—कलहंसः, ("कादम्बः कलहंसः स्यात्" इत्यमरः) समाश्वस्तां—विश्वस्ताम्, आदराधिक्यदर्शनेन विश्वासवतीम् इत्यर्थः, ["समालम्भात्" इति पाठे—आदराधिक्यादित्यर्थः] प्रियां—भार्य्यां, हंसीमिति यावत्, किञ्चित्—ईषत्, चुम्बति; ईषच्चुम्बनन्तु अस्या उत्तरोत्तरकामोद्रेकाय इति भावः। अत्र नायकेन कादम्बस्य तत्प्रियाचुम्बनोक्तिरूपभङ्ग्या स्वाभिप्रेतस्य स्वकान्तायै चुम्बनस्य उक्तिः।

## लक्ष्मी

मनोरथाख्यं लक्षणं निरूपयति—मनोरथस्त्विति। भङ्ग्यन्तरेण भङ्गिविशेषेण अभिप्रायस्य स्वाभिप्रायस्थवृत्तान्ततुल्यस्य अन्यदीयवृत्तान्तस्य यदुक्तिप्रदर्शनं स मनोरथविशेषेणोक्तत्वान्मनोरथो नाम लक्षणम्।

उदाहरति—रतिकेलीति। शोभनौ भ्रुवौ यस्यास्तत्सम्बुद्धौ हे सुभ्रु ! रतिकेलौ सुरतक्रीडाया कलो मधुरास्फुटाल्पध्वनिवादी मन्मथेन कामावेगेन मन्थरोऽलसः एष कश्चित् कादम्बः कलहंसः 'कादम्बः कलहंसः स्या'दित्यमरः, समालम्भात् प्रियाप्राप्त्या आदराधिक्यात् प्रियां हंसीं चुम्बति इति पश्य अवलोकय। अत्र कादम्ब-कर्तृकप्रियचुम्बनप्रदर्शनभङ्ग्या तत्तुल्यस्य स्वाभिप्रायस्थप्रियाचुम्बनस्य प्रदर्शनान्मनोरथः।

## रुचिरा

मनोरथं लक्षयति—५१९ **यत्** यतः। **भङ्ग्यन्तरेण** प्रकारान्तरेण। 'व्याजच्छलनिभे भङ्गि'रिति रभसः। **अभिप्रायस्य। उक्तिः** कथनाम्। तु। मनोरथः॥ ४९०॥

उदाहरति—**यथा—'हे सुभ्रु! पश्य। एषः। रतिकेलिकलो** रत्यै केलिकला यस्य तथोक्तः। अत एव किञ्चित्। **मन्मथमन्थरो** मन्मथः कामस्तेन मन्थरः शिथिलोऽन्यतो विमुखः। समालम्भादादराधिक्येन। **कादम्बो** हंसः। 'कादम्बः कलहंसः स्या'दित्यमरः। **प्रियां** हंसीम्। **चुम्बति**। अत्र स्वस्य चुम्बनाभिप्रायः सूचितः॥ ३१२॥'

**विशेषार्थोहविस्तारोऽनुक्तसिद्धिरुदीर्यते ।**

यथा—'गृहवृक्षवाटिकायाम्—

**दृश्येते तन्वि ! यावेतौ चारुचन्द्रमसं प्रति ।**

**प्राज्ञे कल्याणनामानावुभौ तिष्यपुनर्वसू ॥'**

---

## विवृतिः

विशेषेति । रूपलावण्यातिशयज्ञापनं विशेषः तस्मै प्रयोजनं विशेषार्थः । ऊहविस्तारस्तर्कातिशयः ॥

दृश्यते इति । गृहोपवने विश्वामित्रसमीपे श्रीरामलक्ष्मणौ दृष्ट्वा सीतां संबोध्य तत्सखीनां वितर्कवर्णनमिदम् । अत्र चन्द्रादीनां पृथिव्यामसंभवे वितर्कातिशयः ॥

## विज्ञप्रिया

अनुक्तसिद्ध्याख्यं लक्षणमाह—विशेषेति । प्रस्तावे प्रकरणे सति विशेषार्थस्य ऊहः प्रणिधानेन गम्यत्वम् । प्रकरणाभावे तु तादृशोहाऽसम्भव एवेति भावः । दृश्येत इति । हे तन्वि ! हे प्राज्ञे ! चन्द्रमसं प्रति चन्द्रमसि यावेतौ चारू दृश्येते तावुभौ कल्याणनामानौ तिष्यपुनर्वसू इत्यर्थः । अत्र तद्द्वयविशिष्टचन्द्रतुल्यता प्राकरणिकनेत्रद्वयविशिष्टे मुखे ऊह्यते ।

## विमला

अनुक्तसिद्धिमाह, विशेषार्थेति ।—विशेषः,—रूपलावण्याद्यतिशयज्ञापनरूपः, यः अर्थः,—प्रयोजनं, तस्मै ऊहविस्तारः,—तर्कातिशयः, अनुक्तसिद्धिः,—अनुक्तस्य अर्थस्य ज्ञापनमिति भावः, उदीर्य्यते—कथ्यते ।

उदाहरति, यथेति ।—गृहवृक्षवाटिकायां—गृहसमीपस्थां वृक्षवाटिकां प्रस्तुत्य रक्षिते रूपकविशेषे ।

दृश्येते इति ।—गृहोपवने विश्वामित्रसमीपे श्रीरामलक्ष्मणौ दृष्ट्वा सीतां प्रति तत्सखीनां सवितर्कमुक्तिरियम् । हे तन्वि ।—कृशाङ्गि ! चारुचन्द्रमसं प्रतिमनोहरचन्द्रं प्रति, चन्द्रसमीपे इत्यर्थः, यौ एतौ—प्रभाविशेषशालिनी इति भावः दृश्येते, हे प्राज्ञे !—विदुषि ! उभौ, तावेताविति शेषः, कल्याणनामानौ—सुभाभिधौ, तिष्यपुनर्वसू—पुष्यपुनर्वसू इत्यर्थः, ("तिष्यः पुष्ये कलियुगे" इत्यमरः) इति तर्कयामी वयमिति शेषः । अत्र रूपलावण्याद्यातिशयात् विश्वामित्रराम लक्ष्मणेषु पृथिव्याम् असम्भवेऽपि चन्द्रपुष्यपुनर्वसुत्वधर्मारोपेण तर्कातिशयरूपानुक्त सिद्धिः ।

## लक्ष्मी

अनुक्तिसिद्ध्याख्यं लक्षणं निरूपयति—विशेषेति । विशेषो रूपलावण्याद्यतिशयज्ञापनं स एवार्थः प्रयोजनं यस्य स· तादृशस्तस्य प्रकरणे सति ऊहविस्तारः तर्कातिशयः प्रकरणाभावे तु तादृशोहासम्भव एव अनुक्तसिद्धिर्नाम लक्षणम् । उदाहरति—यथेति ।

दृश्येते इति। उद्यानवाटिकायां विश्वामित्रसविधे श्रीरामलक्ष्मणौ दृष्ट्वा हरधनुर्भङ्गात्पूर्वं सीतां प्रति तत्सखीनां वितर्कवर्णनमिदम्। हे तन्वि कृशाङ्गि! चारुचन्द्रमसं प्रति मनोज्ञचन्द्रसमीपे यावेतौ दृश्येते अवलोक्यते, हे प्राज्ञे बुद्धिमति! उभावेव कल्याणं मङ्गलं नाम ययोस्तौ तथोक्तौ तिएयपुनर्वसुनक्षत्रे तत्सदृशसुन्दराकृतीत्यर्थः। अत्र विश्वामित्ररामलक्ष्मणानां सौन्दर्यातिशयबोधनार्थं पृथिव्यां चन्द्र-तिष्य-पुनर्वसूनामसम्भवेन तेषु वर्णनेन च वितर्कातिशयादनुक्तिसिद्धिः।

## रुचिरा

अनुक्तसिद्धिं लक्षयति—५२० **विशेषार्थोह** विस्तारो विशेषो रूपलावण्यातिशयस्तस्यार्थो ज्ञापनं तदर्थं च ऊहत्वाश्चेष्टाया विस्तारः। **अनुक्तसिद्धिः**। **उदीर्यते** कथ्यते।

उदाहरति—**यथा**। **गृहवृक्षवाटिकायां** गृहोपवने। 'विश्वामित्रसमीपे रामलक्ष्मणौ दृष्ट्वा नायको नायिकां प्रत्याहे'ति शेषः। **हे तन्वि** कृशोदरि! **यौ**। **एतौ**। **चारुचन्द्रमसं प्रति** सुन्दरचन्द्रसन्निधौ। **दृश्येते**। **तौ—उभौ**। **हे प्राज्ञे** विदुषि! **कल्यामनामानौ** सुगृहीताभिधेयौ। **तिष्यपुनर्वसू** **पुष्यः** पुनर्वसुश्चेत्यर्थः॥ ११३॥

**स्यात्प्रमाणयितुं पूज्यं प्रियोक्तिर्हर्षभाषणम् ॥ १९४ ॥**

**यथा शाकुन्तले—**

**'उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक्तदनन्तरं पयः ।**
**निमित्तनैमित्तिकयोरयं विधिस्तव प्रसादस्य पुरस्तु संपदः ॥'**

---

## विवृतिः

प्रमाणयितुं प्रमाणं कर्तुम् ।

## विज्ञप्रिया

प्रियवचः संज्ञकं लक्षणमाह—स्यादिति । पूज्यं जनं प्रमाणयितुमिति प्रमाणत्वेन उत्कृष्टत्वेन ज्ञापयितुं हर्षेण भाषणं प्रियोक्तिः प्रियवच इत्यर्थः । उदेतीति । तव प्रसादस्येति । प्रसादजन्यानां सम्पदां शीघ्रोत्पत्त्या पुरस्त्वारोपः । अत्र मुनेः प्रकृष्टत्वप्रतिपादनार्थमिदं हर्षभाषणम् ।

## कुसुमप्रतिमा

उदेतीति । पूर्वं कुसुमम् उदेति च आविर्भवति, तत्रः फलमुदेति, फलं प्रति कुसुमस्य कारणत्वेन तत्पूर्ववर्त्तित्वनियमादिति भावः । प्राग् धनोदयो मेघाविर्भावः तदनन्तरञ्च पयो वृष्टिजलं जायते । अत्रापि तथैव भावः । अतएव निमित्तनैमित्तिकयोःकारणकार्य्ययोः अयं विधिः पौर्वापर्य्यनियमः, तु किन्तु तव प्रसादस्य अनुग्रहस्य पुरः पूर्वमेव लोकानां सम्पदी भवन्ति । तेन कारणकार्य्ययोर्नियतपौर्वापर्य्यविपर्य्ययात्तव प्रसादस्याश्चर्य्योऽयं प्रभाव इति भावः ।

अत्र कश्यपं प्रमाणयितुं तदीयहर्षजनकभाषणात् प्रियोक्तिः ।

## विमला

प्रियोक्तिमाह, स्यादिति ।—पूज्यं जनं प्रमाणयितुं—प्रमाणं कर्त्तुं तन् मर्य्यादा दर्शयितुमित्यर्थः, यत् हर्षभाषणं—प्रेम्णा सम्भाषणं, हर्षजनकं भाषणं वा, सा प्रियोक्तिः स्यात् ।

उदाहरति, उदेतीति ।—मारीचमुनिं प्रति दुष्मन्तस्योक्तिरियम् । पूर्वं प्रथमं, फलोत्पत्तेः प्रागित्यर्थः, कुसुमम् उदेति—उदयं प्राप्नोति, विकसतीति यावत् ततः,—अनन्तरं, कुसुमोदयात् परमित्यर्थः, फलम् उदेतीत्यनेनान्वयः । प्राक् ततः वृष्टरिति शेषः, घनानां—मेघानाम, उदयः,—उद्गमः, भवतीति शेषः, तदनन्तरं—मेघोदयात्, परं, पयः,—जलं, वृष्टिरित्यर्थः उदेतीति योजना । निमित्तनैमित्तकयोः,—कारणकार्य्ययोः, हेतुफलयोरिति यावत्, अयं—पौर्वापर्य्यरूप इत्यर्थः, विधिः,—क्रमः, सर्वत्र दृश्यते इति शेषः, तत्र—भवतः, प्रसादस्य—अनुग्रहस्य, ("प्रसादोऽनुगृहेकाव्य-गुणस्वास्थ्यप्रसक्तिषु" इति मेदिनी) तु—पुनः, पुरः,—अग्रतः, अनुग्रहात् आगित्यर्थः, सम्पदः,—समृद्धयः, सम्भूता इति शेषः । अत्र कारणत्वात् स पदः पूर्वमेव अनुग्रहः कार्य्यन्तु सम्पत् तत्पश्चात् भवितुं युज्यते, तद्वैपरीत्येन तु पूज्यस्यातिप्रभावशालित्वकथनेन हर्षोतपादनरूपा प्रियोक्तिः । अत्र कार्य्यकारणयोः पौर्वा-

पर्य्यव्यत्यय शालित्वकथनेन हर्षोत्पादनरूपा प्रियोक्तिः । अत्र कार्य्यकारणयोः पौर्वापर्य्यव्यंत्यय रूपातिशयोक्ति-रलङ्कारः । अत एव "सिङ्क्तवेऽध्यवसायस्यातिशयोक्तिर्निगद्यते" इति वक्ष्यते । वंशस्थविलं वृत्तम् ।

## लक्ष्मी

प्रियोक्तिसंज्ञकं लक्षणं निरूपयति—स्यादिति । पूज्यं जनं प्रमाणयितुं प्रमाणत्वेन उत्कृष्टत्वेन ज्ञापयितुं हर्षजनकं भाषणम् आनन्दोत्पादकं वचनमित्यर्थः, प्रियोक्तिर्नाम लक्षणं स्यात् ।

उदाहरति—उदेतीति । कश्यपं प्रति दगुष्यन्तस्योक्तिरियम् । पूर्वं फलसमागमात्प्राक् कुसुमं फलहेतुभूतं पुष्पम् उदेति आविर्भवति ततस्तदनन्तरं फलम् । आम्रादीनां कुसुमकार्यभूतं फलम् उदेति कारणस्य कार्यनियतपूर्ववृत्तित्वादिति भावः । तथा प्राक् जलवर्षणात्पुर्वं घनोदयः जलहेतुभूतमेघाभिर्भावो जायत इति शेषः, तदनन्तरं ततः परं पयः घनोदय कार्यभूतं वृष्टिजलं जायते, अत्रापि कारणस्य तथात्वादिति भावः । अत एव निमित्तनैमित्तिकयोः कारणकार्यमात्रयोः अयं विधिः पौर्वापर्यनियमः, तु किन्तु तव प्रसादस्य सम्पद्धेतुभूतानुग्रहस्य पुरः पूर्वमेव सम्पदः कार्यभूतसुतदारादिलाभसम्पत्तयो भवन्ति । वशस्थं छन्दः । अत्र कश्यपमुनिं प्रमाणीकर्त्तु तदीयहर्षोत्पादकभाषणात् प्रियोक्तिः ।

## रुचिरा

प्रियवचो लक्षयति—५२१ **पूज्यम्। प्रमाणयितुं** प्रमाणं कर्तुम् । यत्-**हर्षभाषणं** हर्षावहवाक्यम् । **तत्प्रयोक्तिः प्रियवचो** नाम नाटयलक्षणमिति भावः । स्यात् ॥ ४९१ ॥

उदाहरति—**यथा। शाकुन्तले**ऽभिज्ञानशाकुन्तले । **पूर्वम्। कुसुमं** पुष्पम् । **उदेति**—विकसति । **ततः** तदनन्तरम् । **फलम्। प्राक्। घनोदयो** जलधरः । **तदनन्तरम्। पयः। निमित्तनैमित्तिकयोः** कार्यकारणयोः । **विधिर्नियमः। अयम्। तव** मारीचस्य महर्षेः । **तु प्रसादात्। पुरः। सम्पदः** । प्रसादोत्तरं सम्पत्सद्भाव उचितः, कित्वन्यत्रैवं नियमो नात्राचिन्त्यभावे भगवतीति भावः । वंशस्थं वृत्तम् ॥ ३१४ ॥'

अथ नाट्यालंकाराः—

**आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रयाः ।**

**उत्त्रासनस्पृहाक्षोभपश्चात्तापोपपत्तयः ॥ १९५ ॥**

**आशंसाध्यवसायौ च विसर्पोल्लेखसंज्ञितौ ।**

**उत्तेजनं परीवादो नीतिरर्थविशेषणम् ॥ १९६ ॥**

**प्रोत्साहनं च साहाय्यमभिमानोऽनुवर्तनम् ।**

**उत्कीर्तनं तथा याञ्चा परिहारो निवेदनम् ॥ १९७ ॥**

**प्रवर्तनाख्यानयुक्तिप्रहर्षाश्चोपदेशनम् ।**

**इति नाट्यालंकृतयो नाट्यभूषणहेतवः ॥ १९८ ॥**

---

## विवृतिः

हर्षजनकं भाषणं हर्षभाषणम् ॥

निमित्तनैमित्तिकयोर्हेतुफलयोः । अयं पौर्वापर्यरूपो विधिः क्रमः ॥

नाट्यालंकारमाह—अथेति । अलंकृतिपदस्य योगार्थमाह—नाट्यभूषणहेतव इति ॥

## विज्ञप्रिया

नाट्यालङ्कृतयस्त्रयस्त्रिंशदिति यदुक्तं ता वक्तुमाह—अथेति. ता अलङ्कृतीरुद्दिशति—आशीरित्यादि ।

## कुसुमप्रतिमा

आशीरिति । आशीः, आक्रन्दः, कपटम्, अक्षमा, गर्वः, उद्यमः, आश्रयः, उत्त्रासनम्, स्पृहा, क्षोभः, पश्चात्तापः, उपपत्तिः, आशंसा, अध्यवसायः, विसर्पः, उल्लेखः, उत्तेजनम्, परीवादः, नीतिः, अर्थ विशेषणम्, प्रोत्साहनम्, साहाय्यम्, अभिमानः, अनुवर्त्तनम्, उत्कीर्त्तनम्, याञ्चा, परिहारः, निवेदनम्, प्रवर्त्तनम्, आख्यानम्, युक्तिः प्रहर्षः, उपदेशनञ्च इत्येत्यानि त्रयस्त्रि शत् नाट्यभूषणहेतवो दृश्यकाव्यशोभाजनिका नाट्यालङ्कृतय उच्यन्ते ।

## विमला

नाट्यालङ्कारानाह, आशीरिति ।—आशीः प्रभृतयः त्रयस्त्रिंशत् नाट्यालङ्कारा इत्यर्थः । अलङ्कृतिपदस्य योगार्थमाह, नाट्यभूषणहेतव इति ।

## लक्ष्मी

नाट्यालङ्कृतयस्त्रयस्त्रिंशदिति यदुक्तं ता अभिधातुमाह—अथेति। नाट्यलक्षणप्रतिपादनानन्तरं नाट्यालङ्कारा निरूप्यन्त इत्यर्थः।

तत्राशीराख्यामलङ्कृति निरूपयति—आशीरिति। दृष्टजनस्य स्वप्रियपुंसः आशंसा अभिमतप्राप्तीच्छा आशीर्वाद इत्यर्थः, आशीर्नाम नाटयलङ्कारः।

## रुचिरा

एवं लक्षणानि दर्शयित्वा नाट्यालङ्कारान् दर्शयितुमाह—**अथ**। **नाट्यालङ्काराः**। नामतो निर्दिश्यन्ते—५२२ **आशीरित्यादिना**। स्पष्टम्॥ ४९२-४९५॥

**आशीरिष्टजनाशंसा—**

यथा—शाकुन्तले—

**'ययातेरिव शर्मिष्ठा पत्युर्बहुमता भव।**
**पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि॥'**

---

## विवृतिः

इष्टजनस्य बन्धोराशंसा अभिमतप्राप्तीच्छा॥ सम्राजं राजसमूहस्य शास्तारम्। सेव शर्मिष्ठेव। अत्र कण्वस्य शकुन्तलाया अभीष्टलाभेच्छा॥

## विज्ञप्रिया

आशीराख्यानमलङ्कृतिमाह—आशीरिष्टजनेति। इष्टजने आशीर्वादः इत्यर्थः। शर्मिष्ठा पुरुं पुत्रं यथा प्राप तथा त्वमप्येवं पुत्रं प्राप्नुहीत्यन्वयः।

## कुसुमप्रतिमा

आशीरिति। इष्टजनस्य आशंसा प्राप्तिशंसनम् आशीर्नाम नाट्यालङ्कारः।

ययातेरिति। ययातेः शर्म्मिष्ठेव त्वं पत्युदुष्मन्तस्य बहुमता अत्याहबा भव। तथा सा शर्म्मिष्ठा पूरुमिव त्वमपि शकुन्तला सम्राजं पुत्रमवाप्नुहि।

अत्र इष्टस्य पुत्रस्य प्राप्तिशंसनादाशीः।

## विमला

आशिषमाह, आशीरिति।—इष्टजनस्य—बन्धोः, आशंसा—अभिमतप्राप्तीच्छा, इष्टलाभाशंसनमिति यावत्, आशीः।

उदाहरति, ययातेरिति।—शकुन्तलां प्रतिकण्वस्य शुभाशंसनमिदम्। शर्मिष्ठा—वृषपर्वसुता, ययातेरिव त्वं पत्युः,—दुष्मन्तस्य, बहुमन्तस्य—बहु आदरणीया, भव। सा—शर्मिष्ठा, पुरुं—तन्नामानम्, इव, त्वमपि समाजं—चक्रवर्त्तिनं, पुत्रम् अवाप्नुहि—लभस्व। अत्र यद्यपि ययातेर्देवयान्येव महिषी बभूव, किन्तु दैत्यगुरोः शापात् प्राप्तां जरां पुत्तेष्वेकतमे सङ्क्रामयितुमुद्यतस्य यदुप्रभृतिभिः पुत्रैः प्रत्याख्यातस्य च तस्य तां गृह्णन् कनिष्ठपुत्रः पूरुरेव प्रियतम आसीत्, तेनैव पुनस्तन्माता शर्मिष्ठाऽपि प्रियतमाऽऽसीदिति विभावनीयम्।

## लक्ष्मी

उदाहरति—यथेति। ययातेरिवेति। शकुन्तलां प्रति महर्षिकण्वस्य शुभाशंसनमिदम्। ययातिर्नाम कश्चिद् चन्द्रवंशीयो राजा तस् ययातेः, शर्मिष्ठा वृषपर्वराजपुंत्री तत्पट्टराज्ञी इव, त्वं शकुन्तला, पत्युः दुष्यन्तस्य बहुमता अत्यादरस्थानीया भव। तथा सा शर्मिष्ठा पूरुं पुरुनामानं पुत्रमिव त्वमपि सम्राजं राजसमूहस्य शास्तारं

चक्रवर्त्तिनमित्यर्थः। येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राट्... ॥ इत्यमरः। पुत्रम् आत्मजम्, अवाप्नुहि प्राप्नुहिं। 'पुरा किल राजर्षिः ययातिर्नाम शुक्रदुहितां देवयानीं, वृषपर्वपुत्रीं शर्मिष्ठाञ्चोपयेमे। किन्तूभयोर्मध्ये शर्मिष्ठैव तत्प्रियतमा बभूवेति। अत एव तत्पुत्रः पूरुरेव वृद्धपितुराज्ञया सम्राट्पदमलङ्कार' इति महाभारतीया कथात्रानुसन्धेया।

अत्रोपमया सत्स्वप्यनेकासु रमणीषु त्वमेव पट्टराज्ञी भूया इति राजा च त्वत्पुत्रमेव यौवराज्येऽलङ्करिष्यतीति च व्यञ्जितम्। अत्रेष्टस्य महिषीपदस्य पुत्रस्य चाशंसनादाशीः।

## रुचिरा

आशिषं लक्षयति—५२३ **इष्टजनाशंसेष्ट**जनस्य बान्धवादेराशंसाऽभिमतप्राप्तीच्छा। **आशीः**।

उदाहरति—**यथा**। **शाकुन्तले**। 'कण्वः शकुन्तलां प्रत्याहे'ति शेषः। '**ययातेतदाख्यस्य नरेन्द्रस्य**। **शर्मिष्ठा** तदाख्या राज्ञी। **इव**। **प्युर्दुष्यन्तस्य**। **बहुमता**ऽत्यन्तं सम्मानिता। **भव**। सा शर्मिष्ठा। **पूरुं** तदाख्यं पुत्रम्। **इव**। **त्वम्**। **अपि**। **सम्राजं** चक्रवर्त्तिनम्। **पुत्रम्**। **अवाप्नुहि** लभस्व ॥ ३१५ ॥'

**आक्रन्दः प्रलपितं शुचा ।**

यथा वेण्याम्—'कञ्चुकी—हा देवि कुन्ति, राजभवनपताके—' इत्यादि ।

---

## विवृतिः

विभाव्यते प्रकाश्यते । तेन मारीचेन ॥

## विज्ञप्रिया

आक्रन्दाख्यामलङ्कृतिमाह—आक्रन्द इति । स्पष्टम् ।

## कुसुमप्रतिमा

आक्रन्द इति । शुचा शोकेन प्रलपितं विलापः आक्रन्दी नाम नाट्यालङ्कारः ।

यथेति । राजभवनस्य पताका चारित्रवादिना पताकावत् सर्वोच्चस्थिता तत्सम्बोधनम् । अत्र शोकेन विलापादाक्रन्दः ।

## विमला

आक्रन्दमाह, आक्रन्द इति ।—शुचा—शोकेन, पुत्रादिमरणजन्येन आन्तरतापोद्रेकेणेति यावत्, प्रलपितं—प्रलापः, [भावे क्तः] आक्रन्दः ।

## लक्ष्मी

आक्रन्दाख्यमलङ्कृतिं निरूपयति—आक्रन्द इति । शुचा शोकेन प्रलपितं रोदनम् आक्रन्दो नाम नाट्यलङ्कारः ।

उदाहरति—यथेति । राजभवनस्य पताका स्वाचरणादिना पताकावद् सर्वोत्कृष्टास्तत्सम्बोधने । अत्र शोकेन विलापकरणादाक्रन्दः ।

## रुचिरा

आक्रन्दं लक्षयति—५२४ **शुचा** शोकेन । **प्रलपितं** प्रलापः । **आक्रन्दः** ।

उदाहरति—**यथा । वेण्यां** वेणीसंहारे । स्पष्टमन्यत् । धृतमुनिवेषेण दुर्योधनमिश्रेण राक्षसेन श्राविते भीमहनने कश्चिकिनः प्रलापोऽयम् ।

**कपटं मायया यत्र रूपमन्यद्विभाव्यते ॥ १९९ ॥**

यथा कुलपत्यङ्के—

**'मृगरूपं परित्यज्य विधाय कपटं वपुः ।**

**नीयते रक्षसा तेन लक्ष्मणो युधि संशयम् ॥'**

---

## विज्ञप्रिया

कपटाख्यामलङ्कृतिमाह—कपटमिति । विभाव्यते दर्श्यते । मृगरूपमिति । तेन मायामृगरूपेण मारीचराक्षसो मृगरूपं मृगधर्मं स्वरविशेषं परित्यज्य । अर्थाद्रमणीयस्वरविशेषामुच्चार्य्य इत्यर्थः ।

## कुसुमप्रतिमा

कपटमिति । यत्र मायया कैतवेन अन्यद्रूपं विभाव्यते विधीयते, तत् कपटं नाम नाट्यालङ्कारः ।

मृगेति । तेन रक्षसा राक्षसेन मारीचेन मृगरूपं परित्यज्य कपटं वपुः कपटप्रयुक्तं पूर्ववत् राक्षससंदेह विधाय युधि युद्धे लक्ष्मणः संशयं जीवनसन्देहं नीयते प्राप्यते ।

अत्र मायया मारीचस्य मृगरूपेतररूपविधानात् कपटम् ।

## विमला

कपटमाह, कपटमिति ।—यत्र मायया—छलेन, अन्यत् रूपं विभाव्यते—प्रदर्श्यते, तत् कपटम् । चित्रमीमांसायामप्युक्तं,—"प्रतारणार्थमन्यस्य यत् कर्म कपटन्तु तत्" इति ।

उदाहरति, मृगरूपमिति ।—तेन—मायिकेषु प्रसिद्धेन, रक्षसा—मारीचेन, मृगरूपं,—काञ्चनमहरिणकायं, परित्यज्य—विहाय, कपटं—कृत्रिमं, वपुः,—शरीरं, विधाय लक्ष्मणः ["श्रीरामः" इति तु साधु] युधि—युद्धे, संशयं नीयते—प्राप्यते-—अत्र मायया मृगरूपानन्तरं रूपान्तरप्रत्ययानमिति कपटाख्योऽलङ्कारः ।

## लक्ष्मी

कपटाख्यमलङ्कारं निरूपयति—कपटमिति । यत्र मायया व्याजेन अन्यद्रूपं विभाव्यते प्रकाश्यते तत् कपटं नाम नाट्यालङ्कारः ।

उदाहरति यथेति । मृगरूपमिति । तेन रक्षसा राक्षसेन.मारीचेन मृगरूपं मृगधर्मं स्वरविशेषं परित्यज्य अर्थाद्रमणीयस्वरविशेषमुच्चार्थं इत्यर्थः. कपटं वपुः छद्मयुक्तं पूर्ववत् राक्षसशरीरं कृत्वा युधि सङ्ग्रामे लक्ष्मणः संशयं प्राणसन्देहं नीयते प्राप्यते. अत्र कपटेन मारीचस्य मृगस्वरूपभिन्नरूपग्रहणात् कपटम् ।

## रुचिरा

कपटं लक्षयति—५२५ **यत्र । मायया । अन्यत् । रूपम् । विभाव्यते । तत्-कपटम् ॥ ४९६ ॥**

उदाहरति-**यथा कुलपत्यङ्के** तदाख्ये रूपके । **'मृगरूप'**मित्यादौ । **'तेन** मारीचेन । स्पष्टमन्यत् ॥ **३१६ ॥**

**अक्षमा सा परिभवः स्वल्पोऽपि न विषह्यते।**

यथा शाकुन्तले—'राजा—भोः सत्यवादिन्, अभ्युपगतं तावदस्माभिः। किं पुनरिमामतिसंधाय लभ्यते। शाङ्र्गरवः—विनिपातः—' इत्यादि।

---

## विवृतिः

अक्षमेति। स्वल्पस्यापि परिभवस्यासहनमित्यर्थः॥ 'भोः—' इत्यादि '—लभ्यते' इत्यन्तं दुष्यन्तवचनम्॥ शाङ्र्गरवः कण्वशिष्यः। आह इति शेषः। 'विनिपातः' इति 'लभ्यते' इत्यनेनान्वेति। अत्र राजकृतस्याल्पस्यापि परिभवस्य शाङ्र्गरवेणासहनम्॥

## विवृतिपूर्तिः

अतिसंधायेति। अतिसंधाय अन्यथा शिक्षयित्वा॥

## विज्ञप्रिया

अक्षमाख्यामलङ्कृतिमाह—अक्षमेति। स्वल्पोऽपि परिभवो यन्न विषह्यते इत्यर्थः। भो भो इत्यादि। शकुन्तलापरिणयमस्मरन्तं दुष्यन्तं प्रति तवेयं जायेति शाङ्र्गरवेण कण्वशिष्येण उक्ते भो भो इति राज्ञ उक्तिः। इमां जायाम्। अत्र भो भोः सत्यवादिनित्याक्षेपोक्त्या कृतस्य परिभवस्य विनिपात इत्युक्त्या शाङ्र्गरवेण न विषेहे।

## कुसुमप्रतिमा

अक्षमेति। स्वल्पोऽपि परिभवस्तिरस्कारी यत्र अभिसह्यते न अम्बते सा अक्षमा नाम नाट्यालङ्कारः स्यात्।

ययेति। अभ्युपगतमङ्गीकृतम्। इमां शकुन्तलाम्। अभिसन्धाय प्रतार्य्य। विनिपातो विध्वंसः.

अत्र सत्यवादिन्निति सोल्लुण्ठनसम्बोधनमात्रप्रयुक्तस्य परिभवस्य शाङ्र्गरवेणानभिसहनादक्षमा।

## विमला

अक्षमामाह, अक्षमेति।—स्वल्पः,—अत्यल्पः अपि, परिभवः यत्—यतः, न विषह्यते—सोढुं, पार्य्यते, [अत्र"अभिसह्यते" इति पाठे—स एवार्थः] सा अक्षमा।

उदाहरति, यथेति।—शाङ्र्गरवं प्रति राज्ञ उक्तिरियम्। भोः सत्यवादिम्? [विपरीतलक्षणयेयं सूचना]। अभ्युपगतं—स्वीकृतम्। एवंविधाः,—पराभिसन्धायिन इत्यर्थः,। इमां—शकुन्तलाम्, अभिसन्धाय—प्रतार्य्य. अत्र राज्ञः "भोः सत्यवादिन्"! इति सोल्लुण्ठनोक्त्या परिभूतस्य शाङ्र्गरवस्य "विनिपातः" इति वचनेन अक्षमत्वद्योतनादक्षमा नाम नाट्यालङ्कारः।

## लक्ष्मी

अक्षमाख्यमलङ्कारं निरूपयति—अक्षमेति । स्वल्पोऽपि परिभवोऽवमानो यन्न विषह्यते सोढुं न शक्यते स अक्षमानाम नाट्यालङ्कारो भवेत्.

उदाहरति—यथेति । मुनिजनाक्षिप्तो राजा सोपहासं ब्रवीति—भारेति । अभ्युपगतं स्वीकृतम्, वयम् एवंविधा भवदभिहितप्रकारा परवञ्चनतपरा अनाप्तवाच एवेत्यर्थः । प्रेक्षावतामन्यथा प्रवृत्तिर्न भवति अत आह—किं पुनरिति । इमां तपस्विनां बालां शकुन्तलाम्, अभिसन्धाय वञ्चयित्वा किं फलं पुनर्लभ्यते किमपि नेत्यर्थः । एवं च सर्वत्र वञ्चने किमपि प्रयोजनमवलोक्यते किन्त्वस्यास्तपस्विन्याः शकुन्तलायाः वञ्चने कस्यचित्प्रयोजनस्याभावात् निरर्थिकैव वञ्चनेत्यभिप्रायः । एवं श्रुत्वा कुपितः शाङ्र्गरव आह—विनिपात इति । विनिपात अधोगतिः सर्वनाश इति यावत् इमामभिसन्धाय लभ्यत इत्यनेन पूर्वेणान्वयः । तथा च तपस्विन्यवमानजनितदुरितेन नूनमात्मनोऽधोगतिरेव भविष्यतीति तात्पर्यम् । अत्र भोः सत्यवादिन्नित्याक्षेपोक्त्या दुष्यन्तकृताल्पस्याप्यवमानस्य 'विनिपात इत्युक्त्या शाङ्र्गरवेणासहनादक्षमा ।

## रुचिरा

अक्षमां लक्षयति—५२६ यः **स्वल्पः । अपि । परिभवः । न । विषह्यते । सा । अक्षमा ।**

उदाहरति—**यथा । शाकुन्तले**ऽभिज्ञानशाकुन्तले । 'राजा (शाङ्र्गरवं प्रत्याह) **अभ्युपगतं** ज्ञातम् ।...**अभिसन्धाय** वञ्चयित्वा । **विनिपातो** नरके पतनम् । 'लभ्यते'इति पूर्वतोऽन्वेति । **स्पष्टमन्यत्** ।

**गर्वोऽवलेपजं वाक्यं—**

**यथा तत्रैव—**

**'राजा—ममापि नाम सत्त्वैरभिभूयन्ते गृहाः।'**

---

## विवृतिः

अवलेपजमहंकारजन्यम् ॥ सत्त्वैः प्राणिभिः पश्यामीति। अत्र समरोद्यमः सूचितः ॥

## विज्ञप्रिया

गर्वाख्यामलङ्कृतिमाह—गर्व इति। अवलेपोऽहङ्कारः।

## कुसुमप्रतिमा

गर्व इति। अवलेपनम् अहङ्कारजनितं वाक्यं गर्वो नाम नाट्यालङ्कारः। गर्वप्रयुक्तत्वाद्गर्व इति समाख्या।

यथेति। सत्त्वैर्जन्तुभिः। अत्र ममापीत्यनेन सूचितावलेपजनितवाक्यादगर्वः।

कार्य्यस्येति। कार्य्यस्य यस्य कस्यचित् कर्म्मणः आरम्भ उद्यमो नाम नाट्यालङ्कारः।

## विमला

गर्वमाह, गर्व इति।—अवलेपजं—साहङ्कारमुक्तं, वाक्यं गर्वः।

उदाहरति, यथेति।—तत्रैव—शाकुन्तले एव। सत्त्वैः,—प्राणिभिः, अभिभूयन्ते ?—पराजीयन्ते ? अत्र ममापीत्यनेन राज्ञः गर्वातिशयः सूचितः।

## लक्ष्मी

गर्वाख्यमलङ्कारं निरूपयति—गर्वं इति। अवलेपनम् अलङ्कारजन्यं वाक्यं गर्वो नाम नाट्यालङ्कारः।

उदाहरति—यथेति। सत्त्वैः प्राणिभिः। अत्र ममापीत्यनेन व्यञ्जिताहङ्कारजन्यवाक्याद्गर्वः।

## रुचिरा

गर्वं लक्षयति—५२७ **अवलेपजमवलेपो** धनाद्युत्कर्षेणाविनयस्तस्माज्जायते इति तथोक्तम्। **वाक्यम्। गर्वः**। अत्रोपचारादभेदः।

उदाहरति—**यथा**। तत्र अभिज्ञानशाकुन्तले। **एव**। **'राजा**। **मम**। **अपि**। **गृहाः**। 'गृहाः पुंसि च भूम्न्येवे'त्यमरः। **सत्त्वैः** प्राणिभिः। **अभिभूयन्ते** परिभव नीयन्ते। अत्र हि को नाम परिभवितुं मम गृहान्। क्षमेतेति गर्वाविष्करणम्।

**कार्यस्यारम्भ उद्यमः ॥ २०० ॥**

यथा कुम्भाङ्के—'रावणः—

**पश्यामि शोकविवशोऽन्तकमेव तावत्।'**

---

## विवृतिः

गुणवदिति। उत्कृष्टेत्यर्थः ॥

## विवृतिपूर्तिः

विराप्रिया उद्यमाख्यामलङ्कृतिमाह—कार्य्यस्येति। कुम्भे कुम्भनाम्नि नाटके पश्यामीति इन्द्रजित्शोकात्तस्य रावणस्य स्वयं युद्धारम्भे आत्मनोऽन्तकत्वकथनमिदम्।

## कुसुमप्रतिमा

यथेति। पश्यमीत्यादौ युद्धरूपकार्य्यारम्भस्य सूचितत्वादुद्यमः।

## विमला

उद्यममाह, कार्य्यस्येति।—कार्य्यस्य—अभिप्रेतार्थस्य, आरम्भः,—सम्पादनार्था प्रथमप्रवृत्तिः, उद्यमः।

उदाहरति, यथेति।—शोकविवशः,—अतिशोकात्तः, बहुपुत्रभ्रातृबन्धुवर्गनाशादिति भावः, अन्तकमेव—यममेव, तावत्—कात्स्येंन, ("यावत् तावञ्च साकल्ये" इत्यमरः) पश्यामि। अध रणकर्मणः उद्यमः सूचितः।

उदाहरति, यथेति।— शोकविवशः,—अतिशोकार्त्तः, बहुपुत्रभ्रातृबन्धुवर्गनाशादिति भावः, अन्तकमेव—यममेव, तावत्—कात्स्नोंन, ("यावत् तावच्च साकल्ये" इत्यमरः) पश्यामि। अत्र रणकर्मणः उद्यमः सूचितः।

## लक्ष्मी

उद्यमाख्यलङ्कारं निरूपयति—कार्यस्येति कार्यस्य कस्यचित् कर्मणः आरम्भः आद्यकृतिः उद्यमो नाम नाट्यालङ्कारः।

## रुचिरा

उद्यमं लक्षयति—५२४ **कार्यस्य** कर्त्तव्यस्यार्थस्य। **आरम्भः। उद्यमः।** । ४९७ ॥

उदाहरति—**कुम्भाङ्के** कुम्भकर्णवधप्रधानेऽङअके। **'रावणः।—शोकविवशः** कुम्भकर्णमरणशोकपराभूतः। **तावत्** (इदं वाक्यालङ्कारे)। **अन्तकं** यमम्। **एव। पश्यामि।'** अत्र हि रावणस्य परलोकगमनकार्य्यारम्भः।

**ग्रहणं गुणवत्कार्यहेतोराश्रय उच्यते ।**

**यथा विभीषणनिर्भर्त्सनाङ्के—'विभीषणः—राममेवाश्रयामि ।' इति ।**

---

## विवृतिपूर्तिः

आश्रयख्यामलङ्कृतिमाह—ग्रहणमिति । राममेवेति. अत्रात्मनो लङ्काधिपत्यस्य गुणत्वकार्य्यस्य हेतो रामाश्रयमस्य ग्रहणमिति । राममेवेति । अत्रात्मनो लङ्काधिपत्यस्य गुणवत्कार्य्यस्य हेतो रामाश्रयणस्य ग्रहणम् ।

## कुसुमप्रतिमा

ग्रहणमिति । कार्य्यहेतोर्यत्किञ्चित्प्रयोजनसाधनानिमित्तम्, गुणवदुत्कृष्टं ग्रहणम् उत्कृष्ट व्यक्ते स्वलम्बनमित्यर्थः आश्रयो नाम नाट्यालङ्कार उच्यते ।

यथेति. अत्र राज्यप्राप्तिहेतो रामस्यावलम्बनादाश्रयः ।

## विमला

आश्रयमाह, ग्रहणमिति ।—गुणवत्कार्य्यहेतोः,—उत्कृष्टकार्य्यनिमित्तमित्यर्थः, ग्रहणम् आश्रय उच्यते ।

उदाहरति, यथेति ।—स्पष्टम् । अत्र विभीषणस्य स्वराज्यप्राप्तिरूपोत्कृष्टकार्य्यस्य हेतुः श्रीरामाश्रयः इति ।

## लक्ष्मी

आश्रयाख्यमलङ्कारं निरूपयति—ग्रहणमिति । कार्यहेतोः । यत् किञ्चित्कार्यसाधनकारणम्, गुणवदुत्कृष्टं ग्रहणम् उत्कृष्टजनस्याश्रयणम् आश्रयो नाम नाट्यालङ्कार उच्यते ।

उदाहरति—यथेति । अत्रात्मनो लङ्काधिपत्यस्य गुणवत्कार्यस्य हेतो रामस्याश्रयणादाश्रयः ।

## रुचिरा

आश्रयं लक्षयति—**कार्यहेतोः** कार्यसिद्धिनिमित्तम् । **गुणवदुत्कृष्टम् । ग्रहणम् । आश्रयः । उच्यते ।**

उदाहरति—**यथा । विभीषणनिर्भत्सनाङ्के** विभीषणस्य नितराम्भर्त्सनामुपजीव्य प्रारब्धेऽङ्के । स्पष्टमन्यत् । अत्र हि—लङ्काराज्यप्राप्ति निमित्तं रामचरणग्रहणम् ।

**उत्त्रासनं तूपहासो योऽसाधौ साधुमानिनि ॥ २०१ ॥**

यथा शाकुन्तले—'शाङ्र्गरवः—राजन्, अथ पुनः पूर्ववृत्तान्तमन्यसङ्गाद्विस्मृतो भवान् । तत्कथमधर्मभीरोर्दारपरित्यागः—' इत्यादि ।

---

## विवृतिः

राममेवेति । अत्र विभीषणस्य स्वराज्यप्राप्तिरूपोत्कृष्टकार्यस्य हेतुः श्रीरामाश्रयः ॥

## विज्ञप्रिया

उत्त्रासनाख्यामलङ्कृतिमाह—उत्त्रासनमिति । साधुमानिनि, आत्मनि साधुत्वमानिनि । राजनित्यादिरूपहासः । कृतविस्मरणात् राज्ञोऽसाधुत्वम् ।

## कुसुमप्रतिमा

यथेति । पूर्व वृत्तान्तं शकुन्तलापरिणयरूपम् । अन्यसङ्गादपरस्त्रीसं सर्गात् । अधर्म्मभीरोर्भवतः । अत्र शाङ्र्गरवेणासाधुत्वेन ज्ञायमानस्य च साधुमानिनं दुष्मन्तं प्रत्युपंहासादुत्त्रासनम् ।

## विमला

उत्त्रासनमाह, उत्त्रासनमिवि ।—साधुमानिनि—आत्मानं साधु मन्धते इति साधुमानी तस्मिन्, ("आत्ममाने खश्र" (३/२/८२पा०) इति णिनिः) स्व श्रेष्ठ मन्यमाने इति भावः, अत एव असाधौ यः उपाहासः स इत्यध्याहारः उत्त्रासनम् ।

उदाहरति, यथेति ।—अथ पुनरिति—वितर्के, पूर्ववृत्तान्तः,—शकुन्तलापरिणयरूपा पूर्वघटनेत्यर्थः, व्यासङ्गात्—भार्य्यान्तरसंसर्गात्,राजकार्य्यगौरवात्, मोहात् वा, विस्मृतः,—स्मृतिपथं न गतः, भवेत्—स्यात्, तत्—तस्मात्, अधर्मभीरोः,—अधर्मात् विभ्यतस्ते, दारपरित्यागः,—स्त्रीपरित्यागः, कथं—कीदृक् ? स्त्रीत्यागे अधर्मसम्भवादिति भावः । अत्र धर्मपत्नीं परित्यक्तुकामस्य अत एव असाधो राज्ञि अधर्मभीरुत्वाभिधानेन साधुमानित्वं प्रतिपाद्य उपहासः ।

## लक्ष्मी

उत्त्रासनाख्यमलङ्कारं निरूपयति—उत्त्रासनमिति । आत्मानं साधु मन्यत इति 'आत्ममाने खश्च' इतिं पा० सूत्रेण णिनिः वृद्धयादिकृतसाधुमानी तस्मिन् साधुमानिनि आत्मनि साधुत्वमानिन्यसाधो जने इत्यर्थः । यस्तु उपहासः तत् उत्त्रास्यतेऽन्यस्य हृदयमत्यर्थं क्षुभ्यते अनेनेति उत्त्रासनं नाम नाटयालङ्कारो भवेत् ।

उदाहरति—यथेति । शाङ्र्गरवः कण्वशिष्य आह इति शेषः । अथेति प्रश्ने 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्येंष्वथो अथ' इत्यमरः, पूर्ववृत्तान्तं शकुन्तलायाः गान्धर्वपरिणयरूपम्, व्यासङ्गात् बहुतरकार्ये व्यापृतत्वात् अन्यस्त्रीसंसर्गरूपमोहाद्वा विस्मृतं स्मृतिमार्गाद्विच्युतं भवेत् सम्भावनायां लिङ् । अधर्मभीरोः पापाद्भयशङ्किनो

भवतः । तथा च यदि ते अधर्माद् भयं वर्तते तदा दारपरित्यागः कथं विधीयते तत्राप्यधर्मोत्पन्नत्वात् । तथा च गौतमः—'पतिताऽत्याग्यपतितत्यागिनश्च पतितः' इति । एवं सत्यपतिदारपरित्यागान्महत्पापं ते नूनं भावीति दारत्यागो न कार्य इति शाङ्र्गरवस्याभिप्रायः । अत्र कृतविस्मरणत्वात् राज्ञोऽसाधुत्वम् । तथा च शाङ्र्गरवेणासाधुत्वेन परिचीयमानमथ च साधुमानिनं दुष्यन्तं प्रति 'राजन्' इत्यादिनोपहासादुत्रासनम् ।

## रुचिरा

उत्रासनं लक्षयति—५२९ **यः । साधुमानिनि** सज्जनम्मन्ये । अतएव—**असाधौ** दुर्जने । **उपहासः । स तु । उत्रासनम्** ॥ ४९८ ॥

उदाहरति—**यथा । शाकुन्तले**ऽभिज्ञानशाकुन्तले 'पञ्चमेऽङ्के' इति शेषः । "**शाङ्गर्रवः** । 'दुष्यन्तं प्रत्याहे'ति शेषः । **राजन् । अथ । यदि । पूर्ववृत्तान्तं** शकुन्तलया सह गान्धर्वविधिना परिणयनादिरूपम् । **अन्यसङ्गात्** कार्य्यान्तरेषु व्यग्रतंया । **भवान् । विस्मृतवान् । तत् । कथम् । अधर्मभीरो** 'रधर्मो मां न स्पृशेति'ति बिभ्यतो भवतः । **दारपरित्यागः** स्त्रीपरित्यागजन्यं पातकं स्यादिति भावः । अत्र हि—पूर्ववृत्तान्तस्यैवं विस्मरणासम्भव इति तथाऽभिधानमुपहासमात्रम् ।"

**आकाङ्क्षा रमणीयत्वाद्वस्तुनो या स्पृहा तु सा।**

यथा तत्रैव—'राजा—

**चारुणा स्फुरितेनायमपरिक्षतकोमलः।**

**पिपासतो ममानुज्ञां ददातीव प्रियाधरः॥'**

---

## विवृतिः

आत्मानं साधुं मन्यते साधुमानी तस्मिन्॥ अथ पुनरिति वितर्के। पूर्ववृत्तान्तं शकुन्तलाया गान्धर्वविवाहरूपम्। अन्यसङ्गाद् भार्यान्तरसंसर्गात्। तत्कथमिति। अन्यथा कथमित्यर्थः॥

अपरिक्षतो नायकेनादष्टः। अत एव कोमलः॥

## विज्ञप्रिया

स्पृहाख्यामलङ्कृतिमाह—आकाङ्क्षा इति। चारुणेति—शकुन्तलायाः स्फुरदधरदर्शनात् तत्पानेच्छो राज्ञ उक्तिरियम्। अपरिक्षतकोमलोऽयमधरश्चारुणि स्फुरितेन मम पानानुज्ञां ददातीव इत्यर्थः।

## कुसुमप्रतिमा

आकाङ्घेति। वस्तुनो यस्य कस्यचित् पदार्थस्य रमणीयत्वाङ्घेतोः, तत्र तु या आकाङ्क्षा सा स्पृहा नाम नाट्यालङ्कार उच्यते।

चारुणेति। अपरिक्षती नायकान्तरेणादष्टः, अतएव कोमलः, अयं प्रियायाः शकुन्तलाया अधरः, चारुणा मनोहरेण स्फुरितेन स्पन्दनेन विपासतो मम अनुज्ञां स्वमेव पातुमनुमतिं ददातीव।

अत्र शकुन्तलाधरस्य रमणीयत्वाद्दुष्मन्तस्याकाङ्क्षातः स्पृहा।

## विमला

स्पृहामाह, आकाङ्क्षेति।—वस्तुनः,—विषयस्य, रमणीयत्वात्—मनोहरत्वात्, या आकाङ्क्षा—तत्राप्तीच्छा इत्यर्थः, सा स्पृहा।

उदाहरति, चारुणेति।—अपरिक्षतः,—नायकेनादष्टतया अव्रणितः, अत एव कोमलः, प्रियायाः,—शकुन्तलायाः, अयम् अधरः चारुणा—मनोहरेण, स्फुरितेन—स्फुरणेन, पिपासतः,—पातुमिच्छतः, मम अनुज्ञां ददातीव। अत्र अधरस्य रमणीयात्वात् पानाकाङ्क्षारूपा स्पृहा।

## लक्ष्मी

स्पृहाख्यमलङ्कारं निरूपयति—आकाङ्क्षेति। वस्तुनः यस्य कस्यचिद्विषयस्य रमणीयत्वात् मनोहरत्वाद्धेतोः, तत्र तु या आकाङ्क्षा सा स्पृहा नाम नाट्यालङ्कारो भवेत्।

उदाहरति—यथेति । चारुणेति । शकुन्तलायाः स्फुरददर्शनात् मुखमुन्नमय्य तत्पानेच्छोः आत्मगतं राज्ञ उक्तिरियम् । न परीक्षित अपरिक्षित अननुभूतचुम्बनत्वात् केनचिन्नायकेन दन्तैरदष्टपूर्वः, अत एव कोमलो मृदुलः, अतोऽस्या अधरः पानयोग्य इति भावः, प्रियायाः शकुन्तलाया अदरो दन्तच्छदः अधरोष्ठ इत्यर्थः । चारुणा मनोहरेण, स्फरितेन ममाङ्गुलीभ्यामुन्नमनोत्पन्नस्फुरणेन, पिपासतः पातुमभिलषितः चुम्बनमिच्छत इति यावत् मम अनुज्ञां स्वयमेव पातुमनुमतिं ददातीव समर्पयतीव । अत्र शकुन्तलाधरस्य रमणीयत्वादुष्यन्तस्याकाङ्क्षतः स्पृहा ।

## रुचिरा

स्पृहां लक्षयति—५३१ **या । तु । वस्तुनः** पदार्थस्य । **रमणीयत्वात् । आकाङ्क्षा । सा । स्पृहा ।**

उदाहरति—**यथा । तत्राभिज्ञानशाकुन्तले । एव** 'तृतीयेऽङ्के' इति शेषः । **'राजा ।**

"**अपरिक्षतकोमलो** न परिक्षतो दष्टोऽसौ कोमलः (अत्र विशेषणोभयसमासः, विशेषणविशेष्यभावस्य प्रायिकत्वात्) । **अयम् । प्रियाधरः । चारुणा** सुन्दरेण । **स्फूरितेन** स्फुरणेन । **मम । पिपासतः** पातुमिच्छतः । **अनुज्ञामनुमतिम् । ददातीव** 'प्रतीयते' इति शेषः । अत्राधरस्य रमणीयतयाकाङ्क्षा ॥ ३१७ ॥"

**अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु ॥ २०२ ॥**

**यथा—**

**'त्वया तपस्विचाण्डाल प्रच्छन्नवधवर्तिना ।**

**न केवलं हतो वाली स्वात्मा च परलोकतः ॥'**

---

## विवृतिः

अधिक्षेपवचो भर्त्सनवाक्यम् । क्षोभश्चित्तव्यथा स एव क्षोभनामालंकार एव ॥ प्रच्छन्नवधवर्तिना अलक्षितहिंसाकारिणा ॥

## विज्ञप्रिया

क्षोभाख्यामलङ्कृतिमाह—अधिक्षेपेति । अधिक्षेपः तिरस्कारः तदर्थकवचोजनको यः क्षोभः क्रोधश्चलचित्तता स क्षोभाख्योऽलङ्कार इत्यर्थः । त्वयेत्यादिकं रामं प्रति रावणस्य वाक्यम् ।

## कुसुमप्रतिमा

अधीति । अधिक्षेपवचःकारी तिरस्कारोक्तिजनकः क्षोभो मनोविकारविशेष एव तु स क्षोभो नाम नाट्यालङ्कारः प्रोक्तः ।

त्वयेति । हे तपस्विचाण्डाल ! राम ! प्रच्छन्नवधाय गुप्तभावेन मम हत्यार्थं वर्त्तत इति तेन तादृशेन त्वया, न केवलमहं वालौ हतः, अपि तु परलोकतः स्वस्य आत्मा च हतः, एतेनैवगुरुतरवापोदयादिति भावः ।

अत्र बालिन ईदृशतिरस्कारोक्तिजनकक्षोभात् क्षोभः ।

## विमला

क्षोभमाह, अधिक्षेपवच इति ।—अधिक्षेपवक्षःकारी—भर्त्सनोक्तिहेतुकः, क्षोभः,—मनोविकारविशेषः, स एव—क्षोभनामाऽलङ्कार एव, प्रोक्तः ।

उदाहरति, त्वयेति ।—रामं प्रति वालिन उक्तिः । हे तपस्विचाण्डाल !—तपस्विषु चाण्डालवत् नृशंसकमिन् इत्यर्थः, प्रच्छन्नवधवर्त्तिना—गुप्तभावेन स्थित्वा हिंसाकारिणा, त्वया केवलं बालौ न हतः, किन्तु परलोकतः स्वात्मा च—अपि, हत इति शेषः । यादृशं दुष्कार्य्यं त्वया कृतम्, एतेन परलोके तव निस्तारी नास्ति, "धर्म एव हतो हन्ति" इति स्मरणादिति भावः । अत्र बालिकर्त्तुकः श्रीरामचन्द्रकर्ममूलकः "तपस्विचाण्डाल !" इत्यादि वाक्यार्थरूपः क्षोभः ।

## लक्ष्मी

क्षोभाख्यमलङ्कारं निरूपयति—अधिक्षेपेति। अधिक्षेपो भत्र्सनं तदर्थं वचः करोतीति अदधिक्षेप-वचःकारी भत्र्सनोक्तिजनको यः क्षोभश्चलचित्तता चित्तविकारविशेष इति यावत् स एव क्षोभो नाम नाट्यालङ्कारः प्रोक्तः।

उदाहरति—यथेति। त्वयेति। श्रीरामं प्रति मरणासन्नस्य बालिन उक्तिरियम्। हे तपस्विचाण्डाल राम! प्रच्छन्नवधवत्रिना अलक्षितहिंसाकारिणा त्वया न केवलमहं वाली हतः किन्तु परलोकतः स्वस्य आत्मापि हतः अनेनैव गुरुतरपापजननादित्याशयः। अत्र बालिन एतादृशभत्र्सनोक्तिजनकक्षोभात् क्षोभः।

## रुचिरा

क्षोभं लक्षयति—५३२ **अधिक्षेपवचःकारी** भर्त्सनवाक्यहेतुः। **क्षोभः** अन्तश्चाञ्चल्यम्। **तु**। **स** क्षोभः। **एव** 'मत' इति शेषः॥ ४९९॥

उदाहरति—**यथा** "हे तपस्विचाण्डाल तपस्विषु चाण्डालः तत्सम्बुद्धौ तथोक्त! **त्वया**। **प्रच्छन्नवधव-र्त्तिना** प्रच्छन्नो भूत्वाऽसौ वधवर्त्ती वधकारी तेन तथोक्तेना वधं वर्त्तयति सम्पादयतीति वधवर्त्ती। **केवलम्**। **वाली**। **न**। **हतः**। किन्तु—**परलोकतः** स्वर्गादेः। **स्वात्मा**। **चापि** (इदं समुच्चयार्थम्)। श्रीरामं प्रति मरणासन्नस्य वालिन उक्तिरियम्॥ ३१८॥"

**मोहावधीरितार्थस्य पश्चात्तापः स एव तु ।**

यथानुतापाङ्के—'रामः—

किं देव्या न विचुम्बितोऽस्मि बहुशो मिथ्याभिशप्तस्तदा' इति ।

---

## विवृतिः

मोहेनावधीरितस्यावज्ञातस्य अर्थस्य प्रयोजनस्य । स एव पश्चात्तापालंकार एव ॥ देव्या सीतया । मिथ्याभिशप्तो मिथ्यादत्तपरिवादः । अत्र मोहेनावधीरिते चुम्बनकार्ये पश्चात्तापः ॥

## विवृतिपूर्तिः

मोहेति । नाट्यशास्त्रेऽप्युक्तम्—'अकार्य सहसा कृत्वा कृत्वा कार्यमथापि वा । संतापो मनसो यस्तु पश्चात्तापः स कीर्तितः ॥' इति ॥

तदिति । 'संभूयेव सुखानि चेतसि परं भूमानमातन्वते यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः । यद्बालेन्दुकलोच्चयादवचितैः सारैरिवोत्पादितं—' इति तत्पादत्रयी ॥

## विज्ञप्रिया

पश्चात्तापाख्यामलङ्कृतिमाह-मोहावधीरितार्थस्येति । गोत्रस्खलितादितो रामे मिथ्याभिशापं दत्त्वा मानिन्यां सीतायां तामनुनीय कार्य्यान्तराद्बहिर्गतस्य रामस्य तदा तत्कर्त्तृकचुम्बनकरणानुतापोऽयम् ।

## कुसुमप्रतिमा

मोहेति । मोहेन चित्तभ्रमेण अवधीरितः परित्यक्तो योऽर्थो विषयस्तस्य सम्बन्धे पश्चात्तापोऽनुताप एव तु स पश्चात्तापाख्यो नाट्यालङ्कारः प्रोक्तः ।

किमिति । तदा मिथ्याभिशप्तः अलोकपरीवादविषयीभूतः अहं किं कस्मात् देव्या सीतया न बहुशो विचुम्बितोऽस्मि ।

अत्र मोहेन सीतया परित्यक्ते आत्मनश्चुम्बनकार्य्ये रामस्यानुतापादनुतापः ।

## विमला

पश्चात्तापमाह, मोहेति ।—मोहेन—अनवधानतया इत्यर्थः, अज्ञानेन वा, अवधीरितस्य—अवज्ञातस्य, अर्थस्य—विषयस्य, प्रयोजनस्येति यावत्, तु यः पश्चात्तापः,—अवज्ञाऽनन्तरं शोकः, स एव पश्चात्तापालङ्कारः । तथोक्तं मुनिना,—"अकार्य्यं सहसा कृत्वा कृत्वा कार्य्यमथापि वा । सन्तोषो मनसो यस्तु पश्चात्तापः स कीर्त्तितः ॥" इति ।

उदाहरति, यथेति ।—देव्या—सीताया । मिथ्याऽभिशप्तः,—मिथ्यादत्तपरीवादः । अत्र चुम्बनरूपस्य अर्थस्य मोहेनावधीरणात् पश्चात्तापलङ्कारः ।

## लक्ष्मी

पश्चात्तापाख्यमलङ्कारं निरूपयति—**मोहावधीरितार्थस्येति** । **मोहेन चित्तभ्रमेण अवधीरितस्य अवज्ञातस्य अर्थस्य प्रयोजनस्य सम्बन्धे पश्चात्तापोऽनुताप एव तु पश्चात्तापो नाम नाटयालङ्कारः स्यात्** ।

उदाहरति—**यथेति** । **किं देव्या इति** । **गोत्रस्खलितादितो रामे मिथ्याभिशापं दत्वा मानिन्यां सीतायां तामनुनीय कार्यान्तराद्बहिर्गतस्य रामस्य तदा तत्कर्तृकचुम्बनाकरणानुतापोऽयम्** । **तदा मिथ्याभिशप्तः मिथ्यादत्तपरिवादः अहं किं कुतः देव्या सीतया न बहुशो विचुम्बितोऽस्मि** । **अत्र मोहेन सीतयावधीरिते स्वचुम्बनकार्ये श्रीरामस्यानुतापात् पश्चात्तापः** ।

## रुचिरा

पश्चात्तापं लक्षयति—५३३ **मोहावधीरितार्थस्य** मोहेनाज्ञानेन विस्मृत्या वाऽवधीरितः पराभूतो योऽर्थस्तस्य । **पश्चात्तापः** 'मोहावसानदशायां पुन'रिति शेषः । **तु** । **स** पश्चात्तापः । **एव** ।

उदाहरति—**यथा** । **अनुतापाङ्के**ऽनुतापप्रधानेऽङ्के । "**रामः** 'अन्तः शोचती'ति शेषः । **तदा** परित्यागावसरे । **देव्या** सीतया । **बहुशः** । **मिथ्याऽभिशप्तो** मिथ्याऽभिशप्ता येन तादृशः । **किम्** । **न** । **विचुम्बितः** । **अस्म्यमहम्** । सीतां परित्यज्यानुतपतो रामस्येयमुक्तिः । मया यन्मृषा सा कलंकिता तद् यद्यपि, अवशयं प्रसादनीयाऽप्यासीत्, अथापि न प्रसादितेति नितान्तमनर्थकारीति भावः ।" यथा वाऽभिज्ञानशाकुन्लते षष्ठेऽङ्के शकुन्तलामवज्ञाय दुष्यन्तस्य तामनुस्मरत उक्तौ ।

**उपपत्तिर्मता हेतोरुपन्यासोऽर्थसिद्धये ॥ २०३ ॥**

यथा वध्यशिलायाम्—

**'म्रियते म्रियमाणे या त्वयि जीवति जीवति।**
**तां यदीच्छसि जीवन्तीं रक्षात्मानं ममासुभिः ॥'**

---

## विवृतिः

म्रियत इति। अत्र तस्या जीवनहेतुस्तव शरीररक्षणम् ॥

## विज्ञप्रिया

उपपत्त्याख्यामलङ्कृतिमाह—उपपत्तिरिति। अर्थस्याभिमतार्थस्य सिद्धये तद्धतोरुपन्यास इत्यर्थः। वध्यशिला नाटकविशेषः। म्रियत इति वध्यशिलायां हन्तुमानीतं स्वमरणेन मरिष्यमाणां स्वप्रियामनुशोचन्तं कञ्चित् प्रति महादयालोरुक्तिरियम्। पूर्वार्द्धोक्तरूपां प्रियां जीवन्तीं यदीच्छसि तदा ममासुभिरात्मानं रक्ष। त्वत्परिवर्त्तमहं म्रिये। अत्र वध्यत्राणं वक्तुरभिप्रेतं तत्सिद्धये वध्यप्रियाजीवनेच्छारूपहेतोरुपन्यासः।

## कुसुमप्रतिमा

उपेति। अर्थसिद्धये कार्य्यनिष्पत्तये हेतोरुपन्यासः कारणस्योल्लेख उपपत्तिर्भता उपपत्तिर्नाम नाट्यालङ्कारोऽभिप्रेतः, उपपत्तिः कारणसङ्घतिरिति व्युत्पत्तेः।

म्रियत इति। त्वयि म्रियमाणे सति या म्रियते, त्वयि जीवति च सति या जीवति, यदि तां जीवन्तीमिच्छसि, तदा मम असुभिः प्राणैः प्राणदानैः आत्मानं रक्ष।

अत्र नायिकाया जीवनस्थितिरूपकार्य्यसिद्धये नायकजीवनरक्षणरूपहेतोरुपन्यासादुपपत्तिः।

## विमला

उपपत्तिमाह, उपपत्तिरिति।—अर्थस्य—कार्य्यस्य, सिद्धये हेतोः,—कारणस्य, उपन्यासः,—कीर्त्तनम्, उपपत्तिर्मता।

उदाहरति, यथेति।—बध्यशिलायां—यत्र गरुडेन भक्षणार्थं बधाय नागाः नीयन्ते तस्याम्।

म्रियते इति।—नागानुज्जीवयितुं गरुड़ाय स्वदेहार्पणं कर्त्तुकामं शङ्खचूड़ प्रतिनायकस्योक्तिरियम्। त्वयि—भवादृशे तनये इत्यर्थः, स्रियमाणे—मरणासन्ने सति, या म्रियते—मरणासन्ना भवति, त्वयि जीवति—वर्त्तमाने सति इत्यर्थः, या जीवति—जीविता वर्त्तते, यदि तां, भवन्मातरमिति शेषः, जीवन्तीम् इच्छसि—जीववतीमभिलषसि, तदा मम असुभिः,—प्राणैः, मद्देहमुपायिनीकृत्येत्यर्थः, आत्मानं—स्वं, रक्ष; अत्र प्रियस्य जीवितार्थे स्वोपस्थितिप्रार्थनं सोपपत्तिकमित्युपपत्तिः। नागानन्दस्येदं पद्यम्।

## लक्ष्मी

उपपत्त्याख्यमलङ्कारंनिरूपयति—उपपत्तिरिति। अर्थसिद्धये अभितार्थनिष्पत्तये हेतोरुपन्यासः कारणस्य निर्द्देश उपपत्तिर्नाम नाट्यालङ्कारोऽभिमतः।

उदाहरति—यथेति। बध्यशिलायामिति। यत्र बध्यचिन्हा आरोह्यन्ते तादृश्यां शिलायामित्यर्थः, नाटकविशेष इति यावत्। म्रियते इति वध्यशिलायां हन्तुमानीतं स्वमरणेन मरिष्यमाणां स्वप्रियामनुशोचन्तं कञ्चित् प्रति महादयालोरुक्तिरियम्। त्वयि भवति म्रियमाणे सति या म्रियते त्वयि भवति जीवति च सति या जीवति, यदि उक्तरूपां तां प्रियां जीवन्तीमिच्छसि तदा मम असुभिः प्राणैः प्राणदानैः आत्मानं रक्ष त्वां परिवत्र्याऽहं म्रिय इत्यर्थः। अत्र प्रियाया जीवनस्थितिरूपाभिमतार्थसिद्धये प्रियाजीवनपरित्राणरूपहेतोरुपस्थानादगुपपत्तिः। नागानन्दचतुर्थाऽङ्के 'इयं (माता) अस्मद्विपत्तिखिन्ना यथा प्राणान्न मुञ्चेत्तथाऽभ्युपायश्चिन्त्यता'मिति प्रार्थयमानं शङ्खचूढं प्रति दयावीरस्यजीमूतवाहनस्योक्तिरियमिति कुशला वदन्ति।

## रुचिरा

उपपत्तिं लक्षयति ५३४ **अर्थसिद्धये** कार्यसम्पत्तये। **हेतोः** कारणस्य। **उपन्यासः**। **उपपत्तिः**। **मता** ५००।

उदाहरति—**यथा**। **वध्यशिलायां** यत्र वध्यचिन्हा आरोह्यन्ते तादृश्यां शिलायामित्यर्थः। "हे शङ्खचूड! (इदं पूर्वतोऽनुप्रसक्तम्। या। त्वयि (पुत्रे)। **म्रियमाणो** 'सती'ति शेषः। **म्रियते**। तथा—**जीवति** 'सती'ति शेषः। **जीवति**। **ताम्** आत्ममातरम्। **यदि**। **जीवन्तीम्**। **इच्छसि**। तर्हि-**मम** जीमूतवाहनस्य। **असुभिर्ग**रूडाय मत्समर्पमेनेति भावः। **आत्मानं** स्वम्। **रक्ष**। जीमूतवाहनस्य 'इयम् (माता) अस्मद्विपत्तिविक्लवा न यथा जीवितं जह्यत्तथाभ्युपायश्चिन्त्यता'मिति शङ्खचूडं प्रति दयावीरस्योक्तिरियम्। नागानन्दस्य चतुर्थाङ्कस्य पद्यमिदम्॥ ३१९॥"

**आशंसनं स्यादाशंसा—**

**यथा श्मशाने—'माधवः—**

**तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम्' इति ।**

---

## विवृतिः

आशंसनमिति । अत्र स्वस्याभीष्टलाभेच्छा । आशीरलंकारे तु बन्धुजनस्येति भेदः ॥

तस्या मालत्याः ॥

## विज्ञप्रिया

आशंसाख्यामलङ्कृतिमाह—आशंसनमिति । आशंसनम् अर्थसिद्धये प्रार्थनम् । आशीर्नामालङ्कृतिस्तु परार्थस्य सिद्धये आशीर्वादः । तत्पश्येयमिति । तस्या मालत्या मुखम् ।

## कुसुमप्रतिमा

आशंसनमिति । आशंसनमभीष्टवस्तुप्राप्तिप्रार्थनम् आशंसा नाम नाट्यालङ्कारः स्यात् । इष्टजनस्य आशंसने आशीर्नाम प्रथमो नाट्यालङ्कारः, अभीष्टभोग्यवस्तुन आशंसने तु आशंसाना मेति परस्परं भेदः ।

तदिति । "सम्भूयेव सुखानि चेतसि परं भूमानमातन्वते यत्रालोकपथावतारिणि रति प्रस्तौति नेत्रोत्सवः । यद्बालेन्दुकलोच्चयादिव चितैः सारैरिवोत्पादितम्" इति शेषपादत्रयम् । अनङ्गस्य कामदेवस्य मङ्गलगृहं माङ्गलिकावासस्वरूप तस्या मालत्यास्तन्मुखं भूयः पुनरपि पश्येयम् ।

अत्राभीष्टमालतीमुखदर्शनप्राप्ताशंसूनादाशंसा ।

## विमला

आशंसामाह, आशंसनामिति ।—आशंसनम्—अभीष्टलाभे मनस व्यापारणम्, आशंसा स्यात् । अत्र स्वस्याभीष्टलाभेच्छा, आशीरलङ्कारे तु बन्धुःजनस्येति विशेषः ।

उदाहरति, यथेति ।—तस्याः—मालत्याः, अनङ्गस्य—कामदेवस्य, मङ्गलगृहं—महोत्सवार्थं निर्मितस्थानम्, उपचारात् तदभिन्नमिति यावत्, तत्—अनुभूतास्वादपूर्वं, मुखं भूयोऽपि—पुनरपि, पश्येयं—विलोकयेयम् । अत्र प्रियतमामुखावलोकनाशंसनादाशंसा । पादत्रयाणीत्यमस्य श्लोकस्य मालतीमाधवीयस्य,—"सम्भूयेव सुखानि चेतसि परं भूमानमातन्वते, यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः । यद्बालेन्दुकलोच्चयादवचितैः सारैरिवोत्पादितम्"इति ।

## लक्ष्मी

आशंसाक्यमलङ्कारं निदिर्दशति—आशंसनमिति । आशंसनम् अभिलषितवस्तुप्राप्तये प्रार्थनम्, आशंसा नामालङ्कारः । आशीर्नामालङ्कारस्तु परार्थस्य सिद्धये, अत्र तु स्वस्याभिलषितवस्तुलाभायेच्छेति परस्परं भेदः ।

उदाहरति—यथेति । तत्पश्येयमिति ।

सम्भूयेव सुखानि चेतसि परं भूमानमातन्वते ।

यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवो

यद्बालेन्दुकलोच्चयादिव चितैः सारैरिवोत्पादितम् ।

इत्यवशिष्टपूर्वपादत्रयम् । अनङ्गस्य मन्मथस्य मङ्गलगृहं माङ्गलिकनिवासस्थानं तस्या मालत्यास्तन्मुखं तदाननं भूयः पुनरपि पश्येयम् अवलोकयेयम् । अत्राभिलषितमालतीवदनावलोकनप्राप्त्याशंसनादाशंसा ।

## रुचिरा

आशंसां लक्षयति—५३५ **आशंसनं** स्वाभीष्टमात्रलिप्सा । **आशंसा । स्यात् ।**

उदाहरति—**यथा** । श्मशाने तद्वर्णनप्रस्तुते मालतीमाधवस्य पञ्चमेऽङ्के । ''**माधवः** 'साशंस' मिति शेषः ।

**सुखानि** आनन्दाः । **सम्भूयेव** मिलित्वेव स्थितानि सन्तीति भावः (इदं कर्त्तृवचनम्) **चेतसि** चित्ते 'ममे ति शेषः । **परमत्यन्तं** केवलं वेत्यर्थः । **भूमानमतिशयितत्वम्** । **आतन्वते** विदधति । मम मनसि सर्वविधाः पमोदा उल्लसन्तीति भावः । 'अतः सम्भाव्यते' इति शेषः । **यत्र** यस्मिन् मालतीमुखे इत्यर्थः । **आलोकपथावतारिणी** आलोकौ दर्शने नेत्रे इति यावत् तयोः पथस्तत्रावतारीति तत्र । दृष्टे सति इति भआवः । **नेत्रोत्सवो** नेत्रयोरुत्सव आह्लादः । **रतिं** क्रीडाम् । **प्रस्तौति** प्रथयति । **यत्** 'चे' ति शेषः । **बालेन्दुकलोच्चयाद्बालो** मूढः प्रियामुख मिवामृतं निपाय्य परोपकारानभिज्ञ इति यावत्, असाविन्दुस्तस्य कलोच्चयस्तस्मात्तमाश्रित्येति भावः । **[**'मूर्खेऽर्भकेऽपि बालः स्या' दित्यमरः**]** । **अवचितैरेकत्र** स्थापितैः । **सारैः** सद्धर्मैः । **इव । उत्पादितम् । तत् । अनङ्गमङ्गलगृहमनङ्गस्य** कामस्य मङअगलगृहमामोदस्थानरूपम् । तस्या माधव्याः । मुखम् । भूयः पुनरपि । पश्येयम् । न गृहमनङ्गस्य कामस्य मङ्गलगृहमामोदस्थानरूपम् । **तस्या** माधव्याः । **मुखम्** । **भूयः** पुनरपि । **पश्येयम्** । न मालत्या आशंसनं, येनाशिषा सङ्करः स्यात्, किन्तु स्वात्मन एव तन्मुखचुम्बनार्थम् ॥'

**प्रतिज्ञाध्यवसायकः ।**

यथा मम प्रभावत्याम् 'वज्रनाभः—

**अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया ।**

**लीलयोन्मूलयाम्येष भुवनद्वयमद्य वः ॥'**

---

## विवृतिः

कार्यस्य कर्तव्यत्वेन निर्देशः प्रतिज्ञा ॥

## विज्ञप्रिया

व्यवसायाख्यामलङ्कृतिमाह—प्रतिज्ञेति व्यवसायक इति स्वार्थेकः । अस्य वक्ष इति । वो युष्माकं श्रीकृष्णादीनां सम्बन्धिनोऽस्य प्रद्युम्नस्य वक्ष इत्यर्थः । भुवनद्वयं स्वर्गमत्र्यरूपम् ।

## कुसुमप्रतिमा

प्रतिज्ञति । प्रतिज्ञा कर्त्तव्यावधारणम् अध्यवसायकः अध्यवसायी नाम नाट्यालङ्कारः स्यात् । अध्यवसायमुखत्वादस्य अध्यवसाय इति संज्ञा, स्वार्थे च कप्रत्ययः ।

अस्येति । अद्य क्षणेनैव अनया गदया अस्य वचो निर्म्मथ्य वो युष्माकं समीपे लीलया अनायासेनैव भुवनद्वयं मर्त्यपाताले उन्मूलयामि ।

अत्र भुवनद्वयोन्मूलनरूपकर्तव्यावधारणादध्यवसायः ।

## विमला

अध्वसायमाह, प्रतिज्ञेति ।—प्रतिज्ञा—शरीरं वा प्रातयेयं, कार्य्यं वा साधयेयम्" इत्येवम्भूतः कार्य्यस्य कर्त्तव्यत्वेन दृढ़तरनिश्चयनिर्देशः, अध्यवसायकः,—अध्यवसायः, [स्वार्थे कः] ।

उदाहरति, यथेति ।—अस्य—प्रद्युम्नस्य, वक्षः,—उरः स्थलं क्षणेनैव—न तु विलम्बेनेति भावः, अनया—प्राणान्तकारिण्या, गदया निर्भथ्य—सञ्चुर्ण्य, लीलया—अनायासेन, अद्य वः,—युष्माकम्, [इति अनादरे षष्ठो] युष्मान् अनादृत्य इति भावः, भुवनद्वयं—स्वर्गं भुवञ्च, रसातलं विहाय इत्यर्थः, स्वस्य रसातलवासित्वादिति भावः, उन्मूलयाम्येव—उत्पाटयाम्येव । अत्र वज्रनाभस्य प्रद्युम्नवक्षोभेदनादिरूपकार्य्ये दृढ़तरनिर्देशरूपोऽध्यवसायः ।

## लक्ष्मी

अध्यवसायाख्यमलङ्कारं निरूपयति—प्रतिज्ञेति । प्रतिज्ञा कार्यस्य कर्त्तव्यत्वेन निद्र्देशः अध्यवसायकः अध्यवसायमूपलत्वादद्यवसायो नाम नाट्यालङ्कारो भवेत् ।

उदाहरति—यथेति। कस्यापि राक्षसराजस्य नरराजस्य वा इन्द्रेण साकं सङ्ग्रामं कुर्वतः तं प्रति उक्तिरियम्। अस्येति। अद्य अधुना क्षणेनैव अनया गदया वो युष्माकं श्रीकृष्णादीनां संबन्धिनोऽस्य प्रद्युम्नस्य वक्षो निर्मथ्य लीलया अनायासेनैव भुवनद्वयं स्वर्गमर्त्यरूपम् उन्मूलयामि उत्पाटयामि। अत्र भुवनद्वयोत्पाटनरूपकर्त्तव्यत्वनिश्चयादध्यवसायः।

## रुचिरा

अध्यवसायं लक्षयति—५३६ **प्रतिज्ञा** सशपथं निश्चितोऽर्थः। **अध्यवसायको**ऽध्यवसायः।

उदाहरति—**यथा। मम। प्रभावत्याम् "वज्रनाभः** 'प्रतिजानीते' इति शेषः।

**अस्य** पुरः स्थितस्य दुष्टस्येति भावः **वक्षः** (कर्म)। **अनया। गदया। क्षणेन। एव। निर्मथ्य** विदार्य। **एषः।** अहम्—**अद्य। वो** युष्माकम्। **भुवनद्वयं** स्वर्गं पृथिवीं च। **लीलयानायासेन। उन्मूलयामि।** कस्यापि राक्षसराजस्य नरराजस्य वा देवराजेन समं युध्यमानस्य तं प्रति उक्तिरियम्॥ ३२०॥'

**विसर्पो यत्समारब्धं कर्मानिष्टफलप्रदम् ॥ २०४ ॥**

यथा वेण्याम्—

'एकस्यैव विपाकोऽयम्—' इत्यादि (३१२ पृ.)।

---

## विवृतिः

एकस्य द्रौपदीकेशग्रहस्य परिपाकः फलमयं राजसमूहक्षयरूपः। द्वितीये द्रोणसंबन्धिनि निःशेषीकर्तुमारब्धा निःशेषिताः॥

## विज्ञप्रिया

विसर्परूपामलङ्कृतिमाह—विसर्प इति। समारब्धमिति। अतीतारम्भप्रदर्शनम्। अनिष्टफलदं कथितमिति शेषः। तच्च समारब्धम्। एकस्येति। केशेषु गृहीत्वा धृष्टद्युम्नेन हतस्य द्रोणस्य शिरसि छिन्ने क्रुद्धस्य अश्वत्थाम्न उक्तिरियम्। एकस्य दुःशासनेन द्रौपद्याः केशग्रहणस्यायं विपाकः अखिलक्षत्त्रिय क्षयत्कृत्संगरः। द्वितीये मत्पितुः केशग्रहः। अत्र केसग्रहारम्भणमनिष्टफलयुक्तम्।

## कुसुमप्रतिमा

विसर्प इति। अनिष्टफलप्रदं यत् कर्म्म समारब्धं तत् विसर्पो नाम नाट्यालङ्कारः स्यात्। विशेषेण चेतसि सर्पणाद्विसर्प इति समाख्या।

## विमला

विसर्पमाह, विसर्प इति।—अनिष्टफलप्रदं यत् कर्म समारब्धं—प्रक्रान्तं, स विसर्पः।

उदाहरति, यथेति।—एकस्य, द्रौपदीकेशग्रहस्य इति शेषः, पाकः,—फलम्, अयं—सङ्ग्रामे बहुराजन्यनिधनरूप इति भावः। अत्र द्रौपदीकेशग्रहणरूपस्य कर्मणोऽनेकानेकातिरथमहारथमरणरूपफलकतया द्रोणकेशग्रहरूपस्य विश्वविनाशारम्भकफलतया च विसर्पः। उक्तञ्च चित्रमीमांसाकृता जगन्नाथपण्डितराजेन,—"यत् कर्म परिणामे स्यात् सर्वतोऽनिष्टकारकम्। हालाहलमिवात्यन्तं विसर्पस्तु विसर्पणात्॥" इति।

## लक्ष्मी

विसर्परूपमलङ्कारं निरूपयति—विसर्प इति। अनिष्टफलप्रदम्। अशुभफलदायकं यत् कर्म समारब्धं तत् विशेषेण हृदये सर्पणात् विसर्पो नाम नाट्यालङ्कारः।

उदाहरति—यथेति। एकस्यैवेति। केशेषु गृहीत्वा धृष्टद्युम्नेन हतस्य द्रोणस्य शिरसि छिन्ने क्रुद्धस्य अश्वत्थाम्न उक्तिरियम्। श्लोकं सम्पूर्णं प्राग्व्याख्यातमेवातो न व्याख्यायते। अत्र केवलं प्रतीकमेवादाय विव्रियते. एकस्यैव द्रौपदीकेशग्रहस्यैव विपाकः परिणामः अयं राजसमूहविनाशरूपः। द्वितीये द्रोणसम्बन्धिनि निःशेषीकर्तुमारब्धः। अत्र द्रौपदीकेशग्रहणरूपस्य अशुभफलप्रदकर्मणः समारब्धत्वाद्विसर्पः।

## रुचिरा

विसर्पं लक्षयति—५३७ यत्। **प्रारब्धम्।** अनिष्टफलप्रदमनिष्टफलकम्। **कर्म। विसर्पः** ॥ ५०१ ॥

उदाहरति—**यथा। वेणीसंहारे। तृतीये। अङ्के। राजा। "एकस्य...।"** उदाहृतपूर्वमिदम्। अत्र केश ग्रहणस्यानिष्टफलोद्रेकत्वम्।

## कार्यदर्शनमुल्लेखः—

यथा शाकुन्तले—राजानं प्रति 'तापसौ—समिदाहरणाय प्रस्थितावावाम्। इह चास्मद्गुरोः साधिदैवत इव शकुन्तलयानुमालिनीतीरमाश्रमो दृश्यते। न चेदन्य (था) कार्यातिपातः, प्रविश्य गृह्यतामतिथिसत्कारः' इति।

---

## विवृतिः

अस्मद्गुरोः कण्वस्य। अनुमालिनीतीरं मालिन्याख्यनदीतीरे न चेदिति। यद्यावां समिदाहरणाय न प्रस्थितौ, अन्यथा तदा कार्यस्य होमस्यातिपातोऽनुपपत्तिः॥

## विवृतिपूर्तिः

न चेदिति। 'न चेदन्यकार्यातिपातः' इति पाठे तु सुखेन ग्रन्थयोजना। स एव पाठः सांप्रतमुपलभ्यते॥

## विज्ञप्रिया

उल्लेखाख्यामलङ्कृतिमाह—कार्य्यदर्शनमिति। संबोध्यस्य कार्य्यप्रदर्शनमित्यर्थः। तापसाविति राज्ञो मृगहननं निवार्य्य समिदाहरणाय इत्यूचतुरित्यर्थः। अत्र राज्ञः शकुन्तलाविशिष्टाश्रमप्रवेशरूपकार्य्यप्रदर्शनम्।

## कुसुमप्रतिमा

यथेति।

**"एकस्य तावत्पाकोऽय दारुणो भुवि वर्त्तते।**

**केशगृहे द्वितीयेऽस्मिन् नूनं निःशेषिताः प्रजाः॥"**

इति श्लोकसमुदायः। एकस्य द्रौपदीकेसग्रहस्य अयं कुरुक्षेत्रयुद्धरूपो दारुणः पाकः परिणामः भुवि वर्त्ततः किन्तु अस्मिन् द्वितीये केशग्रहे धृष्टद्युम्नेन द्रोणकेशग्रहणे जाते नूनं निश्चितमेव प्रजा लोकाः निःशेषता भवेयुरिति शेषः। अश्वत्थाम्नः क्रोधादिभ्य इति भावः।

अत्र द्रोणकेशग्रहणरूपस्य अनिष्टफलप्रदकर्म्मणः समारब्धत्वाद्विसर्पः।

कार्य्येति। कार्य्यस्य ग्रहणं स्वीकरणम् उल्लेखी नाम नाट्यलङ्कारः स्यात्। उल्लिख्यमानविषयत्वदुल्लेख इति संज्ञा।

यथेति। काश्यपस्य कण्वस्य, शकुन्तलयेत्यभेदे तृतीया। अधिदैवतेन अधिष्ठात्रया देवतया सहेते साधिदैवतः। मालिन्या नद्यास्तीरे इत्यनुमालिनौतीरम्, विभक्त्यर्थे अव्ययीभावः। न चेत् अन्यस्य कार्य्यस्य राजकीयकर्म्मणोऽतिपातःअतिक्रमः स्यात्तदेति शेषः।

अत्र दुष्मन्तस्य अतिथिसत्कारग्रहणादुल्लेखः।

## विमला

उल्लेखमाह, कार्य्यग्रहणमिति ।—कार्य्यस्य ग्रहणं—सम्पादनार्था प्रवृत्तिः, उल्लेखः ।

उदाहरति, यथेति ।—समिदाहरणाय—हवनोपयोगिकाष्ठाहरणाय । अस्मद्गुरोः कण्वस्य शकुन्तलया—गुरुवर्य्येण दुहिततृत्वेन कल्पितया, साधिदैवत इष—अधिदेवता—अधिष्ठातृदेवता, तया सहित इव, अनुमालिनीतीरं—मालिन्याः नद्याः तीरे इत्यर्थः । कार्य्यातिपातः,—कार्य्यस्य व्याघातः, [अन्धकार्य्यातिपातः" इति आठान्तरम्] । अत्र समिदाहरणरूपकार्य्यसम्पादनार्थं प्रवृत्तेरभिधानादुल्लेखः ।

## लक्ष्मी

उल्लेखाख्यमलङ्कारं निरूपयति—कार्यग्रहणमिति । कार्यस्य ग्रहणम् अङ्गीकरणम् उल्लिख्यमानविषयत्वात् उल्लेखो नाम नाट्यालङ्कारः ।

उदाहरति—यथेति । तापसाविति । समिधां होमीयकाष्ठानाम् आहरणाय आनयनाय 'तुमर्थाच्च भाववचनात्' इति पा. सूत्रात् तुमर्थे चतुर्थी, तेन समिदानेतुमित्यर्थः । प्रस्थितौ चलितौ । गुर्वर्थं प्रस्थितत्वादधुना भवता सहाश्रमपदं गन्तुं न पारयावहे इति तापसयोराशयः । अनुमालिनीतीरं मालिन्यास्तीरे इत्यर्थः, शकुन्तलयैव ऋषिपुत्र्यैव अधिदैवतेन अधिष्ठात्र्या देवतया सहेति साधिदैतवतः शकुन्तलाधिष्ठित इत्यर्थः । एष पुरोऽवकोक्यमानः, अस्मद्रगुरोः अस्माकमुपाध्यायस्य कुलपतेः अयुतशिष्यरक्षकस्य कण्वस्य तन्नामक मुनेः कुलपतिलक्षणं चोक्तम्—

**'मुनिनां दशसाहस्रं योऽन्नपानादिपोषणात् ।**

**अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृतः ।।'** इति ।

आश्रम आश्रमस्थानं दृश्यते । चेत् यदि अन्यकार्यस्य राजकीयकर्मणः अतिपातोऽतिक्रमो न स्यात्तदा अत्राश्रमे प्रविश्य, अतिथिसत्कारः आतिथ्यं प्रतिगृह्यताम् अङ्गीक्रियताम्, प्रार्थनायां लकारः । अत्र दुष्यन्तस्यातिथ्यग्रहणादुल्लेखः ।

## रुचिरा

उल्लेख लक्षयति—५३८ **कार्यदर्शनं** कार्यस्य कर्त्तव्यत्वेन प्रदर्शनम् । उल्लेखः ।

उदाहरति—**यथा । शाकुन्तले । 'तापसौ** (दुष्यन्तं प्रत्याहतुः) **समिदाहरणाय** हवनोपयोगिकाष्ठमानेतुम् । **आवाम् । प्रस्थितौ** 'साधयाव' इति पाठे गच्छाव इत्यर्थः । **इहास्मिन्वने । च । अस्मद्गुरोः** कण्वमहर्षेः । **शकुन्तलया । साधिदैवतो**ऽधिष्ठात्रया देवतयाऽनुगृहीतम् । **इव । मालिनीतीरम्**मालिन्या नद्यास्तीरम् । **अनु**पश्चाकृत्य । **आश्रमः । दृश्यते । चेत् । अन्यकार्यातिपातः** कार्यान्तरावश्यकता । **न** तर्हि—प्रविश्य । **अतिथिसत्कारः । गृह्यताम् ।** अत्र हि...राज्ञा समम्प्रस्तानाभावे समिदाहरणं हेतुः, राज्ञश्च कार्यान्तरानावश्यकत्वेऽतिथिसत्कारग्रहमावशयकत्वं दर्शितम् ।'

**उत्तेजनमितीष्यते ।**

**स्वकार्यसिद्धयेऽन्यस्य प्रेरणाय कठोरवाक् ॥ २०५ ॥**

यथा—

**'इन्द्रजिच्चण्डवीर्योऽसि नाम्नैव बलवानसि ।**

**धिग्धिक्प्रच्छन्नरूपेण युध्यसेऽस्मद्भयाकुलः ॥'**

---

## विवृतिः

प्रेरणाय प्रवृत्तये ॥

## विज्ञप्रिया

उत्तेजनाख्यामलङ्कृतिमाह—उत्तेजनमिति । कठोरा परुषा । इन्द्रजित् इत्यादिकम् इन्द्रजितं संबोध्य लक्ष्मणस्य परुषवाक्यमिदम् । प्रच्छन्नरूपेण मेघान्तरितवपुषा । अत्र दर्शनरूपस्वकार्य्यसिद्धये इन्द्रजित्प्रेरणाय इयं वाक् ।

## कुसुमप्रतिमा

उत्तेजनमिति । स्वकार्य्य सिद्धये अन्यस्य जनस्य प्रेरणाय प्रवर्त्तनाय कठोरवाक् कटुक्तिः उत्तेजनमिति नाम नाट्यालङ्कार इष्यते, उत्तेज्यतेऽनेनेति व्युत्पत्तेः ।

इन्द्रजिदितिः हे इन्द्रजित् ! त्वं चण्डवीर्य्यः प्रचण्डपराक्रमोऽपि, तथा इन्द्रजिदिति नाम्नैव बलवान् ख्याताऽसि, इन्द्र जितयानिति व्युत्पत्तेः । किन्तु तथपि अस्माद्भयाकुलः सन् प्रच्छन्नरूपेण गुप्तभावेन युद्यसं, अतएव त्वा धिक् धञ् अतिशयेन निन्दामीत्यर्थः ।

अत जयरूपस्वकार्य्यसिद्धये इन्द्रजित प्रकाश्ययुद्धं प्रवर्त्तनाय लक्ष्मणकर्त्तु ककटुक्ते रूपेजनम् ।

कृत कण्डस्येति पाशन्तरम् ।

## विमला

उत्तेजनमाह, उत्तेजनमिति ।—स्वकार्य्यस्य—स्वाभीष्टस्य, सिद्धये—सम्पत्तये, तथा अन्यस्य प्रेरणाय—प्रवर्त्तनाय, कठोरवाक्—कटुवाक्यम्, उत्तेजनमिति दृश्यते—कथ्यते ।

उदाहरति, इन्द्रजिदिति ।—मेघनादं प्रति लक्षणस्योक्तिः । हे इन्दु जित् ! असि—(अव्ययमिंदम) त्वमित्यर्थः, नाम्नेव—न तु कार्य्यत इति भावः, चण्डवीर्य्यः,—प्रचण्डपराक्रमः, बलवान् असि—भवसि, इन्द्रजिंदाख्ययैव तव प्रचण्डत्वं बलवत्त्वञ्च ख्यायते इत्यर्थः, धिक् धिक्—त्वां पुनः पुनः निन्दामि इत्यर्थः, ("धिक् नर्भर्त्मननिन्दयोः" इत्यमरः) । निन्दाबीजीभूतं दौर्बल्यं समर्थयते, प्रच्छनेत्यादि ।—यस्त्वम् अस्मद्भयाकुलः सन्,

प्रच्छन्नरूपेण,—अलक्षितरूपेण, युध्यसे, यदि तव निर्भयत्वं स्यात् तदाऽवश्यं प्रकास्ययुद्धे तव वर्त्तनं स्यादिति भावः। अत्र प्रकाश्ययुद्धे इन्द्रजित्तं वर्तनं स्वकार्य्यम्।

## लक्ष्मी

उत्तेजनाख्यमलङ्कारं निरूपयति—उत्तेजनमिति। स्वकार्यसिद्धये स्वप्रयोजनानिष्पत्तये अन्यस्य जनस्य प्रेरणया प्रवृत्तये कठोरा परुषा वाक् वचनं परुषोक्तिरित्यर्थः, उत्तेज्यतेऽनेनेति उत्तेजनं नाम नाट्यालङ्कार इष्यते।

उदाहरति—यथेति। इन्द्रजिदिति। अन्तर्हितस्य हननं दुःसाध्यमिति निश्चितवतो लक्ष्मणस्य प्रकाश्यरणे प्रवर्त्तयितुमिन्द्रजितं सम्बोध्योक्तिरियम्। हे इन्द्रजित्! त्वं चण्डीवीर्यः प्रचण्डविक्रमोऽसि, तथा इन्द्रजिदिति नाम्नैव न तु बलवान् ख्यातोऽसि इन्द्रं जितवानिति इन्द्रजित् इति प्रसिद्धमागतोऽसि, किन्तु तथापि अस्मद्भयाकुलः मदग्गीत्या व्यग्रः सन् प्रच्छन्नरूपेण मेघान्तरितवपुषा युध्यसे अत एव त्वां धिक् धिक् अत्यर्थं गर्हामीत्यर्थः। अत्र जयरूपस्वप्रयोजननिष्पत्तये इन्द्रजितः प्रकाश्यरणे प्रेरणाय लक्ष्मणकर्तृकपरुषोक्तेरुत्तेजनम्।

## रुचिरा

उत्तेजनं लक्षयति—५३९ **स्वकार्यसिद्धये** स्वाभीष्टसम्पत्तये। **अन्यस्य। प्रेरणाय** स्वानुकूलाकार्ये प्रवर्तयितुम्। **कठोरवाक्। उत्तेजनम्। इति। इष्यते** कामयते। 'आचार्यै' रिति शेषः॥ ५०२॥

उदाहरति—यथा **'इन्द्रजि'**दित्यादौ। स्पष्टोऽर्थः। प्रच्छन्नस्य हननं दुःसाध्यं मन्वानस्य लक्ष्मणस्य प्रकटं योधन प्रवर्त्तयितुमिन्द्रजितम्प्रत्युकतिरियम्॥ ३२१॥'

**भर्त्सना तु परीवादः—**

यथा सुन्दराङ्के—'दुर्योधनः—धिग्धिक् सूत, किं कृतवानसि।

**वत्सस्य मे प्रकृतिदुर्ललितस्य पापः पापं विधास्यति—'इत्यादि।**

---

## विवृतिः

नानैवय न तु कर्मणा। अत्र लक्ष्मणेन इन्द्रजिद्वधाय प्रकाशयुद्धे तस्य वर्तनम्॥

प्रकृत्या स्वभावेन दुर्ललितस्य दुर्विलसितस्य। पापो दुष्कर्मा। पापमनिष्टम्। शास्त्रेण शास्त्रानुसारेण। वर्त्तनं कर्मानुष्ठानम्॥

## विवृतिपूर्तिः

वत्सस्येति। अवशिष्टांशस्तु—'समक्षमुदायुधोसौ. अस्मिन्निवारयसि किं व्यवस्सायिनं मां क्रोधो न नाम करुणा न च तेऽस्ति लज्जा॥' इति। असौ भीमः॥

वत्सस्येति। अवशिष्टांशस्तु—'समक्षमुदायुधोसौ। अस्मिन्निवारयसि किं व्यवसायिनं मां क्रोधो न नाम करुणा न च तेऽस्ति लज्जा॥' इति। असौ भीमः॥

## विज्ञप्रिया

परीवादाख्यामलङ्कृतिमाह—भर्त्सनेति। सुन्दरो वेणीसंहारस्यैवाङ्कः। वत्सस्य कर्णपुत्रस्य वृषसेनस्य पापः पाण्डवः पापं वधम्। अत्र रथमादाय पलायितस्य सारथेर्भर्त्सना।

## कुसुमप्रतिमा

भर्सनेति। भर्त्सना सतिरस्कारस्तु परीवादो नाम नाट्यालङ्कारः स्यात्।

यथेति। "वत्सस्य मे दुर्ललितस्य पापः, पापं विधास्यति समक्षमुदायुघीऽसौ।

अस्मिन्निवारयसि किं व्यवसायिनं माम्, क्रोधो न नाम करुणा न च तेऽस्ति लज्जा॥" इति श्लोक समुदायः।

उदायुध उद्यनास्वः असौ पापः पापात्मा भीमः, दुर्ललितस्य दुखेनाङ्कपालितस्य मे मम वत्सस्य दुःशासनस्य पापं पापजन्यममङ्गलं हत्यामित्यर्थः समक्षमेव विधास्यति करिष्यति। अस्मिन् विषये व्यवसायिनं निवारणायोद्यमिनं मां किं निवारयस, अतएव ते तव न क्रोधः, न करुणा, न च वा लज्जा अस्ति। अत्र सूत्रभर्तृसमया परीवादः।

## विमला

भर्त्सनामाह, भर्त्सनेति।—परीवादः,—तिरस्कारः, तु—पुनः, भर्त्सनास्यादिति शेषः।

उदाहरति, यथेति ।—मूर्च्छितदुर्य्योधनरक्षणाय रणात् रथं प्रत्यावर्त्तितः वन्तं सूतं प्रति मोहावसाने दुर्य्योधनस्य भर्त्सनमिदम् । प्रकृतिदुर्ललितस्य—प्रकृत्या—स्वभावेन, दुर्ललितस्य—दुर्विलसितस्य, चञ्चलस्येति यावत्, वत्सस्य—दुःशासनस्य पापः,—पापात्मा, भीम इत्यर्थः, पापम्—अनिष्टं, वक्षीविदारणरूपमित्यर्थः, विधास्यति—करिष्यति । अत्र सारथेः रणात् प्रत्यावर्त्तनकर्मणः तिरस्करणात् भर्त्सना ।

## लक्ष्मी

परीवादाख्यमलङ्कारं निरूपयति—भर्त्सनमिदम् । भर्त्सना अवमानस्तु परीवादो नाम नाट्यालङ्कार इष्यते ।

उदाहरति— यथेति । सुन्दरो वेणीसंहारस्यैवाङ्कः वत्सस्येति । सङ्ग्रामे दुःशासनं प्रति राज्ञः भर्त्सनमिदम् । श्लोकसमुदायस्त्वित्थम्—

**वत्सस्य मे प्रकृतिदुर्ललितस्य पापः पापं विधास्यति समक्षमुदायुधोऽसौ ।**

**अस्मिन्निवारयसि किं व्यवसायिनं मां क्रोधो न नाम करुणा न च तेऽस्ति लज्जा ॥ इति ।'**

उद्यदायुधः उद्यताम्नः पापः पापी असौ भीमः प्रकृत्या स्वभावेन दुर्ललितस्य दुर्बिलसितस्य मे मम वत्सस्य दुःशासनस्य पापं मरणं समक्षमेव विधास्यति करिष्यति । अस्मिन् भीमविषये व्यवसायिनम् भीमहननिवारणायोद्यगिनं मां दुर्योधनं किं निवारयसि अवरुणत्सि अत एव ते तव क्रोधो न ? राजबन्धुवधकाले त्वयाऽवश्यं कोपो विधातव्यो न करुणा नापि दया, परविनाशसमयेऽवश्यं दया विधेया न च वा लज्जा अस्ति, मम सन्निधघौ यद्रिपुणा प्रतिज्ञा पूर्यत तदत्यर्थं त्रपाजनकमिति भावः । वसन्ततिलका छन्दः । अत्र रतमादाय पलायितस्य सारथेर्भर्त्सनया परीवादः ।

## रुचिरा

परीवादं लक्षयति—५४० **भर्त्सना** सोपालम्भं वचः । **तु । परीवादः** ।

उदाहरति—**यथा । सुन्दराङ्के** वेणीसंहारस्य चतुर्थेऽङ्के । 'दुर्योधनः (सूतं प्रत्याह) । **सूत ! धिग्धिक् । किम् । कृतवान् । असि । पापो** दुष्टः । **असौ** भीमः । **उदायुध** उद्यतशस्त्रः । भे मग । **समक्षम्** । प्रकृतिदुर्ललितस्य प्रकृत्या स्वभावेनालभ्यविषयकत्वाददुष्टं ललितं सौन्दर्यं सौभगं वा यस्य तस्य । **वत्सस्य** लालनीयस्यानुजस्य दुःशासनस्येत्यर्थः । **पापं** वक्षोविदारमरूपमनर्थम् । **विधास्यति—' इत्यादि** । अन्त्यं पादद्वयं चास्य—'अस्मिन्निवारयसि किं व्यवसायिनम्मां क्रोधो न नाम करुमा न च तेऽस्ति लज्जा ॥' इति ।

**नीतिः शास्त्रेण वर्तनम् ।**

**यथा शाकुन्तले—'दुष्यन्तः—विनीतवेषप्रवेश्यानि तपोवनानि ।' इति ।**

---

## विवृतिः

उत्कीर्तनं सूचनम् । उपालम्भविशेषेण प्रतिकूलोक्तिखण्डनेन । क्वचित् 'उपालम्भस्वरूपेण' इति पाठः ॥ आः कथमिदं नामेति । उक्तिः इति शेषः । लोकवृत्तान्तनिष्णातः लोकचरितविज्ञः ॥

## विज्ञप्रिया

नीत्याख्यामलङ्कृतिमाह—नीतिरिति । स्पष्टमिदम्

## कुसुमप्रतिमा

नीतिरिति । शास्त्रेम शास्त्रानुसारेण वर्त्तनं प्रवृत्तिर्नीतिर्नाम नाट्यालङ्कारः स्यात्.

यथेति । अत्र "गुरौ सविनयाचारः" इति शास्त्रानुसारेण वर्त्तनास्तीतिः ।

## विमला

नीतिमाह, नीतिरिति ।—शास्त्रेण—यथाशास्त्रं, वर्त्तनं-व्यवहरणं, शास्त्रानुसारेण कर्मानुष्ठानमित्यर्थः, नीतिः ।

उदाहरति, यथेति ।—"तपोवनप्रदेशे औद्धत्यं त्यजेत्" इति शास्त्रभवद्रष्टव्यम् ।

## लक्ष्मी

नीत्याख्यमलङ्कारं निरूपयति—नीतिरिति । शास्त्रेण शास्त्रानुसारेम वर्त्तनं कर्मानुष्ठानं नीतिर्नाम नाट्यालङ्कारो भवेत् ।

उदाहरति—यथेति । विनीतवेशेनेति । विनीतवेशेन शुद्धवेशेन प्रवेश्यानि प्रवेष्टयानि तप्रोवनानि मुनिवासभूतस्थानानि । तपस्विनीसविधे विनयभावाश्रयणं परमावश्यकमिति राज्ञोऽभिप्रायः । अत्र शास्त्रानुसारेण वर्त्तनाम्नीतिः ।

## रुचिरा

नीतिं लक्षयति—५४१ **शास्त्रेण** शास्त्रानुसारेण । **वर्त्तनं** यत्नः । **नीतिः** ।

उदाहरति—**यथा** । शाकुन्तले '**दुष्यन्त**'इत्यादौ । स्पष्टम् ।

**उक्तस्यार्थस्य यत्तु स्यादुत्कीर्तनमनेकधा ॥ २०६ ॥**

**उपालम्भविशेषेण तत्स्यादर्थविशेषणम् ।**

यथा शाकुन्तले राजानं प्रति '**शाङ्र्गरवः**—आः, कथमिदं नाम । किमुपन्यस्तमिति । ननु भवानेव नितरां लोकवृत्तान्तनिष्णातः ।

**सतीमपि ज्ञातिकुलैकसंश्रयां**

**जनोऽन्यथा भर्तृमतीं विशङ्कते ।**

**अतः समीपे परिणेतुरिष्यते**

**प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥'**

---

## विवृतिः

ज्ञातिकुलैकसंश्रयां पित्रादिगृहमात्रवर्तिनीम् ॥

अन्यथा भर्तृमतीमुपपतियुक्ताम् । यद्वा सतीमपि अन्यथा असतीं विशङ्कते । अत उक्तदोषात् । परिणेतुः पत्युः । अत्र किमिदमुपन्यस्तमिति राज्ञः प्रतिकूलोक्तिखण्डनेने 'आः कथमिदम्—' इत्यादिवाक्यत्रयेण 'तदिदानीमापन्नासत्त्वेयं गृह्यातां सहधर्मचरणाय' इति स्वोक्तेऽर्थं शार्ङ्गरवेण मुहुः सूचित ॥

## विज्ञप्रिया

अर्थविशेषाख्यामलङ्कृतिमाह—उक्तस्यार्थस्येति । परोक्तस्यार्थस्य उपालम्भविधया यत् अनेकधा उत्कीर्त्तनमित्यर्थः । उत्कीर्त्तनामनुवादः । आः कथमिदमिति । शकुन्तलां स्वीकर्त्तुं बहुशः शाङ्र्गरवेणोक्ते राज्ञोक्तं किमिदमुपन्यस्तमिति । उपहासविधया शाङ्र्गरवेणानेकधा तदनुवादः क्रियते । किमिदमितीति । अत्र वीप्सा बोध्या तदेव अनेकधात्वात् । सतीमपीति । ज्ञातिः पितृपक्षः । अन्यथा भासतीं । स्वबन्धुभिः पितृपक्षीयैः ।

## कुसुमप्रतिमा

उक्तस्येति । उक्तस्यार्थस्य कथितविषयस्य उपालम्भस्वरूपेण निन्दरूपेण यत्तु अनेकधा उत्कीर्त्तनं स्पष्टकथनं स्यात् तत् अर्थविशेषण नाम नाट्यालङ्कारः स्यात्, अर्थः प्रकृतविषयो विशिष्यतेऽवधार्य्यतेऽनेनेति व्युत्पत्तेः ।

यथेति । नितरामत्यन्तम्, लोकवृत्तान्ते निष्णाती लोकव्यवहाराभिज्ञः ।

सतीमिति । जनो लोकः, भर्तृमतीं सधवां स्त्रियं समीमपि ज्ञातिकूलं पितृवंश एव एको मुख्यस्थिरायेत्यर्थः स श्रय आश्रयी यस्यास्तां तथाविधाम् अन्यथा विशङ्कते व्यभिचारित्वेनाशङ्कते । अतो हेतोः प्रिया अप्रिया वा प्रमदा स्त्री स्वबन्धु भिस्तस्याः पित्रादिभिः परिणेतुः समीपे स्थापयितुमिष्यते ।

अत्र "किमिदमुपन्थस्तम्" इति राज्ञा कथितविषयस्य उपालम्भरूपेण अनेकधा उत्कीर्त्तनादर्थविशेषणम् ।

## विमला

अर्थविशेषणमाह, उक्तस्येति—उक्तस्य—कथितस्य, अर्थस्य—विषयस्य, उपालम्भस्वरूपेण—तिरस्काररूपेण, अनेकधा—बहुधा, यत् उत्कीर्त्तनं—सूचनम्, उल्लेख इति यावत्, स्यात्, तत् अर्थविशेषणं स्यात्। ["उपालम्भविशेषेण" इति पाठे तु—प्रतिकुलोक्तिकण्डेनेनेति भावः] ।

उदाहरति, यथेति ।—आः ! कथमिदम्, उक्तमिति शेषः । उपन्यस्तं—वक्तुमारब्धम ("उपन्यासस्तु वाङ्ममुखम" इत्यमरः) । नितराम्—अतिसयेन, लोकवृत्तान्तनिष्णातः,—लोकवृत्तान्ते—लौकिकव्यवहारे इत्यर्थः, निष्णातः,—अभिज्ञः । ["निनदीभ्यां स्नातेः कौशले" (८/३/८९ पा.) इति षत्वम्] ।

ननु "सत्यं परिणीता मया, यतो राजानी हि बहुपत्नीका भवन्ति, किन्तु कथं भवद्भिः सन्देसमानीता ?" इत्याशङ्क्याह, सतीमिति ।—जनः,—लोकः, भर्तृमतीं—सधवां स्त्रियं, ज्ञातिकुलं—पितृकुलमित्यर्थः, एकः,—तन्मात्र इत्यर्थः, संश्रयः,—आश्रयः यस्याः तादृशीं, पित्रादिगृहमात्रवासिनीमित्यर्थः, सतीं—साध्वीमपि, अन्यथा—अन्यरूपाम, [अत्र जनसंसदि तापसस्योक्तौ अनौचित्यदो, परिहाराय कविना दुष्टेति पदमप्रयुज्य अन्यथेति प्रयुक्तमिति बोध्यम्] विशङ्कते—विशेषेण आशङ्कते, सदोषां सम्भावयतीत्यर्थः; अतः (कारणात्) स्वबन्धुभिः स्वस्याः,—स्त्रिया इत्यर्थः, बन्धुभिः,—पित्रादिभिः, प्रमदा—नारी, प्रकृष्टमदेत्यर्थः, (वाङ्क्के तस्याः पितृभवनावस्थाने जनानां दोष, शङ्काऽभावादिति भावः, अत एव स्त्रीसामान्यवाचकपदमपहाय प्रमदेति विशेष,पदमुपात्तम् । "प्रमदः सम्मदे मत्ते स्त्रियामुत्तमयीषिति" इति मेदिनी) प्रिया, अप्रिया वा, भवतु इति शेषः, परिणेतुः,—पत्युः, समीपे इष्यते, रक्षितुमिति शेषः । अत्र "किमिदमुपन्यस्तम्" इति राज्ञ उक्तौ तन्निर्भर्त्सनरूपेण "आः ! कथम्" इत्यादिवाक्यत्रयेण "तदिदानीमापन्नसत्त्वेयं गृह्यतां सहधर्मचरणाय"इति स्वीक्तोऽर्थः शाङ्र्गरवेण मुहुः सूचिताः इति अर्थविशेषणम् । अप्रस्तुतप्रशंसा च अर्थालङ्कारः । वंशस्थविलं वृत्तम् ।

## लक्ष्मी

अर्थविशेषणाक्यामलङ्कारं निरूपयति—उक्तस्यार्थस्येति । उक्तार्थस्य प्रतिपादितविषयस्य उपालम्भविशेषेण प्रतिकूलोक्तिवचनेन यत्तु अनेकधा उत्कीर्त्तनं बहुशः स्पष्टप्रतिपादनं स्यात्, तत् अर्तः प्रस्तुतविषयो विशेष्यतेऽवधार्यतेऽनेनेति अर्थविशेषणं नाम नाट्यालङ्कारः

उदाहरति—यथेति । आः कथमिदमिति । शकुन्तलां स्वीकर्त्तं बहुशः शार्ङ्गरवेणोक्ते राज्ञोक्तं किमिदमिति उपहासविधया शार्ङ्गरवेणानेकधा तदनुवादः क्रियते-कथमिदमिति । अत्र वीप्सा बोध्या । नन्विति प्रश्ने विशेषामन्त्रणे वा, भवान् एव न तु वानप्रस्थाश्रमिणो वयमित्यर्थः, नितराम् अस्मत्तोऽधिकतया लोकवृत्तान्तेषु लोकव्यवहारेषु निष्णातो निपुणः । तथा च तपश्चरणसाधनभूते तपोवने सजीवेयं चिरं न्यासीकृता स्थातुमर्हति नवेत्यत्र लोकव्यवहारवान् भवानेव प्रमाणमिति परमार्थः । लोकवृत्तान्तमेव किमिति दर्शयति— सतीमपीति । जनो लोकः 'ज्ञातिकुलैकसंश्रयां पित्रादिगृहमात्रस्थायिनीम् भर्तृमतीं सधवा स्त्रियं जीवद्भार्तृकामित्यर्थः, सती साध्वीमपि अपिर्विरोधे, अन्यथा उपपतियुक्तां विशक्तते व्यभिचारित्वेनाशङ्कत इत्यर्थः, उत अस्माद्धेतोः स्वबन्धुभिः पित्राद्यात्मीयजनैः प्रिया मनो हारिणी अप्रिया अमनोहरा वा उपयमितुरिति शेषः, प्रकृष्टो मदो यस्याः सा प्रमदा तरुणी परिणेतुः उपयमितुः प्रत्युरित्यर्थः, समीपे सविधेऽवस्थापयितुमिति शेषः, इष्यते अभिलष्यते । तथा चायमेव

लोकवृत्तान्तः । वंशस्थं छन्दः । अत्र शार्ङ्गरवेण किमिदमुपन्यस्तमिति गृह्यतां सहधर्माचरणाय' इति स्वोक्ताऽर्थस्य उपालम्भरूपेणानेकधाप्रतिपादनादर्थविशेषणम् ।

## रुचिरा

अर्थविशेषणं लक्षयति—५४२ **यत्** । **तु** । **उक्तस्य** । **अर्थस्य** । **अनेकधा**ऽनेकैः प्रकारैः । **उपालम्भमिषेण** । उत्कीर्त्तनं सूचनम् । **तत्** । **अर्थविशेषणम्** । **स्यात्** । । ५०३ ॥

उदाहरति—**यथा** । **शाकुन्तले** । राजानं दुष्यन्तम् । **प्रति** । **शार्ङ्गरवः** । **आः** (इदं सखेदमाश्चर्याभिधाने) । **कथम्** । **इदं** शकुन्तलारूपं वस्तूपन्यस्तमिति भाषसे । **नाम** (इदं वाक्यालङ्कारे) । **ननु** । **भवान्** । **एव** । **नितराम**त्यन्तम् । **लोकवृत्तान्तनिष्णातो** लौकिकव्यवहाराभिज्ञः । **जनो** लोकः । **भर्तृमतीं** सजीवितभर्तृकाम् । **ज्ञातिकुलैकसंशयां** ज्ञातिकुलं पितृकुलमेकः संश्रयो यस्यास्तादृशीम् । पितृगृहे वसन्तीमिति भावः । **सतीं** शुद्धचरिताम् । **अपि** । अन्यथा 'असतीय' मित्यात्मना । **विशङ्कते** । **अतः** । **परिणेतुः** । **समीपे** । 'एवे' ति शेषः । **स्वबन्धुभिः** ज्ञातृजनैः । **प्रिया** । **अप्रिया** । **वा** । **प्रमदा** । 'प्रस्थापितु'मिति शेषः । **इष्यते** । अत्र वंशस्थं वृत्तम् ॥३२२ ॥

**प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनम् ॥ २०७ ॥**

यथा बालरामायणे—

**'कालरात्रिकरालेयं स्त्रीति किं विचिकित्ससि ।**

**तज्जगत्त्रितयं त्रातुं ता ! ताडय ताडकाम् ॥'**

---

## विवृतिः

विचिकित्ससि वाध्या न वेति संदेहाश्रयो भवसि । यद्वा घृणी भवसि । तात इति सप्रेमसंबोधनम् ॥

## विज्ञप्रिया

प्रोत्साहनाख्यामलङ्कृतिमाह—प्रोत्साहनमिति । योजनं नियोजनं प्रवर्त्तनमित्यर्थः । कालरात्रीति । रामं प्रति विश्वामित्रस्य वाक्यमिदम् । कालरात्रिवत् कराला भीषणा इयं ताडका । विचिकित्ससि त्यजसि ।

## कुसुमप्रतिमा

प्रोत्सेति । उत्साहगिरा उत्साहजनकवाक्येन कस्यापि जनस्य योजनं कार्य्यविशेषे प्रवर्त्तनं प्रोत्साहनं नाम नाट्यालङ्कारः स्यात्, प्रोत्साह्यते अनेनेति व्युत्पत्तेः ।

कालेति् । कालरात्रिवत् काल्या कालरात्रिमुत्ति वत् काराला भीषण दय ताड़का स्त्री, इति क्वत्वा किं विचिकित्ससि हन्तुं स शय करीष । तत्तम्नात हे तात ! राम ! जगत्तित्य वातुं ताडका राक्षसीं ताड़का प्रहर ।

अत्र ताड़कावधे रामस्य योजनात् प्रीतसाहनम् ।

## विमला

प्रोत्साहनमाह, प्रोत्साहनमिति ।—उत्साहगिरा—उत्साहसूचकवाक्येन, कस्यापि योजनं—नियोज़नं, कार्य्ये प्रवर्त्तनमित्यर्थः, प्रोत्साहनं स्यात् । दशरूककारस्तु "भेदः प्रोत्साहना मता" इत्याह ।

उदाहरति, कालरात्रीति ।—स्त्री इति हेतोः किं विचिकित्मसि ?— हन्धां न वेति संशयं करोषि ? ("विचिकित्मा तु संशयः" इत्यमरः) हे तात । (सप्रेमसम्बीधनमिटम) इयं, राक्षमीति शेषः, कालराचवत्—प्रलयराविवत्, "कालराविर्महाराविर्मीहराविश्व दारुणा" इति दुर्गासप्तशतीवाक्यव्याख्यायां गुप्त यक्षासमाख्याया कालरात्रिशब्दस्य व्याख्या यथा,— कालरात्रिः सर्वजन्तुमणोपलक्षिताकल्परात्रि" इति सर्वमवदातम) कराला—दारुणा, विलोकग्रासिनोत्यणं तब—तस्मात्, जगतां वितयं—विभुवनमित्यर्थः, वातुं—रचितुं,—ताड़का ताड़यजहि । अत्र उत्साहवाक्येन रामस्य ताड़काबधे प्रबर्तनम् ।

## लक्ष्मी

प्रोत्साहनाख्यमलङ्कारं निरूपयति—**प्रोत्साहनमिति** । उत्साहगिरा उत्साहजनकवचनेन कस्यापि जनस्य योजनं कर्मविशेषे योजनं नियोजनं प्रवर्त्तनमित्य**र्थः प्रोत्साह्यते** अनेनेति प्रोत्साहनं नाम नाट्यालङ्कारः ।

उदाहरति—कालरात्रीति । ताडकानामराक्षसीं हन्तुं श्रीरामं प्रति विश्वामित्रस्य उक्तिरियम् । कालारात्रिवत् काल्या कालरात्रिमूर्त्तिवत् कराला भीमा इयं ताडका स्त्री इति कृत्वा कि विचिकित्ससि वध्या न वेति संशयाश्रयो भवसि अथवा घृणीभवसीत्यर्थः । तत्तस्माद्धेतोः हे तात श्रीराम ! प्रेमद्योतकसम्बोधनमिदम्, जगत्रितयं भुवनत्रयं त्रातुं रक्षितुं ताडकां राक्षसीं तारय मारय । अत्र ताडकाहनने श्रीरामस्य निजोजनात्प्रोत्साहनम् ।

## रुचिरा

प्रोत्साहनमं लक्षयति—५४३ **उत्साहगिरोत्साहवर्धिन्या वाचा । कस्यापि । योजनं** कार्यान्तरे प्रवर्त्तनम् । **प्रोत्साहनम्** ॥ ५०४ ॥

उदाहरति—**यथा । बालरामायणे** । (विश्वामित्रो रामं प्रत्याह) **हे तात । इयम् । कालरात्रिकराला** कालरात्रया तुल्यं भयावहा । अतः—**स्त्री । इति । किम् । विचिकित्ससि** विचारयसि । अस्या हननेन स्त्रीहत्या पातकभयं न कर्त्तव्यमिति भावः । **तत्**—यतः कालरात्रिवत् लोकान् हन्तुं प्रवृत्तेयं तस्मादिति भावः । **जगत्त्रितयम्** । त्रातुं रक्षितुम् । **ताडकाम् । ताडय** जहि ॥ ३२३ ॥'

**साहाय्यं संकटे यत्स्यात्सानुकूल्यं परस्य च।**

यथा वेण्याम्— कृपं प्रति 'अश्वत्थामा—त्वमपि तावद्राज्ञः पार्श्ववर्ती भव। कृपः—वाञ्छाम्यहमद्य प्रतिकर्तुम्—' इत्यादि।

---

## विवृतिः

आनुकूल्यमनुकूलाचरूाम्॥

## विज्ञप्रिया

साहाय्याख्यामलङ्कृतिमाह—साहाय्यमिति स्पष्टम्।

अभिमानाख्यम्लङ्कृतिमाह—अभिमान इति। वाक्यात् योऽभि मानः प्रतीयते स एवाभिमानाख्यालाङ्कार एव। मातरिति। पाण्डवेभ्यो राज्यं दातुं गान्धार्या उक्ते दुर्योधनस्याभिमानमूलेयमुक्तिः

## कुसुमप्रतिमा

साहाय्यमिति। सङ्कटे आपदि परस्य यच्च आनुकूल्य तत् साहाय्य नाम नाट्यालङ्कारः स्वात् अत्र व्यत्पत्तिः स्पष्टा।

यथेति। अत्र रणमसङ्कटे क्वपस्य दुर्य्यो धनसाहाय्यप्रवृत्तेः साहाय्यम्।

## विमला

साहाय्यमाइ, साहाय्यमिति। —सङ्कटे—विपदि, परस्य सानुकूल्यम्—तेषु शस्त्रातिपातविधानेन प्रतिकारायेत्यथः। स्पष्टमन्यत्। अत्र रणव्यापारूपे सङ्कटे राज्ञी दुर्व्योधनस्य धानुकूल्यविधानम्।

उदाहरति, यथेति।—प्रतिकर्त्तुं—प्रत्यर्थिनां शस्त्रातिपातं निवार्य्य तेषु शस्त्रतिपातविधानेन प्रतिकारायेत्यथः। स्पष्टनन्यत्। अत्र तणव्यापाररूपे सङ्कटे राज्ञी दुर्य्योधनस्य धानुकूल्यविधानम्।

## लक्ष्मी

साहाय्याख्यमलड्कारं दर्शयति—साहायमिति। सङ्कटे विपत्तौ परस्य यच्च आनुकूल्यम् अनुकूलाचरणं तत् साहाय्यं नाम नाट्यालङ्कारः।

उदाहरति—यथेति।प्रतिकर्त्तुं प्रत्यर्थिनां शस्त्रातिपातं निवार्य तेषु शस्त्रातिपातावधानेन प्रतिकारायेत्यर्थः। स्पष्टमन्यत्। अत्र युद्धसङ्कटे कृपस्य दुर्योधनसाहाय्ये प्रवृत्तत्वात् साहायय्यम्।

## रुचिरा

साहाय्यं लक्षयति—५४४ **सङ्कटे** विपत्तौ। उपस्थित इति भावः। **च**। **यत्**। **परस्य**। **सानुकूलत्त्वं** सहायकात्मना भवनम्। **साहाय्यम्**।

उदाहरति—**यथा वेण्यां** वेणीसंहारे। स्पष्टमन्यत्।

**अभिमानः स एव स्यात्—**

**यथा तत्रैव—'दुर्योधनः—**

**मातः किमप्यसदृशं कृपणं वचस्ते—' इत्यादि ।**

**प्रश्रयादनुवतनम् ॥ २०८ ॥**

---

## विवृतिः

स एव अभिमानालंकार एव ॥ कृपणं क्षुद्रम् । अत्र मातुराक्षेपेणाहंकारः प्रती यते ॥

## लोचन

स एव यो भाषितः स एवाभिमान एव ।

## कुसुमप्रतिमा

अभीति । सोऽभिमानीऽहङ्कार एव अभिमानी नाम नाट्यालङ्कासरः स्यात् ।

मातरिति । सुक्षविधा क्व भवती क्व च दीनयैषा । निर्वतसले सुतशतस्य बिपत्तिमेतां त्वं नानुचिन्तयसि रक्षसि मामयीय्म् ॥" इति शेषदवयम् ।

अत्र दुर्य्योधनस्याभिमानदभिमानः ।

## विमला

आभिमन्माह, अभिमान इति । —स एव— अभिमानालङ्कार एव ।

उदाहरति, यथेति । —तथेति ।—तत्रैव—वेणौसंहारे एव । मातारिति ।—भौमेन दुःशासनादो मारिते तेन सह पुनर्योङ्घमीहमानस्य मात्रा गान्धर्य्या च निषिङ्गस्य दुर्य्योधनस्येयमुक्तिः । हे मातः !—गान्धारि ! ते—तव, सुक्षचियाया इति यावत, वचः;—वचनं, किमपि—अशोभनं, वक्रमनर्हमित्यर्थः, असदृशम— अयीग्यं, क्रपर्ण—क्षद्रम्; "क्रमणाम्" इत्यव "विक्वतम्" इति पाठे—विपरीतम् । चरमपादवयो त्वेषा—"सुक्षक्षिया क्व भक्तौ क्व च दोनतेषा । निर्वत्सले ! सुतशतम्य विपत्तिमेतां, त्वं नानुचिन्तयसि रक्षसिसामयोग्यम् ॥" इति । अत्र मातुरुक्षेपेण दुर्य्योधनस्य अभिमानः मूच्यते । वसन्ततिलकं वृत्तम् ।

## लक्ष्मी

अभिमानाय्मलङ्कारं निरूपयति—अभिमान इति । वाक्यान् योऽभिमानः प्रतीयते सोऽभिमानोऽङ्कार एव अभिमानो नाम नाट्यालङ्कारः ।

उदाहरति—तत्रैवेति । वेण्यामेवेत्यर्थः । मातरिति । पाण्डवेभ्यो राज्यं दातुं गान्धार्या उक्ते दुर्योधनस्याभिमानमूलोक्तिरियम् । अत्रावशिष्टपद्यांशस्तु—

**सुक्षत्रिया क्व भवती क्व च दीनतैषा।**

निर्वत्सले सुतशतस्य विपत्तिमेतां त्वं नानुचिन्तयसि रक्षसि मासयोग्यम् ॥ इति । अत्र मातरित्याक्षेपेण दुर्योधनस्याभिधानादभिमानः ।

## रुचिरा

अभिमानं लक्षयति—५४५ **अभिमानः सोऽभिमानः एव । स्यात्।**

उदाहरति—**तथा । तत्र** वेणीसंहारे । एव । **दुर्योधनः** (गान्धारीं प्रत्याह) । **'मात'रित्यादि** । आदिपदेन 'सुक्षत्रिया क्व भवती च दीनतैषा निर्वत्सले सुतशतस्य विपत्तिमेतां त्वं नानुचिन्तयसि, रक्षसि भागयोग्यम् ॥' इत्यंशस्य ग्रहणम् । अत्र विपत्तावपि मातुराक्षेपपूर्वकं तथोद्यमनमित्यभिमानः । अर्थः स्पष्टः ।

**प्रश्रयादनुवर्तनम् ॥२०८ ॥**

**अनुवृत्तिः—**

यथा शाकुन्तले—'राजा—(शकुन्तलां प्रति ।) अयि, तपो वर्धते । अनुसूया—दाणिं आदिधिविसेसलाहेण' इत्यादि ।

---

## विवृतिः

प्रश्रयाद्विनयात् । अनुवृत्तिः प्रत्युत्तरादिना सत्कारः ॥ दाणिं इति । 'इदानीमतिथिविशेषलाभेन' इति संस्कृतम् ॥

## विवृतिपूर्तिः

मातरिति । चरमपादत्रती तु—'सुक्षत्रिया क्व भवती क्व च दीनतैषा । निर्व त्सले सुतशतस्य विपत्तिमेतां त्वं नानुचिन्तयसि, रक्षसि सामयोग्यम् ॥' इति ॥

## विज्ञप्रिया

अनुवृत्त्याख्यामलङ्कृतिमाह— प्रश्रयादिति । प्रश्रयो विनयः । अनुवर्त्तनं प्रीणानम् । अयीति ।अत्र राज्ञोऽनसूयायाः परस्परं प्रीणानम् ।

## कुसुमप्रतिमा

अश्रयादिति । प्रश्रयात् विनयात् अनुवर्तनमानुगत्यम् अनुदृर्त्तिर्नाम नाट्यालङ्कारः स्यात् । अवापि व्युतपत्तिः स्पष्टा ।

यथेति । "इदानौमतिथिविशेषलाभेन ।" इति संस्कृतानुवादः । अवीभयवाक्येनैवउभयानु वर्त्तनसूचनादनुदृत्तिः ।

## विमला

अनुवृत्तिमाह, अश्वयादिति ।—प्रश्नयात—विनयात्, अनुवर्त्तनम्—अनु सरणां, प्रतिवचनादिना सन्तीष-णमिति यावत, अनुवृत्तिः ।

उदाहरति, दाणिमिति । "इदानीमतिथिविशेषलाभेन" इति संस्कृतम् । अतिथिविशेषस्य—अतिथिश्रेष्ठम्य, भक्त इत्यर्थः । अन्धत् स्पष्टत् । अत्र अनसूयायाः राजानं प्रत्यत्तरदाने प्रश्रयपूर्विं काऽनुवृतिः ।

## लक्ष्मी

अनुवृत्त्याख्यमलङ्कारं निरूपयति—प्रश्रयादिति । प्रश्रयो विनयस्तस्मात् अनुवर्त्तमं प्रीणनम् प्रत्युत्तरादनि सत्कार इत्यर्थः, अनुवृत्तिर्नाम नाट्यालङ्कारः ।

उदारिकम—**यथेति**। **अयीति**—कोमलामन्त्रणे। तपो वर्द्धते? निर्विघ्नेन तपो विद्यते ननु? इत्यर्थः। राजा पृष्ठे जल्लयाधोमुखी प्रत्युत्तरमदानां दृष्ट्वा प्रत्युत्तरयति अनसूया— **दाणिमिति**। **'इदानीमतिथिविशेषलाभेन'** इति संस्कृाम्। विशिष्टोऽतिथिरिति अतिभिविशेषस्तल्लाभेन प्राप्त्या भवल्लाभेनेति भावः, **'तपो वर्द्धते'** इति पूर्वेणान्वयः। अत्र राज्ञोऽनसूयायाश्च परस्परमनुवर्त्तनसूचनादनुवृत्तिः।

## रुचिरा

अनुवृत्तिं लक्षयति—५४६ **प्रश्रयाद्विनयेन**। अनुवर्त्तनमनुकूलात्मना भवनम्। **अनुवृत्तिः**।।५०५॥

उदाहरति—तथा...**दाणिं** इदानीम्। **अदिधिविसेसलाहेण** अतिथिविशेषलाभेनातिथिवरस्य भवतो लाभेनेति यावत्। स्पष्टमन्यत्।

**भूतकार्याख्यानमुत्कीर्तनं मतम्।**

**यथा बालरामायणे—**

**अत्रासीत्फणिपाशबन्धनविधिः शक्त्या भवद्देवरे**

**गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः।' इत्यादि।**

---

## विवृतिः

भवद्देवरे लक्ष्मणे। अत्र सीतां प्रति भूतकार्यं श्रीरामेणाख्याम्॥ स्वयं याचनं यथा— 'भो लङ्केश्वर ! दीयतां जनकजा रामः स्वयं याचते—' इत्यादि॥

## विवृतिपूर्तिः

अत्रेति। उत्तरार्धं तु— 'दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं लम्भितः केनाप्यत्र मृगाक्षि ! राक्षसपतेः कृत्ता च कण्ठाटवी॥' इति॥

## विज्ञप्रिया

उत्कीर्त्तनाख्यामलङ्कृतिमाह— भूतेति। भूतकार्यं पूर्ववृत्तम्। न च पूर्वसिद्धार्थकथनात्मकं यत् निरुक्तिरूपं नाट्यलक्षणामुक्तं तद्भेद इति वाच्यम्। तत्र स्वकृतिरूपस्य पूर्वसिद्धार्थस्य निहताशेषकौरव्य इत्यादिना कथनमत्र तु स्वपरसाधारणकृतपूर्ववृत्तस्य इति तद्भेदः। अत्र आसीदिति पुष्पकेणागमने रणास्थलं सीतां दर्शयतो रामस्य वाक्यमिदम्। भवद्देवरे लक्ष्मणो वक्षसि रावणेन शक्त्या गाढं ताडिते सति द्रोणाद्रिः गन्धमादनाद्रिः अत्र हनुमता आहृतः। देवरत्वकथनम् अनुरुगोत्पादनाय। दिव्ये लक्ष्मणशरैः इन्द्रजित् लोकान्तरं प्रापितः। हे मृगाक्षि ! राक्षसपतेः रावणस्य कराठाटवी केनाप्यत्र कृत्ता अर्थात् मया।

## कुसुमप्रतिमा

भूतेति। भूतकार्य्यस्य अतौतदृत्तान्स्य आख्यान कथनम् उतकीर्त्तन नां नाट्यालङ्कारी मतम्। उत्तकीर्त्त नमाख्यानमिति च नार्थान्तरम।

भवेति।

**"दिव्यैन्द्रिजिदव लक्षणशरैर्लोकान्तरं लम्भितः।**

**केनाप्यव मृगाक्षि ! राक्षसपतेः कृत्ता च कणठावी॥"**

इति शेषपादहयम्। हे मृगाक्षि ! सोते ! अव स्थाने फणिपाशन्नविधिरावधीरिन्द्रजित्कर्त्तृ क नागपाश-बन्धनमासीत्। अत्र च स्थाने भवत्या देवरे लक्षणे शक्त्या शक्तिशेलहारा रावणेन वक्षसि गाढ़ं ताड़िते सति हनुमाता ट्रीणाट्रिर्गन्धमादनपर्व त आहृत आनीतः।

अत्र नागपांशवन्धनादौनामतीतकार्य्याणामाख्यानादुत् कीर्त्त नम्।

## विमला

उत्कीर्त्तनमाह, भूतेति । —भूतस्य—वृत्तस्य, कार्य्यस्य आख्यानं—कथनम्, उत्कीत्तनं मतम् ।

उदाहरति, अत्रेति ।—अत्र—अस्मिन् देशे, फणिनां—नागानां, पाशस्तेन बन्धनं तस्य विधिः,—विज्ञानम्, आसीत्; अत्र च भवद्देवरे—भवत्याः,—तव, सीताया इत्यर्थः देवरः,—लक्षणा इति भावः, तस्मिन, शक्त्या—मेघनादस्य शक्तिनामास्तविशेषेण, वक्षसि गाढ़म—अत्यर्थं, ताड़िते—प्रकृते सति इत्यर्थ, हनुमता, तत्सञ्जीवनार्थमिति शेषः, दोणाढिः,—गन्धमादनपर्वत इत्यथंः, आहृतः । एतम्य पराङ्कैः त्वेतत्,—"दिव्यैरिन्द्रजिदव लक्षणशरैलीकान्तरं लभितः, केनाप्यत मृगाक्षि । राक्षसपतेः कृत्ता च कण्टाटवौ ।" इति । अत्र सोतां अति रामस्य भूतस्य नाम आशबन्धनादिः कार्य्यस्य कथनम् । शार्दूलविक्रीड़ितं वृत्तम् ।

## लक्ष्मी

उत्कीर्त्तनाख्यमलङ्कारं निरूपयति—भूतेति । भूतकार्यस्य पूर्ववृत्तान्तस्य आख्यानं कथनम् उत्कीर्त्तन नाम नाट्यालङ्कारः । न च पूर्वसिद्धार्थकथनात्मकं यत् निरूक्तिरूपं नाट्यलक्षणमुक्तं तदभेद इति वाच्यम्, तत्र स्वकृतिरूपस्य पूर्वसिद्धार्थस्य 'निहताशेषकौरव्य' इत्यादिना कथनमत्र तु स्वपरधारणकृतातीतघृत्तान्तस्येति भेदात् ।

उदहरति—यथेति । अत्रासीदिति । अत्रोत्तरार्द्धन्तु—

**दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं लम्भितः ।**

**केनाऽप्यत्र मृगाक्षि ! राक्षसपतेः कृत्ता च कण्ठाटवी ।। इति ।**

शबन्धनविधिः आवयोरिन्द्रजित्कर्त्तृकं नागपाशबन्धनमासीत्, अत्र च भवद्देवरे लक्ष्मणे देवरत्वकथनमनुरुगोत्पादनाय रावणेन शक्त्य वक्षसि गाढं ताडति प्रहारिते सति द्रोणाद्रिः इन्द्रजित् लोकान्तरं लम्भितः प्रापितः, अत्र राक्षसपतेः रावणस्य कण्ठाटवी केनाऽपि कृत्ता मया छिन्नेत्यर्थः । अत्र सीतां प्रति नागपाशबन्धनादीनां भूत कार्याणां श्रीरामेणाख्यानादुत्कीर्त्तनम् ।

## रुचिरा

उत्कीर्त्तनं लक्षयति—५४७ **भूतकार्याख्यानम्**भूतस्य कार्यस्य कथनम् । **उत्कीर्त्तनम्** । **मतम्** ।

उदाहरति—**यथा** । **बालरामायणे** (श्रीरामोऽयोध्यां प्रत्यावर्त्तमानस्तंत प्रदेशं दर्शयति) । हे **मृगाक्षि** (इदं चतुर्थचरणगतम्) । **अत्र** । **फणिपाशबन्दनविधिः** फणिनो नागस्य पाशस्तेन बन्धनं तस्य विधिः । **आसीत्** । **अत्र** । **शक्त्येन्द्रजिता** प्रयुक्तेनामोधेनायुधविशेषेण । **भवद्देवरे** भवत्या देवरे लक्ष्मणे । **गाढम्** । **वक्षसि** (विषये सप्तमीयम्) । **ताडिते** प्रहृते सति । **हनुमता** । **द्रोणाद्रि**द्रोणपर्वतः । **आहृत** आनीतः ।' **इत्यादि** । आदिपदेन 'दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं लम्भितः केनाप्यत्र मृगाक्षि ! राक्षसपतेः कृत्ता च कण्ठाटवी इति पादद्वयस्य ग्रहणम् ।

**या तु क्वञ्चा या स्वयं दूतमुखेन वा ॥ २०९ ॥**

**यथा—**

**'अद्यापि देहि वैदेहीं दयालुस्त्वयि राघवः ।**

**शिरोभिः कन्दुकक्रीडां किं कारयसि वानरान् ॥'**

---

## विवृतिः

दूतमुखेन याचनमाह—अद्यापीति । रावणं प्रत्यङ्गदस्योक्तिरियम् ॥

## विज्ञप्रिया

याच्ञारूपामलङ्कृतिमाह—याच्ञेति । दूतमुखेन वा इत्युक्तेः दूतमुखेन याचनोचितवस्तुयाच्ञा लभ्यते । तेन तत् पश्येयमनङ्गमङ्गलगृहमित्यादौ उदाहरणके आशंसनाख्यालङ्कारेणैव भेदः । अद्यापीत्यादिकं रावणोऽङ्गदस्य वाक्यम् । शिरोभिरिति । रामच्छिन्नत्वच्छिरोभिरित्यर्थः ।

## कुसुमप्रतिमा

याञ्चेति । स्वयमात्मना दूतमुखेन वा क्वपि कुत्रापि जने याञ्चना यस्य कस्यापि विषयस्य प्रार्थना, सा तु याञ्चा ना नाट्यालङ्कारः स्यात् । तव स्वयं याञ्चायामुदाहरणम्—"भी लङ्केश्व ! दीयसाम्" इत्यादि ।

दूतमुखेन याञ्चायामुदाहरुमाह यथेति । हे रावण ! अद्यापि अधुनापि वैदेहीं सीतां देहि; राघवी रामः त्वयि दयालुभं वत्विति शेषः । शिरीभिदं शभिरातमनी मस्तकैः वानरान् कन्दुकक्रीड़ां किं कारयसि ।

## विमला

याञ्चामाह, याञ्चेति । —स्वयं, वा दूतमुखेन क्वपि जने या याञ्चाप्रार्थना, सा याञ्चा ।

दूतमुखेन उदाहरति, अद्यापीति । —रावणं प्रति अङ्गदस्योक्रिरियम् । अद्यापि—इदानीमपि, वैदेहीं—सीतां, देहि—प्रत्यर्पय, राघवः,—रामः, त्वयि—आततायिनि, दयालुः, अस्तीति शेषः, शिरोभिः,—रामवाणाप्रहारेण निपतितैः मस्तकैः, दशभिरिति भावः, वानरान् किं—कथं, कन्दुकक्रीडां कारयसि ? इति भावः । अत्र "हकीरन्धतरस्याम" (१/४/५३ पा०) इति सूत्रेण "वानरान्" इति प्रयोज्यकर्त्तुः पाक्षिकं कर्मत्वम् स्वयं याञ्चाया उदाहरणाम्;—"भी लङ्केश्व ! दीयतां जनकना रामः स्वयं याचते" इत्यादि ।

## लक्ष्मी

याच्ञरूपमलङ्कारं निरूपयति— याच्ञति । स्वयमात्मना दूतमुखेन चारमुखेन वा क्वापि कुत्रपि जने याच्ञा यस्य कस्यापि वस्तुनोऽभ्यर्थना सा तु याच्ञा नामालङ्कारः । तत्र स्वयं याचनं यथा— 'भो लङ्केश्वर ! दीयतां जनकजा रामः स्वयं याचते' इत्यादि ।

दूतमुखेन याच्ञामुदाहरति— अद्यापीति । रावणं प्रति अङ्गदस्योक्तिरियम् । अद्यापि इदानीमपि वैदेहीं जनकात्मजां देहि प्रयच्छ राघवः श्रीरामः त्वयि दयालुर्भवत्विति शेषः, शिरोभिः रामबाणैः पातितैर्दशभिः स्वमस्तकैः वानरान् कपीन् कन्दुकक्रीडां किं कारयसि सीताया असमर्पणे शिरसां रामेण छिन्नत्वात्कपयो मुण्डान्यादाय कन्दुकवत् क्रीडयिष्यन्तीति त्वरितमेव राघवाय सीतां प्रयच्छेति भावः । अत्राङ्गदमुखेन प्रार्थनाविधानाद् याच्ञा ।

## रुचिरा

याच्ञां लक्षयति—५४८ **याच्ञेत्यादिना** । स्पष्टोऽर्थः । इदं तु बोध्यम्—इयं स्वयं कृता दूतद्वारा कृता चेति द्विविधा तत्राद्या यथा—'बो लङ्केश्वर ! दीयतां जनकजा रामः स्वयं याचते' इत्यादौ । द्वितीया तूदाहृतैव ग्रन्थकृतेति ॥ ५०६ ॥

उदाहरति—**यथा—'अद्यापि । वैदेहीं** विदेहनन्दनीम् । **देहि । राघवो रामः । त्वयि । दयालुरकृतकोपः** । अथ—**किम् । शिरोभिः** 'रामबाणैः पातितैः स्वस्य दशभिः' इति शेषः । **वानरान्** वानराणाम् । (णिजन्तत्वे कर्मपदमिदम्) । **कन्दुकक्रीडाम् । कारयसि** । अङ्गदस्य रावणं प्रत्युक्तिरियम् ॥ ३२४ ॥'

**परिहार इति प्रोक्तः कृतानुचितमार्जनम्।**

**यथा—**

**'प्राणप्रयाणदुःखार्त उक्तवानस्म्यनक्षरम्।**

**तत्क्षमस्व ! विभो, किं च सुग्रीवस्ते समर्पितः ॥'**

---

## विवृतिः

कृतं यदनुचितं कर्म तस्य मार्जनं तज्जन्यापराध क्षमापनम् ॥ प्राणेति । विमो श्रीराम ॥

## विज्ञप्रिया

परिहाररूपामलङ्कृतिमाह—परिहार इतीति । प्राणप्रयाणमिति । रामं प्रति म्रियमाणस्य वालिन उक्तिरियम् ।

## कुसुमप्रतिमा

परीति । क्वतस्य अनुचितस्य मार्जन परिहार इति नाम नाट्यालङ्कारः प्रोक्तः । अनुचितस्य परिहरणात् परिहार इति संज्ञा ।

प्राणीति । प्राणप्रयाणे तव प्रहारात् प्राणागमनकाले यहुख तेन आत्तः पीड़ितः सर यदन क्षरम् अप्रशस्तवर्ण त्वया तपस्विचाण्डाल !" इत्याद्यसङ्गतवाक्यम् उक्तवानघ्मि; हे विभी ! तत् क्षमस्व, किञ्च अपि च सुग्रेवो ममानुचः ते तुभ्यं समपितो दत्तः ।

अत्र क्वतकटूक्रिरूपानुचितमाजं नात् परिहारः ।

## विमला

परिहारमाह, परिहार इति ।—क्वतस्य अनुचितस्य, कर्मणा इति शेष, मांर्जनं—तज्जन्यापराधक्षमापनं, परिहार इति प्रोक्तः ।

उदाहरति, प्राणेति ।—रामं प्रति वालिन उक्तिः । प्राणप्रयाणे प्राणन्तसमये, यत् दुःखं—यातना, तेन आर्त्तः,—व्यथितः सन्, यत् अनक्षरं—दुरक्षरमित्यर्थः, उक्तवान्—"त्वया तपस्वियाण्डाल !" इत्यादि कटुवाक्यं कथिवान्, अस्मि, हे विभो !—श्रीराम ! तत् क्षमख; किञ्च—अन्यच्च, सुगोवः,—मम कनीयान् भ्राता, ते—तुभ्यं, समर्पितः । अब अनुचितकार्य्यस्य पूर्वक्वतस्य क्षमाप्रार्थनारूपं मार्जनम् ।

## लक्ष्मी

परिहाररूपमलङ्कारं निरूपयति—परिहार इति। कृतं विहितं यदनुचितं कर्म तस्य मार्जनं तज्जन्यापराधक्षमापनम् अनुचितस्य परिहरणात् परिहार इति नाम नाट्यालङ्कारः प्रोक्तः ।

उदाहरति—प्राणप्रयाणेति। श्रीरामं प्रति म्रियमाणस्य बालिन उक्तिरियम्। प्राणप्रयाणे तव प्रहारात् प्राणगमनसमये यद्दुःखं व्यथा तेन आर्त्तः पीडितः सन् यत् अनक्षरम् अहं 'त्वया तपस्विचाण्डाल' इतयाद्यनुचितवचनम् उक्तवानस्मि, हे विभो श्रीराम ! तत् अनुचितं कर्म क्षमस्व सहस्व, किञ्च अपि च सुग्रीवो ममानुजन्मा ते तुभ्यं समर्पितः सेवार्थं दत्तः अत्र पूर्वकृतकटुवचनरूपानुचितकर्मणों मर्जनात् परिहारः।

## रुचिरा

परिहारं लक्षयति—५४९ **कृतानुचितमार्जनं** कृतस्यानुचितस्य कर्मणो मार्जनम्। **परिहारः। इति। प्रोक्तः**।

उदाहरति—**यथा**। '**हे विभो** प्रभो ! **प्राणप्रयाण दुःखार्त्तः** प्राणानां प्रयाणं तस्य दुःखेनार्त्तुः सन्। यतअक्षरं दुर्वचः। **उक्तवान्। अस्मि। तत्। क्षमस्व। किंच—ते** तव। **सुग्रीवः। समर्पितः** इतः परमस्य रक्षणं त्वदधीनमिति भावः। मरणासन्नस्य वालिनः श्रीरामं प्रत्युक्तिरयम्॥ ३२५॥'

**अवधीरितकर्तव्यकथनं तु निवेदनम्॥ २१० ॥**

यथा राघवाभ्युदये—'लक्ष्मणः—आर्य, समुद्राभ्यर्थनया गन्तुमुद्यतेसि। तत्किमेतत्।'

---

## विवृतिः

अवधीरितेति। अवज्ञातेत्यर्थः॥

## विज्ञप्रिया

निवेदनाख्यामलङ्कृतिमाह—अवधीरितेति। अवधीरितम् अवधारणा। तत्र किमेतदित्यर्थः। अवधीरणौवात्र कर्त्तव्या इत्यर्थः।

## कुसुमप्रतिमा

अवेति। अवधीरितस्य प्रागवज्ञातस्य विषयस्य कर्त्तव्यकथन कत्तव्यत्वेन ज्ञापन निवेदन नाम नाट्यालङ्कारः स्यात्।

यथेति। एतदव्यापारान्तरानुष्ठानेन निवर्त्तन किम्? वत्रेव गन्तुकूचि तमिति भावः। अत्र प्रागवधीरि समुद्रान्तिके गमनस्य कर्त्तव्यत्वज्ञापनान्निवेदनम्।

## विमला

निवेदनमाह, अथधौरितेति। —अवधौरितस्य—अवज्ञातस्य, तिरस्कत विषयस्येति यावत्, कर्त्तव्यकथनं—कर्त्तव्यत्वेनाभिधानं, निवेदनम्।

उदाहरति, यथेति।—स्पष्टम्। अत्र समुद्राभ्यर्थनया गमनं चिरमवज्ञातं, कथं पुनस्तज्ञारा गमनमिति लक्ष्मणस्य तहारणं निवेदनम्।

## लक्ष्मी

निवेदनाख्यमलङ्कारं निरूपयति—अवधीरितेति। अवधीरितस्य पूर्वमवज्ञातस्य विषयस्य कर्त्तव्यकथनं विधेयत्वे बोधनं निवेदनं नाम नाट्यालङ्कारो भवेत्।

उदाहरति—यथेति। समुद्राभ्यर्थनया सागरप्रार्थनया। एतत् व्यापारान्तरविधानेन परावर्त्तनं किम? तत्रैव गन्तुमुचितमित्याशयः।

अत्र पूर्वमवधीरितस्य सागरसमीपे गमनस्य विधेयत्वबोधनान्निवेदनम्।

## रुचिरा

निवेदनं लक्षयति—५५० अवधीरितकर्त्तव्यकथनकथनमवधीरितमवज्ञातं यत् कर्त्तव्यं कार्यं तस्य कथनम्। **तु। निवेदनम्।**। ५०७॥

उदाहरति—**यथा। राघवाभ्युदये।** स्पष्टोऽर्थ। समुद्रप्रसादेन गमनं नोचितमिति भावः।

**प्रवर्तनं तु कार्यस्य यत्स्यात्साधुप्रवर्तनम्।**

यथा वेण्याम्— 'राजा— कञ्चुकिन्, देवस्य देवकीनन्दनस्य बहु मानाद्वत्सस्य भीमसेनस्य विजयमङ्गलाय प्रवर्तन्तां तत्रोचिताः समारम्भाः।'

---

## विवृतिः

अर्थस्य प्रयोजनस्य अवधारणं कर्तव्यत्वनिश्चयः॥ इतः समरात्। अत्र समरः कर्तव्य एवेत्यर्थावधारणम्॥

## विज्ञप्रिया

प्रवर्त्तनाख्यामलङ्कृतिमाह—प्रवर्त्तनं तु इति। कार्यस्य सम्बन्धि यत् साधुनी मङ्गलस्य प्रवर्त्तनं तत् इत्यर्थः। आख्यानरूपामलङ्कृतिमाह—पूर्ववृत्तोक्तिरत्र क्रोधमूलकत्वेन विशेषणीया। तेन भूतकार्य्याख्यानरूपात् उत्कीर्त्तनालङ्कारात् भेदः।देशः सोऽयमित्यादि। अश्वत्थाम्नः क्रोधात् पूर्ववृत्तोक्तिः।

## कुसुमप्रतिमा

प्रवर्त्तनमिति। कार्य्य यस्य कस्यचित् कर्म्मणः, यत् साधुवर्त्तन साधुः समारम्भः, तत्तु वर्तन नाम नाट्यालङ्कारः स्यात्।

यथेति। बहुमानात् अलङ्घनीयादेशत्वरूपात्यादरात्। उपचिता आयोजिताः समारम्भा मङ्गलघटस्थापनादियापाराः।

अत्र माङ्गलिककार्य्यस्य साधुसमारम्भात् प्रबर्त्तनम्।

## विमला

प्रवर्त्तनमाह, प्रवर्त्तनमिति।—कार्य्यस्य यत् साधु प्रवर्त्तनं, तत् प्रवर्त्तनं स्यात्।

उदाहरति यथेति। —उपचिताः,—वर्ङ्घिताः, समारम्भाः,—समुदयोगाः। अत्र युद्धकार्य्यस्य सम्यक् प्रवर्त्तनम्।

## लक्ष्मी

प्रवर्त्तनाख्यमलङ्कारं निरूपयति— प्रवर्त्तनन्त्विति। कार्यस्य यस्य कस्यचित् कर्मणः सम्बन्धि यत् साधु मङ्गलस्य प्रवर्त्तनं समारम्भः तत्तु प्रवर्त्तनं नाम नाट्यालङ्कारः स्यात्।

उदाहरति—यथेति। राजा युधिष्ठिरः। देवस्य भगवतः देवकीनन्दनस्य देवकीपुत्रस्य श्रीकृष्णस्येत्यर्थः बहुमानात् अतिसम्माननीयत्वात्, एतदादेशमन्यथा कर्त्तुं न युक्तमितिभावः। विजयमङ्गलाय शत्रुविजयरूपमङ्गलाय, तदुपचिताः मङ्गलयोग्याः समारम्भाः मङ्गलकलशस्थापनादिव्यापाराः प्रवर्त्यन्तां क्रियन्ताम्। अत्र माङ्गलिककर्मणः साधुसमारम्भात् प्रवर्तनम्।

## रुचिरा

प्रवर्त्तनं लक्षयति—५५१ **यत्**। **कार्यस्य**। **साधु** शोभनं यथा भवेत्तथा। **प्रवर्त्तनम्**। तु। प्रवर्त्तनम्।

उदाहरति—**यथा**। **वेण्यां** वेणीसंहारे। **राजा युधिष्ठिरः**। स्पष्टमन्यत्।

**आख्यानं पूर्ववृत्तोक्तिः—**

यथा तत्रैव—

'देशः सोऽयमारातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः—' इत्यादि ।

---

## विवृतिपूर्तिः

देश इति। पादत्रयं तु—'क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः। तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति में यद्रामेण कृतं तदेव कुरुते द्रौणायनिः क्रोधनः ॥' इति ॥

## कुसुमप्रतिमा

आख्यानमिति। पूर्ववृत्तस्य अतीतघटनाया उक्तिराख्यानं नाम नाट्यालङ्कारः स्यात्। तावत्म सम्बन्धतीतघटनाया उक्तो उत् कौत नम्, परसम्बन्धतीतघटनया उक्तौ तु आख्यानमित्यनयोभेदः ।

यथेति । क्षादेव तथाविधः परिभक्तास्य केशग्रहः । तान्ये वाहितशस्वधम्नगुरुस्यस्त्राणि भास्वन्ति में, यट्रमिण कृत तदेव कुरुते द्रोणयनिः क्रोधनः ॥" इति शेषपादवधम् ।

अत्र परशुरुमक्वतघटतीक्रेराख्यानम् ।

## विमला

आख्यन्माह, आख्यानमिति । —पूर्ववृत्तस्य—पुराघटितस्य, उक्तिः,—कथनम्, आख्यानम् ।

उदहरति, यथेति ।—तत्रैव—वेणौसंहारे एव । देश इति । —सः,— पुरुणादौ श्रुतः, अयं—प्रत्यक्षः कुरुक्षेत्ररूपी देशः, यस्मिन्—यदेकदेशे, समन्तपञ्चकनामके, ड्कदाः,—जलाशयाः, अरातीनां—पितृवधकर्त्तृणां हैहयानां, शोणितानि जलानीव तैः पूरिताः । अन्त्वं पादवयं तु एतस्य,—"क्षवदिव तथाविधः परिभव स्तुतस्य केशग्रहः । तान्धेवाहितशस्त्रधस्मरगुरूणाणि भास्वन्ति में, यद्रामेण क्वतं इति कुरुते द्रौणायनिः क्रोधनः ॥'- अत्र हैहयशोणिहै दपूणादिकं पूर्ववृतान्तः । शार्दूलविक्रौड़ितं वृत्तम् ।

## लक्ष्मी

आख्यानरूपलङ्कारं निरूपयति— आख्यानमिति । पूर्ववृत्तस्य व्यतीतवृत्तान्तस्य उक्तिः कथनम् आख्यानं नाम नाट्यालङ्कारः । पूर्ववृत्तोक्तिरत्र क्रोधमूलकत्वेन विशेषणीयम्, तेन भूमार्याख्यानरूपात् उत्कीर्त्तनालङ्कारात् भेदः ।

उदाहरति—यथेति । देशः सोऽयमिति । केशेषु प्रहत्य समाहितस्य मध्ये समरं द्रोणस्य मारणे क्रुद्धस्याश्वत्थाम्न उक्तिरियम् । अवशिष्टपादत्रयं तु—

**क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।**

**तान्येवाहितशस्त्रघस्मरगुरुण्यस्त्राणि भस्वन्ति में**

**यद्रामेण कृतं तदेव कुरुते द्रौणायनिः क्रोधनः ॥ इति ।**

अत्र अश्वत्थाम्नः क्रोधात् परशुरुमकृतवृत्तान्तस्य कथनादाख्यानम् ।

## रुचिरा

आख्यानं लक्षयति—५५२ **पूर्ववृत्तोक्तिर्भूतपूर्वस्येतिवृत्तस्य कथनम् । आख्यानम् ।**

उदाहरति—**यथा । तत्र** वेणीसंहारे । **एव । 'यस्मिन्** यस्यां भूमौ । **अरातिशोणितजलैः**रातीनां शत्रूणां शोणितरूपैर्जलैः । **ह्रदाः** (अत्र बहुवचनं पञ्चानां स्यमन्तकानां बोधकम्) । **पूरिताः । सः । अयम् । देशः ।'** इत्यादि । आदिपदेन 'क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे । यद्रामेण कृतं तदेव कुरुते द्रोणायनिः क्रोधनः । इति पादत्रयस्य ग्रहणम् । केशेषु प्रहृत्य समाहितस्य मध्ये समरं द्रोणस्य हनने कुपितस्याश्वत्थाम्न उक्तिरियम् ।

**युक्तिरर्थावधारणम् ॥ २११ ॥**

यथा तत्रैव—

**'यदि समरमपास्य नास्ति मृत्योर्भयमिति युक्तमितोऽन्यतः प्रयातुम्।**
**अथ मरणमवश्यमेव जन्तोः किमिति मुधा मलिनं यशः कुरुध्वे ॥'**

---

## विज्ञप्रिया

युक्तिरूपामलङ्कृतिमाह—युक्तिरिति। हेतुप्रदर्शनेन परेषां कार्यार्थनिश्चायनमित्यर्थः। यदि समरमिति। द्रोणस्य मरणेन पलायमानान् वीरान् प्रति अश्वत्थाम्न उक्तिरियम्। अत्रोत्कहेतुप्रदर्शनेन युद्धकर्त्तव्यतानिश्चायनम्।

## कुसुमप्रतिमा

युक्तिरिति। अर्थावधारणं विषयविशेषनिषयो युक्तिर्नाम नाट्यालङ्कार स्यात्। निययपक्ष योगाट्युक्तिरिति संज्ञा।

यदीति। समरम् अपास्य विहाय गतस्यैवेति शेषः, यदि मृत्यीर्भय नास्ति तदा इती युङ्गष्टलात अन्वतः अन्धस्थाने प्रयातु गन्तु युक्तम्। अथ जन्तोः प्राणिनः अवश्यमेव निश्चिवमेव इति हेतो मुधा तथा यशः कि कथ मलिन पलायनापवादेन कलङ्कित कुरुध्वम्।

अत्र मरणनिश्रयेन युङ्गस्य कर्त्तव्यतानिश्चयादयुक्ति।

## विमला

युक्रिमाह, युक्तिरिति।—अर्थस्य—प्रयोजनस्य, अवधारणं—कर्त्तव्यत्वनिश्चयः, युक्तिः।

उदाहरति, यदीति। —यदि समरं—युद्धम, अपास्त्र—त्यक्वा, (स्थितस्येत्यध्याहार्य्वं) मृत्यीः भयं नास्ति—न भवेत् इत्यर्थः, तदा इतः,—समरात्, अन्धत्;, —अन्धव, प्रयातुं—गन्तुं, युक्तम्—उचितम् इति। अथ—पक्षान्तरे, जन्तीः,—प्राणिनः, मरणम अवश्यमेव—निश्चितमेव, भविष्यतीति शेषः, ("मृत्यर्जन्मवतां धीर !देहेन सह जायते। अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥" इत्यादि भाग बतवचनादिना तस्य समर्थितत्वात्) तदा किमिति—कथं, मुधा—मृधा, निष्कारणा मित्यर्थः, यशः मलिनं कुरुध्वम्? अव अमरः कर्त्तव्य एवेत्यर्थवधारणम्। पुष्पितागा उत्तम्।

## लक्ष्मी

युक्तिरूपमलङ्कारं निरूपयति— युक्तिरिति। अर्थस्य प्रयोजनस्य अवधारणं कर्त्तव्यत्व निश्चयो निश्चपक्षयोगाद् युक्तिर्नाम नाट्यालङ्कारः।

उदाहरति—यदि समरणपास्येति। द्रोणस्य मरणेन पलायमानान् वीरान् प्रति अश्व त्थाम्न उक्तिरियम्। समरं सङ्ग्रामम् अपास्य परित्यज्य गच्छतो युष्मानिति यदि मृत्यो र्मरणाद् भयं नास्ति तदा इतः सङ्ग्रामात् अन्यतः अन्यत्र प्रयातुं प्रस्थातुं युक्तम्। अथ तदसत्वपक्षे जन्तोः प्राणिनः मरणं मृत्युः अवश्यमेव नूनमेव, इति हेतोः मुधा

वृथा यश कीर्तिं किं कथं मलिनं पलायमानापमानेन मलीमसं कुरुध्वं सम्पादयध्वम् । पूर्वसञ्चितयशः पालनार्थमति सङ्ग्रामस्यावश्यकर्त्तव्यत्वनिश्चयाद् युक्तिः ।

## रुचिरा

युक्तिं लक्षयति—५५३ **अर्थावधारणं कर्त्तव्यस्य निश्चयः । युक्तिः ॥ ५०८ ॥**

उदाहरति—**यथा** । तत्र वेणीसंहारे । **एव** । **यदि** । **समरं** सङ्ग्रामम् । 'अस्त्रियां समरानीकरणा' इत्यमरः । **अपास्य** परित्यज्य । **मृत्योर्मरणस्य** । **भयम्** । **न** । **अस्ति** । तर्हि—इतः सङ्ग्रामात्—**अन्यतोऽन्यत्र** । **प्रयातुं** गन्तुम् । **युक्तम्** । **अथ** यदि च 'अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुव' इत्यादिनयेन । **जन्तोः** प्राणिनः । **मरणम्** । **अवश्यम्** । **एव** । तर्हि—**किमिति** । **यशः** स्वधर्मपालनजन्यां प्रशंसाम् । **सुधा** व्यर्थम् । **मलिनम्** । **कुरुध्वम्** । अत्र समरः कत्तव्य एवेत्यवधारणम् । पुष्पिताग्रा वृत्तम् । तल्लक्षणं चोक्तं प्राक् ॥ ३२६ ॥'

**प्रहर्षः प्रमदाधिक्यं—**

यथा शाकुन्तले—

'राजा— तत्किमिदानीमात्मानं पूर्णमनोरथं नाभिनन्दामि।'

---

## विवृतिपूर्तिः

प्रमदेति। प्रमदस्य आनन्दस्य आधिक्यं तारुण्यावस्था॥

## विज्ञप्रिया

प्रहर्षाव्यामलङ्कृतिमाह—प्रहर्ष इति स्पष्टम्।

## कुसुमप्रतिमा

प्रहर्षं इति। प्रभदाधिक्यम् आनन्दातिशयः प्रहर्षो नाम नाट्यालङ्क्यः स्यात्।

यथेति। अत्र राज्ञः स्त्रीपुत्रलाभिन प्रमदाधिक्यात् प्रहर्णः।

## विमला

ग्रहर्षमाह, ग्रहर्ष इति।—प्रमदस्य—प्रकृष्टानन्दस्य, आधिक्यम्—औत् कष्यम्, आतिशय्यमिति यावत्, ग्रहर्षः।

उदाहरति, यथेति।—स्पष्टम्। अत्र शकुन्तलायाः पुनः प्राप्तौ आनदातिशयः।

## लक्ष्मी

प्रहर्षाख्यमलङ्कारं निरूपयति— प्रहर्ष इति। प्रमदस्य आनन्दस्य आधिक्य तारुण्यावस्था प्रहर्षो नाम नाट्यालङ्कारो भवेत्।

उदाहरति—यथेति। दुष्यन्तो हि मारीचप्रदत्तरक्षाकाण्डं मातापितरौ आत्मानं च वर्जयित्वा न कोऽपि गृहीतुमर्हति यदि गृह्णीयात्तदा सपो। भूत्वा स तं दंशेदिति श्रुत्वा रक्षाकाण्डस्य विकाराभावेन ममायमौरम एवेति निश्चित्य सहर्षं स्वगतमाह— तत्किमिदानी मिति। तत् सर्वविधसन्देहोच्छेदात्, पूर्णं स्त्रीपुत्रप्राप्त्या सफलं मनोरथमभिलषितम् आत्मानं नाभिनन्दामि लक्षीकृत्य नानन्दितो भवामि, नूनमेवाभिलषितं प्राप्य अभिनन्दामीत्यर्थः। अत्र काकुः। अत्र राज्ञः स्त्रीपुत्रप्राप्त्या प्रमदातिशयात् प्रहर्षः।

## रुचिरा

प्रहर्षं लक्षयति—५५४ **प्रमदाधिक्यं** प्रमदस्यानन्दस्याधिक्यम्। **प्रहर्षः**।

उदाहरति—**यथा**। **शाकुन्तले**। '**राजा**। पुत्रप्राप्त्यनन्तरम्। (आत्मगतम्) **तत्**। **इदानीम्**। **आत्मानम्**। **पूर्णमनोरथम्**। **किम्**। **न**। **अभिनन्दामि**।'

**शिक्षा स्यादुपदेशनम्।**

यथा तत्रैव — 'सहि, ण जुत्तं अस्समवासिणो जणस्स अकिदसक्कारं अदिधिविसेसं उज्झिअ सच्छन्ददो गमनम्।'

---

## विवृतिः

सहि इति। 'सखि, न न युक्तमाश्रमवासिनो जनस्या कृतसत्कारमतिथिविशेषमुज्झित्वा स्वच्छन्दतो गमनम्' इति संस्कृतम्। अत्र शकुन्तलां प्रति तत्सख्या उपदेशोक्तिरियम्॥

## विज्ञप्रिया

उपदेशनरूपामलङ्कृतिमाह— शिक्षेति। सहीति। सखि! न युक्तमाश्रमवासिनो जनस्याऽकृतसत्कार-मतिथिविशेषमुक्त्वा स्वच्छन्दतो गमनम्।

## कुसुमप्रतिमा

शिक्षेति। शिक्षा शिक्षादानम् उपदेशनं नाम नाट्यालङ्कारः स्यात्।

यथेति। "सखि! न युक्तमाश्रमवासिनी अनस्य अक्वतसत्कारमतिथिविशेषमुझित्वा स्वच्छन्दती गमनम्।" इति संस्कृतानुवादः। स्वच्छन्दनो निजाभियायानुसारेण।

अत्र शकुन्तलाये शिक्षादानादुपदेशमम्।

## विमला

शिक्षिति। शिक्षा—शास्त्राविरोधि उपदेशवचनम्, उपदेशनम्।

उदाहरति, सहीति।—"सखि! न युक्तमाश्रमवासिनो जनस्याह सत्कारमतिथिविषेषमुज्झित्वा स्वच्छन्दती गमनम्" इति संस्कृतम्। स्पष्टम्। अत्र शकुन्तलां प्रति तत्सख्या उपदेशवाक्यम्।

## लक्ष्मी

उपदेशनरूपमहङ्कारं निरूपयति—शिक्षेति। शिक्षा शिक्षादानम् उपदेशनं नाम नाट्यालङ्कारः स्यात्।

उदाहरति— यथेति। सहीति। 'सखि! नु युक्तमाश्रमवासिनो जनस्य अकृतसत्कारमतिथिविशेषमुज्झि-त्वा स्वच्छन्दतो गमनम्' इति संस्कृतम्। आश्रमस्थं दुष्यन्तमभिलक्ष्य शकुन्तलाया अनुरूपोऽयं वर इति प्रतिपादयति, लज्जया ततोऽन्यत्र गन्तुकामां शकुन्तला म्प्रतिं अनसूयाया अक्तिरियम्। सखि शकुन्तले! अकृतः अविहितः सत्कारः भक्ष्यपेय समर्पणादिभिः पूजा यस्य तथोक्तम्, अतिथिविश्योषम् अभ्यागतरूपं राजानम् उज्झित्वा विहाय स्वच्छन्दतः स्वाभिप्रायानुसारेण गमनं प्रस्थानं प्रलायनमित्यर्थः, आश्रमवासिनाः तपस्विमात्रस्य न युक्तं न सङ्गतम्, साभिलाषमेनं हृदयलल्लभमनाहत्य स्वेच्छया पलायनं ते नोचितमित्याशयः। अत्र शकुन्तलायै शिक्षादानादुपदेशनम्।

## रुचिरा

उपदेशनं लक्षयति—५५५ **शिक्षा युक्तमार्गे प्रवर्त्तनम्। उपदेशनम्। स्यात्।**

उदाहरति—**यथा। तत्राभिज्ञानशाकुन्तले। एव।** (अनसूया शकुन्तलां प्रत्याह) **सहि** सखि **अस्समवासिणो** आश्रमवासिनः। **जणस्य** जनस्य। **अकिदसक्कारम**कृतसत्कारम्। **अदिधिविसेसं** अतिथिविशेषमुत्तमम्तिथिमिति यावत्। **उज्झिअ** उज्झित्वा। **सच्छन्ददो** स्वच्छन्दतः स्वाभिप्रायमिति यावत्। **गमणं** गमनम्। **ण** न। **जुत्तं** युक्तम्।

एषां च लक्षणंनाट्यालंकाराणां सामान्यत एकरूपत्वेऽपि भेदेन व्यपदेशो गुड्डुलिकाप्रवाहेण। एषु च केषांचिद् गुणालंकाभावसंध्यङ्गविशेषान्तर्भावेऽपि नाटके प्रयत्नतः कर्तव्यत्वात्तद्विशेषोक्तिः।

एतानि च—

**'पञ्चसंधि चतुर्वृत्ति चतुःषष्टयङ्गसंयुतम्।**

**षड्विंशल्लक्षणोपेतमलंकारोपशोभितम्॥**

**महारसं महाभोगामुदात्तरचनान्वितम्।**

**महापुरुषसत्कारं साध्वाचारं जनप्रियम्॥**

**सुश्लिष्टसंधियोगं च सुप्रयोगं सुखाश्रयम्।**

**मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम्॥'**

इति गुनिनोक्तत्वान्नाटकेऽवश्यं कर्त्तव्यान्येव। वीथ्यङ्गानि वक्ष्यन्ते।

---

## विवृतिः

ननु भूषणादीनि यानि लक्षणान्युक्तानि तानि नाट्यभूषणहेतुत्वरूपसामान्यधर्मयोगेन नाट्यालंकारमध्य एवान्तर्भवितुमर्हन्ति, तदेषां भिन्नत्वेनोपादानमनतिप्रयोजनमित्यभिप्रायेगणाह— एषां चेति। गड्डुलिकाप्रवाहेण गतानुगतिकन्यायेन। ननु भूषणस्य यथायथं गुणेऽलंकारे च, शोभायाः श्लेषे विशेषणस्य विशेषोक्त्यलंकारे, एवमाशीरादिनाट्यालंकाराणामाशीराघंलकारेषु, एवं युक्त्यादीनां युक्त्यादिसंध्यङ्गेषु चान्तर्भावे सिद्धे पुनरूपादानमनर्थक मित्यत आह— एषु चेति। लक्षणनाट्यालंकारेष्वित्यर्थः। एतानि लक्षाणादीनि 'नाटकेऽवश्यं कर्तव्यानि' इत्यग्रेणान्वयः। भोगो भावादिः सहायो वा। रचनाया उदात्तत्वं विलासर्घ्यादियुक्तत्वम्। महापुरुषस्य धीरोदात्तनायकस्य सत्कारो गुणवर्णनं यत्र।

साधुरविगीत आचारो वैदिकं कर्म यत्र॥

## विवृतिपूर्तिः

मृद्विति। इदमेवाभिप्रेत्य षोडशाध्यायोपसंहारे, मुनिनोक्तम्—'चेक्रीयतेप्रभृतिभिर्विकृतैश्च शब्दैर्युक्ता न भान्ति ललिता भरतप्रयोगाः। यज्ञक्रियेव शरवर्मधरैर्घृताक्तैश्या द्विजैरिव कमण्डलुदण्डहस्तैः॥' नाटकस्य वैशिष्ट्यमपि मुनिनैकोनविंशाध्याये प्रतिपादितम्—'न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला। न तत्कर्म न वा योगो नाटके यन्न दृश्यते॥'

## विज्ञप्रिया

एषां चेति। लक्षणानि उक्तानि षट्त्रिंशत्, नाट्यालङ्कारा उक्तास्त्रयत्रिंशत्। एकरूपत्वेऽपीति। लक्षणत्वम् इत्येवम् एकरूपत्वसम्भवेऽपीत्यर्थः। भेदेनेति। एतानि लक्षणानि, एता अलङ्कृतय इत्येवं भेदेन इत्यर्थः। गड्डुलिकाप्रवाहोऽनादिसिद्धो निर्मलो व्यवहारः।

एषु चेति। केषाञ्चित् वक्ष्यमाणोपमाव्यतिरेकालङ्कारादिरूपत्वेन तेषु काव्याङ्गेषु केषाञ्चिच्च गुणाभावतत्सम्बन्धिव्यञ्जकत्वेन तेषु काव्याङ्गेषु अन्तर्भावसम्भेऽपि इत्यर्थः। प्रयत्नतः कर्त्तव्यत्वादिति— कर्त्तव्यता च तत्तत्प्रसङ्गौ चित्यानुसारेण यथायोग्यमेव न तु सर्वत्रैव सर्वेषाभित्यवधेयम्।

सुकाव्या तु एतत् सकलविशिष्टमपि नाटकं कर्त्तव्यमिति मुनि नोक्तत्वात् तेन सर्वमिदं कर्त्तव्यभित्याह— पञ्चसन्धि चतुर्वृत्तीत्यादि कुर्यात्तु नाटकमित्यन्तम्। पञ्चसन्धयो मुखसन्ध्याद्याः प्रागुक्ताः पञ्च। चतुःषष्ट्यङ्गानि च सन्धीनां प्रागुक्तानि। षट्त्रिंशत् लक्षणानि च नाट्यानां प्रागुक्तानि। अलङ्कारास्त्रय स्त्रिंशत् सम्प्रत्युक्ताः। 'त्रयस्त्रिंशत् प्रयोज्यानि वीथ्यङ्गानि। अलङ्कारास्त्रयत्रयस्त्रिंशदलङ्कारोक्त्यनन्तरं वीथ्यङ्गानां वत्कव्यत्वे प्राप्ते वीथिरूपकनाटकविशेषस्य विशिष्य दर्शितत्वात् दर्शयिष्यमाणातदवसरे वीथ्यङ्गानि वक्ष्यन्ते इत्याह—वीथ्यङ्गानीति।

## लोचन

गड्डुरिकाप्रवाहेणेति— यथा गड्डुरिका एका अपरां ता चेतरानुगच्छति, तासां गतानुगतमात्रेण भेदः तथा लक्षणानाट्यालङ्कारयोरपीति भावः।

## कुसुमप्रतिमा

ननु भृषणदीनां नाट्यलक्षणानाम आशीरादीनां नाट्यालङ्काराणाञ्च नाट्यभूषणहेतुत्वक्वप भ्रामान्धर्म्मयोगादभेदेन व व्यपदेशस्य युक्तत्वे कथं भेदेन त्यपदेश इत्याह एषाञ्चेति। लक्षणानि प्रागुक्तानि भूषणादीनि नाट्यलङ्काराश्र पाशीरादयस्तेषाम्। सामान्वती नाट्यभूषणहेतुत्वरूपसामान्वधर्म्मयोगात् गड्डुलिकामवाहेणा नदीस्त्रोतीऽनुसारेण प्राचीनपरम्परामतानुसारेणैत्यथंः। एतेन वस्तुती लक्षणनाट्यालङ्कारणा मभेद एवेति सूचितम्।

ननु तथापि केषाञ्चिल्लक्षणानाट्याङ्काणनाटालङ्काणां गुणालङ्कारावन्तर्भावात् एथं पृथगुक्तिरित्याह एषु वेति। एषु लक्षण नाट्यलङ्कारेषु मध्ये। केषाञ्चित भूषणदीनां लक्षणनाम आशीरदीनां नाट्यालङ्काराणाञ्च। तथा च भूषणाख्य लक्षण प्रसादादिगुणेषु ततदलङ्करिषु च, अभिप्रायाख्य लक्षण निदर्शना दालङ्करि, ज्ञप्तिनामक लक्षण मतिनामकभावे, विचारादिलक्षणञ्चानुमानादिसन्ध्यङ्गेषु अन्तर्भवितुमर्हति; तथा आशीराख्योऽलङ्कारो यथासम्भव प्रसादादिगुणेषु, उपपत्तिनामकालङ्कार काव्यलिङ्गाद्यलङ्कारे, आकन्दनामका लङ्कार शाकस्थायिभावे, युक्तिनामकालङ्कारश्च युक्तिनामकमन्ध्यङ्गे अन्तभवितुमहतीत्याद्यनुसन्धेयम्। अत्र नाटकपद रुपकमात्रिपलणम्। प्रयवत इति। अवायमाशयः— रसानुकूल्यसम्भवे गुणालङ्कारभावानां सन्ध्यङ्गविशेषणाञ्च यथेच्छ कर्त्तव्यता, नाट्यलक्षणःनाट्यालङ्काराणान्तु अवश्यमेव कर्त्तव्यतेति। तेषां नाट्यलक्षण-नाट्यालङ्कारणां विशेषेक्तिः पृथगुक्तिः।

एतानीति। अवश्य कर्त्तव्यान्वेवेति परेणान्वयः।

## विमला

ननु भूषणादीनि यानि लक्षणान्धकानि, तानि नाट्यभूषणहेतुत्वरूपसामान्धधर्मधोगेन नाट्यालङ्कारमध्ये एवान्तर्भवितुमहन्ति, तदेषां भिन्नत्वेनोपादानमनतिप्रयोजनमित्यभिप्रायेणाह, एषामिति ।—यदि च भूषणादीनि पूर्वोक्रानि नाट्यभूषणहेतुत्वरूपसामान्धधर्मयोगान नाट्यालङ्कारेऽन्तभवितुमर्हन्ति, तथाऽप्येषां भेदकथनं गटअलिकाग्रवाहेण—गतानुगतिकन्यायेन इत्यर्थः, प्राचीनोक्तरोत्येति भावः । ननु भूषणस्य यथायथं गुणोऽलङ्कारे च, शीभायाः शेषे, विशेषणास्य विशेषोक्त्यङ्गेषु चान्तर्भवे सिद्धे पुनरुपादानमनर्थकमित्यत भाई एषु चेति ।—एषु—लक्षणानाट्यालङ्कारेषु ।

एतानीति ।—एतानि—लक्षणदीनि, "नाटके अवश्य कर्त्तव्यानि" इत्यग्रेसान्वयः ।

पञ्चेति ।—पञ्च सन्धयः,—मुखादयः यव तत, चत्वारः वृत्तयः,— कौशिक्यादयः यत्र तत्, चतुःषष्ट्य अङ्कै पूर्वोक्तैः, उपेतं युक्तम्, अलङ्कारेः,—नाट्यालङ्कारैः पूर्वोक्तैः, उपशोभितं, महान्—परिपुष्ट इत्यर्थः, रसः,—श्रृङ्गरः वोरी वा यत्र तादृशं, महान् भोगः,—भावादिः यव तादृशं, महासहायं वा ,उदात्ता— क्लिासङ्कदिगुणयुक्ता इति भावः, या रचना तथा अन्वितं—युक्तं, महापुरुषस्य—नायप्रधानस्य, धीरोदत्तस्य इत्यर्थः, सञ्चारः,—स्थितिः यत्मिन् तथोक्तं, "सञ्चारम्" इत्यव "सत्कारम्" इति च पाठान्तरम् नाटकं कवि कुर्य्यादित्यन्वयः । अत एव मुनिना पुनरन्धव समथितं, "चेकीयते प्रभृतिभिर्विक्वतैश्च शब्दैयुक्ता न भान्ति ललिता भरतप्रयोगाः । यज्ञ क्रियेव शरवमधरैर्घृताक्तैः वेश्या दिजैरिव कमण्डलुदण्डहस्तैः ॥" इति । नाटकस्य प्रधान्धमपि तेनैव प्रतिपादितम्;—"न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला । न तत् कर्म न वा योगो नाटके यन्न दृश्यते ॥" इति ।

## लक्ष्मी

ननु भूषणादीनि यानि नाट्यलक्षणानि अभिहितानि तेषाम्, आशीरादयो नाट्यालङ्काराश्च ये उक्तास्तेषाश्च नाट्यभूषणहेतुत्वरूपसामान्यधर्मयोगादभिन्नत्वेनैव व्यदेशस्य युक्तत्वे भिन्नत्वेनोपादानममिञ्चित्करमित्या-दशयेनाह-एषां ऐति । लक्षणनि भूषणादीनि प्रागुक्तानि नाट्यालङ्काराश्च आशीरादयस्तेषां तथोक्तानाम् सामान्यतो नाट्यभूषणहेतुत्वरूपसामान्यधर्मयोगात् । एकरूपत्वेऽपि लक्षणत्वालङ्कारत्वयोर्विनगमकाभावात् लक्षणानामप्यलङ्कारत्वम् अलङ्काराणामपि लक्षणत्वम् इत्येवम् अभिन्नत्वरूपसम्भवेऽपीर्त्थः भेदेन एतानि लक्षणनि, एते लङ्काराः एत्येवंभेदेनत्यर्थः । व्यपदेशो व्यवहारः । गड्डलिकाप्रवाहेणेति । यथा गड्लिका (नदी, मेषी वा) एका तामपरा तां चेतरानुगच्छतीति तासां गतानुगतमात्रेण भेदः तथा लक्षणनाट्यालङ्कारयोरपि अनादर्सिद्धो निर्मलो व्यवहारस्तदनुसारेणेत्यर्थः । एतेन ग्रन्थकर्त्रा वस्तुतोऽनयोरभेद एवेति ध्वनितम् ।

नन्वेवमपि केषाञ्चिल्लक्षणनाट्यालङ्काराणां गुणे अलङ्कारे चान्तर्भावसम्भवात्कथं पार्थ क्येन तदुक्तिरित्याशङ्कां समाधत्ते— एषु चेति । अलक्षणनाट्यालङ्कारेष्वित्यर्थः । केषाञ्चित् भूषणादीनां लक्षणानाम् आशीरादीनां नाट्यालङ्कारादीनाञ्चेत्यर्थः । गुणालङ्करेति । तथा च भूषणस्य लक्षणस्य वक्ष्यमाणप्रसादादिगुणेषु तत्तदलङ्कारेषु च, शोभायाः श्लेषे, विशेषणस्य विशेषोक्त्यलङ्कारे चन्तर्भावयितुं शक्नोति । एवमाशीरादीनां नाट्यालङ्काराणामाशीराद्यलङ्कारेषु, तथा युक्त्यलङ्कारे चान्तर्भावयितुं शक्नोत्ि एवमाशीरादीनां नाट ?यालङ्काराणामाशीराद्यलङ्कारेषु, तथा युक्त्यादीनां युक्त्यादिसन्ध्यङ्केषु चान्तर्भावयितुं शक्नोतीत्यादिविचारणीयम् । नाटके इति नाटकपदमभिनेयमात्रोपलक्षणम् । प्रयत्नतः कर्त्तव्यत्वादिति । कर्त्तव्यता च तत्तत्प्रसङ्गौचित्यानुसारेण यथायोग्यमेव विशेषोक्तिः पृथगुक्तिः न तु सर्वत्रैव सर्वेषा मित्यनुसन्धेयम् ।

अत्रद्बोध्यम्— सति हि रसानुकूलत्वे यथा काव्ये गुणालङ्कारभावानां सन्ध्यङ्गविशेषाणाञ्च स्वेच्छयोपन्यासस्तथा नाट्यलक्षण-नाट्यालङ्काराणामदर्शनात्तेषां पार्थक्येनैव प्रति पादनमिति ।

एतानीति । एतानि लक्षणादीनि नाटकेऽवश्यं कर्त्तव्यान्येव इत्युत्तरेण सम्बन्धः ।

सुकविना तु एतत् सकलविशिष्टमपि नाटकं कर्त्तव्यमिति मुनिनोक्तत्वात् तेन सर्वमिदं कर्त्तव्यमित्यत आह— पञ्चसन्धीत्यादि कुर्यातृ नाटकमित्यन्तम् । पञ्चसन्धयो सुखसन्ध्याद्याः प्रागुक्ताः पञ्च यस्मिन् तत् यथोक्तम्, चतुःषष्ट्यङ्गानि च सन्धीनां प्रागुक्तानि तैः संयुतम्, षट्त्रिंशल्लक्षणैर्भूषणादिभिरुपेतं संयुक्तम्, अलङ्कारैस्त्रयस्त्रिंशद्भिराशीरादिभिरूपशोभितम्, महान् शृङ्गारो वीरो वा यस्मिन् तत् यथोक्तम्, महान् भोगो भावादिविलासादिर्वा यस्मिन् तत् तथोक्तम्, उदात्तया उत्तमया रचनया अन्वितं रचनाया उदात्तत्वं विलासद्ध्यादियुक्तम्, महापुरुषस्य धीरोदात्तनायकस्य सत्कारो गुणवर्णनं यस्मिन् तत् तथोक्तम्, शोभनः प्रयोगोऽभिनयो यस्मिन् तत् तथोक्तम्, सुखस्य आश्रयस्थानं सुखजनकमित्यर्थः, मृदूनां सुकुमारुणामापातमात्रेण प्रतीतिरूपाणां शब्दानां पदानामपिपातः क्रमिकातिक्रमकः अवस्थितिर्यस्मिन् तत् तादृशञ्च नाटकं कविः कुर्यात् । मृदुशब्दानां सन्निवेशस्य परमावश्यकत्वं दर्शितं मुनिना । तथाहि—

**'चेक्रीयते प्रभृतिभिर्विकृतैश्च शब्दैर्युक्ता न भान्ति ललिता भरतप्रयोगाः ।**

**यज्ञक्रियेव शरवर्मधरैर्घृताक्तैर्वेश्या द्विजैरिव कमण्डलुदण्डहस्तैः ॥' इति ।**

नाटकस्य वैशिष्ट्यमपि तत्रैव—

**'न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।**

**न तत्कर्म न वा योगो नाटके यन्न दृश्यते ॥' इति ।**

इतीति । मुनिना महर्षिण भरतेनेत्यर्थः । अवश्यं कर्त्तव्यान्येवेति । तथा च मुनिना सन्ध्यङ्गनाटयलक्षण-नाटयालङ्काराणं स्पष्टं पार्थक्येनाभिहितत्वात् सन्ध्यङ्गविशेषणाञ्च नावश्यकत्वमिति पूर्वमेव प्रतिपादित्वात् नाट्य-लक्षण—नाट्यालङ्काराणान्तु तदनभिहितत्वात् तेषामवश्यकर्त्तव्यतेति तन्मतानुसारिणो ममापि नाप्रामाण्यमिति सन्दर्भाशयः ।

'त्रयस्त्रिंशत्प्रयोज्यानि वीथ्याङ्गानि त्रयोदश' इत्युक्तत्वात् त्रयस्त्रिंशद्लङ्कारोक्त्यनन्तरं वीथ्याङ्गानि वक्तव्यत्वे प्राप्ते वीथीरूपकनाटकविशेषस्य विशिष्य दर्शयिष्यमांणत्वात् तदवसरे वीथ्याङ्गानि वक्ष्यन्ते इति दर्शयति—वीथ्यङ्गानीति ।

## रुचिरा

ननु नात्र युक्तयादीनां युक्त्यादिसिध्यङ्गेषु नीत्यादीनां नीत्या च शिक्षाऽऽदिषु चान्तर्भावे सिद्धे पुनरुपादानं किमित्याशङ्क्याह—**एषामित्यादि** । स्पष्टम् ।

उक्तमर्थं समर्थयते—**एतानि** नाट्यलक्षणादीनि । **'च । कविः । पञ्चसन्धि** पञ्च सुखादयः सन्धयो यत्र तत्तथोक्तम् । **चतुर्वृत्ति** चतस्रः कौशिक्याद्या वृत्तयो यत्र तत् । **चतुःषष्टयङ्गसंयुतम्** । तत्र द्वादशमुखस्य । त्रयोद-शप्रतिमुखस्य गर्भस्य विमर्शस्य निर्वहणस्य च सन्धेः प्रभेदाः । एतैरङ्गैरिव संयुतमिति भावः । **षट्त्रिंशल्लक्षणो-पेतंभूषणादिभिः** षट्त्रिंशल्लक्षणैर्युक्तम् । **अलङ्कारोपशोभितं** त्रयस्त्रिशत्सङ्ख्याकैराशिरादिभिरलङ्कारैर्युक्तम् ।

महान् श्रृङ्गारवीरकरुमशान्तान्यतमो रसः प्राधान्यत्वे यत्र तत्तथोक्तम्। **महाभोगम्**महान् भोगः सहायकादिर्यत्र तत्तथोक्तम्। **उदात्तरचनान्वितम्**उदात्ता सप्रासादा या रचना तयाऽन्वितम्। **महापुरुषसत्कारं** महापुरुषो धीरोदात्तो धीरललितो वा तस्य सत्कारो यत्र तत्तथोक्तम्। अत एव-**साध्वाचारं** रमणीयव्यवहारो वर्णनीयत्वेन यत्र तत्। **जनप्रियम्**। **सुश्लिष्टसन्धियोगं** सुश्लिष्टः सन्धीनां योगो यत्र तत्। **सुप्रयोगम्**। **सुखाश्रयम्**। **मृदुशब्दाभिधानं** मृदुभिः शब्दैरभिधानं पात्रनाम यत्र तत्। **च**। **नाटकम्**। **कुर्यात्**। **तु**(इदं वाक्यालङ्कारे) ॥' इति **मुनिनेत्येवम्**भरतेन। **उक्तत्वात्**। **नाटके**। **अवश्यम्**। कर्त्तव्यानि। **एव** न त्वेष्वेकं द्वे वा। अतः—एतत्प्रदर्शयितुं भूषणादीनि विशिष्योद्दिष्टानीति विभाव्यम्।

एवं नाट्यालङ्कारान्निर्दिश्य क्रमप्राप्तमपि वीथ्याङ्गानां प्रसङ्गौचित्येन पिनर्निर्देष्टव्यत्वमाह-**वीथ्यङ्गानि** वीथी रूपकविशेषस्तस्या अङ्गानि प्रभेदास्तानि। **वक्ष्यन्ते** तन्निरूपणप्रसङ्गे इति शेषः।

**लास्याङ्गान्याह—**

**गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका ॥ २१२ ॥**

**प्रच्छेदाकस्त्रिगूढं च सैन्धवाख्यं द्विगूढकम् ।**

**उत्तमोत्तमकं चान्यदुक्तप्रत्युक्तमेव च ॥ २१३ ॥**

**लास्ये दशविधं ह्येतदङ्गमुक्तं मनीषिभिः ।**

---

## विज्ञप्रिया

दश लास्याङ्गानि वक्तुमाह—लास्याङ्गानीति ।

## कुसुमप्रतिमा

गेयेति । मनीषिभिर्लास्ये एतद्गेयपदादिकं दशविधमद्भमुक्तम् ।

## विमला

गेयपदमिति ।—गेयपदादीनि दश लास्याङ्गानि मनीषिभिरुक्तानीत्यर्थः । "ताण्डवं नटनं नाट्यं लास्यं नृत्यञ्च नर्त्तने" इत्यमरेण नृत्यपर्य्याये लास्यशब्दः कथितः; अत्र तु गेयपदादिलक्षणेन लास्यशब्दस्य गानपरता तथा वक्ष्यमाणपुष्पगण्डिकालक्षणे—"आतोद्यनिश्चितं" "स्त्रीपुंसयोर्विपर्य्यासचेष्टितम्" इत्युक्तेःनृत्यगन्धधिगानपरता च; तेन अत्र लास्यशब्देन नृत्य गीत-वाद्यान्येव लक्ष्यन्ते इति अत एवोक्तं मेदिनीकारेण "लास्यं तौर्य्यत्रिके मतम्" इति दिक् ।

गेयपदमाह, तन्त्रीति ।—तन्त्रीभाण्डं—वीणायन्त्रं, पुरस्कृत्य—अग्रेकृत्य, गानोपायोपयोगित्वेनादृत्येत्यर्थः, पुरः,—अग्रतः, आसने उपविष्टस्य यत् शुष्कं—श्रृङ्गारादिरसविरहितमित्यर्थः, गानं तत गेयपदम् । उक्तञ्च भरतेन,—"आसनेषूपविष्टैर्युत् तन्त्रीभाण्डोपवृंहितम् । गायनैर्गीयते शुष्कं तत् गेयपदमुच्यते ॥" इति ।

## लक्ष्मी

दश लास्याङ्गान्यभिधातुमाह—लास्यङ्गानीति । गेयपदमिति । मनीषिभिः बुद्धिमद्भिः गेयपदादिकं लास्ये दशविधमङ्गमुक्तम् ।

तत्र गेयपदरूपं लास्याङ्गं लक्षयति—तन्त्रीभाणड्मिति । तन्त्रीभाण्डं तन्त्रयाश्रयं वीणावाद्यं पुरस्कृत्य गानोपयोगित्वेनाग्रे स्थापयित्वा प्रधानीकृत्येत्यर्थः । पुरो देवतासम्मुखस्थायिनि आसने विष्टरे उपविष्टस्य स्थितस्य जनस्य शुद्धं निर्दोषं शुक्रमिति पाठे अनुकरणीयमित्यर्थः; 'शुष्कं' पाठे तु श्रृङ्गाररसविरहितमित्यर्थः । गानं नृत्यहीनगानम्, गेयं गानयोग्यं पदं यत्र तद् गेयपदं नाम लास्यङ्गं भवेत् ।

उदाहरति—यथेति । गौरीगृहे पार्वतीप्रसादे 'स्थिता' इति शेषः । मलयवती गायति इति शेषः । उत्फुल्लेति । उत्फुल्लं विकसितं यत् कमलं पद्म तस्य यःकेसरपरागः किञ्जकधूलिस्तद्वत् गौरा गौरवर्णा द्युतिः

कान्तिर्यस्यास्तत्सम्बुद्धौ रूपम्, हे गौरि अम्बिके ! हे भगवति सकलैश्वर्यसम्बन्ने ! युष्मत्प्रसादेन भवदनुकम्पया मम अभिवाञ्छितम् अभिलषितं प्रसिध्यतु सिद्धिर्भवतु ।

## रुचिरा

लास्याङ्गानि वक्तुं प्रतिजानीते—**लास्याङ्गानि** लास्यस्य नृत्यस्याङ्गानि प्रभेदस्तानि । **आह—५५६ गेयं पदं** गेयपदमित्यर्थः । **स्थितं पाठ्यं** स्थितपाठ्यमित्यर्थः । स्पष्टमन्यतम् ॥ ५०९ ॥ ५१० ॥

तत्र—

**तन्त्रीभाण्डं पुरस्कृत्योपविष्टस्यासने पुरः ॥ २१४ ॥**

**शुष्कं गानं गेयपदं—**

यथा—गौरीगृहे वीणां वादयन्ती 'मलयवती—

**उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि ! ।**

**अभिवाञ्छितं प्रसिध्यतु भगवति ! युष्मत्प्रसादेन ॥'**

---

## विवृतिः

तन्त्रीभाण्डं वीणावाद्यं पुरस्कृत्य गानोपायोपयोगित्वेनादृत्य ॥

## विवृतिपूर्तिः

तन्त्रीति । अष्टादशाध्याये भरतेनाप्युक्तम्—'आसनेषूपविष्टैर्यत्तन्त्रीभाण्डोपवृंहितम् । गायनैर्गीयते शुष्कं तद्गेदपदमुच्यते ॥' इति ॥

## विज्ञप्रिया

तत्र गेयपदरूपं लास्याङ्गमाह—तन्त्रीभाण्डेति । तन्त्रीभाण्डमत्तन्त्रयाश्रयां वीणां पुरस्कृत्य प्रधानीकृत्य शुष्कं गानं नृत्यहीनंगानम् । उत्फुल्लेति—ममाभिवाञ्छितमित्यन्वयः ।

## लोचन

शुष्कम् णनुकरणीयम् ।

## कुसुमप्रतिमा

तन्त्रीति । तन्त्रीभाण्डं वीणादिकं तन्त्रीविशिष्टं यन्त्रं पुरस्कृत्य अग्रे स्थापयित्वा, पुरो द्वताग्रवर्त्तिनि आसने उपविष्टस्य जनस्य शुद्धं निर्द्दोषं गेयपदं नाम लास्यङ्गं स्यात्, गेयं ज्ञानयोग्यं पदं यत्रेति व्युत्पत्तेः ।

उत्फुल्लेति । उत्फुल्लकमलस्य प्रस्फुटितपद्मस्य केसरपरागवत् किञ्जस्करेणवत् गौरी गौरवर्णा द्युतिः प्रभा यस्यास्तत्सम्बोधनम् । हे गौरि ! हे दुर्गे ! हे भगवति ! युष्मत्प्रसादेन भवददुग्रहेण मम अनिवाञ्छितं प्रसिध्यतु ।

## विमला

उदाहरति, उत्फुल्लमिति ।—उत्फुल्ल—विकसितं, यत कमलं—पद्मै, तस्य केसरपरागवत्—किञ्जल्क-रजोरागवत्, गौरी—गौरवर्णा, द्यतिः,—दीप्तिः यस्यास्तादृशि ! जनकप्रभे ! इत्यर्थः, भगवति ! गौरि—गौरवर्णा,

द्युतिः;—दीप्तिः यस्यास्तादृशि ! कनकप्रभे ! इत्यर्थः, भगवति ! गौरि !—पार्वति ! युष्मत्प्रसादेन—भवत्याः अनुग्रहेण, मम अभिवाञ्छितं—प्रार्थितं, हि—निश्चितं, प्रसिध्यतु—सफलतामेतु । आर्य्या वृत्तम् । नागानन्दस्य पद्यमिदम् ।

## रुचिरा

एतानि क्रमाल्लक्षयितुकाम आह—**अत्रैषु** दशसु लास्याङ्गेषु मध्ये । **च** 'गेयपदं लक्ष्यते' इति शेषः । ५५७ **तन्त्रीभाण्डं** वीमायन्त्रम् । **पुरस्कृत्याग्रे** निधाय गानोपयोगित्वन निरूप्येति यावत् । **आसने** । **उपविष्टस्य** । **पुरः** प्रथमम् । **शुष्कं** शुद्धं संस्कृतमयमिति यावत् । **गानम्** । **गेयपदम्** । । ५११ ॥

उदाहरति—**यथा** । **गौरीगृहे** पार्वतीप्रसादे 'स्थिते'ति शेषः । **वीणाम्** । **वादयन्ती** । "**मलयवती** 'गायति' इति शेषः ।

**उत्फुल्लकमलकेसरपरागगौरद्युते** उत्फुल्लकमलस्य केसराः किञ्जल्कास्तेषां परागस्तद्वद्गौरी द्युतिर्यस्या-स्तत्सम्बुद्धौ तथोक्ते ! **भगवति ! गौरि ! तव** । **सुप्रसादेन** शोभनेनानुग्रहेण । **मम** । **हि** नूतनम् । **अभिवाञ्छितम्** । **प्रसिध्यतु** सफलीभूयात् । आर्य्याच्छन्दः ॥ ३३० ॥"

**स्थितपाठ्यं तदुच्यते ।**

**मदनोत्तापिता यत्र पठति प्राकृतं स्थिता ॥ २१५ ॥**

अभिनवगुप्तापादास्त्वाहुः—'उपलक्षणं चैतत् । क्रोधोद्भ्रान्तस्यापि प्राकृतपठनं स्थितपाठ्यम्' इति ।

---

## कुसुमप्रतिमा

स्थितेति । यत्र मदनोत्तापिता स्त्री स्थिता सती प्राकृतं प्राकृतभाषां पठति, तत् स्थितपाठ्यं नाम लास्याङ्गमुच्यते । अत्र व्युत्पत्तिः स्पष्ट । उदाहरणं यथा शाकुन्तले—

**"तुज्झ ण आणे हिअअं मह उण मद्यणो दिवावि रत्तिं वि ।**

**णिक्किव ! दावइ बलिअ तुअ हत्थमणोरहाय अङ्गाङ्गं ॥"**

## विमला

स्थितपाठ्यमाह, स्थितपाठ्यमिति ।—यत्र मदनेन उत्तापिता स्थिता मती, प्राकृतं—यथायथमिति भावः, पठति, तत्—लास्यमित्यर्थः, स्थितपाठ्यम् उच्यते । यथा—विक्रमोर्वश्यामुर्वशीगानम् ।

## लक्ष्मी

स्थितिपाठयरूपं लास्याङ्गं लक्षयति—स्थितिपाठयमिति । यत्र मदनोत्तापिता कामेनातीव सन्तापिता स्त्री स्थिता सती प्राकृत प्राकृतभाषां पठति स्फुटमुच्चारयति तत् स्थितिपाठ्यं नाम लास्याङ्गमुच्यते । यथा विक्रमोर्वश्यां चतुर्थेऽङ्के—चित्रलेखा (प्रदेशान्तरे द्विपदिकया दिशोऽवलोक्य—)

**सहअरि दुक्खालिद्धअ सरवर अ महिसिणिद्धं ।**

**वाहो-वाग्गिय णअणअं तम्मइ हंसी जुअलअं ॥**

**सहचरी दुःखालीढं सरोवरे च महत्स्निग्धम् ।**

**बाष्पावल्गिततनयनस्ताम्यति हंसीयुगलम् ॥ इति संस्कृतम् ।**

अत्र नाट्यशास्त्रव्याख्यातृणामाशयमुपपादयति—अभिनवेति । उपलक्षणमिति ऊह्यमुदाहरणम् ।

## रुचिरा

स्थितपाठयं लक्षयति—५५८ **मदनोत्तापिता** कामार्दिता । **स्थिता**ऽवस्थिता । **तु** । **यत्** । **प्राकृतं** प्राकृतभाषामयम् । **पठति तत्** । **स्थितपाठ्यम्** । **उच्यते** । यथा—विक्रमोर्वश्यां चतुर्थेऽङ्के "चित्रलेखा (प्रदेशान्तरे द्विपदिकया दिसोऽवलोक्य) सहअरि दुक्खालिद्धअं सरवर अम्हिसिणिद्धं । वाहो—वग्गिअ—णअणअं तम्मइ हंसीजुअलअं ॥" इति ॥ ५१२ ॥

अत्र भरतसूत्रव्याख्यात्रणामभिप्रायं दर्शयति—**अभिनवगुप्तपादा** इत्यादिना ।

**अभिनवगुप्तपादा** नाट्यशास्त्रव्याख्यातारः। **तु**। **आहुः**। "**एतत्मदनोत्तापितेति** विशिष्याभिधानमित्यर्थः।

**अभिनवगुप्तपादा** नाट्यशास्त्रव्याख्यातारः। **तु**। **आहुः**। "**एतत्मदनोत्तापितेति** विशिष्याभिधानमि-
त्यर्थः। **च**। **उपलक्षणम्**। 'तेन न केवलं मदनोत्तापितेत्येवार्थः, किन्तु' इति शेषः। स्पष्टमन्यत्।" इति। तन्मते यथा—विक्रमोर्वश्यामेव—"राजा...हिअआहिअपिअदुक्खओ सरवरुए धुअपक्खओ।. वाहो—वग्गिअ—णअणओ तम्मइ हंसजुअणओ" इ।

**निखिलातोद्यरहितं शोकचिन्तान्विताबला।**
**अप्रसाधितगात्रं यदासीनासीनमेव तत्। २१६॥**

---

## विवृतिपूर्तिः

निखिलेति। उक्तं च भरतेन—'आसीनमासनस्थस्य सर्वतोऽप्यविवर्जितम्। अप्रसारितगात्रं च चिन्ता-शोकान्वितं च तत्॥

## विज्ञप्रिया

आसीनमङ्गमाह—निखिलातोद्येति। मृदङ्गादिवाद्यरहितम्। शोकाकुला वस्त्राच्छादितगात्री यत्तिष्ठति तदासीनमित्यर्थः।

## कुसुमप्रतिमा

निखिलेति। शोकेन चिन्तया च अन्विता अबला स्त्री, आसीना उपविष्टा सती, निखिलेन आतोद्येन वादित्रेण रहितं तथा अप्रसाधितम् अनलङ्कृतं गात्रं यस्मिन् कर्म्मणि तद्रयथा तथा यद्गायति, तदेव आसीनं नाम लास्याङ्गमुच्यते। आसीनया गीतत्वादासीनमिति संज्ञा।

यथा मम वङ्गीयप्रतापे—"शङ्कर! संहरतिभिरमतिदुस्तरमवतर वितर करुणाम्; कुलजा वनिता विपदि पतिता सहते दारुणयातनाम्। दुषितमपि यौवनम्, विफलमिह जीवनम्, उपहर विपदि सान्त्वनाम्; भवतु मम मरणम्, अचिरमिह शरणम्, पूरय पुनरिति कामनाम्॥"

## विमला

आसीनमाह, निखिलेति।—शोकेन चिन्तया चान्विता अबला अप्रसाधितम्—अनलङ्कृतं, गात्रं यस्मिन् तत् यथा तथा, आसीना—उपविष्टा सती, निखिलातोद्यरहितं—निखिलेन आतोद्येन—वाद्येन, ("चतुर्विधमिदं वाद्यं वादित्रातोदग्यनामकम्" इत्यमरः) रहितं, केनापि वाद्येन न सङ्गतमित्यर्थः, यत्, गायति इति शेषः, तत् आसीनम्। उदाहरणन्तूह्यम्।

## लक्ष्मी

आसीनरूपं लास्याङ्गं लक्षयति—निखिलातोद्येति। शोकतचिन्ताभ्याम् अन्विता युक्ता अबला नायिका आसीना उपविष्टा सती निखिलेन समग्रेण आतोद्येन मृदङ्गादिवाद्येन रहितम्, तथा अप्रसाधितम् अनलङ्कृतं गात्रं शरीरं यस्मिन् गेये तत्, एतद्द्वयं क्रियाविशेषणम् यद् गायति तदेव आसीनया गीतत्वात् आसीनं नाम 'लास्याङ्ग-मुच्यते' इत्यस्य पूर्वेणपकर्षः। एवमग्रेऽपि। तथा च भरतः—

**आसीनमासनस्थस्य सर्वतोऽप्यविवर्जितम्।**

**अप्रसारितगात्रं च चिन्ताशोकान्वितं च तत्॥ इति।**

उदाहरणं यथा शाकुन्तले—

**तुज्झण आणे हिअअं मह उण मउणो दिवा वि रत्तिं वि।**

**णिग्घिण ! तवइ वलीअं तुइ वुत्तमणो रहाई अङ्गाई ॥**

**'तव न जाने हृदयं मम पुनर्मदनो दिवाऽपि रात्रिरपि।**

**निर्घृण ! तपति बलीयांस्त्वयि वृत्तमनोरथान्यङ्गानि ॥' इति।**

## रुचिरा

आसीनं लक्षयति—५५९ **आसीनोपविष्टा। शोकचिन्ताऽचन्ता। अचला। निखिलातोद्यरहितं** निखिलानि सर्वाण्यातोद्यानि वाद्यानि तै रहितं यथा भवेत्तथा। तथा—**अप्रसाधितगात्रं** न प्रसाधितमलङ्कृतं गात्रं यस्मिन् कर्म्मणि तद् यथा भवेत्तथेत्यर्थः। **यत्** 'प्राकृतं पठती'ति पूर्वतोऽन्वेति। **तत्। आसीनम्। एव**। यथाऽभिज्ञानशाकुन्तले, तृतीयेऽङ्के "शकुन्तला—तुज्झ ण अणे हिअअं मम उण कामो दिवा विरत्तिस्मि। णिग्विण ! तवइ बलीअं तुइवुत्तमणोरहाइं अंगाइं" ॥ ५१३ ॥

**आतोद्यमिश्रितं गेयं छन्दांसि विविधानि च।**
**स्त्रीपुंसयोर्विपर्यासचेष्टितं पुष्पगण्डिका॥ २१७॥**

---

## विवृतिः

आतोद्यं वादित्रम्। अप्रसाधितगात्रमनलंकृतशरीरम्।

एतद्द्वयं क्रियाविशेषणम्। विपर्यासेन वैपरीत्येन चेष्टा अभिनयो यत्र गेये तत्।

## विवृतिपूर्तिः

स्त्रीति। उक्तं च भरतेन—'नृत्तं तु द्विविधं यत्र गीतमातोद्यमेव च। स्त्रियः पुंवच्च चेष्टन्ते सा ज्ञेया पुष्पगण्डिका॥' इति॥

## विज्ञप्रिया

शुष्कम् अनुकरणीयम्।

पुष्पगण्डिकाख्यमङ्गमाह—आतोद्येति। छन्दांसि गद्यपद्यरागाणम् विपर्यासश्चेष्टाव्यत्यासः।

## लोचन

विपर्यासचेष्टितं स्त्रियाः पुरुषस्य चेष्टितं, पुरुषस्य स्त्रीचेष्टितम्।

## कुसुमप्रतिमा

आतोद्येति। आतोद्यमिश्रितं वादित्रसङ्गतं गेयं गानम्, तत्र विविधानि छन्दांसि, च तथा स्त्रीपुंसयोर्विपर्य्यासेन वैपरीत्येन चेष्टितं व्यवहार एतत् सर्वं पुष्पगण्डिका नाम लास्याङ्गमुच्यते। पुष्पगण्डिकावन्मनोहरत्वात् पुष्पगण्डिकेति समाख्या। यथा वङ्गीयप्रतापे—

**"मन्दमन्दगन्धवहो वहति शीतलः कूजति कोकिलः**
**परमसुखे कुसुममुखे वसति, मञ्जुलः, भ्रमरी बहुलः सेवित स्थूलः।**
**अमृतसन्निभं चरति दुर्लभं कुसुमसम्भवं मधुरसौरभं**
**शीतलकरी रजनिकरो राजति निर्म्मलः नभसि धवलः परमकोमलः॥"**

तीराव। अन्तरान्तरा "कुहु कुहु" "गुन् गुन्" इत्यादिना विविधभङ्ग्या यथायथमभिनयति।

## विमला

पुष्पगण्डिकामाह, आतोद्योति।—आतोद्येन—वादित्रेण, मिश्रितं—सङ्गतं, गेयं, विविधानि—नानाप्रकाराणि, छन्दासि—छन्दाबन्धनपूर्वकगीतानि इत्यर्थः, तथा स्त्रीपुंसयोः विपर्य्यासचेष्टितं—विपर्य्यासेन—वैपरीत्येन,

चेष्टितं—नृत्य, गीताद्यभिनयो यत्र तत्, वैपरीत्यप्रकटनमिति भावः, पुष्पगण्डिका। यदुक्तं भरतेन,—"नृत्यन्तु द्विविधं यत्र गीतमातीद्यमेव च। स्त्रियः पुंवच्च चेष्टन्ते सा ज्ञेया पुष्पगण्डिका॥" इति।

## लक्ष्मी

पुष्पगण्डिकाख्यं लास्याङ्गं लक्षयति—आतोद्येति। आतोद्येन मृदङ्गादिवाद्येन मिश्रितं मिलितं गेयं गानम्, तथा विविधानि छन्दांसि गद्यपद्यानि, च तथा स्त्री पुंसयोः विपर्यासेन व्यत्यासेन चेष्टितम् अभिनयो यस्मिन् गेये तत् तथोक्तम्। स्त्रियाः पुंसश्चेष्टितं पुंसस्त्री चेष्टितमित्यर्थः एतत् सर्वं पुष्पगण्डिकावन्मनोहरत्वात् पुष्पगण्डिकानाम् लास्याङ्गमुच्यते।

उक्तं च महर्षिणाऽपि

**नृत्तं तु द्विविधं यत्र गीतमातोद्यमेव च।**
**स्त्रियः पुंवच्च चेष्ट्ते सा ज्ञेया पुष्पगण्डिका॥' इति।**

तथा तन्मते उदाहरणं यथा—विक्रमोर्वश्यामेव—राजा—

**हिअआहि अपि अदुक्खओ सरवरुए धुअपक्खओ।**
**वाहे—वग्गिअ-णअणओ तम्भइ हंसजुअअणो॥**
**'हृदयाहितप्रियदुःखः सरोवरे धुतपक्षः।**
**बाष्पवल्गितनयनस्ताम्यति हंसयुवा॥' इति।**

## रुचिरा

पुष्पगण्डिकां, लक्षयति—५६० **आतोद्यमिश्रितं** वाद्यमिश्रितम्। **गेयम्।** च तथा। **विविधानि। छन्दांसि** छन्दोनिबद्धानि गीतानीति भावः। एवम्—**स्त्रीपुंसयोर्नायिकानायकयोः। विपर्य्यासचेष्टितं** विपरीतं चेष्टितम्। **पुष्पगण्डिका।** ऊह्यमुदाहरणम्॥ ५१४॥

**अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना ।**
**वीणापुरः सरं गानं स्त्रियाः प्रच्छेदको मतः ॥ २१८ ॥**

---

## विवृतिपूर्तिः

वीणेति । नाट्यशास्त्रे तु—'प्रच्छेदकः स विज्ञेयो यत्रचन्द्रातपाहताः । स्त्रियः प्रियेषु सज्जन्ते ह्यपि विप्रियकारिषु ॥' इत्याम्नातम् ॥

## विज्ञप्रिया

प्रच्छेदाख्यमङ्गमाह—अन्यासक्तमिति । उक्तमन्युना पतिमवज्ञाय वीणापुरस्सरं गानमित्यर्थः ।

## कुसुमप्रतिमा

अन्वेति । पतिम् अन्यस्यां स्त्रियामासक्तं मत्वा, प्रेमविच्छेदेन स्वप्रण्यभङ्गेन यो मन्युर्देव्यं तेन, वीणापुरःसरं वीणावादनपूर्वकं स्त्रिया यद्गानं तत् प्रच्छेदको नाम लास्याङ्गं मतः । प्रेमप्रच्छेदप्रयोज्यत्वात् प्रच्छेदक इति नाम । यथा मम विराजसरोजिन्याम्—

**"भ्रान्तहृदय ! त्यज विषयवासनां क्लान्त ! कुरु विषयक्षणिकभावनाम् ।**
**ऋतुराजो वसन्त आसीदशोकहेतुः साम्प्रतमपरागती ददाति यन्त्रणाम् ॥"**

## विमला

प्रच्छेदकमाह, अन्येति ।—पतिम् अन्यासङ्गम्—अन्यस्याम् आसक्त, मित्यर्थः, मत्वा प्रेमविच्छेदेन यः मन्युः,—शोकः तेन हेतुना स्त्रियाः वीणापुरःसरं गानं प्रच्छेदकः मतः । यथा शाकुन्तले,—"अहिणवमहुलोहभाविदो" इत्यादि । ["अभिनवमधुलोभभावितः" इति संस्कृतम्] ।

## लक्ष्मी

प्रच्छेदकाख्यं लास्याङ्गं लक्षयति—अन्यासक्तमिति । पतिं स्वामिनम् अन्यस्यां नायिकायाम् आसक्तम् अनुरक्तं मत्वा प्रेम्णाः स्वप्रणयस्य विच्छेदेन] विश्लेषेण यो मन्युः शोकः तेन तथोक्तेन, वीणापुरस्सरं वीणावादनपूर्वकं स्त्रिया भार्याया यद् गानं तत् प्रेमप्रच्छेदकत्वात् प्रच्छेदको नाम लास्याङ्गं मतः । भरतस्तु—

प्रच्छेदकः स विज्ञेयो यत्र चन्द्रातपाहताः । स्त्रियः प्रियेषु सज्जन्ते ह्यपि विप्रियकारिषु ॥ इत्याह । अस्योदाहरणमप्यूह्यम् ।

## रुचिरा

प्रच्छेदकं लक्षयति—५६१ **अन्यासङ्ग**मन्यस्यामासङ्गः प्रीतर्यस्य तम् । **पतिम्** । **मत्वा** । **प्रेमविच्छेदमन्युना** प्रेम्णो विच्छेदस्तेन (कृतः) मन्युः शोकस्तेन तदभिन्नमित्यर्थः । **वीणापुरःसरम्** । **स्त्रियाः** स्त्रीकर्तृकमित्यर्थः । **गानम्** । **प्रच्छेदकः** । **मतः** । उदाहरणमूह्यम् ॥ ५१५ ॥

**स्त्रीवेषधारिणां पुंसां नाट्यं श्लक्ष्णं त्रिगूढकम्।**

यथा मालत्याम्—'मकरन्दः—एषोऽस्मि मालतीसंवृत्तः।'

---

## विज्ञप्रिया

त्रिगूढाख्यमङ्गमाह—स्त्रीवेशेति। श्लक्ष्णं मनोहरम्। मकरन्द इति। तेन मालतीप्रतारणाय लवङ्गिकावेशस्य नन्दनप्रतारणाय मालतीवेशधारणात्।

## कुसुमप्रतिमा

स्त्रीति। स्त्रीवेशधारिणां पुंसां श्लक्ष्णं स्तोकं नाट्यं स्त्रीत्वेनाभिनयः त्रिगूढकं नाम लास्याङ्गं मतम्, त्रीणि वाग्वेशव्यवहृतानि गूढ़ानि यस्मिन्निति व्युत्पत्तेः।

यथेति। अत्र मालतीवेशधारिणी मकरन्दस्य स्तोकाभिनयात्त्रिगूढ़कम्।

## विमला

त्रिगूढ़माह, स्त्रीति।—स्त्रीवेशधारिणां पुंसां श्लक्ष्णं—मनोज्ञं, नाट्यं—नत्रनादित्रिकं, त्रिगूढ़कं—त्रीणि नत्रनादीनि गूढ़ानि यत्र तथोक्तम्। अत्र पुंस्त्ववाक्य भावानां त्रयाणां गोपनात् त्रिगूढ़त्वम्।

## लक्ष्मी

त्रिगूढकाख्यं लास्याङ्गं लक्षयति—स्त्रावेषेति। स्त्रीवेषधारिणां पुंसां श्लक्षणं मनोहरं नाट्यं स्त्रीत्वेनाभिनयः, तत् त्रीणि वाग्वेषव्यवहाराणि गूढनि यस्मिन् यत् त्रिगूढकाख्यं नाम लास्याङ्गं भवेत्। मुनिनाप्युक्तम्—

अनिष्ठुरश्लक्षणपदं समवृत्तैरलङ्कृतम्।नाट्यं पुरुषभावाढयं त्रिगूढकमुदाहृतम्॥ इति।

उदाहरति—यथेति। मालत्या मालतीमाधव इत्यर्थः। मकरन्द इति। तेन हि मालती प्रतारणाय लवङ्गिकावेशस्य नन्दनप्रतारणाय मालतीवेशस्य च धारणेन मनोहराभिनयात् त्रिगूढकम्।

## रुचिरा

त्रिगूढकं लक्षयति—५६२ **स्त्रीवेषधारिणाम्। पुंसाम्। श्लक्ष्णं** मृदुलम्। **नाटयम्। त्रिगूढकम्।**

उदाहरति—**यथेत्यादिना**। स्पष्टम्।

→

**कश्चन भ्रष्टसंकेतः सुव्यक्तकरणान्वितः ॥ २१९ ॥**
**प्राकृतं वचनं वक्ति यत्र तत्सैन्धवं मतम्।**
करणं वीणादिक्रिया।

---

## विवृतिः

मन्युः शोकः ॥ संकेतस्थाने अनागमने नायको भ्रष्टसंकेतो भवति ॥

## कुसुमप्रतिमा

कथनेति। भ्रष्टो निदिर्दष्टस्थाने नायिकाया अनागमनात् प्रच्युतः सङ्क्तोः यस्य सः, तथा सुव्यक्तेन करणेन वीणादिवादनक्रियया अन्वितः। एतत्तु कादाचित्कमिति महान्तः। कश्चन पुरुषो यत्र विषये प्राकृतं वचनं वक्ति, तत् सैन्धवं नाम लास्याङ्गं विदुः। सैन्धवेनाश्वेनैव अस्थिरेण पुरुषेण प्रयुक्तत्वात् सैन्धवमिति संज्ञा। यथा विक्रमोर्वश्याम्—"राजा। कट्ट तुए सिक्खिदमेदं गइलालस ! सा तुए दिट्टा जहणभराखसा।"

करणमिति। वीणादिक्रिया वीणादिवादनकार्य्यम्। एतेन कारिकायां करणशब्दी भावसाधन इति दर्शितम्।

## विमला

सैन्धवमाह, कथनेति।—भ्रष्टसङ्केतः—सङ्केतस्थाने नायिकाया अनागमनात् च्युतसङ्केतस्थान इत्यर्थः, सुव्यक्तेन—समग्रेणेत्यर्थः, करणेन—कामोद्दीपकंवीणादिसाधनेनेत्यर्थः, अन्वितोऽपि कश्चन—कोऽपि पुरुषः, यत्र प्राकृतं वचनं वक्ति, तत् सैन्धवं विदुः। यथा उत्तरकाण्डे रावणधृत्याः रम्भायाः अनागमने नलकूवरः।

## लक्ष्मी

सैन्धवाख्यं लास्याङ्गं लक्षयति—कश्चनेति। भ्रष्टः सङ्केतस्थाने नायिकाया अनागमेन नष्टः सङ्केतो यस्य स तथोक्तः, तथा सुव्यक्तेन सुस्पष्टेन करणेन वीणादिवादनकर्मणा अन्वितो युक्तो यः स तथोक्तः, प्रायिकं चैतत्। कश्चन पुरुषो यत्र प्राकृतं वचनं वक्ति तत् सैन्धवेनाश्वेनेव चञ्चलेन पुरुषेण प्रयुक्तत्वात् सैन्धवं नाम लास्याङ्गं विदुः। यथा स्वप्नवासवदत्ते—राजा....श्रुतिसुखनिनदे कथं नु देव्याः......इत्यादि।

करणपदं व्याचष्टे—करणमिति। वीणादिक्रिया वीणादिवादनर्म। एतेन क्रियते यत्तत्करणमिति भावसाधन एव करणशब्दोऽत्र ग्रन्थकृता प्रदर्शितः।

## रुचिरा

सैन्धवं लक्षयति—५६३ **भ्रष्टसङ्केतो** भ्रष्टो नायिकाशून्यत्वेन हतः सङ्केतो यस्य तादृशः। **सुव्यक्तकरणान्वितः** सुव्यक्तानि सुव्यक्तस्वराणि यानि करणानि वीणादिक्रियास्तैरन्वितः। **कश्चन**। **यत्र** यस्मिन् नृत्य इति यावत्। **प्राकृतम्**। **वचनम्**। **वक्ति** गायति। **तत्**। **सैन्धवम्**। **मतम्**॥ ५१६ ॥

कारिकां सुगमयितुं तत्कठिनांशभूतं करणपदार्थं व्याचष्टे—**करणमित्यादिना**। **स्पष्टम्**। उदाहरणमूह्यम्।

**चतुरस्त्रपदं गीतं मुखप्रतिमुखान्वितम् ॥ २२० ॥**

**द्विगूढं रसाव भाढ्यम् ।**

---

## विवृतिः

चतुरस्त्राणि विदग्धमनोहराणि पदानि यत्र ।

यद्वा चतुरस्त्रपदं पूर्णसप्तस्वरम् । मुखप्रतिमुखान्वितम् उक्तिप्रयुक्तिसहितम् ।

## विवृतिपूर्तिः

स्त्रीवेषेति । मुनिना तु—'अनिष्ठुरश्लक्ष्णपदं समवृत्तैरलंकृतम् । नाट्यं पुरुषभावाढयं त्रिगूढकमुदाहृतम् ॥' इत्युक्तम् ॥

द्विगूढमिति । चतुरस्त्रपदादिविशेषणत्रयवद् गीतं द्विगूढम् ॥

## विज्ञप्रिया

द्विगूढकमङ्गमाह—चतुरस्त्रपदमिति । पादचतुष्टयान्वितं गीतमित्यर्थः । तच्च गीतं मुखप्रतिमुखसन्ध्योर्गेयमित्यर्थः ।

## लोचन

चतुस्त्रपदं भरतादि प्रसिद्धम् ।

## कुसुमप्रतिमा

चतुरिति । चतुरस्त्रामि चतुर्धा विमाक्तानि पदानि यत्र तत्, मुखेन मुखसन्धिना प्रतिमुखेन प्रतिमुखसन्धिना वा अन्वितं तयोरेकतरस्मिन्नवस्थितमित्यर्थः, तथा रसाभावाभ्यामाढ्यं युक्तं द्विगूढं नाम लास्याङ्गं विदुः, द्वौ रसभावौ गूढ़ौ व्यङ्ग्यत्वाद्गुप्तौ यस्मिन्निति व्युत्पत्तेः । यथा शाकुन्तले—

**"स्णचिम्बिताङ्कं भमरेह सुउमारकेसरसिहाइं ।**

**ओदं सअन्ति दक्षमाणा पमदाओ सिरौसकुसुमाहं ॥"**

## विमला

द्विगूढमाह, चतुरस्त्रपदमिति ।—चतुरस्त्राणि—सामाजिकमनोहराणीति भावः, पदानि यत्र तादृशं, यद्वा,—चतुरस्त्रपदं—स्वरग्रामादिपूर्णं, सुखसन्धिप्रतिमुखसन्धिसमन्वितम्—उक्तिपत्युक्तिसहितं, रसभावाभ्याम् आद्यं—पूर्णं चेति विशेषणत्रयविशिष्टं गीतं द्विगूढं नाम ज्ञेयमिति शेषः ।

## लक्ष्मी

द्विगूढाख्यं लास्याङ्गं लक्षयति—चतुरस्रपदमिति। चतुरस्रामि विदग्धमनोहराणि पदानि यस्मिन् तत् तथोक्तम्, यद्वा चतुरस्रपदं पूर्णससस्वरं भरतादिप्रसिद्धं यस्मिन् तत्, मुखेन मुखसन्धिना प्रतिमुखसन्धिना वा अन्वितम् उभयोर्मध्ये केनापि सहितम् तथा रसभावाभ्याम् आढ्यमन्वितम्, द्वौ रसभावौ गूढौ प्रतीयमानत्वात् गुप्तो यत्र तत् द्विगूढं नाम लास्याङ्गं विदुरित्यर्थः। यथा शाकुन्तले—

**'खण चुम्बिताइं भ्रमरेहि सुउमार केसरसिहाई।**

**ओदसअन्ति दअमाणा पमदी सिरीसुकुमाई ॥ इति।**

## रुचिरा

द्विगूढं लक्षयति—५६४ **मुखप्रतिमुखान्वितं** मुखप्रतिमुखाभ्यां तदाख्याभ्यां सन्धिभ्यामन्वितम्। **रसभावाढयं** रसाभावाभ्यामाढयं सम्पन्नम्। **चतुरस्रपदं** चतुरस्राणि पूर्णसप्तस्वराणि रसिकमनोहराणि वा पदानि यत्र तथोक्तम्। **गीतम्**। **द्विगूढम्**। उदाहरणमूह्यम् ॥ ५१७ ॥

**उत्तमोत्तमकं पुनः ।**

**कोपप्रसादजमधिक्षेपयुक्तं रसोत्तरम् ॥ २२१ ॥**

---

## विवृतिः

कोपप्रसादजम् इत्यादिविशेषणपञ्चकमनुषक्तस्य गीतस्य विशेषणम् ।

## विवृतिपूर्तिः

उत्तमेति । कोपप्रसादजादिविशेषणपञ्चकवद् गीतमुत्तमोत्तमपदवाच्यम् ॥

## विज्ञप्रिया

उत्तमोत्तमकमङ्गमाह—उत्तमोत्तमकं पुनरिति । कोपेति । लास्यं कदाचित्कोपोजत्वात् अधिक्षेपयुक्तम् । कदाचित् प्रसादजत्वात् रसोत्तरमित्यर्थः ।

## कुसुमप्रतिमा

उत्तेति । कोपप्रसादाभ्यां जातं कोपप्रसादजं कोपात् प्रसादाद्वा जातमित्यर्थः, अधिक्षेपेण तिरस्कारेण युक्तम् । एतत्तु कोपजत्वमेव बोध्यम् । तथा रस उत्तरः श्रेष्ठो यत्र तत्तवोक्तं लास्याङ्गं पुनः उत्तमोत्तमं बिदुः, उत्तमादप्युत्तममिति व्युत्पत्तेः । यथा विक्रमोर्वश्याम्—"राजा । (सक्रोधम्) इत्याश्चन्तरम् "हिअणाहिअपिअदुक्खओ सरवरए धुअपक्खभो । बाहोवग्गिअगअणओ तामह हंसजुअलखी ॥"

## विमला

उत्तेति—कोपप्रसादाभ्यां जातम्, अधिक्षेपः,—तिरस्कारः, तद्युक्तं, रसोत्तरं—-सरसमित्यर्थः,

## लक्ष्मी

**['क्षणं चुम्बितानि भ्रमरैः सुकुमारकेसरशिखानि ।**

**अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि ॥'] इति संस्कृतम् ।**

उत्तमोत्तमकं लास्याङ्गं लक्षयति—उत्तमोत्तमकमिति । कोपेन प्रसादेन च जातं कोपप्रसादजं कोपात् प्रसादाद्वा उपन्नमित्यर्थः, अधिक्षेपेण अवमानेन युक्तं संयुक्तम्, तथा रस उत्तरः उत्कृष्टः यस्मिन् तत्तादृशम्, कदाचित्कोपज अधिक्षेपयुक्तम्, कदाचित् प्रसादजत्वारसोत्तरमित्यर्थः, उत्तमादप्युत्तमित्यर्थः, अधिक्षेपयुक्तम्, कदाचित् प्रसादजत्वात् रसोत्तरमित्यर्थः, उत्तमादप्युत्तमित्युत्तमोत्तमं नाम लास्याङ्गं विदुः । अत्र 'कोपप्रसादजम्' इत्यादिविशेषणपञ्चकमनुषक्तस्य गीतस्य विशेषणं बोध्यम् । यथा विक्रमोर्वश्यम्—राजा (सक्रोधम्) इत्याद्यग्रे—

हिअ आहि अपि अदुक्खओ सरवरए धुअ पक्खओ ।

**वाहो वग्गिअ-गअणओ तस्मर हंसजुअलओ ॥ इति ।**

## रुचिरा

उत्तमोत्तमकं लक्षयति—५६५ **कोपप्रसादजं** कोपप्रसादाभ्यां जायत इति तथोक्तम्। **अधिक्षेपयुक्तम**धिक्षेपस्तिरस्कारस्तेन युक्तम्। **रसोत्तरं** रस उत्तरस्मिन् यस्य तथोक्तं, सरसमिति भावः। **हावहेलाऽन्वितं** हावलेलाभ्यां शृङ्गारजन्यचेष्टाविशेषाभ्यामन्वितम् (एतौ च लक्षितपूर्वौ)। **चित्रश्लोकबन्धमनोहरं** चित्रा विचित्रा ये श्लोकबन्धाः श्लोकरचनास्तैर्मनोहरम्। **पुनः**। **उत्तमोत्तमकम्**। उदाहरणमूह्यम्॥ ५१८॥

**हावहेलान्वितं चित्रश्लोकबन्धमनोहरम्।**

**उक्तिप्रत्युक्तिसंयुक्तं सोपालम्भमलीकवत्॥ २२२ ॥**

**विलासान्वितगीतार्थमुक्तप्रत्युक्तमुच्यते।**

**स्पष्टान्युदाहरणानि।**

---

## विवृतिः

उक्तिप्रत्युक्तिसंयुक्तमिति गीतमित्यनुषज्यते।

सोपालम्भं सभर्त्सनम्। अलीकवत् अप्रियमिव॥

## विवृतिपूर्तिः

उक्तेति। उक्त्यादिविशेषणचतुष्टयवद् गीतमुक्तप्रत्युक्तम्॥

## विज्ञप्रिया

हावहेलेति। हेलाभिन्नोऽत्र हावो गोवृषन्यायात् हेलाबाहुल्यार्थं तत्।

उक्तप्रत्युक्तमङ्गमाह—उक्तिप्रत्युक्तीति। उपालम्भ उपहासः। स चालीकार्थमुपन्यस्येत्याह—अलीकवदिति।

## कुसुमप्रतिमा

हावेति। हावहेलाभ्यां प्रागुक्तलक्षणाभ्यान्वितम्, चित्रेण शोकबन्धेन मनोहरम्, उक्तिप्रत्युक्तिसंयुक्तम्, सोपालम्भं सतिरस्कारम्, अलीकात् मिथ्यावत् प्रतीयमानम्, तथा विलासेनान्विती गीतार्थो यत्र तत्तादृशं लास्याङ्गम् उक्तप्रत्युक्तं नामोच्यते, उक्तिप्रत्युक्तिरूपत्वात्। यथा विराजसरोजिन्याम्—

"चित्रलेखा। नवीनसरसि सरोजिनी मृदुलपवनविकल्पिनी।

हेमवभा। सकलकजासु विकासिनी नागरहृदयविहारिणी।" इत्यादि।

## विमला

हावेन—"भ्रूनेत्रादिविकारैस्तु" इति लक्ष्मोक्तेन, हेलया—"हेलाऽत्यन्तसमालक्ष्य-विकारः स्यात् स एव च" इत्युक्त लक्षणेन भावविशेषः, अन्वितं, चित्रेण—मनोज्ञेन, श्लोकबन्धेन—पदारन्ननेन, मनोहरं गीतं पुनः उत्तमोत्तमकम्।

उक्तप्रयुक्तमाह, उक्तीति।—उक्तिप्रत्युक्तिभ्यां—वचनोत्तराभ्यां, संयुक्तं, सोपालम्भं—तिरस्कारव्यञ्जकम्, अलीकवत्—मृषावादसहितम्, अप्रियवद्वा, विलासेन अन्वितः,—युक्तः, गीतस्य अर्थः यत्र तादृशं, गीतम् उक्तप्रत्युक्तम् उच्यते। एतेषामुदाहरणानि सनातनगीतगोविन्दादौ यथायथं मृग्याणि।

## लक्ष्मी

उक्तप्रत्युक्ताख्यं लास्याङ्गं लक्षयति—हावहेलेति। हावहेलाभ्यां पूर्वलक्षिताभ्यामन्वितम्, हेलाभिन्नोऽत्र हावो गोवलीवर्दन्यायात् हेलाबाहुल्यार्थम्, चित्रेण श्लोकबन्धेन मनोहरम्, उक्तिप्रत्युक्तिसंयुतम्, सोपालम्भं सभर्त्सनम्, अलीकवत् असत्यवद् भासमानम्, तथा विलासेनान्वितो गीतार्थो यस्मिंस्ततथोक्तम् उक्तिप्रत्युक्ति-रूपत्वात् उक्तप्रयुक्तं नाम लास्याङ्गमुच्यते।

## रुचिरा

उक्तप्रत्युक्तं लक्षयति—५६६ **उक्तिप्रत्युक्तिसंयुक्तम्** वचनप्रतिवचनशालि। अत एव—**सोपाल-म्भमुपालम्भव्यञ्जकम्**। अत एव—**अलीकवन्मृषावादसहितम्**। **विलासान्वितगीतार्थं** विलासः शृङ्गारचेष्टाविशे-षस्तेनान्वितो गीतार्थो यत्र तादृशम्। लास्यमिति प्रसङ्गानुप्रसक्तम्। **उक्तप्रत्युक्तम्**। **उच्यते**। उदाहरणमूह्यम्॥ ५१९॥

नन्वेषां कान्युदाहरणानीत्याशङ्क्याह—एषामित्यादि। स्पष्टम्।

**एतदेव यदा सर्वैः पताकास्थानकैर्युतम् ॥ २२३ ॥**

**अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ।**

एतदेव नाटकम् । यथा—बालरामायणम् ।

---

## विवृतिः

नाटक मुक्त्वा प्रकरणमाह—अथेति ।

## विमला

महानाटकमाह, एतदिति ।—अतत् नाटकम् एव, यदा सर्वैः,—पूर्वोक्तैः पताकास्थानकै; दशभिरङ्कैश्च युतं, तदा धीराः,—विद्वांसः, महानाटकम् ऊधिवे—उक्तवन्तः ।

## लक्ष्मी

नाटकप्रकरणात् महानाटकाख्यं नाटकप्रभेदं निरूपयति—एतदेवेति । नाटकमेवेत्यर्थः, यदा सर्वैः समग्रैः—'सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः ।

**पताकास्थानकमिदं प्रथमं परिकीर्त्तितम् ॥'**

इत्यादिभिरुक्तैश्चतुर्भिः पताकास्थानकैः दशभिरङ्कैश्च युतं भवेत्, तदा धीरा बुद्धिमन्तो जनाः तत् महानाटकमूचिरे. एवं च पताकाचतुष्टययुक्तत्वे सति दशाङ्कयुक्तनाटकत्वमेव महानाटकत्वमिति लक्षणं फलितम् ।

## लक्ष्मी

नाटकप्रकरणभाणादयो ये रूपकोपरूपकप्रभेदास्तत्र साङ्गोपाहगनाटकलक्षणमभिधाय उद्देशक्रमात् प्रकरणाख्यं द्वितीयरूपकं निरूपयितुमाह—अथ प्रकरणमिति । नाटकलक्षणानन्तरं प्रकरणं निरूपयते इत्यर्थः ।

## रुचिरा

महानाटकं लक्षयति—५६७ एतन्निरुक्तलक्षणं नाटकम् । **एव** । **यदा** । **सर्वैः** समस्तप्रभेदकैः । **पताकास्थानकैः** । **च** तथा । **दशभिः** । **अङ्कैः** । **युतम्** । **धीराः** । **महानाटकम्** । **ऊचिरे** कथितवन्तः ॥ ५२० ॥

कारिकास्थमेतत्पदार्थमाह—**एतदेवे**त्यादिना । उदाहरति—**यथे**त्यादिना । स्पष्टम् ।

अथ प्रकरणम्—

**भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम्॥ २२४॥**

**शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक्।**

**सापायधर्मकामार्थपरो धीरप्रशान्तकः॥ २२५॥**

विप्रनायकं यथा मृच्छकटिकम्। अमात्यनायकं मालतीमाधवम्। वणिङ्नायकं पुष्पभूषितम्।

---

## विवृतिः

वृत्तं वर्णनीयं नायकचरितम्। लौकिकं लोकचरितमात्रप्रसिद्धम्।

अत एव कविकल्पितम्, न तु पुराणादिप्रसिद्धम्।

धर्मस्य स्वर्गसाधनत्वेन, कामस्य पुत्रपश्वादिविषयकत्वेन, अर्थस्य भोगसाधनत्वेन सापायत्वम्॥

## विवृतिपूर्तिः

भवेदिति। भरतेनाप्युक्तम्—'यत्र कविरात्मबुद्ध्या वस्तु शरीरं च नायकं चैव। औत्पत्तिकं प्रकुरुते प्रकरणमिति तद्बुधैर्ज्ञेयम्॥' इति॥

## विज्ञप्रिया

महानाटकाख्यं नाटकप्रभेदमाह—एतदेवेति. नाटकमेवेत्यर्थः। सर्वैः पताकास्थानकैरिति।

**सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः।**

**पताकास्थानकमिदं प्रथमं परिकीर्त्तितम्॥**

**इत्यादिभिरुक्तैश्चतुर्भिः पताकास्थानकैरित्यर्थः।**

नाटकप्रकरणभाणादयो ये रुपकोपरूपकभेदा उत्कीर्त्तिता "विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्।" इत्युक्तत्वादित्थं साङ्गोपाङ्गनाटकलक्षणमुक्त्वा प्रकरणाख्यं द्वितीयरूपकमाह—अथ प्रकरणमिति। वृत्तं तन्नाट्यवर्णनीयप्रसङ्गः। तच्च कविनैव कल्पितत्वेन पुराणेषु अदृष्टत्वाल्लौकिकम्। सापायेति। शृङ्गारित्वेन कदाचिद्धर्मस्य नायिकाया मानात् कदाचित्कामस्य कामार्थव्यवसायात् अर्थस्य चापायवानित्यर्थः। धीरप्रशान्त इति। "सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्त" इति। तल्लक्षणं प्रागुक्तम्। पुष्पभूषितं प्रकरणविशेषः।

## लोचन

एवं नाटकलक्षणं गोबलीवर्दन्यायेन भिन्नं महानाटकलक्षणम्।

अथ उद्देश्यक्रमेप्रकरणादीन्निरूपयति—भवेदिति। लौकिकं न तु दिव्यं मिश्रं वा।

## कुसुमप्रतिमा

नाटकप्रकारामान्महानाटकं लक्षयति एतदिति । यदा एतन्नाटकमेव सर्वैश्चतुर्भिरेव प्रागुक्तैः । पताका-स्थानकैः दशभिरङ्कैश्च युतं भवेत्, तदा धीरास्तत् महानाटकमुचिरे । तता च पताकाचतुष्टयवत्वे सति दशाङ्कघटितनाटकत्वं महानाटकत्वमिति लक्षणम्। एतेन अन्धस्य पद्मलोचनसंज्ञावत् नाटकलक्षणहीनस्यैव हनूमत्प्रमीतकाव्यस्यप्रमहानाटकमिति संज्ञामात्रमित्यनुसन्धेयम् ।

साङ्गोपाङ्गं नाटकं लक्षयित्वा उद्देशक्रमात् प्रकरण लक्षयितुमाह अथेति ।

भवेदिति । प्रकरणे तदाख्ये दृश्यकाव्ये वृत्तं वृत्तान्तः लौकिकं मर्त्यलोकसम्भवयोग्यं न तु मर्त्यलोकासम्भवस्वर्गादियोग्यम्, तथा कविनेव कल्पितं न पुनर्नाटकवत् पुरार्णभारतादिप्रसिद्दं भवेत् । श्रृङ्गारो रसोऽङ्गो प्रधानो भवेत् न तु नाटकवद्वीररसोऽप्यङ्गो भवेत् । नायकस्तु विप्रो ब्राह्मणजातीयः, अमात्यी ब्राह्मणेतरोऽपि राजमन्त्री, अथवा वणिक् सापायाः क्षयशीला ये धर्म्मकामार्थास्तत् परस्तेष्वासक्रो न तु मोक्षव्याप्तः तथा धीरप्रशान्तकः प्रागुक्तवीरप्रसान्तलक्षणान्वितो भवेत् । तेन कविकल्पितलौकिकवृत्तान्तमूलत्वे सति क्षयिणुधर्म्मकामार्थपराय ए-धीरप्रशान्तलक्षण विमामान्यवगन्यतमनायकवच्छृङ्गारप्रधआनदृश्यकाञ्चन प्रकरणमिति लक्षणभिप्रेतम् ।

विप्रेति । अमात्यनायकमित्यामात्यपदममात्यपुत्रपरं माधवस्यामान्यपुत्रम:तत्वात् । ततश्च मूलेऽभ्य मात्यपदं तदपत्यीपलक्षणं मन्तव्यमिति दिक् ।

## विमला

नाटकमुक्ता प्रकरणमाह, अथत्यादिना ।—भवेदिति ।—प्रकरणे वृत्तं— वर्णनीयं नायकचरितं, लौकिकं—लोकचरित्रमात्रप्रसिद्धम्, अत एव कविना कल्पितं—स्वकपोलरचितमित्यर्थः, न तु पुराणादिप्रसिद्धं; भवेत् । श्रृङ्गारः अङ्गी—प्रधानम् । नायकः धीरप्रशान्तकः,—पूर्वोक्तलक्षणकः, सापायाः,—अपायः,—क्षयः, तत्सहिताः ये धर्माः,—स्वर्गसाधनभूताः, कामः,—स्त्रीपुत्रादयः, अर्थाः, भोगसाधनानि धनादीनीति यावत्, तत्परः,—तदासक्तः, न तु अपायरहितमुक्तिकामीति भावः; धर्मस्य स्वर्गसाधनत्वेन, कामस्य पुत्रपश्वादिविषयकत्वेन, अर्थस्य भोगसाधनत्वेन सापायत्वं प्रसिद्धम् ।

## लक्ष्मी

नाटकप्रकरणभाणादयो ये रूपकोपरूपकप्रभेदास्तत्र साङ्गोपाहगनाटकलक्षणमीभधाय उद्देशक्रमात् प्रकरणाख्यं द्वितीयरूपकं निरूपयितुमाह—अथ प्रकरणमिति । नाटकलक्षणानन्तरं प्रकरणं निरूपयते इत्यर्थः ।

भवेदिति । प्रकर्षेण क्रियते कल्प्यते नेता फलं वस्तु वा व्यस्तसमस्ततयाऽत्रेति प्रकरणं तस्मिन् प्रकरणे तत्संज्ञके दृस्यकाव्ये वृत्तं तन्नाटयवर्णनीयनायकचरितम्, लौकिकं लोकमात्रप्रसिद्दं मर्त्यलोकसम्भवयोग्यं न तु मर्त्यलोकासम्भवदिव्ययोग्यमित्यर्थः, अत एव कविकल्पितं स्वप्रतिभामात्रेण निर्मितं न तु नाटकवत् पुराणादिप्रसिद्धम् भवेत् तथा चोक्तं महर्षिणा—यत्र कविरात्मबुध्या वस्तु शरीरं नायकं चैव ।

**औत्पत्तिकं प्रकुरुते प्रकरणमिति तद्बुधैर्ज्ञेयम् ।। इति ।**

श्रृङ्गारो रसोऽङअगी मुख्यो भवेत् न तु नाटकवत् वीररसोऽप्यङ्गी भवेत् । नायकस्तु विप्रो ब्राह्मणवर्णः अमात्यो ब्राह्मणादिरिक्तोऽपि राजसचिवः, अथवा वणिक् वैश्यः, सापाया विचारशालिनो ये धर्मकामार्थास्तत्पर-

स्तेष्वासक्तः, न तु मुक्तिततपरः, धर्मस्य स्वर्गसाधनत्वेन, कामस्य पुत्रपश्वादिविषयकत्वेन, अर्थस्य भोगसाधनत्वेन सापायत्वं बोध्यम्। तथा धीरप्रशान्तकः 'सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात्' इति पूर्वलक्षितधीरप्रशान्तलक्षणयुतो भवेत्। तथा च कविकल्पितलौकिकवृत्तान्तजन्यत्वे सति विनाशशालिधर्मकामार्थतत्पर—धीरप्रशान्तकविप्रामात्यवणिगन्यतमनायकवच्छृङ्गाररसप्रधानदृश्यकाव्यत्वं प्रकरणत्वमिति सामान्यलक्षणं फलितम्।

अत्र सापायपदोपादानात् प्रकरणे धर्मादीनामपाय उपन्यसनीय एवेति बोधितम्।

उदाहरति—विप्रेति। अमात्यनायकमित्यमात्यपदं तत्पुत्रस्योपलक्षणं तेन माधवस्यामात्यपुत्रत्वेऽपि न क्षतिः। एवं मूलेऽप्युपलक्षणं बोध्यम्। पुष्पभूषितमिति प्रकरणविशेषः।

## रुचिरा

प्रकरणं लक्षयितुमाह—**अथ** नाटकस्य सप्रपञ्चं निरूपणानन्तरम्। **प्रकरणम्**। लक्ष्यते—५६८ **प्रकरणे** तदाख्ये द्वितीये रूपक इत्यर्थः। **कविकल्पितं** 'नतु पुराणेतिहासप्रसिद्ध'मिति भावः। **लौकिकमे**तल्लोकमात्रोचितम्। **वृत्तं** नायकचरितम्।

**शृङ्गारः**। **अङ्गी** प्रधानभूतो रसः। **नायकः**। **तु** पुनः। **विप्रो** ब्राह्मणः। **अमात्यो** मन्त्री **अथवा**। **वणिक्** वैश्यः। **सापायधर्म्मकामार्थपरो**ऽपायाः क्षयान्तसम्पत्तयस्तैः सहिता ये धर्म्मकामार्थस्तेषु परो भोगार्हधर्म्मकामार्थनिष्ठ इति भावः। **धीरप्रशान्तको** धीरप्रशान्तलक्षणाक्रान्तः। **भवेत्**।।५२१॥५२२॥

उदाहरति—**विप्रनायकमित्यादिना**। स्पष्टम्।

**नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित्।**

**तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः ॥ २२६ ॥**

**कितवद्यूतकारादिविटचेटकसंकुलः।**

कुलस्त्री पुष्पभूषिते। वेश्या तु रङ्गवृत्ते। द्वे अपि मृच्छकटिके। अस्य नाटकप्रकृतित्वाच्छेषं नाटकवत्।

---

## विवृतिः

तेन नायिकाभेदेन। तस्य प्रकरणस्य। 'विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्' इति प्रकरणादौ नाटकधर्मातिदेशान्नाटकस्य प्रकृतित्वम् ॥

## विवृतिपूर्तिः

नायिकेत्यादि। काव्येन्दुप्रकाशे त्वयमर्थः किंचित्परिष्कृत्योक्तः—'शुद्धं धूर्तमिश्रमिति भेदात्तस्त्रिविधं पुनः। कुलस्त्रीनायिकं शुद्धं गणिकानायिकं परम् ॥ प्राधान्यमुभयोर्यत्र प्रकरं विदुः ॥' इति 'तत्र वेश्या प्राकृतं तु कुलजा संस्कृतं वदेत् ॥' इति कृष्णः ॥

## विज्ञप्रिया

तेन भेदास्त्रयस्तस्येति। तस्य प्रकरणस्य कुलजा वेश्या तदुभयनायिकाभेदात् भेदत्रयम्। तत्रोभयनायकत्वे तृतीयभेदपात्राण्याह—कितवेति।

## कुसुमप्रतिमा

प्रकरणभेदमाह नायिकेति। क्वापि कस्मिन्नपि प्रकरणे कुलजा कुलस्त्री नायिका, क्वापि वेश्या नायिका क्वचिच्च द्वयं कुलजावेश्ये द्वे अपि नायिके। सर्वत्र दृश्यते इति शेषः। तेन हेतुना तस्य प्रकरणस्य त्रयो भेदाः प्रकाराः सम्भवन्ति। तत्र तेषु भेदेषु मध्ये तृतीयो भेदः कुलजावेश्योभयनायिकावत् प्रकरणमित्यर्थः, कितवो धूर्त्तः द्यूतकारः आदिशब्दात् सभिकादयश्च तथा विटः प्रागुक्तलक्षणः चेटको दासश्च तैः सङ्कुलो व्याप्तः।

अस्येति। अस्य प्रकरणस्य, नाटकमेव प्रकृतिरतिदेशविधिना स्वधर्म्मदर्शकं यस्य तन्नाटकप्रकृतिस्तस्य भावस्तस्मात्। "यत्र समग्राङ्गोपदेशः सा प्रकृतिः" इति पूर्वमीमांसार्थसंग्रहे लौगाक्षिः। तथा च—"विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्" इति प्रागुक्तादिदेशात् शयमवशिष्टं सन्ध्यङ्गनाटकलक्षणादिकं नाटकवज्ज्ञेयमिति शेषः।

## विमला

नायिकेति।—क्वापि—प्रकरणे, नायिका कुलजा—कुलीना, क्वापि वेश्या—गणिका, क्वचिद्वा द्वय—कुलजा वेश्या चेत्यर्थः, तेन—नायिकाभेदेन, (हेतुना) तस्य—प्रकरणस्य, त्रयः भेदाः,—विशेषाः। तत्र—तेषु भेदेषु,

तृतीयः, भेदः,—-यत्र कुलजा वेश्या च नायिका स इति भावः, कितवः,—धूर्त्तः, द्यूतकारः, [आदिपदेन सभिकादीनां ग्रहणं] तथा विटः,—पूर्वोक्तलक्षणः, तथा घटकः, एतैः सङ्कुलः,—व्याप्तः।

अस्येति।—"विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्" इत्युक्तेः अस्य—प्रकरणस्य, नाटकमेव प्रकृतिः,—मूलकारणं यस्य तथोक्तः, तस्य भावः तस्मात्।

## लक्ष्मी

अथ प्रकरणभेदं दर्शयति—नायिकेति। क्वापि कुत्रापि प्रकरणे कुलजा कुलस्त्रीनायिका क्वापि वेश्या वेशो भृतिः सोऽस्या जीवनमिति वेश्या तद्विशेषो गणिका। यदुक्तम्—

**'आभिरभ्यर्थिता वेश्या रूपशीलगुणान्विता।**

**लभते गणिकाशब्दं स्थानं च जनसंसदि॥' इति।**

नायिका, क्वचिच्च द्वयं कुलजावेश्ये द्वे अपि नायिके उपलभ्यते इति शेषः। तथा चैनमेव परिष्कृत्योक्तं काव्येन्दुप्रकाशे—

अनयोर्भाषाविषये तु मन्दारमरन्दे—'तत्र वेश्या प्राकृतं तु कुलजा संस्कृतं भवेत्।' इति।

तेन नायिकाभेदेन तस्य प्रकरणस्य त्रयो भेदाः प्रकारा भवन्ति। तत्र तेषु भेदेषु मध्ये तृतीयको भेदः उभयनायिकावत् प्रकरणमित्यर्थः, कितवो धूर्त्तः द्यूतकारादयः तथा विटश्चेटश्च पूर्वलक्षितः तैः सङ्कुलो व्यासः।

उदाहरति—कुलस्त्रीति। कुलजैव पुष्पभूषिते, वेश्यैव रङ्गवृत्ते इत्यर्थः। 'तरङ्गदत्त' इति पाठान्तरम्।

अस्येति। अस्य प्रकरणस्य। नाटकप्रकृतित्वादिति। 'यत्र समग्राङ्गोपदेशः सा प्रकृतिः' इति जैमिन्युक्त-लक्षणेन नाटके सर्वाङ्गोपदेशात् प्रकृतित्वेन तत एवातिदेशविधानात् प्रकरणादौ सन्ध्यङ्गनाटकलक्षणादिकमवशिष्टं नाटकवदेव ज्ञेयमित्यर्थः। तथा चोक्तं प्रागेव—

'विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्।' इति।

## रुचिरा

अस्य भेदानाह—५६९ **क्वापि** कस्मिंश्चित्तस्य भेदे इत्यर्थः। **कुलजा** कुलीना। **नायिका**। **क्वापि**। **वेश्या** 'नायिके'ति पूर्वतोऽन्वेति। **क्वचित्**। **द्वयं** कुलजा वेश्या चेत्येवं नायिकायुगलम्। "स्या"दिति शेषः। **तेन**। **तस्य** प्रकरणस्य। **त्रयः**। **भेदाः**। 'स्यु'रिति शेषः।

अत्रापि तृतीयभेदस्य विशेषमाह—५७० **तत्र** तेषु त्रिषु भेदेष्विति भावः। **तृतीयकः**। **भेदः कितवद्यूत-कारादिविटचेटकसङ्कुलः**। अत्र कितवो धूर्तः द्यूतकारो द्यूतव्यसनी, आदिना नागरिकादिः, विटचेटौ च लक्षितपूर्वौ॥ ५२३॥

उदाहरणं दर्शयति—**कुसस्त्रीति**। 'विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्' इत्युक्तं स्मारयति—**अस्येत्यादिना**। स्पष्टम्।

अथ भाणः—

**भाणः स्याद् धूर्तचरितो नानावस्थान्तरात्मकः ॥ २२७ ॥**

**एकाङ्क एक एवात्र निपुणः पण्डितो विटः ।**

**रङ्गे प्रकाशयेत्स्वेनानुभूतमितरेण वा ॥ २२८ ॥**

**संबोधनोक्तिप्रत्युक्ती कुर्यादाकाशभाषितैः ।**

**सूचयेद्वीरशृङ्गारौ शौर्यसौभाग्यवर्णनैः ॥ २२९ ॥**

**तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती ।**

**मुखनिर्वहणे संधी लास्याङ्गानि दशापि च ॥ २३० ॥**

अत्राकाशभाषितरूपपरवचनमपि स्वयमेवानुवदन्नुत्तरप्रत्युत्तरे कुर्यात् । शृङ्गारवीररसौ च सौभाग्यशौर्यवर्णनया सूचयेत् । प्रायेण भारती, क्वापि कैशिक्यपि वृत्तिर्भवति । लास्याङ्गानि गेयपदादीनि । उदाहरणं लीलामधुकरः ।

---

## विवृतिः

भाणमाह—भाणः स्यादिति ।

धूर्तस्य नायकस्य चरितं यत्र सः । कार्यसाधर्म्यमवस्था । निरुक्तप्रारम्भादिपञ्चविधावस्थातिरिक्ताव-स्थालाभायान्तरपदम् ।

शौर्यवर्णनयात्र वीरं सौभाग्यवर्णनाय शृङ्गारं सूचयेदित्यन्वयः । तत्र भाणे ।

इतिवृत्तं वर्णनीयं वस्तु । उत्पाद्यं कविभिः कल्पनीयम् । न तु पुराणादिप्रसिद्धम् ॥

## विवृतिपूर्तिः

भाण इति । भारतीवृत्तिप्रधानत्वाद् भाण इति धनिकः ॥

## विज्ञप्रिया

भाणाख्यं रूपकमाह—अथेति । नानावस्थेति । नांटकस्यान्तरात्मा नायकः स नानावस्थो यत्र तादृशः । पण्डित एव धूर्तो बोध्यः । स्वेन इतरेण वाऽनुभूतार्थमित्यन्वयः । सूचयोदिति । शौर्य्येण वीरम्, सौभाग्येन श्रृङ्गारम् । सूचयेदित्यर्थः । उत्पाद्यं कविनैव ।

व्याचष्टे—अत्रेति । लीलामधुकरो भाणाख्यरूपकविशेषः ।

## कुसुमप्रतिमा

भाण इति। धूर्त्तस्य नायकस्य चरित यस्मिन सः, नाना बहुप्रकारम् अवस्थान्तरम् आत्मा रूपं यस्य सः, एक एव अङ्कः, परिच्छेदी यस्मिन् सः तादृशी रूपकविशेषो भाणः स्यात्, विटेन भणक्त इति व्युतपत्तेः। अत्र भाणे एक एव निपुणः कार्य्यदक्षः पण्डितश्च विटःस्वेन आत्मना अनुभूतम् इतरेण जनेन वा अनुभूत द्वात्तान्त स्वयन्तु केनप्य, पायेन ज्ञात्वा रङ्गे रङ्गालये प्रकाशयेत् विवृणयात्। तथा आकाशभाषितैः प्रागुक्तलक्षणैः सम्बोधनेन हारा उक्तिप्रत्युक्तौ कुर्य्यात्। शौर्य्यसौभाग्ययीवणनेः वीरशृङ्गरौ रसौ सूवयेत् शौर्य्यवर्णन वीं स्त्रोपु सयो परस्पर सौभाग्यवर्णन श्व शृङ्गार सूचयेदित्यर्थः। तथा तब भागे इतवि०त्तमुपाख्यानम् उतपाद्य प्रकरणवत् कविता कल्पनीयम्। तथा प्रयेण बाहुल्ये न भारती प्रागुक्तलक्षणा उत्तिभवेत्। मुखनिर्व हणी च सन्धौ भवेताम्। तथा दशापि च प्रागुक्तनि नास्याङ्गानि भवेयुः। अत्रापि शेषं यथामभवं नाटकवज् ज्ञेयम्। अन्यवाप्येवम्।

व्याख्यातुमाह अत्रेति। प्रायेणेतिपदगद्योत्माह कौशिक्यपीति।

## विमला

भाममाह, भाण इति।—धूर्तस्य, नायकस्य इति शेषः, चरितं यत्र सः, नानाविधम् अवस्थान्तरं—कार्य्य-साधर्म्यभेदः, दशाभेदः वा, आत्मा—स्वरूपं यस्य तादृशः, [निरुक्तप्रारम्भादिपञ्चविधावस्थातिरिक्तावस्थालाभाय अन्तरपदम्] तथा एकाङ्कः,—एकेनैव अङ्केन समापनीय इत्यर्थः, भाणः स्यात्। अत्र एक एव निपुणः,—चतुरः, पण्डितः विटः स्वेन—आत्मना, इतरेण वा अनुभूतं, वस्तु इति शेषः, रङ्गे—नाट्यशालायां, प्रकाशयेत्। आकाश-भाषितैः सम्बोधने। उक्तिप्रयुक्तौ कुर्य्यात्। शौर्य्यसौभाग्यवर्णनैः वीरश्रृङ्गारौ रसौ,—शौर्य्यवर्णनेन वीरं, सौभा-ग्यवर्णनेन श्रृङ्गारमित्यर्थः, सूचयेत्, न तु प्रधानत्वेन प्रयुञ्जीतेति भावः। तत्र—भाण्ये, इतिवृत्तं—वर्णनीयं वस्तु, उत्पाद्यं—कविभिः कल्पनीयं, न तु पुराणादिप्रसिद्धमित्यर्थः, प्रायेण—बाहुल्येन, मुख्यत्वेन इत्यर्थः, भारती वृत्तिः, मुखं निर्वहणञ्चेत्येतौ सन्धौ, तथा आसङ्गानि दशापि, प्रयोज्यानीति शेषः।

## लक्ष्मी

भाणाख्यं रूपकं निरूपयति—भाण इति। धूर्त्ताश्चौरा द्यूतकारादयस्तेषां चरितं यत्र स तथोक्तः, नाना बहुप्रकारम् अवस्थान्तरम् आत्मा स्वरूपं यस्य स तथोक्तः, निरुक्तप्रारम्भादिपञ्चविधावस्थातिरिक्तावस्थालाभा-यान्तरपदम्, एक एव अङ्कः परिच्छेदो यत्र स तथोक्तो रूपकविशेषः, भण्यते व्योमोक्त्या नायकेन स्वपरवृत्तं प्रकाश्यत इति भाणः स्यात्। अत्र भाणे एक एव निपुणः कर्मकुशलः पण्डा तीक्ष्णा बुद्धिर्यस्यासौ पण्डितश्च विटः तारकादित्वादितच्। स्वेन आत्मना अनुभूतम् इतरेण परेण वा जनेन अनुभूतं वृत्तान्तं स्वयं तु केनापि विधिना बुध्वा रङ्गे नाट्यशालायां प्रकाशयेत्। तथा आकाशभाषितैः पूर्वोक्तस्वरूपैः सम्बोधनेन द्वारा उक्तिप्रयुक्ती कुर्यात्। शौर्यसौभाग्ययोर्वणनैः वीरश्रृङ्गारौ रसौ सूचयेत् शौर्यवर्णनैर्वीरं दम्पत्योः सौभाग्यवर्णनैश्च श्रृङ्गारं सूचयेदित्यर्थः, तथा तत्र भाणे इतिवृत्तं वर्णनीयं वस्तु उत्पाद्यम् प्रकरणवत् कविभिः कल्पनीयम्, तु नाटकादिवत् पुराणादिप्रसिद्धम्। तथा प्रायेण प्रभूततया भारती पूर्वोक्तस्वरूपा वृत्तिः भवेत् तेन सात्त्वतीप्रभृतीनां क्वाचित्कत्वं सूचयति। मुखनि-र्वहणे च सन्धी स्याताम् भवेताम् तथा दशापि लास्याङ्गानि स्युः। अवशिष्टं नाटकवदेव बोध्यम्।

व्याचष्टे—अत्रेति। लीलामधुकरो भाणाख्यरूपकविशेषः।

## रुचिरा

भाणं लक्षयितुमाह—**अथ । भाणः** । लक्ष्यते ५७१ **धूर्त्तचरितो** धूर्तेन छलप्रधानेन (नायकेन) चरितोऽधिकृतः । **नानाऽवस्ताऽन्तरात्मको** नानाऽवस्ताऽन्तरं विविधाः प्रारम्भादिपञ्चविधावस्थातिरिक्ता अवस्था आत्मा यस्य तादृशः **भाणः । स्यात् । अत्र** भाणे । **एकः । अङ्कः** । तथा-**एकः । एव । निपुणश्**चतुरः । **पण्डितः । विटो** धूर्त्तः । **स्वेन । वा । इतरेण । अनुभूतम्** 'वस्तु' इति शेषः । **रङ्गे** नाट्यशालायाम् । **प्रकाशयेत्** । एवम्—**आकाशभाषितैः सम्बोधनोक्तिप्रत्युक्ती** सम्बोधनेनोक्तिप्रत्युक्ती । **कुर्य्यात्** । तथा—**शौर्य्यसौभाग्यवर्णनैः** शौर्य्यवर्णनेन, सौभाग्य (श्रृङ्गारावस्ता) वर्णनेन चेत्यर्थः । **वीरश्रृङ्गारौ । सूचयेत्** । 'कवि' रिति शेषः । **तत्र** भाणे । **उत्पाद्यं** कविना कल्पनीयम् । **इतिवृत्तम् । वृत्तिः । प्रायेणा**धिक्येन । **भारती,** 'क्वचित् पुनः कौशिकी 'ति भावः **मुखनिर्वहणे** तदाख्यौ ॥ **सन्धी । च** एवम् । **दश** सर्वाणीति भावः । **अपि । लास्याङ्गानि** गेयपदादीनीत्यर्थः ॥ ५२४ ॥ ५२५ ॥ ५२६ ॥ ५२७ ॥

कारिकायाः कठिनमंशं सुगमयति—तत्रेत्यादिना । स्पष्टम् ।

**अथ व्यायोगः—**

**ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः ।**

**हीनो गर्भविमर्शाभ्यां नरैर्बहुभिराश्रितः ॥ २३१ ॥**

**एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः ।**

**कैशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः ॥ २३२ ॥**

**राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः ।**

**हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः ॥ २३३ ॥**

यथा सौगन्धिकाहरणम् ।

---

## विवृतिः

व्यायोगमाह—ख्यातेतिवृत्त इति ।

ख्यातं पुराणादिप्रसिद्धमितिवृत्तं यत्र ।

गर्भविमर्शौ तृतीय चतुर्थसंधी ।

स नायकः अत्र व्यायोगे ॥

## विवृतिपूर्तिः

व्यायोग इति । व्यायुज्यन्तेऽस्मिन्बहवः पुरुषा इति व्यायोगः ॥

अस्त्रीति । अस्त्रीनिमित्तैश्चात्र संग्रामः । यथा परशुरामेण पितृवधकोपात्सहस्रार्जुनवयः कृत इति धनिकः ॥

## विज्ञप्रिया

व्यायोगाख्यं रूपकमाह—अथेति । सौगन्धिकाहरणं व्यायोगाख्यरूपकविशेषः ।

## लोचन

प्रकरणाद् भेदो गर्भविमर्शाभावेन ।

## कुसुमप्रतिमा

ख्यातेतिवृत्त इति । ख्यातं पुराणभारतादिषु प्रसिद्धमितिवृत्तं यस्य सः, स्वल्पैः स्त्रीजनैः संयुतः, गर्भविमर्षाभ्यां तदाख्याभ्यां तृतीयचतुर्थसन्धिभ्यां हीनः, बहुभिनरैराश्रितत् एकः अङ्गी यस्मिन् सः, न स्त्रीनिमित्तः समरोदयी युद्धारम्भी यस्मिन् सः, तथा कौशिकीवृत्तिरहितश्च रूपकविशेषो व्यायोगी भवेत्, विशेषेण सम्यक् पात्राणां योगो

यस्मिन्नति व्युत्पत्तेः तत्र व्यायोगे नायकः प्रख्यातः प्रसिद्धो भवेत्, स नायकः राजर्षिः अथवा दिव्यः स्वर्गीयो देवताविशेषः धीरोद्धतश्च भवेत्। तथा हास्यश्रृङ्गारशान्तेभ्य इतरे अन्ये रसा अत्र व्यायोगे अङ्गिनः प्रधानां भवेयुः।

## विमला

व्यायोगामाह, ख्यातेतिवृत्त इति।—ख्यातं—पुराणादिषु प्रसिद्धम्, इतिवृत्तं यस्य यत्र वा तादृश, व्यायुज्यन्तेऽस्मिन् बहवः पुरुषा इति व्यायोगः, गर्भविमर्षाभ्यां—तृतीयचतुर्थसन्धिभ्यां, हीनः,—गर्भविमर्षसन्धिरहित इत्यर्थः। अस्त्रीनिमित्तसमरोदयः,—स्त्रीनिमित्तं विना समरस्य—सङ्ग्रामस्य, उदयः,—उपस्थतिः यस्मिन् तथाभूतः; यथा—परशुरामस्य पितुर्बधं निमित्तीकृत्य हेहयवंश्यैः समं समरे प्रवृत्तिरित बोध्यम्। कौशिकीति।—कौशिक्या वृत्या रहितः, अत्र कौशिकीं वृत्तिं परित्यज्य अन्यथा कयाऽपि वृत्त्या बन्धनं कुर्य्यात् इत्यर्थः। अन्यत् सुगमम्।

## लक्ष्मी

व्यायोगाख्यं रूपकं निरूपयति—ख्यातेतिवृत्तेति। ख्यातं पुराणेतिहासादिषु प्रसिद्धम् इतिवृत्तं वर्णनीयं वस्तु यत्र स तथोक्तः, स्वल्पैः स्त्रीजनः संयुतः, गर्भविमर्शौ तन्नामकौ तृतीयचतुर्थसन्धी ताभ्यां हीनः, बहुभिरनेकैराश्रितः, एकः अङ्को यत्र सः तथोक्तः, न स्त्रिनिमित्तः, समरोदयः सङ्ग्रामारम्भयो यत्र स तथोक्तः। यथा परशुरामेण पितृवधकोपात् सहस्रार्जुवधः कृत इति दशरूपके। कौशिकीवृत्तिरहितश्च रूपकविशेषः। विशेषेण आसमन्तात् युज्यन्ते काव्यार्थं संरभन्तेऽनेके पुरुषा यत्रासौ व्यायोगो नाम भवेत्। तत्र व्यायोगे नायकः प्रख्यातः प्रसिद्धो भवेत्, स नायकः राजर्षिः क्षत्रियः, अथवा दिव्यो दिवि भवः, स्वर्गीयो देवताविशेष इत्यर्थः, धीरोद्धतश्च प्रागुक्तस्वरूपो भवेत्। तथा हास्यश्रृङ्गारशान्तेभ्य इतरे रसा अत्र व्यायोगे अङ्गिनो मुख्याः स्युः।

## रुचिरा

व्यायोगं लक्षयितुमाह—**अथ**। **व्यायोगः**। लक्ष्यते।

५७२ **ख्यातेतिवृत्तः** ख्यातं पुराणादिषु प्रसिद्धमितिवृत्तं यत्र तथोक्तः। **स्वल्पस्त्रीजनसंयुतः** कतिपयाभिरेव स्त्रीभिर्युतः। **गर्भविमर्शाभ्यां** तदाख्याभ्यां सन्धिभ्याम्। **हीनः**। **बहुभिः**। **नरैः** पुरुषैः। **आश्रितः**। **एकाङ्क** एकोऽङ्को यत्र तादृशः। **च**। तथा। **अस्त्रीनिमित्तसमरोदयः** स्त्रीनिमित्तव्यतिरिक्तनिमित्तकसङ्ग्रामवर्णनात्मक इति भावः। **कौशिकीवृत्तिरहितः** सात्वत्यारभटीभारतीभिवृत्तिभिरुपकृत इति भावः। **व्यायोगः**। **भवेत्**। **तत्र** व्यायोगे। **प्रख्यातः** प्रसिद्धचरितः। **नायकः**। 'भवे' दिति शेषः। **स** नायकः। **च**। **राजर्षिः**। **अथ**। **दिव्यः** स्वर्गभवः। **वा** (इदं समुच्चयार्थम्)। **धीरोद्धतस्त**ल्लक्षणाक्रान्तः। 'ज्ञेय' इति शेषः। **अत्र** व्यायोगे इत्यर्थः। **हास्यश्रृङ्गारशान्तेभ्यः**। **इतरे** व्यतिरिक्ता। **रसाः**। **अङ्गिनः** प्रधानतया वर्णनीयाः। 'भवन्ती' ति शेषः॥ ५२८॥ ५२९॥ ५३०॥

उदाहरति—**यथे**त्यादिना। स्पष्टम्।

अथ समवकारः—

**वृत्तं समवकारे तु ख्यातं देवासुराश्रयम्।**

**संधयो निर्विमर्शास्तु त्रयोऽङ्कास्तत्र चादिमे ॥ २३४ ॥**

**संधी द्वावन्त्ययोस्तद्वदेक एको भवेत्पुनः।**

**नायका द्वादशोदात्ताः प्रख्याता देवमानवाः ॥ २३५ ॥**

**फलं पृथक्पृथक्तेषां वीरमुख्योऽखिलो रसः।**

**वृत्तयो मन्दकैशिक्यो नात्र बिन्दुप्रवेशकौ ॥ २३६ ॥**

**वीथ्यङ्गानि च तत्र स्युर्यथालाभं त्रयोदश।**

**गायत्र्युष्णिङ्मुखान्यत्र च्छन्दांसि विविधानि च ॥ २३७ ॥**

**त्रिशृङ्गारस्त्रिकपटः कार्यश्चायं त्रिविद्रवः।**

**वस्तु द्वादशनालीभिर्निष्पाद्यं प्रथमाङ्कगम् ॥ २३८ ॥**

**द्वितीयेऽङ्के चतसृभिर्द्वाभ्यामङ्के तृतीयके।**

नालिका घटिकाद्वयमुच्यते। बिन्दुप्रवेशकौ च नाटकोक्तावपि नेह विधातव्यौ।

तत्र—

**धर्मार्थकामैस्त्रिविधः शृङ्गारः, कपटः पुनः ॥ २३९ ॥**

**स्वाभाविकः कृत्रिमश्च दैवजो, विद्रवः पुनः।**

**अचेतनैश्चेतनैश्च चेतनाचेतनैः कृतः ॥ २४० ॥**

तत्र शास्त्राविरोधेन कृतो धर्मशृङ्गारः। अर्थलाभार्थकल्पितोऽर्थशृङ्गारः। प्रहसनशृङ्गारः कामशृङ्गारः। तत्र कामशृङ्गारः प्रथमाङ्क एव। अन्ययोस्तु न नियम इत्याहुः। चेतनाचेतना गजादयः। समवकीर्यन्ते बहवोऽर्था अस्मिन्निति समवकारः। यथा—समुद्रमथनम्।

---

### विवृतिः

समवकारमाह—वृत्तमिति। आदिमे प्रथमाङ्के द्वौ मुखप्रतिमुखाख्यौ।

अन्त्ययोर्द्वितीयतृतीयाङ्कयोरेक एकः संधिरित्यन्वयः। उदात्ता धीरोदात्ताः।

देवमानवाः दिव्यादिव्याः। देवाश्च दानवाश्च 'देवदानवाः' इत्यपि क्वचित्पाठः।

तेषां नायकानाम्, मन्दकैशिक्यः कैशिकीहीनाः ॥

तत्र समवकारे। विद्रवो गर्भसंध्यङ्गम्, स च शङ्काभयत्रासकृतः संभ्रमः, नाटकप्रकृतित्वादेव विद्रवप्राप्तौ प्रकारत्रयस्यावश्यकत्वार्थमिदं वचनम्।

निषिद्धकाले निषिद्धयोषिति कृतः शृङ्गारः शास्त्रविरुद्धस्तदितरो धर्मशृङ्गारः।

समवकीर्यन्ते निबध्यन्ते ॥

## विवृतिपूर्तिः

फलमिति। यथा पयोनिधिमन्थने वासुदेवादीनां लक्ष्म्यादिलाभ इति धनिकः ॥

प्रथमाङ्क इति। धनिकस्तु 'प्रत्यङ्कं च यथासंख्यं कपटाः। तथा नगरोपरोधयुद्धवार्ताग्न्यादिविद्रवाणां मध्ये एकैको विद्रवः कार्यः। धर्मार्थकामशृङ्गाराणामेकैकः शृङ्गारः प्रत्यङ्कमेव विधातव्यः।' इति नियममाह। मन्दारमरन्दकृत्तु—'अङ्कास्त्रयस्तत्र चाद्ये मुखप्रतिमुखौ तथा। वस्तुस्वभावदैवारिकृताः स्युः कपटास्त्रयः॥ कथामपि निबध्नीयात्तथा द्वादशनालिकाम्। द्वितीयेऽङ्केऽपि च चतुर्नालिकावधिकां कथाम्॥ पुररोधरणाग्न्यादिनिमित्ता विद्रवास्त्रयः। तृतीयेऽङ्के निबद्धव्या कथा चापि द्विनालिका॥ धर्मार्थकामानुगुणास्तिस्रः शृङ्गाररीतयः॥' इत्याह॥

उपेति। उपरागैः सूर्यचन्द्रग्रहणैः। चकारेण निर्घातोल्कापातादयो गृह्यन्ते॥

डिम इति। 'डिम संघाते' इति नायकसंघातव्यापारात्मकत्वाड्डिम इति धनिकः॥

महर्षिरिति। तथा च तद्वाक्यम्—'इदं त्रिपुरदाहे तु लक्षणं ब्रह्मणोदितम्। ततस्त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः॥' इति॥

## विज्ञप्रिया

समवकाराख्यं रूपकमाह—अथेति। आदिमेऽङ्के अन्त्ययोरङ्कयोरेकः सन्धिरित्यर्थः। मन्दकौशिक्यः कौशिक्या एवान्तरविशेषाः। त्रिशृङ्गारादिकं स्वयमेव व्याख्यास्यति—वस्तु इति। प्रथमाङ्कगं प्रथमाङ्कबोधनीयं वस्तु। घटिकाद्वयात्मक नाडीद्वादशकैरष्टचत्वारिंशद्दण्डैर्निष्पाद्यं कार्य्यमित्यर्थः।

व्यायोगाख्यं रूपकमाह—अथेति। सौगन्धिकारणं व्यायोगाख्य रूपकविशेषः। समवकाराख्यं रूपकमाह—अथेति। आदिमेऽङ्के अन्त्ययोरङ्कयोरेकः सन्धिरित्यर्थः। मन्दकौशिक्यः कौशिक्या एवान्तरविशेषाः त्रिशृङ्गारादिकं स्वयमेव व्याख्यास्यति—वस्तु इति। प्रथमाङ्कगं प्रथमाङ्कबोधनीयं वस्तु। घटिकाद्वयात्मक नाडीद्वादशकैरष्टचत्वारिंशद्दण्डैर्निष्पाद्यं कार्य्यमित्यर्थः।

व्याचष्टे—नाडिका चेति घटिका दण्डद्वयम्।

तत्र शृङ्गारिकं कारिकया आह—धर्मार्थेति। त्रिकपटत्वं व्याख्यातुं कपटत्रैविध्यमाह—कपटः पुनरिति। त्रिविदग्रवत्वं व्याख्यातुमाह—विद्रवः पुनः इति। कौतुकेन प्रतारणादिविशेषो विद्रवः। स चाचेतनैः काष्ठपुत्तलिकादिभिश्चेतनैः प्रहसनकरैश्चेतनाचेतनैश्चेतनत्वेऽपि प्रकृष्टचेतनारहितैः पश्वादिभिः तद्वक्ष्यति। गजादिभिरिति तत्र धर्मशृङ्गारादिकमिच्छया व्युत्क्रमेण दर्शयति।

तत्र नायिकानायकयोः अर्थलाभार्थः शृङ्गारो वेश्यानां, धर्माविरोधी शृङ्गारः स्वदारेषु पुंसः। समवकारपदव्युत्पत्तिमाह—समवकीर्य्यन्त इति।

## लोचन

गायत्र्यादीनां छन्दसां लक्षणान्याकारेषु बोद्धव्यानि।

प्रहसनो हास्ययुक्तः प्रथमोद्दिष्टोऽपि धर्मशृङ्गारः पश्चाद् विधेयत्वेन पश्चाद् व्याख्यातः। अनियमादिति क्वचिद्दिव्यः क्वचिन्नरो वा नायकः अर्थप्रकृतयः आरम्भयत्नाद्याः।

## कुसुमप्रतिमा

वृत्तमिति। समवकारे तु देवासुराश्रयं देवासुरसम्बन्धि ख्यातं प्रसिद्धश्च वृत्तं वृत्तान्ती भवेत्। तत्र च समवकारे निर्विमर्षा विमर्षाख्यचतुर्थसन्धिरहिताश्चत्वारः सन्धयस्त्रयश्वाङ्काः कविना कर्त्तव्या इति शेषः। आदिमे अङ्के द्वौ मुखप्रतिमुखाख्यो सन्धौ कर्त्तव्यौ, अन्त्योरपरयोर्द्वितीयतृतीययोरङ्कयोः पुनः एकः एकः सन्धिर्भवेत् द्वितीयाङ्के गर्भसन्धिस्तृतीयो च उपसंहारसन्धिर्भवेदित्यर्थः। उदात्ता धौरीदात्तलक्षणाः प्रख्याताः प्रसिद्धाः देवमानवा द्वादश नायका भवेयुः। तेषाञ्च नायकानां फलं प्रत्येकं पृथक्-पृथक् भवेत्। वीरी वीररसी मुख्यः प्रधानो यस्य स तादृशः अखिल एव रसो भवेत्। मन्दा अल्पाख्या कौशिकी वृत्तिर्यासु ताः सर्वा एव भारत्यादयी वृत्तयो भवेयुः। अत्र समवकारे बिन्दुप्रवेशको प्रागुक्तलक्षणौ न प्रयोज्याविति शेषः। तत्र च यथालाभं त्रयोदशैव वक्ष्यमाणानि स्युः। षड़श्चरा गायत्री सप्ताक्षरा क्षीणिक् ते मुखे आदी येषां तानि तथोक्तानि विविधानि छन्दासि अत्र समवकारे कविना कार्य्याणि। अयमनुपदमुच्यमानप्रकारः त्रिश्रृङ्गारः, त्रिकपटः, त्रिविद्रवश्च कविना कार्य्यः। प्रथमाङ्गं वस्तु इतिवृत्तं द्वादशनाड़ीभिद्वादशघटिकाभिः निष्पाद्यं पात्रैः सम्पाद्यम्। द्वितीयेऽङ्के वस्तु तिस्रभिर्नाड़ीभिर्निष्पाद्यम्, तृतीयके चाङ्के वस्तु द्वाभ्यां नाड़ीभ्यां निष्पाद्यम्। अत्र "शङ्काभयत्रासकृतः सम्भृतो विद्रवो मतः" इत्युक्तलक्षणस्य विद्रवस्य गर्भसन्ध्यङ्गत्वेन नाटकप्रकृतित्वात् प्राप्तत्वेऽपि त्रैविध्याप्राप्त्यर्थं पुनरुक्तिः।

नाड़िकेति। "बिना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्" इत्यतिदेशात् अन्यान्वधर्म्मववदिन्दुप्रवेशक-यीरपि प्राप्तत्वान्निषेधः।

त्रिशृङ्गारादीन् मूलकार एव विवृणोति धर्म्मार्थेति। धर्म्मशृङ्गारः, अर्थशृङ्गारः कामशृङ्गारश्चेति त्रिविधः शृङ्गारः। कपटः पुनः—स्वाभाविकः, कृत्रिमः, दैवजश्चेति त्रिविधः। विद्रवश्च पुनः अचेतनैः पाषाणादिभिः कृतः, चेतनैर्मनुष्यादिभिः कृतः, चेतनाचेतनैर्गजादिपशुभिः कृतश्चेति त्रिविधः।

धर्म्मशृङ्गारादीन व्याचष्टे तत्रेति। शास्त्रस्य "ऋतौ भार्य्यामुपेयात्" इत्यादिविधेः अविरोधेन विषयापरि-त्यागेन कृत ऋतुकालीनभार्य्यागमनरूपः। अर्थलाभार्थकल्पितो वेश्याभिः। प्रहसनाय शृङ्गारः प्रहसनशृङ्गारः। यथा—हास्यार्णनादौ।

चेतनेति। गजादिपशूनां समान्यवैतन्वत्त्वाञ्चेतनत्वं मनुष्यादिवद्विवेकीपयोनिविशेषणै तन्वाभावञ्चाचेत-नत्वमिति गजादयः पशवश्चेतनाचेतनाः।

समवकारशब्दस्य योगरूढत्वं दर्शयति समवेति। समवकीर्य्यन्ते सन्वग्विक्षिप्यन्ते कविना निबध्यन्ते। कृधातोः "अकत्तरि च कारके संज्ञायाम्" इति धञ्।

## विमला

समवकारमाह, वृत्तमिति ।—देवासुराश्रयं—देवासुरसम्बद्धम् । निर्विमर्षाः,—विमर्षरहिताः, सन्धयः,—चतुर्थसन्धिं विना चत्वारः सन्धयः प्रयोज्या इत्यर्थः; अङ्काः,—तदाख्याः परिच्छेदाः, त्रयः, तत्र आदिमे अङ्के द्वौ सन्धौ—मुखप्रतिमुखे इति भावः, अन्त्योः,—द्वितीयतृतीययोरङ्कयोरित्यर्थः, एकः एकः,—गर्भः, निर्वहणञ्च इत्यर्थः, सन्धिरिति शेषः, भवेत् । उदात्ताः,—धीरोदात्ताः, देवमानवाः,—दिव्यादिव्याः, इत्यर्थः, ["देवामानवाः" इत्यत्र "देव-दानवाः" इति पाठान्तरम्] तेषां—नायकानां, पृथक् पृथक्—भिन्नं भिन्नं, फलम् । अखिलः,—समग्रः, रसः वीरमुख्यः,—वीररस एव अङ्गी, अन्ये अङ्गानीति भावः । मन्दकौशिक्यः—मन्दा कौशिकी यासु ताः, प्रायेण कौशिकीहीना इत्यर्थः । गायत्रीति ।—गायत्रौ—षड्क्षरा वृत्तिः, उष्णिक्—सप्ताक्षरा वृत्तिः, तत्प्रभृतीनि । विद्रवः,—गर्भसन्ध्यङ्गं, स च शङ्काभयत्रासकृतः सम्भ्रमः, नाटकप्रकृतित्वादेव विद्रवप्राप्तौ प्रकारत्रयस्यावश्यकत्वार्थं मिदं वचनम् । द्वादशनाड़ीभिः,—चतुर्विंशतिघटिकाभिः,(उक्तञ्च दशरूपककृता,—"द्विसन्धिरङ्कः, प्रथमः कार्य्यो द्वादशनालिकः । चतुर्द्विनालिकावन्त्यो नालिका घटिकाद्वयम् ॥" इति) कार्य्यो द्वादशनालिकः । चतुर्द्विनालिकावन्त्यो नालिकाघटिकाद्वयम् ॥" इति) प्रथमाङ्गं—प्रथमाङ्गनिविष्टं वस्तु, निष्पाद्यं—सम्पादनीयम् । (द्वितीयेऽङ्के चतुसृभिः, नाड़ीभिः, इति शेषः, घटिकाऽष्टकेन वस्तु निष्पादद्यमिति भावः, ["चतसृभिः" इत्यत्र "च तिसृभिः" इति पाठान्तरम्] तथा तृतीये अङ्के द्वाभ्यां, नाड़ीभ्याम् इति शेषः, चतुर्भिः घटिकाभिरिति भावः, तत्रत्यं वस्तु निष्पाद्यमिति शेषः ।

शृङ्गारस्य कपटस्य विद्रवस्य च त्रैविध्यं दर्शयति, धर्मार्थेति ।—शृङ्गारः धर्मार्थकामैः त्रिविधः,—धर्मशृङ्गारः, अर्थशृङ्गारः, कामशृङ्गारश्चेत्यर्थः; कपटः,—कपटाचरणं पुनः स्वाभाविकः, कृत्रिमः, दैवजः,—दैवेन जनितः इति त्रिविध विद्रवः,—शङ्का भय-त्रासकृतः सम्भ्रमः पुनः, अचेतनकृतः, चेतनकृतः,तथा चेतनाचेतनकृत इति त्रिविधः । दशरूपककारस्त्वाह,—"प्रत्यङ्कञ्च यथासङ्ख्ये कपटाः । तथा नगरीपरोधयुद्धवाताग्न्यादिविद्रवाणां मध्ये एकैको विद्रवः कार्य्यः । धर्मार्थकामशृङ्गारप्रतिमुखौ तथा । वस्तुस्वभावदैवारि-कृताः स्युः कपटास्त्रयः । कथामपि निबध्नी-यात् तथा द्वादशनालिकाम् । द्वितीयेऽङ्केऽपि च चतुर्नालिकावधिकां कथाम् । पुररोधरणाग्न्याह-निमित्ता विटवा-स्त्रयः ॥ तृतीयेऽङ्के निबद्धव्या कथा चापि द्विनालिका । धर्मार्थकामानुगुणास्तस्त्रः शृङ्गाररीतयः ॥" इति मन्दारमकरन्दकारः ।

शृङ्गारस्य कपटस्य विद्रवस्य च तैविध्यं दर्शयति, धर्मार्शेति । शृङ्गारः र्ध्मार्थकामैः विविधः—धर्मशृङ्गारः, अर्थशृङ्गारः, कामशृङ्गारश्चेत्यर्थः; कपटः,—कपटाचरणं पुनः, स्वाभाविकः, क्वत्रिमः, पुनः, अचेतनक्वतः, चेतनक्वतः, तथा चेतनाचेतनक्वत इति विविधः । दशरूपककारस्त्वाह,— "प्रत्यङ्कञ्च यथासङ्ख कपटाः । तथ नगरोपरोधयुद्धवाताग्नयादिविद्रवाणां मध्ये एकैको विट्रवः कार्य्यः । धर्मार्थ कामशृङ्गाराणामेकैकः शृङ्गार प्रत्यङ्कमेव विधातम्यः" इति । "अङ्कास्त्रयस्तव चाद्ये मुखप्रतिमुखौ तथा । वस्तुस्वभावदैवारिःक्वताः स्युः कपटास्त्रयः । कथामपि निबस्नौयात् तथा हादशनालिकाम् । द्वितौयेऽङ्केऽपि च चतुर्नालिकावधिकां कथाम् । पुररोधरणाग्न्यादि-निमित्ता विदवास्त्रयः ॥ तृतीयेऽङ्केऽपि च चतुर्नालिकावधिकां कथाम् । पुररोधरणाग्नयादि निमित्ता विदवास्त्रयः ॥ तृतीयेऽङ्कके निबद्बव्या कथा चापि हिनालिका । धर्माथकामानुगुणा स्तस्त्रः शृङ्गाररौतयः । इति च मन्दारमकरन्दकारः ।

धर्मशृङ्गार इति ।—निषिद्धकाले निषिद्धयोषिति कृतः शृङ्गारः शास्त्रविरुद्ध, तदितरी धर्मशृङ्गारः इत्यर्थः । समवकीर्य्यन्ते—सम्यक् प्रयुज्यन्ते, निबन्ध्यन्ते इत्यर्थः ।

## लक्ष्मी

उदाहरति—यथेति । सौगन्धिकाहरणं व्यायोगाख्यरूपकविशेषः ।

समवकाराख्यं रूपकं निरूपयति—वृत्तमिति । सङ्गतैरवकीर्णैश्चार्थैः त्रिवर्गोपायैः पूर्वसिद्धैरेव क्रियते निबध्यते यत्र स समवकारस्तत्र तु देवासुराश्रयं देवासुरसम्बन्धि ख्यातं पुराणादीतिहासादिषु प्रसिद्धं च वृत्तं वृत्तान्तो भवेत् । तत्र च समवकारे निर्विमर्शा विमर्शाख्यतुरीयसन्धिहिताश्चत्वारः सन्ध्यस्त्रयश्चाङ्काः कविभिर्निबद्धव्या इति शेषः । आदिमे प्रथमाङ्के मुखप्रतिमुखाख्यौ द्वौ सन्धी निबद्धव्यौ अन्त्ययोर्द्वितीयतृतीयाङ्कयोः पुनः एक एकः सन्धिर्भवेत्, द्वितीयाङ्के गर्भसन्धिस्तृतीयाङ्के च निर्वहणसन्धिर्भवेदित्यर्थः । उदात्ता धीरोदात्तस्वरूपाः प्रख्याताः प्रसिद्धाः देवमानवा दिव्यादिव्या द्वादशनायका भवेयुः । तेषाञ्च नायकानां फलं प्रत्येकं पृथक् पृथक् भवेत्, यथा समुद्रमन्थने वासुदेवादीनां लक्ष्म्या दिलाभ इति दशरूपककाराः । वीरमुख्यो वीररसप्रधानो यत्र स तथोक्तोऽखिलः सर्वं एव रसो भवेत् । मन्दा स्वल्पा कौशिकीवृत्तिर्यत्र ता अखिला एव भारत्यादयो वृत्तयो भवेयुः । अत्र समवकारे बिन्दुप्रकाशकौ पूर्वाभिहितस्वरूपौ न कर्त्तव्याविति शेषः । तत्र च समवकारे यथालाभं लाभमनतिक्रम्य त्रयोदश वीथ्याङ्गानि वक्ष्यमाणानि भवेयुः । षडक्षरा गायत्री सप्ताक्षरा चोष्णिक् ते मुखे आरम्भे येषां तानि तथाविधानि विविधानि अनेकप्रकाराणि छन्दांसि अत्र समवकारे कविभिः कर्त्तव्यानि । अयमग्रे प्रतिपाद्यमानः प्रकारः त्रिश्रृङ्गारः त्रिकपटः त्रिविद्रवश्च कविभिः कर्त्तव्यानि । अयमग्रे प्रतिपाद्यमानः प्रकारः त्रिश्रृङ्गारः त्रिकपटः त्रिविद्रवश्च कविभिः कर्त्तव्यः । प्रथमाङ्कगं प्रथमाङ्कबोधनीयं वस्तु विषयं द्वादशनाडीभिर्द्वादगशघटिकाभिः घटिकाद्वयात्मकनाडीद्वादश-कैरष्टचत्वारिंशद्दण्डैर्निष्पाद्यं पात्रैः कार्यमित्यर्थः, द्वितायेऽङ्के वस्तु त्रिसृभिर्घटिकाभिः निष्पाद्यम्, तृतीयके चाङ्के वस्तु द्वाभ्यां घटिकाभ्यां निष्पाद्यम्, नाटकप्रकृतत्वादेव विद्रवलाभे प्रकारत्रयस्यावश्यकत्वार्थमियं पुनरुक्तिः ।

विवृणोति—नालिकेति । घटिकाद्वयं दण्डद्वयमित्यर्थः । नेह विधातव्याविति । 'विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्' इत्युक्तत्वात् अनुक्तधर्मवद् बिन्दुप्रवेशकयोरपि लाभसम्भवादतस्तौ न कर्त्तव्यावित्यर्थः ।

तत्र शृङ्गारादिकं ग्रन्थकृत् स्वयमेव कारिकायाह—धर्मार्थेति । धर्मशृङ्गारः, अर्थशृङ्गारः, कमशृङ्गारश्चेति त्रिविधस्त्रिप्रकारः शृङ्गारः । त्रिकपटत्वं व्याख्यातुं कपटत्रैविध्यं दर्शयति—कपटं पुनरिति । स्वाभाविकः प्राकृतिकः, कृत्रिमः क्रियया निर्वृत्तः दैवाज्जातो दैवजश्चेति त्रिविधः कपट इत्यर्थः त्रिविद्रवं व्याख्यातुमाह—विद्रवश्चेति । कौतुकेन प्रतारणादिविशेषो विद्रवः स च पुनः अचेतनैः काष्ठपुत्तलिकादिभिः कृतः चेतनैः प्रहसनप्रकारैः कृतः, चेतनाचेतनैश्चतनत्वेऽपि प्रकृष्टचेतनारहितैः गजपश्चादिभिस्तदनुपदं वक्ष्यति—गजादिभिरिति ।

धर्मश्रृङ्गारादिकं विवृणोति—तत्रेति । शास्त्रस्य 'ऋतौ भार्यामुपेयात्' इति 'ऋतुकालाभिगामी स्यात् स्वध-र्मनिरतः सदा' इत्यादि च श्रुतिस्मृतिप्रतिपादितविधेः अविरोधेन विरोधाभावेन विषयमुपभुञ्जानेनेत्यर्थः कृतः ऋतुसमयस्वदारगमनरूपः, तथा च निषिद्धकाले निषिद्धयोषिति च कृतः शृङ्गारः शास्त्रविरुद्धस्तद्रहितेन विहितः शृङ्गारो धर्मशृङ्गार इत्यर्थः । अर्थलाभार्थकल्पितः शृङ्गारो गणिकाभिः प्रहसनाय हास्यशृङ्गारः प्रहसनशृङ्गारः । स च हास्यार्णवादौ द्रष्टव्यः । प्रथमाङ्क एवेति । अत्र दशरूपककाराः—प्रत्यङ्कञ्च यथासख्यं कपटाः तथा नगरोपरोधयु-द्धवाताग्न्यादिविद्रवाणां मध्ये एकैको विद्रवः कार्यः । 'धर्मार्थकामशृङ्गाराणामेकैकः शृङ्गारः प्रत्यङ्कमेव विधातव्यः' इति नियममाहुः ।

चेतनाचेतनेति । यद्यपि यत्र चेतनत्वं तत्र नाचेतनत्वं यत्राचेतनत्वं न तत्र चेतनत्वमित्युभयोर्विरुद्धत्वेऽपि सामान्यचैतन्यवत्वाद् गजादीनां पशूनां चेतनत्वम्, मानवादिवत्प्रकृष्टप्रज्ञाविशेषचैतन्याभावादचेतनत्वमिति विरु-द्धयोरपि धर्मयोरेकत्र सम्भवादाह—गजादय इति ।

समवकारपदस्य योगरूढत्वमुपपादयति—समवकीर्यन्त इति। समवकीर्यन्ते कविभिर्निवध्यन्त इत्यर्थः। समवपूर्वकात् करोतेः 'अकर्त्तरि च कारके संज्ञायाम्' इति पा. सूत्रेण घञ् प्रत्ययः।

## रुचिरा

समवकारं लक्षयितुमाह—**अथ**। **समवकारः**। लक्ष्यते ५७३ **समवकारे**। **तु**। **देवासुराश्रयं** देवासुरा आश्रया यस्य तत्। **ख्यातं** प्रसिद्धम्। **वृत्तं** चरित्रम्। 'स्या'दिति शेषः। **निर्विमर्शा** विमर्शाख्यसन्धिव्यतिरिक्ताः। **सन्धयः**। **स्युः**। तथा—**त्रयः**। **अङ्काः**। **तत्र** तेष्वङ्केषु मध्ये इत्यर्थः। **च**। **आदिमे** प्रथमेऽङअके। **द्वौ**। **सन्धी** मुखप्रतिमुखाख्यौ सन्धी इत्यर्थः। **तद्वत्**। अन्त्ययोर्द्वितीये तृतीयेऽङ्के चेत्यर्थः। **एकः**। **एकः**। 'सन्धि'रिति शेषः। तथा च—द्वितीये गर्भस्तृतीये निर्वहणं सन्धिरिति निष्कृष्टोऽर्थः। **पुनः**। **भवेत्**। तथा—तत्र, **द्वादश**। **उदात्ता** धीरोदात्ताः। **प्रख्याताः**। **देवदानवाः**। **नायकाः**। **तेषां** नायकानामित्यर्थः। **पृथक्पृथक्** भिन्नभिन्नमित्यर्थः। **फलं** कार्य्यतो लाभः। तथा-**वीरमुख्यो** वीररसप्रधान। **अखिल** सर्वविधः। **रसः** श्रृङ्गारादिरित्यर्थः। **मन्दकौशिक्यो** मन्दा क्वाचित्की कौशिकी यासु ताः, प्रायेण कौशिकीविरहिता इति भावः। **वृत्तयो** भारतीयसात्वत्यारभटय इत्यर्थः। 'भवन्ती'ति शेषः। **अत्र** समवकारे। **बिन्दुप्रवेशकौ** बिन्दुरर्थप्रकृतिविशेषः। प्रवेशकश्च प्रस्तावनाविशेषः। **न** 'स्याता'मिति शेषः। **तत्र** समवकारे। **च**। **यथालाभं** यथासम्भवम्। **त्रयोदश**। **वीथ्यङ्गानि** (वक्ष्यमाणानि)। **स्युः**। **अत्र**। **च**। **गायत्र्युष्णिमुखानि** गायत्र्युष्णिगादीनि। **विविधानि**। **छन्दांसि** वृत्तानि। **अयं** समवकारः। **च**। **त्रिशृङ्गारः**। **त्रिकपटः**। **त्रिविद्रवः**। **कार्य्यः**। तस्य च—**प्रथमाङ्कगं** प्रथमेऽङ्के नवेश्यमिति भावः। **द्वादशनाडीभि**-श्चतुर्विंशघटिकाभिः। **निष्पाद्यम्**। **वस्तु** इतिवृत्तम्। **द्वितीये**। **अङ्के**। **च**। **तिसृभिर्नाडि**काभिरिति शेषः। **तृतीयके** तृतीये। **अङ्के**। **द्वाभ्यां**'नाडीभ्यां निष्पाद्यं वस्तु' इति शेषः॥ ५३१ ॥ ५३२ ॥ ५३३ ॥ ५३४ ॥ ५३५ ॥

कारिकां सुगमयितुं तत्कठिनांश विशदयति—**नाडिके**त्यादिना। स्पष्टम्।

"त्रिशृङ्गार" इत्यादिना श्रृङ्गारादेस्त्रिविधत्वं स्वयमाह—५७४ **धर्म्मार्थकामैः** 'पृथक्पृथक् विशेषित' इति शेषः। **त्रिविधः**। **शृङ्गारः**। तथाहि—धर्म्मोपाधिकः श्रृङ्गार एकः, अर्थोपधिकः श्रृङ्गारोऽर्थश्रृङ्गारो द्वितीयः, कामोपाधिकः श्रृङ्गारः कामश्रृङ्गारस्तृतीय इति भावः। **कपटः**।पुनः **स्वाभाविकः**। **च**। **कृत्रिमः** स्वाभाविकेतरः। **दैवजः** तदुभयव्यतिरिक्तोतर्कितोपनतः। 'इति'इति शेषः। 'त्रिविध' इति पूर्वतोऽन्वेति। **विद्रवः** पलायनम्। **पुनः**। अचेतनैः स्थाणुभूतादिभिरित्यर्थः। **चेतनैर्दस्युप्रभृतिभिः**। **चेतनाचेतनैश्चेतन**त्वेऽपि जडप्रकृतिकत्वेनाचेतनैरित्यर्थः। **कृतः**। इदम्बोध्यम्—त्रिविधाः श्रृङ्गारः कपटो विद्रवश्चेत्येतेवश्यं समवकारे समुद्भावनीयाः। इति ॥५३७ ॥

तदेव परिष्कृत्याह—**तत्र** तेषु शृङ्गरेष्वित्यर्थः। **शास्त्राविरोधेन** 'ऋतौ भार्यामुपेया'दित्यादिशास्त्रानुकूल्येन। **कृतः**। 'श्रृङ्गारः'इति शेषः। **धर्म्मश्रृङ्गारः**। तथा च—निषिद्धकाले निषिद्धस्त्रियां कृतः श्रृङ्गारः(तदर्थं चेष्टितम्) पापश्रृङ्गारस्ततो भिन्नो धर्म्मश्रृङ्गार इति निष्कृष्टार्थः। **अर्थलाभार्थं** प्रयोजनसिद्धयर्थं धनलाभमुद्दिश्य वेति भावः। **कल्पितः**। **अर्थश्रृङ्गारः**। **कामश्रृङ्गारो** विषयभोगमात्रनिमित्तकः श्रृङ्गारः। **प्रहसनश्रृङ्गार**स्तदपरनामधेयो बोध्य इत्यर्थः।

निरूपणव्यवस्थामाह—**तत्रे**त्यादिना। स्पष्टमन्यत्। उदाहरति—**यथा**। **समुद्रमथनं** तदाख्यं इत्यर्थः।

अथ डिमः—

**मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।**

**उपरागैश्च भूयिष्ठो डिमः ख्यातेतिवृत्तकः ॥ २४१ ॥**

**अङ्गी रौद्ररसस्तत्र सर्वेऽङ्गानि रसाः पुनः ।**

**चत्वारोऽङ्का मता नेह विष्कम्भकप्रवेशकौ ॥ २४२ ॥**

**नायका देवगन्धर्वयक्षरक्षोमहोरगाः ।**

**भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ॥ २४३ ॥**

**वृत्तयः कैशिकीहीना निर्विमर्शाश्च संधयः ।**

**दीप्ताः स्युः षड्रसाः शान्तहास्यश्रृङ्गारवर्जिताः ॥ २४४ ॥**

अत्रोदाहरणं च 'त्रिपुरदाहः' इति महर्षिः ।

---

## विवृतिः

डिममाह—मायेन्द्रजालेति । इह डिमे । दीप्ता विभावादिसामग्रीबलेन झटिति प्रतीयमानाः ॥

## विज्ञप्रिया

डिमसंज्ञकं रूपकमाह—अथेति । मायेति । मायात्मकत्वात् अदृश्यता । इन्द्रजालमलीकनानावस्तुप्रदर्शनम् । सङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितमितस्ततो विक्षेपः । उपरागः उपद्रवः ।

## कुसुमप्रतिमा

मायेन्द्रेति । मायया इन्द्रजालेन संग्रामेण क्रोधेन वा उद्भ्रान्ता व्यस्तचिन्ता आदिचन्दा दुन्मत्तरोगिप्रभृतयश्च तेषां चेष्टितैर्व्यवहारैः, उपरागैश्चन्द्रसूर्य्यक्षासैश्च भूयिष्ठः प्रायेण परिपूर्णः, तथा ख्यातमितिवृत्तं यस्य स तादृशो रूपकविशेषो डिमः स्यात् । डिम इति डित्थादिवदव्युत्पन्न एव शब्द इति तूक्तमेव । अत्र डिमे रौद्ररसोऽङ्गी, अन्ये सर्वे रसाः पुनरङ्गानि चत्वारः अङ्का मताः । किन्तु इह डिमे विष्कम्भकप्रवेशकौ न स्याताम्, चूलिकाङ्कावताराङ्कमुखानि तु स्युरेव । देव गन्धर्व यक्ष रक्षोमहोरगाः भूत-प्रेत-पिशाचाद्याः अत्यन्तमुद्धता अतोवोद्धतस्वभावाः, षोडश नायकाः स्युः । कौशिकीहीना भारत्याद्याः सर्वा एव वृत्तयः स्युः । शान्त हास्य-श्रृङ्गारवर्जिताः षड़ेव रसा दीप्ताः स्पष्टं प्रतीयमानाः स्युः ।

अत्रेति । महर्षिर्भरतः । तथा चोक्तं तदीयनाट्यशास्त्रे—

"इदं त्रिपुरदाहे लक्षणं ब्रह्मणीदितम् । ततस्त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः ॥

## विमला

डिममाह, अथेति ।—उपरागैः,—चन्द्रसूर्य्यग्रहणैः, चकारेण निर्घातोल्कापातधूमकेतूदयाद्यैः, भूयिष्ठः,—बहुलः । ख्यातेति ।—ख्यातं—पुराणादिप्रसिद्धम्, इतिवृत्तं यस्य तादृशः । इह—डिमे इत्यर्थः । दीप्ताः,—उज्ज्वलाः, विभावादिसामग्री बलेन झटिति प्रतीयमाना इति भावः । अन्यत् स्पष्टम् ।

## लक्ष्मी

डिम संमज्ञकं निरूपयति—मायेन्द्रेति । मायया इन्द्रजालेन सङ्ग्रामेण क्रोधेन वा उद्‌भ्रान्ता व्यग्रहृदया आदिपदात् विक्षिप्तादयश्च तेषां चेष्टितैर्व्यवहारैः, उपरागैः सूर्यचन्द्रग्रहणैश्च भूयिष्ठो बहुलः चेन निर्घातोल्कापातादयो ग्राह्याः, तथा ख्यातं प्रसिद्धम् इतिवृत्तं वस्तु यत्र स तथोक्तो रूपकविशेषः डिमसङ्घात इति नायकसङ्घातात्मकत्वात् डिमो विप्लव इत्यर्थः तद्योगादपि डिमः स्यात् । तत्र डिमे रौद्ररसोऽङ्गी अन्ये सर्वे पुनः रसा अङ्गानि चत्वारोऽङ्का मताः किन्तु इह डिमे विष्कम्भकप्रवेशकौ न भवेताम्, चूलिकाऽङ्कावताराङ्कमुखानि तु भवेयुरेव । देवगन्धर्वयक्षरक्षोमहोरगाः, भूतप्रेतपिशाचाद्या अत्यन्तामुद्धता अतीवोत्कटप्रकृतयः षोडशनायकाः स्युः । कौशिकीहीना कौशिकीरहिताः सर्वाः सन्धयश्च स्युः । शान्तहास्यश्रृङ्गारवर्जिताः षट् दीप्ताः विभावादिसामग्रीबलेन झटिति प्रतीयमानाः रसाः स्युः । शेषं प्रस्तावनादि नाटकवदेव ज्ञेयम् ।

## रुचिरा

डिमं लक्षयितुमाह—**अथ** समवकारनिरूपणानन्तरम् । **डिमः** । लक्ष्यते ५७५ **मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितैः** । आदिपदेनोन्मत्तादीनां ग्रहणम् । **उपरागैश्**चन्द्रसूर्य्ययोग्रहणैरुपचारात्तद्वर्णनैः । **च** (इदं समुच्चयार्थम्) । यद्वा-चकारेण निर्घातोल्कापातादिवर्णनैश्चेत्यर्थः । **भूयिष्ठो** विस्तरं प्राप्तः । **ख्यातेतिवृत्तकः** ख्यातमितिवृत्तं यत्र तादृशः । **डिमः** । **तत्र** डिमाख्ये रूपक इत्यर्थः । **रौद्ररसः** । **अङ्गी** । **सर्वे** रौद्रव्यतिरिक्ताः श्रृङ्गारादयः । **रसः** । **पुनः** । **अङ्गान्य**प्रधानभूताः । तथा—**चत्वारः** । **अङ्काः** । **मताः** । **इहास्मिन्** डिमे । **विष्कम्भकप्रवेशकौ** । **न** 'कार्य्यौ' इति शेषः । **षोडश** । **अत्यन्तम्** । **उद्धता** धीरोद्धताः । **देवगन्धर्वयक्षरक्षोमहोरगाः** । **भूतप्रेतपिशाचाद्या** आद्यपदेन दैत्यादीनां ग्रहणम् । **नायकाः** । **कौशिकीहीनाः** कौशिकीं विहायान्याः **वृत्तयः** । **निर्विमर्शा** विमर्शाख्यं सन्धिं परित्यज्यान्ये । **सन्धयः** । **च दीप्ता** विभावादिसामग्रीबलेन स्फुटाः । **शान्तहास्यश्रृङ्गारवर्जिता**श्शान्तं हास्यं श्रृङ्गारं च वर्जयित्वाऽन्ये इत्यर्थः । **षट्** । **रसाः** शान्तहास्यश्रृङ्गारास्तु अस्फुटा निरूपणीया इति भावः । **स्युः** ॥ ५३८-५४१ ॥

नन्वेतादृशः क इत्याशङ्क्याह—**अत्रे**त्यादि । स्फुटम् । महर्षिवाक्यं च—"इदं त्रिपुरदाहे तु लक्षणं ब्रह्मणोदितम् । ततस्त्रिपुरदाहश्च डिमसञ्ज्ञः प्रयोजितः ॥" इति ।

अथेहामृगः—

**ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्तितः।**
**मुखप्रतिमुखे संधी तत्र निर्वहणं तथा॥ २४५॥**
**नरदिव्यावनियमौ नायकप्रतिनायकौ।**
**ख्यातौ धीरोद्धतावन्यो गूढभावादयुक्तकृत्॥ २४६॥**
**दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः।**
**शृङ्गाराभासमप्यस्य किंचित्किंचित्प्रदर्शयेत्॥ २४७॥**
**पताकानायका दिव्या मर्त्या वापि दशोद्धताः।**
**युद्धमानीय संरम्भं परं व्याजान्निवर्तते॥ २४८॥**
**महात्मानो वधप्राप्ता अपि वध्याः स्युरत्र नो।**
**एकाङ्को देव एवात्र नेतेत्याहुः परे पुनः॥ २४९॥**
**दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे।**

मिश्रं ख्याताख्यातम्। अन्यः प्रतिनायकः। पताकानायकास्तु नायकप्रतिनायकयोर्मिलिता दश। नायको मृगवदलभ्यां नायिकामत्र ईहते वाञ्छतीतीहामृगः। यथा—कुसुमशेखरविजयादिः।

---

## विवृतिः

ईहामृगमाह—ईहामृग इति। मिश्रवृत्तः ख्याताख्यातेतिवृत्तः।

नरदिव्यौ नायकप्रतिनायकाविति

क्रमनिषेधार्थमाह—अनियमाविति।

यद्वा क्वचिद्दिव्ययोः क्वचिन्नरयोर्वा प्राप्त्यर्थमिदम्। अन्यः प्रतिनायकः।

गूढभावाद् गोपनेन। अपहारो बलात्कारः।

आदिना छलादिपरिग्रहः। परं प्रतिनायकम्। संरम्भमानीय क्रोधं प्रापय्य स्थितस्य नायकस्य व्याजात् कार्यान्तरच्छलाद् युद्धं निवर्तत इत्यर्थः। 'निवर्तयेत्' इति पाठे परं युद्धस्थानमानीय संरम्भं निवर्तयेदित्यर्थः।

महात्मन इति। प्रतिनायकानां वधे पुराणादिप्रसिद्धेऽपि स न वर्णनीय इति भावः।

अत्र ईहामृगे॥

## विवृतिपूर्तिः

प्रख्यातमिति। क्वचिदप्रख्यातमपि। तदुक्तं नाट्यशास्त्रकृता—'प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात्। दिव्यपुरुषैर्वियुक्तः शेषैरन्यैर्भवेत्पुंभिः॥'इति॥

## विज्ञप्रिया

ईहामृगाख्यं रूपकमाह—अथेहेति। मिश्रवृत्तः ख्याताख्यातवृत्तान्तः निर्वहणोपसंहृतिरूपसिद्धिरपि तत्रे-त्यर्थः। नरदिव्याविति। नरौ वा दिव्यौ वा नरदिव्यौ वा नायकप्रतिनायकावित्यर्थः। तयोराद्यो धीरः। अन्त्य उद्धतः। स च मूढभावात् अयुक्तकारी।

दिव्यस्त्रियमनिच्छन्तीमिच्छतः शृङ्गाराभासमपीत्यन्वयः। पताकानायकव्यापिप्रासङ्गिकवृत्तप्रवर्त्तका नायिका "व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते" इत्युक्तत्वात्। ते तु दिव्यमर्त्या द्वादश इत्यर्थः। तथा च नायकप्रतिनायकौ द्वौ, पताकानायका दश इति द्वादश। युद्धमिति युद्धरूपं संरम्भं विक्रमं परबलमानीय प्रापय्य व्याजात् निवर्त्तयेत् इत्यर्थः। तत्र हेतुमाह—महात्मान इति। तेषां वधानर्हत्वादित्यर्थः। इत्थं नायकप्रतिनायकयो-र्दिव्यमर्त्यादित्वात् नियम उक्तः।

अन्ये तु दिव्यैकनायकनियममाहुः। अन्ये तु षड्नायकमाहुरित्याह—एकाङ्को दिव्य इत्यादि च। पता-कानायक इत्यादिकं व्याचष्टे—पताकास्था इति नायकप्रतिनायकयोः सम्बन्धिनः पताकास्था नायका मिलिताः सङ्गता दश इत्यर्थः ईहामृगव्युत्पत्तिमाह—नायको मृगवदिति।

## कुसुमप्रतिमा

ईहेति। मिश्रं ख्याताख्यातं वृत्तमुपाख्यानं यस्य सः, चत्वारोऽङ्का यत्र स तादृशी रूपकविशेष ईहामृगः प्रकीर्त्तितः। अस्य व्युत्पत्तिन्तु वृत्तावेवानुपदमाह। तत्र ईहामृगे मुखप्रतिमुखे सन्धी ख्यातां तथा निर्वहणञ्च सन्धिः स्यात्। अनियमौ "नरदिव्यौ नायकप्रतिनायकौ" इत्यत्र यथासंख्यनियमवर्जितौ धीरोद्धतौ ख्यातौ कथितौ। तथा च नरो नायकः दिव्यश्च प्रतिनायकः, एवं नरः प्रतिनायकः दिव्यश्च नायकी भवितुमर्हतीत्यर्थः। अन्यः प्रतिनायको गूढभावाद्गुप्तभावात् अयुक्तकृत् असङ्गतकार्य्यकारी। आत्मनो रमणमनिच्छन्तीं दिव्यस्त्रियम् अपहरेण अपहरेण आदिशब्दाच्छलेन च इच्छतो रन्तुमभिलषतः अस्य प्रतिनायकस्य किञ्चित् किञ्चित् शृङ्गाराभासमपि कविः प्रदर्श-येत्। दिव्याः स्वर्गीयाः मर्त्या नरा वा उद्धता उद्धतस्वभावाः दश पताकानायकाः पताकाख्यार्थप्रकृतिसंसृष्टाः पुरुषः स्युः। परं शत्रुभूतं प्रतिनायकं संरम्भं क्रोधम् आनीय भापय्यं वर्त्तमानस्य नायकस्य व्याजात् अन्यकार्य्यच्छलात् युद्दं निवर्त्तते। अत्र ईहामृगे महात्मानो जना वध प्राप्ता वधयोग्या अपि नो वध्याः। परमतद्वयमाह एकाङ्क इत्यादि। एकोऽङ्को यस्मिन्नित्येकाङ्कः, अत्र ईहामृगे देव एव नेता नायक इति पुनः परे आहुः। तदितरे च दिव्यस्त्री हेतुकं युद्धं नायकाश्च षट् इत्याहुरित्यन्वयः।

क्रमादस्पष्टपदानि व्याचष्टे मिश्रमिति। नायकप्रतिनायकयोरुभयोरेव सम्बन्धे मिलिता दश, न पुनरनयो-रेकतरस्यैव दशेत्यर्थः। अलभ्यामसम्भवत्वेनाप्राप्याम्। अत्रार्थे ईहामृगशब्द पृषीदरादित्वात् साधुरिति भावः।

## विमला

ईहामृगमाह, अथेति ।—मिश्रवृत्तः,—ख्याताख्यातेतिवृत्तः । अनियमौ—नियमवर्जितौ, क्वचित् नरो नायकः प्रतिनायकी वा, क्वचित् दिव्यः नायकः प्रतिनायको वा इति नायकप्रतिनायकयोर्नियमो नास्तीति भावः । अन्यः,—प्रतिनायकः, गूढभावात्,—गोपनभावात्, अयुक्तकृत्—अनुचितकार्य्यकारीत्यर्थः । अपहारादिना—बलात्कारादिना, [आदिपदेन छलादिपरिग्रहः] परं—शत्रुं, प्रति नायकमित्यर्थः, संरम्भं—क्रोधम, आनीय—प्रापय्य, क्रुद्धं कृत्वेत्यर्थः, स्थितस्य नायकस्येति शेषः, व्याजात्—कार्य्यान्तरच्छलात् । ["निवर्त्तते" इत्यत्र "निवर्त्तयेतु" इति पाठे—परं युद्धस्थानमानीय संरम्भं निवर्त्तयेदित्यर्थः] महात्मान इति ।—वधप्राप्ताः—वधप्राप्तियोग्या अपीत्यर्थः, प्रतिनायकानां वधे पुराणादिप्रसिद्धेऽपि स न वर्णनीय इति भावः । अन्यत् सुगमम् ।

## लक्ष्मी

कारिकार्थं विवृणोति—मिश्रमिति । पताकानायकं विवृणोति—पताकानायका इति । नायकप्रतिनायकयोरेव सम्बन्धिनः पताकास्था नायका मिलिता दश न पुनरनयोरेकतरस्यैव दशेत्यर्थः । ईहामृगव्युत्पत्तिं दर्शयति—नायको मृगवदिति । अलभ्यां दुष्प्राप्यत्वेनाप्राप्याम् । तथा चास्मिन्नर्थे ईहामृगशब्दः पृषोदरादित्वात् साधनीयः ।

## रुचिरा

ईहामृगं लक्षयितुमाह—**अथ । ईहामृगस्तन्नामकं** रूपकम् । लक्ष्यते ५७६ **मिश्रवृत्तो** मिश्रं ख्याताख्यातमितिवृत्तं यत्र तादृशः । **चतुरङ्कश्चत्वारो**ऽङ्का यत्र तादृशः । **ईहामृगः** । प्रकीर्त्तितः । **तत्र** तस्मिन्नीहामृगाख्ये रूपके । **मुखप्रतिमुखे** तदाख्यौ । **सन्धी । तथा । निर्वहणं** तदाख्यः सन्धिर्विधेय इति भावः । **अनियमौ** विकल्पितनिरूपणौ । **नरदिव्यौ** मनुष्यो दिव्यश्च (देवयक्षाद्यन्यतमश्च) । **ख्यातौ । धीरोद्धतौ । नायकप्रतिनायकौ** तथा च-नायकः क्वचिन्मनुष्यः, कचित् दिव्यश्च; एवं प्रतिनायको मनुष्यो दिव्यो वा वर्णनीयः । एतावपि धीरोद्धतावेवेति निष्कर्षः । अत्रापि-**अन्यः** प्रतिनायक इति भावः । **गूढभावा**त्तात्पर्य्यान्निगूह्यते भावः । **अयुक्तकृत्** नीतिविरुद्धचेष्टित इति भावः । **अस्य** प्रतिनायकस्य । **अपहारादिना**ऽपहारो बलात्कार आदिर्यत्र (छलादेः) तेन तद्वारेति भावः । **अनिच्छन्तीम् । दिव्यस्त्रियम् । इच्छतः** 'सत'इति शेषः । **शृङ्गाराभासम् । अपि । किञ्चित्किञ्चित् । प्रदर्शयेत् । दश । उद्धता** धीरोद्धताः । **दिव्याः । मर्त्या** मनुष्याः **वा । अपि । पताकानायकाः** पञ्चविधानां पताकानां नायकाः (पञ्चनायकाः पञ्च प्रतिनायकाश्चेति कृत्वा) फलस्वामिनः । 'वर्णनीया' इति शेषः । अयम्भावः—पताकानां पञ्चविधत्वेन द्वयोरपि नायकप्रतिनायकयोस्तासां स्वामिभूतत्वात् प्रत्येकं पञ्चविधत्वे दशविधत्वम् । इति । **परं** प्रतिनायकम् । **युद्धं** युद्धभूमिम् । **आनीय** प्रापय्य । **व्याजात्** कञ्चिच्छलमापाद्येति भावः । **संरम्भं** क्रोधम् । **निवर्तयेत् ।** यद्वा—संरम्भम् आनीय युद्धं निवर्त्तयेदित्यन्वयः । **अत्रास्मिन्नीहामृगे । वधप्राप्ताः** पुराणेतिहासानुकूल्येन प्रतिनायकेन हननीयतया दर्शनीयाः । **अपि । महात्मानः । वध्या** हननीयाः । **नो** नैव । एवं स्वारस्येन लक्षयित्वा परमतेन तत्र किञ्चिदाह—**अत्रे**हामृगे इत्यर्थः । **एकः । अङ्कः । देवो** दिव्यजनः । **एवं** न तु नर इत्यर्थः । **नेता** नायकः । **इति । परे । आहुः । इतरे** एतेभ्योऽपि भिन्ना आचार्य्याः **पुनः । दिव्यस्त्रीहेतुकं** दिव्यस्त्रियं निमित्तीकृत्येति भावः । **युद्धं** 'वर्णनीय'मिति शेषः । **षट् ।** 'चे'ति शेषः । नायकाः । इति । 'आहुरि'ति शेषः ॥ ५४२-५४६ ॥

कारिकां सुगमयितुमाह—**मिश्रमित्यादि** । स्पष्टम् ।

रूपकस्य सञ्ज्ञायाः सार्थकतां दर्शयति—**नायक** इत्यादिना । स्पष्टम् ।

उदाहरति—**यथेत्यादिना** । आदिपदार्थ ऊह्यः । स्पष्टमन्यत् ।

अथाङ्कः—

**उत्सृष्टिकाङ्क एकाङ्को नेतारः प्राकृता नराः ॥ २५० ॥**

**रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितम् ।**

**प्रख्यातमितिवृत्तं च कविर्बुद्ध्या प्रपञ्चयेत् ॥ २५१ ॥**

**भाणवत्संधिवृत्त्याङ्गान्यस्मिञ्जयपराजयौ ।**

**युद्धं च वाचा कर्तव्यं निर्वेदवचनं बहु ॥ २५२ ॥**

इमं च केचित् 'नाटकाद्यन्तःपात्यङ्कपरिच्छेदार्थमुत्सुष्टिकाङ्कनामानम्' आहुः । अन्ये तु— 'उत्क्रान्ता विलोमरूपा सृष्टिर्यत्रेत्युत्सृष्टिकाङ्कः ।' यथा—शर्मिष्ठाययातिः ।

---

## विवृतिः

अङ्कमाह—उत्सृष्टिकाङ्क इति । अङ्कस्यैव नामान्तरमेतत् ।

प्राकृताः नातिकोविदाः । स्थायी स्थिरतरः । प्रपञ्चयेद्बहुलीकुर्यात् ।

भाणवदिति । भाणे यथा मुखनिर्वहणे संधी, कैशिकीभारत्यौ वृत्ती, दश लास्याङ्गानि तथात्रापीत्यर्थः ।

अस्मिन्नङ्के जयपराजयौ वर्णनीयौ । इमं च अङ्कं च ॥

## विज्ञप्रिया

उत्सृष्टिकाङ्काख्यं रूपकमाह—अथेति । बहुस्त्रीणां परिदेवितं शोकः स्थायिभावः इत्यर्थः । उत्सृष्टिकाङ्कपदार्थं व्याचष्टे—इमं चेति । नाटकाद्यन्त पातीति नाटकान्तरे द्वित्र्याद्यङ्काः । अस्य च एकाङ्कत्वेन अङ्कान्तरोत्सङ्गात् अमुम् उत्सृष्टिकाङ्कनामानं केचिदाहुरित्यर्थः । अन्ये तु वक्ष्यमाणवीथ्यामपि एकाङ्कसत्त्वात् तस्या अपि उत्सृष्टिकाङ्कत्वापत्तेः । तत्पदार्थमन्यथाहुस्तदाह—अन्ये त्विति । विलोमेति प्राकृतनायकत्वेन विलोमता ।

## कुसुमप्रतिमा

उत्सृष्टिकाङ्क इति । उत्सृष्टिकाङ्क इत्यङ्कस्यैव परमते नामान्तरम् । एतञ्च वृत्तावव स्फुटौ भविष्यति । एकः अङ्घो यस्मिन् सः । अत्र अङ्के प्राकृताः साधारणाः न पुनः कथञ्चिदपि महात्म्यवन्त इत्यर्थः । नरा अनेके मनुष्या नेतारो नायकाः । स्थायी समाप्ति यावद्वगिद्यमानः करुणी रसः, बहूनां स्त्रीणाञ्च परिदेवितं विलापश्च स्यात् । कविस्तु प्रख्यातं प्रसिद्धम् इतिवृत्तं बुद्ध्या स्वविवेचनेन यथासम्भवं प्रपञ्चयेत् विस्तारयेत् । भाणवद्भाणे यता मुखप्रतिमुखाख्यं सन्धिद्वयम्, बाहुल्येन भारती वृत्तिरल्पा तु कौशिकी दसापि लास्याङ्गानि अस्मिन्नङ्केऽपि तथैवेत्यर्थः । नायकप्रतिनायकयोर्जयपराजयौ दर्शनीयौ । वाचा च युद्धं कर्त्तव्यं न तु शस्त्रादिनेत्यर्थः, बहुप्रचुरं निर्वेदवचनामात्मावमाननासूचकं वाक्यञ्च कविना निबद्धव्यम् ।

कारिकोक्तोत्सृष्टिकाङ्कशब्दस्युतपत्तिप्रदर्शनपूर्वकं परमतद्वयं विवरीतुमाह इमञ्चेति। अस्मन्मतसिद्धमङ्क-नामानं रूपकविशेषञ्च। नाटकादीनामन्तः पातिनो ये अङ्कास्तेषां परिच्छेदार्थं व्यावृत्त्यर्थम्, उद्गता उत्थिता नाटका-द्यङ्कादि्भिन्नरूपा सृष्टिर्यस्य स उत्सृष्टिकः स आसावद्धश्चेति तन्नामानम्।

अन्ये त्विति। विलोमरूपा प्रतिमुखसन्ध्याद्यभावेन विपरीतप्रकारा सृष्टिर्यस्य स उत्सृष्टिकः, स आसाव-ङ्कश्चेति उत्सृष्टिकाङ्क इत्यर्थः। एतन्मतेऽपि "नाटकाद्यन्तःपात्यङ्कपरिच्छेदार्थम् उत्सृष्टिकाङ्कः" इत्याहुरित्यनुषज्यते। ग्रन्थकारमते तु नामसाम्येऽपि लक्षणवैषम्यान्नाटकाद्यङ्कव्यावृत्तिरिति बोध्यम्।

## विमला

अङ्कमाह, उत्सृष्टिकेति।—उत्सृष्टिकाङ्कः,—अङ्कस्यैव नामान्तरमेतत्। प्राकृताः,—सामान्याः, नातिमहान्तं इत्यर्थः; अत्र करुणो रसः स्थायी—स्थिरतरः, प्रधानभूत इति यावत्; अत एव वह्वीनां स्त्रीणां परिदेवितं—विलापः, तथा प्रख्यातं—प्रसिद्धम्, इतिवृत्तम्। प्रपञ्चयेत्—बहुलीकुर्य्यात्। अत एवोक्तं "प्रख्यातवस्तु, विषयस्त्वप्रख्यातः कदाचिदेव स्यात्। दिव्यपुरुषैर्वियुक्तः शेषैरन्यैर्भवेत् पुम्भिः॥" इति भाणवदिति।—भाणे यथा मुखनिर्वहणे सन्धौ, कौशिकी भारत्यौ वृत्तौ, दश लास्याङ्गानि, तथाऽत्रापीत्यर्थः। अस्मिन्—अङ्के, जयपराजयौ वाचा वर्णनीयौ; अत एवोक्तं,—"वाचा युद्धं विघातव्यं तथा जयपराजयौ" इति। अन्यत् स्पष्टम्।

## लक्ष्मी

उत्सृष्टिकाङ्कख्यं रूपकं निरूपयति—उत्सृष्टिकाऽङ्क इति। उत्सृष्टिकाङ्क इत्यङ्कस्यैव केषाञ्चिन्मते नामा-न्तरम्, एतञ्च विवरण एवाऽनुपदं स्पष्टीभविष्यति। एकः अङ्को यत्र सः तथोक्तः, अत्र उत्सृष्टिकाङ्के प्राकृताः नातिकोविदा असाधारणा इति यावत्, न पुनरत्यन्तकोविदा इत्यर्थः, नरा बहवो मनुष्या नेतारो नायकाः स्युः। स्थायी स्थिरतरः समाप्तिपर्यन्तमुपलभ्यमान इत्यर्थः, करुणो रसः बहुस्त्रीणां परिदेवितं विलापश्च स्यात्। प्रख्यातं पुराणेहासादिषु प्रसिद्धम्, क्वचिदप्रख्यातमपि इतिवृत्तं वृत्तान्तं बुद्धया स्वकीयोहापोहेन यथा सम्भवं कविः प्रपञ्चयेत् बहुलीकुर्यात्। उक्तं च महर्षिणा—

**प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात्।**

**दिव्यपुरुषैर्वियुक्तः शेषैरन्यैर्भवेत् पुंभिः॥ इति॥**

भाणे यथा मुखनिर्वहणे सन्धी प्रायेण भारती वृत्तिः क्वाचित्की कौशिकी दशापि लास्याङ्गानि तथा-त्राङ्गेऽपीत्यर्थः। भाणे मुखनिर्वहणाख्यमेव सन्धिद्वयं न तु मुखप्रतिमुखे सन्धी, तथा चात्र भाणे तथा मुखप्रतिमु-खाख्यं सन्धिद्वयमिति व्यचक्षाणाः परास्ताः। अस्मिन्नङ्के नायकप्रतिनायकोः जयपराजयौ वर्णनीयौ। वाचा च युद्धं सङ्ग्रामं कर्त्तव्यं न त्वायुधादिनेत्यर्थः, बहु भूयिष्ठं निर्वेदवचनं स्वतिरस्कारबोधकं वाक्यञ्च कविभिर्वर्णनीयम्।

उत्सृष्टिकाङ्कपदार्थव्याख्यानपूर्वकं मतान्तरद्वयं व्याख्यातुमाह—इमञ्चेति। ममाभिमतमङ्कनामानं रूपक-विशेषञ्चेत्यर्थः। नाटकादीनामन्तः पातिनः अन्तर्गता ये अङ्कास्तेषां परिच्छेदार्थं निषेधार्थम् उद्धता उत्थिता नाटका-द्यङ्कात् पृथग् रूपा सृष्टी रचना यस्य स उत्सृष्टिकः स चासावङ्कश्चेति तत्संज्ञकम्। नाटकान्तरे द्वित्र्याद्यङ्का अस्य चैकाङ्कत्वेन अङ्कान्तरोत्सङ्गात् अमुम् उत्सृष्टाङ्कनामानं केचिदाहुरित्यर्थः।

अन्ये तु वक्ष्यमाणवीथ्यामपि एकाङ्कसत्त्वात् तस्या अपि उत्सृष्टकाङ्कत्वापत्तेः। अतस्तत्पदार्थमन्यथाहुस्तद्दर्शयति—अन्ये त्विति। विलोमरूपा प्रतिमुखसन्ध्याध्यभावेन विलोमप्रकारा सृष्टिर्यस्य स उत्सृष्टिकः स चासावङ्कश्चेति उत्सृष्टिकाङ्क इत्यर्थः। अत्र मतेऽपि 'नाटकाद्यन्तःपात्यङ्कपरिच्छेदार्थम् उत्सृष्टिकाङ्क' इत्याहुरित्वनुषङ्गो विधेयः। मूलकृन्मते तु नामतुल्येऽपि स्वरूपवैषम्यान्नाटकाद्यङ्कनिवृत्तिरिति पृथगेवाङ्कोऽयमिति ध्येयम्।

## रुचिरा

अङ्कं लक्षयितुमाह—**अथ**। **अङ्क**स्तन्नामकं रूपकं लक्ष्यते ५७७ **उत्सृष्टिकाङ्क** एतदपरनामकोऽङ्क इति भावः। **एकाङ्क** एकोऽङ्को यत्र तादृशः। **अत्राङ्का**ख्ये रूपके। **प्राकृता** अनतिचतुराः। **नराः**। **नेतारो** नायकाः (अत्र बहुवचनमेषामेकद्विसङ्ख्याऽतिरिक्तत्वं सूचयन् बहुत्वमात्रमाह)। **करुणः**। **रसः** करुणरसः। **स्थायी**। अत एव—**बहुस्त्रीपरिदेवितं** बहुस्त्रीणां विलापवर्णनगर्भितम्। **प्रख्यातम्**। **च** क्वचिदविख्यातमिति भावः। **इतिवृत्तम्**। **कविः**। **बुद्ध्या** स्वप्रतिभया। **प्रपञ्चयेत्** विस्तरं नयेत्॥ तथा हि भरतः—"प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिरेव स्यात्। दिव्यपुरुषैर्वियुक्तः शेषैरन्यैर्भवेत् पुम्भिः॥" इति। **भाणवद्यथा** भाणे तथा। **अस्मिन्**। **सन्धिवृत्त्यङ्गानि**। (मुखनिर्वहणे) सन्धी च (कौशिकीभारत्यौ) वृत्ती च (गेयपदादीनि) अङ्गानि चेति तानि तथोक्तानि। तथा—**जयपराजयौ**। 'प्रपञ्चये'दिति पूर्वतोऽन्वेति। **वाचा** नतु शास्त्रादिना। **च**। **युद्धम्**। **कर्त्तव्यम्**। तथा—**बहु** अत्यन्तम्। **निर्वेदवचनं** वैराग्यवर्णनम्। 'कर्त्तव्य'मिति शेषः॥ ५४७-५४९॥

अस्यो'त्सृष्टिकाऽङ्के' इति नामान्तरे हेतुं परमतमुद्धाट्य दर्शयति—**इममङ्क**मित्यर्थः। स्पष्टमन्यत्। उदाहरति**यथे**त्यादिना। स्पष्टम्।

अथ वीथी—

**वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते।**

**आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः॥ २५३॥**

**सूचयेद्भूरि शृङ्गारं किंचिदन्यात्रासान्प्रति।**

**मुखनिर्वहणे संधी अर्थप्रकृतयोऽखिलाः॥ २५४॥**

कश्चिदुत्तमो मध्यमोऽधमो वा। शृङ्गारबहुलत्वाञ्चास्याः कैशिकीवृत्तिबहुलत्वम्।

**अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनीषिणः।**

**उद्धात्य(त) कावलगिते प्रपञ्चस्त्रिगतं छलम्॥ २५५॥**

**वाक्केल्यधिबले गण्डमवस्यन्दितनालिके।**

**असत्प्रलापव्याहारमृद(मार्द) वानि च तानि तु॥ २५६॥**

तत्रोद्धात्य(त)कावलगिते प्रस्तावनाप्रस्तावे सोदाहरणं लक्षिते।

---

## विवृतिः

वीथीमाह—वीथ्यामिति। एकोऽद्वितीयः। नायक इति शेषः।

कल्प्यते कल्पयित्वा वर्ण्यते। अर्थप्रकृतयो बीजादयः पञ्च॥

अस्याः वीथ्याः॥ प्रपञ्चमाह—मिथ इति। परस्परमित्यर्थः।

## विवृतिपूर्तिः

यथेति। यथा वा कर्पूरमञ्जर्या भैरवानन्दः—'रण्डा चण्डा दिक्खिदा धम्मदारा मज्जं मंसं पिज्जए खज्जए अ। भिक्खा भोज्जं चम्मखण्डं च सेज्जा कोलो धम्मो कस्स णो होइ रम्मो॥' इति॥

## विज्ञप्रिया

वीथ्याख्यं रूपकमाह—अथेति। कश्चिदेक इत्यत्र नायक इति शेषः। अर्थप्रकृत्य इति बीजं बिन्दुः पताका च प्रकरी कार्य्यमेव इति याः पञ्च प्रकृतयः प्रागुक्तास्ता अखिला अपि अत्रेत्यर्थः।

व्याचष्टे—कश्चिदिति। उत्तमाद्यन्यतरो नायक इत्यर्थः। कौशिक्या वृत्तेरत्र अनुक्तत्वेऽपि भूरिशृङ्गारवत्त्वात् तल्लाभ इत्याह-शृङ्गारबहुलत्वादिति।

प्रस्तावनाप्रस्तावे इति। "पदानि त्वगतार्थानि तदर्थगतये नराः। योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते॥" इत्युद्धातकलक्षणस्य "यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते। प्रयोगे सति तद्ज्ञेयं नाम्नाऽवलगितं बुधैः॥" इति अवलगितलक्षणस्य च प्रस्तावनाप्रस्तावे उक्तत्वात्।

## कुसुमप्रतिमा

वीथ्यामिति । वीथ्यामेकोऽङ्को भवेत्, तथा अत्र वीथ्याम् एको यः कश्चिन्नायकः कल्पयते. उक्तैरुक्तप्रकारैः आकाशभाषितैः चित्रामाश्चर्य्यां प्रत्युक्तिमाश्रितः सन् नटः श्रृङ्गारं भूरि, अन्यान् रसानपि तु किञ्चित् सूचयेत् । मुखनिर्वहणे सन्धौ स्याताम्, तथा अखिला बीजादयः पञ्चेव अर्थप्रकृतयः स्युः ।

कञ्चिदिति । नायक इत्यर्थः । कौशिकीवृत्तिबहुलत्वमिति । कौशिकीवृत्तेः श्रृङ्गाराङ्कत्वादिति भावः ।

अस्या इति । मनीषिणः अस्या वीथ्यास्त्रयोदश अङ्गानि निर्दिशन्ति । तानि त्रयोदशाङ्गानि यथा—उद्घात्यकः, अवलोगतम् प्रपञ्चः, त्रिगतम्, प्रपञ्चः, विगतम्, छलम्, वाक्केलिः, अधिबलम्, गण्डम्, अवस्यमिन्दतम्, नालिका, असत्प्रलापः, व्याहारः, मृदञ्चेति ।

## विमला

वीथीमाह, अथेति ।—अत्र—वीथ्याम्, एकः,—अद्वितीय इत्यर्थः, कश्चित्, नायक इति शेषः, कल्प्यते—निबध्यते । अखिलाः,—समग्राः, पञ्चेति भावः, अर्थ प्रकृतयः,—बीजादयः, प्रयोज्या इति शेषः । दशरूपककारस्त्वाह,—"वीथी तु कौशिकी वृत्तिः सन्ध्यङ्काङ्कैस्तु भाणवत् । रसः सूच्यस्तु श्रृङ्गारः स्पृशेदपि रसान्तरम् ॥ युक्ता प्रस्तावना ख्यातैरङ्गैरुद्घात्यकादिभिः । एवं वीथी विधातव्या ह्येकपात्रप्रयोजिता ॥" इति ।

अस्या इति ।—अस्याः,—वीथ्याः, त्रयोदश अङ्गानि मनीषिणः,—विद्वांसः, निर्दिशन्ति—प्राहुरित्यर्थः. तान्येव नामतो गणयति,—उद्घात्यकम्, अवलगितं, प्रपञ्चः, त्रिगतं, छलं, अधिबल वाक्केलिः, गण्डम्, अवस्यन्दितं, नालिकम्, असत्प्रलापः, व्याहारः, मृदवं चेति ।

## लक्ष्मी

वीथ्याख्यं रूपकं निरूपयति—वीथ्यामिति । वीथ्यामेकोऽङ्को भवेत् । अत्र वीथ्याएकोऽद्वितीयो यः कश्चन नायकः कल्प्यते कल्पयित्वा वर्ण्यते । उक्तैरुक्तप्रकारैः आकाशभाषितैः चित्रां विस्मयां प्रत्युक्तिमाश्रितः अवलम्बितः सन् नटः श्रृङ्गारं भूरिप्रचुरम्, अन्यान् रसानपि किञ्चित् सूचयेत् प्रकाशयेत् । मुखनिर्वहणे सन्धी स्याताम् । अर्थप्रकृतयः 'बीजं विदुःपताका च प्रकरी कार्यमेव च' इति याः पञ्चप्रकृतयस्ता अखिला अपि अत्र स्युरित्यर्थः ।

विवृणोति—कश्चिदिति । उत्तमाद्यन्यतरो नायक इत्यर्थः ।

कौशिक्या वृत्तेरत्रानुक्तत्वेऽपि भूरिश्रृङ्गारत्वात् तल्लाभ इति दर्शयति—श्रृङ्गारबहुलत्वादिति ।

वीथ्यास्त्रयोदशाङ्गानि भवन्तीति दर्शयति—अन्या इति । अस्या वीथ्याः मनीषिणः नाट्यवेत्तारः त्रयोदश अङ्गानि निर्दिशन्ति । तानि त्रयोदशाङ्गानि तु उद्धात्यकः, अवगलितम्, प्रपञ्चः, त्रिगतम्, छलम्, वाक्केलिः, अधिबलम्, गण्डम्, अवस्यन्दितम्, नालिका, असत्प्रलापः, व्याहारः, मृदवञ्चेति ।

नाट्यदर्पण तु विशेषः—

'भारतीवृत्तिवर्त्तानि वीथ्याङ्गानि त्रयोदश' । इति ।

तत्रेति । प्रस्तावनाप्रस्ताव इति ।

पदानि त्वगतार्थानि तदर्थगतये नराः । योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते ॥

इत्युद्घात्यकलक्षणस्य—

यत्रैकत्र समावेशात् कार्यमन्यत् प्रसाध्यते । प्रयोगे सति तज्ज्ञेयं नाम्नाऽवगलितं बुधैः ॥

इति अवगलितलक्षणस्य च प्रस्तावनाप्रस्तावे उक्तत्वात् ।

## रुचिरा

वीथीं लक्षयितुमाह—**अथाङ्कनिरूपणानन्तरम्**। **वीथी**। लक्ष्यते। ५७८ **वीथ्याम्**। **एकः**। **अङ्कः**। **भवेत्**। **अत्रास्याम्**। **कश्चिदुत्तममध्यमाधमान्यतमः**। **एकः**। 'नेते'ति शेषः। **कल्प्यते**। **उक्तैरुच्चारितैः**। **आकाशभाषितैः**। **चित्रां** मनोरमाम्। **प्रत्युक्तिं** प्रतिवचनम्। **आश्रितः**। 'स'न्निति शेषः। **भूरि**। **शृङ्गारम्**। **किञ्चित्**। **अन्यान्**। **अपि**। **रसान्** **सूचयेत्**। **मुखनिर्वहणे**। **सन्धी** 'कर्त्तव्यौ'इति शेषः। एवम्—**अखिलाः** समस्ताः। **अर्थप्रकृतयो** बीजादयः। 'कार्य्या'इति शेषः ॥ ५५० ॥ ५५१ ॥

कारिकां सुगमयितुमाह—**कश्चिदितीत्यादि**। स्पष्टम्।

अस्या भेदानाह—५७९ **अस्या** निरुक्तलक्षणस्य वीथीनाम्नो रूपकस्येत्यर्थः। स्पष्टमन्यत् ॥ ५५२ ॥ ५५३ ॥

उद्घातकावलगिते पूर्वं लक्षिते इत्याह—**तत्रेत्यादिना**। स्पष्टम्।

**मिथो वाक्यमसद्भूतं प्रपञ्चो हास्यकृन्मतः ।**

यथा विक्रमोर्वश्याम—वलभीस्थविदूषकचेटयोरन्योन्यवचनम् ।

---

## विवृतिः

असद्भूतं मिथ्यास्वरूपम् ॥

वलभी गृहावस्थितकाष्ठविशेषः ॥

## विज्ञप्रिया

प्रपञ्चाख्यमङ्गमाह—मिथ इति—असद्भूतम् अलीकार्थम् अत एव हास्यकृत् ।

## लोचन

मिथः असद्भूतं वाक्यमिति सम्बन्धः ।

## कुसुमप्रतिमा

मिथ इति । मितः परस्परम्, असद्भूत मिथ्याभूतम्, हास्यकृत् वाक्यं प्रपञ्ची नाम वीथ्यङ्गं मतः । परस्परं प्रपञ्चनात् प्रपञ्च इति संज्ञा ।

यथेति । बलभी चन्द्रशाला उपस्थितगृहविशेषः (चिले कोठा इति भाषा) । अत्र रूपकत्वसाधर्म्मयाद-न्याङ्गमप्यन्यत्राकाङ्क्षितत्वेन त्रोटकरूपाया अपि विक्रमोर्वश्या उदाहरणं वीथ्यां सङ्गच्छते. एवमन्वत्रापि बोध्यम् ।

## विमला

प्रपञ्चमाह, मिथ इति ।—मिथः,—परस्परं, हास्यकृत्—हास्यजनकम्, असङ्भूतं—मिथ्याभूतं, वाक्यं प्रपञ्चः ।

उदाहरति, सर्वेति ।—पर्वतं प्रति उर्वशीविरहितस्य पुरुरवसः प्रश्नात्मिकेयमुक्तिः, अर्थान्तरयोजनेन राजानं प्रति प्रवर्तस्यापि प्रतिध्वनिना तत्प्रतिवचनरुपा च प्रत्युक्तिरियम् । हे सर्वक्षितभृतां—सर्वेषां पर्वतानां, नाथ !—श्रेष्ठ ! अस्मिन् रम्ये—सुभगे, वनान्ते—वनमध्ये, त्वया सर्वाङ्गसुन्दरी—सर्वावयवशोभना, अत्युत्कृष्ट रूपा इत्यर्थः, मया विरहिता—मया वियुक्ता, रामा—उर्वशीत्यर्थः, दृष्टा ?—अवलोकिता ? (इति प्रश्नपक्षः; उत्तरपक्षे पुनः;—) हे सर्वक्षितिभृतां नाथ !—निखिलक्षितिपश्रेष्ठ ! मया कर्त्ता त्वया विरहिता रामा दृष्टा इत्येवं व्याख्येयम्, अन्यत् समानम् । अत्रास्य वाक्यस्य प्रतिध्वनेश्च साम्यात् "सर्वक्षितिभृतां नाथ !" इत्यस्य पर्वतश्रेष्ठ-राजश्रेष्ठरूपार्थद्वयघटितत्वेन, तथा "त्वया" इतिपदस्य प्रश्नपक्षे "दृष्टा" इति क्रियायां कर्तृत्वेनान्वयः, "मया" इत्यस्य च दर्शनक्रियायां कर्त्तृत्वेनान्वयः, इति चोभयार्थप्रतिपादनेन अनेकार्थयोजनं बोध्यम् ।

## लक्ष्मी

प्रपञ्चाख्यमङ्गं निरूपयति—मिथ इति। मिथोऽन्योऽन्यम्, असद्भूतं मिथ्यास्वरूपम् अत एव हास्यकृत् वाक्यम् अन्योऽन्यं प्रपञ्चनात् प्रपञ्चो नाम वीथ्यङ्गं मतः।

उदाहरति—यथेति। वलभी उपरिस्थगृहावस्थितकाष्ठविशेषः। अत्र रूपकत्वसाधर्म्याद् भिन्नाङ्गनामप्यत्रापेक्षितत्वेन त्रोटकस्वरूपाया अपि विक्रमोर्वश्या वीथ्यामुदाहरणं नासम्ञ्जसमिति बोध्यम्। नाट्यदर्पणकारस्य किञ्चिद् विशेषेण लक्षणं तदुदाहरणं च—'प्रपञ्चः संस्तवं हास्यं मिथो मिथ्यैकलाभकृत्' इति। यथा रत्नावल्याम्—राजा—कदलीगृहे चित्रगतां सागरिकामवलोकयन् सुसङ्गताया दर्शने फलकं प्रच्छाद्य तामाह—'सुसङ्गते! कथमिहस्थो भवत्या ज्ञातः? 'सुसङ्गता भट्टा! न केवलं तुवं, समं चित्तपलएण सव्वो वुत्तंतो मए जाणिदो ता गहुए देवीए निवेदयिस्सं। [भत्तः! न केवलं त्वम्, समं चित्रफलकेन सर्वो वृत्तान्तो मया ज्ञातः तद्गत्वा देव्यै निवेदयिष्यामि।] इति संस्कृतम्।

वसन्तकः (अपवार्थ) भो! सव्वं सम्भवो यदि। मुहरा खु एसा गब्भदासी ता किंचिदह्वय परिदोसेहिणं। [भोः! सर्वं सम्भाव्यते। मुखरा खल्वेषा गर्भदासी। तत् किञ्चिद्दत्वा परितोषय एनाम्।] इति संस्कृतम्।

राजा—(सुसङ्गताया अलकान् प्रमार्जयन्) सुसङ्गते! क्रीडामात्रकमेवैतत्। तथापि नाकारेण त्वया देवी खेदयितव्या इदं च ते पारितोषिकम् (इति कर्णाभरणं ददाति)

सुसङ्गता—(प्रणम्य सस्मितम्) भट्टा। पसादो मे कण्णा भरणेन।' [भर्त्तः! प्रसादो मे कर्णाभरणेन।] इत्यादि।

अत्र राजसुसङ्गतयोर्मिथो देव्यै निवेदयिष्यामि इति हास्यम्। 'भट्टापसादो' इति स्तवसहितमेकस्य राज्ञः सागरिकासङ्गमलाभकारणमसद्भूतत्वात् प्रपञ्चः। सुसङ्गताकर्णाभरणलाभस्तु मुख्यसाध्यं प्रत्यनुपयोगित्वान्न विवक्षितः।

केचित्तु—असद्भूतेन पारदार्यादिनैपुण्यादिना योऽन्योऽन्यस्तवो हास्यहेतुस्तं प्रपञ्चमाहुः—

**यथा—'रंडा चंडा दिक्खिदा धम्मदारा मज्जं मंसं खज्जए पिज्जए वा।**

**भिक्खा भोज्जं चम्म खंडं च सेज्जा कोलो धम्मो कस्स नो भादि रम्भो॥**

**(रण्डाश्चण्डा दीक्षिता धर्मदारा मद्यं मांसं खाद्यते पीयते वा।**

**भिक्षा भोज्यं चर्मखण्डं च शय्या कौलो धर्मः कस्य नो भाति रम्यः॥)**

उदाहरति—यथेति। तत्रैव विक्रिमोर्वस्यामेवेत्यर्थः। सर्वक्षितीति। इदं हिमालयस्य सम्बोधनम्। प्रश्नपक्षे हे सर्वक्षितिभृतां नाथ सर्वशैलानां श्रेष्ठ! अस्मिन् रम्ये मनोहरे नान्ते विपिनैकदेशे मया विरहिता सर्वाङ्गसुन्दरी सर्वाङ्गमनोहरा अनेन रूपातिशयो व्यज्यते, रामा कापि अनिर्वचनीया रमणी उर्वशीत्यर्थः, त्वया दृष्टा? इति काक्वोक्तिः। उत्तरपक्षे हे सर्वक्षितिभृतां नाथ सर्वभूपतीनां श्रेष्ठ! अस्मिन् रम्ये वनान्ते सर्वाङ्गसुन्दरी रामा मया दृष्टाऽवलोकिता। नेपथ्य इति। तत्रैव हिमालय एव प्रतिशब्दः सर्वक्षितिभृतामित्यादेः समग्रः प्रतिध्वनिः सञ्जात इति शेषः। तच्च श्रुत्वा राजा अब्रवीदित्यर्थः।

## रुचिरा

प्रपञ्चं लक्षयति—५८० **मिथः** परस्परम्। **असद्भूतमसत्यम्**। **हास्यकृत्**। हास्योद्भावकम्। **वाक्यम्**। **प्रपञ्चः**। **मतः**।

उदाहरति—**यथेत्यादिना**। **यथा**। **विक्रमोर्वश्याम्** 'द्वितीयेऽङ्क' इति शेषः। **वलभीस्थविदूषकचेटयो-र्वलभ्यां** प्रासादोपरि तिष्ठत इति तथोक्ते विदूषकचेटी तयोः। 'शुद्धान्ते वलभी चन्द्रशाले सौधोर्ध्ववेश्मनि।' इति रभसः। **अन्योऽन्यवचनं** परस्परं वचनप्रतिवचने।

**त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः ॥ २५७ ॥**

यथा तत्रैव—'राजा—

**सर्वक्षितिभृतां नाथ !, दृष्टा सर्वाङ्गसुन्दरी ।**
**रामा रम्ये वनान्तेऽस्मिन्मया विरहिता त्वया ॥**

(नेपथ्ये तथैव प्रतिशब्दः ।) राजा—कथं दृष्टेत्याह ।'

अत्र प्रश्नवाक्यमेवोत्तरत्वेन योजितम् । 'नटादित्रितयविषयमेवेदम्' इति कश्चित् ।

---

## विवृतिः

त्रिगतमाह—त्रिगतमिति । 'सर्वक्षितिभृतां नाथ' इति प्रश्नपक्षे पर्वतः ।

उत्तरपक्षे राजा संबोध्यः । राजात्र पुरूरवाः । 'रामा उर्वशी मया विरहिता त्वया दृष्टा' इति प्रश्नः । 'त्वया विरहिता मया दृष्टा' इत्युत्तरम् ॥ त्रिगतपदव्युत्पत्तिमाह—नटादीति । आदिना नटीप्रतिनटयोग्रहणम् । इदं त्रिगतम् ।

## विवृतिपूर्तिः

कश्चिदिति । तथा चाह दशरूपककृत्—'श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं त्विह । नटादित्रितयालापः पूर्वरङ्गे तदिष्यते ॥' इति ॥

## विज्ञप्रिया

त्रिगताख्यमङ्गमाह—त्रिगतमिति । श्रुतिसाम्यतः श्रूयमाणशब्दद्वयसाम्यात् तयोर्वस्तुत एकार्थत्वेऽपि अनेकार्थयोरेकभिन्नार्थयोर्योजनं प्रत्यायनमित्यर्थः ।

सर्वाक्षितीति—इदं हिमालयस्य सम्बोधनम् । मया विरहिता सर्वाङ्गसुन्दरी रामा उर्वशी रम्येऽस्मिन् वनान्ते त्वया दृष्टा इति प्रश्नः । कथं दृष्टा इत्याह—त्वया विरहिता मया दृष्टेति प्रतिशब्दार्थस्य योजनाद्दर्शनोत्तरणशब्दयोरेकार्थत्वेऽपि दर्शितरीत्या प्रश्नोत्तरभावेन योजनादनेकार्थता, तद् व्याचष्टे—अत्र प्रश्नेति । नटनटीसूत्रधारत्रयप्रयोज्यत्वेनाऽस्य त्रिगतत्वं केचित् व्याचक्षते, तदाह—नटादिति ।

## लोचन

क्षितिभृतां पर्वतानां राज्ञाञ्च । मया विरहिता त्वया दृष्टा; पक्षे त्वया विरहिता मया दृष्टा । अत्र राज्ञां प्रथमार्थाभिप्रायेण प्रश्नरूपार्थ वाक्यमिदमुक्त्वा यर्वते प्रतिध्वनिमाकर्ण्य द्वितीयार्थः पर्वतस्योत्तरत्वेनावगतो विरहोन्मादात् ।

शरणं गृहम् ।

## कुसुमप्रतिमा

त्रिगतमिति। श्रुतिसाम्यतः शब्दश्रवणस्य तुल्यत्वात् न तु वक्तु रभिप्रायादिति भावः, अनेकार्थस्य योजनं श्रोत्रा कल्पनं त्रिगतं नाम वीथ्यङ्गं स्यात्, त्रिषु वक्तृश्रोत्रभिनेतृषु गतं तत्तत्सम्बन्धेन स्थितिमिति व्युत्पत्तेः।

सर्वेति। प्रश्नपक्षे हे सर्वक्षितिभृतां नाथ ! सर्वपर्वतानां श्रेष्ठ ! अस्मिन् रम्ये मनोहरे वनान्ते वनैकदेशे मया विरहिता सर्वाङ्गसुन्दरी रामा कापि रमणी त्वया दृष्टा ? इति काकुः। उत्तपरक्षे तु हे सर्वं क्षितिभृतां नाथ ! सर्वनृपतीनां श्रेष्ठ ! अस्मिन् रम्ये वनान्ते त्वया विरहिता सर्वाङ्गसुन्दरी रामा मया दृष्टा।

नेपथ्य इति। तत्रैव पर्वत एव प्रतिशब्दः सर्वक्षितिभृतामित्यादेरविकलः प्रतिध्वनिर्जात इति शेषः, आवृतस्थानस्वभावादिति भावः। तच्च श्रुत्वा राजा आह इत्यर्थः। अत्र प्रश्नवाक्यमेव उत्तरत्वेन राज्ञा योजितम्, अतएव त्रिगतमिति भावः।

त्रिगतशब्दस्य व्युत्पत्तौ दशरूपककारमतस्यास्वरसतां सूचयितुमाह नटादीति। नटोऽभिनेता आदिश-ब्दान्नटीप्रतिनटी च तेषां त्रितयमेव विषयो यस्य तत्। इदं त्रिगतम्। अत्र राजरूपस्य मूलवक्तुः सम्यरूपस्य श्रोतुश्च परित्यागे हेत्वाभाव एवास्वरसताबीजम्।

## विमला

त्रिगतमाह, त्रिगतमिति।—श्रुतिसाम्यतः,—शब्दसादृश्यात्, अनेकार्थः योजनं—बह्वर्थे कल्पनं, त्रिगतं स्यात्।

त्रिगतपदव्युत्पत्तिमाह, नटादीति।—आदिना नटीप्रतिनटयोग्रहणम्। इदं—त्रिगतम्। तथाऽऽह दश-रूपककारः,—"श्रुतिसाम्यादनेकार्थ योजनं त्रिगतन्त्विह। नटादित्रितयालापः, पूर्वरङ्गे तदिष्यते॥" इति।

## लक्ष्मी

त्रिगताख्यं वीथ्यङ्गं निरूपयति—त्रिगतमिति। श्रुतिसाम्यतः श्रूयमाणशब्दद्वयसाम्यात् न तु वक्तुराश-यादिति भावः। तयोर्वस्तुत एकार्थत्वेऽपि अनेकार्थयोरेकभिन्नार्थयोर्योजनं श्रोत्राकल्पनं त्रिषु वक्तृश्रोत्रभिन्नेषु गतं तत्सम्बन्धेन स्थितं त्रिगतं नाम वीथ्यङ्गं स्यात्।

अत्रास्मिन् वनान्ते त्वया दृष्टेति प्रश्ने त्वया विरहिता मया दृष्टेति प्रतिशब्दार्थस्यैवोत्तरत्वेन राज्ञा योजनात् दर्शनोत्तरशब्दयोरेकार्थत्वेऽपि दर्शितरीत्या प्रश्नोत्तरभावेन योजनादनेकार्थता। तदेव विवृणोति—अत्र प्रश्नेति। नटनटीसूत्रधारत्रयप्रयोज्यत्वेनास्य त्रिगत्वमिति दसरूपककारा मन्यन्ते, तन्मतस्यास्वरसतां प्रकाशयितुमुत्थाप-यति—नटादीति। आदिपदेन नटीसूत्रधारौ ग्राह्यौ। एवं च नटादित्रितयं विषयो यस्य तत्तथोक्तम्। कश्चिदिति। तथा चोक्तं तैः—

'श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं त्विह। नटादित्रितयालापः पूर्वरङ्गे तदिष्यते।।' इति। अत्र राज-स्वरूपस्य मूलवक्तुः सामाजिकरूपस्य श्रोतुश्च परित्यागे कारणाभाव एव इत्यस्वरसबीजमू यद्वा शब्दोऽव्यक्तं ध्वनिमात्रं तत्साम्येनानेकार्थयोजनं त्रिगतम्। यथा— इन्दुलोखायां विथ्याम्—राजा वयस्य !

> किं नु कलहंसनादो मधुरो मधुपायिनां नु झङ्कारः।
> हृदयग्रहदेवतायास्तस्या नु सनूपुरश्चरण इति॥ इति।

## रुचिरा

त्रिगतं लक्षयति—५८१ **श्रुतिसाम्यतः** श्रुतिः पदानां कर्णविषयीभवनं तत्र साम्यं सादृश्यप्रत्ययस्तस्मात्। पञ्चम्यर्थे तसिल्। **अनेकार्थयोजनम्** अनेकार्थप्रतिपादकतया कल्पना। **त्रिगतम्। स्यात्** ॥ ५५४ ॥

उदाहरति—**यथा। तत्र** विक्रमोर्वश्याम् 'चतुर्थेऽङ्के' इति शेषः। **एव। "राजा** पुरुरवाः 'चर्चरिकयोपसृत्याञ्जलिं बद्ध्वाऽऽहे'ति शेषः।

हे **सर्वक्षितिभृतां** सर्वे क्षितिभृतो पर्वतास्तेषाम्। **नाथ। मया।** पुरूरवसा। **विरहिता। सर्वाङ्गसुन्दरी** सर्वाङ्गरमणीया। **रामा** प्रियोर्वशति यावत्। **त्वया। अस्मिन्। वनान्ते** वनमध्ये। 'अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः। अवयवेऽपी'ति हैमः। **दृष्टा?** ॥ ३३१ ॥ **(नेपथ्ये। तथा** यथा राज्ञा पठितं तथाभूतः। **एव। प्रतिशब्दः)। राजा** 'सहर्षमाकर्ण्याहे'ति शेषः। **कथम्। यथाक्रमं** मया यथा पठितं तथेति भावः। **दृष्टा। इति। आह** उत्तरयति।" **इत्यत्र। प्रश्नवाक्यम्। एव। उत्तरत्वेन** प्रतिवचनरूपेम। **योजितम्।** अयम्भावः—उत्तरवाक्ये 'सर्वक्षितिभृतां नाथ' इत्येव 'राजेन्द्र' इत्यर्थकं, ततश्च—'त्वया विरहिता। मया दृष्टा' इत्यन्वयः सम्पद्यते इति।

दशरूपककारमतं दर्शयति—'**इदं** त्रिगतम्। **नटादित्रितयविषयम्।** आदिना नटीपारिपार्श्विकयोग्रहणम्। **एव।' इति। कश्चित्** दशरूपककारः। 'आहे' इति शेषः। तथाहि तद्वाक्यम्—"श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं त्विह। नटादित्रितयालापः पूर्वरङ्गे तदिष्यते ॥" इति।

**प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य च्छलना छलम्।**

यथा वेण्याम्—'भीमार्जुनौ—

**कर्ता द्यूतच्छलानां, जतुमयशरणोद्दीपनः, सोऽभिमानी**

**राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम्।**

**कृष्णाकेशोत्तरीयव्यपनयनपटुः, पाण्डवा यस्य दासाः**

**क्वास्ते दुर्योधनोसौ कथयत, न रुषा द्रष्टुमभ्यागतौ स्वः॥'**

**अन्ये त्वाहुश्छलं किंचित्कार्यमुद्दिश्य कस्यचित्॥ २५८॥**

---

## विवृतिः

छलमाह—प्रियाभैरिति। प्रियतुल्यैरित्यर्थः। छलना वञ्चना॥

## विज्ञप्रिया

छलाख्यमङ्गमाह—प्रियाभैरिति। विलोभ्य प्रतार्य छलनादुपहसनात्। कर्तेति—पलायितुं दुर्योधनमन्विष्यतो भीमार्जुनयोर्वाक्यमिदम्। द्यूतच्छलादिकर्तृत्वविशिष्टो यस्तं द्रष्टुमागतौ स्वः न तु रुषा इत्यन्वयः। शरणं गृहम्। दुःशासनादेरनुजशतस्य गुरुरित्यन्वयः। अङ्गराजस्य कर्णस्य। अत्र द्रष्टुमेव न रुषेति प्रियाभेन वाक्येन प्रतार्य उपहसनम्।

अन्ये इति। कस्यचित् किञ्चित् कार्यमुद्दिश्य इत्यन्वयः।

## कुसुमप्रतिमा

प्रियाभैरिति। प्रियाभैरापाततः प्रियस्वरूपैः वस्तुतस्तु अप्रियैर्वाक्यैः विलोभ्य स्वामिप्रेतविषये लुब्धं कृत्वा छलना प्रतारणा छलं नाम वीथ्यङ्गं स्यात्।

कर्तेति। द्यूतच्छलानाम् अत्रक्रीडारूपप्रतारणानां कर्त्ता, जतुमयशरणस्य जतुगृहस्य उद्दीपना दग्धा, स प्रसिद्धः अभिमानौ राजा, दुःशासनादेरनुजशतस्य गुरुः शासिता, अङ्गराजस्य कर्णस्य मित्रम, कृच्छाया द्रौपद्याः केशोत्तरीययोः व्यपनयने आकर्षणे पटुः समर्थः, पाण्डवाश्च यस्य दासाः; असौ दुर्य्योधनः क्व आस्ते वर्त्तते इति यूयं कथयत। रुषा क्रोधेन द्रष्टुं न अभ्यागतौ स्वः, अपि तु ज्ञातिप्रीत्यैव द्रष्टुमभ्यागतौ स्व इत्यर्थः।

अत्रापाततः प्रभावज्ञार्पनात् प्रियाभैः, वस्तुतस्तु अपराधसूचनादप्रियैर्वाक्यैर्दुर्य्योधनं विलोभ्य द्रष्टुमभ्यागतौ स्व इत्यनेन छलनात् छलम्।

अन्य इति। कस्यचित् किञ्चित् कार्य्यमुद्दिश्य वञ्चनाहास्यरोषकृत् यद्वचनमुदीर्य्यते उच्यते, तच्छलं नाम वीथ्यङ्गमिति तु अन्ये आहुः। अत्रोदाहरणं मालविकाग्निमित्रे—

"विदू। मोदि! चिट्ठ किञ्चि" इत्यादि।

## विमला

छलमाह, प्रियाभैरिति ।—प्रियाभैः—प्रियसदृशैः अप्रियैः वाक्यैः विलोभ्य छलना—परप्रतारणा, छलम् । तथोक्तम्;—"छलन्तु च्छलनावाक्यैः प्रियाभैरप्रियैः स्वतः" इति ।

उदाहरति, कर्त्तेति ।—भृत्यान् प्रति भीमसेनयोक्तिरियम् । द्यूतच्छलानां—द्यूतक्रीडारूपकपटानां, कर्त्ता, जतुमयं—जतुप्रचुरं, [प्रचुरार्थे मयट्] यत् शरणं—गृहं, ("शरणं गृहरक्षित्रोः" इत्यमरः) तस्य उद्दीपनः,—विरोचनद्वारा जतुगृहदाहल इत्यर्थः, अभिमानी—अहङ्कारान्, कृष्णायाः,—द्रौपाद्याः, केशानाम् उत्तरीयस्य च व्यपनयने—आकर्षणे, पटुः,—नियोजयिता इत्यर्थः, ["व्यपनयनपटुः इत्यत्र "व्यपनयनमरुत्" इति पाठे—व्यपनयने—अपसारणे, मरुत्—वायुस्वरूपः] पाण्डवाः,—युधिष्ठिरादयः, यस्य दासाः,—किङ्कराः, द्यूतजयेन दासत्वेन सम्भाषिता इति भावः; दुःशासनादेः,—दुःशासनप्रभृतिकस्य, अनुजशतस्य—कनिष्ठभ्रातृशतस्य, गुरुः अङ्गराजस्य—कर्णस्य, मित्रं—बन्धुः, सः,—प्रसिद्धः, असौ राजा दुर्य्योधनः क्व—कुत्र, आस्ते ?—तिष्ठति ? कथयत, यूयमिति शेषः; रुषा—क्रोधेन, द्रष्टुं—तं साक्षात्कर्त्तुं, न अभ्यागतौ—उपस्थितौ, स्वः,—भवावः, आवामिति शेषः । द्यूतच्छलादिकर्त्तृत्वकथनेन अप्रियाभत्वं, तथा "न रुषा द्रष्टुमभ्यागतौ" इति वाक्ये तु प्रियाभत्वम् इत्युभाभ्यां दुर्य्योधनं प्रति छलना । स्रग्धरा वृत्तम् ।

मतान्तरेण छलमाह, अन्ये त्विति ।—किञ्चित् कार्य्यमुद्दिश्य कस्यचित् वञ्चनाहास्यरोषकरं यत् वचनम् उदीर्य्यते—कथ्यते, अन्ये—अपरे पण्डितास्तु, तत् छलम् आहुः,—कथयन्ति । उदाहरणम् अनुसन्धेयम् ।

## लक्ष्मी

छलाख्यं वीथ्यङ्गं निरूपयति—प्रियाभैरिति । प्रियाभैः प्रियतुल्यैः वस्तुतस्तु अप्रियैर्वाक्यैः विलोभ्य स्वाभिलषितविषये लुब्धं विधाय छलना वञ्चना छलं नाम वीथ्यङ्गं भवेत् ।

उदाहरति—यथेति । वेणीसंहारे 'पञ्चमेऽङ्के' इति शेषः । कर्त्तेति । पलायितुं दुर्योधनमन्विष्यतो भीमार्जुनयोर्वाक्यमिदम् । द्यूतम् अक्षैः क्रीडा तद्रूपाणि छलानि वञ्चनानि तेषां तथोक्तानां कर्त्ता, जतुमयशरणस्य लाक्षामयगृहस्य उद्दीपनः प्रज्वालनहेतुः, लाक्षागृहे निवसतां पाण्डवानां ज्वलनार्थं तद्रगृहं पुरोचनद्वारा दुर्योधनः प्रददाह स प्रसिद्धः अभिमानी अहङ्कारी राजा, दुःशासनादेरनुजशतस्य गुरुः शासिता, अङ्गराजस्य कर्णस्य मित्रं सुहृदम्, कृष्णायाः द्रौपद्याः केशोत्तरीययोः केशाम्बरयोः व्यपनयने पृथक्कारणे पटुः समर्थः पाण्डवाश्च यस्य दासाः, असौ दुर्योदनः क्वाऽऽस्ते क्व वर्त्तते इति यूयं वदत 'भोःसमन्तपञ्चकसञ्चारिण इति शेषः । एषा कोपेन द्रष्टुं न अभ्यागतौ सम्प्राप्तौ स्वः भवावः अस्तेर्लोटि वसि 'अश्नसोरल्लोप' इत्यल्लोपः आवामिति शेषः, किन्तु बन्धुप्रीत्यैव द्रष्टुमभ्यागतौ स्व इत्यर्थः । अत्र श्रवणमात्रतः प्रभावबोधघनात् प्रियतुल्यैः, वस्तुतस्तु अपराधद्योतनादप्रियैर्वचनैः दुर्योधनं विलोभ्य 'द्रष्टुमभ्यागतौ स्व' इत्यनेन छलनात् छलम् ।

अन्य इति । कस्यचित् किञ्चित्कार्यं प्रयोजनमुद्दिश्य वञ्चना हास्यरोषकृत् यद्वचनं वाक्यम् उदीर्यते अभिधीयते तच्छलं नाम वीथ्यङ्गमिति अन्ये आहुः । उदाहरणं यथा—

**कस्स वा न होइ रोसो दट्ठूण पिया ए सव्वणं अहरम् ।**
**सभमर पउमग्घाइरि वारियवामे ! सहसु एण्हिं ॥**

[कस्य न वा भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।

सभ्रमरपद्माघ्रायिणि ! वारितवामे ! सहस्वेदानीम् ॥]

एतद्वचः सख्या भर्तृप्रत्यायनप्रयोजनेनोक्तं विदग्धघजनस्य हास्यं श्वसुरादेर्वञ्चना सपत्न्या रोषं जनयतीति ।

## रुचिरा

छलं लक्षयति—५८२ **प्रियाभैः** प्रियसदृशैः । वस्तुतः—**अप्रियैः** । **वाक्यैः** । **विलोक्य** लुब्धं विधाय । **छलना** वञ्चना । **छलम्** ।

उदाहरति—**यथा** । **वेणीसंहारे** । 'पञ्चमेऽङ्के' इति शेषः । **भीमार्जुनौ** 'पृच्छत'इति शेषः ।

**द्यूतच्छलानां** द्यूतरूपस्य कपटस्य (बहुवचनविवक्षितम्) । **कर्त्ता** । **जतुमयशरणोद्दीपनो** जतुमयं लाक्षाप्रचुरं यच्छरणं स्थानं तदुद्दीपयतीति तथोक्तः । 'शरणं गृहरक्षित्रो'रित्यमरः । लाक्षाभावनस्य दाहक इति भावः । **दुःशासनादेः** । **अनुजशतस्य** । **गुरुर्ज्येष्ठः** । **अङ्गराजस्य** कर्णस्य । **मित्रम्** । **कृष्णाकेशोत्तरीयव्यपनयनपटुः** । कृष्णाया द्रौपाद्याः केशोत्तरीयाणि केशा उत्तरीयवस्त्रं च तेषां व्यपनयनं स्थानच्च्यावनं तत्र पटुः । **यस्य** । **पाण्डवाः** । **दासाः** । किङ्कराः । **सः** । **अभिमानी असौ** । **राजा** । **दुर्य्योधनः** । **क्व** कस्मिन् स्थाने । **आस्ते** । **कथयत** 'भोः समन्तपञ्चकसञ्चारिणः !" इति शेषः । युयम्—कथयत । **रुषा** क्रोधेन । **द्रष्टुम्** । **न** 'आवा'मिति शेषः । **अभ्यागतौ** । **स्वो भवावः** । अत्र कर्त्तेत्यादीनां पदानां प्रियसदृशत्वं स्पष्टम् । शार्दूलविक्रीडितं वृत्तम् ॥ ३३२ ॥'

परमतेनाह—५८३ **कस्यचित्** । **किञ्चित्** । **कार्य्यं** प्रयोजनम् । **उद्दिश्य** निमित्तीकृत्य । **वञ्चनाहास्यरोषकृत्** वञ्चना (प्रतारणं) च हास्यं च रोषः (क्रोधः) च तान् करोतीति तथोक्तम् । **यत्** । **वचनम्** । **उदीर्य्यते** । 'त'दिति शेषः । **छलम्** । **तु** पुनः । **अन्ये** । **आहुः** । । ५५५ ॥

**उदीर्यते यद्वचनं वञ्चनाहास्यरोषकृत्।**

**वाक्केलिर्हास्यसंबन्धो द्वित्रिप्रत्युक्तितो भवेत्॥ २५९॥**

द्वित्रीत्युपलक्षणम्। यथा—

**'भिक्षो मांसनिषेवणं प्रकुरुषे, किं तेन मद्यं विना**

**मद्यं चापि तव प्रियं, प्रियमहो वाराङ्गनाभिः सह।**

**वेश्याप्यर्थरुचिः कुतस्तव धनं, द्यूतेन चौर्येण वा**

**चौर्यद्यूतपरिग्रहोऽपि भवतो, नष्टस्य कान्या गतिः॥'**

केचित्—'प्रक्रान्तवाक्यस्य साकाङ्क्षस्यैव निवृत्तिर्वाक्केलिः' इत्याहुः। अन्ये च 'अनेकस्य प्रश्नस्यैकमुत्तरम्।'

---

## विवृतिः

जतुमयशरणोद्दीपनः जतुमयगृहदाहकः। अङ्गराजस्य कर्णस्य। कृष्णा द्रौपदी तस्याः केशोत्तरीययोराकर्षणे पटुः। स्वो भवावः। 'आवाम्' इति शेषः॥ वाक्केलिमाह—वाक्केलिरिति। द्वे वा तिस्रो वा प्रत्युक्तयस्ताभ्यः समासप्रत्ययानामनित्यत्वादत्र डप्रत्ययाभावः। अनेकवाक्यस्यैकमुत्तरमिति वाक्केलिरित्याहुरित्यन्वयः॥

## विज्ञप्रिया

वाक्केलिरूपम् अङ्गमाह—वाक्केलीति।

भिक्षो इति। परिहासाय मांसं भक्षन्तं भिक्षुं प्रति भिक्षो इत्यादिर्गृहिणः प्रश्नः। किं तेन इति भिक्षोः प्रत्युत्तरम्। मद्यं चापि इत्यादिकं गृहिणः। प्रियमहो वेश्याङ्गनाभिरित्यादिकं भिक्षोः। अत्राधिकस्याप्यकार्यस्य सत्त्वे अल्पकार्यप्रश्नात् अहो इत्युक्तम्। वेश्यापीत्यादि धनमित्यन्तं गृहिणः। द्यूतेनेत्यादिकं भिक्षोः। चौर्य्येत्यादिकं गृहिणः। नष्टस्येत्यादिकं भिक्षोः प्रत्युक्तिः।

केचिदिति—आकाङ्क्षोत्थापकप्रक्रान्तवाक्यस्य तदनिवृत्तौ तन्निवर्तकवाक्याद्युक्तिः।

## कुसुमप्रतिमा

वाक्केलिरिति। द्वि-त्रिप्रत्युक्तितः अनेकप्रत्युत्तरात् हास्यसम्बन्धी वाक्केलिर्नाम वीथ्यङ्गं भवेत् वाचा केलिरिति व्युत्पत्तेः।

द्वित्रीति। उपलक्षणम् अनेकमात्रस्येत्यर्थः। अन्यथा बहुतरप्रत्युत्तरे प्राचामुदाहरणमसमञ्जसं स्यादिति भावः।

तथैवोदाहरणमाह भिक्षो इति। अर्थे केवलधने रुचिरभिलाषी यस्याः सा वेश्यापि सेव्वत इति शेषः। अन्यत् स्पष्टम्।

अत्र प्रत्युक्तिचतुष्टयात् हास्यसम्बन्धेन वाक्केलिः।

वाक्केलिलक्षणे मतद्वयमाह केचिदिति साकाङ्क्षस्यैव समापकक्रियापदाद्यभावादसमाप्तस्यैव प्रक्रान्तवाक्यस्य आरब्धवचनस्य निवृत्तिर्वाक्केलिः। यथा—"इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां तामेव शान्तमथवा किमिहोत्तरेण।" अनेकस्येत्यादेरुदाहरणमूह्यम्।

## विमला

वाक्केलिमाह, वाक्केलिरिति।—द्वे वा तिस्रो वा प्रत्युक्तयः,—प्रतिवचनानि ताभ्यः, [समासप्रत्ययानामनित्यत्वादत्र डच्प्रत्ययाभावः] यः हास्यसम्बन्धः, स वाक्केलिर्भवेत्। अनेकवाक्यस्यैकमुत्तरं वाक्केलिरिति भावः। तथाऽऽह,—"विनिवृत्त्याऽस्य वाक्केलिर्द्विस्त्रिःप्रत्युक्तितोऽपि वा" इति।

उदाहरति, भिक्षो इति।—हे भिक्षो ! मांसनिषेवणं—मांसभोजनं, प्रकुरुषे? (इति प्रश्नः); मद्यं विना तेन—मांसेन, किम्? (इत्युत्तरम्) मद्यसहितमांसभोजनमेव रुचिकरमित्यर्थः; मद्यश्चापि तव प्रियम्? (इति प्रश्नः); अहो ! प्रियं सत्यं, परन्तु वाराङ्गनाभिः सह (इत्युत्तरम्); विना वेश्याभिर्मद्यमपि न प्रीतिकरमित्यर्थः; वेश्या—वाराङ्गनाः अपि, अर्थरुचिः,—अर्थाभिलाषिणी, (त्वन्तु भिक्षुः) कुतस्तव धनम्? आयातीति शेषः, (इति प्रश्नः); द्यूतेन चौर्य्येण वा, धनम् उपार्ज्यते। मयेति शेषः, (इत्युत्तरम्); भवतः चौर्य्यद्युतयोरपि परिग्रहः,—स्वीकारः? वर्त्तते इति शेषः, (इति प्रश्नः); नष्टस्य—आचारभ्रष्टस्य, अन्या—अपरा, गतिः,—सरणिः, का?—न काऽपीत्यर्थः (इत्युत्तरम्)। अत्र उक्तिप्रत्युक्तितः वाक्केलि स्पष्टार्था।

## लक्ष्मी

वाक्केलिरूपं वीथ्यङ्गं निरूपयति—वाक्केलिरिति। द्वे वा तिस्रो वा प्रत्युक्तयो द्वित्रिप्रत्युकत्यः प्रत्युत्तराः ताभ्यो द्वित्रिप्रत्युक्तितः, समासप्रत्ययनानित्यत्वादत्र डच् प्रत्ययाभावो बोध्यः। हास्यसम्बन्धो वाचा केलिर्वाक्केलिर्नाम वीथ्यङ्गं भवेत्।

द्वित्रीति। उपलक्षणं स्वबोधकत्वे सति स्वेतरबोधकत्वरूपम्, तेनानेकस्येत्यर्थः।

उदाहरति—भिक्षो ! इति। परिहासाय मांसं भक्षयन्तं भिक्षुं प्रति 'भिक्षो' ! इत्यादि गृहिणः प्रश्नः, 'किं तेन' इति भिक्षोः प्रत्युत्तरम्। तथा 'मद्यं चापि' इत्यादिकं गृहिणः, 'प्रियमहो वाराङ्गनाभि' रित्यादिकं भिक्षोः। अत्राधिकस्याप्यकार्यस्य विद्यमानत्वे अल्पकार्यप्रश्नात् 'अहो' इत्यभिहितम्। 'एवं वेश्याप्यर्थरुचि'रित्यादिकं गृहिणः, अथे केवले धने रुचिरभिलाषो यस्याः सा तादृशी वेश्याऽपि 'भुज्यते' इति शेषः। 'द्यूतेनेत्यादिकं भिक्षोः। चौर्यद्यूते'त्यादि गृहिणः, 'नष्टस्ये'त्यादिकं भिक्षोः प्रत्युक्तिः। अत्र चतुष्प्रत्युक्ते हास्यसम्बन्धेन वाक्केलिः।

वाक्केलिलक्षणे प्रकारान्तरेण लक्षयतां मतमुपस्थापयति—केचित्त्विति। साकाङ्क्षस्यैव निराकांक्षबोधकक्रियापदाद्यभावादाकाङ्क्षासहितस्यैव, प्रक्रान्तवाक्यस्य प्रस्तुतवचनस्य निर्वृत्तिर्वाक्केलिः। यथोत्तरचरिते—वासन्ती—

**'त्वं जीवितं त्वमसि मे हृदये द्वितीयं त्वं कौमुदी नयनयोरमृतं त्वमङ्गे।**

**इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां तामेव शान्तमथवा किमतः परेण॥'**

अन्ये चानेकस्य प्रश्नस्यैकमुत्तरं वाक्केलिरित्याहुः। तत्र द्वयोः प्रश्नयोरेकमुत्तरम्। यथा—

**'नदीनां मेघविगमे का शोभा प्रतिभासते।**
**बाह्यान्तरा विजेतव्या के नाम कृतिनाऽरयः ॥ इति।'**

अत्रारय इत्येत्र रयाभावोऽपरत्र शत्रव इत्येकमुत्तरम्। एवं बहूनामप्यूहनीयम्।

## रुचिरा

वाक्केलिं लक्षयति—५८४ **द्वित्रप्रत्युक्तितो** द्वे वा तिस्रो वेति द्वित्राः, ताः प्रत्युक्तयस्ताभ्य इति तथोक्ततः। 'द्वित्रि'इति पाठे तु समासविधेरनित्यतामाश्रित्य अप्रत्ययाविधानम्। **हास्यसम्बन्धः। वाक्केलिः। भवेत्।** । ५५६ ॥

द्वित्रेति पदं ततोऽधिकानामप्युपलक्षकमिति निरूपयन् उदाहरति—**द्वित्रेत्यादिना**। स्पष्टम्।

'हे **भिक्षो ! मांसनिषेवणं** मांसस्य भक्षणाम्। **प्रकुरुषे** ननु करोषि ? (इति प्रश्नः)। **मद्यम्। विना। तेन** मांसनिषेवणेन। **किम्** (इत्युत्तरम्)। **मद्यम्। अपि। च पुनः। तव। प्रियम्** ? (इति प्रश्नः)। **अहो वाराङ्गनाभिर्वेश्याभिः। सह। प्रियं** न केवलं समासं मद्यम्, किन्तु वाराङ्गना अपि मम प्रियाः इति भावः (इत्युत्तरम्)। **वेश्याऽपि** 'तव प्रिया'इति शेषः। (इति प्रश्नः)। **अर्थरुचिर्लुब्धा** 'साऽपि प्रिये'ति शेषः (इत्युत्तरम्)। **तव** (भिक्षोः)। **धनम्। कुतः** (इति प्रश्नः। **द्यूतेन चौर्य्येण। वा** 'धनं मयाऽऽनीयत'इति शेषः। (इत्युत्तरम्)। **भवतो** गृहीतभिक्षुवेशतया पूज्यस्य तवेत्यर्थः। **चौर्य्यद्यूतपरिग्रहश्चौर्य्ये** द्यूते चासक्तिः। **अपि।** (इति प्रश्नः)। **नष्टस्य** स्वधर्म्मतश्च्युतस्य। 'धर्म्म एव हतो हन्ती'ति मनुः। मनुः। **अन्या। का। गतिः** ? न काऽपि गतिरिति पर्य्यवसितोऽर्थः (इत्युत्तरम्)। शार्दूलविक्रीडितं वृत्तम् ॥ ३३३ ॥"

अन्येषाम्मतं दर्शयति—**'साकाङ्क्षस्य। एव** (नतु निराकाङ्क्षस्य) **प्रक्रान्तवाक्यस्य। निवृत्तिः** सम्पूर्त्तिः। **वाक्केलिः।' इति। केचित्त। आहुः।' अन्ये। तु। अनेकस्य** नानाविधस्य। **प्रश्नस्य। एकम्। उत्तरम्।** 'वाक्केलि'रिति पूर्वतोऽन्वेति।' **इति** 'आहु'रिति पूर्वतोऽन्वेति।

**अन्योन्यवाक्याधिक्योक्तिः स्पर्धयाधिबलं मतम् ।**

यथा मम प्रभावत्याम्—'वज्रनाभः—

(अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया ।

लीलयोन्मूलयाम्येष भुवनद्वयमद्य वः ॥)

प्रद्युम्नः—अरे रे असुरापसद, अलममुना बहुप्रलापेन । मम खलु

**अद्य प्रचण्डभुजदण्डसमर्पितोरु-**

**कोदण्डनिर्गलितकाण्डसमूहपातैः ।**

**आस्तां समस्तदितिजक्षतजोक्षितेयं**

**क्षोणिः क्षणेन पिशिताशनलोभनीया ॥'**

---

## विवृतिः

अधिबलमाह—अन्योन्येति । वाक्याधिक्येन वाक्यातिशयेनोक्तिः ॥

अस्य प्रद्युम्नस्य । वो देवानाम् ॥

## विज्ञप्रिया

अधिबलाख्यमङ्गमाह—अन्योन्येति । अस्या वक्ष इत्यादिकं प्राग् व्याख्यातम् । अद्य प्रचण्डेति । अद्य मम प्रचण्डे भुजदण्डे समर्पितो य उरुः कोदण्डस्ततो निर्गलितानां काण्डानां बाणानां समूहस्य (सहस्रस्य वा पाठभेदात्) पातैरियं क्षौणी क्षणेन समस्तदैत्यक्षतजैः उक्षिता सती पिशिताशनानां लोभनीया आस्तामित्यन्वयः ।

## कुसुमप्रतिमा

अन्योन्वेति ।स्पर्द्धया दर्पेण अन्योन्यवाक्यैः परस्परवचनैः आधिक्योक्तिः परस्परप्राधान्यकथनम् अधिबलं नाम वीथ्यङ्गं मतम्, बलमधिकृत्य जातमिति व्युत्पत्तेः ।

अस्येति । व्याख्यातमेतत् प्राक् ।

अद्येति । प्रचण्डे अतिभयङ्करे भुजदण्डे समर्पितात् संस्थापितात् उरुकोदण्डाद्विशालकार्म्मुकात् निर्गलितानां निःमृतानां निःसृतानां काण्डानां वाणानां समूहस्य पातैः पतनैः इयं क्षौणी पृथिवी समस्तानां दितिजानां दैत्यानां क्षतजैः उक्षिता सिक्ता सतौ, पिशिताशनानां मांसभोजिनां शृगालादीनां लोभनीया लोभजनिका आस्तां भुवतु ।

अत्र स्प्रर्द्धया परस्परवाक्यैः परस्पराधिक्यकथनात् अधिबलम् ।

## विमला

अधिबलामाह, अन्योऽन्येति ।—स्पर्द्धया—अहङ्कारेण, अन्योऽन्यं—परस्परं, वाक्यस्य आधिक्येन—अतिशयेन, उक्तिः अधिबलं मतम् ।

उदाहरति, अस्येति ।—अस्य—प्रद्युम्नस्य, वक्षः क्षणेनैव अनया—हस्तः ? स्थितयेति भावः, गदया निर्मथ्य—चूर्णयित्वेत्यर्थः, लीलया—अवहेलया, अद्य वः—युष्माकं, देवानामिति यावत्, [अनादरे षष्ठी] युष्माननादृत्येत्यर्थः, भुवनद्वयं—स्वर्गं पृथिवीञ्च, स्वस्य पातालवासित्वादिति भावः, उन्मूलयाम्येव—उत्पाटयाम्येव ।

असुरापसद !—असुराधम !

अद्येति ।—प्रचण्डभुजदण्डे—भीषणबाहुदण्डे, समर्पितात्—निहितात्, स्थापितादिति यावत्, उरुकोदण्डात्—महाधनुषः, निर्गलितानां—निःसृतानां, काण्डानां—शराणां, समूहस्य, पातैः—क्षेपैः, इसं क्षौणी—पृथ्वी, क्षणेन—अत्यल्पकालेन, समस्तानां दितिजानां—दैत्यानां, क्षतजैः—रुधिरैः, उक्षिता—अभिषिक्ता, सती, पिशिताशनानां—मांसभोजिनां, लोभनीया—अभिलषणीया, हर्षवर्द्धिनीत्यर्थः, आस्तां—भवतु । पद्यद्वये परस्परस्पर्द्धया आधिक्यख्यापनम् । वसन्ततिलकं वृत्तम् ।

## लक्ष्मी

अधिबलाख्यं वीत्यङ्गं निरूपयति—अन्योऽन्येति । स्पर्द्धया गर्वेम अन्योन्यवाक्यैः मिथोवचनैः आधिक्योक्तिः अन्योन्यप्राधान्यकथनं बलमधिकृत्य जातम् अधिबलं नाम वीथ्यङ्गं मतम् ।

उदाहरति—यथेति । वज्रनाभस्तदाख्यो दैत्यविशेषः 'आह'इति शेषः । अस्य वक्ष इति । प्राग्व्याख्यातमेतत् । अद्य प्रचण्डेति । प्रचण्डे अतिकराले भुजदण्डे समर्पितात् संस्थापितात् ऊरुकोदण्डात् विशालधनुषात् निर्गलितानां निःसृतानां कण्डानां शराणां समूहस्य पातैः पतनैः इयं क्षोणी वसुन्धरा समस्तानां समग्राणां दितिजानां दैत्यानां क्षतजैः प्रहारजैः उक्षिता सिक्ता सती पिशिताशनानां मांसभक्षिणां श्रृगालादीनां जम्बूकादीनां लोभनीया लोभोत्पादिका आस्तां भवतु । वसन्ततिलकाछन्दः । अत्र स्पर्द्धया मिथोवचनैः अन्योन्याधिक्यकथनात् अधिबलम् । यथा च वेणीसंहारे—अर्जुनः—

**'सकलरिपुजयाशा यत्र बद्धा सुतास्ते तृणमिव परिभूतो यस्य गर्वेण लोकः ।**

**रणशिरसि निहन्ता तस्य राधासुतस्य प्रणमति पितरौ वा मध्यमः पाण्डपुत्रः ॥'**

इत्युपक्रमे राजा—अरे ! नाहं भवानिव विकत्थनाप्रगल्भः । किन्तु—

द्रक्ष्यन्ति न चिरात् सुप्तं बान्धवास्त्वां रणाङ्गणे । मद्गदाभिन्नवक्षोऽस्थिवेणिकाभङ्गभीषणाम् ॥

इत्यन्तेन भीमदुर्योधनयोरन्योन्यवाक्यस्य अन्योन्याधिक्यात् अधिबलम् ।

गण्डाख्यं वीथ्यङ्गं निरूपयति—गण्डमिति । प्रस्तुतसम्बन्धि प्रस्तुतार्थसम्बद्धं भिन्नार्थं पृथगर्थबोधकं सत्वरं त्वरासहितं वचो वचनं त्वरया गण्डतो निःसृताद्गण्डं नाम वीथ्यङ्गं मतम् ।

उदाहरति—यथेति । राजा दुर्योधनः । अध्यासितुमिति । एतत्पूर्वार्द्धं तु—

'लोलांशुकस्य पवनाकुलितांशुकान्तं त्वद्दृष्टि हारि मम लोचनबान्धवस्य ।' इति ।

## रुचिरा

अधिबलं लक्षयति—५८५ **स्पर्द्धया । अन्योऽन्यवाक्याधिक्योक्तिरन्यो**ऽन्यं वाक्यस्याधिक्येनोक्तिः **अधिबलम् । मतम् ।**

उदाहरति—**यथा । मम । प्रभावत्याम् । "वज्रनाभस्त**दाख्यो दैत्यविशेषः । 'आहे'ति शेषः । **अनया । गदया । क्षणेन । एव । अस्य । वक्ष** उरः स्थलम् । **निर्मथ्य** विभेद्य । **एषः** । 'अह'मिति शेषः । **अद्य । वो** युष्माकं युष्माननादृत्येति यावत् । **लीलया** 'न त्वायासेने'ति शेषः । **भुवनद्वयं** मनुष्यलोकं देवलोकं चेति भावः । **उन्मूलयामि** । । ३३४ ॥ **प्रद्युम्नः** "प्रत्याहे'ति शेषः । **अरेरे । असुरापसद । ! अमुना । बहुप्रलापेन । अलम् । मम । खलु—अद्य । प्रचण्ड...पातैः** प्रचण्डं यद्भुजदण्डसमर्पितोरुकोदण्डं तेन निर्गलिताः पातिता ये काण्डाः शरास्तेषां समूहस्तस्य पातास्तैः । भुजौ दण्डाविव तयोः समर्पितं तच्च यदुरुकोदण्डं महाधनुरिति तथोक्तम् । **इयम् । क्षोणिः** पृथिवी । **समस्तदितिजक्षतजोक्षिता** । समस्ता ये दितिजा दैत्यस्तेषां क्षतजं रुधिरं तेनोक्षिता सिक्ता । **पिशिताशनलोभनीया** पिशितं मांसमशनं भोजनं येषां तेषां (रक्षसां गृध्रादीनां च) लोभनीया । **क्षणेन । आस्ताम्** । अत्र वज्रनाभस्य वाक्यापेक्षया प्रद्युम्नस्य वाक्यमधिकम् । वसन्ततिलकं वृत्तम् ॥ ३३५ ॥"

**गण्डं प्रस्तुतसंबन्धि भिन्नार्थं सत्वरं वचः ॥ २६० ॥**

यथा वेण्याम्—'राजा—

अध्यासितुं तव चिराज्जघनस्थलस्य

पर्याप्तमेव करभोरु ! ममोरुयुग्मम् ॥'

अनन्तरम् (प्रविश्य) कञ्चुकी—देव, भग्नं भग्नं—' इत्यादि ।

अत्र रथकेतनभङ्गार्थं वचनमूरुभङ्गार्थे संबन्धे संबद्धम् ।

---

## विवृतिः

गण्डमाह—प्रस्तुतसंबन्धि प्रस्तुतार्थसंबद्धम् ॥ पर्याप्तं समर्थम् ॥ संबन्धे प्रस्तुते ॥

## विज्ञप्रिया

गण्डाख्यमङ्गमाह—गण्डमिति । सत्वरेणोक्तत्वात् सत्वरं भिन्नार्थं वचो यत् प्रस्तुतस्य प्रक्रान्तस्य वर्णनं तत् सम्बन्धितया प्रतीयते इत्यर्थः । राजा दुर्य्योधनः । करभोरु इति भानुमत्याः सम्बोधनम् । जघनस्थलस्याध्यासितुम् अध्यासनाय इत्यर्थः । भावे तुम् योगात् षष्ठी । पर्याप्तं योग्यम् । अत्र प्रक्रान्तस्य ऊरोर्भङ्गप्रतीतिरित्याह—अत्रेति ।

## कुसुमप्रतिमा

गण्डमिति । प्रस्तुतसम्बन्धि प्रकृतिविषयसम्बद्धं भिन्नार्थं पृथगर्थबोधकं सत्वरं त्वरायुक्तं वची वाक्यं गरुडं नाम वीथ्यङ्गं मतम् । त्वरया गण्डतो निर्गमांदृगण्डमिति संज्ञा ।

अध्येति । "लीलांशुकस्य पवनाकुलितांशुकान्तं तद्दृष्टिहारि मम लोचनबान्धवस्य ।" इति श्लोक पूर्वार्द्धम् । हे करभोरु ! मम ऊरुयुग्मं तव जघनस्थलस्य सम्बन्धे तदुपरीत्यर्थः चिरादह्यासितुं रमणायावस्थातुं पर्य्याप्तमेव योग्यमेव । अनन्तरमूरुयुग्ममित्युक्तेः परमेव ।

लक्ष्ये लक्षणं सङ्गमयितुमाह अत्रेति । वचनं भग्नं भग्नमिति वाक्यम् । सम्बद्धे ममीरुयुग्ममित्यनेन प्रस्तुते । तथा चात्र भग्नं भग्नमिति वाक्यस्य प्रस्तुतोरुभङ्गरूपविषयसम्बन्धित्वात् रथकेतनभङ्गरूपपृथगर्थबोधकत्वात् त्वरायुक्तत्वाच्च गण्डमित्यर्थः ।

## विमला

गण्डमाह, गण्डमिति ।—प्रस्तुतसम्बन्धि—प्रकृतार्तसम्बद्धं, भिन्नार्थं—पृथगर्थं, सत्वरं—त्वरान्वितं, वचः गण्डम् ।

उदाहरति, लीलांशुकस्येति ।—भानुमतीं प्रति दुर्य्योधनस्योक्तिः । हे करभोरु !—करभाविवोरू यस्यास्तत्सम्बुद्धौ ! लोलं—लक्षणं, वातेन दोलायमानमित्यर्थः, अंशुकं—वस्त्रं यत्र तस्य लीलांशुकस्य, मम लोचनयो-

बान्धवं तादृशस्य, तव त्वत्सम्बन्धिनः, जघनस्थलस्य चिरात्—चिरकालावधि, अध्यासितुम्—अधिष्ठातुंपवनेन आकुलितः,—चञ्चलीकृतः, उड्डायित इत्यर्थः, अंशुकान्तः,—वस्त्रैकदेशो यत्र तादृशं, तव दृष्टिः,—नेत्रं, प्रेक्षणमिति यावत्, तां हर्तुं शीलमस्यास्तीति तत् त्वदृष्टिहारि—तव नेत्रोत्सववङ्कमित्यर्थः, मम—मत्सम्बन्धि, ऊरुयुग्मं, पर्य्याप्तमेव—समुचितमेव, समर्थमेव वा। अत्र राजोरुयुग्मं प्रस्तुतवर्णनं वक्ष्यमाणेन "भग्नं भग्नम्" इति कञ्चुकिवाक्येन भिन्नार्थमिति गण्डम्। वसन्ततिलकं वृत्तम्।

सम्बद्धे—प्रस्तुते। अन्यत् स्पष्टम्।

## लक्ष्मी

हे करभोरु! इति भानुमत्याः सम्बोधनम्। मम ऊरुयुग्मं जङ्घाद्वयं तव जघनस्थलस्य सम्बन्धे तदुपरीत्यर्थःचिरादध्यासितुं सुरतायावस्थातुं (भावे तुमुन् योगात् षष्ठीपर्याप्तमेव) समर्थमेव। अनन्तरम् ऊरुयुग्ममिति कथनान्तरमित्यर्थः।

लक्ष्ये लक्षणं संयोजितुमाह—अत्रेति। वचनं 'भग्ने भग्न' मिति वाक्यमित्यर्थः। सम्बद्धे'ममोरुयुग्म' मित्यनेन प्रस्तुते इत्यर्थः। एवञ्चात्र 'भग्नं भग्न'मिति वचनस्य प्रस्तुतोरुभङ्गरूपार्थसम्बद्धत्वात् रथकेतनभङ्गरूपभिन्नार्थबोधकत्वात् त्वरायुक्तत्वाच्च गण्डमिति वाक्यार्थः। यथा चोत्तरचरिते—' रामः—

**इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयोरसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः।**

**अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः किमस्या न प्रेयो यदि परमसह्यस्तु विरहः॥**

(प्रविश्य) प्रतीहारी—देव! उअत्थिदो। देव! उपस्थितः (सं.०) रामः—अयि! कः? प्रतीहारी—देवस्य आसण्णपरिचारओ दुम्मुहो।' देवस्यासन्नपरिचारको दुर्मुखः इति (सं.०) अत्राकस्मात् प्रतीहारीवचनस्यान्याभिप्रायप्रयुक्तस्य प्रस्तुतरामवचसा संयुज्यमानत्वेन भिन्नार्थबोधकत्वाद् गण्डः।

## रुचिरा

गण्डं लक्षयति—५८६ **प्रस्तुतसम्बन्धि** प्रसङ्गानुप्रसक्तम्। **भिन्नार्थं** प्रस्तुताननुकूलम्। **सत्वरं** झटिति 'उच्चरित'मिति शेषः। **वच** उत्तरम्। **गण्डम्**।। ५५७॥

उदाहरति—**यथा**। **वेणीसंहारे** 'तृतीयेऽङ्के' इति शेषः "**राजा** दुर्य्योधनः (प्रियां प्रत्याह) हे **करभोरु** करभाविव हस्तयोर्बाह्यभागाविवोरू यस्यास्तसम्बुद्धौ तथोकते! **लोलांशुकस्य** लोलं चञ्चलमंशुकं वस्त्रं यत्र तादृशस्य। **मम**। **लोचनबान्धवस्य** मदीयनेत्रयोस्तृप्तिकरस्य। **तव**। **जघनस्थलस्य**। **अध्यासितुमधिष्ठातुम्**। **पवनाकुलितांशुकान्तं** पवनेनाकुलितोऽशुकान्तो वस्त्रपर्य्यन्तभागो यस्य तादृशम् **त्वद्दृष्टिहारि** त्वदीयनेत्रयो रञ्जकम्। **मम**। **ऊरुयुगम्**। **चिरात्** चिरकालं व्याप्य। **पर्य्याप्तम्**। **एव**। वसन्ततिलकं वृत्तम्॥ ३३६॥"

**अनन्तरम्**। "**प्रविश्य** 'शुद्धान्त' इति शेषः। **कञ्चुकी** 'आह राजान'मिति शेषः। हे **देव! भग्नम्**।" **इत्यादि**। **अत्र**। **रथकेतनभङ्गार्थं** रथध्वजपतनसूचनाय प्रवृत्तमिति भावः। **वचनम्**। **ऊरुभङ्गार्थे** उरुभङ्गसूचके। **सम्बन्धे**। **सम्बद्धमन्वितम्**।

**व्याख्यानं स्वरसोक्तस्यान्यथावस्यन्दितं भवेत्।**

यथा छलितरामे—'सीता—जाद, काल्लं क्खु अओज्झाएण गन्तव्यम्, तर्हि सो राआ विणएण पणयिदण्वो। लवः—अथ किमावाभ्यां राजोपजीविभ्यां भवितव्यम्। सीता—जाद, सो क्खु तुम्हाणं पिता। लवः—किमावयो रघुपतिः पिता। सीता—(साशङ्कम्।) मा अण्णधा संकद्धम्। ण क्खु तुम्हाणम्, सअलाए ज्जेव पुहवीएत्ति।'

---

## विवृतिः

अवस्यन्दितमाह—व्याख्यानमिति। स्वरसोक्तस्य 'वाक्यस्य' इति शेषः॥ जाद इति। 'पुत्र, कल्पं खलु उपाध्यायेन गन्तव्यम्, तत्र स राजा विनयेन पणायितव्यः।' (इति संस्कृतम्)। 'पुत्र, स खलु युष्माकं पिता।' इति संस्कृतम्! 'मा अन्यथा शङ्कध्वम्। न खलु युष्माकम्। सकलाया एव पृथिव्या इति।' इति संस्कृतम्। अत्र सीतया युवयोर्जनकः श्रीराम इत्यभिप्रायेणोक्तं वाक्यम्। 'पालकः' इत्यन्यथा व्याख्यातम्॥

## विज्ञप्रिया

अवस्यन्दिताख्यमङ्गमाह—व्याख्यानमिति। स्वरसोक्तस्य वक्तृभावेन उक्तस्य श्रोतुरस्वरसात् यदन्यथा व्याख्यानं तदवस्यन्दितमित्यर्थः। जादेत्यादि लवकुशौ प्रति सीताया उक्तिः। जात! कल्यं खलु युवाभ्यामयोध्यायां गन्तव्यम्। तत्र स राजा विनयेन प्रणमितव्यः (इति संस्कृतम्)। जादेति। जातः स खलु युवयोः पिता (इति संस्कृतम्)। सातङ्कमिति। वाल्मीकिनिषेधात् आतङ्कः। मा अराणधा इति, मा अन्यथा शङ्केथाम्। न खलु युवयोः किं तु सकलाया एव पृथिव्या इति (इति संस्कृतम्) पृथिव्या इत्यत्र पृथिवीस्थलोकस्य इत्यर्थः। अत्र पितेति जनकपरतया सीतया स्वरसोक्तस्य लब्धावस्यन्दनात् तया एव पालकतया व्याख्यानं कृतम्।

## कुसुमप्रतिमा

व्याख्यानमिति। स्वरसेन निजाभिप्रेतार्थबोधनेच्छया उक्तस्य वाक्यस्य अन्यथा व्याख्यानम् अन्यप्रकारार्थकरणम् अवस्यन्दितं नाम वीथ्यङ्गं भवेत्, अवस्यन्दितमर्थान्तरे परिणमितमिति व्युत्पत्तेः।

यथेति। "जात! कल्पं खलु अयोध्यायां गन्तव्यम्, तत्र स राजा विनयेन पणायितव्यः।" इति संस्कृतानुवादः। पणायितव्यो व्यवहर्त्तव्यः। "जात! स युष्माकं पिता।" इति संस्कृतानुवादः। "मा अन्यथा शङ्कध्वम्, न खलु युष्माकम्, सकलाया एव पृथिव्याः।" इति संस्कृतानुवादः।

अत्र रामो युवयोः कुशलयोरेव पितेति निजाभिप्रेतार्थबोधनेच्छयैव सीतया उक्तस्य "जात! सो तुम्हाणं पिदा" इति वाक्यस्य लवकर्त्तृकवास्तविकवृत्तान्तज्ञानाशङ्कया 'सकलाया एव पृथिव्याः' इत्यन्यथा व्याख्यानात् अवस्यन्दितम्।

प्रेति। हास्येन युक्ता प्रहेलिकैव नालिका नाम वीथ्यङ्गं भवति। नालिकावत् बुद्धौ शीघ्रप्रवेशान्नालिकेति समाख्या।

## विमला

अवस्यन्दितमाह, व्याख्यानमिति ।—स्वरसोक्तस्य—स्वभावत उक्तस्य, वाक्यस्य इति शेषः, अन्यथा व्याख्यानम् अवस्यन्दितं भवेत् ।

उदाहरति, यथेति ।—णदेति । ["पुत्र ! कल्यं खलु अयोध्यायां गन्तव्यं, तत्र स राजा विनयेन प्रणयितव्यः" इति संस्कृतम्] । जादेति ।—[ "पुत्र ! स खलु युवयोः पिता" इति ।] संस्कृतम् मा इति ।—["मा अन्यथा शङ्कध्वं, न खलु युवयोः, सकलाया एव पृथिव्याः" संस्कृतम्] । अत्र स्वभावोक्तस्य "स युवयोः पिता" इति वाक्यस्य सकलायाः पृथिव्याः इत्यनेन पितृशब्दस्य पालकरूपत्वेन अन्यथा व्याख्यानम् ।

## लक्ष्मी

अवस्यन्दिताख्यं वीथ्यङ्गं निरूपयति—व्याख्यानमिति । स्वरसेन स्वाभिप्रायार्थबोधेच्छा ऊक्तस्य वाक्यस्येति शेषः । अन्यथा व्याख्यानम् अन्यप्रकारार्थविधानम् अवस्यन्दितमर्थान्तरे परिणमितमिति अवस्यन्दितं नाम वीथ्यङ्गं भवेत् ।

उदाहरति—यथेति । जादेति । 'जात ! कल्यं खलु अयोध्यायां गन्तव्यम्, तत्र स राजा विनयेन पणायितव्यः' (इति संस्कृतम्) पणायितव्यः व्यवहर्त्तव्य इत्यर्थः । 'जात ! स युष्माकं पिता' इति संस्कृतम् । साशङ्कमिति । वाल्मीकिनिषेधात् आशङ्का । मा अण्णधा इति । 'मा अन्यथा शङ्कद्वम्, न खलु युष्माकम्, सकलाया एव पृथिव्याः ।'इति संस्कृतम् । पृथिव्या इत्यस्य पृथिवीस्थलोकस्येत्यर्थः ।

अत्र 'जाद ! सो तुम्हाणं पिदा' इत्यनेन रामो युवयोरेव कुसलवयोः पितेति स्वाभिप्रायार्थबोधेनेच्छयैव सीतयाभिहितत्वेन वाल्मीकाशङ्कया 'सकलायाः पृथिव्याः' इत्यन्यथा व्याख्यानात् अवस्यन्दितम् । यथा च वेणीसंहारे—

> **'सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।**
> **निपन्तन्ति दात्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ।।'**

अत्र स्वाभिप्रायार्थबोधनेच्छया शरद्वर्णनाय हंसवर्णनं सूत्रधारेणोक्तस्य एतत् पारिपार्श्विकेन धृतराष्ट्रसुतानां दुर्योधनादीनामङ्गलार्थकथनेन अन्यथा व्याख्यानादवस्यन्दितम् ।

## रुचिरा

अवस्यन्दितं लक्षयतचि—५८७ **स्वरसोक्तस्य** स्वरसेन स्वेच्छया स्वभावत इति यावत् उक्तं तस्य । **अन्यथा** प्रकारान्तरेण । **व्याख्यानम्** । **अवस्यन्दितम्** । **भवेत्** ।

उदाहरति—**यथा** । **छलितरामे** ।"**सीता** 'लवं प्रत्याहे'ति शेषः । **जाद** जातपुत्र ! इति यावत् । **कल्लं** कल्यं परेद्युः । **क्खु** खलु **अजोज्झाएण** अयोध्यायाम् । **गंतव्वं** गन्तव्यम् 'अस्माभि'रिति शेषः । **तर्हिं** तर्हि । **सो** सः । **राआ** राजा रामचन्द्र इति यावत् । **बिणएण** विनयेन । **पणयिदब्बो** प्रणयितव्यः । **लवः** 'सीतां प्रत्याहे'ति शेषः । **अथैतस्मात् दिवसात् परम्** । **किम्** । **आवाभ्याम्** । **राजोपजीविभ्याम्** । **भवितव्यम्** ? **सीता** 'लवं प्रत्याहे'ति शेषः । हे **जाद** जातपुत्र इति यावत् । सो स राजा । तुम्हाणं युष्माकम् । पिदा पिता । लबः 'सीतां प्रत्याहे'ति शेषः । हे जाद

जातपुत्र इति यावत्। **सो** स राजा। **तुम्हाणं** युष्माकम्। **पिदा** पिता। **लवः** 'सीतां प्रत्याहे'ति शेषः। **किम्। आवयोः** (मम कुशस्य च)। **रघुपतिः**। **पिता?** **सीता** 'लवं प्रत्याहे'ति शेषः। **(साशङ्कम्) मा। अण्णधा** अन्यथा **संकधं** शङ्कध्वम्। **ण** न। **क्खु** खलु। **तुम्हाणं** युष्माकम्। **सअलाए** सकलायाः। **ज्जेव** एव। **पुहबीए** पृथिव्याः। **त्ति**. इति। अत्र पितृशब्दस्य स्वभावत उक्तस्य सकलाया अपि पृथिव्या इत्येवं पालकरूपेण व्याख्यानम्।

**प्रहेलिकैव हास्येन युक्ता भवति नालिका ॥ २६१ ॥**

संवरणकार्युत्तरं प्रहेलिका ।

यथा रत्नावल्याम्—'सुसंगता—सहि, जस्स किदे तुमं आअदा सो इद ज्जेव चिट्ठदि । सागरिका—कस्स किदे अहं आअदा । सुसंगता—णं क्खु चित्तफलअस्स ।'

अत्र त्वं राज्ञः कृते आगतेत्यर्थः संवृत्तः ।

---

## विवृतिः

नालिकामाह—प्रहेलिकैवेति ॥

सहि इति । 'सखि, यस्य कृते त्वमागता स इह एव तिष्ठति ।' इति संस्कृतम् । 'कस्य कृते अहमागता ।' इति संस्कृतम् 'ननु खलु चित्रफलकस्य ।' इति संस्कृतम् । इयं हास्ययुक्तेत्यवस्यन्दितादस्या भेदः ॥

## विज्ञप्रिया

नालिकाख्यमङ्गमाह—प्रहेलिकेति । संवरणकारीति व्याख्यानरूपाङ्गेऽपि संवरणरूपस्य सत्त्वेऽप्यत्र हास्ययुक्तत्वं विशेषः । सहि जस्सेति—सखि यस्य कृते त्वमागता सोऽत्रैव तिष्ठतीति संस्कृतम् । कस्सेति । कस्य कृते अहमागता इति संस्कृतम् णं चित्तेति । ननु चित्रफलकस्य (इति संस्कृतम्)

## कुसुमप्रतिमा

संवरणेति । संवरणं प्रकाशितप्रायस्य अर्थस्य अन्यथाकरणन पुनरावरणं करोतीति तत्तादृशमुत्तरं प्रतिवचनम् । स्वोक्तस्य वाक्यस्य अन्यथा व्याख्यानमात्रे अवस्यन्दितम्, हास्ययुक्तान्वथाव्याख्याने तु नालिकेत्यनयोर्भेदः ।

यथेति । "सखि ! यस्य कृते त्वमागता स इत एव तिष्ठति । कस्य कृते अहमागता ? । ननु चित्रफलकस्य" इति संस्कृतानुवादः ।

लक्ष्ये लक्षण योजयति अवेति । इत्यथः प्रथमवाक्येन प्रकाशितप्राय इति शेषः, संवृतः "ननु चित्रफलकस्य" इत्यनेनान्यथाकरणात् पुनरावृतः ।

## विमला

नास्तिकामाह, प्रहेलिकैवेति ।—हास्येन युक्ता प्रहेलिका एव नालिका भवति ।

उदाहरति, सहीति ।—["सखि ! यस्य कृते त्वमागता, स इह एव तिष्ठति" इति संस्कृतम्] । कस्स इति ।—["कस्य कृते अहमागता ?" इति संस्कृतम्] । णं इति ।—["ननु चित्रफलकस्य" इति संस्कृतम्] । अत्र राज्ञः कृते त्वमागतेति उत्तरं संवृत्तम् । इयं हास्ययुक्तेत्यवस्यन्दितादस्या भेदः ।

## लक्ष्मी

नालिकाख्यं वीथ्यङ्गं निरूपयति—प्रहेलिकेति। हास्येन युक्ता प्रहेलिकैव नालिकावद्बुद्धावाशुप्रवेशा नालिका नाम वीथ्याङ्गं भवति।

संवरणकरीति। संवरणं स्फुटीकृताभिप्रायस्य अर्थस्य अन्यथा करणेन पुनरावरणं गोपनं करोतीति तत्तथोक्तम् उत्तरं प्रत्युक्तिः। अवस्यन्दिताङ्गे संवरणरूपस्य सत्त्वेऽप्यत्र हास्ययुक्तत्वमिति विशेषः। उदाहरति—यथेति। सागरिका चित्रफलकार्थमागता कदलीगृहे वत्सराजं दृष्ट्वा बहिः स्थिता सुसंगतयोच्यते। सहि जस्सेति 'सखि ! यस्य कृते त्वमागता स इत एव तिष्ठति। कस्य कृते अहमागता ? ननु चित्रफलकस्य।' संस्कृतम्।

लक्ष्ये लक्षणं सङ्गमयितुमाह—अत्रेति। इत्यर्थः पूर्ववाक्येन स्पष्टीकृतप्राय इति शेषः। संवृतः गोपितः 'ननु चित्रफलकस्य' इत्यनेनान्यथाविधानात् पुनरावृत्तः। केचित्तु हास्यहेतुः नोपेतां निगूढार्थरूपामेव प्रहेलिकां नालिकां मन्यन्ते। यथा मुद्राराक्षसे—चरः हं हो ब्रह्मण ! मा कुप्प। किं पि तुह उअज्झाओ जाणादि। किं पि अह्मारिसा जणा जाणन्ति शिष्यः—किमस्मदुपाध्यायस्य सर्वज्ञत्वमपहर्त्तुमिच्छसि। चरः—यदि देउवज्झाओ सव्वं जाणादि ता जाणादु दाव कस्य चन्दो अणभिप्पेदो त्ति। शिष्यः—किमनेन ज्ञातेन भवति (इत्युपक्रम्य) चाणक्यः—चन्द्रगुप्तादपरक्तान् पुरुषाञ्जानामि।' अत्र चरशिष्ययोर्हास्यहेतुत्वेनोपेताया निगूढार्थरूपाया एव प्रहेलिकात्वन्नालिका।

## रुचिरा

नालिकां लक्षयति—५८८ **हास्येन** हास्यव्यञ्जकेन वचनेनेति भावः। **युक्ता। प्रहेलिका** संवरणकारकमुत्तरम्। **एव। नालिका। भवति** ॥ ५५८ ॥

कारिकां सुगमयति-**संवरणकारि** संवरणं प्रस्फुटीभवतोऽर्थस्य निगूहनं करोतीति तथोक्तम्। **उत्तरं** प्रतिवाक्यम्। **प्रहेलिका**।

उदाहरति—**यथा। रत्नावल्याम्**। 'द्वितीयेऽङ्के'इति शेषः। "**सुसङ्गता** 'सागरिकां प्रत्याहे'ति शेषः। **सहि** हे सखि ! **जस्स। किदे** यस्य कृते यं लब्धुमिति यावत्। **तुमं** त्वम्। **आअदा** आता। **सो** सः **अअं अयम्। दे** ते। **पुरदो** पुरतः। **चिट्ठदि** तिष्ठति। **सागरिका** 'सुसङ्गतां प्रत्याहे'ति शेषः। **(सासूयम्) कस्स** कस्य। **किदे** कृते। **अहं** अहम्। **आअदा** आगता। **सुसङ्गता** 'सागरिकां प्रत्याहे'ति शेषः। **(विहस्य) अइ** अयि ! (इदं कोमलालापे) **अण्णसंकिदे** अन्यशङ्किते ! णं ननु। **चित्तफलअस्स** चित्रफलकस्य। 'कृते आगता असि'इति। शेषः। **ता** तत्। **एदं** एतम्। **गेह्ण** गृहाण।" **अत्रा** "त्वम्। **राज्ञो** वत्सराजस्य। **कृते। आगता"** इत्यर्थः। **संवृतो** निगूढः कृतः।

**असत्प्रलापो यद्वाक्यमसंबद्धं तथोत्तरम्।**

**अगृह्णतोऽपि मूर्खस्य पुरो यच्च हितं वचः ॥ २६२ ॥**

तत्राद्यं यथा मम प्रभावत्याम्—'प्रद्युम्नः—(सहकारवल्लीमवलोक्य सानन्दम्।) अहो, कथमिहैव—

**अलिकुलमञ्जुलकेशी परिमलबहला रसावहा तन्वी।**

**किसलयपेशलपाणिः कोकिलकलभाषिणी प्रियतमा मे ॥'**

एवमसंबद्धोत्तरेऽपि। तृतीयं यथा वेण्यां दुर्योधनं प्रति गान्धारीवाक्यम्।

---

## विवृतिः

असत्प्रलापमाह—असत्प्रलाप इति। असंबद्धं वाक्यमुत्तरं वेत्यर्थः॥ अलिकुलेति। अत्राम्रलतायां स्वप्रियारोप इति वाक्यमसंबद्धम्॥

## विज्ञप्रिया

त्रिविधमसत्प्रलापाख्यमङ्गमाह—असदिति। असम्बद्धमलीकारोप्यमाणार्थकं वाक्यमुत्तरञ्च तादृशमित्यर्थः। तृतीयमसत्प्रलापाख्यमङ्गमाह—अगृह्यतोऽपीति। हितं वचोऽगृह्णतोऽपि मूर्खस्येत्यन्वयः।

अलिकुलेति—चूतलतिकायां प्रभावतीभ्रमादियमुक्तिः। इहेयं चूतलतिकेति। कैव प्रभावती कीदृशी? अलिकुलम् एव मञ्जुलाः केशा यस्यास्तादृशी, किसलयमेव पेशलपाणिर्यस्यास्तादृशी। कोकिलपदमत्र तद्भाषापरम्। तथा च तद्भाषारूपविभाषावतीत्यर्थः। न तु कोकिलवद्भाषणशीला इत्यर्थः। तदाभेदभाषणात् अभेदारोपानुपपत्तेः। अत्र च आहार्यारोपाभावात् न रूपकं किन्तु वास्तवभ्रमात् भ्रान्तिमदलङ्कार एव। एवमसम्बद्धोत्तरेष्वपीति। तत्र यथा मम—

**द्विजः शाखायुक्तस्त्वयि कृतकथः कोकिल इति**

**त्वयाख्येयं मन्दे मयि विरहिपाते कियदघम्।**

**इति प्रश्ने वायोर्मुकुलपुलका चूतलतिका**

**ध्रुवं धृत्वा मौलिं न खलु कियदित्युत्तरयति॥**

अत्र हि वातधूतमौलिकायां चूतलतिकायां मन्दवायोः कति पापप्रश्ने मौलिधूननेन पापभावोत्तरारोपः। वायोः प्रश्नप्रकारः पूर्वार्द्धार्थः। पूर्वप्राप्तपापव्यवस्थके जने एव तादृशप्रश्नौचित्यादित्याह—द्विज इति। शाखायुक्तविटपस्थितो द्विजः पक्षी। कोकिल एव द्रुपदामन्त्रस्य ऋषिः कोकिलनाम वेदशाखायुक्तो द्विजः स त्वयि कृतकथ इत्यतस्त्वया मन्दे वेदरहिते इदमप्याख्येयम्। विरहिवधे कियत् पापमिति प्रश्नः। मन्दवायोः कामोद्दीपकत्वेन विरहिहन्तृत्वात् अयं प्रश्नः। व्यवस्थाकथने हर्षोत्पुलकः। तृतीयं यथा वेण्यां दुर्योधनं प्रतिगान्धार्याहितवाक्यम्। अथवा प्रदीयतां दाशरथये मैथिलीति रावणं प्रति विभीषणस्य वाक्यमिदमपि बोध्यम्।

## कुसुमप्रतिमा

असदिति । यद्वाक्यम् असम्बद्धं पूर्वापरसम्बन्धशून्यम्, तथा यदुत्तरम् असम्बद्दं पूर्वापरसम्बन्धशून्यम्, तथा अगृहणतोऽपि श्रुत्वाप्यननुसरतोऽपि मूर्खस्य पुरः अग्रतः यत् हितं वचञ्च तत् असत्प्रलापी नाम वीथ्यङ्गं मतम् । तेनैतत्रिविधम् । अत्र सर्वत्रैवव्युत्पत्तिः सुगमा ।

अलीति । अलिकुलं भ्रमरसमूह इव मञ्जवः सुन्दराः केशा यस्याः सा, अलिकुलमेव मञ्जुकेशा यस्याः सा च । परिमलो गन्धो बुहलो यस्याः सा, एकत्र गन्धद्रव्यव्यवहारादन्यत्र पुष्पविकासादिति भावः । रसमनुरागमावहति जनयति, रसं क्षीरमावहति दधातीत च सा । तन्वी कृशा । किशलयमिव पेशलः सुन्दरः पाणियस्याः सा, किशलयमेव पेशलः पाणिर्यस्याः सा च । कोकिलवत् कलं मधुरास्फुटं भाषते कोकिलैरेव कलं भाषत इति च सा तथोक्ता मे मम प्रियतमा प्रभावती ।

अत्र द्वितीयार्थो व्यङ्ग्य एव । तेन प्रभावतीवर्णनवाक्यस्य पूर्वापरवर्त्तिसहकारवल्लीसम्बन्धाभावादसत् प्रलापः ।

एवमिति । ऊह्यमिति शेषः । यथा मम विराजसरोजिन्याम्—"राजा । (विशेषेण निर्वण्यविहस्य च) नेषा नैषा, त्वं खलु तदा सरोजिनी, येन मे प्रियमाचरसि ।"

## विमला

असत्प्रलापमाह, असत्प्रलाप इति ।—असम्बद्धं—पूर्वापरसम्बन्धरहित, यत् वाक्यं तथा उत्तरं, यच्च अगृह्णतः,—हितवाक्यमश्रृण्वत इत्यर्थः, मूर्खस्य पुरः,—अग्रतः, हितं वचः असौ अपि असत्प्रलापः ।

आद्यम्—असम्बद्धं वाक्यमित्यर्थः ।

अलीति ।—अलिकुलं—भ्रमरसमूहः, तद्वत् मञ्जुलकेशी—मनोहरकेशा, परिमलः,—विमर्दोत्थगन्धः, ("स्यात् परिमलोऽतिमर्दातिमनोहरगन्धयोश्चापि" इति मेदिनी) तद्बहला—पुरुषसंसर्गजगन्धशालिनी, अकृतपुरुषसंसर्गाणां रमणीनां तङ्भावं मनसा अनुभवन्तीनाम् अपि धर्मादिना तद्वद्गन्धघसम्भवात् इयमुक्तिः, अन्यथा द्विचारिण्या खल्वनया भवितव्यम् इति बोद्धव्यम् । रसम्—अनुरागम्, आवहतीति तथोक्ता, अत्यनुरागवतीत्यर्थः, तन्वी—कृशाङ्गी, किशलयः,—पल्लवः, तद्वत् पेशलौ—कोमलौ, पाणौ यस्यास्तादृशी, कोकिलवत् कलभाषिणी—मधुरभाषिणी, मे—मम, प्रियतमां—अतिप्रेयसौ, "कथमिहैव" इति गद्यस्थपदेन व्याख्याद्वयेऽपि अन्वेतव्यम् । ङ्वतापक्षे व्याख्या तु सुगमा । अत्र सहकारलतायां स्वप्रियारोपः इति वाक्यम् अस्सम्बद्धभ गीतिरार्य्या छन्दः ।

## लक्ष्मी

त्रिविधमसत्प्रलापाख्यं वीथ्यङ्गं निरूपयति—असदिति । यद्वाक्यम् असम्बद्धं पूर्वापरसम्बन्धरहितम्, तथा यदुत्तरम् असम्बद्धं पूर्वापरसम्बन्धरहितम्, तथा अगृह्णतोऽपि मूर्खस्य पुरः समक्षे यत् हितं वचश्च तत् असत्प्रलापो नाम वीथ्यङ्गम् आकर्ण्याप्यननुगच्छतोऽपि भवेत् । एवञ्चैतस्य त्रैविध्यं स्पष्टमेव ।

उदाहर्तुमाह—तत्रेति । तत्र तेषु त्रिष्वसत्प्रलापेषु मध्ये । आद्योऽसत्प्रलाप इति शेषः । यथेति । सहकारवल्लीम् चूतलतामित्यर्थः । अलिकुलेति । चूतलतिकायां प्रभावती भ्रमादियमुक्तिः । अलिकुलेन भ्रमरपुञ्जेन मञ्जुला मनोहराः केशा यस्याः सा तथोक्ता, अलिकुलमेव मञ्जुकेशा यस्याः सा तादृशी च । परिमलो गन्धो बहला अधिका

यस्याः सा, तथोक्ता एकत्र गन्धद्रव्यव्यपदेशात् अन्यत्र कुसुमविकासादित्याशयः। रसमनुरागमावहति उत्पादयति रसं दुग्धमावहति दधातीति च सा तथोक्ता तन्वी कृशा किसलयमिव पल्लवमिव 'पल्लवोऽस्त्री किसलयम्' इत्यमरः, पेशलो मनोहरः पाणिः करो यस्याः सा, किसलयमेव पेशलः पाणिर्यस्याः सा च, कोकिलवत् कलं मधुरुव्यक्तं भाषते, कोकिलैरैव कलं भाषते इति च सा तादृशी मे मम प्रियतमा प्रभावती। अत्र व्यङ्ग्य एव द्वितीयार्थः। तेन प्रभावतीवर्णनवाक्यस्य पूर्वापरस्थितचूतलतिकासम्बन्धाभावात् असत्प्रलापः।

एवमसम्बद्धोत्तरेष्वपीति। यथा—तातस्तु—

द्विजः शाकायुक्तस्त्वयि कृतकथः कोकिल इति
त्वयाख्येयं मन्दे मयि विरहिपाते कियदघम्।

**इति प्रश्ने वायोर्मुकुलपुलका चूतलतिका**
**ध्रुवं धृत्वा मौलिं न खलु कियदित्युत्तरयति॥**

अत्र हि वातधूतमौलिकायां चूतलतिकायां मन्दवायोः कतिपापप्रश्ने मौलिधूननेन पापभावोत्तरारोपः वायोः प्रश्नप्रकारः पूर्वार्द्धार्थः। पूर्वप्राप्तपापव्यवस्थके जने एव तादृशप्रश्नौचित्यादिह—द्विज इति। शाखायुक्तविटपस्थितो द्विजः पक्षी, कोकिल एव द्रुपदामन्त्रस्य ऋषिः कोकिलनामवेदशाखायुक्तो द्विजः स त्वयि कृतकथः इत्यतस्त्वया मन्दे वेदरहित इदमप्याख्येयम्। विरहिवधे कियत्पापमिति प्रश्नः? मन्दवायोः कामोद्दीपकत्वेन विरहिहन्तृत्वात् अयं प्रश्नः। व्यवस्थाकथने हर्षोत्पुलकः' इत्याह।

यथा वा रत्नावल्यां द्वितीयेऽङ्के—'सहि को एसो तुए आलिहिदो' (सखि! क एष त्वया आलिखितः) इति सुसङ्गता पृष्टायाः सागरिकायाः 'भअवं अणंगो' (भगवान् अनुङ्ग) इत्युत्तरवाक्ये।

तृतीयमुदाहरति—तृतीयमिति। अथवा 'प्रदीयतां दाशरथाय मैथिली' इति रावणं प्रति विभीषणस्य वाक्यम्। केचित्तु—परमार्थतो हितमुपकारि यद्वचनम् अविवेचकत्वमहितत्वेन नैवाऽवबुध्यतेऽविवेचकैर्मूर्खैश्च तत्, तौ प्रति असतोऽसाधुभूतस्य प्रलपनमसत्प्रलाप इत्याहुः। तत्राविवेचकं प्रति यथा रामाभ्युदये द्वितीयेऽङ्के—रावणः प्रायशः श्रुतमेव भवद्भिर्यथा कलत्रमात्रसाधनोऽसौ तापसस्तदपहार एव तावन्निरूप्यताम्। न च कलत्रापहरणादृते पुरुषस्यापरं परिभवस्थानमस्ति। तत्र मारीचेन साहायकं क्रियमाणमिच्छामि। मारीचः—स्वामिन्! जीवतो रामस्य परिभव इत्यशक्यमेतत् न खलु तापस इति तमवज्ञातुमर्हति देवः। अन्यदेव वस्त्वन्तरं किमपि तत्। रावणः—(सक्रोधम्) आः किं नाम वस्त्वन्तरं तत्? मूढ!

**युक्त्यैव क्षत्रबन्धोः पभवमसमं जीवतः कर्त्तुमिच्छन्**
**माया साहाय्यके त्वं निपुणतर इति प्रार्थये नासमर्थः।**
**यच्चान्यत् तत्र वज्रप्रहतिमसृणित स्फारकेयूरभाजः**
**सञ्जास्त्रैलोक्यलक्ष्मीहठहरणसहा बाहवो रावणस्य॥**
**अत्र मारीचवचनं परमार्थतो हितमपि रावणेन नावगतम्।**

मूर्खं प्रति यथा मनोरमावत्सराजे वत्सराजाभ्युदयाशंसी रुमण्वान् पाञ्चालमुच्छेत्तुकामः तस्य कृतकभृत्यतां श्रितो विश्वासोत्पादनार्थं वत्सराजान्तःपुरमादिश्य यौगन्धरायणप्रमुखनाह—

**'कौशाम्बी मम हस्त एव परया शक्त्या मया स्वीकृतः**

**पाञ्चालाधिपतिः प्रभुः स भवतां न ज्ञायते क्वाधुना ?।**
**नन्वादीपित एष मोहितपरानीकेन लावाणको**
**देवी सम्प्रति रक्ष्यतामयमहं प्राप्तो रुमण्वान् स्वयम्॥'**

एतच्च परमार्थतः पाञ्चालोच्छेदपरं यौगन्धरायणेनावबुद्धम्, वासवदत्तया सम्भ्रकनाम्ना यौगन्धरायणानुचरेण च मौर्ख्यान्नावगतम्।

## रुचिरा

असत्प्रलापं लक्षयति—५८९ **यत्। वाक्यम्। असम्बद्धं** युक्तिविरुद्धम्। 'त'दिति शेषः। **तथा**। 'य' दिति शेषः। **उत्तरम्**। 'असम्बद्धं तदसत्प्रलाप'इति। पूर्वतोऽनुवृत्तम्। **यत्। च। अगृहणतो**ऽस्वीकुर्वाणस्य। **अपि। मूर्खस्य। पुरोऽग्रे। हितं** हितकरम्। **वचः**। 'तदसत्प्रलाप'इति प्रसङ्गानुप्रसक्तम्। तथा च-असत्प्रलापस्त्रिविधः, तत्र-आद्यः असम्बद्धवाक्यात्मा, द्वितीयः—असम्बद्धोत्तरात्मा, तृतीयः पुनः पण्डितम्मन्यं प्रति उपदेशात्मा। इति निष्कृष्टोऽर्थः॥ ५५९॥

उदाहरति—**तत्र** तेषु त्रिष्वसत्प्रलापेषु मध्ये। **आद्यो**'ऽसत्प्रलाप' इति शेषः। **यथा। मम। प्रभावत्याम्। "प्रद्युम्नः (सहकारवल्लीं** सहकारोऽतिसुगन्धित आम्नो वल्लीव ताम्। **अवलोक्य। सानन्दम्) अहो। कथम्। इहास्मिन्। एव**—

**अलिकुलामञ्जुलकेशी** अलिकुलेन भ्रमरपुञ्जेन मञ्जुला मनोरमाः केशा यस्याः सा। **परिमलबहुला** परिमलेन सौरभेण बहुलाऽतिशयिता। **रसावहा। तन्वी**। सूक्ष्माङ्गी। **किशलयपेशलपाणिः** किशलयवत् कोमलपत्रवत् पेशलौ स्निग्धसुकुमारौ पाणी यस्याः। सा। **कोकिलकलभाषिणी** कोकिलकलं भाषत इत्येवं शीलेति तथोक्ता। मे मम। **प्रियतमा**। प्रभावती। गीतिश्छन्दः। अत्र वल्लीं प्रियां मत्वाऽभिधानादसत्प्रलापः॥ ३३७॥"

**एवम्। असम्बद्धोत्तरो**ऽसम्बद्धमुत्तरं यत्र तादृशः। 'असत्प्रलाप' इति शेषः। **अपि** 'ऊह्य' इति शेषः। स च यथा—रत्नावल्यां द्वितीयेऽङ्के "सहि को एसो तुए आलिहि दो इति सुसङ्गतया पृष्टायाः सागरिकायाः "भअवं अणं गो" इत्युत्तरवाक्ये। **तृतीयः**। 'असत्प्रलाप' इति शेषः। **यथा। वेणीसंहारे** 'पञ्चमेऽङ्के' इति शेषः। **दुर्योधनम्। प्रति। गान्धारीवाक्यम्**। अयम्भावः—गान्धारी दुःशासनादिमरणोत्तरमपि युधिष्ठिरेम सन्ध्यर्थमसकृद्दुर्य्यौधनमुपदिष्टवती, न तेन तत्प्रतिगृहीतमित्यसत्यप्रलापः। इति।

**व्याहारो यत्परस्यार्थे हास्यक्षोभकरं वचः ।**

यथा मालविकाग्निमित्रे—'(लास्यप्रयोगावसाने मालविका निर्गन्तुमिच्छति ।) विदूषकः—मा दाव उवदेसमुद्धा गमिस्ससि । (इत्युपक्रमेण ।) गणदासः— (विदूषकं प्रति) । आर्य, उच्यतां यस्त्वया क्रमभेदो लक्षितः । विदूषकः—पढमं बम्भणपूआ भोदि । सा इमाए लङ्घिदा । (मालविका स्मयते ।)' इत्यादिना नायकस्य विशुद्धनायिकादर्शनप्रयुक्तेन हासक्षोभकारिणा वचसा व्याहारः ।

---

## विवृतिः

व्याहारमाह—व्याहार इति । परस्य नायकादेरर्थे प्रयोजने ॥ मा दाव इति । 'मा तावदुपदेशमुग्धा गमिष्यसि ।' इति संस्कृतम् । 'प्रथमं ब्राह्मणपूजा भवति । सा अनया लङ्घिता ।' इति संस्कृतम् ॥ मृदवमाह—दोषा इति ॥

## विज्ञप्रिया

व्याहाररूपकमङ्गमाह—व्याहार इति । लास्यावसाने नृत्यसमाप्तौ । मा दाव इति । मा तावदुपदेशमुग्धा गमिष्यसीति (संस्कृतम्) । उपदेशः शास्त्रोपदेशः । तद्विसंमुग्धा तर्करुद्धकारिणी भूत्वा इति शेषः । पढममिति । प्रथमं ब्राह्मणपूजा भवति सा अनया लङ्घिता । (इति सं.) अत्र परस्य राज्ञो लाभार्थं हास्यकरं विदूषकस्य वाक्यमाह—

## कुसुमप्रतिमा

व्याहार इति । परस्यार्थे अन्वस्य निमित्ते यत् हास्यक्षोभकरं वचः तद्व्याहारो नाम वीथ्यङ्गं मतम् । व्याङ्क्रियते आदीयते इति व्युत्पत्तेः ।

यथेति । लाश्यप्योगावसाने नृत्यकरणात् परम् । "मा तावत् उपदेशशुङ्घा गमिष्यसि । इति ।" संस्कृतानुवादः । उपदेशशुद्धा नैपुण्यान्तरं प्रदर्श्य शिक्षाविषये निद्र्दोषा । क्रमभेदा कर्त्तव्यपौर्वापर्य्य लङ्घनम् । "प्रथमं ब्राह्मणपूजा भवति, सा अनया लङ्घिता ।" इति संस्कृतानुवादः । स्मयते ईषद्धास्यं करोति । नायकस्य अग्निमित्रस्य विशुङ्घनायिकादर्शनाय स्वाभाविकभावस्थामालविकादर्शनाय प्रयुक्तमुक्तं तेन । वचसा विदूषकस्य परवाक्येन ।

दोषा इति । यत्र दोषा गुणाः गुणाश्च दोषाः स्युः, तत् हि मृदवं नाम वीथ्यङ्गं मतम् । मृदोरिदमिति मृदवं संज्ञात्वेन तद्धितविधेरनित्यत्वाद्वृद्ध्यभावः ।

## विमला

व्याहारमाह, व्याहार इति ।—परस्य—नायकादेः, अर्थे—निमित्तं, यत् हास्यक्षोभकरं वचः असौ व्याहारः ।

## लक्ष्मी

व्याहाररूपकं वीथ्यङ्गं निरूपयति—व्याहर इति परस्यार्थे नायकादेर्निमित्ते यत् हास्यक्षोभकरं वचः तत् व्याह्रियते आदीयत इति व्याहारो नाम वीथ्यङ्गं भवेत्।

उदाहरति—यथेति। लास्यप्रयोगावसाने नृत्यसमाप्तौ। मादाव इति। 'मा तावदुपदेशमुग्धा गमिष्यसि' इति संस्कृतम्। उपदेशः शास्त्रोपदेशः तद्विसंमुग्धा तर्करुद्धकारिणी भूत्वा इति शेषः। क्रमभेदः कर्त्तव्यपौर्वापर्यव्यतिक्रमः पढममिति। 'प्रथमं ब्राह्मणपूजा भवति, सा अनया लङ्घिता' इति संस्कृतम्। स्मयत इति। ईषद्धास्यं विदधातीत्यर्थः। नायकस्याग्निमित्रस्य विशुद्धनायिकादर्शनाय प्रयुक्तमभिहितं तेन तथोक्तेन। वचसा विदूषकस्य परवचनेन। भावि दृष्टया व्यवहारो यथा रत्नावल्यां द्वितीयेऽङ्के—

**'उद्दामोत्कलिकां विपाण्डुररुचिं प्रारब्धजृम्भां क्षणादा—**
**यासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः।**
**आद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं**
**पश्यन् कोपविपाटलद्युतिमुखं देव्याः करिष्याम्यहम्॥'**

अत्र राज्ञा वासवदत्तां प्रति भाव्यर्थदर्शनं हास्येनोक्तम्।

अन्ये तु वर्त्तमांनप्रत्यक्षार्थवाचकं हास्यलेशकरं वचो व्याहारमिच्छन्ति। यथा—मृच्छकटयां विदूषको गणिकाया वसन्तसेनाया गृहं प्रविशन् वसन्तसेनाया मातरं दृष्ट्वा पृच्छति—'का एषा बन्धुला? चेटी-एसा अज्जु आए जणणी अत्तिजा। विदूषकः—यदि मरे तासिआलसहस्सस्स्रपञ्जत्तिका। अथ किं पदं पवेसिअ दुवार सोहा निम्मविदा! आदु उक्खं दवणपवेसिदा? चेटी—अज्ज! मा एत्तिअं अन्ने कखसु अत्तिका चाउत्थ एण वा धीयदि। विदूषकः—भयवं चाउत्थय! मंपि वंभणं अणुकंपेति।' इति।

## रुचिरा

व्याहारं लक्षयति—५९० **यत्। परस्य। अर्थे** निमित्तम्। **हास्यक्षोभकरं** हास्यक्षोभयोः कारकम्। वचः 'त'दिति शेषः। व्यवहारः।

उदाहरति—**यथा। मालविकाऽग्निमित्रे** 'द्वितीयेऽङ्के' इति शेषः। "**(लास्यप्रयोगावसाने** नृत्यानुष्ठानस्यान्ते। **मालविका। निर्गन्तुम्। इच्छति**। 'तदैव तां प्रत्याहे'ति शेषः) **विदूषकः। भोदि** भवति **किंचिकिञ्चित्। चिट्ठि** तिष्ठ। **वो** युष्माकम्। **विसुमरिदो** विस्मृतः। **कम्मभेदो** कर्म्मभेदः किञ्चित् कर्म्मेति यावत्। **तं** तम्। **दाव** तावत्। **पुच्छिस्सं** प्रक्ष्यामि" **इत्युपक्रमे। गमदासः। (विदूषकम्। विलोक्य) गौतम।** (इदं विदूषकस्य नाम) **उच्यताम्। यः। त्वया। कर्म्मभेदः। लक्षितो** ज्ञातः। **विदूषकः** 'गणदासं प्रत्याहे'ति शेषः। **पुढमोपदेसदंसणे** प्रथमोपदेशदर्शने। **पुढमं** प्रथमम्। **ब्रह्मणस्स** ब्राह्मणस्य। **पूआ** पूजा। **कादव्वा** कर्त्तव्या। **सा। णं** ननु। **वो** युष्माकम्। **विसुमरिदा** विस्मृता। **(सर्वे** राजसभासदः। **प्रहसिता** हास्यं कृतवन्तः। आदिकर्म्मणि क्तः। **मालविका। स्मितम्। करोति)" इत्यादिना। नायकस्य** राज्ञोऽग्निमित्रस्य। **विशुद्धनायिकादर्शनप्रयुक्तेन** विशुद्धा विगुणत्वाभावेन निरवद्याऽसौ नायिका मालविका तस्या दर्शनं तत्र प्रयुक्तेन। **हासक्षो (लो) भकारिणा। वचसा। व्याहारः।**

**दोषा गुणा गुणा दोषा यत्र स्युर्मृद(मार्द) वं हि तत्॥ २६३॥**

क्रमेण यथा—

**'प्रिय! जीवितता क्रौर्यं निःस्नेहत्वं कृतघ्नता।**

**भूयस्त्वद्दर्शनादेव ममैते गुणतां गताः॥'**

**'तस्यास्तद्रूपसौन्दर्य भूषितं यौवनश्रिया।**

**सुखैकायतनं जातं दुःखायैव ममाधुना॥'**

एतानि चाङ्गानि नाटकादिषु संभवन्त्यपि वीथ्यामवश्यं विधेयानि। स्पष्टतया नाटकादिषु विनिविष्टान्यपीहोदाहृतानि। वीथीव नानारसानां चात्रमालारूपतया स्थितत्वाद्वीथीयम्। यथा— मालविका।

---

## विवृतिः

जीवितताक्रौर्यं जीवनकाठिन्यम्। त्वद्विरहे मम स्नेहसत्त्वे मरणमेव स्यात्। एवं तदा मरणमेव प्रत्युपकारस्तदनाचरणात्कृतघ्नता। एते जीवनक्रौर्यादयः। यद्वा जीवितता जीवनमेव क्रौर्यादयः। तद्विरहे मम जीवनेनैव क्रौर्यादयः सुव्यक्ता इति भावः। तस्या इति। विरहिणो नायकस्योक्तिरियम्॥

एतानि चेति। वीथ्यङ्गानां नाटकाङ्गतया नाटक एव वक्तुं युक्तत्वम्। तथा सति प्रकरणादौ तल्लाभे सिद्धे यत्तेषामिह कीर्तनं तदत्र तेषामावश्यकत्वमन्यत्रानियतत्वमिति भावः॥

## विवृतिपूर्तिः

'अध्यासितुमिति। एतत्पूर्वार्धतु— 'लोलांशुकस्य पवनाकुलितांशुकान्तं त्वद्दृष्टि हरि मम लोचनबान्धवस्य।' इति।

## कुसुमप्रतिमा

प्रियेति। हे प्रिय! जीवितता तव विरहेऽपि मम जीवनधारणं क्रौर्य्यं काठिन्यम्, अन्यथा तादृशविरहोत्पीड़नात् जीवनं गच्छेदेवेति भावः। एवं तव विरहे मम जीवितता निःस्नेहत्वमनुरागहीनत्वम्, अन्यथा प्रगाढ़स्नेहे सति तादृशविरहेण जीवनं कथं तिष्ठेदित्याशयः। तथा तव विरहे मम जीविततैव कृतघ्नता, स्मरणीत्पादनेन तव कष्टजननात् उपकारिणः प्रत्यपकारस्यैव कृतघ्नतारूपत्वादित्यभिप्रायः। भूयस्तद्दर्शनादेव पुनरपि तव दर्शनं प्राप्यैव एते मम क्रौर्य्यादयी गुणतां गताः। तथा च तादृशक्रौर्य्य निःस्नेहत्वयोः स्थित्यैवेदानीं मम जीवनधारणात् तव सङ्गमसुखलाभः, तादृशकृतघ्नतावशादेव च त्वमिदानीं मागत इति भावः।

अत्र दोषा गुणा जाता इति मृदथम्।

तस्या इति । यौवनश्रिया भूषितं तस्या नायिकायास्तत् रूपसौन्दर्य्यं तदा मम सुखैकावतनं सुखस्यैकमात्रकारणं जातम्, अधुना विरहकाले तु दुःखायैवः सततस्मरणजननेनोत्पीड़नादिति भावः ।

अत्र गुणा दोषा जाता इति मृदवम् ।

ननु वीथ्या अपि नाटकप्रकृतिकत्वात् नाटके च "योज्य न्यत्र यथा लाभं वीथ्यङ्गानीतराण्यपि" इत्यङ्ग वीथ्यङ्गानां प्राप्तवात् "विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्" इत्यतिदेशेनैव वीथ्यमपि वीथ्यङ्गप्राप्ते कथं नाटकनिरूपणप्रकरणे अनुक्ता अत्र वीथ्यङ्गान्युष्यन्त इत्याह एतानीति । एतानि उद्घात्यकादीनि वीथ्यङ्गानि । विधेयानीति । इति हेतोरिति शेषः । विनिविष्टानि "योज्यान्यत्र" इत्यनेन विनिवेशयितुमुप दिष्टान्यपि । इह वीथ्याम् । तथा चात्र वीथ्यङ्गोक्तेरयमाशयः—वीथ्यां वीथ्यङ्गनामावश्यकत्वम्, नाटकादौ च सति सम्भवे प्रयोज्यत्वमिति । अतएव वीथाङ्गेति संज्ञाप्युपपद्यते ।

वीथीशब्दस्य व्युत्पत्तिं दर्शयति वीथ्यामिवेति । वीथ्यां पादपादिश्रेण्यां पादपादीनामिव । अत्र रूपकविशेषे नानारसानां मालरूपतया स्थितत्वादियं वीथी वीथीसंज्ञकं रूपकम् ।

## विमला

उदाहरति, प्रिय इति ।—हे प्रिय ! जीवितता—त्वद्विरहे जीवनमित्यर्थः, देहे जीवनस्थितिरिति यावत्, क्रौर्य्य—निष्ठुरता, (जीविततांक्रौर्य्यमिति समस्तपदे—जीवनकाठिन्यं, तव विरहेऽपि देहे अवस्थानात् जीवनस्य क्रूरता इति भावाः) निःस्नेहत्वं—स्नेहशून्यता, तथा कृतघ्नता—उपकारिणोऽपकारकरणं, तद्वा जीवनेन देहत्याग एव प्रत्युपकारः, तदनाचरणात् कृतघता इति तात्पर्य्यम्; त्वद्विरहे मम जीवनेनैव क्रौर्य्यादयः सुव्यक्ता इति तव विरहेऽपि देहे मम जीवनस्थितिरतीव क्लेशा वृद्धा, तस्मात् तदानीं जीवनस्य देहादपगमः श्रेयान् नो चेत् तस्य क्रौर्य्यादिकमवश्यवक्तव्यमिति भावः । भूयः,—पुनः, त्वद्दर्शनात्—तव दर्शनं प्राप्येत्यर्थः, मम एते—जीवनस्य, क्रौर्य्यादयः, गुणताम्—अनुकूलतां, गताः । अत्र दोषाणां गुणत्वम् ।

तस्या इति ।—बन्धुं प्रति विरहिणी नायकस्योक्तिरियम् । तस्याः—कान्तायाः, यौवनश्रिया—तारुण्यलक्ष्म्या, भूषितं—विराजितं, यत् रूपसौन्दर्य्यं—रूपमाधुर्य्यं, मम सुखेकायतनं—सुखस्य एकम् आयतनं—स्थानं, सुखमात्राधारमित्यर्थः, जातम्, अधुना—विरहे इत्यर्थः, तत् दुःखाय एव—दुःखप्राप्त्ये एव । अत्र गुणानां दोषत्वम् ।

## लक्ष्मी

मृदवाख्यं वीथ्यङ्गं निरूपयति—दोषा इति । यत्र दोषा गुणा गुणाश्च दोषाः स्युः तत् मृदोरिदं मृदवं संज्ञापूर्वकविधेरनित्यत्वादवृद्धयभावः नाम वीथ्यङ्गं भवेत् ।

तत्र क्व दोषा गुणा भवन्तीति उदाहरति—प्रियेति । प्रियतमविश्लेषे कथञ्चित् पुनर्मिलनाशाया जीवनं धारयन्त्याः कस्याश्चिन्नायिकायाः समागते प्रिये तं प्रत्युक्तियम् । हे प्रिय ! जीवितता तव वियोगेऽपि मम जीवनधारणं क्रौर्यं काठिन्यम्, अन्यथा तथाविधयोगजनितक्लेशात् जीवनं निःसरेदेवेत्याशयः । एवं तव वियोगे मम जीवितता निःस्नेहत्वं प्रीतिराहित्यम्, अन्यथा निःसरेदेवेत्याशयः । एवं तव वियोगे मम जीवितता निःस्नेहत्वं प्रीतिराहित्यम्, अन्यथा स्नेहातिशये सति तथाविधवियोगेन जीवनं कथं तिष्ठेन्नूनं मरणमेव स्यादिति भावः । किञ्च तव वियोगे मम जीवितत्तैव कृतघ्नता, स्मृत्युत्पादकत्वेन तव क्लेशोत्पादनात् उपकारिणः प्रत्यपकारस्यैव कृतघ्नता,

**स्वरूपत्वादित्याशयः**। भूयः पुनस्त्वद्दर्शनादेव तव दर्शनं लब्ध्वैव एते मम जीवनक्रौर्यादयो गुणतां गताः प्राप्ताः। **एवञ्च तथाविधक्रौर्यनिःस्नेहत्वयोः** स्थित्यैवाधुना मम जीवनक्रौर्यादयो गुणतां गताः प्राप्ताः। एवञ्च तथाविधक्रौर्यनिःस्नेहत्वयोः **स्थित्यैवाधुना** मम जीवनसत्त्वात् तव सङ्गमजन्यसुखप्राप्तिः, तथाविधकृतघ्नत्वादेव च त्वमधुना **गत इति तदाशयः**। अत्र क्रौर्यादयो दोषा गुणा जाता इति मृदवम्। एवमेव—

दोषस्य गुणीकरणं यथा वेण्यां कञ्चुकिना सह विवादे दुर्योधनः-प्राह—

**'गुप्तः साक्षान् महानल्पः स्वयमन्येन वा कृतः।**
**करोति महतीं प्रीतिमपकारोऽपकारिणाम्॥**

येनाद्य द्रोण—कर्ण—जयद्रथादिनिहतमभिमन्युमुपश्रुत्योच्छ्वसितमिव नश्चेतसा'

अत्र क्षत्रधर्मं परित्यज्याभिमन्युर्निहित इत्ययं दोषः स्वप्रीतिहेतुत्वेन गुणीकृतः।

अथ गुणा दोषा भवन्तीति उदाहरति—तस्या इति। कस्यचिद्विरहिणो नायकस्योक्तिरियम्। **यौवनश्रिया** तारुण्याकान्त्या भूषितम् अलङ्कृतं तस्या नायिकायाः रूपसौन्दर्यं तद्रूपलावण्यं तदा सङ्गमकाले **मम सुखैकायतनम्** आनन्दस्यैकमात्रकारणं जातम् अधुना विरहकाले तु दुःखायैव सततं स्मृत्युत्पादनेन क्लेशजननादिति भावः। अत्र यौवनश्रीप्रभृतयो गुणा दोषा जाता इति मृदवम्। यथा च वेणीसंहारे द्वितीयेऽङ्के—

'जयद्रथमाता—जात! ते खु बंघुवधामरिसुदी। विदको वा समरे अणवेकिखअसरीरा परिकमिस्संति।

राजा—(सोपहासम्) एवमेतत्। सर्वजनप्रसिद्धमेवामर्षित्वं पाण्डवानाम्। पश्य—

**हस्ताकृष्टविलोलकेशवसना दुःशासनेनाज्ञया**
**पाञ्चाली मम राजचक्रपुरतो गौगौरित व्याहता।**
**तस्मिन्नम्ब! स किं न गाण्डिवधरो नासीत् पृथानन्दनो**
**यूनः क्षत्रियवंशजस्य कृतिनः क्रोधास्पदं किं न तत्॥'**

अत्र धनुर्धरत्वादयो गुणा दोषा जाताः।

उभयमेकत्र यथा—

**'सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः**
**सर्वत्रैव जनापवादचकितास्तिष्ठन्ति दुःख सदा।**
**अव्युत्पन्नमतिः कृतेन न सता नैवासताव्याकुलो**
**युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः॥'**

अत्र सत्त्वगुणोऽपि दोषत्वं गतः, प्राकृतत्वं तु दोषोऽपि गुणतां गतः।

ननु वीथ्यङ्गानां नाटकाङ्गतया 'योज्यान्यत्र यथालाभं वीथ्यङ्गानीतराण्यपि' इत्युक्त्या नाटक एव वक्तुं युक्तम् तथा सति 'विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्' इत्युक्तत्वेनैवातिदेशात् वीथ्यामपि वीथ्यङ्गप्राप्तेः कथं नाटकनिरूपणप्रस्तावेऽभिधायात्र वीथ्यङ्गानि प्रतिपाद्यन्त इत्यत आह—एतानीति। एतानि उद्घात्यकादीनि वीथ्यङ्गानि। **विधेयानि** कर्त्तव्यानि इति हेतोरिति शेषः। विनिविष्टान्यपि 'योज्यान्यत्र यथालाभम्' इत्यनेन विनिवेशयितुं प्रतिपादितान्यपि। इह वीथ्यामित्यर्थः। एवञ्चात्र वीथ्यङ्गोक्तेरयमभिप्रायः—अत्र कीर्त्तनात्तेषामावश्यकत्वम् अन्यत्र नाटकादौ चानियतत्वमिति। वीथीपदस्य व्युत्पत्तिमुपपादयति—वीथीवेति। वीथ्यां वृक्षादिपंक्त्यां वृक्षा-

दीनामिवेत्यर्थः । अत्र रूपकविशेषे नानारसानां मालारूपतयावस्थितात्वादियं वीथीत्यन्वयः । वीथीनामकं रूपकमित्यर्थः । अत्र दशरूपककृता त्वित्थमुक्तम्—

**चित्रे यत्रोक्तिप्रत्युक्ती स्यातामाकाशभाषितैः ।**
**कथञ्चिद्वाऽप्यनेकार्थसूचनं वीथिका च सा ॥**

यथा बालरामायणे—'(आकाशे कर्णं दत्वा) किं ब्रूथ ? विलक्षणेन सता कर्णाटिन तेन निर्मर्यादमिदमुदितम्, यदुताखण्डप्रसरा हि पुरुषकाराः कर्णाटानाम् । तथाहि—

अहमेषहरिष्यामि परिणेतुः पुरोऽपि ताम् । नारिपरिभवं सोढुं दाक्षिणात्या न शिक्षिता ।

(अञ्जलिं बध्वा) तदिदं मयाऽपि निवेद्यते यदि हि परिणामि—

अपि द्वीपान्तरादेव हृतां प्रत्याहरामि ताम् । कलत्रहरणे पुंसां कियदर्णवलङ्घनम् ॥

इति...(सहर्षम्) अनुकूलं हि दैवं सर्वस्मै स्वस्ति करोति यत् प्रस्तुतसंवादी देवादेशः ।...इति । यथा वा अनर्घराघवे (आकाशे कर्णं दत्वा) किं ब्रूथ ? वैदेशिको भवान् असमंग्रपात्रकथनमीदृशे कर्मणि प्रगल्भते ? (विहस्य सप्रश्रयमञ्जलिं बद्धवा) हन्त ! भोः किमेवमुदीर्यते ? भवद्विधानामाराधिनीवृत्तिरेव मे पात्राणि संग्रहिष्यन्ति । यतः—

**यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।**
**अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥**

('पुनराकाशे कर्ण दत्वा) किं ब्रूथ ? तर्हि प्रहितेयमस्माभिः पत्रिका । इति (प्रविश्य)

नटः—पत्रिकां ददाति सूत्रधारो गृहीत्वा वाचयति'.....इति ।

## रुचिरा

मार्दवं लक्षयति—५९१ **यत्र** यस्मिन् वाक्ये । **दोषाः** । **गुणा** गुणात्मना निर्दिष्टाः । **गुणाः** 'पुनः' इति शेषः । **दोषा** दोषात्मना निर्दिष्टाः । **स्युः** । बहुवचनमविवक्षितम् । तत् । 'द्विभेद' मिति शेषः । मार्दवम् ! हि किल । । ५६० ॥

उदाहरति—**क्रमेणानुपौर्व्येण** । **यथा—"हे प्रिय ! जीवितताक्रौर्य्यं** जीवितताया जीवनस्य क्रौर्य्यं काठिन्यं धाष्टर्यमिति यावत् । **निःस्नेहत्वं** स्नेहशून्यता । एवम् । **कृतघ्नता** । **मम** । **एते** 'दोषा' इति शेषः । **भूयः** पुनः । **त्वद्दर्शनात्** तव दर्शनं प्राप्य । **एव** । **गुणतां** गुणात्वमत्वम । **गताः** । विदेशतो बहोः कालादायातं प्रियं तत्प्रियाया उक्तिरियम्, तथा च—प्रिय ! तव विरहे जीवनमनावश्यकमिति अस्य निर्गमयुक्तत्वेऽपि यदनेन धाष्टर्यमवलम्बितं, तथा—स्नेहाधारस्यानवस्थितौ स्नेहाभावस्य प्रत्यक्षसिद्धत्वात्, निःस्नेहत्वम्, एवम् उपकारिण उपकारं विस्मृत्य तत्सेवनार्थमनुगमनाभावः कृतघ्नता, इत्येते दोषा अपि सांप्रतं तव दर्शनं प्राप्य गुणभूताः, अन्यथाऽमोदानुत्पत्तेः । इति निष्कृष्टोऽर्थः ॥ ३३८ ॥"

"**तस्याः** परलोकं यातायाः प्रियतमाया इति भावः । **तत्** । **यौवनश्रिया** । **भूषितम्** । **सुखैकायतनमानन्द**स्यैकमात्रं पात्रम् । **रूपसौन्दर्य** रूपे सौन्दर्य्यं मनोहरम् । **मम** तया वञ्चितस्य । **अधुना** तद्विरहे । **दुःखाय** । **एव** । **जातम्** । अत्र सुखानुभवैकाधारभूतस्य सुन्दरीसौन्दर्य्यस्य गुणस्य दुःखकारित्वाभिधानाद्दोषात्मना परिणामः ॥ ३३९ ॥"

ननु एतानि त्रयोदशाङ्गानि यद्यन्यत्रापि सम्भवन्ति, तत् कथमेतेषां वीथीसम्बन्धित्वम् ? इत्याशङ्क्याह—**एतानि चेत्यादि**। स्पष्टम्। अस्याःसञ्ज्ञानिमित्तं दर्शयति—**वीथीव** पङ्क्तिरिव। 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी' त्यमरः। **नानारसानां च**। (भावानां च)। अत्र अस्मिन् रूपके। **मालारूपतया** मालारूपेण। **स्थितत्वात्**। **इयम्**। (विधेयलिङ्गतयायं निर्देशः)। **वीथी** तदाख्यं रूपकमिति भावः। उदाहरति-**यथे**त्यादिना। **यथा। मालविका,** नतु 'मालविकाऽग्निमित्रम्' इति शङ्क्यम्, एतस्य नाटकतयैव व्यपदिष्टत्वात्।

अथ प्रहसनम्—

**भाणवत्संधिसंध्यङ्गलास्याङ्गाङ्कैर्विनिर्मितम्।**

**भवेत्प्रहसनं वृत्तं निन्द्यानां कविकल्पितम्॥ २६४॥**

**अत्र नारभटी, नापि विष्कम्भकप्रवेशकौ।**

**अङ्गी हास्यरसस्तत्र वीथ्यङ्गानां स्थितिर्न वा॥ २६५॥**

**तपस्विभगवद्विप्रप्रभृतिष्वत्र नायकः।**

---

## विवृतिः

प्रहसनमिति। भाणवदिति। भाणे यथा मुखनिर्वहणे संधी, नानासंध्यङ्गानि, दश लास्यानि, एकोऽङ्कस्तथात्रापीत्यर्थः॥

तपस्वीति। अत्र प्रहसने तापसादिषु मध्ये कश्चिन्नायको वाच्यः। भगवान् संन्यासी।

## विवृतिपूर्तिः

वृत्तमिति। इतिवृत्तनिष्पादने विशेषो नाट्यशास्त्रे—'लोकोपचारयुक्ता या वार्ता यश्च दम्भसंयोगः। तत्प्रहसनेषु योज्यं पूर्वोक्तविवादसंयुक्तम्॥' इति॥

## कुसुमप्रतिमा

भाणवदिति। भामवङ्काणाख्यं रूपकमिव मुखनिर्वहणाभ्यां सन्धिभ्यां यथासम्भवं सन्ध्यङ्गैर्लास्याङ्गैः एकेनाङ्केन च विनिर्म्मितम्, कविकल्पित निन्द्यानां निन्दनीयानां जनानां वृत्तमुपाख्यानं प्रहसन नाम रूपकं भवेत्, प्रकृष्टं हसत्यनेनेति व्युत्पत्तेः। अत्र प्रहसने आरभटी वृत्तिर्न स्यात्, तथा विष्कम्भकप्रवेशकामपि न स्याताम्। तत्र प्रहसने हास्यरसः अङ्गी प्रधानः। वाशब्दश्चार्थे। वीथ्यङ्गानाञ्च स्थितिर्न स्यात्।

तपस्वीति। तपस्विनः कृच्छ्रचान्द्रायणादिव्रतचारिणः भगवन्तो ब्रह्मज्ञादयः विप्राश्च तत्प्रभृतिषु मध्ये, एकः कश्चिदत्र प्रहसने नायको भवेत्। अस्य च शुद्धं सङ्कीर्णं विकृतमिति च भेदत्रयम्।

## विमला

प्रहसनमाह, भाणवदिति।—भाणवत्—भाण इव, सन्धिना, सन्ध्यङ्गैः, लाभ्याङ्गैः, अङ्केन च विनिर्मितं—योजितमित्यर्थः, तथा कविना कल्पितं—स्वप्रतिभया उद्भाविते, निन्द्यानां वृत्तं प्रहसनं भवेत्। इतिवृत्तनिष्पादने नियमो यथा भरतशास्त्रे,—"लोकोपचारयुक्ता वा वार्त्ता यश्च दम्भसंयोगः। तत्प्रहसनेषु योज्य धूर्त्तोक्तविवादसंयुक्तम्॥" इति।

तत्र विशेषमाह, अत्रेति ।—अत्र प्रहसने, आरभटी वृत्तिर्न, प्रयोज्येति शेषः वीथ्यङ्गना स्थितिः,—अवस्थानं, न वा—नैव, अथवा,—वीथ्यङ्गानां स्थितिः,—नियतेत्यर्थः । अत्र—प्रहसने, तपस्वत्यादिषु मध्ये कश्चित् नायको वाच्यः । तव अयवच्छब्देन सन्यासौ प्रोच्यते । अन्यत् सुगमम् ।

## लक्ष्मी

प्रहसनं निरूपयति—भाणवदिदि । भाणवत् भाणाख्यरूपके यथा मुखनिर्वहणे सन्धीनानासन्ध्यङ्गानि, दशलास्यानि, एकोऽङ्कस्तथात्रापि मुखनिर्वहणाभ्यां सन्धिभ्यां यथासम्भवं सन्ध्यङ्गैर्लास्यङ्गैः एकाङ्केन च विनिर्म्मितम्, कविकल्पितं न तु पुराणेतिहासप्रसिद्धंनिन्द्यानां निन्दनीयानां लोकानां वृत्तं वृत्तान्तं प्रकृष्टं हसत्यनेनेति प्रहसनं नाम रूपकं भवेत् । अत्र विशेषोऽभिहितो मुनिना—

**'लोकोपचारयुक्ता या वात्ता यश्च दम्भसंभोगः ।**

**तत्प्रहसनेषु योज्यं पूर्वोक्तविवादसंयुक्तम् ।।' इति ।**

अत्र प्रहसने आरभटीवृत्तिर्न भवेत्, तथा विष्कम्भकप्रवेशकावपि न भवेताम् । तथा प्रहसने हास्यरसः अङ्गी मुख्यः । अत्र चार्थे वा शब्दस्तथा च वीथ्यङ्गनाञ्च स्थितिरवस्थानं न भवेत् ।

तपस्वीति । अत्र प्रहसने तपस्विनः यतिकृच्छ्रचाद्राणसन्तपनादिव्रतानुष्ठानविधायिनः भगवन्तस्तत्त्वविदः विप्राब्राह्मणाः तत्प्रभृतिषु मध्ये एकः कश्चिन्नायको भवेत् ।

## रुचिरा

प्रहसनं लक्षयितुमाह—**अथ । प्रहसनम् ।** लक्ष्यते ५९२ **भाणवदित्यादिना ।**

५९ **भाणवत्** भाण इव । **सन्धि-सन्ध्यङग**-लास्याङ्ग ङ्कैः । **विनिर्मितम् ।** भाणो यथा—मुखनिर्वहणसन्धिद्वयेन यथासम्भवमुपक्षेपादिभिः सन्ध्यङ्गैः, सर्वैश्च लास्याङ्गैः, एकेनाङ्केन च निर्मितस्तथानिर्मितमिति भावः । **प्रहसनम् । भवेत् । अत्र । कविकल्पितम् ।** 'नतु चिरात् प्रसिद्धम्'इति भावः । **निन्द्यानाम् । वृत्तम् ।** 'निवेश्य'मिति शेषः । **आरभटी** तदाख्या वृत्तिः न किन्तु तद्भिन्ना भारत्यादय एवाश्रयणीया इति भावः । **विष्कम्भकप्रवेशकौ** तदाख्यौ प्रस्तावनाभेदौ । **अपि । न । तत्र । अङ्गी** प्रधानभूतः **हास्यरसः । वीथ्यङ्गनामुद्धातकादीनाम् । स्थितिः ।** 'भवे'दिति शेषः । **वाऽथवा । न ।** वीथ्यङ्गानां स्थितिरनियतेति भावः ।

**एको यत्र भवेद्धृष्टो हास्यं तच्छुद्धमुच्यते ॥**

**यथा कंदर्पकेलिः ।**

---

## विवृतिः

प्रहसनस्य शुद्धसंकीर्णविकृतत्वभेदेन त्रैविध्यमाह—एक इति । धृष्टः प्रगल्भः । 'नायकः' इत्यनुषज्यते । हास्यं प्रहसनम् ।॥

## कुसुमप्रतिमा

तत्र प्रथम भेदमाह एकेति । यत्र धृष्टः प्रागुक्तलक्षणी नायको भवेत् तत् हास्यं हासविषयीभूतं प्रहसनं शुद्धमुच्यते, शुद्धस्य केवलस्य धृष्टनायकस्य विषयत्वादिति भावः ।

## विमला

प्रहसनस्य भेदत्रयं वक्तमारभते, एक इत्यादि ।—यत्र एकः,—मुख्याः, नायक इत्यर्थः, धृष्टः,—प्रगल्भः, भवेत्, तत् हास्यं—प्रहसनं, शुद्धम् उच्यते ।

## लक्ष्मी

अस्य च भेदत्रयम्—शुद्धं सङ्कीर्णं विकृतमिति च । तत्राद्यं शुद्धं लक्षयति—एक इति । यत्र धृष्टः पूर्वाभिःहितस्वरूपो नायको भवेत् तत् हास्यं हास्यविषयीभूतं प्रहसनं शुद्धमुच्यते तस्य केवलं धृष्टनायकविषयत्वादिति भावः । दशरूपके तु—

## रुचिरा

**तपस्विभगवद्विप्रप्रभृतिषु**, तपस्वी (ब्रह्मचारी) च भगवान् (संन्यासी) च विप्रः (वेदवेत्ता ब्राह्मणः) चेति ते प्रभृतावादौ येषां (याज्ञिकादीनाम्) तेषु लक्षणया तथा प्रतीयमानेषु धर्मध्वजेष्वित्यर्थः । निर्धारणार्थेयं सप्तमी । 'कश्चि'दिति शेषः । अत्र प्रहसने । **नायकः** । । ५६१ ॥ ५६२ ॥

अस्य शुद्धाख्यं भेदमाह—५९३ **यत्र** । **एकः** । **धृष्टः** । 'नायक'इति शेषः । **भवेत्** । **तत्** । **शुद्धम्** । **हास्यं** तत्प्रधानं प्रहसनम् । **उच्यते** । । ५६३ ॥

अस्य शुद्धाख्यं भेदमाह—५९३ **यत्र** । **एकः धृष्टः** । 'नायक'इति शेषः । **भवेत्** । **तत्** । **शुद्धम्** । **हास्यं** तत्प्रधानं प्रहसनम् । **उच्यते** । । ५६३ ॥

उदाहरति-**यथे**त्यादिना । स्पष्टम् ।

**आश्रित्य कंचन जनं संकीर्णमिति तद्विदुः ॥ २६६ ॥**

यथा धूर्तचरितम् ।

**वृत्तं बहूनां धृष्टानां संकीर्णं केचिदूचिरे ।**

**तत्पुनर्भवति० द्व्यङ्कमथवैकाङ्कनिर्मितम् ॥ २६७ ॥**

यथा—लटकमेलकादिः ।

मुनिस्त्वाह—

**'वेश्याचेटनपुंसकविटधूर्ता बन्धकी च यत्र स्युः ।**

**अविकृतवेषपरिच्छदचेष्टितकरणं तु संकीर्णम् ॥' इति ।**

---

## विवृतिः

कंचन धृष्टभिन्नं नायकमाश्रित्य यत्प्रहसनं क्रियते तत्संकीर्णमित्यर्थः ॥

वृत्तमिति । 'यत्र तत्' इति पूरणीयम् । तत्संकीर्णप्रहसनम् ।

यत्र वेश्यादयो वर्णनीयाः स्युस्तदविकृतवेषादीनां करणमनुकरणं प्रहसनम् । संकीर्णमित्यर्थः ॥

## विवृतिपूर्तिः

लटकेति । लटको दुर्जन इत्युणादिसूत्रवृत्तावुज्ज्वलदत्तः । लटकानां मेलको यत्रेति लटकमेलंक प्रहसनम् ॥

## कुसुमप्रतिमा

सङ्कीर्णमाह आश्रित्येति । कञ्चन धृष्टभिन्नं जनं नायकम् आश्रित्य यत् प्रहसनं जायते तत् सङ्कीर्णमिति विदुः । अनियतनायकसङ्करात् सङ्कीर्णम् ।

मतान्तरे सङ्कीर्णमाह वृत्तमिति । केचित् बहूनां नायकानां वृत्तमुपाख्यानं सङ्कीर्णं नाम प्रहसनमुचिरे उक्तवन्तः ।

तत्तादृशं सङ्कीर्णं प्रहसनं पुनद्वयद्धम् अङ्कद्वयघटितम् अथवा एकेनाङ्केन विनिर्म्मितं भवति ।

वेश्येति । यत्र प्रहसने वेश्यादयो वर्णिताः स्युः, तथा यत्र अविकृतानां स्वाभाविकानां वेशानां परिच्छदानां चेष्टितानामाचरणाञ्च करणं विधानं स्यात्, तत् प्रहसनं सङ्कीर्णम् ।

विकृतमिति । यत्र षण्डी नपुंसकम्, कञ्चुकी वारवाणधारी, तापसश्चैते भुजङ्गो विटः, चारणी नटः, भटो योद्धा प्रभृतिशब्दात् राजपुरुषादयश्च तेषां वेशवाग्भिः परिच्छदभाषाभिर्युताः सन्तः अभिनयन्ति तत्तु विकृतं नाम प्रहसनं विदुः । विकृतरूपयप्रयुक्ताभिनयात्मकत्वाद्विकृतमिति संज्ञा ।

ननु विकृताख्यप्रहसनस्य साम्प्रदायिकत्वे कथं सम्प्रदायप्रवर्त्तकमरतेन नोक्तमित्याह इदंन्त्विति । गतार्थं प्राप्तविषयम् । वेश्याचेटेयादिनाट्यशास्त्रीयकारिकायां विटाद्यभिनयमात्रेणैव सङ्कीर्णत्वाभिप्रायादिति भावः ।

## विमला

सङ्कीर्णमाह, आश्रित्येति ।—कञ्चन जनं—धृष्टभिन्नं नायकम्, आश्रित्य, यत् हास्यं क्रियते इति शेषः, तत् सङ्कीर्णम् इति विदुः ।

मतान्तरे सङ्कार्णमाह, वृत्तमिति । — यत्र बहूनां धृष्टानां वृत्तं— चरिकु तत् केचित् सङ्कीर्णम ऊचिरे— उक्तवन्तः, तत्— सङ्कीर्णप्रहसनं, पुनः ह्यङ्कम्— अङ्कद्वयघटितं, वा एकैनेव अङ्केन निर्मितं भवति ।

उदाहरति, यथेति ।—लटकानां—दुर्जनानां, मेलकं तदादिः । ["लटकी दुर्जनः" इत्युणादिसूत्रवृत्तावुज्ज्वलदत्तः] "नटकमेलकादिः" इति पाठान्तरन्तु न साधु ।

वेश्येति ।—यत्र—प्रहसने, वेश्याऽऽदयः स्युः,—वर्णनीया भवेयुरित्यर्थः तथा तेषामविकृतानां— यथाऽवस्थितानामिति भावः, वेशानां, परिच्छब्दानां चेष्टितानाञ्च करणम्—अनुकरणमित्यर्थः, तत् सङ्कीर्णम् ।

## लक्ष्मी

'भवेत्प्रहसनं यत्र हास्याधानाय धृष्टता । विरुद्धैर्वेषवाक्केलिचेष्टितैर्वा प्रसादनम् ।

यथा मृच्छकटिके—अविद अविद भो ! चिरसंगीदो वासणेन सुक्खनपोक्करणालाई विअसे वुभुक्खाए मिलाणाई अङ्गाई ता जाव गेहं गदुअ जाणामि अत्थि किं पि कुटुंबिणीए उबबादिदंण वेत्ति' इत्युक्तम् ।

सङ्कीर्णं लक्षयति—आश्रित्य इति । कञ्चन धृष्टभिन्नं जनं नायकमाश्रित्य यत् प्रहसनं भवति तत्सङ्कीर्णमिति विदुः । अनिश्चितनायकैः सङ्कीर्णत्वात् सङ्कीर्णम् ।

केषाञ्चिन्मतेन सङ्कीर्णं प्रदर्शयति—वृत्तमिति । केचित् बहूनां धृष्टानां नायकानां वृत्तं वृत्तान्तं यत्र तत् सङ्कीर्णं नाम प्रहसनमूचिरे कथितवन्तः । तत्तथाविधं सङ्कीर्णं प्रहसनं पुनर्द्वयम्, अङ्कद्वययुक्तम् अथवा एकाङ्केन विनिर्मितं कविना रचितं भवति । लटकमेलकादिरिति । लटको दुर्जन इत्युणादिसूत्रविवरणे उज्ज्वलदत्त आह । तथा च लटकानां मेलको यत्र तत् लटकमेलकं नाम प्रहसनम् ।

वेश्याचेटेति । यत्र प्रहसने वेश्यादयो वर्णनीयाः स्युः तथा यत्र अविकृतानां प्राकृतानां वेशानां परिच्छदानां चेष्टितानामाचारणानाञ्च करणमनुकरणं स्यात् तत् प्रहसनं सङ्कीर्णम् ।

## रुचिरा

सङ्कीर्णाख्यं भेदमाह—५९४ **कञ्चन** धृष्टं धूर्तं वा कमपीति भावः । **जनम्** । **आश्रित्य** नायकतयाऽवस्थाप्योत्पादितमिति भावः । **तत्** पूर्वोक्तलक्षणाक्रान्तं प्रहसनम् । **सङ्कीर्णम्** । **इति** । **विदुः** । 'आचार्या' इति शेषः ।

उदाहरति—**यथेत्यादिना** । स्पष्टम् ।

अत्र परमतं निर्दिशति—५९५ **बहूनाम्** । **धृष्टानाम्** । 'यत्रे'ति शेषः । **वृत्तम्** । 'तत्प्रहसन'मिति शेषः । **सङ्कीर्णम्** । **केचित्** । **ऊचिरे** कथितवन्तः ॥ ५६४ ॥

अत्र विशेषं निर्दिशति—**५९६ तत्** निरुक्तलक्षणं **सङ्कीर्णं प्रहसनम्**। **पुनः**। **व्यङ्कम्**। **अथवा**। **एकविनिर्मितमेकाङ्कम्**। **भवति**।

उदाहरति—**यथेत्यादिना**। स्पष्टम्। आदिना-हास्यार्णवादीनां ग्रहणम्।

नाट्यशास्त्रकारमतं दर्शयितुमाह—**मुनिर्भरतः**। **तु**। **आह**—"**यत्र**। **वेश्याचेटनपुंसकविटधूर्ताः**। **च तथा**। **बन्धकी** पुंश्चली। 'वर्ण्यमाना' इति शेषः। **स्युः**। 'त'दिति शेषः। **अविकृतवेशपरिच्छदचेष्टितकरणमविकृतानि** सम्भवीनि वेशपरिच्छदचेष्टितकरणानि यत्र तादृशम् (करणं चरितम्)। **तु**। **सङ्कीर्णम्**॥' इति।

**विकृतं तु विदुर्यत्र षण्ढकञ्चुकितापसाः ।**
**भुजंगचारणभटप्रभृतेर्वेषवाग्युताः ॥ २६८ ॥**

इदं तु संकीर्णेनैव गतार्थमिति मुनिना पृथङ्नोक्तम् ।

---

## विवृतिः

इदं तु विकृतप्रहसनं तु ॥

## विमला

विकृतमिति ।—यत्र षण्डकञ्चुकितापसाः भुजङ्गस्य—विटस्य, चारणस्य—नटस्य, भटप्रभृतेश्च वेशयुक्ताः वचनयुक्ताश्च, भवेयुरिति शेषः, तत् (हास्यमिति पूर्वतोऽनुवृत्तं) विकृतं विदुः ।

## लक्ष्मी

विकृतं निरूपयति—विकृतन्त्विति । यत्र षण्डः क्लीबः कञ्चुकी वारवारणधारी तापसश्च ते तथोक्ताः, भुजङ्गो विटः, 'भुजङ्गो विटसर्पयोः' इत्यमरः, चारणो नटः, भटो योद्धा, प्रभृतिपदात् राजभृत्यादयश्च तेषां वेशवाग्भिः परिच्छदभाषाभिर्युताः सन्तः अभिनयन्ति तत्तु विकृतरूपप्रयुक्तभिनयात्मकत्वाद्विकृतं नाम प्रहसनं विदुः ।

ननु विकृताख्यप्रहसनस्य सर्वैरवाङ्गीकृतत्वेन कथं महर्षिणा भरतेन नाभिहितमित्यत आह—इदन्त्विति । विकृतं प्रहसनन्त्वित्यर्थः । गतार्थं लब्धविषयम् । वेश्याचेटेत्यादि भरतकारिकायां विटाद्यभिनयमात्रेणैव सङ्कीर्णत्वप्राप्तेरिति भावः ।

## रुचिरा

अस्य विकृताख्यं भेदं लक्षयति—५९७ **भुजङ्गचारणभटप्रभृतेर्भुजङ्गः** (वेश्याऽनुरक्तः) च चारणः (नटविशेषः) च भटश्चेति ते प्रभृतौ यस्य (चेटादेः) तस्य । **वेशवाग्युताः । षण्डकञ्चुकितापसाः । यत्र** । 'तदि'ति शेषः । **तु । विकृतं** तत्प्रभेदभिन्नं प्रहसनमित्यर्थः । **विदुः** ॥ ५६५ ॥

अस्य च मुनिमतेन सङ्कीर्णप्रभेदे प्रहसने एवान्तर्भाव इत्याह—**इमं** चेत्यादिना । स्पष्टम् । एवं रूपकाणि लक्ष्यलक्षणाभ्यां निरूप्योपरूपकाणि निरूपयितुमाह—**अथेत्यादि** ।

अथोपरूपकाणि । तत्र—

**नाटिका क्लृप्तवृत्ता स्यात्स्त्रीप्राया चतुरङ्किका ।**

**प्रख्यातो धीरललिततस्तत्र स्यान्नायको नृपः ॥ २६९ ॥**

**स्यादन्तः पुरसंबद्धा संगीतव्यापृताथवा ।**

**नवानुरागा कन्यात्र नायिका नृपवंशजा ॥ २७० ॥**

**संप्रवर्तेत नेतास्यां देव्यास्त्रासेन शङ्कितः ।**

**देवी भवेत्पुनर्ज्येष्ठा प्रगल्भा नृपवंशजा ॥ २७१ ॥**

**पदे पदे मानवती तद्वशः संगमो द्वयोः ।**

**वृत्तिः स्यात्कैशिकी स्वल्पविमर्शाः संधयः पुनः ॥ २७२ ॥**

द्वयोर्नायिकानायकयोः । यथा—रत्नावली—विद्धशालभञ्जिकादिः ।

---

## विवृतिः

नाटिकामाह—नाटिकेति । क्लृप्तवृत्ता कविकल्पितनायकचरित्रा ।

स्त्रीप्राया नटीबहुला । प्रख्यातो लोके प्रसिद्धः । तत्र नाटिकायाम् । अस्यां नाटिकायाम् ।

स्वल्पविमर्शाः विमर्शहीनाः । 'नायकनायिकयोः' इत्येकशेषाभावश्चिन्त्यः ॥

## कुसुमप्रतिमा

नाटिकेति । क्लृप्तं कविनैवोद्भावितं वृत्मुपाख्यानं यस्याः सा, स्त्रीप्राया स्त्रीजातिबहुला, अत्व रोऽङ्कगा यस्यां सा एवं रूपा नाटिका स्यात् । तत्र नाटिकायां प्रख्यातः प्रसिद्धनामा धीरललिदतस्तल्लक्षणान्वितो नृपो नायकः स्यात् । तथा अन्तःपुर एव सम्बद्धा आबद्धा अथवा सङ्गीते बहिरपि नृत्यगीतवाद्येषु व्यापृता आसक्ता नवानुरागा नृपवंशजा कन्या अत्र नाटिकायां नायिका स्यात् । नेता नायकः देव्या महिष्यास्त्रासेन शङ्कितः सन् अस्यां नायिकाभूतायां कन्यायां सम्प्रवर्त्तेत व्यवहरेत् । देवी सा च महिषौ प्रगल्भा प्रागुक्तलक्षणा नृपवशजा ज्येष्ठा नायिकातोऽधिकवयस्कापदे पदे मानतो च भवेत् । द्वयोर्नायकनायिकयोः सङ्गमः तदृशो देव्या अधीनः । कौशिकौ वृत्तिः स्यात् स्वल्पः स्तोकमात्रो विमर्षो विमर्षसन्धिर्येषु ते तथा सङ्गमः तदृशो देव्या अधीनः । कौशिकौ वृत्तिः स्यात् स्वल्पः स्तोकभात्रो विमर्षो विमर्षसन्धिर्येषु ते तथा भूताः पुनर्मुखादयश्चत्वार एव सन्धयः स्युः ।

## लक्ष्मी

नाटिकां निरूपयति—नाटिकेति । क्लृप्तं कविनैव कल्पितं वृत्तं वृत्तान्तो यस्याः सा तथोक्ता कविकल्पितनायकचरित्रेत्यर्थः । स्त्रीप्राया नटी बहुला, चत्वारोऽङ्का यस्यां सा तथोक्ता, नाटिका स्यात् । तत्र नाटिकायां प्रख्यातो लोके प्रसिद्धः धीरललितस्तल्लक्षणान्वितो नृपो नायकः स्यात् । तथा अन्तःपुर एव सम्बद्धा आबद्धा,

अथवा सङ्गीते बाह्योऽपि नृत्यगीतवाद्यादौ व्यापृता अनुरक्ताः, नवानुरागा नृपवंशजा राजकुलोत्पन्ना कन्या अत्र नाटिकायां नायिका स्यात् । नेता नायकः देव्याः पट्टरारयास्त्रासेन भयेन शङ्कितो भीतः सन् अस्यां नायिकारूपायां कन्यायां सम्प्रवर्त्तेत व्यवहारं कुर्यात् । देवी सा न पट्टराज्ञी प्रगल्भा पूर्वोक्तस्वरूपा नृपवंशजा राजकुलोत्पन्ना ज्येष्ठा नायिकातोऽधिकावस्थाका पदे पदे मानवती उक्तलक्षणो मानस्तद्वती न भवेत् । द्वयोर्नायकयोः सङ्गमः तद्वशः पट्टरारया आयत्तः । कौशिकीवृत्तिः स्यात्, स्वल्प अत्यल्पः विमर्शः विमर्शसन्धिर्यत्र ते तथोक्ता पुनर्मुखादयश्चत्वार सन्धयः स्युः ।

कारिकां सुगमयितुं 'द्वयो'रित्यस्यार्थं दर्शयति—द्वयोरिति । द्वयोर्नायकनायिकयोरित्येकशेषश्चिन्त्यः ।

## रुचिरा

**अथ । उपरूपकाणि ।** लक्ष्यन्ते **तत्र** ।

५९८ **क्लृप्तवृत्ता**ऽप्रसिद्धचरितपूर्णा । **स्त्रीप्राया** स्त्रीप्रचुरा । **चतुरङ्किका** चतुरङ्का । **नाटिका । स्यात् । तत्र** तस्यां नाटिकायाम् । **प्रख्यातो** लोके प्रख्यातनामा । **धीरललितः । नृपः । नायकः । स्यात् । अत्रास्मिन्नायके । नवानुरागा । नृपवंशजा** राजनन्दिनी । **कन्या**ऽप्रौढा । **अन्तःपुरसम्बन्धा** कथमपि अन्तःपुरे प्राप्तेति भावः । **अथवा सङ्गीतव्यापृता** सङ्गीतचतुरा । 'सती'ति शेषः । **नायिका । स्यात् । अस्यां** नायिकायाम् 'पुन'रिति शेषः । **देव्या** ज्येष्ठाया राज्ञयाः । **त्रासेन** कोपातङ्केन शङ्कितः । 'स'न्निति शेषः । **नेता** नायकः । **सम्प्रवर्त्तेतानु**रक्तोऽनुगतो भवेत् । **देवी । पुनः प्रगल्भा** समस्तकलाप्रवीणा । **नृपवंशजा** राजनन्दिनी । **पदेपदे** पुनः पुनरिति भावः । **मानवती** दर्शित-कोपा । **ज्येष्ठा** प्रथमं परिणीता । **भवेत् । तद्वशस्तस्या** वश इच्छा यत्र (प्रधानभूता) तादृशः । **द्वयोस्तस्याः** 'कन्यायास्तस्य च राज्ञ इति भावः । **सङ्गमः** । 'कीर्त्तनीय' इति शेषः । तथा-**कौशिकी । वृत्तिः स्यात् । स्वल्पविमर्शाः** प्रायेण विमर्शरहिताः, सत्यावश्यके किञ्चिद्विमर्शेनापि सहिता इति भावः । **पुनः । सन्धयः** । 'निरूप्या' इति शेषः ॥ ५६६-५६९ ॥

कारिकां सुगमयितुं 'द्वयो'रित्यर्थं विवृणोति-**द्वयो**रित्यादिना । स्पष्टम् ।

उदाहरति—**यथे**त्यादिना । स्पष्टम् ।

अथ त्रोटकम्—

**सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम्।**

**त्रोटकं नाम तत्प्राहुः प्रत्यङ्कं सविदूषकम्॥ २७३॥**

प्रत्यङ्कसविदूषकत्वादत्र शृङ्गारोऽङ्गी। सप्ताङ्कं यथा—स्तम्भितरम्भम्। पञ्चाङ्कं यथा—विक्रमोर्वशी।

---

## विवृतिः

त्रोटकमाह—सप्तेति। सप्तादीनामन्यतमा अङ्का यत्र।

दिव्यमानुषसंश्रयं दिव्यादिव्यनायकम्॥

## कुसुमप्रतिमा

सप्तेति। सप्त अष्टौ नव पञ्च वा अङ्का यस्मिन् तत्, दगिव्यमानुषसंश्रयं देवमानुषोभयचरित्र विषयम्, तथा प्रत्यङ्कं सर्वेष्वङ्केषु विदूषकेण सहेति सविदूषकं यदुपरूपकम् तत् त्रोटकं नाम प्राहुः त्रोटयति निजोत्कर्षेमान्वरूपकं खर्वीकरोतीति व्युत्पत्तेः। अत्र सर्वस्मिन्नेवाङ्के विदूषकस्यावश्यकत्वे स्पष्टार्थे सर्वाङ्के सविदूषकम्" इत्येवाभिदध्यात्, तदनभिधानाञ्च कुत्रचित् विदूषकाभावेऽपि त्रोटकत्वं भवत्येवेति विक्रमोर्वस्यां प्रथमचतुर्थाद्वयोर्विदूषकाभावेऽपि नाव्याप्तिः।

प्रत्यङ्गमिति। विदूषकस्य शृङ्गारिनायकसहायत्वादिति भावः।

## विमला

त्रोटकमाह, सप्तेति।—सप्त वा, अष्टौ वा, नव वा, पञ्च वा अङ्का यत्र तथोक्तं, दिव्यमानुषसंश्रयं—देवमनुष्यसम्बद्धं, दिव्यादिव्यनायकमिति यावत्, प्रत्यङ्कं, सविदूषकं—विदूषकचरित्रसहितं, यत् नाट्यमिति शेषः, तत् त्रोटकं नाम प्राहुः।

## लक्ष्मी

त्रोटकं निरूपयति—सप्ताष्टेति। सप्त अष्टौ नव पञ्च वा अङ्का यत्र तत्तथोक्तम्, दिव्य मानुषसंश्रयं दिव्यादिव्योभयचरित्रविषयम्, तथा प्रत्यङ्कं सर्वाङ्केषु विदूषकेण सहितं सविदूषकं यदुपरूपकं तत् त्रोटयति स्वोत्कर्षेण रूपकान्तरं लघूकरोतीति त्रोटकं नाम प्राहुः। ननु 'प्रत्यङ्कं सविदूषकम्' इत्यनेन सर्वस्मिन्नेवाङ्के विदूषकस्यावश्यम्भावित्वात् विक्रमोर्वश्याः प्रथमचतुर्थाङ्कयोस्तदसत्त्वेनाव्याप्तिरिति चेत्? मैवम्। तथा सति स्पष्टप्रतिपत्तये 'प्रत्यङ्कं सविदूषकम्' इत्यस्य स्थाने 'सर्वाङ्के सविदूषकम्' इत्यस्येव वक्तव्यत्वे तथानभिधानात् क्वापि विदूषकाभावेऽपि त्रोटकत्वस्याक्षत्वेनाभ्युपगमात् तथा च तत्र नाव्याप्तिरिति भावः।

प्रत्यङ्कमित्यादिना बोधनीयमर्थान्तरमुपपदायति—प्रत्यङ्कमिति । विदूषकस्य शृङ्गारिनायकसहायत्वादित्याशयः । अष्टाङ्कं नवमाङ्कञ्चान्यतोऽनुसन्धेयम् ।

## रुचिरा

त्रोटकं लक्षयितुमाह-**अथ । त्रोटकम्** । लक्ष्यते ५९९ **सप्ताष्टनवपञ्चाङ्क**सप्त वाऽष्ट वा नव वा पञ्च वाऽङ्का यत्र तादृशम् । **दिव्यमानुषसंश्रयं** दिव्यमानुषयोः संश्रयो नायिकानायकत्वेन यत्र तादृशम् । **प्रत्यङ्कमङ्केऽङ्के । सविदूषकं** विदूषकोपस्थितिकम् । **तत्** प्रसिद्धम् । **त्रोटकम् । नाम** 'उपरूपक'मिति शेषः । **प्राहुः** । । ५७० ॥

प्रत्यङ्कमित्यादिना बोधनीयमर्थान्तरं दर्शयति—**प्रत्यङ्कमित्यादिना** । स्पष्टम् ।

उदाहरति—**सप्ताङ्कमित्यादिना** । स्पष्टम् । 'अष्टाङ्क नवाङ्कं चोह्य'मिति शेषः ।

अथ गोष्ठी।

**प्राकृतैर्नवभिः पुंभिर्दशभिर्वाप्यलंकृता।**
**नोदात्तवचना गोष्ठी कैशिकीवृत्तिशालिनी॥ २७४॥**
**हीना गर्भविमर्शाभ्यां पञ्चषड्योषिदन्विता।**
**कामशृङ्गरसंयुक्ता स्यादेकाङ्कविनिर्मिता॥ २७५॥**

यथा—रैवतमदनिका।

---

## विवृतिः

गोष्ठीमाह—प्राकृतैरिति।

नातिविदग्धैरित्यर्थः। पञ्चभिः षड्भिर्या योषिद्भिरन्विता। डप्रत्ययस्यानित्यत्वात्तद्रूपसिद्धिः।

## विवृतिपूर्तिः

पञ्चेति। 'पञ्चषस्त्रीसमन्विता' इति साधीयान् पाठः॥

## कुसुमप्रतिमा

प्राकृतेरिति। प्राकृतैः साधारणशिक्षितैः नवभिर्दशभिर्वा पुंभिः पुरषैरलङ्कृता साधारणशिक्षितपुरुषपात्रत्वादेव न विद्यते उदात्तं संस्कृतं वचनं यस्यां सा। अत्र "गमिकर्म्मोकृतनैकनीता" इत्यादिवत् समासेऽपि नकारस्थितिः। कौशिकीवृत्तिशालिनी, अतएव कामश्रृङ्गारेण प्रागुक्तप्रकारेण संयुक्ता, गर्भविमर्षाभ्यां सन्धिभ्यां हीना, पञ्चभिः षड्भिर्वायोषिद्भिरन्विता, तथा एकेनाङ्केन विनिर्म्मिता गोष्ठी स्यात्। दशानामेव पुरुषाणां सभारूपत्वेन गोष्ठीति संज्ञा।

## विमला

गोष्ठीमाह, प्राकृतैरिति।—प्राकृतैः,—नातिविदग्धैः। नोदात्तवचना—संस्कृतान्धभाषिणी। पञ्चभिः षड्भिर्वा योषिड्भिरन्विता। [डच्प्रत्ययस्यानित्यत्वात्तदूपसिड्धिः] कामश्रृङ्गारः प्रागुक्तः। अन्यत् स्पष्टम्।

## लक्ष्मी

गोष्ठीं निरूपयति—प्राकृतैरिति। प्राकृतैः नातिविदग्धैः साधारणशिक्षितैरिति यावत्, नवभिर्दशभिर्वा पुंभिर्नायकैरलङ्कृता शोभिता, नातिविदग्धनायकपात्रादेव न विद्यते उदात्तं संस्कृतं वचनं वाक्यं यत्र सा तथोक्ता, नैकधेत्यादिवत् समासेऽपि नकारस्य विद्यमानत्वमवगतव्यम्। कौ (कै)शिकीवृत्तिशालिनी, तेन कामश्रृङ्गारेण पूर्वदर्शितस्वरूपेण संयुक्ता संहिता, गर्भविमर्शाभ्यां सन्धिभ्यां हीना शून्या, पञ्चभिःषड्भिर्वा योषिद्भिर्नायिकाभि-

रन्विता युक्ता डट्प्रत्ययस्यानित्यत्वाद्रूपसिद्धिर्बोध्या तथा एकेन अङ्केन विनिर्मिता रचिता, दशानामेव पुंसा सभारूपत्वेन गोष्ठीत्वात् गोष्ठी स्यात् उदाहरति—**यथेति**। **स्पष्टम्**।

## रुचिरा

गोष्ठीं लक्षयितुमाह—**अथ**। **गोष्ठी**। लक्ष्यते ६०० **प्राकृतैरनतिचतुरैः**। **नवभिः**। **पुम्भिर्नायकैः**। वाऽथवा। **दशभिः**। **अपि** 'पुम्भि' रिति पूर्वतोऽन्वेति। **अलंऽकृता** वर्णितचरिता। **नोदात्तवचना**ऽनुदारवर्णनासंस्कृतेतरभाषामयी वा। **कौशिकवृत्तिशालिनी**। **गर्भविमर्शाभ्यां** तदाख्याभ्यां सन्धिविशेषाभ्याम्। **हीना**। **षट्पञ्चयोषिदन्विता** षड्भिः पञ्चभिर्वा योषिद्भिरन्विता। **कामश्रृङ्गारसंयुक्ता** न तु धर्म्मार्थश्रृङ्गारवर्णनशालिनीति भावः। **एकाङ्कविनिर्मितै**काङ्का। **गोष्ठी**। **स्यात्**॥ ५७१ ॥ ५७२ ॥

उदाहरति—**यथेत्यादिना**। स्पष्टम्।

अथ सट्टकम्—

**सट्टकं प्राकृताशेषपाठ्यं स्यादप्रवेशकम्।**

**न च विष्कम्भकोऽप्यत्र प्रचुरश्चाद्भुतो रसः ॥ २७६ ॥**

अङ्का जवनिकाख्याः स्युः स्यादन्यन्नाटिकासमम्।

यथा—कर्पूरमञ्जरी।

---

## विवृतिः

कामशृङ्गारः प्रागुक्तः (३५६ पृ.) ॥ सट्टकमाह—सट्टकमिति ॥

## कुसुमप्रतिमा

सट्टकमिति। प्राकृतंल संस्कृतभिन्नम् अशेषं समस्तं पाठ्यं वाक्यं यस्मिन् तत्, न विद्यते प्रवेशको यत्र तत् तादृशमुंपरूपकं सट्टकं स्यात्। अत्रार्थे सट्टकमिति रूढ़शब्दः अत्र सट्टके विष्कम्भकश्च न स्यात्, किञ्च प्रचुरी बहुलः अद्भुतो रसः स्यात्। अङ्का जवनिकाख्याः स्युः यत्राङ्कस्तत्र यवनिकासब्दो व्यवहर्त्तव्यः। अन्यत् क्लृप्तवृत्तत्वादिकं नाटिकासमं स्यात्।

## विमला

सट्टकमाह, सट्टकमिति।—प्राकृतं—संस्कृतादन्यत् अशेषं—समस्तं, पाठ्यं,—वाक्यं यस्मिन् तत्, अप्रवेशकं—प्रवेशकवर्जित, प्रचुरः,—बहुलः जवनिकाख्याः अङ्काः स्युः,—अङ्कस्थाने जवनिकाशब्दः प्रयोज्यः। इत्यर्थः। अन्यत्—अङ्कसङ्ख्यादिकम्।

## लक्ष्मी

सट्टकं निरूपयति—सट्टकमिति। प्राकृतं संस्कृतातिरिक्तम् अशेषं समग्रं पाट्यं श्लोकादिकं यत्र तत्तथोक्तम्, न विद्यते प्रवेशकः प्रागुक्तो लक्षणो यत्र तत्तथोक्तमुपरूपकं स्यात्। सट्टकशब्दश्चात्रार्थे गोमण्डलादिवद्रूढिर्बोध्यः। अत्र सट्टके विष्कम्भकश्च प्रागुक्तलक्षणो न स्यात्, क़िन्तु प्रचुरोऽधिकः अद्भुतो रसः स्यात्। अङ्का जवनिकाख्याः स्युः यत्राङ्कस्तत्र जवनिकाशब्दो व्यवहार्यः। अन्यत् अङ्कसंख्यादिकं नाटिकासमं स्यात् नाटिकायां यथा तथात्रापीत्यर्थः। उदाहरति—यथेति। इदमपि स्पष्टमेव।

## रुचिरा

सट्टकं लक्षयितुमाह—**अथ**। **सट्टकम्**। लक्ष्यते ६०१ **प्राकृताशेषपाठ्यं** प्राकृतं प्राकृतभाषामयमशेषं पाठयं यत्र तादृशम्। **अप्रवेशकं** प्रवेशकाख्यया प्रस्तावनया हीनम्। **सट्टकम्**। **स्यात्**। अत्र सट्टके। **विष्कम्भकस्तदाख्या** प्रस्तावना। **अपि**। नच नैव। **प्रचुरः** प्रधानभूतः। **च**। **अद्भुतः**। **रसः**। **अङ्काः**। **जवनिकाऽऽख्याः**। **स्युः**। अङ्कस्थाने जवनिकाशब्दो निवेश्य इति भावः। **अन्यदङ्कसङ्ख्याऽऽदिकम्**। **नाटिकासमं** यथा नाटिकायां तथाऽत्रापि ज्ञेयमिति भावः। **स्यात्**।। ५७३ ॥ ५७४ ॥

उदाहरति—**यथेत्यादिना**। स्पष्टम्।

अथ नाट्यरासकम्—

**नाट्यरासकमेकाङ्कं बहुताललयस्थिति ॥ २७७ ॥**

**मुखनिर्वहणे संधी लास्याङ्गानि दशापि च ।**

**केचित्प्रतिमुखं संधिमिह नेच्छन्ति केवलम् ॥ २७९ ॥**

तत्र संधिद्वयवती यथा—नर्मवती । संधिचतुष्टयवती यथा—विलासवती ।

---

## विवृतिः

नाट्यरासकमाह—नाट्यरासकमिति । तालः कालः क्रियामानं लयः साम्यम्' इत्यमरः ।

पीठमर्दलक्षणं प्रागुक्तम् (२०१ पृ.) । नारी नायिका । वासकसज्जिका प्रागुक्ता । (१२३ पृ.) ॥

## लोचन

तालः चञ्चुपुटादिः । पीठमर्दोऽत्रैवोक्तप्रकारः । गीतं भरतादि प्रसिद्धम् ।

## कुसुमप्रतिमा

नाट्येति । एकोऽङ्को यस्मिन् तत्, बहूनां ताललयानां स्थितिर्यस्मिन् तत्, उदात्तो धीरोदात्तो नायको यत्र तत्, तद्वत् तथा पीठमर्द्दः प्रागुक्तलक्षण उपनायको यस्मिन् तत् तादृशमुपरूपकं नाट्यरासकं स्यात्, नाट्यमभिनयं रासयति सभ्येभ्यो रोचयतीति व्युत्पत्तेः । अत्र नाट्यरासके श्रृङ्गारेण सहेति सश्रृङ्गारो हास्यो रसः अङ्गी प्रधानः । वासकसज्जिका । वासकसज्जा नाम प्रागुक्तलक्षणा नारी नायिका । मुखं निर्वाहणञ्च ते द्वे सन्धौ स्याताम् । दशापि च लास्याङ्गानि स्युः । केचित् इह नाटयरासके केवलं प्रतिमुखं सन्धि न इच्छन्ति अन्यांश्चतुरः सन्धीस्तु इच्छन्त्ये-वेत्यर्थः ।

## विमला

नाट्यरासकमाह, नाट्यति ।—वह्वी तालस्य—कालक्रियामानस्य, लयस्य—साम्यस्य च, स्थितिर्य-स्मिन् तत्, (तालः कालक्रियामानं लयः साम्यम" इत्यमरः) उदात्तनायकम्—"अविकत्थनः क्षमवान्" इत्याद्युक्तल-क्षणधीरोदात्तनायकयुतं, पीठमर्दः,—"दूरानुवर्त्तिनि स्यात्तस्य" इत्याद्युक्तलक्षणः नायकात् किञ्चित् गुणहीनः सहायविशेषः, उपनायकः,—नायकसहकारी यत्र तत्; सशृङ्गारः,— शृङ्गाररससहितः, हास्यः अत्र अङ्गी— प्रधानं, नारी— नायिका, वासकसज्जिका—"कुरुते मण्डनं यस्याः" इत्याद्युक्तलक्षणा । केचिदिति ।—केचित्, पण्डिता इति शेषः, प्रतिमुखसन्धिं वर्जयित्वा मुखनिर्वहणगर्भविमर्षाख्याः चत्वारः सन्धय इच्छन्ति इत्यर्थः । अन्यत् स्पष्टम् ।

## लक्ष्मी

मुखं निर्वहणञ्च ते द्वे अपि सन्धी भवेताम् । दशापि च लास्याङ्गानि भवेयुः । केचित् इह नाट्यरासके केवलं प्रतिमुखं सन्धिं नेच्छन्ति नाभिलषन्ति तदतिरिक्तांश्चतुरः सन्धींस्तु इच्छन्त्येवेत्यर्थः ।

सन्धिद्वययुक्तं सन्धिचतुष्टयुक्तञ्च यथाक्रममुदातुमाह—तत्रेति । स्पष्टम् ।

## रुचिरा

नाट्यरासकं लक्षयितुमाह—**अथ । नाट्यरासकम्** । लक्ष्यते ६०२ **एकाङ्कम् । बहुताललयस्थिति** बह्वीताललयस्थितिर्यत्र तादृशम् । ताललययोः स्थितिरिति ताललयस्थितिः ।'तालः कालक्रियामानो लयः साम्य'मित्यमरः । **उदात्तनायकं** धीरोदात्तनायकाधिष्ठितम् । **तद्वत् । पीठमर्दोपनायकं** पीठमर्दं उपनायको नायकसहायो यत्र तादृशम् । **नाट्यरासकम् । अत्र** नाट्यरासके । **सशृङ्गारः । हास्यो** हास्यरसः । **अङ्गी । वासकसज्जिका** वासकसज्जा । **नारी** नायिका । **मुखनिर्वहणे** तदाख्यो । **सन्धी** । च तथा । **दश । अपि । लास्याङ्गानि** । 'भवन्ती'ति शेषः । **केचित्** । 'पुनरि'ति शेषः । **इह** नाटयरासके । **केवलम् । प्रतिमुखम् । सन्धिम्** । न । **इच्छन्ति,** किन्तु तद्भिन्नाः सर्वेऽपि मुखादयः सन्धयः सम्भवन्तीति भावः ॥ ५७५ ॥ ५७६ ॥

उदाहरति—**तत्रे**त्यादिना । स्पष्टम् । सन्धिद्वयवतीति त्वपपाठः, नाटयरासकविशेषणत्वे स्त्रीप्रत्ययान्तताऽनुपपत्तेः । एवं परत्रापि ।

अथ प्रस्थानकम्—

**प्रस्थाने नायको दासो हीनः स्यादुपनायकः ।**
**दासी च नायिका वृत्तिः कैशिकी भारती तथा ॥ २८० ॥**
**सुरापानसमायोगादुद्दिष्टार्थस्य संहृतिः ।**
**अङ्कौ द्वौ लयतालादिर्विलासो बहुलस्तथा ॥ २८१ ॥**

यथा शृङ्गारतिलकम् ।

---

## विवृतिः

प्रस्थानकमाह—प्रस्थान इति । संहृतिः समापनम् ॥

## कुसुमप्रतिमा

प्रस्थान इति । प्रतिष्ठन्ते रसबाहुल्येन धावन्ति सहृदयानां मनांस्यस्मिन्निति प्रस्थान तदाख्योपरूपकविशेषस्तस्मिन् दासः किङ्करो नायकः ही दासादपि निकृष्टजातिरूपनायकः स्यात् । नायिका च दासी । कौशिकी तथा भारती च वृत्तिः । सुरापानसमायोगात् मद्यपानसम्बन्धमाश्रित्य कविना उद्दिष्टार्थस्रा प्रक्रान्तविषयस्य संहतिरूपसंहारः कर्त्तव्येति शेषः । द्वावङ्को, लयतालादिः, तथा बहुलो विलासः प्रागुक्त लक्षणश्च भवेत् ।

## विमला

प्रस्थानमाह, प्रस्थाने इति ।—हीनः,—दासादपि इतर इत्यर्थः । सुरापानसमायोगात्—मद्यपानवशात्, उद्दिष्टस्य—प्रस्तुतस्य, अर्थस्य—इतिवृत्तस्य, संङ्गतिः,—समापनम् । अन्यत् सुगमम् ।

## लक्ष्मी

उदाहरति—यथेति । शृङ्गारतिलकमिति । निरुक्तलक्षणानाक्रान्तत्वान्नेदं कालिदासकृतमिति सुधियो विभावयन्तु ।

## रुचिरा

प्रस्थानं लक्षयितुमाह—**अथ । प्रस्थानम्** लक्ष्यते ६०३ **प्रस्थाने** तदाख्य उपरूपके । **दासः** शूद्रः । **नायकः । हीनो** दासादपि निष्कृष्टः । **उपनायकः । स्यात् । दासी । च । नायिका । कौशिकी । वृत्तिः । तथा । भारती** तदाख्या वृत्तिः स्यादित्यर्थः । **सुरापानसमायोगात् ।** मद्यपानसम्बन्धं पुरस्कृत्येति भावः । ल्यबर्थेयं पञ्चमी । **उद्दिष्टार्थस्य** प्रस्तुतस्येतिवृत्तस्य । **संहृतिः** समाप्तिः । **द्वौ । अङ्कौ । तथा लयतालादिः** । आदिना स्वरादीनां ग्रहणम् । **बहुलः । विलासः** 'वर्णनीय' इति शेषः ॥ ५७७ ॥ ५७८ ॥

उदाहरति—**यथेत्यादिना । स्पष्टम्** । नेदं कालिदासकृतम्ष अस्य निरुक्तलक्षणानाक्रान्तत्वात् ।

अथोल्लाप्यम्—

**उदात्तनायकं दिव्यवृत्तमेकाङ्कभूषितम्।**

**शिल्पकाङ्गैर्युतं हास्यश्रृङ्गारकरुणै रसैः ॥ २८२ ॥**

**उल्लाप्यं बहुसंग्राममस्त्रगीतमनोहरम्।**

**चतस्रो नायिकास्तत्र त्रयोऽङ्का इति केचन ॥ २८३ ॥**

शिल्पकाङ्गानि वक्ष्यमाणानि। यथा—देवीमहादेवम्।

---

## विवृतिः

उल्लाप्यमाह—उदात्तेति। दिव्यवृत्तं दिव्यनायकोचितचरित्रं यत्र।

अन्यसंमतमुल्लाप्यमाह—उल्लाप्यमिति।

अस्त्रगीतेन त्रिपदीगीतेन मनोहरम् ॥

## कुसुमप्रतिमा

उदात्तेति। उदात्तो धीरोदात्तो नायको यत्र तत्, दिव्यं स्वर्गीयं वृत्तमुपाख्यानं यत्र तत्, एकेनाङ्केन भूषितम्, शिल्पकाङ्क्षैर्वक्ष्यमाणैराशंसादिभिः सप्तविंशत्यायुतम्, हास्यश्रृङ्गारकरुणै रसैश्च युतम्, वहवः संग्रामा यत्र तत्।

तथा—"उत्तरोत्तररूपं यत् प्रस्तुतार्थपरिष्कृतम्। अन्तर्जवनिकं गीतमसंगीतं तदुच्यते ॥"

इत्युक्तलक्षणेनास्त्रगीतेन मनोहरं रूपकम् उल्लाप्यं स्यात्, उल्लाप्यते रसवत्त्वादुत्कर्षेण पठ्यते यत्तदिति व्युत्पत्तेः। तत्र उल्लाप्ये चतस्रो नायिकाः स्युः। केचन तु तत्र त्रयोऽङ्का इति वदन्ति।

उदात्तेति। उदात्ती धधीरोदात्तो नायकी यत्र तत् दिव्यं स्वर्गीयं वृत्तमुपाख्यानं यत्र तत्, एकेनाङ्केन भूषितम्, शिल्पकाङ्क्षेर्वक्ष्यमामैराशंसादिभिः सप्तविंशत्यायुतम्, हास्यश्रृङ्गारकरुणै रसैश्च युतम्, बहवः संग्रामा यत्र तत्।

तथा—"उत्तरोत्तररूपं यत् प्रस्तुतार्थपविष्कृतम्। अन्तर्जवनिकं गोतमस्त्रगीतं तदुच्यते ॥"

इत्युक्तलक्षणेनास्त्रगीतेन मनोहरं रूपकम् उल्लाप्यं स्यात्, उल्लाप्यते रसवत्त्वादुत्कर्षेण पठ्यते यत्तदिति व्युत्पत्तेः। तत्र उल्लाप्ये चतस्री नायिकाः स्युः। केचन तु तत्र त्रयोङ्का इति वदन्ति।

## विमला

उल्लाप्यमाह, उदात्तेति।—उदात्तः,—धीरोदात्तः, नायको यत्र तत्, दिव्यवृत्तं—दिव्यनायकोचितचरित्र-युक्तम्, एकेनाङ्केन भूषितं, शिल्पकाङ्गैः, वक्ष्यमाणैरिति शेषः, तथा हास्येन श्रृङ्गारेण करुणेन च रसेन युतं, बहुसङ्ग्रामं—बहुविधसङ्ग्रामवर्णनसम्पन्नं, व्यस्त्रेण—विभागेन इति भावः, गीतेन, यद्वा,—त्रिपदीगीतेन, मनोहरम्। ["अस्त्रगीतमनोहरम्" इति पाठान्तरे तु—अस्त्रगीतेन—"उत्तरोत्तररूपं यत् प्रस्तुतार्थपरिष्कृतम्। अन्तर्जव-

निकं गीतमस्त्रगीतं तदुच्यते ॥" इत्युक्तेन गीतविशेषेण, मनोहरम्] केचन, पण्डिता इति शेषः, इदम उल्लाप्यं, वदन्तीति शेषः ।

## लक्ष्मी

उल्लाप्यरूपमुपरूपकं निरूपयति—उदात्तनायकमिति । उदात्तो धीरोदात्तो नायको यस्मिन् तत्तथोक्तम्, दिव्यवृत्तं स्वर्गीयनायकोचितवृत्तान्तं यत्र तत्तथोक्तम्, एकाङ्केन भूषितम् अलङ्कृतम्, शिल्पकाङ्गैर्वक्ष्यमाणैराशंसनादिभिः सप्तविंशत्या युतं सहितम्, हास्यश्रृङ्गार—करुणैश्च युतं संयुक्तम्, बहवोऽनेका सङ्ग्रामा युद्धा यत्र तत्तथोक्तम् । तथा—

**उत्तरोत्तररूपं यत् प्रस्तुतार्थपरिष्कृतम् ।**
**अन्तर्जवनिकं गीतम् संगीतं तदुच्यते ॥**

इत्युक्तलक्षणेनास्त्रगीतेन मनोहरं सुन्दरं रूपकम् उल्लाप्यं भवेत् । तत्र उल्लाप्ये चतस्रो नायिकाः भवेयुः । केचन तु तत्रोल्लाप्ये त्रयोऽङ्का इत्याहिः ।

## रुचिरा

उल्लाप्यं लक्षयति—**अथ** । **उल्लाप्यं** लक्ष्यते ६०१ **उदात्तनायकं** धीरोदात्तो नायको यत्र तादृशम् । **दिव्यवृत्तं** स्वर्गीयेतिवृत्तशालि । **एकाङ्कभूषित**मेकाङ्केन भूषितम् । **शिल्पकाङ्गैः** । **युतम्** । तथा—**हास्यश्रृङ्गारकरुणैः । रसैः** । 'युत'मिति पूर्वतोऽन्वेति । **बहुसङ्ग्रामं** सङ्ग्रामवर्णनप्रचुरम् । **अस्त्रगीतमनोहरम्** । "उत्तरोत्तररूपं यत् प्रस्तुतार्थपरिष्कृतम् ।.अन्तर्जवनिकं गीतमस्त्रगीतं तदुच्यते ॥" इत्युक्तलक्षणेनास्त्रगीतेन मनोहरम् । त्रयस्त्रगीतेति पाठे तु 'त्रयस्त्रो विरामस्त्रिकल' इति भरतोक्त्या त्रयस्त्रं त्रिकलं यद्गीतं तेन मनोहरमित्यर्थः । **उल्लाप्यम्** । **तत्रोल्लाप्याख्य** उपरूपके । **चतस्रः** । **नायिकाः** । **त्रयः** 'पुन'रिति शेषः । **अङ्काः** । **इति** । **केचन** । 'प्राहु'रिति शेषः । अयम्भावः—चतुर्नायिकं त्रयङ्कम्' इति केषाञ्चिन्मतं न तु सर्वेषाम् । इति ॥ ५७९ ॥ ५८० ॥

कारिकां सुगमयितुमाह—**शिल्पकाङ्गानीत्यादि** । स्पष्टम् । उदाहरति—**यथेत्यादिना** । स्पष्टम् ।

अथ काव्यम्—

**काव्यमारभटीहीनमेकाकं हास्यसंकुलम्।**

**खण्डमात्राद्विपदिकाभग्नतालैरलंकृतम्॥ २८४॥**

**वर्णमात्राछगणिकायुतं श्रृङ्गारभाषितम्।**

**नेता स्त्री चाप्युदात्तात्र संधी आद्यौ तथान्तिमः॥ २८५॥**

यथा—यादवोदयम्।

---

## विवृतिः

काव्यमाह—काव्यमिति।

खण्डमात्रादयो गीतप्रभेदाः। वर्णमात्राछड्डुलिके छन्दोविशेषौ।

श्रृङ्गारभाषितं श्रृङ्गारसूचकम्। नेता उदात्तः। नायिकाप्युदात्तेत्यन्वयः॥

## विवृतिपूर्तिः

अस्त्रेति। 'उत्तरोत्तररूपं यत्प्रस्तुतार्थपरिष्कृतम्। अन्तर्जवनिकं गीतमस्त्रगीतं तदुच्यते॥' इति॥

वर्णेति। 'वर्णमात्राच्छगणिकायुतं' इति पाठः साधीयान्। अत एव काव्येन्दु प्रकाशे—'वर्णमात्रस्वच्छवेश्यायुतं' इत्यादि तल्लक्षणं प्रतिपाद्य 'वर्णमात्रस्वच्छा न तु मनः स्वच्छा' इति व्याख्यातम्॥

## लोचन

खण्डमात्रादय आकरेषु बोद्धव्याः। आदौ मुखप्रतिमुखे। अन्तिमो निर्वहणम्।

## कुसुमप्रतिमा

काव्यमिति। आरभट्या प्रागुक्तलक्षणया वृत्त्या हीनम्, एकोऽङ्को यत्र तत्, हास्येन सङ्कुलं व्याप्तम्, खण्डमात्रा द्विपदिका भग्नतालानि गीतविशेषाः भरतोक्तास्तैरलङ्कृतम्, वर्णमात्रा वड्डुलिका च छन्दविशेषो ताभ्यां युक्तम्, श्रृङ्गारेण रसेन भाषितं यस्मिन् तत् तादृशञ्चोपरूपकं काव्यं स्यात्, कवेः कर्मेति व्युत्पत्तेः। अत्र काव्ये नेता नायक उदात्तो धीरोदात्तः, स्त्री नायिका च उद्यात्ता धीरोदात्ता, तथा आद्यौ मुखप्रतिमुखाक्यौ सन्धौ तथा अन्तिमो निर्वहणञ्च सन्धिर्भवेत्।

## विमला

काव्यमाह, काव्यमिति।—आरभटौ—वृत्तिविशेषः, तया हीनम्। खण्डमात्रा-द्विपदिका-भग्नतालैः,—तदाख्यगीतविशेषैरित्यर्थः, वर्णमात्रा तथा छउडलिका—छन्दोभेदौ ताभ्यां युतं, ["वर्णमात्राच्छगणिकायुतम्" इति पाठान्तरे तु,—वर्णमात्रेण अच्छा—स्वच्छा, या गणिका तथा—तच्चरितेनेत्यर्थः, युतम्। मात्रपदेन मनसो

व्यवच्छेदः । अत एवोक्तं काव्येन्दुप्रकाशकता,—"वर्णमात्रस्वच्छवेश्यायुतम्" इति, "वर्णमात्रस्वच्छा न तु मनःस्वच्छा" इति तदर्थः; "वर्णमात्राङ्गुलिकायुतम्" इति पुस्तकान्तरे पाठस्तु नितान्तमसत्, छन्दोभङ्गस्यापि सङ्भावात्] श्रृङ्गारभाषितं—श्रृङ्गारसूचकवाक्यसमन्वितम्; नेता—नायकः, उदात्तः, स्त्री—नायिका च, उदात्ता । अत्र—काव्ये, आद्यौ—मुखप्रतिमुखे इत्यर्थः, अन्तिमः,—निर्वहणमित्यर्थः । अन्यत् सुगमम् ।

## लक्ष्मी

काव्यरूपमुपरूपकं निरूपयति—काव्यमिति । आरभटया पूर्वोक्तस्वरूपया वृत्त्या हीनं रहितम्, एकोऽङ्को यस्मिन् तत्तथोक्तम्, हास्येन हास्यरसेन सङ्कुलं व्याप्तम्, खण्डमात्रा, द्विपदिका, भग्नतालानि गीतप्रभेदाः महर्षिणोक्तास्तैलङ्कृतं भूषितम्, वर्णमात्राछड्डुलिके छन्दोविशषौ ताभ्यां युक्तम्, श्रृङ्गारेण रसेन भाषितं तत्र तत् श्रृङ्गारसूचकमित्यर्थः, तथोक्तञ्चोपरूपकं कवेः कर्मेति काव्यं भवेत् । अत्र काव्ये नेता नायक उदात्तो धीरोदात्तः स्त्री नायिका च उदात्ता धीरोदात्ता तथा आद्यौ मुखप्रतिमुखनामानौ सन्धी तथान्तिमो निर्वहणञ्च सन्धिः स्यात् ।

## रुचिरा

काव्यं लक्षयितुमाह—**अथ । काव्यं** तदाख्यमुपरूपकम् । लक्ष्यते ६०५ **आरभटीहीन**मारभटीव्यतिरिक्तभारत्यादिवृत्तिशालीत्यर्थः । **एकाङ्कम् । हास्यसङ्कुलं** हास्यरसपूर्णम् । **खण्डमात्राद्विपदिकाभग्नातालैस्त**दाख्यैर्गीतैरित्यर्थः । **अलङ्कृतम् । वर्णमात्राच्छगणिकायुतं** वर्णमात्रेण नतु चारित्रयेण अच्छा या गणिका तया युतम् । **श्रृङ्गारभाषितं** श्रृङ्गारेण तद्व्यञ्जकेन वाक्येन भाषितम् । **काव्यं** तदाख्यमुपरूपकं स्यात् । **अत्र** । नेता 'उदात्त' इति लिङ्गव्यत्ययेनान्वेति । धीरोदात्तः । **स्त्री** नायिका । **च । अपि । उदात्ता** धीरोदात्तलक्षणा । **आद्यौ** मुखप्रीतमुखाख्यौ इत्यर्थः । **सन्धी । तथा । अन्तिमोऽन्ते** भवो निर्वहणाख्यः सन्धिर्ज्ञेय इति भावः ॥ ५८१ ॥ ५८२ ॥

उदाहरति—**यथे**त्यादिना । स्पष्टम् ।

अथ प्रेङ्खणम्—

**गर्भावमर्शरहितं प्रेङ्खणं हीननायकम्।**

**असूत्रधारमेकाङ्कविष्कम्भप्रवेशकम्॥ २८६॥**

**नियुद्धसम्फेटयुतं सर्ववृत्तिसमाश्रितम्।**

**नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना॥ २८७॥**

यथा—वालिवधम्।

---

## विवृतिः

प्रेङ्खणमाह—गर्भावमर्शेति। अवमर्शो विमर्शाख्यसंधिः।

हीननायकं नीचनायकम्। सम्फेटो रोषभाषणम्। ननु सूत्रधाररहितं चेन्नान्दी केन पाठ्या प्ररोचना वा केन कार्येत्यत आह—नेपथ्येति।

गीयते पठ्यते। तत्र नेपथ्ये। प्ररोचना च भारत्या वृत्तेरङ्गविशेषः। सा कविपरिषदादीनां प्रशंसया सामाजिकानामुन्मुखीकरणम्।

तथा चात्र नेपथ्यस्थेन येन केनापि नटेन नान्दी पाठ्या प्ररोचना च कर्तव्येति भावः॥

## लोचन

नियुद्धं बाहुयुद्धमं। सम्फेटो रोषभाषणम्।

## कुसुमप्रतिमा

गर्भेति। गर्भविमर्षाभ्यां सन्धिभ्यां रहितम्, हीनो निकृष्टो नायको यत्र तत्, न विद्यते सूत्रधारो यत्र तत्, एक एवाङ्गी यस्मिन् तत्, न विद्येते विष्कम्भप्रवेशकी यत्र तत्, नियुद्धेन बाहुयुद्धेन सम्फेटेन रोषभाषणेन न युतम्, तथा सर्वाभिश्चतसृभिः कौशिक्यादिभिर्वृत्तिभिः समाश्रितं समन्वितम् उपरूपकं प्रेङ्क्षणं स्यात्, प्रेङ्क्षाते रसानुभवानन्दन हृदयमान्दोल्यते अनेनेति व्युतपत्तेः। असूत्रधारत्वादेव अत्र प्रेङ्क्षणे नान्दी तथा प्ररोचना नेपथ्ये केनचिन्नटेन गीयते पठ्यते।

## विमला

प्रेङ्खणमाह, गर्भेति।—गर्भावमर्षरहितं—गर्भविमर्षसन्धिद्वयवर्जितं, हीनः—प्राकृतः, नायको यद तत्, नीचनायकमित्यर्थः, नियुद्धं—बाहुयुद्धं, तथा सम्फेटः—सरोषभाषणं ताभ्यां युतं, सर्वाभिः वृत्तिभिः—कौशिक्यादिभिः, समाश्रितं—युक्तम्। केन नान्दी पाठ्या? प्ररोचना वा केन कार्य्या? इत्याह, नेपथ्ये इति।—गीयते—पठयते। तत्र—नेपथ्ये, प्ररोचना—भारत्या वृत्तेरङ्ग्वशेषः, सा च कविपरिषदादीनां प्रशंसया सामाजिकानाम् उन्मुखकरणम्। तथा चात्र नेपथ्यस्थेन येन केनचित् नटेन नान्दी पठनीया, प्ररोचना च कर्त्तव्या इति भावः।

## लक्ष्मी

उदाहरति—यथेति। प्रेङ्खणरूपमुपरूपकं निरूपयति—**गर्भावमर्शेति**। गर्भो गर्भसन्धिः।

अवमर्शो विमर्शाख्यसन्धिस्तथा च गर्भविमर्शाभ्यां रहतं शून्यम्, हीनो नीचो नायको यत्र तत्तथोक्तम्, न विद्यते सूत्रधारो यत्र तत्तथोक्तम्, एक एवाङ्को यत्र तत् तथोक्तम्, नियुद्धेन द्वन्द्वयुद्धेन सम्फेटेन रोषभाषणेन च युतम्, तथा सर्वाभिश्चतसृभिः कौशिक्यादिभिर्वृत्तिभिः समाश्रितं संयुक्तम् उपरूपकं प्रेङ्क्षते रसानुभवामोदेन चित्तमान्दोल्यते अनेनेति प्रेङ्खणं स्यात्। ननु सूत्रधाररहितं चेन्नान्दी तदा केन पाठया? प्ररोचना वा केन विधेया? इत्यत आह—नेपथ्येति। असूत्रधारत्वादेव नान्दी तथा प्ररोचना तत्र नेपथ्ये केनचिन्नटेन गीयते पठयते। प्ररोचना च भारत्या वृत्तेरङ्गविशेषः। तथा च सा कविपरिषदादीनां प्रशंसया सहृदयानामुन्मुखीकरणम्। एवञ्च नेपथ्यस्थेन येन केनापि नटेन नान्दी पाठया प्रचोरना च विधेयेति भावः।

## रुचिरा

प्रेङ्खणं लक्षयितुमाह—अथ।

**प्रेङ्खणम्**। लक्ष्यते ६०६ **गर्भावमर्शरहितं** गर्भविमर्शाख्यसन्धिभिन्नसन्धियुतम्। **हीननायकं** हीनो नीचो नायको यत्र तत्। **असूत्रधारं** सूत्रधारप्रवेशशून्यम्। **एकाङ्कम्**। **अविष्कम्भप्रवेशकं** विष्कम्भप्रवेशकव्यतिरिक्तार्थोपक्षेपकयुतम्। **नियुद्धसम्फेटयुतं** नियुद्धं (युद्धं) च सम्फेटः (रोषभाषणं) च ताभ्यां युतम्। **सर्ववृत्तिसमाश्रितं** सर्वाभिर्भारत्यादिभिर्वृत्तिभिः सम्पन्नम्। **प्रेङ्खणं** तदाख्यमुपरूपकम्। **तत्र** तस्मिन् प्रेङ्खणे। **नेपथ्ये** जवनिकायाम्। **नान्दी**। **गीयते**। **तथा**। **प्ररोचना** कविप्रभृतिप्रशंसनं 'गीयत' इति पूर्वतोऽन्वेति ॥ ५८३ ॥ ५८४ ॥

उदाहरति—**यथे**त्यादिना। स्पष्टम्।

अथ रासकम्—

**रासकं पञ्चपात्रं स्यान्मुखनिर्वहणान्वितम्।**

**भाषाविभाषाभूयिष्ठं भारतीकैशिकीयुतम्॥ २८८॥**

**असूत्रधारमेकाङ्कं सवीथ्यङ्गं कलान्वितम्।**

**श्लिष्टनान्दीयुतं ख्यातनायिकं मूर्खनायकम्॥ २८९॥**

**उदात्तभावविन्याससंश्रितं चोत्तरोत्तरम्।**

**इह प्रतिमुखं संधिमपि केचित्प्रचक्षते॥ २९०॥**

यथा मेनकाहितम्।

---

## विवृतिः

रासकमाह—रासकमिति।

उदात्तभावस्य नायकमहत्त्वस्य विन्यासेन वर्णनेन संश्रितम्॥ संलापमाह—संलापक इति। 'प्रियाभैर-प्रियैर्वाक्यैर्विलोभ्यच्छलना छलम्' इत्युक्तलक्षणं छलम् (३६० पृ.)।

## कुसुमप्रतिमा

रासकमिति। पञ्च पात्राणि जना यत्र तत्, मुखनैर्वहणाभ्यां सन्धिभ्यामन्वितम्, भाषाविभाषे संस्कृतप्राकृते भूयिष्ठे बहुले, यत्र तत्, भारत्या कौशिक्या च वृत्त्या युतम्, असूत्रधारम्, एकाङ्कम्, वीथ्यङ्गैः प्रागुक्तैः सहेति सवीथ्यङ्गम्, कलाभिर्नृत्यगीतादिचतुःषष्टिप्रकाराभिरन्वितम्, श्लिष्टया ह्यर्थया नान्द्या युतम्, ख्याता प्रसिद्धा नायिका यत्र तत् मूर्खो नायको यस्मिन् तत् तथा उत्तरोत्तरं क्रमश उदात्तभावस्य नायिकामहिषो विन्यासेन व्यवस्थापनेन स श्चितं समन्वितञ्च उपरूपकं स्यात्, रासयति, रासयति सम्भेभ्य आत्मानं रोचयतीति व्युत्पत्तेः। इह रासके केचित्, प्रतिमुखं सन्धिमपि प्रचक्षते ब्रवुन्ति।

## विमला

रासकमाह, रासकममिति।—पञ्चपात्र—पञ्चभिः पात्रैः—नटैः, सम्पाद्यमित्यर्थः, सुखञ्च निर्वहणञ्च ताभ्यां सन्धिविशेषाभ्यामन्वितं, भाषया विभाषया च—संस्कृतेन प्राकृतेन च इत्यर्थः, भूयिष्ठं—पर्य्याप्तं, भारत्या कौशिक्या च वृत्त्या युतं, क्वचित् भारतीवृत्तिप्रधानं, क्वचित् पुनः कौशिकीवृत्तिप्रधानमिति भावः। वीथ्यङ्गाभ्यां सह वर्त्तमान, कला—नृत्यादिकं चतुःषष्टिप्रकारं, तथा अन्वितं, श्लिष्टया—भिन्नार्थया, काव्यार्थ प्रकारान्तरेण संसूचयन्त्वेति यावत्, नान्द्या युतं, ख्याता—प्रसिद्धा, नायिका यत्र तत्। उदात्तभावस्य—नायकमहत्त्वस्य, विन्धा-सेन—वर्णनेन, संश्रितम्। सुगममन्यत्।

## लक्ष्मी

उदाहरति—यथेति। रासकरूपमुपरूपकं निरूपयति—रासवमिति। पञ्चपात्राणि पुरुषा यत्र तत्तथोक्तम्, मुखनिर्वहणाभ्यामाद्यन्ताभ्यां सन्धिभ्याम् अन्वितं संयुक्तम्, भाषाविभाषे भुयिष्ठे बहुले यत्र तत्तथोक्तम्। यथा चाह भाषार्णवे—

**'भाषा मध्यमपात्राणां नाटकादौ विशेषतः।**
**महाराष्ट्री सौरसेनीत्युक्ता भाषा द्विदा बुधैः॥**
**हीनैर्भाष्या विभाषा स्यात् सा च सप्तविधा स्मृता।**
**प्राच्यावन्ती मागधी च शाकारी च तथा पराः।**
**चाण्डाली शावरी तथाभीरीति भेदतः॥' इति।**

तथा भारत्या कौशिक्या च वृत्त्या युतम्, असूत्रधारम्, एकाङ्कम्, वीथ्यङ्गैः, पूर्वोक्तैः सहितं सवीथ्यङ्गं कलाभिर्नृत्यगीतादिचतुःषष्टिप्रकाराभिः पूर्वदर्शिताभिरन्वितम्, शिलष्टया द्वयर्थप्रतिपादिन्या नान्द्या द्युतम्, ख्याता प्रसिद्धा नायिका यस्मिन् तत्तथोक्तम्, मूर्खो नायको यत्र तत् तथोक्तम्, तथा उत्तरोत्तरं क्रमेण उदात्तभावस्य नायकमहत्त्वस्य विन्यासेन वर्णनेन संश्रितं संयुक्तञ्च रासयति सामाजिकेभ्य आत्मानं प्रीणयतीति रासकं नामोपरूपकं स्यात्, इह रासके केचित् प्रतिमुकं सन्धिमपि प्रचक्षते वदन्ति।

## रुचिरा

रासकं लक्षयितुमाह-**अथ। रासकम्।** लक्ष्यते।

६०७ **पञ्चपात्रं** पञ्चपुरुषमात्रव्यापृतम्। **मुखनिर्वहणान्वितं** मुखनिर्वहणाख्याभ्यामेव सन्धिभ्यां युक्तम्। **भाषाविभाषाभूयिष्ठं** भाषा (संस्कृतम्) च विभाषा (प्राकृतं) च ताभ्यां भूयिष्ठम्। भारतीकौशिकीयुतं भारतीकौशिकीभ्यामेव वृत्तिभ्यां संग्रथितम्। **असूत्रधारं** सूत्रधारप्रयोगशून्यम्। **एकाङ्कम्। सवीथ्यङ्गं** वीथ्यङ्गैः सहितम्। **कलाऽन्वितम्। शिलष्टनान्दीयुतं** शिलष्टाऽनेकार्था मङ्गलमात्रपरार्थताशून्येति यावत्, या नान्दी तथा युतम्। **ख्यातनायिकं** प्रसिद्धया नायिकया सहितम्। **मूर्खनायकं** शठनायकाधिष्ठितम्। **उत्तरोत्तरमग्रेऽग्रे। च। उदात्तभावविन्याससंश्रित**मुदात्त उदारो यो भावोऽभिप्रायस्तस्य विन्यासो विशदरूपेण प्रकटनं तेन संश्रितम्। **रासकम्। स्यात्। इह** रासकाख्य उपरूपके। **केचित्। प्रतिमुखं** तदाख्यम्। **सन्धिम्। अपि। प्रचक्षते।।** ५८५-५८७॥

उदाहरति—**यथेत्यादिना**। स्पष्टम्।

अथ संलापकम्—

**संलापकेऽङ्काश्चत्वारस्त्रयो वा नायकः पुनः ।**

**पाषण्डः स्याद्रसस्तत्र श्रृङ्गारकरुणेतरः ॥ २९१ ॥**

**भवेयुः पुरसंरोधच्छलसंग्रामविद्रवाः ।**

**न तत्र वृत्तिर्भवति भारती न च कैशिकी ॥ २९२ ॥**

यथा—मायाकापालिकम् ।

---

## विवृतिः

'शङ्काभयत्रासकृतः संभ्रमो विद्रवो मतः' इत्युक्तलक्षणो विद्रवः (२१३ पृ.) ॥

## कुसुमप्रतिमा

संलापक इति । संलापयति रसविशेषवत्तया आत्मानं पाठयतीति व्युत्पत्तेः, संलापके तदाख्य उपरूपके चत्वारस्त्रयो वा अङ्काः स्युः, नायकः पुनः पाषण्डा विधर्म्मी स्यात् । तथा तत्र संलापके श्रृङ्गारकरुणाभ्यामितरो रसः स्यात् । पुरसंरोधो नगरवरोधः नगरावरोधः, "प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य च्छलना च्छलम्" इत्युक्तलक्षणं छलम्, संग्रामी युद्धम्, "शङ्काभयत्रासकृतः सम्भ्रमो विद्रवी मतः" इत्युक्तलक्षणो विद्रवश्च भवेयुः । तत्र संपालके भारती वृत्तिर्न भवति कौशिकी वृत्तिश्च न भवति ।

## विमला

संलापकमाह, संलापके इति ।—याषण्डः,—मूर्खः,—अधार्मिको वा । पुरसंरोधः,—नगरावरोधः, छलं—"प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य च्छलना च्छलम्" इत्युक्तलक्षणं, सङ्ग्रामः,—युद्धं, विद्रवः,—"शङ्काभयत्रासकृतः सम्भ्रमो विद्रवी अतः" इत्युक्तलक्षणः अन्यत् स्पष्टत् ।

## लक्ष्मी

उदाहरति—यथेति । संलापकाख्यमुपरूपकं निरूपयति—संलापक इति । संलापयति रसविसेषवत्तया आत्मानमध्यापयतीति संलापकस्तत्रोपरूपके चत्वारस्त्रयो वा अङ्का भवेयुः, नायकः पुनः पाषण्डो धर्मद्रोही भवेत् । तथा तत्र संलापके श्रृङ्गारकरुणाभ्यामितरो भिन्नः रसो भवेत् । पुरसंरोधो नागरावरोधः, 'प्रियाभैरप्रियैर्वाक्यैर्विलोभ्यच्छलनाच्छलम्' इत्युक्तस्वरूपं छलम्, सङ्ग्रामः समरः, 'शङ्काभयत्रासकृतः सम्भ्रभो विद्रवो मतः' इत्युक्तस्वरूपो विद्रवश्च भवेयुः । तत्र संलापके भारतीवृत्तिर्न भवति तथा कौशिकीवृत्तिश्च न भवति ।

## रुचिरा

संलापकं लक्षयितुमाह—**अथ** । **संलापकम्** । लक्ष्यते ६०८ **संलापके** तदाख्ये उपरूपके । **चत्वारः** । **त्रयः** । **वा** । **अङ्काः नायकः** । **पुनः** । **पाणङ्कः** पाषण्डपरः **स्यात्** । तत्र तथाविधे संलापक इत्यर्थः । **श्रृङ्गारकरुणेतरः**

श्रृङ्गारकरुणाभ्यां भिन्नः । **रसः** । **पुरसंरोधच्छलसङ्ग्रामविद्रवाः** पुरसंरोधो नगराक्रमण छलसङ्ग्रामः छलपूर्णः सङ्ग्रामो, विद्रवः पलायनं च । **भवेयुर्वर्णनीयाः** स्युः । तत्र तस्मिन्नेव संलापके । **भारती** । **वृत्तिः** । **न** । **भवति** । **नच** । **कौशिकी** किन्तु एताभ्यां भिन्ने सात्वत्यारभटी एवेति भावः ॥ ५८८ ॥ ५८९ ॥

उदाहरति—**यथे**त्यादिना । स्पष्टम् ।

अथ श्रीगदितम्—

**प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकम्।**

**प्रसिद्धनायिकं गर्भविमर्शाभ्यां विवर्जितम्॥ २९३॥**

**भारतीवृत्तिबहुलं श्रीतिशब्देन संकुलम्।**

**मतं श्रीगदितं नाम विद्वद्भिरुपरूपकम्॥ २९४॥**

यथा—क्रीडारसातलम्।

**श्रीरासीना श्रीगदिते गायेत्किंचित्पठेदपि.**

**एकाङ्को भारतीप्राय इति केचित्प्रचक्षते॥ २९५॥**

---

## विवृतिः

'श्री' इति शब्देन संकुलं बहुलम्॥

श्रीर्लक्ष्मीवेषधारिणी नटी॥

## विज्ञप्रिया

श्रीगदिताख्यमुपरूपकमाह—अथेति। प्रीतिशब्देन प्रीतिजनकशब्देन। श्रीरासीनेति। श्रीः लक्ष्मीः। आसीना प्रविष्टा।

शिल्पकाख्यमुपरूपकमाह— अथेति। हीन इति। निकृष्टजनोऽत्र सहायः। अस्याशंसाद्यङ्गान्युद्दिश्य तल्लक्षणोदाहरणे स्पष्टत्वादुपेक्षिते।

## कुसुमप्रतिमा

प्रख्यातेति। प्रख्यातवृत्तं प्रसिद्धोपाख्यानम्, प्रख्यात उदात्तो धीरोदात्तो नायको यत्र तत्, प्रसिद्धा नायिका यत्र तत्, गर्भविमर्षाभ्यां सन्धिभ्यां विवर्जितम्, भारतीवृत्तिरेव बहुला यत्र तत्, तथा 'श्री' इति शब्देन सङ्कुलं व्याप्तम् उपरूपकं विद्वद्भिः श्रीगदितं नाम मतम्; श्रिया श्रीशब्देन गदितमिति व्युत्पत्तेः

मतान्तरे श्रीगदितलक्षणमाह श्रीरिति। श्रीगदिते उपरूपके आसीनां उपविष्टा श्रीलक्ष्मीरूपधारिणी नटी किञ्चिदपि गायेत् किञ्चिदपि गायेत् किञ्चिदपि पठेच्च। तथा श्रीगदिते भारतीवृतिप्राय एक एवाङ्गीभवेत् इति केचित् प्रचक्षते वदन्ति।

## विमला

श्रीगदितमाह, प्रख्यातेति ।—प्रख्यातवृत्तं—पुराणादिप्रसिद्धवृत्तान्तम् । प्रसिद्धा नायिका यत्र तत्; गर्भविमषसन्धिद्वयवर्जितं, भारतीवृत्तिबहुलञ्च, श्री-इति शब्देन संयुतं—बहुशः श्रीशब्दप्रयोगयुतं, ["सङ्कुलम्" इति पाठे—"श्री" इति शब्देन सङ्कुलं—बहुलम् इत्यर्थः] ।

श्रीरिति ।—श्रीगदिते आसीना—उपविष्टा, श्रीः,—लक्ष्मीवेशधारिणी नटीत्यर्थः, किञ्चित् गायेत् पठेदपि, तथा एकाङ्कः,—एकेनैव अङ्केन समाप्यः, भारतीप्रायः,—भारतीवृत्तिबहुलः सन्दर्भः, इति केचित्—पण्डिताः प्रचक्षते । यथा—श्रीशिवनाथसूरिरचितम् अजितं नाम श्रीगदितम् ।

## लक्ष्मी

उदाहरति—यथेति । श्रीगदिताख्यमुपरूपकं निरूपयति—प्रख्यातेति । प्रख्यातवृत्तं प्रसिद्धवृत्तान्तः प्रख्यातः प्रसिद्धः धीरोदात्तो नायको यस्मिन् तत्तथोक्तम्, प्रसिद्धानायिका यत्र तत्तथोक्तम्, गर्भविमर्शाभ्यां सन्धिभ्यां विवर्जितं रहितम्, भारतीवृत्तिरेव बहुला अधिका यस्मिन् तत्तथोक्तम्, तथा 'श्री' इति शब्देन संङ्कुलं बहुलम्, उपरूपकं विद्वद्भिः श्रिया श्रीशब्देन गदितमिति श्रीगदितं नाम मतम् ।

अन्यमतेन श्रीगदितलक्षणं निरूपयति—श्रीरासीनेति । श्रीगदिते उपरूपके आसीना स्थिता श्रीर्लक्ष्मीवेशधारिणी नटी किञ्चिदपि गायेत् किञ्चिदपि पठेच्च । तथा तत्र भारतीवृत्तिप्राय एकाङ्क एव भवेत् इति केचित् प्रचक्षते कथयन्ति । उदाहरति—यथेति ।

ऊह्यमुदाहरणम् ।

## रुचिरा

श्रीगदितं लक्षयितुमाह-**अथ** । **श्रीगदितम्** । 'लक्ष्यत' इति शेषः । ६०९ **प्रख्यातवृत्तं** प्रसिद्धमितिवृत्त मादाय गुम्फितम् । **एकाङ्कम्** । **प्रख्यातोदात्तनायकं** प्रसिद्धं धीरोदात्तं नायकमधिष्ठाय वर्णितम् । **प्रसिद्धनायिकम्** प्रसिद्धा नायिका यत्र तादृशम् । **गर्भविमर्शाभ्यां** तदाख्याभ्यां सन्धिभ्याम् । **विवर्जितम्** । **भारतीवृत्तिबहुलं** प्रायेण भारतीं वृत्तिमाश्रित्य रचितम् । **श्रीतिशब्देन** । **संयुतं** श्रीशब्दस्य विन्यासेन प्रचुरम् । **श्रीगदितम्** । **नाम** प्रसिद्धम् । **उपरूकतम्** । **विद्वद्‌भिः** । **मतमङ्गीकृतम्** ॥ ५९० ॥ ५९१ ॥

उदाहरति---**यथेत्यादिना** । स्पष्टम् ।

परमतेन तस्य विशेषमाह—६१० **श्रीगदिबे** । **आसीनोपविष्टा** । **श्रीर्लक्ष्मी**स्तद्रूपवेशा नटीति भावः । **किञ्चित्** । **गायेत्** । किञ्चित् **पठेत्** । **अपि** । तथा-**एकः** । **अङ्कः** । **प्रायः** प्रायेण 'प्रायो भूम्नी'त्यमरः । **भारती** । **इति** । **केचित्** । **प्रचक्षते** । । ५९२ ॥

उदाहरणं नोपलभ्यत इत्यभिप्रायेणाह—**ऊह्यमित्यादि** । स्पष्टम् ।

अथ शिल्पकम्—

**चत्वारः शिल्पकेऽङ्काः स्युश्चतस्रो वृत्तयस्तथा।**

**अशान्तहास्याश्च रसा नायको ब्राह्मणो मतः ॥ २९६ ॥**

**वर्णनात्र श्मशानादेर्हीनः स्यादुपनायकः।**

**सप्तविंशतिरङ्गानि भवन्त्येतस्य तानि तु ॥ २९७ ॥**

**आशंसातकसंदेहतापोद्वेगप्रसक्तयः।**

**प्रयत्नग्रथनोत्कण्ठावहित्थाप्रतिपत्तयः ॥ २९८ ॥**

**विलासालस्यबाष्पाणि प्रहर्षाश्वासमूढताः।**

**साधनानुगमोच्छ्वासविस्मयप्राप्तयस्तथा ॥ २९९ ॥**

**लाभविस्मृतिसम्फेटा वैशारद्यं प्रबोधनम्।**

**चमत्कृतिश्चेत्यमीषां स्पष्टत्वाल्लक्ष्म नोच्यते ॥ ३०० ॥**

सम्फेटग्रथनयोः पूर्वमुक्तत्वादेव लक्ष्म सिद्धम्। यथा कनकावतीमाधवः

---

## विवृतिः

शिल्पकमाह—चत्वार इति।

श्मशानादेरित्यादिना शवादेर्ग्रहणम्।

एतस्य शिल्पकस्य।

'संफेटो रोषभाषणम्,' (३१४ पृ.) 'उपन्यासस्तु कार्याणां प्रथनम्' (३१९ पृ.०) इत्युक्तलक्षणे सम्फेटग्रथने ॥

## विवृतिपूर्तिः

प्रसक्तय इति। प्रसक्तिरासक्तिः ॥

अवहित्थेति। अवहित्था आकृतिगोपनम् ॥

प्रतिपत्तय इति। प्रतिपत्तिः क्रियार्थावगमः ॥

साधनेति। साधनस्य इष्टसाधनस्यानुगमः ॥

वैशारद्यमिति। वैशारद्यं नैपुण्यम् ॥

अगर्भेति। गर्भसंधिहीना ॥

नागरेति। नागराः पुरोद्भवा नरा यस्यां सा। चातुर्ययोगायेदम् ॥

न्यूनेति । न्यूनो जात्यापकृष्टः ॥

त्रिनालिरिति । त्रिनालिर्नालिकात्रयनिष्पाद्येतिवृत्तनिबद्ध इति परमार्थः । एवमग्रेऽपि ॥

अस्यामिति । अस्यां दुर्मल्लिकायाम् ॥

## कुसुमप्रतिमा

चत्वार इति । शिल्पके नृत्यादिशिल्पप्रधानत्वादेव तदाख्ये उपरूपके चत्वारोऽङ्काः, तथा कौशिक्यादयश्चतस्र एव वृत्तयः, अशान्तहास्याः शान्तहास्यवर्जिता रसाश्च स्युः । अत्र शिल्पके ब्राह्मणो नायकः । विशेषानभिधानादेव सामान्यप्राप्ते धीरप्रशान्तलक्षण इति बोध्यम् । श्मशानस्य आदिशब्दान्महारण्यादेश्च वर्णना, हीना निकृष्ट जातीय उपनायकश्च स्यात् । एतस्य शिल्पकस्य सप्तविंशतिरङ्गानि भवन्ति । तानि तु आशंसादीनि चमत्कृत्यातानि ज्ञेयानीति शेषः । तत्र—(१) आशंसा, (२) तर्कः, (३) सन्देहः, (४) तापः, (५) उद्वेगः, (६) प्रसक्तिरासक्तिः, (७) प्रयत्नः, (८) ग्रथनम्, (९) उत्कृण्ठा, (१०) अवहित्था, (११) प्रतिपत्तिः क्रियार्थज्ञानम्, (१२) विलासः, (१३) आलस्यम्, (१४) वाष्पम्, (१५) प्रहर्षः, (१६) आश्वासः, (१७) मूढता, (१८) साधनानुगम इष्टसाधनपदार्थज्ञानम्, (१९) उच्छ्वासः, (२०) विस्मयः (२१) प्राप्तिः सुखागमः, (२२) लाभो वस्त्वन्तरप्राप्तिः, (२३) विस्मृतिः, (२४) सम्फेटः, (२५) वैशारद्यं निपुणता, (२६) प्रबोधनम्, (२७) चमत्कृतिश्च । अमीषामङ्गानां स्पष्टत्वात् प्रायेण प्राप्तलक्षणतया प्रसिद्धतया च सुगमत्वात् लक्ष्म लक्षणं नोच्यते ।

## विमला

शिल्पकमाह, चत्वार इति ।—वृत्तयः,—कौशिकादयः, अशान्तहास्याः,—शान्तहास्याभ्यामन्ये इत्यर्थः । श्मशानादेरित्यादिना शवादेग्रहणम् । उपनायकः,—नायकसहकारी, हीनः,—इतरः; एतस्य—शिल्पकस्य, आशंसादीनि चमत्कृत्यन्तानि सप्तविंशतिः अङ्गानि । प्रसक्तिः,—आसक्तिः, अवहित्था—आकारगोपनं, प्रतिपत्तिः,—क्रियार्थावगमः । ["विलासालस्यवास्यानि" इत्यत्र "विलासालस्यवाष्पाणि" तथा प्रहर्षाश्वासमूढ़ता" इत्यत्र "प्रहर्षाश्लोकमूढ़ताः" इति पाठान्तरद्वयम्] साधनाऽनुगमः,—साधनस्य—इष्टसाधनस्य, अनुगमः । अमीषाम्—अङ्गानां, स्पष्टत्वात्—सहजत्वात्, लक्ष्म—लक्षणं, न उच्यते ।

"सम्फेटो रोषभाषणम्" तथा "उपन्यासस्तु कार्य्याणं ग्रथनम्" इत्युक्तलक्षणे सम्फेटग्रथने ।

## लक्ष्मी

शिल्पकाख्यमुपरूपकं निरूपयति—चत्वार इति शिल्पके नृत्यादिशिल्पमुख्यत्वादेव तत्संज्ञके उपरूपके चत्वारोऽङ्काः, तथा कीशिक्यादयस्वतस्र एव वृत्तयः, अशान्तहास्याः शान्तहास्यरहिता रसाश्च स्युः । अत्र शिल्पके ब्राह्मणो नायकः, स च 'असति विशेषाभिधाने सामान्यस्य न्याय्यत्वात्' इति नियमेन सामान्यतया धीरप्रशान्तलक्षण इति ज्ञेयम् । श्मशानस्य आदिपदात् शवमहारण्यादेवर्णना, हीनो नीचजातीय उपनायकश्च स्यात् । एतस्य शिल्पकस्य सप्तविंशति (२७) रङ्गानि भवन्ति तानि तु आशंसादीनि चमत्कृत्यन्तानि बोध्यन्तीति शेषः । तथा हि—(१) आशंसा, (२) तर्कः, (३) सन्देहः, (४) तापः, (५) उद्वेगः, (६) प्रसक्तिरनुरक्तिः, (७) प्रयत्नः, (८) ग्रथनम्, (९) उत्कण्ठा, (१०) अवहित्था आकृतिगोपनम्, (११) प्रतिपत्तिः क्रियार्थावगमः, (१२) विलासः, (१३) आलस्यम्, (१४) बाष्पाम्, (१५) प्रहर्षः, (१६) आश्वासः धैर्य्यप्रदानम्, (१७) मूढता, (१८) साधनानुगम इष्टसाधनपदार्थबोधः, (१९)

उच्छ्वासः, (२०) विस्मयः, (२१) प्राप्तिः आनन्दागमः (२२) लाभो वस्त्वन्तरप्राप्तिः, (२३) विस्मृतिः (२४) संफेटो रोषभाषणम्, (२५) वैशारद्यं नैपुण्यम्, (२६) प्रबोधनम्, (२७) चमत्कृतिश्च, अमीषामङ्गानां स्पष्टत्वात् प्रायेण लब्धलक्षणतया प्रख्याततया च स्फुटत्वात् लक्ष्म लक्षणं 'चिन्हं लक्ष्म च लक्षणम्' इत्यमरः, नोच्यते नाभिधीयते।

सम्फेटादेरस्पष्टतार्थतां निराकरोति—सम्फेटत्यादि। निरुक्तलक्षणं शिल्पकमुदाहरति—यथेति

## रुचिरा

शिल्पकं लक्षयति—**अथ। शिल्पकम्।** 'लक्ष्यते' इति शेषः। ६११ **शिल्पके। चत्वारः। अङ्काः। तथा। चतस्रः** सर्वा इति भावः। **वृत्तयो** भारतीकौशिकीसात्वत्यारभटयः। **स्युः। अशान्तहास्याः** शान्तहास्याभ्यां व्यक्ति-रिक्ताः। **च। रसाः। ब्राह्मणः। नायकः। मतः। अथ श्मशानादेः।** आदिना दग्धारण्यादेग्रहणम्। **वर्णना। एवम्-उपनायकः। हीनो** नीचः। **स्यात्**॥ ५९३ ॥ ५९४ ॥

एतस्याङ्गानि सङ्ख्यानिर्देशपूर्वकमुपदिशति—६१२ **एतस्य** शिल्पकाख्यस्योपरूपकस्य। **सप्तविंशतिः। अङ्गानि। भवन्ति। तानि। तु** पुनः। **आशंसातर्कसन्देहतापोद्वेगप्रशाक्तयः।** अत्राशंसाऽभिलषितार्थ प्रार्थना तर्कादयः प्रसिद्धाः। **प्रयत्नग्रथनोत्कण्ठावहित्थाप्रतिपत्तयः।** प्रयत्न उपायः, ग्रथणं कार्य्याणामुपन्यसनम्, उत्कण्ठाऽवहित्थे भावविशेषौ, प्रतिपत्तिर्निश्चयः। **विलासालस्यवाम्यानि** विलासालस्ये प्रसिद्धे, वाम्यं प्रातिकूल्यम्। **प्रहर्षाश्लीलमूढताः** उच्छ्वासः शोकव्यञ्जकः श्वासः, विस्मयः प्राप्तिश्च। **लाभविस्मृतिसम्फेटा** लाभो, विस्मृतिर्विस्मरणं, सम्फेटः क्रोधोक्तिश्च। **वैशारद्यं** नैपुण्यम्। **प्रबोधनम्। चमत्कृतिः। च। इति।** 'सप्तविंशतिरङ्गानी'ति पूर्वेणान्वयः। **अमीषाम्। लक्ष्म** लक्षणम्। **स्पष्टत्वात्। न। उच्यते।**। ५९५-५९७ ॥

सम्फेटादेरप्रस्फुटार्थतां परिहरति—**सम्फेटे**त्यादिना। स्फुटम्।

निरुक्तलक्षणं शिल्पकमुदाहरति—यथेत्यादिना। स्पष्टम्।

अथ विलासिका—

**शृङ्गारबहुलैकाङ्का दशलास्याङ्गसंयुता।**

**विदूषकविटाभ्यां च पीठमर्देन भूषिता॥ ३०१॥**

**हीना गर्भविमर्शाभ्यां संधिभ्यां हीननायका।**

**स्वल्पवृत्ता सुनेपथ्या विख्याता सा विलासिका॥ ३०२॥**

केचित्तत्र विलासिकास्थाने विनायिकेति पठन्ति। तस्यास्तु 'दुर्मल्लिकायामन्तर्भावः' इत्यन्ये।

---

## विवृतिः

विलासिकामाह—शृङ्गारेति।

स्वल्पं वृत्तं श्लोक इतिवृत्तं वा यत्र।

तस्यास्तु विलासिकायास्तु॥

## विज्ञप्रिया

विलासिकाख्यमुपरूपकमाह—अथेति।

## कुसुमप्रतिमा

शृङ्गारेति। स्वल्पवृत्ता खर्वोपाख्याना। विशेषेण लासयति सहृदयेभ्यः कामयतीति विलासिका। सुगममन्यत्।

## विमला

विलासिकामाह, शृङ्गारेति।—स्वल्पानि—नातिबहुलानि, वृत्तानि—मद्य नि, इतिवृत्तानि वा यत्र तादृशी। अन्यत् स्पष्टम्।

## लक्ष्मी

विलासिकाख्यमुपरूपकं निरूपयति—शृङ्गारबहुलेति। शृङ्गारो बहुलो यत्र सा तादृशी, एक एवाङ्को यस्यां सा तादृशी, दशभिर्लास्याङ्गैः संयुता, विदूषकविटाभ्यां पीठमर्द्देन च भूषिता शोभिता, गर्भविमर्शाभ्यां सन्धिभ्यां हीना वर्ज्जिता, हीनो रहितो नायको यस्यां सा तादृशी, स्वल्पं वृत्तं श्लोक उपाख्यानं वा यत्र सा तादृशी, शोभनो नेपथ्यो वेशरचना यत्र सा तथोक्ता, विशेषेण लासयति सामाजिकेभ्यः कामयतीति विलासिका सा विख्याता।

मतान्तरमुपन्यस्यति—केचित्त्विति। तस्या विलासिकायाः। अन्यत्सुगमम्।

## रुचिरा

विलसिकां लक्षयति । **अथ । विलासिका-६१३ शृङ्गारबहुला** प्रायेण शृङ्गारशालिनी । **एकाङ्का । दश-लास्याङ्गसंयुता** निरुक्तैर्दशभिर्लास्याङ्गैर्युक्ता । **विदूषकविटाभ्याम् । पीठामर्देन । च । भूषिता** युक्ता । **गर्भवि-मर्शाभ्यां** तदाख्याभ्याम् । **सन्धिभ्याम् । हीना** शून्या । **हीननायका** नीचेन नायकेनाधिकृता । **स्वल्पवृत्ता** स्वल्पेतिवृत्ता । **सुनेपथ्या** शोभनं नेपथ्यं वेषप्रसाधना यत्र तादृशी । **सा । विलासिका । विख्याता** ॥ ५९८ ॥ ५९९ ॥

परमतमुपपदायति—**केचित्त्वित्यादिना । तस्या** विलासिकाया इत्यर्थः । स्पष्टमन्यत् ।

अथ दुर्मल्लिका—

**दुर्मल्ली चतुरङ्का स्यात्कैशिकीभारतीयुता।**
**अगर्भा नागरनरा न्यूननायकभूषिता॥ ३०३॥**
**त्रिनालिः प्रथमोऽङ्कोस्यां विटक्रीडामयो भवेत्।**
**पञ्चनालिर्द्वितीयोऽङ्को विदूषकविलासवान्॥ ३०४॥**
**षण्णालिकस्तृतीयस्तु पीठमर्दविलासवान्।**
**चतुर्थो दशनालिः स्यादंङ्कः क्रीडितनागरः॥ ३०५॥**

यथा बिन्दुमती—

---

## विवृतिः

दुर्मल्लिकामाह—दुर्मल्लीति।

'नालिका घटिकाद्वयम्' इति प्रागेवोक्तम्॥

## विज्ञप्रिया

दुर्मल्लिकाख्यमुपरूपकमाह—अथेति। अगर्भा गर्भसन्धिरहिता। नागरनराः नागरपात्राणि। नायको निकृष्टः। त्रिनालिः नालिकात्रयसाध्यः। एव मुत्तरत्र। विटक्रीडा, धूर्तक्रीडा।

## कुसुमप्रतिमा

दुर्म्मल्लीति। दुष्टा मनोहरत्वे हीना मल्ली मल्लिकाकुसुममपि यस्याः सेति व्युत्पत्तिः। चत्वारोऽङ्का यस्यां सा। तत्र च कौशिकी तथा भारती च वृत्तिः स्यात्। अगर्भा गर्भसन्धिरहिता, नागराः सर्वविषयदक्षाः नराः पात्राणि यस्यां सा, तथा अनयूनेन अनिकृष्टेन नायकेन भूषिता दुर्म्मल्लो दुर्म्मल्लिका स्यात्। अस्यां दुर्म्मल्लिकायां प्रथमोऽङ्कः विनालिस्त्रिसृभिर्नाड़ीभिघ टिकाभिर्मुहूर्तैरिति यावत् सम्पादितेतिवृत्त इत्यर्थः, विटप्प क्रीड़ा मयश्चरैत-बहुलश्च भवेत्। द्वितीयोऽङ्कः पञ्चनालिः पञ्चमुहूत्तसम्पादितेतिवृत्तः विदूषकस्य विलासवान् व्यवहारवांश्च भवेत्। तृतीयस्तु अङ्कः षणालिकः षड्भिर्मुहूतैः सम्पादितेतिवृत्तः तथा पीठमर्द्दस्य विलासवान् व्यवहारबहुली भवेत्। चतुर्थोऽङ्कदशनालिदंशमूहूत्तनिष्पादितेतिवृत्तः, तथा क्रीड़ितश्चरितबहुली नायको यत्र स तादृशस्य स्यात्।

## विमला

दुर्मल्लिकामाह, दुर्मल्लीति।—अगर्भा—गर्भसन्धिवर्जिता, नागरनरा—नागराः,—नगरे जाताः, नराः वर्ण्यमानाः यत्र तादृशी, चतुरजनबहुलेति भावः, न्यूनेन—जात्या निकृष्टेन, नायकेन भूषिता; अस्यां प्रथमः अङ्कः त्रिनालिः,—षड्घटिकासाध्येतिवृत्तरुचिरः, विटस्य क्रीडामयः,—केलिबहुलः; पञ्चनालिः,—दशघटिकासम्पाद्यः; षड्नालिकः,—द्वादशघटिकासम्पादनीयः; दशनालिः,—विंशति घटिकानिर्वाह्यः। अन्यत् स्पष्टम्।

## लक्ष्मी

दुर्मल्लिकाख्यमुपरूपकं निरूपयति—दुर्मल्लीति। दुष्टा सुन्दरत्वेन हीना मल्ली मल्लिकापुष्पमपि यस्याः सा तथोक्ता, चत्वारोऽङ्का यत्र सा तथोक्ता। तत्र च कौ(कै)शिकी तथा भारती च वृत्तिः स्यात्, अगर्भा गर्भसन्धिवर्जिता, नागराः सर्वविषयकुशलाः नराः पात्राणि यस्यां सा तथोक्ता, तथा अन्यूनेन अनीचेन नायकेन भूषिता शोभिता दुर्मल्ली दुर्मल्लिका स्यात्। अस्यां दुर्मल्लिकायां प्रथमोऽङ्क त्रिनालिः, 'नालिका घटिकाद्वयम्' इति प्रागेवाभिहितम्, तथा च त्रिसृभिर्नाडीभिर्घटिकाभिमुहुर्त्तैरिति यावत् निष्पादितेतिवृत्त इति परमार्थः। विटस्य धूर्त्तस्य क्रीडामयश्चरितोऽधिकश्च भवेत् द्वितीयोऽङ्कः पञ्चनालिः पञ्चमुहूत्त्रनिष्पादितेतिवृत्तः विदूषकस्य विलासवान् व्यवहारवांश्च भवेत्। तृतीयस्त्वङ्कः षण्णालिकः षड्भिर्मुहूत्तैनिष्पादितेतिवृत्तः तथा पीठमर्दस्य विलासवान् व्यवहारवांश्च भवेत्। चतुर्थोऽङ्कः दशमुहूर्त्तसम्पादितेतिवृत्तः, तथा क्रीडितश्चरितोऽधिको नायको यत्र स तथोक्तश्च भवेत्।

## रुचिरा

दुर्मल्लिकां लक्षयितुमाह—**अथ**। **दुर्मल्लिका**। लक्ष्यते ६१४ **चतुरङ्का**। **कौशिकीभारतीयुता** कौशिक्या भारत्या च युता। **अगर्भा** गर्भसन्धिरहिता। **नागरनरा** नागराश्चतुरा नराः (वर्ण्यमानाः) यत्र तादृशी। **न्यूननायकभूषिता** न्यूनो जात्या हीनो यो नायकस्तेन भूषिता। **दुर्मल्ली**। **स्यात्**। **अस्यां** दुर्मल्लिकायां तदाख्य उपरूपक इति यावत्। **प्रथमः** अङ्कः। **त्रिनालिस्त्रिस्त्रो** नाल्यो यत्र तादृशः, नाली घटिकाद्वयम्, उपचारात्तवन्मात्रकालनिष्पाद्येतिवृत्तनिबद्द इति भावः। **विटकक्रीडामयोविट**क्रीडावर्णनेन भूयान् भूयान्। **भवेत्**। **तृतीयः**। **च** 'अङ्क'इति पूर्वतोऽन्वेति। **षण्णालिकः** षट् नालिका यत्र तादृशः। द्वादशघटिकासम्पाद्येतिवृत्तनिबद्ध इति भावः। **पीठमर्दविलासवान्** पीठमर्दो नायकसहायकविशेषस्तस्य विलासोऽस्मिन्नस्तीति तथोक्तः। **चतुर्थः**। **अङ्कः**। **च**। **दशनालिर्विंशतिघटिकासम्पाद्येतिवृत्तवनिबद्धः**। **क्रीडितनागरः** क्रीडितो जातक्रीडस्तत्तया वर्णित इति यावन्नागरश्चतुरजनो यत्र तादृशः। **स्यात्**। द्वितीयोऽङ्कस्तु यथासम्भवं सङ्घटितं एवेति बोध्यम्॥ ६०१-६०२॥

उदाहरति—**यथे**त्यादिना। स्पष्टम्।

अथ प्रकरणिका—

**नाटिकैव प्रकरणी सार्थवाहादिनायका।**
**समानवंशजा नेतुर्भवेद्यत्र च नायिका ॥ ३०६ ॥**

मृग्यमुदाहरणम्।

यथा केलिरैवतकम्।

---

## विवृतिः

प्रकरणिकामाह—नाटिकैवेति।

सार्थवाहो वणिक् ॥

एक पुरुष एकनटः ॥

## विवृतिपूर्तिः

सार्थवाहादीति। आदिशब्देन पुरोहितामात्यौ गृह्येते ॥

वागिति। उदात्ता वाक् ॥

व्युत्पत्तिरिति। व्युत्पत्तिः प्रपञ्चनम् ॥

कोपेति। कोपपीडया अमर्षबाधया ॥

स्पष्टानीति। उपन्यासाद्यङ्गसप्तकयेत्यर्थः ॥

## विज्ञप्रिया

प्रकरणिकाख्यमुपरूपकमाह—अथेति। नाटिकैवेति। नाटिकालक्षणाक्रान्तैवेत्यर्थः। सार्थवाहाः पथिकाः। आदिशब्दात् प्रवासिनश्च।

## कुसुमप्रतिमा

नाटिकैवेति। सार्थवाही वणिक् आदिशब्दात् विप्रामान्धौ च नायका यस्यां सा, नाटिकैव क्लृप्तवृत्तवादिलक्षणैव प्रकरणी भवेत्। यत्र च नायिका नेतुर्नायकस्य समानवंशजा भवेत्।

## विमला

प्रकरणिकामाह, नाटिकैवेति।—सार्थवाहः—वणिक्। अन्यत् स्पष्टम्।

## लक्ष्मी

प्रकराणकाख्यमुपरूपकं निरूपयति—नाटिकैवेति। सार्थवाहो वणिक् आदिपदेन पुरोहितामांत्यौ च यद्वा सार्थवाहाः पथिकाः, आदिपदात् प्रवासिनश्च नायका यस्यां सा नाटिकैव नाटिकालक्षणाक्रान्तैव प्रकरणी प्रकरणिका भवेत्। यत्र च प्रकरणिकायां नायिकानेतुर्नायकस्य समानवंशजा समानकुलजाता भवेत्।

प्रायो हास्योदाहरणं दुर्लभमित्यत आह—मृग्यमिति।

## रुचिरा

प्रकरणिकां लकयितुमाह—**अथ**। **प्रकरणिका** लक्ष्यते ६१५ **सार्थवाहादिनायका** वणिगमात्यपुरोहिताद्यन्यतमनायकेति भावः। 'वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक्।' इत्यमरः। **नाटिका**। **एव**। **प्रकरणी**। **तत्र** तस्याम्। च। **नेतुर्नायकस्य**। **समानवंशजा** यद्वर्णो नायकस्तद्वर्णेति भावः। **नायिका**। अयम्भावःनाटिकाया यल्लक्षणं तदधिकृतैवेयं, किन्तु नायिकानायकयोरन्तर्विशेषः। इति॥ ६२०॥

उदाहरणं च प्रायो दुर्लभमित्यत आह—**मृग्यमित्यादि**। स्पष्टम्।

हल्लीसं लक्षयितुमाह—६१६ **एवम्**। हल्लीशस्तदाख्यमुपरूपकम्। **एकाङ्कः**। **तत्र**। **सप्त अष्टौ**। **दश**। **वा**। **स्त्रियः**। 'व्यापृता भवन्ती'ति शेषः। **उदात्ता**। **वाक्** वर्णनम्। **एकपुरुष** एको नटः। **उज्जवला**। **कौशिकी**। **वृत्तिः**। **मुखान्तिमौ** मुखनिर्वहणाख्यावित्यर्थः। **सन्धी**। तथा—**बहुताललयस्थितिर्बह्वी** ताललययोः स्थितिः॥ ६०४॥

उदाहरति—**यथेत्यादिना**। स्पष्टम्।

अथ हल्लीशः—

**हल्लीश एक एवाङ्कः सप्ताष्टौ दश वा स्त्रियः।**
**वागुदात्तैकपुरुषः कैशिकी वृत्तिरुज्ज्वला।**
**मुखान्तिमौ तथा संधी बहुताललयस्थितिः॥ ३०७॥**

अथ भाणिका—

**भाणिका श्लक्ष्णनेपथ्या मुखनिर्वहणान्विता।**
**कैशिकी भारतीवृत्तियुक्तैकाङ्कविनिर्मिता॥ ३०८॥**
**उदात्तनायिका मन्दपुरुषात्राङ्गसप्तकम्।**
**उपन्यासोऽथ विन्यासो विबोधः साध्वसं तथा॥ ३०९॥**

---

## विवृतिः

हल्लीशमाह—हल्लीश इति।

भाणिकामाह—भाणिकेति।

## विज्ञप्रिया

हल्लीशाख्यमुपरूपकमाह—अथेति। मुखेति—मुखनिर्वहणसन्धिद्वयवती।

## कुसुमप्रतिमा

हल्लीश इति। हल्लीश हल्लीशाख्योपरूपके, एक एव अङ्कः, सप्त अष्टौ अथवा दश स्त्रियः उदात्ता उत्कृष्टा संस्कृतरूपा शौरसेनी च वाक्, एकपुरुष एकमात्रं पुंपात्रम्, उज्ज्वला कौशिकोवृत्तिः, मुखान्तिमौ मुखनिर्वहणाख्यौ सन्धी, तथा बहुनां बहुप्रकाराणां ताललयानां स्थितिश्च स्यात्। अत्रार्थे हल्लीश इति रूढः शब्दः।

## विमला

हल्लीशमाह, हल्लीश इति।—हल्लीशे एकः एवाङ्कः, न तु ततोऽधिकाऽङ्करचना कर्त्तव्येति भावः; सप्तसङ्ख्यातो न न्यूनाः, दशमसङ्ख्यातश्च नाधिकाः स्त्रियः, कर्त्तव्याः इति शेषः, वाक्—भाषणं च, उदात्ता, एकपुरुषः,—एकमात्रनटः, कौशिक्या वृत्त्या सङ्कुलः,—प्रायेण कौशिवृत्त्या निष्पादितेतिवृत्त इति भावः; मुखान्तमौ—आद्यचरमौ, मुखानर्वहणे इत्यर्थः। अन्यत् स्पष्टम्।

भाणिकामाह, भाणिकेति।—श्लक्षणनेपथ्या—परिच्छन्नपरिच्छदा। मन्दः,—हीनः, पुरुषः,—नायकः यस्यां तादृसी।

## लक्ष्मी

हल्लीशाख्यमुपरूपकं निरूपयति—हल्लीश इति । हल्लीशे हल्लीशसंज्ञके उपरूपके, एक एवाङ्कः, सप्त अष्टौ वा अथवा दश स्त्रियः, उदात्ता उत्तमा संस्कृतरूपा शौरसेनी च वाक्, एकपुरुष एकनटः उज्ज्वला कौशिकीवृत्तिः, मुखान्तिमौ मुखनिर्वहणसंज्ञकौ सन्धी, बहूनाम् अनेकविधानांताललयानां स्थितिश्च स्यात् । अस्मिन्नर्थे हल्लीशशब्दो रूढिर्ज्ञेयः ।

उदाहरति—यथेति ।

भाणिकाख्यमुपरूपकं निरूपयति—भाणिकेति । भाणिका श्लक्ष्णं सूक्ष्मं नेपथ्यं वस्त्रादिवेशरचना यस्यां सा तथोक्ता, मुखनिर्वहणाभ्याम् आद्यन्ताभ्यां सन्धिभ्यामन्विता संयुता, कौ(कै)शिकीभारतीभ्यां वृत्तिभ्यां युक्ता, एकाङ्केनैव विनिर्मिता रचिता उदात्ता उत्तमा नायिका यत्र सा तथोक्ता, मन्दो नीचो नायको यत्र सा तथोक्ता च स्यात् ।

## रुचिरा

भाणिकां लक्षयितुमाह—६१७ श्लक्ष्मनेपथ्या श्लक्ष्णं मधुरं नेपथ्यं वेषरचना यत्र तादृशी । **मुखनिर्वहणान्विता** मुखनिर्वहणाख्याभ्यां सन्धिभ्यामुपेता । **कौशिकीभारतीवृत्तियुक्ता** । **एकाङ्कविनिर्मिता** । एकाङ्का । **उदात्तनायिका** धीरोदात्तनायकानुरूपा नायिका यत्र तादृशी । **मन्दपुरुषा** मन्दो हीनः पुरुषो यत्र तादृशी । 'अमन्द पुरुषे' ति पाठे तु अमन्दो धीरोदात्तः पुरुषो नायको यत्र तादृशी । **भाणिका** 'स्या' दिति शेषः ॥ ६०५ ॥

**समर्पणं निवृत्तिश्च संहार इति सप्तमः।**

**उपन्यासः प्रसङ्गेन भवेत्कार्यस्य कीर्तनम्॥ ३१०॥**

**निर्वेदवाक्यव्युत्पत्तिर्विन्यास इति स स्मृतः।**

**भ्रान्तिनाशो विबोधः स्यान्मिथ्याख्यानं तु साध्वसम्॥**

**सोपालम्भवचः कोपपीडयेह समर्पणम्।**

**निदर्शनस्योपन्यासो निवृत्तिरिति कथ्यते॥ ३१२॥**

**संहार इति च प्राहुर्यत्कार्यस्य समापनम्।**

स्पष्टान्युदाहरणानि। यथा—कामदत्ता।

एतेषां सर्वेषां नाटकप्रकृतित्वेऽपि यथौचित्यं यथालाभं नाटकोक्तविशेषपरिग्रहः। यत्र च नाटकोक्तस्यापि पुनरुपादानं तत्र तत्सद्भावस्य नियमः।

---

## विवृतिः

एतेषां नाटिकादीनाम्।

## विज्ञप्रिया

भाणिकाख्यमुपरूपकमाह—अथेति। मन्दो निकृष्टः। अस्यकार्याण्याह—उपन्यास इत्यादि। तेषां लक्षणान्याह—उपन्यास इति। निर्वेदवाक्यस्य व्युत्पत्तिर्विन्यासः, सा च विन्याससंज्ञिका. कोपपीडयोपालम्भवचः समर्पणाख्यं कार्यमित्यर्थः। निदर्शनस्य दृष्टान्तस्योपन्यास इत्यर्थः। कार्यस्य समापनम्—मुख्यकार्यावान्तरकार्य-स्येत्यर्थः। एषां कार्याणां सर्वनाटकेष्वेवौचित्यात्सर्वनाटकानामेवैतत्कार्यत्वमाह—एषामिति। नाटकोक्तविशेषे परिग्रह इति विग्रहः। तथा च भाणिकोक्तकार्यस्य नाटकान्तरेपि दातव्यमुक्तम्। यच्चेति। नाटके हि षट्त्रिंनश-ल्लक्षणालङ्कारादयश्चोक्ताः। तदुक्तवस्तुनो यच्च पुनरुपादानं नाटकान्तर इति बोध्यम्। तत्सद्भावस्येति—तत्सद्भावस्य तत्रावश्यकतारूपनियम इत्यर्थः।

## कुसुमप्रतिमा

भाणिकेति। भाणिका श्लक्ष्णं सूक्ष्मं नेपथ्यं वसनादिवेशी यस्यां सा, मुखनिर्वहणाभ्यां सन्धिभ्यामन्विता, कौशिकौमारतीभ्यां वृत्तिभ्यां युक्ता, एकेन अङ्केनैव विनिर्म्मिता, उदात्ता उत्कृष्टा नायिका यस्यां सा, तथा मन्दी निकृष्टः पुरुषो नायको यस्यां सा तादृशी च स्यात्। अत्र भाणिकायाम् अङ्गानां सप्तकं भवेत्। (१) उपन्यासः, (२) विन्यासः, (३) विबोधः, (४) साध्वसम्, (५) समर्पणम्, (६) निवृत्तिः, (७) संहारश्च। क्रमादेतेषां लक्षणान्याह उपेति। प्रसङ्गेन कार्य्यस्य कीर्त्तनमुपन्थासी नामाङ्गं भवेत्। निर्वेदवाक्यस्य प्रागुक्तलक्षणनिर्वेदसूचकवचनस्य व्युत्पत्तिर्वि-शेषेणोत्पत्तिः स प्रसिद्धो विन्यासा नामाङ्गमिति स्मृतः। सान्तिनाशा भ्रमापगमो विबाधा नामाङ्गं स्यात्। मिथ्या

आख्यानं कथनन्तु साध्वसं नामाङ्गं स्यात्। इह माणिकायां कोपपीड़या सोपालम्भवची निन्दायुक्तं वाक्यं समर्पणं नामाङ्गं कथ्यते। निदर्शनस्य दृष्टान्तस्य उपन्यास उल्लेखो निवृत्तिरिति नाम अङ्गं कथ्यते। कार्य्यस्य यत् समापनं तत् संहार इति नाम च अङ्गं प्राहुः।

स्पष्टनीति। उपन्यासादीनामङ्गानामित्यर्थः।

एतेषामिति। एतेषां नाटकविकृतिभूतानां प्रकरणादीनां रूपकाया नाटिकादीनामुपरूपकाणाञ्च। नाटकप्रकृतिकत्वेऽपि नाटकप्रकृतित्वेन तदीयानां सर्वेषामेव धर्म्माणां परिग्राह्यत्वेऽपि यथालाभं यथासम्भवम्। तथा च प्रकरणं औचित्यात् नान्दीप्रस्तावनादीनां परिग्रहः, सामान्येन विशेषवाधाया अनौचित्यात्र न ख्यातवृत्तपरिग्रहः। नियम इति। यथा वीथ्यां वीथ्याङ्गानाम्।

## विमला

अङ्गसप्तकम्—उपन्यासादीनि संहारान्तानि अस्या भाणिकायाः सप्ताङ्गानिः, तानि च स्पष्टानि इति नादाङ्क्रियन्ते। अन्यत् स्पष्टम्।

उपन्यासादि सप्ताङ्गानां लक्षणान्याह, उपन्यास इति।—प्रसङ्गेन कार्य्यस्य कीर्त्तनं—सूचनम्, उपन्यासः भवेत्। निर्वेदः,—"तत्त्वज्ञानापदोर्षादिः" इत्युक्तलक्षणः, तस्य वाक्ये—तत्मूषक वचसि, व्युत्पत्तिः,—विशेषज्ञता, विन्यासः इति स्मृतः। भ्रान्तैः,—भ्रमस्य, अज्ञानस्य इत्यर्थः, नाशः,—विच्छेदः, विबोधः स्यात्। मिथ्या आख्यानं—कथं, साध्वसम्। इह—भाणिकायां, कोपेन पीड़या वा सोपालम्भवचः—तिरस्कारवचनं, समर्पणम्। निदर्शनस्य—दृष्टान्तस्य, उपन्यासः,—कीर्त्तनं, निवृतिरिति कथ्यते। कार्य्यस्य यत् समापनं, तत् संहार इति प्राहुः प्राञ्च इति शेषः।

## लक्ष्मी

अत्र भाणिकायाम् अङ्गानां सप्तकं भवेत्। तथा हि उपन्यासः, विन्यासः, विबोधः, साध्वसम्, समर्पणम्, निवृत्तिः, संहारश्च। यथोद्देशेन लक्षयति—उपन्यास इति। प्रसङ्गेन कार्यस्य कीर्त्तनमुपन्यासो नामाङ्गं भवेत्। निर्वेदवाक्यस्य पूर्वोक्तलक्षणनिर्वेदद्योतकवचनस्य व्युत्पत्तिर्विशेषेणोत्पत्तिः प्रपञ्चनमित्यर्थः स प्रसिद्धो विख्यातो विन्यासः। भ्रान्तिनाशो भ्रमध्वंसो विबोधो नामाङ्गं स्यात् मिथ्या असत्यम् आख्यानं वल्गनन्तु साध्वसं नामाङ्गं स्यात्। इह भाणिकायां कोपपीडया अमर्षबाधया सोपालम्भवचो निन्दासहितं वचनं समर्पणं नामाङ्गं कथ्यते। निदर्शनस्य उदाहरणस्य उदाहरणस्य उपन्यास उपस्थापनम् निवृत्तिरिति नामाङ्गं कथ्यते अभिधीयते। कार्यस्य कर्त्तव्यस्य यत् समापनं समाप्तिः तत् संहार इति नाम चाङ्गं प्राहुः।

स्पष्टानीति। उपन्यासविन्यासादीनां भाणिकाङ्गानामित्यर्थः। एतेषामिति। नाटकविकृतिरूपाणां प्रकरणादीनां रूपकाणां नाटिकादीनामुपरूपकाणाञ्चेत्यर्थः। नाटकप्रकृतिकत्वेऽपि सर्वेषामेव तदीयानां धर्मणां नाटकप्रकृतित्वेनातिदेशात् गतार्थत्वेऽपि। यथालाभं यथायोग्यम्। नाटंकोक्तविशेषे परिग्रह इति विग्रहः। तथा च भाणिकोक्तकार्यस्य नाटकान्तरेऽपि दातव्यमित्युक्तम्। एवञ्च प्रकरणे नान्दीप्रस्तावनादीनां ग्रहणम्, सामान्येन विशेषबाधाया अन्याय्यत्वाञ्च न प्रसिद्धेतिवृत्तग्रहणमिति भावः। तत्सद्भावस्य नियम इति। तत्रावश्यकतारूपनियम इत्यर्थः। यथा वीथ्यां वीथ्याङ्गानाम्। 'दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम्' इति पूर्वमभिहितम्, तत्र

सपरिकरं दृश्यकाव्यमभिधायावसरप्राप्तया श्रव्यमभिधातुमाह—अथेति। दृश्यकाव्यनिरूपणानन्तरम् श्रव्यकाव्यानि निरूप्यन्त इति शेषः।

## रुचिरा

अत्र विशेषमाह—६१८ **अत्रास्मिन्** भाणिकानामक उपरूपक इत्यर्थः। **अङ्गसप्तकं** सप्ताऽङ्गानि भवन्ति। तानि कानीत्यत आह—**उपन्यास** इत्यादि। स्पष्टम्॥ ६०६ ॥ ६०७ ॥

क्रमादेतानि लक्षयति—६१९ **प्रसङ्गेन। कार्य्यस्य** प्रयोजनस्य। **कीर्त्तनम्। उपन्यासः। भवेत्। निर्वेदवाक्यव्युत्पत्तिर्निर्वेद**प्रधानं वाक्यं विरक्तिसूचकं वाक्यं तस्य व्युत्पत्तिः प्रपञ्चनम्। **विन्यासः। इति। सुस्मृतः**। सम्मतः। **भ्रान्तिनाशः। विबोधः। स्यात्। मिथ्याख्यानं** मिथ्याकथनम्। **तु। साध्वसम्। इह नाटके। कोपपीडया** क्रोधावेशेन। **सोपालम्भवचः** उपालम्भपूर्वकं कथनम्। **समर्पणम्**। तदाख्यमङ्गम्मतम्। **निदर्शनस्य** दृष्टान्तस्य। **उपन्यासः** फलतः स्थापनम्। **निवृत्तिः। इति। कथ्यते। यत्। कार्य्यस्य। समापनमं** समाप्तिबोधकतया वर्णनम्। 'त' दिति शेषः। **संहारः। इति। प्राहुः। च** ॥ ६०८-६१० ॥

एषामुदाहरणानि प्रख्यातानीत्याह—स्पष्टानीत्यादि। भाणिकाया उदाहरणं दर्शयति—यथेत्यादिना। स्पष्टम्। एवं नाटिकाऽऽदिं लक्षयित्वाऽत्रानुक्तं सर्वं नाटकोक्तमेव ग्राह्यमित्याह—**एतेषां** नाटिकादीनाम्। **सर्वेषाम्। नाटकप्रकृतिकत्वे** नाटकसाजात्ये। **अपि। यथौचित्यम्। यथालाभम्। नाटकोक्तविशेषपरिग्रहो** नाटके उक्तं कथितं (यल्लक्षणं) तस्माद्विशेषस्तस्य परिग्रहः। **यत्र** येषु नाटिकाऽऽद्युपरूपकेषु मध्ये। **च। नाटकोक्तस्य** नाटक उक्तं तस्य। **अपि पुनः। उपादानम्। तत्र। तत्सद्भावस्य** नाटकेऽभिहितस्य। **नियमः**। अयम्भावः—यत्र नाटिकादौ नाटकापेक्षया विशेषाभिधानं तत्तु युक्तमेव, किन्तु अन्यत्सर्वं तस्य नाटकप्रकृतिकत्वात् नाटकलक्षणाभिन्नत्वम्। यत्र च नाटिकाऽऽदौ नाटकलक्षणापेक्षया विशेषाभावेऽपि पुनस्तदीयतयाऽभिधानं तस्यावश्यकत्वद्योतनार्थमिति।

अथ श्रव्यकाव्यानि—

**श्रव्यं श्रोतव्यमात्रं तत्पद्यगद्यमयं द्विधा ॥ ३१३ ॥**

तत्र पद्यमयान्याह—

**छन्दोबद्धपदं पद्यं तेन मुक्तेन मुक्तकम् ।**

**द्वाभ्यां तु युग्मकं संदानितकं त्रिभिरिष्यते ॥ ३१४ ॥**

कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम् ।

तत्र मुक्तकं यथा मम—

**'सान्द्रानन्दमनन्तमव्ययमजं यद्योगिनोऽपि क्षणं**

**साक्षात्कर्तुमुपासते प्रतिमुहुर्ध्यानैकतानाः परम् ।**

**धन्यास्ता मधुरापुरीयुवतयस्तद् ब्रह्म याः कौतुका-**

**दालिङ्गन्ति समालपन्ति शतधा कर्षन्ति चुम्बन्ति च ॥'**

युग्मकं यथा मम—

**'किं करोषि करोपान्ते कान्ते ! गण्डस्थलीमिमाम् ।**

**प्रणयप्रवणे कान्ते नैकान्तेनोचिताः क्रुधः ॥**

**इति यावत्कुरङ्गाक्षीं वक्तुमीहामहे वयम् ।**

**तावदाविरभूच्चूते मधुरो मधुपध्वनिः ॥'**

एवमन्यान्यापि ।

---

## विवृतिः

दृश्यकाव्यमुक्त्वा श्रव्यमाह—श्रव्यमिति । मात्रपदेन दृश्यव्यवच्छेदः ॥

छन्दो गायत्र्यादि । तच्च छन्दः शास्त्रप्रसिद्धलक्षणम् । तेन पद्येन मुक्तेन पद्यान्तरनिरपेक्षेण एकेन ।

'तेनैकेन च मुक्तकम्' इति क्वचित्पाठः । द्वाभ्यां परस्परापेक्षाभ्यां पद्याभ्याम् । एवमग्रेऽपि । पञ्चभिरिति न्यूनसंख्याव्यवच्छेदः । तेन माघादौ दशादिभिः श्लोकैः कुलकं संगच्छते ॥ क्षणं क्षणमपि । ध्यानैकतानाः ध्यानैकाग्रचित्ताः । आकर्षन्ति क्रीडार्थमाहरन्ति ॥

अनैकान्तेऽव्यभिचारिणि त्वन्मात्रपरायणे इत्यर्थः ॥

## विवृतिपूर्तिः

संदानितकमिति । संदानितकस्यैव विशेषकमिति तिलकमिति च संज्ञा ।

कलापकमिति । कलापकमेव काश्मीरकैश्चक्कलकमिति व्यपदिश्यते ॥

मधुरापुरीति । मधुराशब्दस्य मधुपुरीवाचकत्वे 'काञ्ची ते धृतयोगसंपदभितो जाता विशालाकृतिर्यावन्ती मधुरा ध्वनिं विदधती पश्चादयोध्याभवत् । माया द्वारवती शिवाधिवसतिः सा काशिका दृश्यते तच्चित्रं न वदमि माधव ! यतस्त्वां सा सदा संश्रिता ॥' इति मधुसूदनसरस्वतीश्लोकः प्रमाणम् ॥

## विज्ञप्रिया

श्रव्यकाव्यानीति ।—तत्रभेदद्वयमाह—पद्यगद्यमिति ।

द्वाभ्यामित्यादिचतुर्षु परस्परैकवाक्यतापन्नत्वे सतीति बोध्यम् ।

सान्द्रानन्दमिति—यत्परं प्रकृष्टं ब्रह्म क्षणमपि साक्षात्कर्तुं ध्यानैकताना ध्यानमात्राविष्टा योगिनः प्रतिमुहुरुपासते तद्ब्रह्म या मथुरापुरयुवतयः कौतुकादालिङ्गन्तीत्यादि ता धन्याः ।

मानिन्या मानभङ्गप्रकारं सख्यौ कथयन्नाह—किं करोषीत्यादि । हे कान्ते ! करोपान्ते इमां गण्डस्थलीं किमर्थं करोषि ? ततः प्रणयप्रवण इत्यादि स्पष्टम् । कुरङ्गाक्षीमिति वक्तुं वयं यावदीहामहे तावन्मधुरो मधुपध्वनिः चूते आविरभूत् । अत्र प्रथमश्लोकार्थो द्वितीयश्लोक उक्तिकर्मत्वेन उक्त इति एकवाक्यता ।

एवमिति—सन्दानितकादावपि एवं बोध्यमित्यर्थः ।

## कुसुमप्रतिमा

श्रव्यमिति । श्रोतव्यमात्रं केवलश्रवणयोग्यं काव्यं श्रव्यम् । तेन वाचिकांशमादाय श्रवणयोग्यत्वसत्त्वेऽपि आङ्गिकाद्यंशान्तरेषु दर्शनयोग्यत्वस्यापि सत्त्वात् दृश्यकाव्येषु नातिव्याप्तिः । तच् श्रव्यकाव्यं द्विदगा पद्यमय गद्यमयञ्चेति ।

## विमला

दृश्यकाव्यमुक्ता श्रव्यकाव्यमाह, श्रव्यमिति ।—श्रोतव्यमात्रमिति मात्रा शब्देन दृश्यकाव्य व्यवच्छेदः ।

छन्द इति ।—छन्दोभिः,—गायत्रयादिभिः, बद्धानि—रचितानि, पदानि—सुप्तिङन्तरूपाणि यत्र तादृशम् । एकेन तेन—पद्येन, ["तेन मुक्तेन" इति पाठे—मुक्तेन—पद्यान्तरनिरपेक्षेण एकेन इत्यर्थः] द्वाभ्यां—परस्परापेक्षाभ्यां पद्याभ्याम्, एवमग्रेऽपि । सन्दानितकमिति ।—अस्यैव विशेषकमिति तिलकमिति च संज्ञा। पञ्चाभिरिति न्यूनसंख्याव्यवच्छेदः, तेन माघादौ दशादिभिः श्लोकैः कुलकं सङ्गच्छते ।

मुक्तकमुदाहरति, सान्द्रेति ।—मुहुः,—पुनः पुनः, ध्यानैकतानाः,—ध्यानैकाग्रचित्ताः समाधिनिष्ठा इति भावः, योगिनः अपि सान्द्रानन्दम्—आनन्दघनम्, अनन्तम्—अपारम्, अव्ययम्—अच्युतम्, अत्रं—जन्मरहितं, परं यत् ब्रह्म क्षणं—क्षणमपि, प्रतिसाक्षात्कर्तुं—प्रत्यक्षीकर्त्तुम्, उपासते—भजन्ते, ताः,—प्रसिद्धाः, मथुरापुरीयुवतयः, धन्धाः,—पुण्यवत्यः, ["मधुरापुरी" इति पाठे—स एवार्थः, तत्र मधुसूदन सरस्वतीपद्यं प्रमाणं यथा,—"काञ्ची ते धृतयोगसम्पदभिती जाता विशालाकृतिर्यावन्ती मधुरा ध्वनिं विदधती पश्चादयोध्याऽभवत् । माया द्वारवती शिवाधिवसतिः सा काशिका दृश्यते तच्चित्रं न वदामि माधव ! यतः त्वां सा सदा संश्रिता ॥" इति] याः तत्—परं

ब्रह्म, कौतुकात्—आनन्दात्, शतधा—बहुधा इत्यर्थः, आलिङ्गन्ति, समालपन्ति, आकर्षन्ति क्रीड़ार्थमाहरन्ति, चुम्बन्ति च ॥ शार्दूलविक्रीड़ितं वृत्तम् ।

किमिति ।—हे कान्ते ! करस्य उपान्ते—प्रान्तभागे, करतले इत्यर्थः, इमां गण्डस्थलीं किं—कथं, करोषि ? न एकान्तः,—एकावसानं यस्य सः नैकान्तः, अन्यासक्त इति यावत् स न भवतीति अनैकान्तः तस्मिन्—अन्यभिचारिणि, त्वन्मात्रवल्लभे इत्यर्थः, प्रणयप्रवणे—प्रणयाकाङ्क्षिणीत्यर्थः, कान्ते क्रुधः,—कोपाः, न उचिताः, इति—एवं प्रकारेण, यावत् वयं कुरङ्गाक्षीं—मृगनयनां, वक्तुम् ईहामहे—चेष्टामहे, तावत् चूते—रसाले, मधुरः,—मनोहरः, मधुपध्वनिः,—भ्रमरझङ्कारः, आविरभूत्—अजायत; भ्रमररवेणैव मानभङ्गो जातः, नास्माकं प्रयासस्यावश्यकतेति भावः ।

## लक्ष्मी

श्रव्यमिति । श्रोतव्यमात्र केवलश्रवणयोग्यं श्रव्यं काव्यम् । मात्रपदनिवेशेन दृश्यकाव्येषु वाचिकांशमादाय श्रवणयोग्यत्वस्य विद्यमानत्वेऽपि आङ्गिकाद्यंशेषु दर्शनयोग्यत्वस्यापि विद्यमानत्वात् नातिव्याप्तिः ।

तत् प्रभेदद्वयं निरूपयति—तदिति । तत् श्रव्यकाव्यं द्विधा द्विप्रकारकं पद्यमयं गद्यमयञ्चेति ।

तत्र पद्यमयं काव्यं निरूपयति—छन्दोबद्धपदमिति । छन्द अनुष्टुवादिस्तच्च छन्दः शास्त्रप्रसिद्धलक्षणम्, तेन छन्दसा बद्धानि नियंत्रितानि पदानि सुप्तिङन्तरूपाणि यत्रतत्तथोक्तं काव्यं पद्यमिति, एतच्च पद्यसामान्यलक्षणम् । तेन पद्येन समाप्तिबोधकक्रियान्वये—पद्यान्तरनिरपेक्षेण एकेन मुक्तकम्, मुक्तमेव मुक्तकं संज्ञायां कन् । तेनेत्यभेदे तृतीया पद्याभिन्नं मुक्तकमित्यर्थः । द्वाभ्यां समाप्तिबोधकक्रियान्वये परस्परैकवाक्यतापन्नाभ्यां पद्याभ्यां युग्मकं युग्ममेव युग्मकम् अत्रापि संज्ञायां कन्, एवमग्रेऽपि । त्रिभिः समाप्तिबोधकक्रियान्वये परस्परैकवाक्यतापन्नैःपद्यैः सन्दानं सम्मेलनमस्य सञ्जातमिति सान्दानतिकमिष्यते सान्दानतिकस्यैव चान्यत्र विशेषवमिति तिलकमिति च संज्ञान्तरद्वयमुपलभ्यते । चतुर्भिः समाप्तिबोधकक्रियान्वये परस्परैकवाक्यतापन्नैः पद्यैः कलापकं मतम् । पञ्चभिः समाप्तिबोधकक्रियान्वये परस्परैकवाक्यतापन्नैः पद्यैः कुलकं मतम् । पञ्चभिरिति तदन्यूनसंख्याव्यवच्छेदार्थम् । तेन शिशुपालवधादौ दशादिभिः पद्यैः कुलकं संगच्छत इत्याद्यूहनीयम् । तदुक्तम्—

> **'द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम् ।**
> **कलापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतम् ॥' इति ।**

मुक्तकमुदाहरति—सान्द्रानन्दमिति । प्रतिमुहुः सर्वदैव ध्यानैकतानाः ध्यानमात्राविष्टाः योगिनः क्षणमपि साक्षात्कर्तुं प्रत्यक्षीकर्तुं यत् सान्द्रानन्दं निविडानन्दस्वरूपम्, अनन्तमपारम्, अव्ययं शाश्वतं नाशरहितमित्यर्थः, अजं जन्महीनम्, परं प्रकृष्टं ब्रह्म उपासते, तद् ब्रह्म या मधुरा (मथुरा) पुरीयुवतयः, कौतुकात् (शतधा आलिङ्गन्ति आश्लिषन्ति समालपन्ति विहारार्थं कर्षन्ति चुम्बन्ति च ता मधुरा (मथुरा) पुरीयुवतयो धन्याः, योगिवृन्दापेक्षयाऽऽप्यधिककालसाक्षात्कारादित्याशयः । शार्दूलविक्रीडितं छन्दः । मधुराशब्दस्य मधुपुर्यभिधायकत्वं मधुसूदनसरस्वतिना उक्तम्—

> **'काञ्ची ते धृतयोगसम्पदभितो जाता विशालाकृतिः-**
> **र्यावन्ती मधुरा ध्वनिं विदधती पश्चादयोध्याऽभवत् ।**
> **माया द्वारवती शिवाधिवसतिः सा काशिका दृश्यते**

तच्चित्रं न वदामि माधव ! यतस्त्वां सा सदा संश्रिता ।।' इति ।

अत्र 'धन्या भवन्ती'ति समाप्तिसूचकक्रियान्वये पद्यान्तरापेक्षाया अभावात् परस्परैकवाक्यतापन्नत्वेन मुक्तकत्वम् ।

मानिन्या मानभङ्गप्रकारं सख्यौ कथयन् युग्मकमुदाहरति—किं करोषीति । हे कान्ते प्रियतमे ! करोपान्ते पाणितले, इमां गण्डस्थलीं कपोलस्थलीं किं किमर्थं करोषि स्थापयसि ? प्रणयप्रवणे तव प्रीत्यर्थमुत्कण्ठिते, अनैकान्ते अव्यभिचारिणि त्वदेकमात्रप्रिये इत्यर्थः;कान्ते वल्लभे क्रुधः न उचिता न युक्ताः, इति अनेन प्रकारेण कुरङ्गाक्षीं मृगलोचनां वक्तुं यावद् ईहामहे चेष्टामहे तावदेव चूते आम्रवृक्षे मधुरो गम्भीरो मधुपध्वनिः । भ्रमररवः आविरभूत् । तेन तन्मानभङ्गं अयत्नेन सहसैव सञ्जात इति भावः । अत्र प्रथमश्लोकार्थस्य द्वितीयश्लोके 'आविरभूत्' इति समाप्तिबोधकक्रियान्वये इति पदेन पद्ययोः परस्परैकवाक्यतापन्नत्वेन सङ्घटनात् युग्मकत्वम् ।

एवमिति । अन्यान्यपि सान्दानतिकादीन्यपि एवमुदाहरणानि ज्ञेयानीति शेषः ।

तत्र सान्दानतिकं यथा—

'रुरुदिषा वदनाम्बुरुहश्रियः सुतनु ! सत्यमलङ्करणाय ते ।
तदपि सम्प्रति सन्निहिते मधावधिगमं धिगमङ्गलमश्रुणः ।।
त्यजति कष्टमसावचिरादसून् विरहवेदनयेत्यघशङ्किभिः ।
प्रियतया गदितास्त्वयि बान्धवैरवितथा वितथाः सखि ! मा गिरः ।।
न खलु दुरगतोऽप्यतिवर्त्तते महमसाविति बन्धुतयोदितैः ।
प्रणयिनो निशमंय्य वधूर्बहिः स्वरमृतैस्मृतैरिव निर्ववौ ।।'

कुलकं यथा—किरातार्जुनीये—तृतीयसर्गे 'ततः शरच्चन्द्र' इत्यारम्भ 'मुनिमावभाषे' इत्यन्तम् । यद्वा—

'तात यूयं यमश्रायं दिशं नायेन दक्षिणाम् ।
विक्षावैस्तोयविश्रावं तर्जयन्तो महोदधे ।।
उन्नायानधिगच्छन्तः प्रद्रावैर्वसुधाभृतम् ।
वनाभिलावान् कुर्वन्तः स्वेच्छया चारुविक्रमाः ।।
सदोद्गारसुगन्धीनां फलानामलमाशिताः ।
उत्कारेषु च धान्यानामनभीष्टपरिग्रहाः ।।
संस्तावमिव श्रृण्वन्तश्छन्दोगानां महाध्वरे ।
संजितं मधुलेहानां पुष्पप्रस्तारशायिनाम् ।।
आलोचयन्तो विस्तारमम्भसां दक्षिणोदधेः ।
स्वादयन्तः फलरसं मुष्टिसंग्रापपीडितम् ।।'

एवं षड्भिः सप्तभिरष्टभिर्नवभिर्दशभिर्वा कुलकं भवतीत्याकरतस्तत्तदुहारणानि धीधनैः स्वयमवगन्तव्यानि। कलापकं यथा—शिशुपालवधे द्वितीयसर्गे 'ततः सपत्नापनय'—इत्यारभ्य 'जगाद वदनच्छद्मपर्य्यन्तपातिनः' इत्यन्तम्। यद्वा—तत्रैव 'न खलु' वयममुष्य दानयोग्याः इत्यादि।

## रुचिरा

एषं दृश्यकाव्यान्यभिधाय—श्रुव्यकाव्यानि लक्षयितुमाह—**अथ। श्रव्यकाव्यानि** 'लक्ष्यन्त' इति शेषः। **श्रव्यं** तत्सञ्ज्ञकं काव्यमित्यर्थः। **तत्** 'पुन'रिति शेषः। ६२० **श्रोतव्यमात्रम्**। मात्रपदेन द्रष्टव्यस्य व्यवच्छेदः। **पद्यगद्यमयं** पद्यं च गद्यं चेति, पद्यगद्ये च पद्यगद्यं चेति, पद्यगद्यानि प्रकृतान्युच्यन्ते यत्र तत्तथोक्तम्। 'सरूपाणामेकशेक एवविभक्तौ।' १/२/६४ इत्येकशेषः। 'तत्प्रकृतवचने मयट्।' ५/४/२१ इति मयट्। तथा च—पद्यमयम्। गद्यमयम्, पद्यगद्यमयं चेत्यर्थः। **त्रिधा**।

तत्र पद्यमयस्य भेदान् लक्षयितुमाह—**तत्र** तेषु त्रिविधेषु। **पद्यमयानि** 'काव्यनी'ति प्रसङ्गानुप्रसक्तम्। अत्र बहुवचनं वक्ष्यमाणबहुत्वनिर्देशार्थम्। **आह** ६२१ **छन्दोबद्धपदं** छन्दोभिरुक्ताऽऽदिभिर्बद्धआनि पदानि यस्य तादृशम्। **पद्यम्। तेन** तादृशलक्षणकेन। **एकेन** पद्यान्तरनिरपेक्षेण। **च। मुक्तकं** मुक्तमिवेति तथोक्तम्। 'इवे प्रतिकृतौ।' ५/३/९६ इति कन्। **द्वाभ्याम्**। 'ताभ्यां'मिति पूर्वतो वचनविपरिणामेनान्वेति। एवं परत्र। **तु। युग्मकं** युग्ममिवेति तथोक्तम्। **त्रिभिस्तैः** पद्यैः। **सन्दानितकं** सन्दानितं बद्धमिवेति ततोक्तम्। 'बद्धे सन्दानितं मूत मुद्दितं सन्दितं सितम्।' इत्यमरः। **इष्यते। चतुर्भिः** तैः पद्यैरिति पूर्वतः। **च। कलापकं** कलापः समूह इवेति तथोक्तम्। **पञ्चभिः** पञ्चसङ्ख्यातोऽन्यूनसङ्ख्याकैस्तैः पद्यैरिति भावः। **कुलकं** कुलमिवेति तथोक्तं काव्यम्। **मतम्**॥ ६११॥६१२॥

तानि क्रमादुदाहत्रुमाह—**तत्र** तेषु मुक्ताकादिषु मध्ये इति यावत्। **मुक्तकम्। यथा। मम।**

"**मुहुः** पुनः। **ध्यानैकताना** ध्यानेनैकतानाः समाहितचित्ताः सन्तः। **योगिनः। अपि। सन्द्रानन्दमानन्दघनम्। अनन्तं** देशकालपरिच्छेदशून्यम्। **अव्ययं** परिणामिताशून्यमपचयहीनं वा। **अजं** जन्मरहितम्। **यत्**। परं सर्वतो विलक्षणं किमपि वस्तु। **साक्षात्कतर्त्तुम्। प्रति मुहुः** पुनः पुनः। **उपासते** उद्गीथाद्युपासनं कुर्वते। **तत्। ब्रह्म**(कर्म्म)। **याः। कौतुकात्। आलिङ्गन्ति। समालपन्ति। शतधा** बहुप्रकारेण। **कर्षन्ति** स्वानुकूलतयाऽवस्थापयन्ति। **चुम्बन्ति। च** (इदं समुच्चयार्थम्)। **ताः। मथुरापुरीयुवतयो** मथुरापुर्य्यां निवासिन्यो योषितः। **धन्याः** कृतार्थाः सफलभाग्याः। नतु तेयोगिन इतिभावः। शार्दूलविक्रीडितं वृत्तम्॥ ३४०॥"

**युग्मकम्। यथा। मम**—हे **कान्ते** सुन्दरि! **करोपान्ते** करतलसमीपभागे। इमाम्। गण्डस्थलीम्। किम्। **करोषि** करतलोपरि गण्डस्थलनिधानं हि मन्युव्यञ्जिका मुद्रेति सा तया किं क्रियत इति प्रश्नाभिप्रायः। **ननु** त्वमन्यासक्त इति युक्तैव तथाऽवस्थितिरित्याशङ्क्याह—**अनैकान्ते**ऽन्यस्यामनासक्ते। नैकाऽन्ते निश्चये यस्य स नैकान्तः तद्भिन्नस्तथोक्तः। तथाऽपि **प्रणयप्रवणे** प्रणये प्रेम्णि प्रवणः कृताभिलाषः तादृशे, यद्वा—प्रणये प्रेम्णाऽऽनमने प्रवण उद्यतस्तादृश इत्यर्थः। **कान्ते** वल्लभजने। **क्रुधः। न उचिताः। इति। यावत्। वयम्। कुरङ्गाक्षीं** मृगनयनाम्। **वक्तुम्। ईहामहे** चेष्टामहे। **तावत्** तदवधि। **चूते** रसाले। **मधुरो** मन्मथोद्दर्द्धकतया **माननिवर्त्तक** अतएव प्रिय इति भावः, **मधुपध्वनिर्म**धुपानप्रमत्तानां भ्रमराणां ध्वनिः। **आविरभूत्**। मधुपध्वनिराविर्भवन्नेव तस्या मानं जहारं, न पुनः प्रार्थनाऽऽवश्यकत्वमापतितमिति भावः॥ ३४१॥ ३४२॥"

सन्दानितकान्येवं स्वयम्मृग्यानीत्याह—एवमित्यादि । स्पष्टम् । तत्र सन्दानितकं यथा—"रुरुदिषा वदनाम्बुरुहश्रियः सुतनु ! सत्यमलङ्करणाय ते । तदपि सम्प्रति सन्निहिते मधावधिगमं धिगमङ्गलमश्रुणः ॥ त्यजति कष्टमसावविरादसून विरहवेदनयेत्यघशङ्किभिः । प्रियतया गदितास्त्वयि बान्धवैरवितथा वितथाः सखि ! मा गिरः ॥ न खलु दूरगतोऽप्यतिवर्त्तते महमसाविति बन्धुतयोदितैः । प्रणियणो निशमय्यवधूर्बहिः स्वरमृतैरमृतैरिव निर्ववौ ॥" एतस्यैव विशेषकमिति सञ्ज्ञान्तरम् । कलापकं यथा—"न खलु वयममुष्य दानयोग्याः" इत्यादि । कुलकं पञ्चभिर्यथा—"यात यूयं यमश्रायं दिशं नायेन दक्षिणाम् । विक्षावैस्तोयविश्रावं तर्जयन्तो महोदधेः ॥ उन्नायानाधिगच्छन्तः प्रद्रावैर्वसुधाभृताम् । वनाभिलावान् कुर्वन्तः स्वेच्छया चारुविक्रमाः ॥ सदोद्गारसुगन्धीनां फलानामलमाशिताः । उत्कारेषु च धान्यानामनभीष्टपरिग्रहाः ॥ संस्तावमिव श्रृण्वन्तश्छन्दोगानां महाध्वरे । शिञ्जितं मधुलेहानां पुष्पप्रस्तारशायिनाम् ॥ आलोचयन्तो विस्तारमम्भसां दक्षिणोदधेः । खादयन्तः फलरसं मुष्टिसङ्ग्राहपीडितम् ॥" षड्भिर्यता—विततवलिविभाव्यपाण्डुलेखाकृतपरभामविलीनां रोमराजिः । कृशमपि कृशतां पुनर्नयन्ती विपुलवरोन्मुखलोचनावलग्नम् ॥ प्रसकलकुचबन्धुरोद्धुरोरः प्रसभविभिन्नतनूत्तरीयबन्धा । अवनमदुदरोच्छ्वसद्दुकूलस्फुटतरलक्ष्यगभीरनाभिमूला । व्यवहितमविजानती किलान्तव्रणभुवि वल्लभमाभिमुख्यभाजम् । अधिविटपि सलीलमग्रपुष्पग्रहमपदेन चिरं विलम्ब्य काचित् ॥ अथ किल कथिते सखीभिरत्र क्षणमपरेव ससम्भ्रमा भवन्ती । शिथिलितकुसुमाकुलाग्रपाणिः प्रतिपदसंयमितांशुकावृताङ्गी ॥ कृतभयपरितोषसन्निपातं सचकितसस्मितवक्त्रवारिजश्रीः । मनसिजगुरुतत्क्षणोपदिष्टं किमपि रसेन रसान्तरं भजन्ती ॥ अवनतवदनेन्दुरिच्छतीव व्यवधिमधीरतया यदस्थितास्मै । अहरत सुतरामतोऽस्य चेतः स्फुरमभिभूषयति स्त्रियस्त्रपैव ॥" इति एवं सप्तभिरष्टभिर्नवभिर्दशभिर्वाऽपि कुलकं भवतीति तत्तदुदाहरणानि स्वयमूह्यानि ।

सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः ॥ ३१५ ॥

सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः ।

एकवंशभवा भूपाः कुलजा बहवोऽपि वा ॥ ३१६ ॥

शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते ।

अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसंधयः ॥ ३१७ ॥

इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम् ।

चत्वारस्तस्य वर्गाः स्युस्तेष्वेकं च फलं भवेत् ॥ ३१८ ॥

आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा ।

क्वचिन्निन्दा खलादीनां सतां च गुणकीर्तनम् ॥ ३१९ ॥

एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः ।

नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह । ३२० ॥

नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते ।

सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् ॥ ३२१ ॥

संध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः ।

प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः ॥ ३२२ ॥

संभोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः ।

रणप्रयाणोपयममन्त्रपुत्रोदयादयः ॥ ३२३ ॥

वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह ।

कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ॥ ३२४ ॥

नामास्य सर्गोपादेयकथया सर्गनाम तु ।

संध्यङ्गानि यथालाभमत्र विधेयानि 'अवसानेऽन्यवृत्तकैः' इति बहुवचनमविवक्षितम् । साङ्गोपाङ्गा इति जलकेलिमधुपानादयः । यथा— रघुवंश-शिशुपालवध-नैषधादयः । यथा वा मम—राघवविलासादि ।

---

## विवृतिः

महाकाव्यमाह—सर्गबन्ध इति । सर्गैरवान्तरार्थवर्णनैरुपलक्षितः बन्धः । पद्यबन्ध इत्यर्थः ।

तत्र महाकाव्ये । बहवः ।

नायका इत्यर्थः । नाटकसंधयो मुखप्रतिमुखगर्भविमर्शनिर्वहणाख्याः ।

इतिहासोद्भवं भारतादिप्रसिद्धम् । अन्यल्लोकप्रसिद्धम् ।

चत्वारो वर्गाः धर्मार्थकाममोक्षाः, तेषु चतुर्षु मध्ये एकं चेति चकारो वार्थः । फलं वर्गः । आदौ आरम्भे । वस्तुनो वर्णनीयनायकस्य नाम्ना निर्देशो वस्तुनिर्देशः । एकवृत्तमयैरेकजातीयपद्यैरुपलक्षिताः । अष्टाधिका अष्टान्यूनाः ।

इह महाकाव्ये । उपयमो विवाहः ।

यथायोगं यथासंभवम् ।

एतेन येन केनाप्यङ्गेन हीनमपि काव्यं न दुष्टमिति भावः ।

वृत्तस्य वर्णनीयचरित्रस्य । अस्य महाकाव्यस्य । कविनामकं महाकाव्यं माघभारविप्रभृति ।

वृत्तनामकं कुमारसंभववादि । नायकनामकं रघुप्रभृति । इतरनामकं भट्टिप्रभृति । महाभारतादौ गद्यसत्त्वेऽपि पद्यप्राचुर्येणैव महाकाव्यत्वव्यवहारः ॥

## विवृतिपूर्तिः

महाकाव्यमिति । अत्र विशेषः—'शास्त्रं काव्यं शास्त्रकाव्यं काव्यशास्त्रं च भेदतः । चतुष्प्रकारः प्रसरः सतां सारस्वतो मतः ॥ शास्त्रं काव्यविदः प्राहुः सर्वकाव्याङ्गलक्षणम् । काव्यं विशिष्टशब्दार्थसाहित्यसदलंकृति ॥ शास्त्रकाव्यं चतुर्वर्गप्रायं सर्वोपदेशकृत् । भट्टि-भौमक-काव्यादि काव्यशास्त्रं प्रचक्षते ॥ शास्त्रं कुर्यात्प्रयत्नेन प्रसन्नार्थमनुष्टुभा । येन सर्वोपकाराय याति सुस्पष्टसेतुताम् ॥ काव्ये रसानुसारेण वर्णनानुगुणेन च । कुर्वीत सर्ववृत्तानां विनियोगं विभागवित् ॥ शास्त्रकाव्येऽतिदीर्घाणां वृत्तानां न प्रयोजनम् । काव्यशास्त्रेऽपि वृत्तानि रसायत्तानि काव्यवित् ॥ पुराणप्रतिबिम्बेषु प्रसन्नोपायवर्त्मसु । उपदेशप्रधानेषु कुर्यात्सर्वेष्वनुष्टुभम् ॥ नानावृत्तविशेषास्तु कवेः शस्तस्य शासनात् यान्ति प्रभोरिवात्यन्तमयोग्या अपि योग्यताम् ॥' इति ॥

क्वचिदिति । यथा धर्मशर्माभ्युदयादौ ॥

एकवृत्तेति । एकवृत्तेति लक्ष्यानुरोधेनैव । नतूच्छृङ्खलतया वैदिकच्छन्दोभिर्हिन्दीप्रभृतिच्छन्दोभिर्वा । प्रायेणाधुनिका मातरिपुरुषा 'अग्निमीले पुरोहितम्' इत्येवमादि विडम्बयितुमुत्सहन्ते । कतिपये पुनर्दोहासोरठाघनाक्षरीप्रभृतीनि गजलदादराकव्वालीप्रभृतीनि च तत्तद्भाषाछन्दांसि संस्कृते व्यवहर्तुमीहन्ते तैरपि लक्ष्यानुरोधेनैव प्रवर्तितव्यम् । इतरथावेतालचेष्टितं स्यात् । एतदुक्तं भवति—'षड् (३) जलधि (४) त्रि (३) कलैर्युता विषमे भाति सदैव । रस (६) वेदै (४) क (१) कलैरथो समे भाति दोहैव ॥' इत्येवमादिषु लक्षणेऽपि प्रासयन्त्रमावलोकनात्, भाषायामपभ्रंशस्वाच्छन्द्याच्च निर्वहेऽपि संस्कृते तथा राहित्यात् क्वापि घटनेऽपि पर्यवसानेऽधमकक्षासंनिपाता-त्तादृक्काव्य घटनं कापेयमेव । यथावसरं हि सर्वं शोभत इत्येव न्याय्यम् । एतेन् साहसिकाः प्रबन्धलेखकाः । अकाण्डव्याख्यानकर्तारोऽपि निवेदिताः ॥

क्वापीति । यथा शिशुपालवधे चतुर्थः सर्गः, किरातार्जुनीये पञ्चमः ॥

वर्णनीया इति। केषांचन वर्णनीयानां विशिष्य वर्णनप्रकारा निरूप्यन्ते—'नृपे विद्या नयः शक्तिर्बलं तस्करताक्षमः। प्रजाशास्तिः प्रजारागो धर्मकामार्थतुल्यता ॥ प्रयाणरणखड्गादिशास्त्राण्यरिपराजयः। अरि-नाशोऽरिशैलादिवासोऽरिपुरशून्यता। महः श्रीदानकीर्त्याद्या गुणौघा रूपवर्णनम् ॥ महामात्ये नयः शास्त्रं धैर्यं बुद्धिर्गभीरता। शक्तिः शस्त्रमलोभत्वं गुणौधा रूपवर्णनम् ॥ महामात्ये नयः शास्त्रं धैर्य बुद्धिर्गभीरता। शक्तिः शस्त्रमलोभत्वं जनरागो विवेकिता ॥ पुरोहिते स्मृतिर्वेदा निमित्तापत्प्रतिक्रिया। दण्डनीतिज्ञता शुद्धिधर्मशीलकुल-क्रमाः ॥ देव्यां विज्ञानचातुर्यत्रपाशीलव्रतादयः। रूपलावण्यसौभाग्यप्रेमश्रृङ्गारमन्मथाः ॥ वेणीधम्मिल्लसीमन्तभा-लश्रवणनासिकाः। कपोलाधरनेत्रभ्रूकटाक्षदशनोक्तयः ॥ कण्ठबाहुकरोरोजनाभ्यो मध्यं बलित्रयम्। रोमालिश्रोणिजङ्घोरुगतिक्रमनखाः क्रमात् ॥ कुमारे शस्त्रशास्त्रश्रीकलाबलगुणोच्छ्रयाः। बाह्यालीखुरली राजभक्तिः सुभगतादयः ॥ सेनापतौ महोत्साहः स्वामिभक्तिरभीरुजा। अभ्यासो वाहने शास्त्रे शस्त्रे च, विजयो रणे ॥ देशे बहुखनिद्रव्यपण्यधान्यकरोद्भवाः। दुर्गग्रामजनाधिकयनदीमातृकतादयः ॥ ग्रामे धान्यलतावृक्षसरसीपशुपुष्टयः। क्षेत्रारघट्ट केदारग्रामेयीमुग्धविभ्रमाः ॥ पुरेऽट्टपरिखावप्रप्रतोलीतोरणादयः। प्रासादाध्वप्रपारामवाप्यो वेश्या सती-त्वरी ॥ सरस्यम्भोलहर्यम्भोगजाद्यम्बुजषट्पदाः। हंसचक्रादयस्तीरोद्यानस्त्रीपान्थकेलयः ॥ अब्धौ द्वीपाद्रिरलोर्मि-पोतयादोजगत्प्लवाः। विष्णुकुल्यागमश्चन्द्राद्वृद्धिरौर्वोऽब्दपूरणम् ॥ सरित्यम्बुधियायित्वं वीच्यो जलगजादयः। पद्मानि षट्पदा हंसचक्राद्याः कूलशाखिनः ॥ उद्याने सरणिः सर्वफलपुष्पलताद्रुमाः। पिकालिकेकिहंसाद्याः क्रीडा-वाप्यध्वगस्थितिः ॥ शैले मेघौषधीधातुवंशकिंनरनिर्झराः। शृङ्गपादगुहारत्नवनजीवाद्युपत्यकाः ॥ अरण्येऽहिवरा-हेभयूथसिंहादयो द्रुमाः। काकोलूककपोताद्या मिल्लभल्लदवादयः ॥ आश्रमेऽतिथिपूजैणविश्वासो हिंस्रशान्तता। यज्ञधूमो मुनिसुता द्रुसेको वल्कलद्रुमाः। मन्त्रे पञ्चाङ्गताशक्तिषाड्गुण्योपायसिद्धयः। उदयास्त्वि-न्तनीयाश्च स्थैर्यौन्नत्यादिसूक्तयः ॥ दूते स्वस्वामितेजः श्रीविक्रमौन्नत्यकृद्वचः। शत्रुक्षोभकरी चेष्टा धाष्टर्य दाक्ष्य-मभीरुता ॥ युद्धे तु वर्मबलवीररजांसि तूर्यविस्वासनादशरमण्डपरक्तनद्यः। छिन्नातपत्ररथचामर-केतुकुम्भिमुक्तासुरी वृतभटामरपुष्पवर्षाः। प्रयाणे मेरिनिस्वानभूकम्पबलधूलयः। करमोक्षध्वजच्छत्रवणिक्छक-टवेशराः। मृगयायां श्वसंचारो वागुरा नीलवेषता। भटढक्कामृगत्रासः सिंहयुद्धं त्वरागतिः ॥ अश्वे खरखुरोत्खा-तरजः सल्लक्षणस्थितिः। तेजो वेगित्वमौन्त्यं जातिर्धाराप्रपञ्चनम् ॥ गजे सहस्त्रयोधित्वमुञ्चत्वं कर्णचापलम्। अरिव्यूहविभेदित्वं कुम्भमुक्तामदालिनः ॥ सुरभौ दोलाकोकिलमारुतसूर्यगतितरुदलोद्भेदाः। जातीतरपुष्पच-याम्रमञ्जरीभ्रमरझंकाराः ॥ ग्रीष्मे पाटलमल्लीतापसरः पथिकशोषवाताल्यः। सक्तुप्रपाप्रपास्त्रीमृगतृष्णाम्रादिफल-पाकाः ॥ वर्षासु घनशिखिस्मयहंसगमाः पङ्कन्दलोद्भेदौ। जातीकदम्बकेतकझंझानिलनिम्नगा हलिप्रीतिः ॥ शरदीन्दुरविपटुत्वं जलाच्छतागस्त्यहंसवृषदर्पाः। सप्तच्छपद्मसिताभ्रधान्यशिखिपक्ष्मदपाताः ॥ हेमन्ते दिनलघुता शीतयवस्तम्बमरुबकहिमानि। शिशिरे करीषधूमः कुमुदाम्बुजदाहशिखिरतोत्कर्षाः ॥

सूर्येऽरुणता रविमणिचक्राम्बुजपथिकलोचनप्रीतिः। तारेन्दुदीपकौषधिघूकतमश्चौरकुमुदकुलटार्तिः ॥ चन्द्रे कुलटाचक्राम्बुरुहविरहितनिरौज्ज्वल्यम्। जलधिजननेत्रकैरवचकोरचन्द्राश्मदम्पतिप्रीतिः ॥ विवाहे स्नानशु-भ्राङ्गभूपालूलुत्रयीरवाः। वेदीसीमन्ततारेक्षा लाजामङ्गलवर्तनम् ॥ विरहे तापनिः श्वासचिन्ता मौनं कृशाङ्गता। अब्जशय्या निशादैर्घ्यं जागरः शिशिरोष्मता ॥ स्वयंवरे शचीरक्षामञ्चमण्डपसज्जता। राजपुत्री नृपाकारान्वयचे-ष्टाप्रकाशनम् ॥ सुरापाने विकलता स्खलनं वचने गतौ। लज्जा मानच्युतिः प्रेमाधिक्यं रक्तेक्षणभ्रमाः। पुष्पावचये पुष्पावचयः पुष्पार्पणार्थिने दयिते। मानाद्यं गौत्रस्खलनेर्ष्यावक्रोक्तिसंभ्रमाश्लेषाः ॥ जलकेलौ सरःक्षोभश्चक्रहंसा-पसर्पणम्। पद्मग्लानिः पयः क्षेपो दृग्रागो भूषणच्युतिः ॥ सुरते सात्त्विका भावाः सीत्कारः कुड्यलाक्षता। काञ्ची-

कङ्कण मञ्जीररवोऽधरनखक्षते ॥ प्रातः कोकाम्बुजोत्कर्षो मध्याह्ने तापसंप्लवः । सायं सूर्यातिलौहित्यं चक्रपद्मादि-विप्लवः ॥ अन्धकारेऽतिसान्द्रवं विश्वलोपसमर्थता । आकस्मिकसमारम्भो निःशङ्कमभिसारिका: ॥ वर्ण्येषु वर्ण्य-भावानां दिङ्मात्रमिह दर्शितम् । चिद्रूपैश्चिन्त्यमानानां भवत्येषामनन्तता ॥' इति ॥

सर्गनामेति । यथा गीतगोविन्दे प्रथम-द्वितीयादिसर्गाणां सामोददामोदर-अक्लेशकेशवादिनाम्ना व्यप-देशः ॥

## विज्ञप्रिया

महाकाव्यलक्षणमाह—सर्गबन्ध इत्यादि । परिच्छेदरूपः सर्गो बध्यतेऽस्मिन्निति सर्गबन्धः । सुरो देवः । सर्वे नाटकसन्धयो मुखप्रतिमुखादयः पञ्च । सज्जनाश्रयम्—वर्णनीयोत्तमजनस्य वृत्तं वेत्यर्थः ।

चत्वार इति—धर्मार्थकाममोक्षा ये चत्वारो वर्गास्तेष्वेकमपि तत्फलमित्यर्थः । एकवृत्तमयैरिति—एक-च्छन्दोव्याप्तैरित्यर्थः । अवसाने सर्गान्ते । साङ्गोपाङ्ग इति—अमी सन्ध्यासूर्येन्द्वादयः पुत्रजन्मान्ता इह काव्ये यथायोगं यथासम्भवं साङ्गोपाङ्गा वर्णनीया इत्यर्थः । तत्र सन्ध्याङ्गम्—चक्रवाकविरहः, वासराङ्गम्—जलके-ल्यादिः, रजन्यङ्गम्—मधुपानादि, उपाङ्गम्-तत्रैव परिहासादयः, मुनिः—नारदादिः, प्रयाणम्-यात्रा, उपयमः विवाहः, मन्त्रः-मन्त्रणा, पुत्रोदयः-पुत्रजन्म । इतरस्य प्रतिनायकस्य, तन्नाम्नास्य नामेत्यर्थः । सर्गोपादेयेति—सर्गे उपादेया वर्णिता या कथा तया सर्गनामेत्यर्थः ।

बहुवचनमविवक्षितमिति—अवसान एकस्यापि अन्यवृत्तिकस्य दृष्टत्वात् । यथा रघुवंशमिति । तत्र वृत्तस्य नाम्ना रघुवंशेति । एकवंशजा बहुभूपाः । प्रतिनायकस्य नाम्ना शिशुपालवध इति । नैषधादौ तु नायकस्य नाम्ना । नायकस्तु सद्वंशजः क्षत्रियः ।

## कुसुमप्रतिमा

सर्गेति । सर्गैरन्ते सर्गशब्दोपस्तापिताध्यायैः बन्धो रसवत् पद्यसमूहविन्यासो विन्यस्तरसवत्पद्यसमूह इत्यर्थः महाकाव्यम् । तत्र महाकाव्ये धीरोदात्तगुणान्वितः सुरो देवतास्वभाव एक एकमात्रो नायकः । अत्रैकशब्दः "बहवोऽपि वा" इत्यस्य पक्षान्तरं सूचयति । यथा—शिशुपालवधे श्रीकृष्णः, कुमारे कर्त्तिकेयो वा । वा अथवा धीरोदात्तगुणान्वितः सद्वंशः एकः क्षत्रिय नायकः । यथा—किरातार्जुनीये अर्जुनः । अपिशब्देन क्षत्रियेतरजातिरपि तादृश एको नायको भवितुमर्हतीति सूचितम् । वा अथवा एकीवंशभवाः, कुलजाः कुलीनः, बहवोऽपि धीरोदात्त-गुणान्विता भूपा नायका भवितुमर्हन्ति । यथा—रघुवंशे दिलीपादयः । एक एकतमः । अङ्गी प्रधानः । तत्र श्रृङ्गारो नैषधे, वीरः शिशुपालवधे, शान्ते महाभारते । शान्तानामिति बहुवचनात् करुणोऽपि गृह्यते । तेन करुणप्रधानस्य रामायणमहाकाव्यत्व सिद्धिः नाटकसन्धयी सुखादयः पञ्चैव । वृत्तमुपाख्यानम् । अन्यदितिहासोद्भवभिन्नं सज्ज-नाश्रयम् साधुजनचरित्रविषयं वृत्तम् । तस्य महाकाव्यस्य सम्बन्धिनश्चत्वार एव वर्गा धर्म्मार्थ काममोक्षरूपा वर्णनीया इति शेषः । तेषु चतुर्वर्गेषु मध्ये एकं यत्किञ्चित् फलं मुख्यप्रयोजनं भवेत्; न पुनर्द्वित्रादीति भावः । आदौ आरम्भे नमस्क्रिया । यथा—रघुवंशे । आशीर्यथा मम रुक्मिणीहरणे । वस्तुनिर्द्देशो यथा—कुमारसम्भव-शिशु-पालवधादौ । क्वचिन्महाकाव्ये । एतेनानयोरुत्कर्षमात्रजनकत्वं न पुनर्महाकाव्य स्वरूपनिर्वाहकत्वमयीति सूचि-तम् । तेन क्वचिदनयोरसत्त्वेऽपि न महाकाव्यत्वहानिरिति बोध्यम् । एकवृत्तमयैरेकप्रकारच्छन्दोबद्धैः, अवसाने समाप्तौ अन्यानि वृत्तानि च्छन्दांसि तेषां तैस्तादृशैः पद्यैर्विशिष्टाः, नातिस्वल्पाः पञ्चविंशत्यन्यूनपद्यघटिताः । एवञ्च

भट्टिकाव्यप्रथमसर्गस्य सप्तविंशतिपद्यघटितत्वान्न दोषः। नातिदीर्घास्त्रिंशानधिकपद्यघटिता इति साम्प्रदायिकाः। अष्टाधिकाः सर्गा इह महाकाव्ये कविना कर्त्तव्या इति शेषः। केचित्तु त्रिंशदशनधिका इत्यपि वदन्ति। तत्र रामायणादावव्याप्तेः। क्वापि महाकाव्ये कथन सर्गो नानावृत्तमयो बहुविधच्छन्दोनिबद्धपद्यसमूहगटिती दृश्यते। यथा—किरातार्जुनीये पञ्चमः, शिशुपालवधे च चतुर्थः। एवञ्च महाकाव्ये एकमात्र एव एतादृशः सर्गो यथेच्छं कविना कर्त्तस्य इति ग्रन्थकर्त्तुराशयः। स्वर्गान्ते भाविनोऽव्यवहितपरवर्त्तिनः सर्गस्य कथाया वृत्तान्तस्य सूचनं भवेत्। सम्भोगविप्रलम्भौ श्रृङ्गारौ वीरादिरसप्रधानेऽपि महाकाव्ये वर्णनीयादित्यर्थः, अन्यथैतदुक्तेरानर्थक्यं स्यात्। पुरं नगरौ। रणो युद्धम्, प्रयाणं यात्रामात्रम्, उपयमो विवाहः, मन्त्र उपायचतुष्टयप्रयोगमन्त्रणा, पुत्रस्य उदय उत्पत्तिः। पुत्रपदमपत्यमात्रोपलक्षणम्। आदिशब्दात् राजामात्यसेनापतिप्रभृतयश्च। अमी साङ्गोपाङ्ग वृत्त्युक्ताः; अथवा सन्ध्यादयो नक्षत्राद्यङ्गैः कामिन्यवाभिसाराद्यपाङ्गैश्च सह, यथायोगं यथासम्भवः वर्णनीयाः। एतेन उपाख्यात्रकारानुसारादेवामषामन्वतमप्रकारा वर्णनीया न पुनः सर्वत्रैव नियम एवेति सूचितम्। नाम्नेत्यभेदे तृतीया। तेन कवेर्नासा कविनामैकानुपूर्वीकमित्यर्थः, अस्य महाकाव्यस्य नाम वक्तव्यम्। एवमन्थत्रापि। तत्र कविर्नाम्ना नाम यथा—माघ भारविप्रभृति। वृत्तस्य नाम्ना नाम यथा—कुमारसम्भव-कीचकवधादि। नायकस्य नाम्ना यथा—रघुनैषधप्रभृति। अनयोवंशचरितशब्दपर्य्यन्तव्यवहारे तु वृत्तनामत्वम्। इतरस्त्र नाम्ना यथा—भार्यण्डेयपुराणादि। सर्गस्य नाम तु सर्गेउपादेयकथया वर्णनीयवृत्तान्त न वक्तव्यम्। यथा—"प्रभातवर्णन नामैकादशः सर्गः।" इति।

ननु नाटकसन्धीनामत्र कर्त्तव्यत्वे तदङ्गानामपि कर्त्तव्यता न वेत्याह सन्ध्यङ्गानीति। यथा लाभमिति। तथा च सन्ध्यङ्गानां नाटक एव नियम इति भावः। अविवक्षितमिति। तेनान्ववृत्तकैकद्विमात्रपद्यस्थलेऽपि न दोष इति भावः।

अस्मिन्निति। ऋषेरिदमित्यार्षं तस्मिन् आर्षे ऋषिरचिते पुनरस्मिन् महाकाव्ये सर्गाः आख्यानसंज्ञका भवन्ति। साम्प्रदायिकमतमेतत्।

महाकाव्यमाह, सर्गबन्ध इति।—सर्गैः,—अवान्तरार्थवर्णनैः, उपलक्षितः बन्धः,—पद्यबन्ध इत्यर्थः, महाकाव्यम्। तत्र—महाकाव्य इत्यर्थः, सुरः,—देवावशेषः, यथा,—किरातादि। बहवः,—अनेके, नायका वा इत्यर्थः, यथा, —रघुवंशे। नाटकसन्धयः,—नाटकोक्तमुखप्रतिमुखगर्भविमर्षनिनिर्वहणाख्याः पञ्चसन्धयः, प्रयोज्याः इति शेषः। इतिहासेषु पुराणादिषु, उद्भवम्—उत्पन्नं, वृत्तं—चरितं, भारतादिप्रसिद्धमित्यर्थः, अन्यत्—लोकप्रसिद्धमित्यर्थः, सज्जनाश्रयं—साधुजनाचरितमित्यर्थः। चत्वारो वर्गाः,—धर्मार्थकाममोक्षाः, ("त्रिवर्गी धर्मकामार्थैश्चतुर्वर्गः समीक्षकैः" इत्यमरः)। तेषु—चतुर्वर्गेषु मध्ये, एकञ्च [इति चकारो वाऽर्थः] फलं—वर्गः, भवेत्। आदौ—आरम्भे, महाकाव्यस्येति शेषः, वस्तुनिर्देशः,—वस्तुनः,—इतिवृत्तसम्बन्धिनः प्रधानस्य, वर्णनीयनायकस्य नाम्ना वा, निर्देशः,—कीर्त्तनम्। खलादीनां—दुर्जनादीनाम्। एकवृत्तमयैः,—एकविधच्छन्दोनिबद्धरित्यर्थः, अवसाने—सर्गसमाप्तौ, अन्यवृत्तकैः,—भिन्नच्छन्दाविरचितैरित्यर्थः, उपलक्षिताः, अष्टाधिकाः,—अष्टान्यूनाः। इह—महाकाव्ये। नानावृत्तमयः,—बहुभिच्छन्दोभिः रचित इत्यर्थः; यथा—माद्ये चतुर्थः सर्गः, किराते पञ्चमः, रघुवंशे नवमः। उपयमः,—विवाहः। यथायोगं—यथासम्भवं, साङ्गोपाङ्गाः,—-अङ्गप्रत्यङ्गसहिताः, वर्णनीयाः; एतेन नयेन केनाप्यङ्गेन हीनमपि काव्यं न दुष्टमिति भावः; [अत्राहुरलङ्कारशेखरकाराः,—"नृपे विद्या नवः शक्तिर्बल तस्करताक्षमः। प्रजाशास्ति, प्रजारागो धर्मकामार्थतुल्यता॥ प्रयाणरणखड्गादि शास्त्राःण्यपरिपराजयः। अरिनाशोऽरिशैलादि वासोऽरिपुरशून्यता॥ महःश्रीदानकीर्त्याद्या गुणौघा रूपवर्णनम्। महाभात्ये नयः शास्त्रं धैर्य्यं बुद्धिर्गभीरताः॥ शक्तिः शत्रमलोभत्व जनरागो विवेकिता॥ परोहिते स्मृतिर्वेदा निमित्तापत्प्रतिक्रिया॥ दण्डनीतिज्ञता शुद्धिर्धर्म-

शीलकुलक्रमाः ॥ देव्या विज्ञानचातुर्य्यं त्रपाशीलव्रतादयः । रूपलावण्य स्सौभाग्य प्रेमशृङ्गारमन्मथा । वेणीधमिप्रल्लोभन्त भालश्रवणनासिकाः । कपोलाधरनेत्रभ्रू कटाक्षदशनोक्तयः ॥ कण्ठबाहुकरोरोज-नाम्यो मध्यं बलित्रयम् । रोमालिश्राणिजङ्घारूगतिकमनखाः क्रमात् । कुमारे शस्त्रशास्त्रश्री कलावलगुणोच्छयाः । बाह्यालो खुरली राजा भक्तिः शुभगतादय ॥ सेनापतौ महोत्साह स्वामिभक्तिरभीरुता । अभ्यासी वाहने, शास्त्रे शस्त्रे च विजयो रणे । देशे बहुखनिद्रव्य-पण्याधघान्याकरोद्भवाः । दुर्गग्रासजनाधिक्य-नदीमातृकतादयः ॥ पुरेऽट्टपरिखावप्र-प्रतीलौतीरणादयः । प्रासादाध्वप्रपाऽऽरामवाप्यौ वेश्या सतीत्वरौ ॥ सरस्यम्बुधियायित्वं वीक्ष्या जलगजादयः । पद्मानि षट्पदा इस चक्राद्या कूलशाखिनः ॥ उद्याने सरणिः सर्वफलपुष्पलताद्रुमाः । पिकालिकेकिहसाद्याः क्रीडावाप्यध्वगस्थतिः ॥ शेले मेघोषधीधातु—वंशकिन्नरनिर्झराः । श्रृङ्गपादगुहारत्र—वनजीवाद्युपत्यकाः ॥ अरण्येऽहिवराहेभ यूथसिंहादयो द्रुमाः । काकोलूकाकपोताद्याः भिल्लभल्लदवादयः ॥ आश्रमेऽतिथिपूजैण-विश्वासो हिस्रशान्तता । यज्ञधूमौ मुनिसुता द्रुसेको वल्कलद्रुमाः ॥ मन्त्रे पञ्चाङ्गता शक्ति षाड्भण्योपायसिद्धयः । उदयाश्चिन्तनीयाश्च स्थैर्य्यौन्नत्यादिसूक्त्यः ॥ दूते स्वस्वामितेजः श्रीविक्रमौन्नत्यकृद्ववः । शत्रुक्षोभकरी चेष्टा धाष्ट्‌र्यं दाक्ष्यमभीरुता ॥ युद्धे तु वर्मवलवीररजांसि तूर्य्यविश्वासनादशरमण्डपरक्तनद्यः । छिन्नातपत्ररथवामरकेतुकुम्भिमुक्तासुरो वृतभटामरपुष्पवर्षाः ॥ प्रयाणे भेरिनिस्वानभूकम्पबलधूलयः । करमोक्षध्वजच्छत्र वणिक्छत्रवेसराः ॥ मृगमायां श्वसञ्चारी वागुरा नीलवेशता । भटढक्कामृगत्रासः सिंहयुद्ध त्वरागतिः ॥ अश्वे खरखुरोत्खात-रजः सल्लक्षणस्थितिः । तेजो वेगिवमौन्त्यं जातिर्धाराप्रपञ्चम् ॥ गजे सहस्रयोधित्वमुन्नत्वं कर्णचापलम् । अरिव्यूहविभेदित्वं कुम्भमुक्तामदालनः ॥

सूरथौ दोलाकोकिलमारुतसूर्य्यगतितरुदलोद्भेदाः । जातीतरपुण्यवयाममञ्जरीमृगतृणाम्रादिफलापाकाः ॥ वर्षासु घनशिखिस्मयहसगमाः पङ्ककन्दगलद्भेदौ । जातीकदम्बकेत झञ्झानिलनिम्नगा हलिप्रीतिः । शरदीन्दुरविपटुत्वं जलाच्छताऽगम्त्यहं सवृषदर्पाः । सप्तच्छदपद्मसिताभ्रधान्यशिखिपञ्चमदपाताः ॥ हेमन्ते दित लघुता शीतयवस्तम्बमरुवकहिमानि । शिशिरे करौषधूमः कुमुदाम्बुजदाहशिखिरतीत्कर्षाः ॥ सूर्य्येऽरुणता रविमणिचक्राम्बुजपत्रिकलोचनप्रीतिः । तारेन्दुदीपक्रौषधिध्क्कतमश्वौरकुमुदकुलटार्त्तिः ॥ चन्द्रे कुलटाचक्राम्बुरुद्विरहितमोहानि रौज्ज्वल्यम् । जलाधजलनेत्रकैरवचकोरचन्द्राश्मदम्पतिप्रीतिः ॥ विवाहे स्नान् शुभाङ्गभूषालुलुत्रयौरवाः । वेदौ सीमन्ततारेक्षा लाजामङ्गलवर्त्तनम् ॥ विरहे तापनिश्वास-चिन्ता मौनं कृशाङ्गता । अज्जशय्या नशादैर्ध्यं जागरः शिशिरोम्मता ॥ स्वयंवरे शरीरणा मञ्चमण्डपसज्जता । राजपुत्रौनृपाकारान्वयचेष्टाप्रकाशनम् ॥ सुरापाने विकलता स्खलनं वचने गतौ । लज्जा मानच्युतिः प्रेमाधिक्य रक्तेक्षणभ्रमाः । पुष्पावचये पुष्पावचयः पुष्पार्पणार्थिने दयिते । मानाद्यं गोत्रस्खलनेर्य्यावक्रोक्तिसम्भ्रमाश्लेषाः ॥ जलकेलौ सरः क्षोभश्चक्रहंसापसर्पणम् । पद्मस्नानिःपयः क्षेपो दूयागो भूषणच्चुतिः ॥ सुरते सात्त्विका भावाः सीत्कारः कुद्मलाक्षता । काञ्चीकङ्कणमञ्जीररवोऽधरनखक्षते ॥ प्रातः कोकाम्बुजोत्कर्षो मध्याह्ने तापसप्लवः । सायं सूर्य्यातिलौहित्यं चक्रपद्मादिविप्लवः ॥ अन्धकारेऽतिसान्द्रत्वं विश्वलोपसमर्थता । आकस्मिकसमारम्भा निःशङ्कमभिसारिकाः ॥ वर्ण्येषु वर्ण्यभावानां दिङ्मात्रमिह दर्शितम् । चिद्रूपैश्चिन्त्यमानानां भवेत्येषशामनन्तता ॥" इति] । कवेः,—प्रणेतुः, वा वृत्तस्य—वर्णनीयचरित्रस्य, वा नायकस्य, वा इतरस्य—अन्यस्य, नाम्ना अस्य—महाकाव्यस्य, नाम, कर्त्तव्यमिति शेषः । तत्र कविनाम यथा,—माघ भारविप्रभृति । वृत्तनाम यथा,—कुसुमारसम्भवादि । नायकनाम यथा,—रघुवंशादि । इतरनाम यथा,—भट्टिप्रभृति । तु—किन्तु, सर्गनाम सर्गे उपादेया—वर्णनीया, या कथा तया, कर्त्तव्यमिति शेषः; यथा,—रतिविलापो नाम चतुर्थः सर्ग इत्यादि । अत्र प्रकाराः यथा,—"शास्त्रं काव्य शास्त्रकाव्यं काव्यशास्त्रं च भेदतः । चतुष्प्रकारः प्रसरः सतां सारस्वती मतः ॥ शास्त्र काव्यविदः प्राहुः सर्वकाव्याङ्गलक्षणम् । काव्य

विशिष्टशब्दार्थ-साहित्यसदलङ्कृति ॥ शास्त्रकाव्यं चतुर्वर्ग-प्रायं सर्वोपदेशकृत् । भट्टिबीमककाव्यादि काव्यशास्त्रं प्रचक्षते ॥ शास्त्रं कुर्य्यात् प्रयत्नेन प्रसन्नार्थमनुष्टुभा । येन सर्वोपकाराय काव्यशास्त्रं प्रचक्षते ॥ शास्त्रं कुर्य्यात् प्रयत्नेन प्रसन्नार्थमनुष्टुभा । येन सर्वोपकाराय याति सुस्पष्टसेतुताम् ॥ काव्ये रसानुसारेण वर्णनाऽनुगुणेन च । कुर्वीत सर्ववृत्तानां विनियोगं विभागवित् ॥ शास्त्रकाव्येऽतिदीर्घाणां वृत्तानां न प्रयोजनम् । काव्यशास्त्रेऽपि वृत्तानि रसायत्तानि काव्यवित् ॥ पुराणप्रतिबिम्बेषु प्रसन्नोपायवत्रमसु । उपदेशप्रधानेषु कुर्य्यात् सर्वेष्वनुष्टुभम् ॥ नानावृत्तविशेषास्तु कवे, शस्तस्य शासनात् । यान्ति प्रभोरिवात्यन्तयोग्या अपि योग्यताम् ॥" इति ।

रसेषु शृङ्गारस्यैव प्राधान्यात् जलकेलिमधुपानादयः तदुदाहरणत्वेन प्रदर्शिताः । एवं वीरादिषु यथासम्भवं साङ्गोपाङ्गोदाहरणं मृग्यम् ।

## लक्ष्मी

महाकाव्यलक्षणं निरूपयति—सर्गबन्ध इति । सैरवान्तरार्थवर्णनैरुपलक्षितो बन्धः रसवत्पद्यकदम्बविन्यासः विन्यस्तरसवत्पद्यकदम्ब इत्यर्थः, महाकाव्यम् । अत्र विशेषः—

'शास्त्रं काव्यं शास्त्रकाव्यं काव्यशास्त्रं च भेदतः ।

चतुष्प्रकारः प्रसरः सतां सारस्वतो मतः ।

**शास्त्रं काव्यविदः प्राहुः सर्वकाव्याङ्गलक्षणम् ।**

**काव्यं विशिष्टशब्दार्थसाहित्यसदलंकृति ॥**

**शास्त्रकाव्यं चतुर्वर्गप्रायं सर्वोपदेशकृत् ।**

**भट्टिभौम वकाव्यादि काव्यशास्त्रं प्रचक्षते ॥**

**शास्त्रं कुर्य्यात् प्रयत्नेन प्रसन्नार्थमनुष्टुभा ।**

**येन सर्वोपकाराय याति सुस्पष्टसेतुताम् ।**

**काव्ये रसानुसारेण वर्णनानुगुणेन च ।**

**कुर्वीत सर्ववृत्तानां विनियोगं विभागवित् ॥**

**शास्त्रकाव्येऽतिदीर्घाणां वृत्तानां न प्रयोजनम् ।**

**शास्त्रकाव्येऽपि वृत्तानि रसायत्तानि काव्यवित् ॥**

**पुराणप्रतिबिम्बेषु प्रसन्नोपायवत्मसु ।**

**उपदेशप्रधानेषु कुर्यात्सर्वेष्वनुष्टुभम् ।**

**'नानावृत्तविशेषास्तु कवेः शस्तस्य शासनात् ।**

**यान्ति प्रभोरिवात्यन्तमयोग्या अपि योग्यताम् ॥' इति ।**

तत्र महाकाव्ये । धीरोदात्तगुणान्वितः, सुरो देवताप्रकृतिः, एक एकमात्रो नायकः । यथा शिशुपालवधे—श्रीकृष्णः, कुमारसम्भवे-कार्त्तिकेयो वा । वा अथवा धीरोदात्तगुणान्वितः सहंशः सत्कुलीन एक क्षत्रियो नायकः, यथा—नैषधे नलः । अपिना क्षत्रियेतरजातिरपि तथाविधो नायको भवितुं शक्नोतीति द्योतितम् । वा अथवा

एकवंशभवा एककुलोत्पन्ना कुलजा कुलीना बहवोऽनेका अपि धीरोदात्तगुणान्विता भूपाः क्षत्रिया नायका भवितुं शक्नुवन्ति, यथा रघुवंशे—दिलीपादयः। श्रृङ्गारवीरशान्तानां मध्ये एक एकतमः। अङ्गी मुख्यः। तत्र-नैषधे श्रृङ्गारः, शिशुपालवधे—वीरः, महाभारते-शन्तः। श्रृङ्गारतीरशान्तानामित्यत्र बहुवचनमुपलक्षणम्, तेन करुणस्यापि सङ्ग्रहः, ततश्च करुणप्रधानस्य रामायणस्य महाकाव्यमक्षतम्। नाट्यसन्धयो मुखप्रतिमुखगर्भविमर्शनिर्वहणाख्याः पञ्चापि। इतिहासो द्भवं महाभारतादिप्रसिद्धम् वृत्तं वृत्तान्तः। अन्यदितिहासोद्भवातिरिक्तं लोकप्रसिद्धमित्यर्थः। सज्जनाश्रयं शिष्टपुरुषाचरणविषयं वृत्तम्। तस्य महाकाव्यस्य सम्बन्धिनश्चत्वारो वर्गा धर्मार्थकाममोक्षा वर्णनीया इति शेषः। तेषु चतुर्वर्गेषु मध्ये एकं यत् किञ्चित् फलं प्रधानप्रयोजनं भवेत्, न पुनः द्वौ वा त्रयो वेति भावः। आदौ आरम्भे नमस्क्रिया नमस्कारः, यथा—रघुवंशे। आशीर्यथा—मुद्राराक्षसादौ। वस्तुनिर्द्देशो वर्णनीयनायकस्य नाम्ना निर्द्देशः यथा किरातार्जुनीये शिशुपालवधादौ च। क्वचिन्महाकाव्ये। खलानां शिशुनादीनां, यथा—धर्मशर्माभ्युदयादौ। अनेन खलादीनां निन्दायाः सतां गुणकीर्त्तनस्य चोत्कर्षमात्राधायकत्वं न पुनर्महाकाव्यलक्षणेऽवश्यकर्त्तव्यत्वमिति सूचितम्, अत एव क्वचिदनयोरसद्भावेऽपि न महाकाव्यत्वव्याघात इति ध्येयम्। एकवृत्तमयैः एकजातीयपद्यैः एकप्रकारकच्छन्दोबद्धैरित्यर्थः, अवसाने सर्गान्ते अन्यानि वृत्तानि च्छन्दांसि येषां तैस्ताथोक्तैः पद्यैर्विशिष्टाः। नातिस्वल्पाः पञ्चविंशतिपद्येनान्यूनाः तथा च भट्टिकाव्ये सप्तविंशतिपद्यघटितेऽपि न क्षतिः। नातिदीर्घाः शतत्रयाधिकपद्यरहिता इत्यर्थः। अष्टाधिका अष्टान्यूनाः। इह महाकाव्ये कविना विधातव्या इत्यर्थः। क्वापि महाकाव्ये कश्चन सर्गो नानावृत्तमयः अनेकविधच्छन्दोनिबद्धपद्यकदम्बसंयुतो दृश्येते। यथा शिशुपालवधघे-चतुर्थः सर्गः, किरातार्जुनीये-पञ्चमः। तथा च महाकाव्येयत्र क्वचन एकमात्र एव स्वेच्छयैतादृशाः सर्गः, किरातार्जुनीये-पञ्चमः। तथा च महाकाव्ये यत्र क्वचन एकमात्र एव स्वेच्छयैतादृशः सर्गः कविना निर्मातव्य इति मूलकर्त्तुरभिप्रायः। सर्गान्ते अवसाने भाविनोऽव्यवहितोत्तरवर्त्तिनः सर्गस्य कथाया उपाख्यानस्य सूचनं भवेत्। सन्ध्येत्यादिसागरान्तं स्पष्टम्। सम्भोगविप्रलम्भौ श्रृङ्गारौ वीरादिरसप्रधानेऽपि महाकाव्ये वर्णनीयावित्यर्थः, एतादृशार्थाकरणे एतदुक्तेः सार्थक्यं न स्यादिति मन्तव्यम्। मुनिर्नारदादिः। अध्वरो यज्ञः रणः सङ्ग्रामः, प्रयाणं केवलयात्रा, उपयमो विवाहः, मन्त्र उपायचतुष्टयमन्त्रणा, पुत्रस्य उदयो जन्म, अपत्यमात्रार्थे उलक्षणञ्चैतत्। आदिपदात् नृपामात्यसेनापतिप्रभृतयश्च। अमी साङ्गोपाङ्ग विवरणोक्ताः यद्वा सन्ध्यासूर्येन्द्वादयः पुत्रजन्मान्ताः। तत्र सन्ध्याङ्गम्—चक्रवाकविरहः। वासराङ्गम्-जलकेल्यादिः। रजन्यङ्गम् मधुपानादिः। उपाङ्गं तत्रैव परिहासादयः कामिन्याभिसारिकादयश्च यथायोगं यथासम्भवं (क)वर्णनीयाः। एतेन येन केनाप्यङ्गेन हीनमपि काव्यं न दुष्टमिति भावः। वृत्तस्य वर्णनीयचरित्रस्य। नाम्ना इत्यभेदे तृतीया। तेन कवेर्नाम्ना कविनामैकानुपूर्वीकमित्यर्थः। अस्य महाकाव्यस्य नाम कथनीयम्। अन्यत्राप्येवमेव। तत्र कविनामकं महाकाव्यं माघभारविप्रभृतिः। वृत्तनामकं कुमारसम्भवकीचकवधादि। नायकनामकं रघुप्रभृति। अस्य वंशचरितशब्दपर्यन्तव्यपदेशे तु वृत्तनामत्वं बोध्यम्। इतरनामकं भट्टिप्रभृति। सर्गस्य नाम तु सर्गे उपादेया वर्णनीया या कथा उपाख्यानं तथा तथोक्त्या वक्तव्यम्। यथा—'सन्ध्यावर्णनं नामदशमः सर्गः।' इति। यथा च गीतगोविन्दे प्रथमद्वितीयादिसर्गाणां सामोद-दामोदर-अक्लेशकेशवादि नान्ना व्यवहारः।

ननु नाटकसन्धीनामत्र विधेयत्वे तदङ्गानामपि विधेयत्वमस्ति न वेत्याशङ्क्य समाधत्तेसन्ध्यङ्गानीति। यथालाभं यथा योग्यं विधेयानि कर्त्तव्यानि तथा च नाटक एव सन्ध्यङ्गानामावश्यकत्वेन नियमो नात्र तथेति भावः। यथालाभं यथा योग्यं विधेयानि कर्त्तव्यानि तथा च नाटक एव सन्ध्यङ्गानामावश्यकत्वेन नियमो नात्र तथेति भावः। रघुवंशेत्यादि। तत्र बहुवचनमविवक्षितमिति। अवसाने एकस्याप्यन्यवृत्तिकस्य दृष्टत्वान्न दोष इति भावः। रघुवंशेत्यादि। तत्र प्रतिनायकस्य नाम्ना शिशुपालवध इति।

## रुचिरा

महाकाव्यं लक्षयति—६२२ **सर्गबन्धः** सर्गैरवान्तरार्थकैः सन्दर्भविशेषैर्बन्धः। **महाकाव्यम्। तत्र। एकः। सुरो** दिव्यः। वाऽथवा **सद्वंशः** शोभनवंशोद्भवः। **क्षत्रियः। अपि। धीरोदात्तगुणान्वितो** धीरोदात्तलक्षणसम्पन्न इति भावः। **नायकः।** वाऽऽथवा **एकवंशभवाः। कुलजाः** सगोत्राः सपिण्डा वा। **बहवः। अपि। भूपा** राजानः। 'नायका' इति पूर्वतो वचनविपरिणामेनान्वेति। शृङ्गारवीरशान्तानाम्। निर्धारणर्थेयं षष्ठी। **एकः। रसः। अङ्गी। इष्यते। सर्वे**ऽङ्गितो भिन्नाः समस्ताः। **अपि। रसाः। अङ्गानि** तदुद्भावकतया स्थिताः। 'भवन्ती'ति शेषः। तथा-**सर्वे। नाटकसन्धयो** मुखप्रतिमुखादयः पञ्च नाटकोपकारितयाऽभिहिताः सन्धय इति भावः। 'विधेया'इति शेषः। **इतिहासोद्भवं** पुराणादिप्रसिद्धम्। **वा। अन्यत्तथा**ऽप्रसिद्धम्। **सज्जनाश्रयं** सज्जन आश्रयो यस्य तादृशं सज्जनमधिकृत्य प्रस्तुतम्। **वृत्तं** चरितम्। **तस्य** महाकाव्यस्य। **चत्वारः। वर्गा** धर्म्मार्थकाममोक्षरूपाः वर्गाः। **स्युः तेषु। एकं** तदन्यतमरूपमिति भावः। **च** अथवा। **फलम्। भवेत्।** अयम्भावः—धर्मादिचतुष्टयं धर्म्माद्यन्यतमं वा तस्य फलं समुद्भावनीयम् इति। **आदौ** प्रारम्भे। **नमस्क्रिया।** वा। **आशीराशीर्वादः। वा वस्तुनिर्देश** इतिवृत्तसङ्क्षेपः। **एव।** 'मङ्गलत्वेनाचरणीय'मिति शेषः। **क्वचित्** 'महाकाव्य'इति प्रकृतम्। **खलादीनां** दुर्जन-दुष्कृत्यादीनामिति भावः। **निन्दा। सताम्। च** वा। **गुणकीर्त्तनम्।** विधेयमिति शेषः। **एकवृत्तमयै**रेकलक्षणानु-गतैः। **पद्यैः। अवसाने** अन्ते। **अन्यवृत्तकैः।** बहुवचनमविवक्षितम्। 'उपलक्षिता'इति शेषः। **इह। नातिस्वल्पाः। नातिदीर्घाः। अष्टाधिका** अष्टसङ्ख्यातोऽधिकसङ्ख्याकाः। **सर्गाः। क्वापि** कस्मिंश्चिन्महाकाव्ये। **नानावृत्त-मयो**ऽनेकच्छन्दोनिबद्धः। **कश्चन। सर्गः। दृश्यते। सर्गान्ते। भाविसर्गस्य** भाविविधानस्य सर्गस्य। **कथायाः। सूचनं** निदर्शनम्। **भवेत्। सन्ध्यासूर्य्येन्दुरजनीप्रदोषध्वान्तवासराः।** अत्र-रजनी रात्रिः, प्रदोषः सायङ्कारः, वासरो दिनम् अन्यत्स्पष्टम्। प्रातर्मध्याह्नमृगयाशैलर्त्तुवनसागराः। अत्र मृगया वने धावतां मृगादीनां हननम्। **सम्भोग-विप्रलम्भौ** शृङ्गार विशेषौ। **च। मुनिस्वर्गपुराध्वराः** पुरं नगरम्, अध्वरो यज्ञः। **रणप्रयाणोपयममन्त्रपुत्रोदयादयः** प्रयाणं सैन्येन सह राज्ञोऽन्यत्र यानम्, उपयमो विवाहः, मन्त्रः कर्त्तव्यनिर्णयः आदिना नायकप्रतापादीनां ग्रहणम्। **अमी। साङ्गोपाङ्गाः। यथायोगं** यथापयोगं यथासम्भवं वा। **इह। वर्णनीयाः। अस्य** महाकाव्यस्य। **कवेः। वृत्तस्य। नायकस्य। नाम्ना। वा। इतरस्य** प्रतिनायकस्य। 'नाम्ना' इति पूर्वतोऽनुवृत्तम्। 'सदृश'मिति शेषः। **नाम। सर्गोपादेयकथया** सर्गोपादेयमधिकृत्य निबद्धस्तया कथया सदृशमिति भावः। **तु। सर्गनाम।** 'विधेय'मिति शेषः॥ ६१३-६२२॥

उक्तमर्थं स्फुटयितुं तत्कठिनाशं विवृणोति—**सन्ध्यङ्गानीत्यादिना।** स्पष्टम्।

उदाहरति—**यथेत्यादिना।** स्पष्टम्।

**अस्मिन्नार्षे पुनः सर्गा भवन्त्याख्यानसंज्ञकाः ॥ ३२५ ॥**

**अस्मिन्महाकाव्ये । यथा—महाभारतम् ।**

---

## विवृतिः

तस्मिन्महाकाव्ये ।

## विज्ञप्रिया

अस्मिन्नार्ष इति—ऋषिप्रणीतेऽस्मिन् महाकाव्य इत्यर्थः । आख्यानसंज्ञका इति । शिष्यं प्रति गुरूणामाख्यानशास्त्रकथने याः संज्ञा अध्यायरूपास्तादृशसंज्ञका इत्यर्थः ।

## कुसुमप्रतिमा

अस्मिन्निति ।—आर्षे—ऋषिप्रणीते, अस्मिन्—महाकाव्ये, सर्गाः आख्यान संज्ञकाः भवन्ति । सर्गस्थाने आख्यानशब्दः प्रयोज्य इति भावः ।

यथेति । महाभारते सतामपि गद्यानां पद्यातिबाहुल्येनासत्कल्पीकृतत्वात् पद्यप्रकरणीयमहाकाव्यत्वसङ्गतिः । एवं विष्णुपुराणादावप्यूह्यम् ।

## विमला

महाभारतमिति ।—महाभारतादौ गद्यसत्त्वेऽपि पद्यप्राचुर्य्येणै वमहाकाव्यत्वव्यवहारः ।

## लक्ष्मी

महाकाव्ये विशेषं प्रतिपादयति—अस्मिन्निति । ऋषेरिदमित्यार्षं तस्मिन्नार्थे ऋषिप्रणीते पुनरस्मिन् महाकाव्ये सर्गा आख्यानसंज्ञका शिष्यं प्रति गुरूणामाख्यानशास्त्रकथने याः संज्ञा अध्यायरूपास्तादृशसंज्ञका भवन्तीत्यर्थः । एतच्च साम्प्रदायिकमेवेति बोध्यम् ।

विवृणोति—अस्मिन्निति । उदाहरति—यथेति । महाभारते गद्यसत्त्वेऽपि पद्यप्राचुर्येणैव महाकाव्यत्वव्यवहारः । एवं मार्कण्डेयविष्णुपुराणादावपि ज्ञेयम् ।

## रुचिरा

आर्षमहाकाव्ये किञ्चिद्वैलक्षण्यमाह—६२३ **अस्मिन्** महाकाव्ये । **पुनः । आर्षे** ऋषिप्रणीते 'सती'ति शेषः । **आख्यानसञ्ज्ञका** आख्यानभितिवृत्तवर्णनं सञ्ज्ञा येषां तादृशाः । **सर्गाः । भवन्ति ।**

काठिन्यपरिहारायाह—**अस्मिन्नित्यादि** । स्फुटम् ।

**प्राकृतैर्निर्मिते तस्मिन्सर्गा आश्वाससंज्ञकाः ।**

**छन्दसा स्कन्धकेनैतत्क्वचिद् गलितकैरपि ।। ३२६ ।।**

यथा सेतुबन्धः । यथा वा मम—कुवलयाश्चरितम् ।

---

## विवृतिः

एतत्प्राकृतकृतं महाकाव्यम् । गलितकानि छन्दोविशेषाः ।।

## विज्ञप्रिया

स्कन्धकगलितके छन्दोविशेषौ ।

## कुसुमप्रतिमा

प्राकृतैरिति । प्राकृतैः प्राकृताख्याभिर्भाषाभिः निर्म्मिते तस्मिन् महाकाव्ये सर्गा आश्वाससंज्ञका भवन्ति । एतच्च प्राकृतनिर्म्मितं महाकाव्यं क्वचिदंशे स्कन्धकेन तदाख्येन च्छन्दसा क्वचिदंशे च गलितकैस्तदाख्येश्छन्दो-विशेषैरपि निबद्धव्यमिति शेषः ।

## विमला

प्राकृतैरिति ।—प्राकृतैः,—भाषाविशेषैः, निर्मिते—प्रणीते, तस्मिन्—महाकाव्ये । स्कन्धकेन—तदाख्येन, ["छन्दवाऽऽस्कन्दकेन" इति पाठे तु,—आस्कन्दकेन—तदाख्येन, छन्दसा इति बोध्यम्] एतत्—प्राकृतं महाकाव्यमित्यर्थः । गलितकैः—तदाख्यच्छन्दोविशेषैरित्यर्थः ।

## लक्ष्मी

पुनस्तत्र विशेषं दर्शयति—प्राकृतैरिति । प्राकृतैः प्राकृतसंज्ञाभिर्भाषाभिनिर्मिते रचिते तस्मिन् महाकाव्ये सर्गा आश्वाससंज्ञका भवन्ति । एतत्प्राकृतरचितं महाकाव्यं क्वचिद्भागे स्कन्धकेन तत्संज्ञकेनछन्दसा, क्वचि-द्भागे च गलितकानि तत्संज्ञकानि छन्दोविशेषास्तैरपि निर्मातव्यमिति शेषः ।

## रुचिरा

प्राकृतमहाकाव्ये विशेषं लक्षयति—६२४ **प्राकृतैः** प्राकृतभाषामयैः पद्यैः । **निर्मिते । तस्मिन्** महाकाव्ये । **आश्वाससञ्ज्ञका** आश्वासनमानः । उच्छ्वाससञ्ज्ञका इति पाठान्तर तु उच्छ्वासनामान इत्यर्थः । **सर्गाः** । 'भवन्ती'ति शेषः । एतत्प्राकृतमहाकाव्यम् । **आस्कन्दकेन** तदभिधेन ।

**छन्दसा** वृत्तेन । **क्वचित्** । **गलितकैस्तदाख्यैः** छन्दोभिः । **अपि** । 'निबद्धं विधेय' मिति भावः ।। ६२३ ।।

उदाहरति—**यथेत्यादिना** । स्पष्टम् ।

**अपभ्रंशनिबद्धेऽस्मिन्सर्गाः कुडवकाभिधाः ।**
**तथापभ्रंशयोग्यानि च्छन्दांसि विविधान्यपि ॥ ३२७ ॥**

यथा—कर्णपराक्रमः ।

---

## विवृतिः

काव्यमाह—भाषेति । भाषा संस्कृतादिः, विभाषा अपभ्रंशादिः ।

## विज्ञप्रिया

कुडवकाभिधाः—कडवकनामानः ।

## कुसुमप्रतिमा

अपेति । अपभ्रंशेन तदाक्यया भाषया निबन्धो ग्रथनं यस्य तादृशे अस्मिन् महाकाव्ये सर्गाः कुड़वकाभिधा भवन्ति । तथा अपभ्रंशयोग्यानि विविधान्यपि च्छन्दांसि भवन्ति ।

## विमला

अपभ्रंशेति । —अपभ्रंशः— अपभाषा, तद्रचितनिबन्धः यत्र तादृशे, अस्मिन्— महाकाव्ये, सर्गाः कड़वक इत्यभिधा येषां तथोक्ताः । पद्यानि पुनः अपभंशयोग्येः विविधैः छन्दोभिः निवङ्गानि भवन्ति इति भावः ।

अपभ्रंशेति ।—अपभ्रंश,—अपभाषा, तद्रचितनिबन्धः यत्र तादृशे, अस्मिन्—महाकाव्ये, सर्गाः कड़वक इत्यभिधा येषां तथोक्ताः । पद्यानि पुनः अपभ्रंशयोग्यैः विविधैः छन्दोभिः निबद्धानि भवन्ति इति भावः ।

## लक्ष्मी

अन्यदपि विशेषं दर्शयति—अपभ्रंशेति । अपभ्रंशेन तन्नामिकया भाषया निबन्धः ग्रथनं यस्य तथोक्ते अस्मिन् महाकाव्ये सर्गाः कुडवकाभिधाः कुडवकमनामानो भवन्ति । तथा अपभ्रंशयोग्यानि विविधान्यपि अनेकान्यपि छन्दांसि भवन्ति ।

## रुचिरा

अपभ्रंशमहाकाव्ये । विशेषमाह—६२५ **अस्मिन्महाकाव्ये** । **अपभ्रंशनिबद्धे**ऽपभ्रंशेनानियतस्वरूपया भाषया निबद्धे । **कडकवकाभिधाः** कडवकनामानः । **सर्गाः** । **तथा** । **अपभ्रंशयोग्यानि** तदुचितानीति भावः । **विविधानि** । **छन्दांसि** लक्षणया तन्निबद्धानि पद्यानि भवन्तीत्यर्थः ॥ ६२४ ॥

उदाहरति—**यथे**त्यादिना । स्पष्टम् ।

**भाषाविभाषानियमात्काव्यं सर्गसमुत्थितम्।**
**एकार्थप्रवणैः पद्यैः संधिसामग्र्यवर्जितम्॥ ३२८॥**

यथा—भिक्षाटनम्, आर्याविलासश्च।

---

## विवृतिः

एकार्थप्रवणैः एकवाक्यतापन्नैः। यावत्संधिरहितं यत्तत्काव्यमित्यर्थः॥

## विवृतिपूर्तिः

भाषेति। भाषाविभाषानियमाद् एकार्थप्रवणैः पद्यैर्निबद्धम्॥

## कुसुमप्रतिमा

भाषेति। भाषाविभाषयोर्नियमात् "भाषया संस्कृतेनारब्धे संस्कृतेनैव कर्त्तव्यम्, विभाषया शौरसेन्यादि-विकृतभाषया आरब्धे तादृशभाषयैव कर्त्तव्यम्" एवं नियमात् कविना कृतमित्यर्थः, सर्गसमुज्झितमध्यापवर्जितम्, एकार्थप्रवणैरेकविषयप्रतिपादकैः पद्यैर्निबद्धमिति शेषः, तथा सन्धीनां समाग्रेण समुदायेन वर्जितं सरसं वाक्यवृन्द काव्यं स्यात्।

## विमला

काव्यमाह, भाषेति।—भाषा—संस्कृतादि, विभाषा—विरुद्धभाषा, अपभ्रंशादिरिति यावत्, तयोर्निय-मात—भाषया रचिते न विभाषा, विभाषया रचिते न भाषा प्रयोक्तव्या इति नियमेन, रचितमिति शेषः, सर्गसमु-ज्झितं—सर्गबन्धरहितम्, एकार्थप्रवणैः,—एकार्थप्रतिपादकैः, एकवाक्यताऽऽपन्नैरिति यावत्, पद्यैः, रचितमिति शेषः, सन्धिसामग्रयवर्जितं—मुखप्रतिमुखादिसन्धिसमुदायहीनं, यत् तत् काव्यम्।

## लक्ष्मी

काव्यं निरूपयति—भाषाविभाषेति। भाषा संस्कृतादिः, विभाषा अपभ्रंशादिः तयोर्नियमात् 'भाषया संस्कृतेनैव विधातव्यम्, विभाषया अपभ्रंशादिविकृतभाषयारब्धे तथाविधभाषयैव विधातव्यम्' एवं नियमात् कविना विधेयमित्यर्थः। सर्गसमुज्झितम् अध्यायरहितम्, एकार्थप्रवणैः एकवाक्यतापन्नैः पद्यैर्निर्मातव्यमिति शेषः, तथा सन्धीनां मुखादिपञ्चकानां सामग्रयेण समुदायेन वर्जितं यावत्सन्धिरहितमित्यर्थः, सरसं वाक्यकदम्बं काव्यं भवेत्। उदाहरति—यथेति।

## रुचिरा

काव्यं लक्षयति—५२६ **भाषाविभाषानियमात्** भाषा दवेवाणी, विभाषा प्राकृतादिः तयोर्नियमं कृत्वेति भावः। 'रचित'मिति शेषः। **सर्गसमुज्झितं** सर्गहीनम्। **एकार्थप्रवणैः** प्रस्तुतार्थप्रतिपादनमात्रपरैः। **पद्यैः**।

'सहित'मिति शेषः । **सन्धिसामग्रयवर्जितं** सन्धिसामग्रया सहितम् । **काव्यम्** । अयम्भावः—संस्कृतं प्राकृतद्यन्यतमां वा भाषामाश्रित्य प्रस्तुतानुकूलतया महावाक्यायमानैः पद्यैः सहितं मुखादिशालिसर्गहीनं यत् तत् काव्यं नाम काव्यम् । इति ॥ ६२५ ॥

उदाहरति—**यथा** । **मेघदूतादि** । आदिना हंसदूतादि । आदिना हंसदीतादेग्रहणम् ।

**खण्डकाव्यं भवेत्काव्यस्यैकदेशानुसारि च।**

**यथा—मेघदूतादि।**

---

## विवृतिः

खण्डकाव्यमाह—खण्डेति। काव्यस्यानन्तरनिरूपितस्य एकदेशानुसारि यत्किचिल्लक्षणाहीनम्। तेनात्र भाषानियमो नास्ति। एकार्थप्रवणैः संस्कृतपद्यैर्निर्मितं खण्डकाव्यमित्यर्थः॥

## विवृतिपूर्तिः

मेघदूतादीति। आदिपदेन ऋतुसंहारप्रभृतीनां संग्रहः। अत्रैव भेदे देवद्विजराजस्तुतिमात्रप्रवणानां यत्किचिल्लक्षणाक्रान्तानामन्येषामपि काव्यकानामन्तर्भावः॥

## कुसुमप्रतिमा

खण्डेति। अत्र चकारोपादगानात् काव्यस्य पूर्वनिरूक्तस्य महाकाव्यस्य त्यर्थः एकदेशानुसारिएकांशानुरूपं काव्यं खण्डकाव्यं भवेत्। अत्रैकदेशानुसारीत्यनेन महावाक्यभावेनैकवाक्यतापन्नमिति लभ्यते, तेन काषे नातिव्याप्तिः। खण्डकाव्यमिति स्पष्टा व्युत्पत्तिः।

यथेति। आदिपदाल्लोलोदय पद्यत्रयादिकृतराजस्तुल्यादीनां परिग्रहः।

## विमला

खण्डकाव्यमाह, खण्डेति।—काव्यस्य—अनन्तरनिरूपितस्य, एकदेशानुसारि—कियदंशानुरूपमित्यर्थः; तेनात्र भाषानियमो नास्ति, एकार्थप्रवणैः संस्कृतपद्यैः निर्मितं काव्यं खण्डकाव्यं भवेत्।

## लक्ष्मी

खण्डकाव्यं निरूपयति—खण्डकाव्यमिति। कारिकायां चकारपदोपन्यासात् काव्यस्य पूर्वाभिहितस्य महाकाव्यस्येत्यर्थः, एकादेशानुसारि यत्किञ्चिल्लक्षणहीनम् एकांशानुरूपमित्यर्थः, संस्कृतपद्यैर्निर्मितकाव्यं खण्डकाव्यं भवेत्। एकदेशानुसारीत्युक्त्या महावाक्यभावेन परस्परैकवाक्यत्वमिति तथा भाषानियमोऽप्यत्र नास्तीति च गम्यते। तेन कोषे चातिव्याप्तिर्नेति बोध्यम्।

उदाहरति—यथेति। आदिपदात् ऋतुसंहारनलोदयप्रभृतीनां मम वैमात्रेयमातामहचरणानां 'वाणीश' शर्मणां चकोरदूतस्य च परिग्रहः। अत्रैव भेदे यत्किञ्चिल्लक्षणाक्रान्तानामन्येषामपि देवद्विजराजस्तुतिमात्रप्रवणानां काव्यानामन्तर्भावो बोध्यः।

## रुचिरा

खण्डकाव्यं लक्षयति—६२७ **काव्यस्यानन्तरोक्तलक्षणस्य** महावाक्यविशेषस्य। **च**। **एकदेशानुसारि** कियदंशानुरूपम्। **खण्डकाव्यम्**। **भवेत्**।। ६२६॥ उदाहरति—**यथेत्**यादिना। स्पष्टम्।

**कोषः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः ॥ ३२९ ॥**

**व्रज्याक्रमेण रचितः स एवातिमनोरमः ।**

सजातीयानामेकत्र संनिवेशो व्रज्या । यथा—मुक्तावल्यादिः ।

---

## विवृतिः

कोषमाह—कोष इति । स एव कोष एव ॥

## विवृतिपूर्तिः

कोष इति । अत्रेदं तत्त्वम्—व्रज्याघटित एकः प्रकारस्तद्भिन्नो द्वितीय इति द्विविधः कोषः । तत्राद्यस्य आर्यासप्तशत्यादय उदाहरणम् । द्वितीयस्य सुभाषितावलिप्रभृतयः ॥ अकारादिहकारान्तद्यक्षरश्लोकसंघातो व्रज्या ॥

## विज्ञप्रिया

अन्योन्यानपेक्षकः—अन्योन्यनिरपेक्षकः ।

व्रज्यापदार्थमाह—सजातीयानामिति । वर्णनीयैक्येन साजात्यम् ।

## कुसुमप्रतिमा

कोष इति । अन्योन्यानपेक्षकः परस्पराकाङ्क्षारहितः श्लोकसमूहस्तु कोषः । रत्नतुल्यश्लोकसमूहधारणात् कोष इति समाख्या । व्रज्याक्रमेण एकप्रकारबहुपदार्थाख्यानसमानरूपेण रचित एव स कोषः अतिमनोरमः स्यादिति प्रशंसामात्रम् ।

## विमला

कोषमाह, कोष इति ।—अन्योऽन्यानपेक्षकः,—परस्परनिरपेक्षः, श्लोकानां समूहः कोषः । स एव—कोषः व्रज्याक्रमेण—सजातीयसन्निवेशनियमेन, रचितश्चेत् अतिमनोरमः,—अतिप्रशंसनीय इत्यर्थः । यथा,—अमरकोषादिः । यद्वा,—अकारादि हकारान्ताद्यक्षरपद्यसमूहो व्रज्याः, तत्पक्षे,—व्रज्याघटितस्य, आर्य्यासप्तशत्यादयः उदाहरणं, तद्भिन्नस्य सुभाषितावलिप्रभृतयः इति बोध्यम् ।

## लक्ष्मी

कोषं निरूपयति—कोष इति । अन्योन्यानपेक्षकः परस्परापेक्षानिरपेक्षकः, श्लोकसमूहस्तु रत्नसदृशश्लोककदम्बधारणात् कोषः व्रज्याक्रमेण अकारादिहकारान्ताद्यक्षरश्लोकसङ्घातक्रमेण रचित एव स कोषः अतिमनोरमः स्यात् । इदञ्च प्रशंसामात्रमेवेति बोध्यम् । तथा च व्रज्याघटित एकः प्रकारस्तदतिरिक्तो द्वितीय इति द्विविधः कोषः । तत्राद्यस्यो दाहरणम् आर्यासप्तसत्यादयः । द्वितीयस्य सुभाषितावलिप्रभृतय इति ।

## रुचिरा

कोषकाव्यं लक्षयति—६२८ **श्लोकसमूहः । अन्योऽन्यानपेक्षक** एकं प्रसङ्गमनुसृत्यानिबद्धः । **तु । कोषस्तदाख्यं काव्यम् । स्यात् । स** निरुक्तलक्षणः । **एव । व्रज्याक्रमेण** श्रेणीविशेषमार्गेण । **रचितः । अतिमनोहरः** । 'भवती'ति शेषः ॥ ६२७ ॥

कारिकां सुगमयितुं व्रज्यापदार्थं विवृणोति—**सजातीयेत्यादिना** । स्पष्टम् । उदाहरति—**यथेत्यादिना** । स्पष्टम् ।

अथ गद्यकाव्यानि । तत्र गद्यम्—

**वृत्तगन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ॥ ३३० ॥**

**भवेदुत्कलिकाप्रायं चूर्णकं च चतुर्विधम् ।**

**आद्यं समासरहितं वृत्तभागयुतं परम् ॥ ३३१ ॥**

**अन्यद्दीर्घसमासाढ्यं तुर्यं चाल्पसमासकम् ।**

मुक्तकं यथा—'गुरुर्वचसि पृथुरुरसि—' इत्यादि ।

वृत्तगन्धि यथा मम—'समरकण्डूलनिबिडभुजदण्डकुण्डलीकृतकोदण्डशिञ्जिनीटंकारोज्जागरितवैरिनगर—' इत्यादि ।

अत्र 'कुण्डलीकृतकोदण्ड—' इत्यनुष्टुब्बवृत्तस्य पादः, 'समरकण्डूल' इति च प्रथमाक्षरद्वयरहितस्तस्यैव पादः ।

उत्कलिकाप्रायं यथा ममैव—'अणिसविसुमरणिसिदसरविसरविदलिदसमरपरिगदपवरपरबल—' इत्यादि ।

चूर्णकं यथा मम—'गुणरत्नासागर जगदेकनागर कामिनीमदन जनरञ्जन' इत्यादि ।

---

## विवृतिः

वृत्तस्य गन्धेन लवेनापि उज्झितं श्रव्यकाव्यं गद्यम् । आद्यं मुक्तकम् । वृत्तस्य छन्दसो भागः पादः, परं वृत्तगन्धि ।

अन्यदुत्कलिकाप्रायम् । तुर्यं चूर्णकम् ॥ अणिस इति । 'अनिशविसृमरनिशितशरविसरविदलितसमरपरिगतप्रवरपरबल—' इति संस्कृतम् ॥

## विज्ञप्रिया

समरकण्डुलेति—समरोत्साहेन कण्डुले निबिडे दृढे भुजदण्डे कुण्डलीकृतकोदण्डस्य शिञ्जिन्याः गुणस्य टङ्कारेण उज्जागरितं वैरिनगरं येन । हे तादृशेत्यर्थः । अत्र वृत्तभागयुक्तत्वं दर्शयति—अत्रेति । प्रथमाक्षरत्रयरहित इति—एतस्यैव अनुष्टुभ एव पादोऽपरपादः । समरेत्यक्षरत्यागे, 'कण्डूलनिबिडभुजः' इत्येवंरूपः । अणिसेतिअनिशविषमनिशितशरविसरविदलितपरिघगदपरबल इति संस्कृतम् । अनिशं विषमानां निशितानां शराणां विसरेण—पातेन विदलिताः परिघाः मुद्गराः गदाश्च यत्र तादृशं परबलं यस्मात्, हे तादृशेत्यर्थः । गुणरत्नसागरेत्यादि—अत्र रेफान्तं नाम द्वयं नान्तञ्च सम्बोधनद्वयमल्पसमासकम् ।

## कुसुमप्रतिमा

वृत्तेति । वृत्तबन्धोज्झितं छन्दोगतह्रस्वदीर्घादिनियमरहितं वाक्यं गद्यमिति गद्यसामान्यलक्षणम् । तच्च गद्यं मुक्तकम्, वृत्तगन्धि, उत्कलिकाप्रायम्, चूर्णकञ्चेति चतुर्विधः भवेत् ।

क्रमेणषां लक्षणन्याह आद्यमिति । समासरहिंत सर्वता समासविहीनं गद्यं मुक्तकम्, समासेन मुक्तं विहीनमिति व्युत्पत्तेः । वृत्तभागेन छन्दसः किञ्चिदंशेन युतं गद्यं परं वृत्तगन्धि, वृत्तस्य गन्धी लेशोऽस्यास्तीति व्युत्पत्तेः । दीर्घेण बहुतरपदवृत्तिना समासेन आढ्यं युक्तं गद्यम् अन्यत् उत्कलिकाप्रायम् उत्कलिकाप्रायमुच्चारणकाले उच्चावचतरङ्गसदृशमिति व्युत्पत्तेः । अल्पसमासकं द्वित्रमात्रपदवृत्तिसमासविशिष्टं गद्यञ्च चूर्णकम् । दीर्घसमासाभावेन चूर्णस्य बिन्दोरिव स्तोकमात्रे विरामाच्चूर्णकमिति संज्ञा । तेन च मुक्तकमिति चूर्णकमिति च संज्ञयां कप्रत्ययौ ।

मुक्तकमिति । अत्र सर्वथैव समासाभाषान्मुक्तकमिति भावः ।

समरेति । समरकण्डूयनेन निविडाभ्यां घनाभ्यां भुजदण्डाभ्यां कुण्डलीकृतं सम्पूर्णमाकृष्ट यत् कोदंण्डं कार्म्मुकं तस्य शिञ्जित्या गुणस्य टङ्कारेण ध्वनिना उज्जागरिता निद्रात उत्थापिता वैरिनागराः शत्रुभूताः पौरा येन तत्मम्बोधनम् ।

अत्रेति । प्रथमाचरद्वयेन समेतिवर्णद्वयेन रहितः तस्यैव पथ्यावक्तरूपस्य अनुष्टुप्वृत्तस्यैव । तथा 'रकण्डूयनिविड' इत्यंशः पथ्यावक्तव्य प्रथमः पाद इव प्रतिपद्यते ।

उत्कलिकेति । 'अनेश विसृभर-निशित-शर विसर विदलित-समर-परिगतप्रवर परबल' इति संस्कृतानुवादः । अनिशमविश्रान्तं विसृभरः प्रसरन् यो निशितशराणां विसरः समूहस्तेन विदलितानि आमद्दितनि समरपरिगतानि युद्धोपस्थितानि प्रवराणि श्रेष्ठानि परबलानि शत्रुसैन्यानि येन तत्सम्बोधनम् ।

अत्र दीर्घसमासादुत्कलिकाप्रायत्वम् ।

चूर्णकमिति । अत्र द्वित्रमात्रपदवृत्तिसमासाच्चूर्णकत्वम् ।

## विमला

गद्यमाह, वृत्तेति ।—वृत्तबन्धेन—पद्यबन्धेन, उज्झितं—त्यक्तं, श्रव्यकाव्यमिति शेषः, गद्यम् । तच्च—गद्य गद्यमित्यचाध्याहार्य्यं, चतुर्विधं—मुक्तकं, वृत्तगन्धि, उत्कलिकाप्रायं, चूर्णकञ्च । आद्यं—मुक्तकमित्यर्थः, समासरहितम्; परं—वृत्तगन्धि, वृत्तभागयुतं—वृत्तस्य—पद्यस्य, भागेन—अंशन, पादपादांशेनेत्यर्थः, युतम्; अन्यत्—उत्कलिकाप्रायमित्यर्थः, दीर्घसमासेन आढ्यं—युतम्; तुर्य्यं—चतुर्थं, चूर्णकमित्यर्थः, अल्पसमासकम्—अल्पेन समासेन युक्तमित्यर्थः । एतञ्च स्पष्टीकृतमस्माभिः अस्मत्कृतायां वृत्तरत्नाकरस्य छन्दोमञ्जर्य्याश्च टीकायाम् ।

समरेति ।—समरस्य कण्डूयनाय—कण्डूतिनिवृत्त्यर्थमित्यर्थः, निविडाभ्यां—दृढाभ्यां, भुजदण्डाभ्यां कुण्डलीकृतं—मण्डलीकृतं, यत् कोदण्डं—धनुः, तस्य शिञ्जिन्याः—मौर्व्याः, टङ्कारः तेन उज्जागरितं वैरिणः—शत्रोः, नगरं येन तत्सम्बुद्धौ ।



**जन्म**—६-११-१९३७

**जन्मस्थानम्**—ग्रामः—रोहटः, मण्डलम् सोनी-पतः (हरियाणा)।

**शिक्षा**—शास्त्री १९५३, पञ्जाबविश्वविद्याल[य] सर्वप्रथमः, एम. ए. १९६३ दिल्ल[ी] विश्वविद्यालयः, पी.एच.डी. १९७० दिल्ल[ी] विश्वविद्यालयः।

**अध्ययनक्षेत्रम्**—साहित्यशास्त्रम्, व्याकरण[म्] च।

**प्रकाशितानि शोधपत्राणि**—दिल्ली विश्व विद्यालयदक्षिणपरिसरे समवेतानां परिचर्चा[नि] पुस्तकाकारेषु प्रकाशनेषु बहवो लेखाः।

**प्रकाशितो ग्रन्थः**—अभिधाविमर्शः, दिल्ल[ी] १९८० आचार्यो दण्डी, (राष्ट्रियसंस्कृत संस्थानेन प्रकाशितः) ब्रह्मसूत्रशांकरभाष्य[म्] एकादशटीकासंयुतम् अष्टसु भागेषु, साहित्य दर्पणम् चतुर्थ भागेषु, काव्यदर्शः पञ्चभागेषु।

**कार्यक्षेत्रम्**—दिल्ली विश्वविद्यालयस्य हिन्दूमहाविद्यालये,

**प्राध्यापकः**—१९६९-१९८६

**प्रवाचकः**—१९८७-१९८८

गुरुकुलकांगड़ी विश्वविद्यालये प्राचार्य **विभागाध्यक्षश्च**—१९८८-१९८९

वर्तमाने हिन्दूमहाविद्यालये प्रवाचकः।